**प्राप्तिस्थल**

१. गोस्वामी श्याम मनोहर
६३, स्वस्तिक सोसायटी,
४ था रस्ता, जुहू स्कीम,
बम्बई-४०० ०५६.

२. श्री वल्लभ विद्यापीठ,
श्री विट्ठलेशप्रभुचरणाश्रम ट्रस्ट,
वैभव को.ऑप. सोसायटी,
पूना–बेंगलोर रोड,
कोल्हापुर, महाराष्ट्र

मूल्य: अमूल्यवितरणार्थ
पुनः प्रकाशन वर्ष: वि.सं. २०४३

मुद्रक:
**गुजराती पब्लिकेशन्स,**
३०८, हनुमान बिल्डिंग,
पारसी गेट स्ट्रीट, रिझर्व बैंक के समीप,
फोर्ट, बम्बई-४०० ००१.



# प्रकाशकीय

**जयति श्रीवल्लभाचार्यो जयति च विट्ठलेश्वरः प्रभुः श्रीमान्।**
**पुरुषोतमश्च तैश्च निर्दिष्टा पुष्टिपद्धतिर्जयति।।**

अतीव हर्षका विषय है कि एतद्द्वारा श्री मद्भागवतके प्रथभ तथा द्वितीय स्कन्धोंकी महाप्रभु श्रीमद्वल्लभाचार्यचरण द्वारा प्रणीत सुबोधिनी टीका तथा उसपर व्याख्यानतया श्रीपुरुषोत्तमजी द्वारा विरचित प्रकाश के पुनर्मुद्रण का सूत्रपात हो रहा है. वैसे तो परमभागवत श्रीकृष्णशंकर शास्त्रीजीने हाल ही में इन्हे अपने अनेकटीकोपत संस्करणमे प्रकाशित किया ही था, उस निरतिशय अभिनन्दनीय भगीरथ प्रयासोपम संस्करणके स्वाभाविकतया अतिबृहत्काय होनेके कारण और केवल सुबोधिनीरसास्वादनार्थ तत्पर अध्येताओंके लिये उसके सुविधाजनक न होनेसे, इस लघुकाय संस्करणकी उपयोगिता अनुक्तासिद्ध है.

हमे खेद है कि पुनः इस नूतन संस्करणमेंभी हम उन अप्रकाशित टीकाओंको समाविष्ट नहीं कर पाये है, जो प्रथम संस्करणके प्रकाशित होते समय प्रकाशित हो नहीं पाई थी. इनमें प्रमुखतया लेखकार श्रीवल्लभजी, चाचा गोपेशजी तथा श्री गोकुलोत्सवजी द्वारा विरचित टीकाओंको गिनाया जा सकता है. इन टीकाओंके अद्यावधि अमुद्रित होनेके कारण ऑफसेट प्रोसेस सुकर न होनेसे यह न्यूनता क्षम्य हैं.

प्रस्तुत संस्करण पूर्वप्रकाशित संस्करणोंका ही यथावत् मुद्रित हुए है, एकरूपता लानेके लिये केवल आकार हमने छोटा बना दिया है.

प्रथम तथा द्वितीय स्कन्धोंकी सुबोधिनीके आद्य संस्करण, वि.सं. १९७१ तथा १९७९ में, हमारे पितामह गोस्वामी श्रीगोकुलनाथजी महाराज द्वारा संचालित शुद्धाद्वैत सिद्धान्तकार्यालय (बड़ा मन्दिर, बम्बई) की ओरसे प्रकाशित हुवे थे. इनका सम्पादन सम्प्रदायके उद्भटविद्वान् भट्ट श्रीबलभद्र शर्माजीने किया था.

गोस्वामी श्रीपुरुषोत्तमजी-विरचित प्रथम-स्कन्धीय-सुबोधिनी-प्रकाशके अद्य संस्करणके सम्पादक थे. स्वनामधन्य श्रीमूलचन्द तेलीवाला तथा द्वितीयस्कन्धीय प्रकाशका सम्पादन विद्वान श्रीचीमनलाल शास्त्रीजीने किया था. दोनोंका प्रकाशन ग्रन्थकर्ता श्रीपुरुषोत्तमजी की गादी (तृतीय/२ गृहः सूरत) को अपने लोकविश्रुत वैदुष्यसे विभूषित करनेवाले गोस्वामी श्रीव्रजरत्नलालजी महाराजके प्रोत्साहन एवं तत्त्वावधान में श्रीबालकृष्ण शुद्धाद्वैत महासभाने प्रकाशित करवाया था. इन सभी प्रकाशक-सम्पादक आदि महानुभावोंके प्रति हम अपनी हार्दिक कृतज्ञता प्रकट करते हैं.

आज पारस्परिक पीठस्पर्धा तथा द्रव्यादि-उपार्जन के हेतु छप्पनभोग के दिखावटी सामग्री प्रदर्शनोंके दलदलमे सम्प्रदायको डुबाने के षड्यन्त्र जब तीव्र वेगसे गतिशील है, तब इन ग्रन्थोंके प्रकाशनके बारे में किन्हीं महानुभावोंका यह मनोभाव कि यह समय-शक्ति-द्रव्यका अपव्यय हैं, सहजतया समझमें आनेवाली बात हैं. हम न तो इन आक्षेपोंका समाधान करना चाहते हैं और न हमें ये आक्षेप हतोत्साह ही कर पाते है. एक सौ बीस वचनामृतकार गोस्वामी श्रीगिरधरजी महाराजके ये उद्गार हमे तो सर्वसमाधानकारक लगते हैं., "और अब तो श्रीगोवर्धनधरकी लीला ऐसी हैं जो लीला लाल गोवर्धनधरकी!... सो ईश्वर हू काल को ग्रहण न करे तो और कौन करे? तासों कलियुग को सन्मान राख्यो है. और श्रीमदाचार्यकी कहा इच्छा सो जानी नाहि परत है!"
**बुद्धिप्रेरककृष्णस्य पादपद्मं प्रसीदतु**

गोस्वामी श्याम मनोहर

फाल्गुन शुक्ला
प्रतिपदा वि.सं. २०४३

# अनुक्रमणिका


| विषय | पृष्ठ |
| --- | --- |
| १. प्रथम स्कन्ध सुबोधिनी | १-३०० |
| २. श्रीमद्भागवत प्रथम स्कन्ध श्लोकानुक्रमणिका | १-७ |
| ३. द्वितीय स्कन्धसुबोधिनी | १-१९० |
| ४. श्रीमद्भागवत द्वितीय स्कन्ध श्लोकानुक्रमणिका | १-४ |
| ५. प्रथम स्कन्धसुबोधिनीप्रकाश | १-११८ |
| ६. द्वितीय स्कन्धसुबोधिनीप्रकाश | १-१६४ |




## विज्ञप्तिः ।

प्रकाशकानां किलाऽयं समयो यत्प्रकाश्यमानेषु पुस्तकेषु तत्सम्बन्धिततद्विषयविवेचनपरस्य प्रस्तावनादिपदवाच्यस्याऽऽवेदनस्याऽऽदितः संयोजनम् । आवश्यकञ्चेदमौपयिकमिति । किन्तु निखिलस्याऽपि प्रकाश्यमानस्य प्रबन्धस्य यावत्सर्वांशतोऽनवधारणं साहसमेव तावत्तद्विषये लेखनीग्रहणम् । इदमेवाऽत्र निदानं यच्छ्रीमत्याः सुबोधिन्याः प्रथमस्कन्धं परमेणाऽऽयासेन संशोध्य प्रकाशयन्तोऽपि न प्रस्तावनादौ व्यापारयाम आत्मानम् । श्रीमदाचार्यचरणकरुणाबलेन समस्तायास्तस्याः प्रकाशनसौभाग्यलाभे तु यत्नमुपहरिष्यामो यथाबुद्धि सुविस्तृतां प्रस्तावनाम् ।

एतावत्पुनरत्र निवेदयामो यत्संशोधनायाऽस्य पञ्च पुस्तकान्यस्माभिरुपलब्धानीति तदधिपतयः सहस्रशो धन्यवादानर्हन्तीति । तत्र प्रथमं श्रीमद्भारतमार्तण्डपुस्तकालयस्थं यत्कसञ्ज्ञया सङ्केत्यतेऽस्माभिः । द्वितीयं विदितवैदुष्यवैभवानां श्रीमद्बालूभट्टमहानुभावानां यज्जयपुरपुरुहूताच्छ्रीमतः सवाईजयसिंहमहोदयात्तैरुपलब्धम् । अस्माभिश्च तत्कुल एव समुद्वाहिताया अनुजायाः श्रीमत्या यमुनायाः सकाशादधिगतम् । यच्च खसञ्ज्ञामस्मद्धस्तामावहति । तृतीयं मोहमयीस्थबृहन्मन्दिराधिपतिश्रीमद्गोकुलनाथगोस्वामिचरणमहोदयानां यत्र गसञ्ज्ञमित्यस्माकमभ्युपगमः । तुरीयं श्रीमति वृन्दावने मुद्रितं सटीकोपेतं यत्किल घसञ्ज्ञयाऽस्माभिरभिलप्यते । पञ्चममस्मत्प्रपितामहश्रीमद्बलदेवभट्टचरणानां यदस्माकं पितृव्यैः श्रीमद्गोवर्द्धनभट्टपादैर्वितीर्णम् । यच्च ङसञ्ज्ञया परिगृह्यतेऽस्माभिः ।

यथा च पञ्च पुस्तकान्येतान्युपलब्धान्येवं गोस्वामिश्रीमद्वागधीशलालजीमहाराजेभ्योऽप्येकमधिगतम् । पञ्चभिरेव कथमपि निर्वाहे तु नैतत्परिगृहीतं शोधकर्मणि । एवमपि करुणापूर्णान्तराणां तेषां सर्वथाऽपि प्रशंसनीयः साम्प्रदायिकसेवासमुत्साह इति सहस्रशस्तेभ्यो धन्यवादाः ।


विज्ञापको—

भट्टश्रीबलभद्रशर्म्मा,

कविः, काव्यरत्नाकरः, कविचूडामणिः,

शुद्धाद्वैतभूषणम्, कविरत्नम्.




व्यजिज्ञपमेतत्प्रथमस्कन्धे यत्प्रस्तावनादिपदवाच्यस्याऽऽवेदनस्य प्रकाशकसमयप्राप्तत्वेऽप्यावश्यकत्वेऽपि समस्तायाः श्रीसुबोधिन्याः प्रकाशनसौभाग्यलाभे तदुपहरिष्याम इति ।

**विशेषस्तु**—प्रबलतमेनोदरामयेन क्षणमप्यलब्धसौख्येन चिरस्य विस्मृता इव सर्वेऽपि व्यापारा इति द्वितीयस्कन्धप्रकाशेऽपि महदेव विलम्बितं जनेनाऽनेन । अधुना तु विलम्बासहिष्णूनां साम्प्रदायिकानां विक्षोभमिव बुद्ध्वाऽऽमयाविना च तत्संशोधनादिसमस्तव्यापाराणामेकाकिनाऽशक्यानुष्ठानत्वे सकृत्स्वयं ग्रन्थं संशोध्य वर्णमयकैः कृतानां तत्प्रत्याम्नायानां शोधने,—कर्मण्यस्मिन् परिनिष्ठितान् पणशीकरोपाह्वान्श्रीवासुदेवशास्त्रिमहाभागानवालम्बिषि ।

स्कन्धश्चाऽयं चतुर्भिः पुस्तकैः शोधितः । तत्र कखगसञ्ज्ञं त्रयं श्रीमद्बालकृष्णशुद्धाद्वैतपुस्तकालयस्थम् । अन्यच्छ्रीवृन्दावनमुद्रितम् ।

प्रथितः—

भट्टश्रीवल्लभद्रशर्म्मा,

क॰ का॰ क॰ बु॰ क॰ म॰ वि॰

वेदान्तविद्यानिधिः ।

श्रीगोवर्द्धनोद्धरणधीराय नमः ।

श्रीबालकृष्णाय नमः ।

ॐ नमो भगवते वासुदेवाय ।

श्रीभागवतगूढार्थप्रकाशनपरायणाय नमः ।

श्रीपितृप्रवर्तितपथप्रचारसुविचारकाय नमः ।

श्रीभागवतप्रतिपद्मणिवरभावांशुभूषितमूर्तिश्रीमद्वल्लभाचार्यचरणविरचिता

# श्रीसुबोधिनी ।

( प्रथमस्कन्धः )

वन्दे श्रीकृष्णदेवं मुरनरकभिदं वेदवेदान्तवेद्यं
लोके भक्तिप्रसिद्ध्यै यदुकुलजलधौ प्रादुरासीदपारः ।
यस्याऽऽसीद्रूपमेव त्रिभुवनभरणे भक्तिवच्च स्वतन्त्रं
शास्त्रं रूपं च लोके प्रकटयति मुदा यः स नो भूतिहेतुः ॥ १ ॥
कर्ता ज्ञः सकलस्य यो निगमभूः सर्वस्वरूपोऽपि स-
न्सर्वस्याऽपि विधारणो विजयते निर्दोषसर्वेष्टदः ।
यो लीलाभिरनेकधा वितनुते रूपं निजं केवलः
सोऽयं वाचि ममाऽस्तु पूर्णगुणभूः कृष्णावतारः पतिः ॥ २ ॥
श्रीमद्वल्लभविट्ठदीशविलसद्वंशाब्धिपूर्णेन्दवे
श्रीगोपीपतिवन्दिने सुमनसि ब्रह्मामृतस्यन्दिने ।
श्रीमल्लक्ष्मणभट्टसूरिरिति यन्नामाऽखिलाऽभीष्टदं
तस्मै तातमहाशयाय हरये कुर्मो नमः सिद्धये ॥ ३ ॥
श्रीमद्भागवतागमः सुरतरुर्लोके फलत्वं गतो
भाषाभेदविभेदतस्त्रयमपि स्यान्नो विरुद्धं महत् ।
भक्त्यंशे फलता प्रमाणसुबले वेदत्वमर्थे पुनः
स्कन्धैर्द्वादशभिर्युतः सुरतरुः शाखाछिवल्लिद्वयम् ॥ ४ ॥
अर्थं तस्य विवेऽचितुं न हि विभुर्वैश्वानराद्वाक्पते-
रन्यस्तत्र विधाय मानुषतनुं मां व्यासवच्छ्रीपतिः ।
दत्त्वाऽऽज्ञां च कृपावलोकनपटुर्यस्मादतोऽहं मुदा
गूढार्थं प्रकटीकरोमि बहुधा व्यासस्य विष्णोः प्रियम् ॥ ५ ॥
लक्षणां नैव वक्ष्यामि न न्यूनादन्यपूरणम् ।
आर्थिकं तु प्रवक्ष्यामि परोक्षकथनादृते ॥ ६ ॥



ाभ-
येयः
जन्म
' इति
वतौ ।
मादि-
तेभक्त-
कल्पा-
म्यम् ।
धेनोः
अनेन
, शब्द-
त्यं पर-
दाहुः ।
। अन्ये-
नुक्ताश्च-
सादावपि
क्तस्थितेः
प्रत्यक्ष-
भासते ।
जगत्कार-
ः इति ।
क्तेः प्रयो-
षु निमि-
गादित्युक्तं
र्ये केचन
स्वरूपमेव,
राऽन्तर्गतः
। एतावता
कारणत्वं
ः प्रकार-
त्वं सूक्ष्म-
विस्तारः ।
ः । पुराणेन
र्वं यो वै

**अविरोधेन सतामर्थानामिह सङ्गतिः ।**
**उत्तरोत्तरदौर्बल्यं वाच्यं सङ्कोचतः परम् ॥ ७ ॥**
**भाषात्रयविरोधश्च कल्पभेदात्समाहितः ।**
**भाषात्रयविभेदश्च लक्षणैर्ज्ञाप्यते पुनः ॥ ८ ॥**
**अर्थत्रयं तु वक्ष्यामि निबन्धेऽस्ति चतुष्टयम् ।**
**अत्र सन्तः स्वसन्तोषैराज्ञां यच्छन्तु सिद्धये ॥ ९ ॥**

**अथ व्याख्या—**

भगवदाज्ञया भक्तिजनिकां संहितामारभमाणः शिक्षार्थं मङ्गलमाचरन्बीजभावेन प्रथमं **गायत्र्यर्थ**-मुपनिबबन्ध—

**जन्माद्यस्य यतोऽन्वयादितरतश्चाऽर्थेष्वभिज्ञः स्वराट्**
**तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ।**
**तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा**
**धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १ ॥**

**जन्माद्यस्येति** । अत्र हि श्लोकत्रयस्याऽसङ्गतिः । कथारूपं हि भागवतम् । तत्तु **"नैमिष"**-इत्यादिना निरूप्यते । तत्रोच्यते । **"यत्राऽधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः । वृत्रासुरवधोपेतं तद्भागवतमिष्यते"** ॥ यथा हि **यज्ञात्मको** वृत्रस्तद्वधेन यज्ञाः प्रवृत्ता वेदे निरूपितास्तथाऽत्रापि **भक्त्यात्मको वृत्र**स्तद्वधनिरूपणेनाऽत्र **भक्तिः** प्रवर्तयिष्यते । गायत्री हि वेदमाता, वेदत्रयार्थप्रतिपादिका भवति । तदर्थो भागवते, प्रथमं बीजार्थं निरूप्यते । **यथा वेदस्तथा भागवतमिति** । एकबीजत्वात् । अतो गायत्र्यर्थनिरूपणेन **वेदविरोधो, वेदादौर्बल्यं** च परिहृतम् । किञ्च । यथा हि वेदे, यज्ञियाः पदार्था योगजधर्मेणाऽनुभूयन्ते फलसाधनसहितास्तथाऽत्रापि योगजधर्मेण व्यासस्त्रयमनुभूतवान्—**पुरुषो, मायया बन्धो, मोचनं भक्तिहेतुकमिति** । **"अपश्यत्पुरुषं पूर्ण"**मित्यादिना । एषा हि समाधिभाषा । तत्र हि पुरुषप्रयत्नो भक्तावेव । **"माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्नचाऽन्यथे"**ति वैष्णवतन्त्रवचनान्माहात्म्यज्ञानपूर्वकः सुदृढः सर्वतोऽधिकस्नेहो भक्तिः । सुदृढः सर्वतोऽधिकस्नेहस्त्वात्मत्वेन ज्ञाते भवति । माहात्म्यज्ञानन्तु सृष्ट्यादिभिः । तत्र द्वयं साधयितुमेषा भागवतसंहिता । यथा हि यज्ञा, ब्रह्माऽऽत्मावगतिश्च, काण्डद्वयार्थोऽन्योन्यहेतुभूतस्तथाऽत्र द्वयमपि भक्तिहेतुरिति निरूपयितुं गायत्री बीजं, वेदो वृक्षः, **भागवतं फलमिति** निरूप्यते । अतः काण्डद्वयार्थनिष्णातोऽप्यफलवृक्ष इव व्यर्थ इति **भागवतारम्भः** । तदत्र श्लोकत्रयेण निरूप्यते । यद्यपि **प्रणवो व्याहृतयश्च** तथा भवन्ति, तथापि तेषामर्थः स्पष्टो नेति, गायत्र्यर्थो निरूप्यते । किञ्च । अभ्युपस्थाने हि गायत्री नियुक्ता । **"तत्सवितुर्वरेण्यमित्याह प्रसूत्या"** इति । तथा मन्देहादिनिवारणे च—**"गायत्र्याऽभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्ती"**-त्यादिना । तेन निर्विघ्नं वाक्प्रसवार्थं, गायत्र्या भगवदुपस्थानं कुर्वाणो, गायत्र्यर्थमाह । तत्र गायत्र्या जगत्प्रसवकर्तृत्वेन सर्वकर्तृत्वं, देवत्वेन च सर्वज्ञत्वं, षष्ठीद्वयेन निरूप्यते । **वरेण्यमिति**

१ अत्रापि चेति क.



भक्तिबीजम् । **भर्ग** इति संसारनिवृत्तिः । **"भर्जयत्यखिलाऽविद्या"**मिति । अतस्तदेव—**धीमहीति** । आवश्यकत्वं चाऽऽह—**"धियः सर्वेन्द्रियाण्येव मनसा सह सर्वदा । प्रेरयेद्यः समस्तानां तद्ध्यानं सर्वथा हित"**मिति । तदत्राऽप्याह—**जन्माद्यस्य यत इति** । जन्म आद्यस्य आकाशस्य **यत** इति वा । **"तस्माद्वा एतस्मादात्मन आकाशः सम्भूत"** इति श्रुतेः । गायत्र्यर्थे हि प्रसवमात्रमुक्तं, न स्थितिप्रलयौ । **वरेण्यभर्ग**शब्दाभ्यां च पश्चात्सूचितौ । तदत्राऽप्युत्तरार्द्धे सूचयिष्यते । अथवा । सूचितमप्यर्थमादायोत्पत्तिस्थितिप्रलया निरूप्यन्ते जन्मादिपदेन । **"यतो वा इमानि भूतानि जायन्त"** इति श्रुतेः । **जन्म आदिर्यस्य स्थितिभङ्ग**-स्येति तद्गुणसंविज्ञानो बहुव्रीहिः । उत्पत्तिस्थितिभङ्गस्येति वाऽतद्गुणसंविज्ञानः । वेदार्थप्रतिपादकत्वान्नाऽधिकपुनरुक्ती । **अस्येति** । ब्रह्माण्डकोटिरूपस्य मनसाऽप्याकलयितुमशक्यस्येति माहात्म्यम् । यत इत्यव्ययनिर्देशोऽविकृतत्वाय, सर्वजगद्बीजमपि ब्रह्म न विकृतमिति निरूपयितुम् । यथा, **कामधेनोः कल्पवृक्षाच्चिन्तामणेर्मन्त्रादेश्च** जायमानाः पदार्था दृश्यन्ते । न हि ते विकृता भवन्ति । अनेन **"कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वे"**ति पूर्वपक्षः परिहृतः । यत्तदोर्नित्यसम्बन्धेऽपि, शब्दन्यूनतादोषपरिहारायाऽध्याहारः कर्तव्यो यद्यपि, तथापि गायत्र्यन्तर्गततच्छब्दव्याख्यानरूपस्य सत्यं परमिति पदद्वयस्य विद्यमानत्वान्नाऽध्याहारः । तत्र ब्रह्मणः समवायित्वं, प्रकृतेर्निमित्तत्वमिति **केचिदाहुः** । विपरीतमित्यन्ये । कर्तृत्वमात्रमित्यपरे । तत्सर्वनिराकरणायाऽऽह—**अन्वयादितरतश्चेति** । अन्वेतीत्यन्वयः समवायिकारणम् । इतरन्निमित्तकारणम् । **"यत्र येन यतो यस्ये"**ति श्लोकोक्ता अनुक्ताश्च-कारेण परिगृहीताः । अतोऽभिन्ननिमित्तोपादानं जगद्ब्रह्मकारणकमित्युक्तं भवति । स्थितिप्रलयादावपि यथाऽपेक्षं ग्रहणान्न समवायकथनदोषः । अथवा । वैनाशिकप्रक्रियाया अनङ्गीकारान्नाशेऽप्यव्यक्तस्थितेः समवाय्यपेक्षाऽस्त्येव । प्रत्यक्षानुग्राहकान्वयव्यतिरेकाविह न भवतः । न हि ब्रह्मणो जगत्कारणत्वं प्रत्यक्षसिद्धम् । श्रुतिसिद्धं तु तत् । न वा ब्रह्मणः कचिद्व्यतिरेकः सम्भवति । खपुष्पादिकमपि तत्सत्तयैव भासते । **"यदस्ति यन्नास्ती"**ति वाक्याच्च । तस्मात्सर्वप्रकारेणाऽपि, ब्रह्मैव जगत्कारणमित्युक्तम् । जगत्कारणत्वेन तदुपयोगिसर्वज्ञत्वे सिद्धेऽपि, लोकवत्फलाऽज्ञानं सम्भवतीति, तदाह—**अर्थेष्वभिज्ञ इति** । अनतिप्रयोजनाय सप्तमी । एकस्याऽपि प्रयोजनस्य बहुप्रयोजनार्थत्वं ज्ञापयितुं बहुवचनम् । ज्ञानशक्तेः प्रयोजनानां च न समासः । तेन न हर्षविषादौ । अर्थशब्दः प्रयोजनवाची । अथवा । अर्थेषु निमित्तेषु । चतुर्विधपुरुषार्थसिद्ध्यर्थं जगज्जननमित्यर्थः । सर्वजीवानां सर्वपुरुषार्थसिद्ध्यर्थं जगदित्युक्तं भवति । एकस्यापि प्रयोजनस्य प्रयोजनकार्यकारणपरम्पराणां ज्ञानमभिशब्दार्थः । ज्ञानमार्गे केचन स्वार्थमेव सर्वं करोतीत्याहुः । तन्निराकरणायाऽऽह—**स्वराडिति** । यद्यपि जीवा अपि स्वरूपमेव, तथापि प्रकारभेदान्न दोषः । स्वेनैव राजते, न विषयेषु रमत इत्यर्थः । अथवा । विराडन्तर्गतः **स्वराट्** । तेन पूर्वोक्तसर्वज्ञता समर्थिता भवति । अक्लेशार्थं वा स्वरूपानन्दे रमत इत्यर्थः । एतावता **रूपप्रपञ्चे कारणत्वमुक्तम्** । नामप्रपञ्चकारणमाह—**तेन इत्यादिना** । यद्यप्यविशेषेण कारणत्वं वक्तुं शक्यं, तथापि रूपप्रपञ्च आसक्तानां जीवानां निवारणार्थं भेदेनोक्तम् । बन्धमोक्षयोः प्रकारभेदेन निरूपणार्थं वेदजगतोर्भिन्नतया निरूपणम् । त्रिविधाऽप्युत्पत्तिर्वेदे नास्ति । किन्तु प्रलये सूक्ष्मतयाऽवस्थानम् । यथा वर्णानामनेकभाषावितत्वं विस्तारस्तथा श्रुतेरपि वेदशाखाभेदेन विस्तारः । **ब्रह्म वेदम्** । अविकृतत्वाय तथा वचः । **हृदेति** मनःपूर्वकम् । स्वार्थमेतदिति भावः । पुराणेन सहेति वा । **"पुराणं हृदयं स्मृत"**मिति वचनात् । **"यो ब्रह्माणं विदधाति पूर्वं यो वै**

**वेदांश्च प्रहिणोति तस्मा**"इति ब्रह्मार्थं वेदविस्तारः । भगवत्तात्पर्यं वेद एव, न लोक इति वा **हृदेत्युक्तम् । य इति** गायत्रीतृतीयपादस्थस्य ग्रहणम् । तेन सर्वप्रेरकत्वमायाति । अन्यथा वैयर्थ्यापत्तेः । **यत** इत्यस्यैव सर्ववाक्येषु विभक्तिविपर्ययेण योजयितुं शक्यत्वात् । **आदिकवये** ब्रह्मणे । वेदमार्गेण ब्रह्मैवमुच्यत इत्यर्थः । अन्येषां वेदार्थनिष्ठानामपि तद्रूपेणैव मुक्तिरिति भावः । शब्दरसाभिज्ञत्वाय **कविपदप्रयोगः** । गोपनार्थमन्यथाकथनसामर्थ्याय वा । न ह्यन्यस्तादृशोऽस्तीत्यादिपदम् । कविदोषाऽभावाय वा । नानाविधस्तोत्रेण वा सन्तुष्टो भगवान् तस्मै वेदं प्रकाशितवानित्यादि**कविपदप्रयोगः** । अन्येषां वेदानुपयोगे हेतुमाह—**मुह्यन्तीति** । यस्मिन्वेदे सूरयोऽपि मुह्यन्तीत्यर्थः । वेदार्थे वा । यज्ञांल्लौकिकान् फलसम्बन्धमात्रे वैदिकान् । ब्रह्म च जीवानामात्ममात्रमिति **सांख्या योगिनश्च** । न वैदिकाः । **पौराणिकाः** परं, सद्वादिनोऽपि पुरुषपर्य्यवसिताः । न तु **पुरुषोत्तमविदः** । अन्ये च तदनुवर्तिनः । मोहे भगवदप्रपत्तिर्हेतुः । तस्माद्भगवानेव, तत्प्रपन्नो वा वेदार्थवित् । वेदस्य सर्वसमर्थत्वात्कामनया क्लिष्टेषु प्राणिषु कामनासिद्ध्यर्थं वेदप्रचारः । तथैव शाखाप्रणयनम् । तथैव पुरुषश्च हृदि कश्चित् । प्रणवमात्रं वा । "**वेदः प्रणव एवाऽग्र**" इति वचनात् । सर्वथा वेदोपयोगो ब्रह्मण एव स्थितः । अत एव वेदतात्पर्याऽज्ञानादन्यथा वेदार्थवक्तार उपेक्षणीयाः । प्रपञ्चेन बन्धः । वेदेन मोक्षः । उभाभ्यां हरिः क्रीडतीति माहात्म्यम् । एवं पूर्णगुणविग्रहत्वमुक्त्वा निर्दोषत्वं वदन् भर्गशब्दार्थमाह—**तेजोवारीति** । वरणीयत्वं वा बोधयति । मायातत्कार्यसम्बन्धलेशाऽभावप्रतिपादनात् । दोषाऽभावपक्षे तु दोषो द्विविधः । स्वत एव दुष्टतापादकः सेवकानुद्धारो वा । तत्राऽऽद्याऽभावमाह—**तेजोवारीति** । देहेन्द्रियान्तःकरणधर्मसम्बन्धो दोषः । स च प्रत्येकमिति दृष्टान्तबाहुल्यम् । सात्त्विकादिभेदेन वा । पृथिव्यप्तेजसामन्योन्यस्मिन्नन्योन्याऽवभासो यथा **मृषा** द्रष्टुरेव तथा बुद्धिजनकः । न तु विषयस्तादृश इत्यर्थः । तेजसि वारिबुद्धिर्मरीचितोये । वारिणि पृथिवीबुद्धिः तमिस्रायां जलादौ । तथा मण्यादिष्वग्निबुद्धिः । मृदि काचादौ वारिबुद्धिः । मेघेषु चन्द्रबुद्धिः । चन्द्रकिरणे वस्त्रबुद्धिः । सजातीया भ्रमाश्च शुक्तिरजतादिषु । ते यथा जीवानां बुद्धिपरिकल्पितास्तथा भगवति देहेन्द्रियान्तःकरणवत्त्वमवतारादिषु मृषेत्याह—**यत्र त्रिसर्गो मृषेति** । यत्रेति निमित्ताधिकरणयोर्ग्रहणम् । ततो गुणत्रयकार्यदेहेन्द्रियमनांसि तद्धर्माः तत्कारणं वा तदधिकरणानि तदर्था वा अध्यासेन न सन्तीत्यर्थः । केवलमिथ्यात्वप्रतिपादने **यत्रेति** वैयर्थ्यापत्तेः । सर्वाधारत्वाच्च ब्रह्मणः । तेनाऽध्यासेनैवेति वक्तव्यम् । एतदर्थमेव दृष्टान्तानाह । लोकदृष्ट्या प्रतीतः । अन्यस्मिन्ब्रह्मण्यन्यधर्माणां देहेन्द्रियादिधर्माणां प्रतीतिर्मिथ्येति । प्रवृत्तिप्रकाशतद्राहित्यवैधर्म्यस्य स्पष्टस्यापि सतो यथाऽन्यस्मिन्नन्याध्यासः । केचिद्भगवति देहेन्द्रियाणि परिकल्प्य, तेषां चिदानन्दत्वं परिकल्पयन्ति । केचिच्चिदानन्दे देहेन्द्रियाणि, केचिच्चले कृष्णे जडजीवसम्बन्धं कल्पयन्ति । जडजीवविशेषे वा सामर्थ्यम् । केचिच्छरीरे मायातद्गतोरध्यासं प्रकल्पयन्ति । मायाविशिष्टे स्वेच्छयैव शरीरसम्बन्धं वा । सर्वेषां तेषां बुद्धिरेव भ्रान्ता, न ब्रह्मणि शरीरेन्द्रियसम्बन्धः । यथा पुनर्ब्रह्मणि व्यवहारस्तथोत्तरत्र वक्ष्यते । एवं भगवति जडजीवधर्मा मृषेत्युक्तम् । मायातत्कार्यसम्बन्धलेशाऽभावाद्वरणीयं सुन्दरमिति स्वतो दोषाभाव उक्तः । भजनीयगुणान्वदन्सेवकोद्धारमाह—**धाम्ना स्वेनेति** । स्वरूपस्फूर्त्यैव सर्वेषां सर्वाऽविद्यानाशक इत्यर्थः । स्वरूपमेवाऽ-

१ पुरूरवसो इदीति ख. २ एवेति स्थितमिति ख. ३ तथाचेति क.



विद्यानाशकम् । प्रमेयबलमेतत् । **सदेति** । न कलिकालादिः प्रतिबन्धकः । **कुहकं** कापट्यं, देहेन्द्रियात्मभाव इति यावत् । **तस्मिन्निराकृते शिष्टं स्वत एव भविष्यति** । एतेन भर्जयत्यखिलाऽविद्यामिति भर्गश्शब्दः सकारान्तो व्याख्यातः । तच्छब्दं व्याचष्टे—**सत्यं परमिति** । कालत्रयाऽबाधितं सर्वलोकप्रसिद्धं सत्यम् । परं श्रेष्ठं पुरुषोत्तमरूपं सर्ववेदप्रसिद्धम् । **धीमहीति** । ध्यायेम प्रीतिं वा कुर्म इत्यर्थः । इदमेकमेवोभयत्र पदं, वैदिकत्वबोधनाय । अनेन वेदसम्मितं पुराणमित्युक्तं भवति । एवं बीजभावो निरूपितः ॥ १ ॥

मध्यभावं निरूपयन् कल्पद्रुमत्वमाह—

**धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां**
**वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ।**
**श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः**
**सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥ २ ॥**

**धर्मः प्रोज्झितकैतव इति** । धर्मो ज्ञानं च साधनम् । भगवदाविर्भावः साध्यः । तदनु तत्र प्रवेशः फलम् । एतत्सर्वं भागवतादेव भवतीति विशिष्टकल्पद्रुमत्वम् । विधिसम्बन्धो धर्मलक्षणम् । वेदश्च प्रमाणम् । स यज्ञात्मको धर्मः । आचारोऽपि धर्मः पौराणिकः । सत्यादयोऽपि धर्माः । तपःप्रभृतयश्च श्रवणादयश्च । तत्र यज्ञेषु पूर्वोक्तन्यायेनाऽतद्धेतोरपि फलसाधनतयोक्तरूपेण स्वर्गादिपदभ्रमजननाद्वा कापट्यं सम्भवति । आचारेऽपि "**शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुष्वि**"त्यादिन्यायेन प्रवृत्तिसङ्कोचार्थं गुणदोषौ विधीयेते इति कापट्यम् । सत्यादिष्वपि व्यवहारस्य सन्निपातत्वात्कापट्यम् । तपःप्रभृतिषु च "कः क्षेमो निजपरयोः कियान्वाऽर्थः स्वपरद्रुहा धर्मेण" । "कर्षयन्तः शरीरस्थं भूतग्राममचेतस"इति वाक्यात्कापट्यम् । सर्वत्र विहितनिषेधात्कापट्यप्रतीतिः । न तथा श्रवणादिषु किञ्चित्कापट्यमस्ति । तद्धर्मकर्तृष्वपि कापट्याऽभावः प्रशब्दार्थः । **प्रकर्षेण उज्झितं कैतवं** यस्मात् । स श्रवणादिधर्मो भागवत एव । परमश्चाऽयम् । भगवद्धर्मत्वात् । परो मीयत इति भगवत्साक्षात्कारहेतुत्वाद्वा **परमः** । कर्तृवैशिष्ट्यादपि धर्मोत्कर्षमाह—**निर्मत्सराणां सतामिति** । परोत्कर्षाऽसहनं **मत्सरो** दोषः । कृपालुत्वादिधर्मसम्बन्धो गुणः । दोषाभावगुणयुक्ता अस्य धर्मस्य सम्बन्धिन इत्युत्कर्षः । अन्यत्र मात्सर्यादयः स्पष्टा एव । ज्ञानमप्यत्रैवेत्याह—**वेद्यमित्यादि** । **अत्र वास्तवं वस्तु वेद्यम्** । यज्ञब्रह्मकालपुरुषा एव सर्वत्र वेद्या उक्ताः । तेषामपि वस्तुस्वरूपो भगवानत्रैव वेद्य उक्तः । तदेव हि वास्तवं रूपं सर्वेषाम् । किञ्च । स्वप्रकाशस्याऽपि वेद्यताऽत्रैव शास्त्रे सिद्धा नाऽन्यत्र । अन्यत्र वेद्यस्याऽवास्तवत्वं, वस्तुनश्चाऽवेद्यत्वमिति स्थितिः । अविद्यावद्विषयत्वं च । भागवते तु मुक्तानामधिकारः । सर्वावेद्यस्याऽपि भगवतस्तदिच्छया प्राकट्ये वेद्यत्वम् । अन्यत्र पर्यवसितबुद्धीनामेव तादृशे अवास्तवत्वप्रतीतिः । सर्वेषां वा वास्तवं रूपं वेद्यमिति । यज्ञादिषु कृतेषु ज्ञातेषु च न शान्तपरमानन्दाऽवाप्तिः । पारलौकिकत्वाच्च तस्य फलस्य । साम्प्रतं दुःखानुभवश्च । आत्मज्ञानेऽपि शान्तता, परं न परमानन्दः । तस्यैव परमानन्दत्वं शास्त्रैर्विप्रतिषिद्धम् । भगवत्साक्षात्कारे त्वन्ततः सायुज्ये वा शान्तपरमानन्दः । तत्क्षणे[1] तापत्रयस्योन्मूलनम् । तस्माद-

१ साम्यमिति ख. ।

त्रैव फलं साधनं चेति ज्ञानोत्कर्षः । शब्दरसाभिज्ञानामपीदमेवोत्कृष्टमित्याह । **श्रीमति** लक्ष्मीयुक्ते **भागवते**. दशरसयुक्त इति यावत् । काव्येष्वप्येतच्छायारूपमस्ति । तथापि निन्दितत्वम् । कर्तृदोषात् । तदत्र शङ्कितमपि नेत्याह—**महामुनिकृत इति** । वेदव्यासकृत इत्यर्थः । समाधावनुभूय कृतत्वात्समाधिभाषार्थं महामुनिकृतमित्युक्तम् । असाधारणमुपासनाकाण्डोत्कर्षमाह । मन्त्रशास्त्रमुपासनाकाण्डः पञ्चरात्रं च । तत्र मन्त्रशास्त्रे देवता स्वाधीना भवति । परं नेश्वररूपा । पञ्चरात्रेऽपि मन्त्राऽधिष्ठानस्वरूपेणैव स्वाधीनता । तथा स्थानाधिष्ठानेष्वपि । साक्षात्पुराणपुरुषस्त्वत्रैव हृद्यवरुध्यः । अत एव **परै**र्भगवद्व्यतिरिक्तप्रतिपादितैर्भेदेन प्रतिपादितैर्वा **किं** ? न किञ्चिदित्यर्थः । वाशब्दस्त्वनादरे । अत्र तु **ईश्वरः** कर्तुमकर्तुमन्यथाकर्तुं समर्थः अदृष्टकालादिबाधकं परिहृत्य कर्तुं, अदृष्टादिकृतं दूरीकर्तुं च, भ्रान्तेष्वपि भक्तेष्वन्यथाकर्तुं च समर्थ **ईश्वरः** । **सद्य इति** भागवतश्रवणमात्रेण हृदयाऽऽरूढो भवति विचारचिन्तनव्यतिरेकेणाऽपि । अत्र प्रतिपादकानां महापुरुषत्वात्तद्वाक्यं दुर्बोधमिति बोधनप्रकारमाह—**कृतिभिः शुश्रूषुभिरिति** । बुद्धेः कौशलं कृतित्वमुक्तबोधोपयोगि । शुश्रूषा तु कथनोपयोगिनी । तदुभयसम्पत्तौ तत्क्षणादेवाऽवरुध्यत इत्यर्थः । अथवा । भागवतस्योत्कर्षमाह—**किं वा परैरिति** । भागवतस्योत्कर्षहेतुभिरन्यैरुक्तैरलम् । वेत्यनादरे । अर्थतः शब्दत उत्कर्षप्रकारा बहवः सन्त्येव । तथाप्ययं महानुत्कर्षः । यद्भगवानेव **सद्यो हृद्यवरुध्यते** । कैः ? **अत्र शुश्रूषुभिः** श्रवणेच्छुभिः । सा श्रवणेच्छा महाभाग्यैरेवेत्याह । **कृतिभिः** कुशलैः । भाषात्रयविरोधपरिहारेण पदवाक्ययोर्भगवत्परता हि ज्ञातव्या । अन्यथा श्रुतमप्यश्रुतं भवति । **तत्क्षणादिति** । तदानीमेव भगवदर्थं प्रयत्नदर्शनात् । तस्मात्सर्वोत्कृष्टं भागवतमिति वस्तुनिर्देशः ॥ २ ॥

फलरूपतामाह—

**निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ।**
**पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥ ३ ॥**

**निगमकल्पतरोरिति** । काव्यवद्रूपकनिरूपणे स्पष्टोऽर्थो भवति यद्यपि तथापि भागवते तथा कथनमनुचितम् । सर्ववेदसारोद्धारत्वात् । रूपकादिकं तु बुद्धिपरिकल्पितम् । अतो वाच्यार्थ एव वक्तव्यः । तत्र प्रमेयस्याऽप्रसिद्धावप्येतद्वाक्याऽन्यथानुपपत्त्या तादृशं प्रमेयमस्तीति बोद्धव्यम् । तत्र व्यापिवैकुण्ठेऽक्षरात्मके प्रणवबीजो वेदतरुरस्ति । ततो व्यासाख्यभगवदवतारे, आदिनारायणावतारे वा. सर्वजनाह्लादनाय मूर्तीभूतं देवतात्मकं तस्य फलमानीतम् । तदत्र निरूप्यते । मध्वादिवत् । तत्र "असौ वा आदित्यो देवमध्वि"ति स्वर्गस्थानां सूर्यो मधु । यथाऽस्माकं सारघम् । तथा स्वर्गे कल्पवृक्षवद्वैकुण्ठेऽपि वैदिकसमधिगम्यं शब्दरसात्मकः कल्पवृक्षः । न तु लक्षणा । वेदस्योत्कर्ष आधिक्यः । नितरां गमयति ब्रह्म बोधयतीति परमोपनिषन्निगमः । स एव **कल्पतरुः** सर्वफलदानसमर्थः । कल्पः स चाऽसौ तरुश्चेति कल्पतरुः । निगम एव कल्पतरुः । अतिपक्वं हि फलं **गलति** स्वत एव पतति । आगमनसमये पतितं शकुनमिव फलं समानीतमिति भावः । शुको व्यासपुत्रो मुक्तत्वादत्राऽधिकारी । पिता ह्युत्कृष्टं पुत्रमुखे प्रयच्छति. फलं च विशेषतः । तत्र रसात्मकं, निर्झरजलमिव सर्वेन्द्रियैः सम्बद्धं प्रेमरसं जनयति । तदेकीभूतं हृदये ह्रद इव तिष्ठति । तत्र भागवतं संश्लिष्टं सद्भक्तिरसमाऽऽलोडितं मुखान्निस्सरतीति । शुकमुखं प्राप्य **अमृतं** मोक्षमपि **द्रावयति** शि-



थिलं करोतीति भक्तिरसोऽमृतद्रवः । तेन संयुतम् । अनेनाऽन्यरसादप्यधिकरस उक्तः । यद्यपि वृक्षोत्कर्ष एव तादृशफलजननादायाति, तथाप्युत्कर्षहेतुः फलजननमिति प्रकृतोत्कर्षः । अथवा । शब्दात्मके वृक्षे शब्दात्मकमेव फलम् । सर्ववेदार्थविचारे भगवद्धृदय एव फलितम् । निर्द्धारितार्थप्रतिपादकशब्दराशिः । **शुद्धाश्च सुखिनश्चैव**[1] **ब्रह्मविद्याविशारदाः । भगवत्सेवने योग्या नाऽन्य इत्यर्थतः फलम्** । अयमर्थो गोप्योऽपि भक्तचिन्तया परवशस्य भगवतो हृदयादागतमिति गलितम् । अन्ये भगवद्रूपा अवतारा अधिकारिणो वा । अतोऽत्यन्तविरक्ते शुके ग्रन्थार्थः फलितः । अतस्तद्धृदये भक्तिरसः स्थितः । भागवतं च स्थितम् । मुखान्निर्गमनसमये समानाधिकरणभक्त्या सह निर्गच्छतीति तथेत्यर्थः । सम्यग्योगो हि यथाकथञ्चिच्छ्रवणेऽप्यधिकारिहृदये भक्त्यावेशात् । **पिबते**त्युपदेशः । "स्वाध्यायोऽध्येतव्य" इति वत् । बहिःस्थितस्येन्द्रियादिद्वारा अन्तःप्रवेशनं पानम् । तद्द्रवद्रव्यस्येति रसमित्युक्तम् । **भागवतमिति** ग्रन्थनाम । **भगवत्सम्बद्धमिति** वा । शब्दश्रवणेनाऽर्थज्ञानाद्रसास्वादनमतिरिक्तमिव भवति । सीत्कारेण तस्य पानात् । तथा भागवतं पातव्यम् । न तु श्रवणमात्रं कर्तव्यमित्यर्थः । त्वगस्थ्यादिकं तु नास्ति । निर्बीजदाडिमबीजवत् । रसात्मकान्यपि कानिचित्फलानि सन्ति । यथा पृथिव्यादयो रसा उद्गीथान्ताः । तथा रसात्मकस्य भगवतो भागवतं रसः । तत्स्पर्शनमात्रयोग्यं न भवति किन्तु पानयोग्यमित्यर्थः । अस्य रसस्य ब्रह्मतामाह—**आलयमिति** । सर्वाधारभूतं, आ समन्ताल्लयो यस्मादिति सर्वप्रपञ्चलयहेतुभूतं वा । **आ** ईषल्लयो मोक्षो यस्मादिति वा । मोक्षेच्छां परित्यज्य तत्पातव्यमिति । **मुहुरिति** व्यासस्य परवशत्वमापादयति । अन्यथा रसिकाः स्वयमेव पास्यन्तीति व्यर्थं वचनं स्यात् । मुहुः पानं वा विधीयते रसज्ञानाय । प्राकृतकर्णैरापाततस्तद्रसास्वादनं न भवतीति । वक्ष्यति च "परस्परं त्वद्गुणवादसीधुपीयूषनिर्यापितदेहधर्मा"इति । **अहो रसिका** इत्याश्चर्येण सम्बोधनम् । भवतामेवार्थेऽयं रसः समानीत इति । भूमौ भावुकाः भविष्णवः । भावनाचतुरा वा । विस्मृतेऽपि रसे भावनया रसाभिनिवेशं कुर्वन्तीति मुहुः पानं सम्भवति । भुवि भाग्यवतां च बहुवचनेनैकस्य रसाभिनिवेशो न भवतीति सूचितम् ॥ ३ ॥

एवं बीजमध्यभावफलरूपतामुक्त्वा श्रोतॄनभिमुखीकृत्य शास्त्रमारभते—

**नैमिशेऽनिमिषक्षेत्रे ऋषयः शौनकादयः ।**
**सत्रं स्वर्गाय लोकाय सहस्रसममासत ॥ ४ ॥**

**नैमिश इति** । अत्र भागवतस्य परम्परागताः सप्ताऽर्थाः कथार्थतोऽतिरिक्ता भवन्ति । अतो नाऽन्यटीकासु ते निरूप्यन्ते । ते हि निबन्धे—"**शास्त्रे, स्कन्धे, प्रकरणेऽध्याये, वाक्ये, पदेऽक्षरे । एकार्थं सप्तधा जानन्नविरोधेन मुच्यत**" इति निरूपिताः । तत्र आनन्दस्य हरेर्लीला शास्त्रार्थः । भक्तिजनिका हि संहिता । सृष्ट्यादीनां लीलात्वे ज्ञाते भक्तिर्भवति, न कार्यत्वे । कौतुकाधिष्ठितेन अनायासत्वेन क्रियमाणं कर्म लीला । तदा हि महत्त्वं निर्दुष्टत्वं च भवति । सा च लीला मुख्या दशविधा "अत्र सर्गो विसर्गश्चे" ति श्लोकेन निरूपिता । सा च तृतीयादिदशस्कन्धैर्निरूप्या । श्रोतृवक्तृलक्षणं प्रथमे । अङ्गनिरूपणं द्वितीये । अतो द्वे गौणलीले । एवं द्वादश ।

1 सुखिनश्चेवमिति ख.

तत्र प्रथमे स्कन्धेऽधिकारिलीला निरूप्यते हीनमध्यमोत्तमभक्तो भागवतार्थज्ञाने प्रकारबोधनाय । न हि सर्वैरेकविधं भागवतं बुध्यते । सूतशौनकाभ्यां बुद्धमेकविधम् । तथा नारदव्यासाभ्यामपरविधम् । तथा शुकपरीक्षिद्भ्यामुत्कृष्टम् । एवं त्रैविध्यनिरूपणेन यथाधिकारमर्थावबोधो भविष्यतीति फलिष्यति । तत्र प्रथमं हीनाधिकार उच्यतेऽध्यायत्रयेण प्रश्नोत्तराभ्याम् । प्रश्न एकविधः । उत्तरं द्विविधमिति । तत्र श्लोकद्वयेन प्रश्नसङ्गतिमाह स्वरूपसङ्गतिभेदेन । तत्र स्वरूपमाह—**नैमिश इति** । पुण्यतीर्थे पुण्यक्षेत्रे यज्ञादिभिः शुद्धाः यज्ञरूपभगवदाविष्टा भगवत्प्रश्ने प्रथमाधिकारिणः स्वरूपतोऽधिकारिणः । नेमिः शीर्यत इति नेमिशम् । नेमिशमेव **नैमिशम्** । प्रजापतिसृष्टस्य मनोमयचक्रस्य ऋषीणां तपःस्थानज्ञापनार्थं "**यत्राऽस्य नेमिः शीर्यत**" इति पुण्याधिक्यमुक्तम् । **नैमिष** इति पाठे यत्र निमिषमात्रेण दानवबलं निहितमिति नैमिषम् । सर्वदोषनिवारकम् । तस्य क्षेत्रस्य विष्णुर्देवतेत्याह—**अनिमिषक्षेत्र इति** । अनिमिषो विष्णुस्तस्य क्षेत्रे दोषाऽभावगुणावुक्तौ । ऋषयो मन्त्रद्रष्टारः शौनकादय इति प्रसिद्धा ऋषिपरम्परायाम् । **सत्रम्** । **सहस्रसममिति** नाम यस्य । सहस्रसंवत्सरसाध्यम् । यत्र यजमाना एव सर्वे ऋत्विक्कर्म कुर्वन्ति तत्सत्रम् । तत्र पूर्वं सहस्रसंवत्सरे सत्रे तत्राऽलौकिकभगवदाविर्भावो दृष्टः । "विश्वसृजः प्रथमाः सत्रमासते" त्यादौ । तथाऽत्रापि सहस्रसम आरब्धे भागवतरूपस्य भगवत आविर्भावो भविष्यतीति ज्ञात्वा ऋषीणां सत्राऽऽरम्भ इत्यर्थः । **स्वर्गाय** । भगवदानन्दांशभूतः स्वर्गः । लोकात्मकस्तु महानंशः । स ह्यत्र फलम् । न तु स्वर्गीयत इति स्वर्गायो विष्णुः । स चाऽसौ लोकश्चेति । "**सुवर्गाय वा एतानि लोका (?) हूयन्त**"इति श्रुतिविरोधात् । स च सुखविशेषशरीरः । देवविशेषो लोकरूपः । "**देवेभ्यो वै स्वर्गो लोकस्तिरोऽभवदि**"त्यत्र तथा निर्णयात् । सत्रे सर्वत्र **आसतेरिव** कृतिवाची । एवं तेषां स्वरूपोत्कर्ष उक्तः ॥ ४ ॥

सङ्गतिमाह—

**त एकदा तु मुनयः प्रातर्हुतहुताग्नयः ।**
**सत्कृतं सूतमासीनं पप्रच्छुरिदमादरात् ॥ ५ ॥**

**त एकदेति** । उत्सर्गकालोऽयं, दीक्षाकालो वा । नित्यनैमित्तिकसर्वहोमान्कृत्वा, भगवत्कथाश्रवणार्थे सावकाशा जाता इत्याह—**प्रातर्हुतहुताग्नय इति** । **एकदेति** हरिगाथोपगायनकाल उक्तः । तदैव सूतादीनामागमनम् । **मुनय** इत्यलौकिकपरिज्ञानमुक्तम् । येन सूतपरिज्ञानं भवति । तत्प्रसङ्गेऽन्येषां प्रश्नव्यावृत्त्यर्थं **त** इति । **प्रातरेव हुता एवाऽग्नयः पुनर्हुता** येषां ते **प्रातर्हुतहुताग्नयः** । न च वेदविरोधश्शङ्कनीयः । **तुशब्देन** पक्षान्तरस्वीकारात् । तथा करणे मननं हेतुः । कालगुणविशेषपरिज्ञानात् । अत एवाऽग्रे वक्ष्यति "कर्मण्यस्मिन्ननाश्वास" इति । **सत्कारः** सम्भाषणादिना यथाऽऽसनदानेन वा । सूतः पौराणिक उग्रश्रवाः । ब्राह्मणानां सदस्यन्येषामनुपवेशनात् । उत्थितस्य च पुनर्वैयग्र्यात्कथान्यूनभावाच्च तन्निराकरणाय **आसीनमि**त्युक्तम् । भगवत्कथारसाभिनिवेशादहमहमिकया सर्वैः पृष्ट इति बहुवचनम् । **इदमिति** । वक्ष्यमाणम् । सूतस्य **भगवदादरात्प्रच्छु**रादरेण वा । सर्वत्र भगवत्कथायामान्तरो भावो मुख्यः । न तु वाक्यमात्रम् ॥ ५ ॥

---

१ अधिकारलीलेति घ. २ स्वरूपतोत्कर्ष इति क. घ.



अत्र षट् प्रश्ना भगवद्विषयकाः कर्तव्याः । षड्गुणत्वाद्भगवतः । तदर्थं वक्तारमभिनन्दन्ति त्रिभिस्त्वयेत्यादिभिः—

**ऋषय ऊचुः—**

**त्वया खलु पुराणानि सेतिहासानि चाऽनघ ।**
**आख्यातान्यप्यधीतानि धर्मशास्त्राणि यान्युत ॥ ६ ॥**

**खल्विति** स्तुतिव्यावृत्तिः । पुराणान्याकरस्थानि, मूलसंहिताचतुष्टयं वा । **इतिहासो** भारतम् । **चकारा**दन्याश्च कथाः प्रगाथादयः । विद्योपजीवनं च न करोतीत्यनघेत्युक्तम् । **आख्यातान्यप्यधीतानि** पूर्वमधीत्य व्याख्याय, पुनः पुनरधीतानीत्यर्थः । तदैव निस्सन्देहः । **धर्मशास्त्राणि** चाऽधीतानि । "**धर्मार्थकाममोक्षाख्याश्चत्वारोऽर्था मनीषिणाम् । जीवेश्वरविचारेण द्विधा ते हि निरूपिताः**" ॥ तत्रेश्वरविचारिताश्चत्वारो वेदा एव । जीवविचारितास्तु स्मृतिषु धर्मः, नीतिशास्त्रे अर्थः, वात्स्यायनादिषु कामः, सांख्यायनादिषु मोक्षः । तत्र यावत्सर्वज्ञत्वं न भवति, तावद्भगवच्छास्त्राऽपरिज्ञानम् । तदर्थमाह—**धर्मशास्त्राणीति** । **उत यानि** प्रसिद्धानि अर्थशास्त्रादीनि लौकिकानि वा ॥ ६ ॥

सूतपारम्पर्येण ज्ञातान्येव ज्ञातानि न तु ब्राह्मणैर्ज्ञातानि ज्ञातानीति शङ्कां वारयितुमाह—

**यानि वेद विदां श्रेष्ठो भगवान्बादरायणः ।**
**अन्ये च मुनयः सूत परावरविदो विदुः ॥ ७ ॥**

**यानि वेद विदामिति** । धर्मार्थकामाः सूतपारम्पर्येणाऽपि ज्ञायन्ते । मोक्षशास्त्राणि तु ब्राह्मणैरेव । तत्र सूतस्याऽज्ञानं सम्भवति । तन्निवृत्त्यर्थमाह । **विदां श्रेष्ठो** ज्ञानिनां श्रेष्ठः । **यानि वेदेति** मोक्षशास्त्राणि सर्वाणि गृहीतानि । ननु तानि कथं व्यासस्तस्मै कथयेदित्याशङ्क्याऽऽह—**भगवानिति** । भगवतः सर्वं सम्भवति । तथाऽप्यनधिकारिणे कथमाहेत्याशङ्क्याऽऽह—**बादरायण इति** । अतितपसा तदधिकारसम्पादनशक्तिरुक्ता । "**न ह्येकस्माद्गुरोर्ज्ञानं शिक्षितं स्यात्सुपुष्कलमि**"ति वाक्यादसार्वज्ञ्यमित्याशङ्क्याऽऽह—**अन्ये च मुनय इति** । ते च मननशीला ज्ञानिनः । अज्ञानादुपदेश इति न मन्तव्यम् । यतः सूतः प्रसिद्ध इति पुनः सम्बोधनम् । तर्हि कथमुपदेशः ? इत्यत आह—**परावरविदो विदुरिति** । परे ब्रह्मादयः अवरे अस्मदादयः । भूतभविष्यत्काला वा । ताञ्जानन्तीति । ईश्वरेच्छा तथैव, कालश्च तथेति, बोधनार्थं तथा वचनम् ॥ ७ ॥

फलितमाह—

**वेत्थ त्वं सौम्य तत्सर्वं तत्त्वतस्तदनुग्रहात् ।**
**ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत ॥ ८ ॥**

**वेत्थ त्वमिति** । शिष्यगुणानाह—**सौम्येति** । हे शान्त । सेवादिगुणानां साधारण्येऽप्यसुरत्वाच्छूद्रस्य क्रौर्यादयः सम्भवन्ति । तदभावश्चेत्सिद्धा अन्ये सद्गुणा इति भावः । **सूतेति** सम्बो-

---

१ स्थानानीति ख.

धनाद्वेदव्यतिरिक्तमिति ज्ञातव्यम् । आपाततो ज्ञानं वारयति—**तत्त्वत इति** । उपदेशेऽपि कथमनधिकारिणो ज्ञानमित्याशङ्क्याऽऽह—**तदनुग्रहादिति** । गुरूणामनुग्रहात्सर्वं भवतीत्यर्थः ॥ ८ ॥

एवं सार्वज्ञ्यमुक्त्वा, प्रथमतः फलं पृच्छति[1]—

**तत्र तत्राऽञ्जसाऽऽयुष्मन्भवता यद्विनिश्चितम् ।**
**पुंसामेकान्ततः श्रेयस्तन्नः शंसितुमर्हसि ॥ ९ ॥**

**तत्र तत्रेति** । फलार्थं हि साधनं मृग्यते । अतः किं फलं किमफलमिति भवति विचारणा । अभ्युदयो निःश्रेयसं वा भवति फलमन्यद्वा ? सर्वत्र दूषणान्यग्रे वक्ष्यन्ते । अतः सन्देहात्प्रश्नः । तथापि प्रमाणबलविचारेण निर्णयः । तदाह । अञ्जसा ग्रन्थाऽऽर्जवेन । **आयुष्मन्नित्याशीर्भयाऽभावो** वा सूच्यते । गुरूणामन्योन्यं विप्रतिपत्तावपि बहुगुरुत्वेन बुद्धिवैशद्यात्स्वतो निर्धारणं सम्भवतीत्याह—**भवता यद्विनिश्चितमिति** । **पुंसां** स्वतन्त्राणाम् । **एकान्ततः श्रेयः** । कदापि सर्वान् प्रति श्रेयस्त्वं न त्यजतीत्यर्थः । स्वर्गिणां पुत्रादिषु न श्रेयस्त्वम् । तथा मुक्तानां स्वर्गे । भक्तानां मुक्ताविति किमत्रैकान्ततः श्रेय इत्यर्थः । तदस्मभ्यं शंसितुमर्हसि ॥ ९ ॥

द्वितीयं प्रश्नमाह **प्रायेणेति** सार्द्धाभ्याम्—

**प्रायेणाऽल्पायुषः सभ्य कलावस्मिन्युगे जनाः ।**
**मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः ॥ १० ॥**

साधनविषयकोऽयं प्रश्नः । स्वस्य ऋषित्वेन चिरजीवित्वात्तद्व्यतिरेकेणाऽऽह—**प्रायेणेति** । अनेन ऋषिव्यतिरिक्तानामयमुपाय इति गम्यते । आद्यस्तु तेषां पुंसां न इति वा सामानाधिकरण्यम् । अल्पमायुर्येषां ते **अल्पायुषः** । अनेन सहस्रसमादयो न तेषां साधनमित्युक्तम् । प्रकृताऽनुपयोगादकथनमाशङ्क्याऽऽह—**सभ्येति** । सभामर्हतीति सभ्यः । "सभां (?) वा न प्रवेष्टव्य (?) मि"ति धर्मबोधनाय सम्बोधनम् । अत्यावश्यकमहत्कालसाध्यसाधनत्वे अवक्तव्यत्वमाशङ्क्य कलिदोषेणैवाऽल्पायुष्ट्वं न स्वभावतः । तथाच कलिदोषपरिहारकेण तादृशेन साधनेनाऽल्पायुषोऽपि वृद्धिरित्यभिप्रायेणाऽऽह—**कलावस्मिन्युग इति** । तस्य कलेः कालान्तरत्वे इदानीमुपायस्याऽवक्तव्यत्वमाशङ्क्याऽऽह—**अस्मिन्निति** । युगपदप्रयोगस्तत्रत्यानां पूज्यत्वाय[2] । सहजसंसारित्वाभावाय **जना इति** । प्रादुर्भावादुत्कृष्टत्वम् । एवं सहजदोषमुक्त्वाऽऽगन्तुकदोषमाह—**मन्दा** इत्यादिभिश्चतुर्भिर्विशेषणैः[3] । **मन्दा** अलसाः । आलस्यं चित्तजाड्यम् । सुष्ठु मन्दा मतिर्येषामिति ज्ञानेन्द्रियदोषः । **मन्दभाग्या** इत्यदृष्टस्य कर्मेन्द्रियसाध्यत्वात्तद्दोषः । उपद्रुता रोगादिभिरिति शरीरदोषः । एवमागन्तुकदोषा उक्ताः ॥ १० ॥

कार्यान्तरेण च व्याप्टता इत्याऽऽह—

**भूरीणि भूरिकर्माणि श्रोतव्यानि विभागशः ।**
**अतः साधोऽत्र यत्सारं समुद्धृत्य[4] मनीषया ।**
**ब्रूहि भद्रं हि भूतानां येनाऽऽत्मा सुप्रसीदति ॥ ११ ॥**

**भूरीणीति** । अयं बाह्यो दोषः । "**न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृदि**"ति

१ पृच्छन्तीति घ. २ युग्मत्वायेति क. ग. ३ चत्वारो दोषा इति घ. ४ समुद्धृत्येति क्वचित्कः पाठः.



लौकिककर्मव्याप्टताः । ततोऽपि विहितकर्मव्याप्टताः । तत्र प्रमाणविचारे प्रकरणशो धर्मादिशास्त्राणि ज्ञातव्यानि । तानि च, भूरीणि कर्माणि येष्विति **भूरिकर्म्माणि** । न च श्रवणमात्रेण कृतार्थता । किन्तु तदुक्तानि कर्माण्यपि कर्तव्यानि । ततो महान्दोषो बाह्यः । एवं त्रिदोषग्रस्तानामुपायं कथयेत्याहुः—**अत इति** । प्रत्युपकारापेक्षाऽभावाय सम्बोधनम्—**साधो इति** । परदुःखदूरीकरणं साधोरावश्यकमिति भावः । अन्यार्थमुक्तस्य, प्रासङ्गिकस्य वा साधनस्य निराकरणायाऽऽह—**अत्रेति** । एतादृशदोषे अत्रापि बहूनि साधनानि चेत् ? यत्सारं तत्समुद्धृत्य वक्तव्यम् । यत्तदोर्नित्यसम्बन्धान्नाऽध्याहारदोषः । यदिति प्रसिद्धं वा । सारं पारम्पर्यफलव्यभिचारादितुषरहितम्[1] । एकवचनेनाऽसाधारण्यं सुगमत्वं चोक्तम् । "**प्रकरणेन विभयो वक्ष्यन्त**" इति न्यायेन यद्यपि सर्वं प्रकणेषु सुसम्बद्धं, तथापि तत्तत्स्थानादुद्धृत्य वक्तव्यमित्याऽऽह—**समुद्धृत्येति**[2] । प्रकरणेषु तद्धर्मशून्यत्वाभावाय । **मनीषयेति** । बुद्ध्यैवोद्धरणं न कृतितः । मनस ईषा मनीषा । मनश्चाञ्चल्यनिवारिका बुद्धिः । प्रार्थनायां प्राप्तकाले वा लोट्—**ब्रूहीति** । **भद्रं** कल्याणं, त्रिविधदुःखाऽभावपूर्वकमहासुखाऽवाप्तिः । तद्भगवत्प्रसादादिति चेत् ? तत्राऽऽह—**येनाऽऽत्मा सुप्रसीदतीति** । **येनैव हेतुना आत्मा** भगवान् **सुप्रसीदति** । तर्हि तथैव कथयेत्यर्थः । **भूतानामिति** पिशाचवज्जीवानां परिभ्रमणबोधनेन दया सूचिता ॥ ११ ॥

एवं फलसाधने[3] निरूपिते । तत्राऽऽविर्भूतो भगवानेव फलं साधनं चेत्याशङ्क्य, भगवदवतारो लोकानामर्थे स्वार्थे वेति सन्देहादवतारप्रयोजनं पृच्छति[4]—

**सूत जानासि भद्रं ते भगवान्सात्वतां पतिः ।**
**देवक्यां वसुदेवस्य जातो यस्य चिकीर्षया ॥ १२ ॥**

**सूत जानासीति** । इदं त्वतिगूढमिति को वेद । न जानातीति सन्देहात्पृच्छति[5]—**जानासीति** । मुखप्रसादं दृष्ट्वा जानातीति ज्ञात्वा हर्षेणाऽऽशीराहुः(?)—**भद्रं त इति** । **अस्त्वित्यर्थात्** । महति ज्ञानोपदेशे दक्षिणा ह्येषा । श्रुतमस्ति, देवक्यां **जातः** कृष्णो भगवानिति । तत्र **सन्देहः** । भगवतः षड्गुणैश्वर्यसम्पन्नस्य ब्रह्मणः कार्यकरणार्थं न देहे सम्बन्धोऽपेक्ष्यते । जीवधर्मास्तु ब्रह्मणि न सन्त्येव । प्रादुर्भावप्रकारस्तु जीवानामिव । अतः सन्देहः । किञ्च । **सात्वतां पतिः** । सत्वैकनिष्ठाः **सात्वन्तः** देवा मुक्ता वा । तत्परित्यज्य मनुष्येषु संसारिषु कथमाविर्भावः । पतित्वात्तेषां परित्यागोऽनुचितः । किञ्च । देवा मुक्ताः सनकादयो वा । तेऽपि ब्रह्मणो देहान्मनसो वा उत्पद्यन्ते, न स्त्रियाम् । तत्रापि कस्यचित्कन्यायां **देवक्यामिति** । देवकस्य कन्या देवकी । तयाच अप्सु नारायणावतारवन्न भवति । तत्रापि विशेषः—**वसुदेवस्येति** । वसुदेवस्य भार्या पराधीना । भगवदवतारे न भार्यादिविशेषसम्बन्धः । किन्तु सम्बन्धमात्रमिति षष्ठीमात्रप्रयोगः । अतस्तादृशस्य तादृशावतारे किं कार्यम् । तर्हि तथा न भविष्यतीत्याशङ्क्याऽऽह । **जातः** । कंसादिवधस्त्वन्यस्मादपि भवतीत्यभिप्रायः । अतो यस्य चिकीर्षया जातस्तन्नः कथयेति सम्बन्धः । अनेन प्रासङ्गिकं प्रयोजनं निवारितं, कालादिसाध्यता च ॥ १२ ॥

१ दोषरहितमिति ख. घ. २ समुद्धृत्येति क. ग. ३ फलसाधनप्रश्ने इति क. घ. ४ पृच्छन्तीति घ. ५ पृच्छन्तीति घ.

नन्वस्त्येव प्रयोजनं, कारणदर्शनात् । योगेन च तज्जानन्तीत्याशङ्क्याऽऽहुः(?)—

**तन्नः शुश्रूषमाणानामर्हस्यङ्गाऽनुवर्णितुम् ।**
**यस्याऽवतारो भूतानां क्षेमाय च भवाय च ॥ १३ ॥**

**तन्नः शुश्रूषमाणानामिति ।** बहूनामस्माकं श्रवणेच्छापूरणाय कथनीयम् । न हि श्रवणेच्छा योगेन निवर्तते । न वा योगः सर्वैः कर्तुं शक्यते । न वा योगेन भगवदीयः पदार्थो ज्ञातुं शक्यते भगवद्वाक्यव्यतिरेकेण । अत एव साक्षात्परम्परया वा भगवन्मुखोक्तं गुरुमुखाच्छ्रुतं **अनु** पश्चाद्**वर्णयितुमर्हसि ।** पठितस्य हि अनुवचनमावश्यकं मन्त्रादावपि । परमधिकारिविशेषे । तच्छुश्रूषमाणानां वक्तव्यमेव । **अङ्गेति** कोमलसम्बोधनमङ्गत्वेन स्वाधीनत्वाय । असाधारणं तु प्रयोजनं पृच्छ्यते, साधारणं तु ज्ञायत इत्याहुः(?)—**यस्याऽवतार** इत्यादिसार्धैस्त्रिभिः । तत्र प्रथममवतारद्वारा रूपप्रयोजनमाह—**यस्येति ।** **यस्य** सामान्यतोऽप्य**वतरणं** देवतिर्यङ्नरादिष्वलौकिकतेजसः सङ्क्रमणं, **भूतानां** जातमात्राणां स्थावरजङ्गमानां **क्षेमाय** ऐहिकसर्वसुखाय । **चकारा**त्सर्वदुःखनिवृत्तये । **भवाय** मोक्षाय । चकारादविद्यानिवृत्तये । **भू सत्तायामिति** सन्मात्रत्वायेत्यर्थः । "**चिति तन्मात्रेण तदात्मकत्वादि**" ति चैतन्येऽनुप्रवेशो वा चकारार्थः ॥ १३ ॥

एवं सर्वेषामभ्युदयनिःश्रेयसार्थं भगवदवतार इत्युक्तम् । उत्पत्स्यमानानां तु नाम्ना पुरुषार्थसिद्धिरिति तन्माहात्म्यमाह—

**आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ।**
**ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयम् ॥ १४ ॥**

**आपन्न इति ।** **घोरां संसृतिं** सर्पादियोनिभूतां, महाव्याध्यादिरूपां वा । **आपन्नः ।** **यस्य** अवतारस्य **नाम विवशः** परवशः, **वेः** कालस्य **वशो** वा, **गृणन्नु**च्चरन्नेव, **ततः** संसृतेः सद्यो विमुच्यते । तत्र हि अन्तकाले कालस्याऽधिकारी भयनामा कश्चिन्मृत्युपाशेन सर्वानेव गृह्णाति । यश्चतुर्थस्कन्धे वक्ष्यते—"**सैनिका भयनाम्न**" इत्यत्र । सद्यस्तस्य पाशान्मुच्यत इत्यर्थः । ननु कथं स नामकथनमात्रेण पाशान्मुच्यति? तत्राऽऽह[1] । **यद्बिभेति** यस्मान्नाम्नो भयं स्वयं बिभेति । स्वरूपनाशेन बिभेति । न तु बहिःपदार्थनाशेन । एवं हि भगवन्नाममाहात्म्यं यच्छ्रोतॄन् मुक्तान् करोति । ततो भयमपि मुच्येतेत्यर्थः । अथवा । स्वरूपभूतं भयमपि मुच्यत इत्यर्थः । द्वैतदृष्टिर्गच्छति । "**द्वितीयाद्वै भयं भवती**"ति श्रुतेः । अतोऽग्रे उत्पत्स्यमानानां नाम्ना मुक्तिः ॥ १४ ॥

ननु नामोच्चारणसामर्थ्यरहितानां वृक्षपश्वादीनां का गतिरिति चेत्? तत्राऽऽह—

**यत्पादसंश्रयाः सूत ऋषयः प्रशमायनाः ।**
**सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवया ॥ १५ ॥**

**यत्पादसंश्रया इति ।** भक्तस्पर्शेन तेऽपि मुच्यन्त इत्यर्थः । यस्य भगवतः पादौ संश्रयभूतौ येषाम् । भगवतः समाश्रयणं ज्ञानमार्गेऽपि भवति । यथा च ज्ञानिनां देहाध्यासाभावात्तत्स्पर्शेन न मुक्तिः किन्तु तदुपदेशेनेति, तद्व्यावृत्त्यर्थं **पादपदप्रयोगः** । पादसंश्रयणं भक्तिमार्ग एव । गुरुत्वप्रकार-

१ तत्राहेति क. घ.



व्यावृत्त्यर्थं **सम्**उपसर्गः । **सूतेति** सम्बोधनं पावित्र्यानुभवज्ञापनार्थम् । यथा सूतोऽपि सन् महापुरुषकृपया ब्राह्मणैर्यज्ञादिष्वपि संव्यवहारं संभजते । **ऋषयो** मन्त्रद्रष्टारः । **प्रशमायना** ज्ञानिनः । प्रकृष्टः शमः अयनं येषामिति । त उभयेऽपि यत्पादसंश्रयाः पुनन्तीति योजना । अथवा । पादसंश्रया ऋषयः प्रशमायनाश्च भूत्वा ज्ञानकर्मणी प्राप्य त्रितयसम्पन्नाः सर्वेषां पावित्र्यहेतवो भवन्ति । स्वयं हि शुद्धाः सन्तः परान् पुनन्ति । अतः स्वशुद्ध्यर्थं ज्ञानकर्मणी युक्ते । न तु साक्षात्पावनसम्बन्धस्तयोः । **उपस्पृष्टाः** समीपे देहसम्बन्धमात्रेण पुनन्तीत्यर्थः । कालव्यवधानेन हि सर्वत्र पावनं दृष्टं—"**त्रिः स्वाध्यायं वेदमधीयीत[1] त्रिरात्रं वा सावित्रीं संवत्सरादेवाऽऽत्मानं पुनीत**"-इत्यादिभिः । **मुनय** इति पाठेऽपि मननं, कर्मयोगो वा । क्रौर्यादिना स्पर्शव्यावृत्त्यर्थम्—**उपेति ।** अग्रेण वा सम्बन्धः । तेषां तु दृष्ट्यादिनाऽपि पावनं सम्भवति । **स्वर्धुन्यापो** गङ्गाजलान्य**नुसेवया पुनन्ति** भगवत्सेवकानेव पुनन्तीत्यर्थः । "**प्रायश्चित्तानि चीर्णानी**" ति वाक्यात् । "**सद्यः पुनाति गाङ्गेय**" मित्यपि । नारायणसंमुखीकरणद्वारा पुनन्ति । अथवा । उपस्पृष्टाः स्वर्धुन्यापः सद्यः पुनन्तीति दृष्टान्तः । **नु** इति वितर्के । भगवद्भक्ता गङ्गा च पुनन्तोऽपि, भगवत्सेवया पुनन्ति, नाऽन्यथेति वितर्कः । आपाततः पावनं नाऽत्र विवक्षितम् । परमपावनं तु मायास्पर्शाभावः ॥१५॥

एवं सार्द्धाभ्यां भगवद्रूपनामसम्बन्धिनां माहात्म्य उक्ते, शङ्का भवति—कथमिदमवगतं भगवच्छास्त्रव्यतिरेकेणेति । अवगते तु पुनः शास्त्रे प्रश्नोऽनुपपन्नः ? इत्यत आह—

**को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः ।**
**शुद्धिकामो न शृणुयाद्यशः कलिमलापहम् ॥ १६ ॥**

**को वा भगवत इति ।** भगवद्यशःश्रवणेनाऽस्माकं हृदये स्वतः स्फुरितम् । अतः सामान्यतो ज्ञानविशेषार्थं प्रश्नः । यद्यपि भक्त्यभावात्स्वतः पुरुषार्थत्वेन भगवद्यशःश्रवणं न भवति, तथापि सन्मार्गवर्तिनां शुद्धिरपेक्ष्यत इति तदर्थं श्रवणम् । विशेषतः कलौ । देशकालद्रव्यकर्तृमन्त्रकर्मणां षण्णामप्यशुद्धकरणात् । स्वतन्त्र[2]व्यावृत्त्यर्थं—**क इति ।** वेत्यनादरे[3] । अश्रोतारो दैत्यांशा न गण्यन्त एवेति । जीवानां स्वत उत्कृष्टाद्ब्रह्मण एव शुद्धिः (?) **भगवत** इत्युक्तम् । **तस्ये**त्यवतीर्णस्य सुलभत्वाय । लौकिकप्रभुस्तोत्रवदन्नादकर्तृकव्यावृत्त्यर्थमाह—**पुण्यश्लोकेड्यकर्मण इति ।** **पुण्या श्लोका** कीर्तिर्येषाम् । कीर्तनकर्तॄणामपि कीर्तिर्यत्र सर्वान् पुनाति, तत्र किं वक्तव्यं कीर्तनस्य सर्वपावकत्वम् । तानपि पुनातीति वा । तेषां पावित्र्यापेक्षा नास्तीति वा । अनेन कीर्तिः पवित्रेष्वेव प्रतिष्ठितेति बोधितम् । कर्मसामान्यग्रहणादुत्कर्षाऽऽधायककर्मव्यतिरिक्तान्यपि कर्माणि पावनानीत्युक्तम् । पुण्यश्लोकवचनादेवं ज्ञायते—कीर्तिमद्भिः सह सम्बन्धः प्रायेण सर्वेषां भवति, ते च भगवन्तमेव कीर्तयन्ते, अतो भगवत्कीर्तिश्रवणं सुलभमिति । यत्राऽऽपाततोऽपि शुद्धिः श्रवणेन, तत्र शुद्धिकामः कथं न शृणुयात् । आधारोत्कर्षाऽऽधायकसर्वलोकाऽऽह्लादकविसर्पी[4] गुणः कीर्तिर्यशः । कलौ सर्वेषामपहतपाप्मत्वाभावान्न तैः कलिदोषनिवृत्तिः । भगवतस्तु कालात्परत्वात्तत्कीर्तेरपि तत्परत्वम् । अतः कलिदोषनिवर्तकमिति ॥ १६ ॥

१ अधीयेतेति ख. २ अस्वतन्त्रेति ख. ग. स्वातन्त्र्येति घ. ३ अनादरकर्तृ इति क. ४ विसर्पिगुण इति घ.

एवं प्रयोजनप्रश्नमुक्त्वा कर्मप्रश्नमाह—

**तस्य कर्माण्युदाराणि परिगीतानि सूरिभिः ।**
**ब्रूहि नः श्रद्दधानानां लीलया दधतः कलाः ॥ १७ ॥**

**तस्य कर्माणीति** । तादृशप्रयोजनस्य श्रुतस्य हृदये समागमनार्थं कर्माण्येव पृच्छन्ति(?)—**तस्य कर्माणीति** । कर्मश्रवणेन यत्फलं तद्भगवता देयमित्यपि नास्ति । अन्यानि च फलानि कर्मैव पात्रापात्रविवेचनव्यतिरेकेणैवाऽल्पेभ्योऽपि बहु प्रयच्छतीत्याह—**उदाराणीति** । उदारादिविशेषणानि न व्यावर्तकानि । किन्तु कर्मोद्देशेनोदारत्वादि विधीयते । प्रथमत एव विशेष्यनिर्देशात् । अवान्तरफलप्राप्त्यर्थमुदारत्वनिर्देशः । मुख्यं फलं भगवत एव । तेषामज्ञानाभावमाह—**परिगीतानि सूरिभिरिति** । **परितो गीतानीति** सर्वतो दूराच्छ्रवणसम्भवः । **सूरिभिरि**त्यन्यथाकथनव्यावृत्तिः । तर्हि शौनकादीनामपि सुलभत्वादकथनमित्याशङ्क्याऽऽह—**श्रद्दधानानामिति** । श्रद्धया हि पुनः पुनः श्रवणेच्छा निरूपिता । कदाचिदपि रुच्यभावो नास्तीत्यभिप्रायेणाऽऽहुः(?)—**लीलया दधतः कला इति** । अनायासेन हर्षात्क्रियमाणा चेष्टा लीला । तया नूतना एव कलाः प्रतिक्षणं भ्रियन्ते । भगवता यथा तथा तत्कर्मणामपि चन्द्रस्येव नूतनकलासम्बन्धात्कदाचिदपि नाऽरुचिः । इदं हि विशेषणं पूर्वोक्तनिर्वाहकम् ॥ १७ ॥

एवमेकोपक्रमेण प्रयोजनकर्मणी पृष्टे । अथ भिन्नोपक्रमेणाऽऽवतारकथां पृच्छंति—

**अथाऽऽख्याहि हरेर्धीमन्नवतारकथाः शुभाः ।**
**लीला विदधतः स्वैरमीश्वरस्याऽऽत्ममायया ॥ १८ ॥**

**अथाऽऽख्याहीति** । यद्यपि केचन अवतारास्तत्तदुपाख्याने श्रुतास्तथाप्येकोपक्रमेण सर्वेऽवताराः सविशेषा ज्ञातव्याः । अत औत्सुक्यात्पृथक्प्रश्नः । **अथेति** भिन्नोपक्रमे । **हरेरिति** सामान्यतोऽवतारे परदुःखदूरीकरणं निमित्तमित्युक्तम् । अवतारस्वरूपस्य दुर्ज्ञेयत्वान्न सर्वजनीनं तज्ज्ञानमिति विशेषसम्बोधनम्—**धीमन्निति** । अवताराणां कथाः—कथमवतारः ? कस्याऽवतारः ? कुत्राऽवतारः ? किमर्थमवतारः ? इति । चतुर्धा कथा वक्तृश्रोतृप्रवर्तकानां शुभफलप्रदाः । वस्तुतोऽपि शुभाः । लोके पुत्रजन्मकथावत् । तत्रापि येष्ववतारेषु स्वेच्छया लीला विहारास्ते वक्तव्या इत्याऽऽह—**लीला विदधत इति** । **स्वैरमिति** । मर्यादातिक्रमेणाऽपि । तत्र हेतुः—**ईश्वरस्येति** । सर्वभवनसामर्थ्यं **माया**, अन्यथाकरणनिर्वाहे दोषाभावे च हेतुत्वेन निर्दिष्टा । **आत्मेति** नाऽन्यैर्ज्ञातुमुल्लङ्घितुं वा शक्या ॥ १८ ॥

नन्वेवं विशेषेण सर्वार्थपरिज्ञानवतां किं पुनः श्रवणेनेत्याशङ्क्याऽऽह—

**वयं तु न वितृप्याम उत्तमश्लोकविक्रमे ।**
**यच्छृण्वतां रसज्ञानां स्वादु स्वादु पदे पदे ॥ १९ ॥**

**वयं त्विति** । ये पुनर्भगवत्कथास्वरूपानभिज्ञास्ते कियत्कालं श्रुत्वा निवर्तन्ते । न ह्यत्र रसज्ञो निवर्तते । तस्माद्ये निवर्तन्ते, तृप्ताः सन्तस्ते निवर्तन्ताम् । वयं तु पुनर्न वितृप्याम एव, कुतो निवृत्ता

१ ब्रह्मण इति ख. २ पृच्छन्तीति ग. घ. ङ. ३ लीलावतारा इति ग. घ.



भविष्यामः । निवृत्तिस्त्रेधा सम्भवति । इतोऽप्युत्कृष्टे रसान्तरे सम्भवति, अस्याऽप्यभावे वा, रसाऽज्ञानाद्वा । तत्राऽऽद्यं निराकरोति—**उत्तमश्लोकविक्रम इति** । उत्तमैर्मुक्तैर्ब्रह्मानन्दानुभवयुक्तैरपि श्लोक्यते भगवान् । तद्यथा तथा "इत्थंभूतगुणो हरि" रित्यत्र वक्ष्यते । तस्मान्न भगवत्कथारसादधिको रसः कश्चिदस्ति । ब्रह्मानन्दरसोऽपि न्यून इति । अनेनैव दुर्लभताऽपि निवारिता । तस्य च विशेषेण क्रमः पादविक्षेपो यत्र स पराक्रमो विशेषेण क्रियाशक्त्याविर्भावः । स च पूर्णः सर्वत्र । तस्मान्न दुर्लभता । तृतीयं निराकरोति—**यच्छृण्वतामिति** । रसज्ञानं च श्रवणादेव भवति । यथा हि लोके सूपकारविद्यासु नेच्छानिवृत्तिः । किन्तु मूर्तत्वादुदरपूरणेन निवृत्तिस्तथा श्रवणेऽपि । विशेषोऽप्युक्तः । श्रवणेन गृहीतस्याऽमूर्तत्वात् । किञ्च । रसाभिज्ञाः सर्वथा ततो न निवर्तन्ते । रसस्याऽनिवर्तकत्वात् । अस्य च रसस्य परात्परत्वात् । किञ्च । **स्वादु स्वादु पदे पद इति** । यथाऽधिकारमत्र हि रसाविर्भावः । यथा यथा ह्यज्ञानं निवर्तते, तथा तथा भगवद्रसास्वादो भवति । यथा ज्वरविमोकेऽन्नस्य । प्रथमप्रयोगे ह्यविद्यायाः पूर्णत्वादल्परसास्वादः । ततः प्रथमश्रवणे काचिदविद्या निवृत्ता चेत्तदा द्वितीयेऽधिको रसः । एवमुत्तरत्राऽपि । परमो रसः सर्वथा मुक्तानाम् । किञ्च । प्रथमं वाक्यसमुदाये भगवान्प्रतीतः पुनः प्रत्येकं वाक्येषु । ततः पदेऽपि । पद्यते ज्ञायतेऽनेनेति पदं, प्रकृतिः प्रत्ययश्च । तेन अक्षरार्थत्वेन ज्ञातो भगवानतिरसप्रद इत्यर्थः ॥ १९ ॥

किञ्च । विशेषाऽऽकारेण कृष्णावतारकथा श्रोतव्येत्यभिप्रायेणाऽऽह—

**कृतवान् किल वीर्याणि सह रामेण केशवः ।**
**अतिमर्त्यानि भगवान्गूढः कपटमानुषः ॥ २० ॥**

**कृतवानिति** । **किलेति** प्रसिद्धे । आश्चर्येणाऽत्र प्रसिद्धिरुक्ता । अवस्थासाधनविरहेऽपि वीर्यकरणात् । अतः कृष्णावतारवीर्याणि किल अलौकिकानि । किञ्च । एकत्रैकदा आवेशेनाऽवतारेण च वीर्याणि न क्रियन्ते । अत्र तु रामेण सहेत्युभयरूपेण करणमुक्तम् । किञ्च । सर्वेष्ववतारेषु ब्रह्मेशयोर्न सुखदानम् । तयोरपि गुणाधिष्ठातृत्वेन स्पर्धादिसम्भवात् । तयोरर्थे हिताकरणात्तद्भक्तवधाच्च । तदत्र किमपि नास्तीत्याह—**केशव इति** । कश्च ईशश्च केशौ । केशयोर्वममृतं यस्मादिति । तयोरप्यानन्ददायी । वीर्याणामुत्कर्षमाह—**अतिमर्त्यानीति** । अतिक्रान्तं मर्त्यमेभ्य इति । वीर्यश्रवणे हि पुनर्न मर्त्यशरीरसम्बन्ध इत्यर्थः । अथवा । मर्त्यमतिक्रान्तानि । आनन्दमात्रकरपादमुखोदरादित्वात् । तत्र हेतुः—**भगवानिति** । न भगवदवतार इत्यर्थः । तर्हि कथं शरीरप्रतीतिस्तत्राऽऽह—**गूढः कपटमानुष इति** । अयं लोके हि गुप्तः स्वसच्चिदानन्दरूपतां न प्रकाशयति । तत्र हेतुभूतं विशेषणम्—**कपटमानुष इति** । कपटेन लोकानां बुद्धिमोहनप्रकारेण मानुषः । तदेव रूपं मानुषरूपवत्प्रतिभासयतीत्यर्थः । तस्मात्त्वया वक्तव्यमिति सिद्धम् ॥ २० ॥

श्रवणे स्वाऽधिकारमाहुर्द्वाभ्याम्—

**कलिमागतमाज्ञाय क्षेत्रेऽस्मिन्वैष्णवे वयम् ।**
**आसीना दीर्घसत्रेण कथायां सक्षणा हरेः ॥ २१ ॥**

**कलिमागतमिति** । कलौ तु सर्वधर्माणां निवृत्तिरिति सूतके सावकाश इव कलौ सावकाशाः ।

१ किम्पुनरिति घ. २ अविशेषेणेति घ.

धर्माधिकारे हि सति धर्मत्यागभयाद्वैयग्र्यं कर्मकरणं वा सम्भवति । मर्यादातिक्रमे पुनः पापबाहुल्याद्भगवत्कथारुचिरेव निवृत्ता भवति । तस्मात्सर्वदोषनिवर्तकः कलिरिति, तस्मिन्नागते कथायां **सक्षणाः । वैष्णव इति** । यत्र कचित्कथाश्रवणे दैत्यैर्बुद्धिनाशः सम्भवति । तदा सर्वं नश्येत् । तन्निवृत्त्यर्थं क्षेत्रेऽस्मिन्नित्युक्तम् । किञ्च । सत्रवेदिरप्येषा । ततोऽपि न दैत्यसम्बन्ध इत्यस्मिन्निति देशनिर्देशः । कलिकालादेः स्मार्तत्वात्कथं वैदिकविचारेणाऽनधिकार इत्याशङ्क्याऽऽह—**आसीना दीर्घसत्रेणेति** । तथाच दीक्षितानामन्यकर्मनिवृत्तिः श्रौती । तत्समाप्तौ पुनः कर्मसम्बन्धाद्दीर्घसत्राऽऽरम्भः । तस्मात्सर्वथा सावकाशा इत्याह—**कथायां सक्षणा इति** । यदि कथा समारभ्यते तदा सहस्रसंवत्सरमितः कालः क्षणायत इति क्षणपदप्रयोगः । न सर्वत्र सक्षणाः किन्तु हरेः कथायामेव ॥ २१ ॥

अत्र ह्येका सामग्री न्यूना । सा भगवता सम्पादितेत्याह—

**त्वं नः सन्दर्शितो धात्रा दुस्तरं निस्तितीर्षताम् ।**
**कलिं सत्त्वहरं पुंसां कर्णधार इवाऽर्णवम् ॥ २२ ॥**

**त्वं नः सन्दर्शित इति** । धात्रा सर्वकर्त्रा भगवता ब्रह्मणा वा कथारसाभिज्ञेन । त्वं च नः अस्मदीयः स्वाधीनश्च । कथाऽभावे दुस्तरः कलिः । दुःखेन तरस्तरणं यस्येति । ननु कथारहिता अपि कलिं तरिष्यन्ति ऋषयः । को भवत्सु विशेष? इत्यत आहुः—**सत्त्वहरमिति** । विवेकधैर्यज्ञानहरम् । सत्त्वगुणे गते रजस्तमोभ्यां लयविक्षेपावेव । अतस्तेषां सर्वस्वनाशे न कलेस्तरणं भविष्यतीति भावः । अभीष्टकाले अभीष्टदेशसम्बन्धाभावः । कर्णधाररहिते समुद्रे । तथा कथावक्त्रभावे कलौ ॥ २२ ॥

किञ्च । धर्मेण सह पूर्वं वयं स्थिताः । वयं त्वत्र समागताः कथायां नियुक्ताः । धर्मस्य का वार्तेति षष्ठं प्रश्नमाहुः(?)—

**ब्रूहि योगेश्वरे कृष्णे ब्रह्मण्ये धर्मवर्मणि ।**
**स्वां काष्ठामधुनोपेते धर्मः कं शरणं गतः ॥ २३ ॥**

**ब्रूहि योगेश्वर इति** । एतच्च ब्रूहि । धर्मस्य हि ग्लानौ तद्रक्षार्थं[1] स भगवानवतरति । "**यदा यदा हि धर्मस्ये**"ति वाक्यात् । योगोऽपि धर्मरक्षकः । "**अयं हि परमो धर्म**" इति वाक्यात् । तस्याऽपीश्वरे कृष्णे । ब्राह्मणा अपि धर्मं प्रतिपालयन्ति । तद्योगावतारब्रह्मण्यरूपे भगवति कृष्णे स्वां काष्ठां वैकुण्ठं गते, धर्मस्य सम्भावितशरणाऽभावाद्भगवद्विषयकबुद्धेर्धर्मकार्यरूपाया विद्यमानत्वाद्धर्मोऽस्तीति प्रतीतेर्धर्मः कं शरणं गत इति प्रश्नः ॥ २३ ॥

**इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षित-**
**विरचितायां प्रथमस्कन्धे प्रथमोऽध्यायः ॥ १ ॥**

---

१ तद्रक्षणार्थमिति ख.



# द्वितीयोऽध्यायः ।

**कथाश्रवणभावेन मनोरथमहार्णवे ।**
**निमग्नान्सूतदानेन ह्युज्जहार ऋषीन्हरिः ॥ १ ॥**
**फलसाधनरूपाणां निर्णयः कर्मणामपि ।**
**त्रयाणां वक्ष्यतेऽध्याये द्वितीयेऽन्यच्च शेषिणाम् ॥ २ ॥**

प्रथममुत्तराणि वक्तुं देवतागुरुनमस्कारं मङ्गलमभिनन्दनञ्च सूतः करोतीति व्यास आह—

**व्यास उवाच—**

**इति सम्प्रश्नसम्पृष्टः स विप्रैः रौमहर्षणिः ।**
**प्रतिपूज्य वचस्तेषां प्रवक्तुमुपचक्रमे ॥ १ ॥**

**इति सम्प्रश्नेति** । एवं पुरुषार्थपर्यवसायिभिः सम्प्रश्नैः सम्यग्ब्रह्मविषयकैः प्रश्नैः सम्यगादरपूर्वकं पृष्टः । **विप्रैरिति** । प्रा पूरणे । विशेषेण वक्तारमात्मानं वा भक्त्या पूरयन्तीति विप्राः । अवश्यं तेषां वचने उत्तरं देयमिति । **रौमहर्षणिः** । रोमहर्षणस्याऽपत्यं रौमहर्षणिः । रोमसु सर्वदा हर्षणं यस्य तस्य सर्वदा भक्त्युद्रेकः । तथैवाऽयमिति ज्ञापयति । **प्रतिपूजनम**भिनन्दनम् । सामान्यतस्तद्ग्रन्थाद्बहिरिति ज्ञातव्यम् । क्रमानुरोधात् । अग्रे त्वभिनन्दनं सामान्योत्तरत्वेन ज्ञातव्यम् । **प्रवक्तुमिति** । स्वबुद्ध्या निर्द्धारितार्थं भागवतं च वक्तुमुपचक्रमे ॥ १ ॥

देवतागुरुनमस्कारं च कृतवान् । तत्राऽऽदौ गुरुनमस्कारमाह द्वाभ्यां वैराग्यज्ञानाभ्याम् । तत्र प्रथमं वैराग्यमाह—

**यं प्रव्रजन्तमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव ।**
**पुत्रेति तन्मयतया तरवोऽभिनेदुस्तं सर्वभूतहृदयं मुनिमानतोऽस्मि ॥२॥**

**यं प्रव्रजन्तमिति** । अत्र हि यथा यथा विरक्तस्तथा तथाऽधिकारी । तत्र शुकस्य पूर्वजन्मन्येव ज्ञानसहितत्वाद्योग्यदेहार्थं[1] विष्णोर्व्यासस्य सकाशाद्देहं प्राप्य उभयसम्पत्तौ सङ्गेन ज्ञाननाशभयात्पूर्वसंस्कारस्य[2] दृढत्वादिदानीमनुपनीत एव प्रव्रजति । व्यासस्याऽधिकारित्वाद्देहादिधर्माः प्रवर्तन्ते । इदं प्रव्रजनं नाऽऽश्रमः । किन्तु सङ्गभयाद्गमनमात्रम् । तदनुचितमिव मत्वा निवर्तनाय व्यासस्य गमनम् । भगवद्धर्मेषु हृदयं प्रविष्टेषु हि भयं निवर्तते । बलिष्ठस्य हि भयाभावः । बलं भगवत एवेति । कोपादिना गमनं वारयति—**प्रेति** । निवारणे हेतुः—**अनुपेतमिति** । गमने हेतुः—**अपेतकृत्यमिति** । कार्ये विद्यमाने ह्युपनयनम् । विष्णोः सकाशाज्जातस्य देहस्य पुनः संस्कारो नाऽपेक्ष्यते । मोहे हेतुः—**द्वैपायन इति** । द्विर्गता आपो यत्र तद्द्वीपमयनं जन्मस्थानं यस्य । यमुनान्तर्जले तथोत्पन्नत्वात् । पराशरध्यातभगवदवतारात्[3] सर्वं सुस्थम् । नारदोपदेशात्पूर्वं विस्मृतात्मत्वाद्विरहकातरः । विरहेण कातरो दीनः पुत्रेत्याह्वानं कृतवान् । प्रेम्णा सन्नकण्ठत्वात्प्लुताऽभावः । ततः सन्धिः । "**स सर्वमभवदि**"ति ब्रह्मज्ञाने फलस्योक्तत्वात्सर्वभावः स्फुरति । योगेन प्रवेशोऽपि सम्भवति ।

---

१ योग्यदेहमिति ख. । २ पूर्वजन्मन्येव ज्ञानसहितात्पूर्वसंस्कारस्येति ख. ध. ङ. ३ भगवदवताराद्वा इति ख.

कर्तुः प्राधान्येऽपि यच्छब्देन कर्मसम्बन्धात्तच्छब्देन कर्मैवोच्यते इति । तन्मयतया शुकमयतया । विष्णोः सकाशादुत्पन्नास्तरवः शुकोऽपि। "वैष्णवा वै वनस्पतय" इति श्रुतेरेकोपादानकत्वात्तन्मयत्वम् । अभिनन्दनं प्रतिध्वनिरूपम् । अथवा । "वाग्वै देवेभ्योऽपाक्रमद्यज्ञायाऽऽनिष्ठमाना। सा वनस्पतीन्प्राविशत्सैषा वाग्वनस्पतिषु वदती" ति श्रुतेर्वृक्षेभ्य एव शब्दोत्पत्तिः । तेषां कथने हेतुं वदन् शुकस्य ब्रह्मभावमाह—सर्वभूतहृदयमिति । सर्वभूतानां हृत् अयते प्रेरयति, प्रेरणार्थं गच्छतीति वा । सर्वभूतेषु हृदयं यस्येति प्रेरणसामर्थ्यं वा । गतस्य तूष्णीम्भावं निवारयति—मुनिमिति । ब्रह्मात्मभावं विचारयन्तम् । आ सर्वतो नतोऽस्मि । सर्वत्र तस्य विद्यमानत्वात् ॥ २ ॥

एवं प्रथमं ज्ञानवैराग्ये उक्ते । पश्चाद्भक्त्या भगवज्ज्ञाने जाते विशेषमाह—

**यः स्वानुभावमखिलश्रुतिसारमेकमध्यात्मदीपमतितितीर्षतान्तमोऽन्धम् ।**
**संसारिणां करुणयाऽऽह पुराणगुह्यं तं व्याससूनुमुपयामि गुरुं मुनीनाम् ॥३॥**

**यः स्वानुभावमिति** । सङ्गभयं तु निवृत्तम् । चिरकालमननेन भगवदावेशे सति व्याससमीपाऽऽगमनं, भागवतपाठश्चाऽर्थाल्लक्ष्यते । तदनु भागवतरसाभिनिविष्टः सर्वत्र मुनिभ्य उपदिशति । तदाह—**गुरुं मुनीनामिति** । भागवतस्य स्वरूपोत्कर्षाय चत्वारि विशेषणानि प्रमेयरूपतां प्रमाणरूपतामसाधारण्यं साधनोत्तमरूपतां प्रतिपादयन्ति क्रमेण । तत्र **स्वानुभावं**, भागवतस्य भगवद्रूपत्वात् यथा भगवतः स्वः असाधारणोऽनुभावः सर्वभक्तेषु तथा भागवतस्याऽपि तच्चिन्तकेषु । किञ्च । **अखिलश्रुतिसारम्** । कर्मज्ञानकाण्डादिष्वपि प्रतिपादितस्य भक्तिशेषत्वकथनात्सर्वश्रुतितात्पर्यविषयभगवत्प्रतिपादनाच्च सर्वश्रुतिसारम् । अखिलपदेन च देवदैत्यादिषु प्रवृत्तायाः श्रुतेस्तत्तदभिप्रायेणाऽर्थकथने खिलत्वमापद्यते तन्निवार्यते । आकरस्थितानां सर्ववेदानामर्थरसभूतमित्यर्थः । **एकमि**त्यसाधारणम् । अन्यथा एतस्याऽपि रसान्तरसम्भावना स्यात् । बहूनां तादृशानां निर्द्धारणात् । **अध्यात्मदीपमिति** । बहिः सन्ति दीपा बोधकाः पुरुषाश्च । आत्मनि पुनर्विरला वाचा बोधयन्त्येव । न हि तादृशो भागवतादन्योपायोऽस्ति गुरूपदेशतपःसाधनविचारव्यतिरेकेण येन सर्वेषामात्मसाक्षात्कारो भवेत् । यथा गृहे दीपे स्थापिते घटादीनां न गुर्वाद्यपेक्षा, तथा भागवते सति न काऽप्यपेक्षेत्यर्थः । अन्धन्तमः अतितर्तुमिच्छतामध्यात्मदीपमिति योजना । आत्मानमधीत्यात्मसम्बन्धिसर्वपदार्थानाम् । न केवलं मुनिभ्य एवाऽऽह । संसारिणामपि करुणया। परीक्षित्सभादिष्वपीत्यर्थः । यथा मलाऽपाकरणे वस्त्रादौ मलनिवृत्तिः शुद्धिश्च भवति । शुभ्राणां तु कर्मयोग्यतैव । तथा संसारिणां मुनीनां च विशेष इति भावः । मायाशुकव्यावृत्त्यर्थं—**व्याससूनुमिति** । उपयामि शरणं गच्छामि । इदानीमेव समीपे गत्वा तद्वाक्यं श्रुत्वा कथयिष्यामीत्युपशब्दार्थः ॥ ३ ॥

असाधारणं मङ्गलमुक्त्वा सर्वैः कर्तव्यं साधारणं मङ्गलमाह—

**नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।**
**देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ ४ ॥**

नारायणमिति ।

जयो नाम पुराणादिः कृष्णद्वैपायनेरितः ।
अष्टादशपुराणानि भारतं तत्प्रकीर्तितम् ॥

१ कर्मैवोच्यते यमिति इति ग. घ. २ प्रतिध्वानरूपमिति ग. घ.



नारायणो व्यास इति वाच्यवक्तृस्वरूपकः ।
एक एव परो ह्यात्मा आदावन्ते निवेशितः ॥
उपसाधको नरश्चोक्तश्चकाराद्गुरुताऽपि च ।
अवश्यमेवकारेण मुख्यात्मा च नरोत्तमः ॥
देवी भाग्यात्मिका नृणां वाक्यरूपा सरस्वती ।
सर्वे ते भगवद्रूपास्तस्मान्नम्या हि ते सदा ॥

व्यासेन क्रियमाणे तु नमस्कारे न व्यासपदप्रयोगः । सरस्वतीसमीपे चकारस्तद्भक्तारं बोधयति । तस्मात्पाठद्वयमपि लोके व्यवस्थया बोद्धव्यम् ॥ ४ ॥

अभिनन्दनं वदन्प्रश्नानां निर्द्धारितार्थमाह—

**सूत उवाच—**

**मुनयः साधु पृष्टोऽहं भवद्भिर्लोकमङ्गलम् ।**
**यत्कृतः कृष्णसम्प्रश्नो येनाऽऽत्मा सुप्रसीदति ॥५॥**

**मुनय इति** । फलं कृष्ण एव । सर्वप्राणिनामैहिकाऽऽमुष्मिकफलदाता च स एव । भक्तिमुक्ती च लीलाः । अवताराश्च । धर्मरक्षकश्च स एव । अतः षण्णां प्रश्नानां स एवाऽर्थः । द्वितीयप्रश्ने द्वितीयं फलमेभ्य एव भवति । हे मुनयः ! निर्द्धारितार्थाः । यद्यपि यदेव पृच्छ्यते तत्रैवोत्तरं देयं, तथापि पृष्टमेव साधु । इदमेव हि लोकानां मङ्गलं, यत्कृष्णः पृच्छ्यते । येन च आत्मा कृष्णः प्रसीदति । अन्तःकरणस्याऽपि भगवतस्तद्धर्माणां वा आवेशे प्रसादः । इदं हि सामान्योत्तरम् । शास्त्रान्तरे श्रवणानन्तरं मनननिदिध्यासनाभ्यां कार्यसिद्धिः । अत्र तु मा प्रश्नैरेवेति प्रश्न एव शास्त्रसमाप्तिः ॥ ५ ॥

इदानीं फलसाधने एकीकृत्य स्वाधिकारानुसारेण शास्त्रार्थं निरूपयति सप्तदशभिः । भगवत्साक्षात्कारः फलम् । साधनपारम्पर्ये प्रथमतो धर्मः । अन्तिमो भगवत्प्रसादः । स च खण्डशः सर्वत्र साधनेषु वक्तव्यः । तथा सति परम्परान्ते महाप्रसादे सति, भगवानात्मानमाविःकरोति । तत्र भक्तिस्त्रिविधा । ज्ञानञ्च त्रिविधम् । रुचिः श्रवणादिः प्रेम चेति भक्तिस्त्रिविधा । आत्मज्ञानं तत्त्वज्ञानं भगवज्ज्ञानं चेति त्रिविधम् । धर्मो वैराग्यं च साधनम् । तत्परम्परायां यथायोग्यं निवेशनं निरूप्यते । तत्र प्रथममेकां शृङ्खलामाह—

**स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे ।**
**अहैतुक्यप्रतिहता ययाऽऽत्मा सुप्रसीदति ॥ ६ ॥**

**स वै पुंसामिति** । धर्मः साधनम् । भक्तिः फलम् । तत्र विहितश्रवणादीनां धर्मरूपाणां दृष्टप्रकारेणैव भक्तिसाधकत्वम् । स्नानादीनामदृष्टद्वारा । तत्र साधनान्तराऽनुप्रवेशे व्यभिचारोऽपि सम्भवति । अतः प्रथमं स्नानादिधर्मनिर्द्धारः क्रियते । प्रमाणस्य तुल्यत्वेऽपि फलबलाद्विशेषः । अतो वै निश्चयेन पुंसां परो धर्मः सः यतो भक्तिः श्रद्धालक्षणा भवति । स्वर्गादिसाधके तु धर्मत्वं सन्दिग्धं

१ सन्दिग्धपरत्वं वेति क.

परत्वं वा । स चाऽग्रे विचारयिष्यते । धर्मे स्वातन्त्र्यञ्च सहायः कर्तृविशेषणत्वेनोक्तः—**पुंसामिति** । परत्वं च विधीयते । व्यावर्तकमिति केचित् । अधः अक्षजं ज्ञानं यस्मादिति । इन्द्रियाविषये । इन्द्रियविषये हि कामादिभिरेव रुचिरुत्पद्यते । किं धर्मेण । धर्मो हि पुरुषार्थो बलिष्ठः । स च प्रतिबन्धकानि दूरीकृत्याऽपेक्षितानि साधनानि च सङ्गृह्य पर्यवसायि फलं जनयति । तत्र रुचिश्चेद्भगवति साधनत्वेन तदापि न धर्मत्वम् । उपहता वा दुःसङ्गादिभिस्तदापि न धर्मत्वम् । तदाह—**अहैतुक्यप्रतिहतेति** । हेतुः फलाभिसन्धानम् । प्रतिघातो रोगादिभिः । तस्याऽपि फलमाह । आत्मा अन्तःकरणसाक्षी भगवान् प्रसीदति । स्वपर्यवसानात्सुष्ठु ॥ ६ ॥

भक्तेर्विषयं प्रयोजनं चाऽऽह—

**वासुदेवे भगवति भक्तियोगः प्रयोजितः ।**
**जनयत्याशु वैराग्यं ज्ञानञ्च यदहैतुकम् ॥ ७ ॥**

**वासुदेव इति** । शुद्धसत्त्वात्मके अन्तःकरणे आविर्भूतो वासुदेवः । “**सत्त्वं विशुद्धमि**”ति वाक्यात् । स च ध्यानादिभेदेन देवतान्तरविषयेणाऽन्योऽपि भवति । तद्व्यावृत्त्यर्थमाह—**भगवतीति** । रुचिमात्रत्वनिराकरणाय परम्परासिद्ध्यै—**योग इति** । भक्तिरेव योगः । प्रकर्षो हि दीर्घकालादरनैरन्तर्यम् । तस्य परमफलं भगवत्प्रसादः सर्वत्राऽनुवर्तते । अन्यदप्याह—**जनयतीति** । आशु शीघ्रं विषयेषु वैराग्यमात्मनि च ज्ञानं । तच्चाऽहैतुकं नाऽनुमानगम्यं, किन्तु साक्षात्काररूपम् ॥ ७ ॥

एवं धर्मादिज्ञानान्ता एका परम्परा निरूपिता । तस्या अपि निर्द्धारिकामन्यां परम्परां वक्तुं धर्मस्य तदजनने बाधकमाह—

**धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः ।**
**नोत्पादयेद्यदि रतिं श्रम एव हि केवलम् ॥ ८ ॥**

**धर्मः स्वनुष्ठित इति** । धर्मः साधनम् । कथारुचिः साध्या । तत्र स्वरूपोपकारी धर्मोऽग्रे वक्तव्यः । अदृष्टद्वारोपकारिणां व्यभिचारसम्भावनाया विद्यमानत्वान्निन्दति । सम्यगनुष्ठितोऽपि स्नानादिधर्मः । विष्वक्सेनः सेना आज्ञा वा यस्य । अनेन तदभावे सर्वमन्यथा भवेदित्यत्र हेतुरुक्तः । प्रासङ्गिकत्वाभावाय सप्तमी । बहुवचनं सामान्यत्वाय । वीर्यत्वाद्यभावाय—**कथेति** । य इति धर्मस्य पूर्वोक्तत्वं सूचितम् । रतिं प्रीतिम् । तदा तस्य धर्मस्य स्वरूपमाह—**श्रम एव हि केवलमिति** । यथा मल्लानां गात्रचालनाद्यभ्यासस्तथा स्नानाद्यभ्यासोऽपि । अन्यव्यावृत्त्यर्थमेवकारः । तेन नाऽदृष्टमुत्पद्यत इत्यर्थः । हि युक्तोऽयमर्थः । फलव्यभिचारात् । ननु श्रमे बलवृद्धिर्मल्लादिषु दृष्टा । तथाऽत्राऽपि लौकिकं किञ्चिद्भविष्यतीत्याशङ्क्याऽऽह—**केवलमिति** । फलान्तरस्याऽदर्शनात् । प्रतिष्ठाऽपि न सन्निरूप्यते । स्वर्गादीनां तु फलत्वमग्रे निराकरिष्यते । एवं साधारणधर्मस्य वैयर्थ्यमुक्तम् । पुत्रादिकामनया क्रियमाणः धर्मो धर्म एव न भवति । फलस्याऽविद्याकार्यत्वेन दुःखरूपत्वात् । किन्तु भित्त्यादिकृतिवन्नैमित्तिकत्वेव । तत्र यजत्यादेरनुवादः । चित्तशुद्ध्यभावेनाऽधिकाराभावादन्यथा करणादेवता-

१ इति नास्ति ख. घ. ङ.



धिष्ठानाभावात्क्रियाया लौकिकत्वम् । फलं साधनं च सामान्यतः पूर्वमेव प्रतीतम् । तथाचौषधादिवत्तृतीयया करणत्वमात्रं बोध्यते । यजतिस्तु व्यर्थः । तस्मान्न धर्मत्वम् ॥ ८ ॥

ननु कामितं फलं पुरुषार्थः । तत्साधकस्य कथं न धर्मत्वम् ? तत्राऽऽह—

**धर्मस्य ह्यापवर्ग्यस्य नाऽर्थोऽर्थायोपकल्पते ।**
**नाऽर्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः ॥ ९ ॥**
**कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता ।**
**जीवस्य तत्त्वजिज्ञासा नाऽर्थो यश्चेह कर्मभिः ॥ १० ॥**

**धर्मस्येति** । “अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वि” ति कोशादर्थशब्दस्य पञ्चाऽर्थाः । तत्र शब्दप्रकरणान्नाऽभिधेयत्वम् । उपपदस्याऽभावान्न निवृत्तित्वम् । ततो रैवस्तुप्रयोजनान्यवशिष्यन्ते । तत्र धनपशुपुत्रादयो रैरूपाः । ते धर्मकार्या न भवन्ति । धर्मो हि चोदनालक्षणः । तत्र लौकिकत्वेन विधिस्पर्शाभावान्न धर्मत्वम् । अन्यथा भेषजपानादेरपि धर्मत्वं स्यात् । तथा प्रतिग्रहस्य । अपूर्वांशस्तु नास्त्येव । किञ्च । एते हि वस्तुतोऽनर्थाः । आत्मनाशकत्वात् । तथाच यथा श्येनादयो न धर्मास्तथा धनार्थादिसाधका न धर्माः । ये पुनर्धर्मास्ते न धनादिसाधका इत्यर्थः । तथा न परमार्थरूपाः । न वा प्रयोजनरूपाः । किञ्च । धर्मविशेषः स भवतु नाम । निवृत्तार्थपुरुषार्थस्य मुमुक्षोर्धर्मकर्तुर्धर्मः कथमर्थाय स्यादित्याह—**आपवर्ग्यस्येति** । अपवर्गसम्बन्धिनः अपवर्गपर्यन्तं वा क्रियमाणस्य । ननु धर्मार्थकाममोक्षाश्चत्वारः पदार्थाः पूर्वपूर्वसाधनरूपाः । तथाच धर्मः कथं नाऽर्थाय ? तत्राऽऽह—**नाऽर्थस्येति** । अदृष्टात् दृष्टं हि बलवत् । अर्थेन हि धर्मो दृश्यते नहि धर्मेणाऽर्थः । धर्म एव एकः अन्तः पर्यवसितं कार्यं यस्येति । तथाच येन केनाऽप्युपायेन अर्थं सम्पाद्य धर्मः कर्तव्यः । न तु धर्मेणाऽर्थसम्पादनम् । ननु तर्ह्यर्थः सर्वसाधकोऽस्तु । कामस्याऽपि तत्कार्यत्वेन दर्शनात् । तत्राऽऽह—**कामो लाभायेति** । कामो विषयसुखम् । इन्द्रियविषयाधीनं हि तत् । तत्र विषयांश्चेनाऽप्यर्थोपयोगः । रूपादीनामेव विषयत्वात् । न च रूपादिसम्पादकः । सिद्धानि रूपाण्यन्यस्य भवन्तीति चेद्विपरीतमायातम् । अर्थे प्राप्ते रूपादि गच्छति गते चाऽर्थे रूपादिप्राप्तिरिति । परावृत्तावपि साध्यसाधनता चेत्तत्राऽपि वैपरीत्यमुक्तम् । तथाच वस्तुव्यत्यासवदर्थेनाऽर्थ इव न कामः । न च विक्रया एवाऽर्थरूपाः कामसाधका इति वाच्यम् । लोकप्रसिद्ध्यभावात् । अर्थसाधकस्याऽपि धर्मत्वापत्तेश्च । लोके साहचर्यमात्रेण साधनत्वप्रतीतिः । कदर्यस्याऽर्थवतोऽपि कामाभावाच्च । पश्वादीनामर्थाभाववतामपि कामदर्शनाच्च । तथा मस्करिणः । तथा चाऽऽत्मविदः । “आत्मकामाऽऽप्तकाम”इति श्रुतेः । तथाच क्वचित्साहचर्यदर्शनेन साध्यसाधनभाव इति हिशब्दार्थः । किञ्च । “तुष्यतु दुर्जन” इति न्यायेन अर्थेन कामः साध्यताम् । स कियान् कामः कीदृशश्च ? जीवनमात्रपर्यवसितश्चेत् ? स च आ ब्रह्म तृणस्तम्बपर्यन्तं स्वतः सिद्धो नाऽर्थसाध्यः । अथेन्द्रियप्रीतिरूपः ? “न जातु कामः कामानामि” ति वचनात् । अनुभवाच्च । प्रवृत्तिस्तु भ्रान्त्या । तथाच कामो विषयभोग इन्द्रियप्रीतिहेतुर्न भवति । लाभपदं देहलीप्रदीपन्यायेनोभयत्र सम्बध्यते । तस्मात्क्रमः साधनपरम्परारूपः । कामेन जीवनमर्थरूपं जीवने धर्मः ज्ञानञ्च । तेन च

१ आपवर्ग्यस्येति ग. घ.　२ अर्थेनेन्द्रियेति ख. घ.

मोक्ष इत्यभिप्रायेणाऽऽह—**जीवस्य तत्त्वजिज्ञासेति** । जीवस्य जीवनस्य । तत्त्वजिज्ञासा तत्त्वविचार इच्छापूरकज्ञानसाधकः । जीवस्य तत्त्वजिज्ञासा लाभ इति पूर्वेण सम्बन्धः । कर्मभिः साध्यो यः कामो वा अर्थो वा । धर्मस्तु न केवलं कर्मसाध्यः । किन्तु श्रुतिबोधितकर्मसाध्यः । तत्राऽपि इह कर्मभिः साध्यो न पुरुषार्थः संसारविषयकः । यो वा दैवगत्या प्राप्तः सोऽपि न भवतीति चकारार्थः ॥ ९ ॥ १० ॥

तत्त्वजिज्ञासेत्यत्र सन्देहः—तत्त्वानां जिज्ञासा तत्त्वस्य वेति ? तत्त्वपदेऽपि सन्देहः—तस्य भावस्तत्त्वमनारोपितं रूपं वा ? तस्य भाव इति पक्षे पूर्वोक्तस्याऽभावान्न किञ्चित्तत्त्वं स्यात् । समुदायपक्षेऽभ्रान्तज्ञानविषयत्वेन सर्वमेव तत्त्वं स्यात् । तत्त्वानां जिज्ञासेति तु साङ्ख्यपरिकल्पितानां मध्ये एकस्याऽपि जिज्ञासा कठिना । तत्त्वस्य जिज्ञासेति तु न सर्वेषामेकतत्त्वमस्ति । शास्त्राणामन्योन्यविरोधात् । तस्मात्कथं तत्त्वजिज्ञासेत्याशङ्क्याऽऽह—

**वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।**
**ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ ११ ॥**

**वदन्ति तत्तत्त्वविद इति** । यद्यपि सर्वे स्वस्वशास्त्रे तत्त्वविद इति प्रसिद्धास्तथापि प्रमाणबलविचारेण वेदानां सर्वोपजीवकत्वाद्वेदार्थविदस्तत्त्वविद इति मन्तव्यम् । ननु सर्वेऽपि वेदार्थविदः । ऋषित्वात् । सत्यम् । तथाप्यन्योन्यविरोधात्केचनैव तत्त्वविद इति वक्तव्यम् । तत्र येष्वक्षरमात्रेऽपि वेदेन न विरोधस्ते तत्त्वविद इति मन्तव्यम् । न च ते न सन्त्येवेति मन्तव्यम् । वेदस्य प्रमाणस्य विद्यमानत्वात् । ते[1] किं वदन्तीत्यत आह । यत्त्वद्वितीयं ज्ञानमिति । द्वैतनिवर्तकं ज्ञानं तत्त्वमित्यर्थः । तत्त्वज्ञानं मोक्ष इति सर्वजनीनत्वात् श्रुतिस्मृतिपुराणेषु तस्यैव नामभेद इत्याऽऽह क्रमेण—**ब्रह्मेति परमात्मेति भगवानिति शब्द्यत इति** । शब्दमात्रं भिद्यते नत्वर्थभेदोऽस्तीत्यर्थः ॥ ११ ॥

तदेवं तत्त्वपर्यन्तं पदार्थानां स्वरूपं क्रमं चोक्त्वा फलितमाह—

**तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया ।**
**पश्यन्त्यात्मनि चाऽऽत्मानं भक्त्या श्रुतिगृहीतया ॥ १२ ॥**

**तच्छ्रद्दधाना इति** । तत्तस्माद्धेतोः । तद्ब्रह्म वा । तत्रैवं क्रमः । जीवस्य तत्त्वजिज्ञासा फलमुक्तम् । तच्च साक्षात्कार इति पर्यवसितम् । तत्र विचारसहितप्रमाणेन यद्यपि निर्विचिकित्सं शाब्दज्ञानं भवति तथाप्यन्तःकरणदोषान्न साक्षात्कारः सिद्ध्यति । तदर्थं प्रथमं धर्मः । ततोऽन्तःकरणशुद्धौ वेदादिसत्यमाणे श्रद्धा । ततस्तदर्थस्य मननम् । ततो निदिध्यासनेन साक्षात्कार इव ज्ञानम् । ततो विषयेषु वैराग्यम् । ततः श्रवणादिसाधनभक्तिः । ततः परमभक्तिः । ततः सर्वत्र भगवत्साक्षात्कारो हृदि बहिरपीत्यर्थः[2] । आत्मानं तं भगवन्तमात्मरूपम् । तत्र यावत्साधनं साध्यस्थितिः । तत्र ज्ञानवैराग्ययोः सहभावनिरूपणाद्भक्तिर्मुख्या । तस्याः स्थितिहेतुमाह—**श्रुतिगृहीतयेति** । श्रुत्या हि गृहीता भवति । यथा यथा श्रवणं तथा तथा भक्तिस्थितिः । ततः सर्वमिति ॥ १२ ॥

---

१ केइति ग. २ श्रुत्यादीति ख. ग.



एवं द्वितीयप्रकारेण ज्ञानमुक्तम् । तत्र द्वितीये धर्मस्य सम्बन्धमाह—

**अतः पुम्भिर्द्विजश्रेष्ठा वर्णाश्रमविभागशः ।**
**स्वनुष्ठितस्य धर्मस्य संसिद्धिर्हरितोषणम् ॥ १३ ॥**

**अतः पुम्भिरिति** । धर्मसामान्यस्य प्रथमे साधनता उक्ता । विशेषस्य तु द्वितीये । **यतो भगवत्प्रसाद**व्यतिरेकेण नाऽन्तःकरणशुद्धिर्न वा रुचिरतो धर्मस्य मुख्यं फलं भगवत्प्रसादः । **बीजसंस्कारसंस्कृताः** कुर्वन्ति । धर्मपोषकभगवदिच्छया वा । "ममैव कामो भूतानामि"ति वाक्यात् । **पुम्भिरिति** कर्मणि प्रयोगेणैतज्ज्ञापितम्—अनुष्ठाने कर्मैवाऽपक्षीणं न कर्तेति । तदैव हि भगवत्प्रसादः । अन्यथा कर्मणैव फलमिति । **द्विजश्रेष्ठा इति** । द्विजेभ्यः श्रेष्ठास्त्रिजन्मानः । अनेन भवद्भिः क्रियमाणेन कर्मणा भगवांस्तुष्यतीति सूचितम् । वर्णधर्माः शमादयः कालद्रव्ययज्ञादिभेदा वा । गुरुशुश्रूषादय[1] आश्रमधर्माः । शस्प्रत्ययेन च परधर्मो निवारितः । तेन च "**विधर्मः परधर्मश्चे**"ति दोषो निवारितः । सम्यगनुष्ठानं कालादिभिः षड्भिः शुद्धैर्ज्ञात्वाऽनुष्ठानम् । स एव वा धर्मः । "**अधर्मो ह्यन्यथा भवेदि**"ति वाक्यात् । सम्यक्सिद्धिः फलम् । यद्यपि "**धर्मो विश्वस्य जगतः प्रतिष्ठे**"त्यादिश्रुत्या बहूनि धर्मस्य फलानि सन्ति तथापि भगवांश्चेत्तेन परितुष्यति तदा सफलो नो चेद्धर्मो व्यर्थ इत्यर्थः । आत्मार्थं हि सर्वम् । सर्वेषामात्मा च भगवान् । "**येषां न तुष्टो भगवानि**"ति वाक्यार्थो हिशब्देन सूचितः ॥ १३ ॥

तत्रैवं सन्देहः—बहवो[2] वर्णाश्रमविभागेन धर्मान्कुर्वन्ति । न च तेषु भगवच्छास्त्रानुसारिणी भक्तिरुपलभ्यते । अतो ज्ञायते, भगवान्न परितुष्ट इति । तथाच कर्मकरणदशायां व्यभिचारदर्शनात्कथं निर्विचिकित्सा प्रवृत्तिः ? अतो येषु धर्मेषु न व्यभिचारस्ते विशेषेण कर्तव्या इत्याह—

**तस्मादेकेन मनसा भगवान् सात्वतां पतिः ।**
**श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ॥ १४ ॥**

**तस्मादिति** । यस्मादन्यत्र व्यभिचारोऽपि सम्भवत्यतः श्रवणादिकमेव कर्तव्यम्[3] । श्रवणादिकमपि धर्मः । "**शृणुयाच्छ्रावयेदि**"ति विधिसद्भावात् । **एकेन मनसेति** । वैयग्र्याभावयुक्तेन । श्रवणस्य यथा न व्यभिचारस्तथाऽग्रे वक्ष्यति । अन्यधर्मपरित्यागो वा सूच्यते—**एकेनेति** । **भगवानिति** । श्रवणविषयत्वं न जीवपुरस्सरतया किन्तु साक्षाद्ब्रह्मणः । तथापि वैष्णवशास्त्रानुसारेणैतदेव सूचयति—**सात्वतां पतिरिति** । शुद्धे सत्त्वे आविर्भूतः सात्वो भगवान् । स वर्तते येषां ते सात्वतः । तत्र "**बहुलं छन्दसी**"ति वकारलोपस्तेषामलौकिकत्वाय । तेषां पतिः सर्वनिर्वाहकः । स्वस्याऽपि तथात्वे न काचिच्चिन्तेति भावः । **श्रवणादीनां सुलभत्वाय** वा । यतः स्वपतिः सर्वैरेव श्रूयते कीर्त्यते च । इदं च श्रवणादिकं धर्मरूपम् । प्रकरणात् । द्वितीयस्कन्धे तु भक्तिरूपो वक्ष्यते । भगवद्वाचकैः पदैर्वाक्यैश्च भगवति शक्तितात्पर्यनिर्द्धारः **श्रवणम्** । **शक्तितात्पर्यनिर्द्धारबोधनं कीर्तनम्** । तथा ज्ञातानां वा स्वत एवोच्चारणम् । उभयं सङ्गृहीतं **चकारेण** । अन्यो-

---

१ आश्रमादय इति ग. शमदमादय इति घ. २ बहव एवेति ख. ग. घ. ३ कर्तव्यमिति इति ख.

न्यनिर्वाहकत्वं च । तदग्रे वक्ष्यते । इदं द्वयं बाह्येन्द्रियसाध्यम् । आन्तरमाह—**ध्येयः पूज्यश्चेति** । ध्यानं भगवति चित्तस्थिरीकरणम् । भगवन्मूर्तेरनुसन्धानं वा । पूजा बाह्यान्तरभेदेन द्विधा चकारेण सङ्गृहीता । व्यासङ्गान्तराभावाय—**नित्यदेति** । तस्मादयमेव मुख्यो धर्मस्सर्वथा कर्तव्य इति ॥१४॥

नतु तथापि रुच्यभावात्कथमेतत्सेत्स्यतीत्याशङ्क्याऽऽह—

**यदनुध्याऽसिना युक्ताः कर्म ग्रन्थिनिबन्धनम् ।**
**छिन्दन्ति कोविदास्तस्य को न कुर्यात्कथारतिम् ॥ १५ ॥**

**यदनुध्याऽसिनेति** । सर्वत्राऽलौकिकेषु पदार्थेषु माहात्म्यश्रवणाद्रुचिरुत्पद्यते । तत्र भगवच्छास्त्रस्याऽप्रसिद्धावपि योगादीनां प्रसिद्धत्वाद्भगवद्ध्यानं प्रसिद्धम् । तस्याऽप्येवं माहात्म्यमङ्गभूतस्याऽपीत्यसिपदप्रयोगः । यस्याऽनुध्यानमेवाऽसिः । न चाऽपि तेन भगवत्प्रसादः । किन्तु तेनैव युक्ताः कर्म च्छिन्दन्ति । कर्मसु विद्यमानेषु जन्माऽनुच्छेदात् । तेषां चाऽभुक्तानामक्षयात् । भोगेन वा तत्क्षये तद्धेतुना पुनः कर्मान्तरार्जनात्कर्मविच्छेदः कठिनः । तदपि ध्यानेन भवतीति छिन्दन्तीत्युक्तम् । ननु किं कर्मच्छेदमात्रेण । जीवभावस्य विद्यमानत्वादित्याशङ्क्याऽऽह—**ग्रन्थिनिबन्धनमिति** । ग्रन्थिरविद्यया चिदचिद्ग्रन्थिः । मोहग्रन्थिश्च । तन्नितरां बध्नातीति ग्रन्थिनिबन्धनम् । पूर्वं वासनारूपेण विद्यमानस्य कर्मणैव दृढीकरणम् । अतस्तदभावे सोऽपि गमिष्यतीति भावः । घुणाक्षरन्यायं वारयति बहुवचनम् । अत्र हि नैपुण्यमपेक्ष्यते । अनुध्यानस्याऽन्यत्र विनियोगसम्भवात् । अतो योगसिद्धिमनपेक्ष्य ज्ञानेनाऽविद्यामेव निवर्तयन्ति ते कोविदाः । तत्र ध्यानस्य स्वतो माहात्म्यजनकत्वं नास्ति । विषयध्यानस्य सुतरां बन्धहेतुत्वात् । अतो भगवन्माहात्म्येनैव तस्य तथात्वमित्याह—**तस्येति** । तादृशस्येत्यर्थः । यत्र तद्धर्मेणाऽपि कार्यसिद्धिस्तत्र यदा कथाभिः स एव चित्ते युक्तो भवतीत्यभिप्रायेणाऽऽह—**को न कुर्यादिति** । अकर्तॄणां माहात्म्यज्ञानाभावः ॥ १५ ॥

एवं द्वितीया भक्तिर्निरूपिता । एवं ज्ञानभक्ती मध्यमे निरूप्य, उत्तमे निरूपयति **शुश्रूषोरित्यादि**सप्तभिः—

**शुश्रूषोः श्रद्दधानस्य वासुदेवकथारुचिः ।**
**स्यान्महत्सेवया विप्राः पुण्यतीर्थनिषेवणात् ॥ १६ ॥**

अत्र हि फलमुखानि साधनानि निरूप्यन्ते येषु व्यभिचारशङ्काऽपि नास्ति । वैराग्यं च हेतुः । तत्राऽयं क्रमः । आदौ गृहत्यागेन तीर्थपर्यटनम् । अन्यथा महत्सेवायामुद्वेगः स्यात् । ततो महत्सङ्गः । ततस्तेषां सेवा । ततो भगवत्कथाश्रवणम् । ततः कथारुचिः । ततः कथायान्तेषु च श्रद्धा । ततः शुश्रूषेति । एवमेतादृशधर्मेण स्वरूपोपकारेणाऽव्यभिचारिणी शुश्रूषोत्पद्यते । अत्र पूर्वपूर्वसाधनानां दृढत्वाद्योत्तरेषां निवृत्तिः । तादृशाधिकारो दुर्लभ इति सूचितम् । शुद्धसत्त्वे ह्याविर्भूतस्य श्रवणे सद्यश्चित्तप्रसाद इति **वासुदेवे**त्युक्तम् । अस्याऽङ्गीकाराय महत्पदप्रयोगः । पुण्यरूपं तीर्थं पुण्यतीर्थम् । कुरुक्षेत्रं गङ्गा च । तयोर्नितरां सेवनं देववज्जलस्य सेवनम् । नत्ववहेलनं कथञ्चिदपि ॥ १६ ॥

१ बाह्याभ्यन्तरेति क. २ यस्याऽनुध्याऽनुध्यानमिति ख. ३ को नु कुर्यादिति ख. ४ स्वरूपोपकारिणेति ध. ५ अव्यभिचारिणेति ख. अव्यभिचारिणामिति ग.



ततः किमत आह—

**शृण्वतां स्वकथाः कृष्णः पुण्यश्रवणकीर्तनः ।**
**हृद्यन्तःस्थो ह्यभद्राणि विधुनोति सुहृत्सताम् ॥ १७ ॥**

**शृण्वतामिति** । एतादृशसाधनेनोत्पन्नायां शुश्रूषायां न श्रवणादिनिवृत्तिः कदाचिदपीति शृण्वतामित्युक्तम् । **स्वकथा इति** । स्वरूपभूताः कथाः । स्वीयकथात्वे भगवतः स्वतन्त्रत्वान्न कार्यकरणं सम्भवति । कथाया अपि स्वतो माहात्म्ये तु तयैव वशीकृतः सर्वं कुर्यादिति । एतादृशकथाबाहुल्यं कृष्णावतार एवेति **कृष्ण** इत्युक्तम् । भक्तियोगविधानार्थं चाऽवतारः । निरन्तरमुत्पन्नानां पापानां निवृत्तौ नाऽन्यदपेक्ष्यते साधनं किन्तु श्रवणकीर्तनाभ्यामेव भवतीति, शुद्धं हृदयं भगवान्प्रविशतीत्यभिप्रायेणाऽऽह—**पुण्यश्रवणकीर्तन इति** । श्रोतृवक्तृदोषैर्न श्रवणकीर्तने सम्बध्येते । अपहतपाप्मत्वात्तयोः । ततश्च श्रवणकीर्तने उत्पद्यमाने पापसामानाधिकरण्ये(?)नोत्पद्येते एव । सूर्योदयसम्भावनायामेव तमोनिवृत्तिवच्छ्रवणसम्भावनायामेव पापनिवृत्तिरित्यर्थः । बहिः स्थितस्याऽन्तः कार्यकरणाऽसम्भवादिच्छामात्रेण तत्करणे लोकानां प्रतीत्यभावेनाऽभजनापत्तेर्दृष्टे सम्भवत्यदृष्टकल्पनाया असम्भवात्सर्वत्र स्थितस्य क्लेशाऽभावाच्च हृद्यन्तःस्थित एव करोति । हृदये हि केचन पदार्था बहिःस्थिता अपि भवन्ति । केचनाऽन्तःस्थिताः । तत्र येषु विस्मरणसम्भावना ते बहिःस्थिताः । प्रकृते भगवतो विस्मरणसम्भावनाऽपि नास्तीत्यन्तःस्थित इत्युक्तम् । तादृशस्य तथा करणमुचितमिति भावः । अभद्राणि कामादीनि । पापस्य पूर्वमेव निवृत्तत्वात् । विशेषेण धूननं शिथिलीकरणम् । यथा जलकश्मलवत्पुनर्मेलनं न भवति तथेत्यर्थः । तथाचाऽस्मिन्पक्षे प्रथमश्रृङ्खला स्वसाध्या द्वितीया भगवत्साध्या । तदैव तृतीया स्वस्मिन्भवतीति क्रमेण बोध्यते । कामादीनामशिथिलत्वे भक्तिर्नोत्पत्स्यत इति । ननु भगवत एवं करणे को हेतुस्तत्राऽऽह—**सुहृत्सतामिति** । सुहृत् सहकार्यकर्ता । मित्रमिति यावत् । सुहृद्भिः श्रवणाद्युपदेशेन प्रथमपरम्परायां कृतायां द्वितीयां चेद्भगवान्न कुर्यात्तदा मित्रत्वं भज्येतेति ॥ १७ ॥

धुतेषु कामादिषु यत्स्यात्तदाह—

**नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया ।**
**भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी ॥ १८ ॥**

**नष्टप्रायेष्विति** । धुता एव कामादयो न नाशिता इति क्वचित्क्वचित्तेषां सत्त्वं प्रतीयते । श्रवणे आग्रह इव प्रतिबन्धे क्रोध इव सत्सङ्गे लोभ इवेत्यादि बोधयितुं प्रायग्रहणम् । तथाच तेषां प्रतिबन्धकत्वाभावाद्भगवत्कथाया नित्यं श्रवणम् । भगवद्भक्तानां च सेवनं च नित्यं भवतीत्याह—**नित्यमिति** । पूर्वं कथायाः श्रवणमेव । इदानीं देववत्सम्भावनमिति सेवार्थः । एवं कथायां क्रियमाणायां भगवति परमप्रेमोत्पद्यत इत्याह—**भगवतीति** । अत्र सर्वत्र भगवच्छब्देन शुद्धं परं ब्रह्मोच्यते । **उत्तमश्लोक इति** । उत्तमैः श्लोक्यत इति, उत्तमा वा श्लोका यस्येति । सद्भिः कथया च सहिते भक्तिर्भवतीत्यर्थः । ततश्च जातायामपि भक्तौ सन्तः कथाश्च न त्यज(?)न्त इति भावः । महताऽपि बाधकेनाऽचलनं निष्ठा । निष्ठां प्राप्ता नैष्ठिकी । तदा हि कालाद्युपद्रवा न स्फुरिष्यन्तीत्यर्थः ॥ १८ ॥

१ श्रवणकीर्तनाभ्यासे इति ख. २ कामादीनि इति क. घ. ३ द्वितीयायामिति ख. ४ तथाहि इति क. घ.

एतावत्पर्यन्तं पुरुषप्रयत्नः । अग्रिमं स्वयमेव भवतीत्याह तदेति त्रिभिः—

**तदा रजस्तमोभावाः कामलोभादयश्च ये ।**
**चेत एतैरनाविद्धं स्थितं सत्त्वे प्रसीदति ॥ १९ ॥**

तदा तु चित्तस्य स्वरूपं नश्यति । त्रिगुणात्मकं हि तत् । तथाच स्वस्वकार्यं गुणाः कुर्वन्त्येव । तथाच तद्धृदयं कदाचिदपि भगवदासनं न भवति । यदा पुना रजस्तमसोः कारणभूतयोः सत्त्वता भवति । यथा स्पर्शमणिस्पर्शेन ताम्रलोहयोः सुवर्णता भवति । तथाच त्रिभिर्निर्मितं पात्रं सर्वं सुवर्णं भवति । तथा भक्त्या स्पृष्टं चित्तं सर्वं सत्त्वं भवति । रजस्तमोभावाः कामक्रोधादयः कामलोभादयश्च मिश्रसत्त्वभावाश्चकारान्मिश्रा अन्येऽपि भावास्ते तटस्थतया निर्दिष्टाः । ये च प्रसिद्धा मोहादयस्तान्सर्वान्गातगृहानिव निर्दिशति । अत एव न प्रथमार्द्धे क्रियासम्बन्धः । ननु ते आगन्तुकत्वं प्राप्ता अपि पूर्ववासनया कथं चित्तेन न सम्बध्यन्ते ? इत्यत आह—**चेत इति** । एते हि सूत्ररूपा मूलगुणसूचीव्यतिरेकेण न वेधनसमर्थाः । अत एतैरनाविद्धं चित्तं स्थितं भवति । तदा लयावस्थां प्राप्नुवदपि चित्तं निरन्तरोत्पन्नभक्त्यनुरोधेन तस्याः स्थानभूतसत्त्वनिमित्तं भगवदावेशेन प्रसीदति । प्रसादो हि तेन कार्यकर्तृणां सर्वकार्यसिद्धिहेतुः प्रकाशविशेषः ॥ १९ ॥

तेन यज्जातं तदाह—

**एवं प्रसन्नमनसो भगवद्भक्तियोगतः ।**
**भगवत्तत्त्वविज्ञानं मुक्तसङ्गस्य जायते ॥ २० ॥**

**एवमिति** । एवं पूर्वोक्तप्रकारेण स्थिरसाधनपरम्परया प्रसन्नं मनो यस्य । मनसः सत्त्वात्मकत्वे "**सत्त्वात्सञ्जायते ज्ञानमि**" ति सर्ववस्तूनां तत्त्वज्ञानं भवति । न तु भगवत्स्वरूपज्ञानम् । तस्य गुणातीतत्वेन गुणकार्यगम्यत्वाभावात् । अत आह—**भगवद्भक्तियोगत इति** । अन्तःकरणप्रसादो भक्त्यर्थमेव । भक्त्यैव तु भगवज्ज्ञानम् । "**भक्त्या मामभिजानाती**" ति वाक्यात् । तत्त्वपदेन **यावानि**त्याद्यर्थः परिगृहीतः । **वि**पदेन करतलामलकज्ञानवज्ज्ञानविशेषो विवक्षितः । अत्र सन्यासोऽप्यङ्गत्वेनाऽपेक्ष्यत इत्याह—**मुक्तसङ्गस्येति** । अन्तर्बहिःसङ्गनिवृत्तिः । "**विषयाविष्टचित्तानां विष्ण्वावेशस्तु दूरत**" इति न्यायेन परित्यागव्यतिरेकेण न भगवदावेशः । अतो न साक्षात्कार इति संन्यासस्य कारणत्वम् ॥ २० ॥

एवं विज्ञाने जाते यत्फलं तदाह—

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चाऽस्य कर्माणि दृष्ट एवाऽऽत्मनीश्वरे ॥ २१ ॥**

**भिद्यत इति** । चिदचिद्ग्रन्थिरविद्याकार्यम् । तज्ज्ञानेन निवर्तते । "**यस्मिन् ज्ञाते सर्वमिदं विज्ञातं भवती**" ति सर्ववस्तूनां याथार्थ्यज्ञाने सर्वे सन्देहा निवर्तन्ते । मिथ्याज्ञानसलिलावसिक्तायामात्मभूमौ कर्मबीजं प्ररोहति, न तु तत्त्वज्ञाननिदाघनिष्पीतसलिलतयोषरायामिति कर्माण्यपि

१ रूपमिति ख. २ कथार्थेति क. ३ सलिलतयोषरायामिति ख. घ.



क्षीयन्ते । एतत्सर्वं न येन केनाऽपि प्रकारेण जातज्ञानकार्यं, किन्तु ब्रह्मात्मैक्यानुभवकार्यमित्याह—**दृष्ट एवेति** । आत्मत्वेन भगवदनुभवे । नाऽन्यथेत्येवकारार्थः । आत्मनो ह्यनीश्वरत्वेन जाताः पदार्था ईश्वरत्वेन निवर्तन्ते । अन्यस्येश्वरत्वे ज्ञातेऽपि न ह्यन्यस्येश्वरत्वाज्ञानं स्वस्य संसारहेतुर्भवति ॥ २१ ॥

एवं सर्वप्रकरणार्थं निरूप्य कुत्र पुरुषप्रयत्नः पर्यवसित इति सन्देहे प्रयत्नविषयमाह—

**अतो वै कवयो नित्यं भक्तिं परमया मुदा ।**
**वासुदेवे भगवति कुर्वन्त्यात्मप्रसादनीम् ॥ २२ ॥**

**अतो वै कवय इति** । शुद्धसत्त्वात्मके अन्तःकरणे आविर्भूते भगवति परमप्रेम कर्तव्यमिति प्रयत्ननिष्कर्षः । तेन भगवत्प्रसादः अन्तःकरणे भगवत्साक्षात्कारो वेति फलम् । वै निश्चयेन । स्वस्यैवं निश्चयः । कवयः शब्दतात्पर्याभिज्ञाः । शब्दबलविवेकादेवमर्थप्रत्यय इति भावः । साधनस्य सुखात्मकत्वादपि सदा भक्तिं कुर्वन्ति । क्षणे क्षणे(?) प्रतिक्षणं भगवदाविर्भावेन परमा मुद्योत्पद्यते । विषयस्तु सत्त्वगुणाऽऽविर्भूतः । भक्तिश्च ज्ञानजनिका प्रयत्नश्च भक्तौ साधनत्वेनेति शब्दबलविवेकश्चेति प्रथमाधिकारः ॥ २२ ॥

तत्र विषये सन्देहः—कोऽयं नियमः सत्त्वमूर्तावेव भक्तिः कर्तव्येति । रजस्तमोमूर्तावपि भक्तिकरणं ब्रह्मत्वाज्ज्ञानसाधकम् । तथाच विष्णुभक्तिवच्छिवादिभक्तिरपि ज्ञानसाधिका । ब्रह्मणस्तुल्यत्वादित्याशङ्क्य तत्र निर्धारमाह पञ्चभिः सत्त्वमित्यादिभिः—

**सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहाऽस्य धत्ते ।**
**स्थित्यादये हरिविरञ्चिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः॥२३॥**

ब्रह्मणोऽपि, विशेषत्वाभावेऽप्युपाधिवैशिष्ट्येन फलवैशिष्ट्यम् । न तु चैतन्यस्वरूपं भिद्यते केषाञ्चिद्वैष्णवानां मत इव । तेऽपि गुणा न ब्रह्मणः । तथा सत्युच्चावचगुणजनकत्वेन स्वरूपमपि विलक्षणं स्यात् । कार्यवशात्तथाऽपेक्षायां न दोषः । एकस्यैव स्नानभोजनान्तःपुरकार्यदर्शनात् । ननु पुरुषस्त्रिगुणः । तस्माद्गुणप्रेरणया तत्तत्कार्यकरणं सम्भवति । प्रकृतेऽपि तथा चेद्गुणान्तरपरम्परया अनवस्था स्यात् । तथाच कश्चित्सहजो गुणसम्बन्धो वक्तव्यः । तथा सति स्वरूपमपि भिद्येतेति चेत् ? अत्र हि बहवो वादिनः पृथक्पृथङ्निरूपयन्ति । साङ्ख्यास्तु नित्यसम्बन्धं प्रकृतेराहुः । अन्ये तु नास्त्येव सम्बन्धः । भ्रमादेव प्रतीयत इत्याहुः । भागवतसिद्धान्ते तु भगवति सहजं कर्तृत्वम् । तत्र किञ्चिद्रूपं प्रकृतिपुरुषविभेदेन द्विरूपत्वमापद्यते । यथा भौतिकनिर्माणे भूतापेक्षा, न भूतनिर्माणे, तथा प्राकृतनिर्माणे करणत्वेन प्रकृत्यपेक्षा । नैतावता स्वरूपे भेदा दोषा वा सम्भवन्तीत्येक एव पुरुषः । अस्य जगत उत्पत्तिस्थितिप्रलयार्थं गुणत्रयमाददानः पर एव पुरुषो ब्रह्मभूतः—**हरिविरञ्चिहरेति**—"**सर्वो द्वन्द्वो विभाषैकवद्भवति**" इति न्यायेन संज्ञात्रयं धत्ते । सुपां सुलुगिति लुग्वा । इतिशब्दो वा द्वन्द्वान्ते श्रूयमाणः सर्वत्राऽपि सम्बध्यते । संज्ञायाः स्वरूपमात्रत्वान्न प्रत्ययोत्पत्तिः । यथा देवदत्तेति संज्ञा । इतिशब्दः प्रकारार्थश्च । तेन अन्या अपि संज्ञा एकस्य बहवः सन्तीत्यर्थः । तथाचैते गुणाः

१ सर्वप्रकारेणार्थं निरूप्येति ग. २ ब्रह्मणो विशेषत्वादिति ग. घ. ३ मत एवेति ख. ङ. ४ नत्विति ख. ग. ५ स्वरूपभेद इति ख. ६ दोषो वा सम्भवतीति क. ग.

कार्यार्थं करणत्वेन गृहीता अपि निरन्तरग्रहणादुपाधिरूपा जाताः । तेन यद्भजनं तदुपाधावेव पर्यवसितम्भवतीति सत्त्वोपाधिरेव सेव्य इत्यभिप्रायेणाऽऽह—**श्रेयांसीति** । तत्रैवं निर्णयः । सेवकः सेव्यं यादृशंरूपं पश्यति, स्वस्याऽपि तादृशं रूपं सम्पादयति । साधनानि च तानि यद्यप्यपहतपाप्मानं भगवन्तमन्यथाकर्तुं न शक्नुवन्ति, तथापि जीवमन्यथा कुर्वन्त्येव । ततश्च यादृशेन रूपेण साधनेन वा नाऽन्यथाभावस्तादृशरूपवानेवेश्वरः सेव्यः । नाशशङ्काऽभावात् । यदि पुनः सेवकस्य बुद्धिर्नोपाधिपर्यवसायिनी तत्र यत्र कचित्सेवायामपि न काचिच्चिन्ता । यथा ब्रह्मविदः । "**तं यथा यथोपासत**" इत्यत्र तथा निर्णयात् । श्रेयांसि शुभफलानि । तत्र भजनीयरूपेषु । खल्विति सम्मतिः । सोपपत्तिका सा निरूपिता । सत्त्वतनोरिति तनुशब्दादृढोपाधित्वमुक्तम् । नृणां साधारणजीवानाम् । नियतानां तु तेन सहोपाधिरिति सर्वं सुस्थम् ॥ २३ ॥

अयमर्थो गूढ इति दृष्टान्तमाह—

**पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः ।**
**तमसस्तु रजस्तस्मात्सत्त्वं यद्ब्रह्म दर्शनम् ॥ २४ ॥**

**पार्थिवादिति** । प्रकाशापेक्षिणो(?)हि तेजो मृग्यते । तत्राऽप्यग्निसाध्येष्वग्निः । स च लोके दारुषु प्रतिष्ठितः । तानि पुनः पृथिवीप्रकृतिकानि । तेषां पूर्वरूपं पृथिवीसम्बन्धः । वृक्षरूपतेति यावत् । तत्र च्छेदनेन शोषेण वा काष्ठता । जलांशेन धूमजनकत्वम् । तेजोंऽशेनाऽग्निजनकत्वमिति । तत्राऽप्यलौकिकाऽऽहवनीयादिदेवतासम्बन्धे वेदप्रतिपाद्यत्वम् । तत्र लोके कालान्तराग्नीच्छायां सार्द्रभूसम्बद्धकाष्ठसङ्ग्रहः । तत्पार्थिवशब्देनोक्तम् । तस्माद्धूमः शुष्कः । ततोऽपि ज्वलन्नग्निः । ततोऽपि लोकान्तरे प्रकाशार्थं त्रयीमयः । ततः पूर्वं रूपं मृत्पिण्डसमानकाष्ठता । अन्तिममाहवनीय इति । अथवा । जले ह्याधारमात्रत्वं दारु सम्पादयति । धूमः शोषणम् । पाकमग्निः । एवं घटस्य नानोपकारसम्पादकत्वं तेजस एवोपाधिवैलक्षण्यात् । तथा ब्रह्मणोऽपि तमसा लौकिकभोगसम्पादकत्वम् । रजसा कर्म, सत्त्वेन ज्ञानमिति । यद्ब्रह्मेति पूर्वोक्तरूपतोक्ता । यद्ब्रह्म तमः । तस्माद्यद्ब्रह्म रजः । तदुत्तमम् । ततोऽपि सत्त्वम् । तत्तु ज्ञानरूपमेवेति । दर्शनमनुभवः । अदूरविप्रकर्षेणैतदुक्तमित्यर्थः । अनेन सोपहितं कार्यमपि विलक्षणं जनयतीत्युक्तम् । पूर्वश्लोके जीवपुरस्सरेण त्रैविध्यं निरूपितम् । अनेन तु ब्रह्मपुरस्सरेणेति विशेषः ॥ २४ ॥

अत्र सदाचारं प्रमाणयति—

**भेजिरे मुनयोऽथाऽग्रे भगवन्तमधोक्षजम् ।**
**सत्त्वं विशुद्धं क्षेमाय कल्पन्ते येऽनु तानिह ॥ २५ ॥**

**भेजिर इति** । आत्मार्थं भजनेन भगवन्तमेव भेजिरे इत्यात्मनेपदाद्बहुवचनादाचारदार्ढ्यम् । कर्तृदोषाभावमाह—**मुनय इति** । मननपर्यन्तं पदार्थानुष्ठानेन सत्त्वमुक्तम् । अथेत्यज्ञानदशायां भजनं निवारितम् । मुनयो भूत्वा पश्चाद्भजन्त इत्यर्थः । अग्रे सत्ययुगे । "**पुरा कृतयुग**" इत्यादिवाक्यात् । ब्रह्मरूपतामलौकिकरूपतां चाऽऽह पदद्वयेन—**भगवन्तमधोक्षजमिति** । उपाधेर्मु-

१ यादृशं रूपमिति क. ग. २ जलांशकत्वेनेति क. घ. ३ भजने इति ख. घ. ४ तैदार्थानुष्ठानेनेति ग.



ख्यताप्रतिपादनार्थं **सत्त्वमिति** सामानाधिकरण्येन प्रतिपादनम् । **विशुद्धमिति** ब्रह्मादिषु विद्यमानसत्त्वनिवृत्तिः । तेषां किं फलं जातमिति जिज्ञासायां, किं तेषां फलं वक्तव्यं, तत्सेवका अपि मुच्यन्त इत्याह—**कल्पन्त इति** ।ताननु ये तत्सेवका ये । तन्मार्गवर्तिनो वा । तेऽपि क्षेमाय स्वरूपानन्दाय कल्पन्त इत्यर्थः । तत्राऽपि इहैव, न भवान्तरे । तस्माच्छीघ्रं शुभफलसाधकत्वात्सत्त्वरूपमेव सेव्यमित्युक्तम् ॥ २५ ॥

इदानीं रजस्तमसोरपि सेवकभजनफलानां भेदेन स्वरूपं वक्तुं सत्त्वस्य स्वरूपमनुवदति—**मुमुक्षव इति** । अथवा । कालस्य प्राधान्यात्सत्ययुगे सत्त्वस्य भजनमस्तु नाम । कथं त्रेतादिषु तद्भजनमित्याशङ्क्याऽऽह—

**मुमुक्षवो घोररूपान् हित्वा भूतपतीनथ ।**
**नारायणकलाः शान्ता भजन्ति ह्यनसूयवः ॥ २६ ॥**

**मुमुक्षव इति** । सत्त्वस्य फलं मोक्षः । स ज्ञानसाध्यः । ज्ञानं च शान्तान्तःकरणसाध्यम् । भजनीयं च रूपं ध्येयम् । तेन घोररूपध्यानेन चित्तमपि तथा भवति । अतोऽभेदेऽपि सत्त्वमूर्तेरपि घोराणि रूपाणि परित्यज्य । घोररूपांश्च । पूर्वं मोक्षसाधनत्वेन कुलाचारेण श्रद्धया वा प्राप्तं राजसादि भजनं गुणानां स्वरूपज्ञानानन्तरं परित्यज्य । अथ भिन्नक्रमेण । ब्रह्माण्डान्तर्वर्तित्वात्पुरुषरूपनारायणस्य । कला धर्मावतारा ज्ञानक्रियाशक्तिरूपाः । मत्स्याद्यवतारान् रामादिरूपं वा रूपान्तरेषु दुष्टबुद्धिरहिता भजन्त इत्यर्थः । नेदं भक्तिमार्गभजनम् । किन्तु जीवानां स्वपुरुषार्थसिद्धये धर्ममार्गेण । तथा सति सर्वथा निःसन्दिग्धमेव भजन्ते न नृसिंहादिरूपम् । भक्तिमार्गे तु विषयस्य प्राधान्यात्प्रयोजनस्य दुर्बलत्वात्सर्वाण्येव रूपाणि भजनीयानि ॥ २६ ॥

रूपान्तरे भजनसामग्र्याः स्वरूपमाह—

**रजस्तमःप्रकृतयः समशीलान्भजन्ति वै ।**
**पितृभूतप्रजेशादीञ्छ्रियैश्वर्यप्रजेप्सवः ॥ २७ ॥**

**रज इति** । शरीरगुणस्वभावभेदेन गुणास्त्रिविधाः । तत्र स्वाभाविका अनुल्लङ्घनीयाः । शरीररूपा मौग्ध्यदशायामेव बलिष्ठाः । धर्मरूपास्तु सङ्गशास्त्रैर्वर्धन्ते क्षीयन्ते च । तत्र ये विवेकिनोऽपि सच्छास्त्रं सत्सङ्गं ज्ञात्वाऽपि स्वभावतो राजसास्तामसाश्च तादृशानेव भजन्ते । भजनं हि सख्यपर्यवसायि । तत्र समानरूप एव भवतीति समानशीलानेव भजन्त इति निश्चयार्थः । तयोः परिकरोऽपि तादृश इति ज्ञापयितुं पितरो भूतानि प्रजाश्च तेषामीशाः कालशिवब्रह्मरूपास्ते आदिभूता येषां तान् क्षुद्रदेवान्भजन्ते । तत्र श्राद्धादिना पितृभजने शक्तिभजने च धनप्राप्तिः फलम् । ईश्वरभजने त्वैश्वर्यप्राप्तिः । प्रजेशभजने प्रजायाः । तत्राऽपीप्सितैव प्राप्तिस्तु दुर्लभा । दातृणां तामसत्वात् ॥ २७ ॥

१ रूपमिति ख. २ प्राधान्यत्वादिति क. ख. ग.

एवं सत्त्वमूर्तौ भजनं सोपपत्तिकमुपपाद्य तत्रैव सर्वप्रमाणानां साधनानां च तत्रैव परिसमाप्तिरित्याह—**वासुदेवपरा वेदा** इति श्लोकद्वयेन—

**वासुदेवपरा वेदा वासुदेवपरा मखाः ।**
**वासुदेवपरा योगा वासुदेवपराः क्रियाः ॥ २८ ॥**
**वासुदेवपरं ज्ञानं वासुदेवपरं तपः ।**
**वासुदेवपरो धर्मो वासुदेवपरा गतिः ॥ २९ ॥**

प्रथमाधिकारे सर्वं गुणमयमिति ज्ञानं मुख्यम् । मुक्तेः प्राधान्यात् । अतः सत्त्वपरत्वं सर्वेषामिति । तत्र वेदः सात्त्विकं प्रमाणम् । यज्ञाश्च सात्त्विकाः । योगाः स्नानादिक्रियाश्च । ज्ञानं तप आचारः स्वर्गश्च सात्त्विकः । अन्यप्राधान्यप्रतिपादकानि तु शास्त्राणि न प्रमाणानि । किन्तु राजसानि तामसानि । एवं साधनान्यपि । एवं सर्वसात्त्विकभावः कर्तव्य इति प्रथमाधिकारः । एत एव मध्यमाधिकारे अन्यथा वक्तव्याः । उत्तमाधिकारे च । सर्वेषामेषां चाऽन्तःकरणशोधकत्वात्सत्त्वपरत्वम् । सुखफलत्वाच्च । सुखस्य सात्त्विकत्वाच्छुद्धान्तःकरणे स्फुरितब्रह्मानन्दस्याऽपि सात्त्विकत्वम् । सर्वाणि पञ्च शास्त्राणि श्रुति–साङ्ख्य–योग–पशुपति–वैष्णवाख्यानि मुख्यानि । अङ्गभूतं च धर्मशास्त्रं सर्वेषाम् । तत्रेदं वैष्णवं शास्त्रम् । पशुपतिमतं तु परमतोपन्यासेनोक्तमपेक्षितरूपेण प्रमाणं, न तु सर्वथा । तत्र यावदन्येषां त्रयाणां धर्मशास्त्रस्य च नैकवाक्यता तावन्न वैष्णवशास्त्रस्य दार्ढ्यमित्येकवाक्यता निरूप्यते । तत्र प्रथमं वेदः । वेदार्थो यज्ञश्च । तथा योगशास्त्रम् । यमादयश्च । तथा साङ्ख्यम् । तदुक्तं परमसाधनं तपश्च । धर्मशास्त्रं तदुक्तोच्चगतिश्च । तदेत्सर्वं वासुदेवपरमित्यर्थः ॥ २८ ॥ २९ ॥

एवं सोपपत्तिकं फलसाधनस्वरूपं निर्णीतम् । तृतीयं कृष्णावतारप्रयोजनप्रश्नं प्रथमाधिकारादवतारतुल्यत्वेनाऽत्राऽनुक्त्वा पश्चादवतारेष्वेव कथयिष्यति । ततश्चतुर्थः प्रश्नः—"**तस्य कर्माण्युदाराणी**"ति । तत्रोत्तरमाह **स एवेदमिति** पञ्चभिः—

**स एवेदं ससर्जाऽग्रे भगवानात्ममायया ।**
**सदसद्रूपया चाऽसौ गुणमय्याऽगुणो विभुः ॥ ३० ॥**

सृष्टिप्रवेशनानात्वभोगरक्षारूपाः पञ्च लीलाः क्रमेण पञ्चभिः प्रतिपाद्याः सगुणनिर्गुणयोर्भेदाऽभावाय । **स एवेति** सृष्टिस्त्वगुणादेव । गुणत्रयेणाऽपि सृष्टी रजोमिश्रितेन । तमोमिश्रितेन त्रयेणाऽपि संहारः । तथा सत्त्वमिश्रितेन[1] पालनमिति । शुद्धास्त्वधिष्ठातृदेवताशरीररूपाः । इदं जगत् । दृश्यस्य सर्वस्याऽपि जगतः कार्यत्वम् । न त्वाकाशादेर्नित्यतेति । अग्रे प्रथमम् । "**एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी**" ति श्रुत्या साक्षात्सर्वकरणं प्रथमा सृष्टिः । अन्येऽपि सृष्टिभेदाः सन्ति । ते निबन्धे निरूपिताः । **भगवानिति** वैष्णवशास्त्र एवेयं प्रथमा सृष्टिः । वैदिके तु स्वधर्म[2]स्वशक्तिकालकर्मस्वभावानां सृष्टिः प्रथमा । अतोऽनन्तगुणपूर्ण एव भगवान् स्वस्य मायया शक्त्या सर्वभवनसामर्थ्यरूपया इदमात्मभूतं जगत्सृष्टवान् । मायायाः स्वरूपमाह—**सदसद्रूपयेति** । सा ह्युच्चनीचसर्वप्रतिकृतिरूपा । तस्यामात्मानं संयोज्य प्रकटीकुर्वन् जगद्रूपेण जायते । एवं सति सुगमा सृष्टिर्भवति । सुवर्णकाराणां प्रतिमादिनिर्माणवत् । सा हि

१ मिश्रेण पालनमिति ख. २ स्वधर्मत्वेति ग. घ.



भगवन्निकटे तिष्ठति । निद्राऽपि शक्तिः । सा जीवं भगवत्समीपे नयति । तत्र मायापर्यन्तं गमने स्वप्नः । भगवत्पर्यन्तं गमने सुषुप्तिः । पुनश्च सा यथास्थानमानयति । विद्या तु भगवत्समीपमेव नयति नाऽऽनयति । एवमनन्ताः शक्तयो भगवतः । वेदे तु मायासाधनराहित्येनैव स्वत एवाऽऽत्मानं जगद्रूपं करोतीत्युच्यते । घटितपूरणपात्रभेदवद्वैदिकपौराणिकजगतोर्भेदः । व्यलीकपक्षस्तु न प्रामाणिकः । चकारादन्येऽपि सृष्टिप्रकाराः सूच्यन्ते । **असाविति** भगवद्धर्मनिरूपणेन हृदये स्फुरितं भगवन्तं बहिः पश्यन्निवाऽङ्गुल्या निर्दिशति । स्वस्याऽनन्तगुणस्य स्पर्शेन तादृश्याकृतिरूपा गुणमयी भवति । तेषामुत्तममध्यमनिकृष्टभेदेन त्रिराशित्वात्सत्त्वरजस्तमोगुणवाच्यता । अस्याः पुनः स्पर्शे न भगवति गुणाकृतित्वम् । अतः अगुणः प्राकृतगुणरहितः । कथं स्वसम्बन्धेनैव मायाया गुणवत्त्वम् । कथं वा मायायां प्रविष्टोऽपि जगद्रूपेण जातोऽप्यगुणः ? तत्राऽऽह—**विभुरिति** । सर्वसमर्थ इत्यर्थः ॥ ३० ॥

एवं सद्रूपेण जडसृष्टिमुक्त्वा, आनन्दरूपेणाऽन्तर्यामिसृष्टिमाह—

**तया विलसितेष्वेषु गुणेषु गुणवानिव ।**
**अन्तः प्रविष्ट आभाति विज्ञानेन विजृम्भितः ॥ ३१ ॥**

**तयेति** । तया मायया । आकारसमर्पणेन विलसितेषु चित्रितेषु देवादिदेहेषु । भूतेषु च । **गुणेषु** येषु परिदृश्यमानेषु गुणवानिव । तेषां तेषां तत्र तत्रैव प्रवर्तनात् । खदिराङ्गाररक्तिमेव अन्तःप्रविष्टः स एवाऽऽभाति. अयोगोलकनिविष्टाग्निवद्बहिरपि स्फुरति । आ समन्ताद्भाति । चिज्जडांशयोर्ज्ञानशक्तितिरोभावोऽस्ति । तद्वदत्राऽपि भविष्यतीत्याशङ्क्याऽऽह—**विज्ञानेन विजृम्भित इति** । अत्राऽन्तर्यामिणः सर्वज्ञस्य जीवं सर्वत्र प्रेरयतस्तद्विधज्ञानवतः[1] कार्यावेशेन स्फुरणमिव[2] विजृम्भा । तद्वानित्यर्थः ॥ ३१ ॥

एवमन्तर्यामिभावं निरूप्य जीवभावं निरूपयन्नानात्वलीलामाह—

**यथा ह्यवहितो वह्निर्दारुष्वेकः स्वयोनिषु ।**
**नानेव भाति विश्वाऽऽत्मा भूतेषु च तथा पुमान् ॥ ३२ ॥**

**यथेति** । "**अवस्थितेरिति काशकृत्स्न**" इतिवत्केनचिद्रूपेणाऽवस्थितो भगवानेव जीव इति तद्रूपमुच्यते । दारुषु यथा वह्निस्तथा भूतभौतिकेषु जीवः । स चैकः । उपाधिव्यतिरेकेण स्वतो वैलक्षण्याभावात् । यथा मथनव्यतिरेकेण काष्ठेष्वग्निर्न प्रतीयते तथा योगव्यतिरेकेणाऽन्तःकरणे जीवः । यथा करचरणाद्यवयवाः शरीरेभ्यो न भिद्यन्ते, तथा महाकाष्ठे सर्वत्रैक एव विद्यमानो मथनस्थानेषूद्गच्छति । तथा प्रतीयते च भेदः । स च न प्रामाणिकः । महाकाष्ठ एकस्यैव वह्नेः सिद्धत्वात् । तथा काष्ठबहुत्वेऽप्यनुमन्तव्यम् । एवं सर्वेषु देहेषु सर्वेषु भूतेषु च तिरोहितः समवस्थितः स जीव इति हिशब्दार्थः । किञ्च । यत्र हि आविर्भवति तत्र तिष्ठतीति निश्चितम् । योगेन ज्ञानेन वाऽयं सर्वत्र आविर्भवति । अतस्तानि भूतानि योनिरूपाणि । तेष्वेक एव वह्निर्नाना प्रतीयत इत्यर्थः । किञ्च । विश्वाऽऽत्मा चाऽयम् । विश्वस्यैकमेव हि स्वरूपम् । एकवचनप्रयोगात् । तस्याऽऽत्मा कथमनेको भवेत् । उपाधिभेदाद्भेद इव प्रतीयते । चकाराद्भौतिकेषु । किञ्च । पुमानयम् । ब्रह्माण्डविग्रहः स्वराट्

१ तद्विधिवेति ख. २ स्फुरणमेव इति ख.

पुरुष एक एव सर्वत्र ब्रह्माण्डे । तस्य चाऽवयवभूतानि मध्यस्थानि भूतानि भौतिकानि च । तेषां भेदप्रतीतावपि पुरुषो न भिद्यते । यथा करचरणादिषु नानाभेदप्रतीतावपि नाऽधिष्ठातुर्भेदः । तथा सर्वत्र ब्रह्माण्डे पुरुषस्यैक एव सर्वत्र गुप्तो नानेव प्रतीयमानो जीव इत्युक्तं भवति ॥ ३२ ॥

तद्रूपेणैव भोगलीलेत्याह—

**असौ गुणमयैर्भावैर्भूतसूक्ष्मेन्द्रियात्मभिः ।**
**स्वनिर्मितेषु निर्विष्टो भुङ्क्ते भूतेषु तद्गुणान् ॥ ३३ ॥**

**असाविति** । चतुर्विधा हि सदंशसृष्टिः । अन्तःकरणमिन्द्रियाणि तन्मात्राणि भूतानि चेति । तानि त्रिगुणात्मकानि । गुणमयत्वकथनात्स्वांशरूपता निरूपिता । तैर्निर्मितेषु देवतिर्यङ्नरादिषु भूतेषु नितरां विष्टः अनध्यासेन स्थितो भुङ्क्ते विषयानात्मसात्करोति । भोगमुत्तरत्र स्पष्टीकरिष्यामः । एतावता भोगसृष्टिभेद उक्तो भवति । साक्षात्सृष्टेः पूर्वं निरूपणात् । मायाकरणकत्वाद्वाऽपि हेतुभूतादीनां करणत्वं कर्तृत्वं वा । स्वस्मिन्निर्मितेषु, स्वार्थं वा निर्मितेषु, स्वेन वा निर्मितेष्विति । गुणास्त्रयः । तत्र सात्विकमन्तःकरणं, सात्विकराजसानीन्द्रियाणि, राजसतामसानि तन्मात्राणि, तामसानि भूतानि चेति धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थं चतुर्धा भेदः । देहेन धर्मः । तन्मात्रैरर्थः । इन्द्रियैः कामः । अन्तःकरणेन मोक्ष इति । तत्र जीवस्यैकत्र मुख्यतया स्थितौ अन्ये ह्यङ्गभावं प्राप्नुवन्ति । अत एव तद्गुणान् चतुर्विधपुरुषार्थरूपान् भुङ्क्त इत्युक्तम् ॥ ३३ ॥

एवं भोगलक्षणलीलामुपपाद्य तत्सिद्ध्ये पालनलक्षणलीलामाह—

**भावयत्येष सत्त्वेन लोकान् वै लोकभावनः ।**
**लीलावतारानुरतो देवतिर्यङ्नरादिषु ॥ ३४ ॥**

**भावयतीति** । भावयति पालयति एष एव जीवरूपेण अभिन्नः । पालने सत्त्वगुण एक एव करणम् । लोकान्भुवनजनरूपान् । अथवा । सत्त्वेन भावयति । सत्त्वयुक्तान् करोतीत्यर्थः । उभयत्र हेतुमाह—**लीलावतारानुरत इति** । अवतारैर्दैत्यानां वधं विधाय सर्वलोकान् पालयति । अवतारैश्चरित्राणि विधाय सर्वलोकान् सत्त्वयुक्तान् करोति मुक्तये । ननु सत्त्वमात्रेण कथं मुक्तिः ? अवतारैर्वा कथं पालनम् ? तत्राऽऽह—**लोकभावन इति** । लोकैर्भावनं यस्येति मुक्तिप्रकारः । अवताराणामविद्यमानदशायामपि भावनयैव सर्वानिष्टनिवृत्तेः पालनमित्यर्थः । अथवा । लोकान्भावयतीति । सर्वदा लोकानां चिन्तया तेषामेव दुःखनिवारणाय अवतारान्कृत्वा पालयतीत्यर्थः । ननु कथं तमःप्रकृतिषु लीलेत्यत आह—**अनुरत इति** । यथा जीवास्तत्र तत्र रताः । रतिव्यतिरेकेण तादृशशरीराभावात् । तदनु स्वयमपि रत इत्यर्थः । देवादयः सत्त्वादिभेदाः । आदिशब्देन मिश्रभेदाः । अनेनाऽनुक्तेष्वपि सर्वेषु भगवदवतारा ज्ञातव्याः । वक्ष्यति च—"**अवतारा ह्यसङ्ख्येया**" इति । देवेषु वामनः । तिर्यक्षु मत्स्यादयः । नरेषु रामादयः । मिश्रेषु नृसिंहादय इति ॥ ३४ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां प्रथमस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

१ अध्यासेनेति ग. २ मायाकरणकत्वाद्वेह इति ग. ३ भगवदवतारो ज्ञातव्य इति क. ग.



# तृतीयोऽध्यायः ।

**निरूपिताः पञ्च लीलाः फलसाधननिर्णये ।**
**तृतीये त्ववशिष्टानामवतारार्थधर्मिणाम् ॥ १ ॥**
**कृष्णाऽवतारकार्यं हि न सूतो ज्ञातवान्स्फुटम् ।**
**अतः साधारणं प्रोक्तं निर्णयश्च तथाऽधिकः ।**
**षट्प्रश्नपूरणं तेन वस्तुतः पञ्चपूरणम् ॥ २ ॥**

"**अथाऽऽख्याहि हरेर्धीमन्नि**"ति पृथक्तयाऽवतारप्रश्नादध्यायान्तरेणाऽवतारानाह **जगृहे** इत्यादिपञ्चिशत्या । अवतरणमवतारः । व्यापिवैकुण्ठाद्भगवतः प्रपञ्चे समागमनम् । तत्र यद्यप्यक्षरकालकर्मस्वभावतत्त्वेषु भगवदवतरणमस्ति, तथापि तेषु द्विरूपता वर्तत इति नाऽवतारत्वम् । **लीला विदधतः स्वैरमि**ति प्रश्ने विशेषकथनाद्वा । न हि तेषु स्वेच्छालीलाऽस्ति । भूतलीला द्विविधा, साक्षात्परम्पराभेदेन । भौतिकलीलाऽपि द्विविधा, ब्रह्माण्डं निर्माय्याऽनिर्माय च । निर्माणपक्षेऽपि यथा दशरथपुत्रेषु कश्चिदवतारः कश्चिन्न तथा विश्वसृजां गर्भो विराट् कदाचिद्ब्रह्मशरीरं कदाचिज्जीवशरीरम् । तत्र ब्रह्मशरीरपक्षे तत्रत्यानां मुक्तिः सुलभा । अतः प्रथमं पुरुषावतारत्वमाह पञ्चभिः ।

सूत उवाच—

**जगृहे पौरुषं रूपं भगवान्महदादिभिः ।**
**सम्भूतं षोडशकलमादौ लोकसिसृक्षया ॥ १ ॥**

अत्र तादृशाधिकारिजीवस्याऽभावात्स्वयमेव पुरुषो जातः । "**विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यानी**"त्यप्येतादृशविषयम् । पुरुषशब्दस्त्रेधा व्युत्पद्यते । पुरि वसतीति । पुरूंषतीति । पुरा आस इति च । पुरास इत्याकारे "**व्यत्ययो बहुलमि**"त्युकारः । अस्मिन्पक्षे न शरीरसम्बन्धः । प्रथमपक्षे सम्प्रसारणषत्वे । उर्ष दाह इति । प्रथमे जीवोऽपि भवति । द्वितीयतृतीययोस्तु भगवानेव । तत्र द्वितीयमाह । तप्तायःपिण्डेऽग्निरिव अण्डजत्वादन्तरेव सर्वनिर्माणं सर्वस्याऽपि मुक्तिदानार्थमिति । अस्य ब्रह्माण्डस्य पुरुषाकृतिरूपत्वं न पुरुषत्वम् । "**ममाऽऽयतनमुत्तममि**"ति वचनात् । शुद्धसत्त्वात्मकं शरीरमिव पुरुषरूपं तत्त्वैर्निर्मितं स्वयं गृहीतवान् । अधिकारिव्यावृत्त्यर्थं—**भगवानिति** । अप्सु बीजजब्रह्माण्डवैलक्षण्यायाऽऽह—**महदादिभिरिति** । महदहङ्कारपञ्चतन्मात्राभिः सप्तभिः । एकादशेन्द्रियाणि पञ्चमहाभूतानि च षोडश कलाः । एवं प्राकृतिको गणस्त्रयोविंशः । अस्यां सृष्टौ प्रकृतिपुरुषौ स्वयमेव । अतो न किञ्चिदवशिष्टम् । इयं हि आद्या सृष्टिः । द्वितीयादिसृष्टावधिकारिपुरुषाणां सुलभत्वात् । अवतारस्य प्रयोजनमाह—**लोकसिसृक्षयेति** । लोकास्तु स्वोदरस्थिताः । तेषां सृष्टिः उदरे च स्थितिर्द्वयं यथा भवति तथाकरणार्थं ब्रह्माण्डदेहः परिगृहीतः ॥ १ ॥

१ कार्यमिति ग. २ द्वैतरूपवेति ग. ३ पुरुषस्याऽवतारत्वमिति ख. ४ वसतीति ख. ग. ५ न सम्प्रसारणेति ग. ६ उष इति ख. ग. ७ चकारोनास्ति ख. ८ अवतारप्रयोजनमिति क. ख.

ननु काऽनुपपत्तिः । कीदृशस्य कर्तृत्वम्? इत्यत आह—

**यस्याऽम्भसि शयानस्य योगनिद्रां वितन्वतः ।**
**नाभीह्रदाम्बुजादासीद्ब्रह्मा विश्वसृजां पतिः ॥ २ ॥**

**यस्याऽम्भसीति** । नेदं दैनन्दिनप्रलयशयनं किन्तु वैष्णवतन्त्रोक्तं चतुर्मूर्तिसृष्टिहेतुभूतनारायणशयनम् । तदुक्तम्—“ **आसीदुदारगुणवारिधि** ” रित्यादौ । स हि स्वोदरस्थाञ्जीवान् निर्मिमीते । तथोदरात्सर्वथा बहिर्निर्गमने सायुज्यसृष्टिवदयुक्तं स्यात् । अतो ब्रह्माण्डरूपं द्वितीयं कोशमुत्पाद्य तत्र सर्वान् सृजति । ननु शयानस्य शयनपरित्यागेन सृष्टिकरणे महान्क्लेश इत्याशङ्क्य, शयानादेव सर्वं जातमित्याह—**अम्भसि शयानस्येति** । भगवान् शयान एव स्थितः । **अम्भसीति** शीतलकोमलत्वे शय्यायाः सूचिते । ननु शयनं नाम स्वरूपविस्मरणेन मायाया भगवतो वा समीपगमनम् । तत्कथं भगवति सम्भवतीत्याशङ्क्याऽऽह—**योगनिद्रामिति** । न हि भगवान् शेते वस्तुतः । अस्ति च योगभूता निद्रा काचिच्छक्तिः । सा हि जीवानां क्लेशनाशिनी, स्वसमीपं च जीवानानयति गुह्यं च प्रकटीकरोति । तामल्पभूतां स्वस्वरूपे प्रसार्य महतीं कार्यक्षमां च सृष्ट्युपयोगाय करोतीत्यर्थः । तदर्थं प्रयतमानैरेव सृष्टिः क्रियत इति भावः । तथा भगवत्यपि जातमित्याह—**नाभीह्रदाम्बुजादिति** । उदरस्थजगज्ज्ञापनाय नाभिपद्मम् । पङ्कजाऽशोषाय ह्रदः । अम्बुजं च त्रैलोक्यात्मकम् । तेन भगवतो माहात्म्यमपि सूचितम् । प्रथमकार्यत्वाद्ब्रह्मशब्दवाच्य एव । कर्तृत्वेन स्वातन्त्र्यस्थापनाय परं पुल्लिङ्गनिर्देशः । ततो मरीच्यादयोऽपि जाताः । तेषामयमाज्ञापकश्च जात इत्याह—**विश्वसृजां पतिरिति** । पतिशब्देन अनुलङ्घ्या तस्याऽऽज्ञेति सूचितम् ॥ २ ॥

अनेन हि शयानादेव सर्वे लोका उत्पन्ना इत्युक्तम् । तेषां स्थानं वक्तुं लोकशब्दस्य भुवनवाचित्वात्तेषां जडत्वेन स्वतो जननाभावान्निद्रितस्य तज्जननमशक्यमित्याशङ्क्य पुरुषशरीरस्थूलावयवा एव तथाविधा जाता इत्याह—

**यस्याऽवयवसंस्थानैः कल्पितो लोकविस्तरः ।**
**तद्वै भगवतो रूपं विशुद्धं सत्त्वमूर्जितम् ॥ ३ ॥**

**यस्याऽवयवसंस्थानैरिति** । स च युक्त्या मध्यभावे तिष्ठतीति ज्ञायते । वस्तुतस्तु बीजात्मकः सर्वगतिः सर्वकार्येषु निविष्ट इति । अयमूर्ध्वगालो देहः । यैर्यैर्यथा यथा स्थितैर्ये ये लोकास्तानग्रे वक्ष्यति—“ **पातालमेतस्य हि पादमूल** ” मित्यादिभिः । शरीरे लोकनिर्माणे लोकानामल्पत्वमाशङ्क्य निराकरोति—**विस्तर इति** । एवं भुवनजननिर्माणेनाऽवतारप्रयोजनमुक्त्वा ब्रह्माण्डान्तरवदिदमपि केवलं जडमित्याशङ्क्य पूर्वोक्तमवताररूपमुपसंहारार्थमनुवदति—**तद्वै भगवत इति** । तत् पूर्वोक्तं ब्रह्माण्डरूपम् । उक्तोपपत्तिवैशब्देनोच्यते । तद्भगवत एव रूपं, नाऽन्यत्किञ्चिदित्यर्थः । ननु भगवतः प्राकृतं रूपमेव नास्ति । शुद्धसत्त्वात्मकं वा भवति । तत्कथं ब्रह्माण्डस्य देहत्वमत आह—**विशुद्धं सत्त्वमिति** । शुद्धसत्त्वात्मकमेवेदं शरीरमित्यर्थः । **ऊर्जितमिति** । न शान्तं, किन्तु सर्वकार्यकरणोन्मुखमित्यर्थः । हर्षेणोत्फुल्लता ऊर्जः । तद्रजोगुणव्यतिरेकेणाऽपि भगवदावेशेन भवति ॥ ३ ॥

१ जीवानिति नास्ति ग. २ जगदाज्ञापनायेति ग. ३ सर्वेलोका इति ख. ग. ४ सर्वगत इति ख.



ननु ब्रह्माण्डस्य परिग्रहः करणत्वेनाऽपि सम्भवति । तत्कथमेकान्ततो देहत्वमित्याशङ्क्याऽऽह—

**पश्यन्त्यदो रूपमदभ्रचक्षुषा सहस्रपादोरुभुजाननाद्भुतम् ।**
**सहस्रमूर्द्धश्रवणाक्षिनासिकं सहस्रमौल्यम्बरकुण्डलोल्लसत् ॥ ४ ॥**

**पश्यन्तीति** । योगिनां योगजधर्मसाक्षात्कार एव भगवदवतारत्वे प्रमाणम् । प्राकृतचक्षुषा हीदं जगद्दृश्यते, न त्वदः परोक्षत्वेन प्रसिद्धम् । तच्च रूपम् । न तु पृथिव्यादिवत्केवलं जडम् । किञ्च । योगिनामपि सदा न भासते । किन्त्वदभ्रचक्षुषा महता ज्ञानचक्षुषा । भगवतः प्रतिकृतिरूपत्वेन वेदप्रतिपाद्यस्य सम्बन्धे शरीरमपि—‘ **विश्वतश्चक्षुरि**’ ति श्रुतिप्रतिपादितरूपवद्ध्येयं जातमित्याह—**सहस्रपादोरुभुजाननाद्भुतमिति** । सहस्रमित्यपरिमितनाम । “ **अनेकवक्त्रनयनमि**”ति गीताप्रतिपादितरूपवत्सहस्रपादोरुभुजाननैरत्यद्भुतम् । अत्र क्रियाशक्तिप्रधानानि चत्वार्यङ्गानि निरूपितानि । **गतिश्च, सृष्टिजननं, कृतिश्च, परिभाषणमिति** । ज्ञानशक्तिप्रधानान्याह—**सहस्रमूर्द्धश्रवणाक्षिनासिकमिति** । सहस्रं मूर्द्धसु श्रवणे अक्षिणी नासिके च यस्य । त्रीण्येव द्विदैवत्यानि ज्ञानाङ्गानि बहिः प्रसिद्धानि । रसनेन्द्रियं त्वन्तरेव आननपदेनैव सङ्गृहीतम् । त्वचो न नानात्वम् । परिकरमाह—**सहस्रमौल्यम्बरकुण्डलोल्लसदिति** । सहस्रं **मौलयः** मुकुटानि, अम्बराणि, कुण्डलानि च, तैरुल्लसत् । अतिशोभायुक्तमित्यर्थः । परिकराणामवरोहप्रकारेण प्रतीतत्वाद्यथाक्रमं निर्देशः ॥ ४ ॥

ननु “ **वाचं धेनुमुपासीते** ” तिवदुपासनाप्रकारेण भगवद्रूपत्वेन जगतो ध्यानसम्भवात्कथमेकान्ततोऽवतारत्वमित्याशङ्क्याऽऽह—

**एतन्नानावताराणां निधानम्बीजमव्ययम् ।**
**यस्यांऽशांशेन सृज्यन्ते देवतिर्यङ्नरादयः ॥ ५ ॥**

**एतन्नानावताराणामिति** । अयमर्थः । अवताराणां मूलं भगवान्मूलावतरणं वा । तत्र तत्त्वनिर्मितत्वान्न भगवान् । तद्यद्यवताररूपमपि न भवेत् । अन्यावताराणां मूलमपि न भवेत् । अवतारोत्कर्षश्च । अतः पुरुषस्याऽवतारत्वे न सन्देहः । नानावताराणां मत्स्यादीनाम् । निधीयतेऽस्मिन्निति निधानं स्थानम् । बीजमुद्गमहेतुः । तच्चाऽविनाशि । कन्दवदङ्कुरोत्पत्तौ न नश्यतीत्यर्थः । अवतारप्रयोजनं सूचितं विस्तारयति—**यस्यांऽशांशेनेति** । अंशो ब्रह्मा । तस्यांऽशो मरीच्यादिः । जघनादयो वा । देवादयः सात्त्विकादिप्रधानाः ॥ ५ ॥

एवं पुरुषावतारमुक्त्वा तत्प्रकृतिरूपांस्तदंशानप्यवतारानाह **स एवे**त्याद्येकविंशतिश्लोकैः—

**स एव प्रथमं देवः कौमारं सर्गमाश्रितः ।**
**चचार दुश्चरं ब्रह्मा ब्रह्मचर्यमखण्डितम् ॥ ६ ॥**

सर्वत्राऽवतारनाम प्रयोजनं चोच्यते । अवतरणरूपस्य तुल्यत्वेन आवेशाऽवतारयोरविशेषेण निरूपणम् ।

१ केवलजडमिति क. २ प्रतिकृतरूपत्वेनेति क. ३ वेदप्रतिपाद्यसम्बन्धशरीरमपीति ग. ४ प्रतिभाषणमिति ग. ५ सहस्रमूर्द्धसु इति क. ६ एकविंशेति ख. ग.

सत्त्वरूपशरीरेषु ब्रह्मणः सङ्क्रमः स्मृतः।
अशुद्धशुद्धभेदेन शरीराणामतो द्विधा।
कार्यकाले सङ्क्रमणमावेशः सर्वदा परम् ॥

तत्र निर्णयो वैष्णवतन्त्रे निरूपितः।

क्रियाशक्त्या ज्ञानशक्त्या चाऽवतारं करोत्यजः।
वाराहादिस्वरूपेषु बलकार्ये जनार्दनः ॥
दत्तव्यासादिरूपेषु ज्ञानकार्ये तथा प्रभुः।
मत्स्यकूर्मवराहाश्च सिंहवामनभार्गवाः ॥
राघवः कृष्णबुद्धौ च कृष्णद्वैपायनस्तथा।
कपिलो दत्त ऋषभः शिशुमारो रुचेः सुतः ॥
नारायणो हरिः कृष्णस्तापसो मनुरेव च।
महिदासस्तथा हंसः स्त्रीरूपो हयशीर्षवान् ॥
तथैव वडवावक्त्रः कल्की धन्वन्तरिः प्रभुः।
इत्याद्याः केवलो विष्णुर्न विशेषोऽत्र कश्चन ॥
श्रीब्रह्मरुद्रशेषाश्च वीन्द्रेन्द्रः काम एव च।
कामपुत्रोऽनिरुद्धश्च सूर्यश्चन्द्रो बृहस्पतिः ॥
धर्म एषां तथा भार्या दक्षाद्या मनवस्तथा।
मनुपुत्राश्च ऋषयो नारदः पर्वतस्तथा ॥
कश्यपः सनकाद्याश्च ब्रह्माद्याश्चैव देवताः।
भरतः कार्त्तवीर्यश्च वैन्याद्याश्चक्रवर्तिनः ॥
गयश्च लक्ष्मणाद्याश्च त्रयो रोहिणिनन्दनः।
प्रद्युम्नो रौक्मिणेयश्च तत्पुत्रश्चाऽनिरुद्धतः ॥
नरः फाल्गुन इत्याद्या विशेषावेशिनो हरेः।
इह्योक्तिरविशेषेण सामान्यत इति स्फुटम् ॥

प्रथमं ब्रह्मणः सनकादय उत्पन्नाः। तेष्वावेशः। तस्य प्रयोजनं ब्रह्मचर्यमिति। न हि जीवस्य ब्रह्मचर्यं सम्भवति। इन्द्रियवत्त्वात्। यथा हि क्षुदग्निराविर्भूतः सोढुमशक्यः। एवं बीजाधारकामाग्निरपि। तत्र यथा जलपानं, तथा स्त्रीप्रेक्षणादि। यथाऽन्नतृप्तिस्तथा स्त्रिया रेतोनिवृत्तिः। तत्र मनसाऽपि स्त्रीणामस्मरणेन रेतोधारणं ब्रह्मचर्यम्। तद्भगवदावेशेनैव भवतीति प्रथमं सनत्कुमारावतारः। स एव देवो नारायणः। कौमारं सनत्कुमाररूपम्। स्त्रीभिर्जलरूपै(?)र्बीजे वृद्धे यौवनं भवति। तदभावात्तेषु सर्वदा कौमारमेव। कुत्सितो मारो यस्मादिति। दुश्चरमिति। लोकेऽस्य चरणमप्रसिद्धम्। अखण्डितं यथा भवति तथा। अस्य हि प्रतिक्षणं नाशसम्भवः ॥ ६ ॥

१ पुनरिति ख. २ मत्स्यः कूर्मो वराहश्चेति ख. ३ वीन्द्रेति ग. घ. ४ वेनाद्या इति ग. ५ तत्पुत्र इति ख ङ. ६ तथाऽऽवेश इति ग. ७ जलरूपे इति क. ८ वृद्धयौवनमिति ख.



द्वितीयं तु भवायाऽस्य रसातलगतां महीम्।
उद्धरिष्यन्नुपादत्त यज्ञेशः सौकरं वपुः ॥ ७ ॥

स्वर्गादौ जगन्निर्माणे अस्य प्रपञ्चस्य भूयस्त्वं न भवेदिति वराहेण भूम्युद्धरणं द्वितीयम्। एषामवताराणां विचारो द्वितीयस्कन्धे करिष्यते। अत्र तूद्देशमात्रेण निरूपणम्। आदिवराहकल्पे निर्मिता भूमिर्वराहकल्पे उद्धृता। तदाह—रसातलगतामिति। विरोधपरिहारं चाऽग्रे वक्ष्यामः। उद्धारं करिष्यन् सौकरं वपुरुपादत्त। नाऽयं पुरुषावतारः। किन्तु यज्ञाधिष्ठातृधर्मरूपभगवदवतारः। क्रियायास्तन्मूलकत्वात्। अयं मन्युरूपः क्षत्रिये प्रतिष्ठित इति द्वितीयत्वम् ॥ ७ ॥

तृतीयमृषिसर्गञ्च देवर्षित्वमुपेत्य सः।
तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मणां यतः ॥ ८ ॥

नारदे हि भगवदावेशः। ऋषयो हि मन्त्रद्रष्टारः। ते च कर्माङ्गभूता इति तृतीयत्वम्। द्रव्यदेवतामन्त्रभेदेन वा। स पुरुष एव प्रथमत ऋषिसर्गमुपेत्य, तत्राऽवतारकार्यमपश्यंस्ततो देवर्षित्वमुपेत्य, नारदे आवेशं प्राप्य सात्वतं वैष्णवं तन्त्रं पञ्चरात्ररूपमाचष्ट। भगवत्परिचर्यानिरूपणं न भगवद्व्यतिरेकेणाऽन्यशक्यमिति। कर्मणां प्ररोहनाशस्तेनेति परिचर्यायां सर्वाणि कर्माण्यङ्गभावं भजन्ते। परिचर्याया भगवद्भक्तित्वेन भगवत्त्वे सर्वेषामेव नैष्कर्म्यम् ॥ ८ ॥

तुर्ये धर्मकलासर्गे नरनारायणावृषी।
भूत्वाऽऽत्मोपशमोपेतमकरोद्दुश्चरं तपः ॥ ९ ॥

नरनारायणयोश्चतुर्थाश्रमधर्मप्रतिपादकत्वेन तुरीयत्वम्। अथवा। ब्रह्मचर्ययज्ञभगवत्परिचर्योपशमाः क्रमेणाऽऽश्रमधर्माः। धर्मकलाः श्रद्धादयः। तासां सर्गे जाते पश्चान्मूर्तीभूतधर्मरूपा मूर्तिः। धर्मस्तु वेदमूल इति मूर्त्या ऋषिरूपेणाऽऽविर्भूतौ। पारमहंस्यधर्मो द्विविध इति। सहस्रकवचवधार्थमित्यन्यत्र। नारायणोऽवतारः। नरे आवेशः। तयोस्तपो ज्ञानसहितमित्याह—आत्मोपशममिति। आत्मन उपशमः-शान्तिर्ज्ञानं, ज्ञानसाध्या वा। सर्वत्र हि तपः क्रोधसहितम्। शान्तिसहितं तु लोके दुर्लभमिति. दुश्चरमित्युक्तम् ॥ ९ ॥

पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम्।
प्रोवाचाऽऽसुरये साङ्ख्यं तत्त्वग्रामविनिर्णयम् ॥ १० ॥

साङ्ख्यस्य वेदानन्तरभावित्वादाश्रमानन्तरत्वेन पञ्चमत्वम्। पूर्वं हि पुराणेषु साङ्ख्यं सिद्धम्। तत्पुराणानामप्रचाराद्योगादिभिः साङ्कर्याच्च संन्यासस्य चाऽङ्गभूतस्याऽभावात्साङ्ख्यं कालेन विप्लुतम्। पुनः कालविप्लवशङ्कां वारयति—सिद्धेश इति। सिद्धियुक्ताः सिद्धाः। तेषां मनःसिद्ध्यैव न विप्लुतं भविष्यतीति भावः। आसुरिर्ऋषिः। इदं ज्ञानं स्त्रीशूद्रसाधारणमिति प्रवर्तकस्य तादृशं नाम। सङ्ख्या हि पदार्थानामसाङ्कर्यप्रतिपादिका भवति साधर्म्यवैधर्म्यरूपा। तस्याः फलमाह—तत्त्वग्रामविनिर्णयमिति। तत्त्वानां समूहस्य विशेषेण निर्णायकम् ॥ १० ॥

१ करिष्यति इति क. ग. घ. २ भगवदावेश इति ग. ३ क्षत्रिये इति ग.

योगस्य षष्ठत्वात्तत्प्रवर्तकमाह—

**षष्ठमत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया ।**
**आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान् ॥ ११ ॥**

**षष्ठमिति**। अनसूयया मत्सदृशव्याजेन मामेव वृतवतीतीर्ष्याऽभावेन। मात्रा वा। आन्वीक्षिकी योगपुरस्सराऽऽत्मविद्या। अलर्को राजा। स हि राजसः। तत्र शास्त्रपरिनिष्ठायाः सन्दिग्धत्वात्प्रह्लादादिभ्य उक्तवान्। प्रह्लादस्तु स्पष्टः ॥ ११ ॥

एवं ब्राह्मणानां षड्विधत्वमुक्तम्। षट् कर्माणि ब्राह्मणे प्रसिद्धानि। त्रीणि क्षत्रिये। तदर्थं त्रीनाह यज्ञऋषभपृथुरूपान्। शत्रुजयो धर्मनिष्ठा प्रजापालनं चेति त्रिषु प्रतिष्ठितम्। अतो भिन्नप्रक्रमं वक्तुं तत इत्याह—

**ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत ।**
**स यामाद्यैः सुरगणैरपात्स्वायम्भुवान्तरम् ॥ १२ ॥**

आकूतिर्मनुकन्या। स च यज्ञो रुचेर्जातोऽपि पुत्रिकापुत्रः। यज्ञो हि ब्राह्मणैः क्रियमाणः क्षत्रिये फलति। तथा सोऽपि यामाद्यैः प्रथममन्वन्तरदेवादिभिश्चतुर्विधैः समं तपसि स्थितमनुरक्षां विधाय तदनन्तरं पालितवानित्यवतारप्रयोजनम्। प्रियव्रतादयस्तु कल्पान्तरे राजानः प्रथममसमर्था इत्यग्रे उपपादयिष्यते ॥ १२ ॥

**अष्टमे मेरुदेव्यां तु नाभेर्जात उरुक्रमः ।**
**दर्शयन् वर्त्म धीराणां सर्वाश्रमनमस्कृतम् ॥ १३ ॥**

स्वस्थे हि देशकाले सर्वाश्रमधर्मा इति यज्ञानन्तरमृषभकथा। पूर्वोक्तक्रमस्योत्तरत्र विवक्षितत्वादष्टमादिपदप्रयोगः। मेरुदेवी मेरुदुहिता। मातृपुत्रत्वं वारयितुं तुशब्दः। प्रतिपक्षशङ्काभावार्थं वा। अयं तु गुणावतारस्य विष्णोरवतारः। तदाह—उरुक्रम इति। ऋषभनिरूपितसन्यासधर्मे मुख्यं धैर्यं साधनम्। अन्त्याश्रमत्वात्सर्वाश्रमनमस्कृतम्। एषा हि पराकाष्ठा निवृत्तिमार्गे। न त्वन्त्याश्रमित्वेन पाषण्डत्वसम्भावनेति नमस्कृतम् ॥ १३ ॥

**ऋषिभिर्याचितो भेजे नवमं पार्थिवं वपुः ।**
**दुग्धेमामोषधीर्विप्रास्तेनाऽयं स उशत्तमः ॥ १४ ॥**

पृथुस्त्वावेशी। पृथोः सम्बन्धि वपुरिति वचनात्। अयं तु पुमानेव। स इति वचनात्। "**श्रेयः प्रजापालनमेव राज्ञामि**"ति वचनात्सर्वात्मकत्वाच्च भगवतः सर्वहितकारी धर्म ऋषभधर्मादप्युत्तम इति पृथोर्नवमत्वम्। ननु कथं वेनादवतारः? तत्राऽऽह—**ऋषिभिर्याचित इति**। तत्राऽपि न साक्षात्। किन्तु पृथुशरीरे। दुग्धा अदुग्ध, दोग्धा वा। अलौकिकत्वार्थं छान्दसपदप्रयोगः। इमामोषधीरिति द्विकर्मकम्। कर्मद्वयस्याऽप्यभीष्टत्वात्। एवं सर्वेषु द्विकर्मकेषु बोद्धव्यम्। विशेषेण पूरका इति सम्बोधने भवद्भिरेव बहुदोहने सर्वं पूरितमिति ज्ञापितम्। दोहनमेवाऽवतारकार्यम्।

१ त्राँप्याहेति क. ख. २ सर्ववर्णाश्रमेति क. ३ एषामिति ग. ४ वचनाच्चेति क. ख. ५ बहुदोहने इति ख. ग.



न जीवसाध्यमिति। तेनाऽयं सः। तेन हेतुना पृथुर्नारायण इत्यर्थः। विशेषमाह। उशत्तमः। एवं सर्वोपकारकोऽवतारान्तरेष्वपि दुर्लभ इत्यतिकमनीय इत्यर्थः ॥ १४ ॥

एवं क्षत्रियभावेन त्रितयं निरूप्य वैश्यभावेन चतुष्टयमाह रूपमित्यादित्रिभिः—

**रूपं स जगृहे मात्स्यं चाक्षुषान्तरसम्प्लवे ।**
**नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम् ॥ १५ ॥**

वञ्चनेन कार्यसिद्धिर्वैश्यता। "**सत्याऽनृतं तु वाणिज्य**"मिति वचनादेकं वञ्चकमपरं न विपरीतं च। चाक्षुषमन्वन्तरानन्तरं प्रलयो बाधित इति मायिकत्वं केचिदाहुः। वस्तुतस्तु स्वायम्भुवादीनां क्रमनियमेन न प्रतिकल्पं चतुर्दशत्वम्। अधिकारिणां मुक्तिसम्भवात्। तस्माच्चाक्षुष एव कदाचिच्चतुर्दशो भवति। कल्पेषु सात्त्विकादिविभेदान्मुख्यस्य प्राथम्यम्। सात्त्विकानि चत्वारि। इतरयोः पञ्च पञ्च। अतो बहुवाक्यानुरोधादुपपत्तिसम्भवाच्च न प्रलयस्य मायिकत्वम्। मार्कण्डेयदृष्टस्य तु तत्रैव स्फुटं प्रतिपादितमित्यदोषः। पृथिव्या देवरूपत्वान्नौकारूपताऽपि भवति। स च मन्वन्तरान्तरे विवस्वत उत्पन्न एवाऽस्मिन्मन्वन्तरेऽधिकारी भवति। अतोऽपि न मायिकत्वम्। भक्तपरिपालनमवतारधर्मः। **वैवस्वतमनुरिति** भाविनी संज्ञा ॥ १५ ॥

**सुरासुराणामुदधिं मथ्नतां मन्दराचलम् ।**
**दध्रे कमठरूपेण पृष्ठ एकादशे विभुः ॥ १६ ॥**

कापट्येनैवाऽमृतमथनार्थं प्रवृत्तेः कूर्मस्याऽपि वञ्चकहितकारित्वादत्र प्रवेशः। पूर्वकल्पस्थत्वान्मत्स्यस्य न क्रमो बाधकः। वञ्चनाधिक्यादेकादशत्वम्। एवमुत्तरत्राऽपि। उदधिं मथ्नतां सुरासुराणां सम्बन्धि मथनसाधनं मन्दराचलं धृतवान्। कमठः कच्छपः। पृष्ठेन धारणमवतारसाध्यं जले ह्यनाधारे। ननु पृष्ठस्य पिच्छलत्वात्कथं धारणं सम्भवति? तत्राऽऽह—**विभुरिति** ॥ १६ ॥

एकस्य द्विरूपत्वमाह—

**धान्वन्तरं द्वादशमं त्रयोदशममेव च ।**
**अपाययत्सुरानन्यान्मोहिन्याऽमोहयत्स्त्रिया ॥ १७ ॥**

**धान्वन्तरमिति**। अत्र मादेशश्छान्दसः। द्वादशे मातीति वा। धन्वन्तरिपदेनैव आयुर्वेदप्रवर्तनादेः स्पष्टत्वात्। प्रकृते त्वन्यार्थकथनान्नाऽवतारप्रयोजनमित्युक्तम्। धान्वन्तरमेव त्रयोदशम्। एव च शब्दौ सन्देहविरोधनिवारकौ। धान्वन्तरं रूपं धन्वन्तरेः सम्बन्धि। देवकर्तृकपानकर्मत्वादमृतस्य न भगवत्कार्यमिति प्रयोजककर्तरि सुरा एव कर्मत्वेनोक्ताः। अर्थादमृतम्। अत्र त्रयोदशस्यैव चरित्रमुच्यते—**अपाययदिति**। अन्यानसुरान्। स्त्रिया करणभूतया अमोहयदिति च। अयमभिप्रायः। न हि भगवान् स्त्रीरूपेण सर्वैर्दृश्यते। सुरैर्भगवद्रूपेणैव दृश्यते। राहुसूचनाच्च। अतो वस्तुतो धन्वन्तरिरूपमेव। आकृत्यन्तरबोधनं तु सामर्थ्यात्। अमृतहस्तस्य निर्गतस्य विच्छेदेनाऽस्य रूपस्य दर्शनात्त्रयोदशत्वम् ॥ १७ ॥

१ अवान्तरेष्विति क. ग. घ.

एवं चतुष्टयं निरूप्य पुनरन्येनोत्कृष्टप्रकारेण परम्परां निरूपयितुं नारायणचतुर्सिंहं निरूपयति—

चतुर्दशं नारसिंहं बिभ्रद्दैत्येन्द्रमूर्जितम् ।
ददार करजैरूरावेरकां कटकृद्यथा ॥ १८ ॥

पुष्टिमार्गोऽयमिति पूर्वस्माद्विशेषः । पूर्वस्य क्रमस्य विवक्षितत्वाच्चतुर्दशत्वम् । नरसिंहसम्बन्धि नारसिंहं रूपम् । द्विरूपत्वेनाऽलौकिकत्वात्पुष्टित्वम् । अत्र हि भक्तिरेव मुख्या । यतः स्वीयमपि हत्वा तदीयं पालितवान् । दैत्येन्द्रं हत्वा दैत्यं च । इन्द्रपदेनाऽवध्यता च सूचिता । वधे हेतुः—ऊर्जितमिति । करजैर्नखैः । ऊराविति ब्रह्मवाक्यसत्यकरणार्थम् । एरका कटतृणविशेषः । नखैरनादरेण विदारणे दृष्टान्तः—कटकृद्यथेति । लोकहितार्थं तद्वध इति सूचितम् ॥ १८ ॥

पञ्चदशं वामनकं कृत्वाऽगादध्वरं बलेः ।
पदत्रयं याचमानः प्रत्यादित्सुस्त्रिविष्टपम् ॥ १९ ॥

एवं भक्तिमार्गे नवाऽवतारान्कथयन्प्रथमं प्रह्लादरक्षको नृसिंहो मुख्य इति मूलत्वेन कथितः । ततो ब्रह्मभावेन त्रयः । त्रयश्च क्षत्रभावेन । एको वैश्यभावेन । पुनरग्रिमस्य मूलरूपमेकेनेति नवधा निरूपणम् । भक्तिरनवच्छिन्ना न निवर्तत इति । सायुज्ये सेवाऽऽरम्भवत् । कल्किरग्रिमारम्भ इति हेतुः । कश्यपाददित्यां जातो वामनरूपो ब्रह्मचारी पञ्चदशः । अवामनोऽपि वामनकं रूपं कृत्वा बलेरध्वरमगादिति भक्तहितार्थं स्वस्य धर्मस्य चाऽन्यथाकरणं पूर्वस्माद्विशेषः । प्रत्यादानं दत्तस्य पुनर्ग्रहणम् । इह पर (?) आत्मनः पदत्रयम् । गमने कामितोऽर्थ उत्तरार्द्धे निरूपितः । चरित्रं तु गमनमेव ॥ १९ ॥

अवतारे षोडशमे पश्यन्ब्रह्मद्रुहो नृपान् ।
त्रिः सप्तकृत्वः कुपितो निःक्षत्रामकरोन्महीम् ॥ २० ॥

क्षत्रियायां जातं परशुरामरूपं षोडशम् । सप्तधा हनने निर्बीजत्वं जातम् । पुनर्ब्राह्मणादुत्पन्नाः समृद्धाः । पुनः सप्तधा । एवमेकविंशतिधा निःक्षत्रिया पृथिवी कृता । पितृवधस्य निमित्तत्वेऽपि ब्रह्मरक्षैव हेतुः ॥ २० ॥

ततः सप्तदशे जातः सत्यवत्यां पराशरात् ।
चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः ॥ २१ ॥

तत उपरिचरवसोर्मत्स्यगर्भजातायां दाशकन्यायां तथा पराशराज्जातो वेदव्यासः सप्तदशः । प्रकृते तृतीयः । वेदस्य तरुत्वं पूर्वं निरूपितम् । अनन्तमूर्तेर्यज्ञस्य ब्रह्मशिरस एका मूर्तिर्यावता वेदभागेन प्रतिपाद्यते सा एका शाखा । एवमन्याश्च । यद्यपि ब्राह्मणेन सर्वो वेदः पठनीयस्तथापि प्रमेयबलमालम्ब्य एकैव मूर्तिः सर्वा मूर्तय इत्यल्पमेधसोऽपि पुरुषस्य वेदाध्ययनं भक्त्यर्थमपरश्च कालो यथाऽवशिष्यते तदर्थं खण्डशः कृतवानित्यर्थः ॥ २१ ॥

१ इतः प्राक् चतुर्दशमिति इति प्रतीकमस्ति क. ङ. २ मार्गेण वाऽवतारानिति ख. ३ वामनरूपेणेति क. ४ परमात्मन इति घ. पर आत्मान इति क. ग.



नरदेवत्वमापन्नः सुरकार्यचिकीर्षया ।
समुद्रनिग्रहादीनि चक्रे वीर्याण्यतः परम् ॥ २२ ॥

भिन्नप्रक्रमार्थे रघुनाथादिरूपत्रयं वक्तुमतः परमित्युक्तम् । क्षत्रियभावोऽत्र विवक्षितो यद्यपि सोमसूर्यभावेन द्विविधस्तथापि सोमस्य वृद्धिक्षयरूपेण द्विरूपत्वात्त्रेधा निरूपणम् । नरदेवत्वं राजत्वम् । सुरकार्यं रावणवधः । अवतारचरित्रं तु समुद्रनिग्रहः । तथा मरुस्थलीकरणं परशुरामजयो वालिवधश्चेत्यादिशब्दार्थः ॥ २२ ॥

एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी ।
रामकृष्णाविति भुवो भगवानहरद्भरम् ॥ २३ ॥

अतः परमष्टादशे बलरामे आवेशः । कृष्णोऽवतारः एकोनविंशे विंशतितमे । अत्र तकारलोपश्छान्दसः । वस्तुतः सोमस्यैकत्वादेकश्लोकेन निरूपणम् । वार्ष्णेय(?) इति वक्तव्ये "ञ्यादयस्तद्राजा" इति तद्राजसञ्ज्ञायां "तद्राजस्य बहुषु" इति प्रत्ययलोपे वृष्णिष्वित्युक्तम् । अत्र हि चतुर्णामवताराणां कृष्णरूपं स्थानम् । नारायणांशस्य केशस्य सुतपापृश्निप्रसन्नस्य भगवतश्च तत्रैकमेव रूपं बहुरूपत्वेन विवक्षितम् । बलरामस्त्वेक एव । एवं पञ्चाऽवताराः । जन्मद्वयम् । तदुक्तम्—वृष्णिषु प्राप्य जन्मनी इति । ततश्च लोकेऽपि नामद्वयं प्रसिद्धमित्याऽऽह—रामकृष्णाविति । जन्मविशेषकार्यं तु भगवतैव कृतमित्याह—भगवानहरद्भरमिति । भूभारहरणमवतारकार्यं सामान्यतो लोकप्रसिद्धम् ॥ २३ ॥

ततः कलौ सम्प्रवृत्ते संमोहाय सुरद्विषाम् ।
बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यति ॥ २४ ॥

भिन्नप्रक्रमार्थं कलौ सम्यक्प्रवृत्ते तद्धर्मप्रचारे जाते सुरद्विषां दैत्यराक्षसानां वैदिकेषूत्पन्नानां वेदत्याजनार्थं कीकटदेशेषु जिनस्य अजिनस्य वा सुतो बुद्धो जात इत्यर्थः ॥ २४ ॥

अथाऽसौ युगसन्ध्यायां दस्युप्रायेषु राजसु ।
जनिता विष्णुयशसो नाम्ना कल्किर्जगत्पतिः ॥ २५ ॥

अथेति महान् भिन्नक्रमः । कूर्ममारभ्य बुद्धान्तं न पुरुषस्याऽवताराः । कल्की तु पुरुषस्याऽवतार इत्याह—असाविति । तत्र कूर्म आदिकूर्मस्य, धन्वन्तरिर्विष्णोः, नृसिंहः कालस्य, वामनो विष्णोः, वैश्वानरस्य परशुरामः, व्यासो विष्णोर्ज्ञानस्य, वासुदेवस्य रामः, सङ्कर्षणस्य बलरामः, चतुर्णां कृष्णः, वासुदेवस्य बुद्ध इति । युगसन्ध्यायां जातायां समाप्तायां न सन्त्येव राजानः । भूमिश्च शून्यप्राया । तथापि विद्यमाना अपि राजानो दस्यवः । प्रायग्रहणं विष्णुभक्तिप्रतिपादकब्राह्मणसङ्गेन केषाञ्चिदन्यथात्वमिति । अत एव विष्णुयशा नाम शम्भलग्रामे वैष्णवः । तस्य गृहे पत्न्यां भविष्यतीत्यर्थः । जगत्पतिरित्यवतारप्रयोजनम् । जगतः क्षीणत्वात्पुनरुद्भवकर्तेत्यर्थः ॥ २५ ॥

१ जन्मविशेषणमिति क. ख. घ. ङ. २ अज्ञानस्येति ख. ग.

अवताराणामेतावत्त्वं निवारयति—

अवतारा ह्यसङ्ख्येया हरेः सत्त्वनिधेर्द्विजाः ।
यथाऽविदासिनः कुल्याः सरसः स्युः सहस्रशः ॥ २६ ॥

**अवतारा इति** । **सत्त्वनिधेरिति** हेतुः । पालनोद्भवादेरावश्यकं सत्त्वम् । **द्विजा इति** सम्मत्यर्थं सम्बोधनम् । बहुकालदर्शित्वात्[1] । अवताराणां स्वरूपमाह—**यथाऽविदासिन इति** । अविदासिनः अक्षयजलस्य । कुल्याः क्षुद्रप्रवाहा दक्षिणदेशे प्रसिद्धाः ॥ २६ ॥

सर्वेषां सामान्यतः स्वरूपं प्रकृति[2] फलं चाऽऽह ऋषय इति द्वाभ्याम्—

ऋषयो मनवो देवा मनुपुत्रा महौजसः ।
कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः ॥ २७ ॥
एते चांऽशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् ।
इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे ॥ २८ ॥

**ऋषयः** अर्यमादयः । मनवः स्वायम्भुवादयः । देवा वस्वादयः । मनुपुत्राः प्रियव्रतादयः । **महौजसः** अन्येऽप्यतिवीर्यवन्तः । एते सर्वे सत्त्वमूर्तेर्भगवतो विष्णो रिरक्षिपोः कला धर्मावेशिन इत्यर्थः । **प्रजापतयो** मरीच्यादयः । एवकारेणाऽन्यसम्बन्धं वारयति । **स्मृता इति** प्रमाणम् । पूर्वोक्ताः कुमारादयस्तु **केचन** अंशाः केचन कलाः । ते चाऽवताराऽऽवेशभेदेन निरूपिताः । चकारादनुक्ता अपि । **पुंसो नारायणस्य** ब्रह्माण्डमूर्तेरंशाः कलाश्च । कृष्णेऽपि तथात्वं सामान्यतः प्राप्तं तुशब्देन व्यावर्तयति । यस्यांऽशाः पुरुषादयः स भगवान् कृष्ण इत्यर्थः । सामान्यतः प्रयोजनमाह—**इन्द्रेति** । इन्द्रारयो दैत्याः । तैर्व्याकुलं जगत् मृडयन्ति सुखयन्ति । प्रतियुगं चैतेऽवताराः । प्रतिकल्पं चतुर्दश मन्वन्तराणीव । असङ्ख्यातानामुक्तत्वाद्यथाप्रयोजनं सर्वत्राऽवतार इति बोद्धव्यम् ॥ २७ ॥ २८ ॥

कृष्णावतारप्रयोजनं नोक्तमिति स्वस्याऽज्ञानदोषं निवारयन्नवताराणां दुर्ज्ञेयत्वमाह—

जन्म गुह्यं भगवतो य एतत्प्रयतः शुचिः ।
सायं प्रातर्गृणन्भक्त्या दुःखग्रामाद्विमुच्यते ॥ २९ ॥

**जन्म गुह्यं भगवत इति** । भगवतः कृष्णस्य जन्म गुह्यं गोप्यम् । न प्रकटतया च वक्तव्यमित्यर्थः । तर्हि कथं निस्तार इत्याशङ्क्याऽऽह—**य एतदिति** । एतदवताररूपं सामान्यतोऽस्मदुक्तम् । प्रयतः सावधानः । शुचिः शुद्धः । सायं प्रातर्भक्त्या स्तोत्रपाठं कुर्वन्दुःखग्रामाद्दुःखसमूहाद्विशेषेण मुच्यते । जन्मरहस्यज्ञानामात्रेऽपि केवलं जन्मकीर्तनमात्रेणाऽपि सर्वदुःखनिवृत्तिरित्यर्थः । श्रद्धया गृणन्मुच्यत एव ॥ २९ ॥

एवं पुरुषाऽवतारं स्वांशावतारैः सपरिकरं निरूप्य तस्य विचारमाह एतद्रूपमित्यादिषड्भिः—

एतद्रूपं भगवतो ह्यरूपस्य चिदात्मनः ।
मायागुणैर्विरचितं महदादिभिरात्मनि ॥ ३० ॥

१ बहुकालदर्शित्वादिति ख. २ प्रकृतिफलमिति क. ग.



एतद्ब्रह्माण्डात्मकं भगवतो रूपं, पूर्णब्रह्मण एव सत्त्वोपहितस्य रूपम् । शरीरव्यतिरेकेणाऽऽत्मनोऽन्यत्र वृत्तिलाभाभावात् । "अरूपवदेव हि तत्प्रधानत्वादि"ति न्यायेन ब्रह्मणि स्वतो रूपं नास्ति । तत्र हेतुः—**चिदात्मन इति** । जडनैव हि रूपं भवति । चैतन्यमात्रस्याऽमूर्तस्य रूपाभावादिति[1] हिशब्दार्थः । तर्हि कथं ब्रह्माण्डशरीरत्वमुक्तम् । **मायागुणैर्विरचितमिति** । वैष्णवतन्त्रे आधिदैविकस्य शक्तिर्माया । तस्या एव त्रयो गुणाः सत्त्वरजस्तमांसि । तैरेव महदादयो जाताः । तैः स्वशरीर एव भगवच्छरीरं निष्पादितम् । इदं हि भगवच्छरीरम् । अत्र भगवान्समाहितो भजनीयो भविष्यतीति । ततश्च महदादिकृपया भगवानत्र संनिहित आविर्भूतस्तप्तायोगोलके वह्निरिव तिष्ठतीति बोद्धव्यम् ॥ ३० ॥

ननु जडरूपे कथमस्मिन्ब्रह्मप्रतीतिः । तथा सति चेतनत्वं प्रतीयेत । ततश्च दृश्यत्वाज्जडत्वाच्च नं भगवदावेशोऽत्राऽस्तीति कथमिदं शरीरम् ? तत्राऽऽह—

यथा नभसि मेघौघो रेणुर्वा पार्थिवोऽनिले ।
एवं द्रष्टरि दृश्यत्वमारोपितमबुद्धिभिः ॥ ३१ ॥

**यथा नभसीति** । अयं हि द्रष्टा । देवदत्तवद्भगवान् सर्वं पश्यति । यद्यपि शरीरमपि दृश्यं, तथापि द्रष्टा व्याप्तमिति तद्व्यतिरिक्तस्यैव दृश्यत्वप्रतीतिर्लोके । तत्र ये महान्तस्ते सर्वेऽत्र[2] ब्रह्माण्डे अयोगोलके वह्निमिव भगवन्तं पश्यन्ति । ये पुनर्मूढास्ते तस्मिन्द्रष्टरि दृश्यत्वमारोपयन्ति । ननु कथमन्यस्मिन्नन्यधर्माध्यारोप इत्याशङ्क्य सदृष्टान्तमाह—**यथा नभसि मेघौघ इति** । वस्तुतस्त्वाकाशोऽदृश्यः । ततश्च तदाधारत्वेन कथं मेघा दृश्या भवेयुः । येषामपि मते दृश्यस्तेषामपि मते नाऽऽकाशे मेघाः । किन्तु वायावेव । तत्र यथाऽन्यत्र स्थितानामन्यत्र प्रतीतिः । अत्र विशिष्टप्रतीतिरारोपितेन सह तथा नाऽस्तीति दृष्टान्तान्तरमाह—**रेणुर्वा पार्थिवोऽनिल इति** । यथा वात्यादौ तद्विशिष्टरेणुप्रतीतिः । ततो भ्रान्ता वात्याया इति रेणुं मन्यन्ते । वस्तुतस्तु पार्थिवो रेणुः ॥ ३१ ॥

एवं प्रपञ्चे जडबुद्धिर्भ्रान्ता भगवद्बुद्धिर्मुख्येति निरूप्य, जीवेऽपि भगवद्बुद्धिरेव मुख्या, न जीवबुद्धिरिति निरूपयति—

अतः परं यदव्यक्तमव्यूढगुणबृंहितम् ।
अदृष्टाश्रुतवस्तुत्वात्स जीवो यत्पुनर्भवः ॥ ३२ ॥

**अतः परमिति** । अतो ब्रह्माण्डविग्रहात्सूक्ष्मं सर्वेन्द्रियागोचरमव्यक्तापरपर्यायं करचरणाद्याकारेणाऽपरिणतैर्गुणैः स्वाभाविकैर्व्याप्तम् । अस्तीति सम्बन्धः । ततः किमित्याकाङ्क्षायां स जीव एव । जीवजडभगवद्व्यतिरेकेण चतुर्थपदार्थस्याऽभावात् । ननु तथापि जीवत्वं कुतः ? अत आह—**अदृष्टाश्रुतवस्तुत्वादिति** । यदि तज्जडं स्यात्, दृश्यं स्यात् । यदि वा भगवद्रूपं स्यात्, वेदादौ श्रुतं स्यात् । न वा निःस्वभावं, शशशृङ्गवत् । वस्तुत्वात् । तस्मात्पारिशेष्याज्जीव एव । केचन तं जीवोपाधिं मन्यन्ते ! तथा प्राप्ताप्राप्तविवेकेन भगवद्व्यतिरिक्तस्य जीवस्याऽभावात्कैस्योपाधिः[3] स्यात् । तस्माज्जीव एव सः । किञ्च । यस्मात्पुनर्भवः । पुराणे लोके चैव प्रतीयते । पूर्वमयं देवः स्थित इदानीं

१ रूपत्वाभावादिति क. ग. घ. ङ. २ सर्वत्र इति ख. ३ कस्योपाधित्वमिति ख.

मनुष्यत्वमापन्न इति । अतः पुनर्भवाऽन्यथानुपपत्त्या भगवदुपाधिः सूक्ष्मो जीवः कश्चिदस्तीति मन्तव्यम् ॥ ३२ ॥

किमतो यद्येवम् ? तत्राऽऽह—

**यत्रेमे सदसद्रूपे प्रतिषिद्धे स्वसंविदा ।**
**अविद्ययाऽऽत्मनि कृते इति तद्ब्रह्मदर्शनम् ॥ ३३ ॥**

**यत्रेमे इति** । वस्तुतस्तु सर्वो भगवानेव । न जीवो नाऽपि जडः । प्रतीतिस्त्वाविद्यकी । यदा पुनः स्वस्मिन्नेवाऽधिष्ठाने इमे स्थूलसूक्ष्मे ब्रह्मानुभवेन प्रतिषिद्धे भवतश्चेत् । प्रतिषेधे हेतुमाह—**अविद्ययाऽऽत्मनि कृते इति** । ब्रह्मानुभवव्यतिरेकेणाऽऽत्मनि कृते आत्मस्थाने तत्प्रतीयत इत्यर्थः । इतिशब्दो हेतौ । तत्तदेव ब्रह्मदर्शनं ब्रह्मानुभवो भवतीत्यर्थः । सर्वत्र ब्रह्मप्रतीतिस्तिष्ठति, जडजीवप्रतीतिर्गच्छतीति भावः ॥ ३३ ॥

किं तावता ? कदा वा प्रतीतिरेषा गच्छति ? इति तद्द्वयं निरूपयति—

**यद्येषोपरता देवी माया वैशारदी मतिः ।**
**सम्पन्न एवेति विदुर्महिम्नि स्वे महीयते ॥ ३४ ॥**

**यद्येषेति** । एषा माया भगवतो विशारदस्य सम्बन्धिनी देवी देवतारूपा पूर्वाऽवस्थात उपरता भवति । तथाऽपि तस्या न निःस्वभावत्वं भवेत् । किन्तु सा मतिरूपा भवति । यदा प्रवृत्तिरूपा भवति तदा माया । निवृत्तिरूपा मतिरिति विशेषः । तदाऽयं जीवः स्वे महिम्नि सम्पन्न एव स्वरूपं प्राप्त एव महीयते । स्वाराज्यं करोतीत्यर्थः । एवं—"सर्वं हरि"रित्येतदर्थं सपरिकरः पुरुषावतारो निरूपितः ॥ ३४ ॥

एवमन्यथाऽपि कृष्णे पुरुषोत्तमे जन्मकर्मनिरूपणं तस्य भगवत्त्वज्ञानार्थमेवेत्याह—

**एवं जन्मानि कर्माणि ह्यकर्तुरजनस्य च ।**
**वर्णयन्ति स्म कवयो वेदगुह्यानि हृत्पतेः ॥ ३५ ॥**

**एवमिति** । ननु उपदेशातिदेशयोः को विशेष इत्यत आह । अजनस्य जन्मानि, अकर्तुः कर्माणीति । विरुद्धधर्माश्रयत्वेन माहात्म्यं विशेषः । "एतावानस्य महिमे" ति वचनात् । एवमेव हि कवयो वर्णयन्ति विरुद्धसर्वधर्माश्रयत्वेन । ननु कथं प्रतीतिरविरोधेन ? तत्राऽऽह—**वेदगुह्यानीति** । वेदेऽपि गोप्यानि । भ्रान्तानां विरुद्धवत्प्रतीत्यर्थं तथा वचनम् । वस्तुतस्तु सर्वभवनसमर्थे ब्रह्मणि विरोध एव नास्ति । किञ्च । **हृत्पतेः** । सर्वेषां हृदयानां स एव प्रेरकः । तत्र यथा अनेकविधं प्रेरयति तथाऽनेकविधो भवतीत्यर्थः ॥ ३५ ॥

१ इवेति क.



कथं वर्णयन्ति ? का वा तस्य लीला ? किं स्वरूपम् ? कथं ज्ञायते ? इत्याकाङ्क्षायामाह **स वा इदमिति** त्रिभिः । अथवा । "सूत जानासी"त्यस्य वा (?) उत्तरम् ।

**स वा इदं विश्वममोघलीलः सृजत्यवत्यत्ति न सज्जतेऽस्मिन् ।**
**भूतेषु चाऽन्तर्हित आत्मतन्त्रः षाड्वर्गिकं जिघ्रति षड्गुणेशः ॥ ३६ ॥**

स पुरुषोत्तमः । वै निश्चयेन । कालादीनां तत्प्रेर्यत्वात् । **इदं विश्वमिति** प्रपञ्चे भेदो निराकृतः । अक्षरकालकर्मस्वभावप्रकृतिपुरुषैः क्रियते जगदिति यद्बहुधा **निरूपितं तद्वस्तुतो** भगवानेव करोति । तत्र हेतुः—**अमोघलील इति** । केवलमक्षरादिभिः कृते स्वतन्त्रस्य भगवत इच्छाऽभावे सति क्रिया व्यर्था स्यात् । कार्यव्यापृतत्वेन सम्यक्स्फुरणाभावाच्च । भगवतस्तु लीला सा । जगतो भोग्यत्वात् । क्रीडार्थमिव वा सृजत्यवत्यत्ति । भक्षणकथनात् । अन्येषां कर्मकरत्वेनाऽप्रयोजकत्वमुक्तम् । जीवानामपि तथात्वेन वैलक्षण्यमाह—**न सज्जत इति** । तत्कृतगुणदोषा मोहरूपादयः सङ्गः । तन्नास्ति । तत्र प्रमाणमिव कथयन्नस्मिन्निति निर्दिशति । भूतेषु स्वांशभूतेषु जीवेषु च न सङ्गः । जीवजडयोरनासक्तिरुक्ता । ननु सर्वत्र कार्यकारणयोर्दर्शनाद्भगवतश्चाऽदर्शनात्कथं भगवान्करोति । दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वाच्च । तत्राऽऽह—**अन्तर्हित आत्मतन्त्र इति** । अन्तर्हितत्वाददर्शनम् । आत्मतन्त्रत्वान्न दृष्टसम्भवः । दृष्टानां परतन्त्रत्वात् । ननु सर्वत्राऽन्तर्हितः अनुप्रविष्टश्चेत्करोति तदा भोगे दोषः । जीवैः सह भोगात् । प्रथमत एव वा भोगे भुज्यमानानामभावापत्तिरित्याशङ्क्याऽऽह । षाड्वर्गिकं जिघ्रति । भोगो हीन्द्रियसाध्यः । इन्द्रियाणि तु धर्मानेव गृह्णन्ति न धर्मिणः । तत्र केवलानां ग्रहणं जीवैरशक्यम् । इन्द्रियाणां च क्षणमात्रं धर्मैकदेशसम्बन्धः । तथाच षड्विषयाणां भोगो भगवत्साध्य एव । **जिघ्रतीति** धर्माणामेव ग्रहणम् । लोके केवलधर्मग्रहणं घ्राण एवेत्युक्तम् । षण्णामिन्द्रियाणां पञ्चपर्वाविद्याध्यासत्वेन प्रत्येकं पञ्चरूपत्वात्पञ्चविधत्वं वर्गत्वम् । तथाच त्रिंशद्भेदा भवन्ति । अष्टाविंशतिभेदानि तत्त्वानि, स्वयं, भक्तिश्चेति । तेषां रसान् स्वयमेवाऽनुभवतीत्यर्थः । ज्ञानसहितानां रूपादीनां न जीवं प्रति सर्वभावेनाऽऽत्मसमर्पणं किन्त्वेकदेशेन कथञ्चिदेव । न तथा भगवतीत्याह—**षड्गुणेश इति** । ईशत्वेन नियामकत्वं तदधीनत्वं चोक्तम् ॥ ३६ ॥

इत्यत्यन्तसूक्ष्मेक्षिकया पदार्थो निरूपितः । वस्तुतस्तु न सम्यग् ज्ञायत एवेत्याह—

**न चाऽस्य कश्चिन्निपुणेन धातुरवैति जन्तुः कुमनीष ऊतीः ।**
**नामानि रूपाणि मनोवचोभिः सन्तन्वतो नटचर्यामिवाऽज्ञः ॥३७॥**

**न चाऽस्येति** । अयमभिप्रायः । सर्वरसास्वादनं भगवत उक्तम् । ते च रसा उत्कृष्टा अपकृष्टाः स्वत आधारतोऽधिकारिभेदेन च भवन्ति । ते च भगवता अनुभूयन्ते न वेति सन्देहः । सर्ववस्तुषु रसरूपेण भगवत एव प्रविष्टत्वान्न स्वात्मानं प्रत्युत्कृष्टता अपकृष्टता वा । सर्वरूपत्वाच्च द्वितीयाऽपि कोटिः । चकारात्प्रमाणान्तरस्याऽपि निवृत्तिः । एवं निरूपणेन भक्त्या भगवदाविर्भावं प्रदर्शयन्नाह—**अस्येति** । कृष्णस्य । **कश्चिदिति** । ब्रह्माऽपि । निपुणेनाऽपि प्रमाकरणेन । तत्र हेतुः—**धातुरिति** । उत्पादको हि भगवान् तदुपादानोपलम्भकः । कस्मै प्रयोजनाय कथं सृष्टवानिति कथमन्यो

१ अभावापत्तिरिति क. ग. २ धर्मसंग्रहणमिति ख. ३ अत्यन्तसूक्ष्मेक्षिकतयेति ख.

विजानीयात् । तत्राऽपि जन्तुः कृमितुल्य ऊहापोहकौशल्यरहितः । भगवतोऽपि न स्वाभाविक्यः क्रियाः । किन्तु ऊतीः । निपातप्रयोगश्चाऽवान्तरभेदाऽपरिज्ञानाय । सर्वथा अज्ञाने हेतुः । मनोवचोभिः सह नामानि वेदान्, रूपाणि विषयान्, सन्तन्वतो विस्तारयतः । **चतुर्भिश्च महारोगैर्व्यासा ऊतीर्न जानते । नटवद्याऽपि करणमन्यथा प्रतिभासनात्** । प्रमाणबलेन हि परिज्ञानम् । प्रमाणव्यामोहार्थमेव नटप्रवृत्तिरित्याह—**नटचर्यामिति** । सुतरामज्ञः । पुष्टिमार्गानभिज्ञ इत्यर्थः ॥ २७ ॥

तर्हि कथं निस्तार इत्याशङ्क्याऽऽह—

**स वेद धातुः पदवीं परस्य दुरन्तवीर्यस्य रथाङ्गपाणेः ।**
**योऽमायया सन्ततयाऽनुवृत्त्या भजेत तत्पादसरोजगन्धम् ॥३८॥**

**स वेदेति । धातुरिति** । पूर्ववत् । स तु न ज्ञात एव । अज्ञायमानस्वरूपत्वात् । कार्यं तु लौकिकम् । तन्मार्गपरिज्ञाने समागमनं बुद्ध्वा सहभावात्कार्याणां तत्त्वं ज्ञायेतेति तस्य गतिर्मार्गो ज्ञातव्यः । लौकिकवैदिकप्रमाणा(?)ज्ञानाभावे हेतुमाह—**परस्येति** । सर्वप्रमाणादूरं वर्तमानस्येत्यर्थः । कदाचिदशक्तावल्पचलने तत्रत्यैर्ज्ञायेतेत्याशङ्क्याऽऽह—**दुरन्तवीर्यस्येति** । दुष्टः अन्तो यस्य वीर्यस्य । पराक्रमो न समाप्यत एव कदाचिदपि । समाप्तिश्चेत्प्रलय एवेति दुरन्तता । प्रलयानन्तरं तु ज्ञातैव नास्तीति भावः । किञ्च । कालस्यैव परिज्ञानं सम्भवति । तच्च कालचक्रं पाणौ यस्य । कालमपि स्थिरीकृत्य तिष्ठति । अथवा । सर्वमेव जगत् रथः । तस्याऽप्यधश्चक्रम् । तत्पाणौ यस्येति । हस्तचालनेन चलति । हस्ताधारश्च । स कथं शकटस्थैर्ज्ञातुं शक्यते । अतो भगवदनुवृत्तिरेव ज्ञानहेतुरित्याह—**योऽमाययेति** । दीर्घकालादरनैरन्तर्यसेवायां मायाऽभावोऽप्यङ्गम् । सर्वो हि लौकिको वैदिकश्च मायया भगवन्तं भजते । एवं हि कृते अयमस्मभ्यमिदं दास्यतीति बुद्ध्या भगवतः सकाशात्पदार्थान् ग्रहीतुं भगवद्वञ्चनार्थं प्रयत्नकरणात् । भगवांस्तु ततोऽपि चतुरः । अतो माया त्याज्या । स्वयुक्तिविचारो मायेति पर्यायः । सन्तता निरन्तरा । अनु पश्चाद्वृत्तिरिति गतिपश्चाद्भावोक्तेर्दीर्घकालादरौ बोधितौ । चरणपरिज्ञानं हि मार्गज्ञाने हेतुः । तदेव पङ्कजम् । तस्य गन्धः । भगवतः शयने पादसंवाहने ऊर्ध्वमुखस्य चरणस्य आघ्राणे[3] गन्धोऽनुभूयते । तथा येषां हृदये भगवान् स्वच्छन्दं शेते । बहिरिन्द्रियाणि च गन्धेनाऽऽकृष्टानि तत्रैव प्रविशन्ति . स च भगवन्मार्गं जानातीति ज्ञानपक्षः । भक्तिपक्षे तु तस्य चरणौ भक्तिमार्गः । स च शुद्धे विशदे[4]ऽन्तःकरणे आविर्भूतं सरोजम् । तत्र गन्धः सन्तः । प्रेम वा । तस्य भजनं निरन्तरानुवृत्तिरिति ॥ ३८ ॥

एवं प्रासङ्गिकमुक्त्वा भिन्नोपक्रमेण प्रस्तुतमाह—

**अथेह धन्या भगवन्त इत्थं यद्वासुदेवेऽखिललोकनाथे ।**
**कुर्वन्ति सर्वात्मकमात्मभावं न यत्र भूयः परिवर्त उग्रः ॥ ३९ ॥**

**अथेति** । प्रश्नेनैवं ज्ञायते भवन्तो भगवन्निष्ठा इति । इह संसारे भगवन्तो भवन्तः । "**यो यच्छ्रद्धः स एव सः**" इति वचनात् । **धन्या इति** । धनं भगवद्भक्तिं ज्ञानं वा अर्हन्तीति धन्याः । **इत्थमिति** । हीनमपि सम्बोध्य अनवसरमवसरीकृत्य तन्मुखादपि परमादरेण श्रवणम् । एवं प्रकारः । **वासुदेव इति** । देवान्तराऽभजनं[1] निरूपितम् । **अखिललोकनाथ इति** । तस्य सर्वेश्वरत्वं च ज्ञात्वा वेदान्तवेद्यत्वं च । एवं माहात्म्यज्ञानार्थं सुदृढस्नेहार्थं च विशेषणद्वयमुक्त्वा, **रुच्यर्थमात्मपदं** प्रयुज्य, भावं देवत्वेन रतिं कुर्वन्ति यतः अतो धन्या इति पूर्वेण सम्बन्धः । **अस्य फलं पुनः** कालसंसारचक्रे महावर्तरूपे पुनः पतनाभावः । एतद्देहावसानपर्यन्तं यथा भवतु तथेति पुनः(?) शब्दार्थः । अनादराभावाय—उग्र इति ॥ ३९ ॥

कुत इदमुद्धृतमित्याकाङ्क्षायामाह—

**इदं भागवतं नाम पुराणं वेदसम्मितम् ।**
**उत्तमश्लोकचरितं चकार भगवानृषिः ॥ ४० ॥**

**इदं भागवतमिति** । भगवतः सर्वसम्बन्धि[2] भागवतम् । नामेति प्रसिद्धम् । पुरातनम् । **पुराणमिति** जातिशब्दो वा । वेदेन सम्यङ्मितम् । मतान्तरेष्विव नाऽत्र वेदविप्रतिषेधः । **वस्तुनिरूपणार्थं** प्रासङ्गिककथाऽपि पुरुषोत्तमकथैवेत्याह—**उत्तमश्लोकचरितमिति । उत्तमश्लोकस्य चरित्रं यत्र** । आर्षज्ञानेन भगवान्वेदव्यासोऽनुभूय आह ॥ ४० ॥

**निःश्रेयसाय लोकानां धन्यं स्वस्त्ययनं महत् ।**
**तदिदं ग्राहयामास सुतमात्मवतां वरम् ॥ ४१ ॥**[3]

ग्रन्थप्रवृत्तिः सर्वमुक्तये । धनप्राप्तिः कल्याणं च । लक्ष्म्याः सर्वगताया भक्तायाः **श्रवणात् । महदिति** । स्वतो गुणतोऽर्थतश्च । स्वस्य ज्ञानार्थं परम्परामाह । **व्यासः शुकं वेदवत्पाठितवान्** । गोप्यत्वाय—**सुतमिति** । जितेन्द्रियता ज्ञानं चाऽत्राऽङ्गम् । **तस्योत्कर्षे भागवतं फलतीत्यभिप्रायेणाऽऽह—आत्मवतां वरमिति** ॥ ४१ ॥

प्रमाणान्तरचिन्ता न कर्तव्येत्याह—

**सर्ववेदेतिहासानां सारं सारं समुद्धृतम् ।**
**स च संश्रावयामास महाराजं परीक्षितम् ।**
**प्रायोपविष्टं गङ्गायां परीतं परमर्षिभिः ॥ ४२ ॥**

**सर्ववेदेति** । त्रैवर्णिकानामुद्धारार्थं वेदः । स्त्रीशूद्राणामितिहासः । **उभयसारोद्धारत्वात्सर्वोद्धारकम्** । परम्परामाह—**स चेति** । स्पष्टम् । प्रायो मरणपर्यन्तमन्ननिवृत्तिः । **गङ्गायामिति देशोत्कर्षः । परमर्षिभिरिति** सत्सङ्गः ॥ ४२ ॥

"**धर्मः कं शरणं गतः**" इति षष्ठप्रश्नस्योत्तरमाह—

**कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह ।**
**कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः ॥ ४३ ॥**

**कृष्ण इति** । धर्मस्तु भगवतैव सह गतः । **स्थिते शरणचिन्ता । कलिरन्धकारतुल्यः । तेन** वि-

१ गतिर्मार्गे इति क. २ इदमिहेति ष. ३ घ्राणे इति ख. ४ विपदे इति ख. विशुद्धे इति ब.

१ देवतान्तराभजनमिति क. ष. ङ. २ सर्वं सम्बन्धीति ख. ३ इतः प्राक्—निःश्रेयसायेति इति प्रतीकमस्ति क. ब. ङ.

हितदृष्टीना न त्वन्धानाम् । स्वतोऽदुष्टानाम् । पुनर्धर्मादिज्ञापनार्थं पुराणरूपोऽर्कोऽधुनोदितः । स्थित एव लोके प्रकटीभूत इत्यर्थः ॥ ४३ ॥

स्वस्य प्राप्तिप्रकारमाह—

**तत्र कीर्तयतो विप्रा विप्रर्षेर्भूरितेजसः ।**
**अहं चाऽध्यगमं तत्र निविष्टस्तदनुग्रहात् ।**
**सोऽहं वः श्रावयिष्यामि यथाधीतं यथामति ॥ ४४ ॥**

**तत्रेति । विप्रा** इति सम्बोधनेन सर्वपूरकत्वाच्छुकः प्रथमं पूरितवान् । अधुना पुनः स्मरणेन भवन्तः पूरयन्तीति । लौकिकत्वाऽभावाय—ऋषि(१)रिति । असन्दिग्धार्थकथनायोत्तरत्र प्रकाशनाय च—**भूरितेजस इति** । भूरि तेजः ज्ञानप्रकाशो यस्य । ब्रह्मवित्त्वेन तेजोविशेषो वा सर्वज्ञत्वाय । ततः सर्वतोमुखं भागवतं जातमित्याह—**अहं चेति** । सर्वे एवाऽधीतवन्तः । अहं च । तत्र उपदेशसभायां प्रसङ्गान्न श्रुतम् । किन्तु शुकानुग्रहात्तत्रोपविश्य । अनुग्रहं प्राप्य तत्र निविष्टः । सोऽहमुपदेशात्प्राप्तभागवतो वः युष्मान् अध्ययनमनतिक्रम्य तन्मध्ये यथामति स्वबुद्ध्यनुसारेण । अनेन गर्वपरिहारः । उक्तादप्यधिकोऽर्थोऽस्याऽस्तीति ज्ञाप्यते ॥ ४४ ॥

**इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां प्रथमस्कन्धे तृतीयोऽध्यायः ।**

## चतुर्थोऽध्यायः ।

**ऐवं भागवतार्थस्य निर्धारः स्वाधिकारतः ।**
**त्रिभिः कृतो द्वितीये तु त्रिभिस्त्याज्यसमत्वतः ॥ १ ॥**
**मध्याधिकारे यच्छास्त्रं तदत्र विनिरूप्यते ।**
**नारदस्याऽधिकारित्वाच्छ्रोतुश्चिन्ताकुलत्वतः ॥ २ ॥**
**तत्राऽध्याये चतुर्थे तु व्यासचिन्ता निरूप्यते ।**
**उत्तमप्रक्रियायाश्च वक्तुर्हेतुनिरूपणात् ॥ ३ ॥**

पूर्वप्रकरणे स्वाधिकारानुसारेण शास्त्रार्थो निरूपितः । तत्र मूलत्वेन भागवतमुक्तम् । यस्मिन्भागवते श्रुते सूतस्याऽयं शास्त्रार्थः प्रतिभातस्तदेवाऽस्माभिरपि श्रोतव्यमित्यभिप्रायेण शौनकः सूतं पृच्छतीत्याह व्यासः—

व्यास उवाच—

**इति ब्रुवाणं संस्तूय मुनीनां दीर्घसत्रिणाम् ।**
**वृद्धः कुलपतिः सूतं बह्वृचः शौनकोऽब्रवीत् ॥ १ ॥**

१ परिपूरितवानिति ख. २ इतःपरमेकः श्लोकोऽभ्यधिको दृश्यते घ—पुस्तके । स यथा—"तुर्ये भागवतारम्भकारणत्वेन वर्ण्यते । व्यासस्याऽपरितोषस्तु तपःप्रवचनादिभि" रिति । ३ समन्वित इति घ.



**इति ब्रुवाणमिति** । सर्वत्र हि वक्तुर्वाक्यसमाप्त्यनन्तरं श्रोतुः प्रश्नः । अत्युत्कण्ठया त्विहाऽसमाप्तावेव प्रश्न इत्याह—**ब्रुवाणमिति** । सम्भावनामात्रेण पृष्टे, समूले शास्त्रार्थे निरूपिते, वक्तरि महत्या श्रद्धया, सम्यक् स्तोत्रं कृतवन्त इत्याह—**संस्तूयेति** । संस्तवनं ग्रन्थाद्बहिः । पूर्वमाकाङ्क्षायाः प्राबल्यात्सर्वैरेव पृष्टम् । अधुना किञ्चिदुत्कृष्टमस्तीति बुद्ध्वा मननेन च तन्निर्धार्य सहस्रसंवत्सरे च भगवदवतारनिश्चयात्तदर्थमेव च सत्रारम्भात्कोलाहले सम्यक् श्रवणं न भविष्यतीति सर्वेषु शृण्वत्सु तत्सम्बन्धी देवतास्वरूपाभिज्ञः शौनकः पृच्छतीत्यर्थः । वृद्धो ज्ञानवृद्धः । कुलस्य ऋषिकुलस्य पतिर्नियामकः । बुद्धेर्निर्द्धारो ज्ञानवृद्धे भवति । उत्तरत्र प्रचारार्थं वचनविश्वासः कुलाचार्ये भवतीति **वृद्धः कुलपतिरिति** पदद्वयेन ज्ञापितम् ॥ १ ॥

चतुर्धा **अत्र** प्रश्नः । भागवतविषयकः, कर्तृविषयको, वक्तृविषयकः, श्रोतृविषयकश्चेति । तत्र प्रथममाह—

शौनक उवाच—

**सूत सूत महाभाग वद नो वदतां वर ।**
**कथां भागवतीं पुण्यां यदाह भगवान् शुकः ॥ २ ॥**

**सूत सूतेति** । आदरे वीप्सा । तव तु महाभाग्यं यद्भागवतं श्रुतवानसीति **महाभागेति** सम्बोधनम् । नः अस्मभ्यम् । न श्रोतृत्वमात्रमस्मासु किन्त्वस्मभ्यं भागवतं देयमिति चतुर्थीप्रयोगः । वदतां मध्ये श्रेष्ठः । निर्धारणात्र समासः । वदतां मध्ये त्वमेव श्रेष्ठः । यस्यां कथायां श्रुतायां त्वयैवं शास्त्रार्थो निरूपितस्तामेव कथां वद । पुण्यां धर्मरूपाम् । विहितत्वाद्भागवत् । श्रद्धाधिक्ये हेतुः—यद्यस्मात्कारणाद्भगवान् शुक आह । **शुक** इति मुक्तः । **भगवानिति** पूर्णगुणः ॥ २ ॥

द्वितीयं प्रश्नमाह—

**कस्मिन्युगे प्रवृत्तेयं स्थाने वा केन हेतुना ।**
**कुतः सञ्चोदितः कृष्णः कृतवान् संहितां मुनिः ॥ ३ ॥**

**कस्मिन्युग इति** । कर्तुः परिकरापेक्षत्वात्कर्तृप्रश्ने परिकराणामपि प्रश्नः । कालदेशहेतवो हि परिकराः । प्रयोजककर्ता च । त्रिषु प्रवृत्तेयमिति सम्बन्धः । कस्मिन्युगे इयं सम्प्रवृत्ता । कस्मिन्वा स्थाने । केन वा हेतुना । यथाऽत्र चित्तवैयग्र्यं तदभावो हेतुः । केन वा प्रेरितो भवतु । कुतो वा हेतोः प्रेरितः । प्रवृत्तौ त्रयः प्रश्नाः । करणे चैकः । **मुनिरिति** मननप्रतिबन्धिकायाः संहितायाः कथं करणम् ॥ ३ ॥

तृतीयमाह पञ्चभिः—

**तस्य पुत्रो महायोगी समदृङ्निर्विकल्पकः ।**
**एकान्तमतिरुन्निद्रो गूढो मूढ इवेयते ॥ ४ ॥**

**तस्य पुत्र इति** । वक्तृत्वेन प्रकृष्टत्वात्राऽध्येतृत्वनिमित्तसन्देहा इहोच्यन्ते । ते चाऽग्रे वक्तव्याः । महायोगी समाधिस्थः । प्रथमं योगो दुःखदोऽपि भवति । प्रवृद्धस्तु सुखदः । तादृशस्य कथाकथनम-

१ ग्रन्थस्थितिरिति नास्ति ख. २ प्रयोजनं कर्ता चेति ख. ३ वृद्धत्वादिति घ.

युक्तमिति भावः । किञ्च । समदृक् । ब्रह्मविदित्यर्थः । उच्चावचबुद्धिसाध्यं च प्रवचनम् । किञ्च । निर्विकल्पकः । साङ्ख्यप्रोक्तज्ञानसिद्धः । निर्गता विकल्पाः प्राकृता यस्य । किञ्च । एकान्तमतिः । विरक्तः । एकान्ते मतिर्यस्य । किञ्च । उन्निद्रः । उद्गता निद्रा यस्येति स्वप्नदृष्टारिष्टनिवृत्त्यपेक्षारहितोऽपि । किञ्च । गूढः । सङ्गाद्भृशमुद्विजमानः । अत एव च लोके अप्रसिद्धः । किन्तु मूढ इव दृश्यते ज्ञायते ॥ ४ ॥

किञ्च । सर्वदा असम्प्रज्ञातसमाधिस्थो बहिःसंवेदनरहित इति वक्तुमुपाख्यानमाह—

दृष्ट्वाऽनुयान्तमृषिमात्मजमप्यनग्नं
देव्यो ह्रिया परिदधुर्न सुतस्य चित्रम् ।
तद्वीक्ष्य पृच्छति मुनौ जगदुस्तवाऽस्ति
स्त्रीपुम्भिदा न तु सुतस्य विविक्तदृष्टेः ॥ ५ ॥

दृष्ट्वाऽनुयान्तमिति । अत्र ह्येवं कथा । कचित्सरोवरे नग्ना अप्सरसः स्नान्ति । तत्र नग्नं शुकं पुत्रमनुयान्तं व्यासं दृष्ट्वा वस्त्राणि पर्यधुः । ततो व्यासस्य सन्देहो जातः । कथं मां वृद्धमनग्नं दृष्ट्वा वस्त्राणि परिदधति, पुत्रं तरुणं नग्नं दृष्ट्वा न । इति सन्देहात्ताः पृष्टवान् । तासामुत्तरम्—तवाऽस्ति स्त्रीपुम्भिदा, न तु सुतस्येति । यद्यपि शाब्दं ज्ञानं वेदव्यासस्य निर्विचिकित्सं स्वरूपज्ञानं च । तथापि बहिःसंवेदनमस्ति । अधिकारित्वात् । पुत्रस्य तु नित्यारूढसमाधित्वान्न बहिःसंवेदनमस्ति । तदाह—विविक्तदृष्टेरिति । विविक्ता अनात्मस्पर्शरहिता दृष्टिर्यस्येति । एवमष्टगुणानां भगवत्कथाबाधकानां विद्यमानत्वात्कथं कथाप्रवचनमिति ॥ ५ ॥

यद्यपि प्रव्राजकधर्मकरणात्—"कीटवत्पर्यटेन्महीमि"ति वाक्यात्समाधेरुत्थितः । कैश्चिद्दृष्टः प्रार्थितो निर्बन्धेन कथां कथयतीति न मन्तव्यम् । लोकानां ज्ञापकधर्मो महानयमिति नाऽस्मिन्विद्यत इत्याह—

कथमालक्षितः पौरैः सम्प्राप्तः कुरुजाङ्गलान् ।
उन्मत्तमूकजडवद्विचरन् गजसाह्वये ॥ ६ ॥

कथमालक्षित इति । कुरुजाङ्गलान् हस्तिनापुरदेशम् । आ समन्ताच्छुकोऽयमिति । पौरैरिति । पुरवासाद्बुद्धिर्विवेका भवति । ज्ञानं हि त्रेधा भवति । बहिःस्थैर्यादिना वचनेन सदाचारेण च । तत्त्रितयं नास्तीत्याह—उन्मत्तमूकजडवदिति । गजेन समान आह्वयो नाम यस्य तत् गजसाह्वयम् । नगरनामनिरुक्त्या तत्रत्या मत्ता इति लक्ष्यन्ते । अत एव ज्ञानभयाभावात्तीर्थविशेषत्वाच्छुकस्य परिभ्रमणम् ॥ ६ ॥

कथं वा पाण्डवेयस्य राजर्षेर्मुनिना सह ।
संवादः समभूत्तात यत्रैषा सात्वती श्रुतिः ॥ ७ ॥

अस्तु वा नगरे केषाञ्चिज्ज्ञानं तथापि राज्ञा सह संवादोऽनुचितः । राज्ञो राजर्षित्वादनाचारिषु श्रद्धाभावः । शुकस्य च मुनित्वात्सर्वज्ञत्वेन संवादसम्भावनायां गमनाभावः । स च सम्बन्धो बहुकालसाध्यः । तदाह । यत्रैषा सात्त्वती श्रुतिः । वैष्णवो वेदः ॥ ७ ॥

१ स्वप्नदृष्टानिष्टेत्यादि ख. २ नान्यस्मिन्निति क. ३ आह्वो यस्येति क. ख. ग. क. ४ गजाह्वयमिति ख. ५ श्रद्धाभाव इति ख. ६ संवादसम्भावनया इति ख.



स गोदोहनमात्रं हि गृहेषु गृहमेधिनाम् ।
अवेक्षते महाभागस्तीर्थीकुर्वंस्तदाश्रमम् ॥ ८ ॥

अस्तु वा । तथापि गोदोहनकालादधिककाले गृहस्थगृहे संन्यासिनो वासोऽनुचितः । सोऽपि वासो न रागात् । तथा सति रागपूर्त्यर्थं चिरकालमपि वासः सम्भाव्येत । किन्तु गृहस्थानामाश्रमं तीर्थीकुर्वन् । गृहे मेधा बुद्धिरतिप्रवृत्तिनिष्ठा । तथा तेषामेव चाऽग्रे संन्यासः । तथा सति पूर्वदोषस्य विद्यमानत्वान्नाऽधिकारः । सङ्गदोषाच्च । अतः परमहंसैर्गृहस्थाश्रमः अतीर्थोऽपि तीर्थीक्रियते । ततो दोषद्वयं गच्छतीत्याह—स गोदोहनमात्रमिति । यथा हि गौर्धर्मदोहार्थं तावत्कालं निर्बन्धं सहते तथा जगन्मित्रैरपि सोढव्यमिति हिशब्दार्थः । इयमवस्था महाभाग्येन प्राप्यत इति महाभागविशेषणम् ॥ ८ ॥

श्रोतुः प्रश्नमाह चतुर्भिः—

अभिमन्युसुतं सूत प्राहुर्भागवतोत्तमम् ।
तस्य जन्म महाश्चर्यं कर्माणि च गृणीहि नः ॥ ९ ॥

अभिमन्युसुतमिति । पितृनाम्ना महत्त्वं हि मातृनाम्ना तु हीनता । इति सर्वत्र बोद्धव्यं श्रीमद्भागवतेऽपि च । अभितः सर्वतो मन्युर्यस्य । न त्वन्तः । क्षत्रियस्य चाऽयं धर्मः । अन्तः क्रोधाभावाच्च वैष्णवः । सूतेति सम्बोधनं वृत्तान्तपरिज्ञानाय । लोकवृत्तपरित्यागेन भगवदेकपरायणो महाभागवतः । "विसृजति हृदयं न यस्ये" ति वा । प्राहुरिति सर्वलोकप्रसिद्धः । पूर्वमेव तादृशस्य भागवतेन यो विशेषस्तत्परिज्ञानाय पूर्वं विशेषं पृच्छति—तस्य जन्मेति । महदाश्चर्यं यत्र । मृतस्य गर्भोत्पन्नितस्य पुनर्जीवनमिति । भारतादिष्वेवमेव कथा । कलिनिग्रहादीनि कर्माणि ॥ ९ ॥

वैष्णवस्य प्रायोऽनुचित इत्यभिप्रायेणाऽऽह—

स सम्राट् कस्य वा हेतोः पाण्डूनां मानवर्धनः ।
प्रायोपविष्टो गङ्गायामनादृत्याऽधिराट्श्रियम् ॥ १० ॥

पेरीक्षिति लौकिकोऽप्युत्कर्षोऽस्ति । सम्राट् चक्रवर्ती । पाण्डूनामपि मानं वर्द्धयति । पाण्डवप्रतिष्ठया नाऽस्य प्रतिष्ठा । किन्तु विपरीतेत्यर्थः । गङ्गयैव च सर्वपुरुषार्थसिद्धिः । किं गङ्गायां प्रायोपवेशनेन । पराजयस्त्वसंभावित एव । यतः अधिका राज्ञामपि श्रीर्गृहे यस्य वर्तते तामप्यनादृत्य । एवं लोकवैष्णवाभ्यां प्रायोऽनुचितः ॥ १० ॥

किञ्च । लज्जा तु सर्वतो महती । विशेषतः स्वेषु । तत्कथं राज्ञां मध्ये प्रायोपवेशनमित्यभिप्रायेणाऽऽह—

नमन्ति यत्पादनिपीठमात्मनः शिवाय हाऽनीय धनानि शत्रवः ।
कथं स वीरः श्रियमङ्ग दुस्त्यजां युवैषतोत्स्रष्टुमहो सहाऽसुभिः ॥ ११ ॥

१ परीत इति ख. २ इतः प्राक्—स इति, इति प्रतीकमस्ति च. ३ पाण्डूनामभिमानमिति ख. ४ किन्तु इति ख.

**नमन्तीति** । पादनिपीठं पादुके वा । सर्वत्र देशेष्वस्य सिंहासने गत्वा स्वापराधमार्जनार्थं धनान्यानीय । हेत्याश्चर्ये । शत्रवोऽपि नमन्त्यात्मनः शिवायेति । देशस्तु पूर्वमेवाऽपहृतः । स्वयं च सङ्कटे पतिताः पुनः स्वदेशप्राप्त्यर्थं धनानि प्रयच्छन्तीत्यर्थः । अयमर्थस्तस्य पुरुषार्थो न भवतीति न मन्तव्यम् । यतो वीरः । वीररसस्य विद्यमानत्वात् । वीरस्य हि प्रायोपवेशेन मरणं लज्जाकरं भवति । किञ्च । धनाद्यर्थं प्रायश्चित्तार्थं वा लोके प्रायोपवेशनं सिद्धम् । तत्सार्वभौमश्रियास्त्यागविषयत्वाद्धनार्थं न भवति । नदर्थत्वे च कथं श्रियं त्यक्तवानिति । तत्रापि प्राणैः सह । को वा भोक्ष्यति । लोके हि प्राणापेक्षयाऽपि धनं दुस्त्यजम् । तस्करादिषु निर्णयात् । तत्रापि यून इच्छामात्रमपि दुर्लभं किं पुनः करणम् । सत्यवार्तायामहो इत्याश्चर्यम् ॥ ११ ॥

प्रायश्चित्तादि[1] तु परलोकसाधनार्थं [illegible]णवस्य प्रायोपवेशनं न भवति किन्तु जीवनमेवेत्याह—

**शिवाय लोकस्य भवाय भूतये य उत्तमश्लोकपरायणा जनाः ।**
**जीवन्ति नाऽऽत्मार्थमसौ पराश्रयं मुमोच निर्विद्य कुतः कलेवरम् ॥१२॥**

**शिवायेति** । प्रमादान्महापातकसम्बन्धेऽपि वैष्णवस्य न देहत्याग उचितः । तेषां स्वतः सेवासामर्थ्याभावेऽपि तान् दृष्ट्वा लोकाना करणं सम्भवति । अतस्तेषां जीवनमेव सर्वेषां शिवाय भवति । शिवं शान्तसुखम् । भवः उद्भवः लोके पुत्रपौत्राद्यभिवृद्धिः । " **अमोघवीर्या हि नृपा** " इति वाक्यात् । भूतये ऐश्वर्याय । अणिमाद्यष्टैश्वर्यं भगवत्सेवायां प्रासङ्गिकम् । " **महापुरुषपूजाया** " इति वचनात् । अतः सर्वेषां पुरुषार्थसाधकस्य देहस्य त्यागोऽनुचितः । किञ्च । निर्वेदेन देहादिपरित्यागो भूतहितार्थः । " **अभयमभयं भूतेभ्य** " इति वचनात् । तत्र वैष्णवानां विपरीतमित्यभिप्रायेणाऽऽह—**पराश्रयं निर्विद्येति** । निर्वेदे हेतुरेव परित्यक्तव्यः[2] । न तु कलेवरम् । कस्य चिदेव हि धर्मस्य हेतुत्वम् । कले च अव्यक्तमधुरे वरमिति नामनिरुक्त्या अव्यक्तरसाविर्भावहेतुरिति प्रतिभाति । स च भक्तिरसः । अन्यस्य लोकवेदयोः प्रसिद्धत्वात् । अतो भक्तिरसाविर्भावकं शरीरं कथं त्यक्तवानित्यर्थः ॥ १२ ॥

एवं प्रश्नचतुष्टयमुक्त्वोपसंहरति—

**तत्सर्वं नः समाचक्ष्व पृष्टो यदिह किञ्चन ।**
**मन्ये त्वां विषये वाचां स्नातमन्यत्र छान्दसात् ॥ १३ ॥**

**तत्सर्वमिति** । उत्तरोत्तरप्रश्नेऽपि पूर्वस्य न दौर्बल्यम् । तदाह—**सर्वमिति** । ननु भागवतार्थेऽस्माकं परिचयो नाऽन्यत्रेति न वक्तव्यमित्याह—**मन्य इति** । अत्रैवर्णिकत्वाद्वेदे परं न परिचयः । तदाह—**अन्यत्र छान्दसादिति** ॥ १३ ॥

प्रथमप्रश्नस्य स्कन्धान्तरेषूत्तरम् । तृतीयचतुर्थयोरुत्तमप्रकरणे । अतो हेतुभूतत्वाद्द्वितीयप्रश्नस्योत्तरमाह—

**सूत उवाच—**

**द्वापरे समनुप्राप्ते तृतीये युगपर्य्यये ।**
**जातः पराशराद्योगी वासव्यां कलया हरेः ॥ १४ ॥**

---

१ द्वेति ष. २ परित्यक्तव्य इति ख.



**द्वापर इति** । भागवतनिर्माणार्थमेव मुख्यतया तस्याऽवतार इति प्रथमं जन्माऽऽह । ब्रह्मकल्पस्य प्रथममन्वन्तरस्य तृतीययुगपर्यावृत्तौ व्यासस्य जन्म । प्रथमयुगपर्यायो ज्ञानस्य ससाधनस्य कालः । द्वितीयः कर्मणः । तृतीयस्तु भक्तेः । तथापि धर्माणां बाधकत्वात् कृते त्रेतायां च न जन्म । किन्तु धर्मस्य द्विपरतायां सन्देहे । सर्वेषामेव सन्देहः संशब्दार्थः । पराशरस्य भक्तत्वं पुराणान्तरेष्वेव संसिद्धम् । मार्कण्डेयनमस्कारे वयोवृद्धवचनात् । उपरिचरवसोः पुत्री वासवी । मत्स्यगर्भे जाताऽपि बीजधर्मयुक्तैव । अवतारप्रयोजनम्—**योगीति** । योगः प्रवर्तनीयः । तत्रापि हरेः कलया सर्वदुःखदूरीकर्तुर्ज्ञानकलया । योगस्तु भक्तियोगः । ज्ञानस्य त्ववतारादेव तस्माऽपि फलं भक्तिः प्रयोजनम् । एवं भक्तिप्रवर्तनार्थमेवाऽवतार इत्युक्तं भवति ॥ १४ ॥

तस्य प्रासङ्गिकमाह—

**स कदाचित्सरस्वत्या उपस्पृश्य जलं शुचिः ।**
**विविक्त एक आसीन उदिते रविमण्डले ॥ १५ ॥**

**स कदाचिदिति** । स भक्त्यर्थमवतीर्ण एव कदाचिन्मार्गत्रयनाशे सति स्वस्याऽपि ज्ञानविस्मरणे सरस्वत्याः शुचि ( ? ) जलमुपस्पृश्य तेन प्रबुद्धसार्वज्ञ्यः । पापपराजितमिव (?) न भवतीत्याह—**शुचिरिति** । अनेन ज्ञानकलायां धर्मांश एवाऽभिव्यक्तः । ततः स्वावतारप्रयोजनं विचारयन्सर्वेषां हितार्थं धर्ममपश्यदित्याह—**विविक्त** इत्यारभ्य **कृपया मुनिना कृतमित्यन्तम्** । **विविक्ते** एकान्ते । मनःस्थैर्यार्थमेतत् । तदा एकः आसीनः । भौतिकदैविकात्मीयदोषत्रयाभाव उक्तः । **उदिते रविमण्डल** इत्यावश्यककर्मकालाभाव उक्तः । पुण्यनक्षत्रस्य कालगुणानां च ज्ञापकं वा ॥ १५ ॥

**पराऽवरज्ञः स ऋषिः कालेनाऽव्यक्तरंहसा ।**
**युगधर्मव्यतिकरं प्राप्तं भुवि युगे युगे ॥ १६ ॥**

परे कालादयः । अवरे अस्मदादयः । करिष्यमाणेऽर्थे कालादीनां प्रतिबन्धकाभावं प्राणिनां तथाऽदृष्टं च ज्ञातवानित्यर्थः । एतदनन्तरं स ऋषिर्जातः । धर्मांशस्यैव प्रकटत्वात् । कालो हि महानधिकारी भगवतः । सर्वकर्ता सर्वनिमित्तं च । एवं सति व्यर्थः प्रयासोऽन्येषामिति कालनियन्तुर्भगवतोऽवतार इति ज्ञापयितुं कालकृतमुपद्रवं प्रथमत आह—**कालेनाऽव्यक्तरंहसेति** । अव्यक्तेनाऽक्षरेण रंहो वेगो यस्य, अव्यक्ते वा प्रकृतौ रंहो वेगो यस्येति प्रकृतिप्रभृतीनां कालाधीनत्वमुक्तम् । अक्षरसम्मतिर्वा । अव्यक्तो रंहो यस्येति वेति प्रतिक्रियाऽकरणार्थे हेतुरुक्तः । एतावता भगवद्व्यतिरिक्तास्तदधीनास्तदनुगुणा वेति निरूपितम् । फलितमाह—**युगधर्मेति** । चतुर्युगाणां धर्माः तपोयज्ञस्वाध्यायदानादयः । तेषां व्यतिकरो नाशः । अनधिकारिषु वा प्रवृत्तिः । स च व्यतिकरो नाऽऽकस्मिकः किन्तु नियतः । भुव्येव न स्वर्गे । नाऽऽकस्मिकं किन्तु युगे युगे प्राप्तम् ॥ १६ ॥

कालेन धर्मनाशमुक्त्वा पदार्थनाशमप्याह—

**भौतिकानां तु भावानां शक्तिह्रासं च तत्कृतम् ।**
**अश्रद्दधानान् निःसत्त्वान् दुर्मेधान् ह्रसितायुषः ॥ १७ ॥**

---

१ प्रथममिति क. ष. २ चेति नास्ति ख. ३ महत इति क. ष. ४ नाऽऽकस्मिकः इति ख. ५ युगेषु प्राप्तमिति ख.

**भौतिकानामिति** । भौतिकानामस्मदादीनाम् । चकाराद्भूतानाम् । शक्तिः स्वाध्यायादीनाम् । कृषिवृष्ट्यादीनां वा । तत्कृतं कालकृतम् । कर्तृदोषानाह—**अश्रद्दधानानिति** । सर्वत्र श्रद्धारहितान् । सत्त्वं बलं विवेको वा । दुर्मेधान् बुद्धिरहितान् । चित्तमनोबुद्धिनाशा उक्ताः । अन्तःकरणेष्वहङ्कार एव पुष्ट इत्यर्थः । अत एव आयुषोऽप्यपचय इत्याह—**हसितायुष इति**[1] ॥ १७ ॥

दुर्भगांश्च जनान्वीक्ष्य मुनिर्दिव्येन चक्षुषा ।
सर्ववर्णाश्रमाणां यद्दध्यौ हितममोघदृक् ॥ १८ ॥

**कर्मणा हि** भाग्यमुत्पद्यते । तत्कालादीनां शुद्धितारतम्येन महाभाग्यजनकत्वम् । द्वापरादौ तु षण्णां दुष्टत्वाद्दुर्भाग्यत्वम् । एतत्सर्वं न तर्कितम् । किन्त्वार्षज्ञानेन प्रमितम् । तथा सत्युपायज्ञानं भवतीत्यर्थः । पाषण्डधर्माः स्वत एवोत्पत्स्यन्त इति तद्व्यावृत्त्यर्थमाह—**सर्ववर्णाश्रमाणामिति** । चकारादवान्तरदेशादिधर्माः । अनेन वर्णाश्रमदेशव्यतिरिक्ता धर्माः पाषण्डा इति निरूपितम् । तेषामपाषण्डानामिदं दध्यौ । सत्यसंकल्पाद्धितं स्फुरतीत्यत आह—**अमोघदृगिति** ॥ १८ ॥

यज्ञ एव सर्ववर्णाश्रमहितकर इत्याह—

चातुर्होत्रं कर्म शुद्धं प्रजानां वीक्ष्य वैदिकम् ।
व्यदधाद्यज्ञसन्तत्यै वेदमेकं चतुर्विधम् ॥ १९ ॥

**चातुर्होत्रमिति** । आर्षज्ञानत्वान्न युक्तिरपेक्ष्यते । युक्तिस्तु—आधिदैविकः कालो वा । "**स विष्ण्वाख्योऽधियज्ञोऽसावि**"ति वाक्यात् । भौतिककालकृतदोषदूरीकरणसमर्थः । अथवा । कालनियामको विष्णुः । तदुभयात्मकत्वाद्यज्ञस्य । स च श्रौतो विष्णुः । प्रमाणान्तराच्च वेदो बलिष्ठः । सर्ववेदैकवाक्यतां वक्तुं तस्य स्वरूपमाह—**चत्वारो होतारो यत्रेति** । ते गणनायका होतृशब्देनोच्यन्ते अध्वर्युप्रभृतयः । अथवा । दशहोता चतुर्होता पञ्चहोता षड्ढोता सप्तहोतेति चतुर्होतारः । ते अग्निहोत्रादीनां मूलमिति । चातुर्होत्रमग्निहोत्रादिपञ्चकं यत्कर्म[2] । कर्मेति नामधेयम् । तद्धि ससाधनं नित्यमिति कालास्पर्शाच्छुद्धम् । प्रकर्षेण जातानाम् । तत्र वेदः प्रमाणमित्याह—**वैदिकमिति** । तेषां यज्ञानां विस्तारार्थं वेदं चतुर्धा कृतवानित्याह—**व्यदधादिति** । अङ्कुशरतया[3] निरूपणाद्बुद्धिसौकर्येण यज्ञसन्ततिः । अभिन्नेष्वंशभेदव्यवस्थया वा ॥ १९ ॥

तान्भेदानाह—

ऋग्यजुःसामाथर्वाख्या वेदाश्चत्वार उद्धृताः ।
इतिहासपुराणं च पञ्चमो वेद उच्यते ॥ २० ॥

**ऋग्यजुःसामाथर्वाख्या इति** । ऋग्वेदेन होता करोति । यजुर्वेदेनाऽध्वर्युः । सामवेदेनोद्गाता । चतुर्थेन ब्रह्मा । तत्तत्कर्मप्रतिपादकानां मन्त्राणां ब्राह्मणानां च खण्डा उद्धृता वेदशब्दवाच्या जाताः । तेषामपेक्षितधर्मप्रतिपादकः पञ्चमो वेद इतिहासपुराणाख्यः २० ॥

---

१ हसितायुष इतीति नास्ति क. ख. ग. ङ. २ तत्कर्मेति ख. ३ अङ्कुशतयेति क. ग. घ. ङ.



भिन्नेष्वंशप्रतिष्ठापनार्थमाह—

तत्रर्ग्वेदधरः पैलः सामगो जैमिनिः कविः ।
वैशम्पायन एवैको निष्णातो यजुषामुत ॥ २१ ॥
अथर्वाङ्गिरसामासीत्सुमन्तुर्दारुणो मुनिः ।
इतिहासपुराणानां पिता मे रोमहर्षणः ॥ २२ ॥

**तत्रेति** । अत्र तु क्रमो मन्त्राणामिति न विरोधः । पैलादयः ऋषयः । **सुमन्तुर्दारुण इति** । आभिचारिकबाहुल्यादिति केचित् । वस्तुतस्तु स्वाभाविकदुष्टत्वादग्रे यज्ञेषु तस्याऽप्रवेश इति । तथापि पाठने हेतुः— **मुनिरिति** । इतिहासपुराणानां सर्वाधिकाराय रोमहर्षण उक्तः ॥ २१ ॥ २२ ॥

तैः पञ्चभिरपि स्वांशः खण्डशो बहुधा व्यस्त इत्याह—

त एनमृषयो वेदं स्वं स्वं व्यस्यन्ननेकधा ।
शिष्यैः प्रशिष्यैस्तच्छिष्यैर्वेदास्ते शाखिनोऽभवन् ॥ २३ ॥

**त एनमिति** । ऋषित्वात्खण्डशो व्यासे न दोषः । शाखानां शाखित्वम् ॥ २३ ॥

बहुधा व्यस्ताऽप्येका शाखा धारणेऽशक्या जातेत्याह—

त एव वेदा दुर्मेधैर्धार्यन्ते पुरुषैर्यथा ।
एवं चकार भगवान् व्यासः कृपणवत्सलः ॥ २४ ॥

**त एवेति** । दुर्मेधैर्बुद्धिरहितैरपि यथा यथावदर्थज्ञानाभावेऽपि लक्षणैः समानादिभिर्बहुकालाभ्यासेन कथञ्चिद्धार्यन्त इत्यर्थः । अवान्तरमुपसंहरति —**एवमिति** । मूर्खसंधारणपर्यन्तमेवं कृतवान् । तत्र हेतुः—**भगवानिति** । भगवतस्तथैवेच्छा यन्मूर्खपर्यवसानं भविष्यतीति । तर्हि न कर्तव्यं स्यात् । अव्रतानर्थज्ञधारणे वेदानां निर्वीर्यत्वप्रसङ्ग इत्यत आह—**व्यास इति** । व्यासत्वात्कृतवानित्यर्थः । तथाऽपि महतोऽधिकारिणोऽपि नाऽन्यथा करणमुचितमित्यत आह—**कृपणवत्सल इति**[1] । अपहतपाप्मत्वात्स्वाध्यायस्य तावन्मात्रेणाऽपि कृतार्थता भविष्यतीति प्रजासु दयया कृतवानित्यर्थः ॥ २४ ॥

अन्येषामुपायमाह—

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरः ।
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ।
इति भारतमाख्यानं कृपया मुनिना कृतम् ॥ २५ ॥

**स्त्रीशूद्रद्विजबन्धूनामिति** । यज्ञद्वारा हि वेदे स्त्रीणामुपयोगः । अवीरवतीनां तु तदभावात्त्रैवर्णिकस्त्रीणामपि वेदश्रवणनिषेधः । शूद्राः स्वतन्त्रा न तु सेवकाः । त्रैवर्णिकयाज्ञिकसेवकानां तदवमक्षणेन वेदार्थोपयोगिनामापाततो वेदश्रवणस्याऽऽवश्यकत्वात् । द्विजबन्धवः कुण्डगोलकाः

---

१ इतीति नास्ति क. ख. ग.

संस्काररहिताश्च । तेषामपि श्रुतिश्रवणे नाऽधिकारः । गोचरशब्दस्तु नियतपुंलिङ्गः । केचन **गोचरेति** च्छान्दसत्वात्पठन्ति । कर्मश्रेयसि कर्मसाध्ये श्रेयसि पुत्रस्वर्गादौ । मूढानां साधनज्ञानरहितानाम् । एवं **मनसि** विचारितेन प्रकारेण । इह अस्मिन्नेवाऽर्थे । यद्यपि अलौकिकप्रकारेण वेदसाध्यं फलमप्यलौकिकं तथापि नाऽन्येन तत्सिद्धिः । अथाऽप्यर्थलौकिकन्यायेन भट्टेष्विव पुराणेऽप्यलौकिकन्यायेन वा भारतादिना कार्यं सेत्स्यतीति भावः । एवमभिप्रेत्य यत्कृतवांस्तदाह—**इति भारतमिति** । भरतवंशोत्पन्नानां सम्बन्धि भारतम् । **आख्यानमिति** वचनान्न केवलं ग्रन्थनाम । किं त्वन्यार्थम् । तेन भारतश्रवणान्मायामोहाभावाद्धर्मादीनां तत्त्वावगतिः सुगमेति मननादवगत्य परदुःखप्रहाणेच्छया कृतमित्यर्थः ॥ २५ ॥

**एवं प्रवृत्तस्य सदा भूतानां श्रेयसि द्विजाः ।**
**सर्वात्मकेनाऽपि यदा नाऽतुष्यद्धृदयं ततः ॥ २६ ॥**
**नातिप्रसीदद्धृदयः सरस्वत्यास्तटे शुचौ ।**
**वितर्कयन् विविक्तस्थ इदं प्रोवाच धर्मवित् ॥ २७ ॥**

**एवं व्यासस्य** परोपकारलक्षणो धर्मो महान्वेदव्यासे सिद्धः । धर्मस्य चाऽन्तःकरणपरितोषः फलम् । तदभावे धर्मः श्रम इति पूर्वमुक्तम् । अत्र दुःखहेतुरिति वक्तुं पूर्वोक्तस्मरणार्थं **द्विजा इति** सम्बोधनम् । अधीतावधारणं हि द्विजधर्मः । किञ्च । केवलधर्मस्य व्यभिचारेऽपि ज्ञानमहिमस्य न तथात्वम् । इह तु तादृशोऽपि नाऽन्तःकरणसुखजनको जात इत्याह—**सर्वात्मकेनाऽपीति** । सर्वत्र आत्मा येन तत्सर्वात्मकं ज्ञानम् । अथवा । दयावदन्ये प्रकाराः सर्वे कृताः । सर्वप्रकारेणाऽपि धर्मेणेत्यर्थः[1] । अधिकारित्वात्फलाभावो जात इत्याह—**ततो नातिप्रसीदद्धृदय इति** । धर्मात्मस्याऽपि फलाभावे कथमन्यस्य भविष्यतीति सर्वनाशादप्रसादः । भगवदिच्छा काचिदन्यथा वर्तत इति ज्ञानवत्तात्वेन ज्ञात्वा किञ्चित्प्रसीदद्धृदयो जातो न त्वत्यन्तं प्रसीदद्धृदय इति । पूर्ववज्ज्ञानोदयो भविष्यतीति सरस्वत्यास्तट इत्युक्तम् । **शुचाविति** पापसम्बन्धाभाव उक्तः । एवं शुद्धदेशे स्वार्थचिन्तायां[2] तर्केण कश्चिद्विचार उत्पन्न इत्याह—**वितर्कयन्निति** । विविक्तस्थ एकान्तस्थः । महाधिकारित्वात् । इदं वक्ष्यमाणम् । **धर्मवित्** । धर्मस्याऽव्यभिचारि साधनत्वं जानातीत्यर्थः ॥ २६ ॥ २७ ॥

तत्र प्रथमं धर्ममाह धृतव्रतेनेति द्वाभ्याम्—

**धृतव्रतेन हि मया छन्दांसि गुरवोऽग्नयः ।**
**मानिता निर्व्यलीकेन गृहीतं चाऽनुशासनम् ॥ २८ ॥**

ब्रह्मचर्यव्रतानि वेदव्रतानि च धृतानि येन । छन्दांसि वेदाः । तेषां सन्माननं तदुक्तार्थस्य ज्ञात्वाऽनुष्ठानम् । गुरवोऽपि प्रसादिताः । अग्नयः सुहुताः । एतदेव सन्माननम् । व्यलीकं कपटम् । ईश्वरवल्लोकप्रवर्तनार्थं पाषण्डिवद्वञ्चनार्थं वा । अनुशासनमध्यापनम् ॥ २८ ॥

---

१ धर्मेणार्थ इति ख. २ स्वार्थचिन्तायामिति ख.



भारतकरणं च धर्मार्थमेवेत्याह—

**भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः ।**
**दृश्यते यत्र धर्मादिः स्त्रीशूद्रादिभिरप्युत ॥ २९ ॥**

**भारतव्यपदेशेनेति** । वस्तुतः कल्पसूत्रवद्वेदार्थप्रतिपादक एव । इतिहासवाचकशब्दकरणं तु व्याजमात्रम् । तदाह । भारतेति व्यपदेशमात्रम् । अन्यथा शूद्रादीनामधिकारो न स्यादिति हिशब्दार्थः । आम्नाये दृष्टान्तार्थमुक्तो धर्मो लौकिकोऽत्र प्रयुक्तः । न तु यज्ञादिः । "धन्वन्निव प्रपा असी" त्यादौ यथा । अत एव वेदे प्रतिपादितो धर्मो न शूद्रादिभिर्ज्ञातुं शक्यः । अत्र तु शक्य इत्याह—**दृश्यत इति** । उपदेशव्यतिरेकेणाऽपि ज्ञायत इत्यर्थः ॥ २९ ॥

एवं धर्मान्निरूप्य तेषां फलव्यभिचारमाह—

**अथाऽपि बत मे दैह्यो ह्यात्मा चैवाऽऽत्मना विभुः ।**
**असम्पन्न इवाऽऽभाति ब्रह्मवर्चस्व्यसत्तमः ॥ ३० ॥**

**अथाऽपीति** । धर्मकरणे प्रयासस्मरणात्—**यनेति** । आत्मनामुपाधिभेदाद्भेदं मन्यते । ब्राह्मणदेह एव आत्मनो ब्राह्मणोऽहमिति बुद्धिः । न देहान्तरे । मानसश्च योगी भवति । अन्नमयत्वात् । नैयायिकवद्वा मानसो भेदः । अध्यासेन वा भेदः । अग्निवत्सङ्क्रमणेन वा । तदाह । **दैह्यो ह्यात्मा** । तेनैव देहाभिमानिना न सन्तुष्यति । चकारान्मानसश्च । यथा देहाभिमानी दैहिकान्विषयान्प्राप्य तुष्यति तथाऽन्तःकरणाभिमानी तद्विषयान् । तत्र विषयाभावं निवारयति—**विभुरिति** । सर्वसमर्थोऽयमात्मा । **असम्पन्न इव** । प्राप्याऽपि सर्वविषयानसम्पन्नः । **इवेति** कदाचित्कदाचित्तथा स्फुरणात् । स्वस्मिन्विरुद्धधर्मावभासमाह—**ब्रह्मवर्चस्व्यसत्तम इति** । वस्तुतो ब्रह्मवर्चस्वी । प्रतीतिरसत्तम इति । पाठान्तरे तु ब्रह्मवर्चस्येन सत्तमः । ब्राह्मणानां हि ब्रह्मवर्चसमेव फलम् । तत्सम्पत्तावप्यसम्पन्न एवेति वा विरोधः ॥ ३० ॥

कार्ये सति कारणस्याऽऽवश्यकत्वात्कारणजिज्ञासायां योगजधर्मेण स्फुरितं कारणमाह—

**किं वा भागवता धर्मा न प्रायेण निरूपिताः ।**
**प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः ॥ ३१ ॥**

**किं वेति** । **भागवताः** प्रमाणतः साधनतः फलतश्च भगवत्सम्बन्धिनः । ते अनुष्ठिता अपि न निरूपिताः । अधिकारो हि निरूपणे । सर्वे धर्मा निरूपिताः सर्वेषां न परमहंसानाम् । यद्यपि तुर्याश्रमधर्मा निरूपिता अवधूतधर्माश्च । तथाऽपि ते न तेषां प्रियाः । क्लेशभूयस्त्वाल्पसारत्वात् । नन्वानुशासनिके तेऽपि निरूपिताः ? तत्र आह—**प्रायेणेति** । भागवता धर्मास्तु स्वतन्त्राः । ते ह्यन्यशेषेण निरूपिता न निरूपिता एव । आनुशासनिके हि कालादिशेषत्वेन निरूपिताः । परमस्य हंसाः परमहंसाः । परमाश्च ते हंसाश्चेत्यत्राऽपि परमत्वं भगवदीयत्वेनैव । परमहंसत्वसाधका एवाऽन्ये धर्माः । सिद्धे पुनः परमहंसत्वे भगवद्धर्मा एव प्रियाः । परमात्मत्वाद्भगवतः । गङ्गादर्श-

---

१ प्रसादितधर्म इति क. ग. प्रपादितधर्मे इति ग. २ मनस इति ख. ग. ३ निर्द्धारयतीति क. ग. ङ. ४ तत्रेति ख.

नानन्तरं यथा गङ्गादेवतादिदृक्षा तथाऽऽत्मज्ञानानन्तरं परमात्मदिदृक्षा। सा धर्मैरेव सम्पद्यते। ननु तथापि कोऽयमत्याग्रहस्तत्राऽऽह—त एव ह्यच्युतप्रिया इति। त एव धर्मा एव। ह्रीत्यात्मपर्यवसानात्। यदि ते परमहंसास्तदा पारम्पर्याद्गौणता। भगवतो भगवदीयानां च प्रिया इत्यर्थः ॥ ३१ ॥

तस्यैवं खिलमात्मानं मन्यमानस्य खिद्यतः।
कृष्णस्य नारदोऽभ्यागादाश्रमं प्रागुदाहृतम् ॥ ३२ ॥

पाषण्डनिवृत्तये आश्रमपदप्रयोगः। मुख्ये सम्प्रत्यय इति च। एतादृशे विषये नारदस्याऽधिकारात् प्रथममागत इत्याह—तस्येति। खिलं न्यूनम्। स्वत एव भगवद्धर्मनिरूपणे तु पूर्वोक्तभारतादेरस्य च विरोधाद्विरुद्धवक्तृत्वेनाऽप्रामाण्यं स्यात्। अतः खिद्यतः। नारदवचनात्तु तथा कथने न विरोधः। कृष्णस्येति वाच्यनाम्नोत्तमवक्तृत्वं बोधयति। अथवा। कृष्णस्य नारद इति। प्रागुदाहृतं, सरस्वतीतटे ॥ ३२ ॥

साकाङ्क्षस्य कृत्यमाह—

तमभिज्ञाय सहसा प्रत्युत्थायाऽऽगतं मुनिः।
पूजयामास विधिवन्नारदं सुरपूजितम् ॥ ३३ ॥

तमभिज्ञायेति। नारदेति (?) स्वे इत्यत्र व्यासकार्य्यसाधक इति वा। स्वकार्यसाधक इति वा। सहसेति। अनभ्युत्थानकालेऽपि। मुनिः अकालाभ्युत्थानयोर्गुणदोषद्रष्टा। विधिवत्। गुरुजनपूजायां यो विधिः। अथवा। विधिमिव नारदस्य ब्रह्मपूजेव। शुद्धसात्त्विकानामपि किञ्चिज्ज्ञेयमस्ति। अत एव देवैर्नारदपूजनम्। अत एव स्वस्याऽपि। इति नोऽत्राऽलौकिकं किञ्चित् ॥ ३३ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां प्रथमस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥

---

१ पावनैरेवेति क. २ सम्पद्यत इतीति क. ग. घ. ङ. ३ कथमागत इति क. ग. घ. ४ खिद्यतेति तृतीयान्तं घ. ५ स्व इत्यत्रेति नास्ति ग. घ. ङ. ६ व्यासेत्यादि नास्ति ग. घ. ङ. ७ स्वकार्येत्यादि नास्ति ख. ८ गुणदोषदृक् द्रष्टा इति ख. ९ न तत्राऽलौकिकमिति ख.



# पञ्चमोऽध्यायः।

चतुर्थे सर्वधर्माणां सन्देहो विनिरूपितः।
निरूप्यते भक्तिमार्गे पञ्चमे तस्य निर्णयः ॥ १ ॥
उद्दङ्कनं मध्यमत्वाद्दृष्टान्तस्य प्रदर्शनम्।
आदावन्ते निर्णयार्थं हेतुत्वादुत्तरस्य हि ॥ २ ॥

पूर्वाध्यायान्ते नारदः पूजित इत्युक्तम्। तत्र प्रतिपूजनादिकमकृत्वा भिन्नप्रक्रमेण पृच्छति—

सूत उवाच—

अथ तं सुखमासीन उपासीनं बृहच्छ्रवाः।
देवर्षिः प्राह विप्रर्षिं वीणापाणिः स्मयन्निव ॥ १ ॥

अथेति। तं पूर्वोक्तधर्मवन्तम्। उत्तरपरिज्ञानान्निर्भयः सुखमासीनः। उत्तरप्रश्नार्थमुपासीनम्। महतो न्यूनताप्रश्नः साधारणस्य न घटत इत्याह। बृहच्छ्रवाः। बृहत्कीर्तित्वादुक्तविश्वासार्थं वा। देवर्षिः देवानामपि देवप्रतिपादकमन्त्रद्रष्टा। स ह्यलौकिको भवति। विप्रर्षिं पश्चिमबुद्धीनामुपायवक्तारं, सर्वपूरकाणां पूरकं वा। भागवतधर्माणामुत्तमत्वं ख्यापयन्निव वीणापाणिः। स्वावसरं प्राप्य ऊर्जितो विकसन्मुखो लोकैर्हसन्निव दृष्टः ॥ १ ॥

महानपि मुह्यतीति वृद्धिमिच्छतो मूलमपि नष्टमित्यभिप्रायेण स्वाभाविकं कुशलं पृच्छति—

नारद उवाच—

पाराशर्य महाभाग भवतः कच्चिदात्मना।
परितुष्यति शारीर आत्मा मानस एव वा ॥ २ ॥

पाराशर्य इति। पराशरस्त्वतिवैष्णवः। तत्पुत्रः कथं भगवन्मार्गे सन्दिग्ध इति पितृनाम्ना सम्बोधनेन तदुद्बोधितम्। समर्थस्याऽधिकारे भगवन्मार्गबोधनसम्भवात्। कृतार्थत्वमाह—हे महाभागेति। कच्चिदिति कोमलप्रश्ने। शारीर आत्मा। आत्मना भवता। स्वेन वा भवत इति तु समुदायः। विषयाऽप्राप्तौ तु स्वेनैवाऽपरितोषः। भगवता तु भवता। अनेन लौकिकमलौकिकं वा निमित्तं पृष्टं भवति। एवं मानसः। एवशब्देन पूर्वरूपे गौणता सूचिता ॥ २ ॥

उत्तरार्थं तत्कृतं पूर्वपक्षेणाऽभिनन्दति—

जिज्ञासितं सुसम्पन्नमपि ते महदद्भुतम्।
कृतवान् भारतं यस्त्वं सर्वार्थपरिबृंहितम् ॥ ३ ॥

जिज्ञासितमिति। विचारितम्। सर्वलोकहिताचरणं सुष्ठु सम्पन्नम्। एककृत्यैव आकल्पकर-

---

१ गुरुतरस्येति म. घ. ङ. २ प्रतिपूजनादि कर्म कृत्वेति ख. ङ. ३ देवऋषिरिति क. ख. ङ.

णसिद्धेः । अपीत्याश्चर्ये । भगवतोऽपि प्रेक्षकृत्यपेक्षा. तत्र तु तदपि नास्तीत्याह—**इति (?) ते महदद्भुतमिति** । इतीति समाप्तौ (?) । अद्भुतस्यैव महत्त्वम् । सम्पत्तिमेवाऽऽह—**कृतवानिति** । एकं हि शास्त्रमेकपुरुषार्थप्रतिपादकम् । भारतं तु धर्मादिचतुष्टयप्रतिपादकमित्याह । सर्वैर्धर्मादिपुरुषार्थैः परितः साधनसहितैः वृंहितं सम्बद्धमित्यर्थः ॥ ३ ॥

स्वाभाविकधर्मेऽपि विशेषमाह—

**जिज्ञासितमधीतं च ब्रह्म यत्तत्सनातनम् ।**
**तथापि शोचस्यात्मानमकृतार्थ इव प्रभो ॥ ४ ॥**

**जिज्ञासितमिति** । ब्रह्म परब्रह्म वेदश्च । तत्रैकं जिज्ञासितमपरमधीतम् । चकारादध्यापितम् । धर्मश्च । जैमिनेरपि तदुक्तार्थोपनिबन्धनात् । अथवा । प्रथमा जिज्ञासा ब्रह्मविषयिणी । द्वितीया वेदस्य । **यत्तदिति** । अतिप्रसिद्धम् । सनातनमविकृतम् । ब्रह्मशब्देन वृहत्त्वमेवोक्तम् । फलविपर्ययेण दूषयति—**तथापीति** । "**तरति शोकमात्मविदि**"ति श्रुतेः—"**अनीशया शोचति मुह्यमान**" इति च ज्ञानधर्मसम्पत्तौ शोकाभावः श्रुतिसिद्धः । स चाऽनुभवेन बाध्यते । न चाऽयं शोको लौकिक ईत्यत आह—**अकृतार्थ इवेति** । यथा जिज्ञासाद्वयाभावे असिद्धपुरुषार्थस्य शोकस्तथा सम्पन्नदशायामपीति । अत्रोत्तरकथनसामर्थ्यं तवाऽस्तीत्यत आह—**प्रभो इति** ॥ ४ ॥

प्रमाणबलविचारकाणां नाऽत्रोत्तरस्फूर्तिरित्याह—

व्यास उवाच—

**अस्त्येव मे सर्वमिदं त्वयोक्तं तथापि नाऽऽत्मा परितुष्यते मे ।**
**तन्मूलमव्यक्तमगाधबोधं पृच्छामहे त्वाऽऽत्मभवात्मभूतम् ॥ ५ ॥**

**अस्त्येवेति** । साधनस्य फलव्यभिचारे यन्मूलं तदव्यक्तं न प्रकटम् । लोकवेदयोरसिद्धत्वात् । अतः अगाधबोधं त्वां पृच्छामहे । अगाधं प्रमाणागम्यम् । तत्राऽपि प्रमेयबलाद्बोधः । तदाह—**आत्मभवात्मभूतमिति** । आत्मा नारायणः । तद्भवो ब्रह्मा । तस्याऽऽत्मनो देहाज्जातम् । **आत्मभवेति** सम्बोधनं वा । हे भगवदवतार । आत्मवित् । "**ब्रह्म वेद ब्रह्मैव भवतीति**" श्रुतेः । आत्मैव जातः । असाधनकफलसम्बन्धो वा सूचितः । भगवत्सेवकं वा । "**भूतानि विष्णोः सुरपूजितानी**"ति वाक्यात् ॥ ५ ॥

तस्य प्रमेयबलमाह—

**स वै भवान् वेद समस्तगुह्यमुपासितो यत्पुरुषः पुराणः ।**
**परावरेशो मनसैव विश्वं सृजत्यवत्यत्ति गुणैरसङ्गः ॥ ६ ॥**

**स वै भवानिति** । वेदानां समस्तं गुह्यं भवानिति वा । उभयत्राऽपि हेतुः—**उपासित इति** । पुराणत्वमुत्तमत्वाय । येन पुरुषोत्तमः सेवित इति कालादिनिरपेक्षः । सेव्यसामर्थ्येन सेवकसामर्थ्यं वक्तुं भगवद्गुणानाह—**परेति** । सर्वेश्वरत्वं सर्वकर्तृत्वं निर्दोषत्वं च कर्तृत्वं च चिन्तनमात्रेणेति गुणाः ॥ ६ ॥

१ प्रत्येककृत्यपेक्षेति क. ग. ध. ङ. २ धर्मे विशेषमिति ग. धर्मविशेषमिति घ. ङ. ३ त्याहेति घ. ङ. ४ सम्पन्नाया-मपीति क. ख. ग. ङ. ५ ब्रह्मविदिति घ. ६ असाधनकसम्बन्ध इति घ. ङ.



नारदस्य स्वतोऽपि सामर्थ्ये हेतुमाह—

**त्वं पर्यटन्नर्क इव त्रिलोकीमन्तश्चरो वायुरिवाऽऽत्मसाक्षी ।**
**परावरे ब्रह्मणि धर्मतो व्रतैः स्नातस्य मे न्यूनमलं विचक्ष्व ॥ ७ ॥**

**त्वं पर्यटन्निति** । बहिरन्तःसर्वपरिज्ञानार्थं दृष्टान्तद्वयम् । अपेक्षितरूपं च । क्रियया सर्वलोकगमनम् । योगेनाऽन्तःप्रवेशः । ज्ञानेन सर्वसाक्षित्वम् । एवं सार्द्धश्लोकेन भक्त्यादिभिः सर्वसामर्थ्यं प्रतिपाद्य स्वसन्देहं पृच्छति—**परावरे ब्रह्मणीति** । परं वेदान्तप्रतिपाद्यम् । अवरं वेदः । तत्र क्रमेणैव धर्मतो यज्ञादिकरणाद्ब्रह्मणि निष्णातः । वेदव्रतादिना वेदे निष्णातः । तदुभयनिष्णातस्य यन्न्यूनं तद्विचारय । आपाततो विचारितं न भविष्यतीत्याह—**अलमिति** ॥ ७ ॥

नारदस्तु विचारितमेव वर्त्तत इति सिद्धवत्कारेणाऽऽह—

नारद उवाच—

**भवताऽनुदितप्रायं यशो भगवतोऽमलम् ।**
**येनैवाऽसौ न तुष्येत मन्ये तद्दर्शनं खिलम् ॥ ८ ॥**

**भवतेति** । अग्निहोत्रसुवर्णस्त्रीज्ञानसद्भावेऽपि यथा दीपसूर्यादिव्यतिरेकेण न बहिःप्रकाशस्तथा भगवद्यशोव्यतिरेकेण नाऽन्तःप्रकाशः । भगवदीयास्तु धर्मा न ज्ञानादिभिः प्रकाश्याः । ते च महान्तो बहवश्च यद्विषयं व्याप्य तिष्ठन्ति स च विषयो न ज्ञानादिभिः प्रकाश्यते । यद्यपि भारते भगवद्यशः प्रतिपादितं गीतायां च विशेषतस्तथापि इतरशेषत्वेन प्रतिपादनात् । व्यामोहकलीलात्वेऽपि हृदये तथैवाऽऽवेशात् । पूर्वकाण्डशेषत्वेनोत्तरकाण्डनिरूपणेन वेदान्तैः स्वातन्त्र्येण ब्रह्मप्रतिपादनम् । तथा भगवद्यशोऽपि गीतादौ । तदेवाऽऽह । अमलं यशः । तेनैवाऽन्तःकरणदोषाभावः । तद्व्यतिरेकेणाऽपि सर्वं भविष्यतीति ज्ञाने खिलता ॥ ८ ॥

"**सर्वेषामेव भूतानां पिता माता स माधवः । तमेव शरणं यात शरण्यं कौरवर्षभाः । अच्युताऽच्युत मा मैवं व्याहराऽमित्रकर्षण । पाण्डवानां भवान्नाथो भवन्तं चाऽऽश्रिता वयम् । करिष्ये वचनं तवे**"त्यादिश्लोकसहस्रैः स्वातन्त्र्येण भगवद्यशसः प्रतिपादनात्कथमुच्यतेऽनुदितप्रायमिति ? तत्राऽऽह—

**यथा धर्मादयश्चाऽर्था मुनिवर्याऽनुकीर्तिताः ।**
**न तथा वासुदेवस्य महिमा ह्यनुवर्णितः ॥ ९ ॥**

**यथेति** । सत्यं प्रतिपादितम् । तथापि प्रकरणाभावात्—"**प्रकरणेन विधयो बध्यन्त**" इति न्यायात्तत्रत्यानां तच्छेषत्वम् । आनुशासनिकेऽपि भगवद्धर्माणां धर्मत्वेन प्रतिपादनं न यशस्त्वेन ।

१ सिद्धवत्कारणेनेति ग. २ तदेव हीति घ. ३ तेनाऽन्तःकरणेति ख.

तदाह । धर्मार्थकाममोक्षा यथा प्रकरणभेदेन प्रतिपादिता न तथा भगवन्महिमा प्रकरणभेदेन प्रतिपादित इत्यर्थः ॥ ९ ॥

ननु प्रतिपादकानां (१) कथं न फलसाधकत्वम्? तत्राऽऽह—

**न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित् ।**
**तद्वायसं तीर्थमुशन्ति मानसा न यत्र हंसा निरमन्त्युशिक्क्षयाः ॥१०॥**

**न यद्वचश्चित्रपदमिति** । कीदृशमत्र फलं मृग्यते । कृतार्थता अन्तःकरणप्रसादः परमानन्दश्चेति चेत्? न तस्येदं तीर्थं, किन्तु काव्यवच्छृङ्गारादिरसाविष्टानां कामिनामाश्चर्यरसजनकम् । काकानामिवोच्छिष्टगर्तः । प्रमाणबलं दुर्बलमिति वक्तुमाह—**चित्रपदमिति** । अर्थविशेषाभावे पदचित्रता हीनत्वबोधिका । "**शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतमि**" ति वाक्यात् । विषपत्रैर्भोजनवच्च तत्रत्यं प्रमेयं न हरिरूपं किन्तूत्कृष्टत्वेन प्रतिपादितम् । तदाह—**हरेर्यश इति** । **जगत्पवित्रमिति** । साधारणानां हि भारतं पावित्र्यजनकम् । न पतितानां न वा शुकादितुल्यानाम् । तेन न सर्वाकाङ्क्षापूरकम् । इदं तु जगत एव पवित्रम् । **वच** इति शब्दमात्रम् । तेन सामरागादीनामपि निवृत्तिः । **कर्हिचिदिति** मुख्यगौणलक्षणाप्रकरणादिभेदेषु एकस्मिन्नप्यंशे भगवत्प्रतिपादने न दोष इति सूचितम् । तत् काव्यवत्पदार्थप्रतिपादकम् । **वायसं तीर्थम्** । काकतीर्थमिति यावत् । वायसा वृद्धाः काकाः । लोके चतुराश्च[1] । तथा कामिनो राजपुत्रादयो भारते श्रद्धालवो न तु परमहंसाः । तीर्थं प्रवेशनमार्गः । दोषनिवारकं वा । तत्रोच्छिष्टगर्तादिः काकानां क्षुन्निवारकः । न त्वन्येषाम् । काकानां च न ततोऽधिकदोषनिवृत्तीच्छा । न वा तादृशगर्तनिर्मातुस्ततः क्षुन्निवृत्तिः । हंसत्वाच्च तस्य । उशन्ति वदन्ति । **मानसा इति** । मनस्येव तिष्ठन्ति न देहादौ । देहहितकरं च भारतम् । अहं स इति ब्रह्मात्मबुद्धिः । तद्युक्ताः परोक्षेण हंसा इत्युच्यन्ते । क्षीरनीरविवेकिनश्च सहजसिद्धमपि संश्लेषं त्याजयन्ति, न तु संश्लेषजनके रमन्ते । "**पुंसां किलैकान्तधियामि**" ति वाक्यात् । भगवच्चरित्रं तादृशम् । उशिक् कमनीयं क्षयो निवासस्थानं येषाम् । यथा यथा कमनीयता स्वरूपतो ज्ञानतश्च, तथा तथा हंसनिवासत्वम् । ततश्च युक्तितो दृष्टान्ताच्च न भारतादेरन्तःकरणशोधकत्वम् ॥ १० ॥

किञ्च । यद्यप्यस्मदादीनां न तादृशवक्तृत्वं, न वा पदानां चित्रता, प्रत्युताऽऽलापार्थं पदानामन्यथा करणं, तथापि भगवद्विषयकत्वात्पूर्वोक्तविपरीतमस्मदादीनां वचनमित्याह—

**तद्वाग्विसर्गो जनताऽघविप्लवो**
**यस्मिन्प्रतिश्लोकमबद्धवत्यपि ।**
**नामान्यनन्तस्य यशोऽङ्कितानि य-**
**च्छृण्वन्ति गायन्ति गृणन्ति साधवः ॥ ११ ॥**

**तद्वागिति** । स चाऽसौ वाग्विसर्गश्च । स इति प्रसिद्ध्या[2] भक्तकृतः । भाषागीतगीतगोविन्दादिरपि । जनतायाः प्राणिमात्रस्य अघं विशेषेण प्लावयति । सर्वथाऽत्र शब्दबलमप्रयोजकमित्याह—**यस्मिन्निति** । यस्मिन् वाग्विसर्गे । भाषाग्रन्थश्लोकेषु व्याकरणदुष्टस्य प्रयोगः अबद्धम्[3] । नानार्थं[4] वा अबद्धप्रयोगः[5] । अभ्युपगमेन वा मूर्खहृदये । तत्र हेतुः—**नामान्यनन्तस्येति** । एकस्मिन्नप्यर्थे

1 लोकचतुराश्चेति ग. 2 प्रसिद्ध्या भक्त्या इति ख. 3 अबद्ध इति ग. 4 नानार्थमिति घ. 5 अर्द्धप्रयोग इति क. ख. ङ.



बहूनि नामानि प्रयुज्यन्ते । यथा त्रिभुवनाऽऽत्मभुवनेत्यादि । सर्वतोऽनन्तस्य अनन्तान्येव नामानि भवन्ति । न केवलं संज्ञाप्रतिपादकानि किन्तु यशसा अङ्कितानि । श्रवणे हेतुः । यत् यानि, यस्माद्वा । वक्तरि सति शृण्वन्ति । श्रोतरि सति गायन्ति । अन्यथा गृणन्ति । एतच्च पूर्वोक्तहंसादिसतां कृत्यम् । भगवत्सम्बन्धिनां धर्माणां भगवता सह अभेदाद्यत्र क्वचिदवतीर्णो भगवान् यथा सेव्यते, तथा यत्र क्वचिदपि स्थितानि नामानि श्रूयन्त इत्यर्थबलं निरूपितम् ॥ ११ ॥

एवं शब्देषु भगवच्छब्दा एवोत्तमा नाऽन्य इति निरूपितम् । इदानीमर्थे विचारः[1] क्रियते । तत्र ज्ञानं स्वरूपतः फलतश्च महत् । तथा[2] यज्ञादिस्तथैवाऽऽचारस्तथाऽन्ये धर्मादयः । एते भगवता भगवदीयैश्च सह स्वरूपतः फलतः समा आहोस्विन्नेति भवति विचारणा । तत्र प्रथमं ज्ञानं निन्दति—

**नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् ।**
**कुतः पुनः शश्वदभद्रमीश्वरे न चाऽर्पितं कर्म यदप्यकारणम् ॥ १२ ॥**

**नैष्कर्म्यमिति** । भक्तिसहितज्ञानादौ फलसिद्धेर्भवति सन्देहः—किं भक्तेः फलं ज्ञानस्य वेति? तदर्थं केवले निर्णय उच्यते । अच्युतभक्तिरहितं ज्ञानं साङ्ख्यं वैदिकं वा भक्त्याऽनलङ्कृतत्वान्न शोभते । ज्ञानस्य शोभया तद्वतः शोभा भवति । अज्ञाननिवृत्तिश्च दीपवत् । सुवर्णपुत्तलिकाऽप्यनलङ्कृता न शोभते । यद्यपि निरीश्वरसाङ्ख्यमते ईश्वराभावादेव भक्तिर्नास्ति । निरूप्येऽर्थे श्रद्धामात्रम् । सेश्वरेऽपि सगुण एवेश्वरः । वैदिकेऽपि यजमानादिदेवताऽऽवेशाभावे लौकिकत्वात्सर्वापेक्षायाश्चोक्तत्वादन्तःकरणशुद्ध्यर्थं भक्तिरपेक्ष्यते । सा च भगवच्छास्त्रानुसारिण्येव । निर्गतमञ्जनं यस्मादिति । अविद्यानिवर्तकं निरुपाधिकं वा । किं बहुना । सर्वेषु शास्त्रेषु यज्ज्ञानमुक्तं तस्य स्वरूपोपकारिणी फलोपकारिणी वा भक्तिरिति भक्त्यभावे स्वरूपं फलं वा न सिद्ध्येदित्यर्थः । कर्माऽपि भक्तिसापेक्षमित्याह—**कुतः पुनरिति** । तत्र कर्म द्विविधम् । कामनया क्रियमाणं ज्ञानाङ्गमीश्वराराधनलक्षणं वा । तत्राऽऽद्ये भक्त्यपेक्षा नियता । तदाह—**शश्वदभद्रमिति** । साधनकाले फलकाले च क्लेशरूपत्वाद्भक्त्यभावे न पुरुषार्थरूपं स्यात् । द्वितीये भगवति समर्पणव्यतिरेकेण ज्ञानाङ्गतैव नास्ति । समर्पणमेव भक्तिः । भक्तिसाध्यं वा । तदाह—**न चाऽर्पितं कर्मेति** । न च भगवति अर्पितं कर्म भवतीत्यर्थः । चकारादीश्वरार्थं वा क्रियमाणम् । यदपि अकारणं पञ्चरात्रोक्तम् । तस्य लौकिककर्मवत्संसारकारणत्वाभावात् । तस्मात्सर्वकर्मसु भक्तिः सहकारिणी ॥ १२ ॥

यतो भक्तिव्यतिरेकेण ज्ञानं कर्म वा न फलसाधकमत आवश्यकत्वाल्लाघवाच्च[4] मुख्यतया भक्तिरेवोपदेष्टव्या । सा च श्रवणरूपा । प्रथमं श्रवणसापेक्षा वा । अतः श्रोतव्यविषयत्वेन भगवच्चरित्रं भक्तिमार्गानुसारियोगजधर्मेण स्मृत्वा कथयेत्याह—

**अथो महाभाग भवानमोघदृक् शुचिश्रवाः सत्यरतो धृतव्रतः ।**
**उरुक्रमस्याऽखिलबन्धमुक्तये समाधिनाऽनुस्मर तद्विचेष्टितम् ॥ १३ ॥**

**अथो महाभागेति** । यद्यप्यस्माभिर्ज्ञायते[5] तथाप्यधिकाराभावाद्वक्तुं न शक्यते । तव त्वेतादृशेऽर्थेऽधिकार इति **महाभागेति** सम्बोधनम् । मनसा भावितोऽर्थः कदाचिदन्यथा भविष्यतीति

1 अर्थविचार इति ख. 2 यथेति ग. ङ. 3 कृतमिति ख. 4 लाघवत्वाच्चेति घ. 5 यदस्माभिरिति ख.

न शङ्का कर्तव्या । यतो—**अनानमोघदृक्** । अमोघा दृष्टिर्यस्येति । नापि त्वदुक्तमन्यैर्नाऽङ्गीकर्तव्य-मिति शङ्कनीयमित्यभिप्रायेणाऽऽह—**शुचिश्रवा इति** । शुचि पवित्रं श्रवः कीर्तिर्यस्येति । लोके ह्यादरणीयं रूपमेतदेव । किञ्च । तवाऽप्येतदेवाऽभीष्टमित्याह—**सत्यरत इति** । सत्ये रतः । भगवद्धर्मव्यतिरेकेणाऽन्येषामसत्यत्वात् । किञ्च । यथा व्रताचरणं धर्महेतुस्तथा भगवच्चरित्रश्रवणमपी-त्यभिप्रायेणाऽऽह—**धृतव्रत इति** । धृतानि व्रतानि स्वाध्यायादीनि येन । भगवद्धर्मस्फुरणे वा हेतुः । न च तादृशधर्मा भगवति न सन्तीति मन्तव्यम् । यतोऽयमुरुक्रमः । उरु अधिकः क्रमः पाद-विक्षेपो यस्य । वामनस्य क्षणादेकेन पदा सर्वलोकाक्रमणमित्यग्रे विस्तारयिष्यते । सर्वे हि जीवाः स्व-भावतो बद्धाः कालपाशेन । तेषां बन्धननिवृत्तिर्महानुपकारः । सा च कालनियामकभगवच्चरित्राऽऽवेशा-देव भवतीत्याह—**अखिलबन्धमुक्तय इति** । लोकवेदयोरप्रसिद्धत्वादुपायान्तरमाह—**समा-धिनेति** । भगवानेव स्वयं सर्वोद्धारकः स्फुरिष्यति । अनु पश्चात्त्वयाऽपि स्मर्तव्यम् । विशेषचेष्टितं भक्तिजनकं न तु व्यामोहकम् । तस्याऽपि व्यामोहकत्वे ज्ञाते विशेषचेष्टितत्वमेव ॥ १३ ॥

विपरीते बाधकमाह—

**ततोऽन्यथा किञ्चन यद्विवक्षतः पृथग्दृशस्तत्कृतरूपनामभिः ।**
**न कर्हिचित्क्वाऽपि च दुःस्थिता मतिर्लभेत वाताहतनौरिवाऽऽस्पदम् ॥१४॥**

**ततोऽन्यथेति** । अभिधेयाऽपर्यवसानं हि सर्ववस्तुषु । मरुमरीचिकावन्नियतत्वाऽभावात् । भग-वतो गुणानामनन्तत्वेऽपि नियतत्वम् । अतः कार्याऽसमाप्तिशङ्कया प्रथमत एवाऽन्यन्नाऽऽरम्भणीयम् । किञ्च । विचारदशायामपि दुःखात्मकत्वात्तद्विचारिका बुद्धिरपि दुःखिता भवति । तदाह—**अन्य-थेति** । ततो भगवच्चरित्रात् । यद्यपि सर्वमेव भगवच्चरित्रं तथापि भगवच्चरित्रत्वेनाऽनिरूपणात्तत्त्वेऽपि न तथात्वमित्याह—**अन्यथेति** । **किञ्चने**त्यव्ययसमुदायः । यत्किञ्चिदित्यर्थः । अनादरणीयमिति वाक्यसमाप्तिः । तदन्यद् दूषयति—**यद्विवक्षत इति** । वचनानन्तरं मध्ये वा दुःखं भविष्यतीति किं वक्तव्यं तद्वक्तुमिच्छत एव भवति । तत्र हेतुः । पृथग्दृशः । भगवत्त्वेन स्तोत्रे तत्पर्यवसानाभावा-द्भिन्नतया निरूपणमावश्यकम् । तथाच भगवद्धर्माऽस्फुरणादन्यत्रोत्कर्षाभावादविद्यमानविवक्षायां बुद्धिदुःस्था भवति । किञ्च । तत्कृतानि पृथग्दर्शनकृतानि पदार्थान्तरस्य रूपनामानि न भगवत्कृतानि । ततश्च सिद्धत्वाभावात्स्वयं कृत्वा स्वयं निरूपणे स्वयमेव पर्यवसानमिति कर्हिचिदपि कस्मिं-श्चित्काले कस्मिंश्चिद्देशे च बुद्धिरास्पदं न लभेत । सर्वस्याऽपि बुद्धिकृतत्वात् । अन्यदन्यस्याऽऽस्पदं न भवति । अब्रह्मत्वेन स्वाश्रयत्वाभावाच्च । दुःखेन स्थिता दुष्टतया वा स्थिता । सदोषो वायुवत्सर्वतारिकां बुद्धिं नौकामिव नाऽभीष्टदेशं प्रापयतीत्याह—**वाताहतेति** । आहता घूर्णिता ॥ १४ ॥

एवमपर्यवसानेन बुद्धिदुःखदातृत्वेन च अन्यन्न वक्तव्यमित्युक्तम् । इदानीं प्रतारकशास्त्रव-दन्यकथनं पापहेतुरित्याह—

**जुगुप्सितं धर्मकृतेऽनुशासतः स्वभावरक्तस्य महान् व्यतिक्रमः ।**
**यद्वाक्यतो धर्म इतीतरः स्थितो न मन्यते तस्य निवारणं जनः ॥१५॥**

१ विस्तारयिष्याम इति घ. २ यद्विवक्षित इतीति क. ग. ३ क्वापि कस्मिंश्चिदिति क. ख. ४ नेति नास्ति क. ख. ङ.



**जुगुप्सितमिति** । यथा अपेयपानादिकं धर्म इति बोधकस्य नरकपातस्तथा देहादिष्वात्मा-ध्यासं कृत्वा तन्निर्वाहार्थं यतनीयमिति वक्तुर्नरकपातः । ननु दुष्टत्वात्स्वत एव लोको न प्रवर्तेत । किं कथनेनाऽनिष्टं स्यादित्यत आह—**स्वभावरक्तस्येति** । **"अनुरक्तो गुणान्ब्रूते विरक्तो दूष-णान्यथे"**ति न्यायाद्रागे विद्यमाने न दोषस्फूर्तिः । तस्य च स्वाभाविकत्वे ज्ञाते कदाचिन्न प्रवर्ते-ताऽपि, धर्मत्वेऽपि ज्ञाते कदाचिदपि न निवर्तेतेति भगवदाज्ञोल्लङ्घनरूपो महान् व्यतिक्रमः । कूपेऽ-न्धपातनेन वा । नन्वन्यो निवारयतु । तथाच फलाभावान्नाऽतिक्रमो भविष्यतीत्यत आह—**यद्वा-क्यत इति** । इतरः स्वतो विचाराक्षमः पुरातनवक्तृविश्वासाद्धर्मोऽयमिति निश्चितबुद्धिरन्येन अस्मदादिना क्रियमाणं निषेधं न मन्यते । यतो जननधर्मा जनन एवाऽभिरतः । बहुधा श्रुत्वाऽपि निषेधमूर्ध्वरेतसां प्रशंसेति वेदानधिकृतविषय इति समप्रामाण्येऽपि विकल्प इति मन्यते । न तु निषि-द्धत्वेन । तथाचाऽऽपस्तम्बः—ऊर्ध्वरेतसां प्रशंसेति । तथा च भट्टाः—येऽन्धपङ्ग्वादयो नरा गार्ह-स्थ्यानर्हास्ते संन्यासादावधिकारिण इति । विकल्पो वा । उभयं ब्राह्मणमितिवत् ॥ १५ ॥

ननु तथापि मीमांसाद्वयेन मार्गद्वयस्य सिद्धत्वात्किमनेन तृतीयेनेत्याह—

**विचक्षणोऽस्याऽर्हति वेदितुं विभोरनन्तपारस्य निवृत्तितः सुखम् ।**
**प्रवर्त्तमानस्य गुणैरनात्मनस्ततो भवान्दर्शय चेष्टितं विभोः ॥ १६ ॥**

**विचक्षण इति** । आत्मसुखं हि निवृत्तिमार्गे प्रकटीभवति । ब्रह्मसुखं च परं शुकवत्सर्वपरित्या-गिनः । वैराग्यं च नेदानीन्तनानां सम्भवति । तदर्थं च नूतनप्रयत्ने **"तद्भ्रेनोरेवाऽस्तु किं तेने-"**ति न्यायेन स्वतन्त्र एवाऽयं मार्गोऽस्तीत्यभिप्रायेणाऽऽह । विचक्षणः कश्चिदेव अस्य भगवतः अनन्त-पारस्य देशकालापरिच्छिन्नस्य सर्वेहोपरतिनिनुः(?)सुखं वेदितुमर्हति । तावताऽपि न कार्यसिद्धिरित्याह—**विभोरिति** । अनात्मनो देहादेर्गुणैर्विषयैः प्रवर्तमानस्य न तत्सुखमिति पूर्वेण सम्बन्धः । नेत्यध्या-हारः । अथवा । तस्य निवृत्तितस्तत्सद्भावेन, न तु तेषामपि कृतार्थकरणे समर्थः । यद्वा । प्रवर्त-मानस्याऽर्थे तत्सम्बन्धी वा भवान् । तदर्थं यत्नकरणात् । तदुद्धारार्थं भगवद्गुणा वक्तव्या इत्यर्थः । निर्वाहकमाह—**विभोरिति** ॥ १६ ॥

एवं चतुर्भिः श्लोकैरुपक्रमोपसंहाराभ्यां चरित्रकथने विधिर्निरूपितः । तस्य मीमांसामाह द्वाभ्याम्—

**त्यक्त्वाऽस्वधर्मं चरणाम्बुजं हरेर्भजन्नपक्वोऽथ पतेत्ततो यदि ।**
**यत्र क्व वा भद्रमभूदमुष्य किं को वाऽर्थ आप्तो भजतां स्वधर्मतः ॥ १७ ॥**
**तस्यैव हेतोः प्रयतेत कोविदो न लभ्यते यद्भ्रमतामुपर्यधः ।**
**तल्लभ्यते दुःखवदन्यतः सुखं कालेन सर्वत्र गभीररंहसा ॥ १८ ॥**

**त्यक्त्वेति** । ननु भगवत्कथा केन श्रोतव्या? किं धर्मकर्तृभिर्लौकिकैरधर्मकर्तृभिर्वा? तत्राऽऽ-द्यस्याऽनवकाशः । द्वितीयस्य लौकिकव्यापारेणाऽऽविष्टस्य न प्रवृत्तिः । तृतीये दुराधि-

१ नेति नास्ति क. ख. ङ. २. फलभावादिति क. ख. ङ. ३ वचनादिति ग. ४ वा इति ख.

कारित्वादगन्तव्यता स्यात् । सर्वाधिकारित्वान्न निवृत्तिमार्गनिष्ठत्वम् । तथा सति वा अकर्तव्यमिति । तत्रोच्यते । धर्मकर्तृभिरेव श्रोतव्यं परं धर्मपरित्यागेन । "**जन्मान्तरसहस्रेष्वि**"ति भगवद्वाक्यात् । यथा निवृत्तिमार्गे धर्मत्यागस्तथाऽत्राऽपि—"**तावत्कर्माणि कुर्वीते**"ति भगवद्वाक्याद्बाधकानां चिरकालसाध्यानां वा परित्यागः । तथाच त्यक्त्वेति विधिः । "**व्यामादेशेषु धर्मत्यजनवचनत**"इत्यत्रोक्तार्था अनुसन्धेयाः । तत्र हेतुः—**अस्वधर्ममिति** । देहादिधर्मं तदधिकारेण वा प्रवृत्तम् । स्वस्य तु जीवस्य दासत्वाद्भगवत्सेवैव स्वधर्मः । **दाशाकितवा इत्यधीयत एके ब्रह्मदाशा ब्रह्मकितवा इति** । इदं विस्तृतमस्माभिः—"**अंशो नाना व्यपदेशादि**"त्यत्र । हरेर्भगवतः परब्रह्मणो भक्तिमार्गानुसारेण चरणसेवा जीवानां स्वाभाविको धर्मः । अंशत्वेऽपि अंशिनः सेवा मुख्या । येषामप्येतदंशत्वं तेषामपि देहधर्मापेक्षया अन्तरङ्गम् । अत्र मतान्तरमनूद्य दूषयति—**यद्यपक्व इति** । **अथ यदि पतेदिति** । जीवस्य दासत्वेन स्वधर्मत्यागे पतनशङ्कैव नाऽस्ति । भगवत्सायुज्यसाधनत्वाच्च । अयमेव च तस्य पाकः । फलपर्यवसानात् । यदा त्वौपाधिकं जीवत्वं तदा अस्वाभाविकाधिकारकृतत्वादपक्वता स्यात् । तथापि न पतनशङ्का । परमोपाधित्वात् । अथ भिन्नप्रक्रमेण विचार्यते । ब्रह्मभावं प्राप्तस्य नाऽयं धर्म इति । तथा सति पतेत् पुनर्जीवभावं प्राप्नुयात् । तत्राऽपि भजनाद्वाऽन्यत्र इत्याह—**तत्र इति** । पक्वापक्वपक्षं ब्रह्मभावाच्च भ्रंशपक्षमनूद्य दूषयति—**यत्र क्वेति** । साक्षाद्भगवत्सायुज्यहेतुभगवत्सेवायामपि यदि पातस्तदा क्व साधनान्तरे तस्य भद्रं भविष्यति । साधनं हि सर्वावस्थासाध्यमेव । चेत्तनादरे । क्वापि साधने तस्य भद्रं न भविष्यतीत्यर्थः । यदा स्वाभाविकभजनज्ञानादीनां न पुरुषार्थपर्यवसायित्वं तदा दूरापास्तमन्यधर्माणामित्याह—**को वाऽर्थ आप्तोऽभजतां स्वधर्मत इति** । अभजतामसेवकानां केवलदेहाध्यासेन प्रवृत्तानां लौकिकानां ब्राह्मण्याद्यधिकारेण प्रवृत्तानां वैदिकानां च ये धर्मास्ते वस्तुतः सतां परधर्माः । ततश्चाऽन्यधर्मैः को वाऽर्थः प्राप्तस्तैरपि को वाऽर्थः प्राप्त इति स्वशब्देनोच्यते । अभजतां हि फलं ब्रह्माण्डस्य मध्यस्थानप्राप्तिः । तद्गते ब्रह्मणि गच्छति । स्पर्द्धाऽसूयादयश्च नियताः । "**विधर्मः परधर्मश्च आभास उपमा छलः । अधर्मशाखाः पञ्चेमा धर्मज्ञोऽधर्मवत्त्यजेदि**"ति भगवद्विमुखानां धर्मः परधर्मत्वात्त्याज्य एव । अथ पतेदित्यत्राऽपि न साधनानुष्ठानेन कश्चित्पतति । स्थूणानिखननन्यायेन दार्ढ्यात् । तस्माद्भगवद्भजने न केनाऽपि विरोधः । किञ्च । प्रमाणबलविचारेण साधनमुखत एतदुक्तम् । प्रमेयबलविचारेण फलमुखतोऽधुना निरूप्यते । तत्रैवं पदार्थाः । सर्वोत्तमः पुरुषोत्तमः । तदनु तस्यैव रूपान्तरमक्षरम् । सर्वकार्यकर्तृ तस्याऽपि रूपान्तरं सर्वाधिकारी कालः । कालस्यांऽशभूतौ कर्मस्वभावौ । पुनरक्षरस्य रूपान्तरं यज्ञाः । पुनरक्षराद्रूपभेदे प्रकृतिपुरुषौ । ततस्तत्त्वानि । ततो ब्रह्माण्डम् । तत्र पुरुषांशा अस्मदादयः । तेषां प्रयत्नव्यतिरेकेणाऽपि प्रलये पुरुषता । मध्ये कालाधीनाः फेनबुद्बुदवन्नानाभावं प्राप्नुवन्ति । तत्र विचारयतु देवानां प्रियः किं फलमिति । तस्मादक्षरपर्यन्तमनित्यत्वेन तुच्छत्वात्कालेनाऽपि सिद्धेस्तदर्थं यत्नः कर्तव्यः । भगवद्भजनं तु न कालसाध्यम् । पुरुषोत्तमपर्यवसायि च । न हि पुरुषोत्तमसेवा तदन्तरङ्गैः क्रियमाणा बहिरधिकारिप्रेरिता भवति । कालगम्यत्वाभावात् । सर्वत्र भगवन्मार्गे भगवत एव साधनत्वेन विधानाच्च । दृश्यते च लोके महाराजान्तरङ्गसेवकानां नाऽधिकार्यधीनत्वम् । ननु देहेन्द्रियाणां

१. वा चिरकालसाध्यानामिति ख. ग. २ त्यागवचनत इति क. ३ धर्म इति क. ४ ब्रह्मदासा इति ख. ग. ५ दासत्वेनेति ख. ६ हेतुरिति ख. ग. ७ भगवद्भजनेनेति घ. ८ तुर्नास्ति ख.



कालप्रवाहस्थानां परिग्रहात्कथं न कालाधीनत्वमिति ? पुरुषोत्तमपरिग्रहादिति ब्रूमः । तस्मात्तस्यैव हेतोस्तदर्थमेव भगवत्परिग्रहार्थमेव कोविदो यतेत । न मूर्खान् दृष्ट्वा यत्र कश्चित् । ननु कथमत्र विधिः ? अप्राप्तांशाभावात् । लोकवेदयोरीश्वरभजनस्य सिद्धत्वात् । तत्राऽऽह—**न लभ्यते यद्भ्रमतामुपर्यध इति** । उपरि ब्रह्मपर्यन्तम् । अधः स्थावरपर्यन्तम् । भ्रमतां जीवानां तत्तच्छरीरेण तत्तच्छरीरधर्मेण वा यन्न लभ्यते तदर्थं यत्नः कर्तव्यः । तद्धि वैधम् । यत्नस्तु पूर्वोक्तचरणसेवा । धर्मरूपसेवाया लोकवेदसिद्धत्वेऽपि न भक्तिसेवा तत्सिद्धा । यद्यपि ज्ञानार्थमपि प्रयत्न एतादृशो भवति तथाप्यक्षरपर्यवसानान्न पुरुषोत्तमप्राप्तिः । "**अव्यक्तासक्तचेतसामि**"ति वाक्यादव्यक्तस्वरूपभगवद्रूपाक्षरप्राप्तिरेव फलम् । नन्वदृष्टेन न कथं भक्तिसिद्धिः । सर्वोत्पत्तिमन्निमित्तकारणत्वात् । तत्रोच्यते । कालसाध्य एव कर्मस्वभावयोः प्रवृत्तिः । न कालासाध्ये । किञ्च । अदृष्टं नाम पूर्वजन्मनि कृतकर्मणोऽवान्तरव्यापाररूपधर्माधर्मलक्षणम् । तत्कस्य कर्मणः । किं भगवत्प्रीतिहेतोरहेतोर्वा ? आद्यस्तु नाऽदृष्टं जनयति । दृष्टेनैव भगवत्प्रीतिजननात् । फलविपर्ययस्त्वसङ्गतः । नाऽप्रीतिहेतोः । अफलत्वेन तदर्थं न व्यापारजननं सम्भवति । किञ्च । कर्मणां प्ररोहैकस्वभावत्वाज्जन्मनो नाऽन्तिमत्वसाधकत्वम् । अन्तिमे च जन्मनि भगवद्भक्तिः । भगवत्प्रसादैकलभ्यत्वात् । "**स एष साधो चरमो भवानामि**"ति वाक्यात् । जातकेऽपि धर्मरूपसेवाया एव फलत्वेन शुभग्रहैर्ज्ञायमानत्वम् । तस्मादनन्यसिद्धत्वाद्भगवद्भक्तावेव यत्नः कर्तव्यः । न च लौकिकसुखदुःखाभावार्थे यतनीयम् । कालेनैव तत्सिद्धेः । दुःखवत् । अतो देहप्राप्तावेव तद्भोगस्य सिद्धत्वात्तस्य पिष्टपेषणमित्याह—**तल्लभ्यत इति** । अन्यतः पितृपुत्रभार्यादिभ्यः । तेषामपि प्रेरकः कालः । स च कालः कृतिसाध्यो न भवति । न च देशः स्वतन्त्रतया साधनम् । तस्याऽपि कालाधीनत्वात् । तुल्यत्वेऽपि नियतसहभावात् । तदाह—**सर्वत्रेति** । प्रतीकाराऽकरणार्थमाह—**गभीररंहसेति** । तस्माद्भगवद्भजनार्थं प्रयत्नः कर्तव्यः ॥ १८ ॥

तत्र तर्कमाह—

**न वै जनो जातु कथञ्चनाऽऽव्रजेन्मुकुन्दसेव्यन्यवदङ्ग संसृतिम् ।**
**स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो यतः ॥ १९ ॥**

**न वै जनो जात्विति** । ननु वैकुण्ठगतानामपि जयविजयादीनां पुनरागमनश्रवणान्नैकान्ततो भक्तिः फलसाधनम् । भगवतोऽप्यवतरणात्तत्सङ्गेनाऽवतारसम्भवाच्च । पराधीनत्वेनाऽपराधसम्भवाच्च । तस्माद्धर्मवद्भक्तिरपि नोत्कृष्टफलेति । तत्राऽऽह—**न वै जनो जात्विति** । अङ्गीकृत्याऽपि परिहारः । वस्तुतस्तु जयविजययोर्धर्ममार्गानुसारेण कृत्रिमवैकुण्ठप्राप्तिः । अत एव तत्रैव वर्णनायां—"**ये निमित्तानिमित्तेन धर्मेणाऽऽराधयन्हरिम् । वैकुण्ठः कल्पितो येने**"ति । भगवता सह त्वागमनं परमानन्दत्वात्फलमेव । साधारणानामपि भक्तानां भगवत्सेवकानां दूषणमङ्गीकृत्याऽपि परिहार उच्यते । यथा भरतादिः । यतो मुकुन्दसेवी सर्वेभ्यो मोक्षदातुः सेवकः । अन्यवदसेवकवत् । यथा सत्यवादी ब्राह्मणः । तत्र हेतुः—**स्मरन्निति** । वाक्शरीरसाध्यभक्त्य-

१ मूर्खो दृष्ट्वेति घ. २ तद्विविधमिति ग. घ. ङ. ३ अव्यक्तस्वरूपाक्षरेति ख. ४ भगवत इति ख. ५ नापि प्रीतिहेतोरिति घ. ङ. ६ नेति नास्ति ख. ७ साध्यो चरम इति क. घ. ८ धर्मरूपे इति ग. ९ अन्यसिद्धत्वाभावादिति क. घ. १० तद्भोगसिद्धत्वादिति क. ग. ११ इति चेति ग.

**भावेऽपि** कामुकस्य कामिनीस्मरणमिव परमानन्दरूपचरणाऽऽलिङ्गनं पूर्वजन्मनि जातमधुनास्मरन् तच्चरणपरित्याजकसाधनं न कुर्यात् । यथा भरतहरिणेन स्वमात्रादयः परित्यक्ताः । न भगवन्मार्गः । इच्छामपि न कृतवान् । यतो रसग्रहः । रसेन ग्रहणं यस्य स तथोक्तः । भगवतः कृपाऽभावेऽपि मार्गस्यैव बलिष्ठता । तदाह—**यत इति** ॥ १९ ॥

एवं सोपपत्तिकं भगवन्मार्गस्योत्कृष्टत्वं प्रतिपाद्य भगवतो दुर्लभत्वे तच्चरित्रस्य भूयस्त्वं कथनञ्चाऽनुपपन्नमिति को भगवानित्याकाङ्क्षापूरणाय "आचार्यवान् पुरुषो वेदे" ति शास्त्रार्थत्वाय च भगवन्तं निरूपयति—

इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसम्भवाः ।
तद्धि स्वयं वेद भवांस्तथापि वै प्रादेशमात्रं भवतः प्रदर्शितम् ॥ २० ॥

**इदं हि विश्वमिति** । भगवतः स्वरूपं चरित्रं च निरूपणीयम् । तद्द्वयं भेदेन न निरूपणीयम् । तथा सति चरित्रस्याऽनात्मत्वेन तद्भावनायां संसारः स्यात् । अतो द्वयमभेदेन निरूपयति । **इदं विश्वं भगवान्** । विश्वमनूद्य भगवत्त्वं विधीयते । तथा सति सर्वत्र भगवद्दृष्टिश्चेत्कृतार्थो भवतीति कार्यं भगवत्त्वेन निरूपितम् । "**सर्वं खल्विदं ब्रह्म तज्जलानि**"ति श्रुतिर्हिशब्देन सूचिता । उत्तममध्यमाधमाधिकारिभेदेन त्रेधाऽत्र निरूपणं कर्तव्यम् । तत्रोत्तमे निरूपितम् । मध्यमे त्वेवम् । **इदं विश्वं भगवानिव न तु भगवान्** । तेनाऽत्र सन्माननादिकं कर्तव्यं नाऽऽसक्तिरिति । निकृष्टे तु **इदं विश्वं,** भगवानितरः अस्मादन्यः । अतः प्रपञ्चदर्शी बहिर्मुखो भ्रष्टो भवतीति । एवं सर्वत्र प्रकारत्रयेण निरूपणीयम् । नन्वेकस्य जगतः कथं त्रिरूपत्वम्? तत्राऽऽह—**यतो जगत्स्थाननिरोधसम्भवा इति** । तत्र जगतः स्थितिर्भगवत्येवेति भगवानेव जगतीति स्वाधारत्वाद्भगवतः भगवानेव जगत् । मध्यमे तु भगवतस्सकाशाज्जगदुद्भवः । तेन कार्यकारणयोस्तादात्म्यात्कार्यात्मना भेदः कारणात्मना अभेद इति "**भेदसहिष्णुरभेदस्तादात्म्यमि**"ति वचनाज्जगत् भगवानिवेति । मूढे तु भगवतः प्रलयकर्तृत्वान्नाशप्रतियोगि जगत् । भगवांश्च सदातन इतीतरः । किञ्च । पूर्वं भगवच्चरित्रं निरूपितम्—**इदं हि विश्वं भगवानिवेतर इति** । इदानीं भगवन्तं निरूपयति—**यतो जगत्स्थाननिरोधसम्भवा इति** । "**जन्माद्यस्य यत**"इति लक्षणं निरूपितम्भवति । एवमर्थभेदमधिकारिभेदं च संक्षेपतो निरूप्य गुरुस्याऽस्य विवरणं न कर्तव्यमित्याह—**तद्धि स्वयं वेद भवानिति** । तत् पूर्वोक्तं स्वयमेव भवान् वेद, न गुर्वपेक्षा । अथवा । तत् जगत् स्वयम् । भवानित्यर्थः । अत एव भवान्वेद । तर्हि ब्रह्मण उपदेशो निष्फल इत्यत आह—**तथापि वै प्रादेशमात्रमिति** । तथापि ब्रह्मत्वेऽपि । प्रमाणबलात् वै निश्चयेन गुरूपदेशः अपेक्ष्यते । तत्र लौकिकपरिमाणे यथा प्रादेशे प्रदर्शिते तद्द्विगुणादिरूपं हस्तादिकं जानाति तथा जगत्कर्तृत्वे ज्ञाते सर्वेश्वरत्वादयो ज्ञाता भवन्ति । अथवा । प्रकर्षेण आदेश उपदेशस्तन्मात्रं गूढतया शास्त्रार्थनिरूपणं भवदर्थे प्रकर्षेण दर्शितम् । अनेन गूढमेव स्पष्टमिव प्रदर्शनीयमित्युपदेशः ॥ २० ॥

---

१ भूयस्त्वकथनमिति ग. २ को वेति ग. घ. ३ इति चेति क. ग. घ. ङ. ४ चेति नास्ति ख. ५ नेति नास्ति ग. ६ इदं हीति क. ग. ७ जगत उद्भव इति ख. ८ सनातन इति ग.



किञ्च । स्वावतारप्रयोजनं जानीहि । किमर्थमवतीर्णोऽसि? भगवान् स्वयमवतीर्य सर्वभक्तोद्धारार्थं स्वाऽऽत्मख्यापनार्थं स्वांशं ज्ञानकलारूपं भवन्तमवतारितवान् । अतश्चरित्राऽकथने तवाऽवतारो निःप्रयोजन इति भगवदिच्छया तवाऽन्तःकरणविषादः । अतो भगवदाज्ञां परिपालय । स्वजन्मसाफल्यं चेत्याह—

त्वमात्मनाऽऽत्मानमवेह्यमोघदृक् परस्य पुंसः परमात्मनः कलाम् ।
अजं प्रजातं जगतः शिवाय तन्महानुभावाभ्युदयोऽधिगण्यताम् ॥ २१ ॥

**त्वमात्मनाऽऽत्मानमिति** । त्वमात्मानं परस्य पुंसः कलामवेहि । जीवस्य ब्रह्मोपदेशवदयमुपदेश इति निराकर्तुमाह—**कलामिति** । साधनं च तव स्वरूपमेव ज्ञातम् । स्वरूपं तथा ज्ञापयिष्यतीत्यर्थः । तत्र सामर्थ्यमाह—**अमोघदृगिति** । ननु सर्वे जीवा भगवदंशकलाः । कोऽयं मयि विशेष स्तत्राऽऽह । **परस्य पुंसः** । पुरुषोत्तमस्य । अन्ये त्वक्षरस्य पुरुषस्य वा । नन्वक्षरपुरुषयोरपि भगवत्त्वात्को विशेषः? तत्राऽऽह—**परमात्मन इति** । परमश्चाऽसावात्मा चेति । गङ्गाजलदेवतयोरिवाऽऽत्मपरमात्मनोः स्वरूपमिति भावः । तर्हि कथं ममोत्पत्तिस्तत्राऽऽह—**अजं प्रजातमिति** । अनुत्पन्न एव त्वमानन्दमात्रकरपादमुखोदरादिर्व्यासरूपेणाऽवतीर्णः । अतः सर्वस्याऽपि जगतः शान्तसुखाय महानुभावस्य भगवतः अभ्युदयः चरित्रं अधिकं गण्यतामुद्देशमात्रेणोच्यताम् । अस्य भगवतश्चरित्रं भक्तसम्बन्धिष्वपि परममनुभावं सम्भावयतीति महानुभावः । तस्याऽभ्युदयः परमोत्सवः । तस्याऽऽधिक्यं ज्ञानादिभ्यः । अवाङ्मनोगोचरत्वादिदमित्थतया निरूपणमशक्यम् । अत उद्देशमात्रं कर्तव्यमिति ॥ २१ ॥

ननु धर्मसहितं चरित्रमुपदेष्टव्यं केवलं वेति शङ्कायामाह—

इदं हि पुंसस्तपसः श्रुतस्य स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः ।
अविच्युतोऽर्थः कविभिर्निरूपितो यदुत्तमश्लोकगुणानुवर्णनम् ॥ २२ ॥

**इदं हीति** । इदं चरित्रश्रवणं तपआदिभिस्तुल्यम् । फलतः स्वरूपतः साधनतश्च भगवत्त्वात् । सर्वस्याऽपि तानि भगवानिति । तत्र धर्मविशेषो वर्णाश्रमेषु प्रतिष्ठितः । तत्र तपो वानप्रस्थेषु संन्यासिषु वा । श्रुतं श्रवणं वेदान्तानाम् । तत्सन्यासिषु । स्विष्टं गृहस्थे । सूक्तमध्ययनं ब्रह्मचारिषु । क्षत्रियवैश्ययोर्बुद्धिदाने । एवं सर्वधर्मैर्यद्भवति तानि च अविच्युतोऽर्थः । न विच्युतः अर्थो येन । शास्त्रसिद्धावपि लोकसिद्धिर्न भविष्यतीत्यत आह—**कविभिरिति** । नितरामिति युक्तिसहितम् । उत्तमश्लोकगुणानुवर्णनमनूद्याऽविच्युतार्थत्वं विधीयते । अत एकेनैव सर्वसिद्धेर्न तेषां पृथक्करणं नाऽप्यकरणमिति सिद्धान्तः । निषिद्धं तु न कर्तव्यम् ॥ २२ ॥

एवं सामान्यत उपदेशमुक्त्वा आदिसाधनमारभ्य फलपर्यन्तं पदार्थानां क्रमं वक्तुं निदर्शनेन स्वचरित्रमाह सप्तदशभिः—

अहं पुराऽतीतभवेऽभवं मुने दास्यास्तु कस्याश्चन वेदवादिनाम् ।
निरूपितो बालक एव योगिनां शुश्रूषणे प्रावृषि निर्विविक्षताम् ॥ २३ ॥

---

१ स्वांशज्ञानकलेति घ. २ अकथनमिति घ. ३ कलामवेहि इति ख. ग. ४ तपआदिस्तुल्यमिति क. घ. ५ सामान्यं समुपदेशमिति क.

**अहमिति।** अतिहीनस्याऽप्युत्कृष्टपदप्राप्तिरस्मिन्नेव मार्गे न मार्गान्तर इति शापेन शूद्रत्वं प्राप्तस्य देवर्षित्वं निरूप्यते। अतीतभवे पूर्वजन्मनि। नैकट्यभ्रमव्यावृत्त्यर्थम्। पुरेत्येतज्जन्मनोऽजरामरत्वख्यापनाय। मुने इत्युक्तविश्वासाय। संवादात्। पितृनाम न गृहीतं तदानीमज्ञानात्। पितुर्हीनत्वख्यापनाच्च। वस्तुतस्तु ब्राह्मणः। अन्यथा अनुमोदनादिकं न सम्भवेदिति। कस्याश्चिदप्रसिद्धायाः। अन्यथा आदरः सम्भवेत्ततो बन्धः। अनेनाऽस्मिन्मार्गे यथा यथा निरादरत्वं तथा तथा कार्यसिद्धिरिति। वेदवादिनः श्रोत्रियाः। अनेन भगवन्मार्गोपरिज्ञानमुक्तम्। आश्रमिणां संन्यासिनामयं धर्मो यन्मासाष्टकं कीटवत्पर्यटनं विधाय आषाढ्यां यत्र गच्छन्ति तत्र ब्राह्मणनिर्मितविविक्तस्थाने तिष्ठन्तीति तथा दैवयोगान्नारदस्य स्थितिगृहे प्रार्थनया ब्राह्मणानुज्ञया भाविसनकादयश्चत्वारः परमहंसाः स्थिताः। अपृथग्धर्मशीलत्वान्नितुर्णी सङ्गः। योगनिष्ठाश्च। अतः सेवापेक्षा। तेषां शुश्रूषणार्थं ब्राह्मणैरेवाहं निरूपितस्त्वमेतेषामेव सेवां कुरु नाऽन्यत्किञ्चिदिति नियुक्तः। मत्स्वरूपमज्ञात्वाऽपि बालक एव नियुक्तो योगिनां शुश्रूषार्थम्। "**स्थास्यामश्चतुरो मासानि**"ति मासचतुष्टयमेकत्रैव नितरां वासमिच्छताम्। एवमेकेन सत्सम्बन्ध उक्तः। सेवार्थं सत्सङ्ग इति प्रथमं साधनम्॥ २३॥

ततस्तेषां कृपामाह—

**ते मय्यपेताखिलचापलेऽर्भके दान्तेऽधृतक्रीडनकेऽनुवर्तिनि।**
**चक्रुः कृपां यद्यपि तुल्यदर्शनाः शुश्रूषमाणे मुनयोऽल्पभाषिणि॥ २४॥**

**ते मयीति।** सत्सेवकयोर्गुणदोषाभावा अत्र निरूप्यन्ते। सतां गुणत्रयम्। कृपालुत्वं, ब्रह्मविद्या, मननं चेति। धर्मो ज्ञानं साधनं चोक्तम्। अग्रे साधनकथनं ज्ञानानुवृत्तये। सेवकस्य दोषाभावास्त्रयः। गुणाश्चत्वारः। चपलता दोषः। तद्देहेन्द्रियान्तःकरणानां प्रयत्नदार्ढ्याभावाच्चपलता दोषः सहजः। स आदौ दृढप्रयत्नेन निवारणीयः। तदाह। अपेतानि अखिलानि चापलानि यस्मादिति। अर्भकत्वं दीनत्वबोधको गुणः। तदनु दोषाभावद्वयमाह—**दान्तेऽधृतक्रीडनक इति।** इन्द्रियाणां विषयाकाङ्क्षाराहित्यकरणं दमः। न धृतानि क्रीडनकानि येन। इन्द्रियकालकृतौ नियतौ दोषौ विषयसम्बन्धः क्रीडासाधनपरिग्रहश्च। तदभावे सर्वदोषनिवृत्तिः। ततोऽन्तरङ्गं गुणमाह—**अनुवर्तिनीति।** एवं स्वतः पञ्चसु सम्पन्नेषु तेषां परदुःखप्रहाणेच्छा जाता। परदुःखं दृष्ट्वा दुःखितस्य कारुणिकस्य तन्निदानोच्छेदने तृष्णा भवतीति। नन्वेतद्ब्रह्मविदोऽनुचितम्? तत्राऽऽह—**यद्यपि तुल्यदर्शना इति।** निर्दोषं हि समं ब्रह्म तुल्यशब्दवाच्यम्। ब्रह्मज्ञानकृतं वा स्वपरयोः सुखदुःखसमत्वज्ञानं तुल्यम्। तस्य दर्शनं येषामिति। परदुःखं दृष्ट्वा तत्प्रहाणेच्छैव जाता। न ज्ञानमन्यथा जातमित्यर्थः। दुर्बलत्वादिच्छामूलभूतज्ञानस्य। ननु कार्यक्षमा कृपा न भविष्यति। बाधकज्ञानस्य विद्यमानत्वात्। अत आह—**शुश्रूषमाण इति।** सेवायाः सेच्छायाः सेव्यवश्यत्वं सर्वजनीनम्। नन्वनपेक्षायाः कथं वश्यताहेतुत्वम्? तत्राऽऽह—**मुनय इति।** मननबाधकनिवर्तिका सेवाऽपेक्ष्यत एव। सेवायां सांसर्गिको दोषो बहुभाषणमभाषणं वा। तदुभयनिवर्तको गुणः अल्पभाषणम्। अनेन निर्दुष्टा सेवा द्वितीयं साधनमिति॥ २४॥

१ नवतीति क. २ परं दुःखमिति ख. ३ स्वेच्छाया इति ख. ४ सेव्यवश्यत्वमिति ख.



ततो यज्जातं तदाह—

**उच्छिष्टलेपाननुमोदितो द्विजैः सकृत्स्म भुञ्जे तदपास्तकिल्बिषः।**
**एवं प्रवृत्तस्य विशुद्धचेतसस्तद्धर्म एवाऽऽत्मरुचिर्व्यजायत॥ २५॥**

**उच्छिष्टेति।** पापनाशस्तद्धर्मरुचिश्च ततोऽप्यन्तरङ्गं साधनम्। उच्छिष्टं भोजनशेषः। लेपः पात्र्यां लग्नम्। चतुर्णां तानेकीकृत्य सकृद्भक्षणं पापक्षयसाधनम्। ननु—"**न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम्**"मित्यादिमनुवाक्यैर्निषिद्धमुच्छिष्टादिदानं कथं कृतवन्तः? तत्राऽऽह—**अनुमोदित इति।** तस्यैवेयमिच्छा उत्पन्ना। शुद्धसत्त्वात्मसा महापुरुषोच्छिष्टेनाऽतिपवित्रेणाऽऽत्मानं पावयिष्यामीति। तत उच्छिष्टं दृष्ट्वा मोदो जातः। तत्र प्रार्थनायामनुमोदनमात्रं कृतम्। न तु स्वयमुद्यम्य दत्तमिति। न चाऽयं सर्वथा शूद्रः। ब्रह्मबीजत्वात्। गृहस्थानां चाऽयं धर्मः। तत्राऽपि साधारणेषु। सेवा च पुष्टिमार्गे सम्मता। कृपाफलं चैतत्। यथौषधेनाऽजीर्णनिवृत्तिस्तथाऽन्नमयस्य देहस्य उच्छिष्टान्नभावितदेहेन दोषसन्तानानिवृत्तिरित्यर्थः। तदाह—**तदपास्तकिल्बिष इति।** उच्छिष्टभोजनैकनियमेनाऽपि दोषनिवृत्तिर्लोकसिद्धेति स्मेत्युक्तम्। रोचकद्रव्येणाऽरुचिनिवृत्ताविव सद्धर्मरुचिप्रतिबन्धकदोषनिवृत्तौ स्वत एव रुचिर्जातेत्याह—**एवमिति।** प्रवृत्तस्येति निरन्तरकरणमुक्तम्। नियमेन चित्तं शुद्धं जातमित्याह—**विशुद्धचेतस इति।** तेषां धर्मः अपरिग्रहसङ्गनिवृत्तिभगवच्चिन्तनादिः। तत्र प्रेरणाव्यतिरेकेण आत्मन एव रुचिरुत्पन्ना। सा च वृद्धिं प्राप्तेत्यर्थः। अस्य न्यायसिद्धत्वकथनाय लङ्प्रयोगः॥ २५॥

एवमान्तरं दोषाभावं गुणं चोक्त्वा बहिर्गुणमाह—

**तत्राऽन्वहं कृष्णकथाः प्रगायतामनुग्रहेणाऽशृणवं मनोरमाः।**
**ताः श्रद्धया मेऽनुपदं विशृण्वतः प्रियश्रवस्यङ्ग ममाऽभवद्रुचिः॥ २६॥**

**तत्रेति।** अन्वहमित्यशृणवमित्यनेन सम्बध्यते। परमहंसानां वा नित्योऽयं धर्म इति ख्यापयितुम्। कृष्णपदात्परमहंसा अप्येते भक्ता इति ज्ञापितम्। गानं प्रेमाऽऽधिक्यात्। प्रकृष्टगानं तद्भावेन। अनुग्रहेणेत्याज्ञया श्रवणं बोध्यते। न तु प्रासङ्गिकम्। कथामनोरमपदाभ्यां अर्थमभिप्रायं ते बोधयन्तीति लक्ष्यते। निर्बन्धेन श्रवणाभावायाऽऽह—**मनोरमा इति।** मनसो रमणं यासु। एवंरूपा श्रवणभक्तिः सिद्धा। तस्या नारदत्वपर्यन्तं फलम्। ततः कीर्तनमिति साम्प्रतं तु कीर्तनम्। एवमग्रे स्मरणादिवृद्धौ तावद्भिः करणैर्नवविधसाधनभक्तौ सिद्धायां प्रेम्णा भगवत्सायुज्यं भवतीति शास्त्रार्थः। तत्र श्रवणफलमाह—**ताः श्रद्धयेति।** श्रवणादीनां नाऽदृष्टद्वारा फलसाधकत्वम्। किन्तु स्वरूपेणैव। फलं च भगवद्याथार्थ्यज्ञानम्। तदेव हि कीर्तनेऽधिकारः। उत्तरस्याऽऽदिना हि पूर्वस्याऽवसानम्। अतः श्रवणस्य नैरन्तर्यं कर्तव्यम्। तदाह। ताः कथाः। अत्यादरेण—**अनुपदमिति।** पदार्थाक्षरार्थसहितेन वाक्येन हि श्रवणम्। ततो भगवति रुचिः। परं श्रवणद्वारा। तदाह—**प्रियश्रवसीति।** प्रियं श्रवः श्रवणं कीर्तिर्वा यस्य। अङ्गेति कोमलामन्त्रणमवतारणाय। प्रमाणबलं परित्यज्येन्द्रियाणां स्वाभाविकविषयग्रहणं रुचिः॥ २६॥

१ प्रकृष्टगानमिति ख. २ नारदत्वेति ग. ३ कीर्तने वाऽधिकार इति क.

ततः किमत आह—

**तस्मिंस्तदा लब्धरुचेर्महामुने प्रियश्रवस्यस्खलिता मतिर्मम ।**
**ययाऽहमेतत्सदसत्स्वमायया पश्ये मयि ब्रह्मणि कल्पितं परे ॥ २७ ॥**

**तस्मिन्निति** । रुच्या हि भगवदनुभवार्थं यत्नो लोकसिद्धः । स च यत्नो ज्ञानात्मक इति तदाह । **रुचेः** । फलस्य कालान्तरत्वं व्यावर्तयति—**तदेति** । रुचेर्दृढत्वाय—**लब्धेति** । **महामुने** इति सम्बोधनं रुचिमत्योर्नियमार्थम् । प्रोषितभर्तृकेव (?) तदभिध्यानमत्र मतिः । शास्त्रतो वा याथार्थ्यज्ञानम् । तत्र स्खलनं विषयान्तराऽनुसन्धानम् । सन्देहो वा । तदुभयं नास्तीत्यस्खलिता । तत्रापि श्रवणपुरस्सरेणेति **प्रियश्रवसीत्युक्तम्** । "**यो यच्छ्रद्धः स एव सः**" इति वाक्यात्परमश्रद्धायामुत्पन्नायां सफलरुचिरूपायां तत्त्वमावश्यकमिति । तदाह—**ययाऽहमिति** । प्रथमाधिकारार्थमाह । यया मत्या अहमेव ब्रह्म मय्येव सकलं जातं परं मायया परिकल्पितम् । एतत्स्थूलसूक्ष्मं शरीरं जगद्वा । मायया पूर्वोक्तया । अस्य जगतः प्रतीतिमात्रस्य अहं ब्रह्माऽधिकरणं माया करणमिति ज्ञातवानित्यर्थः । प्रपञ्चव्यतिरिक्ततया ब्रह्मोऽऽत्माऽनुभवो जात इति यावत् ॥ २७ ॥

एवं भगवद्भावमापन्नस्य निरन्तरमनुवर्त्तमानश्रवणेन ज्ञानभक्तिभ्यां परमस्नेहो जात इत्याह—

**इत्थं शरत्प्रावृषिकावृतू हरेर्विशृण्वतो मेऽनुसवं यशोऽमलम् ।**
**सङ्कीर्त्यमानं मुनिभिर्महात्मभिर्भक्तिः प्रवृत्ताऽऽत्मरजस्तमोपहा ॥ २८ ॥**

**इत्थमिति** । श्रवणस्य भेदान्तराणि सन्तीति तन्निवृत्त्यर्थम्—**इत्थमिति** । शरत्प्रावृषिकावृतू मासचतुष्टयं पञ्चकं वा । देहादिक्लेशस्याऽस्फुरणमाह—**हरेरिति** । विशेषेण शृण्वत इति श्रवणाऽनुवृत्तिः । न यतः कुतश्चित् । तथा सति निरङ्कत्वात्फलं न साधयेत् । अतो—**मुनिभिर्महात्मभिः सङ्कीर्त्यमानमिति** । **मुनिभिरिति** । स्वफले श्रवणवन्मननं ज्ञानसाधनम् । कीर्तनानुवृत्त्यर्थम्—**महात्मभिरिति** । "**महात्मानस्तु मां पार्थ**" इति श्लोकद्वयार्थोऽत्राऽनुसन्धेयः । सा भक्तिः स्पर्शरूपनिरूपा जातेत्याह—**आत्मरजस्तमोपहेति** । अन्तःकरणं वसुदेवरूपं जातमित्यर्थः ॥ २८ ॥

अत्र हि भगवदावेशव्यतिरेकेणाऽऽविर्भावो न भविष्यतीति तेषां कृपया तज्जातमित्याह—**तस्यैवमिति** द्वाभ्याम्—

**तस्यैवं मेऽनुरक्तस्य प्रश्रितस्य हतैनसः ।**
**श्रद्दधानस्य बालस्य दान्तस्याऽनुचरस्य च ॥ २९ ॥**
**ज्ञानं गुह्यतमं यत्तत्साक्षाद्भगवतोदितम् ।**
**अन्ववोचन् गमिष्यन्तः कृपया दीनवत्सलाः ॥ ३० ॥**

पूर्वजातसाधनानां वासुदेवपर्यन्तमनुवृत्तिः कैश्चिदिति तान(?)नुवदति । **अनुरक्तस्येत्य**नुवृत्तिपर्यन्तानि गृहीतानि । शुश्रूषालक्षणो विनयो भिन्नप्रक्रमेणेति पृथगुक्तः । तथा पापनिवृत्तिः ।

१ दानात्मक इति घ. २ चेति ख. ३ यथार्थज्ञानमिति क. ग. ४ ब्रह्मानुभव इति ख. ५ आविर्भावा इति घ. ६ भविष्यन्तीति घ. ७ कारणीयेतीति ग.



अत्युपकारित्वाद्दीनत्वस्य पृथगुक्तिः । अनुक्तसर्वसमुच्चयार्थं चकारः । अनुवादे क्रमापेक्षाऽभावाद्वैपर्येण कथनं न दोषः । अस्ति किञ्चिज्ज्ञानं सर्ववेदान्तप्रतिपाद्यं पञ्चरात्राद्यागमैश्च गुरूपदेशेन च यदभिव्यज्यते । यथा कं ब्रह्म खं ब्रह्मोपाख्याने । यस्मिन् जाते पुमान् ब्रह्मविद्भवति सर्वज्ञस्तेजस्वी च । ततोऽपि महोपनिषत्प्रतिपाद्यं देवगुह्यत्वाद्गुह्यतरम् । ततोऽपि पुरुषोत्तमप्रतिपाद्यं "**भक्त्या मामभिजानाती**"ति रूपम् । यस्मिन्ननुसंहिते भगवदाविर्भावो भवत्येव तद्गुह्यतमम् । साक्षाद्भगवता कृष्णेनोक्तम । **यत्तदिति** । विशेषतोऽवक्तव्यम् । तेषामपि हृदये भगवदिच्छया उपदेशार्थमागतम् । अनु पश्चादवोचन् । एतस्य परमकाष्ठात्वज्ञापनायाऽऽह—**गमिष्यन्त इति** । एतत्कथने प्रश्नान्तरं साधनान्तरं च नास्तीत्याह—**कृपयेति** । तत्राऽपि हेतुः—**दीनवत्सला इति** । वत्सं लातीति वत्सलो ग्राहकः स्नेहः । तद्वान् वा । पिता पुत्र इव दीनेषु त इत्यर्थः ॥ २९ ॥ ३० ॥

ततस्तव किं जातं तद्वक्तव्यमित्याकाङ्क्षायामाह—

**येनैवाऽहं भगवतो वासुदेवस्य वेधसः ।**
**मायाऽनुभावमविदं येन गच्छन्ति तत्पदम् ॥ ३१ ॥**

**येनैवाऽहमिति** । **भगवतो वासुदेवस्येति** । हृदये विद्यमानस्यैव । अहो (१) इत्याश्चर्यम् । विद्यमानः प्रकाशमान एव न स्फुरतीति मायानुभावः । लेखनदशाऽनुसन्धेया । **येन गच्छन्ति तत्पदमिति** । क्रममात्रेण हेतुना । न तु तत्र कश्चन व्यापारो मृग्य इति भावः ॥ ३१ ॥

एवं भगवत्पदप्राप्तिपर्यन्तं पदार्था निरूपिताः । तत्रैवं सन्देहः—"**ते मय्यपेताखिलचापलेऽर्भके**" इत्यादिसाधनानि कुतो भवन्तीति । कर्मकालादीनां प्रतिबन्धकत्वात् । तत्र कालस्य प्रतिबन्धकत्वाभावायोपायमाह—

**एतत्संसूचितं ब्रह्मंस्तापत्रयचिकित्सितम् ।**
**यदीश्वरे भगवति कर्म ब्रह्मणि भावितम् ॥ ३२ ॥**

**एतदिति** । कथारत्यभावे अशनादयः प्रतिबन्धका दृष्टाः । कर्म चाऽदृष्टद्वारा । तद्वारा हेतुः कालः । तत्र प्रथमं दृष्टप्रतिबन्धको दूरीकर्तव्यः । स च तापत्रयात्मकः । "**एतैरुपद्रुत**" इति वचनात् । तत्र यद्यपि सत्सङ्गेन कथा साधनत्वेनोक्ता तथापि बहुसापेक्षत्वात्सैव न भविष्यतीति स्वतन्त्रमेकं साधनमाह । एतत् वक्ष्यमाणम् । सम्यक् सूचितं न स्पष्टतयोक्तं नापि सन्दिग्धम् । तस्य परिज्ञानं तव भविष्यतीत्यभिप्रायेणाऽऽह । हे ब्रह्मन् । तापत्रयनिराकरणार्थं चिकित्सितम् । यथा विषं सर्वनाशकमपि सर्वरोगनिवर्तकत्वेन द्रव्यान्तरैर्भावनया चिकित्स्यते तथा कर्माऽपि सर्वनाशकं सर्वदोषनिवृत्तये भगवद्रूपेण चिकित्स्यत इत्याह—**यदीश्वर इति** । प्रभुरूपे षड्गुणैश्वर्यसम्पन्ने उत्कृष्टैः पदार्थैः सुन्दरे ब्रह्मणि अपापण्डे वेदान्तवेद्ये कर्म भावितं योजितमित्यर्थः । भावनया प्रापितं वा ॥ ३२ ॥

तत्रैव विशेषमाह—

**आमयो यश्च भूतानां जायते येन सुव्रत ।**
**तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम् ॥ ३३ ॥**

१ अनुसन्धित इति ख. ग. २ ननु इति ख. ३ एवमेति ख. ४ चेति नास्ति ख. ५ तत्सङ्गेनेति घ. ६ चिकित्स्यत इति ख. ७ प्रभुरूपेणेति घ. ८ षडैश्वर्येति घ. ९ तत्रैवमिति ख.

**आमय इति** । येनैव कर्मणा नाशः शङ्कनीयस्तदेव भगवति भावनीयमिति । आमयः कफपित्तादिः । येन मापादिना । **सुव्रतेति** सम्बोधनात्तादृशं तु तव नाऽस्तीति तव महद्भाग्यमिति प्रशंसा । तदेव चिकित्सितमामयद्रव्यं न किन्तु अन्यदपि द्रव्यान्तरं पूर्वभक्षितं पुनाति । अतो येनैव कर्मणा बन्धस्तदेव कर्म भगवति भावितं पुरुषं पुनातीत्यर्थः ॥ ३३ ॥

ननु पूर्वकृतकर्मणां बाधकानां विद्यमानत्वात्तैस्तापत्रयजननाच्च किमग्रिमेण भावितेनेति तत्राऽऽह—

**एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः ।**
**त एवाऽऽत्मविनाशाय कल्पन्ते कल्पिताः परे ॥ ३४ ॥**

**एवं नृणामिति** । यथा भगवति सम्बद्धेन कर्मणा तापत्रयनाश एवमेव पूर्वकर्मणामपि भगवति समर्पणात्स्वरूपनाशे सति तापाद्यनुत्पादकत्वम् । **नृणामिति** कर्माधिकारो द्योतितः । सर्वे पुण्यजनका अपि संसृतिहेतवः जननमरणहेतवः । त एव सर्वे योगाः परे कल्पिताः समर्पिता आत्मविनाशाय कल्पन्ते । यथा प्रज्वलितेऽग्नौ तृणादि । कुतस्तस्य तापजनकत्वमित्यर्थः ॥ ३४ ॥

एवं स्वाभाविकानां लौकिकानां संसारहेतुभूतकर्मणां कृतानां क्रियमाणानां च विनियोग उक्तः । अधुना विहितानां भगवत्प्रीत्यर्थं क्रियमाणानां किं फलमित्याकाङ्क्षायामाह—

**यदत्र क्रियते कर्म भगवत्परितोषणम् ।**
**ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम् ॥ ३५ ॥**

**यदत्रेति** । "**यन्नः स्वधीतं गुरवः प्रसादिता**" इत्यत्र भगवत्प्रसादहेतुत्वेन प्रार्थनान्नियतफलत्वाच्च **एकस्य तूभयत्वे संयोगपृथक्त्वन्यायेन** दध्यादिवदुभयसाधकं स्यात् । तथा सति संसारः । पूर्वोक्ताऽनुभयरूपत्वात् । तत्रोच्यते । अत्र निर्णये यत्कर्म भगवत्परितोषणं क्रियते भगवत्परितोषार्थं क्रियते तेन कर्मणा भक्तिज्ञाने उत्पद्येते । ततो "**ज्ञानाग्निः सर्वकर्माणी**" ति न्यायेन सर्वकर्मक्षय इत्यभिप्रायेणाऽऽह । ज्ञानं यत्प्रसिद्धं भक्तियोगसमन्वितं तत् तदधीनं तादृशकर्माधीनम् । हीति "**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि**"ति न्यायः सूचितः ॥ ३५ ॥

ननु पञ्चरात्रोक्तकर्मणां भगवदाज्ञया अर्जुनादिभिः कृतानां युद्धादीनां च का गतिः? तत्राऽऽह—

**कुर्वाणा यत्र कर्माणि भगवच्छिक्षयाऽसकृत् ।**
**गृणन्ति गुणनामानि कृष्णस्याऽनुस्मरन्ति च ॥ ३६ ॥**

**कुर्वाणा यत्रेति** । यत्र कर्मनिर्णये विषये वा भगवच्छिक्षया कर्म कुर्वाणा भवन्ति तत्कर्म भक्तिजनकं भवतीत्याह । तदा ते पुरुषा असकृत् वारं वारं कृष्णस्य गुणनामानि—पाण्डवरक्षक, द्रौपदीलज्जानिवारक, गोवर्द्धनोद्धरणेत्यादीनि गृणन्ति । अनु पश्चात्स्मरन्ति च कृष्णम् । अतस्तेषां कीर्तनस्मरणभक्तिहेतुत्वात्सर्वोत्कृष्टमेव तत्कर्म । न तेन संसारशङ्काऽपीत्यर्थः ॥ ३६ ॥

यानि पुनः पञ्चरात्रे मन्त्राराधनप्रकारेण पुरश्चरणादीनि कर्माणि तेषां निर्णयमाह द्वाभ्याम्—

**नमो भगवते तुभ्यं वासुदेवाय धीमहि ।**
**प्रद्युम्नायाऽनिरुद्धाय नमः सङ्कर्षणाय च ॥ ३७ ॥**

१ इत्यपेक्षायामिति क. ग. २ भगवद्धक्तीति क. घ. ङ.



**नमो भगवत इति** । इयं हि भगवद्गायत्री नारदोपास्या । अत्र चतुर्मूर्त्तीनामभिधानम् । धीमहीत्यर्थश्चतुर्मूर्तिं ध्यायेम । तस्य फलं चतुर्मूर्त्तिः । तदपि न भोगार्थं किन्तु नमनार्थम् । तदपि न परोक्षतया किन्तु प्रत्यक्षतया । चतूरूपस्याऽपि चतूरूपमपि भगवानित्यर्थः । चकारादन्यान्यपि रूपाणि सङ्गृहीतानि हयग्रीवादीनि ॥ ३७ ॥

अस्या गायत्र्या विनियोगमाह—

**इति मूर्त्यभिधानेन मन्त्रमूर्त्तिममूर्त्तकम् ।**
**यजते यज्ञपुरुषं स सम्यग्दर्शनः पुमान् ॥ ३८ ॥**

**इतीति** । एवंरूपेण मूर्त्यभिधानेन मूर्तिवाचकेन मन्त्रेण करणेन । **मन्त्रमूर्तिः** । मन्त्र एव मूर्तिः शरीरं यस्य । मन्त्रार्थरूपम् । **अमूर्त्तकम्** । मन्त्रोक्तव्यतिरिक्तप्राकृतमूर्तिरहितम् । **यज्ञपुरुषम्** । यज्ञानां पुरुषं पतिं यज्ञरूपं पुरुषं वा । यो यजेत जपपूजाहोमादिना स सम्यग्दर्शनो भवति । भगवन्तं साक्षात्करोतीत्यर्थः ॥ ३८ ॥

अत्र फलं मयैवाऽनुभूतमिति सन्देहाभावायाऽऽह—

**इमं स्वनिगमं ब्रह्मन्नवेत्य मदनुष्ठितम् ।**
**अदान्मे ज्ञानमैश्वर्यं स्वस्मिन्भावं च केशवः ॥ ३९ ॥**

**इमं स्वनिगममिति** । स्वस्य निगमो वेदः । आज्ञेति यावत् । सा आज्ञा मया कृता । यथोक्तः पञ्चरात्रमार्गोऽनुष्ठितः पूर्वकल्प एव । तदा मह्यं ज्ञानं दत्तवान् । ऐश्वर्यं च भक्तिं च । यथा ब्रह्मशिवयोः । तदाह—**केशव इति** । केशयोर्वै सुखं यस्मादिति ॥ ३९ ॥

एवं सर्वेषां कर्मणां निर्णय उक्त इति सर्वमुपपाद्योपसंहरन्निर्द्धारितमुपदेशमाह—

**त्वमप्यदभ्रश्रुत विश्रुतं विभोः समाप्यते येन विदां बुभुत्सितम् ।**
**आख्याहि दुःखैर्मुहुरर्दितात्मनां सङ्क्लेशनिर्वाणमुशन्ति नाऽन्यथा ॥ ४० ॥**

**त्वमपीति** । यथा मया तस्याऽऽज्ञा परिपालिता तथा त्वमपि परिपालय । आज्ञापरिपालनसामर्थ्यं सिद्धवत्कारेणाऽऽह—**अदभ्रश्रुत इति** । अनल्पं वेदादीनां श्रवणं यस्येति । विभोः विश्रुतं कीर्तिं चरित्रमिति यावत् । मध्ये चरित्रस्य माहात्म्यमाह । येन विश्रुतेन विदां ज्ञानिनां बुभुत्सितं भगवत्स्वरूपज्ञानेच्छा समाप्यते । "**यावान्यश्चाऽस्मि यादृश**"इति बुभुत्सा वा । परमभक्तिं जनयित्वा तज्जननात् । तस्मात्तदाख्याहि । किञ्च । निस्तारार्थं सर्वैर्यत्नः कर्तव्यः । स क्लेशाभिभूतैः कर्तुमशक्य इति क्लेशनिवृत्त्यर्थं चाऽऽख्याहि । आख्यानेनैव दुःखैर्मुहुरर्दितानां सङ्क्लेशनिवारणमुशन्ति सर्वे प्रमाणविदः । अत्र चोपायान्तरं नास्ति क्लिष्टानां क्लेशनाशकम् । तदाह—**नाऽन्यथेति** ॥ ४० ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां प्रथमस्कन्धे पञ्चमोऽध्यायः ।

---

१ चतुर्मूर्तीरिति घ. २ अमूर्त्तकमिति घ. ङ. ३ प्राकृतिमूर्त्तिरहितमिति क. ख. ग. ४ सङ्क्लेशाभिभूतैरिति घ. ग. ५ चाऽऽख्याहीति क. ६ निर्वाणमिति ङ. ७ चेति नास्ति क.

## षष्ठोऽध्यायः ।

मध्यमेनाऽधिकारेण पदार्था विनिरूपिताः ।
श्रवणस्य फलं चाऽन्तर्ज्ञानरूपं प्रदर्शितम् ॥ १ ॥
षष्ठे तु बाह्यं तस्यैव कीर्तनाऽवधि वर्ण्यते ।
बाध्याऽभावे त्वान्तरस्य व्यर्थतेति निरूप्यते ॥ २ ॥

पूर्वाध्यायान्ते "अदान्मे ज्ञानमैश्वर्यमि"त्युक्तम् । तत्र सन्देहः । श्रवणमेव निरूपितमान्तरं ज्ञानञ्च । किं तदानीमेव भगवता ऐश्वर्यं दत्तं कालान्तरे वेति । श्रोतव्यविषयनिरूपकस्य फलकथनार्थं भवति विचारणा । अतः पृच्छतीत्याह—

सूत उवाच—

एवं निशम्य भगवान् देवर्षेर्जन्म कर्म च ।
भूयः पप्रच्छ तं ब्रह्मन्व्यासः सत्यवतीसुतः ॥ १ ॥

**एवमिति** । नारदोक्तौ यथार्थत्वमित्यवगतौ हेतुमाह—**भगवानिति** । असम्भावितत्वं निराकरोति—**देवर्षेरिति** । **हे ब्रह्मन्!** शौनक । भूयःप्रश्नस्तूष्णींभावात् । आदराधिक्ये ज्ञात एव विशेषकथनाद्भगवत्कृपया एतावत्त्वं जातमिति कथितेऽपि पुनः प्रश्नः । अनतिप्रयोजनं पृच्छतीति च **सत्यवतीसुत** इत्युक्तम् ॥ १ ॥

प्रश्नमाह त्रिभिः—

व्यास उवाच—

भिक्षुभिर्विप्रवसिते विज्ञानाऽऽदेष्टृभिस्तव ।
वर्तमानो वयस्याद्ये ततः किमकरोद्भवान् ॥ २ ॥
स्वायम्भुव कया वृत्त्या वर्तितं ते परं वयः ।
कथञ्चेदमुदस्राक्षीः काले प्राप्ते कलेवरम् ॥ ३ ॥
प्राक्कल्पविषयामेतां स्मृतिं ते सुरसत्तम ।
न ह्येष व्यवधात्काल एष सर्वनिराकृतिः ॥ ४ ॥

**भिक्षुभिरिति** । कृतिशरीरत्यागज्ञाननाशाभावाः ब्रह्मविदो न किञ्चित्कर्तव्यमिति योगेनैव शरीरत्यागो मोक्ष इति कालस्त्वनतिक्रमणीय इति पृष्टाः । **स्वायम्भुवे**तीदानीन्तनसम्बोधनम् । वृत्तिर्जीविका शरीरनिर्वाहिका । कथमिति योगादिप्रकाराः । चोऽर्थविशेषे । पुनरित्यर्थः । काले प्राप्ते अप्राप्ते वेति प्रश्नः । **इदमिति** । बुद्ध्या पुरः स्थितम् । वेति पाठे त्वनादरः । कालजन्यं कालो

१ अवान्तरमिति घ. २ देवर्षेरिति ख. ३ एतावत्त्वं ज्ञानमिति ख. एतावज्ज्ञानमिति घ. ङ. ४ प्रश्ना इति ख. ५ चार्थेति ख. ग. ६ चेतीति ख.



गृह्णातीति वा आह—**काल इति** । एतां स्मृतिं संस्कारनाशेन पूर्वकल्पविषयेभ्यो व्यवहितां कथं न कृतवान् । तदेयं स्मृतिः शब्दमूला स्यात् । इदानीं तु प्रत्यक्षमूलेति । देवानां भक्तानामपि सतां स्मृतिं कालो नाशयति । तव तु नेत्याश्चर्येण सम्बोधनम् । अत्यसाऽप्यभावार्थेवकारः । कार्यदर्शनाद्युक्तता हिशब्दार्थः । कालमाहात्म्यं च प्रत्यक्षसिद्धम् । भगवत्त्वात्कालं साक्षात्कृत्वाऽऽह—**एष इति** । शास्त्रार्थदार्ढ्याद्वा ॥ २ ॥ ३ ॥ ४ ॥

प्रथमप्रश्ने उत्तरमाह भिक्षुभिरित्यादिना एवं कृष्णमतेरित्यन्तेन—

नारद उवाच—

भिक्षुभिर्विप्रवसिते विज्ञानाऽऽदेष्टृभिर्मम ।
वर्तमानो वयस्याद्ये तत एतदकारषम् ॥ ५ ॥

ब्रह्मविदोऽपि भगवदर्थं यत्नः कर्तव्यः । दृष्टे च भगवति तदाज्ञा कर्तव्येति । अनुवादस्त्वर्प्रीतये । सेवावधारणात् । **एतदिति** । वक्ष्यमाणम् ॥ ५ ॥

त्रिभिः प्रतिबन्धकतामेकेनाऽभावं चाऽऽह । भगवाननुगुणश्चेदग्रिमाऽवस्था सम्पादनीयेति । नाऽन्यथा । अन्यासक्तिस्तु यत्रैव तत्स्वार्थं नैव योजयेत् । भगवान्वा प्रतीक्ष्योऽत्र यत्नं वा तादृशं भजेत् । नारदस्तु भगवत्प्रतीक्षया स्थित इत्याह त्रिभिः—

एकात्मजा मे जननी योषिन्मूढा च किङ्करी ।
मय्यात्मजेऽनन्यगतौ चक्रे स्नेहानुबन्धनम् ॥ ६ ॥
साऽस्वतन्त्रा न कल्पाऽऽसीद्योगक्षेमं ममेच्छती ।
ईशस्य हि वशे लोको योषा दारुमयी यथा ॥ ७ ॥
अहं च तद्ब्रह्मकुले ऊषिवांस्तदपेक्षया ।
दिग्देशकालाव्युत्पन्नो बालकः पञ्चहायनः ॥ ८ ॥

**एकात्मजेति** । एक एव आत्मजो यस्याः सा । आसक्त्याधिक्ये हेतुः—**मे जननीति** । पूर्वावस्थां स्मृत्वा जनयित्री । योषितामपि मध्ये मूढा । उपदेशाभावायोक्तम् । किङ्करीत्युपदेशावसराभावः सूचितः । आत्मजे अनन्यगताविति स्वाभाविकौपाधिकहेतू स्नेहस्य निरूपितौ । स्नेहेन अनु पश्चादात्मनो बन्धनं स्नेहानुबन्धनम् । तत्र स्नेहाऽनुबन्धनमेव जातं न तत्कार्यम् । अन्यथा विषयेण ममाऽपि बन्धः स्यादित्यभिप्रायेणाऽऽह । सा माता । अस्वतन्त्रा स्वाम्यधीना । अत एव न कल्पा मम योगक्षेमादौ न समर्था । कुण्डलादौ योगः । प्राप्तस्य परिपालनं क्षेमः । ब्रह्मविदः सर्वदेवतासन्निधानेन कथं न योगक्षेमप्राप्तिः? तत्राऽऽह—**ईशस्य हि वशे लोक इति** । "**मत्त एव पृथग्विधा**" इति प्रमाणं हिशब्देन सूचितम् । ईशस्य भगवतः कालस्य वा । यथा दारुप्रतिमा कुहकेच्छया नृत्यति एवं सर्वोऽपि लोकश्चेष्टते इति भगवज्ज्ञानवतो बुद्धिः । कालपक्षेऽपि

१ एतदितीति. ख २ पूर्वावधारणादिति. क. ३ एतदर्पीति क. ग. ४ प्रतीकं नास्ति ख. ङ.

वया । कर्मभूतभौतिकपक्षे त्वन्यथा । तदग्रे वक्ष्यामः । यथा योषित्पुत्तलिकां कुहकोऽपि न स्वातन्त्र्यादिधर्मयुक्तां करोति तथा भगवानपि जीवान् । तदाह—योषेति । अहं चेति चकाराद्यथा माता ईश्वराधीना तथाऽहमपि । भिन्नतया ग्रहणं विशेषतस्तदधीनत्वात् । तद्ब्रह्मकुले स्वामिब्राह्मणानां कुले । अनेनाऽन्नादेर्दोषो निवारितः । तदवेक्षया मातृकृतप्रतिबन्धकाभावावेक्षया । दिशः पूर्वादयः । देशः स्वदेशादिः । काला दिनरात्रिप्रभृतयः । तेन क स्थातव्यं कदा प्रस्थातव्यमिति विवेकरहितः । अनेन लौकिकापरिज्ञानम् । अतस्तेनाऽपि न बन्धात्मविस्मरणे । बालक इति विषयसम्बन्धाभावः । पञ्चहायन इत्यपराधीनता च ॥ ६ ॥ ७ ॥ ८ ॥

भगवताऽपि किञ्चिद्विवेकार्थमेतावत्कालं प्रतिबन्धः स्थापितः । जाते तु विवेके तं दूरीकृतवानित्याह—

**एकदा निर्गतां गेहाद्दुहन्तीं निशि गां पथि ।**
**सर्पोऽदशत् पदा स्पृष्टः कृपणां कालचोदितः ॥ ९ ॥**

**एकदेति** । यदा सर्वेऽपि गृहस्थाः स्वस्वकार्ये व्यापृताः । **गेहान्निर्गतामिति** गृहाद्बहिर्हरणक्लेशोऽपि निवारितः । शुद्धिश्च गोस्पर्शे । **दुहन्तीमिति** सक्रियाव्यापृतत्वम् । पथि स्थितः सर्पो भगवत्प्रेरणया समागतः । भगवत्कृतत्वज्ञापनाय पदा स्पृष्ट इति तस्या अपराध उक्तः । वस्तुतस्तस्या अपि न दोषो न वा तस्येत्याह—**कालचोदित इति** । कालादयो भगवदिच्छानुसारेण कार्यकर्तारः ॥ ९ ॥

मयाऽपि स भगवदुपकार इति ज्ञात्वा तथैव कृतमित्याह—

**तदा तदहमीशस्य भक्तानां शमभीप्सतः ।**
**अनुग्रहं मन्यमानः प्रातिष्ठं दिशमुत्तराम् ॥ १० ॥**

**तदा तदहमिति** । सर्वदा हि भगवान् भक्तानामेव कल्याणमीष्टे । तथापि कदाचित्प्रतिबन्धकानामप्यात्मत्वान्न दूरीकरोति । यदि तदपि कुर्यात्तदा महाननुग्रहोऽयमिति ज्ञात्वा चिकीर्षिते न विलम्बः कर्तव्य इत्यभिप्रायेणाऽऽह—**अनुग्रहं मन्यमान इति** । **उत्तरामिति**—"**एषा वै देवमनुष्याणां शान्ता दिग्**"इति श्रुतेर्भगवत्कृते न प्रतिबन्ध इति ज्ञापयितुम् ॥ १० ॥

भूजलद्रुमाऽतिक्रममाह **स्फीतानिति** सार्द्धद्वाभ्याम्—

**स्फीताञ्जनपदांस्तत्र पुरग्रामव्रजाकरान् ।**
**खेटखर्वटवाटीश्च वनान्युपवनानि च ॥ ११ ॥**

तत्रैकेन भूमिविशेषानाह—स्फीतान् सस्यादियुक्तान् । जनपदान् मालवादीन् । पुराणि नगरात्स्थूलानि । ग्रामाः सूक्ष्मावासाः । व्रजा गवां स्थानानि । आकरा लवणादीनाम् । खेटाः कृषीवलग्रामाः । खर्वटा अग्निहोतॄणाम् । एकतो नदी अपरतः पर्वतास्तादृशाः । वाटीः पुष्पादिवाट्यः । वनानि मध्यस्थानानि सहजानि । उपवनानि आरोपितवृक्षाणाम् । चकारात्खलादीनि ॥ ११ ॥

---

१ स्वदेशादय इति क. ग. घ. २ भगवानपीति ख. ग. ३ तद्दूरीकृतवानिति क. ग. ४ पुरात् नगरात् स्थूलानिति क. घ. पुराणि नगराणि स्थूलानीति ग. ५ पर्वत इति क. ग. ६ खलादीनामपीति क.



**चित्रधातुविचित्राद्रीनिभभग्नभुजद्रुमान् ।**
**जलाशयान् शिवजलान्नलिनीः सुरसेविताः ।**
**चित्रस्वनैः पत्ररथैर्विभ्रमद्भ्रमरश्रियः ॥ १२ ॥**

वृक्षसहितपर्वतानामतिक्रममाह । चित्रैर्धातुभिर्विचित्रानद्रीन् । तेषामेव विशेषणम्—इभैर्भग्ना भुजा येषां तादृशा द्रुमा येषामिति । रागभयनिमित्ते उक्ते । विश्रामनिमित्तानि जलान्याह । जलाशयान् महापुष्करिणीः । तेषामेव विशेषणम्—शिवजलान् । शीतलं रोगाद्यनुत्पादकं जलं शिवम् । नलिनीः कमलादियुक्तदेवखाताः । सुरसेविता देवालयादिसहिताः । आश्चर्यरसायाऽऽह । चित्रः स्वनो येषां तादृशैः पक्षिभिः सह विशेषभ्रमणयुक्तानां भ्रमराणां श्रियो यासु ताः ॥ १२ ॥

एवमनूद्य तेषामतिक्रमणमाह—

**नलवेणुशरस्तम्बकुशकीचकगह्वरम् ।**
**एक एवाऽतियातोऽहमद्राक्षं विपिनं महत् ।**
**घोरं प्रतिभयाकारं व्यालोलूकशिवाजिरम् ॥ १३ ॥**

**नलवेणुशरस्तम्बेति** । नलवेणुशराणां स्तम्बाः कुशाः कीचकाः सरन्ध्राः स्थूला वेणवस्तैर्गह्वरं महद्वनमेक एवाऽतियातोऽहम् । कियद्देशातिक्रमोऽत्र विवक्षितः । अथवा । पूर्वोक्तानामेवाऽतिक्रमः । पूर्वोक्तानतियातोऽहम् । पूर्वं पथिका अप्यन्ये स्थितास्तत्र तत्र । घोरं महद्विपिनं तु एक एव अद्राक्षम् । तस्य भयजनकत्वेऽपि न मम भयं जातमित्याशयेनाऽऽह । घोरं व्याघ्रविदारितमांसादिभिः । भयस्याऽपि प्रतिभयजनक आकारो यस्य । व्याघ्रादयोऽपि ततो भीता भवन्तीत्यर्थः । मध्ये अवृक्षदेशोऽपि भयानक इत्याह । **व्यालोलूकशिवाजिरम्** । व्यालाः सर्पा उलूका दिवाभीताः शिवाः शृगालास्तेषामङ्गणत्वेन तद्भक्षितमांसादियुक्तम् ॥ १३ ॥

**परिश्रान्तेन्द्रियात्माऽहं तृट्परीतो बुभुक्षितः ।**
**स्नात्वा पीत्वा ह्रदे नद्या उपस्पृष्टो गतव्यथः ॥ १४ ॥**
**तस्मिन्निर्मनुजेऽरण्ये पिप्पलोपस्थ आश्रितः ।**
**आत्मनाऽऽत्मानमात्मस्थं यथाश्रुतमचिन्तयम् ॥ १५ ॥**
**ध्यायतश्चरणाम्भोजं भावनिर्जितचेतसा ।**
**औत्कण्ठ्याश्रुकलाक्षस्य हृद्यासीन्मे शनैर्हरिः ॥ १६ ॥**

पूर्वं भगवच्चिन्तनेन गतस्याऽप्यतिभयानकदर्शनाद्बहिर्मुखत्वे जाते **परिश्रान्तेन्द्रियात्मा** परितः श्रान्तानि इन्द्रियाणि आत्मा देहश्च यस्य । तथा तृट्परीतो बुभुक्षितश्च जातः । कस्याश्चिन्नद्याः पार्वत्याः कुण्डभूतो ह्रदः । स वृक्षादिना शीतलो भवति । तत्र स्नात्वा पीत्वा च पुनरात्मचिन्तनार्थमुपस्पृष्ट

---

१ चित्रधात्वितीति प्रतीकमधिकम् क. घ. २ ताद..नेति क. ग. घ.

आचम्य । चिन्तनमात्रेणैवाऽन्तःकरणक्लेशनिवृत्तिः । देहेन्द्रियाणां च स्नानपानादिना । एवं सावधानो भूत्वा मनुष्यसम्बन्धाभावमात्रेण कोलाहलपापादिसम्बन्धाभावादुत्तमदेशारण्ये तत्राऽपि पिप्पलोपस्थे आश्रितः पश्चाद्भागेन वृक्षस्पर्शी आत्मानमचिन्तयम्—**कोऽहमिति** । तथाच तस्मिन्नात्मत्वेन ज्ञाते केनाऽहमेतादृशो भास इत्याकाङ्क्षायां स्वेनैव स्वप्रकाशेनैव आत्मना । एवं स्वप्रकाशात्मज्ञानानन्तरं पुनर्गूढोपदेशस्मरणेन यस्याऽहमात्मा पीठभूतः स कोयमिति जिज्ञासायामात्मन्येव प्रकाशमानं भगवन्तं दृष्टवान् । सा तु चिन्तनया मानसी मूर्त्तिः । **यथाश्रुतमिति** वचनात् । तस्मिंश्चिन्तनायामारब्धायां भक्तिरुत्पन्ना । तस्यामुत्पन्नायां चरणाम्भोजध्यानमारब्धम् । ततश्चरणाम्भोजं भक्त्या निर्जितचेतसा ध्यायतो भक्त्यानन्दः पूर्णो जातः । तेन प्रेमौत्कण्ठ्यादानन्दाश्रुप्रभृतयो जाताः । तत औत्कण्ठ्याश्रुकलाक्षस्य हृदये सर्वथा बहिर्दर्शनाभावे चिन्तनानुवृत्त्यर्थं भगवान् शनैराविरासीत् ॥ १४ ॥ १५ ॥ १६ ॥

मानसकल्पितमूर्तावभ्यन्तराद्भगवदाविर्भावे मानसाविर्भूतयोरैक्ये यज्जातं तदाह—

**प्रेमातिभरनिर्भिन्नपुलकाङ्गोऽतिनिर्वृतः ।**
**आनन्दसम्प्लवे लीनो नाऽपश्यमुभयं मुने ॥ १७ ॥**
**रूपं भगवतो यत्तन्मनःकान्तं शुचापहम् ।**
**अपश्यन्सहसोत्तस्थे वैक्लव्याद्दुर्मना इव ॥ १८ ॥**

**प्रेमातिभरेति** । अयं हि भगवत्साक्षात्कारः । एवमेव ब्रह्मसाक्षात्कारोऽपि । यथा गङ्गाजले देवतारूपाया गङ्गाया ध्याने क्रियमाणे साक्षाद्भगवत्पदी यथाविर्भवति तथा सर्वेषामात्मनामात्मभूते आत्मस्थे भगवति ध्यायमाने साक्षाद्भगवत आविर्भावश्चेत्स्वतस्तत्र स्थिरीभूते प्रवेशः सायुज्यम् । यथा जलस्य देवतायां प्रवेशे नदी शुष्यति तथा जीवो ब्रह्म सम्पद्यते । एवमाविर्भूते भगवति सान्निध्यात्परमप्रेम जातम् । तस्य प्रेम्णोऽतिभरो महापूरः । सान्निध्यलक्षणानामुत्तरोत्तरमत्युत्कृष्टत्वात्तेन पूरेण निर्भिन्नाः पुलका रोमाञ्चा यस्य । रोमकूपद्वारा बहिर्निर्गत इत्यर्थः । एवं सर्वाङ्ग आनन्दे पूर्णे परमा निर्वृतिर्जाता । शान्तानन्दमयो जात इत्यर्थः । स च पुनरानन्दसम्प्लवे (?) गङ्गात एवोद्धृतं कलशजलं पुनर्गङ्गायां प्रक्षिप्तं सत् गङ्गैव भवति तथा आनन्दसम्प्लवे लीनः । तदा आत्मानं भगवन्तं च उभयं नाऽपश्यम् । **हे मुने** इति सम्बोधनं संवादार्थम् । कदाचिन्मुनीनामेवं भवतीति । आनन्दे चैतन्यभावः प्रविष्टो न चित्त्वेन स्फुरित इत्यर्थः । ततो भगवदिच्छया भगवति तिरोभूते स्वस्याऽप्यानन्दांशे तिरोभूते मानस्यपि मूर्तिस्तिरोभूता । बलवता ह्यभिभवात् । तदा भगवतो रूपं मनसोभर्तृत्वेन प्रकाशमानं सर्वदुःखनाशकमपश्यन् क्वचिदितो गत इति बुद्ध्या सहसोत्तस्थे उत्थितवानस्मि । नन्वन्तःपदार्थस्य कुतो बहिर्गमनसम्भावना ? तत्राऽऽह । वैक्लव्यात् । विक्लवतया न स्फुरितमित्यर्थः । विकलता हि सर्वविस्मारिका । किञ्च । दुर्मना इव जातः । दुर्गतं मनो यस्य । यथा सर्वस्वनाशे सर्वस्वाविष्टं चित्तं नष्टमिव भवति, तथा भगवन्मूर्तौ तस्य चित्तं जातमिति दुष्टत्वम् ॥ १७ ॥ १८ ॥

१ अचिन्तयदिति क. ख. ग. २ स्वेति नास्ति क. ख. ३ ततश्चरणाम्भोजभक्त्येति ख. ४ ध्यायते इति क. ५ हीति नास्ति ख.



पुनः कियत्कालसमाधाने ज्ञातवान् भगवानाविर्भूत इति तेन चैतत्सर्वं जातमिति । ततः सावधानो भूत्वा पुनर्भगवद्दर्शनार्थं ध्यानमारब्धवानित्याह—

**दिदृक्षुस्तदहं भूयः प्रणिधाय मनो हृदि ।**
**वीक्ष्य(?)माणोऽपि नाऽपश्यमवितृप्त इवाऽऽतुरः ॥ १९ ॥**

**दिदृक्षुस्तदहं भूय इति** । तद्भगवत्स्वरूपमाविर्भूतं दिदृक्षुः । तत्र भगवद्ध्यानमेव साधनमिति ज्ञात्वा पुनर्मनो हृदि भगवन्मूर्तिध्याने स्थिरीकृतवान् । ततो मानसीं मूर्तिं पश्यन्नपि न भगवन्तं दृष्टवान् । तदाह—**वीक्ष्य(?)माणोऽपि नाऽपश्यमिति** । तदा सन्ताप उत्पन्न इत्याह—**अवितृप्त इवाऽऽतुर इति** । यथा ह्यातुरो ज्वरादिरोगवान् कदाचिद्द्राक्षादिके दत्ते अवितृप्तः सन् पुनः प्रार्थनायां न प्राप्नोति, ततश्च रसाभिनिविष्टो महद्दुःखं प्राप्नोति । न हि ज्वरितस्य बह्वी द्राक्षा तु पथ्याय । किन्तु रोचिका । मार्गस्य संवादेन सत्यत्वज्ञानाद्भगवदाविर्भावाच्च काचित्तृप्तिर्जातैव । भुक्तवान्तवत् । तथापि न विशेषेण तृप्तः ॥ १९ ॥

तथापि यत्नं न त्यक्तवानित्याह—

**एवं यतन्तं विजने मामाहाऽगोचरो गिराम् ।**
**गम्भीरश्लक्ष्णया वाचा शुचः प्रशमयन्निव ॥ २० ॥**

**एवं यतन्तमिति** । **विजन इति** मनुष्यान्तरवाक्यसम्भावनाभावः । कोऽयं स इत्याकाङ्क्षायामाह—**अगोचरो गिरामिति** । "**यतो वाचो निवर्तन्त**" इति श्रुतेस्तत्साकारं ब्रह्म भगवच्छास्त्रगम्यमिति । तस्य वाक्यमाह । **गम्भीरश्लक्ष्णया वाचा** । गम्भीरत्वेन न प्रतिध्वनिः । श्लक्ष्णत्वान्नाकाशपुरुषस्य वाणी । तस्य शोकोऽयम्— किं मया भ्रमात्किञ्चिदनुभूतमाहोस्वित्स्वप्न इति । तथा सति न शास्त्रं प्रमाणमिति महद्दुःखम् । दिदृक्षाकृतश्च । एवं नानाविधाः शुचः । ताः प्रशमयन्निव । अस्तित्वेन शमनम् । अग्रे चं सम्भविष्यति । इदानीं नास्तीति च । तस्मादाह—**शमयन्निवेति** ॥ २० ॥

भगवद्वाक्यमाह—

**हन्ताऽस्मिञ्जन्मनि भवान् मा मां द्रष्टुमिहाऽर्हति ।**
**अविपक्वकषायाणां दुर्दर्शोऽहं कुयोगिनाम् ॥ २१ ॥**

**हन्ताऽस्मिन्निति** । हन्तेति स्नेहेन दुःखितस्य सम्बोधनम् । अस्मिञ्जन्मनि मां द्रष्टुं भवान्नाऽर्हति । न वा इहेति । अन्यथा मरणपर्यन्तमत्रैव तिष्ठेत् । अतो वैकुण्ठेऽन्यत्र वा जन्मान्तरे दर्शनं भविष्यति । इहाऽदर्शने हेतुः । **अविपक्वकषायाणाम्** । न विशेषेण पक्वा रागादयो येषाम् । इदानीं भक्तिज्ञानादेरुद्गमादभिभूतास्तिरोहितास्तिष्ठन्ति । पुनः कालान्तरे निमित्तान्तरमासाद्य प्रबुद्धा भविष्यन्ति । अतस्तेषां पाको मृग्य इति । "**कषायपक्तिः कर्माणी**"ति श्रुतेः पाचककर्माणि कर्तव्यानीत्यर्थः । अपक्वेऽपि कषाये साधनेष्वतिनिर्बन्धश्चेत्कदाचिद्दुःखेन द्रष्टुं शक्येताऽपि । तदाह—**दुर्दर्श इति** । **कुयोगिनामिति** । अन्तरायैर्विहतानाम् । तस्मान्न कषायपाकः पूर्वसिद्धः ॥ २१ ॥

१ सिद्धमिति ग. २ एवेति घ. ३ तद्भगवद्वाक्यमिति ख. ४ कषायपङ्क्तिरिति क. ग. घ. ५ पूर्वसिद्धिरिति ख. ग.

सकृद्दर्शनं तु प्रमेयबलादित्याह—

**सकृद्यद्दर्शितं रूपमेतत्कामाय तेऽनघ ।**
**मत्कामः शनकैः साधुः सर्वान्मुञ्चति हृच्छयान् ॥ २२ ॥**

**सकृद्यद्दर्शितं रूपमिति** । यदिदं रूपं सकृद्दर्शितं तत्ते कामोत्पत्त्यर्थमुद्गतेच्छाविशेषार्थम्[1] । येन कामेन[2] प्रवृत्तः स्थातुं न शक्नुयात् । कामनायां किं स्यात्तदाह—**मत्काम इति** । मयि कामः । **शनकैरिति** । कामद्वारा यथा यथाऽहं हृदि प्रविष्टस्तथा तथा कामान्मुञ्चतीति । किञ्च । प्रथमतः साधुर्भवति । साधुभिरेव प्राप्यत्वात् । रागादिभिश्च साधुत्वापगमात् । ततः सर्वानेव हृच्छयान् रागादीन्मुञ्चति ॥ २२ ॥

तर्हि किं साधनं कर्तव्यमित्याकाङ्क्षायामाह—

**सत्सेवयाऽदीर्घयाऽपि जाता मयि दृढा मतिः ।**
**हित्वाऽवद्यमिमं लोकं गन्ता मज्जनतामसि ॥ २३ ॥**

**सत्सेवयेति** । साधनं तु तव निष्पन्नम् । यतः अदीर्घयाऽपि सत्सेवया मयि दृढा मतिर्जाता । तर्हि काऽनुपपत्तिः ? तत्राऽऽह—**हित्वाऽवद्यमिति** । देहस्तु दुष्टः । तस्मिन्नपगते भविष्यति । नन्वेतत्प्ररोहत्वादग्रिमोऽपि देहस्तादृशो भविष्यतीति तत्राऽऽह । **मज्जनताम्** । मम जनः सेवकः । तत्ता मज्जनता । असेवकोऽपि सेवकशरीरं प्राप्स्यसि[3] ॥ २३ ॥

तदा[4] शरीरान्तरे ज्ञानादिसाधनाभावात्कथं तव दर्शनम् ? तत्राऽऽह—

**मतिर्मयि निबद्धेयं न विपद्येत कर्हिचित् ।**
**प्रजासर्गनिरोधेऽपि स्मृतिश्च मदनुग्रहात् ॥ २४ ॥**

**मतिर्मयि निबद्धेयमिति**। इदमेव ज्ञानं तदाऽप्यनुवर्तिष्यते । नाशशङ्का नास्त्येव । मयि नितरां सम्बद्धत्वात् । यथा मत्सायुज्ये जीवानामविद्यया न तिरोभावस्तथा ज्ञानादीनामपि । मज्ज्ञानमिव तदपि भविष्यतीत्यनुग्रहः । तदाह—**कर्हिचिदिति** । बाधककाले । द्वयमनूद्य निषेधति—**प्रजासर्गनिरोधेऽपीति** । अपरं च वरमाह—**स्मृतिश्चेति** । सर्वपदार्थानां पूर्वानुभूतानां स्मरणं च न विपद्येतेत्यर्थः । अनेन सर्वदा सावधानो भवेत्येतावदत्र सिद्धम् । कषायपाकः कर्तव्यः । अन्तरायैरनुपहतश्च भवेत् । अन्यत्तु मयैव कृतम् । मयि कामो विषयेष्वकामः । एतद्देहावसान एव मत्पार्षदशरीरप्राप्तिः । ज्ञानानाशः सर्वपदार्थस्मरणं च । तत्र निर्विघ्नेन कषायपाकोपायस्त्वया शीघ्रमेव कर्तव्य इति सिद्धम् ॥ २४ ॥

**एतावदुक्त्वोपरराम तन्महद्भूतं नभोलिङ्गमलिङ्गमीश्वरम् ।**
**अहं च तस्मै महतां महीयसे शीर्ष्णाऽवनामं विदधेऽनुकम्पितः ॥ २५ ॥**

**एतावत्** अग्रे उपायमनुक्त्वैव अनुकम्पयैव स्वतः स्फुरिष्यतीति पूर्वोक्तमात्रमुक्त्वा विरराम[5] ।

१ तद्गतेच्छेति क. ध. २ कामेनाऽप्रवृत्त इति ग. ३ प्राप्स्यतीति ग. ४ ननु तदेति घ. ५ भवतीति क. ग. घ. ङ.



प्रामाण्यार्थं वक्तारं विशिनष्टि । विशेषतोऽज्ञानान्नपुंसकपदप्रयोगः । तदित्यनुवादः । **महद्भूतमिति** । "**अस्य महतो भूतस्य निःश्वसितमि**"ति वेदोद्गममूलभूतं प्रामाण्यार्थमेव महज्जातमिति । आकाशगुरुं व्यावर्तयति—**नभोलिङ्गमिति** । आकाशं तु भगवतोऽनुमापकम् । प्रथमकार्यत्वात् । तथा कथने वा हेतुः । यतस्तत्कार्यमपि तथा कथयतीति । **अलिङ्गम्** । न हि भगवाननुमानगम्यः । आत्मत्वेन प्रत्यक्षत्वात् । अतिरिक्तरूपेऽपि[1] न व्याप्त्यादीनां भगवन्नियामकत्वम् । तदाह—**ईश्वरमिति** । अन्यथाकरणसामर्थ्यान्न हेतुना वह्न्यादिरिव भगवान् सिद्ध्यतीत्यर्थः । एवं सर्वप्रमाणातीतः सर्वत्र प्रमाणमित्युक्तम् । मयाऽपि तदुक्तं कृतमित्याह—**अहं चेति** । तत्र निर्विघ्नार्थं तमेव भगवन्तं नमस्करोति । **तस्मै**[2] । पूर्वपरिचयात् । ईश्वरफलदानपक्षेऽपि यथा फलं प्रयच्छेत्तदर्थमुक्तम् । ननु नमस्कारमात्रेण तत्कथं कुर्यात्तत्राऽऽह—**महतां महीयस इति** । अतिमहति तावदेव कर्तव्यमिति । बहिःशब्दश्रवणाद्बहिःस्थितो भगवानिति बहिः शीर्ष्णाऽवनामं साष्टाङ्गनमस्कारं कृतवान् । युक्तं चैतत् । यतो भगवान्महतीं कृपां कृतवान् । तदाह—**अनुकम्पित इति** ॥ २५ ॥

कषायपाकसाधनं करोमीत्याह—

**नामान्यनन्तस्य हतत्रपः पठन् गुह्यानि भद्राणि कृतानि च स्मरन् ।**
**गां पर्यटंस्तुष्टमना गतस्पृहः कालं प्रतीक्षन्विमदो विमत्सरः ॥ २६ ॥**

**नामानीति** । कषायास्त्रिविधाः । साक्षाद्रागादयस्तामसाः । तेषामपि वासनारूपा राजसाः । तेषामपि मूलभूता अविद्यारूपाः । ते च क्रमात्कर्मणा भक्त्या ज्ञानेन च नाश्यन्ते । तत्र चाऽधिकाराः पृथक् पृथक् । अतो नैकेन नैकदा कर्तुं शक्याः । तस्मादेतेषां त्रयाणामेकोऽनुकल्पः कर्तव्यः । तद्भगवत्कृपयाऽस्य यत्स्फुरितं तत्कृतवान् । "**चक्राङ्कितस्य नामानि सदा सर्वत्र कीर्तयेदि**"ति वाक्यान्नामसु न देशकालयोरपेक्षा । एकं च नाम नाऽऽवर्तनीयम् । ब्रह्मविदः सर्वैरेव रूपैर्भगवत्सेवनस्य श्रुतिसिद्धत्वात् । एकनाम्न आवृत्तौ रूपविशेषस्येति न सर्वैः सर्वत्र रक्षा स्यात् । श्रोतुर्वक्तुश्च परिच्छेदबुद्धिः पाषण्डताशङ्काऽपि स्यात् । तत्र हेतुमाह—**अनन्तस्येति** । अनन्तरूपस्य । तथा सत्यनन्ता एव भगवद्धर्मा नामसु स्मृता भवन्ति । अलौकिकं हि लोकमध्ये कुर्वन् गुप्तं करोति । लोकोपहासभिया देहकुलान्तःकरणधर्मैश्च लज्जा भवति । विहितत्वेऽपि लोकोपहासात् । तथा सति लोकरक्षाबुद्ध्या न भगवति शुद्धो भावो भवेत् । अतस्तांस्त्याजयति—**हतत्रप इति** । हतत्वान्न पुनर्जीवनम् । क्रियाकर्ममध्ये अधिकारिपदान्नामोच्चारण एव हतत्रपत्वम् । स्वाधीतानामर्थानुसन्धानपूर्वकमुच्चरुच्चारणं पठनम् । शतृप्रत्ययेन निरन्तरता चोक्ता । चित्तस्य चञ्चलत्वात्तस्य भिन्नमवलम्बनमाह—**गुह्यानीति** । यानि चरित्राणि गुह्यानि लोके स्पष्टतया वक्तुमयुक्तानि पुष्ट्या कृपया कृतानि द्रौपद्यर्जुनादिशयनस्थानादिषु शयनस्थानादीनि । भद्राणि मनोहरादीनि(?)स्वस्याऽबाधकानि । **कृतानि चेति** । स्पष्टतया कृतानि । अथवा । कृतानि करिष्यमाणानि च । भगवत्कृपया तत्स्फुरणम् । शरीरकृत्यमाह—**गां पर्यटन्निति** । अत्यन्तसंयोगे द्वितीया । गोशब्दाद्गोसेवावद्धर्मजनकत्वम् । परितः अटनम् । अनेन ऋजुतया एकमार्गेण देशातिक्रमो निवारितः । एकमङ्गं साधनसाधनत्वेनोक्त्वा

१ तु इति क. २ यस्येति ख. ३ लोकबुद्ध्येति घ. ङ. ४ स्वाधीनानामिति ग. ५ अर्थानुष्ठानेति ध. ६ द्रौपद्यर्जुनादिषु इति ख. ग. द्रौपद्यर्जुनादिषु शयनस्थानादिष्विति घ. ङ. ७ स्वस्याऽबन्धकानीति घ. ङ. ८ साधनत्वेनोक्त्वेति ख.

पञ्चाऽङ्गानि फलसाधनत्वेनाऽऽह—**तुष्टमना इत्यादि** । भूमिपर्यटनं यद्यन्यार्थं स्यात्तदा मनसो न तावन्मात्रेण परितोषः स्यात् । अतस्तुष्टमना भवेत् पर्यटनमेव फलत्वेन जानीयात् । यद्यपि तथा पर्यटनेन लौकिकालौकिकानि फलानि भवन्ति तथापि तेषु स्पृहा न कर्तव्या । तदाह—**गतस्पृह इति** । नन्वपरिच्छिन्नानि कर्माणि कर्तुमशक्यानि । अत एव द्वितीयाध्याये कर्मभेदो निरूपितः । तत्र परिच्छेदको देशः कालो वा भवति । ततश्च परिच्छेदकदेशकालसम्बन्धे किं कुर्यादित्यत आह—**कालं प्रतीक्षन्निति** । शतृप्रत्ययेन आदित आरभ्य कालप्रतीक्षा कर्तव्या । ततः शरीररक्षादिसाधनाभावे बाधके वा नाऽन्तःकरणे क्लेशो भवति । दैवगत्या सन्मानने प्राप्तेऽपि गर्वो न कर्तव्यः । न हि पूजनेन तस्य महत्त्वं प्रत्युत तद्बाधकम् । "**जनेनाऽभिमतो योगी योगसिद्धिं न विन्दती**"ति वाक्यात् । विषयाप्राप्तौ न वा मत्सरः कर्तव्यः । प्रत्युत कालसाधकत्वेन तेषामुपकारो मन्तव्यः । न वा विपरीतो मत्सरः कर्तव्यः । अबाधकविषयप्रापकेषु भगवदाज्ञानिर्वाहकत्वात् । निषिद्धप्रापकेषु तु बाधकवत्सहनम् ॥ २६ ॥

एवं षडङ्गसहितं नामोच्चारणपूर्वकं भूपर्यटनं कषायपाके हेतुः । तस्य किं दृष्टद्वारा अदृष्टद्वारा वा कषायपाकहेतुत्वमित्याकाङ्क्षायामाह—

**एवं कृष्णमतेर्ब्रह्मन्नसक्तस्याऽमलात्मनः ।**
**कालः प्रादुरभूत्काले तडित्सौदामनी यथा ॥ २७ ॥**

**एवं कृष्णमतेरिति** । एवं पर्यटने कृष्णे मतिर्भवति । तदैव विषयेष्वसङ्गः । यदा कृष्णो रोचते तदैव विषया न रोचन्ते । **ब्रह्मन्निति** सम्बोधनमपि संवादाय । कृष्णमत्या विषयासङ्गे जाते तदैवाऽन्तःकरणं शुद्धं जातम् । तदैव कषायाः पक्वा इत्यर्थः । पाकार्थमेव शरीरस्य रक्षितत्वात् । पक्वे च कषाये शरीरस्य प्रयोजनान्तराभावात्तद्दहनाय कालः प्रादुरभूत् । काले शरीरप्रारम्भकादृष्टसमाप्तौ शापसमाप्तौ वा । उत्तरत्र वा सम्बन्धः । काले वर्षाकाले । **तडिदिति** । शीघ्रमिति केचित् । सौदामनी वा सुदामपर्वताज्जाता । तडित्सौदामनीत्येकं वा पदम् । तडिदिव पीत इत्यादावेकदेशप्रयोगः । यथा प्रथमत एव स्तनयित्नुवृष्ट्योर्विद्युत्तथा शरीरनाशकरोगाद्यपेक्षया कालो जीवप्रणेता प्रथमत एव प्रादुर्भूत इत्यर्थः ॥ २७ ॥

ततः किं वृत्तन्तदाह—

**प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम् ।**
**आरब्धकर्मनिर्वाणो न्यपतत्पाञ्चभौतिकः ॥ २८ ॥**

**प्रयुज्यमान इति** । देहवियोगक्लेशो न ज्ञात एव । प्रथमत एव भगवत्सम्बन्धी शुद्धसत्त्वपरिणामरूपो देह उपस्थितः । कालेन चाऽहं तत्र शीघ्रमेव नीतः । तस्मिन्मयि नीयमाने कियद्दूरं शरीरमप्युद्गतं विमानसंमुखतया, परं भौतिकत्वाद्गुरुत्वेन पञ्चभूतानि (?) क्रमेण वैकुण्ठगमनाद्वा न्यपतत् । ननु योगे ब्रह्मसम्पत्तावपि शरीरं तिष्ठति । कथमिदं पतनम् ? तत्राऽऽह— **आरब्धकर्मनिर्वाण इति** । येन कर्मणा इदं शरीरमारब्धं तस्य निर्वाणः समाप्तिर्यस्य(?) । निर्वाणशब्देन कर्मापि भुक्तम् ।

१ अपरिच्छेदकेति क. ग. घ. ङ. २ देश इति ख.



परम्पराजनकत्वाभावात् । वरादिकं त्वारम्भककर्मरूपं भवति । तस्य च समाप्तिर्देहग्रहणमात्रेणैव । देहस्तु ब्रह्माण्डपर्यवसायी । तद्व्यावृत्त्यर्थम्—**भौतिक इति** ॥ २८ ॥

तर्हि ब्रह्मणः सकाशात्कथमुत्पत्तिः ? तदाह—**कल्पान्त इति** द्वाभ्याम्—

**कल्पान्त इदमादाय शयानेऽम्भस्युदन्वतः ।**
**शिशयिषोरनुप्राणं विविशेऽन्तरहं विभोः ॥ २९ ॥**
**सहस्रयुगपर्यन्तमुत्थायेदं सिसृक्षतः ।**
**मरीचिमिश्रा ऋषयः प्राणेभ्योऽहं च जज्ञिरे ॥ ३० ॥**

यदा कल्पान्तो भवति तदा सर्वं स्वकृतमुदरीकृत्य नारायणः शेते । ब्रह्माऽपि नाभिद्वारा उदरं प्रविशति । ततो नारायणेन सहैक्यं प्राप्य शेते सहस्रयुगपर्यन्तम् । तदा नित्यत्वादस्मच्छरीरस्य शयनार्थमहमपि ब्रह्मणो नासापुटवायुना सह अन्तः प्रविष्टः । वायोरेव गमनाऽऽगमने । अहं तु तत्रैव स्थितः । प्रविष्टधारणसामर्थ्यमाह—**विभोरिति** । अन्तः स्थितस्य कालः सहस्रयुगपर्यन्तम् । तदा राजसकल्पे भगवांस्तिरोहितः । ब्रह्मा तु निर्गतः । निर्गत्य शयनादुत्थायेदं जगत्पूर्ववत्स्रष्टुमियेष । तदा सिसृक्षतस्तस्य अवयवेभ्यो मरीचिमुख्या ऋषयः अहं च जज्ञिरे । तत्र "**उत्सङ्गान्नारदो जज्ञे**"इति वचनाद्भगवतो भक्तत्वादयमुत्सङ्गे स्थापितः । ततः प्रजापतावन्तःप्रविष्टत्वाद्ब्रह्मणः प्राणरूपेभ्यो भगवदंशेभ्यस्तत्तत्स्थाने स्थितेभ्यो जाता इत्यर्थः ॥ २९ ॥ ३० ॥

सा कृपा जातेऽपि तथैवाऽनुवर्तत इत्याह—

**अन्तर्बहिश्च लोकांस्त्रीन्पर्यैम्यस्कन्दितव्रतः ।**
**अनुग्रहान्महाविष्णोरविघातगतिः क्वचित् ॥ ३१ ॥**

**अन्तर्बहिरिति** । यथा बालकः पुत्रो गृहमध्ये बहिरपि परिभ्रमति, तथा ब्रह्माण्डान्तर्बहिश्च । त्रिलोक्यां वाऽन्तर्बहिश्च । साधारणन्यायेन बहिः परिभ्रमणे वा सम्भवत्यन्तरित्युक्तम् । द्वितीया त्वत्यन्तसंयोगे । ननु किमेतावता । अचेतनानां वाय्वादीनामपि तथात्वात् । तत्राऽऽह—**अस्कन्दितव्रत इति** । न स्कन्दितं भगवद्दर्शनलक्षणं व्रतं यस्येति । भगवतः सर्वत्र विद्यमानत्वाद्देशविशेषाविवक्षायां भक्तैः सर्वत्र दर्शनं कर्तव्यम् । ततश्च यत्रैव भगवन्तं न पश्येत्तत एव व्रतहानिर्भवेत् । अतो मम सर्वत्र परिभ्रमणेन भगवद्दर्शनान्न व्रतहानिरित्यर्थः । ननु मशकादिहृदयेऽपि भगवतो विद्यमानत्वात्कथं तादृशेषु तव गतिरिति तत्राऽऽह—**अनुग्रहान्महाविष्णोरिति** । व्यापकस्तु देशकालापरिच्छिन्नः । महाविष्णुस्तु वस्त्वपरिच्छिन्नोऽपि । तस्याऽनुग्रहोऽपि तादृश एव । अतो न विद्यते विघातो यस्यास्तादृशी गतिर्यस्येति । क्वचिदपीत्यर्थे—**क्वचित्** ॥ ३१ ॥

एवं सत्सङ्गेन श्रवणमारभ्य सर्वत्र भगवद्दर्शनपर्यन्तमेका श्रवणभक्तिरुक्ता । द्वितीया तु भगवत्कृपया समारब्धेत्याह—

**देवदत्तामिमां वीणां स्वरब्रह्मविभूषिताम् ।**
**मूर्च्छयित्वा हरिकथां गायमानश्चराम्यहम् ॥ ३२ ॥**

१ आरम्भककर्मरूपमिति ग. २ ब्रह्माण्डपर्यवसाने इति क. ३ ब्रह्मणे इति ख. ४ तुकारो नास्ति क. घ. ङ.

**देवदत्तामिति** । भक्तिमार्गे देवकृतो विघ्नः कदाचित्सम्भाव्येतेति शङ्कानिवृत्त्यर्थं कीर्तनाङ्गभूतां वीणां दत्तवन्त इति देवदत्ता । श्रुतिपूरिका हि सा । तत्राऽङ्गुल्यादिचालनप्रयासोऽपि निवारितः—**स्वरब्रह्मेति** । स्वराः षड्जादयः । नादब्रह्मात्मकत्वात्तदेव ब्रह्म । तेन विशेषेण भूपिता । तादृशीम् । **मूर्च्छयित्वा** । स्वराणां मूर्च्छना सङ्गीतशास्त्रसिद्धा तां प्रापयित्वा । तथा सति रसाऽऽविर्भावादश्रान्तं सङ्कीर्तनं भवतीति तथा कृत्वा हरिकथां गायमानश्चरामि । परिभ्रमणं तु कीर्तनेऽप्यङ्गम् ॥ ३२ ॥

ननु पूर्वस्मात्को[4] विशेषो जातस्तत्राऽऽह—

**प्रगायतः स्ववीर्याणि तीर्थपादः प्रियश्रवाः ।**
**आहूत इव मे शीघ्रं दर्शनं याति चेतसि ॥ ३३ ॥**

**प्रगायत इति** । पूर्वं यद्दर्शनार्थं भूयान् यत्नः कृतः स इदानीं स्वत एव भवति । तत्र हेतुः—**प्रगायत इति** । यस्तु स्ववीर्याणि प्रकर्षेण गायति तस्याऽग्रे वीर्यास्फुरणं मा भवत्विति स्वयमेव तत्स्फुरणार्थं विषयान्तरसञ्चाराभावाय शीघ्रं चित्ते समायाति । ननु श्रोतुरभावादनङ्गं कीर्तनं कथं फलयेति तत्राऽऽह—**तीर्थपाद इति** । तीर्थानि सन्तः पादे यस्य । सर्वे हि सन्तः सायुज्यं प्राप्ता भगवत्पादे वर्तन्ते । अन्येऽपि भक्तिवशात् । तादृशो हि भक्तिगुणः । पादं च हृदि स्थापयित्वा गायतीति सतां श्रोतॄणां विद्यमानत्वात्कीर्तनं नाऽङ्गविकलम् । ननु कथमेवं भगवान् सर्वां सामग्रीं सम्पादयतीति तत्राऽऽह—**प्रियश्रवा इति** । प्रियं श्रवः कीर्तिर्यस्य । तत्सम्पादनार्थं सर्वं सम्पादयतीति भावः । अग्रे वीर्यास्फुरणे भगवतः स्मरणमाह्वानमिव सञ्जातम् । प्रियत्वादाह्वाने च समागमनम् ॥ ३३ ॥

एवं कीर्तनं सपरिकरं निरूप्य सर्वत्र लोके तत्सिद्ध्यर्थं तद्विषयवर्णनं त्वया कर्तव्यमित्यभिप्रायेण कीर्तनमनुवादेन स्थिरीकरोति—

**एतद्ध्यातुरचित्तानां मात्रास्पर्शेच्छया मुहुः ।**
**भवसिन्धुप्लवो दृष्टो हरिचर्यानुवर्णनम् ॥ ३४ ॥**

**एतद्धीति** । मात्रास्पर्शेच्छया आतुरचित्तानां हरिचर्याऽनुवर्णनमेव भवसिन्धुप्लवो दृष्टः । **एतदिति** । स्वक्रियमाणसमानम् । हीति पूर्वोक्ता हेतव उक्ताः । मां मायां त्रायन्त इति मात्रा विषयाः । तेषामपि स्पर्शमात्रम् । शब्दैर्व्यङ्गेन च महापातकत्वं सूचितम् । हरिचर्यानुवर्णने न तेषां श्रवणं भविष्यति । अन्यथा महारोगस्य सञ्जातत्वात्क्वापि परलोकसाधने न प्रवृत्तिः । प्रवृत्तावपि तस्य रोगजनकत्वम् । ज्वरमध्ये भक्षितपथ्यादेरिव । श्रवणस्य तु न मात्रासाधकत्वम् । प्राप्तेऽपि विषये इच्छाया निवृत्तित्वात्(?)मुहुरित्युक्तम् । अयं तु सुखेनैव संसारतारको मयैव दृष्टः । साधनतामनूद्य रूपमाह—**हरिचर्यानुवर्णनमिति** ॥ ३४ ॥

---

१ देवकृतोऽपीति क. २ विभूषितेति क. ख. ग. ङ. ३ सम्भवतीति ग. ४ कोऽत्रेति घ. ५ शब्दव्याजेनेति क. घ. ङ. ६ हरिचर्यानुवर्णने तेषामिति क. ग. घ. ङ. ७ चेति ग. घ.



तस्य दृष्टोपायत्वं वदन् साधनान्तराणामतथात्वमाह—

**यमादिभिर्योगपथैः कामलोभहतो मुहुः ।**
**मुकुन्दसेवया यद्वत्तथाऽऽत्माऽद्धा न शाम्यति ॥ ३५ ॥**

**यमादिभिरिति** । चित्तसाधनार्थमेव योगः प्रवृत्तः । **"योगश्चित्तवृत्तिनिरोध"** इति । तथापि स्वस्थे चित्ते तत्सम्भवः । प्राणिनां त्वन्तःकरणं मृतमस्ति । कामेन ज्वालितो लोभेन प्लावितः । तस्य हि मृतसञ्जीविकया विद्यया जीवनं भवति । यमादयश्च योगमार्गाः । तत्र यथलितुं शक्तस्तस्येष्टसिद्धिः । मुहुश्चाऽयं हत इति कामलोभपरवशत्वम्[1] । उभयोर्बीजमन्तः क्रोधादेर्बहिरिति तयोर्ग्रहणम् । संसारमग्नानां मोक्षदातृत्वान्मृतसञ्जीवकत्वं मुकुन्दत्वम् । सेवा तु रोगनिवर्तिका । श्रवणेन चाऽन्तः प्रविशति भगवान् । तत्र चित्तं सेवां भावयति । अतः श्रवणप्रकरणेऽपि सेवोक्ता । यद्यपि भगवदाश्रितो योगोऽपि क्रमेण तथा करोति । सेवा त्वद्धा साक्षात् । योगसेवापेक्षयाऽपि योगेशसेवाया उत्तमत्वात् । **आत्मेति** । सजातीयस्य शीघ्रशामकत्वमित्यन्तःकरणस्याऽऽत्मपदप्रयोगः ॥ ३५ ॥

इतोऽपि किञ्चिद्रहस्यं भविष्यतीत्याशङ्क्योपसंहरति—

**सर्वं तदिदमाख्यातं यत्पृष्टोऽहं त्वयाऽनघ ।**
**जन्मकर्मरहस्यं मे भवतश्चाऽऽत्मतोषणम् ॥ ३६ ॥**

**सर्वं तदिति** । स्वत एव नारदो महानिति लोके प्रसिद्धिः । मया त्वेतावान् क्लेशोऽनुभूत इति रहस्यम् । तत्राऽपि चित्तोद्वेगे हेतुरुक्तः सर्वत्र भगवान् हेतुरिति । कथने हेतुः—**आत्मतोषणमिति** । भगवत्प्रीतिहेतुरन्तःसुखजनकं वा ॥ ३६ ॥

नारदस्याऽद्याऽपि साधनपरत्वमिति[1] ख्यापयितुमाह—

**सूत उवाच—**

**एवं सम्भाष्य भगवान्नारदो वासवीसुतम् ।**
**आमन्त्र्य वीणां रणयन्ययौ यादृच्छिको मुनिः ॥ ३७ ॥**

**एवमिति** । भगवानिति प्रत्युपकारानपेक्षा । **वासवीसुतमिति** अनुगमनाद्यभावात् । पूर्वोक्तं सम्भाषणशेषत्वेनाऽनूद्य, **आमन्त्र्य** गच्छामीत्युक्त्वा, भक्तिमार्ग एव मार्ग इति ख्यापयितुं वीणां रणयन्ययौ । **यादृच्छिक इति** पुनरागमनसम्भावनाऽभावः । मुनित्वात्कार्यं सर्वं कृत्वा गतः ॥ ३७ ॥

गते तु तस्मिन्नस्याऽपि हृदये भक्तिमार्गः समागत इत्यभिप्रायेण नारदवर्णनमाह—

**अहो देवर्षिर्धन्योऽयं यत्कीर्तिं शार्ङ्गधन्वनः ।**
**गायन्माद्यन् गिरा तन्त्र्या रमयत्यातुरं जगत् ॥ ३८ ॥**

**अहो इति** । **देवर्षिरिति** दृष्टफलसिद्धिः । **गायन्माद्यन्निति** स्वतन्त्रभक्तिः । **अयमेव परोपकार इति** ज्ञातवान् । तदाह— **रमयतीति** ॥ ३८ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षित-
विरचितायां प्रथमस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥

---

१ साधनत्वपरत्वमिति ग.

# सप्तमोऽध्यायः।

एवं त्रिभिर्मध्यमस्य स्वातन्त्र्येण निरूपणात्।
नारदव्याससंवादे निरूप्याऽथोत्तमाऽभिधा ॥ १ ॥
त्रयोदशभिरध्यायैः साधकोऽयं प्रजापतिः।
स्वतश्च उत्तमस्यैव सोऽधिकोऽयं निरूप्यते ॥ २ ॥
द्वादशाङ्गैश्च सहितो ह्यधिकारो निरूप्यते।
हेतुः षड्भिर्विरक्तिश्च तथा स्वातन्त्र्यमन्तिमे ॥३ ॥
हेतुस्तु द्विविधः प्रोक्तः सामान्यः स त्रिधा मतः।
विशेषः पञ्चधा प्रोक्तः सप्तमे त्रितयं जगौ ॥ ४ ॥

अत्र ह्युत्तमोऽधिकारो निरूपणीयः स्वतन्त्रतया कथाश्रवणकीर्तनरूपः। स च हेतुवैराग्याभ्यां सहित उत्तमो भवति। हेतुर्भगवान्महता क्लेशेन भागवतश्रोतारं पालितवान्। यस्तु सर्वोत्तमः, सर्वमृग्यः, सर्वेषां मुक्तिदाता, सर्वेषां ज्ञानदः, सर्वेषां सर्वदुःखनिवृत्तिपूर्वकभक्तिप्रदो, भक्तमनोरथपूरकश्च, स स्वयमुद्यम्य महता प्रयत्नेन यं पालयति स मूलतो भागवतश्रवणे मुख्याधिकारी। एवं षड्भिरध्यायैर्निरूप्यते। यस्याऽधिकारी निरूपणीयः प्रथमं स निरूपणीयः। तद्भक्ता च। अतः सप्तमेऽध्याये भागवतोत्पत्तिप्रवृत्ती भक्तानां मनोरथपूरणं च निरूप्यते। तत्र प्रथमं शौनको भागवतोत्पत्तिप्रश्नमाह—

शौनक उवाच—

निर्गते नारदे सूत भगवान्बादरायणः।
श्रुत्वा तु तदभिप्रेतं ततः किमकरोद्विभुः ॥ १ ॥

**निर्गत इति।** भगवानिति सहजशक्तिः। बादरायण इत्यागन्तुकतपश्शक्तिः। बदरफलेन वर्तमानो बादरायणः। तदभिप्रायं भगवद्गुणानां याथात्म्यप्रतिपादकंग्रन्थकरणम् ॥ १ ॥

नारदवचनानन्तरं भगवदिच्छानिर्द्धारार्थं समाधिं कृतवान्। तत्र शुद्धे देशे भगवदाविर्भावः शुद्धिश्च देवयजन इति व्यासनिवासस्थानस्य देवयजनत्वमाह—

सूत उवाच—

ब्रह्मनद्यां सरस्वत्यामाश्रमः पश्चिमे तटे।
शम्याप्रास इति प्रोक्त ऋषीणां सत्रवर्द्धनः ॥ २ ॥

**ब्रह्मनद्यामिति।** सामीप्ये सप्तमी। ब्रह्मदैवत्यां सरस्वत्यामिति तत्रैव वेदादिविद्यास्फूर्तिः

१ उत्तमश्चैवेति ख. २ साधकोऽयमिति क. घ. ३ ग्रन्थतम इति घ. ४ यस्याऽधिकार इति घ. ५ प्रतिपादकमिति ख. ग.



सहजो। **पश्चिमे तट इति।** पुरतो नदी देवयजने भवति। पुरो हविश्च। तद्देवयजनम्। किञ्च। **शम्याप्रास इति प्रोक्तः।** शम्या प्रास्यते अस्मिन्निति शम्याप्रासः। तदग्नेः प्रियं धाम भवति। तदेवाऽग्निः स्वस्थानादाशम्याप्रासादपक्षा(?)इति। यदि परस्तरामपक्षायेदिति(?)वा। शम्या प्रास्यते अस्मादिति वा। तस्य स्थानस्य बलमाह। ऋषीणां सत्रं वर्द्धयतीति ॥ २ ॥

एवं देवयजनत्वं निरूप्य तत्र व्यासस्य समाधिमाह—

तस्मिन् स्व आश्रमे व्यासो बदरीषण्डमण्डिते।
आसीनोऽप उपस्पृश्य मनः प्रणिदधौ स्वयम् ॥ ३ ॥

**तस्मिन्निति। स्व आश्रम इति।** अपराधीनत्वेन निर्भयचित्तप्रसादहेतौ। **व्यास** इत्यधिकारी। बदरीखण्डमिति(?)वा पाठः। बदरी अमृतदरी परमानन्ददायिनी। तस्याः षण्डः समूहः। खण्डो वा। तेन च मण्डिते। अनेन तपःस्थानं मोक्षस्थानं च तदिति सूचितं भवति। तस्मिन्नासीनः। सर्वदेवताप्रसादाय चाऽऽचमनम्। **"यत् त्रिराचामति तेन ऋचः प्रीणाती"**ति श्रुतेः। योगेन साधितं मनः। तदुक्तमार्गव्यतिरेकेण स्वतन्त्रतया यदत्र भगवतोऽभीष्टं तत्स्फुरिष्यतीति बुद्ध्वा स्वयं मनः स्थिरीकृतवान् ॥ ३ ॥

तदा समाधिभाषाविषयाः पदार्थाः स्फुरिता इति तान्वर्णयितुं प्रथमं तदाधारं वर्णयति—

भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले।
अपश्यत्पुरुषं पूर्णं मायां च तदुपाश्रयाम् ॥ ४ ॥

**भक्तियोगेनेति।** वायुवशात्स्थिरीभूतश्चेद्योगमार्गो, भक्तिमार्गेण स्थिरीभूतश्चेन्नारदवद्भगवत्स्फूर्तिरिति तदाह—**भक्तियोगेनेति।** निःकामत्वादमले। तत्र यद्दृष्टवांस्तदाह—**अपश्यदिति** द्वयेन। **साकारं ब्रह्म शुद्धं हि माया तच्छक्तिरुत्तमा। तया सर्वश्च सम्मोहः साक्षाद्भक्तिश्च मोचिके**ति। पूर्णं पुरुषं पुरुषोत्तमम्। जीवराशिभिराकीर्णं ब्रह्माण्डकोटिभिर्वा। मायां चाऽपश्यद्भगवदेकशरणाम् ॥ ४ ॥

तस्याः कार्यं चाऽपश्यत्—

यया सम्मोहितो जीव आत्मानं त्रिगुणात्मकम्।
परोऽपि मनुतेऽनर्थं तत्कृतश्चाऽभिपद्यते ॥ ५ ॥

**यया सम्मोहित इति।** यद्यपि प्रपञ्चोऽपि तस्याः कार्यं तथापि तत्र करणत्वेन तस्या अन्वयः। सम्मोहने तु कर्तृत्वेन। स्वातन्त्र्यात्। अतस्तदेवाऽऽह—**ययेति।** वस्तुतो जीवोऽपि ब्रह्मैवेति परोऽपि प्रकृतेर्नियामकोऽपि त्रिगुणात्मकं गुणत्रयभावापन्नं जडरूपं मन्यते। तत्कृतं चाऽनर्थं जन्ममरणादि प्राप्नोति ॥ ५ ॥

१ सहसा इति ग. घ. २ शम्याप्राश इति ग. ३ प्रास्यत इति क. ग. ४ शम्याप्राश इति ग. ५ प्राक्षेति ग. प्रक्षेति ख. ६ दपक्षायति इति क. ग. ७ प्रास्यन्त इति क. प्रास्यत इति ग. ८ षण्डेति ख. ९ नेति नास्ति ग. ङ. १० यतस्त्रिराचामतीति क. ११ स्थिरीभूत इति ख. घ. ङ. १२ स्थिरीभूत इति ख. घ. ङ.

तत्र निस्तारोपायं चाऽपश्यदित्याह—

**अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे ।**
**लोकस्याऽजानतो विद्वांश्चक्रे सात्वतसंहिताम् ॥ ६ ॥**

**अनर्थोपशममिति** । ज्ञानकाशया मायया मोह इति न ज्ञाने विश्वासः कर्तुं शक्यः । ननु साधनैरुत्पन्नं ज्ञानमकस्मादुत्पन्नं मायेति सन्देहो न भविष्यतीति चेन्न । साधनानामपि द्विरूपत्वात् । कार्त्स्न्येनाऽनभिव्यक्तत्वादिभिस्तन्निर्णयेऽपि न साक्षात्तस्याऽनर्थनिवर्त्तकत्वम् । यथा दर्पणे मुखं नास्तीति प्रतीतिदार्ढ्येऽपि दर्पणरूपदोषस्य विद्यमानत्वात्कदाऽपि न मुखाभावप्रतीतिः । दर्पणाभावश्च न ज्ञानसाध्यः । तथा मूलभूताया मायाया विद्यमानत्वान्न कदाऽप्यनर्थनिवृत्तिः । शास्त्रप्रामाण्येन ससाधने ज्ञानेऽपि जाते पुनर्मायया मोहः । "**ज्ञानिनामपि चेतांसी**"ति वाक्यात् । शास्त्रं तु भक्तिद्वारा साधकं वदति । साक्षाद्भक्त्या वा अनर्थनिवृत्तौ ज्ञानमिति । "**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते**" । **एवकारेण सर्वेषामनुपायत्वमाह हि** । अतः साक्षादनर्थनिवृत्तिहेतुर्भक्तिरेव । दृष्टे सा लौकिकी कर्म वेति तद्व्यावृत्त्यर्थम्—**अधोक्षज इति** । इन्द्रियातीते भक्तिः शास्त्रीयैव । अनेन वस्तुत एवमेव पदार्था नाऽन्यथेति बोधितम् । अन्यथापदार्थनिरूपणं तु ऋषीणां बुद्धिदोषात् । योगोऽपि राजसादिभिस्तद्भावापन्न इति न वस्तुयाथात्म्यं बोधयति । अन्यथा विवादो न स्यात् । तस्माद्भगवद्वाक्येन वेदेन वा संवादी योगजधर्मः पदार्थयाथात्म्यं बोधयति नाऽन्यः । तस्मान्नारदवाक्येन फलसंवादिना भगवद्वाक्येन संवादियोगात्प्रमाणमिति ज्ञात्वा अजानतो लोकस्याऽर्थे स्वयं युक्तिसहितं ज्ञात्वा **सात्वतसंहितां** भगवत्प्रोक्तपदार्थप्रतिपादिकां वेदत्वाय संहितां चक्रे ॥ ६ ॥

ननु किमनया संहितया । पदार्थज्ञानैर्वा किम् । साधनकथनेऽपि प्राणिनां तथाऽधिकाराभावाद्व्यर्था संहिता । इत्याशङ्क्य तस्याः फलमाह—

**अस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे ।**
**भक्तिरुत्पद्यते पुंसः शोकमोहभयापहा ॥ ७ ॥**

**अस्यां वै श्रूयमाणायामिति** । भक्त्युत्पत्तिपर्यन्तमियं श्रोतव्या । इयं च दृष्टद्वारा भक्तिजनिका । दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात् । यथा चाऽस्या दृष्टोपयोगस्तदुपपादितं प्रथमश्लोके । **कृष्णे** । आविर्भूते भगवति । **परमपूरुषे** । सर्वप्रमाणसमन्वये कालादिनियन्तरि वा । भक्तिरुत्पद्यते स्वतन्त्रस्य । शोकमोहभयानि रजस्तमस्सत्त्वकार्याणि । तान्यपहन्तीति तथा । अनर्थनिवृत्तिर्दूरे । गुणकार्यमात्रमेव निवर्त्तत इत्यर्थः ॥ ७ ॥

एवं भागवतस्योत्पत्तिमुक्त्वा प्रचारमाह—

**स संहितां भागवतीं कृत्वाऽनुक्रम्य चाऽऽत्मजम् ।**
**शुकमध्यापयामास निवृत्तिनिरतं मुनिः ॥ ८ ॥**

**स संहितामिति** । संहितां भागवतीमित्यनुवादो बहुसंहिताकरणादन्यव्यावृत्त्यर्थः । अनुक्रमेण

1 तथैवि क.



शोधयित्वा आनुपूर्व्येण वा । इदमन्येन न प्रसृतं भविष्यतीति स्वसदृशं पुत्रमध्यापयामास । इदं दोषवता न प्रसृतं भविष्यतीति मननादवगत्य मुक्तं शुकमध्यापयामास । मुक्तोऽपि लीलया लोकानुवर्त्ती ईश्वरवत् । तेनाऽपि नाऽस्य प्रचारो भविष्यतीति तदर्थमाह—**निवृत्तिनिरतमिति** । कदाचिदपि प्रवृत्तिस्वभावत्वे तद्दोषेण सम्बन्धान्न भक्तिजनिका स्यात् । विषयावेशविष्ण्वावेशयोर्विरोधात् । एतच्च मननादवगतमतिविचारेण नाऽऽपाततः प्रतिपन्नम् । तदाह—**मुनिरिति** ॥ ८ ॥

ननु भागवतस्य विषयपरत्वे सति नाऽधिकार इति निवृत्तिनिरतो योजितः । स च न भागवतार्थं तथाविधः किन्तु ज्ञानार्थमिति तथा सति ज्ञाने प्रवृत्तिमात्रस्यैव बाधकत्वाद्यथा लौकिकी प्रवृत्तिस्त्याज्या तथा भक्तिमार्गानुसारिणी भागवतप्रवृत्तिरपि । तथाच व्यासः स्वकार्यानुरोधेन यद्यपि शुकं योजयति तथापि स कथं स्वकार्यविरोधे प्रवर्तेतेति पृच्छति—

**शौनक उवाच—**

**स वै निवृत्तिनिरतः सर्वत्रोपेक्षको मुनिः ।**
**कस्य वा बृहतीमेतामात्मारामः समभ्यसत् ॥ ९ ॥**

**स वै निवृत्तिनिरत इति** । भागवतस्य पाठः प्रवृत्तिरूपः । येनोपनयनवेदाध्ययनं नित्यमपि परित्यक्तम् । निवृत्तावेव नियतत्वात् । न च पितुर्भगवतो वाऽनुरोधात्पठतीति वाच्यम् । फलतो वा स्वरूपतो वा तदुपकारानपेक्षणात् । यद्यपि ईश्वरगुरूपकाररूपं ज्ञानमपेक्ष्यते तथापि ज्ञानबाधकप्रवृत्तिरूपोपकारं नाऽपेक्ष्यते । तदाह—**सर्वत्रोपेक्षक इति** । न च भ्रमाज्ज्ञानसाधनत्वेन भागवत पाठ इति ? तत्राऽऽह—**मुनिरिति** । मननमेव हि साक्षात्कारे एकवाक्यतयोक्तम् । अतः सम्भावितहेतूनामभावात्कस्य वा हेतोः बृहतीं स्वरूपतोऽर्थतश्च भावसहितार्थावबोधपूर्वकस्वाधीनोच्चारणपर्यन्तं कथमभ्यसत् । न च कौतुकाविष्टचित्तः । आत्मारामत्वात् ॥ ९ ॥

अत्रोत्तरमाह—

**सूत उवाच—**

**आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।**
**कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥ १० ॥**

**आत्मारामाश्चेति** । कौतुकसाधनाविद्यानिवर्त्तकत्वेन अन्यथासिद्धिर्नास्तीति विशेषणत्रयम् । चकारादन्यैर्न क्रियत इति न । किन्तु तेऽपि कुर्वन्तीत्यलौकिकत्वम् । अपिशब्दाद्भक्तिमार्गस्थिताः । मार्गान्तरस्थस्तु वक्तव्याभावात्प्रचारणेऽसमर्थ इति स योजितः । न तु मार्गस्याभावान्निवृत्तितात्पर्याच्च । उरुक्रम इत्यलौकिकसामर्थ्यम् । अलौकिकीं भक्तिं कुर्वन्तीत्यनुवादः । तत्रोपपत्तिः—**इत्थम्भूतगुणो हरिरिति** । भगवद्गुणाः प्रवृत्तिरूपा निवृत्तिस्वभावाः । परमानन्दरूपाश्च ज्ञानरूपाश्च । तस्माद्यः कश्चिद्यत्र कुत्रचिदासक्तो भगवद्गुणेषु रमत एव । सर्वप्रतिकृतिरूपत्वाद्गुणानां ज्ञानवशीकरणस्वभावाच्च ॥ १० ॥

1 अवगतमितीति घ. 2 निवृत्तीति क. ग. 3 नाऽपेक्षते इति क. 4 ज्ञानसाधनत्वेन वेति ख. ग. 5 प्रचारणासमर्थ इति ग. 6 प्रवृत्तिनिवृत्तिस्वभावा इति ग. ङ.

नन्वस्तु भगवद्गुणानां तादृशत्वम्। ग्रन्थे किमागतमित्यत आह—

**हरेर्गुणाक्षिप्तमतिर्भगवान् बादरायणिः।**
**अध्यगान्महदाख्यानं नित्यं विष्णुजनप्रियः॥ ११॥**

**हरेर्गुणाक्षिप्तमतिरिति**। गुणानामनुपनिबद्धानां स्वबुद्ध्या स्मरणे[1] कल्पनया क्लेशः। उपनिबन्धने तु सिद्धत्वात्सुलभं स्मरणमिति भगवद्गुणैर्वशीकृतमतिः सन्। आक्षेपान्नाऽन्यत्र प्रवृत्तिः। **मतिरिति** फलं गृहीतम्। तेनाऽन्यत्र विषयेन्द्रियसंयोगेऽपि न मत्युत्पत्तिरिति[2] भावः। एतज्जीवविचारेणोक्तम्। वस्तुतस्तु शुको महादेवः। तदाह—**भगवानिति**। कृतिप्रवृत्त्यर्थं विष्णुर्महादेवश्चाऽवतीर्णाविति। तदाह—**बादरायणिरिति**। अतो महदप्याख्यानमधीतवान्। नन्वनाहूतः स्वयं गत्वा कथं प्रचारितवान्? तत्राऽऽह—**नित्यं विष्णुजनप्रिय इति**। नित्यं विष्णुजनाः **प्रिया यस्य**। कामः कामिनीमिव भगवद्गुणाः स्वप्रतिष्ठार्थं भक्तं प्रापयन्ति। अतः सर्वदा ये भगवद्भक्ता अकृत्रिमनित्यवैष्णवास्ते प्रिया यस्येति। न हि स्नेहः सङ्गे हेत्वन्तरमपेक्षते॥ ११॥

**एवं** भागवतस्योत्पत्तिप्रवृत्ती निरूप्य **श्रोतुः** सर्वथा भगवदीयत्वाभावे न प्रतिष्ठितं भवेदिति गर्भसंस्कारमारभ्य भगवतैव स्वतेजसा परिपालित[3] इति वक्तुं पूर्वरूपस्य ब्रह्मास्त्रेण दाहं निरूपयितुं तादर्थ्यमपि वैष्णव एवेति तेषां पाण्डवानां सन्तत्यन्तरस्य दाहं निरूपयन् प्रकृतस्य दाहहेतुमाह—**परीक्षितोऽथे**त्यारभ्य यावदध्यायसमाप्ति। अश्वत्थाम्नो महदपमाननं हेतुः। पुत्रान्तरदाहस्तूभयत्र। संरक्षायामपमानने च। अपृष्टं नोच्यत इति पृष्टमनूद्य प्रतिजानीते—

**परीक्षितोऽथ राजर्षेर्जन्म कर्म विलायनम्।**
**संस्थाश्च पाण्डुपुत्राणां वक्ष्ये कृष्णकथोदयम्॥ १२॥**

**परीक्षित इति**। अथ भागवतनिरूपणानन्तरं तच्छ्रोतुः परीक्षितो बीजसंस्कारार्थं जन्म। कर्म धर्मरक्षार्थम्। भगवत्कार्यकरणात्। विलायनं भागवतश्रवणार्थं पुरुषत्रयशुद्ध्यर्थमप्रतिबन्धार्थं च। संस्थां पाण्डुपुत्राणां प्रथमत एव। चकाराद्धृतराष्ट्रस्याऽपि। अमुक्तत्वान्न सहोक्तिः। प्रतिबन्धकत्वं "**भ्रातॄणामेकजातानामि**"त्यभिप्रायेण। मुक्तावप्यतिदेशाच्चकारेण ग्रहणम्। अत एव पाण्डुपुत्राणामित्युक्तं न पाण्डवानाम्। कृष्णकथाप्रतिपादकत्वादेतेषां वचनम्। अन्यथा त्वसङ्गतिः। तदाह—**कृष्णकथेति**। कृष्णकथाया उदयो यत्रेति। न हीयं भगवतः स्वतश्चरित्ररूपा किन्तु नैमित्तिकी। अतो हेतुनिमित्तं स्वरूपोपकारिहेतुरिति तन्निरूप्यत इति भावः॥ १२॥

तत्र पुत्रान्तराणां मारणं वक्तुं हेतुमाह—

**यदा मृधे कौरवसृञ्जयानां वीरेष्वथो वीरगतिं गतेषु।**
**वृकोदराविद्धगदाभिमर्षभग्नोरुदण्डे धृतराष्ट्रपुत्रे॥ १३॥**

१ स्मरणकल्पनयेति ग. ङ. २ व्युत्पत्तिरिति ख. ङ. ३ परिपालितमिति इति क. ग.



**यदा मृध इति**। सृञ्जयवंशोत्पन्नो धृष्टद्युम्नः पाण्डवानां चमूपतिरिति स्वतः पाण्डवानां कौरवत्वेऽपि विरोधनिमित्तं द्रौपदीति पाण्डवानां धृष्टद्युम्नप्रवेशादयुक्तपरिहाराय च सृञ्जयानामित्युक्तम्। तेषां सम्बन्धिनां च मुक्तिरिति निरूपयति—**वीरगतिमिति**। "**द्वौ सम्मताविह मृत्यू**"इति वाक्यात्। अनेन पुत्राणामेवाऽन्यायमरणमिति शोकहेतुः सूचितः। **अथो** इति मध्ये भिन्नप्रक्रम[1]वचनात् "**पार्थास्त्रपूताः पदमापुरस्ये**"ति च निरूपितम्। दुर्योधनस्याऽयुक्तमरणमाह—**वृकोदरेति**। "**वृको दशविधः प्राण उदरे यस्य तिष्ठति। स वृकोदर इत्युक्तो भगवत्कार्यसाधक**"इति वाक्याद्भीमेन प्रक्षिप्तगदाया अभिमर्षणेन भग्ने ऊरू एव दण्डे यस्य। **दण्ड इति** ताडनहेतुः। द्रौपद्याः प्रदर्शनेन[2] दुःखजनकत्वात्। **धृतराष्ट्रपुत्र** इत्यन्धपुत्रत्वादविवेकित्वमुक्तम्॥ १३॥

अत एव तत्सेवकोऽप्यविवेकी जात इत्याह—

**भर्तुः प्रियं द्रौणिरिति स्म पश्यन्कृष्णासुतानां स्वपतां शिरांसि।**
**उपाहरद्विप्रियमेव तस्य जुगुप्सितं कर्म विगर्हयन्ति॥ १४॥**

**भर्तुरिति**। **द्रौणिरिति** वैरानुबन्धे मूलहेतुः। मातृपुत्रत्वात्स्वापः। [3]अनेकपुत्रत्वान्मातुर्ग्रहणम्। अत एव भगवता वंशार्थं ते न रक्षिताः। कृष्णा द्रौपदी। प्रसवमात्रं तस्या नोद्धार इति—**सुतानामिति**। कृष्णेति पदं—"**यो यच्छ्रद्धः स एव सः**" इति वाक्यात्तद्भावापत्तिं सूचयति। प्रदर्शनार्थं शिरसामुपाहरणम्। तेनाऽर्द्धदाहादतिदुःखम्। दुर्योधनस्याऽपि न[4] तन्मारणमभीष्टम्। लोकवाच्यता न दुर्योधने स्थिता। इदं तु लोका विगर्हयन्तीति तदाह—**विप्रियमिति**॥ १४॥

**माता सुतानां निधनं शिशूनां निशम्य घोरं परितप्यमाना।**
**तदाऽरुदद्वाष्पकलाऽऽकुलाक्षी तां सान्त्वयन्नाह किरीटमाली॥ १५॥**

माता द्रौपदी। रोदने मातृत्वमेव हेतुः। **शिशूनामिति** स्नेहाधिक्यम्। श्रवणादधिकक्लेशः। **घोरमिति** रात्रौ सौप्तिकपर्वकथा सूचिता। यदा अरुदत्तदा तां सान्त्वयन्निति सम्बन्धः। किरीटमाली अर्जुनः। एकस्मिन्नपि किरीटे किरीटबाहुल्यप्रतीतिः। बहुपुरुषवद्युद्धकरणाद्वेगाद्वा[5]। स्त्रीवशा अपि भक्ता भगवता परिपाल्यन्त इत्यर्जुनस्य प्रतिज्ञामाह। अथवा। तां सान्त्वयन्निति वचनान्न यथार्थत्वं प्रतिज्ञायाः॥ १५॥

शोकापनोदनं स्त्रिया भर्त्रा करणीयम्। तत्र तूष्णीमश्रुप्रोञ्छनमशक्तविषयम्। अप्रतीकार्ये च। तत्र मृतानां जीवनमशक्यं मारकवधस्तु शक्य इति तत्कृत्वा तत्राऽश्रुप्रोञ्छनं कर्तव्यमित्याह—

**तदा शुचस्ते प्रमृजामि भद्रे यद्ब्रह्मबन्धोः शिर आततायिनः।**
**गाण्डीवमुक्तैर्विशिखैरुपाहरे त्वाक्रम्य यत्स्नास्यसि दग्धपुत्रा॥ १६॥**

**तदेति**। क्रूरे हि क्रूरमश्रु प्रोञ्छ्यते। **शुच इति**। शोकाश्रूणि। पुनरनुद्गमाय[6] हेतुशब्दवाच्यता। ननु विपरीते किमुत्तरम्? तत्राऽऽह—**भद्रे इति**। तव वैधव्यलक्षणाभावान्न तथा भविष्यतीति भावः। **ब्रह्मबन्धोरिति**। ब्रह्म ब्राह्मणजातिः। बन्धुरेव कदाचिदागच्छति कदाचिन्नेति

१ भिन्नक्रमेति ख. २ प्रदर्शने इति ग. ३ अनेनैकपुत्रत्वादिति ख. ङ. अनैकपुत्रत्वादिति ग. ४ नेति नास्ति ङ. ५ युद्धकरणोद्वेगाद्वेति ख. ६ पुनरुद्गमायेति ग.

न सदा तस्य ब्राह्मण्यं तिष्ठति । देवविरोधित्वादसुरावेशाच्च। "दैव्यो वै वर्णो ब्राह्मणः । असुर्यः शूद्र" इति श्रुतेः। किञ्च। **आततायिनः**। "अग्निदो गरदश्चे" ति वाक्यात्—"आततायिनमायान्तमपि वेदान्तपारगम्। जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेदि"ति स्मृतेश्च न तद्वधे दोषः । बाणैरेव च्छित्वा समानयनं न स्पर्शः। दुष्टत्वात्। तथा करणे सामर्थ्यमाह—**गाण्डीवमुक्तै**रिति । शिरं आक्रम्य स्नानं क्षत्रियधर्मत्वेन वैरनिर्यातन उक्तम् । **दग्धपुत्रे**ति । सौप्तिक एव दाहः संस्कारदाहो वा । प्रथमः शोकाधिक्यहेतुः । द्वितीयः स्नानहेतुः । यदा स्नास्यसि तदा शुचः प्रमृजामीति सम्बन्धः । क्षत्रियत्वान्नाऽन्यवत्स्वभावतः शोकः । कामपराणामेव तत्र क्रोधपराणाम् ॥ १६ ॥

**इति प्रियां वल्गुविचित्रजल्पैः स सान्त्वयित्वाऽच्युतमित्रसूतः ।**
**अन्वाद्रवद्दंशित उग्रधन्वा कपिध्वजो गुरुपुत्रं रथेन ॥ १७ ॥**

एवं कथने हेतुः—**प्रिया**मिति । वल्गु मनोहरम्—आक्रम्य स्नास्यसीति । विचित्रम्—त्रिशिखेरुपाहर इति । **जल्पै**रिति स्त्रैणवाक्यम् । तत्तस्या अपि क्षत्रियत्वात्सम्यक्सान्त्वनम् । एतादृशकार्यसिद्धौ हेतुः—**अच्युतमित्रसूत** इति । अच्युतस्य मित्रमप्यच्युतमेव । तेन स्वरक्षा । सूतत्वात्कार्यसिद्धिः । अनु पश्चादाद्रवणं पलायनशङ्कया । पश्चादेव कवचपरिधानं धनुषश्च ग्रहणम् । धनुष उग्रत्वं वधपर्यवसायित्वात् । **कपिध्वज** इत्यतिसामर्थ्यं सूचितम्। अथवा । दंशित इति स्वरक्षा । उग्रत्वाद्धनुषः । कपिध्वजत्वाद्रथस्य । गुरुपुत्रमित्यनर्थपर्यवसायित्वम् । रथेनेति न स्वा शक्तिः ॥ १७ ॥

**तमापतन्तं स विलक्ष्य दूरात्कुमारहोद्विग्नमना रथेन ।**
**पराद्रवत्प्राणपरीप्सुरुर्व्यां यावद्गमं रुद्रभयाद्यथाऽर्कः ॥ १८ ॥**

दृष्टेऽपि न गतिर्मन्दा जाता ।ततो वधपर्यवसायित्वं ज्ञातम्। तदाह—**आपतन्त**मिति। सापराधत्वाद्दूरादेव दर्शनम् । क्षत्रियधर्माश्रितस्य युद्धोपस्थितौ प्रोत्साहो भवति । बालकवधात्तस्य पापेन मनस उद्वेगः । युद्धसाधनं रथः पलायनसाधनं जात इति **रथेने**त्युक्तम् । पलायने हेतुः—**प्राणपरीप्सु**रिति । येषां रक्षणार्थे नीचसेवा, पितृवधः, अन्याय्यकरणं चाऽङ्गीकृतं तेषां रक्षार्थं पलायनं किमाश्चर्यमिति । उर्व्यां यावद्गन्तुं शक्यते । यावन्नवधादिकं न व्यवधायि । योगमन्त्रादिना लोकान्तरगमनेऽपि निस्तारो न भविष्यतीति दृष्टान्तमाह—**रुद्रभयाद्यथाऽर्क** इति । यथाऽर्को—विद्युन्मालिनिराकरणे कृते स्वभक्तत्वाद्रुद्रस्य क्रोधो जातः । ततः शूलमुद्यम्य अर्कवधार्थं प्रवृत्तः । ततोऽर्कः पलायमानो भूमौ पतितः काश्यां लोलार्कसंज्ञो जातः । तथाऽयमपि लोकान्तरेऽपि परिभ्रमन् पतेत् । अतो भूमावेव यावद्गन्तुं शक्यते तावत्पलायितवानित्यर्थः ॥ १८ ॥

**यदाऽशरणमात्मानमैक्षत श्रान्तवाजिनम् ।**
**अस्त्रं ब्रह्मशिरो मेने आत्मत्राणं द्विजात्मजः ॥ १९ ॥**

१ शिरसा इति ग. शिरस इति घ. २ अन्याय्यकरणमिति ख. ३ पलायमिति क म. घ. ङ.



**अथोपस्पृश्य सलिलं सन्दधे तत्समाहितः ।**
**अजानन्नुपसंहारं प्राणकृच्छ्र उपस्थिते ॥ २० ॥**

तदा भयाच्छरणान्वेषणे भगवद्वैमुख्येन गच्छतीति कोऽपि महादेवादिर्न शरणमभूत् । पलायनं च कर्तुमशक्तः । अश्वानां श्रान्तत्वात् । तदा ब्रह्मशिरः ब्रह्मास्त्रं आत्मनः शरणं भविष्यतीति ज्ञातवान् । न विद्यते शरणं यस्य सः अशरणः । श्रान्ता वाजिनो यस्य । आध्यात्मिकं चाऽधिदैवं ब्रह्मास्त्रं द्विविधं मतम् । निवर्त्यमनिवर्त्यं च मन्त्रयोः सुप्रतिष्ठितम् । द्रोणाचार्येणाऽस्मै ब्रह्मास्त्रद्वयं दत्तम् । उपसंहारस्तु न शिक्षितः । शरीरे विद्यमान एव मृत्योः पालयिष्यतीति । इदानीमस्य उपसंहारज्ञानाभावेऽपि प्रयोगेच्छा द्विजात्मजत्वेनाऽदीर्घदर्शनाज्जाता । ततः पलायनं त्यक्त्वा भिन्नप्रक्रमेण आचमनं विधाय, समाहितः सन् देवतासान्निध्यार्थम् । उपसंहाराज्ञाने सन्धाने लोकक्षयात्स्वस्य महत्पापं भविष्यतीति ज्ञात्वाऽपि प्राणकृच्छ्र उपस्थिते अयुक्तमप्यापदि कर्त्तव्यमिति बुद्ध्वा तत्सन्दधे ॥ १९ ॥ २० ॥

ततो यज्जातं तदाह—

**ततः प्रादुरभूत्तेजः प्रचण्डं सर्वतोदिशम् ।**
**प्राणापदमभिप्रेक्ष्य विष्णुं जिष्णुरुवाच ह ॥ २१ ॥**

**ततः प्रादुरभूत्तेज** इति । प्रचण्डमप्रतिक्रियम् । प्रचण्डमित्यादि भिन्नं वाक्यम् । सर्वतो दिशमर्जुनस्य । अत एव प्राणापदम् । द्रौणेरिदमस्त्रमित्यज्ञात्वा किञ्चिदन्यदेव दैवयोगान्नाशकमुपस्थितमिति तदपनोदनार्थं तत्स्वरूपज्ञानार्थं च भगवन्तं प्रष्टुं प्रथमं स्तौति । रक्षको हि विष्णुः । ज्ञाते प्रतीकरणसमर्थो जिष्णुरर्जुनः । हेत्वाश्चर्यम् । तस्मिन्दृष्टे मूर्च्छया भाव्यम् । तत्राऽसम्भ्रान्तो भगवन्तं स्तौतीति ॥ २१ ॥

चतुर्विधपुरुषार्थसिद्ध्यर्थं चतुर्भिः श्लोकैः स्तौति **कृष्णकृष्णेत्यादिभिः**—

**अर्जुन उवाच—**

**कृष्ण कृष्ण महाबाहो भक्तानामभयङ्कर ।**
**त्वमेको दह्यमानानामपवर्गोऽसि संसृतेः ॥ २२ ॥**

आदरे वीप्सा । भयाद्वा द्विरुक्तिः । महान्तो बाहवो यस्य । इन्द्रादयो वा बाहवो यस्य । अनेन क्रियाशक्तेराधिक्यमुक्तम् । पालकत्वं वा । सामान्यतः सर्वेषां पालकत्वमुक्तम् । भक्तान् प्रति विशेषेण पालकत्वमाह—**भक्तानामभयङ्करे**ति । अन्येषामुपस्थिते भये परिपालनं करोति । भक्तानां तु अभयमेवोपस्थापयति न भयम् । किञ्च । त्वत्तो दूरे स्थिता दह्यमाना भवन्ति । दाहेष्वपि महान् संसारदाहो जन्ममरणरूपः । तस्य त्वमपवर्गः । संसृतेर्हेतोर्दह्यमानानामेकस्त्वमेवाऽपवर्गः । "आ ब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन । मामुपेत्याऽथ कौन्तेय पुनर्जन्म न विद्यते" इति ॥ २२ ॥

१ अध्यात्मिकमिति ख. ग. २ त्रिविधमिति ग. ३ स्मृतमिति घ. ङ.

**स्वमाद्यः पुरुषः साक्षादीश्वरः प्रकृतेः परः ।**
**मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि ॥ २३ ॥**

अत्रोपपत्तिं श्लोकद्वयेनाऽऽह । **स वै पतिः स्यादिति** न्यायेन प्रथमतः स्वस्य सर्वदोषाभावस्तदनु परस्य दोषदूरीकरणमिति । तत्र दोषाः पञ्चविधाः । कर्मजाः कालजाः स्वभावजा मायोद्भवा देशोद्भवाश्चेति । ते क्रमेण निवार्यन्ते । कर्मापेक्षयाऽप्याद्यत्वात्स्वतन्त्रत्वेन तदधीनत्वाभावाच्च न तस्मिन्कर्मजाः । किञ्च । सर्वेषामयं नियामकः । कालश्च । तत्र कालस्तु स्वोद्भवशरीरादिद्वारा तदध्यासे जाते नियामकः । भगवांस्तु साक्षादात्मनामपि । अतः कालस्याऽपि नियामक इत्युक्तं भवति । तेन न कालजाः । प्रकृतिनियामकत्वाच्च न प्राकृताः । भगवतस्तु बहवः शक्तयः सन्त्यन्योन्यविरुद्धास्तत्तत्कार्यार्थं निर्मिताः । तत्र यस्यामेवाऽऽसक्त्या क्रीडायां क्रियमाणायां तद्दोषप्रादुर्भावः सम्भाव्यते तदैव तद्विरुद्धशक्तिप्रादुर्भावनेन पूर्वान्(?)दूरीकरोति । तथा चिच्छक्त्या मायां व्युदस्य तिष्ठतीति न मायिकदोषसम्बन्धः । देशदोषस्तु न सम्भाव्य एव । सर्वधर्मास्पृष्टे केवल एवाऽऽत्मनि विद्यमानत्वात् । अतः स्वतः पञ्चविधदोषरहितः ॥ २३ ॥

अन्येषां दोषदूरीकरणं कैमुतिकन्यायेनाऽऽह—

**स एव जीवलोकस्य मायामोहितचेतसः ।**
**विधत्से स्वेन वीर्येण श्रेयो धर्मादिलक्षणम् ॥ २४ ॥**

**स एवेति** । पूर्वोक्तगुणयुक्त एव । मायामोहितचेतसो जीवस्य भ्रान्तस्य । भ्रान्त्या यदेव प्रार्थयते तदेव प्रयच्छसि किमुत भ्रान्तिदोषं दूरीकरोषीति । अनेन वस्तुत उत्तममनुत्तमं वा यदेव यः प्रार्थयते तदेव तस्मै प्रयच्छसीति सर्वाभीष्टदातृत्वमुक्तम् । अन्यथा सर्वेषामभजनीयः स्यात् ॥ २४ ॥

किञ्च । सामान्यत एतत्तव स्वरूपमुक्तम् । विशेषतस्तव स्वरूपविचारे अस्मदादीनां न किञ्चित्कर्तव्यमित्यभिप्रायेणाऽऽह—

**तथाऽयञ्चाऽवतारस्ते भुवो भारजिहीर्षया ।**
**स्वानाञ्चाऽनन्यभावानामनुध्यानाय चाऽसकृत् ॥ २५ ॥**

**तथाऽयमिति** । तथाऽयञ्चाऽवतारस्ते । यथा भवान् सर्वदोषरहितः सर्वाभीष्टदस्तथाऽवतारोऽप्ययम् । येषां मते भगवानेव साकार आनन्दमात्रकरपादमुखोदरादिः मायाजवनिकादूरीकरणेन प्रादुर्भूत इति तेषां न किञ्चिद्वक्तव्यम् । येषामपि मते स्वेच्छामये शरीरविशेषे भगवतोऽनन्तसूर्यप्रकाशस्य अयोगोलके वन्हेरिवाऽऽगमनमवतार इति तन्मतेनैवं कथनम् । तस्याऽवतारस्य प्रयोजनद्वयं सर्वजनीनम् । भुवो भारदूरीकरणं, वैष्णवशास्त्रे तु स्वानामनन्यभावानां निरन्तरानुध्यानार्थम् । उभयमर्जुनस्याऽभिप्रेतमित्युभयथाऽप्यस्माकं हितकरणम् । भूभारहरणसहायाद्भक्तत्वाच्च ॥ २५ ॥

**किमिदं स्वित्कुतो वेति देव देव न वेद्यहम् ।**
**सर्वतोमुखमायाति तेजः परमदारुणम् ॥ २६ ॥**

एवं स्थिते किमिदमकस्मादाविर्भूतमिति तत्कथयेत्याह । सर्वदिशत्वात्—**कुतो वेति** । न ज्ञायते

१ शापोद्भवा इति घ. २ करोतीति ग. ३ भगवानिति क. ग.



कुत्र वा मूलमिति । अवतारेऽपि तत्र न किञ्चिदज्ञातम् । देवकार्यसाधकत्वात् । तदाह—**देवदेवेति** । तथा त्वमपीत्याशङ्क्य अभक्तत्वान्नाऽहं वेद । लौकिकी तूपपत्तिरत्र न सम्भवति । यतः सर्वतोमुखमायाति । सूर्यादितेजोव्यावृत्त्यर्थम्—**परमदारुणमिति** ॥ २६ ॥

तत्रैतद्विषयकमज्ञानं द्विविधम् । स्वरूपतो धर्मतश्चेति । तत्र स्वरूपतस्तु त्वं वेदेति भगवानाह—

**श्रीभगवानुवाच—**

**वेत्थ त्वं द्रोणपुत्रस्य ब्राह्ममस्त्रं प्रदर्शितम् ।**
**नैवाऽसौ वेद संहारं प्राणकृच्छ्र उपस्थिते ॥ २७ ॥**

**वेत्थ त्वमिति** । गुरुपुत्रत्वाद्गुरुणा ब्रह्मास्त्रमस्मै दत्तं त्वत्समक्षम् । अतस्त्वं वेद । तदेवेदमिति तु जानीहि । ननु ब्रह्मास्त्राण्यपि बहूनि दृष्टानि प्रयुक्तानि च । कदाचिदपि नैवं दृष्टमिति चेत् ? तत्राऽऽह—**नैवाऽसौ वेद संहारमिति** । अतोऽनभिज्ञेन प्रयुक्तत्वात्सर्वतोमुखमायाति । तर्हि कथं प्रयुक्तवान् ? तत्राऽऽह—**प्राणकृच्छ्र उपस्थित इति** । पादद्वयमपि भिन्नं भिन्नं वाक्यम् ॥ २७ ॥

तर्हि किं कर्तव्यम् ? तत्राऽऽह—

**न ह्यस्याऽन्यतमं किञ्चिदस्त्रं प्रत्यवकर्षणम् ।**
**जह्यस्त्रतेज उन्नद्धमस्त्रज्ञो ह्यस्त्रतेजसा ॥ २८ ॥**

**न ह्यस्येति** । ब्रह्मास्त्रे ब्रह्मास्त्रमेव प्रयोक्तव्यम् । नाऽन्यत्तत्प्रतीकारमर्हति । अतोऽस्त्रज्ञो भवानुन्नद्धं ब्रह्मास्त्रतेजो ब्रह्मास्त्रतेजसैव जहि । त्वयाऽपि प्रयुक्तमेतादृशमेव तेजो भविष्यति । तेनाऽस्य प्रतीकार इति ॥ २८ ॥

एवं भगवतोक्ते यदासीत्तदाह—

**सूत उवाच—**

**श्रुत्वा भगवता प्रोक्तं फाल्गुनः परवीरहा ।**
**स्पृष्ट्वाऽपस्तं परिक्रम्य ब्राह्मं ब्राह्माय सन्दधे ॥ २९ ॥**

**श्रुत्वेति** । **परवीरहेति** सामर्थ्यम् । तं **परिक्रम्येति** कार्यसिद्धिः । अस्य ब्रह्मास्त्रस्य पूर्वब्रह्मास्त्रनिवर्तकत्वमेव । न तु प्रयोक्तृघातकत्वम् । तदुक्तम्—**ब्राह्मं ब्राह्मायेति** ॥ २९ ॥

ततो यज्जातं तदाह—

**संहत्याऽन्योन्यमुभयोस्तेजसी शरसंवृते ।**
**आवृत्य रोदसी खं च ववृधातेऽर्कवह्निवत् ॥ ३० ॥**

**संहत्येति** । उभयोस्तेजसी अन्योन्यं संहत्य मूलदाह्याय शरयोः संवेष्टिते भूत्वा द्यावापृथिव्यौ अन्तरिक्षं चाऽऽवेष्ट्य संवर्तकसूर्यसङ्कर्षणमुखानलवत् सर्वनाशार्थं ववृधाते ॥ ३० ॥

१ पदद्वयमपीति ख. २ एवकारो नास्ति ख.

एतयोर्निवृत्तौ हेतुमाह—

**दृष्ट्वाऽस्त्रतेजस्तु तयोस्त्रील्लोकान् प्रदहन्महत् ।**
**दह्यमानाः प्रजाः सर्वाः सांवर्त्तकममंसत ॥ ३१ ॥**
**प्रजोपप्लवमालक्ष्य लोकव्यतिकरं च तम् ।**
**मतं च वासुदेवस्य सञ्जहाराऽर्जुनो द्वयम् ॥ ३२ ॥**

**दृष्ट्वाऽस्त्रतेज इति ।** मिलितत्वादेकवचनम् । प्रजा दक्षादयः । अन्येऽपि । भगवत्सान्निध्यात् । अतः परमनुपसंहारे प्रलयो भविष्यतीति भगवदभिप्रायं ज्ञात्वा । लोकानां नाशं भूरादीनां च । सर्वोपकारार्थमेकगुरुत्वाद्द्वयमात्मन्येवोपसंहृतमित्याह—**सञ्जहारेति । तमिति** पूर्वोक्तदाहलक्षणम् । चकारात्स्वस्याऽपि । तेजोलाभाद्भगवतः सम्बन्धादप्येतन्मतमित्याह—**वासुदेवस्येति** ॥ ३१ ॥ ३२ ॥

**तत आसाद्य तरसा दारुणं गौतमीसुतम् ।**
**बबन्धाऽमर्षताम्राक्षः पशुं रशनया यथा ॥ ३३ ॥**

ततः स्वस्मिंस्तेजोद्वयसङ्क्रमणानन्तरम् । आसाद्य निकटे गत्वा । दूराद्वारुणपाशादिभिर्बन्धने महान्क्लेशो भवतीति । तरसा शीघ्रम् । प्रतिक्रियानवसराय । **दारुणमिति** बन्धने हेतुः । मरणं शापं मारणं वा ईश्वरभजनादि वा कुर्यादिति । ननु गुरुपुत्रं कथं बबन्ध ? तत्राऽऽह—**गौतमीसुतमिति ।** नाऽयं गुरोः सम्मतः पुत्रः । गौतमी तस्य माता । गौतमवंशोत्पन्नत्वात् । अनेन पुत्रस्नेहसम्बद्धभार्याप्रार्थनया राजसम्बन्धो मरणं च सूचितम् । **अमर्षताम्राक्ष इति ।** अनेन ब्राह्मण्यादयो न स्फुरिताः । अवश्यं बन्धनीय इति दृष्टान्तमाह—**पशुमिति ।** न हि पराजितः शत्रुरबध्वा त्यक्तुं शक्यते । अश्लक्ष्णया बन्धनं ध्वजस्तम्भे चेति । नीत्वा च परोक्षं मारणं तदभिप्रेतम् ॥ ३३ ॥

तस्य शिबिरे नयनमनुचितमिति भगवान्निषेधति—

**शिबिराय निनीषन्तं रज्ज्वा बद्धं रिपुं बलात् ।**
**प्राहाऽर्जुनं प्रकुपितो भगवानम्बुजेक्षणः ॥ ३४ ॥**

**शिबिरायेति ।** सर्प इवाऽयं न स्प्रष्टव्यः । स्पृष्टश्चेन्मारणीय एव । अपकृतस्तु सर्वथा मारणीयः । तत्र गते च न मारणं भविष्यति । अतोऽत्रैव मारणीय इत्यभिप्रायेणाऽऽह । नीतिकार्यविचारे मारणीयः । धर्मविचारे बन्धनीयोऽपि न । रिपुश्च गृहं न नेयः । बलाच्च न नेयः । तत्र असावधाने किञ्चिदपकुर्यादिति । शिबिरं कटकोत्तरणस्थानम् । **भगवानिति** सर्वमारकत्वं सूचितम् । **अम्बुजेक्षण इति** भक्तरक्षकत्वं सूचितम् । तस्मादेतद्वधे सर्वं सुस्थमिति नो चेद्वह कर्तव्यमित्यभिप्रायः ॥ ३४ ॥

---

१ च ज्ञात्वेति क. ग. घ. ङ. २ वासुदेवेति इति ख. ग. ३ ईश्वरभजनादिना इति क. ग. घ. ४ गौतमीसुत इतीति ख. ग. ५ अक्षणया इति ख. अश्लक्ष्णाया इति ग. रशनयेति घ. अक्षणया इति ङ. ६ मारणचेति ख. ग. ७ मरणमिति क. ग. घ. ८ विचारेणेति ग. ख.



तदेवाऽऽह—

## श्रीभगवानुवाच—

**नैनं पार्थाऽर्हसि त्रातुं ब्रह्मबन्धुमिमं जहि ।**
**योऽसावनागसः सुप्तानवधीन्निशि बालकान् ॥ ३५ ॥**

**नैनमिति ।** पृथा सम्बन्धिनी भक्ता चेति तथा वचनम् । मारणेऽपि दोषाभावे हेतुद्वयमाह—**ब्रह्मबन्धुमिति । अवधीदिति ।** पित्रादिभिरपकृते अनपराधिनः पुत्रस्य बध्वा नयनमुचितम् । न मारणम् । सुप्तस्य कस्याऽपि मारणमनुचितम् । निशि चोर एव मारयति न साधुः । बालकास्तु सर्वेषामेव अवध्याः ॥ ३५ ॥

विचारेणाऽस्य वध्यतां वक्तुं वध्यावध्यनिर्णयमाह—

**मत्तं प्रमत्तमुन्मत्तं सुप्तं बालं जडं स्त्रियम् ।**
**प्रपन्नं विरथं भीतं न रिपुं हन्ति धर्मवित् ॥ ३६ ॥**

**मत्तमिति ।** शत्रवोऽपि दशविधा अवध्याः । मत्तो मदिरादिना । प्रमत्तः असावधानः । उन्मत्तः पिशाचादिभिः । जडः स्वभावतः । अयं तु दशानां नाऽन्यतरः (?) । तस्माद्वध्यः । किञ्च । सुप्तबालयोर्वधादधर्मयोद्धा ॥ ३६ ॥

नन्वस्य भवत्वधर्मः । अयं तु कथं वध्यः । ब्राह्मणशरीरस्य पुरुषार्थसाधकत्वात् । तस्मादस्य सर्वपुरुषार्थवधे स्वस्याऽधर्म इति तत्राऽऽह—

**स्वप्राणान्यः परप्राणैः प्रपुष्णात्यघृणः खलः ।**
**तद्वधस्तस्य हि श्रेयो यद्दोषाद्यात्यधः पुमान् ॥ ३७ ॥**

**स्वप्राणानिति ।** यदयं न वध्यते तत्र को हेतुः ? प्रमाणनिषेधस्तु नास्ति । "**जिघांसन्तं जिघांसीयादि**" ति । ब्राह्मणे धर्मः प्रतिष्ठित इति यद्यवध्यः ? तदाऽस्मिन्धर्मो नास्ति । दयया चेदवध्यः ? तदैतद्वधे बहूनां प्राणिनां जीवनं भवति । अवधे त्वस्यैव । कश्चन देहादिनोपकारो भविष्यतीति तदपि नास्ति । तदाह—**तद्वधस्तस्य हि श्रेय इति ।** प्राणाःप्राणैः (?) जीवनं यस्य । तत्र प्राणैः प्राणजीवनमयुक्तम् । धर्मे तु युक्तम् । उभयतारकत्वात् । अवश्यमेकस्य प्राणस्य संक्षये स्वस्यैव युक्तः (?)। धर्म्यात् । तत्रापि प्रकर्षेण पोषणमयुक्तम् । बालानपि यो हन्ति सः अघृणः । घृणा कृपा तद्रहितः । खलः सूचकः । पिशुन इति यावत् । तस्माद्दुष्टवधः स्वस्य धर्मः । तस्याऽपि दुष्टशरीरे गते शरीरान्तरेण धर्मो भवतीति । पूर्वजीवनस्याऽधर्मैकसाधनत्वात् ॥ ३७ ॥

किञ्च । महतां प्रतिज्ञापालनं महान् धर्मः । त्वया च प्रतिज्ञातमित्याह—

**प्रतिश्रुतं च भवता पाञ्चाल्यै शृण्वतो मम ।**
**आहरिष्ये शिरस्तस्य यस्ते मानिनि पुत्रहा ॥ ३८ ॥**

**प्रतिश्रुतमिति ।** अर्थतोऽयमनुवादः—**आहरिष्य इति** ॥ ३८ ॥

---

१ दुर्मोरिति क. ख. घ. ङ. २ तस्मिन्निति ग. ३ प्राणापानौ इति क. घ. प्राणापानैः इति ङ. ४ उक्तमिति ग.

तस्मात्सर्वथा अयं वध्य इत्युपसंहरति—

**तदसौ वध्यतां पाप आततायात्मबन्धुहा ।**
**भर्तुश्च विप्रियं वीर कृतवान् कुलपांसनः ॥ ३९ ॥**

**तदसाविति ।** आत्मनः पुत्रान् बन्धूंश्च हन्तीति । स्वामिहिताचरणमपि न जातमित्याह—**भर्तुश्चेति ।** वंशे विद्यमाने तस्याऽप्युपकारो भवेत् । कुलद्वयकलङ्कजननाच्च । तस्मादस्य वधे कस्याऽपि नाऽपकारः ॥ ३९ ॥

तत्रैतानि वचनानि धर्मपरीक्षकाणीति सूतज्ञानात्सूत आह—

## सूत उवाच—

**एवं परीक्षता धर्मं पार्थः कृष्णेन चोदितः ।**
**नैच्छद्गुरुसुतं हन्तुं यद्यप्यात्महनं महान् ॥ ४० ॥**

**एवमिति ।** वस्तुतस्तु बन्धनमेवाऽयुक्तम् । धर्मं परित ईक्षितो वा । ईश्वरवचनोल्लङ्घनाभावाय वा । अर्जुनेन तथा ज्ञातमिति तदुक्तम् । "**कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते**" इति तु धर्मः । त्रयो ह्यत्र सन्ति । भगवानर्जुनोऽश्वत्थामा चेति । त्रिष्वप्येकैकोऽवध्यहेतुरस्ति । परीक्षा भगवति, महत्त्वमर्जुने, शिष्टे गुरुपुत्रत्वमिति ॥ ४० ॥

प्रकारान्तरेण शनैर्गृहे समागमनमाह—

**अथोपेत्य स्वशिबिरं गोविन्दप्रियसारथिः ।**
**न्यवेदयत्तं प्रियायै शोचन्त्या आत्मजान् हतान् ॥ ४१ ॥**

**अथेति ।** कार्यसिद्धौ हेतुपदं **गोविन्दे**त्युपसंहारेऽप्युक्तम् । अयं तु शत्रुहस्ते पतितो मृत एव । देहस्तु बाणस्थानीयः । प्रतिज्ञातं तु शिरः समानीतमिति न्यवेदयत् । शोकमध्य एव तस्या धर्मज्ञानमिति शोचन्त्या इत्युक्तम् । भार्याहितार्थं तु मारणम् । तत्तयाऽनुक्तत्वात्सन्देहादत्रैव समानीतः । आज्ञायां मारणीय इति निवेदनाभिप्रायः ॥ ४१ ॥

तस्यास्तु तथाऽऽहरणमेवाऽनभिप्रेतम् । दूरे मारणमित्याह—

**तथाऽऽहृतं पशुवत्पाशबद्धमवाङ्मुखं कर्मजुगुप्सितेन ।**
**निरीक्ष्य कृष्णाऽपकृतं गुरोः सुतं वामस्वभावा कृपया ननाम ह ॥ ४२ ॥**

**तथाऽऽहृतमिति ।** कर्मणि जुगुप्सितं युद्धे बालकमारणम् । तेन मुखाप्रदर्शनादवाङ्मुखत्वम् । कृष्णा द्रौपदी । वामो मनोहरः स्वभावो यस्याः । सर्वहितभावनात् । महत्त्वबुद्ध्या नमनाभावेऽपि अहो कष्टं ब्राह्मण्यमेतादृशे स्थाने पतितमिति कृपया ननाम । तस्याऽपि तद्दुःखदूरीकरणेच्छा कृपा । आश्वासेनहतुत्वान्नमनस्य तथात्वम् ॥ ४२ ॥

१ तद्बन्धूंश्चेति ग. २ ईक्षता वेति ख. ३ ज्ञानमिति ख.



**उवाच चाऽसहन्त्यस्य बन्धनानयनं सती ।**
**मुच्यतां मुच्यतामेष ब्राह्मणो नितरां गुरुः ॥ ४३ ॥**

यद्दिर्दुःखदूरीकरणार्थमुवाच च । असहन्ती परदुःखं दृष्ट्वा स्वयमपि दुःखिता । देहधर्माद्धर्मो महानिति तस्याः कृपाधिक्यमुक्तम् । सतीति धर्मस्वभावत्वम् । भर्तारमपि धर्मप्रमादे बोधयेदिति । षडङ्गसहितं धर्मवाक्यमाह—**मुच्यतामिति ।** द्विरुक्तिः सन्देहाभावाय अविलम्बाय च । तत्र हेतुः—**एष ब्राह्मण इति ।** एकस्मिन्धर्मिणि बहूनां धर्माणां स्थितावपि यो महान् धर्मः स आदरणीयः । धर्माङ्गं च देहो गौणः । धर्मश्च मुख्यः । देहविचारेण च शत्रुत्वम् । धर्ममूलं च ब्राह्मणः । तस्मात्तद्बलिष्ठमिति । किञ्च । धर्मे हि गुरुर्मूलम् । स च भगवान् । तन्मुखत्वाद्ब्राह्मणो गुरुः । लौकिकोपदेशकगुर्वपेक्षया भगवन्मुखस्याऽत्यन्तगुरुत्वान्नितरां गुरुः ॥ ४३ ॥

न्यायविरोधी धर्मो दुर्बल इति तदविरोधं वदन्ती लौकिकन्यायेनाऽपि गुरुत्वमाह—

**सरहस्यो धनुर्वेदः सविसर्गोपसंयमः ।**
**अस्त्रग्रामश्च भवता शिक्षितो यदनुग्रहात् ॥ ४४ ॥**

**सरहस्य इति ।** रहसि भवो रहस्यो मन्त्रः । विसर्गः अस्त्राणां मोचनप्रकारः । उपसंयम उपसंहारः । पुत्रादिष्वपि तथा अवचनात् । अस्त्रग्रामश्च ब्रह्मास्त्रादयः । न ह्येतत्पाठमात्रेण स्फुरति किन्तु कृपयेति तदाह—**यदनुग्रहादिति** ॥ ४४ ॥

स द्रोणो नाऽयमित्यत आह—

**स एष भगवान् द्रोणः प्रजारूपेण वर्तते ।**
**तस्याऽऽत्मनोऽर्द्धं पत्न्यास्ते नाऽन्वगाद्वीरसूः कृपी ॥ ४५ ॥**

**स एष इति ।** तस्यैतद्रूपत्वे हेत्वन्तरमाह—**भगवानिति ।** ब्रह्मविदो हि स्वेच्छया देहत्यागः । तत्र भवतामुपकाराय देहत्यागदशायां हतं पुत्रं श्रुत्वा तन्माभूदिति तद्रूपेणैवाऽहं जीविष्यामीति पितृशरीरं त्यक्तवान् । अतः स एवाऽयं द्रोणः । "**आत्मा वै पुत्रनामासी**"ति श्रुतेः । प्रजारूपेण च । निवृत्तिधर्मविरोधी च धर्मो न युक्त इति करुणामाह—**तस्याऽऽत्मनोऽर्द्धमिति ।** मूलरूपेऽप्यात्मनोऽर्द्धं पत्न्यास्ते । पुत्ररूपेण भर्ता जीवतीति पुत्रवतीनां न सहगमनम् । ततः स्वपुत्रवधे तस्या वैधव्याद्दशाऽभावाच्च महद्दुःखत्वात्तद्दर्शनेन करुणा । तदाह—**नाऽन्वगादिति ।** कृपायाश्चाऽधिष्ठात्री देवता सा । अतस्तस्याः कृपीति नाम ॥ ४५ ॥

व्यलीकं कापट्यम् । तदपि धर्मे बाधकम् । तस्मादस्य मोचनं निर्व्यलीकमिति तदाह—

**तद्धर्मज्ञ महाभाग भवद्भिर्गौरवं कुलम् ।**
**वृजिनं नाऽर्हति प्राप्तुं पूज्यं वन्द्यमभीक्ष्णशः ॥ ४६ ॥**

**तद्धर्मज्ञेति ।** यदि केनाऽपि प्रकारेण गुरुकुले दुःखप्रापणं तदा कृतो गुरुसेवालक्षणो धर्मः सक-

१ उवाचेति क. ग. घ. २ न्यायविरो[ध] इति घ. ङ. ३ वदन्तिति क. ख. ग. ४ उपकारदेहत्यागेति ग. ५ ततश्च पुत्रवध इति ग. ६ वैधव्यत्वादिति घ. ङ.

पद्यो भवति । तस्माद्धर्मे कापट्यं जानन्नपि यस्तथा करोति स न धर्मज्ञः । त्वं तु तद्विपरीतत्वाद्धर्मज्ञः । अतो—हे धर्मज्ञ ! किञ्च । महाभाग्येन गुरूणां सेवाकरणसामर्थ्यं भवति । तज्ञातेऽपि सामर्थ्ये यदि सेवां न कुर्यात्तदा महदभाग्यम् । त्वं तु तद्विपरीतः । हे महाभाग ! किञ्च । अन्यैर्गुरुकुले वृजिने प्राप्ते भवद्भिस्तद्दूरीकर्तव्यम् । तत्र तद्विपरीतं दृश्यते । भवद्भिरेव गौरवं कुलं वृजिनं प्राप्नोति । तन्न युक्तम् । तत्तथा नाऽर्हति । तत्र हेतुः—पूज्यं वन्द्यमिति । सर्वथा महद्भिर्गौरवं कुलं पूजामेवाऽर्हति । तत्प्रसादादेव महत्त्वस्य जातत्वात् । किञ्च । अनम्रतया पूजामपि नाऽर्हति । किन्तु सर्वदा नमनमप्यर्हतीत्यर्थः ॥ ४६ ॥

किञ्च । धर्मे ज्ञानाभावोऽपि बाधकः । "यदेव विद्यया करोती"ति श्रुतेः । ततः स्वस्मिन्निवाऽन्यस्मिन्नपि यः सुखदुःखे समे पश्यति तत्कृतो धर्मः । अन्यस्तु "धिषमधिया रचितो य"-इति वाक्यादधर्मप्रायः । तत एकपुत्रमरणेन रुदतां प्राणिनां यथाऽन्यो विनश्येत्तद्वदिदमित्याह—

मा रोदीदस्य जननी गौतमी पतिदेवता ।
यथाऽहं मृतवत्साऽऽर्त्ता रोदिम्यश्रुमुखी मुहुः ॥ ४७ ॥

**मा रोदीदिति ।** तद्दुःखेनाऽहमतिदुःखिता । अत एव मा रोदीदिति प्रार्थना । गौतमीति ऋषिवंशोद्भवत्वात्तद्रोदने महाननर्थ इति सूचितम् । स्वरूपतोऽपि सा महती । तदाह—**पतिदेवते**-**ति** । पतिव्रताया नयनजलं भूमौ पतेच्चेत्तदा निर्वीर्या भूमिर्भवतीति प्रथा । ननु पतिव्रता सर्वतत्त्वज्ञा । अतो न रोदनं करिष्यतीति तत्राऽऽह—**यथाऽहमिति** । विषय एव तादृशो न तत्त्वज्ञानेन निवर्तत इत्यर्थः । यथा वह्निदाहकाले ज्ञातेऽपि दाहे वेदना भवत्येवेति भावः ॥ ४७ ॥

यैः कोपितं ब्रह्मकुलं राजन्यैरजितात्मभिः ।
तत्कुलं प्रदहत्याशु साऽनुबन्धं शुचाऽर्पितम् ॥ ४८ ॥

धर्मस्त्वीश्वराऽविरोधी भवति । तत्र धर्मप्रवर्तकत्वाद्ब्राह्मणा ईश्वरा एव । तच्चेदन्यैः क्षत्रियादिभिः कोपयुक्तं क्रियेत तदाऽन्येषां कुलं साऽनुबन्धं विनाशयतीति महतामुपदेशादिदं वाक्यं महत् । महदाश्रयाविरोधेन च धर्मः कर्तव्य इति । तस्माच्छीघ्रं मुच्यतामिति सिद्धम् ॥ ४८ ॥

सूतस्तु द्रौपदीवाक्यमनूद्य सर्वसम्मत्या तत्तथेति स्थापयति **धर्म्यमिति** द्वाभ्याम्—

सूत उवाच—

धर्म्यं न्याय्यं सकरुणं निर्व्यलीकं समं महत् ।
राजा धर्मसुतो राज्ञ्याः प्रत्यनन्दद्वचो द्विजाः ॥ ४९ ॥
नकुलः सहदेवश्च युयुधानो धनञ्जयः ।
भगवान् देवकीपुत्रो ये चाऽन्ये याश्च योषितः ॥ ५० ॥

धर्मादनपेतं धर्म्यम् । एवं न्याय्यम् । निर्व्यलीकं निष्कपटम् । समं समबुद्ध्योक्तम् । महद्राजव-

१ तथा धर्मे इति ग. २ तद्विपरीतेत्यधिकः पाठः क. ग. ३ धिषधियेति ग. घ. ४ भूर्भवतीति ग. ५ विनश्यतीति क. ग. घ..



चनम् । एवं वाक्ये षड्गुणास्तत्र तथैव निरूपिताः । प्रथमतो राज्ञोऽभिनन्दने हेतुः—**धर्मपुत्र इति** । इयमपि तद्भार्येति तथाऽऽह । अत्र सम्मत्यर्थम् —**द्विजा** इति सम्बोधनम् । **नकुलः सहदेवश्चेति** चकारात्तथा । युयुधानः सात्यकिरर्जुनशिष्यः । अर्जुनश्च । गुरुशिष्ययोरेकत्र सम्मतिकथनं तथैव धर्मनिर्णय इति ख्यापनार्थम् । भगवतोऽत्राऽभिनन्दनं भक्तकृपया । तदाह—**देवकीनन्दन इति** । सर्वत्र देवकीनन्दनपदं भक्तवश्यताज्ञापनार्थम् । सर्वजनीनोऽयं धर्म इति ख्यापयितुं सर्वस्त्रीपुरुषाणां सम्मतमित्याह—**ये चाऽन्य इति** । योषित्पदमेतिमूढत्वख्यापनार्थम् । अतो न पुनरुक्तिः ॥ ४९ ॥ ५० ॥

धर्मो द्विविधः । तत्त्वसहितः प्रमाणसहितश्चेति । तत्र प्रामाणिका व्यवहारे तत्त्वसहितं धर्मं न मन्यन्ते । तत्र प्रमाणे मूलमासन्यः । सूत्रात्मकत्वात् । अतः सूत्रभूतवाक्यवचनाद्भीमो द्रौपद्युक्तं तत्त्वसहितं धर्ममनङ्गीकृत्य स्वयं स्वतन्त्रधर्मनिरूपणेन तद्वधार्थं प्रवृत्त इत्याह—

तत्राऽऽहाऽमर्षितो भीमस्तस्य श्रेयान् वधः स्मृतः ।
न भर्तुर्नाऽऽत्मनश्चाऽर्थे योऽहन् सुप्तान् शिशून् वृथा ॥ ५१ ॥

**तत्रेति** । अधर्मप्रतिपक्षत्वात्क्रोधः । दर्शनेनैव दैत्यभयं जनयतीति भीमः । तस्य रक्षणापेक्षया वध एव श्रेयान् । यतोऽयं निशि वृथैव सुप्तान् शिशूनहन् । एवमन्यदप्यविचारितं करिष्यतीति वधः श्रेयानित्यर्थः ॥ ५१ ॥

भगवांस्तूभयरूपं धर्ममुक्तवानिति द्रौपदीभीमयोः परस्परविरोधे उभयसमाधानार्थं क्रियाशक्तिद्वयाविर्भावाय भुजचतुष्टयाविर्भावं कृतवानित्याह—

निशम्य भीमगदितं द्रौपद्याश्च चतुर्भुजः ।
आलोक्य वदनं सख्युरिदमाह हसन्निव ॥ ५२ ॥
ब्रह्मबन्धुर्न हन्तव्य आततायी वधार्हणः ।
मयैवोभयमाम्नातं परिपाह्यनुशासनम् ॥ ५३ ॥

**निशम्येति** । चतुर्भुजो जात इति भिन्नं वाक्यम् । "परस्परविरोधे हि न प्रकारान्तरस्थितिः । नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः" इति परस्परैककार्यजननाय स्वयं तावच्च स्तम्भितवान् । अर्जुनस्तु सख्यपर्यन्तमागत इति तं ज्ञापयितुं तन्मुखं विलोक्य स्वाभिप्रायमाह । अर्जुनोऽपि मोहित इव जात इति हसन्निवे (?) त्युक्तम् । अन्यथा द्रौपदीवाक्यस्याऽभिनन्दितत्वात्सन्मानं कृत्वैव तं विसृजेत् । तथाचाऽग्रिमानर्थो न भवेत् । भीमवाक्यं वा श्रुत्वा मारयेत् । तथापि नाऽनर्थो भवेत् । अत उभयाकरणाद्भगवान्मोहयन्निवाऽऽह । एकं चेन्न करोषि तर्हि उभयात्मकं कुरु । ननु विरुद्धं कथमुभयं कर्तुं शक्यमिति चेत् ? तत्राऽऽह—**मयैवोभयमाम्नातमिति** । भगवता ह्युभयात्मकं वस्तु दृष्ट्वोभयमाम्नातम् । अन्यथा अनाप्तत्वप्रसङ्गात् । तज्ज्ञात्वा मया समाम्नातम् । तज्ज्ञात्वा मत्स-

१ वाक्यं इति ग. वाक्ये इति नास्ति ख. २ योषित्पदमतीति ग. घ. ङ. ३ ज्ञापनार्थमिति क. ग. ४ दर्शोऽहमिति ग. ५ अहनदिति ग. ६ भाव इति ग. ७ परस्परविरोध इति क. ग. घ. ङ. ८ विरोध इति ग. ९ परस्य कार्येत्यादि. ख. १० समागत इति ख. ११ तमिति नास्ति ख. १२ ततो उभयेत्यादि ख. १३ एवमिति ग. १४ अनाप्तत्वेत्यादि क. ग.

खित्वात्त्वयाऽपि कर्तव्यम् । अन्यथा सखित्वं न स्यादित्यभिप्रायेणाऽऽह—**परिपाल्यनुशासनमिति** । परिपालय मदाज्ञाम् ॥ ५२ ॥ ५३ ॥

एतावता सर्वेषां सम्मतं भविष्यतीत्याह—

**कुरु प्रतिश्रुतं सत्यं यत्तत्सान्त्वयता प्रियाम् ।**
**प्रियं च भीमसेनस्य पाञ्चाल्या मह्यमेव च ॥ ५४ ॥**

**कुरु प्रतिश्रुतमिति** । स्वप्रतिज्ञा शिरसः समाहरणे । तच्छिरोमणिहरणेन पालितं भविष्यति । **भीमसेनस्य** प्रियं वधेन । तद्वपनादिना पालितं भवति । द्रौपद्याश्च प्रियं मोचनेन । तदपि तेनैव पालितं भविष्यति । मह्यं च प्रियमुभयात्मककरणेन ॥ ५४ ॥

भगवत्कृपया अर्जुनः सर्वरूपमेकं ज्ञात्वा तथा कृतवानित्याह द्वाभ्याम्—

**सूत उवाच—**

**अर्जुनः सहसाऽऽज्ञाय हरेर्हार्दमथाऽसिना ।**
**मणिं जहार मूर्द्धन्यं द्विजस्य सह मूर्द्धजैः ॥ ५५ ॥**
**विमुच्य रशनाबद्धं बालहत्याहतप्रभम् ।**
**तेजसा मणिना हीनं शिबिरान्निरयापयत् ॥ ५६ ॥**

**अर्जुन इति** । कृपाहेतुत्वात्—**सहसेति** । अथ तदनन्तरमेव । विमोचनात्पूर्वमसिना खड्गेन शिरसश्चूडामणिं शिखासहितं द्विजस्य हृतवान् । इदं तूभयात्मकम् । तदग्रे वक्ष्यते । त्र्यङ्गत्वादुभयात्मकस्य तृतीयमाह—**विमुच्येति** । पूर्वं रशनाबद्धस्य । तस्य तूष्णीम्भावे हेतुः—**बालहत्याहतप्रभमिति** । **तेजसा मणिना हीनमिति** । तृतीयसमीपे द्वयोरनुवादः । शिबिरात् स्वकटकात् । **निरयापयदिति** सतां स्थानान्निर्यापणेन सर्वत्रैव सत्सु तस्य प्रवेशो न भविष्यतीति ज्ञापितम् ॥ ५५ ॥ ५६ ॥

कृतस्य सर्वरूपस्य तथात्वं विवृणोति—

**वपनं द्रविणाऽऽदानं स्थानान्निर्यापणं तथा ।**
**एष हि ब्रह्मबन्धूनां वधो नाऽन्योऽस्ति दैहिकः ॥ ५७ ॥**

**वपनमिति** । हीति पूर्वोक्तप्रमाणादयोऽनुसन्धेयाः । ब्रह्मबन्धूनां दैत्यांशब्राह्मणानाम् । दैहिको देहच्छेदनात्मकः ॥ ५७ ॥

प्रासङ्गिके गते प्रस्तुतमुपसंहरति—

**पुत्रशोकार्दिताः सर्वे पाण्डवाः सह कृष्णया ।**
**स्वानां मृतानां यत्कृत्यं चक्रुर्निर्हरणादिकम् ॥ ५८ ॥**

**पुत्रेति** ॥ ५८ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां प्रथमस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

१ बन्धेनेति ख. २ भवतीति ग. घ. ङ. ३ त्रिरङ्गत्वादिति ख. त्रिसङ्ग वादिति ग. घ. ङ. ४ रसनाबद्धमिति ख.



# अष्टमोऽध्यायः ।

**एवं हि सर्वभक्तानां भगवद्वाक्यनिष्ठता ।**
**सर्वहेतुकथा येव सप्तमे विनिरूपिता ॥ १ ॥**
**अष्टमे यस्य वाक्यस्य करणाच्छुद्धि जायते ।**
**दोषश्चेत्तत्समाधानं गुणश्चेदाह पोषणम् ॥ २ ॥**

पूर्वाध्यायान्ते अश्वत्थाम्नोऽपमाननं निरूपितमनिवर्त्यब्रह्मास्त्रप्रक्षेपहेतुत्वेन । अष्टमे तु पदार्थचतुष्टयं निरूप्यते भगवतोऽद्भुतकर्मनिरूपणाय । ब्रह्मास्त्रदाहः । तस्य रक्षा । ततोऽद्भुतकर्मनिर्णयस्तोत्रम् । ततोऽद्भुतकर्म । तत्र प्रथमं ब्रह्मास्त्रप्रसङ्गमाह—

**सूत उवाच—**

**अथ ते सम्परेतानां स्वानामुदकमिच्छताम् ।**
**दातुं सकृष्णा गङ्गायां पुरस्कृत्य ययुः स्त्रियः ॥ १ ॥**
**ते निनीयोदकं सर्वे विलप्य च भृशं पुनः ।**
**आप्लुता हरिपादाब्जरजःपूतसरिज्जले ॥ २ ॥**

**अथेति** । शुद्ध्यनन्तरं हि संस्कारः कर्तव्यः । सा च शुद्धिर्बाह्याभ्यन्तरभेदेन द्विधेति प्रथमं बाह्यं शौचमाह द्वयेन । मृतानां प्रेतत्वविमोके हि जीवतां शौचम् । ततस्तेषां प्रथमं तद्विमोकहेतुक्रियामाह । दाहं कुरुक्षेत्र एव कृत्वा हस्तिनापुरे जलदानार्थं सर्वे गताः । ब्रह्मदण्डहता अपि यज्जलस्पर्शमात्रेण विमुच्यन्ते तत्र धर्मयुद्धे हता मुच्यन्त इति किं वक्तव्यम् । "**प्रत्तं जलं त्र्यञ्जलमात्ममज्जन प्रेतस्य तापं प्रशमं करोती**"ति तापापनोदार्थं जलमपेक्ष्यते । तथाच मूलभूततापत्रयनिराकरणार्थमपि एकहेलया जलं देयमिति निश्चित्य गङ्गायां गता इति निरूप्यते । अथेत्यवैरभावेन । **सम्परेतानामिति** सामान्यतः सर्वेषाम् । तत्राऽपि स्वानां बहुपुरुषसम्बद्धानामपि । तत्राऽप्युदकदायिनां सप्तमपुरुषसम्बद्धानाम् । तेषां मुक्तिदानार्थं भगवता सहेति **सकृष्णा** इत्युक्तम् । **स्त्रियः पुरस्कृत्येति** लोकाचारः । उदकं निनीय प्रेतेभ्यो जलं दत्वा । "**रोदनप्रियाः पितर**" इति विलप्य । येषां न खेदस्तेऽपि विहितत्वात्सर्वेऽपि विलापनं (?) कृतवन्तः । **भृशमिति** पुनर्विलापाभावाय । चकारादन्यदपि कर्तव्यं कृत्वा । पूर्वं जलदानार्थं कृतस्नाना अपि पुनः सर्वशुद्ध्यर्थं भक्त्यर्थं ज्ञानाधिकारार्थं च गङ्गायां स्नातवन्त इत्याह—**आप्लुता इति** । यद्यपि पूर्वमेव—"**तच्चरणपङ्कजाऽवनेजनाऽरुणकिञ्जल्कोपरंजिते**"ति वचनात्—"**धातुः कमण्डलुजलमि**"ति वचनाच्च सर्वमेव गङ्गाजलं तादृशं भवति तथापि नदीत्वेन जलान्तरस्पर्शसम्भावनया पूर्वस्नातजलं तादृशं भवति न वेति

१ भगवद्वाक्यनिष्ठतामिति क. ग. घ. ङ. २ कथायै चेति घ. ङ. ३ विनिरूपितमिति क. ग. घ ङ. ४ गुणत्वे दाहेत्यादि घ. ङ. ५ पूर्वाध्याय इति ख. ग. ६ प्रथममिति क. ङ. ७ सम्बन्धानामिति ग. ८ सप्तपुरुषेति ख. ग. घ. ९ मुक्ति दापनार्थमिति ख. १० येष्वपि येषामिति क. ग.

सन्दिह्योपरिभागे भगवन्तं स्थापयित्वा तच्चरणोदकेन स्नातवन्त इत्यर्थः । अनेन ते तदीया इति सर्वथा ज्ञापितम् ॥ १ ॥ २ ॥

एवं सर्वकर्तव्ये कृते तादृशेषु भगवता यत्कर्तव्यं तदाह **तत्राऽऽसीनमिति** द्वाभ्याम्—

> **तत्राऽऽसीनं कुरुपतिं धृतराष्ट्रं सहाऽनुजम् ।**
> **गान्धारीं पुत्रशोकार्त्तां पृथां कृष्णां च माधवः ॥ ३ ॥**
> **सान्त्वयामास मुनिभिर्हतबन्धून् शुचाऽर्पितान् ।**
> **भूतेषु कालस्य गतिं दर्शयन्नप्रतिक्रियाम् ॥ ४ ॥**

**आसीनमित्यव्यग्रत्वाय** । कुरुपतिं युधिष्ठिरम् । सहाऽनुजं विदुरसहितं भीमादिसहितं वा । तीर्थाटनकथा कल्पान्तरीया । स्त्रियः सर्वा एव पुत्रशोकार्त्ताः । अतः **पुत्रशोकार्त्तामिति** विशेषणं सर्वत्र । कृष्णा द्रौपदी । चकारात्सुभद्रादयः । स्त्रीणां सान्त्वने हेतुः—**माधव इति** । मायाः धवः । सर्वासामेव लक्ष्म्यंशत्वात् । सान्त्वनं वस्तुयाथात्म्यज्ञापनेन । **मुनिभिरिति** संवादार्थम् । हता बान्धवा येषाम् । शोकापनोदनं तत्त्वज्ञानाद्भवति । नन्वीश्वरेण सान्त्वनमनुचितम् । सर्वकर्तृत्वादित्याशङ्क्य—स्थापितकालरूपाधिकारिणस्तद्गृहे जातेषु दण्डादिकमीश्वरस्याऽप्यप्रतीकार्यम् । न हि स्त्रीपुत्रादिताडने राजदण्डो भवति । कालस्याऽपि भक्तत्वात्कदाचिद्भक्तानप्युपेक्षते इति सिद्धान्तमाह—**भूतेष्विति** । काले जातेषु । कलयतीति कालः । गतिं प्रवृत्तिम् । न विद्यते प्रतिक्रिया यस्याः ॥ ३ ॥ ४ ॥

एवमपि तदानीमक्रियमाणमपि भक्तानां हितमेव करोतीति ज्ञापयितुं लौकिकप्रतीत्याऽपि यद्धितं तत्करिष्यमाणमपि भगवदिच्छायां जातायां कृतमेव लोके नाऽभिव्यक्तमिति सिद्धान्तज्ञापनार्थं तन्निरूपयति **साधयित्वेति** द्वाभ्याम्—

> **साधयित्वाऽजातशत्रोः स्वं राज्यं कितवैर्हृतम् ।**
> **घातयित्वाऽसतो राज्ञः कचस्पर्शक्षताऽऽयुषः ॥ ५ ॥**
> **याजयित्वाऽश्वमेधैस्तं त्रिभिरुत्तमकल्पकैः ।**
> **तद्यशः पावनं दिक्षु शतमन्योरिवाऽतनोत् ॥ ६ ॥**

न जाताः शत्रवो यस्येति भक्तावुत्तमाधिकारो द्योतितः । दाने हेतुः—**स्वं राज्यमिति** । तत्राऽपि हेतुः—**कितवैर्हृतमिति** । कपटद्यूते दुर्योधनादिभिर्हृतम् । हस्तिनापुरराज्यमपि तथा । पाण्डोरेव राजत्वात् । अत एव **कितवैरिति** बहुवचनम् । ननु कालस्याऽप्रतिक्रियत्वे तेषामायुषो विद्यमानत्वात्कथं तद्घातनम्? तत्राऽऽह—**घातयित्वेति** । सर्वे हसन्तो राजानः । दुःशासनेन सहैक्यभावात् । कचस्पर्शो द्रौपद्याः । तेनैव क्षतमायुः सर्वेषाम् । निरपराधाया भक्तायाः प्राणानामुत्तमत्वादायुषः शिरसि विद्यमानत्वाद्बलिष्ठप्राणेन दुर्बलानां क्षतकरणं युक्तमेव । "**तरति मृत्युं तरति पा**-

१ भागेनेति ग. २ स्वकर्तव्य इति ग. ३ तद्गृहेष्विति क. ४ कदाचिदपीति क. ख. ५ इमो सिद्धान्ततामिति क. घ. ङ. इमं सिद्धान्तमिति ख. ६ स्वराज्यमिति ख. ग. ७ राज्यत्वादिति ख. ८ उत्तमादिति क. ग. घ. ङ.



**प्मानं तरति ब्रह्महत्यामि**"ति श्रुतेराहारपृथक्त्वपक्षेणाऽश्वमेधत्रयकरणम् । **उत्तमकल्पकैः** उत्कृष्टसाधनसहितैः । उत्तमं वा कल्पयन्तीति प्रायश्चित्तरूपैः । स्वसान्निध्यात्त्रिभिरेव (?) शताश्वमेधसमानयशोजनकत्वम् । त्रैलोक्येऽपि तस्य यशः । अनेनैकोपक्रमेण अश्वमेधत्रयं कृतमिति ज्ञातव्यम् ॥ ५ ॥ ६ ॥

एवं भगवतोऽत्रत्यलौकिकसर्वधर्मसमाप्तिसूचनायाऽभ्यनुज्ञामाह सार्द्धेन—

> **आमन्त्र्य पाण्डुपुत्रांश्च शैनेयोद्धवसंयुतः ।**
> **द्वैपायनादिभिर्विप्रैः पूजितैः प्रतिपूजितः ।**
> **गन्तुं कृतमतिर्ब्रह्मन् द्वारकां रथमास्थितः ॥ ७ ॥**

**आमन्त्र्येति** । बान्धवा ऋषयश्चाऽभ्यनुज्ञाकर्तारः पृथगुक्ताः । चकारादन्ये सर्वे । **शैनेयः** सात्यकिः । द्वैपायनादीनां स्वस्थत्वादभ्यनुज्ञातुल्ये(?)ऽपि पूजनमधिकम् । **ब्रह्मन्निति ब्राह्मणस्य** महान्कोप इति सूचितम् । रथारोहणपर्यन्तं स्वक्रिया । अग्रे यन्तुरश्वानां च ॥ ७ ॥

भक्तस्य कार्ये उपस्थिते प्रारब्धमपि स्वकार्यं त्यजतीति ज्ञापयितुं तस्मिन्समये उत्तरां दृष्टवानित्याह—

> **उपलेभेऽभिधावन्तीमुत्तरां भयविह्वलाम् ।**
> **पाहि पाहि महायोगिन् देवदेव जगत्पते ।**
> **नाऽन्यं त्वदभयं पश्ये यत्र मृत्युः परस्परम् ॥ ८ ॥**

**उपलेभ इति** । सा हि भक्तोत्तरा । अत एव **ब्रह्मास्त्रदर्शनं तस्याः प्रथमम्** । **मुख्यमेवाऽस्त्रमायसशरेण सम्बद्धमुत्तरां** प्रति गच्छति । तदनु तस्मादुद्गताः पञ्च शराः पाण्डवान् **प्रतिगच्छन्ति** । मूलोच्छेदेऽधिकव्यापारात् । अकौरववदपाण्डवमपि करिष्यामीति तस्याऽभीष्टत्वात् । **आभिमुख्येन** धावन्तीम् । भयविह्वलां वस्त्रादिष्वसावधानाम् । प्रारम्भाद्यभावादागच्छन्नेव(?)पाहीति **वचनादाद्वे**-त्याद्यनुक्तिः । तस्या भयोद्विग्नाया वाक्यमाह—**पाहि पाहीति** । कायवाग्भ्यामेकार्थप्रतिपादनाय न कर्मनिरूपणं शब्दतः । किन्त्वात्मानं प्रदर्शयन्(?)पाहीति वचनादात्मानं पाहीत्युक्तं भवति । **महायोगिन्निति** सामर्थ्यं प्रकारं च बोधयन्निव(?)सम्बोधयति । सर्वात्मकत्वेन शरपक्षपातेऽपि साम्प्रतं देवहितकर्तृत्वेन तन्निराकरणं युक्तमित्याह—**देवदेवेति** । रक्षकाभावाच्चाऽराजकराज्ये **सर्वरक्षार्थं च** गर्भो रक्षणीय इति सम्बोधयति—**जगत्पत इति** । कथं श्वशुरादिषु विद्यमानेषु मामेव प्रार्थयसे? इत्यत आह—**नाऽन्यमिति** । जगति त्वत्तोऽन्यमभयं भयरहितमेव न पश्ये । मृत्युव्याप्तत्वात् । अभीतो हि शरणयोग्यः । किञ्च । समानशीलव्यसनानां सख्यमपेक्ष्यते । तत्र परस्परघातकत्वमत्याश्चर्यम् । ततो ज्ञायते कश्चित्सर्वत्राऽऽविष्टो मारयतीति न तेषां शरणगमनं प्रयोजनायेत्याह—**यत्र मृत्युरिति** । अतस्त्वमेव शरणार्ह इति भावः ॥ ८ ॥

१ समासेरिति क. समासे इति ग. २ महान् कोध इति क. महत्कोध इति ग. ३ सूचनमिति ख. ४ भक्तावुत्तरेति ग. भक्ता उत्तरा उत्कृष्टेत्यर्थ इति घ. ५ आभिमुख्येनेति क. ग. ङ. ६ प्रदर्शयन्तीति घ. ७ बोधयन्तीवेति घ. ८ अराजकराज्यमिति घ. ङ. ९ युधिष्ठिरादिष्विति ख. १० अभितो हीति ख. ११ प्रयोजनापेक्षयेति क. प्रयोजनमपेक्षेति घ.

प्रस्तुतमाह—

**अभिद्रवति मामीश शरस्तप्तायसो विभो ।**
**कामं दहतु मां नाथ मा मे गर्भो निपात्यताम् ॥ ९ ॥**

**अभिद्रवतीति** । **ईशेति** प्रतिक्रियायां, मूलज्ञाने च **विभो इति** सम्बोधनद्वयम् । मृत्योरप्रतीकार्यपक्षे स मृत्युर्मां दहतु । मे गर्भो मा निपात्यताम् । योगबलाद्गर्भं पालय । अनेन भक्तरक्षा (?)गर्भरक्षैव मुख्या न मद्रक्षेति ज्ञापितम् ॥ ९ ॥

## सूत उवाच—

**उपधार्य वचस्तस्या भगवान् भक्तवत्सलः ।**
**अपाण्डवमिदं कर्तुं द्रौणेरस्त्रमबुध्यत ॥ १० ॥**

तप्तायसः शरः सत्यमागत इति तस्या वच उपधार्य निश्चित्य । उपधारणे हेतुः—**भगवानिति** । प्रतिक्रियायां हेतुः—**भक्तवत्सल इति** । अपमानितोऽश्वत्थामा तथा कृतवानित्याह—**अपाण्डवमिति** । इदं जगदपाण्डवं कर्तुं द्रोणाज्जातस्य अस्त्रमबुद्ध्यतेत्यर्थः । अथवा । एतस्य ब्रह्मशिरसो यदस्त्रत्वं क्षेपणधर्मत्वमपाण्डवं कर्तुमित्युभयथाऽपि पाण्डवनाशार्थमस्त्रं प्रयुक्तमिति ज्ञातवानित्यर्थः ॥१०॥

तस्मिन्नेव समये व्यसनान्तरमप्यागतमित्याह—

**तर्ह्येव च मुनिश्रेष्ठ पाण्डवाः पञ्च सायकान् ।**
**आत्मनोऽभिमुखान् दीप्तानालक्ष्याऽस्त्राण्युपाददुः ॥ ११ ॥**

**तर्ह्येवेति** । तर्ह्येव चेत्यव्ययसमुदायः परमाश्चर्यबोधकः । **मुनिश्रेष्ठेति** सम्बोधनं विश्वासात्संवादहेतुः । पञ्चेत्युभयत्र सम्बद्धम् । तथा सत्येकैकः सायक एकैकस्य स्थाने समागत इत्युक्तं भवति । आलक्ष्य दृष्ट्वा । द्रौणिरिति बुद्ध्वा वा । **अस्त्राण्युपाददुरिति** परलोकशुद्ध्यर्थं प्रतिक्रियार्थं वा । अस्त्राणि ब्रह्मास्त्रादीनि ॥ ११ ॥

अत्र भगवतोऽपि प्रतिक्रियाऽसामर्थ्याद्दूरापास्तं पाण्डवानामिति वक्तुं भगवान्स्वभक्तानां रक्षामेव कृतवान्नाऽस्त्रस्य प्रतिक्रियामित्याह—

**व्यसनं वीक्ष्य तत्तेषामनन्यविषयात्मनाम् ।**
**सुदर्शनेन स्वास्त्रेण स्वानां रक्षां व्यधाद्विभुः ॥ १२ ॥**

**व्यसनमिति** । न[1] अन्यो विषय आत्मनि येषाम् । स्वभावेन सर्वे विषया भवन्तु नाम । चित्ते तु भगवल्लक्षण एव विषयस्तेषामस्ति । अतः "**तद्वैमान्भूत्वाऽवती**[2]" ति विषयार्थमेव ते रक्षिताः । तत्र सुदर्शनचक्रमलातचक्रवत् शरपाण्डवानां मध्ये परिभ्रमति । अतस्तेन तेषां रक्षां कृतवान् । **स्वानामिति** तेषां रक्षायां हेतुः । **विभुरिति** सामर्थ्ये । स्वास्त्रपदेन बुद्धिपूर्वकरक्षाकरणत्वं सुदर्शनस्य सूचितम् ॥ १२ ॥

1 नकारो नास्ति ग. 2 तद्वैनानिति क. ङ.



प्रधान उत्तरागर्भे प्रकारान्तरेण रक्षामाह—

**अन्तःस्थः सर्वभूतानामात्मा योगेश्वरो हरिः ।**
**स्वमाययाऽऽवृणोद्गर्भं वैराट्याः कुरुतन्तवे ॥ १३ ॥**

**अन्तःस्थ इति** । गर्भं प्रविष्टस्याऽर्थस्य गर्भस्य रक्षार्थं[1] "**ओषधे त्रायस्वैनमि**"तिवन्मायया गर्भशरीरमावृतवान् । तत्र बहिः स्थितस्याऽऽवरणं न सम्भवतीति तदर्थं चत्वारि विशेषणानि चतुर्विधमायाव्याप्तिप्रतिपादकानि । तत्र मध्य एव भगवान् स्थितः सुवर्णतेजोवत्तं पालयतीत्याह—**अन्तःस्थ इति** । सर्वभूतानां मध्ये स्थितः । किञ्च । अन्यस्याऽन्यपालनं सर्वथा न सम्भवतीति गर्भरूपो भूत्वा पालितवानित्याह—**सर्वभूतानामात्मेति** । किञ्च । बहिरपि तच्छरीररक्षार्थमाह—**योगेश्वर इति** । योगबलेन स्वयं तत्र प्रविश्य शरीरास्त्रयोर्मध्ये स्थित्वा पालयतीत्यर्थः । अन्यथा ब्रह्मास्त्रशरीरसम्बन्धे दोषो वा सङ्क्रमेदिति । ननु किमित्येवंप्रकारैः पालयतीति चेत् ? तत्राऽऽह—**हरिरिति** । सर्वेषां दुःखहरणस्वभावत्वात्समुदायरक्षा त्वेतत्साध्या । स्वमायया स्वाधीनमायया । ब्रह्माण्डकोटिभ्रमनिवर्तकज्ञानाभ्यावरकरूपत्वान्मायायास्तयाऽऽवरणं युक्तम् । **वैराट्या इति** सम्बन्धात्तस्या उदरदाहोऽपि[2] यथा न भवति तथा कृतवानिति लक्ष्यते । उभयवंशयोर्भक्तत्वादेषा रक्षिते[3]त्याह—**वैराट्याः कुरुतन्तव इति** । तन्तुः परम्परा पालको वा ॥ १३ ॥

ननु ब्रह्मास्त्रं गर्भे प्रयुक्तं दाहैकस्वभावत्वात्तत्राऽसमर्थमन्यत्कुतो न दहति ? तत्राऽऽह—

**यद्यप्यस्त्रं ब्रह्मशिरः अमोघं चाऽप्रतिक्रियम् ।**
**वैष्णवं तेज आसाद्य समशाम्यद्भृगूद्वह ॥ १४ ॥**

**यद्यप्यस्त्रमिति** । सत्यमुक्तं सर्वदाहकमेतत् । महादेवस्याऽपि पिशाचत्वं यतो जातम् । तत् ब्रह्मशिरः ब्रह्मणः पञ्चमं शिरः । तस्य गुणद्वयं सहजम् । **अमोघम्** । सर्वदा कार्यं करोतीत्यर्थः । **अप्रतिक्रियं च** । न विद्यते प्रतिक्रिया प्रतिकूलक्रिया व्यावर्तकक्रिया वा यस्येति । तथापि किञ्चिदद्भुतं जातमित्याह—**वैष्णवं तेज आसाद्येति** । यथा व्याघ्रो मन्त्रबलेन गौर्भवति तथा परमसात्त्विकं वैष्णवं तेज आसाद्य प्राप्य सम्यगशाम्यत शान्तमभूत् । प्रोक्त[4]देहं प्रज्वाल्य भगवद्भावापन्नं वैष्णवं देहं ज्वालयितुं प्रवृत्तं सन्मध्ये वैष्णवं तेज आसाद्य तद्रूपं सत् तदैक्यं प्राप्तवदित्यर्थः । तत्र विश्वासार्थमाह—**हे भृगूद्वहेति**[5] । भृगुणा हि पूर्वं वैष्णवनिर्णयः कृतः । अन्यथा राजसास्तामसाश्च भक्त्या भगवत्सम्बन्धं प्राप्य सात्त्विका भूत्वा कथं भगवत्सायुज्यं[6] प्राप्नुयुः ॥ १४ ॥

नन्वस्तु जीवानां मुक्तियोग्यानां शास्त्रसिद्धत्वात्तथात्वम् । ब्रह्मतेजस्त्वचेतनं देवताधिष्ठितं मन्त्राधिकारिरूपं कथमन्यथा भवेत् । तथा सति भगवता युद्धे प्रयुज्यमानानां ब्रह्मास्त्रादीनां तथात्वं न स्यात् । अत्र च परीक्षितः पाण्डवानां च रक्षणान्महदाश्चर्यमिदं वृत्तमित्याशङ्क्याऽऽह—

**मा मंस्था ह्येतदाश्चर्यं सर्वाश्चर्यमयेऽच्युते ।**
**य इदं मायया देव्या सृजत्यवति हन्त्यजः ॥ १५ ॥**

1 गर्भरक्षार्थमिति क. ग. 2 तदाहेति ख. 3 रक्षेत्याहेति क. 4 प्राकृतं देहमिति क. घ. 5 भृगूणामिति घ. ङ. 6 सायुज्यमिति क.

**मा मंस्था इति** । एतदाश्चर्यं मा मंस्थाः । कर्तुमकर्तुमन्यथा कर्तुं समर्थत्वात् । न हि दृष्टान्तव्याप्त्यादिना भगवति पदार्थनिर्णयः कर्तुं शक्यते । "**अलौकिकास्तु ये भावा न तांस्तर्केण योजयेदि**" ति वाक्यात् । किञ्च । **सर्वाश्चर्यमये** । विरुद्धसर्वधर्माणामाश्रये भगवति अलौकिकसर्वपदार्थमये किमाश्चर्यम् ? न ह्येतदन्यस्योच्यते । किञ्च । **च्युतिरहितः** । स्वयमात्मन एवाऽऽत्मानं सर्वच्युतं करोति । तत्र किमेतदाश्चर्यमित्यर्थः । **किञ्च** । माया नाम काचिच्छक्तिः पूर्वं निरूपिता । सा च देवतामयी स्वरूपभूता । तया किल विश्वं सृजति अवति हन्ति च । एकं वस्त्वसहायमेकस्यैवाऽनेकभावं सम्पादयतीत्यर्थः । किञ्च । अज एव स्वयं जायते । विरुद्धधर्मसम्बन्धेऽपि न पूर्वधर्मनिवृत्तिः ॥१५॥

एवं भगवता सर्वे रक्षिताः । तत्र कुन्त्यादीनामेवं भ्रम उत्पन्नो वयं सर्वे विषयार्थं रक्षिता इति । तथा सति व्यर्थं रक्षणमिति मत्वा भक्त्युपयोगार्थमेतद्भवत्विति प्रार्थयितुं भगवन्तं स्तोतुमुपक्रमत इत्याह—

ब्रह्मतेजोविनिर्मुक्तैरात्मजैः सह कृष्णया ।
प्रयाणाभिमुखं कृष्णमिदमाह पृथा सती ॥ १६ ॥

**ब्रह्मतेजोविनिर्मुक्तैरिति** । स्वभगिनी तु स्वयमेव कृतार्थीकरिष्यति । उत्तरां च । अतो द्रौपद्या सह पुत्रैश्च सह प्रयाणाभिमुखमर्द्धं कार्यं कृत्वा गच्छन्तं वक्ष्यमाणमाह । तत्र हेतुः—**सतीति** । सतामयं धर्मो यद्भक्त्यर्थमेव सर्वं जीवनादि ॥ १६ ॥

**स्वरूपगुणलीलादिदुष्टदुर्ज्ञत्वलक्षणैः । जन्मकारणनिर्द्धारफलदैन्यनिजार्थनैः । हृषीकेशं पृथाऽस्तौषीन्नमस्कारपुरस्सरम् । सम्बन्धात्कृतहेलाऽज्ञा स्वरूपाद्यै भवच्छिदम्** । तत्र स्वरूपमाह त्रिभिः—

कुन्त्युवाच—

नमस्ये पुरुषं त्वाऽऽद्यमीश्वरं प्रकृतेः परम् ।
अलक्ष्यं सर्वभूतानामन्तर्बहिरवस्थितम् ॥ १७ ॥
मायाजवनिकाच्छन्नमज्ञाऽधोक्षजमव्ययम् ।
न लक्ष्यसे मूढदृशा नटो नाट्यधरो यथा ॥ १८ ॥
तथा परमहंसानां मुनीनाममलात्मनाम् ।
भक्तियोगविधानार्थं कथं पश्येम हि स्त्रियः ॥ १९ ॥

**नमस्य इति** । त्वा त्वाम् । श्रोत्रेयनमस्कारस्याऽनुचितत्वमाशङ्क्य स्वरूपमाह—**पुरुषमिति** नवभिर्विशेषणैः । एतादृशस्य ममाऽऽत्मत्वाद्भेदबोधकनमस्कारानौचित्यमाशङ्क्याऽऽह—**अज्ञेति** । एवमज्ञां त्वामात्मत्वेन ज्ञातुमेव नमामीत्यर्थः । दृश्यमानापेक्षयाऽनुचितत्वे शङ्किते परमार्थकथना-

१ व्याख्यादिनेति घ. २ आत्मान एवेति घ. ङ. ३ सर्वं च्युतमिति ग. घ. ४ देवतामयस्वरूपेत्यादि क. ५ सर्वमिति ख. ग. ६ सहायं कृत्वैकस्यैवेति ख. ङ. असहाय इति पुल्लिङ्गः पाठः घ. ७ एवेति ख. । ८ तुर्नास्ति ख. ९ कृतार्थतामिति क. १० अज्ञात्वेति घ. ङ.



नुपपत्तिमाशङ्क्य दृश्यमानं परमानन्दरूपं वदन्ती नमस्यतीति भावः । आद्यं मूलभूतम् । बिम्बमिति यावत् । जडव्युदासार्थम्—**पुरुषमिति** । जीवव्युदासार्थम्—**आद्यमिति** । एतादृशस्य सर्वकारणत्वात्पितृरूपत्वमुक्तम् । स्वाभीष्टसिद्ध्यर्थं रूपद्वयमाह—**ईश्वरं प्रकृतेः परमिति** । **ईश्वरमिति** बहिःफलदातृत्वम् । **प्रकृतेः परमित्यन्तःफलदातृत्वम्** । एतादृशस्य सर्वजनीनत्वे सर्वमुक्तिप्रसङ्गो वेदानां वैयर्थ्यं च स्यादिति तदर्थमाह—**अलक्ष्यं सर्वभूतानामिति** । प्रत्यक्षतो न दृश्यत एव । कार्यद्वाराऽपि लक्षितुं न शक्यते । कार्यकारणयोरेकत्र क्वाऽप्यनुपलम्भात् । अत एव **सर्वभूतानां** ब्रह्मादीनामपि । अः कृष्णस्तेन वा लक्ष्यत इति स्वप्रकाशम् । गुरुणा वा लक्ष्यत इति । "**आचार्यवान् पुरुषो वेदे**"ति श्रुतेः । ततश्च न वेदवैयर्थ्यं न वा सर्वमुक्तिरित्यर्थः । वस्तुत एवाऽयं दुर्ज्ञेयो न साधनान्तराभावादिति । "**यस्याऽमतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानता**"मिति श्रुतेः । "**यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स**" इति च । तस्माद्दुर्ज्ञेय एव भगवान् । किं तज्ज्ञानप्रार्थनयेति । तत्राऽऽह—**सर्वभूतानामन्तर्बहिरवस्थितमिति** । भगवान् सर्वत्र वर्तते । ज्ञानं च तस्य सुलभम् । ज्ञापक एव दुर्लभः । सर्ववस्तुनि वस्तुस्वरूपत्वात् । अज्ञत्वकथनं तु विरुद्धधर्मबोधाय । तस्मात्सर्वत्र विद्यमानत्वाद्भगवज्ज्ञानं सुलभमिति । ननु तथा सति कथं न सर्वैः प्रत्यक्षीक्रियते, घटादिवत् ? तत्राऽऽह—**मायाजवनिकाच्छन्नमिति** । मायैव जवनिका तिरस्करिणी । अन्तःपट इत्यर्थः । तया आच्छन्नम् । सर्ववस्तुनि वस्तुस्वरूपत्वेऽपि माययाऽन्यथाभासमानत्वान्न प्रत्यक्षीक्रियत इत्यर्थः । अत एव ममाऽपि बहिर्मुखत्वान्न ज्ञानमित्यज्ञा । ननु न सर्वः सर्वत्र भ्रान्तः किन्तु कश्चिदेव कश्चित् । दोषसहकृतेन्द्रियजन्यत्वाद्भ्रमस्य । अतः कदाचिन्निर्दुष्टैरिन्द्रियैर्घटवद्दृश्येतेति चेत् ? तत्राऽऽह—**अधोक्षजमिति** । अधः अक्षजं ज्ञानं यस्मात् । इन्द्रियजन्यं ज्ञानं भगवन्तं न विषयीकरोति । "**पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ् पश्यति नाऽन्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्नि**"ति श्रुतेः । अतो वस्तुस्वरूपत्वेऽपि नेन्द्रियप्रत्यक्षत्वं भगवतः । ननु सर्ववस्तुनि वस्तुस्वरूपत्वमनुपपन्नम् । सर्ववस्तूनां नाशप्रतियोगित्वात् । कारणत्वेऽपि कारणत्वं गच्छेत् । आधारत्वेऽप्याधारत्वम् । आधेयत्वेऽप्याधेयत्वमिति । अतो धर्मरूपेण धर्मिरूपेण वा व्ययसम्भवात्कथं ब्रह्मत्वम् ? अत आह—**अव्ययमिति** । सर्वरूपत्वेऽपि न विनाशित्वम् । विरुद्धसर्वधर्माश्रयत्वेनोक्तत्वात् । तस्मान्निर्दुष्टपूर्णगुणविग्रहं त्वां नमस्य इति । ननु तादृश एव स एवाऽहं चेदवतीर्णस्तदा सर्वप्रत्यक्षं मां कथं न जानीयुः ? धर्माणामपि स्वप्रकाशत्वात् । तत्राऽऽह—**न लक्ष्यस इति** । मूढदृशा न लक्ष्यसे । ननु प्रत्यक्षः कथं न लक्ष्यसे ? तत्राऽऽह—**नटो नाट्यधरो यथेति** । यथा नटः स्त्रीरूपं प्रकटयन्बहिर्मुखैर्न ज्ञायते पुरुष इति तथा नैरभावं

१ परमानन्दरूपमेति घ. ङ. २ वदन्तिति पुंपाठः क. ग. घ. ङ. ३ अकृष्ट इति ग. घ. ङ. ४ अविज्ञातमेति क. ५ चो नास्ति क. घ. ङ. ६ सर्वज्ञकथनमिति घ. ङ. ७ आच्छादनमिति ग. ८ भासनत्वादिति क. ग. ९ मायैवेति घ. १० अधर्मरूपेणेति घ. ११ धर्मरूपेणेति घ. ङ. १२ व्ययसम्बन्धसंभवादिति घ. १३ न व्ययं विनाशित्वमिति क. न व्ययविनाशित्वमिति ग. तं व्ययं विनाशित्वमिति घ. १४ निर्दुष्टगुणपूर्णविग्रहमिति ख. १५ चेत्यवतीर्ण इति ग. १६ लक्ष्यते इति क. ग १७ नटभावमिति घ.

प्रकट्यन्नाविर्भूतो भगवान्भगवत्त्वेन न ज्ञायत इत्यर्थः । नन्वाविर्भावान्यथानुपपत्त्या सर्वेषां ज्ञापनार्थमेवाऽऽविर्भूत इति कथमुच्यते न ज्ञायस इति । न हि भगवान् वञ्चनार्थमाविर्भूतो रसजननाय वेत्याशङ्क्याऽऽह—**तथा परमहंसानामिति** । भगवान् भक्तियोगार्थमाविर्भूतो वेदानुषींश्चाऽवतार्य्य तैः ससाधने ज्ञाने उत्पन्ने यदग्रिमं कार्यं तदर्थमवतीर्णः । तत्र ज्ञाने संन्यासोऽङ्गम् । अन्तःकरणशोधकत्वात् । **"संन्यासयोगाद्यतयः शुद्धसत्त्वा"** इति श्रुतेः । अन्नादेर्दोषाजननाच्च । तदनु मननमङ्गम् । श्रवणस्य पूर्वमेव निष्पन्नत्वात् । तदनु निदिध्यासनयुक्तानां च । निदिध्यासनं हि चित्तैकाग्र्यम् । तत्र भगवन्निर्धारो वा । तत्राऽन्तरङ्गमङ्गं शुद्धान्तःकरणम् । तेषां ज्ञानाधिकारिणां जातज्ञानानां वा भक्तियोगव्यतिरेकेण भगवज्ज्ञानं सायुज्यं वा न भवतीति तथा अवतीर्णमित्यर्थः । हंसास्तु विविक्तज्ञानवन्तः । केवलमात्मानमेव ये पश्यन्ति ते परमहंसाः । यद्यपि सर्वे नृत्यं पश्यन्ति तथापि रसिकानामेव रसोत्पत्तिः । न हि नपुंसकानां स्त्रीणां वा स्त्रीरूपेण नृत्ये क्रियमाणे शृङ्गाररस उत्पद्यते । प्रत्युत स्वसमानधर्माविष्कारं कृत्वा विडम्बयतीति खेद उत्पद्यते । तथा साधारणस्त्रीपुरुषाणां दैत्यांशानां च न रसो न ज्ञानं न वा भक्तिरिति । तद्वञ्चनार्थं नटवल्लीलां करोतीति स्त्रियो वयं कथं जानीमः । प्रत्युत लज्जाकामाद्यस्मद्दोषहेतुरूपप्राकट्याद्दोषयुक्ताः परं भविष्याम इत्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥

एवं स्वरूपमुक्त्वा गुणान् वदन्ती सर्वसम्बन्धेन नमस्यति—

**कृष्णाय वासुदेवाय देवकीनन्दनाय च ।**
**नन्दगोपकुमाराय गोविन्दाय नमोनमः ॥ २० ॥**

**कृष्णायेति** । नाम्ना भ्रातृपुत्रत्वम् । यान्येवाऽनमस्करणीयानि रूपाणि तान्येव भगवान् स्वोद्धारार्थं स्वस्य सर्वसम्बन्धान् पुरस्कृत्याऽवतीर्ण इति ज्ञाते नमस्करणीयानि भवन्ति । यथा महतः प्रक्षीणदशायां सेवकत्वेन लज्जया नमस्कारं करोति लोकः । न तु सेवकं मन्यते । **कृष्णायेति** वा मूलरूपस्याऽनुवादः । मूलमनूद्य हि सम्बन्धनिरूपणे नमस्करणीयो भवति । **वासुदेवायेति** भ्रातृपुत्रत्वम् । भ्रातृनिरूपणेन भ्रातरं मोचयन् तद्भगिनीमपि मोचयेदिति । तथा **देवकीनन्दनायेति** देवकीं मोचयन् तन्ननान्दरमपि मोचयेदिति । चकारात्पितृभामिकं मोचयन् तत्पत्नीमपि मोचयेदिति । पाण्डवप्रियायेति नमस्करणीयं रूपम् । तथा दूरसम्बन्धेऽपि मोचयेदिति वसुदेवमित्रसम्बन्धमाह—**नन्दगोपकुमारायेति** । कुमारः पालकपुत्रः । स्कान्दे तथोपलब्धेः । गोपसम्बन्धेनाऽपि मोचयेदिति गोपपदम् । सन्मार्गवर्त्तिनां सर्वेषामेव सर्वाभीष्टप्रद इति गवामिन्द्राय । **"इन्द्रं नस्त्वाऽभिषेक्ष्याम"** इति वचनात् । **गोविन्दायेति** । निगमादस्य पदस्य सिद्धिः ।

१ चेत्याशङ्क्येत्यादि ग. २ अवतारयित्वेति क. घ. ग. ङ. ३ तत्राऽज्ञाने इति ख ४ न्यासोऽङ्गमिति घ. ५ बोधकत्वादिति घ. ङ. ६ दोषजननादिति क. ७ जाताज्ञानानामिति घ. ङ. ८ नित्यमिति घ. ९ स्वसमाधानधर्मेति ग. १० चो नास्ति ख. ११ यदमिति क. ग. १२ प्रतीक्षणदशायामिति क. ग. १३ अतिनमस्कारमिति ग. १४ ननान्दारमपीति क. ग. घ. ङ. १५ भावुकमिति ग. १६ तदेति ग. १७ स्कन्दे इति ख. ग. १८ गोसम्बन्धेनाऽपीति ख.



निगमनिरुक्तव्याकरणैस्त्रेधा पदसिद्धिः । **"गोविन्द इति चाऽभ्यधादि"** ति निगमस्यानीतम् । वसतीवरीवत् । नमनद्विरुक्तिरादरात् । अनेन सम्बन्धमोचकत्वं गुणोऽप्युक्तः ॥ २० ॥

गुणान्तरमाह—

**नमः पङ्कजनाभाय नमः पङ्कजमालिने ।**
**नमः पङ्कजनेत्राय नमस्ते पङ्कजाङ्घ्रये ॥ २१ ॥**

**नमः पङ्कजनाभायेति** । जगत्कारणत्वभूषितत्वकृपाश्रयत्वसुखसेव्यत्वगुणैर्नमस्यति । नमनं हि स्वरूपे गुणे वा । न लीलादौ । रसावेशात् । पङ्कजं नाभौ यस्येति ब्रह्मपितृत्वम् । **पङ्कजमालिन** इति लक्ष्मीपतित्वम् । सा हि विवाहे नवपङ्कजमालां प्रक्षिप्तवती । **पङ्कजनेत्रायेति** सर्वपतित्वम् । वश्यतासम्पादकत्वेनाऽमृतवर्षणाद्वा । **पङ्कजाङ्घ्रय** इति भक्तिप्रवर्तकाय । सर्वजनकत्वेन सर्वमुत्साद्याऽपि प्रयच्छेत् । ऐहिकामुष्मिकं प्रयच्छति भक्तिं चेति गुणाः ॥ २१ ॥

लीलामाह त्रिभिः—

**यथा हृषीकेश खलेन देवकी कंसेन रुद्धाऽतिचिरं शुचाऽर्पिता ।**
**विमोचिताऽहं च सहाऽऽत्मजा विभो त्वयैव नाथेन मुहुर्विपद्गणात् ॥२२॥**

**यथेति** । मुख्या लीला—**हृषीकेशेति** । सर्वेषामिन्द्रियाणां नियामकत्वेन भर्तृवद्रमणात्त्वत्तः सर्वेन्द्रियप्रीतिमनुभूय तद्रसाभिनिविष्टाः के वा न नमेयुरित्यर्थः । किञ्च । तवैषा महती लीला मातरं पितरं च खलेन बन्धनं कारयित्वा बहुकालं दुःखानुभवं च कारयित्वा पश्चान्मोचयसीति । अतस्तदपेक्षया वयमेव कृतार्था इति तवैषा लीला वक्तुमप्यशक्या । भक्तमोचकत्वस्य गुणत्वेऽपि लीलां गुप्तां कृत्वा गुण एव तयात्वेन वक्तव्यः । यथा—खलेन कंसेन देवकी रुद्धा सती त्वया विमोचिता । अतिचिरं शुचाऽर्पिताऽपि विमोचिता । शोकमपि दूरीकृतवान् । तथाऽहञ्च । चकाराद्यशोदादयोऽपि । मयि पुनर्विशेषोऽप्यस्तीत्याह । **सहाऽऽत्मजा** । अनेन ममाऽऽत्मजा अपि मोचिताः । तस्यास्तु भवानेवाऽऽत्मज इति नाऽऽत्मजान्तरापेक्षा । अथवा । तस्या बहवः पुत्रा मारिता मम त्वेक एवेति तद्विपरीतत्वं मयि । कथमेवं करणम् ? तत्राऽऽह—**विभो इति** । हे सर्वकरणसमर्थ । किञ्च । **त्वयैव नाथेन** । त्वमेव नाथो भूत्वा मोचयसि । अथवा । नाथेन सह सा मोचिता । अत्र तु तदभावात्त्वमेव नाथ इत्यर्थः । तव नाथभवननाथमोचनयोराद्य एव श्रेयानित्यहमुत्तमा । लीलायां विपरीतकथनमप्युत्तमम् । किञ्च । मुहुः सा न मोचिता । किन्तु वारद्वयमेव । अहं तु बाल्यादारभ्य वारं वारं मोचितेति । किञ्च । **विपद्गणात्** । विपदां समूहात् । एकस्यामापदि भग्नाशो ऽन्या आपदः समायान्ति । ता भारते प्रसिद्धाः ॥ २२ ॥

१ गुणान्तरानाहेति क. ख. घ. ङ. गुणान्तरामाहेति ग. प्रतिभातस्तु पाठो निवेशितो मूले । २ नवपङ्कजमालामिति ख. ३ देवकी खलेन कंसेनेति ग. ४ देवकी चेति क. घ. ङ. ५ विमोचिता इति ख. ६ भवतानेवेति ख. ७ नाथभवनाद्येतानि घ. ङ. ८ उभयम्या इति क. घ. ९ सख्य इति ख. ग.

ता आपदो गणयति—

**विषान्महाग्नेः पुरुषाददर्शनादसत्सभाया वनवासकृच्छ्रतः ।**
**मृधे मृधेऽनेकमहारथास्त्रतो द्रौण्यस्त्रतश्चाऽऽस्म हरेऽभिरक्षिताः ॥ २३ ॥**

**विषादित्यादि** । भगवत्त्वेन सर्वकर्तृत्वाद्विपादावपि मोचकत्वमुक्तम् । **विषात्** । विषमोदकात्सर्पविषाच्च । **महाऽग्निर्लाक्षागृहे** । हिडिम्बादयः **पुरुषादाः** । तेषां दर्शने जातेऽपि रक्षिताः । **असत्सभायाः** । द्रौपदीनिग्रहेऽम्बरकेशाकर्षणादौ । **वनवासकृच्छ्रतः** । द्रौपदीहरणदुर्वासःप्रभृतीनां कृच्छ्रत इति (?) वनेऽपि राज्यैश्वर्यदानात् । तदनु **मृधे मृधे** गोग्रहणमारभ्याऽयावधि यावन्तः सङ्ग्रामा जाताः । अनेके महारथा भीष्मादयः । तेषां ब्रह्मास्त्रादिभ्यः । भगदत्तकर्णादीनां त्वप्रतीकार्यता । भगवद्रक्षा च तत्रैव सिद्धा । सा रक्षा न प्रार्थनया । बाधकस्वरूपाज्ञानात् । अत आह—**हरे इति** । हे हरे ! अभितो रक्षिताः स्मः ॥ २३ ॥

एवं नानाविधलीलया भगवत्कृतां रक्षां प्रतिपाद्य लीलयाऽद्भुतकर्मत्वं वक्तुं रक्षापेक्षया आपद एव समीचीना इति क्षुधितस्याऽन्नभोजनजन्यसुखवद्विपत्पीडितानां भगवद्दर्शनानन्दो दुर्लभ इति लोकानां विपदामनिष्टत्वेऽपि भक्तानामिष्टसाधनत्वात्ताः प्रार्थयते—

**विपदः सन्तु नः शश्वत्तत्र तत्र जगद्गुरो ।**
**भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम् ॥ २४ ॥**

**विपद इति** । एषा भगवतो विपरीतलीला । आपत्सु परमानन्दं प्रयच्छति तदभावे परमानन्दतिरोभावं करोतीति । तत्र तत्र यत्रैव स्थीयते गम्यते च । ननु कथमेवं निर्द्धारः क्रियते विपद एव सन्त्विति । कुतः शिक्षितमेतत् ? तत्राऽऽह—**जगद्गुरो इति** । त्वत्त एवैतच्छिक्षितं यद्विपदः समीचीना इति । अन्तर्यामितया प्रेरणाद्बहिरप्युपपत्तिदर्शनाच्च । यथा सर्वप्राणिनाम् । शिक्षितप्रकारमाह—**भवतो दर्शनं यत्स्यादिति** । याभ्यो विपद्भ्यो दर्शनं यस्य (?)स्यात् । तवैव फलरूपदर्शनान्वयव्यतिरेकाभ्यामिदमवगतम् । न विद्यते पुनर्भवस्य दर्शनं यस्मात् । पुनः शरीरं न पश्येदित्यर्थः । अथवा । अपुनर्भवानां जीवन्मुक्तानां दर्शनं यस्मात् ॥ २४ ॥

एवमद्भुतलीलामुपपाद्य दुष्टदुर्ज्ञेयत्वमाह चतुर्भिः—

**जन्मैश्वर्यश्रुतश्रीभिरेधमानमदः पुमान् ।**
**नैवाऽर्हत्यभिधातुं वै त्वामकिञ्चनगोचरम् ॥ २५ ॥**

**जन्मैश्वर्येति** । भगवतो हि नवप्रकारा धर्मा ज्ञेया नवविधभक्तिहेतवः स्वरूपगुणादिप्रकारेण भिन्नाः । तत्र स्वरूपे ज्ञाते श्रवणं भवति । गुणेषु ज्ञातेषु कीर्तनं भवति । लीलायां ज्ञातायां स्मरणम् । एवमेकः खण्डः । द्वितीयखण्डे समीपगमने पादसेवनपूजनवन्दनदास्यानि । तृतीये सख्याऽऽत्मनिवेदने । तत्र दुष्टदुर्ज्ञेयत्वादीनां तत्र तत्र कारणतामुपपादयिष्यामः । तत्र प्रथमं यावद्दुष्टदुर्ज्ञेयता

१ वनवासकृच्छ्रत इति घ. ङ. २ मुहुर्मृधे मृध इति क. ख. ३ प्रार्थनायामिति ग. ४ रक्षिताऽस्मीति क. ग. ५ लीलया अद्भुतकर्मेति घ. ६ एतच्छिक्षितमिति क. घ. ङ. ७ पूजनवन्दनानीति क. ८ दास्यसख्यात्मनिवेदनानीति क. ग.



न ज्ञायते तावद्दुष्टानां बाधककायवाङ्मनोव्यापाराणां दर्शनाद्भगवत्समीपं न गच्छेत् । ज्ञाते तु पुनरन्धो न पश्यतीति चक्षुष्मताऽपि न द्रष्टव्यमितिवदस्मद्बुद्धीनां बाधप्रतीतिरिति द्वितीये खण्डे प्रवर्तेत । अतः पादसेवनार्थं दुष्टदुर्ज्ञेयत्वं निरूप्यते । तत्र जन्म सत्कुले । ऐश्वर्यं राज्यादौ । श्रुतं शास्त्रादौ । श्रीः सम्पत् । एताभिरेधमानो मदो यस्य । अयमर्थः । यथा तण्डुलादेरोदनद्वारा पितृदेवमनुष्यादीनां तृप्तिजनकत्वेनाऽमृतत्वेऽपि मदापेक्षिणां स्वमलत्वेन पर्यवसानान्मदजनकत्वं भवति । न हि तावता अन्नोद्भवमिति पेयं भवति । तथा दैत्यांशानां गर्वाकाङ्क्षिणां सत्कुलोत्पत्तौ तत्कुलस्य मलत्वेन पर्यवसानान्मादकत्वम् । तथा सति सत्कुलोत्पन्न इति न तस्य सङ्ग्रहः कर्तव्यः । एवमुत्तरत्राऽपि । इममेवाऽवान्तरभेदं पुरस्कृत्य "विद्यामदो धनमद" इति वाक्यं प्रवृत्तम् । **पुमानिति** स्वातन्त्र्येण गुरुभिरनियम्य इत्युक्तम् । अत एव त्वामभिधातुं नाऽर्हति । यथा पूर्वं ब्राह्मणोऽपि जात्यन्तरमापन्नो मदिरामत्तो वेदं पठितुं नाऽर्हति । पठनेऽप्युन्मत्तप्रलपितमेव तन्न श्रोतव्यम् । यद्यपि भक्तौ सर्वेऽधिकारिणस्तथापि कृत्रिममदिरादिसम्बन्धे वेदाधिकाराभाववन्मादकस्य (?) न भगवच्छब्दोच्चारणाधिकारः । अतस्तदाचारान्न काचिद्व्यवस्था । ननु "**जन्मकर्मावदातानामि**"ति वेदाधिकारोक्तेस्तादृशस्य वेदानधिकारो भवतु नाम । भगवतः पुनः सर्वात्मकत्वात्—"**चक्राङ्कितस्य नामानि सदा सर्वत्र कीर्तयेदि**"ति स्मृतेश्च "**पतितः स्खलित**" इति वाक्याच्च महापातकिनोऽपि प्रायश्चित्तत्वेनोक्तत्वाच्च कथं मत्तस्य नाऽधिकार इति चेत् ? तत्राऽऽह—**अकिञ्चनगोचरमिति** । अकिञ्चनाः पूर्वोक्तधर्मरहितास्तेषां गोचरो गम्यः । अयमर्थः । न तादृशस्याऽधिकार इति न स्वरूपतोऽधिकारो निवार्यते । किन्तु फलतः । भगवानेव हृदये नाऽऽयाति । भगवद्गुणाश्च मुखे आगच्छन्तोऽपि व्यवहारत्वेनाऽऽगच्छन्ति । शौचे गङ्गाजलवत् । अकिञ्चनगोचरस्वभावत्वात् । अद्याऽपि लोके सर्वे सम्भाव्यन्ते न मत्ताः । अतस्तेषु कदाचिदपि भगवत्सान्निध्याभावादनधिकार इत्युक्तम् ॥ २५ ॥

ननु शिष्टैरपि न ज्ञायते ? भगवतोऽचिन्त्यमहिमत्वात् । सत्यम् । तथापि न ज्ञायत इति ज्ञायते । तदाह—

**नमोऽकिञ्चनवित्ताय निवृत्तगुणवृत्तये ।**
**आत्मारामाय शान्ताय कैवल्यपतये नमः ॥ २६ ॥**

**नमोऽकिञ्चनवित्तायेति** । अकिञ्चना वित्तं यस्य । अकिञ्चनानां वा वित्तम् । वित्तं हृदि बहिरपि तिष्ठति वित्तवताम् । तथा तेषु भगवान्भगवति च ते । अतस्त एव जानन्ति नाऽन्य इत्यर्थः । तत्र हेतुमाह—**निवृत्तगुणवृत्तय इति** । निवृत्ता गुणा येषां ते निवृत्तगुणाः । तैर्वर्तनं यस्य, तेषु वृत्तिर्यस्येति वा । "**हरिर्हि निर्गुणः**" । "**मन्निष्ठं निर्गुणं स्मृतमि**"ति च भगवद्वाक्यात् । अतो निर्गुणगम्ये न सगुणगम्यत्वम् । यथा चक्षुर्गम्ये न रसनागम्यत्वम् । तत्राऽपि हेतुः—**आत्मारामायेति** । आत्मन्येवाऽऽरामो यस्य । अनेन स्वापेक्षाभाव उक्तः । परापेक्षायामपि—**शान्ताय** । शान्तरूपत्वान्न क्रूरैरपेक्ष्यत इत्यर्थः । किञ्च । यैरपेक्ष्यते तैर्मोक्षार्थमपेक्ष्यते । नियतफलत्वात्तस्य । अन्यत्तु काकतालीयं कथञ्चिद्भवति । अतो मोक्षपतित्वान्मुक्त्यधिकारिभिरेव सेव्यो नाऽन्यैरित्यर्थः ॥ २६ ॥

१ प्रवर्तत इति क. घ. २ प्रायश्चित्तेनोक्तत्वाच्चेति घ. ङ. ३ यद्यपीति ख. ४ हृद्यपि तिष्ठतीति क. घ. ङ. हृद्यपीत्येव तु ख. ५ रसनगम्यत्वमिति ख. ग. ६ कदाचिदिति क. घ. ङ.

एवं प्रसङ्गात्स्वरूपं कथयन्ती नमस्कारमुक्त्वा पुनः प्रकृतं दुष्टदुर्ज्ञेयत्वं प्रकारान्तरेणाऽऽह—

मन्ये त्वां कालमीशानमनादिनिधनं विभुम् ।
समं चरन्तं सर्वत्र भूतानां यन्मिथः कलिः ॥ २७ ॥

**मन्य इति** । दुष्टा द्विविधाः । विषयपराः पूर्वोक्ताश्च । तत्र पूर्वोक्तानामगम्यता निरूपिता । विषयपराणां चाऽगम्यतामाह सम्भावनया[२] । एवं हि सम्भाव्यते—यदि विषयपरा भगवन्तं जानीयुस्तदा कालग्रस्ता न भवेयुरिति । भगवत एव कालत्वात् । ज्ञाते पुनः "**ज्ञानी प्रियतमो मत**" इति वाक्यात्स्वप्रियं न भक्षयेत्कालः । अतः कालव्याप्तेर्न भगवन्तं जानन्तीति मन्ये । नन्तु कालस्य कथं भगवत्त्वम् ? तत्राऽऽह—**ईशानमिति** । सर्वत्र तस्यैश्वर्यात् । न ह्येतदभगवत्त्वे सम्भवति । किञ्च । "**सदेव सौम्येदमग्र आसीदि**"त्यत्र—"**नाऽसदासीन्नो सदासीत्तदानीमि**"त्यत्र च अग्रेतदानीम्पदवाच्यः कालः । तस्याऽभगवत्त्वे वाक्यार्थो बाध्येत । अत एव अनादिनिधनत्वात्कालो भगवान् । किञ्च । कालवशात्सर्वं भवति । अन्यथा शीतादिषु किं निमित्तं स्यात् । अतः सर्वभवनसमर्थत्वात्कालो भगवान् । किञ्च । "**निर्दोषं हि समं ब्रह्मे**"ति वचनात्समत्वं भगवद्धर्मः । स च काले वर्तत इति कालो भगवानित्याह—**समं चरन्तं सर्वत्रेति** । सर्वत्र कालः समानेनैव ब्रह्मरूपेण प्रविशति । तत्रोपपत्तिः[३]—**यत्** यस्मात् कालात् । **मिथः** परस्परं भ्रात्रादीनामपि कलहः । पूर्वमेकप्राणभूता अपि कालमेव निमित्तमासाद्य कलहेन म्रियन्त इत्यर्थः । एवं त्वमेव काल इति कालग्रासादवगम्यते । न कोऽपि त्वां जानातीति ॥ २७ ॥

इदानीमवतीर्णं तु सुतरां भक्ता अपि न जानन्तीत्याह—

न वेद कश्चिद्भगवंश्चिकीर्षितं
तवेहमानस्य नृणां विडम्बनम् ।
न यस्य कश्चिद्दयितोऽस्ति कर्हिचिद्-
द्वेष्यश्च यस्मिन् विषमा मतिर्नृणाम् ॥ २८ ॥

**न वेद कश्चिदिति** । किं कर्तुं भगवान् विचारयतीति न कोऽपि वेद । ननु कार्यदर्शनेन ज्योतिश्शास्त्रेण वा, यदेव जायते तदेव भगवच्चिकीर्षितमिति कुतो न वेद ? तत्राऽऽह—**तवेहमानस्येति** । नृणां विडम्बनमनुकरणमीहमानस्य चिकीर्षितं न वेदेत्यर्थः । सामान्यव्यापारेणैव कार्यस्य सिद्धत्वाद्विशेषरूपमनुकरणं किं कार्यायेति भवति सन्देहः । नन्वस्याऽनुकरणस्य कार्यं[५] स्पष्टमेव पाण्डवरक्षा कौरववधश्चेति । भूभारहरणमर्जुनादीनां यशोदानं च ? तदपि नेत्याह—**न यस्य कश्चिदिति** । पाण्डवरक्षादिकं[६] तदा विशेषकार्यं स्याद्यदि भगवतो मित्रोदासीनविद्विषो भवेयुः । तथा सति भगवत्त्वमेव न स्यात् । कश्चिदपि दयितो न क्वचिदपि दयितो न । एवं द्वेष्यश्च कश्चिदपि क्वचिदपि । चकारादुदासीनः । तर्हि कथं कार्यं दृश्यते पाण्डवरक्षादि ? न च कालादिति वक्तव्यम् । कदाचिदपि कौरवरक्षाऽश्रवणात् । तत्राऽऽह—**यस्मिन् विषमा मतिर्नृणामिति** । यस्मिंस्त्वयि नृणां पाण्डवादीनां विषमा मतिर्भवति—अयमस्माकं मित्रमयं शत्रुरिति । न हि कलशादिषु वस्तुषु गृहे नीयमानेषु दर्शनाच्छकुनादिसम्पत्तौ न(?)तेषां स्वरूपं भिद्यते । शुक्तिकायां वा रजतादिप्रतीतौ तस्य स्वाभाविकधर्मव्यतिरेकेण कश्चिदस्ति भ्रमहेतुः । स्वाभाविकस्यैव भ्रमहेतुत्वे सर्वेषामेव भ्रमः स्यात् । तस्मात्स्वगतदोषेणैव रागादिना त्वयि मित्रत्वादिप्रतीतिः । न तु त्वयि तादृशो धर्मः कश्चिदस्तीत्यर्थः । ननु तदनुसरणं[१] धर्मो भगवत्यस्ति । यतः सर्वभावित इव भवति । तदपि नास्तीत्याह चकारेण । मित्रत्ववदनुसारित्वमपि भ्रान्तमित्यर्थः ॥ २८ ॥

एवं दुष्टदुर्ज्ञेयत्वं निरूप्य लक्षणं निरूपयति द्वाभ्याम्—

जन्म कर्म च विश्वात्मन्नजस्याऽकर्तुरात्मनः ।
तिर्यङ्नृषिषु यादस्सु तदत्यन्तविडम्बनम् ॥ २९ ॥

**जन्म कर्म चेति** । भगवतः सर्वानुकरणरूपो धर्मो लक्षणमसाधारणो धर्मः । नटादिरपि किञ्चिद्व्यान्तरसम्बन्धेन तथा स्वाऽऽत्मानं प्रकाशयति । भगवांस्तु केवल[३] एवाऽविक्रियमाण एव परमानन्दरूप एव नरदेहेन्द्रियरूपेण दृश्यरूपेण स्वाऽऽत्मानं ख्यापयति । एतद्भगवतोऽसाधारणं लक्षणम् । एतदज्ञाने कोऽपि भगवन्तं न पूजयेत् । न[५] चाऽस्य मोहकत्वम् । लक्षणत्वात् । अन्यथा सर्वेषामपि मोहो भवेत् । तस्मादनुकरणं भगवल्लक्षणमिति ज्ञेयम् । तत्र चेद्भ्रमः ? पूर्ववत्स्वदोषेणैव दुष्यति, न भगवतः कश्चिद्दोष इत्यर्थः । ननु युक्तिबाधितं न वेदोऽपि बोधयतीति कथं भगवतोऽनुकरणं सम्भवति ? तत्राऽऽह—**विश्वात्मन्निति** । यथा भगवानविक्रियमाण[६] एव विश्वरूपो जातः । तस्याऽनुकरणे कः प्रयास इति भावः । अजस्य जन्म । अकर्तुः कर्म । पुरुषोत्तमस्याऽऽत्मनो व्यापकस्य **तिर्यक्षु** वराहादौ **नृषु** रामादौ **ऋषिषु** वामनादौ **यादस्सु** मत्स्यादौ तत्तद्रूपेण स्फुरणमत्यन्तमनुकरणम् । पुरुषोत्तमत्वमपि ज्ञापयन्मनुष्यत्वादिकमपि ज्ञापयति । विश्वस्मिंस्तु ब्रह्मत्वे ज्ञाते न जगत्त्वेन ज्ञायते । तस्मादनुकरणलक्षणोऽसाधारणो भगवद्धर्मः । अतो नाऽनेनाऽपि भगवति सन्देहो युक्त इति सिद्धम् ॥२९॥

ननु विशेषदर्शनात्सन्देहो गमिष्यति । किं तद्धर्मवत्त्वेन ज्ञापनेन ? तत्राऽऽह—

गोप्याददे त्वयि कृतागसि दाम ताव-
द्याते दशाऽश्रुकलिलाञ्जनसम्भ्रमाक्षम् ।
वक्त्रं निनीय भयभावनया स्थितस्य
सा मां विमोहयति भीरपि यद्बिभेति ॥ ३० ॥

**गोप्याददद इति** । एतादृशमनुकरणं भगवतो यद्विशेषदर्शनेऽपि जाते भ्रममुत्पादयति । तत्राऽहमेव दृष्टान्तः । कदाचिदहं गता गोकुले त्वां द्रष्टुम् । तस्मिन्समये गोपी यशोदा शिलापुत्रेण भाण्डभेदने कृते कृतागसि त्वयि दाम आददे । तदा तावत्तदानीमेव या ते दशा जाता । ननु सा स्वभावत एव तव दशा भविष्यति ? तत्राऽऽह—**अश्रुकलिलाञ्जनसम्भ्रमाक्षमिति** । अश्रुभिः कलिलं यदञ्जनं तेन सम्यक् भ्रमयुक्ते अक्षिणी यस्येति । तादृशं मुखं नीचतया स्थापयित्वा स्थितस्य

१ कथयमिति क. ग. ङ. २ सम्भावनयेति नास्ति ख. ३ तत्रोत्पत्तिरिति घ. ङ. ४ ज्ञायत इति घ. ५ कार्यं इति ख. ६ पाण्डवरक्षादिकञ्चेति क. घ.

१ तदनुसरणमिति ग. २ इतीति ख. ३ केवलमविक्रियमाण इति घ. ४ भयमानन्देत्यादिः क. ख. ङ. ५ न चाऽस्येति ग. घ. ६ भगवानविक्रियमाण इति घ. ७ स्वत एवेति ग.

**तवेति** पूर्वेण सम्बन्धः । एवं सर्वैर्ज्ञातमयं सर्वथा भीत इति । नन्वेवमस्तु को दोष इति चेत्? तत्राऽऽह—**भीरपि यद्बिभेतीति** । यद्भयं मृत्युरूपं तस्माऽपि भयं यतो भगवतो भवति । भीतत्वं भयहेतोर्बाधको धर्मः । न हि तस्मिन् विद्यमाने कस्यचिद्भयं सम्भवति ॥ ३० ॥

एवं भगवति विरुद्धधर्मत्वं तत्सम्बन्धादन्यत्राऽपि विरुद्धधर्मत्वमिति लक्षणमुक्तम् । जन्मकारणनिर्द्धारमाह **केचिदाहुरिति** चतुर्भिः । नमनार्थं जन्मनिर्द्धारः कर्तव्यः । देहान्तःकरणाऽऽत्मनामुत्तरमुत्तरं श्रेयः । ततो देहत्वेनाऽनमनीयत्वेऽपि भगवदवतारत्वे ज्ञाते नमनीयत्वं सिद्ध्यति । तत्र तादृशस्य कथमनमनीयदेह इति शङ्का । तत्र ऋषिभेदेन स्वयोगजधर्मभेदात्परमार्थतो भगवदिच्छाऽज्ञानाच्च चतुर्विधा ऋषयः स्वस्वबुद्ध्यनुसारेण देहसम्बन्धप्रयोजनं कथयन्ति । **वंशकर्त्ता पिता चैव मुख्यौ देहनिरूपकौ । दुःखाभावश्च मोक्षश्च द्वावर्थाविह सम्मतौ ।** अर्थद्रव्यविरोधे अर्थो बलीयानिति तेदर्थं मतभेदाः । अर्थस्य गौणभावे देहमुख्यतया मतद्वयम् । अर्थप्राधान्ये च मतद्वयमस्ति । तत्र वंशकर्तुर्मुख्यत्वान्महत्त्वाच्च तदीयत्वख्यापनेन तस्य कीर्तिर्भवतीति धर्मप्राधान्येन यदुवंशेऽवतीर्ण इत्याह—

**केचिदाहुरजं जातं पुण्यश्लोकस्य कीर्त्तये ।**
**यदोः प्रियस्याऽन्ववाये मलयस्येव चन्दनम् ॥ ३१ ॥**

**केचिदाहुरिति** । **अजं जातमिति** पूर्ववद्विरुद्धधर्माश्रयत्वम् । पुण्यश्लोकस्य यदोः । अत एव तथैव शास्त्रार्थो निर्द्धारित इति—"तत्रांऽशेनाऽवतीर्णस्ये"त्युक्तम् । **प्रियस्येति** । पुष्टिमार्गभक्तत्वात् । **मलयस्येव चन्दनमिति** । यथा—"वन्दामहे मलयमेवे"त्यादि मलयस्य यश एवं यदोरपि । तद्वंश्यानां भगवत्सन्निधानेन भगवत्सारूप्यात् ॥ ३१ ॥

अपरे पुनर्दूरसम्बन्धमसहमानाः प्रसङ्गादपि कीर्त्तिसम्भवात्कृतप्रयत्नत्वाच्च वसुदेवस्य निर्दुष्टत्वाच्च अर्थपुरस्सरं प्रवर्तमाना ऋषयो वसुदेवस्य सम्बन्धिन्यां देवक्यां पुत्रत्वेन याचितः सन्नज एव जात इत्याहुः । तदाह—

**अपरे वसुदेवस्य देवक्यां याचितोऽभ्यगात् ।**
**अजस्त्वमस्य क्षेमाय वधाय च सुरद्विषाम् ॥ ३२ ॥**

**अपर इति** । सोऽजस्त्वमेवेति पृथग्योजना । "**पित्रोः सम्पद्यतोः सद्य**" इति प्राकृतरूपप्रदर्शनाद्भिन्नशङ्का स्यात् । साऽप्यनेन निवारिता । तत्र हेतुः—**अस्य क्षेमायेति** । जगतो युधिष्ठिरस्य वा । अत एव—"**जातः कंसवधार्थाय**" इत्यादि वाक्यानि । अनेन द्वयं प्रयोजनं भिन्नमिति ज्ञापितम् । देवानां भिन्नतया हितकरणात् । चकारात्तेषामपि कृतार्थत्वाय । सुरद्वेषित्वेन स्वतो मुक्त्यभावात् । अनेन भगवतो दोषाभावो निरूपितः । अत एवोभयोः कार्यता । अन्यथा वैषम्यं स्यात् ॥ ३२ ॥

१ अथ द्रव्यविरोधे इति ख. २ तदयमिति घ. ३ गुणभावदेहे इति घ. ४ मतद्वयमितीति ख. ५ महत्वेति ख. ६ अर्थपुरस्सरमिति ग.२



अन्ये पुनः कालान्तरीयत्वाद्वसुदेवस्याऽपि "**अर्थो बलीयानि**"ति न्यायं पुरस्कृत्य कामप्रधाना भूमिभारहरणार्थं भगवानागत इत्याहुः । तदाह—

**भारावतारणायाऽन्ये भुवो नाव इवोदधौ ।**
**सीदन्त्या भूरिभारेण जातो ह्यात्मभुवाऽर्थितः ॥ ३३ ॥**

**भारेति** । ननु भगवति सपरिकरे समागते परमधिको भारो भवति । न तु भारावतरणम् । भारकर्तृषु भूमौ वा बलत्वेन प्रविष्टे भारनाश एव न तु भारोत्तारणम् । भारकर्तृणामधः पातने वैषम्यम् । मुक्तिदाने पूर्वोक्तपक्षाऽविशेषः । स्वतन्त्रफलता च स्यादिति चेत्? न । अयं भारो न दैहिकः किन्तूद्धतचेष्टहेतुको मानसः । सोऽप्यतिभावनया दैहिक इव भवति । तत्र भूमौ भगवति समागते तत्र चित्ते जाते उद्वेजकविस्मरणाद्भारोत्तारणम् । बुद्ध्या हि भार आरोपितः । शीघ्रं प्रतीकारकरणायाऽऽह—**नाव इवोदधाविति** । अनेन वैषम्यात्कालस्याऽपि मज्जनहेतुत्वं सूचितम् । यथा तरङ्गादिराधारदोषस्तथा धर्मक्षयादिरपि कालदोषः । तस्मात्कालाधारायाः पृथिव्या आधाराधेयोभयदोषसम्भवाच्छीघ्रं प्रतीकारः कर्तव्य इत्यर्थः । अन्यथा पुनर्भूमेरुद्धारः कर्तव्यः पतति सृष्टिश्च । अत एव ब्रह्मणः प्रार्थनेत्याह—**आत्मभुवाऽर्थित इति** । **आत्मभुवेति** । स्वस्याऽपि ब्रह्मजननं पततीति भावः । स्त्रीपुत्रप्रार्थनया कृतमिति कामत्वाद्भगवतोऽनभिप्रेतत्वं सूचितम् । अवसादनेन विशीर्णतायां पुनर्निर्माणञ्च कर्तव्यं स्यात् । तथा चैकदेशनिर्माणासम्भवान्नूतनब्रह्माण्डनिर्माणमप्यापतेत् । अतो भगवतैवं कृतमिति । एकपक्षे इतरप्रयोजनं प्रासङ्गिकमिति द्रष्टव्यम् । अन्यथा अर्थभेदादवतारभेदो भवेत् ॥ ३३ ॥

एतेषां पक्षाणां पूर्वपक्षत्वान्न पर्यवसानकथनम् । केचन पुनर्भगवद्विचारेण त्रैवर्गिकार्थस्य हीनत्वं विचार्य भगवत्क्रियमाणेनैव हेतुना सर्वमुक्त्यर्थं भगवदवतार इत्याहुः । तदाह—

**भवेऽस्मिन् क्लिश्यमानानामविद्याकामकर्मभिः ।**
**श्रवणस्मरणार्हाणि करिष्यन्निति केचन ॥ ३४ ॥**

**भवेऽस्मिन्निति** । स्वाभिप्रेतत्वं तु स्वरूपनिरूपण एवोक्तम् । मुक्तिप्रकरणे श्रवणादीनां धर्मत्वं न भक्तित्वमिति विशेषः । भव इति निरन्तरोत्पत्तिमार्गोद्गमनेन । **अस्मिन्निति** । अनेकदुःखप्रदर्शनात्स्थित्यां च क्लेशस्याऽसह्यता निरूपिता । अविद्या स्वरूपाऽज्ञानम् । ततः कामो विषयेच्छा । न हि परमानन्दे स्फुरति विषयेच्छा भवति । ततस्तदर्थं त्रिविधानि कर्माणि । श्रवणादेः कर्मणोऽविद्याकामकर्मनिवर्तकत्वं पञ्चमाध्याये निरूपितम् । श्रवणस्मरणयोर्भगवद्धर्मपरत्वे प्राकृतबाह्याभ्यन्तरसङ्गाभावान्न जन्मक्लेशः । अर्थविवक्षया च स्थितौ सर्वस्य भगवत्त्वेन ज्ञानान्न दुःखदर्शनक्लेशोऽपि । अन्यथा परमकारुणिको भगवान् कूपेऽन्धपातनन्यायेन लोकानां त्रैवर्गिकासिद्धये नाऽवतरेत् । दृढमूलत्वज्ञापनाय त्रिविधतापपदं परित्यज्याऽविद्यादिपदप्रयोगः कृतः । अहेतुकक्लेशप्रदर्शने तु निर्मूलकत्वात्स्वत एव दुःखनाशो भवेदिति श्रवणादीनां वैयर्थ्यं स्यात् । अतो भगवान्मुक्त्यर्थमेवाऽवतीर्ण इति सिद्धम् । अवतीर्ण एव भगवत्यर्हता भवति श्रवणादिविषयस्य ॥ ३४ ॥

१ भारावतारणमिति ग.२ भारोत्तरणमिति घ. ३ अधःपातेनेति घ. ४ उद्धतचेष्टेति घ. ५ भवतीति ग. ६ स्त्रीपुत्रप्रार्थनाकृतमिति ख. ७ चकारो नास्ति घ. ८ भगवतैवेति ग. ९ एवकारो नास्ति ग. १० स्थित्याऽपीति क. घ. ११ कामविषयेच्छेति ग. १२ धर्मपरत्वे इति क. ख.

एवं जन्मकारणनिर्द्धारमुक्त्वा फलनिर्द्धारमाह—

**शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः ।**
**त एव पश्यन्त्यचिरेण तावकं भवप्रवाहोपरमं पदाम्बुजम् ॥ ३५ ॥**

**शृण्वन्तीति** । दास्ये हि फलनिर्णयः कर्तव्यः । धर्मादिवद्व्यभिचारिफलत्वे परम्पराफलत्वे अन्यफलत्वे वा स्वतः सेवां कः कुर्यात् ? यद्यपि स्वरूपनिरूपणेनैवैतत्सिद्ध्यति परब्रह्मत्वे भगवतः स्वस्य च जीवत्वे दासत्वाद्दास्यसिद्धिरिति । तथापि योग्यतामात्रं सिद्ध्येन्न फलमुखतया । अतः श्रवणादिभिर्यदि पदं पश्येत्तदेव दास्यं कुर्यादिति युक्तं फलनिरूपणम् । ईहितं चेष्टितम् । भगवत्प्रयत्नमात्रनिष्पन्नमित्यर्थः । तत्रेत्यवतीर्णस्य । यथा सर्वे पदार्था जगति तत्र तत्र सिद्धास्तथा सन्तो भगवत्कथा च गङ्गावद्देशविशेषे नियताः । तथा च गङ्गायां स्नायादित्यत्र न गङ्गायामागतायां स्नायादिति किन्तु स्वयमुद्यम्य तीर्थमुद्धृत्य महता प्रयत्नेनाऽन्तः प्रविश्य स्नायादिति । एवमत्राऽपि वक्तरि सति शृण्वन्तीति न किन्तु सतां स्थाने गत्वा यथा वदन्ति तथोपायं विधाय समनस्केन्द्रियैः सम्यक्शक्तितात्पर्यनिर्णयः कर्तव्य इत्यर्थः । कृते च निर्णये तदानन्दे हृद्याविर्भूते रसेन गायन्ति । ततो रसपरवशाः सन्तोऽन्यान्कांश्चित्पुरस्कृत्य गृणन्ति उपदिशन्ति । एतेषां हेतुहेतुमद्भावोऽग्रे वक्तव्यः । ततः सर्वेषां पदार्थानां भगवत्सम्बन्धित्वेन श्रुतत्वाद्यं कञ्चन पदार्थं दृष्ट्वा ईहितमेव स्मरन्ति । ततः स्वतन्त्रफलत्वादानन्दहेतुत्वाच्च स्वत एव नन्दन्ति । अन्तरानन्दयुक्ता भवन्तीत्यर्थः । एवं श्रवणकीर्त्तनानि सावान्तरफलानि निरूपितानि । अतो महाफलनिरूपणाय अवान्तरफलवतामेव महाफलमिति निरूपयति—**त एव पश्यन्तीति** । **अचिरेणेति** पदादेवाऽयोगो व्यवच्छिन्नः । कालस्याऽहेतुत्वादेव न कालविलम्बो बाधकः । यथा कश्चित्समुद्रे मज्जन् तीरं पश्येत्तथा भवप्रवाहस्योपरमो यत्र तादृशं तीरभूतं पदाम्बुजं पश्येत् ॥ ३५ ॥

एवं फलं निरूप्य दैन्यं निरूपयति अप्यद्येति चतुर्भिः—

**अप्यद्य नस्त्वं स्वकृतेहित प्रभो जिहाससि स्वित्सुहृदोऽनुजीविनः ।**
**येषां न चाऽन्यद्भवतः पदाम्बुजात्परायणं राजसु योजितांहसाम् ॥३६॥**

सख्ये हि दैन्यनिवृत्तिः । दैन्यं ह्यन्तःकरणधर्मः । स यदा स्फुरति स दीनः । स च त्वयि सति विषयाभावे न स्फुरितः । इदानीं पुनः प्राप्ते विषये त्वद्गमनं भावयन्नेव स्फुरितः । तस्मादस्मान्दीनान्मा त्यजेति प्रार्थयते । अन्यदा हि भगवान् कार्यं सशेषं कृत्वा गच्छति । इदानीं कार्यस्य निःशेषत्वात्पुनर्नाऽऽगमिष्यतीति प्रायेणाऽस्मांस्त्यक्त्वा गच्छति । हे **स्वकृतेहित** ! स्वानामेव कृतं कार्यं तस्मिन्नेव ईहितं यस्य । भक्तकार्यकर्त्तेत्यर्थः । त्वदपरित्याग एवाऽस्मत्कार्यं तत्रैव तवेहितं भवत्विति भावः । **अपीति** सम्भावनायाम् । **अद्येति** । किमस्मत्त्यागदिनमित्यर्थः । नः अस्मान् । अथवा । नस्त्वमिति । परित्यागः सर्वथा भाव्य इति न वक्तव्यम् । अन्यथाऽपि त्वया कर्तुं शक्यत इति । **प्रभो! जिहाससि स्वित्** ? **स्विदिति** किमित्यर्थे । एतावता कालेन वयं शुद्धहृदया जाताः । परिग्रहदशायां च कथं त्यागः । किञ्च । दासाश्च जाताः । अनु पश्चाज्जीवोऽस्याऽस्तीत्यनुजीवी । दूरे

१ स्वरूपनिरूपणेनैव तदिति ख. स्वरूपनिरूपणेनैतदिति क. घ. ङ. २ सर्वपदार्था इति ख. ग. ३ नेति नास्ति घ. ४ हेतुमद्भाव इति क. ख. ५ मज्जेदिति क. ६ तत्तीरमिति घ. ७ तादृशतीरभूतमिति क. ख. ग. ङ. ८ अशेषमिति ख. ९ अभिप्रायेणेति घ. १० भक्तकार्य्यकर्त्ता इत्यर्थ इति घ. ११ किमत्यर्थे इति ग. किमर्थे इति घ.



गते जीवनमेव न भविष्यतीत्यर्थः । किञ्च । येषामस्माकं तव पदाम्बुजव्यतिरेकेण नाऽन्यत्परायणमस्ति । तत्र हेतुः—राजसु सर्वेषु योजितांहसां योजितापराधानाम् । इदानीं वयं सर्वविरोधिनो जाताः । अतस्त्वद्रक्षाव्यतिरेकेण न जीवाम इत्यर्थः ॥ ३६ ॥

**के वयं नामरूपाभ्यां यदुभिः सह पाण्डवाः ।**
**भवतोऽदर्शनं यर्हि हृषीकाणामिवेशितुः ॥ ३७ ॥**
**नेयं शोभिष्यते तत्र यथेदानीं गदाधर ।**
**त्वत्पदैरङ्किता भाति स्वलक्षणविलक्षितैः ॥ ३८ ॥**

न च वयं स्वभावत एव महान्त इति शङ्कनीयम् । त्वद्दर्शनेनैव हि महत्त्वम् । अन्यथा के वयं नाम्ना रूपेण च विख्याता यदुभिः सहिताः पाण्डवाः । यर्हि-भवतः अदर्शनम् । नाम च रूपं च गमिष्यतीत्यर्थः । यदुत्वं पाण्डवत्वं च । तत्र हेतुभूतं दृष्टान्तमाह । हृषीकाणामिन्द्रियाणामीशितुः प्राणस्याऽदर्शने । एकैकेन्द्रियव्यतिरेकेणाऽन्धा बधिरा इव जीवन्ति । प्राणे तु गते सर्वमेव गच्छेदित्यर्थः । किञ्च । अयं देशोऽपि न सुखदो भविष्यति । यथेदानीं त्वत्पदैरङ्किताऽतिशोभायुक्ता भाति । इयमेवाऽग्रे न शोभिष्यते । स्वानि असाधारणानि लक्षणानि ध्वजादीनि तैर्विशेषेण लक्षितैः । शोभा हि सर्वा त्वत्सम्बन्धाधीना । गदाधरेति । भूमेः पादस्पर्शे सात्त्विकभावस्वेदोद्गमे कर्दमत्वं भवति । कर्दमे च क्षेत्रे सर्वोऽपि साधारो गच्छतीति गदाधरत्वमुक्तम् । इदमलौकिकं मया दृश्यत इति तथा सम्बोधनम् ॥ ३७ ॥ ३८ ॥

किञ्च । सर्वेऽपि शत्रुजयेन प्राप्ता देशा नाऽस्माकं सुखकरा भविष्यन्ति । अग्रे सस्याद्यभावात् । इदानीं तु सस्यादिसम्पत्तिर्भवद्दर्शनाधीनेत्याह—

**इमे जनपदाः स्वृद्धाः सुपक्वौषधिवीरुधः ।**
**वनाद्रिनद्युदन्वन्तो ह्येधन्ते तव वीक्षितैः ॥ ३९ ॥**

**इमे जनपदा इति** । इमे जनपदा देशाः सुष्ठु ऋद्धाः । सुष्ठु पक्वा ओषधयो व्रीह्यादयो वीरुधो द्राक्षादयश्च येषाम् । वनानि अद्रयो नद्य उदन्वन्तश्च तवैव वीक्षितैरेधन्ते । तस्मात्त्वत्परित्यागे न किञ्चिद्भविष्यतीत्यर्थः ॥ ३९ ॥

एवं बहिर्मुखतया दैन्यं प्रतिपाद्य अन्तर्मुखतया भिन्नप्रक्रमेण द्वयं प्रार्थयते अथेति द्वाभ्याम्—

**अथ विश्वेश विश्वात्मन् विश्वमूर्त्ते स्वकेषु मे ।**
**स्नेहपाशमिमं छिन्धि दृढं पाण्डुषु वृष्णिषु ॥ ४० ॥**

इयमेव हि साध्यम् । असङ्ग आत्मव्यतिरिक्ते, भगवति रतिश्च । तत्राऽऽत्मव्यतिरिक्तेऽसङ्गो विचार्यते । किमात्मव्यतिरिक्तं किञ्चिदस्ति न वेति ? अस्तित्वे भगवतः सर्वात्मत्वं भज्येत । नास्ति चेत् ? केन सहाऽसङ्गः । ननु प्रतीतेनेति चेत् ? तत्प्रतीतं भगवानन्यो वा ? उभयथाऽपि पूर्वोक्त एव दोषः ।

१ जीविष्याम इति क. २ चकारो नास्ति ग. ३ नान्ययेति घ. ४ यथा हृषीणामितीति ग. ५ अन्धबधिरा इवेति घ. ६ सम्बन्धाधीना इति क. ख. घ. ७ सर्वो हीति क. ग. घ. ङ.

अन्यथात्वेन प्रतीतेनेति चेत्? यद्यपि तत्रापि पूर्ववद्विकल्पः सम्भवति तथाऽपि ज्ञानिनोऽसङ्गो न कर्तव्यः स्यात्। तस्मादेवमेकं रूपं वक्तव्यं, यथा शास्त्रार्थपरित्यागौ सङ्गतौ भवतः। तदाह—**विश्वेश विश्वात्मन्निति**। विश्वं कार्यम्। स्वयं सर्वकारणम्। अत ईशः। अनेन स्वार्थं सर्वं सृजतीति मुख्यसिद्धान्तो ज्ञापितो भवति। ततो भगवदर्थे कृते जगति स्वस्याऽहन्ताममतायां भगवद्विरोधेन बन्धः स्यात्। "**क्रीडार्थमात्मन**" इति वाक्यात्। अतो यथा अक्ष्णोरिन्द्रेन्द्राण्योर्लक्ष्मीनारायणयो रमणार्थं निद्रा सृष्टा तथैव परित्यागः सृष्ट इत्यर्थः। इदानीं सर्वात्मत्वं साधयति—**विश्वात्मन्निति**। विश्वस्याऽऽत्मा स्वरूपम्। यदेव आत्मत्वेन यदेव न स्फुरति तस्यैव परित्यागः। ननु वस्तुत आत्मत्वे किं स्फुरणेनेति चेत्? न, यतोऽयमात्मा। उद्देश्यविधेयभावस्योक्तत्वादुद्देश्यस्फुरणे त्यागः। बोधतारतम्य एव सर्वसाधनानामुपयोगात्। न च विश्वात्मत्वमौपचारिकम्। भद्रसेनो ममाऽऽत्मेतिवत्। तत्राऽऽह—**विश्वमूर्ते इति**। विश्वं मूर्तौ यस्य। विश्वस्मिन्वा मूर्तिर्यस्य। विश्वं मूर्तिर्यस्य। त्रेधाऽपि नोपचरितं सर्वात्मत्वम्। अत उद्देश्यत्वेन पुत्रादेः स्फुरणात्। त्वच्छक्त्या च स्नेह उत्पादितः। विधेयदशायां शास्त्रेण स्नेहः क्रियते। तद्विरुद्धशास्त्रैर्नाश्यते। मायाकृतस्तु स्नेहो न भगवद्व्यतिरेकेण अन्यस्मादपगच्छति। "**मामेव ये प्रपद्यन्ते**" इति वाक्यात्। छेदने पुनर्योजनाभावः। **दृढमिति**। ग्रन्थित्वादविमोकः ॥ ४० ॥

एवमुद्देश्ये वैराग्यमुक्त्वा विधेये भगवति साक्षादवतीर्णे स्नेहं प्रार्थयते—

**त्वयि मेऽनन्यविषया मतिर्मधुपतेऽसकृत्।**
**रतिमुद्वहतादद्धा गङ्गेवौघमुदन्वति ॥ ४१ ॥**

**त्वयि मेऽनन्यविषयेति**। यद्यपि भ्रातृपुत्रत्वेन रक्षकत्वेन च स्नेहोऽस्त्येव। तथापि स देहसम्बन्धेनाऽन्यविषयकः। आत्मसम्बन्धी हि त्वनन्यविषयः। परमात्माऽयमात्माधिष्ठात्री देवतेति मतिः परमां प्रीतिमुद्वहतात्। ज्ञानेन भक्तिर्भवत्वित्यर्थः। प्रतिबन्धकागणनायां रतेर्भगवदभेदे च दृष्टान्तः परम्परासम्बधाभावे च। ओघं प्रवाहम्। उदन्वति समुद्रे ॥ ४१ ॥

एवं नवधा भगवन्तं स्तुत्वा शास्त्रार्थत्वेन नवविधभक्त्यनन्तरं स्नेहे सञ्जाते माहात्म्ये च ज्ञाते पुनः पुनर्भगवदाविर्भावे किं कर्त्तव्यमित्याकाङ्क्षायां माहात्म्यस्मरणपूर्वकं नमनं कर्त्तव्यमिति सिद्धान्तः। तदत्र सर्वं स्तुत्वा उपसंहारे माहात्म्यस्मरणाय बहुधा सम्बोधयन्ती नमस्यति—

**श्रीकृष्ण कृष्णसख वृष्ण्यृषभाऽवनिध्रुग्राजन्यवंशदहनाऽनपवर्गवीर्य।**
**गोविन्द गोद्विजसुरार्तिहरावतार योगेश्वराऽखिलगुरो भगवन्नमस्ते ॥ ४२ ॥**

**श्रीकृष्णेति** नव विशेषणानि। **भगवन्निति** विशेष्यम्। तत्र **श्रीकृष्णेति** स्वरूपम्। "**कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते**"। "**साकारत्वात्तु सौन्दर्यं श्रीशब्देनाऽभिधीयते**"। **कृष्णसखेति** गुणाः। कृष्णोऽर्जुनः। तस्य सखा। समानशीलव्यसनकथनाद्गाम्भीर्यादयो गुणाः सूचिताः। लीलामाह—**वृष्ण्यृषभेति**। कपटमानुषलीला सूचिता। दुष्टदुर्ज्ञेयत्वमाह—**अवनिध्रुग्राजन्यवंशदहनेति**। न हि भगवज्ज्ञाने इयमवस्था भवेत्। असाधारणं धर्ममाह—**अनपवर्गवीर्येति**। न विद्यते अपवर्गो यस्य तादृशं वीर्यं यस्य। इदं हि पुरुषोत्तमस्याऽसाधारणं चिह्नम्। जन्मकारणनिर्द्धारमाह—**गोविन्देति**। सद्रक्षा अवतारप्रयोजनम्। फलमाह—**गोद्विजसुरार्तिहरावतारेति**। गावो द्विजाः सुराश्च तेषामार्तिहरोऽवतारो यस्य। अनेन धर्मग्लानिनिवृत्तिरुक्ता भवति। देवतोद्देशेन मन्त्रकरणको हविस्त्याग इति त्रयाणां निरूपणम्। धर्ममूलकत्वादन्येषां न पृथङ्निरूपणम्। दैन्यनिवृत्त्यर्थमाह—**योगेश्वरेति**। एतदतिदैन्यं यद्योगेन सर्वं क्रियते न स्वत इति। निजप्रार्थनामाह—**अखिलगुरो इति**। प्रमाणसिद्धं मह्यं देयमिति। पूर्वोक्तधर्मवांश्च सगुणः किन्तु भगवन्निति। "**नमो नम एतावत्सदुपशिक्षितमि**"ति नमस्कारः ॥ ४२ ॥

सूत उवाच—

**पृथयेत्थं कलपदैः परिणूताऽखिलोदयः।**
**मन्दं जहास वैकुण्ठो मोहयन्निव मायया ॥ ४३ ॥**

एवं स्तुते भगवत्कर्त्तव्यमाह। विषयभोगार्थमेव ह्येतावत्कृतम्। न तु वैराग्यभक्त्यर्थम्। अन्यथाऽरण्यादेव तथा कुर्यात्। तस्माद्यः कश्चिद्यत्किञ्चित्प्रार्थयतां नाम। भगवांस्तु प्रक्रान्तं स्वविचारितमेव प्रयच्छति। अतोऽद्भुतकर्मनिरूपणे मोहं दत्तवानित्युच्यते। कलपदैर्गद्गदकण्ठेनोच्चारितैरव्यक्तमधुरैः पदैः। परिणूताः परितः स्फुरिताः सर्वे उदया यस्य। गुणानामन्योन्यमिश्रणान्नवधा। तदभावादेकधेति। "**एकधा दशधा चैव दृश्यते जलचन्द्रवदि**"ति श्रुतिरप्येवमभिप्राया। तथा लीलाश्च। णु स्तुताविति धातुरूकारान्तः कविकल्पद्रुमे निरूपितः। अतो न दीर्घश्छान्दसः। **मन्दं जहास**। मोहनस्याऽप्यज्ञानार्थम्। **वैकुण्ठ इति**। साम्प्रतं रक्षायां स्थितः। जयविजयपातनाद्वा—**मोहयन्निवेति**। अद्भुतकर्मत्वात्—**इवेति**। **स्वरूपेण कृतार्थत्वं मायया च विमोहनम्** ॥ ४३ ॥

अन्तःकृतिमुक्त्वा बहिःकृतिमाह—

**तां बाढमित्युपामन्त्र्य प्रविश्य गजसाह्वयम्।**
**स्त्रियश्च स्वपुरं यास्यन्प्रेम्णा राज्ञा निवारितः ॥ ४४ ॥**

**तां बाढमिति**। तां कुन्तीं प्रार्थनां वा। **बाढमित्यङ्गीकारे** वचनम्। यत्त्वया कर्तव्यं वक्तव्यं वा तन्ममाऽपि सम्मतम्। न तु मया अपूर्वं किञ्चित्कर्त्तव्यमित्यर्थः। इत्येवं प्रकारेणोपामन्त्र्य, पूर्वगमने शकुनाभावमिव लक्षयित्वा पुनर्हस्तिनापुरं प्रविश्य, तत्रत्याः स्त्रिय आमन्त्र्य, चकारादन्यान्, द्वारकां यास्यन्, भगवदिच्छया प्राकृतप्रेमोद्गमाद्विस्मृत्य माहात्म्यं, सम्बन्धस्नेहाद्युधिष्ठिरेण गमनान्निवारितः ॥ ४४ ॥

१ एवमेकरूपमिति क. ग. २ अत इति नास्ति ख. ३ विश्वात्मेति ग. ४ विशेषेति ग. ५ बाधेति क. ख. ग. बोध्येति ङ. ६ तच्छक्त्येति ख. ७ न दृश्यत इति ङ. ८ नेति नास्ति ग. ९ दृढग्रन्थित्वादिति ग. घ. १० उद्वहनादिति ख. ११ ओघे इति ख. १२ नवविधभक्त्यनन्तरे इति घ. ङ. १३ जाते इति घ. ङ. १४ सम्बोधयन्निति ग. १५ नमस्यतीति घ.

१ वृष्णिवृषेति इति ख. ग. घ. ङ. २ अखिलगुरोरिति ख. ३ पूर्वोक्तधर्मत्वादिति घ. ४ भयवानितीति ग. ५ प्रार्थितामिति ग. ६ वक्तव्यमिति नास्ति ग. ७ इति ज्ञापितमिति क. ग. घ. ८ हस्तिनापुरे इति ग.

इयं ह्यद्भुतलीला भगवतो, मुक्तस्य बन्धो बद्धस्य मोक्ष इति । अतो युधिष्ठिरस्य मोहं प्रपञ्चयति सप्तभिः । व्यसनानां तथात्वात् । **स्वस्मिन्यदेव करणमुत्तमस्याऽधमस्य वा । तदेव मोहः कृष्णे तु ज्ञानमित्येष निश्चयः ।**

**व्यासाद्यैरीश्वरेहाऽज्ञैः कृष्णेनाऽद्भुतकर्मणा ।**
**प्रबोधितोऽपीतिहासैर्नाऽबुध्यत शुचाऽर्पितः ॥ ४५ ॥**

**व्यासाद्यैरिति** । ननु मोहोऽधिकारिणः प्रमाणान्निवर्तते । तत्र युधिष्ठिरोऽधिकारी । अन्यथा अग्रेऽपि ज्ञानानुदयः स्यात् । प्रमाणं वेदाः । वक्तारो व्यासनारदादयः । तैर्बोध्यमानस्याऽपि ज्ञानं नोदेति । भीष्ममुखादेवाऽयं बोधनीय इति भगवदिच्छा । अतो योगजधर्मेण ज्ञानशक्त्या वा न भगवदिच्छा ज्ञायते । इच्छाजिज्ञासायां तु चित्तस्य भगवत्परत्वे विषयविस्मरणान्निमित्ताभावे जिज्ञासा नश्येदतः सर्वज्ञा अपि सत्त्वव्यवधानभगवदवताराश्च भगवदिच्छां न जानन्तीत्याह—**ईश्वरेहाऽज्ञैरिति** । भगवताऽपि बोधितो नाऽबुद्ध्यत । तत्र हेतुः—**अद्भुतकर्मणेति** । यथा सन्ध्यर्थं गतः सर्वसमर्थो विग्रहं कृत्वा आगत एवं बोधनार्थं वाक्यानि वदन्नबोधं सम्पादितवानित्यर्थः । इतिहासैः पुरावृत्तकथनैः । न च तेषां वाक्यानामबोधकत्वम् । तत्राऽऽह—**प्रबोधितोऽपीति** । प्रबोधो दूरे प्रत्युत शोकेनाऽर्पितः समर्पितः । भक्षित इत्यर्थः ॥ ४५ ॥

अत एव शोकव्याप्तस्य वाक्यमाह—

**आह राजा धर्मसुतश्चिन्तयन्सुहृदां वधम् ।**
**प्राकृतेनाऽऽत्मना विप्राः स्नेहमोहवशं गतः ॥ ४६ ॥**

**आहेति** । **राजा** रजोगुणव्याप्तः । **धर्मसुतः** प्रार्थनया धर्माज्जातः । बहिर्मुखं धर्ममुररीकृतवान् । अत एव सुहृदां वधं चिन्तयन् पूर्वकृतं शोचति । अन्तःकरणमपि समीचीनं भगवता अपहृतमित्यभिप्रायेणाऽऽह—**प्राकृतेनेति** । देहात्मबुद्ध्या । **विप्रा इति** सम्बोधनं भगवतोऽद्भुतकर्मत्वभावनार्थम् । स्नेहो मृतेषु । मोहो जीवत्सु ॥ ४६ ॥

विपरीतबुद्धिं विस्तारयति—

**अहो मे पश्यताऽज्ञानं हृत्प्ररूढं दुरात्मनः ।**
**पारक्यस्यैव देहस्य बह्व्यो मेऽक्षौहिणीर्हताः ॥ ४७ ॥**

**अहो इति** । देहोपभोगार्थं महतोऽन्यायस्य करणमज्ञानजन्यम् । हृदि प्ररूढम् । नाऽस्य प्रतिघातः शक्यो जातः । तत्र हेतुरन्तःकरणाशुद्धिः । तदेवाऽज्ञानमाह—**पारक्यस्येति** । श्वसृगालभक्ष्यस्य । **अक्षौहिणीः** । अक्षौहिण्यः । मे मदीया हता इत्यज्ञानम् । वस्तुतस्तु भगवता भूभारहरणार्थं लीलया वा हताः ॥ ४७ ॥

---

१ बन्धस्येति ख. २ निर्णय इति घ. ३ अग्रे विज्ञानानुदय इति क. ग. घ. ४ तत्कर्तार इति ख. ५ तदाहेति ग. ६ महतां न्यायस्य करणं ज्ञानजन्यमिति ग. ७ विरूढमिति क. ८ प्रतीघात इति ख. ९ अन्तःकरणशुद्धिरिति घ. १० श्वशृगालादीत्यादिः क. ग. घ.



अनेन इहलोको गत इत्युक्तम् । परलोकोऽपि नास्तीत्याह—

**बालद्विजसुहृन्मित्रपितृभ्रातृगुरुद्रुहः ।**
**न मे स्यान्निरयान्मोक्षो ह्यपि वर्षायुतायुतैः ॥ ४८ ॥**

**बालेति** । **बाला** अभिमन्युप्रभृतयः । **द्विजा** द्रोणादयः । **सुहृदः** शल्यादयः । **मित्रं** कर्णादयः । **पितरो** भीष्मादयः । **भ्रातरो** दुर्योधनादयः । ते एव वा गुरवः । अन्ये च । एकस्याऽपि महापातकस्य बुद्धिपूर्वकं कृतस्य न प्रायश्चित्तम् । तस्मान्नरके वासो यावदाभूतसम्प्लवमित्यर्थः ॥ ४८ ॥

**नैनो राज्ञः प्रजाभर्तुर्धर्मयुद्धे वधो द्विषाम् ।**
**इति मे न तु बोधाय कल्पते शासनं वचः ॥ ४९ ॥**

ननु युध्यमानानां वधः को वा दोषाय ? सत्यम् । "**श्रेयः प्रजापालनमेव राज्ञामि**" ति प्रजारक्षार्थं शत्रुवधश्चेत्तदा न दोषः । प्रकृते तु दुर्योधनेनैव प्रजापालने क्रियमाण एव मया स्वलोभार्थमेव सर्वे हताः । अतो राज्ञो धर्मयुद्धे द्विषां वधः प्रजाभर्तुर्नैनः न दोष इति नीतिवचनं मां बोधयितुं न शक्नोतीत्यर्थः ॥ ४९ ॥

ननु प्रायश्चित्तं क्रियतां किं शोकेन ? तत्राऽऽह—

**स्त्रीणां मद्धतबन्धूनां द्रोहो योऽसाविहोत्थितः ।**
**कर्मभिर्गृहमेधीयैर्नाऽहं कल्पो व्यपोहितुम् ॥ ५० ॥**

**स्त्रीणामिति** । पापस्य हि रोगवत्प्रतीकारः । स च प्रत्यग्रोत्पन्नस्य प्रथमं कर्तव्यः । पश्चात्पुरातनानाम् । प्रत्यहं च सहस्रं स्त्रियो मद्धतान् भर्तॄन् गृहीत्वा शोचन्त्यो म्रियन्ते । स द्रोह इहैव महानुपस्थितः । नन्वस्यैव तर्हि प्रायश्चित्तं क्रियताम् ? तत्राऽऽह—**कर्मभिरिति** । अस्त्यत्र प्रायश्चित्तं सर्वपरित्यागः शरीरपरित्यागो वा । न तु गृहमेधीयैः कर्मभिर्द्रव्यमयैर्भूतहिंसात्मकैः ॥ ५० ॥

यद्यपि प्रायश्चित्तत्वेन वेदेन बोध्यते तथापि मम नाऽधिकारः । तथाविधसाधनाऽभावात् । अयथाविधसाधनैस्त्वजीर्णे भोजनवत्सर्वनाशक इति न तादृशयज्ञेन निस्तार इति सदृष्टान्तमाह—

**यथा पङ्केन पङ्काम्भः सुरया वा सुराकृतम् ।**
**भूतहत्यां तथैवैकां न यज्ञैर्मार्ष्टुमर्हति ॥ ५१ ॥**

**यथेति** । कर्दमजलक्षालनार्थं यथा पङ्कलेपो भित्त्यादिलेपनवदधिकमृत्सम्पादको भवति । अस्य दृष्टान्तस्य न परलोकनाशकत्वमित्याशङ्क्य दृष्टान्तान्तरमाह—**सुरया वेति** । यथा सुराबिन्दुस्पर्शे महत्या सुरया प्रक्षालनं परलोकनाशकं भवति । एवमेवैकामपि स्त्रीहत्यां बहुभिरपि यज्ञैः पशुमारकैर्दूरीकर्तुं कोऽपि नाऽर्हतीत्यर्थः । वस्तुतः पूर्वकाण्डविचारकैर्निर्मथितं ज्ञानं मोहज्ञानमिति निरूपितम् । एवं भगवतोऽद्भुतकर्मत्वं सिद्धम् ॥ ५१ ॥

**इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां प्रथमस्कन्धे अष्टमोऽध्यायः ॥ ८ ॥**

---

१ द्रोण्यादय इति ख. २ अत एव वेति ग. ३ दुर्योधने इति ग. घ. ४ शोकेनेति इति ख. ५ महाहत्यामिति घ.

# नवमोऽध्यायः ।

लोकप्रतीत्या कृष्णस्य यदा कार्यसमापनम् ।
तदा भागवतश्रोतुर्देहरक्षा निरूप्यते ॥ १ ॥
ऐहिकाऽऽमुष्मिकफले भक्तानां स्थानभाग्ययोः ।
सर्वेष्टापूरणं चैव भगवत्कार्यसङ्ग्रहः ॥ २ ॥
श्रीमद्भागवतश्रोतु रक्षापूर्वक्रियाऽखिला ।
निरूपिता ततो मध्ये भगवत्कार्यवर्णनम् ॥ ३ ॥

एवं परीक्षितः शरीररक्षाप्रस्तावे रक्षापूर्वकार्यं मायावेष्टनमुक्त्वा इतरकार्यनिरूपणे ऐकाग्र्येण रक्षाऽसम्भवान्मध्ये भगवत्कार्यं निरूपणीयम् । तच्च कार्यं चतुर्विधम् । सर्वभक्तानामैहिकसर्वफलदानपूर्वकं भक्तिदानमैहिकाऽऽमुष्मिकयोरेकसम्बन्धाय निर्वेदश्च प्रथमम् । ज्ञानसन्देशपूर्वकपरमभक्तिप्रादुर्भावेन मुक्तिर्द्वितीयम् । सर्वभक्तचित्तसमाधानपूर्वकस्वस्थानप्राप्तिस्तृतीयम् । तत्रत्यानां सर्वसुखदानोपसंहारश्चतुर्थम् । तत्र मुक्तिदानमेवोत्तमतत्कार्यमैहिकफलदानादि तत्पूर्वाङ्गमिति निश्चित्य रक्षापूर्वाङ्गेन सहैकस्मिन्नध्यायेऽष्टमे निरूपितम् । नवमे द्वितीयं कार्यं निरूप्यते ।

नवमे स्वस्य भिन्नत्वं प्राप्तस्याऽभावसंशये ।
स्वच्छन्दमृत्योस्तच्छान्त्यै मुक्तिर्भीष्मस्य वर्ण्यते ॥
पुरस्कृतोऽघमुत्सृज्य जह्याद्देहमितीरितः ।
राज्ञो मोहप्रसङ्गाय निवृत्तिश्चोपदेशतः ॥
भक्तोऽपि भगवद्द्रोहमाचरन्नरकं व्रजेत् ।
इति दर्शयितुं भीष्मशरपञ्जरसंस्थितिः ॥
तस्याऽप्युद्धारकः कृष्णो निजदत्तधिया स्तुतः ।
इति स्तुतिस्तथाऽप्यस्य तादृग्रूपेण वर्ण्यते ॥

सङ्गतिमाह—

## सूत उवाच—

इति भीतः प्रजाद्रोहात्सर्वधर्मविवित्सया ।
ततो विनशनं प्रागाद्यत्र देवव्रतोऽपतत् ॥ १ ॥

**इति भीत इति ।** जातेऽपि प्रजाद्रोहे किमस्मत्कृतं न वा, अधर्मजनकत्वमस्ति न वेति सन्देहात्प्रजाद्रोहस्य भयहेतुत्वम् । अत एव सर्वज्ञस्यैव सर्वसन्देहनिवृत्तिरिति सर्वतत्त्वज्ञानार्थं सर्वेषां धर्माणां वेदितुमिच्छया । ततो हस्तिनापुरात् । विनशनं कुरुक्षेत्रं प्रागात् । तत्रापि यत्र देवव्रतोऽपतत् । देवव्रतं यस्य । भगवतो यथा प्रतिज्ञा ब्रह्मचर्यादि । सोऽपि भगवतोऽद्भुतचरित्रत्वादपतत् ॥ १ ॥

१ फले इति ख. २ श्रीमद्भागवतः श्रोतुरिति क. ग. ङ. ३ मायाचेष्टनमिति ख. ४ इतरकार्यनिरूपणे इति ग. ५ ऐहिकाग्रेणेति ख. एकाग्रेणेति ग. ६ ज्ञानसन्देशपूर्वकं परमेति ख. ७ सर्वभक्तचित्तेति ख. ८ प्राप्तिमिति ख. ९ उत्तमकार्य्यमिति क. ख. ङ. १० दानादिति तत्पूर्वेति ख. ११ कथित इति क. १२ पररक्षापूर्वाङ्गेनेति क.



तदा भीष्मपुरस्कारार्थं सर्वे गता इत्याह—

तदा ते भ्रातरः सर्वे सदश्वैः स्वर्णभूषितैः ।
अन्वगच्छन् रथैर्विप्रा व्यासधौम्यादयस्तथा ॥ २ ॥

**तदा त इति ।** ये भ्रातरः प्रजाद्रोहादि कृतवन्तस्त इति । सर्वे अन्येऽपि । विप्रा अपि गताः । ते वेदव्यासपाण्डवकृतपुरोहितधौम्यादयः ॥ २ ॥

भगवानपि मुक्तिदानार्थमवश्यगमनेऽपि युधिष्ठिरप्रियार्थं सहैव गत इत्याह—

भगवानपि विप्रर्षे रथेन सधनञ्जयः ।
स तैर्व्यरोचत नृपः कुबेर इव गुह्यकैः ॥ ३ ॥

**भगवानपीति ।** विप्रर्षे इति सम्बोधनं भगवतोऽनुवृत्तिर्लीलात्वान्न दोषायेति ज्ञापनार्थम् । **रथेन सधनञ्जय इति ।** गरुडध्वजमारुह्याऽर्जुनेन सारथिनाऽन्वगच्छदिति लक्ष्यते । तेषां भ्रात्रादीनां गमनेऽपि राज्ञो बहिरेव सुखं नाऽन्तरित्याह—**स तैरिति ।** नृपत्वात्परं तैः रोचनम् । वस्तुतस्त्वन्तररोचनं सदृष्टान्तमाह । यथा गुह्यकैः सह कुबेरः । कुत्सितं वेरमक्षि यस्य । अनेन बहिः प्रकाशो महान् । अन्तस्त्वन्धतुल्यः । तथाऽयमपि शोकग्रस्त इत्यर्थः ॥ ३ ॥

एवं सर्वैः सह गमनमुपपाद्य सम्भाषणव्यतिरेकेणैव दर्शनमात्रेण नमस्कारं कृतवन्त इत्याह—

दृष्ट्वा निपतितं भूमौ दिवश्च्युतमिवाऽमरम् ।
प्रणेमुः पाण्डवा भीष्मं सानुगाः सह चक्रिणा ॥ ४ ॥

**दृष्ट्वेति ।** पतितस्याऽपि महती कान्तिरिति सदृष्टान्तमाह । भूमौ तस्य स्पर्श एवाऽयुक्तः किं पुनः पातः । तथा भीष्मस्य पराजय एवाऽशक्यः किं पुनरेवम्भावः । तादृशोऽपि देवो मनुष्याणां नमस्करणीयः । तथा भीष्मोऽपि भगवद्विरोधाचरणेऽपि नमस्करणीयः । यथा देवः स्वपदच्युतोऽपि अन्येषां भजनीयः । बुद्ध्यादीनां विद्यमानत्वात् । तथा भीष्मोऽपगतदेहोऽपि ज्ञानपूर्णत्वान्नमस्करणीय इत्यर्थः । **पाण्डवा इति** भ्रात्रेयपुत्रत्वान्नमस्कारयोग्यता सूचिता । भीष्मोपदिश्यमानधर्मस्य सर्वेषां ग्रहणसिद्ध्यै समागतानां सर्वेषां नमनमिति—**सानुगा इति ।** आगत्य नमनं यस्तु लोकानुरूपस्तथा न चेत् । विपरीतत्वमापन्नः कथमेवं भवेदिति । सर्वैः सह नमस्कारस्ततो भगवता कृतः । चक्रिणेति पदं घातकरूपज्ञापनार्थमद्भुतकर्मत्वाय ॥ ४ ॥

सर्वज्ञा ऋषयो भीष्मो गूढं तत्त्वं वक्ष्यतीति समागता इत्याह—

तत्र ब्रह्मर्षयः सर्वे देवर्षयश्च सत्तमाः ।
राजर्षयश्च तत्राऽऽसन्द्रष्टुं भरतपुङ्गवम् ॥ ५ ॥

१ नाऽन्तरमित्याहेति क. ख. २ दर्शनमात्रेणैवेति क. ख. ङ. ३ भ्रातृव्येपीति ... ग. घ. ४ सिद्धौ इति ख. ५ ज्ञापनार्थमिति ग. घ.

**तत्रेति** । ब्रह्मर्षयो भृग्वादयः । देवर्षयो नारदादयः । राजर्षयो मन्वादयः । ते हि त्रिविधधर्ममन्त्रद्रष्टारः । सर्वेषां देहेन्द्रियादिस्वास्थ्ये शुद्धो धर्मादिः स्फुरति नाऽन्यथेति धर्मतत्त्वं ज्ञात्वा भीष्मे धर्मः परिनिष्ठितो न वेति द्रष्टुमागताः । "**दौष्यन्तिरत्यगान्मायामि**"ति भरतस्य मायापगमनादेहदृष्ट्या धर्मं न वक्ष्यति । तद्वंशोद्भवश्रेष्ठत्वात् । स्वार्थदर्शनाच्च भवति सन्देहः । अत एव ऋषीणां मतेषु बाधकविषयत्वम् ॥ ५ ॥

राजसादिविभेदेन एते भेदाः । तान् गणयति त्रिभिः । **सात्त्विकाः प्रथमं प्रोक्ता राजसास्तदनन्तरम् । तामसा दोषनिर्ह्रासात्तुल्यास्ते राजभिर्मताः ॥**

पर्वतो नारदो धौम्यो भगवान् बादरायणः ।
बृहदश्वो भरद्वाजः सशिष्यो रेणुकासुतः ॥ ६ ॥
वसिष्ठ इन्द्रप्रमदस्त्रितो गृत्समदोऽसितः ।
कक्षीवान् गौतमोऽत्रिश्च कौशिकोऽथ सुदर्शनः ॥ ७ ॥
अन्ये च मुनयो ब्रह्मन् ब्रह्मरातादयोऽमलाः ।
शिष्यैरुपेता आजग्मुः कश्यपाङ्गिरसादयः ॥ ८ ॥

**पर्वत इति** । न देवर्षित्वमात्रं भगवानित्युक्तम् । रेणुकासुतः परशुरामः । सोऽपि सशिष्यः । एते सप्त सात्त्विका देवर्षयः । वसिष्ठादयो दश राजसा ब्रह्मर्षयः । वस्तुतस्तु नवैव । अथेति भिन्नक्रमेण । सुदर्शनस्याऽग्रे कथनात् । सुदर्शनः । अन्ये च राजर्षिभेदाः ब्राह्मणा अपि तत्त्वेन निर्दिष्टाः । ब्रह्मरातः शुकः । तेषां तामसत्वादिदोषाभावमाह—**अमला इति** । बहिरेव ते तामसा अन्तस्तु निर्गुणा इति । तन्मध्ये ब्रह्मरातादयः श्रेष्ठाः । कश्यपादयो मध्यमाः । आङ्गिरसो बृहस्पतिः ॥ ६ ॥ ७ ॥ ८ ॥

अत्रोत्तमाधिकारे धर्मनिर्णये तदुक्तेषु तरतमभावज्ञानार्थं गणना । एवं त्रयः समागताः । पाण्डवा भगवानृषयश्चेति । तत्र ऋषिषु कृतमाह—

तान्समेतान्महाभाग उपलभ्य वसूत्तमः ।
पूजयामास धर्मज्ञो देशकालविभागवित् ॥ ९ ॥

**तान्समेतानिति** । महान् भागो यस्येति । धर्मज्ञानादिसमूहो भागः । वसूत्तमो भीष्मः । भूमौ हि वसवो मोच्यन्ते । तथाऽन्येऽन्यत्र तद्वदे । पुष्टिभक्तत्वव्यावृत्त्यर्थमाह । देशकालयोर्विभागः । देशकालविभागा वा । प्राकृतत्वादृषीणामनुत्तमस्याऽपि पूर्वस्य प्रथमं पूजनमित्यादि । **विधानविदिति** पाठेऽपि स एवाऽर्थः ॥ ९ ॥

एवं मुनीन् मनसा वचसा धर्मोपयोगित्वेन पूजयित्वा भगवन्तमपि तथैव पूजितवानित्याह—

कृष्णं च तत्प्रभावज्ञ आसीनं जगदीश्वरम् ।
हृदिस्थं पूजयामास माययोपात्तविग्रहम् ॥ १० ॥

१ त्रिविधमन्त्रद्रष्टार इति ग. २ धर्मादि इति क्लीबं क. ख. ग. ३ भिन्नप्रक्रमेणेति क. ख. ४ सुदर्शनाग्रे इति क. ५ भौमो हीति ख. ६ प्रकृतत्वादिति ख. ७ अनुत्तमस्याऽप्यपूर्वस्येति क. ख.



**कृष्णं चेति** । ननु भगवन्तं कथं पूजितवानित्याकाङ्क्षायामाह—**तत्प्रभावज्ञ इति** । पूर्वोक्तानुत्थितानेव दर्शनमात्रेण पूजितवान् । भगवन्तं तु आसीनम् । पूजायां भावनया सर्वोत्तमत्वप्रकारं ज्ञापयितुं **जगदीश्वरमित्युक्तम्** । **हृदिस्थमित्यन्तर्यामिणम्** । तस्य बहिर्माने हेतुः—**माययोपात्तविग्रहमिति** । मायया शक्त्या स्वीकृतो विग्रहो येन । प्राकृतगणेनेन्द्रियादिना अहङ्कारेण च जीवानां देहग्रहणम् । भगवतस्तु स्वशक्त्यैव देहनिर्माणमपि । मायात्वादन्यथा भासयति । बीजसम्बन्धित्वेन पुत्रत्वादिना केचिद्बीजमेव मायया गृहीतमित्याहुः । एवं लोकानुसारेण भीष्मबुद्ध्यनुसारेण स भगवान्निरूपितः । वस्तुतस्तु यथा भगवान् तदुत्तरत्र निरूपयिष्यते ॥ १० ॥

एवमुभयोः पूजनमुक्त्वा प्रथमोक्तान् पाण्डवानपूजयित्वैव स्वोक्तार्थग्रहणसिद्धये, शोकापनोदनपूर्वकस्वदोषाभावकथनेन सह भगवन्तं निरूप्य फलं प्रार्थयते **पाण्डुपुत्रानित्यादि**चतुर्दशभिः—

पाण्डुपुत्रानुपासीनान् प्रश्रयप्रेमसङ्गतान् ।
अभ्याचष्टाऽनुरागास्रैरन्धीभूतेन चक्षुषा ॥ ११ ॥

भ्रातृ(?)पुत्रत्वेन स्नेहशिक्षायोग्यता । **उपासीनानिति** । धर्मयुक्तान् । **प्रश्रयप्रेमसङ्गतानिति** ज्ञानोपदेशे हेतुः । विनीतेषु स्निग्धेषु हि ज्ञानमुपदिश्यते । भगवद्दर्शनात्क्रूरभावेऽपगते स्निग्धभावेन वदतीत्याह—**अनुरागास्रैरिति** । अन्धीभूतेन चक्षुषा सहितो, लक्षितो वा स्निग्ध इति । स्वक्लेशेन सहितं परदुःखं रोदने हेतुः । सर्वे हि भगवता व्यामोहिताः । एतेऽपि क्लेशं प्राप्तवन्तो वयमपीति भावः ॥ ११ ॥

तेषां क्लेशमनुवदति द्वयेन—

भीष्म उवाच—

अहो कष्टमहोऽन्याय्यं यद्यूयं धर्मनन्दनाः ।
जीवितुं नाऽर्हथ क्लिष्टं विप्रधर्माच्युताश्रयाः ॥ १२ ॥

**अहो कष्टमिति** । अहो इत्याश्चर्ये । तेषां वनवासक्लेशं स्मृत्वा निरन्वयमेतत्प्राप्तमित्यहो कष्टम् । हेलनकेशग्रहणादिकं स्मृत्वा अहो अन्याय्यमिति पूर्ववत् । **बीजस्वभावक्षेत्राणां धर्माधर्मैस्तथा पुमान् । सुखं दुःखं च लभते कर्ममार्गेण नाऽन्यथा** । तत्र यद्भवद्भिः प्राप्तं दुःखं क्लेशाच्छारीरमन्यायान्मानसं, तत्कर्मजन्यं न भवति । यस्मात् यूयं धर्मनन्दनाः । यद्यपि युधिष्ठिर एव धर्मपुत्रस्तथापि तत्प्राधान्येन स्थिता इति सर्वे तत्त्वेन व्यपदिश्यन्ते । अतो बीजदोषाभावाद्दुःखं न युज्यते । किञ्च । **विप्रधर्माच्युताश्रयाः** । भवत्सु स्वाभाविको दोषो नास्ति । स्वभावदुष्टा हि त्रेधा धर्मं नाऽऽश्रयन्ते । धर्मो हि त्रिविधः । नीत्यविरुद्धः, स्वभावशुद्धः, ईश्वरसम्बन्धी च । तत्र विप्राश्रितानां सर्वनीतिज्ञानान्नीतिविरोधाभावः । धर्मश्च स्वाश्रितं शुद्धे स्थापयति । अच्युताश्रयत्वाच्चेश्वरसम्बन्धी धर्मः स्फुरति । एकैकाश्रितोऽपि न क्लेशं प्राप्नोति । किमुत त्रितयाश्रितः । त्रयाणामेकभावात् । धर्ममार्गे चेयं व्यवस्था । कालमार्गेण भिन्नतया वक्ष्यति, भगवन्मार्गेण च ॥ १२ ॥

१ बीजसम्बन्धित्वेनेति क. ग. घ. ङ. २ केचिद्बीजजमेवेति क. ख. घ. ङ. ३ स्वक्लेशेनेति घ. ङ. ४ सुखदुःखमिति ख. ५ हेलनं कचग्रहणादिकमिति क. ख. ६ धुमोक्तवेति ग. ७ अतो दुःखमिति क. ८ नित्यविरुद्ध इति ग.

एवं स्वभावबीजदोषौ परिहृत्य क्षेत्रदोषाभावायाऽऽह—

संस्थितेऽधिरथे पाण्डौ पृथा बालप्रजा वधूः ।
युष्मत्कृते बहून्क्लेशान् प्राप्ता तोकवती मुहुः ॥ १३ ॥

**संस्थित इति** । संस्थितिः शरीरत्यागः । **अधिरथ इति** शौर्यं क्षत्रियधर्मः । **पाण्डुरिति** राजत्वम् । बालाः प्रजा यस्याः । अनेन रक्षकान्तराभावः सूचितः । **वधूरिति** स्वधर्मपरिपालनं सूचितम् । अत एव **युष्मत्कृते** धर्ममार्गेण भवद्रक्षार्थं बहून् क्लेशान् प्राप्तवती । माद्रीपुत्रौ तोकौ यमलजातावतिबालकौ पदचलनेऽप्यशक्तौ । अत एव मुहुः । तस्मात्सर्वथा स्वधर्मपरिपालनान्न क्षेत्रदोषः । दृष्टं त्वदृष्टसापेक्षमित्यदृष्टाभावे दृष्टमप्यस्मदादिरूपं न हेतुरिति ज्ञापितम् ॥ १३ ॥

अकारणककार्योत्पत्त्यभावात्किं कारणमित्याकाङ्क्षायामाह—

सर्वं कालकृतं मन्ये भवतां यच्चदप्रियम् ।
सपालो यद्वशे लोको वायोरिव घनावलिः ॥ १४ ॥

**सर्वं कालकृतमिति** । सर्वमाध्यात्मिकादि । अस्मत्कृतमन्यकृतं वा सर्वं कालकृतं कालकर्तृकम् । न तु निमित्तमात्रत्वं **कालस्य** । ज्योतिःशास्त्रे तथैव प्रतिपादनात् । ननु बहूनां हेतुत्वेन प्रतिपादनाल्लोककालकर्मस्वभावेश्वराणां मध्ये कथं कालस्यैव हेतुत्वम्? तत्राऽऽह—**मन्य इति** । ममैवं प्रतिभाति । "**प्रमाणमन्तःकरणप्रवृत्तय**" इति वाक्यात्स्वमनसि निश्चितं यदेतेषां काल एव दुःखहेतुः । ज्योतिश्शास्त्रसंवादाल्लोकैककर्मणोर्निराकरणाच्च । ज्ञानिनोऽपि क्लेशात्स्वभावान्तःपाति न मायादि हेतुः । ईश्वरस्य च सहवृत्त्या भक्तत्वाच्च नेश्वरकृतं दुःखम् । अतः पारिशेष्यात्कालकृतमेव **मन्ये** । **यच्चदिति** प्रसिद्ध्या नैतादृशं कर्म भवतां जन्मान्तरेऽपीति सूचितम् । प्रकृतोपयोगाय कालस्य सामर्थ्यमाह—**सपाल इति** । स्वाधारवश्यत्वाल्लोकानां वयसा च व्याप्तत्वात्कालाधीनत्वम् । कालमित्या भोगाच्च । ब्रह्माण्डस्थितिरपि कालमिता । **सपालो लोकः** इन्द्रादिसहितो लोकः । न केवलमुत्पत्तौ कालवशत्वम् । किन्तु स्थितिकार्यकरणनाशेऽपीति दृष्टान्तमाह—**वायोरिति** । यथा वायोर्वशे घनपङ्क्तिः । सर्वमासेषु समागच्छन्तोऽपि मेघा वायुनैव भवन्ति न भवन्ति च ॥ १४ ॥

कालकृते पूर्वोक्तकर्मादिनिराकरणे च तर्कमाह—

यत्र धर्मसुतो राजा गदापाणिर्वृकोदरः ।
कृष्णोऽस्त्री गाण्डिवं चापं सुहृत्कृष्णस्ततो विपत् ॥ १५ ॥

**यत्रेति** । सर्वा दृष्टसामग्री वर्तते दुःखाभावहेतुः । धर्मः पुत्रं पालयति । स च राजा । स्वयं पालितोऽन्यान् पालयेत् । वृको दशविधः प्राण उदरे यस्य । स च बलाधिष्ठात्री देवता । **गदापाणिः** । ससाधनः । **कृष्णोऽर्जुनः** । नाम्ना समानधर्मत्वं प्राप्तः । **अस्त्री** । गाण्डीवधनुषा ब्रह्मास्त्रादि-

१ भवद्दर्पमिति ख. भगवद्रक्षार्थमिति ग. घ. २ अकारणकार्य्येति घ. ३ लोककर्मणो निराकरणादिति ख. घ. ४ भक्तत्वान्नेश्वरकृतमिति घ. ५ कालाधीनत्वमिति नास्ति घ. ६ इन्द्रादिसहिता लोका इति क. ग. ङ. ७ किन्त्विति नास्ति क. ८ करणेति घ. ९ अपिर्नास्ति घ. १० धर्मपुत्रमिति ग. पुत्रमित्येतावन्मात्रं घ. ११ यमो न धर्मत्वमिति ग.



प्रयोगसमर्थः । चापस्याऽक्षयत्वं नाम्ना सूचयति । अन्यत्तु नाशयोग्यम् । भगवांश्च सुहृत् हितान्वेषी । एत एव विचार्यमाणे दुःखहेतवो जाताः । तथाहि । पाण्डुना पूर्वमेव पुत्रं पार्श्वे स्थापयित्वा राज्यत्यागः कृतश्चेत्तदा न दुःखशङ्का । भीमस्य वा महाबलत्वाभावे न दुःखं भवेत् । अर्जुनस्य वा राधावेधाधकरणे मात्सर्याभावान्न दुःखं भवेत् । अग्निना वा साधनानि न दत्तानि चेदिन्द्रेण सह कलहाभावादेवद्रोहो न भवेत् । भगवता साहाय्यं न कृतं स्यात्तदा दीनदयया दुःखदातृमिदुःखं न दत्तं स्यात् । तस्मात्सुखसाधनत्वेन ये गृहीतास्तैश्चेद्दुःखं तदा कालकृतमित्येव निश्चयः ॥ १५ ॥

नन्वेवं सति कालस्य बलिष्ठता सूचिता । तथाच कथं भगवन्तं कालोऽतिक्रामेत्? तत्राऽऽह—

नह्यस्य कर्हिचिद्राजन्पुमान्वेद विधित्सितम् ।
यद्विजिज्ञासया युक्ता मुह्यन्ति कवयोऽपि हि ॥ १६ ॥

**नह्यस्येति** । अस्य भगवतो विधित्सितं कोऽपि न वेद । यद्यपि कालो भगवदाज्ञाकारित्वाद्भगवदिच्छायां सत्यां न प्रवर्तते । परं भगवदिच्छैव ज्ञातुमशक्या । भगवांश्च सुखदुःखहेतुः । तथा सति सर्वत्र सर्वस्य स्यात् । किन्तु भगवदिच्छा सा कार्यैकोन्नेया न कार्यात्पूर्वमवगन्तुं शक्या । नन्वेवं सति भगवान् कथं विश्वसनीयः? तत्राऽऽह—**यद्विजिज्ञासयेति** । भगवान् पाण्डवेभ्यः किं दुःखं दत्तवान्, निर्वेदार्थं वा सुखं दत्तवान्, भगवत्परिपालितत्वज्ञानेन भक्तिं वा दत्तवान्, कौरवाणां वा हितं कृतवानिति विचारे क्रियमाणे सर्वत्र युक्तिसम्भवात् । अत एव कवयोऽपि मुह्यन्ति । अवाङ्मनोगोचरे युक्तिर्न प्रवर्तेत इति हिशब्दार्थः ॥ १६ ॥

तर्ह्येतः परं कः प्रतीकार इत्यत आह—

तस्मादिदं दैवतन्त्रं व्यवस्य भरतर्षभ ।
तस्याऽनुविहितोऽनाथा नाथ पाहि प्रजाः प्रभो ॥ १७ ॥

**तस्मादिति** । यस्मात्सर्वं कालाधीनम् । स च कालो भगवान् । तदेव च दैवशब्दवाच्यम् । कालातिक्रमश्च प्रकारान्तरेण न सम्भावनीयः । तस्मादेतदनुविहितः एतदाज्ञाकारी सन् अनाथाः प्रजाः पाहि । आज्ञाकरणेन स्वधर्मेण च भगवान्परितुष्यतीति मर्यादा । यद्यपि विशेषतः प्रमेयबलविचारेण भगवान् केन तुष्यतीति न ज्ञायते तथापि प्रमाणबलविचारेणैतदुक्तम् । पूर्वं दुर्योधनादयो नाथाः स्थिताः । इदानीमनाथाः प्रजाः । अथवा । त्वयि नाथेऽपि नाथत्वाभिमानाभावादन्यया केवलं ताः प्रजाः पालनीयाः । समर्थत्वात् ॥ १७ ॥

ननु "**तस्याऽनुविहित**" इति पूर्वपरामर्शात्पूर्वं कालस्य निरूपितत्वात् "**दैवतन्त्रमि**"त्यनेन ततोऽपि पूर्वं कृष्णस्य निरूपितत्वात्कस्याऽनुविहितो भवेदिति सन्देहे, कालस्य सर्वाधीनत्वकथनाच्च-दधीनत्वमनूद्य प्रजापालनं विधीयत इत्यायाति । "**न ह्यस्येति**" वाक्ये च पूर्वं कृष्णस्य निरूपणात्कालाधीनत्वे निरूपिते तन्निवारणार्थं तद्विधित्सितसन्देहो निरूपितः । तत्र किं कृष्णः कालाधीनो न

१ तथाहीति नास्ति ख. अहि इति क. ग. २ पुत्रमुपादायेति क. ख. ग. ३ राज्ये त्याग इति क. ख. ग. ४ अतिक्रामेदिति क. ख. ग. ५ पूर्वमेव गन्तुमिति घ. ६ वर्तेत इति घ. ७ प्रमाणबलविचारेणैव तदुक्तमिति घ. ८ परिपालनीया इति ग. ९ तदधीनमिति ख. १० कृष्णनिरूपणादिति क. ग. घ.

भवतीति निरूप्यते ? कालकारणत्वं वा निवार्यते ? कालकृष्णयोर्वा सहभावेन दुःखकारणत्वं निरूप्यते ? त्रिष्वपि पक्षेषु कालात्कृष्णस्य भेदः समायाति । ततश्च कालपक्षः पूर्वापरविरुद्ध इत्याशङ्क्य तन्निराकरणार्थं काल एव कृष्णः स च भगवानिति कृष्णस्य भगवत्त्वं विस्तरेण निरूपयति—

**एष वै भगवान् साक्षादाद्यो नारायणः पुमान् ।**
**मोहयन् मायया लोकं गूढश्चरति वृष्णिषु ॥ १८ ॥**

**एष वै भगवानिति** । **एषः** कालरूपः कृष्णः, **वै** निश्चयेन, उपचाराभावेन ज्ञानद्वाराभावेन च **साक्षाद्भगवान्** । ननु किमस्य कृष्णस्य कालरूपस्य भगवत्त्वे ? तत्राऽऽह—**आद्यो नारायणः पुमानिति** । य **आद्यः** पुरुषोत्तमः स एव **नारायणो** ब्रह्माण्डविग्रहः । स **पुमान्** स्वराट् । अनेन कालस्य कृष्णत्वं कृष्णस्य भगवत्त्वं भगवतः पुरुषोत्तमत्वं पुरुषोत्तमस्य नारायणत्वं नारायणस्य स्वराट्पुरुषत्वमिति । स च स्वशरीरे भारप्रतिभाने तन्निवारणार्थं समागतो यदुषु प्रविष्टो वर्त्तते । यथाऽऽत्मानं कोऽपि न जानाति तथा **मायया** नरचेष्टाभिर्लोकं व्यामोहयन् सर्वथा भगवत्त्वं सङ्गोप्य सर्वान् भक्षयितुं चरतीत्यर्थः ॥ १८ ॥

ननु कथमयमेवम् ? कथं वा कोऽपि न जानाति ? इत्यत आह **अस्याऽनुभावमिति** द्वाभ्याम्—

**अस्याऽनुभावं भगवान् वेद गुह्यतमं शिवः ।**
**देवर्षिर्नारदः साक्षाद्भगवान्कपिलो नृप ॥ १९ ॥**

अयमेवमेव । एतस्यैवंविधस्यैवमनुभावः सर्वमारणलक्षणः सर्वगोप्यः । तं शिव एव जानाति । यस्तं स्मरन्सर्वान्भक्षयन्नपि शिवः कल्याणरूपो भवति । तथा देवर्षिर्नारदः सर्वत्र प्रविश्य सर्वान्मारयन्सर्वहितत्वेन प्रतिभातः । तथा साक्षाद्भगवान् कपिलो यः प्रकृतेरेव कारणत्वं निरूप्य पुरुषकारणत्वं निवार्य सर्वहेतुः सन् सर्वहेतुत्वं निवारयति । अतः सात्त्विकेषु राजसेषु तामसेषु गुणातीतत्वेनोक्तास्त्रय एव जानन्ति ॥ १९ ॥

अन्ये तु बहुधा श्रुत्वाऽपि न जानन्ति, यथा भवन्त इत्याह—

**यं मन्यसे मातुलेयं प्रियं मित्रं सुहृत्तमम् ।**
**अकरोः सचिवं दूतं सौहृदाद्रथसारथिम् ॥ २० ॥**

**यं मन्यस इति** । वसुदेवगृहेऽवतारान्मातुलपुत्रं मन्यसे । किञ्च । **प्रियं** प्रीतिविषयं मन्यसे सम्बन्धेनाऽऽत्मीयत्वेन । **मित्रमुपकारित्वेन** । गुर्वीं निरन्तरोपकारित्वेन द्रौपद्यादिदानात्सुहृत्तमं च । **सुहृत्** सद्भावयुक्तः कदाऽप्यकपटः परोक्षे प्रत्यक्षे च साक्षात्परम्परया च तद्धितमेव विचारयति । न केवलं ज्ञानमात्रं, किं त्वयुक्तानि बहून्येव कृतवान् । तदाह । **अकरोः सचिवम्** । सचिवो

१ सहाभावेनेति ख. २ ध्यानद्वारेत्यादि पाठान्तरम् ख. ३ भारप्रतिभानेनेति क. ४ अयमेव चेति घ. ङ. ५ सर्वमारण इति घ. ६ सर्वागोप्य इति घ. ७ तथाचेति क. ग. घ. ८ यः इति नास्ति घ. ९ भवानिति घ. ङ. १० गुह्यमिति घ. ङ. ११ सुहृद्भावयुक्त इति ग. १२ अकरोत्सचिवमिति क. ख. घ.



मन्त्री । दूतो हीनतया कार्यसाधकः । व्यवहारे समस्याऽपि हीनत्वकरणं सौहार्दात् । अत एव रथस्य सारथिं कृतवान् । रथस्य रक्षकः सारथिर्नियतः केवलसारथ्यव्यावृत्त्यर्थः ॥ २० ॥

नन्वन्ये भगवन्तं मा जानन्तु । भगवांस्त्वात्मानं जानन् कथं हीने कर्मणि प्रवर्तते ? तत्राऽऽह—

**सर्वात्मनः समदृशो ह्यद्वयस्याऽनहङ्कृतेः ।**
**तत्कृतं मतिवैषम्यं निरवद्यस्य न क्वचित् ॥ २१ ॥**

**सर्वात्मन इति** । सर्वस्मिन्नात्मा यस्य । अनेन स्वार्थमेव करोति । कथं वैषम्यं स्यात् । वेदादिप्रणेतृत्वाच्च शत्रुमित्रोदासीनेषु समबुद्धिः । अतोऽपि न वैषम्यम् । किञ्च । भेददर्शने सत्येवं भवति । तस्य तु सर्वत्राऽऽत्मैव भासते । अतो न विद्यते द्वैतं यस्य । तादृशस्य कथं वैषम्यम् । **स्वरूपेण प्रमाणेन प्रमेयेण निराकृतम्** । वैषम्यमवतारे तु **निरहङ्कृतेर्यथा तनौ** । न विद्यते अहंकृतिर्यस्य । तत्कृतमुच्चनीचकर्मकृतम् । सर्वमेव किञ्चित्कर्तव्यमिति करोति । न तूत्कृष्टमिति । ननु हीनकर्मणा कथं न दोषः स्यात् ? अत आह—**निरवद्यस्येति** । अपहतपाप्मन इत्यर्थः । अपहतपाप्मत्वं न देशकालावच्छिन्नमित्याह—**न क्वचिदिति** ॥ २१ ॥

तस्मादयमेव सर्वभक्षकोऽज्ञानादुपचरित एवं कृतवानित्युक्ते भयमसेव्यता च प्रतिभाता । तन्निराकरणार्थमाह—

**तथाप्येकान्तभक्तेषु पश्य भूपाऽनुकम्पितम् ।**
**यन्मेऽसूंस्त्यजतः साक्षात्कृष्णो दर्शनमागतः ॥ २२ ॥**

**तथापीति** । यद्यप्येवमेव तथाप्येकस्तस्मिन्नसाधारणो गुणोऽस्ति यद्भक्तकृपा भजनीयत्वे हेतुरभये कारणं च । स चाऽव्यभिचारी नित्यफलश्च । **भूपेति** सम्बोधनं राज्ञामप्येवं कदाचिद्भवतीति संवादार्थम् । कृपाया अव्यभिचारित्वं स्वदृष्टान्तेनाऽऽह—**यन्म इति** । न हि मत्सदृशोऽपराधी कश्चिदस्त्यवहेलनकर्त्ता भक्तद्रोही द्विष्टपक्षपाती च । तथापि कदाचिन्नामग्रहणाद्भक्त्याभासं कृत्य प्राणत्यागसमये भक्तो न मुक्तो भवेदुष्ट इति शङ्कया स्वयमागत्याऽऽत्मसाक्षात्कारं कारयित्वा कृतार्थं कृतवानित्यर्थः । तस्मादन्ये भक्ताः कृतार्था भविष्यन्तीति किं वक्तव्यमिति भावः ॥ २२ ॥

ननु दूरे भगवत्साक्षात्कारान्मुक्तिरिति । भगवदाविर्भावव्यतिरेकेणाऽपि भगवदङ्गैर्मानसरूपनामभिर्मुक्तिर्भवतीत्याह—

**भक्त्याऽऽवेश्य मनो यस्मिन्वाचा यन्नाम कीर्त्तयन् ।**
**त्यजन्कलेवरं योगी मुच्यते कामकर्मभिः ॥ २३ ॥**

**भक्त्याऽऽवेश्येति** । भक्त्येति विहितभक्त्यधिकारिणः प्रत्युक्तम् । वस्तुतस्तु यया यस्मिन्मनोनिवेशनमेव मुक्तिहेतुः । इन्द्रियव्यापारमपि भगवन्नाम्ना कुर्वन्पूर्वं योगाभ्यासरतोऽपि इदानीं भक्तिमार्गेण शरीरं त्यजन्कायवाङ्मनोभिस्तामसराजससात्त्विकमपि कर्म कुर्वन्पूर्वं कामकर्मभिः कृतैर्मुच्यते । एभिः कर्मभिस्तानि कर्माणि स्वभावं प्रापितानि मुक्तिहेतवो भवन्तीति वाऽर्थः ॥ २३ ॥

१ केवलमिति क. घ. २ भगवान्स्वात्मानमिति क. घ. ३ सर्वमात्मैवेति घ. ४ प्रज्ञानादिति घ. ५ कर्मभिरिति ख. कामकर्मक इति घ. ङ. ६ मुक्तिहेतूनीति क. ख. ७ भवन्तीत्यर्थ इति क. घ.

एवं भजनीयभगवद्गुणानुक्त्वा स्वस्य मानसीमूर्तिकल्पनाशक्तेरन्तिमोच्छ्वासपर्यन्तं भगवत्स्थितिमेव प्रार्थयते—

**स देवदेवो भगवान्प्रतीक्षतां कलेवरं यावदिदं हिनोम्यहम्।**
**प्रसन्नहासारुणलोचनोल्लसन्मुखाम्बुजो ध्यानपथश्चतुर्भुजः ॥ २४ ॥**

**स देवदेव इति।** अस्मत्कृपायामन्योऽपि हेतुरस्ति। न केवलमिदानीन्तना भक्तिः। यतो देवानां वस्वादीनां देवः सर्वदा पूज्यः। किञ्च। स्वतश्च पूर्णः। भगवानिति। स यावदिदं शरीरं मया त्याज्यं तावत्तिष्ठतु। न तु मध्ये शरीरं गृह्णातु मारयतु वा। **इदमिति** जीर्णम्। **अहमिति** सामर्थ्यम्। "**ये यथा मां प्रपद्यन्ते**" इति वाक्यानुसारेण मा तिष्ठतु किन्तु प्रसन्नहासः अरुणे च लोचने ताभ्यामुल्लसन्मुखाम्बुजं यस्य। हासस्य[1] प्रसन्नत्वान्न मायामोहः। लोचनयोररुणत्वान्[2]मत्तापदूरीकरणम्। तयोरपि प्रसादे विशेषणे मयि सर्वगुणनिधानम्। मुखाम्बुजस्य तादृशत्वेन स्वपदप्राप्तिः। ध्यानपथत्वेनाऽणिमादयः। चतुर्भुजत्वेन पुरुषार्थचतुष्टयसिद्धिः। एवं सर्वपुरुषार्थदानाय सर्वाभिव्यक्तिं कुर्वन् विषयान्तरसञ्चाराभावाय प्रकटस्तिष्ठत्विति प्रार्थना ॥ २४ ॥

मध्ये सावकाशं ज्ञात्वा युधिष्ठिरः स्वसन्देहं वारयितुं पृष्टवानित्याह—

### सूत उवाच—

**युधिष्ठिरस्तदाकर्ण्य शयानं शरपञ्जरे।**
**अपृच्छद्विविधान्धर्मानृषीणामनुशृण्वताम् ॥ २५ ॥**

**युधिष्ठिर इति।** ननु युधिष्ठिरः पूर्वोक्तं ज्ञात्वा सर्वं भगवता कृतमित्यवगत्य स्वस्य कारणत्वाभावाद्वधादिदोषाभावं विनिश्चित्याऽपि कथं पृच्छति? इत्यत आह—**तदाकर्ण्येति। शरपञ्जरे शयानमिति।** यदि भगवानेव करोति किमिति भीष्मः शरपञ्जरे पतितस्तिष्ठति? न ह्यकृतं भोजयति भगवान्। तथा सत्यतिप्रसङ्गः स्यात्। दुःखस्य च सार्वजनीनत्वाद्भगवतः सर्वकर्तृत्वस्य च श्रौतत्वात्सर्वेषामेव ऋषीणां सन्देहः। अतस्तेषामपि सन्देहनिवृत्त्यर्थमृषीणामेवमनुशृण्वतां पृष्टवानित्यर्थः। धर्माणामेव नानाविधत्वात्[3]प्रबलदुर्बलभावोऽस्ति[4] राजसेवकवन्न वेति सन्देहादपि प्रश्नः। तदाह—**विविधानिति** ॥ २५ ॥

धर्मास्त्रिविधाः। श्रौताः पौराणिकाः पुरुषार्थसाधनत्वेनाऽन्वयव्यतिरेकसिद्धा लौकिकाश्च। तान्सर्वान् भीष्मः क्रमेणाऽऽहेत्याह **पुरुषस्वभावेति** त्रिभिः—

**पुरुषस्वभावविहितान्यथावर्णं यथाऽऽश्रमम्।**
**वैराग्यरागोपाधिभ्यामाम्नातोभयलक्षणान् ॥ २६ ॥**
**दानधर्मान्राजधर्मान्मोक्षधर्मान्विभागशः।**
**स्त्रीधर्मान्भगवद्धर्मान्समासव्यासयोगतः ॥ २७ ॥**

१ हासस्येति ख. २ अरुणत्वादेति ख. ३ नानाविधत्वादिति ख. ४ प्रबलदुर्बलताभावोऽस्तीति क. ग. घ.



**धर्मार्थकाममोक्षांश्च सहोपायान् यथा मुने।**
**नानाख्यानेतिहासेषु वर्णयामास तत्त्ववित् ॥ २८ ॥**

तत्र वैदिकास्त्रिविधाः। शरीराधिकारेण प्रवृत्ता वर्णाश्रमरूपेण[1] बाह्यधर्मेण च प्रवृत्ता वैराग्याद्यान्तरधर्मेण च। तत्र **पुरुषस्वभावविहिताः** स्वतश्च रक्षादयः। **वर्णधर्मा** ज्ञानादयः। **आश्रमधर्मा** अध्ययनादयः। **रागोपाधयः** पूर्वकाण्डोक्ताः। **वैराग्योपाधय** उत्तरकाण्डोक्ताः। **दानधर्माः**[2] पौराणिका गोदानादयस्तुलापुरुषादयो वा[3]। **राजधर्मा**श्चारादिभिर्हेत्वादि[4]दर्शनादयः। **मोक्षधर्मा** मौनानीहादयः। तेषामवान्तरभेदाश्च। **स्त्रीधर्माः** पातिव्रत्यादयः। **भगवद्धर्माः** कार्तिकव्रतादयः। **समासव्यासकथनाद्बुद्धिर्भवति वै स्थिरा।** अतः सङ्क्षेपविस्ताराभ्यामाह—**समासेति।** पुरुषार्थचतुष्टयसाधनीभूतधर्मानाह—**धर्मेति।** पुरुषार्थानां स्वरूपं साधनानि प्रकाराश्च यथा यथावत्। **मुने**[5] इति सम्बोधनान्न विस्तरेणोच्यते। मननविषयत्वादिति। **आख्यानं** शब्दप्रधानम्—तैरेवमुक्तमित्यादि। **इतिहासः** पुरावृत्तम्—तैरेवं कृतमेवं जातमिति। पुराणार्थवादसिद्धं लौकिकं न केवलभ्रान्तप्रतिपन्नमित्यर्थः। सर्वेषां तत्त्वं जानातीति तथा निःशङ्ककथने हेतुः। एतावता सर्वे[6] सन्देहा निवारिता इत्युक्तं भवति। सगुणकर्मणा बन्धः। निर्गुणकर्मणा मोक्षः। लोके कर्मण[7] एव फलसाधकत्वं ज्ञातं[8] भवत्विति यमधः उपरि वा निनीषति तमसाधु साधु वा कर्म कारयतीति ईश्वरस्य सर्वकर्तृत्वं जीवस्य दुःखाद्यनुभवश्चोक्तो[9] भवति ॥ २६ ॥ २७ ॥ २८ ॥

धर्मप्रवचनादिकं[10] कालविलम्बादेव न त्वनेन पुरुषार्थसिद्धिरिति समागते काले सर्वमुपसंहृतवानित्याह **धर्मं प्रवदत इति** द्वाभ्याम्—

**धर्मं प्रवदतस्तस्य स कालः प्रत्युपस्थितः।**
**यो योगिनश्छन्दमृत्योर्वाञ्छितस्तूत्तरायणः ॥ २९ ॥**

उत्तरायणकालस्योत्तमत्वेऽपि पूर्वकालस्य निकृष्टत्वात्तद्दोषसम्बन्धे[11] निर्दुष्टता न भवेदिति तद्व्यावृत्त्यर्थं **धर्मं प्रवदत** इत्युक्तम्। योगिनामुत्तरगतेर्नियतत्वात्सूर्यमण्डलमध्यस्थमार्गत्वादुत्तरायण एव सूर्ये गन्तुं शक्यते। **छन्दमृत्योरिति।** योगजधर्मेण कालस्याऽपि[12] वशीकृतत्वात्स्वच्छन्दमृत्युत्वम् ॥ २९ ॥

तस्मिन् काले यत्कर्तव्यं तदाह—

**तदोपसंहृत्य गिरः सहस्रणीर्विमुक्तसङ्गं (?) मन आदिपूरुषे।**
**कृष्णे लसत्पीतपटे चतुर्भुजे पुरःस्थितेऽमीलितदृग्व्यधारयत् ॥ ३० ॥**

**तदोपसंहृत्येति।** सर्वपरित्यागेन भगवच्चिन्तनं कर्तव्यम्। तन्मौनेन मनसश्चाञ्चल्यपरिहारेण अक्रियया च भवति। तत्र शरीरक्रियाऽभावः पूर्वमेव सिद्धः। वाक्क्रियमनमाह—**गिर उपसंहृत्येति। सहस्रणीः।** सहस्रं योधान्[13] शुद्धेन वचनेन वा नयति स्वाधीनान् करोतीति स्वधर्मोत्कर्ष उक्तः।

१ वर्णाश्रमरूपेण वा इति ख. २ दानधर्मादय इति क. ग. घ. ङ. ३ वेति नास्ति ख. ४ हेयत्वादीति ख. हेत्वा वेर्दर्शनादय इति क. ५ मुनय इति ग. ६ सर्वसन्देहा इति ख. ७ कर्मणः फलसाधकत्वादिति क. कर्मणा फलसाधकत्वमिति ख. ८ ज्ञानमिति क. ग. घ. ९ उक्तं भवतीति क. ख. ग. १० धर्मप्रतिवचनादिकमिति क. ग. ११ तद्दोषसम्बन्धेन युक्ता भवेदिति ख. १२ कालस्य वशीकृतत्वादिति ख. १३ योद्धानिति क. ग.

दीन्यसे(?)त्युक्तं भवति । **यं** अमृतं पुष्णाति सर्वेभ्यः प्रयच्छतीति **वपुः** परमानन्दस्वरूपम् । अलमत्यर्थं कं येषां ते ब्रह्मविदस्तेषां कुलैर्वा । त एव वा ते । तैरावृतमग्निब्राह्मणरूपमाननमब्जमासनकमलं यस्य । सनकादिभिर्ब्राह्मणैर्देवैर्ज्ञानादिभिश्च पत्रेषु स्थितैरावृतं कर्णिकारूपमासनमित्युक्तं भवति । अब्जपदेन च सूर्यादिवेष्टनसहितत्वं लक्ष्यते । एतादृशं वपुर्दधाने । तादृशोऽपि भक्तवत्सल इति—**विजयसखे** । सख्यपर्यन्तं दत्तवानिति । विजयोऽर्जुनः । विशिष्टो जयो येषाम् । अन्तःकरणादिजेतारः । ते सखायो यस्य । तेषां वा सखा । तत्र रतिः प्रीतिः । अनवद्या अलौकिकी । परमा प्रीतिरलौकिकी सर्वदुर्लभा भगवदेकनिष्ठा तत्त्व एव भवतीति नोत्तरत्र विरोधः ॥ ३३ ॥

एवं सत्त्वमिश्रसत्त्वावस्था उक्ता । रजोमिश्ररजोऽवस्थामाह—

**युधि तुरगरजोविधूम्रविष्वक्कचलुलितश्रमवार्य्यलंकृतास्ये ।**
**मम निशितशरैर्विभिद्यमानत्वचि विलसत्कवचेऽस्तु कृष्ण आत्मा ॥३४॥**

**युधीति** । सर्वावस्थासु रतिः प्रार्थ्यते । युधि युद्धे । तुरगाणामश्वानां खुराग्रविक्षतरजोभिः विशेषेण धूम्राः धूसरवर्णाः विष्वक् परितो ये कचास्तैर्लुलितं यच्छ्रमवारि तेनाऽलङ्कृतमास्यं यस्य । नीले मुखाब्जे मुक्ताफलसदृशा बिन्दवः शोभातिशयं कुर्वन्ति । मम भीष्मस्य । त्वक् चर्मादि । युद्धविशेषणं वा । राजसराजसावस्थायाः शोभैव सा । अथवा । युद्धार्थमिन्द्रियादिभिः सह **तुरगाणां** वेदानां सूर्यादीनां वा यत् **रजः** कामो रजोगुणो वा तेन विधूम्रा विशेषेण धूसरा ये सकामाः । कालवशाद्वो वेदवशाद्वा सकामाः । कालपरिच्छेदका ह्यग्न्यादयः । "**अग्निर्वा अर्वे**"त्यादिश्रुतिभिस्तेषां तुरगत्वम् । वेदानां च त्रिपुरदाहादौ । ते च ते **विष्वक्काश्च** ब्रह्मविदः सूर्यादिमार्गगामिनो भिन्ना वा । तदा तेषां [1]च समुच्चयः । इतरेतरयोगो वा । तेन लुलिता मिलिता ऐक्यभावं वा प्राप्ताः । ते च ते **श्रमवार्य्यलङ्कृताश्च** गङ्गाजलपूता ब्रह्मशिवादयः । तेऽपि आनने यस्येति । आ समन्तात्सद्रूपे (?) वा । अनेन महासामर्थ्यं सूचितम् । कालरूपत्वं च । किञ्च । **मम** अहङ्कारविशेषः । तेन या **निश्** निशा तामिताः । अहङ्कारेणाऽज्ञानं प्राप्ता इति यावत् । ते च ते **शराश्च** परभेदकाः । तैर्विशेषेण भिद्यमानास्त्वचः छन्दांसि यस्येति । यस्माद्वा । पाषण्डप्रवृत्तौ कलौ वा सञ्जाते गत्यन्तराभावात् । भगवतश्च तद्दोषाभावे हेतुः । विशेषेण लसत्कवचं धर्मादिरूपं यस्य । एतादृशे कृष्णे आत्मा अन्तःकरणमस्तु । भक्तिर्हि अन्तःकरणसाध्या । आत्मसाध्या वा । तदुभयं भगवति चेत्तदा भक्तिस्तत्र भवति । अतः पूर्वश्लोकार्थे अयं हेतुः ॥ ३४ ॥

तृतीयावस्थामाह—

**सपदि सखिवचो निशम्य मध्ये निजपरयोर्बलयो रथं निवेश्य ।**
**स्थितवति परसैनिकायुरक्ष्णा हृतवति पार्थसखे मतिर्ममाऽस्तु ॥३५॥**

**सपदीति** । सपदि तत्क्षणमेव । सखिवचोऽर्जुनस्य वचः । "**सेनयोरुभयोर्मध्ये रथं**

१ तेनेति नास्ति ख. २ वेत्यव्ययं नास्ति ग. ३ चः समुच्चये इति क. ४ गत्यन्तराभावादिति ख. ५ दोषाभावे इति घ. ६ धर्मादित्रयमिति घ.



**स्थापय मेऽच्युते**"ति । निजपरयोः सेनयोर्मध्ये । पक्षपातोऽन्यार्थेऽन्यघातनश्च तृतीयो गुणः । परसैनिकानामायुश्च अक्ष्णा कालदृष्ट्या । पृथायाः पुत्रस्य च सखा । पूर्ववन्मतिरस्तु ॥ ३५ ॥

सत्त्वमिश्ररजोऽवस्थामाह—

**व्यवहितपृतनामुखं निरीक्ष्य स्वजनवधाद्विमुखस्य दोषबुद्ध्या ।**
**कुमतिमहरदात्मविद्यया यश्चरणरतिः परमस्य तस्य मेऽस्तु ॥ ३६ ॥**

**व्यवहितेति** । व्यवहिते दूरे स्थिते ये पृतने । विशेषेण अवहिता यत्रेति वा । अवेति वा विषेधार्थः । अहिता इति यावत् । निहिता अवहिताश्चेति वा । मुखमग्रिमभागः । तत्र बान्धवा एव तिष्ठन्ति । तद्वधव्यतिरेकेण न साधारणवधोऽपि सम्भवति । अतः स्वजनवधमकृत्वा निवृत्तः । परहिंसादोष इति । नापितेन क्षौरवदत्र समाधानम् । भारायमाणाः क्षत्रियाः श्मश्र्वादिरूपाः । अर्जुनश्च नापितरूपः । आत्मविद्या स्वस्य विद्या । मयैव क्रियते । मम च हितम् । तेषामपि जडांश एव दूरी क्रियते मुक्तिदानार्थमिति । तस्मादेवंविधे न दोषः । अत एव गुरुत्वाच्चरणरतिं प्रार्थयते । परो मीयतेऽनेनेति परमः । **तस्येति** । स एव परः । तदवस्थां प्राप्तस्येति वा ॥ ३६ ॥

तमोमिश्ररजोऽवस्थामाह—

**स्वनिगममपहाय मत्प्रतिज्ञामृतमधिकर्त्तुमवप्लुतो रथस्थः ।**
**धृतरथचरणोऽभ्ययाच्चलद्गुर्हरिरिव हन्तुमिभं गतोत्तरीयः ॥ ३७ ॥**

**स्वनिगममपहायेति** । स्वस्य निगमः प्रतिज्ञा शस्त्रसंन्यासः । दन्तवक्रे सभ्रातरि हते भगवता शस्त्रसंन्यासः कृतः । तत्पुनस्तृतीयदिनयुद्धे नवमे च भीष्मवधार्थं चक्रं गृहीतम् । युद्धागमनसमये च प्रतिज्ञा कृता अयुध्यमानोऽहमेकत इति । मया च प्रतिज्ञातम्—सर्वथा शस्त्रं ग्राहयिष्यामीति । तत्र मत्प्रतिज्ञामृतं कर्तुं रथस्थ एव सन्नवप्लुतः । अधिका च प्रतिज्ञा कृता । शस्त्रमेव गृहीतं न तु मारितवानित्यर्थः । रथस्यैव चक्रे सुदर्शनस्याऽऽवेशः । भगवतः प्रतिज्ञात्यागे भूमेः कम्पो जातः । तदाह—**चलद्गुरिति** । चलन्ती गौर्भूमिर्यस्य । दृष्टान्तेन दोषाभावमाह । यथा हरिः सिंह इभमिव । "**यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः**"इति श्रुतेः । सायुज्यदानार्थं भीष्ममन्तःप्रवेशयितुं भगवान् प्रवृत्तः । तावता उत्तरीयं पतितमुपर्याच्छादनार्थम् । अर्जुनो रक्षितः । स भूमावागत्य पतितः । ततो वधो न जात इति । उत्तरीयाभावे च भोजनं निषिद्धम् । तदा हि भीष्मोऽहङ्कारयुक्तः । अतस्तस्य ज्ञानस्फूर्त्यभावात्तदा न मारित इति भावः । अत्र रतिप्रार्थनाऽभावो भगवत एव रतिकार्यकर्तृत्वात् ॥ ३७ ॥

१ गुणा इति ख. २ अत्रेति वेति घ. ङ. ३ अवहिता इति ङ. ४ नेति नास्ति ग. ५ ममैव क्रियेति इति क. ख. ६ भगवतः इति ख. ७ युद्धागमनसमयश्चेति ख. ८ प्रतिज्ञामिति ग. ९ कृत्वेति ग. १० सुदर्शनावेश इति घ. ११ ओदनमितीति क. ग. घ. १२ अत इति क. ग. घ.

रजोमिश्रतमोऽवस्थामाह—

**शितविशिखहतो विशीर्णदंशक्षतजपरिप्लुत आततायिनो मे ।**
**प्रसभमभिससार मद्वधार्थं स भवतु मे भगवान् गतिर्मुकुन्दः ॥ ३८ ॥**

**शितेति** । नवमदिनस्येदं रूपम् । पूर्वश्लोके तु तृतीयदिनस्येति न पुनरुक्तिः । शितास्तीक्ष्णाः विगतशिखाः पाषण्डिनो हता येन । **विशीर्णदंशक्षतजपरिप्लुतः** । विशीर्णा दंशा यस्मिन् काले वर्षाव्यतिरिक्तकाले, मासाष्टकम् । तत्र क्षता जाता येषां ते क्षतजाः । परिव्राजिनः क्षत्रियोत्तमा वा । तैः परितो व्याप्तः । अधर्मनिवारको धर्मरक्षक इत्युक्तं भवति । अत एव आततायिनं पापिष्ठं मां हन्तुं प्रसभमभिससार । अयुद्ध्यमानयुद्धात् पापिनमपि यो मोचयितुं प्रवृत्तः स भवतु मे भगवान् गतिः प्राप्यः । न हि स मां मारयितुं प्रवृत्तः । किन्तु मुक्तिदानार्थमित्याह—**मुकुन्द इति** ॥ ३८ ॥

सत्त्वमिश्रतमोऽवस्थामाह—

**विजयरथकुटुम्ब आत्ततोत्रे धृतहयरश्मिनि तच्छ्रियेक्षणीये ।**
**भगवति रतिरस्तु मे मुमूर्षोर्यमिह निरीक्ष्य हता गताः स्वरूपम् ॥ ३९ ॥**

**विजयरथकुटुम्ब इति** । अर्जुनस्य रथः सर्वथा परिपाल्यः । अत एव तस्य रथः कुटुम्बं यस्य । विविधो जयो विगतो वा जयो यस्येति **विजयः** अर्जुनः । जयद्रथवधे हि युद्धे अशक्य इव जातः । तदा स्वयं तोत्रं गृहीत्वा अश्वानां रश्मींश्च गृहीत्वोत्थितः सन् कर्णादीनामस्त्राणि रथचालनेनैव दूरीकुर्वन् तदानीन्तनश्रिया **ईक्षणीयः** अतिसुन्दरः । तादृशे । मुमूर्षोरेव रतिरस्तु । न तु पूर्ववन्मरणानन्तरम् । रतेः कैमुतिकन्यायेन फलमाह—**यमिह निरीक्ष्येति** । इह अस्मिन्नवसरे अन्तकाले यं दृष्ट्वैव मुक्ताः । तत्राऽन्तकाले स्नेहे सति किं वक्तव्यमित्यर्थः ॥ ३९ ॥

तमोमिश्रसत्त्वावस्थामाह—

**ललितगतिविलासवल्गुहासप्रणयनिरीक्षणकल्पितोरुमानाः ।**
**कृतमनुकृतवत्य उन्मदान्धाः प्रकृतिमगन् किल यस्य गोपवध्वः ॥ ४० ॥**

**ललितेति** । ललिता या गतिस्तत्र यो विलासः हंसगजगतिवत्पादचलनम् । मनोहरश्च हासः । स्नेहपूर्वकं च निरीक्षणम् । तमोरजस्सत्त्वभावकार्याणि । तैः कल्पित उरुः अधिको भगवन्माहात्म्यमप्यविचार्य प्रवृत्तो मानो यासाम् । किञ्च । न केवलमन्तःस्थित एव दोषः किन्तु त्रिदोषकार्यमपि बहिः कुर्वन्तीत्याह—**कृतमनुकृतवत्य इति** । कृतं भगवच्चरित्रं पूतनापयःपानादि तदनुकुर्वन्तीति । एवमपि सति लौकिकमपि ज्ञानं निवृत्तमित्याह—**उन्मदान्धा इति** । उद्गतेन मदेन भगवदारोहणार्थमपि यतन्त इत्यन्धाः । सर्वथाऽचिकित्स्यत्रिदोषाः । तत्राऽपि—**गोपवध्वः** जात्या स्वभावेन च दुष्टाः । ता अपि यस्य सम्बन्धात्प्रकृतिं स्वरूपमगमन् । नाऽत्र सन्देहः कर्तव्यः । किलेति प्रसिद्धे ॥ ४० ॥

---

१ हता इति नास्ति क. ग. घ. ङ. २ विशीर्णदंशः क्षतजपरिप्लुत इति क. ख. ग. ३ क्षताजाता इति ख. ४ अश्वानामेति क. ख. ५ मतिरस्त्विति ख. ग. घ ङ. ६ ननु इति ख. ग. ७ पदचालनमिति घ. ८ उरु इति क. घ. ९ भवन्माहात्म्यमिति ख. १० बहिर्बहिरिति. घ. ११ अचिकित्सेति ख. घ. १२ अगमनिति ग.



रजोमिश्रसत्त्वावस्थामाह—

**मुनिगणनृपवर्यसङ्कुलेऽन्तःसदसि युधिष्ठिरराजसूय एषाम् ।**
**अर्हणमुपपेद ईक्षणीयो मम दृशिगोचर एष आविरात्मा ॥ ४१ ॥**

**मुनिगणेति** । मुनीनां गणा नृपश्रेष्ठाश्च । सात्त्विका राजसाश्च । न तु तामसाः । **अन्तःसदसि** सभामध्ये सर्वतो मध्यस्थाने । आभिषेचनिके अहनि सदस्यपूजायां यः सर्वोत्तमः स पूजनीय इत्यस्मदादिभिरुक्ते कृष्णं पुरुषोत्तमं मत्वा एषां सर्वेषामेवाऽर्हणम् । सर्वेषामेव सम्भावितत्वात् । अतः सर्वेषां पूजां स्वयमेव गृहीतवान् । तदा च सर्वेषामेव ईक्षणीयो जातः । स इदानीं मम **दृशिगोचरः** तत्सौन्दर्यं साम्प्रतं पश्यामि । तस्य प्रकटात्मत्वमाह—**आविरात्मेति** । सोऽप्ययमेव, न त्वेतस्मिन् ॥ ४१ ॥

एवं स्वेच्छया सर्वावस्था अनुवर्ण्य गुणातीतायामवस्थायां विद्यमाने भगवति स्वात्मसमर्पणमाह—

**तमिममहमजं शरीरभाजां हृदि हृदि धिष्ठितमात्मकल्पितानाम् ।**
**प्रतिदृशमिव नैकधाऽर्कमेकं समधिगतोऽस्मि विधूतभेदमोहः ॥ ४२ ॥**

**तमिममिति** । पूर्वं यः सर्वोत्कृष्टधर्मवत्त्वेनोक्तः स एवाऽयं हृदयमारभ्य बहिःपर्यन्तमनुस्यूततया स्थितः स च न देहादिरूपः । तदाह—**अजमिति** । यथा ममाऽयमन्तर्बहिस्तिष्ठति तथैव सर्वप्राणिष्वित्याह—**शरीरभाजां हृदि हृदि धिष्ठितमिति** । शरीरं भजन्त इति शरीरभाजो जीवाः स्वस्य समानाऽऽकृतिं शरीरं पुरुषरूपं सम्पाद्य स्वसेवां त्याजयित्वा तत्सेवायां नियुक्ताः । तत्र चाऽन्यभजनं मा भवत्विति स्वयमेव हृदि हृदि प्रत्येकपर्यवसायित्वेन धिष्ठितमधिष्ठाय स्थितम् । अधिष्ठातृदेवतात्वेन न तु जीववत् । ननु के ते जीवाः ? तत्राऽऽह—**आत्मकल्पितानामिति** । आत्मनैव कल्पिताः । "**अवस्थितेरिति काशकृत्स्न**" इति भगवतोऽवस्थाविशेषो जीवः । प्राकृतभोगार्थं तामवस्थां सम्पादितवानित्यर्थः । नन्वेक एव कथमनेकस्थानेष्वनुस्यूततया दृश्यते ? तत्राऽऽह—**प्रतिदृशमिव नैकधाऽर्कमेकमिति** । चक्षुषोऽधिष्ठात्री देवता सूर्य एक एव प्रतिदृशं तिष्ठति । अथवा । बहिः स्थित एवाऽयं सूर्यः सर्वेषां दृष्टौ अस्मदर्थ एवाऽयमुदित इति प्रतिभाति । "**तस्मात्सर्व एव मन्यते मां प्रत्युदगादि**"ति श्रुतेः । तस्मान्महतामचिन्त्यसामर्थ्यान्नाऽत्र सन्देहः कर्तव्यः । तस्मादेवंविधं परमात्मानं सम्यगधिगतोऽस्मि प्राप्तोऽस्मि । योगेनाऽऽत्मानं तत्र योजितवानित्यर्थः । सर्वोऽपि भगवन्निकटे तिष्ठति । तथापि मायायाः स्वतः कार्यौ च यौ धर्मावुद्गतौ मोहभेदौ तयोः प्रतिबन्धकत्वान्न भगवता सह मेलनमिति मया तौ निवारिताविल्याह—**विधूतभेदमोह इति** । इदानीं वा समधिगमनानन्तरं भेदमोहावपगतौ ॥ ४२ ॥

---

१ सेवामिति घ. २ [illegible] इति ख. ङ. ३ धर्मत्वेनेति ग. घ. ४ सन्नायमिति घ. ५ इदं नास्ति ग. ६ आत्मनैवेति ख. ७ अनद्वस्यूततयेति क. ग. ८ एक इति नास्ति ख. ९ सम्यगधिस्थितोऽस्मीति क. ग. घ.

एवं स्वमनसि स्फुरितं प्रमेयमनूद्य अन्ते स्वकृतमात्मसमर्पणं चाऽनूद्य शरीरं त्यक्तवानित्याह—

## सूत उवाच—

कृष्ण एवं भगवति मनोवाग्देहवृत्तिभिः ।
आत्मन्यात्मानमावेश्य सोऽन्तःश्वास उपारमत् ॥ ४३ ॥

**कृष्ण इति ।** कृष्णे भगवति मूलाविर्भावरूपे एवं कायवाङ्मनोवृत्तयो योजिताः । तैः सह आत्माऽपि योजितः । तेषां तु भेदेन योजनम् । आत्मनस्त्वात्मन्येव योजनम् । **"इहैव समवनीयन्ते प्राणा"** इत्यर्थ उक्तो भवति । **अन्तःश्वासः** । अन्तरेव श्वासो यस्य सः । **उपारमत् ।** देहं त्यक्तवान् ॥ ४३ ॥

तदा च सर्वेषामपि तथा प्रतीतिर्जातेत्याह—

सम्पद्यमानमाज्ञाय भीष्मं ब्रह्मणि निष्कले ।
सर्वे बभूवुस्ते तूष्णीं वयांसीव दिनात्यये ॥ ४४ ॥

**सम्पद्यमानमिति ।** अन्तःस्थितो भगवान् प्रकटीभूतः । तत्राऽस्य सायुज्यं वृत्तम् । तदा महती काचित्प्रभा निर्गता । तया सर्वैर्ज्ञातं भीष्मो ब्रह्मणि सङ्गत इति । तदा परमपुरुषार्थे विघ्नो माभूदिति सर्वे तूष्णीं भूताः । श्रोत्रेन्द्रियस्याऽनावृतत्वाद्विषयैरिन्द्रियद्वारा मनस आकर्षणसम्भवात् । तद्वारा च जीवस्य । यथा सुषुप्तौ । **वयांसीवेति ।** यथा सन्ध्यापगमे(?) तत्तत्स्थाने स्थिताः पक्षिणः अश्वस्तनत्वाद्विचारशून्याः पूर्वानुसन्धानरहिताश्च निद्राभावेऽपि तूष्णीं भवन्ति तथा सर्वसन्देहाभावं श्रुत्वा दृष्टान्तं च दृष्ट्वा वक्तव्याभावाद्ब्रह्मभूता एवं तूष्णीं जाता इत्यर्थः ॥ ४४ ॥

तत्र दुन्दुभयो नेदुर्दिवि देवप्रचोदिताः ।
शशंसुः साधवो राज्ञां खात्पेतुः पुष्पवृष्टयः ॥ ४५ ॥

देवानां सर्वज्ञत्वादस्मदीयो वसुर्मुक्त इति वाद्यवादनं चक्रुरित्याह । वादनप्रशंसापुष्पवृष्टयस्तामससात्त्विकराजसरूपा उत्तमाः । राज्ञां मध्ये ये साधवः । अनेन तत्राऽपि दुष्टाः सन्तीति ज्ञापितम् ॥ ४५ ॥

**"भस्मान्तं शरीरमि"**ति श्रुतेः शरीरप्रतिपत्तिं चक्रुरित्याह—

तस्य निर्हरणादीनि सम्परेतस्य भारतः ।
युधिष्ठिरः कारयित्वा मुहूर्तं दुःखितोऽभवत् ॥ ४६ ॥

**तस्येति ।** निर्हरणं ज्वालनम् । सम्परेतस्य शरीरस्य । भीष्मात्मानं गृहीत्वा भगवति तिरोहिते ।

१ आत्मनः स्वात्मन्येवेति ख. २ तदा चेति क. घ. ३ प्रीतिरिति ख. ग. ४ तत्रेति ख. ग. ५ अश्वस्तनत्वादिति घ. ६ अपिर्नास्ति घ. ७ दृष्टान्तञ्चेति नास्ति ख. ८ दृष्ट्वेति नास्ति ग. ९ तं वक्तव्याभावादिति घ. १० एवमिति घ. ११ देवगन्धर्वचोदिता इति क. देवमानववादिता इति ग. देवदानववादिता इति घ. १२ ये इति नास्ति. ग. १३. प्रपत्तिमिति घ.



भारतो युधिष्ठिरः । मोहाभावाय । कारयित्वेति । पट्टाभिषिक्तस्य स्वतःकरणमनुचितम् । मुहूर्तखेदो वैधः ॥ ४६ ॥

भीष्मोक्तं कृतं च सर्वेषां हृदये समागतमित्यभिप्रायेणाऽऽह—

तुष्टुवुर्मुनयो हृष्टाः कृष्णं तद्गुह्यनामभिः ।
ततस्ते कृष्णहृदयाः स्वाश्रमान् प्रययुः पुनः ॥ ४७ ॥

**तुष्टुवुरिति ।** तद्गुह्यनामभिः अद्भुतकर्मत्वादिभिः । कृष्णं हृदये निवेश्य सर्वे गता इत्याह— **ततस्त इति ।** पुनरिति । केचन भगवद्दर्शनार्थं स्वाऽऽश्रमे गत्वाऽपि समागत्य कृष्णं दृष्ट्वा पुनर्गता इत्यर्थः ॥ ४७ ॥

युधिष्ठिरस्य तु ज्ञानं वृत्तमित्याह—

ततो युधिष्ठिरो गत्वा सहकृष्णो गजाह्वयम् ।
पितरं सान्त्वयामास गान्धारीञ्च तपस्विनीम् ॥ ४८ ॥

**तत इति ।** स्वयं विशोकः शोकमन्येषां दूरीकरोति । पितरं धृतराष्ट्रम् । तपस्विनीं सन्तप्ताम् । चकारादन्यांश्च ॥ ४८ ॥

ततो भगवत्कृपया तस्य राज्यप्राप्तिरित्याह—

पित्रा चाऽनुमतो राजा वासुदेवानुमोदितः ।
चकार राज्यं धर्मेण पितृपैतामहं विभुः ॥ ४९ ॥

**पित्रा चेति ।** अधिकृतैर्मन्त्रिभिः पित्रा च अनुमतः । स्वभावत एव राजा । मुख्यतया वासुदेवानुमोदितः । पितृपैतामहमावश्यकम् । विभुः समर्थः । अनेन सर्वे गुणाः सर्वदोषाभावश्चोक्तः ॥४९॥

**इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां प्रथमस्कन्धे नवमोऽध्यायः ॥ ९ ॥**

---

## दशमोऽध्यायः ।

नैश्चिन्त्यसिद्धये विष्णोर्भीष्ममुक्तिर्निरूपिता ।
ऐहिके सर्वसौख्यं तु दत्तवांस्तन्निरूप्यते ॥ १ ॥
पाण्डवानां यदूनां च तदध्यायद्वयेन हि ।
निरूप्यं प्रथमं तत्र पाण्डवानां तदुच्यते ॥ २ ॥
कृष्णाधीनं सुखं यस्य स सुखीति निगद्यते ।
अतः कृष्णपरं चित्तं सर्वेषामत्र वर्ण्यते ॥ ३ ॥

पूर्वाध्यायान्ते युधिष्ठिरस्य राज्यप्राप्तिरुक्ता । तत्र राज्यकरणं ज्ञानाज्ञानाभ्यां न घटत इति राज्यस्थितिं पृच्छति शौनकः—

१ स्वतःकारणमिति घ. २ स चेति ख. ३ अन्यांश्चेति ख. अन्यांश्चेति ग. घ. ४ विस्पष्टामिति घ.

## शौनक उवाच—

हत्वा स्वरिक्थस्पृध आततायिनो युधिष्ठिरो धर्मभृतां वरिष्ठः ।
सहाऽनुजैः प्रत्यवरुद्धभोजनः कथं प्रवृत्तः किमकारषीत्ततः ॥ १ ॥

हत्वेति । स्वरिक्थे स्पर्द्धन्त इति तथा । रिक्थं धनम् । अत एव आततायिनः धनापहाराः । अवध्यवधे हेतुराततायित्वम् । अस्मद्रिक्थे वा स्पर्द्धा येषाम् । अनेन धनार्थिनो हत्वा धनं गृहीत्वा तेन राज्यकरणमनुचितमिति ज्ञापितम् । नन्वेवमेव प्राकृताः कुर्वन्ति ? तत्र आह—धर्मभृतां वरिष्ठ इति । न धर्मज्ञानमात्रं कृतिमात्रं वा । किन्तु ये धर्ममेव गृहीत्वा तिष्ठन्ति तेषां मध्ये श्रेष्ठः । अनुजैः सहेति । सर्वत्र शत्रुवधे धर्मज्ञाने राज्यप्राप्तौ च किञ्चित्तादृशाधिकमल्पमपि न वेति सम्बन्धः । प्रत्यवरुद्धं भोजनं यस्य । भोजनं पालनमभ्यवहरणं वा । पूर्वमाततायिभिः प्रत्यवरुद्धं भोजनम् । इदानीं वा अवरोधस्य प्रतिकूलत्वे प्राप्तभोजनत्वं सिद्ध्यति । अतस्तुच्छे राज्ये सर्वज्ञस्य कथं प्रवृत्तिः । सन्तोषेण च राज्ञो राज्ये स्थातुमशक्यत्वात्ततो राज्यं प्राप्य पुनः कलहाद्यन्यद्वा कृतमिति प्रश्नः ॥ १ ॥

तत्र स्वेच्छया युधिष्ठिरेण न किञ्चित्कृतं किन्तु भगवदिच्छयेति तस्य न राज्ये दोषो गुणो वा । किन्तु भक्तत्वाद्भगवदिच्छया राज्यं कृतवानिति वक्तुं भगवांस्तस्मै राज्यं दत्त्वा तुष्टो जात इत्याह—

## सूत उवाच—

वंशाङ्कुरं वंशदवाग्निनिर्हृतं संरोहयित्वाऽभवभावनो हरिः ।
निवेशयित्वा निजराज्य ईश्वरो युधिष्ठिरं प्रीतमना बभूव ह ॥ २ ॥

वंशाङ्कुरमिति । द्वयं कृत्वा भगवान् प्रीतो जातः । वंशाङ्कुरपरीक्षिद्रक्षणं युधिष्ठिराय राज्यदानं च । ततस्तत्र भगवतस्तादृशेन कार्येण किमित्याशङ्क्य(?) स्वभक्तानां वंशरक्षा सर्वथा कर्तव्या । तदभावे प्रवृत्तिमार्गनिष्ठता अयुक्ता । ऋणित्वात् । वैपरीत्यसुखाभावाच्च । दैत्यांशैर्हि भगवदीयानां द्वयं दूरीक्रियते । तत्र भगवतैव प्रतिविधानव्यम् । स्वतः प्रतीकाराभावायाऽऽह—वंशदवाग्निनिर्हृतमिति । वंशे दवाग्निः । वंशाद्वा उत्पन्नोऽन्योन्यसङ्घर्षणेन । संरोहयित्वेति । नूतनमङ्कुरमुत्पाद्य । तथा करणे हेतुः । अभवो मोक्षस्तं भावयतीति । "ऋणत्रयमपाकृत्य मनो मोक्षे निवेशयेत्" "नाऽपुत्रस्य लोकोऽस्ति सर्वं ते पशवो विदुः"रित्यादिश्रुतिस्मृतिवाक्यैर्वंशाभावे पितॄणामाक्रोशान्मुक्तिर्न स्यात् । किञ्च । हरिः । सर्वदुःखहर्ता । अपुत्रकृतक्लेशमपि दूरीकरोतीत्यर्थः । भवभावन इति वा । उद्भवमेव भावयति । अभिवृद्धिभावनकर्तेत्यर्थः । राज्यं तु पूर्वमेव सिद्धम् । अन्यथा सर्वेभ्यो भक्तेभ्यो राज्यदानं प्रसज्येत । अतो निवेशनमेव कृतवान् । तत्र हेतुः—ईश्वर इति । स्वयमीश्वरोऽन्यानपीश्वरान् कृत्वा सुखी भवति ।

१ स्पर्द्धन्तीति इति क. ख. ग. २ धनापहारानिति घ. ङ. ३ अवध्यवधहेतुरिति ख. अवध्ये वधहेतुरिति क. ग. ङ. ४ तत्राहेति ग. ५ अयुक्तत्वादिति क. ख. ६ तत इति क. ग. ७ वंशमितीति क. ख. ग. ८ वंशाङ्कुरमिति ग. ९ भिद इति ग. १० ततः इति क ग.



अथवा । ईश्वरः समर्थः । असमर्थो हि प्रजाप्रमुखनिरीक्षकः सर्वं त्याजयित्वा मुक्तिं प्रयच्छति । अयं तु न तथेत्यर्थः । हेति निश्चये ॥ २ ॥

ईश्वरधर्माविर्भावाभावे तुच्छत्वे स्वस्मिन्स्फुरति राज्याद्भयम् । तद्युधिष्ठिरस्य ज्ञानादपगतमित्याह—

निशम्य भीष्मोक्तमथाऽच्युतोक्तं प्रवृद्धविज्ञानविधूतविभ्रमः ।
शशास गामिन्द्र इवाऽजिताश्रयः परिध्युपान्तामनुजानुवर्तितः ॥ ३ ॥

निशम्येति । आवश्यकं तु कर्तव्यमेव न तेन किञ्चिद्भवतीति भीष्मवाक्यश्रवणादेव राज्यभयं निवृत्तम् । अथ भिन्नप्रक्रमेण । ईश्वरविचारेण "नारायणपराः सर्वे न कुतश्चन बिभ्यती"ति न्यायेन नारायणपरस्य भगवद्वाक्यमेव कर्तव्यम् । न तु विषयजन्यं भयमपि सम्भावनीयमित्यच्युतोक्तम् । एवं मर्यादापुष्टिभ्यां सर्वोऽपि शास्त्रार्थोऽवगतः । ततः प्रवृद्धविज्ञानेन विधूता दूरीकृता विशिष्टा भ्रमा यस्य । गां पृथिवीमाज्ञापूर्वकं पालितवान् । अन्यो हि राजा दैवादृष्टौ सञ्जातायां सस्ये सम्पन्ने चौरादिभिः परं पालयति । अयं तु वृष्टिमपि निष्पाद्य स्वधर्मेण पुष्टान् कृत्वा पालयतीत्याह—इन्द्र इवेति । मनुष्यस्येन्द्रसमानसामर्थ्ये हेतुः—अजिताश्रय इति । न केनाऽपि जितो भगवानाश्रयो यस्य । परिधिः समुद्र उपान्ते यस्याः । यद्यप्यन्ये राजानः सन्ति तथाप्येतदाज्ञाकारिण इति तथोक्तम् । अनुजैरनुवर्तितः । प्रथमतो भ्रातर एव कुर्वन्ति । पश्चात्स्वयं करोति । भ्रातृभिः सेवितो वा ॥ ३ ॥

तस्य धर्मेण पोषितस्य राज्यस्य गुणानाह त्रिभिः—

कामं ववर्ष पर्जन्यः सर्वकामदुघा मही ।
सिषिचुः स्म व्रजान् गावः पयसोधस्वतीर्मुदा ॥ ४ ॥
नद्यः समुद्रा गिरयः सवनस्पतिवीरुधः ।
फलन्त्योषधयः सर्वाः काममन्वृतु तस्य वै ॥ ५ ॥
नाऽऽधयो व्याधयः क्लेशा दैवभूताऽऽत्महेतवः ।
अजातशत्रावभवन् जन्तूनां राज्ञि कर्हिचित् ॥ ६ ॥

कामं ववर्षेति । आधिदैविकसौख्यं हि तथा चैवाऽऽधिभौतिकम् । आध्यात्मिकं च तद्राज्ये कृष्णेच्छातः क्रमोदिताः(?) । काममिच्छानुसारेण । क्षेत्रविशेषं सस्यापेक्षम् । पृथोरिव पृथिवी सर्वतः कामदुघा जाता । गाव ऊधस्वतीः स्थूलक्षीराशयाः । धर्मात्मा अयं राजा अस्मत्परिपालको जात इति मुदा पयसा व्रजानेव सिषिचुः । यावद्दोग्धा भाण्डं च समायाति तावत्क्षीराधिक्याद्भूमिमेव सिषिचुः । पर्जन्यः पृथ्वी गावो, देवताः । नद्यः समुद्रा, जलमिथुनम् । वृक्षा लताश्चाऽपरं स्थलमिथुनम् । एतद्द्वयमन्नातिरिक्तसर्वहेतुः । ओषधयो व्रीह्यादयः । सर्वेषां सर्वार्थत्वाद्-

१ हेति नास्ति ख. २ युधिष्ठिरस्याऽज्ञानादिति ख. ग. ३ तत इति नास्ति ख. ४ अन्योऽप्येति ग. ५ क्षेत्रविशेषे इति ग. क्षेत्रं विशेषमिति ग.

हृपायाः पूर्वमुक्तत्वात्तद्वचनेनाऽपि भगवति न्यस्तधियः कथं विरहं सहेरन् । असहमानास्तत्र गच्छेयुः प्रतिबन्धकं शरीरं वा त्यजेयुरिति भगवतोऽप्रचलनमयुक्तमिति भावः ॥ ११ ॥

तर्हि प्रचलिते भगवति किं जातम् ? तत्राऽऽह—

दर्शनस्पर्शनाऽऽलापशयनासनभोजनैः ।
सर्वे तेऽनिमिषैर्नेत्रैस्तमनुद्रुतचेतसः ॥
वीक्षन्तः स्नेहसम्बद्धा विचेरुस्तत्र तत्र ह ॥ १२ ॥

**दर्शनस्पर्शेति** । दर्शनादयः षट् क्रिया भगवद्योग्याः । ते च भगवत्सहभावेन पाण्डवनिष्ठाः । आलापादयस्तु संदेव । दर्शनस्पर्शनयोस्तु विपयत्वमपि । सहभावाभावे विपयत्वासम्भवात् । एवं सहभावेनाऽभ्यस्तैरेतैर्वशीकृताः सर्वे स्वचित्तं भगवति दत्तवन्तः । शयनादिभिर्वा तस्मिन्ननिमिषदृष्टयो जाताः । दृष्ट्या तु भगवन्तमनुद्रुतं चित्तम् । एवं कायवाङ्मनोवृत्तयो भगवन्युक्ताः । निमेषैर्यादिकं नोत्पन्नमित्यर्थः । ततः किं जातं तदाह—**वीक्षन्त इति** । स्नेहो भगवत्स्मरणादुत्पन्नोऽपि भगवद्दर्शनादिना विस्मृतः । यदा विप्रहस्तदा तथा भविष्यति व्यर्थमिदानीं परमानन्दानुभवं परित्यज्योद्वेग इति विचारयन्त इव देहेन्द्रियान्तःकरणवृत्तीर्भगवति योजितवन्तः । तत्रेक्षणमिन्द्रियवृत्त्युपलक्षणम् । स्नेहेन सम्बद्धा इत्यन्तःकरणस्य । स्नेहो हि भगवन्तमुपस्थापयति हृदये । बहिःस्थिते वा भगवति जीवमानयति । उभयथाऽप्यत्र न विरोधः । **विचेरुरिति** शरीरक्रिया । भगवद्गमनोपयोगिकार्यार्थं तत्र तत्र शरीरं चालितवन्त इत्यर्थः ॥ १२ ॥

अतः परं या शरीरस्थितिः साऽद्भुतकर्मलीलया भगवतः । अत एव महति रोदने कर्तव्ये भगवदिच्छया अल्पमपि रोदनं न कृतवत्य इत्याह—

न्यरुन्धन्नुद्गलद्बाष्पमौत्कण्ठ्याद्देवकीसुते ।
निर्यात्यगारान्माऽभद्रमिति स्याद् बान्धवस्त्रियः ॥ १३ ॥

**न्यरुन्धन्निति** । पूर्वस्त्रियः उद्गलदपि बाष्पं देवकीसुते गृहान्निर्गच्छति सति अभद्रमङ्गलसूचकं मा भूदिति नेत्रेष्वेव स्तम्भितवत्यः । एवं हि भगवदिच्छा प्रबला । स्वयं कुतः शरीरादिकं स्तम्भयन्ति । यतः प्रेमौत्कण्ठ्यादुद्गलं बाष्पमपि निवारयन्ति । देवकीसुत इति सुतत्वेन भगवद्गमनम् । यतो महतापप्यथा देवक्या पुत्रत्वेन प्रार्थितः पुत्रो जातः । कथं तां द्रष्टुं न गच्छेत् । अत एवाऽस्माभिरपशकुनं न विधेयमिति भावः । **अगारादिति** । अस्मद्गृहे भगवान् समागतः । कृतश्चोपकारः । तादृशस्य स्वगृहगमने अपशकुनकरणमयुक्तं स्यादिति देवीर्बान्धवस्त्रियो न्यरुन्धन्निति सम्बन्धः । बन्धुत्वमपि स्फुरितमिति भावः ॥ १३ ॥

भगवतो निर्याणोत्सवे दशविधवाद्यानि वादितवन्त इत्याह—

मृदङ्गशङ्खभेर्यश्च वीणापणवगोमुखाः ।
धुन्धुर्य्यानकघण्टाद्या नेदुर्दुन्दुभयः समम् ॥ १४ ॥

१ असहमानास्तत्रेति क. घ. ङ. २ भगवत्प्रचलनमिति क. ग. घ. ङ. ३ चलिते इति घ. ४ सदैवेति ख. ५ तस्मिन्ननिमिषा दृश इति क. ग. घ. ६ अपिर्नास्ति ख. ७ दर्शनादिति घ. ङ. ८ परम्परयेति घ. ९ क्रमतीक्ष्येति घ.



**मृदङ्गेति** । तत्र मृदङ्गभेरीपणवानकदुन्दुभयः पञ्चाऽऽनद्धभेदाः । शङ्खगोमुखौ शुषिरभेदौ । वीणैका ततरूपा । घण्टाधुन्धुर्यौ घनभेदौ । एवं चतुर्विधमपि वाद्यमुक्तम् । एतेषां लक्षणानि वाद्याध्याये प्रसिद्धानि ॥ १४ ॥

उत्सवे स्त्रीणां दर्शनं वर्णनीयमिति पुष्पवृष्टिसहितं तदाह—

प्रासादशिखरारूढाः कुरुनार्यो दिदृक्षया ।
ववृषुः कुसुमैः कृष्णे प्रेमव्रीडास्मितेक्षणाः ॥ १५ ॥

**प्रासादेति** । शिखरमन्तिमगृहम् । कुरुनार्य इति कुलस्त्रीणां बहिर्गमनाभावः । पुष्पवृष्टौ सत्यां भगवानात्मानं पश्येदिति कुसुमैर्ववृषुः । प्रेमव्रीडास्मितानि पुष्पकार्याणि ईक्षणसहकारीणि । प्रेमादिपूर्वकमीक्षणं यासाम् । भक्तिधर्मज्ञानप्रकारैश्चतुर्विधैर्भगवान् दृष्ट इत्यर्थः ॥ १५ ॥

पुरुषाणां कृत्यमाह त्रिभिः—

सितातपत्रं जग्राह मुक्तादामविभूषितम् ।
रत्नदण्डं गुडाकेशः प्रियः प्रियतमस्य ह ॥ १६ ॥
उद्धवः सात्यकिश्चैव व्यजने परमाद्भुते ।
विकीर्यमाणः कुसुमै रेजे मधुपतिः पथि ॥ १७ ॥

**सितातपत्रमिति** । आतपो दण्डः । श्वेतं छत्रम् । मुक्तादामानि परितो लम्बन्ते । गुडाका निद्रा । तस्या ईशः । गतश्रमोऽर्जुनः । उपचारेषु सर्वेषु महाराजत्वसूचकम् । तस्य चिह्नं सितच्छत्रमर्जुनस्तेन बुद्धिमान् । प्रियः प्रीतिविषयः । अनेन भगवता बहु कृतमिति सूचितम् । प्रियतमस्य भगवतः । स्वयुधिष्ठिराद्यपेक्षयाऽपि भगवान् प्रियतमः । अतो महाराजत्वोऽप्यन् । स्वस्य हीनत्वमपि बोधयित्वा धृतवानित्यर्थः । हेत्वाश्चर्ये । लौकिकत्वाभावात् । व्यजने चामरव्यजने । परमाद्भुते स्वत एव शीतलसुगन्धवायुजनके । पथि पुष्पैर्विकीर्यमाणो गृहादिस्थितैः रेजे परमशोभां प्राप्तवान् । सर्वाण्येव पुष्पाणि पुष्पवृष्टौ समागतानीति वसन्त एवाऽयं भगवानाविर्भूत इति मधुपतिरित्युक्तम् । विष्णुपूजा वा तैः सर्वैः कृता । नाऽन्यार्थे पुष्पाणि विनियुक्तानीति मधुपतिरित्युक्तम् । "विष्णोः पदे परमे मध्व उत्सः" इति श्रुतेः । सिंहासनोपवेशनापेक्षयाऽपि पथि परमा शोभा जाता ॥ १६ ॥ १७ ॥

एवमन्यवर्णानां कृत्यमुक्त्वा ब्राह्मणानामाह—

अश्रूयन्ताऽऽशिषः सत्यास्तत्र तत्र द्विजेरिताः ।
नानुरूपानुरूपाश्च निर्गुणस्य गुणात्मनः ॥ १८ ॥

**अश्रूयन्ताऽऽशिष इति** । ब्राह्मणानामयं जातिधर्मो यदीश्वरे आशीर्दानमविषयतार्थस्याऽऽशंसनरूपम् । तदैव तेषां वाक्यं प्रमाणं स्यात् । अनधिगतार्थगन्तृत्वात् । प्रकृते तु तद-

१ हि तच्छत्रमिति क. ग. घ. २ गृहादिस्थितैरिति घ.

द्वारकायां तु देवाधिदेवः । स्वर्गे त्वप्सरसः । अत्र तु लक्ष्मीः । तत्रत्याः पतन्ति । अत्रत्या मुच्यन्ते । सभापारिजातादयस्तु तत एवाऽऽनीताः । अपकृष्टादुत्कृष्टे हि समानीयन्ते । इत्यावनन्तोत्कर्षः । किञ्च । भुवोऽपि पुण्ययशस्करी । यथा देहे चक्षुरेकदेशोऽपि सर्वस्यैहिकामुष्मिकं फलं प्रयच्छति तथा द्वारकया सम्बद्धा सर्वाऽपि भूः । धन्या पृथिवी यस्यां द्वारका वर्तत इति । निम्नु दूरेऽयमुत्कर्षः । समाधिहृदयापेक्षयोऽपीयमुत्कृष्टा । तदाह—**पश्यन्तीति** । समाधौ कश्चिदेव कदाचिदात्मानं पश्यति । अत्रत्यः सर्वदा सर्वोऽपि । समाधौ स्थितिरतिकठिना । वायुमनसोश्चञ्चलत्वात् । प्रया-साधिक्याच्च । द्वारकायां तु भगवदनुग्रहेण स्थितिः । अनुग्रहश्च सुखात्मा स्थिरः । तद्दर्शनार्थमेव भगवांस्तत्र स्थितः । स्मितावलोक इति भक्तिज्ञानप्रदत्वं सर्वेन्द्रियाह्लादकत्वं च । स्वपतित्वेन निश्शङ्कता दोषाभावश्च । प्रजापदेन च पाल्यता । पतिपदेन च तदेकगतित्वम् ॥ २६ ॥

एवमचेतनानामुत्कर्षमुक्त्वा चेतनानां मध्ये भगवत्पत्नीनामत्युत्कर्षमाह त्रिभिः—

नूनं व्रतस्नानहुतादिनेश्वरः समर्चितो ह्यस्य गृहीतपाणिभिः ।
पिबन्ति याः सख्यधरामृतं मुहुर्व्रजस्त्रियः सम्मुमुहुर्यदाशयाः ॥ २७ ॥

**नूनमिति** । स्त्रियो हि द्विविधा मर्यादया पुष्ट्या च तदीया जाताः । तासामुभयासां (?) यत्सर्व-पुरुषार्थनाशकमसाधनं च तदेव सर्वपुरुषार्थसाधकं जातम् । एवं स्वरूपे भेदद्वयं साधने चैकमिति । अस्य गृहीतपाणिभिः नूनं हरिरर्चितः । गार्हस्थ्यफलं धर्मसाध्यं, भगवत्फलं भक्तिसाध्यम् । तदुभय-मेकीभूतम् । तत्र प्राधान्यं गार्हस्थ्यस्य । गोपिकावाञ्छितार्थभोगात् । अतो धर्महेतून् प्राधान्येन निर्दिशति । **व्रतं** तामसम् । **स्नानं** राजसम् । **होमः** सात्विकः । आदिशब्देन त्रयाणां भेदाः । एभिः कृत्वा पूर्वजन्मनि अयमेव भगवानीश्वरः सम्यगर्चितः । **हीति** युक्तोऽयमर्थः । फलेन कार-णानुमानं युक्तम् । कारणेन कार्यानुमानं व्यभिचरत्यपि । यद्यप्येतैर्भगवान् प्रीणाति तथापि महा-पुरुषपूजायाः सिद्धिः काऽप्यानुषङ्गिकी पूर्वैवोक्ता । अथवा । व्रतादौ पूजा विहिता । तत्र व्रतमङ्ग-त्वेन कृत्वा पूजामेव मुख्यत्वेन कृतवत्यः । तत्र पूजाव्रतयोर्धर्मभक्तित्वाद्भगवतः पतित्वेन सम्बन्धः । ननु कथमेवमवगम्यते अयमेवेश्वरः पूजित इति । तत्राऽऽह । याः हे सख्यः(?) अधरामृतं पिबन्ति । अमृतपानं हि ईश्वराराधनपूर्वकधर्मकार्यम् । अधरामृतं तु ततोऽपि । तदग्रे वर्णयिष्यामः । हे सख्यीति स्पृहया तुल्यदुःखत्वमस्माकमपीति बोधितम् । अधरामृतमग्रे वर्णयिष्यामः । ननु धर्मभक्ति-फलमेवैतदस्तु । किमेतदाराधनेनेत्याशङ्क्य प्रकारान्तरे व्यभिचारमाह—**व्रजस्त्रिय इति** । गोप्योऽपि कात्यायनीव्रते भक्त्या गानपूर्वकं व्रतस्नानपूजादिकं कृतवत्यः । परमर्चनं कात्यायन्याः कृतम् । तेन तासामिच्छा न पूर्णा । यतः यस्मिन्नधरामृते आशयो यासां ताः केवलं मोहमेव प्राप्तवत्यः ॥ २७ ॥

अस्त्वासां भाग्यम् । इतोऽपि रुक्मिण्यादीनां महद्भाग्यम् । या हि कालवशादप्रवाहे पतिता अन्यत्र नीयमाना अपि बलाद्भगवांन् स्वयमुद्यम्य आत्मसात्कृत्वा अमृतं पाययति । स्वसदृशान् पुत्रांश्च

१ इत्यायनेकोत्कर्ष इति क. २ पुण्ययशस्तिरस्करोतीति क. ग. घ. ३ तथेति नास्ति क. ग. घ. ङ. ४ द्वारकाया सम्बद्धेति ख. ग. ५ अपिर्नास्ति घ. ६ सर्वोऽपीति क. ७ अप्युत्कर्षमिति क. ग. घ. ८ अपिर्नास्ति ख. ९ काप्यानुषङ्गिकीति घ. १० स्पृहया तुल्यदुःखित्वमिति ख. ११ धर्मः भक्तीति ख. १२ भगवता स्वयमिति ख.



प्रयच्छति । तासामीश्वरपूजनं महदित्याहुः—

या वीर्यशुल्केन हृताः स्वयंवरे प्रमथ्य चैद्यप्रमुखान्हि शुष्मिणः ।
प्रद्युम्नसाम्बाम्बसुतादयोऽपरा याश्चाऽऽहृता भौमवधे सहस्रशः ॥ २८ ॥
एताः परं स्त्रीत्वमपास्तपेशलं निरस्तशौचं बत साधु कुर्वते ।
यासां गृहात्पुष्करलोचनः पतिर्न जात्वपैत्याहृतिभिर्हृदि स्पृशन् ॥ २९ ॥

**या वीर्यशुल्केनेति** । वीर्यमेव शुल्कं कार्यनिर्वाहकं द्रव्यम् । तेन हृताः । तेन राक्षसो विवाह उक्तः । **स्वयंवर इति** गान्धर्वः । "गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतावि-"ति मुख्यविवाहेन परिगृहीताः । नन्वन्यस्मै दीयमानाः कथं हृताः ? तत्राऽऽह—**प्रमथ्येति** । चैद्यः शिशुपालः । तत्प्रमुखान् जरासन्धादीन् । **शुष्मिणः** कामुकान् । अयमर्थः । क्षत्रियाणां युद्धमरणेनाऽपि सत्वमुत्पद्यते । तेन धर्मादिकमपि सिध्यति । स्त्रियो हि धर्मभक्तियोग्याः । स्वयं च शिशुपालादयो दुरात्मानः कामुका ब्राह्मणवत्प्रतिग्रहेण प्राप्तुमिच्छन्ति । अतो युक्तं भगवता हृता इति । प्रद्युम्नः, साम्बः, अम्बश्च, सुता यासां रुक्मिणीजाम्बवतीमित्रविन्दानाम् । महांस एव अम्बः । महानंसो यस्येति यौगिक एव शब्दस्तत्र गृहीतः । याश्च षोडशसहस्रं भौमवधे ताः आहृ-तास्तासां गणना ऋषिभिरपि ज्ञायते नाऽन्यैरिति सहस्रश उक्तम् । तासां भगवदाराधने साधनं स्त्रीत्व-मेव । तदपि न भगवतो भोगयोग्यम् । भगवत्सौन्दर्यापेक्षया तासामपेशलत्वात् । शापेन, वन्ध्या, अन्यप-रिग्रहेण च **निरस्तशौचं** [illegible] । [illegible] । [illegible] न भगव-त्प्राप्तिः । अतो यथा भगवतः सामर्थ्यमतिनिकृष्टमप्यत्युत्कृष्टं करोति स्वेच्छया तथैता अत्यन्त-निकृष्टं स्त्रीत्वं परं साधु कुर्वते । साधुत्वं सत्सु सनकादिषु वर्तते । तदपेक्षयाऽपि परमुत्कृष्टं कुर्वते । तत्र हेतुः—**यासां गृहादिति** । सन्तो हि भगवद्धृदि समागत्य कदाचिदेव पश्यन्ति । आसां तु विपरीतम् । भगवानासां गृहात्कदाचिदपि नाऽपगच्छति । प्रत्युत पारिजाताद्याहरणैर्मानादिनोदन-मपि करोति । ननु तर्हि दोषमेव सम्पादयति न गुणम् । ततः किं तासां भाग्यमित्याशङ्क्याह— **हृदि स्पृशन्निति** । तासां हृदि भगवान् स्थित्वा ताः स्पृशन् । तासां हृदि भगवानस्तीति न तासां दोषः ॥ २८ ॥ २९ ॥

एवं भगवद्रूपं प्रासङ्गिकं च फलं भगवान् श्रुत्वा सम्मत्या सत्यवादित्वं स्वीकृत्य मन्दहासेन च ता वशीकृत्य भक्तिं च दत्त्वा तासां वचनं सत्यं कुर्वन्द्वारकामगमदित्याह—

एवंविधा गदन्तीनां स गिरः पुरयोषिताम् ।
निरीक्षणेनाऽभिनन्दन् सस्मितेन ययौ हरिः ॥ ३० ॥

**एवंविधा इति** । अयमेकः प्रकारः । एवमन्येऽपि प्रकाराः सन्ति । स्त्रीसमूहानां बहुत्वात् । सर्वा एव गिरो भगवता श्रुताः । उच्चैः कथने हेतुः—**पुरयोषितामिति** । अभिनन्दनं सत्यमुक्त-मिति ॥ ३० ॥

१ सत्त्वमिति क. ख. ग. २ आयत इति ख. ३ नेति नास्ति घ. ४ भोगभोग्यमिति ग. ५ तदभावेऽपीति ग. घ. ६ एवोतेति नास्ति घ. ७ फलमिति नास्ति ख.

राज्ञो हि ज्ञानाद्भक्तिरधिकेति ज्ञापयितुमाह—

अजातशत्रुः पृतनां गोपीथाय मधुद्विषः।
परेभ्यः शङ्कितः स्नेहात्प्रायुङ्क्त चतुरङ्गिणीम्॥ ३१॥

अजातशत्रुरिति। नासामियमं कार्यं भगवदिच्छया। ज्ञानवत्स्वभावोऽपि तथा। गोपीथाय रक्षणार्थम्। मधुद्विष इति शङ्काभावाय। परेभ्यः हनवत्तुभ्यः। चतुरङ्गिणीं हस्त्यश्वरथपदातिरूपाम्॥ ३१॥

एतावत्कालं कौरवयादवा मिलिताः स्थिताः। अथोभयं पश्चाद्भिन्नतया गता इत्याह—

अथ दूरागतान् शौरिः कौरवान् विरहातुरान्।
सन्निवर्त्य दृढं स्निग्धान् प्रायात्स्वनगरीं प्रियैः॥ ३२॥

अथेति। उभयत्रापि भगवानेव हेतुः। दूरपर्यन्तमागतान्। शौरिरिति लौकिकव्यवहारदार्ढ्यं सूचितम्। शूरः पाण्डवानां मातामहो भगवतः पितामहः। अत उभयं एक एव। न दूरगमनेन आतुराः किन्तु विरहेण। तथापि न ह्यातुरैः सह गमनमुचितम्। अत आतुरान्निवर्त्य प्रियैः सहाऽगमत्। कौरवाः स्वमनस्येव वयं सह न गमिष्याम इति विरहातुराः। अतो भगवता निवर्तिताः। नन्वत्यन्तमातुरा गृहेऽपि न गच्छेयुरिति नाऽऽशङ्कनीयम्। यतस्ते दृढं स्निग्धाः। न हि दृढं स्निग्धः शीघ्रं नश्यति॥ ३२॥

मार्गस्थदेशान् श्लोकद्वयेन निर्दिशति—

कुरुजाङ्गलपाञ्चालाञ्छूरसेनान् सयामुनान्।
ब्रह्मावर्तं कुरुक्षेत्रं मत्स्यान् सारस्वतानथ॥ ३३॥
मरुधन्वमतिक्रम्य सौवीराभीरयोः परान्।
आनर्तान् भार्गवोपागाच्छ्रान्तवाहो मनाग्विभुः॥ ३४॥

कुरुजाङ्गलेति। कुरुजाङ्गलदेशो हस्तिनापुरदेशः पाञ्चालादिदेशैकदेशः। तदा नैवं विभागेन मार्गे स्थिरा इति तानुद्दिशति। पाञ्चालदेशः काम्पिल्यदेशः। शूरसेनान् मथुरादेशान्। अन्यांश्च यमुनातीरदेशान् परपारस्थान्। ततः कुरुक्षेत्रदेशः। सरस्वतीदृषद्वतीमध्यदेशो ब्रह्मावर्तम्। मत्स्यदेशो विराटदेशः। ततः सरस्वतीतीरदेशोऽपि सारस्वतादिः। मरुर्जलोदकदेशः। धन्वोऽनुदकदेशः। भूमिविकलाभेदनिरूपणाय अथशब्दः। सौवीरदेशः सुराष्ट्रदेशः। आभीरदेशः कुन्तीपुरदेशः। ततोऽपि परानानर्तान् द्वारकादेशान्। मध्ये देशनामनिर्देशं सम्बोधयति—हे भार्गवेति। युक्तमेव भृगुवंशस्य तथात्वम्। किन्तु भगवानेव तान् देशानुपागात्। एकेनैव दिवसेन तावद्दूरगमनेऽपि मनागेव श्रान्तवाहो जातो न तु सर्वथा। किमित्येकेनैव दिवसेन गत इत्यत्र हेतुः—विभुरिति॥ ३३॥ ३४॥

१ रक्षणार्थं इति क. ख. २ शङ्काभाव इति ग. ख. ३ लौकिकव्यवहारेत्यादि ख. लोकव्यवहारार्थदार्ढ्यमिति ग. ख. ४ पञ्चालादीत्यादि क. ख. ग. ५ मार्गे इति नास्ति ग. ६ स्थिति इति ख. ७ धन्वो दुरगदेश इति ख. धन्वोऽनुदकदेश इति ग.



मध्ये तत्र तत्र भगवत्पूजामाह—

तत्र तत्र ह तत्रत्यैर्हरिः प्रत्युद्यतार्हणः।
सायं भेजे दिशं पश्चाद्गविष्ठो गां गतस्तदा॥ ३५॥

तत्र तत्रेति। हेति निश्चये। कोऽपि देशो भगवत्पूजारहितो न जात इत्यर्थः। प्रत्युद्यतमर्हणं यस्य। पूर्वमेव भगवानायास्यतीति मार्ग एव पूजासाधनानि स्थापितवन्त इत्यर्थः। एवं पूजितो भगवान् सायङ्काले पश्चाद्दिशं पश्चिमसमुद्रतीरं भेजे। तत्र विश्रामं कृतवान्। गोधूलिसायं नगरप्रवेशः कर्तव्य इति। भगवान् यदा सन्ध्यापरीक्षया स्थितस्तदा सूर्येण न विलम्बः कृत इत्याह—गविष्ठो गां गतस्तदेति। गवि किरणेऽवस्थिते बिम्बमात्रं दृष्ट इत्यर्थः। तादृशः सूर्यो गां गतः जले प्रविष्टः। "अद्भ्यः प्रातरुदेत्यपः सायं प्रविशती"ति श्रुतेः। सुमुहूर्तं जातमित्यर्थः॥ ३५॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षित-
विरचितायां प्रथमस्कन्धे दशमोऽध्यायः॥ १०॥

---

## एकादशोऽध्यायः।

एवं कौरवभक्तानां सर्वसौख्यं निरूपितम्।
द्वारकास्थितभक्तानामेकादश उदीर्यते॥ १॥
प्रवेशे च प्रविष्टस्य स्थितस्याऽप्युत्सवैस्त्रिधा।
प्राकृतानामिव स्नेहः शास्त्रार्थं जानतामपि।
कृष्णेच्छातस्तदित्युक्त्वा प्रत्यापत्तिर्निरूप्यते॥ २॥

पूर्वाध्यायान्ते भगवतो द्वारकाप्रवेशार्थं सुमुहूर्तं निरूपितम्। अत्र प्रथमं प्रवेशे मङ्गलमाह।

शङ्खनादस्तथा स्निग्धदर्शनं स्तोत्रमेव च।
दूरान्मङ्गलमेतद्धि कलशादिस्तथाऽन्तिके॥
दुःखिते नगरे कृष्णो न प्रवेशमिहार्हति।
अतः शङ्खनिनादेन सुखिनस्तान् करोति हि॥
द्वारका जलदुर्गं हि तदन्ते नगरं महत्।
आनर्ताख्यं तत्प्रवेशः पूर्वं पश्चात्पुरस्य हि॥

१ तत्र पूजामाहेति ग. २ अधि स्थिते इति ख. ३ जलं प्रविष्ट इति ग. ४ अथ इति ग. ख. ५ उत्सवात्रिधेति ग.
६ दुःखित इति ख.

अतो भगवानानर्त्तपुरनिकटे गत्वा पाञ्चजन्यध्वनिं कृतवानित्याह—

**सूत उवाच—**

**आनर्त्तान् स उपव्रज्य स्वृद्धान् जनपदान्स्वकान् ।**
**दध्मौ दरवरं तेषां विषादं शमयन्निव ॥ १ ॥**

**आनर्त्तानिति** । बहुवचनमवान्तरग्रामाभिप्रायम् । **स्वृद्धान्** । सुष्ठु ऋद्धान् सस्यधनादिभिः । **स्वकान्** । स्वकीयान् द्वारकानिवेशानन्तरं वासितान् । "**यस्य ध्वनिर्दानवदर्पहन्ते**"त्यमङ्गलरूपदैत्यानां निराकरणार्थं **दरवरं** शङ्खश्रेष्ठं वादितवान् ॥ १ ॥

भगवता वाद्यमानः शङ्खः केनचिद्वर्णितः । सोऽप्युपनिबद्धः—

**स उच्चकासे धवलोदरो दरोऽप्युरुक्रमस्याऽधरशोणशोणिमा ।**
**दाध्मायमानः करकञ्जसम्पुटे यथाऽब्जषण्डे कलहंस उत्स्वनः ॥ २ ॥**

**स उच्चकास इति** । ऊर्ध्वमत्यन्तं चकासे । धवलमुदरं यस्य । एतादृशो दरः । उरुक्रमस्याऽधरशोणेन रूपेण शोणिमा शोणयुक्तः । करकमलद्वयस्य मध्ये सम्पुटे । यथा कमलसमूहे ऊर्ध्वं शब्दायमानो हंसो भवति ॥ २ ॥

पाञ्चजन्यध्वनिं श्रुत्वा सर्वे देशनगरवासिनो निश्चयेन भगवन्तमागतं ज्ञात्वा परमानन्दनिर्वृता अपि दर्शनार्थमग्रे गता इत्याह—

**तमुपश्रुत्य निनदं जगद्भयभयावहम् ।**
**प्रत्युद्ययुः प्रजाः सर्वा भर्तृदर्शनलालसाः ॥ ३ ॥**
**तत्रोपनीतबलयो रवेर्दीपमिवाऽऽदृताः ।**
**आत्मारामं पूर्णकामं निजलाभेन नित्यदा ॥ ४ ॥**
**प्रीत्युत्फुल्लमुखाः प्रोचुर्हर्षगद्गदया गिरा ।**
**पितरं सर्वसुहृदमवितारमिवाऽर्भकाः ॥ ५ ॥**

**तमुपश्रुत्येति** । यस्मिन् श्रुते मृत्युभयमपि गच्छति किमन्यद्भयमित्याह—**जगद्भयभयावहमिति** । पाञ्चजन्यं ह्यायुधं शत्रुवधार्थं निष्पादितं घातकस्वभावम् । तदत्र मङ्गले कथमुपयुज्यत इत्याशङ्क्य अत्रापि घातकरूपेणैव मङ्गलत्वमिति जगतो यद्भयं तस्य भयमावहतीत्युक्तम् । **प्रत्युद्ययुः** । अन्योन्यं प्रतिकूलतया उत् ऊर्ध्वमग्रे ययुः । या प्रापणे । अन्योन्योपमर्देन अहमहमिकया अग्रे गता इत्यर्थः । **सर्वा इति** । नाऽत्राऽवान्तरजातिर्नियामिका । भर्तृत्वस्य तुल्यत्वात् । शास्त्रार्थपरिपालनाय सर्वे उपायनपाणयः समागताः । तत्रोच्चावचत्वसिद्धये दरिद्रा अपि सम्भवन्ति । तेषामुपायनं भगवतः कोपयोगायेत्याशङ्क्याऽऽह—**रवेर्दीपमिति** । बलिः पूजासाधनद्रव्यम् कयाचित्क्रियया हि भिन्नो भगवति सम्बध्यते । तदैव हि परमानन्दः । तत्र दृष्टेन्द्रियसम्बन्धेऽपि देहसम्बन्धसिद्ध्यर्थमुपायनानयनम् । सूर्योद्देशेन दीपदानं विहितम् । न हि दीपेन सूर्यस्य

१ स्वस्येति ख. २ द्वारकाप्रवेशानन्तरमिति क. ख. ३ केनचिदभिनीतिरिति ख. ४ ययुरिति घ. ५ अयगताविति घ. ६ उपादानमिति ग. ७ उपायनमिति ख.



किञ्चित्कार्यं सिद्ध्यति । तथापि त्वत्परोक्षे वयमनेन जीवाम इति दैन्यख्यापनेन दयोत्पत्तौ हेतुर्भवति । तथा भगवत्यपि स्वविद्यमानद्रव्येणोपढौकनम् । तदा भगवता ताः सर्वा **आदृता** आदरेण सुखिताः कृताः । तेषां पूर्णमनोरथानां यत्कार्यं तदाह—**आत्मारामिति** । अथवा । पूर्वमेवाऽऽदृता आत्मारामं प्रत्युद्ययुरिति सम्बन्धः । स्तोत्रोपक्रमस्तु—**प्रीत्युत्फुल्लेति** । उत्कृष्टैरप्युपनीत उपायने भगवतोऽपेक्षा नास्तीति वक्तुं तं विशिनष्टि—**आत्मारामं पूर्णकाममिति** । उभये हि विषयाद्यपेक्षन्ते । येषां विषयापेक्षैव नास्ति । ये वा पूर्णविषयाः । तत्र विषयापेक्षाभावः—"**परं दृष्ट्वा निवर्तत**" इति वाक्याद्भगवति प्राप्ते भवति । भगवांस्तु प्राप्तभगवानात्मारामः । अत एव पूर्णकामः । "**आत्मेराम आप्तकाम**" इति श्रुतेः । अथवा । कामस्तु पूर्वं सृष्ट्यर्थं भगवत्सुत्पन्नः । स सर्वसृष्टपदार्थान् व्याप्य स्थितः पूर्ण इत्युच्यते । स जीवेषु कदाचिन्न पूर्णो भवति । सर्वजीवार्थत्वाद्विषयाणाम् । भगवतस्तु सर्वं प्राप्तमिति पूर्णत्वम् । उभयत्राऽपि हेतुः—**निजलाभेति** । निजं स्वरूपम् । निजा वा सर्वे प्रापञ्चिकाः पदार्थाः । **नित्यदेति** । तिरोभावानुत्पत्तिदशायामपि । अव्यक्तादिनिधनत्वात् । अव्यक्तस्य च भगवत्त्वाद्विषयपक्षे सदेत्युक्तम् । अवतीर्णदशायामपि स्वरूप एव स्थितत्वात्—**नित्यदेति** । स्तोत्रपक्षे ममागतस्य क्लिष्टत्वमाशङ्क्य तथात्वे स्तोत्रासम्भवात्तन्निवृत्त्यर्थमुक्तमात्मारामादि । स्नेहमुद्गिरन्त्यः स्तोत्रं कुर्वन्तीति तासां स्वरूपमनुवदति भगवत्प्रीत्यर्थम्—**प्रीत्युत्फुल्लमुखा इति** । प्रीत्या ह्युत्फुल्लमुखत्वं लोकसिद्धम् । येषां यद्विरहेण मुकुलता मुखस्य तेषां तद्दर्शनेनोत्फुल्लता । तदा हि मुखे स्थितं माधुर्यं प्रकटीभवति । ततस्तत्सहितानि वाक्यानि मिष्टानि भवन्ति । किञ्च । **हर्षगद्गदया गिरेति** । स्तोत्रं हि गानात्मकं वेदे प्रसिद्धं स्थिरमनसां कर्मोपयोगि न तु भक्तानां प्रेम्णा ससम्भ्रमचित्तानाम् । अतो **गिरे**त्युक्तम् । तत्राऽपि यो हर्ष आनन्दोद्गमस्तेन गद्गदया । गद्गदशब्दोऽनुकरणशब्दः शब्दे तथा ध्वनियुक्तत्वं वदति । गद व्यक्तायां वाचीति गदधातुर्द्विरुक्त आदरं बोधयति । एवं हर्षादराभ्यां परिगृहीता वाणी यथाकथञ्चिन्निस्सरति । सा श्रोतर्यपि हर्षमादरं च जनयति । तदुक्तम्—**गद्गदयेति** । धार्ष्ट्यदोषं वारयति—**पितरमिति** । यथा प्रोषिते पितरि समागते महाराजाधिराजेऽपि तत्पुत्रा उद्गच्छन्ति । अत्र तथा विकलत्वं नास्तीति दृष्टान्तान्तरमाह—**सर्वसुहृदमिति** । सर्वसुहृद्गौः । "**गौर्वाव सर्वस्य मित्रमि**"ति श्रुतेः । तां यथा तद्वत्सः सन्ध्यापर्यन्तं क्षुधितः स्वजातिशब्दं कुर्वन्नुपधावति । अत्राऽपि दीनतमत्वाभावाद् दृष्टान्तान्तरमाह—**अवितारमिति** । यथा अरण्यादौ भयस्थाने चौरादिभिर्मार्यमाणा अर्भकाः पूर्वपरिचितं रक्षणसमर्थं दृष्ट्वोद्गच्छन्ति, वदन्ति च स्वखेदम् । तद्वदित्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥

सर्वाः प्रजाश्चतुर्विधाः । स्त्रीपुम्भेदेन प्रथमं द्विविधाः । पुरुषास्त्रिविधाः । ज्ञानिविषयिभक्तभेदेन । तत्राऽऽद्यानां ज्ञानिनां वचनमाह—

**नताः स्म ते नाथ सदाऽङ्घ्रिपङ्कजं विरिञ्चिवैरिञ्च्यसुरेन्द्रवन्दितम् ।**
**परायणं क्षेममिहेच्छतां परं न यत्र कालः प्रभवेत्परप्रभुः ॥ ६ ॥**

**नताः स्मेति** । तेऽङ्घ्रिपङ्कजं नताः स्म । "**नमो नम इत्येतावत्सदुपशिक्षितमि**"ति

१ प्राप्तमिति ग. २ आत्मकाम इति क. ग. घ. स्वपुस्तके तु संशोधितः पाठ आत्मराम इति । मूलसंवादीति स एवेहाऽऽदृतः । ३. सृष्ट्यर्थमिति नास्ति ग. ४ सर्वं भगवतः प्राप्तमिति क. ग. घ. ५ सर्वे इति नास्ति ख. ६ सर्वे पदार्था इति क. सर्वपदार्था इति ख. ७ सर्वे नित्यदेति ग. घ. ङ. ८ तिरोभावानुपपत्त्यादि ग. घ. ९ अव्यक्तस्य चेति ख. अव्यक्तस्य भगवत्त्वादिति ग. १० महाराजाधिराजेऽपीति क. ख. ग.

**सिद्धान्ताद्भगवति** दृष्टे नमनमेव कर्त्तव्यम् । सर्वज्ञत्वेऽपि भिन्नतया स्थापितत्वात् । **"किमासनं ते गरुडासनाये"**ति वाक्याच्च । ननु किं फलार्थं नमनम् । तत्राऽऽह । **हे नाथ !** हे पालक भर्त्तः । स्वत एव सर्वकामनापूरकत्वान्नित्य एवाऽयं नमस्कारः । न काम्य इति ज्ञापयति—**सदेति** । प्रवेशोऽपि नाऽपेक्ष्यत इत्यभिप्रायः । ननु कथं ब्रह्मलोकादिगमनफलपरित्यागेन सदा नमनेनैवं स्थितिः प्रार्थ्यते । तत्राऽऽह—**विरिञ्चिवैरञ्च्येति** । **विरिञ्चिर्ब्रह्मा** । **वैरञ्च्यो** महादेवः । **सुरा** देवा अन्ये । **इन्द्रश्च** । एभिश्चतुर्विधैरुत्कृष्टैरपि वन्दितम् । तत्र गतानामप्येतदेव कार्यम् । अतो दूरापेक्षया निकट एव स्थित्वा नमनं वरम् । ननु यद्यपि ज्ञानिनामैहिकामुष्मिकफलविरागो भवति । भगवत्सायुज्यं च भक्तिरसान्नाऽपेक्ष्यते । तथापि भगवता सह गमनसामर्थ्यं स्थानच्युतिहेतुप्रतिबन्धाभावः स्थितज्ञानादिसंरक्षणं चाऽपेक्ष्यत एव । ततस्तदर्थं कथं न नमनमित्याशङ्क्याऽऽह—**परायणमिति** । इह संसारप्रवाहे परं क्षेममिच्छतां यत्परायणमाश्रयभूतम् । रक्षकमिति यावत् । चरणारविन्दमेव सर्वसाधकं **क्षेममिहेच्छतामिति** पदत्रयेणोक्तम् । तत्र **क्षेमपदेन** ज्ञानादिरक्षा । **इहेति** स्थानादप्रच्युतिः । **इच्छतामिति** सह गमनेच्छायां तत्सामर्थ्यदानं च । यद्यपि वाक्यार्थो न भवति तथापि पदार्थः । ननु देहस्य कालप्रवाहजातत्वान्नमनसिद्ध्यर्थमपि देहस्थितिः काम्येति चेत् ? तत्राऽऽह—**न यत्र काल इति** । यत्र नमने स्थितो भगवति नम्रत्वाद्भगवत्सेवकस्य कालस्य न प्रभवः । **परो** वासुदेवः प्रभुर्यस्य ॥ ६ ॥

विषयपरा आहुः—

**भवाय नस्त्वं भव विश्वभावन त्वमेव माताऽथ सुहृत् पतिः पिता ।**
**त्वं सद्गुरुर्नः परमश्च दैवतं यस्याऽनुवृत्त्या कृतिनो बभूविम ॥ ७ ॥**

**भवाय नस्त्वमिति** । हे **विश्वभावन** ! सर्वानेव विषयसम्बन्धेन भावयस्यधिकान् करोषि । अतोऽस्माकमप्युद्भवाय भव । **नस्त्वमिति** वा हेतुः । यतोऽस्माकं त्वं स्वामी । सर्वप्रार्थनायामनुचितत्वाभावाय भगवति षड्धर्मत्वं प्रतिपादयति—**मातेत्यादि** । त्वमेव नो माता । त्वद्गर्भादेव निर्गतत्वात् । उदरस्थानां जीवानामेव बहिः सृष्टेः । ब्रह्माण्डाख्ये चोदरे साम्प्रतमपि स्थितेः । लोकप्रतीत्या तु या माता सा जरायुवत्पोषकवद्वा । अतस्त्वमेव माता । अतो रोदनेन बलाद्वा त्वमेव प्रार्थनीयः । किञ्च । **अथ सुहृत्** । अविवेकदशायां यथा त्वं प्रार्थनीयः । अथ तदनन्तरं विवेकदशायामपि त्वमेव प्रार्थ्यः । यतस्त्वं **सुहृत्** मित्रम् । **"द्वा सुपर्णा सयुजा सखाये"**ति श्रुतेः । सुष्ठु हृदयं यस्य स सुहृत् । एकस्मिन्नेव हृदये उभयोः स्थितत्वात् । सुष्ठु हरतीति वा । सर्वफलभोक्तृत्वात् । अत एव युक्त्याऽपि भवानेव प्रार्थनीयः । सर्वफलदातृत्वात् । किञ्च । असत्वाधपराधेन दण्डनेऽपि भवानेव प्रार्थनीय इत्याह—**पतिरिति** । न ह्यन्या गतिरस्माकमस्ति । यथा स्वयमनलङ्कृतोऽपि भार्यामलङ्करोति बहुभिराभरणैः । अलङ्कृते तु सन्देह एव नास्ति । अतस्त्वं महानस्मानलङ्कुर्वित्यर्थः । किञ्च । त्वमस्माकं **पिता** । अतो जन्ममात्रेणैव वयं ते दायभा-

१ सर्वकामनापूर्वकत्वादिति ख. २ काम्य इतीति ग. ३ नमनेनैवमिति क. ४ ननु ज्ञानिनां यद्यप्यैहिकामुष्मिकेत्यादि ख. ५ स्थितिज्ञानादीति ख. स्थिताज्ञानादीति घ. ६ कथं......नमनमिति ख. ७ षड्धर्मत्वमिति घ. ङ. ८ सुष्ठु हृदये यः सुहृदिति क. ग. सुष्ठुहृदयः सुहृदिति घ. ९ भगवानेवेति क. ग. घ. ङ. १० भगवानेवेति क. ग. घ. ११ दायभाजिन इति क. ग.



गिनः । जगत्कर्तृत्वेनैव भवतः श्रवणात् । एवमैहिकसर्वफलदानार्थं चतूरूपत्वमुक्त्वा पारलौकिकसर्वदानार्थमाह—**त्वं सद्गुरुर्नः परमश्च दैवतमिति** । प्रक्रियान्तरत्वात्पुनस्त्वमिति ग्रहणम् । परलोकस्तु तदर्थविहितकर्मज्ञानभक्तिभिर्भवति । तत्राऽज्ञानादन्यथा ज्ञानान्मोहनार्थं वा पाखण्डादिबहवो मार्गा जाताः । तत्र सन्मार्गवक्ता दुर्लभः । सन्देहेन विश्वासाभावाच्च । "त्वं त्वस्वयं ज्ञानमि"ति वचनात्त्वमेव गुरुः । जीवास्त्वसद्गुरवः । त्वमेव सद्गुरुरिति । अतो **"गुरुशुश्रूषये"**ति वाक्यात्स्वसेवामेव शिक्षयेत्यर्थः । एवं कर्मणां फलमिति पक्षे गुरुसेवयैव कृतार्थता । देवताफलदानपक्षे **"फलमत उपपत्तेरि"**ति । ब्रह्मफलदानपक्षेऽपि त्वमेव फलदातेत्याह—**परमश्च दैवतमिति** । देवतादानपक्षेऽपि नाऽङ्गदेवताः फलं प्रयच्छन्ति किन्तु सहकारिणो भवन्ति । अतः **परममित्युक्तम्** । मध्ये चकाराद्ब्रह्मपक्षेऽपि परमा देवता भवानेव । देवानां त्वदंशत्वात् । ब्रह्मरूपत्वाच्च । अतस्तवाऽऽराधनमेवाऽस्माकं कर्त्तव्यम् । अन्यत्तु स्वत एव भविष्यतीत्याह—**यस्याऽनुवृत्त्येति** । कृतमस्याऽस्तीति कृती । भगवदनुवृत्तिव्यतिरेकेण कृतेनाऽन्येन धर्मादिना न कृतित्वं भवति । **"धर्मः क्षरति कीर्त्तनात्"** **"कृतघ्ने नाऽस्ति निष्कृतिरि"**ति । अतस्तवाऽनुवृत्त्यर्थं तथा सम्पादय यथा कृतिनो बभूविमेत्यर्थः ॥ ७ ॥

भक्ता आहुः—

**अहो सनाथा भवता स्म यद्वयं त्रैविष्टपानामपि दूरदर्शनम् ।**
**प्रेमस्मितस्निग्धनिरीक्षणाननं पश्येम रूपं तव सर्वसौभगम् ॥ ८ ॥**

**अहो इति** । अहो इत्याश्चर्ये । वयं त्वद्भक्त्यैव पूर्णमनोरथाः । इदानीं त्वमपि मिलित इत्याश्चर्यम् । अथवा । अल्पीयसी भक्तिः कृताऽस्माभिः । फलं तु महज्जातमित्याश्चर्यम् । भवता वयं सनाथाः । **"नारायणपराः सर्वे न कुतश्चन बिभ्यती"**ति न्यायेन भक्तानामपेक्षाऽभावात्रियन्ता नाऽपेक्ष्यते । भगवतस्तु भक्तिविषयत्वेनैव ग्रहणम् । एवमपि भगवानेव स्वयमुद्यम्य पालनादिकं करोति चेत्तदा ते सनाथा भवन्ति । तत्त्वाश्चर्यकरं भवति । इह तु भवता वयं सनाथाः । स्वयमागत्य सर्वकार्यं निर्वाहयसीत्यर्थः । किञ्च । इदं पुनः सर्वजनीनं गुप्ततया भक्तानां भगवान् स्वयं किञ्चित्करोतीति श्रूयते । अत्र तु साक्षात्सर्वजनीनं सर्वं करोतीति **स्मे**त्युक्तम् । किञ्च । यद्वयं सर्वदा पश्येम । न हि सर्वदा भगवान् सर्वैः साक्षात्क्रियते । सात्त्विकैः क्रियत इति यदि, तदाऽऽह—**त्रैविष्टपानामपि दूरदर्शनमिति** । त्रिविष्टपे स्वर्गे भवास्तिष्ठन्तीति वा । तत्र भूमिष्ठानां दर्शनशङ्कैव नास्ति । किञ्च । कदाचिद्देवानामापदायां कृपया भगवत्साक्षात्कारो भवति । तथापि नैवं रूपं पश्यन्तीत्यभिप्रायेणाऽऽह—**प्रेमस्मितस्निग्धनिरीक्षणाननमिति** । प्रेम्णा स्मितेन च स्निग्धं यन्निरीक्षणं तत्सहितमाननं यस्येति । **"ये यथा मां प्रपद्यन्त"**इति प्रेममत्स्वेषु भगवतोऽपि प्रेम । ज्ञानेन मुक्ताः कालान्तरे स्वसेवार्थं भक्ताः क्रियन्ते । तेन मोहिता इवैते इति स्मितम् । अथवा । भगवद्भक्तेषु मोहनमल्पम् । भगवद्गुणरूपयोरेव मोहो नाऽन्यत्रेति मायारूपहास्मितम् । अथवा । भगवद्भक्तेषु मोहनमल्पम् । भगवद्गुणरूपयोरेव मोहो नाऽन्यत्रेति मायारूपहासस्य मन्दत्वम् । अनेन दया निरूपिता भवति । प्रेमदयाभ्यां हि सर्वं वस्तु स्निग्धं भवति । मूर्त्तानां

१ भगवत इति घ. २ भगवद्रूपमिति घ. ३ गुरुशुश्रूषया यथेति ख. ४ ब्रह्मदानेत्यादि घ. ५ परमात्मेति घ. ६ भूमिस्थानामिति क. ग. घ. ७ प्रेमस्मितेन चेति घ. ८ मुक्ता इति घ.

तैलादि स्नेहहेतुः । अमूर्तानां स्नेहदये आत्मसम्बद्धानाम् तेन भगवद्दृष्टिरुभाभ्यामतिस्निग्धा । प्रथमतो भगवद्दर्शनमेव दुर्लभम् । तत्राऽपि सन्मुखतया । तत्राऽपि भगवद्दृष्टिः स्वस्मिन् पतति । तदा हि भगवद्दृष्ट्या गृहीतो भगवति प्रविष्ट एव । तत्राऽपि स्निग्धया दृष्ट्या गृहीतः कदापि न विश्लेषमेति । तत्राऽपि हेतुपूर्वकं स्निग्धया । हेतुष्वपि दया । साऽपि स्नेहेन सम्बद्धा । नाऽस्मादन्यः कश्चिदुत्कर्षोऽस्ति भगवदीयानां भगवति । किञ्च । एतादृशमपि रूपं सर्वसौभाग्ययुक्तं भवति स्वापेक्षितसर्वविषयभूतम् । एतावता नाऽत्र विषयत्यागोऽप्यपेक्षितः । विषयरूपोऽपि स्वयमेव जात इति । तस्मादेतन्महदाश्चर्यमिति ॥ ८ ॥

स्त्रियः स्त्रीप्रधानाश्चाऽऽहुः । एता हि[1] न भगवन्तं न वा गुणाञ्जानन्त्यपि तु स्वानुभवम् । तत्र वस्तुसामर्थ्याद्यज्जायते तदनुवदन्ति—

यर्ह्यम्बुजाक्षाऽपससार नो भवान् कुरून् मधून्वाऽथ सुहृद्दिदृक्षया ।
तत्राऽब्दकोटिप्रतिमः क्षणो भवेद्रवेर्विनाऽक्ष्णामिव नस्तवाऽच्युत ॥ ९ ॥

यर्ह्यम्बुजाक्षेति । हे कमलनयन । दृष्ट्यैवाऽमृतं पाययतीति तथा सम्बोधनम् । **नः** अस्माननादृत्य किमेता मत्स्वरूपाविदोऽतस्तत्र गमिष्यामि यत्र मां जानन्तीत्यपससार[3] । **भवानिति**[7] । गमनसमयेऽपि वयं सम्मुखतया[4] न दृष्टाः । **कुरून्** हस्तिनापुरदेशम् । **मधून्** मथुरादेशम् । अथ तत एव प्रक्रियान्तरेण भीष्मादिदर्शनार्थं कुरुक्षेत्रम् । **तत्र** तस्मिन्समये एकः क्षणोऽब्दकोटिप्रतिमो भवेत् । यातनास्वेव श्रूयते क्षणमध्ये वर्षसहस्रं कृत्वा भोजयन्तीति । तथैवाऽस्माकमनुभवः । ननु सुखेऽपि श्रूयते क्षणमात्रेण कल्पभोगान् भुङ्क्त इति । तत्राऽऽह । **रवेर्विनाऽक्ष्णामिव** । विषयसंस्कारकत्वेन[5] अधिष्ठातृत्वेन[6] च यदा रविः प्रविशति तदा विषयग्रहणसमर्थं चक्षुर्भवति । तथाऽस्माकमन्तर्बहिश्चैवांस्तिष्ठति तदा सर्वकार्यक्षमत्वम् । अयमर्थः । यथा योगिनः समाधौ प्रत्याहारेण चक्षुर्निमीलनं कृत्वा देवतां स्ववशे स्थापयित्वा तिष्ठन्ति । ततश्च बहुकोटिवर्षानन्तरमुन्मेषणनिमेषणकर्ता सूर्य उन्मेषणं करोति । एवं कोटिवर्षे एको निमेषो भवति । तथा त्वदीयानामस्माकं त्वन्निमित्तत्वादस्मदायुषस्त्वत्कार्याभावे[8] एकोऽपि क्षणो नाऽपगच्छति । क्षणे क्षणे मूर्च्छिता भवाम इति । जीवनं तु **अच्युतेति** सम्बोधनात् । यथा त्वमच्युतस्तथा वयमप्यस्मिन्नंशे जाता इति द्योतितम् ॥ ९ ॥

एवं चतुर्विधानां वाक्यं भगवान् सत्यत्वेन समर्थयित्वा सत्यंवाक्यश्रवणं[9] मङ्गलमनुभूय पुरं प्राविशदित्याह—

इति चोदीरिता वाचः प्रजानां भक्तवत्सलः ।
शृण्वानोऽनुग्रहं दृष्ट्या वितन्वन्प्राविशत्पुरीम् ॥ १० ॥

**इतीति** । चकारादन्यान्यपि बहुविधानि । प्रजानामिति नाऽत्र वचने दोषग्रहणम् । तदा भग-

१ हीति नास्ति घ. २ एतदग्रे–"कथं वयं नाथ चिरोषिते त्वयि प्रपन्नतृष्णाखिलतापशोषणम् । जीवेम ते सुन्दरहासशोभितमपश्यमाना वदनं मनोहर"मिति श्लोको दृश्यत आदर्शपुस्तकेषु । स च न केनाऽपि व्याहृयात इति मूले उपेक्षितः । ३ जानन्तीतीत्यपससारेति ग. ४ सम्मुखतयेति ख. ५ विषयसंस्कारत्वेनेति ख. एतदग्र एव च–'अधिष्ठानतश्च बहुकोटिवर्षानन्तरमुन्मेषणे' त्येतान्यक्षराण्यसम्बद्धानीव दृश्यन्ते क. ६ अधिष्ठानत्वेनेति ख. ७ भगवानिति क. ग. घ. ८ त्वन्निमित्तत्वादायुष इति क घ. ९ सत्यवाक्येति ख.



वतो महती कृपोद्गतेति द्योतयति—भक्तवत्सल इति । यथा गौर्वत्सं दृष्ट्वा व्याकुला भवति तथा भगवाञ्जात इत्यर्थः । दृष्ट्याऽनुग्रहं वितन्वन् । तथा तासु दृष्टिः पतिता । भगवाञ्ज्ञानादिसम्पन्नो यथावत्तासां हृदये प्रविष्टः । येन सुखिता न किञ्चिदुक्तवत्यः । ततः **पुरीं** द्वारकां प्रकर्षेण महता सम्भ्रमेण अविशत् प्रविष्टवान् ॥ १० ॥

तां पुरीं वर्णयति पञ्चभिर्मधुभोजेति विधा यथा तथा पुरीति विज्ञापयितुम् । **अधिष्ठाने बहिश्चोर्ध्वमन्तश्चाऽङ्गविभेदतः । सुन्दरं भगवद्योग्यं स्थानं नाऽन्यत्कथञ्चन ।** तत्राऽधिष्ठातॄन्वर्णयति—

मधुभोजदशार्हार्हकुकुरान्धकवृष्णिभिः ।
आत्मतुल्यबलैर्गुप्तां नागैर्भोगवतीमिव ॥ ११ ॥

**मधुभोजेति** । षड्विधा यादवाः । मधवो, भोजाः, दशार्हेष्वर्हाः, कुकुरा, अन्धका, वृष्णयश्च । तैर्गुप्ताम् । सत्त्वरूपमन्तःकरणं यदा षडिन्द्रियैः संरक्ष्यते तदा भगवत्प्रवेशयोग्यं भवति । "**इन्द्रियैर्विषयाकृष्टैरि**"ति वाक्यात्तैरेव नाशश्रवणात् । पुरी च गृहभेदे नश्यति । **आत्मतुल्यबलैः** । यथा आत्मा देहस्तत्तुल्यं बलं येषाम् । आत्मा वायुर्वा । "**अहं मनुरभवं सूर्यश्चे**"ति सूक्ते अर्हद्देवताया वायुभेदत्वात् । मण्डलमध्यत्वादस्य सूक्तस्य[3] । बलं सेना वा । भगवत्तुल्यसेनाः । सर्वाऽप्रवेशने[5] दृष्टान्तः—**नागैरिति** । शरीरमिव वा । **नागैः** प्राणैः । **भोगवती** तनुः । प्राणायामैः संरक्षितां योगितनुं यथा भगवान्प्रविशति । भोगवती गङ्गाप्रवाहो वा । रक्षाऽभावे दैवैरपि सा ह्रियेत ॥ ११ ॥

एवमधिष्ठातृभिः सुरक्षितत्वमुक्त्वा बहिः शोभातिशयमाह—

सर्वर्तुसर्वविभवपुण्यवृक्षलताश्रयैः ।
उद्यानोपवनारामैर्वृतां पद्माकरश्रियम् ॥ १२ ॥

**सर्वर्त्विति** । सर्वेषु ऋतुषु सर्वे विभवाः पुष्पादिसम्पत्तयो येषाम् । एतादृशाश्च ते धर्मजनकाश्च । ते च ते वृक्षाः । लताश्च । तेषामाश्रयो येषु त उद्यानादयः । **उद्यानं** पुष्पप्रधानवाटिका । **उपवनं** फलप्रधानम् । **आरामाः** क्रीडास्थानानि । उद्यानान्युपवनान्यारामाश्च । तैः सर्वत आवृताम् । पद्माकराणां श्रियो यस्यां सा पद्माकरश्रीः ॥ १२ ॥

उपरि शोभातिशयमाह—

गोपुरद्वारमार्गेषु कृतकौतुकतोरणाम् ।
चित्रध्वजपताकाग्रैरन्तःप्रतिहतातपाम् ॥ १३ ॥

**गोपुरेति** । पुरबहिर्द्वारं **गोपुरम्** । अन्यानि द्वाराणि । **मार्गा** हट्टमध्योपरिभागाः । तेषु कृतानि

१ अन्तर्बहिश्चेति ख. अन्तर्बहिरन्तरिति ग. २ माधवा इति क. ख. ग. ३ सूक्तस्येति ग. घ. ङ. ४ सर्वा इति सविसर्गः पाठः क. घ. ५ प्रवेशेनेति क. घ.

कौतुकतोरणानि यस्याम् । विचित्रा ध्वजाः पताकाश्च । गरुडादिचिह्निता **ध्वजाः** । जययन्त्राङ्किताः **पताकाः** । तेषामग्रैर्लम्बायमानविचित्रपटैरन्तःप्रतिहत आतपो यस्याम् । मध्याह्ने ध्वजादेश्छायाजनकत्वादग्रैरित्युक्तम् । यद्यप्यन्तस्तापो निवार्यते । तथापि शोभा बहिरेव । फलांशेन तूत्तराङ्गम् ॥ १३ ॥

अन्तः शोभामाह—

**सम्मार्जितमहामार्गरथ्यापणकचत्वराम् ।**
**सिक्तां गन्धजलैरुप्तां फलपुष्पाक्षताङ्कुरैः ॥ १४ ॥**

**सम्मार्जितेति** । **महामार्गो** राजमार्गः । **रथ्या** अन्याः । **आपणकः** पण्यवीथी । **चत्वरमङ्गणम्** । एतानि सम्मार्जितानि यस्याम् । **गन्धजलैः सिक्ताम्** । सन्निधानात्पूर्वोक्तस्थानेषु । अविशेषेण सर्वत्र वा । मङ्गलार्थं फलानि पुष्पाण्यक्षता यवाङ्कुराश्च तैरुप्ताम् । आम्रफलसहितशाखा भूमौ निखाताः । तथा पुष्पगुच्छानि । तथा अक्षता ऊर्ध्वं निखाताः । तथैवाऽङ्कुराश्च । तत **उप्ता**मित्युक्तम् ॥ १४ ॥

मङ्गालङ्कारमाह—

**द्वारि द्वारि गृहाणां च दध्यक्षतफलेक्षुभिः ।**
**अलङ्कृतां पूर्णकुम्भैर्बलिभिर्धूपदीपकैः ॥ १५ ॥**

**द्वारि द्वारीति** । चकारात्सभाहट्टनगरद्वारेष्वपि । गृहग्रहणं मार्गस्थादृष्टतया अलङ्काराभावशङ्का- **निवृत्त्यर्थम्** । दधि पात्रस्थम् । अक्षता राशीभूताः । फलानि च । अतो न पुनरुक्तिः । इक्षवश्चोभयतः **स्थापिताः** । तैः पूर्णकुम्भादिभिश्चाऽलङ्कृताम् । द्वारि द्वार्यलङ्कृतामित्यवयवालङ्कारेणाऽप्यलङ्कृतामिति **बोधितम्** । उत्सवार्थमेवं करणम् । सूर्यवत्सर्वत्र भगवत्तेजसो व्याप्तत्वाद्वा ॥ १५ ॥

**अन्तस्थैर**पि भगवानन्तर्नीत इति येषां दर्शनार्थं स्वयं गच्छेत्ते पित्रादयः स्वयमागता इति सम्बन्धज्ञानापेक्षया भगवज्ज्ञानमेव[२] तेषां बलिष्ठमिति प्रदर्शयन्नाह निशम्येति सार्द्धैस्त्रिभिः—

**निशम्य प्रेष्ठमायान्तं वसुदेवो महामनाः ।**
**अक्रूरश्चोग्रसेनश्च रामश्चाऽद्भुतविक्रमः ॥ १६ ॥**
**प्रद्युम्नश्चारुदेष्णश्च साम्बो जाम्बवतीसुतः ।**
**प्रहर्षवेगोच्छ्वसितशयनासनभोजनाः ॥ १७ ॥**
**वारणेन्द्रं पुरस्कृत्य ब्राह्मणैः ससुमङ्गलैः ।**
**शङ्खतूर्यनिनादेन ब्रह्मघोषेण चाऽऽदृताः ।**
**प्रत्युज्जग्मू रथैर्हृष्टान् प्रणयागतसाध्वसाः ॥ १८ ॥**

अत एव सम्बन्धिशब्दमनुक्त्वा **प्रेष्ठ**मित्युक्तम् । मनसो महत्त्वं देहादिविस्मरणपूर्वकभगव-

१ जयपत्राङ्किता इति ख. २ भगवद्ध्यानमेवेति ग. घ.



द्ग्रहणात् । उग्रसेनो राजा । अक्रूरमुख्यत्वान्न लौकिकमहत्त्वं क्रमनियामकम् । सर्वत्र चकारस्तद्वर्गग्राहकः । ननु रामस्य कथमुद्गमनम् । जामात्रादिवधं कृत्वा भगवतः समागतत्वादित्याशङ्क्य— नाऽयं रामः प्राकृतः । भगवत इवाऽस्याऽप्यद्भुत एव पराक्रमः । कौरवेषु स्नेहं ख्यापयन्, गदायुद्धादिकमपि शिक्षयन्, तदिष्टमिव वदन्, दुर्योधनादीन्स्वयमेव मारितवानिति युद्धबोधनात्प्रतीकारादवगम्यते । लोकप्रतीतिस्त्वन्यथा । तदुक्तमेवेत्याह—**अद्भुतविक्रम इति** । **जाम्बवतीसुत इति** । स्त्रीणामिवाऽलङ्करणमस्य प्रियमिति यत्र तादृशालङ्कारेण गच्छति तत्र व्यासस्तं तथा विशिनष्टि । **पिता सम्बन्धिनश्चैव पुत्राश्च परिकीर्त्तिताः** । भगवदागमनं श्रुत्वा यो हर्षो जातस्तस्य वेगेन जातेन महाप्रयत्नेनोच्छ्वसिताः श्वासवत्त्यक्ता गमनव्यतिरिक्ता[२] अन्या अवस्थाः शयनासनभोजनादयस्तमस्सत्त्वरजोरूपा यैः । मङ्गलार्थं वारणेन्द्रं हस्तिश्रेष्ठं पुरस्कृत्य । सुमङ्गलद्रव्यसहितैः **ब्राह्मणैरि**ति[३] यथैतेषां तदेकमनस्त्वं तथा ब्राह्मणानामपीति विज्ञापितम् । भगवता सह सर्ववाद्यानां समागमनेऽपि तूरीशङ्खयोर्मङ्गलार्थं सम्मुखतया नयनम् । न तु स्वमहत्त्वख्यापकम् । मङ्गलघोषो वेदपाठः । चकारान्मङ्गलाष्टकादि । **आदृताः** पूर्वमेव सम्मुखतया गताः । रथयानैर्गमने हेतुः । प्रणयेनाऽऽगतसाध्वसाः । प्रणयेन आगतं साध्वसं भयादि येषाम् । लौकिकपदार्थसहितभगवत्स्मरणे हर्षः । पश्चात्केवलस्मरणे साध्वसमिति विवेकः ॥ १६ ॥ १७ ॥ १८ ॥

केवलवैषयिकसुखजनका अन्तर्बहिर्भेदेन ये जीवास्ते तु भगवन्तं प्रत्युज्जग्मुरित्याह—

**वारमुख्याश्च शतशो यानैस्तद्दर्शनोत्सुकाः ।**
**लसत्कुण्डलनिर्भातकपोलवदनश्रियः ॥ १९ ॥**
**नटनर्त्तकगन्धर्वाः सूतमागधवन्दिनः ।**
**गायन्ति चोत्तमश्लोकचरितान्यद्भुतानि च ॥ २० ॥**

**वारमुख्याश्चेति** । वराणां समूहो वारम् । तदेव मुख्यं यासामिति । वेश्याः । चकारादन्या अपि प्रगल्भाः । तास्ववान्तरभेदोऽस्तीति ख्यापनाय **शतश** इत्युक्तम् । तासामपि यानानि । यानानां प्रयोजनमाह—**तद्दर्शनोत्सुका इति** । बाहुल्येन नरयानानि । स्वस्थानस्थितावपि दर्शनं सम्भवति । तथाऽप्युत्सुकतया गमनं पुरस्कारार्थम्[४] । मङ्गलत्वख्यापनाय तासामलङ्कारवर्णनम्—**लसत्कुण्डलेति** । लसत्कुण्डलैः नितरां भाताः कपोलयुक्तवदनानां श्रियो यासाम् । **नटाः** शास्त्रानुसारनर्त्तकाः । **नर्त्तका** लौकिकाः । **गन्धर्वा** गायकाः । **सूताः** पौराणिकाः । **मागधा** वंशशंसकाः परिहाराः । **बन्दिनो** वैतालिकाः प्रस्तावसदृशोक्तयः । सर्वेऽपि गायन्तः । चकारात्स्मरन्तश्च । अद्भुतानां कथनं स्पष्टतया लोके वक्तुमयुक्तम् । तदपि गायन्त इति चकारार्थः ॥ १९ ॥ २० ॥

लौकिकप्रभुवत्कृष्णे गतानां न पाक्षिकफलत्वम् । अपि तु सर्वे सफला इत्याह—

**भगवांस्तत्र बन्धूनां पौराणामनुवर्तिनाम् ।**
**यथाविध्युपसङ्गम्य सर्वेषां मानमादधे ॥ २१ ॥**

१ इत्याद्यङ्काऽऽहेति ग. २ अनोत्सवस्था इति घ. अन्यावस्था इति क. ३ सुमङ्गलसहितैरिति घ. ४ आगुप्ता इति घ.

**भगवानिति** । सर्वे हि समुदायेन त्रिविधाः । बान्धवाः पुरवासिनः सेवकाश्चेति । पुरवासित्व-मविशिष्टमिति मध्ये वचनम् ॥ २१ ॥

तेषां सम्मुखतया यथा गमनमुचितं तथा कृतवान् । तदाह—

**प्रह्वाभिवादनाश्लेषकरस्पर्शस्मितेक्षणैः ।**
**आश्वास्य चाऽऽश्वपाकेभ्यो वरैश्चाऽभिमतैर्विभुः ॥ २२ ॥**

**प्रह्वेति** । प्रह्वो नम्रीभावः पित्रादिषु । अभिवादनं ब्राह्मणेषु । आश्लेषो मित्रेषु । करस्पर्शो मुख्यसेवकेषु । स्मितेक्षणानि सर्वत्र । आश्वासनं स्वविरहखेदनिराकरणेन । चकारान्निवेदितदुःखनि-राकरणेन । **श्वपाकाः**श्चाण्डालाः । **वराः** साधनेनाऽप्राप्या विषयाः । चकारादन्येऽपि विषयाः । सर्वदाने हेतुः—**विभुरिति** ॥ २२ ॥

ननु जीवेभ्यः कथं भगवान् विषयान्प्रयच्छति ? तत्राऽऽह—

**स्वयञ्च गुरुभिर्विप्रैः सदारैः स्थविरैरपि ।**
**आशीर्भिर्युज्यमानोऽन्यैर्बन्धुभिश्चाऽविशत्पुरीम् ॥ २३ ॥**

**स्वयञ्चेति** । स्वयञ्च तैर्मानितः । स्वसम्माननार्थमेव तेभ्यः प्रयच्छतीति भावः । गुरवो विप्रा अन्ये च । विप्राश्च गुरवः अन्ये च । **सदारैरिति** सर्वत्र विशेषणम् । **स्थविरै**रन्यैरपि वृद्धैः । आशी-र्भिर्युज्यमानः । कर्तृकरणयोस्तृतीये । सन्तोषादभिनन्दनरूपा आशीरन्यैरपि बन्धुभिः कृतेत्याह । अथवा । नूतनतया सम्बद्धैः पुत्रश्वशुरादिभिर्युज्यमानः पुरमविशत् । अत्र क्रियैव सर्वोत्कृष्टेति न व्यावर्तकत्वेन निरूप्यते । केवलं भक्तिप्रधानत्वाच्च स्तोत्रतत्त्वादिनिरूपणम् ॥ २३ ॥

मर्यादास्थितस्त्रीणां कृत्यमाह—

**राजमार्गं गते कृष्णे द्वारकायाः कुलस्त्रियः ।**
**हर्म्याण्यारुरुहुर्विप्रास्तदीक्षणमहोत्सवाः ॥ २४ ॥**

**राजमार्गमिति** । स्त्रियोऽपि मार्गस्था भगवानपि मार्गस्थ इति दर्शनमुचितमिति भावः । **विप्रा इति** सम्बोधनं भगवता द्वारकायामपि सर्वे मार्गा रक्षिता इति ज्ञापयितुम् । तदीक्षणमेव महानुत्सवो यासाम् । अनेन सर्वाभरणभूषितत्वमन्यदर्शनकृतदोषाभावश्च निरूपितः ॥ २४ ॥

ननु दर्शनस्य कथमुत्सवत्वम् । नित्यत्वादित्याशङ्क्याऽऽह—

**नित्यं निरीक्षमाणानां यदपि द्वारकौकसाम् ।**
**न वितृप्यन्ति हि दृशः श्रियो धामाङ्गमच्युतम् ॥ २५ ॥**

**नित्यमिति** । नित्योत्सवत्वाद्भगवतो न भगवद्दर्शनस्य धारावाहिकज्ञानत्वम् । प्रतिक्षणमलौकि-

१ अपीति नास्ति घ. २ स्वयमिति घ. ३ स्तोत्रत्वादीति ख. ४ निवारित इति क. ख. ड.



कार्यपोषात् । पूर्वपूर्वदर्शनस्य रुच्युत्पादकत्वमेव । न विषयत्वम् । भगवतो विषयत्वाभावात् । रुचिस्तु विषयसामर्थ्यात् । औषधवत् । अत एव न कदापि तृप्तिर्भगवद्दर्शने । दोषात्परमग्रहणम् । यथा महादोषे औषधमपि गृहीतुं न शक्यते । तत्र दृष्टेस्तेजस्त्वाद्विषयदोषेणैव दुष्टता । परमार्थनिर्णये धर्ममार्गे तु कर्तृधर्मसम्बन्धेऽपि । स च विषयदोषो द्वारकावासिनां नाऽस्तीत्याह—**द्वारकौकसा-मिति** । अनेनैव यो सर्वे दोषा निवारिताः । "**पराञ्चि खानि व्यतृणदि**"त्यौत्पत्तिकदोषो भग-वद्दर्शनेन निवार्यते । अनन्यशक्यत्वात् । अन्ये तु द्वारकादिभिरिति निर्णयः । ननु भगवतो रसात्म-कत्वादमृतौषधवत्कथं नोभयसाधकत्वम् ? तत्राऽऽह—**न वितृप्यन्तीति** । विशेषेण न तृप्यन्ति । हि युक्तोऽयमर्थः । यदा हि दृश्यते भगवांस्तदा तृप्ता भवन्ति । द्वितीयक्षणे पूर्वक्षणस्थदर्शनेन रु-चेरुत्पादितत्वात् । यद्यपि विषय एव रुचिमुत्पादयति तथापि ज्ञानद्वारेति ज्ञानप्राधान्यम् । ज्ञानन्तु विषयद्वारा तृप्तिं जनयतीति तृप्तौ विषयप्राधान्यम् । अतो विषयाज्ज्ञानं प्रबलमिति न विशेषेण तृप्यन्ती-त्यर्थः । **दृश इति** स्त्रीबहुत्वनिर्देशादप्येकस्माद्भगवद्रूपादवितृप्तिः सूचिता । किञ्च । यदप्येकं रूप-मनुभवयोग्यं तदपि **श्रियो धामा**ऽङ्गं लक्ष्म्याः स्थानरूपमङ्गम् । अतस्तया सहितो नाऽन्यस्त्रीणां तृप्तिजनको भवति । किञ्च । स्वस्मिन् प्रविष्टे हि पुरुषे तृप्यन्ति स्त्रियः । तदत्र प्रकृते नाऽस्तीत्याह—**अच्युतमिति** । न विद्यते च्युतं यस्य । अतो विषयविचारेणाऽपि दृष्टीनां न तृप्तिसम्भावना ॥ २५ ॥

नन्वङ्गान्तरदर्शनेन तृप्यन्ताम् । उरःस्थानमात्रं हि लक्ष्म्याः ? तत्राऽऽह—

**श्रियो निवासो यस्योरः पानपात्रं मुखं दृशाम् ।**
**बाहवो लोकपालानां सारङ्गाणां पदाम्बुजम् ॥ २६ ॥**

**श्रियो निवास इति** । कोऽपि भागस्तादृशो भगवति नास्ति यो लक्ष्म्यादिभिर्न परिगृहीतः तत्रोपरिभागो लक्ष्म्यैव गृहीतः स्थानदर्शनाभ्याम् । तदाह । श्रियो निवासो यस्योरः वक्षस्थलम् । तस्या एव दृशां भगवन्मुखं पानपात्रम् । लक्ष्म्याः स्वरूपे निविष्टत्वाद्भिन्नतया स्थित्यभावाद्भो-क्तृत्वाभावाल्लक्ष्मीनयनाभ्यां निर्गता दृष्टय एव भोक्त्र्यो जाताः । तासां करणापेक्षायां यत्रैव लावण्यामृतं तिष्ठति तदेव करणम् । तत्र मुखस्य पानपात्रत्वं श्रुतिसिद्धम् । "**अर्वाग्बिलश्चमस ऊर्ध्वबुध्न**"इति श्रुतेः । पात्रपदप्रयोगाद्विहितत्वम् । बहूनामेकपात्रत्वात्तासामेव तृप्तिर्दुर्लभा कुतोऽन्यासामिति भावः । तर्ह्यङ्गान्तरे दृष्टिर्निवेश्यतामित्याशङ्क्याऽऽह । सन्ति बाहव आलिङ्गनयो-ग्याः । परमन्यैः पुरुषैराक्रान्ताः । न च ते दूरीकर्तुं शक्याः । बहुत्वात् । पुरुषत्वाच्च । एका स्त्री यत्र निवारयितुमशक्या स्थानद्वयमाक्रम्य तिष्ठति तत्र लोकपालाः कथं शक्याः । आवश्यकाश्च ते । लोकपालत्वात् । तर्हि ततोऽप्यर्वागवयवेषु दृष्टिः पातनीयेत्याशङ्क्याऽऽह—**सारङ्गाणामिति** । मध्ये येऽवयवास्ते वस्त्रादिभिरेव वेष्टिता दर्शनयोग्या न भवन्ति । अतः परमवशिष्यते चरणद्व-यम् । तत्राऽप्येकश्चरण उपरिगतो ब्रह्मादिभिरेव गृहीतो लोकस्थित्यर्थं तत्रैव स्थितो गङ्गया च गृहीतो ब्रह्माण्डबिले तिष्ठति । अन्यथा जलेन ब्रह्माण्डपूरणेन सर्वनाशः स्यात् । अथाऽवशिष्यत एकश्चरणः ।

१ तु रुच्युत्पादकत्वमेवेति क. ग. घ. २ न गृहीतुं शक्यत इति क. ग. ३ वेति नास्ति ख. ४ भगवद्दर्शनेनेति घ. ५ वच-नीति घ. ङ. ६ वस्त्रमिति क. घ. ७ उदरस्थानमात्रमिति ग. ८ मात्स्यो वा इति ख. ९ दर्शनयोग्या एवेति क. ख. घ.

स च बहुभिराक्रान्तः । सारं गच्छन्तीति सारङ्गाः सदाचाराः कर्मनिष्ठाः । पुनश्च—सरतीति सरः । तस्य समूहः सारम् । रससमूहमिति यावत् । अक्षरव्यत्यासेन वा । ते कर्मफलार्थिनो विषयिणो योगिनो वा । पुनः—सारं गच्छन्ति जानन्तीति सारङ्गा ज्ञानिनः । पुनः—सारं गायन्तीति सारङ्गा भक्ताः । पुनः—अरसहितं सुदर्शनसहितं सारं भगवन्तं सुदर्शनं वा कालेन भीताः सन्तो गच्छन्ति गायन्ति वा ते सारङ्गाः सात्त्वताः । सर्वेषामेकशेषः । समानरूपत्वात् । एवं बहवो बहुविधाः । तेषां पदाम्बुजमेकमाश्रयः । पदत्वादेव ते ततो न गच्छन्ति । समुदायशक्त्या च त एव रसं जानन्ति । अम्बुजत्वात्सर्व एव रसार्थिनः । तस्माद्दृष्टीनां स्वतन्त्रस्थानाभावादतृप्तिर्युक्तेत्यर्थः ॥ २६ ॥

एवं सामान्यतः पुरीं तत्स्थान् भक्तांश्च निरूप्य भगवान् कथं विशेषतया न वर्णित इत्याकाङ्क्षायामुपमानाभावादित्युक्ते भक्तानां बुद्ध्याऽभूतोपमया वर्णनीय इति सिद्धान्तं वक्तुमाह—

सितातपत्रव्यजनैरुपस्कृतः प्रसूनवर्षैरभिवर्षितः पथि ।
पिशङ्गवासा वनमालया बभौ घनो यथाऽर्कोडुपचापवैद्युतैः ॥ २७ ॥

सितातपत्रेति । सितातपत्रं च व्यजने च सितातपत्रव्यजनानि । प्रसूनवर्षैः सर्वतः प्रवृत्तैः । प्रसूनभेदात्पुरुषभेदाद्वा बहुवचनम् । पीताम्बरं नित्यमपि रूपवद् वर्णनायां हेतुत्वेन निरूप्यते । वनमालया उपलक्षितः सहितो वा । एवं सर्वसामग्र्यां सत्यां वनमालयैव बभाविति वा । यथा मध्ये नीलो मेघो भवति । उपरि सूर्यः । परितो द्वौ चन्द्रौ लोलौ । स्थिरा विद्युत् कटितटे । इन्द्रधनुर्द्वयमुभयतो मिलितम् । तदा भगवानिव भवेदित्यभूतोपमा ॥ २७ ॥

एवं वर्णनां समाप्य सम्बन्धिनां स्नेहातिशयमाह—

प्रविष्टस्तु गृहं पित्रोः परिष्वक्तः स्वमातृभिः ।
ववन्दे शिरसा सप्त देवकीप्रमुखास्तदा ॥ २८ ॥

प्रविष्ट इति । तुशब्दः पूर्ववर्णनां व्यावर्तयति । पित्रोरिति । मातृत्वेन सर्वा मातर एकाः । अपृथग्धर्मशीलत्वात् । सर्वासां पितुश्चैकं गृहम् । भेदे कारणाभावाच्च । प्रवेशमात्रेणैव भगवत्क्रियातः पूर्वं ता एव परिष्वङ्गादिकं कृतवत्य इत्याह—परिष्वक्त इति । "ये यथा मां प्रपद्यन्ते" इति वाक्यान्मातॄः प्रति बालक एव प्रतिभाति । भगवद्धर्मापेक्षया लौकिकधर्मस्य बहिरङ्गत्वान्नमस्कारापेक्षया परिष्वङ्गः प्रथमः । स्वमातृभिरिति । पितुरपि मातरः सन्ति । अतः स्वमातृभिरित्युक्तम् । सप्त देवकीभगिन्यः । एकादशाऽपराः । एकजातासु कन्यासु एकस्मै वराय बहूनां दानमपृथग्धर्मशीलत्वेनैव वरस्य । कन्यानां च तदैव पत्नीत्वम् । अन्यथा नाऽर्द्धत्वम् । "यास्ते शीलमनुव्रता" इति वाक्यात् । अयमेव हेतुः पतिबहुत्वेऽपि । अत एव देवकीप्रमुखाः सप्त एकस्वभावान्मातर इत्युच्यन्ते । एकदा सर्वा ववन्दे । शिरसेति भगवद्धर्मत्वम् । शब्देन सर्वासां सकृद्वन्दनं सम्भवति न तु कायिकम् । अतः शिरसा । तदेति भगवद्धर्मप्राकट्याय ॥ २८ ॥

१ स्वतन्त्रस्थानां भावादिति ब. २ अभूतोपमाया वर्णनायेति घ ३ वर्णनीयानामिति ध. ग. ४ इत्यद्भुतोपमेति ग. ५ नाऽर्थत्वमिति घ. ङ.



नमस्कारानन्तरं भगवति बालत्वमेव प्रकटमिति बालकपुत्रे यत्कर्तव्यं तदकुर्वन्नित्याह—

ताः पुत्रमङ्कमारोप्य स्नेहस्नुतपयोधराः ।
हर्षविह्वलितात्मानः सिषिचुर्नेत्रजैर्जलैः ॥ २९ ॥

ता इति । सर्वा एव पुत्रमङ्कमारोप्य बालकस्नेहस्नुतपयोधरा जाताः । न तु तस्य पयसः कश्चन विनियोगो जातः । भगवतो महत्त्वं प्रौढत्वं जानन्त्योऽपि हर्षेण विह्वलितात्मानः । पूर्वसंस्कारस्य दृढत्वात् । नेत्रजैर्जलैः शिखाः सिषिचुः ॥ २९ ॥

भार्याणामवस्थामाह—

अथाऽविशत्स्वभवनं सर्वकाममनुत्तमम् ।
प्रासादा यत्र पत्नीनां सहस्राणि च षोडश ॥ ३० ॥
पत्न्यः पतिं प्रोष्य गृहानुपागतं
विलोक्य सञ्जातमनोमहोत्सवाः ।
उत्तस्थुरारात्सहसाऽऽसनाशया-
त्साकं व्रतैर्व्रीडितलोचनाननाः ॥ ३१ ॥

अथेति । एकस्मिन्नेव भवने विश्वकर्मणा षोडशसहस्रं प्रासादाः कृताः स्वचातुरीस्थापनार्थम् । अत एवाऽनुत्तमम् । न विद्यते उत्तमं यस्मात् । सर्वे कामा यस्मिन् । सर्वकामनापूरकपदार्थसद्भावो यस्मिन्वा । यथा मातृषु पुत्रत्वेन स्वयं प्रविष्टस्तथा पत्नीष्वपि प्रविष्टः पतित्वेन । न प्रभुत्वेन । अतस्तासां साधारणपतित्वेन कृत्यं युक्तम् । दूरादागच्छन्तं पतिं विलोक्य सम्यक् जातो मनसि महानुत्सवो यासाम् । आरात् दूरादेवोत्तस्थुः । सहसेति न सावधानभूताः । यथैव स्थितास्तथैवोत्तस्थुः । देह आत्मा च आसने चिन्तायां निमग्नौ स्थितौ । तदिदानीं द्विरूपा आसनादाशयादप्युत्तस्थुः । परं व्रतानि स्थितान्येव । विशेषालङ्काररहितत्वादिति भावः । अत एव व्रीडया मुकुलितानि लोचनाननानि यासाम् ॥ ३० ॥ ३१ ॥

ताभिः कृतां भगवत्पूजामाह—

तमात्मजैर्दृष्टिभिरन्तरात्मना दुरन्तभावाः परिरेभिरे पतिम् ।
निरुद्धमप्यास्रवदम्बु नेत्रयोर्विलज्जतीनां भृगुवर्य वैक्लवात् ॥ ३२ ॥

तमात्मजैरिति । तमागच्छन्तमेव । ताः सर्वा युगपदेव कायेन मनसा चाऽऽलिङ्गनं कृतवत्यः । तत्र प्रकारभेदमाह—आत्मजैर्दृष्टिभिरन्तरात्मनेति । पुत्रान् हस्ते प्रयच्छन्त्य इव निकटसम्बद्धाः कायेन परिरेभिरे । तथा—दृष्टिभिः । दृष्टिं दृष्ट्या योजयन्त्यः परिरम्भणभावो-

१ पूर्वसंस्कारस्य दृढत्वादिति क. ग. घ. ङ. २ पूर्वेकाले ख. ३ द्रष्टोत्तस्थुरिति क. ग. घ. ४ विशेषालङ्काररहितत्वादि इति क. ख. ५ परिरम्भणम्भावोद्दिरणेनेति ख. परिरम्भणाभावोद्दिरणेनेति ग.

द्गिरणेन अलसवलितादिभिः परिरेभिरे । अन्तरात्मना । भगवति प्रविष्टेन मनसा च परिरेभिरे । तासां परिरम्भण एव मनोरथः समाप्तः । न बाह्यं कृत्यं कृतवत्यः । तत्र हेतुः—दुरन्तभावा इति । दुष्टः अन्तो यस्य । भावस्त्वान्तरः । तस्मिन्हि समाप्ते बहिः क्रिया भवति । स च मानापनोदनावधिः । अतो वैक्लव्यान्मानापनोदनात्पूर्वमेवाऽश्रु समागतम् । तन्मानवतीभिर्निरुद्धमप्यास्रवदीषत्सुस्राव । ननु मानवतीनामेतदनुचितम् । तत्राऽऽह । हे भृगुवर्य । भगवन्माहात्म्यादित्युक्तं भवति । प्रत्युत तासामेव वैक्लव्यं जातम् ॥ ३२ ॥

एवं तासामतिभात्वं भगवति निरूप्याऽऽश्चर्यमिति शङ्कायां हेतुमाह—

**यद्यप्यसौ पार्श्वगतो रहोगतस्तथापि तस्याऽङ्घ्रियुगं नवं नवम् ।**
**पदे पदे का विरमेत तत्पदाच्चलाऽपि यच्छ्रीर्न जहाति कर्हिचित् ॥ ३३ ॥**

**यद्यप्यसाविति** । यद्यपि रोदनमनुचितम् । वस्तुनोऽलाभे तद्भवति । स च पार्श्वगतः । तत्राऽप्येकान्ते । भावनानुसारेणैव भगवता कृतत्वात् । तथापि तस्याऽङ्घ्रियुगं नूतनम् । तासां हि मनोरथश्चरणद्वयं हृदये स्थाप्यमिति । स चाऽत्यन्तं रसाविर्भावे बन्धादिभिर्जाते कर्तुं शक्यः । प्रथमं च भक्त्या धर्मेण वा लोकतो वा चरणक्षालने कृते संवाहने च कृते पूर्वोक्तो भवति । ततश्च भगवतश्चरणारविन्दस्य नित्यनूतनत्वात्प्रथमक्रिययैव जन्मसमाप्तिः । अतो रोदनमुचितमित्याह । **पदे पदे** क्षणे क्षणे प्रतिपदं वा नूतनादपि नूतनमेव । अतः का वा स्त्री मनोरथपूर्त्यभावात्सकृदपि विरता भवेत् । अथवा । तत्पदाद्भक्तिविषयात्प्रथमसेवातो विरता भवेत् । तदा ह्यग्रिममनोरथारम्भः । अतो रोदनमुचितमिति भावः । अत्राऽर्थे निदर्शनमाह—चलाऽपीति । वस्तुतः श्रीश्चला । तथाप्येकस्मिन् कार्ये समाप्तेऽन्यत्र गच्छेत् । तद्भगवत्येकमपि कार्यं न समाप्नोति । नित्यनूतनत्वात् । अतो भगवन्तं कदाचिदपि न जहाति ॥ ३३ ॥

यथैवम्प्रकारेण लक्ष्मीमन्याश्च भार्या अपरिसमाप्तकार्या एव स्थापयति । ताश्च न जानन्ति । एवमेव भूभारहरणार्थं प्रवृत्तो भगवानेकक्रिययैव मध्येऽसमाप्तया कार्यं समापितवानित्याह—

**एवं नृपाणां क्षितिभारजन्मनामक्षौहिणीभिः परिवृत्ततेजसाम् ।**
**विधाय वैरं श्वसनो यथाऽनलं मिथो वधेनोपरतो निरायुधः ॥ ३४ ॥**

**एवं नृपाणामिति** । यथा स्त्रियः स्वयमेव तिष्ठन्ति क्षणान्तरकार्यार्थं न प्रार्थ्यन्ते । एवं भूभारहरणे प्रथमकार्ये समारब्धेऽन्तिमपर्यन्तं तदेवाऽनुवर्त्तते । यथा प्रथममग्निसम्बन्धे सर्वदाहपर्यन्तं स्वयमेवाऽनुवर्त्तते । एवमयमद्भुतकर्मा, न लोकसदृशः । भूभारार्थं जन्म येषाम् । स्वतः कार्यं

१ भगवन्माहात्म्यादियुक्तमिति घ. २ भावनानुसारेण भगवतैव कृतत्वादिति क. ग. घ. ३ सम्बन्धादिभिरिति क. ग. घ. ङ. ४ रोदनमनुचितमिति घ. ५ रोदनमनुचितमिति घ. ६ स्वत इत्यादिस्तेजो येषामित्यन्तो ग्रन्थो नास्ति ग. घ. ङ. ७ कार्यार्थमेवेदि क.



भूभारजननम् । तत्राऽप्यक्षौहिणीभिः अक्षौहिणीसङ्ख्यासेनाभिः परिवृत्तं द्विगुणीभूतं तेजो येषाम् । तत्र भगवत्कार्यमाह । **विधाय वैरम्** । मिथो वैरं विधाय । तस्य वैरस्य सामर्थ्यमाह—**श्वसनो यथाऽनलमिति** । वायुर्निमित्तम् । अग्निरेव दाहकः । स तु वंशघर्षणेन जातः सर्वं दहति । तथाऽयमपि मिथो वधेन सम्पन्नेनोपरतः । मिथो वधं कृत्वोपरत इत्यर्थः । जीवत्सु तेषु नोपरमेदिति भावः । **निरायुध इति** । निर्गतान्यायुधानि यस्य । तस्य ह्यन्योन्यमेवाऽऽयुधम् । अग्नेरिन्धनमिव ॥ ३४ ॥

एवं सर्वसंहर्त्ता भगवान्महानयमद्भुतकर्मा । तस्य सर्वं कार्यं समाप्तम् । अतः परं भक्तोद्धारकभागवताधिकारिदेहनिष्पादनमवशिष्यते । तदुत्तरत्र वक्ष्यते । मध्ये तस्य विरुद्धधर्माश्रयत्वं वक्तुं शृङ्गारक्रीडामाह—

**स एव नरलोकेऽस्मिन्नवतीर्णः स्वमायया ।**
**रेमे स्त्रीरत्नकूटस्थो भगवान् प्राकृतो यथा ॥ ३५ ॥**

**स एवेति** । स एव संहारक एव कालात्मा । भक्ष्येषु नरेषु स्वयमपि तद्रूपेणाऽवतीर्णः । यथा कोऽपि न जानाति तथा स्वमायया मारणनिमित्ते[1] स्त्रीरत्नकूटे सुन्दरस्त्रीसमूहे स्वयमेव विद्यमानो भगवांस्तद्वशमनापन्नः प्राकृतवद्रतिं कृतवान् । यावद्रसे न प्रविष्टस्तावत्तस्य रसं न जानातीति कामशास्त्रम् । स्ववशे स्थितस्य न रस इति ॥ ३५ ॥

एवं भगवत्कृत्याऽङ्गीकृता ग्लानिर्न दोषायेति न्यायेन भगवद्रमणम् । न तु विषयधर्मेण तथात्वमिति प्रतिपादयितुमाह—

**उद्दामभावपिशुनामलवल्गुहाससव्रीडावलोकनिहतो मदनोऽपि यासाम् ।**
**सम्मुह्य चापमजहात्प्रमदोत्तमास्ता यस्येन्द्रियं विमथितुं कुहकैर्न शेकुः ॥ ३६ ॥**

**उद्दामेति** । यद्यपि स्त्रियोऽतिसमर्थास्तथापि भगवन्मनो जेतुं न शक्ताः । तासां सामर्थ्यमाह । उद्दामस्त्यक्तशृङ्खलो यो भावः । लज्जाभयादयो दामानि । तदभावे उद्दामत्वम् । तस्य पिशुनः सूचकः । अमलो वल्गुर्यो हासः । अज्ञापनीये ज्ञापयतीति पिशुनत्वम् । असमये अस्थाने च । एवमपि सन्नमलः स्वाभाविकत्वान्निर्दुष्टः स्वच्छो वा । सूचितस्य हितकरणात् । तत्र सामर्थ्यम् । वल्गुः मनोहरः । पुरुषस्य मनो हरतीति । एतादृशो हासः प्रथमं प्रवृत्तः । ततः कार्यानन्तरं व्रीडा । स्वतः प्रवृत्तत्वात् । ततः स्ववञ्चितत्वसूचकदर्शनम् । तेनाऽपि निहतो मदनः कन्दर्पः सर्वव्यामोहनार्थं प्रवृत्तो दृष्टिबलं ज्ञात्वा स्वयं चापमजहात् । मत्कार्यमेता एव करिष्यन्तीति किं चापेनेति । यत्र मामपि मोहयन्ति तत्र कथमन्यो न मुग्धो भवेदिति । एवं कामादप्यधिका कामपूतना ता एवैता भगवत्स्त्रियः । अथापि यस्य भगवत इन्द्रियं मनो विमथितुं वशीकर्तुं कुहकैरनेकविधकपटैः न शेकुः न समर्था जाताः । दृष्टिमात्रेणैव मदनो जितः । कुहकैरपि तस्य मनो जेतुं न शक्ता इत्यर्थः । पितामहत्वाद्युक्तमिति भावः ॥ ३६ ॥

१ मारणनिमित्तस्त्रीरत्नकूट इति ख. २ सुन्दरेति नास्ति ग. ३ तद्वशमापन्न इति ग. ४ तादृश इति ख. ५ यो हासं इति क. ख. ६ अधिका इति सविसर्गः पाठः ख. ङ.

एवमपि स्वयं पराजिता अशक्ता अप्यज्ञानात्स्वधर्मं भगवत्यारोपयन्तीत्याह—

**तमयं मन्यते लोको ह्यसङ्गमपि सङ्गिनम्।**
**आत्मौपम्येन मनुजं व्यापृण्वानं यतोऽबुधः ॥ ३७ ॥**

**तमयमिति** । लोको भ्रान्तोऽसङ्गमपि भगवन्तं सङ्गिनं मन्यते स्वदृष्टान्तेन[1] । **भगवान् सङ्गी । विषयसहचरितात्मत्वात् । देवदत्तवत् ।** इत्यनुमानेन उपाध्यग्रहणसहितेन[2] भगवन्तमपि सङ्गिनं मन्यते । तत्र विचारकाणामप्युपाध्यग्रहे हेतुः—**मनुजं व्यापृण्वानमिति**[3] । आत्मानं मनुजं यथा लोको मन्यते तथा विशेषचेष्टाकर्त्तारम् । अतस्तात्पर्यापरिज्ञानादज्ञत्वादिबोधने विद्यमाने उपाधौ जीवत्वरूपे तदज्ञानाच्च तथा मन्ता अबुध इत्यर्थः ॥ ३७ ॥

ननु बोधनक्रियाया यथा ज्ञानजनकत्वं तथा स्वाश्रयस्य निकृष्टत्वसम्पादकत्वमपि । लोके तथैव व्याप्तेः । **अज्ञानादिकं जीवत्वसमानाधिकरणम् । दोषजन्यत्वात् । मूर्च्छादिवत् ।** इति निष्प्रत्यूहानुमानेन जीवत्वमपि ज्ञापयति । भ्रमजनकत्वेन प्रतारकत्वाच्च जीवत्वम् । न च जीवत्वे प्रतारणं व्यर्थमिति वाच्यम् । मुक्तजीवानामपि[4] तथा करणदर्शनात् । स्वबन्धभयादेव तत्र तथा करणं दृश्यते नाऽन्यथेत्येवमाशङ्क्य जीववैलक्षण्यं वदन् विषयसम्बन्धस्य न जीवत्वबोधकत्वमित्याह[5]—

**एतदीशनमीशस्य प्रकृतिस्थोऽपि तद्गुणैः ।**
**न युज्यते सदाऽऽत्मस्थैर्यथाऽबुद्धिस्तदाश्रया ॥ ३८ ॥**

**एतदीशनमीशस्येति** । विपरीतमेतदुच्यते विषयसम्बन्धेन जीवत्वमिति । भ्रमादेव विषयसम्बन्धे तथात्वम् । अयं त्वीश्वरत्वबोधकः । नियतकार्यजनकस्य तत्र कार्याजननात् । जीवधर्माणामप्रतिबन्धकत्वात् । मणिमन्त्रादेरप्यलौकिकत्वाद्भगवच्छक्तिमत्त्वम् । अतः प्रकृतिस्थोऽपि विषयेषु रममाणोऽपि तद्गुणैः कर्तृवशत्वापादकत्वस्वरूपप्रच्युतिदोषजनकत्वादिभिर्न[6][7] युज्यते । नन्वापाततोऽग्निस्पर्शे दाहो न जात इति नियतसम्बन्धेऽपि न जायते । तथा भगवत्यपि भविष्यतीत्याशङ्क्याऽऽह—**सदाऽऽत्मस्थैरिति** । सर्वाश्रयत्वाद्भगवतः संयुक्तसमवायेन वा सदाऽऽत्मन्येव ते धर्मा वर्त्तन्ते[8] । ते[9] यदि[10] स्वाश्रये स्वकार्यं सम्पादयेयुर्भगवदाश्रिता न भवेयुः । भगवतो वा सर्वाश्रयत्वं धर्मो न भवेत् । तथाच यमनाश्रित्यैव भ्रमात्तदीयत्वेन ज्ञाता भवन्ति त एव सङ्गित्वं वा जीवत्वं वा बोधयन्ति । न नियताश्रिताः । अन्याश्रयैरेवाऽन्यत्र दोषजनकत्वं चोरादिषु भोगेषु[11] च लोके सिद्धम् । अत्र दृष्टान्तमाह—**यथाऽबुद्धिस्तदाश्रयेति** । महाराजसमीपे शस्त्रपाशादिकं न स्वाश्रये किञ्चित्करोति । अन्यार्थत्वेनैव तस्य सङ्ग्रहात् । "**श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया । विद्ययाऽविद्यया शक्त्या मायया च निषेवितम्**" इति "**विद्याविद्ये मम तनू**" इति च वाक्ये भगवदाश्रयत्वेनाऽमतिरविद्या निरूपिता । मतिर्विद्या । तत्प्रतिस्पर्द्धिनी सपत्नीर(?)मतिरविद्या । यथा अविद्या भगवति स्वकार्यं न करोति तथै-

1 स्वदृष्टान्ते इति ख. 2 उपाधिग्रहणसहितेनेति ग. 3 व्यागृण्वानमिति ख. ग. 4 मुक्तजीवानामितीति ख. 5 इत्याशङ्क्याऽऽहेति ग. 6 कर्तृवश्यत्वेति घ. 7 नेति नास्ति घ. 8 प्रवर्त्तन्त इति घ. 9 ते इति नास्ति घ. 10 बहिरिति ग. 11 रोगेषु चेति क. लोकेषु चेति ग.



तेऽपि विषया इत्यर्थः । "**एकस्यैव ममांऽशस्य जीवस्यैव महामते । बन्धोऽस्याऽविद्ययाऽनादिर्विद्यया च तथेतर**" इति वाक्यान्न विषयाणां स्वाश्रयदुष्टत्वसम्पादकत्वम्[1] । इदानीं रमणस्य त्वीश्वरत्वबोधकत्वम् । अविद्यावदज्ञानादीनामपि दैत्यव्यामोहकत्वम् । दोषनिराकरणं तु[3] सद्धर्म एव । अतो दुष्टानां[2] प्रतारणं सद्धर्म एव । तस्मान्निर्दोषपूर्णगुणो हरिः ॥ ३८ ॥

किञ्च । लोका भ्रान्ता भवन्त्येव । नियतसम्बन्धा अपि भ्रमन्त इत्याह—

**तं मेनिरेऽबला मूढाः स्त्रैणं चाऽनुव्रतं रहः ।**
**अप्रमाणविदो भर्तुरीश्वरं मतयो यथा ॥ ३९ ॥**

**तं मेनिर इति** । अबला ज्ञानजनकक्रियाकरणेऽसमर्थाः । अत एव **मूढा** ज्ञानरहिताः । अन्यार्थं भगवत्कृतं भगवदर्थं मन्यन्ते । तदाह—**स्त्रैणमिति** । स्त्रीलम्पटम् । चकाराच्चद्व्रतमपि[4] । तत्र हेतुः—**रहः अनुव्रतमिति** । एकान्ते अनु व्रतं यस्य । यदैवैकान्तस्थानं तत्रैव भगवान् सन्निहितः । अतो निरन्तरमेकान्तशीलत्वात्स्त्रैणं मेनिरे । नन्वेवमेव स्यादित्यत आह—**अप्रमाणविदो भर्त्तुरिति** । भर्तुर्भगवतः प्रमाणं न जानन्तीति । यथाऽन्धा हस्तिनं मन्यन्ते स्पर्शेन । स हि चक्षुषैव ज्ञेयः । तथा भगवच्छास्त्रेणैव भगवान् विज्ञेयः । न त्ववस्थाविशेषेण क्रियामात्रेण । तथा करणमपि भर्तृत्वात् । "**अप्रमत्ता रक्षत तन्तुमेनमि**"ति श्रुतेः । भगवानेव श्रुत्यर्थप्रतिपादकः । अतो भर्तृत्वादेकान्तशीलत्वम् । स्त्रीरक्षार्थं तु भगवांस्तथा करोति स्त्रीणां तु तदज्ञानम् । तत्र दृष्टान्तमाह—**ईश्वरं मतयो यथेति** । यथा मतयो दर्शनज्ञानानि भगवतैव प्रवर्तितानि स्वैर्युक्त्या[5] तमेवाऽन्यथा मन्यन्ते । ईश्वर एव नास्तीति केचित् । अन्ये[6] यज्ञादय एवेश्वर इत्यपरे । कर्ता केवलमित्यन्ये । जीवविशेष एवेति केचित् । सर्वेषामेतेषां मूलप्रमाणाज्ञानात्स्वोत्प्रेक्षया[7] तथात्वम् । तथैतासामपीत्यर्थः[8] ॥ ३९ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षित-
विरचितायां प्रथमस्कन्धे एकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः ।

एवमैकार्थ्यसिद्ध्यर्थं सर्वं कार्यं निरूपितम् ।
अधुना श्रोतृदेहस्य रक्षणं विनिरूप्यते ॥ १ ॥
यथा[9] वेदान्तविज्ञाने पश्चाग्नौ देहसम्भवः ।
तथा भागवतज्ञाने अस्याग्नौ बोधसंयुते ॥ २ ॥

1 स्वाश्रये इति ख. स्वाश्रयदुष्टत्वसम्पादकत्वमेति ग. 2 दुर्नीमेति क. ग. घ. 3 दोषनिराकरणार्थं तु इति ग. 4 च-व्रतेति क. ग. 5 युक्त्येति ख. 6 अन्येऽपीति क. ग. घ. 7 मूलकारणाज्ञानादिति क. ग. क. 8 तथैवाऽऽसामपीति क. ग. घ. 9 एकाग्रेति ग. घ. 10 सिद्धार्थमिति घ. 11 यथेत्ययं श्लोको नास्ति घ.

**सर्वलक्षणसम्पन्नः सर्वदोषविवर्जितः ।**
**बीजसंस्कारसहितः श्रोता भागवते नृपः ॥ ३ ॥**

व्यवहितत्वाच्छौनकः पूर्वकथां स्मारयति—

## शौनक उवाच—

**अश्वत्थाम्नोपसृष्टेन ब्रह्मशीर्ष्णोरुतेजसा ।**
**उत्तराया हतो गर्भ ईशेनाऽऽजीवितः पुनः ॥ १ ॥**

**अश्वत्थाम्नोपसृष्टेनेति** । त्वद्वाक्यानां समभिव्यवहारादस्माभिरेवमवगतम् । अश्वत्थाम्नो ब्राह्मणोत्तमत्वात्तेन निरूपितस्य ब्रह्मास्त्रस्य चाऽमोघत्वादुत्तराया गर्भो हतः । पश्चादीशेनाऽऽजीवितः । स्वसामर्थ्यात्पूर्वमपि दुर्विभाव्याभिः स्वशक्तिभिर्बीजे तं प्रवेश्याऽऽजीवितवान् । इदानीमपि दग्धे बीजे पुनस्तं प्रवेश्याऽऽजीवयतीति पुनःशब्दार्थः ॥ १ ॥

अनुवादांशमुक्त्वा श्रोतव्यांशमाह—

**तस्य जन्म महाबुद्धेः कर्माणि च महात्मनः ।**
**निधनञ्च यथैवाऽऽसीत् स प्रेत्य गतवान् यथा ॥ २ ॥**

**तस्य जन्मेति । महाबुद्धेरिति** पूर्वमेव तस्य ज्ञानं सिद्धम् । **महात्मन इति** शुभानि **कर्माणि** । जन्मकर्मावदातस्य मृत्युसम्भावनाऽभावाद्गर्भ एव च मृत्योर्निवर्त्तितत्वात्पश्चात्केन प्रकारेण निधनमिति प्रश्नः । किञ्च । यथा पूर्वजन्मनि ज्ञानादिषु सिद्धेष्वप्येतद्देहसम्बन्धो जात एवमुत्तरत्राऽपि भविष्यतीत्याशङ्क्य पृच्छति—**स प्रेत्य गतवान् यथेति** । प्रेत्य शरीरं त्यक्त्वा । **यथेति** प्रष्टव्यार्थः ॥ २ ॥

**तदिदं श्रोतुमिच्छामि गदितुं यदि मन्यसे ।**
**ब्रूहि नः श्रद्दधानानां यस्य ज्ञानमदाच्छुकः ॥ ३ ॥**

**तत्** पूर्वोक्तं त्रयमुत्पत्तिस्थितिप्रलयाख्यम**िदं** च परलोकगमनं शास्त्रार्थसन्देहाच्छ्रोतुमिच्छामि । बहुकालनिर्बन्धात्क्लेशेऽपि यदि सर्वथैतद्वक्तव्यमिति मन्यसे तदा श्रद्धायुक्ता वयं श्रोतुमिच्छामः । इच्छया कथने भगवच्चरित्रमत्राऽस्तीत्यवगम्यते । अत एवमाह—**गदितुं यदि मन्यस इति** । अन्यकथात्वेऽपि भगवदीयत्वाच्छ्रद्धा । अन्यथा शुकस्य ज्ञानदानं न सम्भवेत् । अतस्तस्य चरित्रं कथयेत्यर्थः ॥ ३ ॥

---

१ मत इति क. ग. घ. २ तद्वाक्यानामभिव्यवहारादिति ग. ३ एव नाऽवगतमिति ग. ४ अश्वत्थाम्नो भगवतो ब्राह्मणत्वादिति क. ५ निरूपितस्य चेति ग. ६ पूर्वममीति ख.



जन्मनिरूपणार्थं वंशकालदेशानामुत्तमत्वमाह त्रिभिः—

## सूत उवाच—

**अपीपलन्महाराजः पितृवद्रञ्जयन् प्रजाः ।**
**निस्पृहः सर्वकामेभ्यः कृष्णपादानुसेवया ॥ ४ ॥**

**अपीपलदिति** । अपालयदित्यर्थः । **स्वधर्मविष्णुभक्तिभ्यां महान् सर्वो न चाऽन्यथा । विषयेषु च वैतृष्ण्यं सेवार्थं** भक्तिसूचकम् । तत्र राज्ञः प्रजापालनं धर्मः । **पितृवद्रञ्जयन् प्रजा इति** ज्ञानसहितत्वमुक्तम् । अन्यथा भगवद्दृष्ट्यभावे रक्षणं न स्यात् । **निस्पृह इति** नैरपेक्ष्यम् । कृष्णपादानुसेवा शास्त्रानुसारेण फलजननात्सम्यक्कृतेति ज्ञायते । अनेन राज्ञ उत्तमत्वात्तद्राज्यं स कालो वंशश्चोत्तम इति राजधर्ममेव प्रजाः कुर्वन्तीति तद्राज्ये सर्वत्र कृष्णसेवैव प्रवृत्ता । अतो देश उत्तमः । ज्ञानभक्तिकर्मणां धर्माणां तस्मिन् काले विद्यमानत्वात्कालोत्कर्षः ॥ ४ ॥

ननु वैराग्यं कुत्रोपयुज्यते । तस्य च राज्यस्य च विरुद्धत्वादित्याशङ्क्य न साधनत्वेनाऽत्र वैराग्यं किन्तु भक्तेरानुषङ्गिकमिति तन्निरूपयति—

**सम्पदः क्रतवो विप्रा महिषी भ्रातरो मही ।**
**जम्बूद्वीपाधिपत्यं च यशश्च त्रिदिवं गतम् ॥ ५ ॥**
**किं तेऽकामाः सुरस्पार्हा मुकुन्दमनसो द्विजाः ।**
**अधिजह्रुर्मुदं राज्ञः क्षुधितस्य यथेतरे ॥ ६ ॥**

**सम्पद इति** । राज्यधनाश्वादीनां सम्पत्तय आधिक्यम् । **क्रतवो** राजसूयादयः । **विप्रा इति** सम्बोधनमस्मिन्नर्थे संवादार्थम् । **महिषी** द्रौपदी । **भ्रातरो** भीमादयः । **मही** सर्वाऽपि । राजत्वाच्छास्त्रतो मही । पौरुषेणाऽऽधिपत्यमिति भेदः । अर्जुनेनेन्द्रोऽप्युपकृत इति त्रिदिवं गतं यशः । एते भगवत्कृपया स्वतः सिद्धाः । अत एवाऽकामाः । हृदये नाऽऽगता इति त इत्युक्तम् । वस्तुत एते विषया देवयोग्या मनुष्यस्य काम्या भवन्ति । न तु विष्णुभक्तस्य । यस्तु बहु कामयते बहु वा प्राप्तो भवति तस्य न क्षुद्रेषु कामना प्राप्तेष्वपि । मुकुन्दे मनो यस्य । मोक्ष एव यस्य मनस्तस्याऽप्येतद्भवति । किमुत तद्दातरि । द्विजा इति पूर्ववत्सम्बोधनम् । **किं मुदमधिजह्रुः** । अपि तु न कृतवन्त एवेत्यर्थः । विषयाणां स्वधर्माजनने दृष्टान्तमाह—**क्षुधितस्येति** । **इतरे** रूपादयः ॥ ५ ॥ ६ ॥

एवं राज्ञो माहात्म्यमुक्त्वा तद्वंशे स्वभावत एवाऽयमेतादृश इति विशेषमाहात्म्यमेवाऽऽह—

**मातुर्गर्भगतो वीरः स तदा भृगुनन्दन ।**
**ददर्श पुरुषं कञ्चिद्दह्यमानोऽस्त्रतेजसा ॥ ७ ॥**

**मातुर्गर्भगत इति** । मातुरित्यसमासाद्गृह इव भिन्नतया स्थितिरुच्यते । अतो गर्भगतक्लेशो निवारितः । पूर्वमेव ज्ञानादिसहितः केवलं गर्भं प्राप्तः । **वीर इति** दाम्ना न बद्धः पराक्रमसहित एव

---

१ अन्येनेति घ. २ तद्राज्ये इति घ. ३ वैष्णवसेवैवेति घ. ङ. ४ इन्द्रोऽपि जित इति घ. ५ विषयमाहात्म्यमिति घ. ६ स्तुतिरिति क. ख. घ.

निग्रति। भगवतः साक्षात्परब्रह्मणो दृष्ट्यां दैवैर्दाम्ना बन्धनस्याऽकृतत्वात्। अत्र "देवा वै राजन्यादि" ति श्रुत्यर्थोऽनुसन्धेयः। वीरः स इति सम्बन्धः। अत्र विश्वासार्थं सम्बोधनम्। तदा दह्यमान एव महास्त्रतेजसा वीरत्वात्तदविगणय्य कश्चित्पुरुषं ददर्श। भगवान् सर्वं कार्यं निष्पाद्य सर्वदैत्याप्रवेशाय सर्वतत्त्वसहितस्तद्रक्षार्थमुदरे प्रविष्टः परिभ्रमति। स्वोपकारज्ञापनाय तं प्रत्यात्मानं प्रदर्शितवान्। वेदे प्रसिद्धानि यानि रूपाणि तत्र यत्प्रथमं भावयितुमप्यशक्यं तेन रूपेण प्रकट इति तपः (?) स्वधर्मसहितो ददर्श। "अतसतनूर्न तदामो अश्नुत" इति श्रुतेः। कश्चिदिति। विशेषाकारेण न निर्वचनीयम्॥ ७॥

तद्रूपमनुवर्णयति—

अङ्गुष्ठमात्रममलं स्फुरत्पुरटमौलिनम्।
अपीच्यदर्शनं श्यामं तडिद्वाससमच्युतम्॥ ८॥
श्रीमद्दीर्घचतुर्बाहुं तप्तकाञ्चनकुण्डलम्।
क्षतजाक्षं गदापाणिमात्मनः सर्वतोदिशम्।
परिभ्रमन्तमुल्काभां भ्रामयन्तं गदां मुहुः॥ ९॥

अङ्गुष्ठमात्रमिति। "अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः। ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुगि"ति श्रुतेः। महत्त्वादेवाऽमलमनिष्टरूपम्। गर्भे हि स्थितस्य तन्मलसम्बन्धः सम्भवति। तद्व्यावृत्त्यर्थमुक्तम्। स्फुरत्पुरटमौलिनमिति। दाहोत्तीर्णसुवर्णमुकुटयुक्तम्। अनेनैश्वर्यं ज्ञापितम्। अपीच्यदर्शनम्। अपीच्यरूपं दर्शनं यस्य। "प्रियः स्त्रीणामपीच्य" इति श्रुतेः। सौन्दर्यपरीक्षायां सर्वस्त्रीदर्शनस्य निकषत्वात्। अपीच्यदर्शनं यस्येति सर्वसुन्दरः। अनेन लक्ष्म्याश्रयत्वं प्रतिपादितम्। श्याममिति वैष्णवसिद्धान्तसिद्धम्। अनेन भक्ताश्रयत्वं निरूपितम्। तडिद्वाससम्। स्थिरविद्युन्निभवस्त्रम्। अनेन पूर्वविशेषणसहितेन गर्भकालेऽवर्षकत्वं सूचितम्। अच्युतम्। परिभ्रमणेऽपि सर्वदेशसम्बन्धरहितम्। अक्षत नादिरहितं वा। अनेन रक्षायां सामर्थ्यं ज्ञापितम्। श्रीमद्दीर्घचतुर्बाहुम्। श्रीमन्तो दीर्घाश्चत्वारो बाहवो यस्य। सूक्ष्मरूपे आकारः सम्यगभिव्यक्तो न भवेदिति शङ्कयैवमुक्तम्। आजानुबाहुत्वमुक्तं भवति। पुरुषार्थचतुष्टयदानाय चतुर्णां प्रदर्शनम्। गतिपर्यन्तं क्रियेति दीर्घत्वम्। उभयो(?)र्लक्ष्मीसहितयोरेव कार्यनिर्वाहाच्छ्रीमत्त्वम्। अनेनैहिकामुष्मिकफलदानं सूचितम्। तप्तकाञ्चनकुण्डलम्। तप्तकाञ्चनवर्णे कुण्डले यस्येति। साङ्ख्ययोगयोः कुण्डलत्वात्सर्वविद्याप्रदत्वं सूचितम्। तप्तकाञ्चनपदात्सन्तप्तदशायामेव ज्ञानप्राप्तिरिति सूचितम्। क्षतजाक्षम्। क्षतजवल्लोहितवदक्षिणी नेत्रे यस्य। बाधकदूरीकरणाय प्रकटितक्रोधलेशयुक्तम्। अनेन भक्तरक्षायामासक्तिः सूचिता। उग्रत्वाद्वा सावधानत्वं सूचितम्। गदापाणिम्। "ओजःसहोबलयुतं मुख्यतत्त्वं गदां दधदि"ति

१ अवगणय्येति क. ग. घ. २ प्रदर्शयतीति क. ३ लक्ष्म्याश्रयत्वमिति ग. ४ विशेषेणेति ग. ५ सर्वात्ममिति ग. घ. ङ. ६ उभयोरिति ग.



वाक्यादासन्ययुक्तम्। अनेन तस्य प्राणगमनभयाभावः सूचितः। किञ्च। तेजोग्रासे वायुतत्त्वमेव समर्थम्। अत एव तेजोग्रासार्थं वायुमेव गदां हस्ते गृहीत्वा तिष्ठति। आधिक्ये निर्वापयिष्यामीति। आत्मनः सर्वतोदिशं परिभ्रमन्तं जीवस्य सर्वत्राऽहमिति ज्ञापयितुम्। रक्षां च। प्रकृते विशेषमाह—उल्काभां गदां भ्रामयन्तमिति। स्वस्य तेजोहेतुत्वं ज्ञापयन्ती गदा स्वान्तःस्थं तेजोऽप्रकटयेत्। अत उल्काभा दृश्यते। दैत्यनिवारणार्थं मुहुर्गदां भ्रामयन्तम्॥ ८॥ ९॥

किञ्च—

अस्त्रतेजः स्वगदया नीहारमिव गोपतिः।
विधमन्तं सन्निकर्षे पर्यैक्षत क इत्यसौ॥ १०॥

अस्त्रतेजः स्वगदयेति। जननपर्यन्तं महास्त्रं चेत्तिष्ठेत्तदा निर्गमनसमये दैत्याद्युपोद्बलनात्कदाचिद्दहेत्। अत इदानीमेव स्वरूपतो नाशयति। अग्निवन्नाशेनेऽपि तदंशभूतं भस्म तिष्ठेत्। अतो निःशेषनाशज्ञापनार्थं नीहारमिव गोपतिरित्युक्तम्। कुर्वन्तं सूर्य इव दर्शनसमये प्रोत्कुर्वाणम्। सन्निकर्षं इति तस्मिन् स्नेहः प्रदर्शितः। तदा जिज्ञासाऽभूत्तस्य कोऽयमिति। ततो ज्ञानार्थं परीक्षां कृतवान्। तत्र परीक्षायां विषयमाह—क इति। निश्चयमाह—असाविति। योऽसि सोऽसीति॥ १०॥

एवं सर्वं कार्यं कृत्वा स्वाभिप्रेतार्थसिद्धौ मध्ये भोगार्थमन्तर्धानं प्राप्तवानित्याह—

विधूय तदमेयात्मा भगवान् धर्मगुब्विभुः।
मिषतो दशमास्यस्य तत्रैवाऽन्तर्दधे हरिः॥ ११॥

विधूयेति। तत्तेजो विधूय। तर्हि परीक्षिता कथं न रक्षित इत्याशङ्क्याऽऽह—अमेयात्मेति। मनसाऽपि ज्ञातुमशक्यः केन रक्षितुं शक्यत इत्यर्थः। भगवानित्यप्राकृतत्वाय। अन्तर्धाने धर्मरक्षा हेतुः। नन्वेतावतैव कथं सर्वं कार्यं सेत्स्यतीत्याशङ्क्याऽऽह—विभुरिति। सर्वसमर्थो सर्वं करोति नैव करोतीत्यर्थः। दशमासपर्यन्तं स्थित्वा पश्चादन्तर्हितः। दशमास्य, दशमासस्येति वा पाठः। मिषत इत्यन्यत्र गमनशङ्का वारिता। अन्यतो भगवानाऽऽगतः किन्तु तत्रैव प्रकट इति ज्ञापयितुं तत्रैवाऽन्तरधीयत। पूर्णज्ञानस्योत्पत्तौ बन्धूनां दुःखं स्यादिति शुकतुल्य एवाऽयं प्राकृत इव कृत इत्याह—हरिरिति॥ ११॥

एवं भगवत्कृपां प्राप्य मुख्येनाऽधिकारिदेहेन महापुरुषत्वज्ञापनार्थं मुख्ये काले प्रादुर्भूत इत्याह—

ततः सर्वगुणोदर्के सानुकूलग्रहोदये।
जज्ञे वंशधरः पाण्डोर्भूयः पाण्डुरिवौजसा॥ १२॥

तत इति। सर्वे गुणा उदर्के उत्तरफले यस्य। तादृशे काले। कालस्य हि बहवो गुणाः। ते

१ स्ययमिति क. ग. घ. २ स्वान्तरस्थमिति ग. ३ प्रकटयदिति घ. ४ उल्काभामेति घ. ५ निःशेषनाशज्ञापनार्थमिति ग. निरशनाशनज्ञापनार्थमिति ग. निःशेषनाशनार्थमिति घ. ६ पूर्णज्ञानोत्पत्ताविति क. घ.

कदाचिदुपकुर्वन्ति । अस्य त्वग्रे उपकरिष्यन्तीत्यर्थः । सानुकूलग्रहोदये । अनुकूलग्रहसहितानां ग्रहाणामुदयो यत्र । अनेन ग्रहफलादपि भावि तस्य सर्वफलं ज्ञातुं शक्यमित्युक्तम् । वंशधरः । एतस्मादग्रे पुत्रा भविष्यन्तीति ज्ञापितम् । पाण्डोर्वंशो गत एव स्थितः । अनेन धृत इति नियमापेक्षत्वादसमर्थसमासः । यथा पाण्डू राजकामनायामेवाऽवतीर्णः । अन्धस्य ज्येष्ठस्य राज्यानर्हत्वात् । तथा पाण्डवानां भगवता सह वैकुण्ठगमनावश्यकत्वाद्राज्यत्यागाऽयमवतीर्ण इत्यर्थः । ओजसाऽप्ययं पाण्डुतुल्यः ॥ १२ ॥

तस्य प्रासङ्गिकं कृत्यमाह—

तस्य प्रीतमना राजा विप्रैर्धौम्यकृपादिभिः ।
जातकं कारयामास वाचयित्वा च मङ्गलम् ॥ १३ ॥

**तस्येति ।** यद्यपि गार्भिकवैजिकैनो नास्ति तथाप्यपूर्वपक्षमाश्रित्याऽष्टाचत्वारिंशत्संस्कारान् वदन् जातकर्माऽऽह । मूर्द्धाभिषिक्तस्य स्वतः करणायोगाद्विप्रैरित्युक्तम् । धौम्यः पाण्डवपुरोहितः । कृपः परम्परागतः । जातकं कर्मनामधेयम् । मङ्गलं पुण्याहवाचनम् ॥ १३ ॥

जन्मोत्सवमाह—

हिरण्यं गां महीं ग्रामान् हस्त्यश्वान्नृपतिर्वरान् ।
प्रादात्स्वन्नञ्च विप्रेभ्यः प्रजातीर्थे सतीर्थवित् ॥ १४ ॥

**हिरण्यमिति ।** महीं कृषिकरीं भूमिम् । वरान् अभिमतार्थान् । स्वन्नमामं गोधूमादि । प्रजातीर्थे । "देवाश्च पितरश्चे"ति वाक्यात्पुत्रजन्मसमये सर्वदेवतागमनात्प्रजातीर्थे इत्युक्तम् । वैदिके कर्मणि ज्ञानादेव फलमित्यस्य तीर्थत्वेनाऽप्रसिद्धत्वात्फलं न भवेदित्याशङ्क्याऽऽह—**सतीर्थविदिति ।** तीर्थविद्भिः सहितः । अतस्तदुपदेशाज्ज्ञात्वा कृतवानित्यर्थः ॥ १४ ॥

अधिकसन्तोषार्थं जातकमाह—

तमूचुर्ब्राह्मणास्तुष्टा राजानं प्रश्रयानतम् ।
एष ह्यस्मिन्प्रजातन्तौ कुरूणां पौरवर्षभ ॥ १५ ॥
दैवेनाऽप्रतिघातेन शुक्ले संस्थामुपेयुषि ।
रातो वोऽनुग्रहार्थाय विष्णुना प्रभविष्णुना ॥ १६ ॥
तस्मान्नाम्ना विष्णुरात इति लोके बृहच्छ्रवाः ।
भविष्यति न सन्देहो महाभागवतो महान् ॥ १७ ॥

**तमूचुरिति ।** अस्मिन्बालके द्वेधाऽप्युत्कर्षोऽस्ति । भगवत्कृतः कालकृतश्च । तत्र भगवत्कृतं ये वसिष्ठादयो ब्राह्मणाः सर्वज्ञा अतिदानेन सन्तुष्टा विनयेन नम्रं गुरुमूचुः । एष इति प्रथमं निर्दिशति । यस्य गुणा अग्रे वक्तव्याः स एष इति निर्दिश्यते । यथा—"सोमक्रयण्येषे"ति । इममर्थं



ज्ञापयति—हीति । अस्मिन्निति राजानं बालकं वंश्यांश्च निर्दिश्य प्रजातन्तौ पुत्रपौत्रादिरूपे वंशे । कुरूणामिति । कुरोर्भगवदीयत्वेन तद्वंशसंस्थाया अनुचितत्वात् । प्रधानत्वं चायमेव मध्यमव्यपदेशाच्च । पौरवर्षभेति । पितृभक्तत्वात् पुरोरस्मादपि वंशसंस्थाऽनुचितेति । उत्पत्तिहेतुमाह—दैवेनेति । वंशजनकानामदृष्टं समाप्तमिति । विच्छेदकादृष्टेन वा । प्रसवजनकादृष्टस्य विच्छेदकप्रतिबन्धकस्य चाऽभावात्संस्थाऽवश्यं भाव्या । अदृष्टं च नास्ति । भगवांश्च वर्तते । किमत्र भविष्यतीत्याशङ्कायां यथाकथञ्चिद्दृष्टेनोभयं समाहितं भविष्यतीत्याशङ्क्य तन्निषेधार्थं शुक्ल इत्युक्त्वा (?) "दैवबलं पलमि"ति वाक्यात् संस्थामुपेयुषि सति । अदृष्टे कालादीनामनुकूलत्वात् । केवलं भगवान् पुष्टिमार्गमाश्रित्य(?) भवतामनुग्रहार्थाय पूर्वं यो भवत्स्वनुग्रहः कृतस्तस्याऽर्थः प्रयोजनमिदमिति । "नाऽनुग्रस्य लोकोऽस्ती"ति श्रुतेः । अनुग्रहसम्पादकत्वाच्च भगवतः । सामर्थ्यमनुग्रहार्थत्वम् । "प्रजामनु प्रजायन्ते तदु ते मर्त्याऽमृतमि"ति श्रुतेः । भगवताऽयं रक्षितः । किञ्च । स्वार्थमप्ययं रक्षितो भागवतादिरूपेण प्रवर्तयितुं विष्णुना सर्वेषु वैष्णवेषु भागवताद्यागतोऽस्मीति रक्षितः । विष्णोरर्थप्रतिपादकं नाम भवतीति संज्ञाशब्दापेक्षया यौगिकशब्दस्याऽजहत्स्वार्थेन मुख्यत्वात्तन्नाम्ना विष्णुरात इति लोके भविष्यतीति प्रसिद्धो भविष्यतीत्यर्थः । कारणोत्कर्षमुक्त्वा कार्योत्कर्षमाह—बृहच्छ्रवा इति । भगवदाद्यपेक्षयाऽप्यधिककीर्तिमान् । न हि भवन्त एवं रक्षिताः । न कालो निगृहीतः । न वा भागवतं प्राप्तमिति । संस्थाप्रापककालादेः प्रतिबन्धकत्वात्कथमेवं भविष्यतीत्याशङ्क्याह—न सन्देह इति । तत्र हेतुः—महाभागवत इति । भागवतस्य महत्त्वं भगवत्प्रियत्वेन । तदस्मिंल्लक्षणादिना अवगम्यते । अत एव कालादीनां नाऽत्रोपकारजनकत्वम् । तदुत्तरत्र प्रश्नोत्तराभ्यां निरूपयिष्यते । किञ्च । यथा कालादिभ्यो भगवता फलं दत्तं ततोऽप्यस्मै बहु दत्तमिति नाऽस्मिञ्छङ्का विधेयेत्याह—महानिति ॥ १५ ॥ १६ ॥ १७ ॥

एवं महद्भिरर्थे निरूपिते कालाद्भयं मन्यमानः "सर्वं कालकृतं मन्य" इत्युक्तत्वात्कालज्ञान्पृच्छति—

## राजोवाच—

अप्येष वंश्यान् राजर्षीन् पुण्यश्लोकान् महात्मनः ।
अनुवर्त्तिता स्विद्यशसा साधुवादेन सत्तमाः ॥ १८ ॥

**अप्येष इति ।** भगवत्कृपाव्यतिरेकेणाऽपि यथा कालेनाऽस्मद्वंश्या रक्षिता यशस्विनश्च कृतास्तथाऽयं किं भविष्यतीति प्रश्नः । वंश्येष्वपि ये पुण्यश्लोकाः पुरूरवःप्रभृतयः । तत्राऽपि ये महात्मानः गुरुसदृशाः । यशः सर्वजनीनम् । साधुवादः सद्भिरेव क्रियमाणः । चरित्रस्वभावोत्कर्षौ वा यशःसाधुवादशब्दाभ्यामुक्तौ । वेदार्थसर्वज्ञाः सत्तमाः ॥ १८ ॥

१ सानुकूले महोदये इति ख. २ पुत्रजन्मनीति घ. ३ तस्मिन्निति क. ग. घ. ङ. ४ निर्दिशन्तीति ग. ५ सोमविक्रयिण्येवेतीति क. ग. सोमविक्रय एव इति घ.

१ ज्ञापयन्तीति घ. २ प्रदानेति ख. ३ सत्यदृष्टकालेति घ. ४ सामान्यभूतत्वादिति घ. ५ तदुर्वे इति क. ख. ग. ६ मर्त्यांमितीति ग. ७ भागवततद्भक्तेष्विति. घ ८ भगवद्रतेति घ. ९ भगवतोति ग. घ. १० भविष्यतीति नास्ति ग. घ. ११ नात्रोपकारेत्यादि घ. १२ महाद्विर्थेरिति ग. घ. ङ. १३ वंश्या इति क. ग. १४ वंशेष्वपीति घ.

तत्र सर्वमेव कालोत्कर्षमाहुः—

**ब्राह्मणा ऊचुः—**

पार्थ प्रजाविता साक्षादिक्ष्वाकुरिव मानवः ।
ब्रह्मण्यः सत्यसन्धश्च रामो दाशरथिर्यथा ॥ १९ ॥
एष दाता शरण्यश्च यथा ह्यौशीनरः शिबिः ।
यशो वितनिता स्वानां दौष्यन्तिरिव यज्वनाम् ॥ २० ॥
धन्विनामग्रणीरेष तुल्यश्चार्जुनयोर्द्वयोः ।
हुताश इव दुर्धर्षः समुद्र इव दुस्तरः ॥ २१ ॥
मृगेन्द्र इव विक्रान्तो निषेव्यो हिमवानिव ।
तितिक्षुर्वसुधेवाऽसौ सहिष्णुः पितराविव ॥ २२ ॥
पितामहसमः साम्ये प्रसादे गिरिशोपमः ।
आश्रयः सर्वभूतानां यथा देवो रमाश्रयः ॥ २३ ॥
सर्वसद्गुणमाहात्म्य एष कृष्णमनुव्रतः ।
रन्तिदेव इवोदारो ययातिरिव धार्मिकः ॥ २४ ॥
धृत्या बलिसमः कृष्णे प्रन्हाद इव सद्ग्रहः ।
आहर्त्तैषोऽश्वमेधानां वृद्धानां पर्युपासकः ॥ २५ ॥
राजर्षीणां जनयिता शास्ता चोत्पथगामिनाम् ।
निग्रहीता कलेरेष भुवो धर्मस्य कारणात् ॥ २६ ॥

**पार्थेति** । यद्यपि भगवतैवं रक्षिते सन्देहोऽनुचितस्तथापि हे पार्थ अयं साक्षात् प्रजाविता न मन्त्रिद्वारा । स्वयमेवेष्टादिकरणात् । यद्यपि मनोर्बहवः पुत्रा जातास्तथाप्यान्तंवंशकृदिक्ष्वाकुरेव जातः । तस्य यथा प्रजापालनमविच्छिन्नमेवमस्याऽपि । शत्रुमित्रादिषु समो वा । शशादनिष्कासनात्सर्वज्ञत्वाद्वा तथा वदन्ति । **मानवो** वैवस्वतमनोः पुत्रः । **ब्रह्मण्यो** ब्राह्मणभक्तः । सर्वस्वदानात् । **सत्यसन्धः** सत्यप्रतिज्ञः । वनवासगमनात् । **दाशरथी** रघुनाथः । कालस्याऽपकारजनकत्वं स्वेच्छया भगवत्यपीति भगवद्दृष्टान्तः । **शरण्यः** शरणागतरक्षकः । चकारात्प्रत्येकसमुदायाभ्यां कीर्तिमान् । उशीनरवंशोत्पन्नः शिबिः । तस्य समुदायकीर्तिरिव प्रसिद्धा इन्द्राऽग्निसंवादे । **दौष्यन्ति**-र्भरतः सर्वस्याऽपि सोमवंशस्य यशःप्रदः । यज्वनां च । शतैधिकाश्वमेधकरणात् । सर्वत्र चकारे पूर्वोक्तसम्बन्धो दृष्टान्ते दार्ष्टान्तिके चाऽवगन्तव्यः । **धन्विनां** धनुर्धराणाम् । **अर्जुनः** पितामहः । कार्त्तवीर्योऽर्जुनश्च । चकारादधिकश्च । कालनिग्रहात् । **हुताशोऽ**ग्निः । **धर्षण**मतिक्रमः । आज्ञो-

१ आहेति ग. घ. क. १ अन्तवंशकृदिति क. अयं वंशकृदिति ख. २ शताश्वमेधेति ग.



ल्लङ्घनमिति यावत् । **दुस्तरः** । युद्धे सेनायाः स्वस्य वा जयाभावोऽतरणम् । तद्वानित्यर्थः । **विक्रान्तः** पराक्रमवान् । देहापेक्षयाऽधिककौशलवत्वात् । **मृगेन्द्रः** सिंहः । **निषेव्यो** देवादीनामप्याश्रयः । यथा हिमवान् महादेवादेः । निर्दोषस्थानाद्वा । अत एव ऋषिवासस्तत्रैव । **गुणेष्वेव दृष्टान्ताः** सर्वत्र । **तितिक्षुः** अतिक्रमसहनवान् । **वसुधा** सर्वसहा । **सहिष्णुः** तरोपसहनशीलः । स्वस्मिन्नपराधसहनं पृथ्वीवत् । तस्येवाऽनुचितसहनं पितृवत् । **पितामहो** ब्रह्मा । **साम्यं** देवदैत्यनरेषु तुल्यता । **प्रसादे** अविचारितदाने । **गिरिशो** महादेवः । **आश्रय** आधारः । अवलम्बनमिति यावत् । सर्वार्थेषु यथा लक्ष्म्या भगवांस्तथा सर्वेषां भगवान् । **निदर्शनं** स्पष्टार्थम् । तथाऽयमित्यर्थः । धर्मादीनामपि रक्षकत्वात् । **सर्वे** यावन्तः **सद्गुणाः** सत्यशौचादयस्तेषां **माहात्म्यं** परमोत्कर्षः । तदर्थं **कृष्णं** भगवन्तमनु **व्रतं** यस्य । उपासनया कृपया तत्तुल्य इत्यर्थः । **रन्तिदेवो** नवमस्कन्धे वक्ष्यते । यस्तु पुल्कसाय जलं दत्वा सन्तुष्टः । **उदारो**ऽत्यन्तदातृस्वभावः । यथा ययातिर्देवयान्यां शुक्रदुहितर्ययुक्तायानपि मनस्तु तद्गतं बुध्वा धर्मोऽयमित्यङ्गीकृतवान् । धैर्ये बलिसमः । स चाऽष्टमे वक्ष्यते । **सद्ग्रहो** भक्तिः । **समीचीनो ग्रहो** वा । यज्वनामित्यत्र यागान्तरैरपि तथात्वसम्भवादश्वमेधाहरणं पृथगुक्तम् । स्वस्य सर्वापेक्षयाऽप्यधिकगुणत्वेऽपि न गर्व इत्याह—**वृद्धानामिति** । पुत्रद्वाराऽप्युत्कर्षः । **राजर्षीणां** जनमेजयादीनां जनयिता । पुत्रमपि दण्डयेदिति तदनन्तरं शासनमुक्तम् । असकृन्मर्यादोल्लङ्घने दण्डः । **शासनं** शिक्षापूर्वकदण्डः । **निग्रहीता** निग्रहं करिष्यति । भुवो धर्मस्य च कारणात् । **चरित्रे स्पष्टं** भविष्यति ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

वैराग्यमन्ते निकटे फलपर्यवसायि भविष्यतीत्याह—

तक्षकादात्मनो मृत्युं द्विजपुत्रोपसर्जितात् ।
प्रपत्स्यत उपश्रुत्य मुक्तसङ्गः पदं हरेः ॥ २७ ॥
जिज्ञासितात्मयाथात्म्यो मुनेर्व्याससुतादसौ ।
हित्वेदं नृप गङ्गायां यास्यत्यद्धाऽकुतोभयम् ॥ २८ ॥
इति राज्ञ उपादिश्य विप्रा जातककोविदाः ।
लब्धोपचितयः सर्वे प्रतिजग्मुः स्वकान् गृहान् ॥ २९ ॥

**तक्षकादिति** । **आत्मनो** देहस्य । **मृत्युं** नाशम् । **द्विजपुत्रः** शृङ्गी । **उपसर्जितात्** प्रेषितात् । **उपश्रुत्य मुक्तसङ्गः** कृतसंन्यासः । **हरेः पदं** गङ्गातीरसरसभाम् । तत्र हि भगवत्पदमभिव्यक्तम् । **व्याससुतान्मुनेः** शुकात् । **जिज्ञासितः** सम्यग्विचारपूर्वकं ज्ञातः **आत्मनो** भगवतः स्वस्य च **याथात्म्य**मिदमित्थतया निर्णयः । **असा**वित्यन्ते प्रतिनिर्देशः प्रेत्यापत्त्यर्थः । एतावत्कालं

१ पराजयाभाव इति घ. गलिताक्षरमेव ख.पुस्तकम्. २ यत् ययेति ग. ३ समीचीनाग्रहो वेति क. ग. घ. ४ कृतन्यास इति क. ५ प्रत्यायेत्यर्थ इति ग.

मध्ये कार्यार्थं भगवता रक्षितः । पुनरन्ते ब्रह्मास्त्रेणैव ब्राह्मणप्रेषिततक्षकरूपेणोपसंहृत इति । **इदं शरीरम्** । **नृपेति** सम्बोधनं राज्ञां युद्धनिष्ठानाममोहत्वज्ञापनाय । **अद्धा** निश्चयेन । **अकुतोभयं** भगवच्चरणारविन्दम् । उपादेशनमेकान्ते राजमात्रज्ञापनम् । तेषां ज्ञाने हेतुः—**जातककोविदा इति** । **जातकं** ज्योतिश्शास्त्रैकदेशः । प्रकृतोपयोगित्वादेतदुक्तम् । वस्तुतः सर्वांशविदः । लब्धा उपचितिः प्रत्युपकारो धनादिर्यैस्ते । **सर्वे पूर्वोक्ता** एते च । पूर्णमनोरथत्वात्स्वगृहानेव गता नाऽन्यत्र । भगवत्परितुष्टे पुरुषे कालादिना भगवत्सेवकेनैतावत्क्रियत इत्युक्तम् ॥ २७ ॥ २८ ॥ २९ ॥

क्रमात्तस्य संवादमाह—

> स एष लोके विख्यातः परीक्षिदिति यत्प्रभुः ।
> पूर्वदृष्टमनुध्यायन् परीक्षेत नरेष्विह ॥ ३० ॥

**स एष इति** । यो भगवता रक्षितः स इदानीमग्रिमकथार्थमनूद्यते एष इति । परीक्षिदिति **विख्यातः** । ननु विष्णुरात इति विख्यातो भविष्यतीति सर्वज्ञानां वचनम् । तत्कथं परीक्षिदिति **लोके विख्यात इति** । तत्राऽऽह—**यत्प्रभुरिति** । यस्मात्कारणादयं प्रभुः । भगवता स्वसामर्थ्यदानाद्भगवद्रूपो जात इति पूर्वं भगवत्करणापेक्षयाऽपीदानीन्तनभगवत्कृत्यं सन्निहितत्वादादरणीयम् । **पूर्वस्य** च फलमिति विष्णुरातनाम्ना प्रसिद्धोऽपि परीक्षित्त्वेनैव प्रसिद्धः । तत्र निमित्तमाह—**पूर्वदृष्टमिति** । इदं हि नाम तस्य क्रियोद्बोधकम्[1] । परीक्षितमात्मानं श्रुत्वा परितो भगवन्तमीक्षते । **परित ईक्षामितः**[2] परीक्षितः । अथवा । **इदिति** इवार्थेऽव्ययं "**स्वर इन्मुखं त**" इत्यत्र प्रसिद्धम् । **परित ईक्षे**[3] दर्शनम् । अविभक्तिकधातुनिर्देशः । परितो दर्शनमिवाऽयमिति तकारान्तः । **तेनैतत्सङ्गेऽन्यस्याऽपि** परितो दर्शनं भवतीति ज्ञापितम् । **नरेष्विति** । "**आविस्तरां प्रपश्यन्ती**"ति वाक्याद्भगवद्दर्शनाधिकारः सूचितः । अथवा । परीक्षिदिति विख्यातः । तत्र हेतुः । यस्मात्प्रभुर्भगवानेवं ज्ञातवानयं बालकोऽग्रे नरेषु पूर्वदृष्टं रूपमनुध्यायन् **परीक्षेत** परीक्षां कुर्यादिति । "**अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलादिति**"जीवोऽप्यङ्गुष्ठमात्रो भवति । परमितरसामग्रीरहितः । अनेन वैलक्षण्येन जीवस्वरूपाद्भिन्नं भगवत्स्वरूपं जानात्विस्येतदर्थं नामेत्यर्थः । **इह** संसारे । अत्राऽऽगतस्य बुद्धिभ्रंशः प्रायेण भवतीति ॥ ३० ॥

दग्धशरीरत्वात्क्षीणतामाशङ्क्याऽऽह—

> स राजपुत्रो ववृध आशु शुक्ल इवोडुपः ।
> आपूर्यमाणः पितृभिः काष्ठाभिरिव सोऽन्वहम् ॥ ३१ ॥

**स राजपुत्रो ववृध इति** । **शुक्ले** शुक्लपक्षे[4] । उडुप इति स्त्रीवेष्टितत्वमुक्तम् । ता एव हि पोषणाभिज्ञाः । पितृभिरापूर्यमाणः । सर्वाभीष्टपदार्थदानात् । काष्ठाभिः कलाभिः । प्रत्यहं वैलक्षण्यदर्शनार्थं दृष्टान्तः ॥ ३१ ॥

---

१ क्रियोद्बोधकमिति ग. २ ईक्षमित इति ग. ३ ईक्ष इति सस्वरपाठः ख ग. घ. ४ शुक्लपक्षे चेति क. ग. घ. ङ.



एवं तस्य चरित्रं सर्वमुक्त्वा पूर्वं भगवन्मानसकृतमश्वमेधं पुनः काले केवलं भगवतैव सम्पादितमिति वक्तुं प्रकारमाह—

> यक्ष्यमाणोऽश्वमेधेन ज्ञातिद्रोहजिहासया ।
> राजाऽलब्धधनो दध्यावन्यत्र करदण्डयोः ॥ ३२ ॥
> तदभिप्रेतमालक्ष्य भ्रातरः कृष्णचोदिताः ।
> धनं प्रहीणमाजह्रुरुदीच्यां दिशि भूरिशः ॥ ३३ ॥
> तेन सम्भृतसम्भारो धर्मपुत्रो युधिष्ठिरः ।
> वाजिमेधैस्त्रिभिर्भीतो यज्ञैः समयजद्धरिम् ॥ ३४ ॥

**यक्ष्यमाण इति** । करदण्डादिकं त्वकर्तव्यम् । द्रोहपरिहारार्थत्वादश्वमेधस्य । उचितकरादेस्तु राज्यनिर्वाहकत्वम्[2] । अतो राजा अलब्धधनः कथं धनं प्राप्स्यामीति दध्यौ । करदण्डयोरुक्तो विनियोगः । राजत्वादेव न प्रतिग्रहः । देवताधिष्ठानान्न मेर्वादेः समानयनम् । पूर्वं राज्यवर्णने य उत्कर्ष उक्तः स प्रजानामर्थे । राज्ञस्तु कुतोऽपि याचनमयुक्तम् । अतश्चिन्ता । भगवानपि न याचितः । अन्यथा नूतनमेव दद्यात् । किन्तु तदभिप्रेतमालक्ष्य भ्रातर एव समानीतवन्तः । तेऽपि चिन्ताकुलिता भगवतैव प्रेरिताः । अनेन भक्तानामल्पचिन्तामपि भगवान्न सहत इति सूचितम् । **प्रहीणं** बहु । अतिनिन्दितं वा । ब्राह्मणानां तदिति । आनयनं भगवत्प्रेरणात् । द्रोहस्तेषां पीडा । ब्राह्मणादीनां दुःखदूरीकरणार्थं प्रवृत्तोऽश्वमेधो ब्राह्मणानामेव द्रव्यैरुचितः । **उदीच्यां दिशि** । मरुत्तयज्ञे[1] दक्षिणात्वेन प्राप्तं द्रव्यं भारान्नेतुमशक्यमुत्तरदेशे बहु परित्यक्तमस्ति । तदानीतमित्यर्थः । **तेन सम्भृतसम्भारः** । धनेन सम्भृता आज्यं पशवः पुरोडाशीयादयः सम्भारा येन । तस्याऽयुक्तत्वं निराकरोति—**धर्मपुत्र इति** । त्यक्तं भूमौ राजकीयमिति । युधि स्थिरत्वादश्वमेधसिद्धिः[3] । अश्वमेधैरेव यज्ञैः । "**यज्ञेन यज्ञमयजन्ते**"ति श्रुत्यर्थस्थापनार्थमेवमुक्तम् । **हरिमिति** । ब्राह्मणानामपि दुःखदूरीकर्त्तारम् । अतो न पूर्वोक्तविरोधः । आहूत इति श्लोकद्वयं प्रक्षिप्तम्[4] ॥ ३२ ॥ ३३ ॥ ३४ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां प्रथमस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ।

> एवं भागवतश्रोतुर्देहोत्पत्तिर्निरूपिता ।
> पुरुषत्रयमुक्तिर्हि तन्मुक्त्यर्थं निरूप्यते ॥ १ ॥

---

१ मरुत्तेति सर्वत्र पाठः. २ राज्यमिति क. ग. साज्यमिति घ. ३ युधिष्ठिरत्वादिति क. घ. ङ. ४ तथेदम्—आहूतो भगवान् राज्ञा याजयित्वा द्विजैर्नृपम् । उवास कतिचिन्मासान्सुहृदां प्रियकाम्यया । ततो राज्ञाऽभ्यनुज्ञातः कृष्णया सह बन्धुभिः । ययौ द्वारवतीं ब्रह्मन् सार्जुनो यदुभिर्वृत इति ।

पिता पितामहश्चैको धृतराष्ट्रस्ततः परः ।
प्रपितामहमुक्तिर्हि पूर्वं तत्र उदीर्यते ॥ २ ॥
ततोऽध्यायद्वयेनैव द्विरूपत्वात्पितामहे ।
सनिमित्तां मुक्तिमाह हेतुकार्यविभेदतः ॥ ३ ॥
अमुक्तपितृका मुक्तिं नाऽऽप्नुवन्तीति वार्यते ।
अतो निश्चिन्ततासिद्ध्यै चित्तशुद्धिरिहोच्यते ॥ ४ ॥
ततो द्वयेनेन्द्रियाणां राज्यशौर्यादिवर्णनैः ।
ततो वैराग्यसत्सङ्गावधिकारः फलोन्मुखः ।
ततो भवति पुष्टोऽपि नाऽन्यथेत्यग्रिमा कथा ॥ ५ ॥

तत्र प्रथमं धृतराष्ट्रमुक्तिरुच्यते । सा ज्ञानसाध्येति ज्ञानसिद्ध्यर्थं विदुरप्रसङ्ग उच्यते । विदुरोऽवान्तरव्यापारः । धर्मराजत्वेन गुरुर्वा । भगवता स्मृत इति तस्य दोषनिवृत्तिः । विदुरमैत्रेयकथां स्कन्धद्वये वक्ष्यति । तदग्रिमकथाऽत्र प्रयोजनार्थं निरूप्यते—

सूत उवाच—

विदुरस्तीर्थयात्रायां मैत्रेयादात्मनो गतिम् ।
ज्ञात्वाऽगाद्धास्तिनपुरं तया चाऽऽत्मविवित्सितः[3] ॥ १ ॥

**विदुर इति** । तीर्थयात्रायां समाप्तायां चित्तशुद्धावुद्धवोपदेशान्मैत्रेयं प्राप्य **आत्मनो** भगवतो **गतिं** चेष्टाम् । लीलामिति यावत् । तां ज्ञात्वा ज्ञानसम्पन्नो हस्तिनापुरमगमत् । भगवत्क्रिययैव तस्याऽऽत्मयाथात्म्यं स्फुरितम् । तदाह—**तया चाऽऽत्मविवित्सित इति**[4] । तया गत्या । विवित्सितो विशेषेण ज्ञातः । अयमर्थः । मैत्रेयसमीपे गत्वा स्वस्य सर्वज्ञतासिद्ध्यै बहु पृष्टवान् । तत्र **"यस्मिन् विदिते सर्वमिदं विदितं भवती"**ति न्यायेन भगवच्चरित्रे ज्ञाते सर्वं ज्ञातं भवतीति तच्चरित्रं स्कन्धद्वयेनाऽवगतम् । तत्रैवमर्थः सम्पन्नः । सर्वं भगवदधीनम् । स यथा करिष्यति तथा भविष्यतीति केवलं तदाश्रयतया स्थातव्यम् । यथा प्रेरयति तथा स करोतीति कर्तव्यम् । तत्र मध्ये भगवदिच्छया धृतराष्ट्रमुक्त्यर्थं प्रेरितोऽग्रिमचरित्रमज्ञात्वाऽपि फलज्ञानाच्छीघ्रं पुनर्नगरे समागत इति ॥ १ ॥

अत एव पूर्वं ये बहवः पदार्थाः पृष्टास्तानश्रुत्वैव समागत इत्याह—

यावतः कृतवान् प्रश्नान् क्षत्ता कौषारवाग्रतः ।
जातैकभक्तिर्गोविन्दे तेभ्यश्चोपरराम ह ॥ २ ॥

**यावत इति** । क्षत्ता अन्तःपुराध्यक्षः । अनेनाऽतिनिपुणत्वं बोधितम् । **कौषारवः** कुषारोः पुत्रो मैत्रेयः । उत्तमाधिकारित्वाच्चरित्रैकदेशश्रवणेऽपि भक्तिर्जाता । अतः फलस्य जातत्वात्तेभ्यः प्रश्नेभ्य उत्तरमश्रुत्वाऽप्युपरराम ॥ २ ॥

---

१ तस्येति नास्ति ख. २ वक्ष्यत इति क. घ. ३ तयाऽवाप्तविवित्सित इति प्रायः पाठः । अस्ति लेखमपि । टीकानुरोधी चाऽयम् । ४ तयाऽवाप्तविवित्सित इति ग. घ. ङ. ५ ताऽऽश्रुत्वेति क. घ.



एवं तस्य ज्ञानवत्त्वाय पूर्वकथामनूद्य समागतस्याऽग्रिमकृत्यं वदन् समयप्रतीक्षार्थं स्थितिसिद्धये तस्य सत्कारमाह तं बन्धुमित्येकादशभिः—

तं बन्धुमागतं दृष्ट्वा धर्मपुत्रः सहानुजः ।
धृतराष्ट्रो युयुत्सुश्च सूतः शारद्वतः पृथा ॥ ३ ॥
गान्धारी द्रौपदी ब्रह्मन् सुभद्रा चोत्तरा कृपी ।
अन्याश्च जामयः पाण्डोर्ज्ञातयः ससुताऽऽस्त्रियः ॥ ४ ॥
प्रत्युज्जग्मुः प्रहर्षेण प्राणं तन्व इवाऽऽगतम् ।
अभिसङ्गम्य विधिवत्परिष्वङ्गाभिवादनैः ॥ ५ ॥
मुमुचुः प्रेमबाष्पौघं विरहौत्कण्ठ्यकातराः ।
राजा तमर्हयाञ्चक्रे कृतासनपरिग्रहम् ॥ ६ ॥

सर्वेन्द्रियप्रीतिनिमित्तं बध्यतेऽनेनेति बन्धुः । सुखदुःखज्ञानमोक्षैर्यथाधिकारं निर्णयः । आगतं दृष्ट्वा । अन्यार्थमागतत्वान्न दूराज्ज्ञापनं येनोद्गच्छेयुः । **सूतः** सञ्जयः । **शारद्वतः** कृपः । शरस्तम्बे जातत्वात् । **ब्रह्मन्निति** सम्बोधनं स्त्रीणां गणनायां विकाराभावाय । कृपी द्रोणपत्नी । **जामयः** कुलस्त्रियः । देवरे लज्जाऽभावार्थम्—**पाण्डोरिति** । **ज्ञातयः** पुरुषाः । सुतैः आ सर्वतः स्त्रीभिश्च सहिताः । सकुटुम्बा ज्ञातय इत्यर्थः । **प्रत्युज्जग्मुः** । सम्मुखतया गताः । **तन्व इव** । करचरणादय इव । **अभिसङ्गम्य** । मिलित्वा । **विधिवत्** । शास्त्रानुसारेण यथायोग्यम् । कैश्चिदभिवादनम् । प्रेम्णा बाष्पसमूहम् । विरहे यदौत्कण्ठ्यं प्रेमातिभरत्वं तेन कातरा दीनाः । पूर्वं तस्मिन् गते यत्प्रेम जातं, भगवतः प्रेमैव[2] आनन्दरूपं भवतीति[3], तेन प्रेम्णा दीनाः । विषयालाभात् । एवं सर्वेषु स्थितेषु मुख्यस्य पूजाधिकाराद्राजा तं पूजयामास । दत्ते आसने स्वीकृतमासनं येन । अनेन पूजायां निषेधाभावः सूचितः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

**"गतश्रमं पृच्छेदि"**ति धर्मशास्त्राच्छ्रमापनोदनमाह—

तं भुक्तवन्तं विश्रान्तमासीनं सुखमासने ।
प्रश्रयावनतो राजा प्राह तेषां च शृण्वताम् ॥ ७ ॥

**तं भुक्तवन्तमिति** । प्रत्येकप्रश्नव्यावृत्त्यर्थं तेषां च शृण्वतामित्युक्तम् । चकारान्मध्य आगताः पूजानन्तरमागताश्च परिगृह्यन्ते ॥ ७ ॥

प्रथमतो दयामुत्पादयति—

युधिष्ठिर उवाच—

अपि स्मरथ नो युष्मत्पक्षच्छायासमेधितान् ।
विपद्गणाद्विषाग्न्यादेर्मोचिता यत्समातृकाः ॥ ८ ॥

---

१ जयन्त इति ग. २ प्रेमैवेति क. ३ न भवतीति इति क. ख.

कया वृत्त्या वर्त्तितं वश्चरद्भिः क्षितिमण्डलम् ।
तीर्थानि क्षेत्रमुख्यानि सेवितानीह भूतले ॥ ९ ॥

**अपि स्मरथेति** । युष्मत्पक्षच्छायासमेधितान् नः अस्मान् । अपीति सम्भावनायाम् । स्मरथ । पूर्वं वयं भवद्भिरेव परिपालिताः । पक्षः पक्षपातः । तस्य छाया हिताचरणम् । पक्षिणामेषा व्यवस्था । मातरं पितरं पुत्रं वा कालान्तरे ते न परिचिन्वन्ति । तदर्थं पक्षादिपदप्रयोगः । स्मरणार्थं पालनविशेषं ज्ञापयति—**विपद्गणान्मोचिता इति** । आपदां समूहात् । तमेव गणयति—**विषाऽग्न्यादेरिति** । विषमोदकदानं लाक्षागृहदाहश्च प्रत्येकसमुदायनाशकौ । **समातृका इति** स्त्रीणामपि वधे शत्रूणां न विचिकित्सा । सरक्षका मोचिता इति वा । एवं दयामुत्पाद्य क्लेशजनितं दुःखमनुवादेन गच्छतीति वृत्तिप्रश्नः । **वृत्तिर्जीविका** । वर्णाश्रमविभागविहितया यादृच्छिकया वेति । **वः** युष्माभिः । जीवनस्याऽनभिप्रेतत्वात्तत्रैति स्वातन्त्र्याभावान्न कर्तरि तृतीया । अपि तु सम्बन्धमात्रे षष्ठी । भूपर्यटने तु विवक्षितत्वात्कर्तृत्वम् । अतश्च**रद्भिरि**त्युक्तम् । **क्षितिमण्डलमि**त्यत्यन्तसंयोगे द्वितीया । तेन सर्वत्रैकविधान्नाभावात्परित्यागभावनां कृत्वाऽपरित्यागभावनां वा कृत्वा जीवितमिति प्रश्नार्थः । द्वितीयपक्षे अतः परमत्र स्थास्यन्तीति मनोरथः । क्षेत्राणि मुख्यानि यत्र । जलप्रधानं **तीर्थम्** । स्थलप्रधानं **क्षेत्रम्** । क्वचिदुभयमेकीभवत् । प्रयागवेणीवदिति । तानीह भूतले सेवितानि । मुख्यानां सेवितत्वादतः परं न गन्तव्यमिति भावः ॥ ८ ॥ ९ ॥

**ननु फलस्याऽसिद्धत्वात्सम्यक् चित्तशुद्धिपर्यन्तं तीर्थाटनं कर्त्तव्यमिति चेत् ? तत्राऽऽह—**

भवद्विधा भागवतास्तीर्थभूताः स्वयं विभो ।
तीर्थीकुर्वन्ति तीर्थानि स्वान्तःस्थेन गदाभृता ॥ १० ॥

**भवद्विधा इति** । न हि भवतां तीर्थाटनेन कश्चिद्गुणो भवति । तत्राऽधिकारिणस्त्वन्ये । नन्वस्मद्विधा अपि तीर्थेषु पर्यटन्तीत्याशङ्क्याऽऽह—**भवद्विधा इति** । सत्यं पर्यटन्ति । न तु स्वार्थं किन्तु तीर्थकृपया । "**हरन्त्यघन्तेऽङ्गसङ्गात्तेष्वास्ते ह्यघभिद्धरिरि**"ति वाक्यात् । स्वयमेव ते तीर्थभूताः पापिनां स्पर्शदोषाद्दुष्टानि तीर्थानि तेषां दोषं स्वयं गृहीत्वा स्वग्रहणात्पूर्वमतीर्थानि तीर्थीकुर्वन्ति । तर्हि तेषां का गतिरित्यत आह—**स्वान्तःस्थेन गदाभृतेति** । तेषां हृदये भगवान् गदां गृहीत्वा प्रकटस्तिष्ठति । अतो गदाया आसन्यरूपत्वाद्भगवान् साधनं चाऽपहतपाप्मरूपम् । "**ते ह आसन्यं प्राणमूचुरि**"त्यत्र यथा सर्वपापनाशस्तथा प्रकृतेऽपीति । तीर्थानामपि पापं भगवत्समीपं प्राप्य गच्छतीत्यर्थः । अनेन भगवदाज्ञायामेव तीर्थाटनं कर्त्तव्यमन्यथा भगवतः प्रयासजननान्न कर्त्तव्यमिति भावः । अतोऽत्रैव स्थातव्यमिति फलति ॥ १० ॥

१ विषाग्न्यादेरितीति नास्ति ख. २ प्रत्येकं समुदायेत्यादि ख. ३ यादृच्छिकयेति ख. ४ चेतीति ग. ५ तं प्रतीति ख. ग. घ. ६ विधात्रा भावादिति ग. विधानाम्नानाभावादिति घ. विधानान्नाभावादिति ङ. ७ तीर्थं कृपयेति ख. ८ सर्वपाप्मेति क. ग. घ. ९ तत्रेति ख.



**एवमागतं कुशलं पृष्ट्वा भगवद्भक्तत्वादयं भगवद्वृत्तान्तं ज्ञास्यतीति पृच्छति—**

अपि नः सुहृदस्तात बान्धवाः कृष्णदेवताः ।
दृष्टाः श्रुता वा यदवः स्वपुर्यां सुखमासते ॥ ११ ॥
इत्युक्तो धर्मराजेन तत्सर्वं समवर्णयत् ।
यथानुभूतं क्रमशो विना यदुकुलक्षयम् ॥ १२ ॥

**अपि न इति** । विदुरेण सह तथा सम्बन्धाभावेऽप्यस्माभिः सह सम्बन्ध इति न इत्युक्तम् । विदुरमप्यात्मत्वेन स्वीकृत्य वा । **सुहृदो** मित्राणि । **तातेति** स्नेहेन सम्बोधनं तेष्वपि स्नेहबोधनाय । **कृष्णदेवता इति** सुखवासे हेतुः । अत एव त्वया दृष्टाः । बन्धुत्वेन लज्जया चेन्न दृष्टास्तर्हि भगवदीयत्वाच्छ्रुताः । **स्वपुर्यां** द्वारकायाम् । स्वस्थानेऽल्पेनाऽपि विषयेण सुखं भवतीति । **यदव इति** भक्तवंशत्वादपि सुखं सम्भावितम् । अनेन त्रिविधमपि दुःखं निवारितम् । कृष्णदेवतत्वान्नाऽऽधिदैविकम् । यदु (?)त्वान्नाऽऽध्यात्मिकम् । स्वपुर्यामिति नाऽऽधिभौतिकम् । एवं सम्भावितकुशला भवन्मुखान्निश्चिताश्चेत्तदाऽस्माकं सुखमिति प्रश्नाभिप्रायः । एवं स्मरणादिकुशलान्तैः प्रश्नैः पृष्टः सर्वमेव यथानुभूतं सम्यगवर्णयत् । परं मौसलव्यतिरेकेण ॥ ११ ॥ १२ ॥

"**अब्रुवन् विब्रुवन् वाऽपि नरो भवति किल्बिषी**"ति सभारूपे समाजे धर्मराजेन **पृष्टः कथं नोक्तवानित्याशङ्क्याऽऽह—**

नन्वप्रियं दुर्विषहं नृणां स्वयमुपस्थितम् ।
नाऽऽवेदयेत्सकरुणो दुःखितान्द्रष्टुमक्षमः ॥ १३ ॥

**नन्वप्रियमिति** । सर्वं पृष्टमेव वक्तव्यं न त्वप्रियम् । "**सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् । प्रियं च नाऽनृतं ब्रूयादेष धर्मः सनातन**" इति वाक्यात् । पृष्टेऽपि सत्यमप्यप्रियं न वक्तव्यम् । तत्राऽपि दुर्विषहम् । यस्मिञ्छ्रुते श्रोताऽपि म्रियेत । अतो धर्मिनाशकं श्रवणं न कारणीयमिति । तर्हि कथमग्रिमकार्यसम्पत्तिरत आह—**नृणां स्वयमुपस्थितमिति** । स्वत एव जनमुखादेव ज्ञास्यन्ति किं स्ववचनेनेति । किञ्च । करुणावान् सर्वथा न वदेत् । दुःखितं दृष्ट्वा स्वस्याऽपि दुःखसम्भवात् । न हि कश्चित्स्वदुःखार्थं यतते । अतो धर्मशास्त्रान्नीतिशास्त्राद्युक्तेश्च परस्मै दुःखं न वदेदिति भावः । यतो—**दुःखितान्द्रष्टुमक्षमः** ॥ १३ ॥

**स्वकार्ये ते मा जानन्त्विति गुप्तभावः स्वावसरप्रतीक्षया तत्रैव स्थित इत्याह—**

कञ्चित्कालमथाऽवात्सीत्सत्कृतो देववत्सुखम् ।
भ्रातुर्ज्येष्ठस्य श्रेयस्कृत्सर्वेषां प्रीतिमावहन् ॥ १४ ॥

१ अपृष्टेति ग. २ तथा सहेति ख. ३ इत्युक्तं भवतीति क. ग. घ. ४ कृष्णदेवतात्वादिति क. ग. घ. ५ निश्चिन्ता इति ख. ६ अनुवर्णयदिति क. ग. अनुवर्णयतीति घ. ङ. ७ अकरन् विकरन् वापि इति ग. अकरन् विकरन् वापीति ङ. प्रतीकपर्यन्तोऽयं ग्रन्थ एव नास्ति ख.

**कश्चित्कालमिति ।** अथ प्रश्नसमाप्त्यनन्तरम् । **देववत्** । यथैव वदन्ति कुर्वन्ति तदेव मन्यते । विश्वासार्थं स्वसुखं ज्ञापयन् पूजितस्तिष्ठतीत्यर्थः । स्थितौ हेतुमाह । **भ्रातुर्ज्येष्ठस्य धृतराष्ट्रस्य । श्रेयस्कृत्** वैराग्यादिसम्पादनेन मोक्षसाधकः । **सर्वेषां प्रीतिमावहन्निति** विश्वासार्थं सम्भावितदुःखदूरीकरणधर्मार्थं वा ॥ १४ ॥

नन्वस्य कनिष्ठस्याऽयथाजातस्य कथं मोक्षसाधकत्वम् । अनधिकारात् । तत्राऽऽह—

**अबिभ्रदर्यमा दण्डं यथावदघकारिषु ।**
**यावद्दधार शूद्रत्वं शापाद्वर्षशतं यमः ॥ १५ ॥**

**अबिभ्रदिति ।** उत्तरोत्तराज्ञानात्पूर्वबलिष्ठतेति देहेन्द्रियप्राणान्तःकरणात्मनां व्यवस्था । तत्र यथाऽऽत्मा ज्ञायते अयमहमिति तदाऽन्ये धर्मा दुर्बलाः । अत एव कुटुम्बादे(?)रप्युपदेष्टृत्वम् । पूर्णज्ञानवानपि सर्वत्राऽविचारितान्नभक्षणात्काकत्वं प्राप्तः । देहत्यागसमयेऽपि काकचर्यया वा । तस्मान्नायं कनिष्ठभ्राता न वा शूद्रः । किन्तु यमः । "माण्डव्यशापाद्भगवान् प्रजा संयमनो यमः । भ्रातुः क्षेत्रे भुजिष्यायां जातः सत्यवतीसुतादि" ति वक्ष्यति । तर्हि क इदानीं यमलोकेऽधिकारीत्याशङ्क्याऽऽह—**अबिभ्रदिति** । "विवस्वानर्यमा पूषे"त्यादिद्वादशाऽऽदित्याः । तत्र द्वितीयोऽर्यमा । स यावच्छूद्रत्वं दधार माण्डव्यशापात्, वर्षशतं तावदर्यमाऽधिकारं कृतवान्यथावत्पापकारिषु । शतवर्षानन्तरं तु न शूद्रत्वम् । अत उपदेशोऽपि न दोषः ॥ १५ ॥

युधिष्ठिरस्य विदुरविस्मरणार्थं कश्चिद्राज्यभोगमाह—

**युधिष्ठिरो लब्धराज्यो दृष्ट्वा पौत्रं कुलन्धरम् ।**
**भ्रातृभिर्लोकपालाभैर्मुमुदे परया श्रिया ॥ १६ ॥**

**युधिष्ठिर इति ।** राज्यं लब्ध्वा पौत्रं च राज्ययोग्यं दृष्ट्वा भ्रातृभिरिन्द्रादितुल्यैः सहितः श्रिया परयेन्द्रदुर्लभया ब्रह्मतुल्यया वा मुमुदे । **राज्यं वंशो भ्रातरश्च धनं चाऽज्ञानहेतवः ॥ १६ ॥**

ततः किमत आह—

**एवं गृहेषु सक्तानां प्रमत्तानां तदीहया ।**
**अत्यक्रामदविज्ञातः कालः परमदुस्तरः ॥ १७ ॥**

**एवं गृहेष्विति** । ते हि भगवति विद्यमान एव पौत्रे प्रौढे जाते भगवन्तं पृष्ट्वा पौत्रं राज्ये प्रतिष्ठाप्य निरन्तरं भगवच्चिन्तका भगवत्सत्रदीक्षिता भवितुं युक्ताः । तत्तु तेषां न राज्यदोषाद्वृत्तमित्याह—**एवं गृहेषु सक्तानामिति** । षड्विंशतिवर्षपर्यन्तं राज्यं कृतम् । षोडशवर्षानन्तरमेव राज्ययोग्यः पौत्रः । तथाप्येवं पूर्वोक्तप्रकारेण गृहेष्वासक्तानां गृहनिकर्तव्यतया च प्रमत्तानां स्वकार्येऽसावधानानामज्ञात एव कालो गतः । तैर्ज्ञातमद्यैव राज्य उपविष्टमिति ॥ १७ ॥

---

१ दुःखदूरीकरणार्थमिति घ. ङ. २ देहेन्द्रियप्राणान्तःकरणानामिति ख. ग. घ. ङ. ३ भुकुट्यादेरिति घ. ङ. गपुस्तके त्वक्षराण्येव न शक्यन्तेऽनुवाचयितुम् । ४ ब्रह्मदुर्लभयेति क. ५ षट्त्रिंशतीति क. ग. घ.



एतत्स्वरूपं कियत्कालवासेन विदुरो ज्ञातवान् । एते स्वार्थे प्रमत्ताः कालग्रस्ता भविष्यन्तीति । अन्यथा चेदेते भक्ता भवेयुस्तदाऽयोध्यावत्सर्वमेव नगरं वैकुण्ठं गच्छेत् । तदा धृतराष्ट्रस्य कर्तव्यं नाऽवशिष्येत । तत्तु नास्तीति निश्चित्य कलिप्रवेशे बुद्धिभ्रंशेऽन्योन्यमारणेन धृतराष्ट्रस्य च भीमेन महद्भयं भविष्यतीत्याशङ्क्य धृतराष्ट्रबोधार्थं प्रवृत्त इत्याह—

**विदुरस्तदभिप्रेत्य धृतराष्ट्रमभाषत ।**
**राजन्निर्गम्यतां शीघ्रं पश्येदं भयमागतम् ॥ १८ ॥**

**विदुर इति ।** कालस्य परमदुस्तरत्वकथनात्तादृशानामपि कालांशानां बहूनामतिक्रमात्सर्वनाशककालमध्ये पतितो धृतराष्ट्र इत्यभिप्रेत्य तं प्रत्यभाषत—**राजन्निर्गम्यतामिति । राजानो हि** कालस्य शीघ्रं भक्ष्याः । राज्येनाऽधर्मबाहुल्यात् । शीघ्रनिर्गमने हेतुः—**पश्येदं भयमागतमिति ।** यथा भगवतोऽधिकारी कालस्तथा कालस्य भयनामा कश्चिच्चतुर्थस्कन्धे वक्तव्यः । स इदानीं भगवति निर्गते तदीयानां स्वतोऽनिर्गमनेऽयमधिकारी सर्वान् भक्षयति पत्नीरिव । अथवा । ये पूर्वं भक्ष्यत्वेनैवोपस्थिता भगवदिच्छया च न भक्षितास्तानिदानीं भक्षयितुमागतः । अग्रे वेधदीक्षान्यायेन ज्ञानसारसामर्थ्यं बोधयितुं स्वसामर्थ्यबलेन तं प्रदर्शयन्नाह—**आगतमिति** ॥ १८ ॥

तर्हि पूर्ववदिदानीमपि प्रतीकारः कर्तव्य इत्याशङ्क्याऽऽह—

**प्रतिक्रिया न यस्येह कुतश्चित्कर्हिचित् प्रभो ।**
**स एव भगवान् कालः सर्वेषां नः समागतः ॥ १९ ॥**

**प्रतिक्रियेति ।** भगवति गतेऽन्यस्मात्कुतश्चिदपि यस्य प्रतिक्रिया नास्ति । पूर्वमप्येवं व्यवस्था । तदाह—**कर्हिचिदिति । प्रभो इति** सम्बोधनेनाऽन्यत्र प्रभुत्वं चलति नाऽत्रेत्युपहासः । तर्हि किमस्मानेव भक्षयितुमागत उत सर्वान् । अन्त्ये यथा सर्वे न प्रतीकारं कुर्वन्ति तथाऽस्माभिरपि न कर्तव्यः । द्वितीये त्वन्याश्रयणं कर्तव्यम् । कथं न प्रतीकार इत्याशङ्क्याऽऽह—**स एवेति ।** यः पूर्वं कृष्णाख्यस्त्वत्पुत्रादीनुपसंहृतवान् स एवेदानीं त्वामुपसंहर्तुमागतः । न च स गत इति मन्तव्यम् । भगवत्त्वात् । पूर्वमन्येन रूपेण स्थितः । साम्प्रतमन्येन । नामस्वरूपे ते एव । आकृतिमात्रं भिद्यते । इत्याह—**काल इति** । कलयति सर्वानाकलयतीति । ननु पूर्वं यथा पाण्डवा उर्वरितास्तथेदानीमप्युर्वरिता भविष्यन्ति । ततश्च तदाश्रयेण वयमपि जीविष्याम इत्याशङ्क्याऽऽह । **सर्वेषां नः समागत इति** पूर्वस्माद्वैलक्षण्यम् । इदानीं मामपि ग्रहीष्यतीति न इत्याह ॥ १९ ॥

तर्हि किं विधेयमित्याशङ्क्य येन दोषेण स ग्रसति स दोषः परिहार्य इति वक्तुमहन्तां ममतां त्यजेदित्यभिप्रायेणाऽऽह—

**येन चैवाऽभिपन्नोऽयं प्राणैः प्रियतमैरपि ।**
**जनः सद्यो वियुज्येत किमुताऽन्यैर्धनादिभिः ॥ २० ॥**

---

१ नावशिष्यत इति घ. २ प्रत्याहेति क. ग. घ. ३ स चतुर्थस्कन्ध इति क. ख. घ. ४ सर्वानिति नास्ति ख. ५ अग्रे वेधदीक्षेत्यादि क. अग्रेर्वेधदीक्षेत्यादि घ. ६ प्रतिक्रियेतीति नास्ति क. ग. घ. ७ आये इति ख. ग. घ. ८ नामस्वरूपत एवेति ग. ९ इतीति नास्ति क. ग. घ. ङ. १० दोष इति क. ख. ग. ङ.

**येन चैवाऽभिपन्नोऽयमिति** । कालस्त्वात्मानं वस्तुतो न ग्रसति । आत्मत्वात् । परं स्वनिष्पादिते यदि प्रविशति तदा पेश्यकीटवत्तमपि भक्षयति । ततश्च देहेन्द्रियादावहन्तादिस्त्याज्यः । नन्वेते रक्षकाः कथं त्याज्या इत्याशङ्क्याऽऽह—**प्राणैरिति** । यावत्स नाऽऽगतस्तावदेवं व्यवस्था । तस्मिन्नागते तु सर्वदा रक्षकाः प्रियाः प्राणा अपि त्यज्यन्ते । **चैवेति** रोगादिसामग्री अवश्यगमनं चोक्तम् । अत्यन्तं प्रियाः प्राणा अपि त्यज्यन्ते यन्मूलकाः सर्वे । तेषां त्यागे को विचार इत्याह—**किमुतेति** । तस्मिन्नागते पूर्वं महता प्रयासेन पोषिता अप्येते त्यक्त्वा गच्छन्तीत्यर्थः ॥ २० ॥

ननु तदैव त्यक्तव्यं किमन्तरा गमनेन । "**विमुश्चेन्मुच्यमानेष्वि**" ति न्यायात् । तत्राऽऽह—

पितृभ्रातृसुहृत्पुत्रा हतास्ते विगतं वयः ।
आत्मा च जरया ग्रस्तः परगेहमुपासते ॥ २१ ॥

**पितृभ्रात्रिति** । एवं स वदेद्यस्य समीचीना विषया भवेयुः । तव तु जीवनान्मरणमुत्तमम् । "**रोगी चिरप्रवासी परान्नभोजी परावसथशायी । यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्राम**" इति वाक्यात्तवेदानीमेव त्याग उचितः । कथम् । तदुपपादयति । **पिता** भीष्मः । **भ्रातरो** भूरिश्रवआदयः । शल्यादयः **सुहृदः** । **पुत्रा** दुर्योधनादयः । एकोऽपि यत्र हन्यते तत्र सलज्जो न तिष्ठति किमुत सर्वे । **वयः** आयुः । **आत्मा** देहः । **जरा** कालकन्या । एवमपि परेषां शत्रूणां गेहं गृहपालवदुपासते इति ग्लानिप्रदर्शनम् ॥ २१ ॥

सामान्यकथनेन विशेषमाह—

अहो महीयसी जन्तोर्जीविताशा यया भवान् ।
भीमेनाऽऽवर्जितं पिण्डमादत्ते गृहपालवत् ॥ २२ ॥

**अहो इति** । येन पुत्रस्य रुधिरं पीतमर्थात्स्वस्यैव तेनाऽवज्ञया दत्तं बहिर्बलिदानपिण्डवत् । तत्राऽप्यन्यः समायास्यतीति भयात्तद्गृहपालः श्वा शीघ्रं भक्षयति । तद्वदादत्ते ॥ २२ ॥

ननु निरभिमानस्यैतदुचितम् ? तत्राऽऽह—

अग्निर्निसृष्टो दत्तश्च गरो दाराश्च दूषिताः ।
हृतं क्षेत्रं धनं येषां तद्दत्तैरसुभिः कियत् ॥ २३ ॥

**अग्निर्निसृष्टो दत्तश्चेति** । स्यादेवं यदि भवद्भिरपकारः कृतो न स्यात् । अतो भवद्भिरेव शत्रुत्वस्य स्थिरीकृतत्वाद्युक्तं भीमकृतम् । न स्वकृतम् । '**न द्विषतोऽन्नमश्नीयाद्द्विषन्तं नैव भोजयेत् । द्विषता हि हविर्भुक्तं नेह नाऽमुत्र तद्भवेदि**"ति स्मृतेः । अग्निर्निसृष्टो लाक्षागृहे । विपरीतकथनं सामान्यविशेषाभावात् । **दाराः** द्रौपदी । चकारात्तेऽपि । वल्कलादिपरिधानात् । **क्षेत्रमिति** । स्थितिस्थानमपि । अत एवमपकृतैर्जीवरक्षणं लोकशास्त्रविरुद्धम् । **कियदिति** । न तज्जीवनेन किञ्चित्प्रयोजनं सेत्स्यतीति भावः ॥ २३ ॥

१ आवश्यादीति क. अवश्यादीति ग. घ. ङ. २ सर्वं इति नास्ति ख. ३ सर्वेषामिति ख. ४ सर्वमिति क. ५ चिरप्रवासी रोगीत्यादिः सर्वत्र पुस्तकेषु पाठः । पठन्ति त्वेवम् । ६ उपासत इति ख. ७ आदत्त इति क. ग. घ. ८ अयमंशो नास्ति ख. ग. घ. ङ.



एवमपि सर्वविरोधेन पोषितो देहः स्वयमेव न तिष्ठतीत्याह—

तस्याऽपि तव देहोऽयं कृपणस्य जिजीविषोः ।
परैत्यनिच्छतो जीर्णो जरया वाससी इव ॥ २४ ॥

**तस्याऽपीति** । एवं ग्लानिमनुभवतोऽपि । **कृपणस्य** दीनस्य । "**कृपणः स तु विज्ञेयो योऽनालोचितयाचक**" इति भीमयाचकस्य वा । **जिजीविषोः** जीवितुमिच्छोः । **परैति** अपगच्छति । तत्र हेतुः—**जरया जीर्ण इति** । अव्यवह्रियमाणे अपि परिधानोत्तरीये वाससी स्पर्शमात्रेणैव जीर्णे गच्छतः । प्रक्षालनेनाऽपि नश्यतीत्यर्थः ॥ २४ ॥

तर्हि किं कर्तव्यमित्यत्राऽऽह—

गतस्वार्थमिमं देहं विरक्तो मुक्तबन्धनः ।
अविज्ञातगतिर्जह्यात्स वै धीर उदाहृतः ॥ २५ ॥

**गतस्वार्थमिममिति** । विषयदोषदर्शनेन वैराग्यविवेकोत्पत्तावग्रिमबाधाभावाय वृक्षधर्मत्वादयं देहस्तत्र त्यक्तव्यो यत्र त्यक्तं कोऽपि न जानाति । अपरित्यागदशायामेवाऽस्याऽपकारजनकत्वात् । परित्यागो हि भर्जनवद्बीजस्याऽङ्कुरोत्पत्तौ प्रतिबन्धकः । तावदयं देहो रक्ष्यो यावत्स्वस्य कार्यं सिद्ध्यति । सिद्धे कार्ये त्यक्तव्य इति **गतस्वार्थमित्युक्तम्** । जातस्वार्थमित्यर्थः । अथवा । पूर्वोक्तत्यागेन गतः स्वार्थो ज्ञानधर्मादयो येन । अतोऽपकारिणमिमम् । अस्मिन् रागं परित्यज्य तस्य शृङ्खलारूपपुत्रादिभिर्विमुक्तः सन् दुष्टत्वादस्य देहस्य **जह्यात्** इमं देहं परित्यजेत् । न विज्ञाता गतिर्यस्य । शृङ्खलानां पुनः सम्बन्धाभावाय । किं ततः स्यात् ? तत्राऽऽह—**स वै धीर उदाहृत इति** । धीरस्य यत्फलं तत्फलं भवेत् । "**द्वौ सम्मताविह मृत्यू दुरापावि**"ति धैर्यफलम् । ननु तादृशमेव धैर्यं तत्फले प्रयुज्यत इत्यत आह । **वै** निश्चयेन । यत्र फलार्थं धैर्यगणना कृता तत्रैतादृशमपि धैर्यं गणितं निश्चितफलत्वेन । तस्माद्यथा तयोर्धैर्ययोः फलं तथाऽस्यापीत्यर्थः ॥ २५ ॥

एवमेकेन प्रकारेण देहपरित्याग उक्तः । प्रकारान्तरमप्याह—

यः स्वकात्परतो वाऽपि जातनिर्वेद आत्मवान् ।
हृदि कृत्वा हरिं गेहात्प्रव्रजेत्स नरोत्तमः ॥ २६ ॥

**यः स्वकादिति** । स्वकीयाद्बन्धोर्हितकर्तुः । **परतः** शत्रोः । वक्तृगतगुणदोषराहित्येन योऽस्मिन्नर्थे कार्यदृष्टिः सन् जातवैराग्यः । देहेन्द्रियादिकमज्ञानादन्यार्थं विनियुज्य तैः सर्वस्वनाशे तत्त्यागः प्रथमः पक्षः । प्रथमत एव भोगार्थमकृत्वा यादृशैरपि तादृशैर्वाक्यैस्तृष्णाभावाय जातवैराग्यस्तेन देहादिना भगवन्तं सपरिकरं ज्ञात्वा तं हृदि संस्थाप्य देहत्यागेच्छां परित्यज्य तेन दुर्लभं भगवत्स्मरणं कुर्वाणो गृहस्य बाधकत्वात्पुनः सम्बन्धाभावाय प्रव्रजेत् संन्यस्य गच्छेत् स **नरोत्तमः** सर्वेभ्यः प्राणिभ्य उत्तम इत्यर्थः ॥ २६ ॥

१ गतस्वार्थं इति क. ख. ग. गताः स्वार्था इति घ. तत्र पूर्वेषु विसर्गविभ्रंशसम्भावनया प्रतिभातः पाठो निवेशितो मूले । २ कर्मेद्धिति घ. ३ धैर्यं फलं तत्फले इति क. फलं तत्फले इति ग. घ. ४ युज्यत इति ङ. ५ य अस्मिन्नर्थे इति क. ग. घ. ६ विनियुज्यते इति घ.

तर्हि मया किं कर्त्तव्यम् ? तदाह—

**अथोदीचीं दिशं यातु स्वैरज्ञातगतिर्भवान्।**
**इतोऽर्वाक् प्रायशः कालः पुंसां गुणविकर्षणः ॥ २७ ॥**

**अथेति।** भवतस्त्वन्य एव मार्गः। न देहपरित्यागो न वाऽन्यत्र विनियोगाभावः। तस्मादेतत्स्थानपरित्याग एवोत्तमः। नन्वनुभयरूपत्वात्किमेवं परित्यागेन? तत्राऽऽह—**उदीचीं दिशं यात्विति।** महाप्रस्थानमप्येको मार्ग उक्तः। "**अपदोषनैव विगुणस्य गुण**" इति न्यायात्। अत्र स्थितौ दोषसम्भवात्। "**एषा वै देवमनुष्याणां शान्ता दिगि**"त्युत्तरदिश उत्कृष्टत्वात्तत्र स्थितौ न देवा बुद्धिनाशं कुर्वन्ति। न स्वतः। परमेस्मिन्नर्थे स्वकीयाः प्रतिबन्धका इति नैर्यथा न ज्ञायते तथा गन्तव्यम्। ततो यथाऽधिकारमग्रे वक्ष्याम इति भावः। ननु दोषाभावार्थमेव चेद्गमनं तदाऽत्रैव स्थित्वा दोषो दूरीकर्त्तव्यः। किं गमनेन। विवेकधैर्यसत्सङ्गभगवद्गुणानामत्रैव सम्भवात्। तत्राऽऽह—**इतोऽर्वागिति।** सर्वत्रैव प्रथमपुरुषवचनं हीनत्वबोधनाय। अयमेव कालः सर्वेषां बुद्धिनाशकः। त्वद्दृष्टान्तात्। इतोऽप्यर्वाग् यः कालो बाहुल्येन स्वतन्त्राणां विवेकादिमतामपि विवेकनाशकः। तत्र कथं विवेकोत्पत्तिरिति भावः। देशसापेक्षस्यैव कालस्य दोषजननात्। अत एवोत्तरदेशस्थर्षीणां न कलिकालादिना बुद्धिभ्रंशः। परित्यागवैयर्थ्यापत्तेश्च। "**तस्यैव हेतोरि**"त्यत्र सर्वोत्कृष्टफले कालस्याऽहेतुत्वप्रतिपादने देशस्याऽपि प्रयोजकतोक्ता। "**भयं प्रमत्तस्य वनेष्वपि स्यादि**"त्यत्र त्वीश्वरेच्छाया नियामकत्वान्न केवलेन विरोधः। तस्मादिदानीमेतत्स्थानं परित्यज्योत्तरदेशे गन्तव्यमिति सिद्धम् ॥ २७ ॥

तत्तथैव कृतवानित्याह—

**एवं राजा विदुरेणाऽनुजेन प्रज्ञाचक्षुर्बोधित आजमीढः।**
**छित्त्वा स्वेषु स्नेहपाशान् द्रढिम्नो निश्चक्राम भ्रातृसन्दर्शिताध्वा ॥२८॥**

**एवमिति।** राजेति तथा करणे सामर्थ्यम्। अनुजेनेत्यप्रतारकत्वम्। **प्रज्ञाचक्षुरि**त्युत्तमाधिकारित्वम्। **आजमीढः।** अजमीढवंशोत्पन्नः। तस्य हस्तिनापुरपरित्यागे पितृकृतनगरपरित्यागेन सर्ववंशधर्मपरित्यागो बोधितः। तदुक्तप्रकारेणैव गत इति ज्ञापयितुमाह—**छित्त्वा स्वेष्विति।** **द्रढिम्नो** दृढतरान्। भ्रात्रा विदुरेण सम्यग्दर्शितो बहिरन्तर्मार्गो यस्य। केचिदेनं प्रथमपक्षस्थं मन्यन्ते ॥ २८ ॥

भार्यायामपि तेन मोहस्त्यक्त एव। तथापि स्वधर्मत्वेन तया गतमित्याह—

**पतिं प्रयान्तं सुबलस्य पुत्री पतिव्रता चाऽनुजगाम साध्वी।**
**हिमालयं न्यस्तदण्डप्रहर्षं मनस्विनामिव सत्सम्प्रहारम् ॥ २९ ॥**

१ भगवत इति ग. २ अदोषनैवेति घ. ३ स गुणो विगुणे इति क. ग. ४ परस्मिन्नति क. ग. घ. ङ. ५ देशसापेक्ष एवेति क. ग. घ. ६ देशस्याऽप्रयोजकतेति ग. ७ हस्तिनापुरपरित्यागेनेति ख. ८ एवमिति घ. ङ.



**पतिमिति। सुबलस्य पुत्रीति** क्षत्रियाभिमानः। ततो जातिधर्मेणाऽपि गमनमुक्तम्। अनुजगामेति वचनादग्रेऽप्यनुगमनं सूचितम्। चकाराद्विदुरोऽपि। **साध्वीत्य**बाधिका। तस्य महद्दैर्यसूचनार्थं **हिमालय**मित्युक्तम्। नन्वतिदुःखदे देशे चित्तस्थैर्याभावात्परलोकार्थिनां कथं गमनम्? तत्राऽऽह—**न्यस्तदण्डप्रहर्षमिति।** न्यस्तस्त्यक्तो भूतेषु दण्डो यैः। भूताभयदातारः। तेषां प्रकर्षेण हर्षो यत्र। अन्या सर्वा भूर्जीवव्याप्ता। तत्र स्थितोऽनिच्छयाऽपि बहून् मारयति। ततो व्रतं भज्येत। हिमे तु सर्वजीवपरिहाराच्छरीरेऽपि कृमिसम्बन्धाभावात्परमहंसानां हिमस्थानमतिप्रियम्। किञ्च। सर्वपरित्यागी देहपरित्यागार्थमपि प्रवृत्तः। तत्र तु देहपरित्यागसाधनानि सुगमानि। यथा युद्धे। **मनस्विनां** तत्र देहपरित्यागेच्छूनाम्। सत्कर्तृकः सम्यक्प्रहारो यत्र युद्धे। "**लक्ष्यं शस्त्रभृतां वा स्यादि**"ति स्मृतेः। अथवा। वीररसाविष्टस्य यथा युद्धभूमिस्तथा वैराग्यरसाविष्टस्य सर्वविषयरहितं हिमस्थानम् ॥ २९ ॥

एवमुत्तमदेशगमनपर्यन्तमुक्तम्। अग्रिमकृत्यं त्वनुवादात्स्पष्टीभविष्यति। साक्षाद्विदुरोपदेशकथने मर्यादायां विरोध आपद्येत। **यावत्कस्याऽपि हृदयं यस्मिन् सर्वात्मना भवेत्। हृदा बन्धनसद्भावान्न स मुच्येत कर्हिचित्।** अत एवेष्टवर्गेच्छा यथा गच्छेत्तथा चरेत्। **धृतराष्ट्रे तथा बन्धो मा भूदिति हरेः प्रियः। युधिष्ठिरादिमोहस्य नाशमाह स नारदः। मोहाभावः स्वतो नाऽस्ति तस्येति प्राक्कथा तता।** एवमर्धरात्रसमये धृतराष्ट्रे निर्गते उदयानन्तरं प्रहरपर्यन्तं जिज्ञासा नाऽभूत्। तदाह—

**अजातशत्रुः कृतमैत्रो हुताग्नि-**
**र्विप्रान्नत्वा तिलगोभूमिरुक्मैः।**
**गृहं प्रविष्टो गुरुवन्दनाय**
**न चाऽपश्यत् पितरौ सौबलीं च ॥ ३० ॥**

**तत्र सञ्जयमासीनं पप्रच्छोद्विग्नमानसः।**
**गावल्गणे क्व नस्तातो वृद्धो हीनश्च नेत्रयोः ॥**
**अम्बा च हतपुत्रार्त्ता पितृव्यः क्व गतः सुहृत् ॥ ३१ ॥**

**अजातशत्रुरिति।** नाम्नैव वैराभावो निरूपितः। **कृतमैत्र इति।** देवपितृऋषिभूततर्पणेन सर्वत्र मैत्री कृता। अथवा। प्रातःसन्ध्या मित्रदैवत्या। "**मित्रस्य चर्षणी धृत**" इत्युपस्थानात्। अनुद्धरणाभ्युदये च मैत्रचरुविधानाच्च। अतः कृतसन्ध्यावन्दन इत्यर्थः। कृतावश्यको वा। गुदस्य मित्रदैवत्यात्। क्रमेण त्रयं ज्ञातव्यम्। **हुताग्निः।** कृताग्निहोत्रः। राज्ञो हि दानं नित्यम्। तत्राऽपि तिलपात्रम्। गोदानं भूमिदानं स्वर्णदानमिति च। आज्यावेक्षणं स्वर्णदान एवोक्तम्। "**तिलैर्विष्णुर्गवा रुद्रो भूम्या चैव प्रजापतिः। सर्वे प्रीताः सुवर्णेन सत्पात्रेषु समर्पणादि**"ति तानि दानानि कृत्वा, ब्राह्मणेभ्यो नमस्कृत्य, परम्परागतं गृहं प्रविष्टः। राजगृहं राजशब्दवाच्यत्वं च

१ अतिदुःखदेशे इति ख. ग. २ शस्त्रं लक्ष्यभृतामिति क. ग. घ. ३ चकारो नास्ति क. ४ तानीति नास्ति क. ख.

धृतराष्ट्रे धृतमिति तद्गृहं प्रविष्टः । गुर्वादिवन्दनमपि नित्यम् । नष्टाश्वदग्धरथन्यायेन धृतराष्ट्रस्य पितृत्वं युधिष्ठिरस्य च पुत्रत्वमिति । गुरुषु मातुर्मुख्यत्वात्—**न चाऽपश्यत्**—कुन्तीं नत्वा, धृतराष्ट्रविदुरनमस्कारार्थं प्रविष्टस्तौ सौवल्तीश्च दृष्टवानपि न । नमस्कारो दूरे । महानुद्वेगो जातः । अतोऽविचार्यैव सञ्जयं पृष्टवान् । गवल्गणस्य पुत्रो **गावल्गणिः** । पित्रादिक्रमेण त्वमेतेषामेव सेवकः । केथमद्य प्रमत्त इति । **तस्तात इति** परमपूज्यत्वम् । **वृद्ध इति** धर्मः । **नेत्रयोर्हीन इति** दया । सम्बन्धमात्रविवक्षया षष्ठी । भार्यासहितत्वेन सुखित्वमाशङ्क्याऽऽह—**अम्बा चेति** । गान्धारी च पुत्रशोकेन भर्तृव्रतचर्यया च आर्त्ता पीडिता । गमनसम्भावनाभावात्—क्वेत्युक्तम् । **पितृव्यो** विदुरः । सोऽपि **सुहृत्** शुद्धान्तःकरणः । अतो वञ्चनं न करिष्यतीति भावः ॥ ३० ॥ ३१ ॥

गमनाभावाददर्शनाच्च गङ्गोपर्येव गृहस्य विद्यमानत्वाद्गङ्गापतनं सम्भावयति—

अपि मय्यकृतप्रज्ञे हतबन्धुः स्वभार्यया ।
आशंसमानः शमलं गङ्गायां दुःखितोऽपतत् ॥ ३२ ॥

**अपीति** । अकृतप्रज्ञे । न कृता प्रज्ञा पुत्रबुद्धिर्येन । पूर्वे पुत्राश्च बान्धवा हता यस्य । अत उभयाभावाच्छास्त्रतः पुत्रत्वेऽपि यदि पुत्रत्वं न मन्यते तदाऽस्मासु शत्रुत्वमेव स्थितमिति कदाचिदस्मानपि मारयेदिति शमलं पापमाशंसमानोऽपमृत्युषु गङ्गामरणं श्रेष्ठमित्यपमृत्युमरणाद्दुःखितो मारणापेक्षया मरणमुत्तममिति गङ्गायामपतत् । विदुरस्तु लज्जयाऽनुकृत्यैव गत इति भावः ॥ ३२ ॥

तदप्यसम्भावितमिति मत्वाऽऽह—

पितर्युपरते पाण्डौ सर्वान्नः सुहृदः शिशून् ।
अरक्षतां व्यसनतः पितृव्यौ क्व गताबितः ॥ ३३ ॥

**पितर्युपरत इति** । वस्तुतस्तूभाभ्यामेव रक्षिता लाक्षागृहादावस्माव । एवमन्यदपि ज्ञातव्यम् । तदाह—**अरक्षतां व्यसनत इति** ॥ ३३ ॥

सञ्जयस्तु पूर्वमेव तदभावं ज्ञात्वा भयादपि मूर्च्छित एव स्थितः । अतो नोत्तरं दत्तवानित्याह—

सूत उवाच—

कृपया स्नेहवैक्लव्यात्सूतो विरहकर्षितः ।
आत्मेश्वरमचक्षाणो न प्रत्याहाऽतिपीडितः ॥ ३४ ॥
विमृज्य पाणिनाऽश्रूणि विष्टभ्याऽऽत्मानमात्मना ।
अजातशत्रुं प्रत्यूचे प्रभोः पादावनुस्मरन् ॥ ३५ ॥

---

१ अतो विचार्यैवेत्यग्रमदन्यः पाठः सर्वेषु पुस्तकेषु । प्रतिभानस्त्वयमहो मूले निवेशितः । २ कथमप्रवृत्त इति क. कथमप्रमत्त इति ख. ट । ३ पूर्वपुत्राश्चेति ख. ग. ४ रक्षिताविति ज.



**कृपयेति** । दीनत्वात्कृपा । स्नेहः सहजः । कृपया च स्नेहाधिक्याद्वैक्लव्यं । **आत्मेश्वरमिति** नैतिरतिपीडायां हेतुः । यद्यपि युधिष्ठिर ईश्वरस्तथापि स्वस्य धृतराष्ट्र एव । अवचनेऽतिपीडैव हेतुः । नं त्ववज्ञादिः । तथापीश्वरसान्निध्यात्तूष्णीम्भावोऽनुचित इति "विकलश्च न वदेदि"ति स्मृतेर्निर्गतान्यश्रूणि पाणिना विमृज्य अन्येषामनिर्गमार्थं चाऽऽत्मानं विष्टभ्य गुर्वन्तराभावेऽपि स्वयमेव गुरुर्भूत्वा प्रमादकथनेऽपि दण्डं न करिष्यतीत्यजातशत्रुं प्रति धृष्टतौदासीन्यहेलनाद्यभावाय प्रभोर्धृतराष्ट्रस्य पादावनुस्मरन् भक्त्यां भगवतो वा दण्डाभावाय प्रत्यूचे प्रतिकूलमुत्तरं दत्तवान् ॥ ३४ ॥ ३५ ॥

सञ्जय उवाच—

नाऽहं वेदाऽऽत्मव्यवसितं पित्रोर्वः कुलनन्दन ।
गान्धार्या वा महाबाहो मुषितोऽस्मि महात्मभिः ॥ ३६ ॥

नं हि जानामीत्युक्ते राज्ञः प्रियं भवति । अज्ञाने हेतुः—आत्मव्यवसितमिति । न केनचित्सह व्यवं कृतम् । किन्त्वात्मन्येव यस्मिन्नं व्यवसितम् । "वष्टि भागुरिरल्लोपमि"ति । पित्रोर्व इति कदाचिद्भवद्भिर्ज्ञायेत । आत्मत्वात्कुलनन्दनत्वाच्च चिकीर्षितमपि कदाचित्सूचयेत् । अथवा । कुलनन्दनेति । तव तु दोषो नास्तीत्यर्थः । महाबाहो इति । तव त्रिलोकीरक्षकत्वेऽपि यदि त्वं न जानासि कुतो मम ज्ञानमिति भावः । महात्मभिरिति । महानात्मा आत्मनि वा यस्य । स्वत एव वञ्चनसामर्थ्यं भगवदीयत्वेन वा । उभयथाऽप्यहं वञ्चित इत्यर्थः ॥ ३६ ॥

एवं पूर्वकथां निरूप्य विवक्षितकथामारभते । तत्र गावल्गणिवाक्यं श्रुत्वा महामोहप्राप्तो राजा प्रमादं वा कुर्यादित्याशङ्क्यैतादृशकार्ये नियुक्तो नारदस्तदा समागत इत्याह—

अथाऽऽजगाम भगवान्नारदः सहतुम्बुरुः ।
प्रत्युत्थायाऽभिवाद्याऽऽह सानुजोऽभ्यर्चयन्निव ॥ ३७ ॥

**अथेति** । अथ मोहानन्तरं तदपगमार्थमागत इत्यर्थः । तुम्बुरुरन्य ऋषिः । शोकापनोदे हि सम्भविष्यति । अधिकारिण उद्वेगाधीनत्वात् । तदा प्रमादं कर्तुं विचारयन्नारदं दृष्ट्वा अनेन निर्णयो भविष्यतीत्युत्थाय पूर्वावस्थां त्यक्त्वा ऋषिमभिवाद्य स्वागतादिकमपृष्ट्वैव धृतराष्ट्रं पृच्छति ॥ ३७ ॥

युधिष्ठिर उवाच—

नाऽहं वेद गतिं पित्रोर्भगवन् क्व गताबितः ।
अम्बा च हतपुत्रार्त्ता क्व गता सा तपस्विनी ॥ ३८ ॥

**नाऽहं वेदेति** । अमङ्गलसम्भावनां नोक्तवान् । अयुक्तत्वात् ॥ ३८ ॥

शीघ्रकथनार्थमाह—

कर्णधार इवाऽपारे भगवान् पारदर्शनः ।
अथाऽऽबभाषे भगवान्नारदो मुनिसत्तम ॥ ३९ ॥

---

१ हेतो इति क. ख. ग. २ दत्तवानिति ख. ३ मत्वा पादाविति ख. ग. ४ भक्त्येति नास्ति ग. ५ नाऽहमित्यादि प्रतीकमधिकं क. ६ न हि न जानामीति क. ख. ७ शोकापनोदने इति क.

**कर्णधार इति** । शोकसमुद्रे मग्ना वयम् । तत्र सार्वज्ञ्यं नौका । तस्या निर्वाहको भवानेव । केवलनाविकवन्न किन्तु **पारदर्शनः** गन्तव्यदेशं पश्यसि । पर्यवसानं जानासीत्यर्थः । एवमर्द्धवचने स्थितः । उपसंहाराकथनात् । तदा नारदस्तस्याऽकथनहेतुं ज्ञात्वा स्वयमेव बभाषे । ज्ञाने हेतुः—**भगवानिति** । अनुबोधे वा । **मुनिसत्तमेति** सम्बोधनम् । पाठान्तरेऽपि प्रकाराणामुक्तत्वादाभासायूहनेन स्वयमूहनीयम् । मुनयो हि कृपालवो भवन्ति । अतः कृपया नारदोऽपृष्टमप्याहेत्यर्थः ॥ ३९ ॥

भगवान् संसारिजीवेषु यदज्ञानं करोति तत्सहसा कृतिव्यावृत्त्यर्थम् । अतस्त्वयाऽपि सहसा न किञ्चित्कर्तव्यम् । प्रथमतो मोहं दूरीकुरु । पश्चात्पृष्टं वक्ष्यामीत्यभिप्रायेणाऽऽह—

**नारद उवाच—**

**मा कञ्चन शुचो राजन् यदीश्वरवशं जगत् ।**
**स संयुनक्ति भूतानि स एव वियुनक्ति च ॥ ४० ॥**

**मा कञ्चन शुच इति** । शोको ह्यनिष्टज्ञानसाध्यस्वन्यूनतापादकानिष्टपदार्थनिदिध्यासनविशेषः । कोऽप्यनिष्टभावनया न चिन्तनीय इत्यर्थः । **राजन्निति** सम्बोधनान्महाकुटुम्बित्वमुक्तम् । तेन महति राज्ये सर्वदेष्टानिष्टोत्पत्तेः शोके कदाचिदपि राज्यसुखं न स्यात् । अतो राजा न शोचति । किञ्च । शोको निष्फलो विरुद्धश्च । तत्र हेतुः—**यदीश्वरवशं जगदिति** । यस्मात्कारणात्सर्वं जगदीश्वरवशम् । भगवता हि सर्वोऽपि पदार्थः क्रियते नियम्यते च । स न कस्यचिद्विष्टे इष्टो वा । स स्वार्थं परार्थं वा करोति । तत्र परार्थकरणे हितमेव करोतीति नियमः । स्वार्थकरणेऽपि स्वलीलासिद्धये करोति । तत्र परार्थपक्षे भगवता तस्य हिते क्रियमाणे स्वयं चेच्छोचेत्तदा निषिद्धम् । भगवतश्च कोपो भवेत् । भगवल्लीलायां तु सुतरामेव क्रोधोऽनौचित्यं च । स्वस्याऽपि ममतास्पददूरीकरणे पूर्वोक्त एव न्यायः । अतो भगवदधीनत्वादात्मानं परं वा कञ्चन मा शुचः । नन्वग्नेरिव संयोगवियोगाभ्यां दुःखजननात्स्वदुःखेन शोक इति चेत् ? तत्राऽऽह—**स संयुनक्तीति** । भूतानि स एव योजयति वियोजयति च । तस्मात्कृताविव संयोगेऽपि सैव युक्तिरनुसन्धेया । उभयथाऽपि सर्वथा भगवान् हितं करोतीति ज्ञातव्यम् ॥ ४० ॥

ननु स्वार्थपक्षे कथं शोकपरिहारः । भगवांस्तु स्वलीलार्थं करोति । जीवास्त्वयुक्ते योजितत्वाद्दुःखेन शोचन्ति । भगवल्लीलाया बहुकालविततत्वात्स्वस्य दुःखपरम्परायां शोकस्याऽऽवश्यकत्वात् । तत्राऽऽह—

**यथा गावो नसि प्रोतास्तन्त्यां बद्धाः स्वदामभिः ।**
**वाक्तन्त्यां नामभिर्बद्धा वहन्ति बलिमीशितुः ॥ ४१ ॥**
**यथा क्रीडोपस्कराणां संयोगविगमाविह ।**
**इच्छया क्रीडितुः स्यातां तथैवेशेच्छया नृणाम् ॥ ४२ ॥**

---

१ तस्याः कथनहेतुमिति ग. २ स्वन्यूनतादक् अनिष्टेत्यादि ग. ३ सर्वे पदार्थाः क्रियन्त इति क. ४ विद्विष्ट इति ग. च. ङ. ५ चेच्छा चेदिति ग.



**यथा गाव इति** । "न दुःखं पञ्चभिः सहे"ति च तदर्थमेव सृष्टा वयमिति च तदर्थमेव महद्भिर्विषयैर्योज्यन्त इति चाऽवसरे स्वामिद्रोहस्याऽयुक्तत्वाज्ज्ञात्वा दुःखमपि सोढ्वा अग्रे कृतार्था भविष्याम इति बुद्ध्वा भगवल्लीलामेव सम्पादयेत् । अन्यथा दुःखं बहु प्रयच्छेदिति गावो दृष्टान्तः । **नसि** नासिकायां प्रोताः । तदा हि बलीवर्दा वशे भवन्ति । अहन्ताममतारज्ज्वा विषयलक्षणनासिकायां प्रोता इन्द्रिययुक्ता भगवद्वशे भवन्तीत्यर्थः । दृष्टान्तेनैव सामान्यबन्धनमुक्त्वा विशेषबन्धनमाह—**वाक्तन्त्यां नामभिर्बद्धा इति** । वेदलक्षणा दीर्घरज्जुः । ब्राह्मणक्षत्रियरूप ओदनः । स च भगवता भोक्तव्यः । तैर्भगवति सायुज्यं प्राप्तव्यम् । तेषां प्राकृतक्रियास्तुषाः । बीजयोनिसम्बन्धस्तृणसम्बन्धः । इन्द्रियाणि बलीवर्दाः । वेदो मर्यादारज्जुः । भगवदिच्छा स्तम्भः । एवं सति स्वस्येन्द्रियाध्यासे बलीवर्दत्वम् । अन्यथा स्वस्याऽऽधारत्वं त्रिविधपापविमोकश्च फलम् । इन्द्रियाणि तु देवताधिष्ठितानि वैदिककर्मणि प्रवर्तन्ते । तेन स्वस्य मलापकरणं भवति । पुनर्निरन्तरसमाधिना प्राकृततुषेऽपगते ज्ञानाग्निना पक्वा ओदनत्वं सम्पद्यन्ते । **नामभिर्बद्धाः** । ब्राह्मणोऽयं क्षत्रियोऽयं ब्रह्मचारी गृहस्थ इति । ये यत्र योजितास्ते तत्रैव परिभ्रमन्ति । कार्यं तु प्रभोः कुर्वन्ति । न तु प्रेरकस्य । तस्मादिन्द्रियाणां भगवदर्थं सृष्टत्वात्तैर्भगवत्कार्ये क्रियमाणे स्वयं वृथाऽध्यासं कृत्वा शोको न कर्तव्य इत्यर्थः । किञ्च । भगवता हि क्रीडार्थं सृष्टाः । यथा बालः प्रतिमाभिः क्रीडति । स यथासुखं प्रतिमाः स्थापयति । कुतश्चिद्वियोज्य कुतश्चिद्योजयति । तथा सर्वे पुरुषा भगवतः क्रीडाप्रतिमाः । ते केनचित्संयुज्यन्ते वियुज्यन्ते च । अत एवं ज्ञात्वा सम्बन्धिषु ममतया शोकहर्षौ न विधेयाविति समुदायेन विवेकः । पूर्वं तु तत्वानां प्रत्येकं विवेक उक्तः ॥ ४१ ॥ ४२ ॥

एवमीश्वरार्थं सृष्टपक्षे शोकोऽनुचित इत्युक्तम् । निरीश्वरादिमतेऽपि बाह्यमतेषु च कुत्रापि शोकः शास्त्रार्थो न भवतीत्याह—

**यन्मन्यसे ध्रुवं लोकमध्रुवं वा न चोभयम् ।**
**सर्वथा न हि शोच्यास्ते स्नेहादन्यत्र मोहजात् ॥ ४३ ॥**

**यन्मन्यस इति** । सर्वे हि वादिनश्चतुर्विधाः । साङ्ख्याः सर्वं ध्रुवं मन्यन्ते । आविर्भावतिरोभावावेवोत्पत्तिप्रलयौ । बाह्यास्तु सर्वमनित्यं कृतकत्वादित्यध्रुवं मन्यन्ते । बाह्यभेदा एव केचन माध्यमिकादयो नाऽऽसीदस्ति भविष्यतीति न ध्रुवं नाऽध्रुवं मिथ्येति मन्यन्ते । नैयायिकास्तूभयं मन्यन्ते । आकाशादयः परमाणवश्च ध्रुवाः । अन्येऽध्रुवा इति । चतुर्ष्वपि पक्षेषु सर्वथा ते न शोच्याः । न हि नित्यः शोकमर्हति । न वा बुद्बुदरूपमनित्यं शोकमर्हति । शशशृङ्गवत्पक्षस्तु सर्वथा शोकाभावाय । नैयायिकपक्षे शोकः सम्भवति । तत्राऽप्युत्तरमुच्यते । शत्रुमरणे कथं न शोचति । मित्रमरणे च शोचति । तत्कृत इति प्रष्टव्यः । स्नेहादिति चेत् । स्नेह एव शोकहेतुरपकारी । स त्यक्तव्यः । ननु कदाचित्सुखं प्रयच्छतीति कथं त्यक्तुं शक्यत इति चेत् ? तत्राऽऽह—**मोहजादिति** । अज्ञानाजातः

---

१ तद्दुःखमिति च. ङ. २ बीजयोनिः सम्बन्ध इति क. बीजयोनिः स्वसम्बन्ध इति ख. ३ विमोचकश्चेति क. ग. ४ देवताधिकृतानीति ग. ५ पक्त्वेति ख. ६ काञ्चनत्वमिति ग. ७ सम्पत्स्यंत इति क. ख. ग. ८ ईश्वरार्थसृष्टेत्यादि क. ग.

खेदः कथं सुखं प्रयच्छेत्। न हि सन्निपाताज्जातं शैत्यं तापापनोदनं करोति। तस्मान्मूर्च्छायां महद्दुःखे सुखमिव मन्यते । अन्यथा तन्निराकरणार्थं न यतेत ॥ ४३ ॥

फलितमाह—

तस्माज्जह्यङ्ग वैक्लव्यमज्ञानकृतमात्मनः ।
कथं त्वनाथाः कृपणा वर्तेरंस्ते च मां विना ॥ ४४ ॥

कालकर्मगुणाधीनो देहोऽयं पाञ्चभौतिकः ।
कथमन्यांस्तु गोपायेत्सर्पग्रस्तो यथा परम् ॥ ४५ ॥

**तस्मादिति** । हे अङ्ग । **वैक्लव्य**मिन्द्रियाणामन्तःकरणस्य च विकलताम् । केवलं पदार्थाज्ञानेन जातम् । त्वं विदितपदार्थो **जहि** नाशयेत्यर्थः । अयमेकांशेनाऽपि स्थितः (?) पुनर्दुःखं दास्यतीति भावः । मध्ये राजा शङ्कते—**कथं त्वनाथा इति** । रक्षकरहिताः । वने हि रक्षा अपेक्ष्यते । रक्षाभावाच्च कृपणाः । यस्य चाऽऽश्रयं कृतवन्तस्तन्नपुंसकमचेतनमिति । उत्तरमाह—**कालकर्मगुणाधीन इति** । किं त्वमेव रक्षकस्तत्र न तिष्ठसीति शोकः । आहोस्विद्रक्षकमात्राभावात् । तत्राऽऽद्यं निराकरोति । त्वं रक्षक इति पक्षस्त्वयुक्तः । राजशब्दस्य देहवाचकत्वात् । न ह्येकेन गृहेण गृहान्तरं रक्षितुं शक्यते । किञ्च । व्यवहारानुसारेणाऽपि रक्षकत्वेऽन्याधीनः कथं रक्षेत् । अयं देहः कालाधीनः कालप्रेरणां विना कथं रक्षेत् । कालस्तु निमित्तमित्यस्मिन्पक्षेऽपि कर्माधीनः । कालप्रेरणया यत्कर्म कृतवांस्तत्फलभोगस्यावश्यकत्वात् । कर्माऽपि निमित्तमेव दृष्टसापेक्षत्वादिति चेत्। तत्रापि कर्मैव चेद्दृष्टसामग्रीमपि सम्पादयति तदाऽपि पूर्वोक्त एव दोषः । अथाऽन्यश्चेन्। स्वभावभूतास्ते गुणाः । अतस्त्रिदोषव्याप्तः । स्वयं पञ्चभूतविकारः । भूतानि तु भक्षकाणि । यैरात्मैव भक्षितस्तद्विकारः कथमन्यान् गोपायेत् । अन्ये त्वेतद्व्यतिरिक्ता देहाद्यध्यासरहिताः । तुशब्देन च कालानधीना भगवदीया जाताः । किञ्च । कालग्रस्तः सर्वथा न रक्षतीति दृष्टान्तमाह—**सर्पग्रस्त इति** । अजगरगिलितः । **परं** बहिः स्थितम् । अतस्त्वां धृतराष्ट्रः शोचितुमर्हति । न तु त्वं धृतराष्ट्रमित्यर्थः ॥ ४४ ॥ ४५ ॥

भक्ष्याभावस्तु न शङ्कनीयः । सर्वत्रैव भगवता भक्ष्यं क्लृप्तमिति वदन् कोऽपि रक्षको नास्तीति पक्षं दूषयति—

अहस्तानि सहस्तानामपदानि चतुष्पदाम् ।
फल्गूनि तत्र महतां जीवो जीवस्य जीवनम् ॥ ४६ ॥

**अहस्तानीति** । आदौ स्रष्टव्यत्वेन जीवा एवोपस्थिताः । तेषां सृष्टिर्नाम देहनिर्माणेन तत्र प्रवेशनम् । तत्रोत्तरत्र वृद्ध्याद्यर्थमन्नसर्गे कर्तव्ये जीवातिरिक्तमलभमानः सर्वमेवाऽन्नमत्तारं च कृतवान् । तत्र सामान्यप्रकारो विशेषश्च । सामान्यं लौकिकम्। विशेषो वैदिकः। तत्र सामान्यप्रकारे व्यवस्थामाह—**अहस्तानि सहस्तानामिति** । उपलक्षणमेतत् । बलवतां दुर्बलं भक्ष्यम् । तद्वलं क्रिययेति हस्त-

१ प्रयच्छेदिति ग. घ. २ मोहाद्दुःखमिति घ. ३ सुखमिति इति ग. ४ दुर्लभमिति ख.



पादौ क्रियायां करणे इति तयोर्ग्रहणम् । सहस्ता अप्यहस्तानां भक्ष्या भवन्ति । यथा मनुष्या अजगरादीनाम् । महान्तोऽपि फल्गूनां भक्ष्या भवन्ति । यथा पिपीलिकानां सर्पाः । अतो बलाभिप्रायेणैतदुक्तम् । प्रायिकाभिप्रायेण वा । अहस्तानि मत्स्यादीनि । अपदानि तृणादीनि । यत्पुनर्जीवाधिष्ठानं नास्ति तदेव नास्ति । भावे वा घटादेरिवं न भक्ष्यता । अत एव भगवता सर्वत्र भक्ष्यं क्लृप्तमिति न चिन्ता कार्या। नीवारफलादेररण्येऽपि सत्त्वात् ॥ ४६ ॥

ननु कथमेवं भगवान् करोति । स्वसृष्टमन्यं (?) खादयति । तत्राऽऽह—

तदिदं भगवान् राजन्नेक आत्माऽऽत्मनां स्वदृक् ।
अन्तरोऽनन्तरो भाति पश्य तं माययोरुधा ॥ ४७ ॥

**तदिदं भगवानिति** । वैषम्यनैर्घृण्ये भगवतो न स्तः । स्वात्मानमेव करोतीति । तदाह । **इदं** जगद् भगवान् । तत्र हेतुः—**तदिति** । यस्मात्कारणात्सर्वं सर्वस्य भक्ष्यं तस्मान्न ह्यन्यमन्यो भक्षयितुं शक्नोति । **राजन्निति** सम्बोधनमन्याये दण्डार्थम् । तेन यद्यन्यमन्यो भक्षयेद्राजदण्डादिः स्यात् । ननु भगवतोऽप्यनुचितं यत्स्वयं कृत्वा स्वयं भक्षयतीति ? तत्राऽऽह—**एक इति** । सृज्यस्रष्टोरभेदात् । सृष्टानामपि । नन्वेतदप्ययुक्तम् । आत्मानं भक्षयतीति । तत्राऽऽह—**आत्मेति** । अतति व्याप्नोतीत्यात्मा । सर्वमेव व्याप्नोतीति बहिःस्थितमन्तः प्रवेशयति । अन्तःस्थितं तत्र बहिः । स्वस्मिन्नेव स्वयमन्तर्बहिर्भवतीति वस्तुवृत्तम् । तत्र भक्ष्यादिव्यवहारस्तु लौकिकः । अथवा । **आत्** भक्षणात् । मा निषेधात्मको भवति । न हि मृण्मयाऽभक्षणे आत्मैवाऽवतिष्ठते । नन्वन्यजीवाधिष्ठितं कथं भक्षयति ? तत्राऽऽह—**आत्मनामात्मेति** । भक्षकाणामप्युपसंहर्तेत्यर्थः । अथवा । जडानामुपसंहारेऽपि जीवानां विद्यमानत्वात्कथमेक इत्यत आह—**आत्मनामात्मेति** । स्वरूपमित्यर्थः । ननु तथापि जीवदयया न भक्षयेदित्यत आह—**स्वदृगिति** । स्वस्मिन्नेव दृष्टिर्यस्य । अन्यानप्यात्मत्वेनैव जानाति । स्वभोगार्थं वा अन्यान्न पश्यतीत्यर्थः । ननु स काऽस्तीत्याशङ्क्याऽऽह—**अन्तरोऽनन्तरो भातीति** । अन्तरः अनन्तरश्च बाह्याभ्यन्तरभावेन स एव भातीत्यर्थः । स सर्वत्र भक्षकत्वेनोपस्थित इति भावः । उपदेशं भेदप्रकारेण फलपर्यवसितं मन्यमान आह—**पश्य तमिति** । तमेव सर्वं सर्वत्र भासमानं च पश्येत्यर्थः । नन्वेकस्य कथमनेकप्रकारत्वम् ? तत्राऽऽह—**माययोरुधेति** । मायायाः प्रतिरूपत्वेनोक्तत्वात्तत्र सम्बद्धो जलचन्द्रवदक्षिवद्वा अनेकधा भातीत्यर्थः ॥ ४७ ॥

एवं रक्षकत्वाभावमाशङ्क्य भगवतः सर्वरूपेण रक्षकत्वमुक्त्वा तस्येदानीं संहारलीलापरत्वमाह—

सोऽयमद्य महाराज भगवान् भूतभावनः ।
कालरूपोऽवतीर्णोऽस्यामभावाय सुरद्विषाम् ॥ ४८ ॥

**सोऽयमद्येति** । **महाराजेति** सम्बोधनान्न भयं कर्तव्यम् । इतोऽप्यधिकं स्वाराज्यं दास्यतीति भावः । **सोऽयमिति** ज्ञानदृष्ट्या प्रदर्शयन्नाह । दृश्यस्याऽन्यत्वं वारयति—**भगवानिति** । नन्वागतस्य किं प्रयोजनम् ? तत्राऽऽह—**भूतभावन इति** । भूतानि भावयति पालयति दोषदूरी-

१ इतीति नास्ति ख. २ घटादिरिवेति ख. ३ अभक्षणादिति ग. अभजनादिति घ. ४ अन्येति नास्ति घ. ५ भेदकारेणेति ख. ६ पश्येदित्यर्थ इति क. ग. घ. ७ सम्बन्ध इति घ. ८ संसारलीलेति घ. ङ.

करणेनेति। स्वयं स्वतन्त्रतया संहर्त्ताऽपि विशेषाधिकारित्वात्कालस्य पालयतीति ज्ञापनार्थं भक्तिसिद्धये कालस्य रूपमिव रूपं कृत्वा सुरद्विषामभावायाऽवतीर्णः। वामनव्यावृत्त्यर्थमाह—**अस्यामिति** ॥ ४८ ॥

एवं कृष्णचरित्रमुक्त्वोपसंहरन् राजानमुपदिशति—

**निष्पादितं देवकार्यमवशेषं प्रतीक्षते।**
**तावद्यूयमवेक्षध्वं भवेद्यावदिहेश्वरः ॥ ४९ ॥**

**निष्पादितमिति**। "**मया निष्पादितं ह्यत्र देवकार्यमशेषत**" इति वाक्यात्। **अवशेषं** भारहारकभारदूरीकरणम्। मोहान्तरानुत्पत्तये तथोक्तम्। वस्तुतस्तु तदपि जातमेव। **तावत्** तच्छ्रवणपर्यन्तमवश्यंभावित्वादवेक्षध्वं यावद्भगवानिह निवारकत्वेनाऽऽगच्छेत्। नन्वस्मान् स्थापयित्वा गतः कथं निवारयेत्? तत्राऽऽह—**ईश्वर इति**। सर्वकरणसमर्थः ॥ ४९ ॥

एवं भगवज्ज्ञापनेन मोहाभावं भयं चोत्पाद्य पृष्टे उत्तरमाह—

**धृतराष्ट्रः सह भ्रात्रा गान्धार्या च स्वभार्यया।**
**दक्षिणेन हिमवत ऋषीणामाश्रमं गतः ॥ ५० ॥**

**धृतराष्ट्र इति**। हिमवतो दक्षिणेन हिमालयस्य दक्षिणे भागे। पूर्वमेव सिद्धमृषीणामाश्रमं गतः। गङ्गादक्षिणभागाद्राजगृहाद्धिमदक्षिणभागे ऋषिगृहे गत इत्याधिक्यम्। "**गाङ्गं करिकराकृष्टं वायुना पल्लवीकृतम्। पुण्यदेशेषु पतितं हिमं तं विद्धि राघवे**"ति वाक्याद्धिमसम्मुखतया तथा शीतेनाऽतिपीडितश्च तिष्ठतीत्यर्थः ॥ ५० ॥

तत्रर्षीणामनुभावं गङ्गायाश्चाऽऽह—

**स्रोतोभिः सप्तभिर्यत्र स्वर्धुनी सप्तधा व्यधात्।**
**सप्तानां प्रीतये नाम्ना सप्तस्रोतः प्रचक्षते ॥ ५१ ॥**

**स्रोतोभिरिति**। तस्याऽऽश्रमस्य **सप्तस्रोत** इति नाम। तत्सार्थकमित्याह। यत्राऽऽश्रमे ऋषीणामुत्कर्षस्थापनाय प्रत्येकमृषीणां समीपे प्रवाहरूपेणाऽऽगता। वक्रतया गमने तूच्चनीचता स्यात्। ऋषीणां वैमनस्यं च। अतः **स्रोतोभिः सप्तभिरित्युक्तम्**। **व्यधात्**। जाता। आत्मानं वा। **स्रोतोभिरिति**—"**तृतीया च होश्छन्दसी**"ति कर्मार्थे तृतीया। तेन स्रोतांसि व्यधादित्यर्थः। **स्वर्धुनीति** स्वतन्त्रतयाऽऽकाशगङ्गा समागतेति ज्ञायते। तेन जलान्तरामिश्रणेनाऽतिपवित्रत्वमुक्तम्। **नाम्ना सप्तस्रोत इति**। नानेति पाठे सप्तानां प्रीतये नाना। अनेन यथासङ्ख्यं ज्ञापितम् ॥ ५१ ॥

तत्र तस्य कृत्यमाह तूष्णीम्भावव्यावृत्त्यर्थम्—

**स्नात्वाऽनुसवनं तस्मिन् हुत्वा चाऽग्नीन् यथाविधि।**
**अब्भक्ष उपशान्तात्मा स आस्ते विगतैषणः ॥ ५२ ॥**

१ अवश्यभावितत्वादिति घ. २ निवारकत्वेनाऽभिगच्छेदिति क. घ. ३ दक्षिणभागे इति घ. ४ हिमेति नास्ति ग. घ. ङ. ५ पततीति क. ग. ङ. ६ तमेति नास्ति घ. ७ अतिपवित्रमिति क. ग. ङ. ८ नामेति घ.



**स्नात्वेति**। स्नानादयो नियमाः। उपशान्त्यादयो यमाः। **अनुसवनं** त्रिकालम्। सवनानुकल्पतया वा। **अग्नीन्** गार्हपत्यादीन्। अन्यस्याऽपि यथा गार्हस्थ्यं तथा होम इति चाऽदोषः। होमेनाऽग्नय एव संस्क्रियन्त इति संस्कार्यत्वेन कर्मता। आधानं कृत्वेत्यर्थः। चकारादग्निहोत्रमपि हुत्वा। **यथाविधि** पञ्चाग्निविधानमनतिक्रम्य। अप एव भक्षयतीत्यब्भक्षः। वानप्रस्थाश्रमेऽकृष्टपच्यादिवायुभक्षान्तमाहारा विहिताः। तत्रोपान्त्यमब्भक्षः। **उप** भगवत्समीपे प्रतीचि वा **शान्तः आत्मा** अन्तःकरणं यस्य। ज्ञानार्थं भगवदाविर्भावार्थं वा। एषणापरित्यागेन मुक्तियोग्यता सूचिता। **आस्त इति** सत्तातिरिक्तधर्मराहित्यं सूचितम्। लोकैषणाऽत्र मुख्या ॥ ५२ ॥

एवं यमनियमावुक्त्वा अष्टाङ्गयोगं वक्तुमासनादिकमाह—

**जितासनो जितश्वासः प्रत्याहृतषडिन्द्रियः।**
**हरिभावनया ध्वस्तरजःसत्त्वतमोमलः ॥ ५३ ॥**

**जितासन इति**। आसनजयः प्राणानां जयः प्रत्याहारश्च क्रमेणोक्ताः। **षडिन्द्रिय इति** कर्मेन्द्रियाणि नियम एव प्रत्याहृतानि। ध्यानमाह—**हरिभावनयेति**। ध्यानधारणे एकीकृत्योक्ते। एकदेशसमुदायभेदेन तयोर्भेदात्। ध्वस्तानि गुणत्रयमलानि रागादीनि यस्य ॥ ५३ ॥

निर्विकल्पसमाध्यर्थमाह—

**विज्ञानात्मनि संयोज्य क्षेत्रज्ञे प्रविलाप्य तम्।**
**ब्रह्मण्यात्मानमाधारे घटाम्बरमिवाऽम्बरे ॥ ५४ ॥**

**विज्ञानात्मनीति**। अन्ते स एव कर्त्तव्यः। अत्र ह्युत्तरोत्तरं पञ्चाऽऽत्मानः। उत्क्रान्तिगत्या गतिकर्ता जीवः प्रथमो देहमानसभेदेन भिन्न एक एव। स व्यष्ट्यात्मा। ततो महान् ब्रह्माण्डाभिमानो विज्ञानात्मा समष्टिः। तस्मात्परः प्रकृत्यधिष्ठाता पुरुषः। ततोऽपि महानक्षरात्मा। ततः पुरुषोत्तम इति। तत्र स्वात्मानं प्रथमम्। क्रमविलापनेन ब्रह्मपर्यन्तं गत इत्याह। स्वात्मानं विज्ञानात्मनि संयोज्य। तं च क्षेत्रज्ञे। अथवा। **विज्ञानात्मा** महत्तत्त्वं चित्ताविर्भूतचैतन्यम्। तं क्षेत्रज्ञे पुरुषे। तं **ब्रह्मणि** अक्षरे। तस्याऽनात्मत्वे प्रविलापनं व्यर्थमित्यत आह—**आत्मानमिति**। ननु पुरुषाक्षरयोः स्वरूपे वैलक्षण्याभावात्किं प्रविलापनेनेत्यत आह—**घटाम्बरमिति**। घटे भिन्ने यथाऽऽकाशमाकाशं स्यात्। अतः प्रकृत्यधिष्ठातृत्वं दूरीकृतमित्यर्थः ॥ ५४ ॥

तस्याऽक्षरधर्माविर्भावेन दोषनिवृत्तिमुपसंहरति—

**ध्वस्तमायागुणोदर्को निरुद्धकरणाशयः।**
**निवर्तिताखिलाहार आस्ते स्थाणुरिवाऽचलः ॥ ५५ ॥**

**ध्वस्तेति**। मायागुणानामुदर्कः प्रकृतौ व्यामोहेन सम्बन्धः। नितरां रुद्धाः पुनरुद्गमनसामर्थ्यरहिताः इन्द्रियान्तःकरणानि करणाशया यस्य। **निवर्तिताखिलाहार इति** प्राणवृत्तिनिवा-

१ होमे वाऽग्नय इति ख. २ ईषणेति ख. ३ लोकेषणेति ख. ४ त्रिमुख्येति क. ख. ग. ५ प्राणायामजय इति ग. ६ व्यष्ट्यात्मेति घ. ७ पुरुष इति इति ग. घ. ङ. ८ चिन्ताविर्भूतेति ङ. ९ तस्याऽनात्मत्वे इति घ.

रणम् । एवं चतुर्णां देहेन्द्रियप्राणान्तःकरणानां बीजभूतमायागुणसहितानां व्यापारे निवृत्ते अक्षररूपं प्राप्तस्याऽऽत्मनः स्वतो व्यापाराभावात्स्थाणुरिवाऽऽसीदित्याह—**आस्त इति**। बहिःस्थितत्वात्स्वाचालने दृष्टान्तः। "**वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वमि**"ति श्रुतेः। तत्तुल्यो वा जात इत्यर्थः ॥ ५५ ॥

तर्ह्येवं बहुकालं स्थास्यतीति विचार्य समाधिविरतौ समानेय इत्याशङ्कायामाह—

तस्याऽन्तरायो मैवाऽभूः संन्यस्ताखिलकर्मणः ।
स वा अद्यतनाद्राजन् परतः पञ्चमेऽहनि
कलेवरं हास्यति स्वं तच्च भस्मीभविष्यति ॥ ५६ ॥
दह्यमानेऽग्निभिर्देहे पत्युः पत्नी सहोटजे ।
बहिः स्थिता पतिं साध्वी तमग्निमनु वेक्ष्यति ॥ ५७ ॥

**तस्याऽन्तराय इति**। परमपुरुषार्थे सन्निहितस्य विघ्नरूपस्त्वं मा भूः। त्वद्दर्शनादिना मोह उत्पन्ने सर्वनाशो भविष्यति। किञ्च। त्वया गतेन विषयसम्पादनमेव कर्तव्यम्। तच्च संन्यासिनो निषिद्धमित्याह। संन्यस्तान्यखिलानि कर्माणि येन। अनेन कर्मार्थमपि विषयग्रहणं निवारितम्। तर्हि रक्षार्थं प्रयत्नः कर्तव्य इत्याशङ्क्याऽऽह—**स वा इति**। प्रथम बहुकालं स्थितिरेव नास्ति। विनियोगश्च स्वतः सिद्धः। अद्यतनात्पञ्चमेऽहनि। **राजन्निति** सम्बोधनाद्गमनसम्भृतावपि तावान् कालो गमिष्यतीति सूचितम्। **परत** इत्यद्यदिनं परित्यज्य पञ्च दिनानि। तत्र पञ्चमेऽहनि कलेवरं हास्यति। **अहनीति** शुक्लपक्षादिकमपि सूचितम्। कलेवरपरित्यागे हेतुः—**स्वमिति**। दग्धपटन्यायेनाऽभिमानशेषस्य विद्यमानत्वात्। "**भस्मान्तमिदं शरीरमि**"ति श्रुतेस्तस्य प्रतिपत्तिमाह—**तच्चेति**। ब्रह्मणि स्थितोऽपि प्रयत्नशेषेण प्राणदेहादिकं धृत्वा तिष्ठति। तस्य त्यागसमये। आग्नेयीं धारणां कृत्वा त्यक्तवान् (?)। अतस्तद्भस्म जातम् (?) इत्यर्थः। "**आधानप्रभृति यजमानो(?)ऽग्नयो भवन्ती**"ति श्रुतेः। अन्तःस्थिताग्निप्राकट्ये बहिःस्थितैरपि संसर्गान्महत्यग्नौ संजाते पर्णशालायामपि दग्धायां पातिव्रत्यधर्मेण "**प्रविशेद्वा हुताशनमि**"ति बहिः स्थिताऽपि पत्नी अभ्युपघाताभावाय साध्वी तमेवाऽग्निमनु प्रवेशं करिष्यतीत्यर्थः ॥ ५६ ॥ ५७ ॥

एवं दम्पत्योर्विनियोगमुक्त्वा तद्धेतुभूतविदुरविनियोगमाह—

विदुरस्तु तदाश्चर्यं निशाम्य कुरुनन्दन ।
हर्षशोकयुतस्तस्माद्गन्ता तीर्थनिषेवकः ॥ ५८ ॥

**विदुरस्त्विति**। तुशब्देन तयोरवस्थां तस्य निवारयति। ननु सहाऽऽगतानां मध्ये कथं द्वयोरेव सा गतिर्न तृतीयस्येत्यत आह—**तदाश्चर्यमिति**। पूर्वं तु तत्क्रियायामेवाऽऽसक्तं चित्तमासीत्किं भविष्यतीति। निष्पन्ने तु कार्ये तदाश्चर्यत्वेन स्फुरितं न कर्तव्यत्वेन। न ह्यद्भुतं सर्वस्य सम्भवतीति। तर्हि किं कृतवानित्यत आह—**गन्तेति**। **कुरुनन्दनेति** सम्बोधनं तवैतन्न कर्तव्यमिति

१ प्राणेति नास्ति ग. २ तर्ह्ययमिति क. ग. घ. ङ ३ सम्भृतावपीति घ.



सूचयति। सर्वाह्लादकरत्वात्। पारलौकिकैहिकविचारेण हर्षशोकयुतस्तस्माद्देशाद्देहपातनपर्यन्तं परिभ्रमेदिति विध्यनुसारेण प्रवृत्तत्वान्मध्ये प्रासङ्गिकं समाप्य प्रक्रान्तमेव कृतवानित्याह—**तीर्थनिषेवक इति** ॥ ५८ ॥

एतावता राज्ञः शोको निवृत्त इति नारदगमने पूर्वोक्तस्य समाप्तिमाह—

इत्युक्त्वाऽथाऽऽरुहत्स्वर्गं नारदः सहतुम्बुरुः ।
युधिष्ठिरो वचस्तस्य हृदि कृत्वाऽजहाच्छुचः ॥ ५९ ॥

**इतीति**। अथेति भिन्नप्रक्रमेण पूजितः सन्तुष्टहृदयः। अतः परं भूमौ तस्य कार्यं नास्तीति ज्ञापयति—**आरुहत्स्वर्गमिति**। तुम्बुरुणा कथान्तरसूचनमाशङ्क्य—**सहतुम्बुरुरिति**। उपाख्यानफलमाह—**युधिष्ठिर इति**। शुचः शोकान्। वाक्यस्य शोकबाधकत्वाद्वाक्ये स्थिते शोका निर्गता इत्यर्थः ॥ ५९ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां प्रथमस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्दशोऽध्यायः ।

एवं हि धृतराष्ट्रस्य मुक्तिमुक्त्वा त्रयोदशे ।
पाण्डवानामतो द्वाभ्यां हेतुपूर्वमुदीर्यते ॥ १ ॥
तेषां नेष्टो ब्रह्मभावः सायुज्यं परमीप्सितम् ।
तच्च स्याद्भूतले कृष्णे सन्निभावेन बाधमात् ॥ २ ॥
अतश्चतुर्दशे हेतुं भगवद्गमनं महत् ।
यो वदेत्तस्य सन्दर्शः प्रश्नश्च विनिरूप्यते ॥ ३ ॥
सम्भावनाया हेतुत्वं निश्चये किमुतेति च ।
भगवद्गमनं तस्मादुभयत्रोच्यते द्विधा ॥ ४ ॥

एवं पूर्वाध्याये "**तावद्यूयमवेक्षध्वमि**"ति नारदवाक्याद्भगवन्निर्याणस्याऽऽवश्यकत्वं श्रुत्वा धृतराष्ट्रगमनकृतक्लेशं परिहृत्य स्वगमनहेतुभूतं भगवद्गमनं प्रति चिन्ताकुलितः पर्यालोचनं करोतीति व तस्य पीठिकामाह—

### सूत उवाच—

सम्प्रस्थिते द्वारकायां जिष्णौ बन्धुदिदृक्षया ।
ज्ञातुं च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम् ॥ १ ॥

१ विचारण इति घ. २ शोकानीति ख. ङ. ३ शोकानि गतानीत्यर्थ इति ख. घ. ङ. ४ तत्तस्याद्भूतल इति क. ख. ५ बन्धनादिति क. घ. ६ संस्पर्श इति क. ७ सम्भावनायामिति क. ग. घ. ८ हेतुत्वनिश्चये इति ग. घ. ९ ज्ञातुं मायामनुष्यस्य वासुदेवस्य चेष्टितमिति क्वाचित्कः पाठः.

व्यतीताः कतिचिन्मासास्तदा पाण्डुसुतो नृपः ।
ददर्श घोररूपाणि निमित्तानि कुरूद्वहः ॥ २ ॥
कालस्य च गतिं रौद्रां विपर्यस्तर्तुधर्मिणः ।
पापीयसीं नृणां वार्त्तां क्रोधलोभानृतात्मनाम् ॥ ३ ॥
जिह्मप्रायं व्यवसितं शाठ्यमिश्रं च सौहृदम् ।
पितृमातृसुहृद्भ्रातृदम्पतीनां च कल्कनम् ॥ ४ ॥
निमित्तान्यत्यरिष्टानि काले त्वनुगते नृणाम् ।
लोभाद्यधर्मप्रकृतिं दृष्ट्वोवाचाऽनुजं नृपः ॥ ५ ॥

**सम्प्रस्थित इति** । शापात्पूर्वं भगवान् किं करोतीति ज्ञानार्थमर्जुनः प्रेषितः । तस्मिन्नपि गते बहवो मासा जाता इति विलम्बे कारणाभावाच्चिन्ता । निमित्तदर्शनाच्च । तत्राऽऽद्यं द्वाभ्यामाह । गमनागमननिरूपणाद्द्वारकायां गतस्य न काऽपि चिन्ता । तत्राऽपि सम्यग्गतस्य । श्वशुरगृहे समाह्वानात् । तत्राऽपि स्वयं जिष्णुः जयशीलः । तत्राऽपि बन्धूनां दर्शनार्थे न कलहाद्यर्थे । तत्राऽपि सर्वानिष्टनिवारकस्य कृष्णस्य विशेषचरित्रं चेष्टितं ज्ञातुम् । **कतिचित्** सप्त मासाः । यदा नाऽऽयात्तदा । **पाण्डुसुतो** दीर्घदर्शी । विचारावश्यकत्वाय च नृपः । आगमने अपशकुनानि दृष्टवान् । **घोराणि** रूपाणि येषाम् । फलतो भयजनकत्वं दूरे । तेषामेव दर्शने भयं भवतीत्यर्थः । न च तावन्मात्रत्वम् । तानि पुनर्निमित्तान्यनिष्टसूचकानि । शकुनशास्त्रे तथा प्रतिपादनात् । स्वतोऽपि ज्ञानं सम्भवति । महापुरुषवंशोत्पन्नत्वात् । इत्याह—**कुरूद्वह इति** । ज्योतिःशास्त्रात्कालगतिश्च क्रूरा जाता । कलेर्दुष्टस्य प्रवेशात् । किञ्च । विपर्यस्ता ऋतुधर्मा यत्र । अनेनाऽपि कालगतिर्दुष्टेति ज्ञातम् । अनापद्यपि प्राणिनां **वार्त्ता** जीविका **पापीयसी** साधुजुगुप्सिता । कर्तृधर्मेषु क्रोधलोभावेव प्रकटौ । यत्किञ्चित्क्रियते तत्राऽधिकारिविशेषणमेतद्द्वयम् । ताभ्यामावृत आत्मा येषाम् । कालस्य कालस्थानां च दोषा उक्ताः । व्यवहारे बुद्धिदोषमाह । बुद्धिर्द्विधा हि समीचीना । व्यवसायात्मिका सर्वप्राणिषु सौहार्दजनिका च । तत्रोभयत्राऽपि कौटिल्यं वञ्चकता च प्रविष्टा । बुद्धिर्हि बहिश्चेष्टाभिरनुमीयते । सा कुटिलस्य न शक्या । वञ्चकस्य च सौहार्दम् । तस्मादेतद्द्वयं लोके भातमित्यर्थः । लौकिकधर्मदोषमाह । पित्रादिभिः कलहः । येषु सहजः स्नेहो धर्म्यस्तैः सह कलहः । पित्रादीनां सम्बन्धिभिः सह कलहः । दम्पतीनां परस्परम् । एवमेतानि निमित्तान्यन्यानि चाऽत्यरिष्टसूचकानि । समूलानि चेत्याह—**काले त्वनुगत इति** । दोषेषु कालः सानुकूलः । किञ्च । नृणां प्राणिनां सर्वेषां पूर्वयुगेषु ब्राह्मणादीनां ज्ञानादय इव लोभाद्यधर्माः स्वाभाविका जाताः । प्रकृतित्वेन विगानमपि नास्तीति भावः । **अनुजो** भीमः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

१ इतः प्राक् "कन्याविक्रयिणं तातं सुतं पित्रोरपोषकम् । ब्राह्मणान्वेदविमुखाञ्छूद्रान्वै वेदवादिनः" इति क्वचित्पठ्यमानः श्लोकः प्रक्षिप्तः । २ अपगते इति घ. ३ गमनागमनस्य निरूपणादिति क. गमनागमननिरूपणादिति ग. ४ सम्यग्गतस्येति घ. ५ सप्त मासानिति ख. ६ द्विविधेति क. ख. ७ वञ्चकतेति घ. ८ तस्मा एतद्द्वयमिति ग. ङ. ९ भीतमिति घ. १० अत्यनिष्टेति ग. ११ प्रकृतित्वे चेति घ.



आसन्यस्त्वपहतपाप्मा । अतः कालादिदोषसम्भ्रमाभावात्तेन सह विचारो युक्त इति भीमेन सह विचारयति—

युधिष्ठिर उवाच—

सम्प्रेषितो द्वारकायां जिष्णुर्बन्धुदिदृक्षया ।
ज्ञातुं च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम् ॥ ६ ॥
गताः सप्ताऽधुना मासा भीमसेन तवाऽनुजः ।
नाऽऽयाति कस्य वा हेतोर्नाऽहं वेदेदमञ्जसा ॥ ७ ॥

**सम्प्रेषित इति** । चकारादभिप्रायम् । द्वितीयचकारादन्येषामपि कालादीनाम् । तस्य स्वतोऽनिष्टं नास्तीत्याह—**भीमसेनेति** । भीमा सेना यस्य । अनु पश्चाज्जातत्वात्सोऽपि तादृशः । जिज्ञासितसन्देहेऽप्यागमनाभावे हेत्वभावात्कुतो नाऽऽयातीत्याह ॥ ६ ॥ ७ ॥

शुद्धान्तःकरणत्वात्स्वस्यैव निमित्तं स्फुरितं सम्भावनयाऽऽह—

अपि देवर्षिणाऽऽदिष्टः स कालोऽयमुपस्थितः ।
यदात्मनोऽङ्गमाक्रीडं भगवानुत्सिसृक्षति ॥ ८ ॥

**अपीति** । आ समन्तात् क्रीडासाधनम् । मोक्रीडासाधनं वा । अन्यथैवं न भवेदिति भावः ॥ ८ ॥

तत्र हेतुमाह—

यस्मान्नः सम्पदो राष्ट्रं दाराः प्राणाः कुलं प्रजाः ।
आसन् सपत्नविजयो लोकाश्च यदनुग्रहात् ॥ ९ ॥
पश्योत्पातान्नरव्याघ्र दिव्यान् भौमांश्च दैहिकान् ।
दारुणाञ्छंसतोऽदूराद्भयं नो बुद्धिमोहनम् ॥ १० ॥

**यस्मादिति** । लोकाः स्वर्गादयः । राजसूयादिकरणादवगम्यन्ते । हे **नरव्याघ्रेति** दर्शनमात्रेण न भयमिति सूचितम् । उत्पाताः अनिष्टसूचकानि निमित्तानि । त्रिविधान्यपि स्वतः क्रूराणि । अतोऽदूरादेव भयं शंसन्ति । बुद्ध्या हि भयं निवर्तयितुं शक्यते । इदं तु भयं बुद्धिमेव मोहयति ॥ ९ ॥ १० ॥

तत्राऽऽध्यात्मिकं निमित्तमाह—

ऊर्वक्षिबाहवो वामाः स्फुरन्त्यङ्ग पुनः पुनः ।
वेपथुश्चाऽपि हृदय आराद्दास्यन्ति विप्रियम् ॥ ११ ॥

**ऊर्वक्षीति** । प्राण्यङ्गत्वेऽपि नैकवद्भावो भिन्नस्वभावत्वेन दोषख्यापनार्थः । वेपथुः कम्पः । चकाराच्चिन्तादयः । आरात् समीपे ॥ ११ ॥

१ मोक्रीडासाधनमिति ख. २ भौमान्सदैहिकानिति क्वचित्पाठः । ३ अवगम्यत इति ग. ४ स्वतोऽक्रूराणीति क. ख. घ.

भौतिकमनिष्टमाह—

शिवैषोद्यन्तमादित्यमभिरौत्यनलानना ।
मामङ्ग सारमेयोऽयमभिरौदित्यभीतवत् ॥ १२ ॥
शस्ताः कुर्वन्ति मां सव्यं दक्षिणं पशवोऽपरे ।
वाहांश्च पुरुषव्याघ्र लक्षये रुदतो मम ॥ १३ ॥
मृत्युदूतः कपोतोऽयमुलूकः कम्पयन्मनः ।
प्रत्युलूकश्च कुह्वानैरनिद्रौ शून्यमिच्छतः ॥ १४ ॥

**शिवेति ।** एषा इदानीमपि दृष्टिगोचरा । अनलानना स्वभावत एवाऽग्निमुखा । अभितो रौति परीत्य रौतीत्यर्थः । सारमेयः श्वा । अभि परितः रोदिति दुष्टशब्दं करोति । मत्तो भयं न मन्यते । शस्ता अश्वादयः । अपरे गर्दभादयः । वाहा अश्वाः । चकाराद्गवादयः । पुरुषव्याघ्रेति सम्बोधनं तस्य शङ्काभावसूचकम् । ममाऽप्यश्वाः सर्वसुखेन वियमाना अपि रोदनं कुर्वन्त इव लक्ष्यन्ते । अयं कपोतो मृत्युदूतः मृत्युसमीप आकारणार्थमागतः । दक्षिणदेशादागत्य शब्दकरणादवसीयते । कपोतोऽयमित्यन्तं भिन्नं वाक्यम् । उलूकादि भिन्नम् । प्रत्युलूकः काकः । जातिविशेषो वा । चकारादन्येऽपि येषां शाश्वतिको विरोधः । कुह्वैः (?) कुत्सितशब्दैः । न विद्यते निद्रा याभ्यां तौ । शून्यं जगदिच्छतः ॥ १२ ॥ १३ ॥ १४ ॥

आधिदैविकमाह—

धूम्रा दिशः परिधयः कम्पते भूः सहाऽद्रिभिः ।
निर्घातश्च महांस्तात साकं च स्तनयित्नुभिः ॥ १५ ॥
वायुर्वाति खरस्पर्शो रजसा विसृजंस्तमः ।
असृग्वर्षन्ति जलदा बीभत्समिव सर्वतः ॥ १६ ॥
सूर्यं हतप्रभं पश्य ग्रहमर्दं मिथो दिवि ।
ससङ्कुलैर्भूतगणैर्ज्वलिते इव रोदसी ॥ १७ ॥
नद्यो नदाश्च क्षुभिताः सरांसि च मनांसि च ।
न ज्वलत्यग्निराज्येन कालोऽयं किं विधास्यति ॥ १८ ॥

**धूम्रा दिश इति ।** धूमयुक्ता दिश एव परिधयः । मध्ये त्रैलोक्यं जलधरैरित्यर्थः । निर्घातो निरभ्रविद्युत्पातः । मेघाभावेऽपि गर्जितानि च । खरस्तीक्ष्णः स्पर्शो यस्य । रजसा पांसुवृष्ट्या । तमः अन्धकारम् । असृक् रुधिरम् । बीभत्समिव विष्ठारूपमिव । पश्येति नाऽत्र तिरोहितमिव । ग्रहाणां शुक्रादीनां मर्दं युद्धम् । पश्येत्युभयत्र सम्बन्धः । दिवि आकाशे न तु श्रवणमात्रे । सम्यक्

1 दृष्टिगोचरेति क. ग. 2 रौतीति ख. ग. 3 धूमयुक्ता इति क. 4 पांसुवृष्ट्येति ग.



सङ्कुलैः प्रेतपिशाचादीनां गणैर्हेतुभिर्द्यावापृथिवी ज्वलिते इव । ते हि मध्ये स्थिता धावन्त इतस्ततश्च ज्वालयन्तीवेत्यर्थः । वाय्वादिहेतुव्यतिरेकेणाऽपि क्षुभिताः पङ्किलान्नस्नानजलाः । मनांसि चाऽस्मदादीनाम् । अग्निराज्येन न ज्वलति जलेनेव । एवं सर्वस्याऽन्यथा कर्ता कालः किं विधास्यतीति न ज्ञायत इत्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

तेषां निमित्तानामवान्तरफलमपि जातमित्याह—

न पिबन्ति स्तनं वत्सा न दुह्यन्ति च मातरः ।
रुदन्त्यश्रुमुखा गावो न हृष्यन्त्यृषभा व्रजे ॥ १९ ॥
दैवतानि रुदन्तीव स्विद्यन्ति ह्युच्चलन्ति च ।
इमे जनपदा ग्रामाः पुरोद्यानाकराश्रमाः ।
भ्रष्टश्रियो निरानन्दाः किमघं दर्शयन्ति नः ॥ २० ॥

**न पिबन्तीति ।** क्षुधिता अपि वत्साः स्तनं न पिबन्तीत्यर्थः । मातरो गावः । सर्वेषामेव तदुपजीवनात् । न दुह्यन्ति दोहनं न कारयन्तीत्यर्थः । अश्रूणि मुखे यासाम् । ऋषभाः पुङ्गवाः । दैवतानि प्रतिमाः । स्विद्यन्ति स्वेदयुक्तानि भवन्ति । उच्चलन्ति देशान्तरं गच्छन्ति । भ्रष्टा श्रीर्येषाम् । निर्गत आनन्दो येभ्यः । अघं दुःखजनकं पापम् । नः अस्माकम् ॥ १९ ॥ २० ॥

एतेषां हेतुं सम्भावयति—

मन्य एतैर्महोत्पातैर्नूनं भगवतः पदैः ।
अनन्यपुरुषश्रीभिर्हीना भूर्हतसौभगा ॥ २१ ॥

**मन्य इति ।** महोत्पातैर्हेतुभिः कृत्वा भूः पदैर्हीनेति मन्ये । न विद्यते अन्यपुरुषेषु श्रीः ध्वजवज्रादिरूपा येषाम् । एवमन्वयव्यतिरेकाभ्यां गाम्भीर्यमर्थं सर्वं भगवदन्वयव्यतिरेकाभ्यामपि तत्साक्रियाभावादिति निरूपितम् ॥ २१ ॥

सूचकानां शीघ्रफलत्वमाह—

सूत उवाच—

इति चिन्तयतस्तस्य दृष्टारिष्टेन चेतसा ।
राज्ञः प्रत्यागमद्ब्रह्मन् यदुपुर्याः कपिध्वजः ॥ २२ ॥
तं पादयोर्निपतितमयथापूर्वमातुरम् ।
अधोवदनमब्बिन्दून्सृजन्तं नयनाब्जयोः ॥ २३ ॥

1 ज्वालिते इति ग. 2 एवेति क. ख. ग. घ. 3 नदन्तीति क्वचित्पाठः 4 स्तनमिति नास्ति क. ख. ग. 5 दुग्धोपजीवनादिति क. ग. घ. 6 स्वेदयुक्तानीत्यपि ख.

विलोक्योद्विग्नहृदयो विच्छायमनुजं नृपः।
पृच्छति स्म सुहृन्मध्ये संस्मरन्नारदेरितम् ॥ २४ ॥

इति चिन्तयत इति। दृष्टमालोचनेनाऽरिष्टं येन। तादृशचेतसो। राज्ञः सतः। यदुपुर्याः द्वारकायाः। कपिध्वज इति शीघ्रागमनं सूचितम्। प्रतिकूलतयाऽऽगमनम्। आगत्य वचनादिकमनुक्त्वैव पादयोः पतितम्। सर्वदा यथाऽऽयाति न तथेत्ययथापूर्वम्। आतुरं विच्छायं (?) कृशम्। दुःखाविष्काराभावेऽपि बहुकालाभ्यासात्स्वत एवाऽश्रुबिन्दवो नेत्रकमलाभ्यां पतन्ति। कमलपदं (?) जलावरणसूचकम्। विगता च्छाया कान्तिर्यस्य। एतादृशेन सह सम्भाषणस्याऽनुचितत्वेऽप्यनुजत्वात्तथा। नृपत्वाद्बहुनिमित्तज्ञानम्। तेन नै दर्शनमात्रेण भाव्यर्थनिश्चयज्ञानमिति पृच्छति। सुहृदां मध्ये एकान्ततुल्ये। दृष्टश्रुताभ्यामनिष्टशङ्की। अनेनाऽर्जुनतुल्योऽयमपीत्युक्तं भवति। स्मेति प्रसिद्धे। अनेन सर्वजनीनं तस्य भगवत्परत्वमित्युक्तम् ॥ २२ ॥ २३ ॥ २४ ॥

युधिष्ठिर उवाच—

कच्चिदानर्त्तपुर्यां नः स्वजनाः सुखमासते।
मधुभोजदशार्हार्हसात्त्वतान्धकवृष्णयः ॥ २५ ॥

आनर्त्तपुरी द्वारका। ये पूर्वं रक्षकत्वेन षड्विधा उक्तास्ते सुखिनः कच्चित्। ते चेत्सुखिनस्तदा मूलस्वास्थ्यं स्वयमेव ज्ञातं भविष्यतीति प्रश्नः ॥ २५ ॥

तान् सामान्यतः पृष्ट्वा विशेषेण पृच्छति—

शूरो मातामहः कच्चित्स्वस्त्यास्ते वाऽथ मारिष।
मातुलः सानुजः कच्चित्कुशल्यानकदुन्दुभिः ॥ २६ ॥
सप्त स्वसारस्तत्पत्न्यो मातुलान्यः सहात्मजाः।
आसते सस्नुषाः क्षेमं देवकीप्रमुखाश्च ताः ॥ २७ ॥
कच्चिद्राजाऽऽहुको जीवत्यसत्पुत्रोऽस्य चाऽनुजः।
हृदीकः ससुतोऽक्रूरो जयन्तगदसारणाः ॥ २८ ॥
आसते कुशलं कच्चिद्ये च शत्रुजिदादयः।
कच्चिदास्ते सुखं रामो भगवान् सात्त्वतां प्रभुः ॥ २९ ॥
प्रद्युम्नः सर्ववृष्णीनां सुखमास्ते महारथः।
गम्भीररयोऽनिरुद्धो वर्द्धते भगवानुत ॥ ३० ॥

१ तादृक्चेतस इति षष्ठी ख. २ शीघ्रगमनमिति घ. ३ नेति नास्ति क. ग. घ. ङ. ४ अनुमानशङ्कीति ग. घ. ङ.



सुषेणश्चारुदेष्णश्च साम्बो जाम्बवतीसुतः।
अन्ये च कार्ष्णिप्रवराः सपुत्रा ऋषभादयः ॥ ३१ ॥
तथैवाऽनुचराः शौरेः श्रुतदेवोद्धवादयः।
सुनन्दनन्दशीर्षण्या ये चाऽन्ये सात्त्वतर्षभाः ॥ ३२ ॥
अपि स्वस्त्यासते सर्वे रामकृष्णभुजाश्रयाः।
अपि स्मरन्ति कुशलमस्माकं बद्धसौहृदाः ॥ ३३ ॥

शूर इति। मारिषः शूरः। सम्बोधनं वा। वाशब्देन वृद्धत्वात्तदकौशलेऽपि न चिन्तेति सूचितम्। अत एव पूर्ववैलक्षण्याय अथ अग्रिमाणां कुशलमपेक्ष्यत एव। आनकदुन्दुभिरिति भाग्यवत्त्वं सूचितम्। सहात्मजा इति समस्तं पदम्। परं न सादेशः। आहुकः पितृनाम्ना निरूपित उग्रसेनः। असन् पुत्रो यस्य। अविद्यमानपुत्रो वा। अत एव दुःखापनोदार्थं राज्येऽधिकृतः। हृदीकः ससुतः। अक्रूरोऽपि। जयन्तादयो भ्रातरः। सर्वे नवमे स्पष्टा भविष्यन्ति। रामो बलभद्रः। सर्वेषां सौख्यं तन्मूलकमिति ते त्रयो भिन्नतया स्वातन्त्र्येण निरूप्यन्ते। बलभद्रः प्रद्युम्नोऽनिरुद्धश्च भगवानिति महारथ इति भगवानिति च। सुषेणादयः पुत्राः। कार्ष्णिप्रवराः कृष्णपुत्राः प्रवरा येषाम्। प्रद्युम्नादिमित्राणि। ऋषभादयः कार्ष्णिषु वा प्रवराः। शौरेः भगवतः। सुनन्दनन्दौ शीर्षण्यौ श्रेष्ठौ येषाम्। भगवदीयत्वेन तेषां प्रश्न इत्यभिप्रायेणाऽऽह—तेऽपि स्वस्त्यासत इति। रामपदमावेशाभिप्रायेण प्रतीत्यभिप्रायेण वा। यथा तेषां कुशलमस्माभिः स्मर्यते तथा तेऽप्यस्मत्कुशलं स्मरन्तीति सम्भावना। अनेन कुशलं सकार्यं पृष्टम्। स्वयमतिकुशलाः परकुशलं स्मरन्तीति ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

भगवतः कुशलप्रश्नस्य कर्तुमयुक्तत्वेऽपि बहूनां रक्षणीयत्वेनोपस्थितत्वादाराध्यानां ब्राह्मणानां कालवशेनोत्पथानां रक्षणवैयग्र्यसम्भवाद्भक्तानामपि तथात्वाच्च शत्रुवधार्थमन्यत्र गमनसम्भावनाद्बहिर्मुखानां यादवानां परस्परं कलहसम्भावनाच्च भगवत्त्वेऽपि प्रकारविशेषं पृच्छति—

भगवानपि गोविन्दो ब्रह्मण्यो भक्तवत्सलः।
कच्चित् पुरे सुधर्मायां सुखमास्ते सुहृद्वृतः ॥ ३४ ॥

भगवानपीति। गोविन्दः अस्मदादीनामिन्द्रः। ब्रह्मण्यः ब्राह्मणहितः। भक्तेषु वत्सलः। पुरे द्वारकायाम्। सुधर्मायां सभायाम्। सुहृद्वृतः सुखमास्त इति। सुहृदां सुखं कुर्वन्नास्त इत्यर्थः। स्यमन्तकप्रसङ्गवदसुखसम्भावनात् ॥ ३४ ॥

किमनेन प्रश्नेनेत्यत आह—

मङ्गलाय च लोकानां क्षेमाय च भवाय च।
आस्ते यदुकुलाम्भोधावाद्योऽनन्तसखः पुमान् ॥ ३५ ॥

१ सौख्यं तु तन्मूलकमिति ख. २ चकारो नास्ति ख. ३ येषान्ते इति घ. ४ सम्भावनादिति ख. ५ भक्तानामपि तथात्वाच्च भगवत्त्वेऽपीत्यादि ग.

**मङ्गलाय चेति** । भगवतो यद्द्वारकायां निवसनं तत्सर्वप्राणिनां विशेषतो द्वारकावासिनां मङ्गलाय । निविष्टपदरक्षणाय च आधिक्याय च । ननु यदि तेषां भाग्यं मङ्गलजनकं न भवेत्तदा किं भगवत्स्थित्या । तत्राऽऽह—**आद्य इति** । मूलकारणभूत इत्यर्थः । "**कालं कर्म स्वभावं चे**" ति वाक्यात्सृष्टिसमये भगवता कार्यार्थं परिगृहीताः कालादयः । ततो जीवान् सृष्ट्वा तेभ्योऽदृष्टरूपं कर्म विभक्तम् । अतस्ते तादृशा एव । अथवा । यथापूर्वं विभक्ता इदानीमपि स्वेच्छया विभज्यन्ते । तस्यैव विभाजकत्वात् । ननु कालेन यथास्थानस्थिताः सर्वेऽपकृष्यन्ते । तद्भगवता कथं क्षेमः । तत्राऽऽह—**अनन्तसख इति** । अनन्तः कालस्तस्य सखा । अनेन भगवदभिप्रेतस्य स्थानं नाऽपकर्षतीत्युक्तम् । ननु प्राकृतस्योद्भवः पूर्वमेव सिद्धो यथाप्रकृतिपरिणामम् । कथमिदानीमुद्भवो भवेत् । तत्राऽऽह—**पुमानिति** । पुरुषाधिष्ठानेनैव नित्या प्रकृतिस्तथा परिणमति । तस्येदानीमपि विद्यमानत्वादुद्भवेन परिणता भविष्यतीत्यर्थः । अतो भगवत्स्थितेरेतदर्थत्वात्कार्यं कुर्वंस्तिष्ठति नवेति प्रश्नः । "**न ह्यस्य कर्हिचिदि**" ति वाक्याद्द्वितीयः पक्षः स्थितौ क्लेशाभावश्च ध्वनिना सूचितः । अम्भोधावनन्तसख इति शेषशायी समुद्रे तिष्ठतीत्यर्थः ॥ ३५ ॥

यद्बाहुदण्डगुप्तायां स्वपुर्यां यदवोऽर्चिताः ।
क्रीडन्ति परमानन्दं महापौरुषिका इव ॥ ३६ ॥

एतस्मिन्नर्थे निदर्शनमाह पुरुषाणां स्त्रीणां च श्लोकद्वयेन क्रमेण । द्वारकायां सर्वे यादवाः स्वर्चिता एव तिष्ठन्ति । चोराग्निशत्रुभयाभावात् । देशभयाभावात् स्वेति । कार्यान्तराभावात् क्रीडन्ति । भोजनशयनादिकमपि क्रीडात्वेन कुर्वन्ति । परमानन्दो यथा भवति तथा । यथा परस्परं क्रीडाकर्तृणां स्वरूपं क्रीडायां विनियुज्यते तथा परमानन्दं परस्परार्थे विनियुञ्जत इत्यर्थः । भगवत्यात्मीयत्वस्य दृढत्वाद्भगवत्कृतमात्मकृतमेव मन्यमाना महापौरुषयुक्ता इव निःशङ्काः क्रीडन्तीत्यर्थः ॥ ३६ ॥

स्त्रीणामपि तथात्वमाह—

यत्पादशुश्रूषणमुख्यकर्मणा
सत्यादयो द्व्यष्टसहस्रयोषितः ।
निर्जित्य सङ्ख्ये त्रिदशांस्तदाशिषो
हरन्ति वज्रायुधवल्लभोचिताः ॥ ३७ ॥

**यत्पादेति** । पादशुश्रूषणमेव मुख्यं कर्म । अन्यत्तु लौकिकम् । लौकिकापेक्षया विहितस्यैव मुख्यतया करणात्स्वर्गे भोक्तव्ये धर्मपरित्यागेन भोगो मा भवत्विति विषयबलादत्रैव स्वर्गमानयन्ति । सत्या सत्यभामा । तस्याः प्रियत्वप्रसिद्धेस्तद्भावमेवाऽन्या अपि शिक्षन्तीति सत्यादय इत्युक्तम् । अष्टानां सहस्राणां समाहारः । स्त्रीत्वविवक्षाभावान्न ङीप् । त्रिदशान् स्वयं निर्जित्येति स्वेच्छया गरुडप्रेरणयाऽवगम्यते । स्त्रीणां स्त्रीकर्तृकभोगः स्वर्ग एव वाञ्छित इति—**वज्रायुधवल्लभोचिता** इत्याह । वज्रायुधस्य इन्द्रस्य वल्लभा इन्द्राणी । तस्या उचितं पारिजातादि ॥ ३७ ॥

१ मङ्गलायेति नास्ति ख. घ. २ तत्राहेति नास्ति ख. ३ दृष्ट्वेति घ. ङ. ४ कथमिदानीमुद्भवेदिति क. ५ क्रीडनमिति घ. ङ. ६ स्त्रीविवक्षाभावादिति क. ग. घ. ङ.



एवमैहिकामुष्मिके एकत्र भुञ्जत इत्युक्तम् । पुरुषाणां त्वामुष्मिकस्याऽनुक्तत्वात्सत्यादिवदेकीकृत्य भोगासम्भवादामुष्मिकं पृथगाह—

यद्बाहुदण्डाभ्युदयानुजीविनो
यदुप्रवीरा ह्यकुतोभया मुहुः ।
अधिक्रमन्त्यङ्घ्रिभिराहृतां बला-
त्सभां सुधर्मां सुरसत्तमोचिताम् ॥ ३८ ॥

**यद्बाहुदण्डाभ्युदयानुजीविन इति** । अन्यः स्वर्गतुल्यो विषयः स्वतः सिद्धः । सभा परं न्यूनेति तद्भोगमाह । बाहुदण्डयोरभ्युदयः सर्वोत्कर्षस्तमनु जीवनं यस्य येषाम् । न यदुश्रेष्ठत्वेन निर्भयत्वम् । किन्तु सेवकत्वेन । स्वर्गे हि देवाः सकृत् (?) स्नातास्तस्यां सभायां सकृदुपविशन्ति पादावस्पर्शयित्वा । तादृशीं सभां मुहुरङ्घ्रिभिराक्रमन्ति । तत्राऽपि बलात् । न हि लौकिकक्रियया सा लभ्या । शताश्वमेधकर्तृलभ्यत्वात् । तदाह—**सुरसत्तमोचितामिति** । सुरसत्तमा इन्द्रादयः ॥ ३८ ॥

एवं सर्वान् पृष्ट्वाऽर्जुनगतवैक्लव्यहेतूनुद्भावयति—

कच्चित्तेऽनामयं तात भ्रष्टतेजा विभासि मे ।
अलब्धमानोऽवज्ञातः किं वा तात चिरोषितः ॥ ३९ ॥

**कच्चित्तेऽनामयमिति** । अनामयमारोग्यं कच्चित् । रोगेणाऽप्येवं भवति । किञ्च । तेजोऽपि तव गतमिति लक्ष्यते । तत्र मम दृष्टिरेव प्रमाणमित्याह—**विभासीति** । तेजोगमनमन्तःशोकात्पापाच्च भवति । तत्र प्रथममन्तःशोकहेतून् गणयति—**अलब्धमान इति** । श्वशुरगृहे मानाभावोऽन्तस्तापहेतुः । अवज्ञा च सुतराम् । अवज्ञायां हेतुः—**चिरोषित इति** । श्वशुरगृहे बहुकालवासेऽवज्ञा भवति । अवज्ञातः किं वेति सम्बन्धः । अथवा । चिरवास एव शोकहेतुः ॥ ३९ ॥

एवमन्तःकरणशरीरकृतदोषेण ताप उपपादितः । इन्द्रियकृतदोषमाह—

कच्चिन्नाऽभिहतोऽभावैः शब्दादिभिरमङ्गलैः ।
न दत्तं युक्तमर्थिभ्य आशया यत्प्रतिश्रुतम् ॥ ४० ॥

**कच्चिन्नाऽभिहत इति** । अभावैः स्नेहशून्यैः रूक्षैः पुरुषैः । अमङ्गलैर्वा गालिदानैः । आदिशब्देन पश्चाऽपि गृहीताः । इदानीमधर्म्याणि सम्भावयति—**न दत्तमिति** । **आशया यत्प्रतिश्रुतम्** । चतुर्थ्यर्थे "**बहुलं छन्दसी**" त्याशायै दास्यामीति प्रतिज्ञातम् । तदाशाभङ्गहेतुत्वाददानं "**सर्वमिष्टं दत्तं वृङ्क्त**" इति श्रुतेस्तेजोहर्तृ भवति ॥ ४० ॥

दानं शरणागतरक्षा च क्षत्रियस्य मुख्यम् । शरणागतानामपि मध्ये त्वमेतानि किं न परिपालितवानसीत्याह—

कच्चित्त्वं ब्राह्मणं बालं गां वृद्धं रोगिणं स्त्रियम् ।
शरणोपसृतं सत्त्वं नाऽत्याक्षीः शरणप्रदः ॥ ४१ ॥

१ यस्येति पदं बाहुदण्डयोरित्यतः प्राग्युज्यमानमपि लेखकप्रमादादिह पतितं प्रतिभाति । २ हेतुमिति घ. ३ अन्तस्तापे हेतुरिति क. घ. ४ पुरुषैरिति नास्ति ख. ग. घ. ५ अधर्माणीति क. ग. घ.

कच्चिदिति । ब्राह्मणः सर्वावस्थासु परिपाल्यः । स्त्रियश्च । अन्ये वृद्धबालरोगिणः । अन्यदपि शरणोपसृतं सत्त्वं हरिणादि । नाऽत्याक्षीः न त्याजितवानसि । अन्यैः पीडायां समुपस्थितायां तत्त्याजनं न कृतमित्यर्थः ॥ ४१ ॥

कच्चित्त्वं नाऽगमोऽगम्यां गम्यां वाऽसत्कृतां स्त्रियम् ।
पराजितो वाऽथ भवान् नोत्तमैर्नासमैः पथि ॥ ४२ ॥

धर्मसूक्ष्माभावमाह । त्वं ना पुरुषो भूत्वा अगम्यामगमः । कामवशेनाऽगम्यागमनं कृतम् । गम्यां वा असत्कृतां अपमानं कृत्वाऽगम्यामगम इति । शत्रुपराजयोऽप्येतद्धेतुरिति तमाह—पराजित इति । अस्य पूर्वोक्तानुभयरूपत्वात्—अथेति । नोत्तमैः । नसमासः । नासमैः । अधमैः । समैर्वाऽधमैर्वा पराजित इत्यर्थः ॥ ४२ ॥

मिष्टान्नादिकं याचकेभ्यो बालादिभ्योऽदत्वा भोजनेऽप्येवं भवतीति लौकिकमाशङ्कते—

अपिस्विित्पर्यभुङ्क्थास्त्वं सम्भोज्यान् वृद्धबालकान् ।
जुगुप्सितं कर्म किञ्चित्कृतवांश्च यदक्षमम् ॥ ४३ ॥

अपिस्विदिति । परिवर्जनार्थः । सम्भोज्यान् वृद्धबालकान् परित्यज्य किमभुङ्क्थास्त्वम् । सम्यग्भोज्या हि ते । भोज्या (?) वृद्धबालकानिति पाठे भोज्याः स्त्रियः । सम्भोज्य वा । "अधाऽऽदावुत्तरे विभाग" इति न्यायेन ह्रस्वः । अवृद्धबालकान् वा । अन्यदपि जुगुप्सितं पश्चाज्जुगुप्साजनकम् । अक्षमं च पश्चात्सोढुमशक्यं च ॥ ४३ ॥

मुख्यं कारणमुत्प्रेक्षते—

कच्चित्प्रेष्ठतमेनाऽथ हृदयेनाऽऽत्मबन्धुना ।
शून्योऽसि रहितोऽनित्यं मन्यसे तेऽन्यथा न रुक् ॥ ४४ ॥

कच्चिदिति । हृदयेन । हृत् अयते प्रविशतीति हृदयोऽन्तर्यामी । अथेति पूर्वव्यावृत्त्यर्थः । आत्मत्वेन बन्धुः । रहितः तादृशेन विरहितः शून्योऽसि । अनित्यं मन्यसे । आत्मनि गते देहस्थितेरनित्यत्वात् । अतिशोकेऽयमेव हेतुः । अन्यथा ते न रुक् । अन्यस्मादतिप्रेम्णो यादृश(?)ऽपि चिन्ता भवति । तत्र स्वयमेव हेतुरित्यर्थः ॥ ४४ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां प्रथमस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः ।

एवं चतुर्दशे हेतुं सम्भाव्याऽर्थं विनिश्चयात् ।
कृतकार्यः शास्त्ररीत्या मुक्तोऽभूदिति वर्ण्यते ॥ १ ॥

१ सम्भोज्या वा इति क. ङ. सम्भोज्या इति ध. २ अधा तावुत्तरे विभाग इति ग. ३ बन्धु इत्यविसर्गः पाठः क. घ. ४ देहादिस्थितेर्नित्यत्वादिति क. ग. घ. ङ. ५ अतिशोकेऽप्ययमेवेति घ. ६ अर्थविनिश्चयादिति ख.



भार्याभ्रातृभिरश्वैव सहितो मुक्तिमेयिवान् ।
पञ्चदशे महाराजः कृष्णभक्तयेति रूप्यते ॥ २ ॥
प्रेमोपकारज्ञानानि जिष्णौ राजार्थमाह हि ।
एवं दृष्ट्वैव राजाऽपि तथैवाऽभूत्ततः परः ॥ ३ ॥

प्रथममर्जुनस्य प्रेमौत्कण्ठ्यमाह एवमिति त्रिभिः—

सूत उवाच—

एवं कृष्णसखः कृष्णो भ्रात्रा राज्ञा विकल्पितः ।
नानाशङ्कास्पदं रूपं कृष्णविश्लेषकर्शितः ॥ १ ॥
शोकेन शुष्यद्वदनहृत्सरोजो हतप्रभः ।
विभुं तमेवाऽनुध्यायन्नाऽशक्नोत्प्रतिभाषितुम् ॥ २ ॥

एवं कृष्णोऽर्जुनो नानाशङ्कास्पदं रूपं विकल्पितोऽपि नाऽशक्नोदिति सम्बन्धः । कृष्णस्य भगवतः सखा । युधिष्ठिरप्रश्नेनैव व्याकुल इति । एतादृशो वा भगवतोऽनेनानुपसंहर्तुमागत इति कृष्णपदप्रयोगः । अत एव कृष्णसखः । अन्यथा तत एव गमनमुचितं स्यात् । "अर्जुनेनाऽन्विताः सर्वे" इति भगवद्वाक्येऽपि तत एव गमनमुचितं स्यात् । "तावत्तूयमवेक्षध्वमि"ति नारदवाक्यं च सत्यं स्यात् । "कृष्णौ यदुकुरुकुलाधि"ति च । अत्रस्थापकत्वं तु शिक्षार्थं भगवतेव (?) लीला । अन्यथा भगवतः सावशेषकार्यकर्तृत्वं स्यात् । अर्जुनस्य तेजः शोकश्चाऽयुक्तः स्यात् । अत एव कृष्ण एवाऽर्जुने समाविष्टः समागत इति युधिष्ठिरयुक्तिरभिमता । नानाशङ्कानां पूर्वोक्तानामास्पदं रूपं यथा स्यात् तथा विकल्पितः । रूपमेवाऽर्जुन इति वा । प्रतिभाषितुं नाऽशक्नोदिति वा सम्बन्धः । कृष्णस्य यो विश्लेषः । विशेषेण श्लेषो वा । तेन कर्शितः क्षीणः । अनुत्तरे हेतू उत्तरत्र उक्तः । शोकेन शुष्यच्छोषं प्राप्नुवत् हृत्सरोजं वदनसरोजं च यस्य । अत एव हतप्रभः । अन्तस्तापे बहिः कान्तेर्नाशदर्शनात् । उत्तरध्यानयोर्युगपदुपस्थितावपि तमेव ध्यायन्नुत्तरं वक्तुं नाऽशक्नोत् । तत्र हेतुः—विभुमिति । उत्तरापेक्षया ध्यानविषयस्य समर्थत्वात् ॥ १ ॥ २ ॥

शोकसहकृतं ध्यानं जायत इति शोकं दूरीकरोतीत्याह—

कृच्छ्रेण संस्तभ्य शुचः पाणिनाऽऽमृज्य नेत्रयोः ।
परोक्षेण समुन्नद्धप्रणयौत्कण्ठ्यकातरः ॥ ३ ॥

कृच्छ्रेणेति । शोकस्तु स्मरणहेतुक इति स्मरणे विद्यमाने शोकनिवृत्तिरशक्या । तथापि तादृशधर्मविशिष्टं भगवन्तं तेभ्यो धर्मेभ्यः पृथक्कृत्य पूर्वधर्मैः सह संयोज्य शोकदूरीकरणात्कृच्छ्रेणेत्युक्तम् । शुचः । शोकाऽश्रूणि । अभ्यन्तरात्समागच्छन्ति तत्रैव स्तम्भितानि । नेत्रयोः समागतानि तु पाणिना आमृज्य आ समन्तात् मृष्ट्वा । एवं कृते पूर्वोक्तधर्मसंयोजनात्तत्काले स्मृतिः परोक्षशब्दवाच्योऽर्जुनस्याऽन्तः प्रविष्ट इत्याह—परोक्षेणेति । अक्षात्परः परोक्षः । स्वेच्छयैव पूर्वमिन्द्रियगोचर-

१ महाराजकृष्णपक्षे निरूप्यत इति ग. महाराजकृष्णभक्तिनिरूपण इति घ. २ एवमिति ग. घ. । तथा वाऽभूदिति क. ख. ग. घ. ४ कल्पित इति घ. ङ. ५ शोकदूरीकरणयेति ख. शोकनिवृत्तिः शक्येति घ.

रोऽपि साम्प्रतमिच्छाया अभावात्परोक्ष एव । तेन रसमुद्बद्ध आविष्टः सम्यङ्रुद्धः । अयोगोलकं वह्निनेव । अनेनाऽन्तः कथने बलमुक्तम् । भक्तिरपि पूर्वं प्रविष्टा स्वकार्यं करोतीत्याह—**प्रणयौत्कण्ठ्यकातर इति** । प्रणयेन स्नेहेन यदौत्कण्ठ्यं उद्गतकण्ठता कण्ठाभावः । कण्ठमुद्रणमिति यावत् । तेन कातरः कदा वा वक्ष्यामीत्याकुलः ॥ ३ ॥

भगवान् वदतीति वक्तव्यम् । भक्तिर्वदति न वक्तव्यमिति । एवं सति भगवत्स्मरणस्य प्राबल्याद्भक्तिहेतुकभगवत्स्मरणेन भगवति पुष्टे तत्तेजसा कण्ठमुद्रणेऽपगते उद्गतेन बाष्पेण कण्ठे गद्गदता जाता । सा पूर्वं व्याख्याता । ततो भक्तिं दूरीकृत्य भगवन्तमेवोररीकृत्य पूर्वधर्मयोगात्तानि स्मरन्नाहेत्याह—

**सख्यं मैत्रीं सौहृदञ्च सारथ्यादिषु संस्मरन् ।**

**नृपमग्रजमित्याह बाष्पगद्गदया गिरा ॥ ४ ॥**

**सख्यमिति** । समानशीलव्यसनत्वं **सख्यम्** । गुह्यगोपनगुणप्रकटीकरणापद्गतात्यागादिधर्मवत्त्वं **मैत्री** । सारथ्यादिषु भगवता द्वयं कृतम् । **सौहृदञ्च** । सुहृदो भावः सतामिव कृत्यम् । बन्धुकृत्यं वा । इदमपि प्रकटीकृतम् । चकारात्स्वामित्वगुरुत्वे । आदिशब्देन पार्षदसेवनदौत्यवीरासन (?) अनुगमनादि । असमासनिर्देशः पृथक्स्मरणार्थः । इति वक्ष्यमाणप्रकारम् । गिरा । न त्वभिनयेन । शोके तस्याऽपि सम्भवात् ॥ ४ ॥

राज्ञा द्वयं पृष्टम् । यादवानां कुशलमर्जुनशोके हेतुश्च । तत्र सन्निहितत्वादुक्तन्यायेन भक्तेस्तिरोहितत्वाच्च शोकहेतुमेवाऽऽह वञ्चित इत्यादि भस्मन् हुतं कुहकराद्धमिवोप्तमूष्यामित्यन्तेन—

**अर्जुन उवाच—**

**वञ्चितोऽहं महाराज हरिणा बन्धुरूपिणा ।**

**येन मेऽपहृतं तेजो देवविस्मापनं महत् ॥ ५ ॥**

भगवता वञ्चितस्य ममेयं गतिरित्यर्थः । वञ्चनप्रकारमाह—**येनेति** । ननु भगवान् परमकृपालुः कथं वञ्चयति ? तत्राऽऽह—**हरिणेति** । सर्वदुःखहर्त्ता । यदीदानीमर्जुनस्य तेजो नाऽपहरेत्तदा यादवानामिव कालवशादस्याऽप्यौद्धत्ये सर्वनाशः स्यात् । अस्य मुक्तिर्न स्यात् । अतः सर्वरक्षार्थं तेजोऽपहृतमित्यर्थः । ननु तेजोऽपहरणनिमित्तसान्निध्यं किमर्थं कृतमित्याशङ्क्याऽऽह—**बन्धुरूपिणेति** । तत्रापि भगवता वञ्चनं कृतम् । बन्धुरूपमस्याऽस्तीति बन्धुरूपी मातुलपुत्र इव । ततो लौकिकव्यवहारेण निकटे गते तेजोऽपहृतमित्यर्थः । ननु स्थितेऽपि तेजसि देवानां रक्षकत्वात्किमनेनाऽनिष्टं भवेदित्यत आह—**देवविस्मापनमिति** । देवान् विस्मापयतीति । ननु वामनस्य विद्यमानत्वान्न शङ्केत्यत आह—**महदिति** ॥ ५ ॥

१ अन्तःकथन इति क. २ पूर्वं इति घ. ३ यत्कण्ठ्यं उद्गतो कण्ठाभाव इति ख. ४ वदति इति घ. ५ उद्गतेति घ. ६ भगवन्तमेवोररीकृत्येति नास्ति ग. ७ वीरासनानुगमनादीति रामस्य पाठस्तु प्रतिभाति । उपलब्धेषु पुस्तकेषु तथा पाठदर्शनात्तु यथोपलम्भं मूले निवेशः । पार्षदसेवनदौत्यरीत्या सेवन अनुगमनादीति तु पाठः घ. ८ शोकहेतूनिति क. ग. घ. ९ बन्धुरूपमिति ख.



ननु तेजसि गतेऽपि[1] मद्यादीनां विद्यमानत्वात्का तत्र चिन्तेत्यत आह—

**यस्य क्षणवियोगेन लोको ह्यप्रियदर्शनः ।**

**उक्थेन रहितो ह्येष मृतकः प्रोच्यते यथा ॥ ६ ॥**

**यस्येति** । यस्य तेजसः क्षणवियोगेन सर्वोऽपि लोकोऽप्रियदर्शनो जातः । अप्रियं दर्शनं यस्य । तेजसि गते जगद्द्रष्टुमपि न रोचते । किं मद्यादिना । क्षुदभावेऽन्नमिव । कामाऽभावे कामिनीव । किञ्च । तेजसा हीन एष मल्लक्षणः पुरुष उक्थेन प्राणेन रहितः । प्राणकार्यं हि बलम् । तद्गतमेव । तस्मिन् गते वृक्षादाविव प्राणोऽकिञ्चित्कर इत्यर्थः । किञ्च । लोकप्रतीत्याऽप्यहं तथैव जातः । तदाह—**मृतकः प्रोच्यते यथेति** । यथा मृतको लोकैः प्रोच्यते नाऽयमत्र स्थापनीयो ज्वालनीयो दूरीकर्त्तव्य इति । तथा मल्लक्षणोऽपि जनो लोकैरुक्त इत्यर्थः । एवं तेजोऽपहरणेन मृतप्राय एवाऽहं जात इत्युक्तम् ॥ ६ ॥

नन्वस्य वञ्चकत्वं ज्ञातं चेत्कथं सख्यं कथं वा शाश्वतो भजनीयतेत्याशङ्क्य वञ्चनमधैव कृतं न पूर्वमित्याह—**यत्संश्रयादित्यादि तेनाऽहमद्य मुषितः पुरुषेण भूम्नेत्यन्तेन** ।

गुणस्वभावभेदेन कृष्णेनोपकृता वयम् ।
गुणैस्तु नवधा योगात्स्वभावेन त्रिधा पुनः ॥
एवं द्वादशधा कृष्णः कृतार्थीकृत्य साम्प्रतम् ।
अवञ्चयदिति ह्येकं तेनाऽन्यस्य च संश्रयः ॥
एवं चतुर्दशश्लोकैः पाण्डवेषु हरेर्गुणाः ।
तावद्भिरेव स्वज्ञानैश्चतुर्दशगतिं ययुः ॥

तत्र प्रथमं सत्त्वगुणभेदान् वक्तुं रजोमिश्रसत्त्वेन भगवता य उपकारः कृतो, रजोमिश्रणाद्दूरस्थेनोपकारफलं च स्त्रीप्राप्तिरिति, तदाह—

**यत्संश्रयाद्द्रुपदगेहमुपागतानां**

**राज्ञां स्वयंवरमुखे स्मरदुर्मदानाम् ।**

**तेजो हृतं खलु मयाऽभिहतश्च मत्स्यः**

**सज्जीकृतेन धनुषाऽधिगता च कृष्णा ॥ ७ ॥**

**यत्संश्रयादिति** । सम्यगाश्रयात्—वयं कृष्णस्येति । न ह्यतीन्द्रियाश्रयव्यतिरेकेणाऽतीन्द्रियार्थज्ञानं भवति । तत्र ह्येकचक्रनगरात्पलायिता ब्रह्मचारिरूपेण स्थिताः । तत्र द्रौपदीस्वयंवरप्रस्तावेऽदृश्यराधावेधे प्रतिज्ञायामस्मत्प्राप्त्यर्थमेव भगवता कृतायां सर्वे समाहूता अस्मत्तेजसः प्राकट्यार्थं भगवतैव । ततस्तत्कृपया अयं प्राप्तम् । तेषां तेजो लक्ष्यज्ञानं द्रौपदी च । तस्याः कृष्णेति नामतः स्वसाम्यं मन्यमानः सखिष्वस्मासु तां योजितवान् । अतीन्द्रियं च तेषां च तेजः

१ अपिर्नास्ति क. ग. घ. २ योगानिति घ. ३ तेनैवाऽस्य चेति घ. ४ चतुर्दशे इति ग. ५ मतिर्ययुरिति क. ६ रजोमिश्रितादिति क. ग. घ.

स्वकीयमिति तदपि च । अतस्तेनैव तेजो दत्तं प्रथमम् । अन्ते तेनैवाऽपहृतम् । इति तेजःसान्निध्ये सर्वम् । अपहरणेन सर्वनाशश्च । स्वयंवरस्य मुखे आरम्भे । तदा हि सर्वे मिलन्ति । ननु परब्रह्मरूपेण भगवतः समाश्रयणे कथं प्राणिनामनिष्टकरणम् । तत्राऽऽह—स्मरदुर्मदानामिति । स्मरेण दुष्टो मदो येषाम् । अतस्तेषां तेजोहरणे दोषरूपमदहरणादुपकार एव तेषां कृतः । स्वित्विति राज्ञः सम्मतिः । अभिहृतश्चेति । ज्ञातोऽभिहृतश्च । धनुषोऽपि सज्जीकरणं ज्ञातम् । तत उक्तम्—सज्जीकृतेनेति । चकारादिन्द्रप्रेषस्थानम् ॥ ७ ॥

सत्त्वमिश्रसत्त्वेनोपकारमाह—

**यत्सन्निधावहमु खाण्डवमग्नयेऽदा-**
**मिन्द्रश्च सामरगणं तरसा विजित्य ।**
**लब्धा सभा मयकृताद्भुतशिल्पमाया**
**दिग्भ्योऽहरन्नृपतयो बलिमध्वरे ते ॥ ८ ॥**

**यत्सन्निधाविति** । सत्त्वमिश्रणाद्भगवत्सान्निध्यम् । उ इति वितर्के । कुत्राऽहं कुत्र तत्कर्मेति । खाण्डवं वनं [illegible]धिसहितम् । अग्नये याचकाय । इन्द्रस्य वनमिति तं विजित्य । **सभा** राजसूयसभा । यत्र दुर्योधनमोहः । खाण्डववने स्थितस्य मयस्य प्राणरक्षणात्स्वप्राणपरीवर्त्तरूपं सर्वमायामयमद्भुतशिल्परचनारूपं च कार्यं दत्तवान् । विश्वकर्मा शिल्पमेव जानाति । मयस्तु मायामपि । अत्राऽपि त्रयं प्राप्तम् । दानसामर्थ्यं गाण्डीवादि इन्द्रादीनां तेजः सभा च । ततस्तवाऽप्युपकारो जात इत्याह—**दिग्भ्योऽहरन्निति** । ते अध्वरे राजसूये । बलिं पूजामुपढौकनरूपं द्रव्यम् ॥ ८ ॥

**यत्तेजसेति** विगीतश्लोको मध्येऽधिकः । सोऽपि व्याख्यायते—

**यत्तेजसा नृपशिरोङ्घ्रिमहन्मखार्थ-**
**मार्योऽनुजस्तव गजायुतसत्त्ववीर्यः ।**
**तेनाऽऽहृताः प्रमथनाथमखाय भूपा**
**यन्मोचितास्तदनयन् बलिमध्वरे ते ॥ ९ ॥**

यस्य भगवतस्तेजसा । **नृपशिरोङ्घ्रिम्** । नृपशिरस्सु अङ्घ्रिर्यस्य जरासन्धस्य । तव मखार्थमहन् । **आर्यो** मम ज्येष्ठभ्राता भीमः । तवाऽनुजः । **गजायुतसत्त्ववीर्यः** अयुतनागधैर्यबलः । तेन च जरासन्धेनाऽऽहृता बन्धा गृहीताः **प्रमथनाथमखाय** महाभैरवबलिनिमित्तं ये राजानस्ते च मोचिताः । यस्मात्ते मोचितास्तस्मात्तेऽध्वरे बलिमनयन् आनीतवन्तः । अहमिव भीमोऽपि भगवत्सान्निध्याच्छ्लोकोक्तं फलं प्राप्तवानित्यर्थः ॥ ९ ॥

१ तेजसा मध्ये सर्वमिति. ङ. २ स्वरूपस्येति घ. ङ. ३ तदाहेति क. ग. घ. ङ. ४ स्मरणे इति ख. ग. ५ इन्द्रप्रस्थानमिति घ. ६ पावकायेति घ. ङ. ७ स्वप्राणेति क. ८ परीवर्त्तनरूपमिति क. ग. घ. ९ गाण्डीवादि इति क. ग. ङ. १० स्वभाव इति घ. ङ. ११ उपढौकनद्रव्यरूपमिति घ. १२ धनमिति ख.



तमोमिश्रसत्त्वेनोपकारमाह—

**पत्न्यास्तवाऽधिमखक्लृप्तमहाभिषेक-**
**श्लाघिष्ठचारुकबरं कितवैः सभायाम् ।**
**स्पृष्टं विकीर्य पदयोः पतिताश्रुमुख्या**
**यस्तत्स्त्रियोऽकृत हतेशविमुक्तकेशाः ॥ १० ॥**

**पत्न्यास्तवेति** । रजसा जातस्य तमसा नाश उचितः । तथापि सत्त्वेन तस्याऽपकारः कर्तृस्त्रीषु दत्तः । तथा करणे हेतुः—**अधिमखेति** । राजसूयमध्ये महाभिषेकप्रस्तावे यजमानपत्न्योः क्लृप्तो योऽयं महाभिषेकस्तेन श्लाघिष्ठं सर्वसभासु स्तुत्यं चारु मनोहरं च वेदलोकयोरुत्कृष्टं यत् कबरं तत् कितवैर्वञ्चकैर्दुर्द्यूते अपणितमपि पणत्वमारोप्य भीष्मादिस्थितसभायां पापप्राकट्याय यैः स्पृष्टं तत्स्त्रियो हतेशविमुक्तकेशाः कृताः । हत ईशो यो भर्ता तेन हृतभर्त्र्यो विमुक्ताः केशा यासाम् । ननु भगवत एवं करणे को हेतुः ? तत्राऽऽह—**विकीर्य पदयोः पतिताश्रुमुख्या इति** । दुष्टस्पर्शेन दोषसम्बन्धात्तन्निराकरणार्थं गाढभक्तिहृदयेन "**हा नाथ द्वारकावासिन्नि**"ति रूपेण स्मरणे तदानीमेवोपस्थितस्य भगवतः अन्येषां महापातकित्वाद्द्रौपदीमात्रप्रत्यक्षस्य पदयोर्दुष्टस्पृष्टं कबरं विकीर्य पतिता या अश्रुमुखी तस्याः । तदानीं भगवान् द्वारकातः समागत्य तस्या अग्रे स्थितः । सोऽपि तं दृष्ट्वा तस्य पादयोः पतिता अश्रूण्यवर्तयत् । अत एव "**या त्वरा द्रौपदीत्राण**" इति वाक्यं सङ्गच्छते । एवं गुप्ततयाऽपि सर्वदा सर्वं कार्यं करोतीत्यवगन्तव्यम् ॥ १० ॥

रजोमिश्रतमसा य उपकारः कृतस्तमाह—

**यो नो जुगोप वनमेत्य दुरन्तकृच्छ्रा-**
**द्दुर्वाससोऽरिविहितादयुताग्रभुग्यः ।**
**शाकान्नशिष्टमुपयुज्य यतस्त्रिलोकीं**
**तृप्तामममंस्त सलिले विनिमग्नसङ्घः ॥ ११ ॥**

**यो नो जुगोपेति** । एवं ह्याख्यायिका । कदाचिद्दुर्वासाः षण्मासोपवासी पारणादिवसे सर्वदैत्यप्रार्थनया दुर्योधनगृहं गतः । तेन चाऽऽतिथ्येन सन्तोषितोऽयुतशिष्यसहितो वरं वृणीष्वेत्याह । तदा भगवता व्यामोहितो दुर्योधनः सहसा पाण्डूनां नाशः प्रार्थयितुमशक्य इति मन्यमानो व्याजेन प्रार्थयिष्यामीति सञ्चिन्त्य यथाऽस्मद्गृहे समागतं शिष्यैः सह तथैवाऽस्मज्ज्येष्ठभ्रातुर्युधिष्ठिरस्य गृहे गन्तव्यम् । परं द्रौपदीभोजनानन्तरम् । अन्यथा सा खेदं प्राप्स्यतीति वरमयाचत । ततस्तथेत्युक्त्वा तथैव गतो दुर्वासाः । पाण्डवानां (?) चाऽरण्ये भोजनाभावे भगवदुपदेशात्सूर्यप्रार्थनायां सर्वान्नपूर्णां स्थालीं ददत् सूर्य आह द्रौपदीभोजनावध्यक्षय्यमन्नं भविष्यतीति । ततः प्रभृति सा [illegible]ष्यागमनकालमति-

१ रजसा तस्येति घ. रसजातस्येति ङ. २ यजमानपत्न्या इति ग. घ. ३ तेन हृतभर्त्र्य इत्ययमंशो नास्ति ख. ४ सैवेति ख. सोऽपीति घ. ५ तस्या इति घ. ६ पदयोरिति ख. ७ पतित्वेति घ. ८ अश्रूण्यवर्त्तयन्निति ग. ङ. ९ कार्यमिति नास्ति ग. १० पाण्डवानामिति ख. ११ साऽतिथ्यागमनकालमिति घ.

क्रम्य भुङ्क्ते । एवं जाते सति प्रहरराज्यनन्तरं द्रौपदीभोजनं योगेन ज्ञात्वा तथैवाऽऽगतः । तदा पाण्डवा (?) द्रौपदी च सर्वनाशं मेनिरे । तदा स्मृतः कृष्णः समागतो बहिरेव द्रौपदीमदृष्ट्वैव ऋषिं प्रत्युक्तवान् जातः पाकः स्नानं क्रियतामिति । तथेत्यावश्यकं कर्तुं दुर्वाससि गतेऽन्तः प्रविष्टो भगवान् द्रौपदीवैक्लव्यं दृष्ट्वा कवलमात्रावशिष्टे भोजने स्थाल्यामपि तावच्छिष्टं शाकान्नं प्राश्य त्रिलोकीमेव तृप्तामकृत । तदाह—**यो नो जुगोपेति** । यो भगवान् वनमेत्य नः अस्मान् जुगोप । दुर्वाससो भयहेतुत्वात्पश्चमी । दुरन्तं कृच्छ्रं यस्मात् । अरिविहितात् दुर्योधनेन प्रेरितात् । यः दुर्वासाः । अयुतं ब्राह्मणाः अग्रे भुञ्जते यस्य । शाकेन सहितमन्नमुष्टिम् । प्रथमत एव वा भगवदर्थं स्थापितम् । नियतकृत्यं हि तत् । तदुपयुज्य स्वीकृत्य जुगोपेति सम्बन्धः । कथमेतावता गोपनम् । तत्राऽऽह । यतः सलिले निमग्न ऋषिसङ्घः । यः पूर्वमावश्यकं कर्तुं गतः स सलिले निमग्न उत्थानसमये त्रिलोकीमेव तृप्तममंस्त । किमुताऽऽत्मानमित्यर्थः ॥ ११ ॥

सत्त्वमिश्रतमसा कृतमाह—

**यत्तेजसाऽथ भगवान् युधि शूलपाणि-**
**र्विस्मापितः सगिरिजोऽस्त्रमदान्निजं मे ।**
**अन्येऽपि चाऽहममुनैव कलेवरेण**
**प्राप्तो महेन्द्रभवने महदासनार्द्धम् ॥ १२ ॥**

**यत्तेजसेति** । अथेति भिन्नप्रक्रमे । श्लोकद्वयेन द्रौपदीनिमित्तरक्षणस्योक्तत्वात्स्वपौरुषाभावाच्च तदपहाय केवलं स्वपौरुषसाध्यं चरित्रमिति । **भगवानिति** सन्तोषे वरदानहेतुः । **शूलपाणिरिति** विपरीते मारणहेतुः । एवं दुर्धर्षोऽपि महादेवो यत्तेजसा विस्मापितः । न हि जीवसामर्थ्येन ब्रह्मणो विस्मयो भवेत् । तत्रापि **सगिरिजः** पार्वतीसहितः । पर्वतपुत्री हि पर्वतादप्यधिकेन पदार्थेन विस्मिता भवतीति सूचितम् । अत्राऽपि किरातार्जुनकथाऽनुसन्धेया । परीक्षार्थं समागतो महादेवः सर्वव्रतोद्यापनरूपचिह्नसहितस्याऽर्जुनस्य चिह्नप्रदर्शनार्थं पार्वतीमप्यानीतवान् । तत्र शस्त्रास्त्रमुष्टिबाहुयुद्धेषु समाप्तेषु मल्लयुद्धेन स्वयं भूमौ पतित्वा स्वोपरिपतितार्जुनपृष्ठस्थचिह्ने पार्वत्या दृष्टे दम्पत्योर्हास्यमुखमवलोक्य भीतोऽर्जुनः स्तोत्रं कृतवान् । ततः प्रीतो महादेवः पाशुपतास्त्रं दत्तवान् । मे मह्यम् । अन्येऽपीन्द्रादयस्तदानीं समागत्य स्वास्त्राणि दत्तवन्तः । चकाराच्छत्रुजयश्च । किञ्च । तस्याऽस्त्रस्य प्रयोगसिद्ध्यर्थं महेन्द्रप्रेषितमातलिप्रार्थनया तेनैव नीतो महेन्द्रभवने वर्षपञ्चकमिन्द्रासनस्याऽर्द्धं **महत्** इन्द्रोपवेशनभागादधिकं शरीरान्तरोपभोग्यममुनैव कलेवरेण तेजोमयेन प्राप्तवानस्मीत्यर्थः । अत्राऽपि त्रयं प्राप्तम् । महादेवसन्तोषः । अस्त्रप्राप्तिः । इन्द्रासनप्राप्तिश्चेति ॥ १२ ॥

तमोमिश्रतमसा कृत्यमाह—

**तत्रैव मे विहरतो भुजदण्डयुग्मं**
**गाण्डीवलक्षणमरातिवधाय देवाः ।**

१ द्रौपदी दृष्ट्वेति ख. २ शाकेन शिष्टमन्नमुष्टिमिति क. घ. ङ. ३ निमग्नो ऋषिसङ्घ इति क. ख. ग. ४ स इति नास्ति ख. ५ किरातार्जुनीयकथेति ख. ६ शस्त्रार्थेति ग.



**सेन्द्राः श्रिता यदनुभावितमाजमीढ**
**तेनाऽहमद्य मुषितः पुरुषेण भूम्ना ॥ १३ ॥**

**तत्रैवेति** । तत्रैव स्वर्ग एव विहरतो मे भुजदण्डयुग्मम् । स्वयं चतुर्भुजा अपि केचनाऽधिकभुजाः केचन ततोऽप्यधिकभुजाः । आश्रयणे हेतुः—**गाण्डीवलक्षणमिति** । गाण्डीवं लक्षणं चिह्नं यस्य । अनेनोभयोश्चिह्नता । युद्धधनुष्टङ्कारसज्जीकरणादौ हस्तद्वयं सर्वदा व्यापृतमिति ज्ञापितम् । न चैतावता कार्यं सिद्ध्यति । महेन्द्रपुत्रत्वाद्बलस्य वायुजन्यत्वाद्गाण्डीवस्य चाऽऽग्नेयत्वादिन्द्रादीनां मूलभूतानामेव तत्र सत्त्वाद्बेत्यन्तरं वक्तव्यम् । इत्याकाङ्क्षायामाह—**यदनुभावितमिति** । **आजमीढेति** । वैक्लव्याभावाय । स हि त्रिभिः पुरुषैः सह मुक्तः । तमसा मिलिततमसा वञ्चनस्याऽभिप्रेतत्वादुपकारासमाप्तावेव कारणगुणनिरूपणादाह—**तेनाऽहमिति** । मोषे हेतुः—**पुरुषेणेति** । ब्रह्माण्डविग्रहत्वात् । रोगनाशे औषधत्यागवत् । तेजोऽपहरणेऽपि भगवतो व्यापकत्वाज्ज्ञानद्वारा मोक्षं दास्यतीति नाऽनाप्तत्वमित्याह—**भूम्नेति** । वस्तुतस्तु "**यत्तेजसा नृपशिरोऽङ्घ्रि**" श्लोकवत् "**पद्यास्त्वच**" "**यो नो जुगोपे**"त्येतावपि विगीतौ । अर्जुनविषयत्वाभावात् । कुत्सितत्वाच्च । अतः सत्त्वरजस्तमोभिरेव श्लोकत्रयप्रतिपाद्यैर्भगवच्चरित्रमुक्त्वा मोषश्चतुर्थे प्रतिपाद्यते । लोकत्रयजयस्यैवाऽभीष्टत्वात् । दैत्यजयः साधनप्राप्त्या निरूपणीयोऽपि योगस्य प्राधान्यात्स एव निरूपितः । अर्थान्निरूपितोऽप्युपसंहारेऽनुवदनवचनशेषतया निरूपितः । दैत्यानां तत्प्राधान्यात् । "**मायेत्यसुरा**" इति श्रुतेः । यत्पुनरग्रे भगवच्चरित्रकथनं तदवतारकार्यमिति नाऽत्यन्तमर्जुनानुग्रहः सिद्ध्यति । भूभारहरणस्य स्वापेक्षितत्वात् । "**मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्नि**"ति भगवद्वाक्याच्च । अतोऽर्जुने भगवत उपकारत्रयमेव गुणरूपम् । दोषाभावरूपं चाऽग्रे वक्ष्यते "**सौत्ये वृत**" इत्यादिभिस्त्रिभिः । **कारणं करणञ्चैव प्रतिबन्धश्च कथ्यते । स्वकृतत्वज्ञापनाय माहात्म्यज्ञापनाय तत् । दोषाभावेन सहितं दैन्येनाऽपि विमिश्रितम् । कृष्णमाहात्म्यविज्ञानं सर्वथा मुक्तिदायकम्** । इति निश्चयः । अतो माहात्म्यज्ञापनं त्रिभिः । त्रिभिश्च दोषाभावः । द्वयेन दैन्यमिति । अन्तर्बहिःसाधनहरणादिति युक्तमुत्पश्यामः ॥ १३ ॥

तमोमिश्ररजसा चरित्रमाह—

**यद्बान्धवः कुरुबलाब्धिमनन्तपारमेको रथेन ततरेऽहमनार्यसत्त्वम् ।**
**प्रत्याहृतं पुरु धनञ्च मया परेषां तेजस्पदं मणिमयञ्च हृतं शिरोभ्यः ॥ १४ ॥**

**यद्बान्धव इति** । हेतुत्वेन कारणं वा । यस्य भगवतो बान्धवः । भगवद्बन्धुत्वेनैव भजनसान्निध्याद्यभावेऽपि कुरुबलाब्धितरणम् । सेनाया नित्यनूतनत्वाय अब्धित्वम् । **अनन्तपारमिति** ।

१ वचनस्येति क. वञ्चितस्येति घ. ङ. २ उपकारसमाप्तावेवेति क. ३ इत्यादावपीति क. ग. ४ चकारो नास्ति ख. ५ अनुवदन् वचनशेषतयेति ख. ग. ६ भूभारहरणस्याऽस्वापेक्षितत्वादिति ख. ७ दोषाभावश्चाऽग्रे त्रयं वक्ष्यत इति ग. दोषाभावायाऽग्रे त्रयमिति घ. ८ स्वकृतत्वाज्ञापनायेति ग.

देशकालानवच्छिन्नम्। तत्रत्या **अवध्या** इति कालानवच्छिन्नता। **अनुलङ्घ्या** इति देशानवच्छिन्नता। तत्र **एकः** असहायः। उत्तरगोग्रहणे उत्तरस्य भीतस्य दर्शनार्थं स्थापितत्वात्। **रथेनेति** प्लवनशङ्का निवारिता। तेन निलीय गमनं परास्तम्। अनार्याः कर्णादयस्त एव सत्त्वानि जलचरा यस्मिन्। अनेन तैस्तत्र पतितस्य पुनरनावृत्तिः सूचिता। कुतस्तरणमिति भावः। न केवलं तरणं कृतं किन्तु तत्रस्थानि रत्नान्यप्याहृतानीत्यभिप्रायेणाऽऽह—**प्रत्याहृतं** गुरु **धनञ्चेति**। वस्तुतस्तु तद्द्रव्यमर्जुनस्यैव। राज्यस्वामित्वात्। तैः परं बलाद्गृहीतम्। तत्पुनः प्रत्याहृतमिति प्रतिशब्दार्थः। चकाराद्वस्त्राणि। **तेजस्पदं** तेजसः स्थानम्। तद्व्याजेन तेजोऽप्यपहृतमित्यर्थः। मणिमयममूल्यम्। सर्वपुरुषार्थसाधकं वा। अनेन सर्वस्वं सर्वे च पुरुषार्था हृता इति ज्ञापितम्। चकाराच्छिरोरत्नं रत्नानि च सहजानि। **शिरोभ्य इति**। तद्व्याजेन शिरांस्येवाऽपहृतानीत्यर्थः। सम्मोहनास्त्रेण मोहयित्वा सर्वं हृतम्। अत्र बन्धुत्वमेव निमित्तम् ॥ १४ ॥

सत्त्वमिश्ररजसा कृतमाह—

**यो भीष्मकर्णगुरुशल्यचमूष्वदभ्रराजन्यवर्यरथमण्डलमण्डितासु।**
**अग्रेचरो मम विभो रथयूथपानामायुर्मनांसि च दृशा सह ओज आर्च्छत्॥१५॥**

**यो भीष्मकर्णेति**। पूर्वं परीक्षार्थं गतत्वादसावधानैर्गतम्। इदानीं युद्धार्थं शस्त्रास्त्रादिसम्पन्ना मन्त्रादियुक्तकवचादिमन्तः कालेनाऽपि मारयितुमशक्याः कालकामपरशुरामादिजेतारोऽशक्या इति मत्वा स्वयमग्रेचरो भूत्वा तेषामायुर्मनांसि चोत्साहशक्तीश्चकाराद्विवेकधैर्यादिकञ्च दृशा दृष्टिमात्रेणैव आर्च्छत् आहृतवान्। **स (?) ओजः**। ओजसा सहेत्यर्थः। अथवा। **सहः** अन्तःकरणशक्तिः। **ओजः** इन्द्रियशक्तिः। तदपि हृतवानित्यर्थः। **गुरुर्द्रोणः**। चत्वार एव सेनापतयो जातास्तेषां चमूषु। भीष्मगुरुमध्ये कर्णकथनमतिसामर्थ्यद्योतनार्थम्। **अदभ्रा** ये **राजन्यवर्याः**। कुत्राऽपि मारणार्थं छिद्ररहिताः। तेषां रथमण्डलानि। तैर्मण्डितासु। अनेन तासु प्रविष्टो वशीकृतो भवतीति सूचितम्। एवं सेनाचतुष्टयेऽपि भगवतैव सर्वं कृतं न मयेत्युक्तम्। अनेन स्वयं करणमुक्तम् ॥ १५ ॥

रजोमिश्ररजसाऽपि कृतमाह। परकृतप्रतिबन्धं वा—

**यद्दोःषु मा प्रणिहितं गुरुभीष्मकर्ण-**
**द्रौणित्रिगर्तशल्यसैन्धवबाह्लिकाद्यैः।**
**अस्त्राण्यमोघमहिमानि निरूपितानि**
**नोपास्पृशन्नृहरिदासमिवाऽऽसुराणि ॥ १६ ॥**

**यद्दोःषु मामिति**। प्रणिहितं स्थापितम्। **द्रौणिरश्वत्थामा**। **त्रिगर्तः** सुशर्मा। **शलः** शल्यः। **सैन्धवो** जयद्रथः। अमोघो महिमा येषाम्। **निरूपितानि** मद्वधार्थं प्रक्षिप्तान्यपि **नोपास्पृशन्** समीपे रथादिकमपि न स्पृष्टवन्तः। नोपास्पृशन्निति पाठः। **नृहरिदासं** प्रह्लादम्।

1 स अजः। ओजसा सहेत्यर्थ इति ख. मूलानुरोधात् सह ओज इति पाठस्तु भाति। 2 सहेत्यविसर्गः पाठः क. ग. सः इति ख. 3 कारणमिति ख. 4 नोपस्पृशुरिति क. नोऽस्पृशन्निति ख. नोपस्पृशन्निति ग.



प्रसिद्धो दृष्टान्तः। प्रमेयबले प्रमाणबलं दृष्टान्तः। दासभक्तेः शास्त्रीयत्वात्। यद्दोःष्विति प्रमेयबलम्। **आसुराणि** असुरकृतानि शूलादीनि ॥ १६ ॥

गुणकृतमुक्त्वा स्वभावकृतेषु नीचकर्मणि नियुक्तस्तदपराधं सोढवानित्याह—

**सौत्ये वृतः कुमतिनाऽऽत्मद ईश्वरो मे यत्पादपद्ममभवाय भजन्ति भव्याः।**
**संभ्रान्तवाहमरयो रथिनो भुविष्ठं न प्राहरन् यदनुभावनिरस्तचित्ताः ॥ १७ ॥**

**सौत्ये वृत इति**। सूतकर्मणि कृतः। तत्र हेतुः। **कुमतिना**। फलस्य कुत्सितसाध्यसाधनत्वेन नियोजितत्वात्। सहने हेतुः—**आत्मद इति**। स हि तुष्टः स्वात्मानं प्रयच्छति। ततः स कुत्राऽपि नियोगं करोतु। आप्तत्वादित्यर्थः। तर्हि को दोषस्तत्राऽऽह—**ईश्वर इति**। यद्यप्यात्मदस्तथापीश्वरः कर्तुमकर्तुमन्यथा कर्तुं समर्थः। अनेन तेजोहरणमल्पमेव जातमिति भावः। **मे** मया। मद्वा। न हि सौत्येन किञ्चित्कार्यं सिद्धम्। प्रतिष्ठामात्रं परम्। कुमतित्वं प्रकटयति—**यत्पादपद्ममिति**। **भव्याः** सत्तायां परिनिष्ठिताः। सन्त इति यावत्। **अभवाय** मोक्षाय। **पादेति** भक्तिमार्गेण। **पद्ममिति** सुखसेव्यत्वाय रसत्वाय च। **भजन्ति** सेवन्ते। "**यद्दोःषु मा प्रणिहितमि**"त्यत्र निरूपितमपि शस्त्राद्यस्पर्शं लोकरीत्या स्पष्टसम्भावनाभावात्पुनर्जयद्रथवधे मध्याह्ने श्रान्तवाहानां विशल्यकरणार्थमुत्तीर्णं मां न प्राहरन्नित्याह। **संभ्रान्तवाहमिति** साधनाभावः सूचितः। **अरय इति** मारणावश्यकत्वम्। **रथिनो भुविष्ठमिति** साधनासाधनाभ्यां बहुवचनैकवचनाभ्यां च कामनायामपि शत्रूणां दुर्लभाऽवस्था सूचिता। यस्य भगवतोऽनुभावेनाऽलौकिकसामर्थ्येन निरस्तं चित्तं मारणीयोऽयमिति ज्ञानं येषाम्। अनेनाऽपकारेऽप्यानुषङ्गिकं फलमेतादृशमिति सूचितम् ॥ १७ ॥

किञ्च। एतादृशेऽप्यपकारिणि परिहासदशायामपि वचनेनाऽपि नाऽपकारः कृत इत्याह—

**नर्माण्युदाररुचिरस्मितशोभनानि हे पार्थ हेऽर्जुन सखे कुरुनन्दनेति।**
**सञ्जल्पितानि नरदेव हृदिस्पृशानि स्मर्तुर्लुठन्ति हृदयं मम माधवस्य ॥१८॥**

**नर्माणीति**। अपराधाभावेऽपि स्वस्मरणार्थं सर्वावस्थासु तथा तथा वचनान्युक्तवान्। यथा हृदये प्रविष्टानि हृदयं **लुठन्ति** लोठयन्ति। लुनन्तीति वा पाठः। **नर्माणि** सुखकराणि परिहासवचनानि। अर्थानुसन्धानाभावेऽपि स्वरूपत एव सुखकराणीत्याह। उदारं यद्रुचिरं स्मितम्। सर्वपुरुषार्थदानायोदारम्। रुचिरं रसोत्पादनाय। रसाभावे पुरुषार्थानामयथात्वात्। स्मितेनाऽलव्यामोहनं सूचितम्। स्वभावसुन्दराणां स्मितेन शोभातिशयो वशीकरणार्थो भवति। तत्राऽनेका-

1 स्पष्टसम्भावनादिति ख. 2 कामयानामिति. ग. ङ. कामयमानामपीति घ. 3 स्मरणार्थमिति ख. ग. 4 लुनन्तीति क. ग. 5 सर्ववशीकरणार्थं इति क.

न्तिकं दृष्ट्वा हे पार्थेति सम्बोधयति। खन्धं दृष्ट्वाऽर्जुनेति। पृक्षवाचकत्वात्। वञ्चनापकरणादि दृष्ट्वा हे सखे इति। अचातुर्यं दृष्ट्वा कुरुनन्दनेति। क्षेत्रकर्षकत्वात्कुरोः। अत एव भगवद्वाक्यानां सञ्जल्पितत्वमुक्तम्। नरदेवेति गूढबोधनार्थं सम्बोधनम्। वचनानां समर्थत्वान्मर्मस्पर्शित्वाद्धृदिस्पृशानीत्युक्तम्। मम हृदयं हृदये (?) मम माधवस्याऽस्मत्स्वामिनः सञ्जल्पितानीति सम्बन्धः॥ १८॥

एवमपराधापनोदनार्थं प्रतीकारे कृते तद्धेतुका अन्येऽप्यपराधाः कृताः। तानपि दूरीकृतवानित्याह—

शय्यासनाटनविकत्थनभोजनादि-
ष्वैक्याद्वयस्य ऋतवानिति विप्रलब्धः।
सख्युः सखेव पितृवत्तनयस्य सर्वं
सेहे महान्महितया कुमतेरघं मे॥ १९॥

शय्येति। शय्यायां शय्याविषये। आसनादिविषयेषु च। तामसादिस्थानानि शय्यासनाटनानि। विकत्थनं सन्निपातकार्यं स्वश्लाघारूपम्। भोजनादीन्यावश्यकलौकिकानि। ऐक्यात् एकभावात्। न हि स्वस्मात्कश्चित्कदाचिच्छङ्कते। ऐक्यकरणं भगवदुपकारः। दुष्टस्य ततो मदाद्विप्रलम्भः वक्रोक्त्या वञ्चनम्। तत्र वञ्चनशब्दमाह—हे वयस्येति। वयसा तुल्ययोर्मध्ये कुतस्त्वाऽऽधिक्यम्। कथं वा। मित्रमिति वा। किञ्च। ऋतवानिति। सत्यवानित्यर्थः। असत्यकरणं मत्वा तथा वचनम्। सहनं च न मनसि रोपस्थापनेन। सह्यदोषे सखिदृष्टान्तः। असह्यदोषे तु पितृदृष्टान्तः। तस्याऽप्यसह्यदोषसङ्ग्रहार्थम्—सर्वमिति। सहने प्रयोजकं रूपमाह—महानिति। न हि पिपीलिकादीनामपराधं गजो मन्यते। उपढौकनाद्यभावायाऽऽह—महितयेति। स्वमहिम्नैव। हेत्वन्तरमाह—कुमतेरिति॥ १९॥

एवं सर्वं चरित्रमुक्त्वा सर्वोपसंहारार्थं तत्कृतां लीलामनुस्मरति—

सोऽहं नृपेन्द्र रहितः पुरुषोत्तमेन सख्या प्रियेण सुहृदा हृदयेन शून्यः।
अध्वन्युरुक्रमपरिग्रहमङ्ग रक्षन् गोपैरसद्भिरबलेव विनिर्जितोऽस्मि॥ २०॥

सोऽहमिति। नृपेन्द्रेति सम्बोधनमस्य विचारस्त्वयाऽवश्यं कर्तव्य इत्येतदर्थम्। पुरुषेणाऽपि रहितः प्राणी स्त्र्यादिरूपः सर्वकार्यबहिष्कृतो भवति। किमुत पुरुषोत्तमेन। अनेनोत्तमकार्योपसंहारो ज्ञापितः। सख्येति मध्यमकार्योपसंहारः। प्रियेणेति ततः परः। प्रियजनः प्रियस्य निकृष्टमपि करोति। एवं स्वनिष्ठकार्याभावहेतूनुक्त्वा भगवन्निष्ठाभावायाऽऽह—सुहृदेति। तद्राहित्यस्य फलमाह—हृदयेन शून्य इति। उत्कृष्टधर्माणां तत्सहभावात्तदपगमे सर्वमपगतमिति शून्यता।

१ अपराधानोदनार्थमिति ख. २ रोषस्थापनेनेति घ. ३ न हीति नास्ति ख. ४ सर्वोपसङ्ग्रहार्थमिति घ. ५ ततः परप्रियस्येति घ.



हृदयं शून्यं जातमित्यर्थः। तेनाऽन्यदपि कार्यं जातमिति वदन् "पराजितो वाऽथ भवानि" ति संभावना सत्या जातेत्याह—अध्वनीति। परिग्रहः स्त्रीवर्गः। अङ्गेति कोमलसम्बोधनं प्रतीकारकरणाभावाय। अबला स्त्री॥ २०॥

तेन सर्वनाशमाह—

तद्वै धनुस्त इषवः स रथो हयास्ते सोऽहं रथी नृपतयो यत आनमन्ति।
सर्वं क्षणेन तदभूदसदीशरिक्तं भस्मन् हुतं कुहकराद्धमिवोप्तमूष्याम्॥ २१॥

तद्वै धनुरिति। गाण्डीवलक्षणमित्युक्तम्। ते इषवः। "अर्जुनस्य इमे बाणा" इति। स रथः, अप्रतिहतः। ते हयाः, सर्वत्र गन्तारः। सोऽहं रथी, भीष्मादिहन्ता। यतः सामर्थ्यतः। आनमन्ति सर्वतो नमन्ति। आमनन्तीति वा पाठः। कीर्तयन्तीति वा(?)। तत्राऽङ्गारेभ्योऽग्न्यपगमे इङ्गालत्वं (?) सम्पद्यते। तदा रूपं देवत्वं दाहकत्वं सर्वमेवाऽपगच्छति। तथा पूर्वोक्तेष्वीशः प्रविष्टस्तदा तत्सर्वं कार्यं निष्पन्नम्। तदपगमे सर्वं नष्टमित्यन्वयव्यतिरेकाभ्यां ग्राह्याग्राह्यविवेकेन सर्वं भगवत्कृतमिति सिद्धं भवति। केवलान्वये विशेषेण तदेकसाध्यतानिश्चयाभावात्। इदानीं तु तदनाधारत्वेनाऽन्यथासिद्धमित्यभिप्रायेणाऽऽह—असदिति। ईशरिक्तं सर्वमसदभूदित्यर्थः। कार्याकर्तृत्वेनाऽसत्त्वम्। तेषां फलसाधकत्वमेव रूपमिति तदभावो वा। तत एव तत्प्रसिद्धेः। अत्राऽसाधकत्वे दृष्टान्तमाह लोकवेदभेदेन द्वयम्। लोकेऽपि स्ववृत्तिसेवाभ्यां द्वयम्। वेदे तु तत्समुदितमेकत्रैव द्वयम्। अतो दृष्टान्तत्रयमाह। तत्र वैदिको दृष्टान्तः—भस्मनि हुतमिति। "यदि पूर्वस्यामाहुत्यां हुतायां यजमानो म्रियेत, दक्षिणतः शीते भस्मन्युत्तरामाहुतिं निनयेद्भस्मोत्करं वा गमयेदि"ति भस्मनि होम उक्तः। स यथास्थित इत्यसति विनियुज्यते। तथा गोपेष्वस्माभिर्विनियुक्त इत्यर्थः। न वा ईश्वराराधनम्। न वा धर्मः। लोके ईश्वराराधनमस्ति। तेन कार्यं सिद्ध्यति। तत्कार्यमीश्वराद्धमित्युच्यते। स चेदीश्वरः कुहको भवेत्तत्फलमसद्भवेत्। कुल्मापदानवत्। अनेनाऽधिष्ठातृदेवानां विपरीतफलदानेनाऽसत्त्वमुक्तम्। एवं फलवैफल्यं साध्यवैफल्यं चोक्त्वा साधनवैफल्यमाह—उप्तमूष्यामिति। ऊषी ऊषररूपा पृथिवी। गौरादित्वान्ङीष्। सा हि बीजशक्तिदाहिका। तत्र गतं बीजं स्वरूपतोऽपि नश्यति। तथाऽत्राऽपि लौकिकरथित्वमपि गतमित्यर्थः॥ २१॥

एवं द्वितीये उत्तरमुक्त्वा प्रथमस्योत्तरमाह—

राजंस्त्वयाऽनुपृष्टानां सुहृदां नः सुहृत्पुरे।
विप्रशापविमूढानां निघ्नतां मुष्टिभिर्मिथः॥ २२॥
वारुणीं मदिरां पीत्वा मदोन्मथितचेतसाम्।
अजानतामिवाऽन्योन्यं चतुःपञ्चाऽवशेषिताः॥ २३॥

राजन्निति। सुहृदां यत्कुशलं पृष्टं सुहृत्पुरे तत्रोत्तरम्। शापो जातः। ततो विप्रशापविमूढानां

१ अभ्युपगमे इति ख. २ तदाधारत्वेनेति ख. ग. तदाराधकत्वेनेति घ. ३ अत्रेति नास्ति ग. ४ लोकेऽपीत्यादिः पङ्क्तिर्नास्ति घ. ५ अहुतायां हुतायां वेति क. ख. घ. ६ यजमाने इति ख. ७ वेति नास्ति ख. ८ ईश्वराराधनमिति ख. घ. ९ विनश्यतीति घ. क.

देशान्तरे गत्वा मुष्टिभिर्निनिघ्नताम्। मिथो युद्धे हेतुः—**वारुणीं मदिरां पीत्वेति**। अमृतमथनाद्-उद्भूता मदिरा वारुणी। सा तालाद्यधिष्ठिता तालप्रभूता वारुणीत्युच्यते। तेन मदेनोन्मथितचेतसां गतविवेकानां मध्ये चतुःपञ्चाऽवशेषिता इति सम्बन्धः। चतुर्भिर्युक्ताः पञ्च चतुःपञ्च। नवद्रव्येषु यादवशरीरसङ्घातं प्रविष्टेषु चतुर्विधैः परमाणुभिः सहाऽऽकाशादयः पञ्चोर्वरिताः। ननु स्नेहस्य बाधकत्वात्कथमेवम्। अत आह—**अजानतामिति**। युद्धार्थं ज्ञानमन्यार्थमज्ञानमिति इत्यर्थः ॥ २२ ॥ २३ ॥

अत्र कर्त्तारं सम्भावयति—

**प्रायेणैतद्भगवत ईश्वरस्य विचेष्टितम्।**
**मिथो निघ्नन्ति भूतानि भावयन्ति च यन्मिथः ॥ २४ ॥**

**प्रायेणेति**। सर्वकर्तृत्वेन रक्षकत्वेन च भगवत्कर्तृत्वं निश्चीयते। कालेनाऽपि सम्भवतीति प्रायग्रहणम्। तत्रापि भगवतो विद्यमानत्वादुत्कटकोटिः। दृष्टार्थमन्यथात्वेन व्याख्यास्यन्सर्वत्रैव लोककर्तृकं कार्यं भगवत्कार्यमित्याह—**मिथो निघ्नन्तीति**। तुल्यानां मारणरक्षणे प्रयोजककार्यं। स्वत उत्कर्षापकर्षाभावात्। चकारादुत्पादयन्ति। पुत्रगृहे स्वयमुत्पन्नः पिता पुत्रत्वमापद्यते ॥ २४ ॥

ननु प्रकृते कथं भगवत्कार्यत्वम्। श्रुत्यप्रतिपादितत्वादित्याशङ्क्याऽऽह—

**जलौकसां जले यद्वन्महान्तोऽदन्त्यणीयसः।**
**दुर्बलान् बलिनो राजन्महान्तो बलिनो मिथः ॥ २५ ॥**
**एवं बलिष्ठैर्यदुभिर्महद्भिरितरान् विभुः।**
**यदून् यदुभिरन्योन्यं भूभारान् सञ्जहार ह ॥ २६ ॥**

**जलौकसामिति**। यथा मत्स्यानामभिशापविमूढानामन्योन्यघातकत्वं मात्स्यो न्यायो महान्तोऽदन्त्यणीयस इति। तथा प्रकृते दुर्बलान् बलिनः। **राजन्निति** सम्बोधनार्थम्। महान्तस्त्वन्योन्यं परस्पराघातेन मृताः। उपसंहरति—**एवं बलिष्ठैरिति**। बलिष्ठैर्महद्भिरितरानबलिनोऽमहतः। ननु सर्वे भगवता मारणीयाः। ते कथमन्योन्यं मृताः। तत्राऽऽह—**विभुरिति**। सर्वकरणसमर्थः। तैरेव तान् मारितवान्। महान् साधनैः करोति। महत्तरस्त्वाज्ञया। विभुरिच्छया। **अन्योन्यमिति**। यथा विवाह उत्सवादिष्वन्योन्यपरिवेषणं तथा मारणं जातमित्यर्थः ॥ २५ ॥ २६ ॥

एवं सामान्याकारेण सङ्क्षेपतः कथामुक्त्वा विस्तरेण कथनीयमित्याकाङ्क्षायां पुनस्त्यक्तधर्मविशिष्टभगवत्स्मरणेन वैक्लव्ये जाते वक्तुं न शक्यत इत्याह—

**देशकालार्थयुक्तानि हृत्तापोपशमानि च।**
**हरन्ति स्मरतश्चित्तं गोविन्दाभिहितानि मे ॥ २७ ॥**

**देशकालेति**। देशकालाभ्यां विशेषिता येऽर्थास्तद्युक्तानि नीतिवाक्यानि। हृत्तापोपशमानि।

१ तद्युक्तानीतिवाक्यानीति क. ख.



धर्मकारात्भगवन्माहात्म्यबोधकानि। एवं त्रिविधान्यपि वाक्यानि पूर्वमेव भगवता बोधितानि। देशकालानुसारेण सर्वं कर्तव्यमिति नीतिः। आत्मनिष्ठतया बाह्यधर्मास्त्यक्तव्याः। भगवद्विषयकमोहो ममत्वम्माहात्म्यज्ञानात्त्याज्यः। तानि वाक्यानि भगवदुक्तानि साम्प्रतं स्मृतानि सन्ति चित्तं हरन्ति। अर्थानुसन्धाने हि शोकापनोदस्वरूपेणैव शोकजनकत्वम्। भगवदीयत्वात्। तस्माच्छन्दप्राबल्याच्छोकेन तूष्णीम्भावः ॥ २७ ॥

एवं धर्मपुरस्सरं[1] स्मृतेन भगवता[2] भक्तिजननाद्भक्त्या च भगवच्चरणारविन्दस्मरणे दृढप्रेमोत्पत्तौ जीवभगवतोः सान्निध्ये सति सत्त्वगुणावेशात्परमानन्दाविर्भावाच्च रजस्तमोदोषेष्वपहृतेषु शान्ता विमला च बुद्धिरासीत्। शान्ता सत्त्वेन। विमलाऽन्ययोरपगमेन। मतित्वात्स्वभावत एव[3] ज्ञानरूपत्वम्। एतत्सर्वं जातमित्याह—

सूत उवाच—

**एवं चिन्तयतो जिष्णोः कृष्णपादसरोरुहम्।**
**सौहार्देनाऽतिगाढेन शान्ताऽऽसीद्विमला मतिः ॥ २८ ॥**

**एवमिति** ॥ २८ ॥

नन्वापाततः शोकापगमेऽपि सुषुप्ताविव सर्वथा नाऽपगत इति ज्ञानप्रकाशमाह—

**वासुदेवाङ्घ्र्यनुध्यानपरिबृंहणरंहसा।**
**भक्त्या निर्मथिताशेषकषायधिषणोऽर्जुनः ॥ २९ ॥**

**वासुदेवेति**। आत्मस्वरूपज्ञानं भगवत्स्वरूपज्ञानं च नोपदेशसापेक्षम्[4]। प्रमाणवस्तुपरतन्त्रत्वात्। परं प्रमाणवस्तुनोरावरणं दूरीकर्तव्यम्। तत्र प्रमाणावरणं दूरीकृतमिव। रजस्तमसोरपगमेन सत्त्वप्राकट्यात्। जीवात्मावरणं माया। भगवदावरणं भगवदिच्छा। तत्र जीवावरणं भक्तिसहितज्ञानेनाऽपगच्छति। भगवन्माहात्म्यज्ञानपूर्वकभगवद्विषयकपरमप्रेम्णा भगवत्सेवायां भगवदावरणमपगच्छति। तदा निर्मलदृष्टेः सवितृप्रकाशसाक्षात्कार इव भगवत्स्वरूपयोर्मनसा साक्षात्कारो भवति। तत्राऽर्जुनस्य द्वयं जातमित्याह श्लोकद्वयेन। **वासुदेवेति** शान्ताऽपि बुद्धिः सवासनेति पुनरुद्गमनिराकरणार्थम्। वासुदेवाङ्घ्र्यनुध्यानस्य यत्परिबृंहणमालिङ्गनं[5] तदेव रंहो वेगो यस्याः। तादृशभक्त्या निर्मथिता उद्धृतसाराः स्वरूपेण नाशिता वा अशेषकषाया यस्याः। तादृशी धिषणा यस्य सोऽर्जुनो जात इत्यर्थः ॥ २९ ॥

अनेन सवासनं बुद्धेरावरणं गतमित्युक्तम्। जीवावरणदूरीकरणार्थमुपायमाह—

**गीतं भगवता ज्ञानं यत्तत्सङ्ग्राममूर्द्धनि।**
**कालकर्मतमोरुद्धं पुनरध्यगमद्विभुः ॥ ३० ॥**

**गीतमिति**। शुद्धे ह्यन्तःकरणे प्रमाणेनोत्पादितं ज्ञानमात्मावरणं दूरीकरोति। तत्पूर्वमेव

१ धर्मपुरःसरत्वेनेति ख. २ भगवता इति क. ग. ३ एवेति नास्ति ख. ४ सापेक्षकमिति घ. ५ परिबृंहणमिति क. परिबृंहितमिति घ.

गीताख्येन प्रमाणेन भगवतोपदिष्टेन ज्ञानं जातमेवाऽस्ति । परं कालकर्मतमोभिस्त्रिगुणात्मकैः सज्ञाना बुद्धिरावृता । तदिदानीमावरणापगमे स्वयमेव ज्ञानं जातमित्याह—**गीतमिति** । गीतायां भगवतोक्तं ज्ञानं यत्तत्पुनरध्यगमदिति सम्बन्धः । ननु वृत्तिरूपं ज्ञानं त्रिक्षणावस्थायीति सकारणस्य तस्य स्वतस्तिरोहितत्वाद्गतं कथं प्राप्तवान् । अत आह—**विभुरिति** । समर्थत्वाज्ज्ञानतिरोभावं दूरीकृतवानित्यर्थः ॥ ३० ॥

ततो यथाऽऽत्मावरणं दूरीभूतं तदाह क्रमेण—

**विशोको ब्रह्मसम्पत्त्या सञ्छिन्नद्वैतसंशयः ।**
**लीनप्रकृतिनैर्गुण्यादलिङ्गत्वादसम्भवः ॥ ३१ ॥**

**विशोक इति** । ज्ञाने ब्रह्मसम्पत्तिर्जाता । "**ब्रह्म वेद ब्रह्मैव भवती**" ति । शोको हि विषयाप्राप्त्येति ब्रह्मत्वेन सर्वविषयप्राप्तौ सत्यां शोकाभाव इति सर्वविषयप्राप्तिमाह—**सञ्छिन्नद्वैतसंशय इति** । सम्यक् छिन्ना द्वैतप्रपञ्चे देहादौ संशया यस्य । स्वस्यैव सर्वरूपत्वे न कोऽपि सन्देहो भवतीति । अथवा । द्वैते[3] सर्वत्राऽऽत्मनः प्रवेशात्सर्वत्राऽस्याऽऽत्मनः स्वरूपनाशसंशयाः स्थिताः । सखण्डभावात् । तदात्मनो ब्रह्मभावादन्तःप्रवेशेन बहिःसम्बन्धसन्देहा निवारिता इत्यर्थः । ननु बाह्ये विषये स्थिते पुनः सम्बन्धेन संशया भविष्यन्तीत्याशङ्क्याऽऽह—**लीनप्रकृतीति** । लीना या प्रकृतिस्तया कृत्वा जातं यन्नैर्गुण्यं निर्गुणावस्था तया कृत्वा लिङ्गापगमे जाते मूलदोषाणां निवृत्तत्वादसम्भवः । न पुनरुद्गम इत्यर्थः । अत उद्गमाभावादेव न सम्बन्धः । लिङ्गस्य च निवृत्तत्वात् । एवं सर्वदोषापगमपूर्वकब्रह्मभावे जाते सर्वे शोका निवृत्ता इति भावः ॥ ३१ ॥

एवमर्जुनस्य कृतार्थत्वमुक्त्वा राज्ञः कृतार्थत्वं वक्तुं तस्याऽध्यवसायमाह—

**निशम्य भगवन्मार्गं संस्थां यदुकुलस्य च ।**
**स्वःपथाय मतिं चक्रे निभृतात्मा युधिष्ठिरः ॥ ३२ ॥**

**निशम्येति** । भगवन्मार्गं ज्ञात्वा वैकुण्ठे गत इति । यदुकुलस्य च **संस्थां** मृत्युम् । स्वःपथाय देवमार्गाय । **निभृतात्मा** दृढान्तःकरणः । गन्तुं मतिं चक्र इत्यर्थः ॥ ३२ ॥

**पृथाऽप्युपश्रुत्य धनञ्जयोदितं नाशं यदूनां भगवद्गतिं च ताम् ।**
**एकान्तभक्त्या भगवत्यधोक्षजे निवेशितात्मोपरराम संसृतेः ॥ ३३ ॥**

क्रमेण मुक्तिं वक्तुं पृथाया मुक्तिमाह । कुन्ती तदैव पूर्वोक्तं श्रुत्वा भगवच्चित्ता परमप्रेम्णाऽऽविर्भूते भगवति सायुज्यं प्राप्ता । शरीरं जहावित्यर्थः ॥ ३३ ॥

---

१ सज्ञानबुद्धिरिति क. २ दूरीकृतमिति क. ३ अद्वैते इति ग. ४ निवृत्ता जाता इति क. ५ भगवच्चिन्तेति ग.



ननु भगवता किमर्थमेवं कृतम् ? तत्राऽऽह—

**ययाऽहरद्भुवो भारं तां तनुं विजहावजः ।**
**कण्टकं कण्टकेनेव द्वयं चाऽपीशितुः समम् ॥ ३४ ॥**

**ययाऽहरदिति** । भगवतो यादवोपसंहारे आत्मत्वान्न दोषभाव इति वक्तुम् । यया यादवतन्वा सहायार्थमानीतया भुवो भारमहरत्तां तनुं विजहौ । क्लेशाभावार्थमाह—**अज इति** । न हि तेन जातोऽस्ति । तत्र दृष्टान्तमाह—**कण्टकमिति** । सर्वथाऽऽत्मीयाभावः सूचितः । तथाप्यभिमानिनां जीवानां क्लेशात्कथमेवम् । अत आह—**द्वयं चाऽपीशितुः सममिति** । नियन्तुर्द्वयं समम् ॥ ३४ ॥

भगवति विशेषमाह—

**यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः ।**
**भूभारः क्षपितो येन जहौ तच्च कलेवरम् ॥ ३५ ॥**

**यथेति** । यथा नटः स्वरूपमेव नानाविधक्रीडार्थं स्त्र्यादिरूपेण प्रदर्शयति । निवृत्ते च कार्ये तानि रूपाण्युपसंहरति । एवमिदमपीत्यर्थः ॥ ३५ ॥

एतत्कथनस्य प्रकृतोपयोगं वक्तुमाह—

**यदा मुकुन्दो भगवानिमां महीं जहौ स्वतन्वा श्रवणीयसत्कथः ।**
**तदाऽहरेवाऽप्रतिबुद्धचेतसामभद्रहेतुः कलिरन्ववर्तत ॥ ३६ ॥**

**यदा मुकुन्द इति** । सर्वेषां मोक्षदानार्थमवतीर्णो भगवान् दत्त्वा मोक्षं यदा निवृत्तस्तदा मोक्षबाधकत्वेन कलिधर्माणां निरूपणात्तेष्वागतेषु स्थितस्य मोक्षो नास्तीति निर्गमनमेव शरणमिति कालव्याप्तिरहितदेशं प्रति तदतिरिक्तहेतोर्भागवतादरभावाद्भगवतैव सह गन्तव्यमिति मतिं कृतवानित्याह—**यदा मुकुन्द इति** । "**कलिः कालमलं सर्वं कालस्वामी तु माधवः । यतो निवर्तते तत्र वह्नाविव निकृष्टता । दारौ (?) तु न तथा तेन देशान्तरगतिर्मता । अग्निभावेऽपि काष्ठेन स साध्य इति निश्चयः । मुकुन्दो भगवानिति** वचनान्मुक्त्यर्थमेव भगवदवतार इत्युपसंहारः । यद्यपि भगवतो नित्यसम्बन्धात्क्वापि त्यागो नास्ति । तथापि प्रकटितपरमानन्दरूपस्य परिच्छिन्नतया प्रदर्शनात्तन्वा जहौ । तनुद्वारा जहावित्यर्थः । भूमित्यागस्य पूर्वमनुक्तत्वान्नटवच्च तनुत्यागस्योक्तत्वात्त्यक्तस्य वस्तुत्वाभावादपूर्वविधौ अनुवादे वा सहार्थतृतीया न सम्भवति । नन्वग्रे उत्पत्स्यमानानां भक्तानां कथमुद्धार इत्याशङ्क्याऽऽह—**श्रवणीयसत्कथ इति** । तदा । तस्मिन्नित्यर्थे अव्ययम् । अहरिति लुप्तसप्तम्यन्तम् । अव्ययं वा । प्रातःकाले भगवद्गमनमिति सम्प्रदायविदः । तदैव प्रातःकाले कलिः प्रवृत्तः । ननु भगवत्कृपावलोकितानां भगवन्मार्गानुवर्त्तिनां विद्यमानत्वात्कथं कलिप्रवृत्तिरित्यत आह—**अप्रतिबुद्धचेतसामभद्रहेतुरिति** । न सर्वार्थं तदागमनम् । प्रकर्षेण विकसितकमलानां मुकुलसम्भावनारहितानामस्तमये-

---

१ दोषाभाव इति क. ग. २ आहेति नास्ति ग. ३ अपरिच्छिन्नतयेति क.

ऽपि न काचित्क्षतिः । अन्येषामस्तमयेऽन्धकारादिना कीटनिवासः स्यादेव । ज्ञानेन विकासः । भक्त्या मुकुलसम्भावनाभावः ॥ ३६ ॥

तर्हि ध्यस्य न काचिच्चिन्तेत्याशङ्क्याऽऽह—

**युधिष्ठिरस्तत्परिसर्पणं बुधः पुरे च राष्ट्रे च गृहे तथाऽऽत्मनि।**
**विभाव्य लोभानृतजिह्महिंसनाद्यधर्मचक्रं गमनाय पर्यधात् ॥ ३७॥**

**युधिष्ठिर इति**। विकलत्वाद्यभावेन दृढस्थित्याऽविकासं[1] मन्यते कालः । स तु युधिष्ठिरादीनपि तथा मन्यते । अतस्तद्देशेष्वपि महदल्पप्रभेदभिन्नेषु राष्ट्रनगरगृहशरीरेषु प्रविष्टः । अल्पविकासाच्च[2] तज्ज्ञातवानित्याह—**बुध इति**। तत्रापि विचारः—किं स्थातुमागतो द्रष्टुं वेति । तत्रापि युधिष्ठिरस्य निश्चयो जात इत्याह—**विभाव्येति** । ससामग्रीकस्य समागतत्वान्नेतो गमनं कलेः । तस्य सामग्री प्रथमतो लोभः सर्वदोषाणामाश्रयोऽन्तःकरणधर्मः । अनृतं वाग्दोषः प्रायेण स्वरूपनाशकः । प्रामाण्यकोटेः स्वरूपनिर्वाहकस्य नाशात् । कुटिलता बुद्धिदोषः । हिंसा शरीरस्य । अत्र क्रमे शिष्टं स्वयमूह्यम् । आदिशब्देन रोगादयोऽपि । **हिंसाद्यधर्मचक्रं विभाव्य गमनाय पूर्वोक्तामेव** मतिं[3] पर्यधादित्यर्थः ॥ ३७ ॥

अशक्तस्य परित्यागोऽनुचितः । त्यक्तानां वासनाजनकत्वात् । अतः **कलिभयाद्युधिष्ठिरगमनमनुचितमित्याशङ्क्याऽऽह**—

**स स्वपौत्रं विनयिनमात्मनोऽनवमं गुणैः ।**
**तोयनीव्याः पतिं भूमेरभ्यषिञ्चद्गजाह्वये ॥ ३८ ॥**
**मथुरायां तथा वज्रं शूरसेनपतिं ततः ।**
**प्राजापत्यां निरूप्येष्टिमग्नीनपिबदीश्वरः ॥ ३९ ॥**

**स स्वपौत्रमिति**। न[4] हि कलिनिराकरणासमर्थो युधिष्ठिरो गतः। तन्निराकरणार्थं पौत्रस्य स्थापितत्वात्। किन्तु शास्त्रस्य प्रामाण्यादित्यभिप्रेत्याऽऽह—**स्वपौत्रमिति** । "**आत्मना** **मेकजातानामि**"ति न्यायाद्राज्यदानाच्च—स्वेति । पौत्रग्रहणं पुत्रनामस्थापनार्थम् । गुणैर्भगवदीयत्वादिभिः । आत्मनोऽनवममन्यूनम् । अनेन दोषाभावस्तत्राऽधिक इत्युक्तं भवति । हीनस्थापने प्रजाशापः प्रसज्येत । **तोयनीव्याः** समुद्रावरणायाः । अन्ये तु राजानः स्त्रियो वस्त्ररहिता अपि स्त्रियैकदेशचरणसंवाहनादिना[5] पतित्वं मन्यन्त इति सूचितं **नीवीपदेन** । पतिमित्यनुवादः । भगवतैव तदर्थं कृतत्वात् । पतित्वार्थमिति लक्षणा च स्यात् । अतः स्वयमभिषेकमात्रं कृतवान् । एवमेव वज्रमपि कृतवान् । अनिरुद्धपुत्रो वज्रः । शूरसेनदेशस्याऽपि पतित्वज्ञापनायाऽऽह—**शूरसेनपतिमिति** । अनेन मर्यादायां यावान् देशस्तावान् दत्त इत्युक्तम् । ततस्तेषां राज्य-

१ अविकाशमिति क. ग. घ. २ अल्पविकाशाच्चेति. क. ग. घ. ३ गतिमिति ख. ४ न हीत्यादिरभिप्रेत्याऽऽहेत्यन्तो ग्रन्थो नास्ति ख. ५ वस्त्ररहिताया अपि स्त्रियैकदेशे चरणसंवाहनादिनेत्यादिः शोधितो ख्पाठः । स च तत्र यथाश्रुतं पाठं संरक्ष्यैव निवेशितः । ततश्च युक्तोऽप्ययं पुस्तकान्तरेष्वनुपलम्भान्न मूले निवेशितः।



स्वीकारानन्तरं प्राजापत्यामिष्टिं निरूप्य प्रव्राजं (?) कृतवानित्याह । वैश्वानरी प्राजापत्या वा विकल्पेन विहिता । **ईश्वर इति** । तथा करणसमर्थः ॥ ३८ ॥ ३९ ॥

यथाशास्त्रकरणादिह एव सर्वपरित्यागस्योक्तत्वादंशपरित्यागस्याऽशास्त्रार्थत्वाच्च सर्वपरित्यागनिरूपणार्थमाह—

**विसृज्य तत्र तत्सर्वं दुकूलवलयादिकम् ।**
**निर्ममो निरहङ्कारः सञ्छिन्नाशेषबन्धनः ॥ ४० ॥**

**विसृज्येति** । देहातिरिक्तपरित्यागः सुगमः । तदाह । आदिशब्देन दुकूलवलययोर्विद्यमानत्वेन ग्रहणम् । न तु शेषाभ्यनुज्ञानफलकत्वेन । "**चीरवासा**" इति यदग्रे वक्ष्यते तत्[1] परित्यागतुल्यत्वेन तज्ज्ञापनार्थम् । त्यक्तानामात्मीयत्वं निराकरोति—**निर्मम इति** । परित्यागाभिमानाभावायैतदुक्तम् । अन्तस्त्योगाय[2] वा । उभयोः कर्तव्यत्वादन्योन्यं हेतुहेतुमद्भावाच्च[3] । देहस्य सपरिकरस्य त्यागमाह—**निरहङ्कार इति**। देहेऽहन्ता[4] त्यक्ता । ममतायाः स्वरूपतो नाशान्मध्ये तिष्ठति देहादिः । तस्य त्यागप्रकारमाह—**सञ्छिन्नाशेषबन्धन इति** । बाह्यावरणं सम्यक् छिन्नमित्याह—**सञ्छिन्नेति** । पुत्रादीनामुपकारित्वबुद्धिरधुना निवृत्ता । अत एव न प्रतिबन्धकता ॥ ४० ॥

इदानीमुर्वरितस्य शरीरमात्रस्य ज्ञानकर्मभ्यां लयं वक्तुं प्रथमतो ज्ञानेन लयमाह अध्यासस्याऽज्ञानसाध्यत्वात्तन्निवृत्त्यर्थम् । तत्त्वादिप्रकारेण[5] ज्ञानसाध्यत्वात्तत्प्रकारेणैव निवर्त्यते[6] । भगवत्कृतत्वपक्षे तदाज्ञया परित्यागः । तत्रापि येन[7] क्रमेण भगवता सम्पादितं तत्क्रमकथनं चित्तप्रबोधनार्थमुचितम् । तदाह—

**वाचं जुहाव मनसि तत्प्राण इतरे च तम् ।**
**मृत्यावपानं सोत्सर्गं तत्पञ्चत्वे ह्यजोहवीत् ॥ ४१ ॥**
**त्रित्वे हुत्वा च पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिः ।**
**सर्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यये ॥ ४२ ॥**

**वाचमिति** । वाक्सम्बन्धेन हि शरीरसम्बन्धः । पुरञ्जनोपाख्याने तथा निरूपणात् । मनसो हि भार्या वाक् । प्राकृती सा । आत्मनो हि वाचस्तया वाचा सम्बन्धान्न पृथङ्निरूपणम् । अस्यां निवृत्तायां सा स्वनिष्ठा स्वत एव भविष्यति । तस्या निर्बन्धः पश्चाद्वक्तव्यो यद्वागित्यनेन । ईश्वरकर्तृके ह्यधीने[8] लयो मुख्यः । तत्र "**दूतीरेव त्वं मनसोऽसी**"ति श्रुतेर्मनोऽधीनत्वं वाचः । वाङ्नाम काचित्सर्ववागधिष्ठात्री देवता । सा ह्यभिमानिनी । यैं एव तस्या निकृष्टत्वं मन्यते तत एव निवर्तते[9] । प्रजापतेरिव । तथाऽस्मादपि निवर्तिष्यत इति भावः । तथा मनसोऽपि प्राणाधीनत्वम् । तद्गतागतिभ्यां निरूपणात् । यद्यपि प्राणनिरोधे[10] मनसः करणत्वं[11] तथाप्यग्रे निरोधकत्वात्तदधीनत्वम् । तन्निरोधेन नि-

१ न तत् परित्यागतुल्यत्वेनेति ग. २ अन्तस्त्यागाभावाय चेति ख. ३ हेतुमद्भावाच्चेति ख. ४ अहन्तात्यक्तेति क. ५ तत्त्वादिप्रकारेणाऽज्ञानसाध्यत्वादिति ख. ६ निवर्तत इति ख. ङ. ७ यत एवेति ख. यं येनेति ग. क्रमेणेति घ. ङ. ८ न ह्यस्मादपीति घ. ९ निवर्तयिष्यन्त इति क. ग. घ. १० प्राणनिरोधेनेति क. ख. ङ. ११ कारणत्वमिति क. ख.

रुद्धत्वाद्वा । तथाच देहबन्धकापगमः । अत एव योगशास्त्रे तन्मूलकत्वकथनं देहस्य । इतरे च तम् । इतरे अपाने । इतरस्मिन्निति वक्तव्ये इतर इति कथनमसर्वनामत्वज्ञापकम् । तेनाऽग्रे मलत्वेन परित्यागकथनाद्भगवत्त्वमयुक्तमिति प्राणनियामकत्वेऽपि न भगवद्दृष्टिः कर्त्तव्येति सूचितम् । होमकथनं तु पञ्चाग्निविद्ययोत्पादितशरीरस्य ब्रह्मविद्याधिकारोपयोगात्प्रकृतस्याऽतथात्वेऽपि भावनया तथात्वसम्पादनार्थम् । पूजायां शरीरनिर्माणवत् । प्रयत्नेनोर्द्ध्वनीतस्यै वायुना सहोर्ध्वमागतस्य पुनरपानेनाऽऽकर्षणात्प्राणस्याऽपानाधीनत्वम् । सांसर्गिकस्तु वायुः श्वासेन बहिर्निर्गच्छति । अन्यथा सोऽपि निर्गच्छेत् । अपानस्तु न प्रयत्नाधीनगतिकः । तस्य मृत्युरेव नियामक इति मृत्यौ तस्य लयमाह—मृत्यावपानमिति । मृत्युनैव हि स ऊर्ध्वं नीयते । केचन पुनर्योगेन प्राणं बलिष्ठं विधायाऽपानेन प्राणापकर्षणे कृते पुनः प्राणोत्कर्षणे सापानमुत्कर्षन्ति । बहिर्गमनाभावाय चाऽन्योन्यबलिष्ठत्वाद्गतिद्वयनिरोधं च कुर्वन्ति । तस्य प्रकारस्य फलार्थत्वान्न तत्प्रकृते निरूप्यते । अतः सहजासुरेऽपाने प्राणमजुहोदपानं तु मृत्याविति । ननु तेन प्रकारेण मृत्युना गृहीतेऽपाने दुर्गतिश्रवणात्किमित्यजुहोत् ? तत्राऽऽह—सोत्सर्गमिति । तत्र हि मृत्युरपानश्चोत्सर्गे गच्छतः । अत्र तूत्सर्गसहितस्याऽपानस्य मृत्यौ होमान्मृत्योस्तेन मार्गेण गमनाभावः । अतो नाऽनिष्टदातृत्वम् । मृत्युरप्यत्रैव लीयते । "मृत्युर्यस्योपसेचनमि" ति श्रुतेः । ओदनं देहो मृत्युर्घृतमित्यतो मृत्युरत्रैव निरुद्धः । "अशनया मृत्युरेवे" ति श्रुतेः । स सर्वप्राणिषु वर्त्तते । तस्य प्राणापानौ पोषकावाहारदानमलापकरणाभ्याम् । तौ चेत्तत्र निरुद्धौ देहमात्रपरिनिष्ठो देहाधीनो भवति । पश्चाद्देहं भक्षयितुमारभते । तदा तस्य नियामकानि पञ्चमहाभूतानि तं निवर्त्तन्ति । अतो योगिनो देहो न वर्द्धते न क्षीयते । एवं पञ्चमहाभूताधीनं मृत्युं प्रामाप्रामविवेकेन भूतप्रविष्टभगवत्कार्यत्वाद्भूतांशं धर्मिणं परित्यज्य प्रविष्टस्यैकस्य भगवतः पञ्चत्वात्पञ्चस्वजुहोत् । पूर्वोक्ता युक्तिर्हिशब्देन द्योत्यते । एवं तत्रापि स्वत एवाऽऽहृत्य भगवतः पञ्चत्वाभावाद्द्विपदाभिक्रमस्यैव शक्यत्वात्स्वस्मिन् काले च गच्छन् स्वेच्छया गरुडमतिक्रम्य लक्ष्म्यां समागतस्त्रित्वं प्राप्तः । कालमतिक्रम्य प्रकृतौ वा । तदेवमस्मदादिमृत्युभक्षकं पञ्चत्वरूपं भूतात्मानं भगवन्तं गुणत्रयरूपे भगवत्यजुहोत् । तदधीनत्वाद्भूतानाम् । तत्रापि गुणत्रयनिविष्टो भगवान् प्रकृतिस्वरूपे हुतः । सा हि परम्परया सर्वकार्यरूपा । तत्र हि सर्वे प्रवाहाः प्रविशन्त्यतः सर्वशब्दवाच्या । तामेकत्वरूपं भगवन्तं पुरुषरूपे आत्मन्यजुहोत् । तं च पुरुषं कालादिनियामकेऽक्षरे ब्रह्मण्यजुहोत् । तदधीनत्वात्तस्य । "तन्मायाफलरूपेणे"ति वाक्यात् । अव्यय इति वेदब्राह्मणत्वजातिचतुर्मुखनिराकरणार्थम् । अथवा । तस्याऽपि प्रकृतिपुरुषभावेन व्ययसम्भवात्तद्रहिते भगवति तदक्षरमजुहोदित्यर्थः ॥ ४१ ॥ ४२ ॥

एवं भगवन्मार्गे नवाऽऽहुतयो नवाऽग्नयः । तत्र स्वकीयं क्रमेण हुत्वा सर्वं भगवति समर्प्य त्यक्तमलांशं देहमरण्ये त्यक्तुं बहिः स्थितिमाह—

चीरवासा निराहारो बद्धवाङ् मुक्तमूर्द्धजः ।
दर्शयन्नात्मनो रूपं जडोन्मत्तपिशाचवत् ॥ ४३ ॥

१ ऊर्द्ध्वनीतस्य प्राणस्येति क. ख. २ नकारो नास्ति क. ३ भयमिति ग. ४ क्रियत इति क. घ. ५ वध्नन्तीति ख. ६ तत्रहित इति ख. ७ भगवन्मार्गेणेति घ. ८ स्वकार्य्यमिति ग.



अनवेक्षमाणो निरगादशृण्वन् बधिरो यथा ।
उदीचीं प्रविवेशाऽऽशां गतपूर्वां महात्मभिः ।
हृदि ब्रह्म परं ध्यायन्नाऽऽवर्त्तेत यतो गतः ॥ ४४ ॥

चीरवासा इति । अतः परं यद्यस्य देह उत्पद्येत पार्षदेवदुत्पत्स्यते । पश्चाद्यौ ब्रह्मविद्योपयोगिदेहवत् । एवमसमर्थस्य तूष्णीं परित्यागः सर्वनाशकः । हट्टे पतितानि वस्त्राणि चीरवासांसि । एतादृशेऽपि रक्षा विधेयेति त्रिदण्डमाह । निराहार इति प्राणदण्डः । बद्धवागिति वाग्दण्डः । मुक्तमूर्द्धज इति देहदण्डः । चित्तदण्डो वा । भ्रान्तत्वज्ञापनात् । अनेन बीजस्याऽनादरेऽनङ्कुरोत्पादकत्वं सूचितम् । एतादृशस्य सर्वसाधनसाध्यसहितस्य प्रकारेणैतदपरित्यागे पुनः सर्वदोषसङ्क्रम इति कूलङ्कषप्रवाहपतितनौकोत्तरणवद्देहोत्तरणं कर्त्तव्यमिति तत्प्रकारमाह—दर्शयन्निति । आत्मनो देहस्य । जडोऽन्तःकरणविवेकशून्यः । जडभरतवत् । उन्मत्त इन्द्रियविकलः । मदिरामत्तवत् । पिशाचो भूतग्रस्तो देहविकलः । एवं देहेन्द्रियान्तःकरणानि यथा न परैराक्रम्यन्ते तथा विधेयानि । अन्यथाऽन्यत्र प्रविष्टानि बीजभावमापद्येरन् । अनवेक्षमाणः । इतस्ततोऽविलोकयन्स्वस्मिन्नेव दत्तचित्तः । स्वभावत एवाऽन्यवचनमशृण्वन् । सर्वथाऽऽत्मनि दत्तचित्तत्वज्ञापनाय—बधिरो यथेति । दग्धपटवत्तस्य गमनसंस्कारः । इयमेवाऽवस्था ब्रह्मविदां बहिरिन्द्रियाणां विषयाग्रहणे भवति । शुकवत्तदुक्तम् । गन्तव्यदेशमाह—उदीचीमिति । यद्यपि सर्वदेशेषु नाऽस्य नाशस्तथापि मर्यादया तत्रैव गतः । महात्मभिरिति । एतदपेक्षयाऽपि ते महान्त इति तेषामनुगमनं युक्तमिति भावः । शून्यवद्गमनं वारयति—हृदि ब्रह्म परं ध्यायन्निति । यद्यपि ब्रह्माऽभिव्यक्तिदशायां ध्यानं नाऽपेक्षते । स्वत एव स्फुरति । तथाप्यनभिव्यक्तदशायां ध्यानं कर्त्तव्यम् । न तूष्णीम्भावो युक्त इति । कियद्दूरे गतमित्याकाङ्क्षायामाह । गतः प्राणी यतो नाऽऽवर्त्तेत । कण्ठपर्यन्तं हिमे जले वा । तावद्दूरे गत इत्यर्थः ॥ ४३ ॥ ४४ ॥

अन्येषां निर्गमनमाह—

सर्वे तमनु निर्जग्मुर्भ्रातरः कृतनिश्चयाः ।
कलिनाऽधर्ममित्रेण दृष्ट्वा स्पृष्टाः प्रजा भुवि ॥ ४५ ॥
ते साधु कृतसर्वार्था ज्ञात्वाऽऽत्यन्तिकमात्मनः ।
मनसा धारयामासुर्वैकुण्ठचरणाम्बुजम् ॥ ४६ ॥

सर्वे इति । अनेनैव प्रकारेण सर्वेषां गमनमाह—तमन्विति । लौकिकशास्त्रीयसम्मतिमाह—भ्रातरः कृतनिश्चया इति । भ्रातॄणां यदन्यतमः करोति तत् सर्वे कुर्वन्तीति लोकः । शास्त्रे तु निश्चितं कुर्वन्तीति । "मुख्ये शास्त्रार्थसम्भव" इति न्यायेन सर्वेषु यदि शास्त्रार्थसम्भवः स्यात् सर्वे मुख्याः स्युः । अतो लोकवद्वेदेऽपि ते गौणा एव । तत्कथं तद्वदतिदेश इत्याशङ्क्य तथा शा-

१ उत्पद्येते इति क. उत्पद्यते इति ग. २ पार्षदवद्देवेति क. ३ बीजस्याऽऽदरेऽङ्कुरोत्पादकत्वमिति क. ४ इतः प्रागनवेक्षमाण इति प्रतीकमधिकं ख. ५ सर्वदेहेष्विति ग. ६ नाऽपेक्ष्यत इति क. ग. ङ. ७ कण्ठपर्यन्तहिमे इति क. ख.

स्वार्थनिर्द्धाराभावेऽपि स्थूलप्रकारेण तेषां निर्द्धारोऽस्तीति तदाह—**कलिनेति**। भगवद्भक्तेषु विषयाणां बाधकत्वाभावेऽपि दुःसङ्गसहितानां तेषां तथात्वात्कलौ च दोषसम्भवात्कलिनाऽधर्ममित्रेण सर्वाः प्रजा भुवि स्पृष्टा दृष्ट्वा गन्तुं कृतधियो जाता इति। वैराग्यसाधनमाह—**ते साधु कृतसर्वार्था इति**। धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्थाः साधु यथा भवन्ति तथा कृताः। चतुर्णां पुरुषार्थानां स्वसाधनसाध्यतेव भगवत्सेवासाध्यताऽप्यस्ति। तत्रापि भगवत्सेवया साधिता निःप्रत्यूहमुत्तमा भवन्ति। अतस्तैः सर्वैः पुरुषार्थाः साधिताः। अथवा। साधुषु कृताः सर्वे पुरुषार्था यैः। साधुसङ्गादेव सर्वे पुरुषार्थाः सिद्धाः। अतस्तद्विरोधित्वेनाऽसत्सङ्गो हेय इति पूर्वेण सम्बन्धः। अथवा। भक्तिः पञ्चमः पुरुषार्थः। चत्वारस्तैरनुभूताः। भक्तिश्च पञ्चमः। तत्र तारतम्ये विचार्यमाणेऽत्यन्तं सुखं सुखहेतुश्च भक्तिरेव। अत आत्यन्तिकं ज्ञात्वा श्रीकृष्णचरणारविन्दमेव मनसा धारयामासुः। न त्वन्यं कुसृष्टिप्रकारम्[1] ॥ ४५ ॥ ४६ ॥

ततः किं वृत्तमित्याह—

**तद्ध्यानोद्रिक्तया भक्त्या विशुद्धधिषणाः परे।**
**तस्मिन्नारायणपदे एकान्तमतयो गतिम् ॥ ४७॥**
**अवापुर्दुरवापां ते असद्भिर्विषयात्मभिः।**
**विधूतकल्मषाः स्थानं विरजेनाऽऽत्मनैव हि ॥ ४८ ॥**

**तद्ध्यानोद्रिक्तयेति**। तद्ध्यानेनोद्रिक्ता उच्छलिता या भक्तिः। सर्वाङ्गे पूर्णा बहिरपि निर्गता। तेनाऽन्तःस्थान् दोषान् दूरे बहिः करोति। अतो विशुद्धधिषणाः। ततः **परे** पुरुषोत्तमेऽनन्यशब्दवाच्ये **तस्मिन्** प्रसिद्धे **नारायणपदे** नारायणो ब्रह्माण्डरूपः पदं यस्य। अनेन शास्त्रार्थरूपे एकान्तमतयो भूत्वा। दोषादेव व्यभिचारबुद्ध्युत्पत्तेः[2]। **गतिं** गमनसामर्थ्यं गमनमेव वा अवापुः। पूर्वस्य शास्त्रतः साधनान्युक्तानि। न फलम्। एतेषां तु फलमप्युक्तम्। अथवा। ज्ञानमार्गेण राज्ञो गतिरन्येषां भक्तिमार्गेणेति। अथवा। लोकेभ्यस्तिरोभावपर्यन्तमसाधारण्येन गमनमुक्त्वा पश्चात्सर्वेषां साधारण्येन गमनं साधनं फलं च। अतः सर्व एव शास्त्रमार्गं परित्यज्य केवलविषयात्मभिर्दुरवापां गतिमापुरिति सर्वेषामेव भगवत्प्राप्तिः फलम्। असद्भिरित्याचाराराहित्यम्। सिद्धेऽपि ज्ञानेऽभिमानशेषस्य विद्यमानत्वात्तत्कृतो दोषः स्यादेव। विषयात्मभिरित्यन्तःकरणदोषः प्रत्येकंगमने हेतुः[3] पाषण्डिविषयव्यावृत्त्यर्थम्। ततो गतिं प्रतिपद्य समीपे गच्छन्तः। क्रमेण तत्त्वांशातिक्रमे यदा सर्वांशातिक्रमस्तदा विधूतकल्मषत्वम्। आत्मापेक्षयाऽन्यस्य सर्वस्यैव कल्मषत्वात्। स्थानस्य स्वस्य चैकरूपत्वम्। तदाह—**विरजेनेति**। हि युक्तोऽयमर्थः। न ह्यशुद्धाः शुद्धे गन्तुमर्हन्ति। शुद्धानां वा अशुद्धं स्थानं भवति। तस्माद्यथायोग्यं स्थानं प्राप्तवन्त इत्यर्थः ॥ ४७ ॥ ॥ ४८ ॥

**अधिकारिणां तु**[4] भक्तानामपि "**यावदधिकारं त्वाधिकारिकमि**"ति न्यायेन न भगवत्प्राप्तिः। किन्तु स्वस्थानप्राप्तिरेवेति विदुरे तदाह—

1 कुसृष्टिप्रकारमिति क. ग. 2 व्यभिचारे बुद्ध्युत्पत्तेरिति ख. 3 प्रत्येकगमने हेतुरिति ग. घ. 4 तुर्नास्ति क. ग. घ.



**विदुरोऽपि परित्यज्य प्रभासे देहमात्मवान्।**
**कृष्णादेशेन तच्चित्तः पितृभिः स्वक्षयं ययौ ॥ ४९ ॥**

**विदुरोऽपीति**। प्रभासो ह्यधिकारस्थानमार्गः। **आत्मवान्**। इन्द्रियादिसहितः पूर्वदेहसहितो वा। मोक्षार्थमाग्रहाकरणे हेतुः—**कृष्णादेशेनेति**। तच्चित्त एव भगवदाज्ञया अधिकारं करोमीति। **पितृभिरिति**। समानयनार्थमागतैः। स्वक्षयं वैवस्वतपुरम्। क्षयपदप्रयोगस्तु तत्र गतानां तथात्वात् ॥ ४९ ॥

द्रौपद्या भिन्नां गतिमाह—

**द्रौपदी च तदाज्ञाय पतीनामनपेक्षताम्।**
**वासुदेवे भगवति ह्येकान्तमतिरापतत् ॥ ५० ॥**

**द्रौपदीति**। सा पूर्वमेव भगवदीया भगवच्चरणप्रवेशार्थमुद्यताऽपि भगवता पतिभ्यो दत्तत्वात्तद्धितार्थं स्थिता। तेषां चाऽनपेक्षतां ज्ञात्वा स्वहृदय एव प्रकटे भगवत्येकान्तगतित्वादस्या[1] देहेन्द्रियादिसङ्घातादुत्क्रम्य भगवत्यापतदित्यर्थः ॥ ५० ॥

एवमध्यायत्रयस्य प्रासङ्गिकत्वं ज्ञापयितुं चरित्रश्रवणफलमाह[2]—

**यः श्रद्धयैतद्भगवत्प्रियाणां पाण्डोः सुतानामभिसम्प्रयाणम्।**
**शृणोत्यलं स्वस्त्ययनं पवित्रं लब्ध्वा हरौ भक्तिमुपैति सिद्धिम् ॥ ५१ ॥**

**यः श्रद्धयेति**। भगवतः सर्वांशसहितस्य सर्वश्रवणे सर्वं फलमित्यंशे खण्डशः फलमनूद्यते। कचित्पूर्वसहितम्। अतो नाऽन्यानर्थक्यम्। वैष्णवत्वात्तेषु श्रद्धा। तेषां स्वातन्त्र्यादिगुणवत्त्वं स्वतोऽपीति द्योतयितुं **पाण्डोरित्युक्तम्**। ऐहिकफलं **स्वस्त्ययनं पवित्रमिति** इष्टप्राप्त्यनिष्टनिवृत्तिरूपम्। आमुष्मिकं तु भक्तिः साधनं भगवत्प्राप्तिः फलम्। **सिद्धिमित्य**[3]लभ्यलाभप्राप्त्यर्थमुक्तम् ॥ ५१ ॥

**इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां प्रथमस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥**

---

1 अस्येति ख. 2 श्रवणमाहेति ख. 'यःश्रद्धये' ति श्लोकस्तट्टीका तदवतरणं चेति किमपि नास्ति घ. 3 सिद्धमितीति क. ख.

## षोडशोऽध्यायः ।

मुक्तिर्निरूपिता पूर्वमधिकारनिरूपणे ।
पारलौकिकबन्धस्य निवृत्त्यै पितृहेतुतः ॥ १ ॥
ऐहिकस्याऽपि बन्धस्य निवृत्तिरधुनोच्यते ।
अधिकारस्य सम्प्राप्त्या लोकतो बन्धसम्भवः ॥ २ ॥
कलिदोषाच[1] तेनाऽत्र क्रमेणैव निवार्यते ।
प्रथमं षोडशोऽध्याये[2] स्वाधिकारेण यद्भवेत् ॥ ३ ॥
भूधर्मरक्षा सर्वाऽपि सामान्येन विशेषतः ।
निरूप्यतेऽन्यथा स्वस्य दोषः स्याद्[3] द्विविधोऽपि हि ॥ ४ ॥
अतः पुत्रान् समुत्पाद्य धर्मरक्षा निरूप्यते ।
आधिदैविकरक्षार्थं कलिनिग्रह ईर्यते ॥ ५ ॥
स्वभावतः स्थापितोऽपि मूलदोषाच्च वर्द्धते ।
मूलनिर्हरणं तस्मात्कर्त्तव्यमिति निश्चयः ॥ ६ ॥
आधिदैविकरूपाणां साक्षात्कारो यदा नहि ।
भगवच्चरितस्याऽपि दैविकत्वात्स[4] नैव हि ॥ ७ ॥
अतोऽधिकारसिद्ध्यर्थं दैविकानां निरूपणम् ।
अनुग्रहो निग्रहश्च वरदानं तथैव च ॥ ८ ॥

एवं परीक्षितः पाण्डवकृतप्रतिबन्धनिवृत्त्यर्थं तेषां मुक्तिमुक्त्वा "**आश्चर्यवत्पश्यति कश्चिदेन-मि**"ति न्यायेन "**श्रुत्वाऽप्येनं वेद न चैव कश्चिदि**" ति निर्धाराच्च तथा श्रवणं मा भूदिति पूर्वं तस्याऽऽधिदैविकसाक्षात्कारादिकं निरूपयितुं जातके सूचितं स्वरूपं तस्याऽनुवदति—

सूत उवाच—

**ततः परीक्षिद्द्विजवर्यशिक्षया महीं महाभागवतः शशास ह ।**
**यथा हि सूत्यामभिजातकोविदाः समादिशन् विप्रमहद्गुणस्तथा ॥ १ ॥**

**ततः परीक्षिदिति** । "**यस्त्विच्छया कृतो धर्म**" इति वाक्याद्राज्यरक्षाऽपि स्वेच्छया न कृतेत्याह—**द्विजवर्यशिक्षयेति** । भगवद्भक्ता ब्राह्मणा द्विजवर्याः । तेषामेव धर्मसूक्ष्मपरिज्ञानम् । "**नारायणपरा विप्रा धर्मं गुह्यं परं विदुरि**"ति वाक्यात् । बोधितस्य हृदये समागमनार्थमाह—**महाभागवत इति** । भगवद्भक्तेष्वपि महान् । अनेन त्रयं सूचितम् । सर्वत्र भगवद्भजनप्रवृत्तिर्भूमेर्भगवद्भार्याया अपि हेतुवशादन्यपालकत्वे तन्निराकरणेन भगवद्धर्मप्रवृत्तिपरत्वं धर्मस्य च भगवदीयत्वेन परिपालनमिति । हेत्याश्चर्यं । भगवद्भक्तानां कार्यविशेस्याऽयुक्तत्वात् ।

1 कालदोषाच्चेति ख. 2 षोडशेऽध्याये इति ग. घ. 3 स्याद्विविधोऽपि हीति ख. ग. घ. 4 सदैव हीति घ.



भगवद्वाक्यत्वेऽपि स्वरूपाविष्टत्वात् । तथात्वे वा परमभागवतत्वं न भवेदित्युभयमत्रेत्याश्चर्यम् । आश्चर्यं समर्थयितुं कालकृतमेतन्न भगवत्प्रेरणयेति ज्ञापयितुमाह—**यथा हीति** । **सूत्यां** जन्मकाले । **अभिजातं** जातकम् । तत्र **कोविदा** निपुणाः । विप्रेषु महान् गुणो यस्य । ब्रह्मण्यतेति यावत् । अतः कालकृतशुभफलसिद्धिः ॥ १ ॥

इदानीं तस्य कृतस्य भूरक्षणस्योत्तरत्राऽनुवृत्तिसिद्ध्यै पुत्रानुत्पादितवानित्याह—

**स उत्तरस्य तनयामुपयेम इरावतीम् ।**
**जनमेजयादींश्चतुरस्तस्यामुत्पादयत्सुतान् ॥ २ ॥**

**स उत्तरस्येति** । मातुलकन्यापरिणयनं लोके विहितम् । स्मृतौ निषिद्धम् । लौकिकधर्माणां दृष्टान्तीकरणप्रस्तावे "**मातुलस्येव योषा भाग**" इत्यत्र निरूपणात् । "**मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेदि**" ति स्मृतेः । अतः केवलधर्मार्थं तादृशो विवाहो न कर्त्तव्यः । लौकिकबलशौर्य्याद्यपेक्षायां तु कर्त्तव्य एव । अत उत्तरस्य मातुलस्य स्वसमानबलसिद्ध्यै इरावतीमुपयेमे । नाम्ना च वैष्णवत्वं सूचितम् । सर्वपृथिवीरसवत्त्वात्तस्यामुत्पन्नस्य बलं, तदुपभोगात्स्वस्य च, अलौकिकं सौख्यं च सूचितम् । श्रुतौ रोदसीत्वकथनाद्भगवत्परिपाल्यत्वं च । तस्याश्चत्वारः पुत्रा जाताः । सुतानिति स्वतः । चतुर्दिक्षु रक्षा चतुर्विधपुरुषार्थसिद्धिश्च तावतैव भविष्यतीति नाऽधिकोत्पादनम्[1] ॥ २ ॥

आधिदैविकप्रकारेणाऽश्वमेधकरणं पूर्ववदाह—

**आजहाराऽश्वमेधांस्त्रीन् गङ्गायां भूरिदक्षिणान्[2] ।**
**शारद्वतं गुरुं कृत्वा देवा यत्राऽक्षिगोचराः ॥ ३ ॥**

**आजहारेति** । त्रिविधोऽपि दोषस्तावतैव निवृत्त इति नाऽधिककरणम् । **गङ्गायामिति** । गङ्गागर्भभूमौ । **भूरिदक्षिणानिति** सभार्या यज्ञाः पुष्टा इति ज्ञापनार्थम् । धौम्यस्य पाण्डवैकनिष्ठत्वात्कुलाचार्यः कृप एवाऽनेन गुरुत्वेन स्वीकृत इत्याह—**शारद्वतमिति** । शरस्तम्बे जातः कृपः । एवं भूरिदक्षिणाब्राह्मणसम्पत्तौ याग आधिदैविको जात इत्याह—**देवा यत्राऽक्षिगोचरा इति** । हविर्भागभुजो देवा भगवदंशभूता आधिदैविकाः । त एव वैदिकमन्त्रे प्रतिपाद्याः । मन्त्रप्राधान्यपक्षेणाऽऽध्यात्मिकाः । त एव ज्ञानरहितैः क्रियमाणाः कर्मशेषभूता आधिभौतिका भूतसंस्कारकाः । उत्तमास्तु भगवदंशभूता भगवानिव प्रत्यक्षाः ॥ ३ ॥

एवं सामान्यधर्मं विशेषधर्मं चोक्त्वाऽऽधिदैविकत्वख्यापनार्थं धर्मप्रतिपक्षिनिग्रहमाह—

**निजग्राहौजसा[3] वीरः कलिं दिग्विजये क्वचित् ।**
**नृपलिङ्गधरं शूद्रं घ्नन्तं गोमिथुनं पदा ॥ ४ ॥**

**निजग्राहेति** । अन्यथा पाण्डवानामिवाऽस्याऽपि निर्गमनमुचितं स्यात् । पाण्डवैः कलिभीतै-

1 नाऽधिकरणमिति ख. नामकरणमिति घ. 2 दक्षिणा इति घ. ङ. 3 निजग्राहौजसेतीति घ. नास्ति क. ग.

गतम् । अयं तु तमपि निजग्राहेति पूर्वोत्कर्षः । **क्वचिदिति** । कुरुक्षेत्रे । कलेरवस्थारूपमाह—**नृपलिङ्गधरमिति** । कले रूपत्रयम् । पापं शूद्र उभयविशिष्टो राजा च । तत्रोभयविशिष्टो राजा चाधिदैविकं रूपम् । तदाह—**नृपलिङ्गधरमिति** । पशुषु पुत्रेणाऽपि सहिता गौर्मिथुनत्वेन व्यपदिश्यते । "**मातरमभिगच्छन्ती**" ति श्रुतेः । अत एव कलिस्पर्शयोग्यं रूपं प्रदर्शितम् । शकटमारुह्य गां बलीवर्दं च योजयित्वा लम्बमानपदेन घ्नन्तम् । अथवा । विजित्य गोमिथुनं स्वविषये नयन्तं राजानम् । पापाधिष्ठातृत्वाद्धर्मभूवाक्यानामश्रवणम् । अस्य तु श्रवणं दर्शनं चेति निग्रहसामर्थ्यम् । इदानीन्तनवद्भाषाऽपरिज्ञानेऽपि दर्शननियमनादिकं सम्भवति ॥ ४ ॥

अस्मिन्वाक्ये शौनकस्य सन्देहो जातः । कलिरन्यः शूद्रस्त्वन्य इति । तस्मिन्वाऽऽविष्टः कलिरित्यन्यायिनं वा मारयति । अविद्यमानेऽपि चकारे पदार्थद्वयकथने एकक्रियायां समुच्चयप्रतीतिः । अतः पृच्छति—

## शौनक उवाच—

कस्य हेतोर्निजग्राह कलिं दिग्विजये नृपः ।
नृदेवचिह्नधृक् शूद्रः कोऽसौ गां यः पदाऽहनत् ॥ ५ ॥

**कस्य हेतोरिति** । दिग्विजये हि राज्ञां जयः कर्त्तव्यः । न तु कालस्य । स्वाधारत्वात् । व्यर्थश्च कलिनिग्रहः । कालस्य साधारणनिमित्तत्वात् । तथैव कालनिर्णयात्कलिनिमित्तं च राज्यस्य प्राप्तत्वात् । अतो हेत्वभावादशक्यत्वाच्च विग्रहनिग्रहे कालनिग्रहाभावात्प्रश्नः । तत्रापि नृपः कालावच्छिन्नराजा । तद्विशेषणत्वेन शूद्रमजानन्नाह—**नृदेवचिह्नधृगिति** ॥ ५ ॥

**शूद्रस्य कथं स** वेषः कुतो वा प्राप्तः । तथाभूतस्य वा कथं पदा गोताडनम् । अतः सन्देहनिवारणार्थं तत्कथयेत्याह—

तत्कथ्यतां महाभाग यदि कृष्णकथाश्रयम् ।
अथवाऽस्य पदाम्भोजमकरन्दलिहां सताम् ।
किमन्यैरसदालापैरायुषो यदपव्ययः ॥ ६ ॥
क्षुद्रायुषां नृणामङ्ग मर्त्यानामृतमिच्छताम् ।
इहोपहूतो भगवान् मृत्युः शामित्रकर्मणि ॥ ७ ॥

**तत्कथ्यतामिति** । अन्यनिषेधार्थं सम्बोधयति—**महाभागेति** । महत्तव भाग्यं यद्भगवत्कथायां नियुक्तस्तदभिज्ञश्च । अतः स्वार्थाविरोधित्वे कथनीयमन्यथा नेत्याह—**यदि कृष्णकथाश्रयमिति** । कृष्णकथाया आश्रयः । तत्कथायां भगवत्कथा वर्तत इति यदि, तदा कथ्यताम् । भगवत्कथाधारत्वाभावेऽपि वस्तुतो भगवदीया ये तत्सम्बन्धिन्यन्याऽपि या कथा तदाश्रयत्वेऽपि कथ्यतामित्याह—**अथवेति** । भक्तिरसास्वादवतामित्यनेन भक्तिरसस्पर्शाभावकथाराहित्यं तेषां सूचितम् । सतामित्यनेन

१ पूर्वोत्कर्ष इति ख. २ योग्यरूपमिति ३ लम्बमानपादेनेति घ. ४ नियमादिकमिति ग. घ. ङ. ५ तथापीति क. ग. ६ अन्यनिषेधार्थमिति ख. ग. घ. ७ भक्तिरसस्पर्शाभावे इति घ.



व्यामोहनार्थमप्यन्या कथा निवारिता । पुरुषसुखं ब्रह्मसुखमर्थसुखं च ददातीति मकरन्दः । "**गमध्वे**" ति संज्ञायां खश् । स भगवच्चरणारविन्दैकनिष्ठः प्रेमसेवायामाविर्भावस्वरूपो भक्तैकभोग्यो विशेषतो निर्वचनाशक्यः । यदर्थं सर्वोऽपि भक्तिमार्गः शास्त्रं च । तदास्वादनयुक्तानां कथया शास्त्रार्थपरिज्ञानं भवति । अतः प्रमाणकथा प्रमेयकथा वा तदाश्रिता चेत्तदा कथनीया । अन्यथाऽस्याऽपि सन्देहापादकत्वादसत्त्वम् । असन्नालापः । असतां वा आलापः । उभयस्योभयं प्रतियोगि । तादृशैः किं प्रयोजनम् । नन्विष्टालापाः पुष्टिकरा इति कालगमनमेव प्रयोजनम् । तत्राऽऽह—**आयुषो यदपव्यय इति** । कोटिसुवर्णैरपि यदायुः क्षणमात्रमलभ्यं तादृशस्याऽऽयुषोऽपव्ययः अन्यायव्ययः । अतं आयुःक्षयकरत्वात्तन्न वक्तव्यम् । सत्रारम्भस्त्वायुर्वृद्ध्यर्थमेवेत्याह—**क्षुद्रायुषामिति** । अल्पायुषां प्राणिनां मरणावश्यकत्ववतां मरणक्लेशनिवृत्त्यर्थममृतमिच्छतामर्थे मृत्युरिहोपहूत इति सम्बन्धः । पूर्वेण वा । क्षुद्रायुषां किमन्यैरसदालापैरिति । सहस्रसंवत्सरसत्रेऽमृतमाविर्भवतीति निश्चयः । विद्यमानानां च मृत्युर्बाधकः । आधिदैविकश्च सः । अतो यज्ञभागभोगार्थमिहाऽऽहूतः । अवस्थाभेदेन पशूनां तद्भागत्वात् । "**मृत्यवे वा एष नीयते यत्पशुरि**"ति श्रुतेः । "**रौद्रं गवी**" ति न्यायेनाऽवस्थाभेदेनाऽपि हविर्भाक्त्वम् । **शामित्रं** पशुहिंसनम् । तत्र कर्मणि देवताया अपेक्षा सूचिता । अधर्मकोटित्वाभावाय—**भगवानिति** ॥ ६ ॥ ॥ ७ ॥

किमतो यद्येवम् ? तदाह—

न कश्चिन्म्रियते तावद्यावदास्त इहाऽन्तकः ।
एतदर्थं हि भगवानाहूतः परमर्षिभिः ।
अहो नृलोके पीयेत हरिलीलामृतं वचः ॥ ८ ॥

**न कश्चिदिति** । ततोऽपि किम् ? **एतदर्थमिति** । लोके कोऽपि न म्रियताम् । अस्मत्सत्रेणाऽऽविर्भूतेनाऽमृतेन पीतेनाऽमरा एव भवन्तु सर्वे ; मध्येऽपि न म्रियन्ताम् । इत्यर्थं निश्चित्य तन्निर्वाहार्थं परमर्षिभिराह्वानसमर्थैर्भगवानिहाऽऽहूतः । स चाऽदृश्यः कथारूपेण समागतः । अत एव **अहो** इत्याश्चर्यम् । यतो लोके हरिलीलामृतं वचः पीयेत । अयमर्थः । अस्माभिः सत्रं समारब्धं स्वापकीर्त्तिनिवारणार्थम् । सत्रे हि समारब्धे सर्वे म्रियन्ते । "**यैः सत्रायागुरत**" इति श्रुतेः । किमेते सत्रिणे इति च । ततस्तद्दोषपरिहारार्थमृषिभिरेवं विचारितम् । अत्र भगवानाह्वातव्यः । यागश्च तत्र समर्पणीयः । मृत्युश्च शामित्रकर्मणि । ततश्चाऽस्मदपकीर्त्तिर्गमिष्यतीति । तत्र भगवता तथैव सम्पादितम् । स्वयमागतः । कथारूपेण च समागतस्त्वद्द्वारा । इदं त्वाश्चर्यम् । अतो दृष्टद्वारैव प्राणिनाममृतं भविष्यति । अन्यथा वरादिद्वारेणाऽदृष्टद्वारा तत्सिध्येत् । अत आश्चर्यस्य सिद्धत्वाद्भगवच्चरित्रमेव वक्तव्यं त्वया नाऽन्यदिति ॥ ८ ॥

ननु ते स्वत एव स्वमृत्युं निवारयिष्यन्ति । किं भवत्प्रयासेनेत्यत आह—

मन्दस्य मन्दप्रज्ञस्य वयो मन्दायुषश्च वै ।
निद्रया ह्रियते नक्तं दिवा च व्यर्थकर्मभिः ॥ ९ ॥

१ भक्तैकभोग्य इति घ. २ अतस्त्वायुःक्षयेति क. अत्राऽऽयुःक्षयेति ग. ३ हरिलीलामृतवच इति ख. ४ यः सत्रायागुरत इतीति क. ख. यो मात्रायागुरत इतीति घ. ५ सत्रिणा इति चेति ख. ६ अवतारादिद्वारे इति क. ग. घ. ७ अदृष्टद्वेति घ.

**मन्दस्येति** । मन्दस्य अलसस्य । अनेन कर्माभावः सूचितः । मन्दा प्रज्ञा यस्येति ज्ञानाभावः । मन्दमायुर्यस्येति भक्त्यभावः । तस्य नक्तं वयः रात्रिसम्बन्ध्यायुर्निद्रया ह्रियते । दिवा चाऽऽयुर्व्यर्थकर्मभिरिति । अतः सर्वस्याऽप्यायुषोऽन्यत्र विनियोगान्न तेषां सामर्थ्यम् ॥ ९ ॥

भगवत्कथाश्रयत्वं कलिनिग्रहस्य मत्वा तस्य प्रस्तावनामाह—

सूत उवाच—

**यदा परीक्षित्कुरुजाङ्गलेऽवसत्कलिं प्रविष्टं निजचक्रवर्तिते ।**
**निशम्य वार्त्तामनतिप्रियां ततः शरासनं संयुगशौण्डिराददे ॥१०॥**
**स्वलङ्कृतं श्यामतुरङ्गयोजितं रथं मृगेन्द्रध्वजमास्थितः पुमान् ।**
**वृतो रथाश्वद्विपपत्तियुक्तया स्वसेनया दिग्विजयाय निर्गतः ॥ ११ ॥**
**भद्राश्वं केतुमालं च भारतं चोत्तरान् कुरून् ।**
**किम्पुरुषादीनि सर्वाणि विजित्य जगृहे बलिम् ॥ १२ ॥**

**यदा परीक्षिदिति** । कुरुजाङ्गले देशे हस्तिनापुरेऽवसत्तदा निजचक्रवर्तिते कलिं प्रविष्टं श्रुत्वा शरासनमाददे इति सम्बन्धः । वसन्निति पाठे भवतीत्यर्थो योजनीयम् । अभूदिति वा । पाण्डवैरेव राज्यस्य साधितत्वान्निष्कण्टके राज्ये स्वयमुपविष्टो नाममात्रेण राजेति हृदये दुःखमासीत् । तत् कलिप्रवेशे श्रुते विशेषतः शिक्षणं[1] समागतमिति प्रोत्साहो जातः । तथापि राज्येऽधर्मः प्रविष्ट इत्यनतिप्रिया वार्त्ता[2] । राजाज्ञाऽकरणे[3] कलिस्तत्प्रयोजकः[4] । तदकरणे त एव मारणीयाः । दैत्यपक्षपाताभावे हृदयपूर्वकाज्ञोलङ्घनासामर्थ्यात् । तस्माद्दैत्यवधे न दोष इति **संयुगशौण्डिः** युद्धशूरः शरासनमाददे दूरादेव तान् मारयिष्यामीति । देवाश्वानां दैत्याभिमुखता न सम्भविष्यतीति श्यामतुरङ्गयोजितं[5] रथमारुरुहे । राजत्वज्ञापनाय—**स्वलङ्कृतमिति** । रत्नादिघटितम् । **मृगेन्द्रध्वजमिति**[6] स्वस्याऽसाधारणं चिह्नम् । कलिश्च गजरूप इति । गर्दभरूपो वा । सिंहरूपेण भगवता दैत्येन्द्रवधाद्वा । **पुमा**निति सहायशूरत्वम् । पुरादिति पाठे नगरायुद्धार्थमेव निर्गतो न तु विचारं कृतवानिति । दिग्विजये कृतेऽन्यदान्तरालिकं स्वयमेव भविष्यतीति दिग्विजयायेत्युक्तम् । अस्य जम्बूद्वीपाधिपत्यम् । तस्य नव खण्डाः । तत्र प्रथमं परितः परिभ्रमणं कृतवान् । तत्र पश्चिमभागे भद्राश्वं नाम वर्षम् । केतुमालं पूर्वभागे । भारतं दक्षिणतः । उत्तराः कुरव उत्तरभागे । अन्ये मध्यस्थाः किम्पुरुषादयः । नवखण्डजयं कृत्वा स्वाज्ञां प्रचारितवान् । तत्र प्रमाणं बलिं गृहीतवानिति ॥ १० ॥ ११ ॥ १२ ॥

कलिस्त्वान्तरालिक इति ज्ञापनार्थं प्रथमं तत्र भगवद्भक्तिः स्थितेति निरूपयति—

**तत्र तत्रोपशृण्वानः स्वपूर्वेषां महात्मनाम् ।**
**प्रगीयमानश्च यशः कृष्णमाहात्म्यसूचकम् ॥ १३ ॥**

१ शिक्षणसमागतमिति क. ग. २ अनतिप्रियां वार्तामिति ख. ३ राज्ञा करणे इति क. ४ कलिस्तत्प्रयोजक इति ख. कलिस्तत्वप्रयोजक इति ग. ५ श्यामतुरगयोजितमिति क. ६ मृगेन्द्रध्वज इतीति क. ख. ग.



**आत्मानश्च परित्रातमश्वत्थाम्नोऽस्त्रतेजसः ।**
**स्नेहश्च वृष्णिपार्थानां तेषां भक्तिश्च केशवे ॥ १४ ॥**
**तेभ्यः परमसन्तुष्टः प्रीत्युज्जृम्भितलोचनः ।**
**महाधनानि वासांसि ददौ हारान् महामनाः ॥ १५ ॥**

**तत्र तत्रेति** । यत्रैव गच्छति तत्रैवाऽर्जुनरथस्य गतिं शृणोति । तत्रत्याः कृष्णं दृष्टवन्तो माहात्म्यं च गायन्ति । पाण्डवभगवत्सम्बन्धं च जानन्ति । तत्सर्वं गायन्ति । अत एनं परीक्षितं च ते जानन्ति ब्रह्मास्त्रतो भगवता परिपालितम् । स्नेहं भक्तिं च यावज्जानन्ति तत्सर्वं गायन्ति । अतः प्रगीयमानं शृण्वानः संहृष्टस्तेभ्यो ददाविति सम्बन्धः । अनेन प्राप्तस्य धनस्य तत्रैव विनियोग उक्तः । मात्सर्याभावश्च । यथापूर्वं धर्मस्थापनं चोक्तम् । प्रीत्युज्जृम्भितलोचन इति तेषामपराधसहनमपि सूचितम् । **महामना** इति स्वकृतार्थता च ॥ १३ ॥ १४ ॥ १५ ॥

**सारथ्यपारषदसेवनसख्यदौत्य-**
**वीरासनानुगमनस्तवनप्रणामम् ।**
**स्निग्धेषु पाण्डुषु जगत्प्रणतिं च विष्णो-**
**र्भक्तिं करोति नृपतिश्चरणारविन्दे ॥ १६ ॥**

एवं वर्त्तमाने तस्मिन् किञ्चिदाश्चर्यं वृत्तं तद्वक्ष्यति । मध्ये सारथ्येति श्लोकः प्रायेण विगीतः । तं केचन श्रुत्वेति पदमध्याहृत्य करोतीति कृतवानित्यर्थे व्याख्याय योजयन्ति । जगत्कर्तृकां प्रणतिं च श्रुत्वेति । जगत्प्रणतस्येति वा पाठः ॥ १६ ॥

एवं कलिकार्यं दूरीकृत्य जगति धर्मं स्थापयित्वा विष्णुभक्तिं च, कलिनिग्रहार्थमाधिदैविकधर्मे उपकारमाह—

**तस्यैवं वर्त्तमानस्य पूर्वेषां वृत्तमन्वहम् ।**
**नाऽतिदूरे किलाऽऽश्चर्यं यदासीत्तन्निबोध मे ॥ १७ ॥**

**तस्यैवमिति** । एवं वर्त्तमानस्य तस्य सतो निकट एव किञ्चिज्जातं तन्निबोधेति सम्बन्धः । वर्तमानस्य नाऽतिदूरे वा । क्रियापेक्षया देशनैकट्यम्[1] । कालनैकट्यं तूक्तमेव ॥ १७ ॥

धर्मः पृथिवी च राजानं बोधयितुमेव तादृशरूपेण समागतौ स्वस्वव्यवस्थामन्योन्यमुखतो निरूपयतः । कलिश्चाऽऽध्यात्मिके रूपे[2] निराकृते स्थानं प्रार्थयितुं तद्रूपेण प्रकटः । राजान्वेषणार्थमेव प्रवृत्तौ मध्ये मिलितौ । तदाह—

**धर्मः पदैकेन चरन् विच्छायामुपलभ्य गाम् ।**
**पृच्छति स्माऽश्रुवदनां विवत्सामिव मातरम् ॥ १८ ॥**

**धर्म इति** । एकेन पदा चलन् सत्यात्मकेन । अंशतो व्याख्यानं[3] न श्रौतम् । देवता-

१ देशनैकट्यमिति ख. २ आध्यात्मिकरूपे इति ख. ३ व्याख्यानेनाऽश्रौतमिति क.

रूपत्वाच्च न¹ लौकिकानुपपत्तिः । पादानां नामतः स्वरूपतश्च भेदो युगभेदेन कल्पभेदेन च व्यवस्थापनीयः । विच्छायां विवर्णाम् । चरेणः² पुरुपाधः सच्छायस्तिष्ठति । तदभावे विच्छाय एव । गां पृथिवीं गोरूपाम् । केचन कृष्ण्याद्यभावाच्छायाभावमाहुः³ । कालेन म्लानां वा । अश्रुवदनाम् । अश्रूणि वदने यस्याः । अनेनाऽन्तस्तापा । भूमौ बाष्पजलमेव जलं न वृष्टिजलम् । वत्सरहिता गौरिव केवलं पितॄणामुपयोगिनी । तथा पृथिव्यपि मरणार्थमेवोपयुज्यते न जीवनार्थमिति मातृपदं व्याख्यातम् ॥ १८ ॥

आमयं ज्ञात्वाऽपि व्यवहारानुसारेण पृच्छति—

कच्चिद्भद्रेऽनामयमात्मनस्ते विच्छायाऽसि म्लायतेषन्मुखेन ।
आलक्षये भवतीमन्तराधिं दूरे बन्धुं शोचसि कञ्चनाऽम्ब ॥ १९ ॥
पादैर्न्यूनं शोचसि मैकपादमुताऽऽत्मानं वृषलैर्भोक्ष्यमाणम् ।
अहो सुरादीन् हृतयज्ञभागान् प्रजा उतस्विन्मघवत्यवर्षति ॥ २० ॥
अरक्ष्यमाणाः स्त्रिय उर्वि बालान् शोचस्यथो पुरुषादैरिवाऽऽर्त्तान् ।
वाचं देवीं ब्रह्मकुले कुकर्मण्यब्रह्मण्ये राजकुले कुलाग्र्यान् ॥ २१ ॥
किं क्षत्रबन्धून् कलिनोपसृष्टान् राष्ट्राणि वा तैरवरोपितानि ।
इतस्ततो वाऽशनपानवासस्नानव्यवायोन्मुखजीवलोकम् ॥ २२ ॥

**कच्चिदिति** । भद्रे इति सम्बोधनं परीक्षिदस्ति पालक इति ज्ञापनार्थम् । यद्यपि वैकुण्ठे भगवद्भार्या त्वं सुखेन⁴ तिष्ठसि तथापि तवाऽऽत्मनः पृथिवीरूपस्याऽनामयं कच्चित् । रोगस्तु तत्र नास्ति । आधिः सम्भाव्यते । तदाह । ईषन्म्लायता मुखेन यतो विच्छायाऽसि । अतो भवतीमन्तराधिं लक्षये । अन्तरा आधिर्यस्याः सा ताम् । तत्राऽऽधिहेतूनुत्प्रेक्षते । दशेन्द्रियाणि । अन्तःकरणचतुष्टयम् । ततश्चतुर्दश शोकहेतूनुत्प्रेक्षते— **दूरे बन्धुमित्यादिना** । हे अम्ब ! दूरे स्थितं बन्धुं भर्तारं वराहम् । हे अम्ब । मां वा पुत्रं शोचसि । शोके⁵ हेतुः—**पादैर्न्यूनमिति** । आत्मानं शरीरं वा पृथिवीरूपम् । रसोऽत्र शोकेहेतुः । **वृषलैः** शूद्रैः । हृतयज्ञभागा देवा बाहवः । मघवत्यवर्षत्यन्नरहिताः प्रजाः पादाः । अरक्ष्यमाणाः स्त्रियो बालाश्च । हे उर्वि । सन्तोषाभावेन⁶ मनोवैक्लव्यम् । मलमोक्षो वा । **पुरुषादै** राक्षसैरिव **आर्त्तान्** पीडितान् बालान् । **वाचं देवीं** वेदरूपाम् । चक्षुरेषां⁷ । कुकर्मणि ब्राह्मणकुले । ब्राह्मणाद्विते राजकुले । **कुलाग्र्यान्** ब्राह्मणान् श्रोत्ररूपान् । **क्षत्रबन्धून्** क्षत्रियाधमान् । **कलिनोपसृष्टानिनि** सर्वदोषसहितान् घ्राणरूपान् । तैरवरोपितानि उद्वासितानि राष्ट्राणि । देशा वाग्रूपाः । **इतस्ततो** विधिनिषेधपरिपालनव्यतिरेकेण । भोजनपानस्थितिस्नानसम्भोगोन्मुखं जीवलोकं बुद्धिरूपम् ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

१ नेति नास्ति घ. २ चरणे पुरुषस्याऽधश्छाया तिष्ठतीति घ. ३ पुष्पाद्यभावादिति ख. कृष्णाद्यभावादिति घ. ४ सुखेना तिष्ठसीति ख. ५ शोके इति क. ६ हेतुर्विसन्तोषाभावेनेति ख. ग. ७ एषामिति ख.



एतेषां पूर्वपक्षताऽपि सम्भवतीत्याह—

यद्वाऽम्ब ते भूरिभरावतारकृतावतारस्य हरेर्धरित्रि ।
अन्तर्हितस्य स्मरती विसृष्टा कर्माणि निर्वाणविलम्बितानि ॥ २३ ॥
इदं ममाऽऽचक्ष्व तवाऽऽधिमूलं वसुन्धरे येन विकर्षिताऽसि ।
कालेन वा ते बलिनां बलीयसा सुरार्चितं किं हृतमद्य सौभगम् ॥२४॥

**यद्वेति** । तव भूरिभारावतारणार्थं कृतावतारस्य भगवतो वासुदेवस्य सर्वदुःखहर्तुः हे धरित्रि ! साम्प्रतमन्तर्हितस्य,—तेनैव विसृष्टा— कर्माण्युदारचरित्राण्यनधिकारिषु वर्तमानानि निर्वाणार्थं विलम्बितानि निर्वाणमदत्त्वा तूष्णीं स्थितानि चित्तरूपाणि,—स्मरन्ती—तानि शोचसि । इदं वक्ष्यमाणं भवत्येव तवाऽऽधिमूलम् । तत्र सम्मतिमेवाऽऽचक्ष्व । हे वसुन्धरे ! सर्वरत्नादिसहिते शृङ्गारप्रिये । येन रहितेन त्वं विकर्षिताऽसि । तत्स्वयमेवाऽऽह¹ । यत्कलिना कालेन बलिना सुरार्चितं तव सौभाग्यं भगवत्स्थितिरूपं तदद्य हृतमिति । कालेन चिह्नादीनामपि हरणात् ॥ २३ ॥ २४ ॥

तत्र धर्मोक्तं सर्वमेव हेतुमङ्गीकृत्य सर्वेषां मूलं भगवद्गमनमिति यत्रैव तद्राहित्यं तमेव शोचामीत्याह—

## धरण्युवाच—

भवान् हि वेद तत्सर्वं यन्मां धर्माऽनुपृच्छसि ।
चतुर्भिर्वर्त्तसे येन पादैर्लोकसुखावहैः ॥ २५ ॥

**भवान् हि वेदेति** । युक्तिरुक्तैव । धर्मस्य ज्ञानमपि प्रमाणम् । उत्प्रेक्षितमपि प्रमितमेव । स्वात्मनि प्रमितत्वात् । अतस्तदाह—**चतुर्भिर्वर्त्तसे येनेति** । द्वापरान्ते स्वभावत एव पादत्रयं गच्छति । तदाऽपि² त्वं येन भगवता कृत्वा चतुर्भिः पादैर्वर्त्तसे । ते पादाः सर्वसुखहेतवः । तदभावे सर्वे शोच्याः । भवानिव ॥ २५ ॥

शोके हर्षे च गुणा एव हेतवः । ते च भगवन्निष्ठास्तत्सम्बन्धादेवाऽन्यत्र भवन्ति । तेन गुणमात्रेण रहितं सर्वमेव शोचामीति वक्तुं गुणान् गणयति भगवदीयान् **सत्यमित्यादिना**—

सत्यं शौचं दया क्षान्तिस्त्यागः सन्तोष आर्जवम् ।
शमो दमस्तपस्साम्यं तितिक्षोपरतिः श्रुतम् ॥ २६ ॥
ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो बलं स्मृतिः ।
स्वातन्त्र्यं कौशलं कान्तिर्धैर्यं मार्दवमेव च ॥ २७ ॥
प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः ।
गाम्भीर्यं स्थैर्यमास्तिक्यं कीर्त्तिर्मानोऽनहङ्कृतिः ॥ २८ ॥

१ ततः स्वयमेवाऽऽहेति ग. घ. २ तदपीति क.

येरङ्गेति । चरणमाहात्म्यमुक्त्वाऽपि पुनर्भगवद्वहनं भगवताऽपि समलङ्करणार्थम् । स्वरूपतश्चरणोत्कर्षमाह—अब्जकुलिशाङ्कुशध्वजकेतुकेतनैरिति । भगवच्चरणे कमलाकृतिरेखा एकदेशस्य कमलत्वसम्पादिकाः सन्ति । तेन मकरन्दरूपामृतं तत्र फलं नियतमस्तीति सूचितम् । तत्राऽधिकारिणो दुर्लभाः सर्वथा दोषरहिताः । तत्स्थाने विद्यमानानामसम्भावितम् । तदर्थं भगवच्चरणारविन्द एव वज्राकारा रेखा वर्तते पापपर्वतानां छेदिका । अतस्तत्सेवायां प्रथमतः सर्वपापक्षयः । किञ्च । मनोनैश्चल्ये सर्वमेतत्सम्भवति । योगादिना च तत्साधने बहिर्मुखता स्यात् । अतो भगवच्चरणारविन्द एव सेवकानां मनोवशीकरणार्थमङ्कुशाकारा रेखा वर्तते । अतो भगवच्चरणारविन्दमाहात्म्यादेव तत्सेवकानां ततो मनो न गच्छति । नाऽपि मार्गविरोधेन । नन्वेतत्सर्वं भजनानन्तरं भवति । भजने प्रवृत्तिरेव दुर्लभा । कालकर्मस्वभावेभ्यो भयसम्भवात् । सर्वदा जीवानां भीतत्वात्र क्वापि स्वास्थ्यमित्याशङ्क्य भगवच्चरणारविन्द एवाऽभयपताकालक्षणा रेखा वर्ततेऽत्राऽऽगमनमात्रेणैव न पुनश्चिन्तयमिति सूचिका । एतान्येव केतानि चिह्नानि येषाम् । लक्ष्मीश्चाऽपि तत्र । तत्सङ्केतकटाक्षा महादयश्च । तदाह—श्रीमत्पदैरिति । अत्राऽऽगतस्याऽन्यथाभावव्यावृत्त्यर्थमाह—भगवत इति । सम्यगलङ्कृतान्यङ्गानि यस्याः । वैष्णवानां चक्रादिचिह्नैरेवं सम्यक्त्वम् । भगवच्चरणारविन्दस्पर्शे सात्त्विकभावेन तद्देशे स्वेदाश्रेयामहितचरणाभिरन्तिकैः स्फुटा । एवमलङ्करणमहिता त्रैलोक्यस्य चाऽन्येषां च विलयुक्तानामनलङ्कृतत्वादत्यरोचमतिक्रम्य कान्तियुक्ता जाता । किञ्च । भगवतोऽपि विभूतिमुपलभ्य । भगवानपि मयि शेते उपविशति भुङ्क्ते क्रीडत्यैश्वर्यं च करोति । एवं पूर्वसर्वसौभाग्ययुक्तां तां मामिदानीं व्यसृजत् । त्यागे हेतुः—उत्स्मयतीमिति । भूमिष्ठानां यादवादीनां भूम्युत्पन्नान्नभोजनेन गर्वदर्शनात्कारणगर्वानुमानम् । अनेनैव गर्वभावानामुत्पत्तात् । भगवांस्तदन्ते उत्स्मयनाशार्थं मां व्यसृजदित्यर्थः ॥ ३३ ॥

एवं मूलभूतामुपपत्तिं श्लोकद्वयेनोक्त्वा लौकिकीमुपपत्तिं श्लोकद्वयेनाऽऽह—

यो वै ममाऽतिभरमासुरवंशराज्ञा-
मक्षौहिणीशतमपानुददात्मतन्त्रः ।
त्वां दुःस्थमूनपदमात्मनि पौरुषेण
सम्पादयन् यदुषु रम्यमबिभ्रदङ्गम् ॥ ३४ ॥

यो वै ममेति । ममाऽतिभाररूपमक्षौहिणीशतमपानुदत् । भूम्युत्पन्नानां तद्भारत्वे हेतुः—आसुरेति । वंशपदेन तेषां गोत्राण्यत्र सन्तीति ज्ञापितम् । स्वस्य साधनापेक्षाभावायाऽऽह—आत्मतन्त्र इति । अनेन यादवरूपभारहरणमपि सूचितम् । धर्मोपकारमप्याह—त्वां दुःस्थमिति । रोगादिव्याप्तिवदधर्मव्याप्त्या दुःस्थता । ऊनपदत्वं कालात् । आत्मनि पौरुषेणेति । स्वयमन्तः प्रविश्य स्वपौरुषेण गतांशान् सम्यक्सम्पादितवानित्युक्तम् । त्वां सम्पादयन्निति सम्बन्धः । त्वं हि प्रथमतः पूर्ण इति त्वदर्थं मदर्थमेव यदुष्वङ्गमबिभ्रत् । आश्चर्यरूपं रमणयोग्यम् । भगवदीया धर्मात्मानश्च रमन्ते ॥ ३४ ॥

---

१ तस्येतीति क. नास्त्येवेदं ग. यस्येतीत्यादिचरणोत्कर्षमाहेत्यन्तोंऽश एव नास्ति ख. २ पुनर्यद्भगवद्वहनमिति क. ३ रेखेति क. ग. ४ उत्स्मयन्तीमिवोति ख. ग. घ. ५ उद्घाटनादिति क. ६ तद्भारकत्वे इति क. ख. ७ भूभारेति क. ८ अधर्मग्राहयेति क. घ. ग. ९ दुःस्थानामिति. ख.



फलितमाह—

का वा सहेत विरहं पुरुषोत्तमस्य
प्रेमावलोकरुचिरस्मितवल्गुजल्पैः ।
स्थैर्यं समानमहरन्मधुमानिनीनां
रोमोत्सवो मम यदङ्घ्रिविटङ्किताया: ॥ ३५ ॥

का वेति । वेत्यनादरे । या भगवद्विरहं सहेत सा न काऽपीत्यर्थः । पुरुषमात्रविरहोऽपि सोढुमशक्यः । किं पुनः पुरुषोत्तमविरह इति । उपकारपक्षो दूरे तिष्ठतु । कामेनाऽपि न विरहसहनमित्याह—प्रेमेति । त्रिभिः साधनैः सर्वा एव वशीकृताः सात्त्विकाः (१) तामसा (१) राजसाः (१) च । तत्र सात्त्विकाः प्रेमावलोकेन वशीकृताः । तामसास्तु रुचिरस्मितेन मनोहारिमोहनेन । राजसास्तु वल्गुजल्पैः मनोहरवाक्यैः । सात्त्विकेभ्यो भक्तिज्ञाने दत्त्वा वशीकृतवान् । तामसेभ्यो मोहाभावं वैराग्यं च दत्त्वा । राजसेभ्यो युक्तिप्रमाणे दत्त्वा । अत एव मधुमानिनीनां समानं स्थैर्यमहरत् । मधुरास्यानां मानिनीनाम् । येन मानेन स्थिरीभूताः कर्मे मार्गे वा । वेदेन ज्ञानेन वा । आत्मस्थितिम् । मध्विति भिन्नं वा पदम् । मानिनीनां स्वं स्थैर्यादि च । किञ्च । ममाऽपि यदङ्घ्रिविटङ्किताया: सर्वदा रोमोत्सवः ॥ ३५ ॥

एवं भगवद्विरहेण क्लिष्टयोः संवादे जायमाने अदूरे श्रुत्वा देवताधर्मसान्निध्यं बुद्ध्वा विश्वामित्रप्राच्यां कुरुक्षेत्रस्य सरस्वत्यामृषिस्नानादावश्यकं कर्तुं गत इत्याह—

तयोरेवं कथयतोः पृथिवीधर्मयोस्तदा ।
परीक्षिन्नाम राजर्षिः प्राप्तः प्राचीं सरस्वतीम् ॥ ३६ ॥

तयोरिति । तदा संवादसमनन्तरमेव प्रसिद्ध्या तयोरतिरोभावो युक्त इति सूचितम् ॥ ३६ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षित-
विरचितायां प्रथमस्कन्धे षोडशोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः ।

ततः सप्तदशे धर्मपृथिवीसान्त्वनं विदुः ।
भीतस्य स्थानदानञ्च कलेः शिक्षा च रूप्यते ॥ १ ॥
प्रथमं मारणे भीतिस्तयोः स्वास्थ्यस्य च क्षयः ।
अतः सान्त्वनमग्रे च स्थानदानं विचारतः ॥ २ ॥

---

१ सहते इति ख. घ. २ अधमेनाऽपि विरहासहनमिति घ. ३ कर्ममार्गे वेति ख. ४ जायमाने इति ग. घ. ५ विश्वामित्रप्राची कुरुक्षेत्रस्थामिति घ. ६ सूचित इति क. ख.

विवेकख्यापनायैव धर्मवाक्यं ततोऽस्य हि ।
सर्वसामर्थ्यसंम्बोधो वैराग्यं वक्तुमद्भुतम् ॥ ३ ॥
मूर्त्तीभूतास्त्रयो राज्ञे स्वखेदख्यापनाय तौ ।
वेषान्तरेऽपि तत्पीडाख्यापनाय स मारकः ॥ ४ ॥
सन्धानं वस्तुभूतस्य कृतं तेनाऽस्य च स्वयम् ।
कृतं भूमेस्तु हेतूनां शोकस्य विनिवारणात् ॥ ५ ॥

एवं पूर्वाध्यायान्ते पूर्ववाहिन्यां सरस्वत्यां स्नातुं गत इत्युक्तम् । ततस्तत्र गतोऽधर्मं दृष्टवानित्याह—

सूत उवाच—

तत्र गोमिथुनं राजा हन्यमानमनाथवत् ।
दण्डहस्तञ्च वृषलं ददृशे नृपलाञ्छनम् ॥ १ ॥

तत्रेति । गोमिथुनं मिथुनैरद्धासमानम् । वृषभं गां च । अनाथवत् । द्वितीयार्थे वतिः । नाथाभावयुक्तं वा । भगवतोऽप्रकटत्वात् । वृषलं शूद्रम् । महतां व्यक्तिदर्शनेनैव जातिपरिज्ञानात् । चिह्नानि तु राज्ञः । नृपस्य लाञ्छनमिव लाञ्छनं यस्य । एवं पाषण्डधर्मं च दृष्टवानित्यर्थः ॥ १ ॥

मिथुनस्य दीनत्वज्ञापनाय वर्णयति वृषमिति द्वाभ्याम् । अन्यथा पक्षपातोऽपि दोषः स्यात् ।

वृषं मृणालधवलं मेहन्तमिव बिभ्यतम् ।
वेपमानं पदैकेन सीदन्तं शूद्रताडितम् ॥ २ ॥
गाञ्च धर्मदुघां दीनां भृशं शूद्रपदाहताम् ।
विवत्सां साऽश्रुवदनां क्षामां यवसमिच्छतीम् ॥ ३ ॥

प्रथमं वृषं वर्णयति—मृणालधवलमिति । अब्जादिवत्कान्तियुक्तं श्वेतम् । अनेन स्वभावतः शुद्ध इत्युक्तम् । अन्यानि पश्चाऽङ्गानि विकल्पानीत्याह । तत्र प्रत्यहं धार्मिकाश्रयः । मेहनं मूत्रणम् । कर्मक्षय उक्तः । बिभ्यतमिवेति भयेन ज्ञानाभाव उक्तः । इवेत्यनुकरणात् । अथवा । मूत्रस्थानातिरिक्तस्थानेभ्यो मूत्रमिव निःसरति । तेन रोगः सूचितः । एकेन पदा वेपमानम् । कम्पनं द्विप्रकारम् । पादाभावेन जाड्येन च । तत्रैकेन पदा हेतुना वेपमानम् । चतुष्पदस्य पादत्रयगमने एकपादस्थितौ कम्पो भवत्येव । ज्ञानभक्तितपःप्रभृतीनामभावेऽनवलम्बे धर्मस्थितिरस्थिरा भवति । जाड्येन वेपन्तम् । पदार्थापरिज्ञानेन धर्मकृतिर्न निःकम्पा । शूद्रताडितमिति । स्वल्पांशेन शूद्रकर्तृकधर्मस्य पाषण्डित्वेन धर्मव्यथाजननात्ताडनम् । दण्डेन ताडनं वृषस्य । पदा ताडनं पृथिव्याः । कलिर्भूमिमवधाय तिष्ठति । पाषण्डमार्गेश्च धर्मं व्यथयति । ददृश इत्येव सम्बन्धः । गां च वर्णयति । चकारादृषभकम्पादयोऽस्या अपि । स्वभावत उत्तमेत्याह—धर्मदुघामिति । धर्ममग्निहोत्रादिकं

१ सम्बन्धवैराग्यमिति क. सम्बोधवैराग्यमिति ग. घ. २ स्वखेदाख्यापनायेति ख. ३ मिथुनीवदिति क. ग. ४ च वर्णयतीति ग. तौ वर्णयतीति घ. ५ स्वभावशुद्धयुक्तमिति ध. ६ मात्रेति क. ख. ७ चतुष्पादस्येति ख.



दोग्ध्रीति । धर्मदुघो ( ? ) मिति पाठे धर्मदुग्धं दोग्ध्रीति । अस्याः षडतिकल्पनमाह । देवादिभिः सम्पन्ना भूः पुष्टा भवति । तदभावे विकला । देवानामुत्तमानां दुर्लभत्वात् नाशोऽदीना । कालेऽपि पीडिता । पाषण्डधर्मबृंहणमानत्वात् । कलेः प्रथमपादत्वात् । एवं देशकालदोषौ निरूपितौ । विवत्सामिति कर्त्रभावः । वत्साः सत्त्वधर्मे मुख्याः पृथुदोहे निरूपिताः । तेषां साम्प्रतमभावः । अत एव साश्रुवदनाम् । अश्रुभिः सहितं वदनं यस्याः । अनेन मन्त्राभाव उक्तः । हविरूपाम्बे । अपराद्धा अश्रूणि । क्षामां द्रव्याभावात् । यत्र यज्ञस्तत्र न यज्ञियानि द्रव्याणि । यवसमिच्छन्तीं यज्ञादिषु भागमिच्छन्तीम् । अनेन कर्माभावः । एवमस्याः षडतिकल्पनं सूचितम् । अत्राऽपि पूर्ववत् क्रियासम्बन्धः ॥ २ ॥ ३ ॥

एवं दृष्ट्वा मारकस्याऽपूर्वत्वात्तं पृच्छति मारयितुम् । अन्यथाऽविचारितकर्तृत्वं स्यात् । अत एव ससामर्थ्यकः पृच्छतीत्याह—

पप्रच्छ रथमारूढः कार्त्तस्वरपरिच्छदम् ।
मेघगम्भीरया वाचा समारोपितकार्मुकः ॥ ४ ॥

पप्रच्छेति । कार्त्तस्वरेति राजत्वख्यापकम् । कार्त्तस्वरं सुवर्णम् । तत्परिच्छदा यस्य । अनेन महत्त्वज्ञानात्तस्माऽनतिक्रमः सूचितः । मेघगम्भीरयेति वाचां कृपाराहित्यात् । गम्भीरेति शब्दस्य गम्भीरता गरूणां भञ्जनम् । एवं वाक्ये दुर्ज्ञानत्वकथितापितानेन सूचितं । समारोपितकार्मुक इति । अयुक्तवचनमात्रेणैव परिज्ञातो मारणीय इति ॥ ४ ॥

प्रश्नमाह कस्त्वमिति द्वाभ्याम् । अज्ञाननिश्चयभेदात् । अधिक्षेपार्थो वा द्वितीयः ।

कस्त्वं मच्छरणे लोके बलाद्धंस्यबलान् बली ।
नरदेवोऽसि वेषेण नटवत् कर्मणाऽद्विजः ॥ ५ ॥
कस्त्वं कृष्णे गते दूरं सह गाण्डीवधन्वना ।
शोच्योऽस्यशोच्यान् रहसि प्रहरन् वधमर्हसि ॥ ६ ॥

अहमेव शरणं रक्षको यस्य तादृशे लोके । बलात् । निष्प्रयोजनं बलेन । अबलान् । अप्रभुत्वान् दीनान् । बलीत्यनेन आपद्भावः सूचितः । चिह्नैरेव परिज्ञायतामित्याशङ्क्याऽऽह । वेषेण केवलं नरदेवोऽसि । न राजा त्वम् । सामर्थ्याभावात्प्रसिद्ध्यभावात् । नटवदिति रसाद्युत्पादनार्थं तादृशं रूपं कृत्वा धर्मसूक्ष्माणां कलीनां विपरीतकरणम् । तथाऽपि न भासीत्याह । कर्मणा अद्विजः शूद्रः । न हि द्विजा गां पदा ताडयन्ति । अद्विज इत्यनेन द्वितीयजन्मनि जाते कर्मणा कर्तव्यविरोधो भवेत् । तदभावात्पदाऽपि ताडनमित्यर्थः । तथापि ताडनमात्रं निर्णयति । कस्त्वमित्यधिक्षेपः । अस्मिन्नस्य पूर्वं किं वा ? स च कृष्णे अर्जुने च विद्यमाने न प्रकटः । अतो धर्मस्त्वमित्यधिक्षेपः ।

१ धर्मदुघामितीति घ. २ दोग्ध्रीति घ. ३ दुर्घेति घ. ४ कर्तृभावइति ग. ५ यवसमिच्छन्तीति क. यवसमिच्छन्तीमिति ग. ग. घ. ङ. । प्रतीकत्वात्स्मृत्यानुगुण्यो पाठस्तु प्रतिभातीति न एवेह निवेशितः । ६ परिच्छदामीति ख. ग. घ. ७ नेति नास्ति क. ख. ग. ८ सामर्थ्याभावादिति घ. ९ प्रसिद्धत्वादिति घ.

अतः सर्वथा त्वया वक्तव्यमित्याह—

**आख्याहि वृष भद्रं वः साधूनामकृतागसाम् ।**
**आत्मवैरूप्यकर्त्तारं पार्थानां कीर्त्तिदूषणम् ॥ १३ ॥**

**आख्याहीति** । वृषत्वात्तत्र नाऽनौचित्यम् । ननु मामस्मदीयान् वा कथिते मारयिष्यतीति शङ्का न विधेयेत्याह—**भद्रं व इति** । युष्माकं भद्रमेव । नन्वस्मिन् जीवति कथं भद्रम् ? तत्राऽऽह—**साधूनामिति** । एतस्य शिक्षार्थं दण्डकरणपक्षेऽपि धर्ममार्गवर्त्तिनामपराधरहितानां देहवैरूप्यकरणमनुचितम् । तर्ह्यपि मारणे को हेतुः । तत्राऽऽह—**पार्थानामिति** । पाण्डवानामेवाऽयमधिकारी सर्वान् दण्डयतीति लोकापवादजननात्पूर्वसिद्धां निष्कलङ्ककीर्त्तिं दूषयति । अतो भवतामप्येतदाख्याने कीर्त्तिस्थापनधर्मो भवति ॥ १३ ॥

मत्प्रतिज्ञा च सिद्धा भवतीत्याह—

**जनेऽनागस्यघं युञ्जन् सर्वतोऽस्य च मद्भयम् ।**
**अनागस्स्विह भूतेषु य आगस्कृन्निरङ्कुशः ।**
**आहर्त्ताऽस्मि भुजं साक्षादमर्त्यस्याऽपि साङ्गदम् ॥ १४ ॥**

**जन इति** । अनागसि जनेऽपराधं युञ्जन् सर्वतो मत्तो भयं प्राप्नोति । देहधनैहिकामुष्मिकप्रकारैर्मत्कृतं भयं प्राप्नोति । अस्य च सम्बन्धी पुत्रादिर्भयं प्राप्नोति । प्राप्नोतीत्यध्याहाराकरणे योऽनागसि जने अघं युञ्जन् भवति तस्य मत्तः सर्वतो भयं भवतीति भवतिद्वयमध्याहर्त्तव्यम् । वस्तुतस्त्वर्द्धमात्रं पूर्ववदग्रिमश्लोकेनोक्तार्थत्वात् । आख्याते किं करिष्यतीत्याकाङ्क्षायामाह—**अनागस्स्विति** । ननु सोऽप्यधिकारी कथं त्वया मारणीयः ? तत्राऽऽह—**निरङ्कुश इति** । नियामकरहितः । अत एवोत्पथगामी । कथं शक्यं इत्यपेक्षायामाह— **आहर्त्ताऽस्मीति** । अमर्त्यस्येन्द्रस्याऽपि बाहुमुत्पाटयामीत्यर्थः । **साक्षादिति** । स्वयमेव गत्वा न त्वभिचारद्वारा । **साङ्गदमिति** । अङ्गदाद्याभरणैः सहितं सर्वैः पूजितमपि ॥ १४ ॥

ननु भवानत्र न नियुक्तः । अतो नियोगानुसारेण पालनं कर्त्तव्यम् । वयं तु यतः कुतश्चित्त्वद्राष्ट्रे समागताः । न त्वदीया इत्याशङ्क्याऽऽह—

**राज्ञो हि परमो धर्मः स्वधर्मस्थाऽनुपालनम् ।**
**शासतोऽन्यान् यथाशास्त्रमनापद्युत्पथानिह ॥ १५ ॥**

**राज्ञो हीति** । राज्ञो हि धर्मद्वयम् । सहजो धर्मः । अधिकृतश्च । सहजधर्मस्त्वार्त्तार्त्तिनिग्रहः । स मुख्यः । अन्यस्तु गौणः । तत्र स्वराष्ट्रादिनियमो नास्ति । भार्यामपि मारयन्निवारणीयः । परमशक्त्या तूष्णीम्भावः । राज्ञस्त्वशक्त्यभावात्से मुख्यो धर्मः स्वधर्मानुपालनमेव । **अन्यान्** स्वधर्मरहिताननापद्युत्पथाञ्छासतः । न तु विरक्तस्य त्यक्तशासनस्य । अतो ममाऽऽर्त्तिहरणं स्वधर्मः । अतो वक्तव्यमिति ॥ १५ ॥

१ न विधेयेत्याशङ्क्याऽऽहेति क. ख. ग. घ. २ न त्वस्मिन्निति ख. ङ. ३ तदाहेति ख. ४ तत्रापीति क. ५ मत्त इति नास्ति ख. ६ शिक्यमिति ख. क्षम इति घ. ७ अमर्त्यस्याऽपीन्द्रस्याऽपीति ख. ८ पूजितमितीति ग. ९ सम्मुखो धर्म इति ख.



कलिनिग्रहो बहिर्मुखेन कर्त्तुमशक्यः । अभगवदीयेन वा । यद्यप्ययमनुभयरूपस्तथाप्यभिमानात्तथा भाति । अतोऽन्तर्मुखः कर्त्तव्य इत्यभिप्रायेणोत्तरं वक्तुं प्रथमं प्रोत्साहयति भगवदीयत्वज्ञानाय—

## धर्म उवाच—

**एतद्वः पाण्डवेयानां युक्तमार्त्ताभयं वचः ।**
**येषां गुणगणैः कृष्णो दौत्यादौ भगवान् कृतः ॥ १६ ॥**

**एतद्व इति** । एतत् परदुःखदूरीकरणं परमकृपालूनां भवतामुचितमेव । आर्त्तानामभयं यस्मात्तादृशं वचः । यद्यपीदं वचनमभिमानसूचकं भवति तथापि परदुःखनिवारणार्थमुक्तम् । न तु स्वोत्कर्षख्यापनार्थम् । कृतिस्त्वयुक्तैवेति भावः । न ह्यन्यपीडया कृतः पदार्थो धर्मो भवति । आर्त्तिनिवारणरूपं भगवदीयं धर्मं पुरस्कृत्य भगवान् वशो जातः । एतादृशा गुणा भवत्सु सहस्रशः सन्ति यैः कृत्वा परमानन्दः साक्षात्पुरुषार्थः सर्वप्रमाणार्थः । अनेन भ्रान्तत्वमप्याक्षिप्तम् । अतोऽत्यन्तं बहिर्मुखधर्मनिष्ठा त्यक्तव्येति भावः ॥ १६ ॥

इति भगवत्परत्वमुपदिश्य धर्मसूक्ष्मत्वमुपदिशति—

**न वयं क्लेशबीजानि यतः स्युः पुरुषर्षभ ।**
**पुरुषं तं विजानीमो वाक्यभेदविमोहिताः ॥ १७ ॥**
**केचिद्विकल्पवसना आहुरात्मानमात्मना ।**
**दैवमन्ये परे कर्म स्वभावमपरे प्रभुम् ॥ १८ ॥**

**न वयमिति** । अयमर्थः । एते त्रयोऽपि पादा आहत्यैकेनैव न नाशिताः । किन्तु सत्यादिभिः स्वस्वनिवृत्त्या । ते हि धर्मपादोपजीवकाः स्वयं निवर्त्तमाना धर्मस्यैकैकं पादमादाय निवर्तन्ते । द्वापरे च परो धर्मो द्विपदो जातः । प्रमाणानां द्वैराश्यात् । अतो निर्णायकप्रमाणाभावाद्वस्तुतः केनाऽप्यकृतत्वात्कालेन भगवता वा कृतत्वात्तादृक्स्वभावधर्मकरणादुत्तरं न घटते । न हि काले वा भगवति वाऽयं किञ्चित्कर्तुं शक्तः । तस्मात्प्रमाणबोधने स्वाधिकारानुसारेण पदार्थान् बुध्वा तथा करिष्यति । न स्वकथनं स्पष्टकथनं वा युक्तमिति । हे पुरुषर्षभ । "पुरुषत्वे च मां धीरा" इति न्यायेन पुरुषमात्रस्यैव भगवद्दृष्टिर्युक्ता । त्वं तु पुरुषर्षभः । किञ्च । **क्लेशबीजानि** पापानि भगवदपराधा वा । तानि कुतो भवन्तीति विचारः कर्त्तव्यः । पुरुष एव तत्र समवायिकारणमन्तःकरणं वा भूतसंस्कारपक्षे शरीरं वा । निमित्तान्यन्यानि । नियामको विचारणीयः । केन नियमिता सामग्री क्लेशबीजं जन-

१ बहिर्मुखनिष्ठेति घ. २ धर्मसूक्ष्ममिति क. घ. धर्म सूक्ष्ममिति ग. ३ पर इति नास्ति ख. घ. ४ द्विपर इत्यपि पाठान्तरतया दृश्यते ग. ५ निर्णायकेति क. ६ किञ्चिदिति ख. ७ कर्त्तव्य इति नास्ति ख.

यति । तत्राऽनिश्चये हेतुः । ग हि पुरुषो भवति । अन्यस्य नियामकत्वाभावात् । ते च पुरुषाः पञ्च व्यष्टिसमष्टिपुरुषकालपुरुषोत्तमाः । तत्राऽनिश्चयः । विचारकस्याऽन्तःकरणस्य वाक्यभेदैर्मोहितत्वात् । वयमिति सर्वेषामेवाऽत्र विचारेऽशक्यता । एकमेव वाक्यं स्वस्वबुद्ध्यनुसारेण अनेकधा योजयन्ति । ते वाक्यभेदाः । सर्वत्र च युक्तेः सहायता । वाक्यभेदैर्निर्णीतान् पदार्थानाह । तत्र केचिन्मायावादिप्रभृतयो व्यष्टिमेव हेतुं मन्यन्ते । तदर्थं सर्वमेव विकल्पं मायेत्याच्छादयन्ति । ते विकल्पवसनाः । विकल्पे वसनं येषामिति । विविधकल्पनारूपमज्ञानं वा वसनं येषामिति । ते आत्मानमेव नियामकं मन्यन्ते । "**आत्मैव ह्यात्मनो बन्धुरि**"ति वाक्यात् । आत्मनोऽपि हेतुत्वेन नाऽऽत्मातिरिक्तं कारणं मन्यन्ते । किन्तु आत्मनैव । अन्ये पुनः समष्टिकारणवादिनः पौराणिका ज्योतिश्शास्त्रसहकृताः पुरुषशरीरं ब्रह्माण्डं मत्वा तत्र चेष्टारूपञ्च कालचक्रं स्वीकृत्य तदवयवैर्बुधादिभिरन्तःस्थितसर्वपरिज्ञानाद्ब्रह्मसहितं समष्टिमेव कारणं मन्यन्ते । ततोऽपि पुरुषकारणवादिनः प्रकृत्यधिष्ठातारं पुरुषं मन्यन्ते । सहायभूतञ्च कर्म नियामकत्वेन स्वीकुर्वन्ति । अन्यथा प्रकृतिपुरुषयोर्नित्यत्वात्कालस्य च नित्यत्वादपेक्षान्तराभावे सृष्टिः स्यान्न स्याद्वा । अतो नियामकस्य कर्मणोऽपेक्षा । "**प्रबुद्धकर्मा दैवेने**"ति वाक्याच्च । यद्यपि कालस्वभावौ वर्त्तेते । तथापि न तयोर्नियामकत्वं सम्भवति । अन्यत्वात्साधारणत्वाच्च । तस्मात्कर्मसहितः पुरुषः क्लेशबीजहेतुः । अन्ये पुनः कालमेव हेतुत्वेन मन्यन्ते । द्वारत्वेन स्वभावम् । स हि प्रकृत्यादीन् प्रेरयति । स्वभावात्ते परिणमन्ते । स्वभावादेव प्रेरयति । "**सुखं दुःखमि**"ति कालरूपस्य भगवतो वाक्याच्च । यद्यपि पुरुषोत्तम एव सः । तथापि सर्वरूपत्वात्तस्मिन्प्रकरणे कालरूपं ख्यापितवानिति तद्वाक्यानां तच्छेषत्वम् । "**स कालो यद्वशे लोको वायोरिव घनावलिरि**"ति वाक्याच्च । अन्ये तु पुरुषोत्तमं मन्यन्ते । स हि सर्वत्र प्रविष्टः सर्वं करोति । कालादिष्वपि स एव प्रविष्टः । यद्यपि कालस्य सर्वप्रभुत्वं तथापि न तस्य स्वतस्त्वं । किन्तु भगवत्प्रेरणया । अन्यथा तस्य सर्वात्मत्वाभावाद्वैषम्यनैर्घृण्ये प्रसज्ज्येयाताम् । कालात्मनोश्च विवेचनमग्रे वक्ष्यामः । नियामकत्वमेव तस्य न सर्वत्वमिति च ॥ १७ ॥ १८ ॥

तर्हि सर्वत्र प्रविष्टो भगवान् सर्वं कुर्वन् कथं न लक्ष्यते ? तत्राऽऽह—

अप्रतर्क्यादनिर्वाच्यादिति केष्वपि निश्चयः ।
अत्राऽनुरूपं राजर्षे विमृश स्वमनीषया ॥ १९ ॥

**अप्रतर्क्यादिति** । यद्यपि शास्त्रप्रामाण्यादापाततस्तर्क्यते सर्ववस्तुषु वस्तुस्वरूप इति । तत्त्वविदस्तु पश्यन्ति । तथापि शृङ्गग्राहिकया स्पष्टतया न प्रतर्क्यः । तर्हि ज्ञात्वैतत्कथं नोच्यते इदमित्थमिति । तत्राऽऽह—**अनिर्वाच्यादिति** । शर्करादिमाधुर्यवत्केवलानुभवैकवेद्यं न स्पष्टतया वक्तुं शक्यम् । विशेषशब्दाभावात्सङ्केताभावाच्चाऽव्यवहार्यत्वात् । तस्माद्यद्यपि विशेषाकारेण वक्तुमशक्यमुत्प्रेक्षितुं च तथापि शास्त्रानुभवाभ्यां तन्निश्चयः । तादृशा विरला इत्याह—**केष्वपीति** । अत्र पञ्चपक्षेषु यथाधिकारं व्यवस्थात्वा (?) तत्राऽपि यथाऽधिकारस्तदनुरूपेण व्यवस्थापयेत्याह—**अत्राऽनुरूपमिति** । **राजर्षे इति** सम्बोधनाद्राजत्वाद्विचारकत्वमृषित्वान्मन्त्रद्रष्टृत्वम् । तेन

१ निर्णीतार्थानिति ख. २ विकल्प्येति घ. ङ. ३ नेति नास्ति क. ग. ४ कालचक्रश्चेति क. ५ बुधादिभिरिति ङ. ६ स्वभावादेवेति ग. ७ तदिति नास्ति ख. ८ सर्वमिति ख. ९ तुर्नास्ति घ. ङ. १० शृङ्गग्राहिकतयेति क. ख. ग. ११ ज्ञातैः कथमिति क. ख. ग. १२ राजर्षे इतीति सर्वत्र पाठो दृश्यते । यथानिवेशन्तु प्रतिभाति ।



वेदहृदयविचारेण निर्णयं कुर्विति ज्ञापितम् । अत्र सम्मतिर्न प्रष्टव्या । एकरूपत्वाभावेन स्वाविकारानुसारेण कथनप्रसङ्गात् । अतः स्वमनीषयैव विचारय ॥ १९ ॥

एवं धर्मवाक्यं श्रुत्वा वाच्यवचनवक्तृनिर्धारान् कृतवानित्याह—

एवं धर्मे प्रवदति स सम्राड् द्विजसत्तम ।
समाहितेन मनसा विखेदः पर्यचष्ट तम् ॥ २० ॥

**एवमिति** । न हि धर्मव्यतिरेकेणाऽन्यं एवं वक्तुं शक्तः । स च **सम्राट्** विचारकः । **हे द्विजसत्तमेति** सम्बोधनं सूक्ष्मेक्षिकायां संवादार्थम् । तस्यैवं विचार उत्पन्नः । व्यवहारानुसारेण पृष्टे यदयमन्यथोत्तरयति तत्र को हेतुः ? अस्मत्परीक्षार्थं परोक्षेण कथनं स्वस्य वाऽव्यवहार्यत्वं प्रतारकत्वमज्ञत्वं वेति । एवं चतुःपक्षविचाराय चित्तं प्रवृत्तम् । तत्र कुशाग्रबुद्धित्वाद्वाच्यवाक्यज्ञानाभावेऽप्यभिप्रायस्य वक्तुश्च निर्द्धारं शीघ्रमेव कृतवान् । बुद्धिश्च न क्लिष्टा । अस्तु यथाकथञ्चित्पञ्च पक्षास्तन्निर्द्धारो वा । तथापि घातकोऽयमनेनैवाऽयं ताडितः । तथापि यन्न कथयति व्याजेन चाऽन्यत्कथयत्यतो धर्म एवाऽयम् । पूर्वव्यवस्थायाः श्रुतत्वाद्युगनिरूपणप्रस्तावे । अतः स्वप्रयोजनमवसरं च विचार्य निर्धारितत्वात्तमर्थं पर्यचष्टेति ॥ २० ॥

तमेवाऽऽह—

राजोवाच—

धर्मं ब्रवीषि धर्मज्ञ धर्मोऽसि वृषरूपधृक् ।
यदधर्मकृतः स्थानं सूचकस्याऽपि तद्भवेत् ॥ २१ ॥

**धर्मं ब्रवीषीति** । त्वं तु धर्मः । धर्मज्ञत्वात् । न ह्यन्योऽन्यस्य स्वरूपं जानाति । हेतोः स्वरूपासिद्धिमाशङ्क्य—अयं धर्मज्ञो धर्मवक्तृत्वादिति । किञ्च । **वृषरूपधृक्** । अलौकिकेषु धर्मस्यैव वृषरूपत्वम् । धर्मकथकत्वं समर्थयते—**यदधर्मकृतः स्थानमिति** । यस्त्वधर्मकृत् तस्य यत् स्थानं नरकादि सूचकस्याऽपि तत् भवेत् । अर्थादधर्मस्य । तस्मान्नरकभयाद्धर्मसूक्ष्मदृष्ट्या धर्मं वदतीति धर्मः ॥ २१ ॥

नन्वयुक्तोऽयं विचारः । वाक्यानां स्वार्थपरित्यागात् । इदानीन्तनमीमांसकवत् । तस्माद्वाक्यार्थं पुरस्कृत्य विचारणीयमित्याकाङ्क्षायामाह—

अथवा देवमायाया नूनं गतिरगोचरा ।
चेतसो वचसश्चाऽपि भूतानामिति निश्चयः ॥ २२ ॥

१ शक्य इति घ. २ प्रश्नार्थमिति ख. ३ चेतीति क. ग. घ. ४ वैव्यवस्थापाप् इति ख. ५ मनवसरमिति क. ६ निर्धारितवानिति ख. ग. ७ धर्मकथनत्वमिति क. ८ अर्थादधर्मः स्यादिति घ. ङ. ९ निर्द्धार इति घ. १० मीमांसकत्वादिति क. ग.

**अथवेति** । यदुक्तमनेन न जानीम इति तत्तथैव । "**मायां मदीयामुद्गृह्य वदतां किं नु दुर्घटमि**"ति वाक्याद्युक्तीनामप्रयोजकत्वेन निर्धारस्याऽशक्यत्वात् । ननु मायां तत्प्रवृत्तिं वा प्रथमतो विचारयतु । ततोऽन्यज्ज्ञास्यतीत्याशङ्क्याऽऽह । **देवमायाया** भगवत्सहिताया भगवत्प्रेरिताया भगवच्छक्तित्वेन तुल्याया वा गतिः प्रवृत्तिर्न स्वानुभवगम्या न वेदवाक्यगम्या साधारणानाम् । तदाह—**भूतानामिति** ॥ २२ ॥

एवं धर्मोऽयं पृथिवीयं कलिरयमिति त्रितयं निश्चित्य तदनुरूपं कार्यं करिष्यन् धर्माग्रेऽनुवदति—

**तपः शौचं दया सत्यमिति पादाः कृते कृताः ।**
**अधर्मांशैस्त्रयो भग्नाः स्मयसङ्गमदैस्तव ॥ २३ ॥**

**तपः शौचमिति** । तत्तद्युगानुसारेण धर्मस्य नानारूपत्वात्तदानीन्तनपादान् गणयति । द्वादशस्कन्धेऽन्यथा निरूपणस्य प्रयोजनं तत्रैव वक्ष्यते । **तपः** कृच्छ्रादि । **शौचं** सर्वथा शुद्धता । तद्धेतुराचारः । **दया** परदुःखप्रहाणेच्छा । **सत्य**भाषणं च । एभिश्चतुर्भिर्धर्मो ज्ञायते । प्रत्येकं कृतादिषु प्रधानाः । तस्य धर्मस्य प्रतिपक्ष्यधर्मः । तस्याऽपि चत्वारः पादाः । स च गर्दभरूपः । स चैकशफः । धर्मो द्विशफः । प्रमाणप्रवृत्ती धर्मे । अधर्मे तु न प्रमाणम् । निवृत्त्यर्थं परं ज्ञापनमनुवादेन । अन्यथा वाक्यभेदः स्यात् । भूमिः सर्वैकस्य स्थितियोग्या । उभयोर्भूमिसमानपृथुत्वात् । कालस्तूभयसमानः प्रवृत्तिनिवृत्तिभेदेनोभयस्थापकः । युगप्रवृत्तौ धर्मं निवृत्तावधर्ममिति । ततः कालवशात्त्रीन् धर्मपादान् दूरीकृत्य अधर्मः स्वस्य पादांस्त्रीन् स्थापयामासेत्याह—**अधर्मांशैरिति** । अधर्मस्य पादाश्चत्वारो गर्वसङ्गमदानृतरूपाः । एतेषां दशाविशेषे धर्मप्रवेशादंशपदप्रयोगः ॥ २३ ॥

कलेर्दोषं वक्तुमाह—

**इदानीं धर्म पादस्ते सत्यं निर्वर्त्तयेद्यतः ।**
**तं जिघृक्षत्यधर्मोऽयमनृतेनैधितः कलिः ॥ २४ ॥**

**इदानीमिति** । हे धर्म ! इदानीं ते सत्यमेवैकः पादो यतो निर्वर्त्तयेत् स्वात्मानं नितरां वर्तयेत् प्रचारयेत् । त्वां वा । सम्बन्धित्वेनोपस्थितत्वात् । विभक्तिव्यत्यासे नाऽध्याहारदोषः । तं पादमधर्मो जिघृक्षति । सत्यहेतुमन्तःकरणं वा । नन्वधर्मो जिघृक्षति । कलेः कोऽपराधः? तत्राऽऽह—**अधर्मोऽयं कलिरिति** । अपरिच्छिन्नः कालः । तस्य कृतादिपदप्रयोगोऽवच्छेदेन वक्तव्यः । तत्र स्वस्य स्वावच्छेदकत्वाभावादन्यस्याऽभावाद्धर्माधर्मावच्छेदकत्वेन कृतादिपदप्रयोगः । तत्र केवलधर्मावच्छेदकं **कृतम्** । केवलाधर्मावच्छेदकः **कलिः** । भागश उभयावच्छेदकं **त्रेता** । समश उभयावच्छेदकं **द्वापरम्** । इति । कालस्य द्वितीयराशिपरिच्छेदार्थमागमने धर्मांशमप्यतिक्रम्याऽऽगमनादधर्मांशप्र-

१ नेति नास्ति क. ग. २ विचारयितुमिति ख. घ. ३ वक्ष्यतीति ख. ४ परिशापनमिति ख. घ. ५ कालबलादिति ग. घ. ६ निर्वर्त्तयेदिति क. ७ तं पादं धर्म इति ख. ८ कृतादिप्रयोग इति ख. ग. घ. ९ केवलं धर्मावच्छेदक इति घ. १० द्वापरकालस्येति क. ११ अधर्मांशमिति ग. घ.



वेशः । "**ये वै चत्वारः स्तोमाः कृतं तत् । अथ ये पञ्च कलिः स**" इति श्रुतौ स्तोमचतुष्टयात्मकस्य ज्योतिष्टोमादेः कृतत्वनिरूपणाद्धर्मावच्छेदकत्वं कृतस्य । अथ तदतिरिक्तो यः कालः पञ्चात्मकः स कलिः । एतदभावचतुष्टयरूपत्वमतिरिक्तश्च । अतः पञ्चत्वं "**समानस्याऽह्नः पञ्च पुण्यानि नक्षत्राणी**" त्यत्र प्रसङ्गान्निर्द्धारितम् । अतो यथाऽऽकाशस्य परिच्छेदको घटादिः । तस्य घटाकाशस्य प्रदर्शने घट एव प्रदर्श्यते मध्यभागेन तथाऽयं कलिरित्यर्थः । पूर्वं कृतेन सह समता हीनता च स्थिता । अधुनोत्कृष्टता । पादत्रयप्रवेशात् । तत्रापि पुनरामनृतेनैधितः पुष्टः स्वशत्रुं धर्मपादं जिघृक्षति । शत्रुशेषस्याऽरक्षणीयत्वात् । अत एव वेदे उभयोरेव नाम । त्रेता कृतशेषः । द्वापरं कलिशेषः ॥ २४ ॥

एवं धर्मस्य स्वरूपमुक्त्वा भूमिस्वरूपज्ञानमाविष्करोति—

**इयञ्च भूर्भगवता न्यासितोरुभरा सती ।**
**श्रीमद्भिस्तत्पदन्यासैः सर्वतः कृतकौतुका ॥ २५ ॥**

**इयञ्चेति** । चकारादतिरिक्तः कलिः । तस्य विशेषतोऽनिरूपणं चकारेण ज्ञापितम् । अस्या गुणत्रयं दोषत्रयञ्च । इयं हि षडंशा । पूर्वं भगवता **न्यासित** उत्तारित **उरुः** अधिको भारो यस्याः । भगवत्कृतोपकारत्वं गुणः । ततः **सती** भगवदेकनिष्ठा । भगवतैव स्वांशैरलङ्कृता च । तदाह—**श्रीमद्भिरिति** । **न्यासः** स्थापनम् । सर्वतः कृतं कौतुकं यस्याम् । अनेन शृङ्गाररसत्वञ्चं सूचितम् ॥ २५ ॥

दोषानाह—

**शोचत्यश्रुकला साध्वी दुर्भगेवोज्झिताऽधुना ।**
**अब्रह्मण्या नृपव्याजाः शूद्रा भोक्ष्यन्ति मामिति ॥ २६ ॥**

**शोचतीति** । भगवत्परित्यागेन शोको दुर्भगात्वमब्रह्मण्यभोगेन पूर्वावस्थात्यागश्च । अश्रूणि कलयतीत्यश्रुकला । स्वकृतदोषाभावार्थमाह—**साध्वीति** । भाग्याभाव एव त्यागे हेतुः । तदाह—**दुर्भगेति** । अधुनेति त्यागनैकट्यं सूचितम् । ननु राज्ञां भगवद्रूपत्वात्तद्भोगे को दोष इति तत्राऽऽह—**अब्रह्मण्या इति** । भगवद्धर्मवैपरीत्यमब्रह्मण्यपदेन सूचितम् । नृपत्वञ्च भाक्तम् । योगाभावात् । **शूद्रा इति** भगवद्विरोधित्वम् । "असुर्यः शूद्र" इति श्रुतेः । ते भोक्ष्यन्तीति शोको रोदनञ्च । अनेन स्वस्य रसाविर्भावाभावान्न तेषां भोगः सेत्स्यतीति भावः सूचितः ॥ २६ ॥

उपसंहरति—

**इति धर्मं महीञ्चैव सान्त्वयित्वा महारथः ।**
**निशातमाददे खड्गं कलयेऽधर्महेतवे ॥ २७ ॥**

**इतीति** । चकार उक्तसमुच्चयार्थः । एवकारः कलिनिषेधार्थः । **महारथ इति** निग्रहसा-

१ अथ ये इति ग. अथसे इति घ. २ स्तोमात्मक इति ख. ३ धर्मं पादमिति ख. ४ धर्मस्य रूपमिति क. ग. धर्मस्वरूपमिति घ. ५ न्यासस्थापनमिति क. ग. ६ यस्या इति क. ग. ७ चकारो नास्ति ख. ८ दुर्भगत्वमिति ख.

मर्थ्यम् । कलेर्देवतात्वात्तीक्ष्णखड्गेन शिरश्छेदनमयुक्तमित्याशयाऽऽह—**अधर्महेतव इति** । अधर्मकारणाय । निवृत्त्यर्थे चतुर्थी । मशकेभ्यो धूम इति वत् ॥ २७ ॥

अदृश्यतया गमने न प्रयोजनं न वा निस्तारः । धर्मवाक्यानां श्रवणात्तदर्थपर्यालोचनया राजन्यभिमानादिः स्वकुटुम्बमस्तीति ज्ञात्वा स्वनाशभयं परित्यज्य तच्छरणं गत इत्याह—

**तं जिघांसुमभिप्रेत्य विहाय नृपलाञ्छनम् ।**
**तत्पादमूलं शिरसा समगाद्भयविह्वलः ॥ २८ ॥**

**तं जिघांसुमिति** । राजचिह्नं छत्रादि । लोके आज्ञापनं त्यक्त्वेत्यर्थः । **पादमूलमिति** स्वस्य राजशेषत्वं ज्ञापितम् । शरणागतस्तत्र सेवक इति । **भयविह्वल इति** । धर्मश्चेत्प्रेरयेत्तदा मारयिष्यतीति भयम् । कापट्यं वा ज्ञास्यति । चरणपातव्याजेन राजानमपि स्पृशति । येन तस्याऽप्यग्रे दुर्बुद्धिरुत्पत्स्यते । धर्मसान्निध्यादिममर्थं ज्ञास्यतीति भयम् ॥ २८ ॥

चरणपातानन्तरं यज्जातं तदाह—

**पतितं पादयोर्वीरः कृपया दीनवत्सलः ।**
**शरण्यो नाऽवधीच्छ्लोक्य आह चेदं हसन्निव ॥ २९ ॥**

**पतितमिति** । **पादयोरिति** गतिनाशः सूचितः । सोऽपि धर्मबुद्धेरुपकाराय भविष्यति । इहैव भगवत्सायुज्यात् । **वीर इति** स्वधर्मानुसन्धानं न प्रकृतविचारः । धर्मसान्निध्याद्दयादिप्रवेशोऽधर्मसान्निध्यात्तत्र जातः । तदाह—**कृपयेति** । इयं दया लौकिकीत्याह—**दीनवत्सल इति** । वत्सं लातीति पशुः । दीनविषये न विचारः कृत इत्यर्थः । पूर्वजकीर्तिरक्षार्थं नाऽस्य बुद्धिर्जाता स्वधर्म एव जातेति **शरण्य** इत्युक्तम् । लोकापवादभयादपि । तदाह—**श्लोक्य इति** । इदं वक्ष्यमाणमाह च । अनिष्टं निवर्त्तितमिष्टञ्च प्रयच्छतीत्यर्थः । **हसन्निवेति** मुखप्रसादो गर्वलेशसम्बन्धो वा ॥ २९ ॥

कलेः कम्पं दृष्ट्वा कालान्तरे मारयिष्यतीति शङ्काऽस्य वर्त्तत इत्यनुमाय तन्निवृत्त्यर्थमाह—

**न ते गुडाकेशयशोधराणां बद्धाञ्जलेर्वै भयमस्ति किञ्चित् ।**
**न वर्त्तितव्यं भवता कथञ्चन क्षेत्रे मदीये त्वमधर्मबन्धुः ॥ ३० ॥**

**न ते गुडाकेशेति** । गुडाका निद्रा तस्या ईशोऽर्जुनः । अनेन मायामोहाभावान्न त्वत्कृतमस्माकं भयमिति सूचितम् । **यशोधराणामिति** । यशोलज्जयाऽप्यधर्मं न करिष्याम इति भावः । सत्यप्रतिज्ञार्थं वा । अहं तु पौत्र एव । अन्येऽपि ये केचनाऽर्जुनस्य यशोधारकास्तेषामप्यग्रे बद्धाञ्जलेस्तव किमपि भयं नास्ति । इन्द्रादिरपि भयजननासमर्थ इत्यर्थः । परमस्मदीया आज्ञा परिपालनीयेत्याह—**न वर्त्तितव्यमिति** । **कथञ्चन** । केनाऽप्यंशेन । स्वस्य जम्बूद्वीपराज्यमल्पमिव निरूपयति—**क्षेत्रमिति** (?) । उत्पत्तिस्थानं वा । अतो यदेव बीजं पतिष्यति तदेवोत्पत्स्यत इति त्वया न स्थातव्यम् । तत्र हेतुः—**अधर्मबन्धुरिति** । अधर्मं निवार्ये दण्ड्ये[1] वाऽपकारं करिष्यतीति सूचितम् । अत एवेदानीं पाषण्डिनां निराकरणे निराकर्तुं भयम् ॥ ३० ॥

१ अधर्मकरणायेति ख. २ प्राकृतेति ख.



ननु राज्ञ एतदेव कार्यं[2] यत् प्रजाशिक्षणं दण्डश्च । अतो लाभहेतुं मां कुतो निवारयसीत्यत आह—

**त्वां वर्त्तमानं नरदेवदेहेष्वनुप्रवृत्तोऽयमधर्मपूगः ।**
**लोभोऽनृतं चौर्य्यमनार्य्यमंहो ज्येष्ठा च माया कलहश्च दम्भः ॥ ३१ ॥**

**त्वां वर्त्तमानमिति** । यदि राजानस्त्वया त्यक्ताः स्युस्तदा तेषां लाभो[3] भवेत् । तेषामप्यधर्मित्वे स्वरूपनाशात्किं लाभेन । स्वस्याऽपि तथात्वेनाऽनुमोदनादलाभश्च । अत एव नरदेवदेहेषु वर्त्तमानं त्वामनु अधर्मसमूहोऽपि प्रविष्टः । स च प्रत्यक्षोऽस्मास्वपि वर्त्तत इतीदमा निर्दिशति । तमधर्मपूगमेव गणयति । नव तस्य प्राणाः । **लोभः** परद्रव्याभिलाषः । ततस्तत्सिद्ध्यर्थ**मनृतं** मिथ्यैव त्वयैवं कृतमिति वाच्यतापादनादि । प्रतियोगिनो[4] बलवत्त्वे **चौर्यं** गुप्ततया वित्तहरणम् । दौर्बल्ये तु **अनार्यं** प्रत्यक्षत एव स्त्रीरत्नादिहरणम् । आर्यविरुद्धशीलत्वात्तस्याऽनार्यत्वम् । तस्याऽशक्तौ **अंहः** अपराधकरणमग्निदाहादि । ततो **ज्येष्ठा** दारिद्र्यसम्पादनम् । चकारात्स्वस्याऽपि दारिद्र्यम् । ततो वञ्चनचातुरी[5] **माया** । ततः **कलहः** । पुनर्विश्वासार्थं **दम्भश्च** । चकारात्कलहानन्तरं[6] मारणं वा ॥ ३१ ॥

उपसंहरति—

**न वर्त्तितव्यं तदधर्मबन्धो धर्मेण सत्येन च वर्त्तितव्ये ।**
**ब्रह्मावर्त्ते यत्र यजन्ति यज्ञैर्यज्ञेश्वरं यज्ञवितानविज्ञाः ॥ ३२ ॥**

**न वर्त्तितव्यमिति** । हे अधर्मबन्धो तस्माद्धेतोर्न वर्त्तितव्यम् । अधिकरणस्य तद्विरोधित्वं प्रकटयति—**धर्मेणेति** । धर्मेण कायिकेन । सत्येन वाचिकेन[7] । चकारान्मानसिकेन । कायवाङ्मनोभिर्ये धर्मकर्त्तारस्तेषामेव स्थानयोग्ये । तत्रापि देशविशेषं निर्दिशति—**ब्रह्मावर्त्त इति** । तद्धि धर्मक्षेत्रम् । तत्र यदि निर्दुष्टे धर्म उत्पन्नस्तदाऽन्यत्राऽधर्ममपि नाशयेत् । अतो धर्मक्षेत्रे त्वया न स्थातव्यम् । न च कदाचिदपि तत्र धर्मशून्यता । देवानामपि देवयजनत्वेन निरन्तरं यज्ञसंभवात् । तदाह—**यत्र यजन्ति यज्ञैरिति** । तत्रापि मुख्यधर्मप्रकारेण यजन्तीत्याह—**यज्ञेश्वरमिति** । **"यज्ञेन यज्ञमयजन्त देवा"** इति श्रुतिरनुसन्धेया । नन्वहमप्येकदेशे स्थास्यामीति चेत् । तत्राऽऽह—**यज्ञवितानविज्ञा इति** । यज्ञवितानो यज्ञविस्तार उक्थ्यादयः[8] । तत्र विशेषज्ञाः । अनेन त्वयि प्रविष्टे ते तदानीमेव ज्ञास्यन्ति ततो न करिष्यन्तीति सूचितम् ॥ ३२ ॥

ननु किं यज्ञैः । ऐहिकेष्टसिद्धिस्त्वयैव कर्त्तव्या । परलोकस्तु विचारणीयः । तत्राऽऽह—

**यस्मिन् हरिर्भगवानिज्यमान इज्यात्ममूर्त्तिर्भजतां शं तनोति ।**
**कामानमोघान् स्थिरजङ्गमानामन्तर्बहिर्वायुरिवैष आत्मा ॥ ३३ ॥**

१ दण्डे इति ग. २ एतत्कार्यमिति घ. ३ लोभ इति घ. ४ प्रतियोगित इति क. ५ वञ्चने इति क. वचने इति घ. ६ कलहादनन्तरमिति घ. ७ वाचनिकेनेति. क. ग. ८ उक्थ्यादय इति ख. उक्थादय इति घ.

**यस्मिन्निति** । यस्मिन् देवयजने हरिरिज्यमान उद्देश्यो यज्ञपुरुषो विष्णुरेव साक्षाद्भगवान् । ननु देवा एवेन्द्रवाय्वादयस्तत्रेज्यन्ते । तत्राऽऽह—**इज्यात्ममूर्त्तिरिति** । इज्यानामात्मा मूर्तिश्चाऽयम् । ततः किमत आह—**भजतां शं तनोतीति** । भक्तिमार्गानुसार्याधिदैविकयज्ञा एते । तत्र नाऽदृष्टद्वारा फलं किन्तु प्रीता देवता फलं प्रयच्छतीति । स्वस्योद्देश्यत्वाभावाच्च । भगवतश्च तथात्वात् । अतः प्रीतिरेव द्वारम् । आध्यात्मिकेषु चाऽदृष्टद्वारा फलम् । भौतिकेषु भूतसंस्कारद्वारा । सर्वत्र वा भगवान् फलदाता । "**फलमत उपपत्तेरि**"ति । तदाह—**भजतां शं तनोतीति** । धर्मपक्षे विस्तारा-भावः । अमोघाश्च न कामाः । स्थिरजङ्गमानां च न फलसम्बन्धः । अतो यथावेदं यज्ञकरणमत्रैव फलं च । किञ्च । यज्ञैः सन्तुष्टो भगवान् ज्ञानमपि प्रयच्छति । अन्तर्बहिश्च प्रकटो भवतीत्याह—**अन्तर्बहिरिति** । एकस्योभयत्वं सदृष्टान्तमाह—**वायुरिवेति** । प्राणवायुशब्दभेदेऽपि यथा पदार्थस्यैकत्वं तथा भगवानन्तर्बहिःपदार्थत्वेन व्यवह्रियमाणोऽप्येक एवेत्यर्थः । ननु दृष्टान्तेनैव भगवांस्तथाऽस्तु । सर्वत्वात् । अत आह—**एष आत्मेति** । न प्राणमात्रत्वमस्य । किन्त्वयमात्मा । एष इति भक्त्या स्फुरन्तं भगवन्तं निर्दिशति ॥ ३३ ॥

एवं प्राप्तजीवाभयो विशेषं प्रार्थयितुं पुनर्नम्रभावनां कृत्वा वञ्चयितुमारभत इत्याह—

## सूत उवाच—

परीक्षितैवमादिष्टः स कलिर्जातवेपथुः ।
तमुद्यतासिमाहेदं दण्डपाणिमिवोद्यतम् ॥ ३४ ॥

**परीक्षितैवमिति** । आदिष्ट आज्ञप्तः । जातवेपथुः । प्रतिज्ञां सत्यां करिष्यतीति इदानीं गन्तव्यं पततीति च । विलम्बस्तूष्णीम्भावो वाऽशक्य इत्याह—**उद्यतासिमिति** । कृतपूर्वापराधस्याऽवश्यंदण्डकर्तृत्वं ज्ञापयति—**दण्डपाणिमिवेति** । सकृदपराधः सोढः । अतः परं मारयिष्यतीत्याह—**उद्यतमिति** ॥ ३४ ॥

विज्ञापनामाह—

## कलिरुवाच—

यत्र क्वाऽथ वत्स्यामि सार्वभौम तवाऽऽज्ञया ।
लक्षये तत्र तत्राऽपि त्वामात्तेषुशरासनम् ॥ ३५ ॥
तन्मे धर्मभृतां श्रेष्ठ स्थानं निर्देष्टुमर्हसि ।
यत्रैव नियतो वत्स्य आतिष्ठंस्तेऽनुशासनम् ॥ ३६ ॥

**यत्रेति** । हे सार्वभौम । सर्वा भूमिस्तवैव । अहमपि त्वदीयः । अतो मदधिष्ठितंभूमेरेव त्वमीश्वर इति ज्ञापितम् । पूर्वमस्माकं स्वातन्त्र्यं स्थितमधुना तवैवाऽऽज्ञा कर्त्तव्येत्याह । अथेति भिन्नप्रक्रमे ।

१ फलन्तीति ख. २ यजतामिति क. ३ प्रकाश इति घ. ४ नम्राभावनामिति ख. ५ करिष्यतीति ख. ६ इदानीमेवेति ख. ७ अवश्यमिति क. ८ दण्डकर्तृत्वमिति ख. ९ सोढव्य इति क. ग. घ. १० भूमेरेवमिति ख. ११ भिन्नक्रमे इति ख. ग.



त्वदाज्ञया यत्र क्व च वत्स्यामि । मम स्थितौ नास्ति सन्देहः । परं त्वया रोषो न विधातव्यः । जीवता च क्वचित्स्थातव्यम् । जीवनं च त्वयैव दत्तम् । अतः स्पष्टतया त्वदाज्ञाव्यतिरेकेऽपि जीवनरक्षणाद्-तैवाऽऽज्ञा । मत्कार्यदर्शनात्र क्रोधं करिष्यसीत्याह—**लक्षय इति** । यत्रैव स्थास्यामि तत्रैव त्वामात्तशरासनं द्रक्ष्यामि । अतो यत्र स्थित्वा त्वामात्तशरासनं न द्रक्ष्यामि तत्स्थानं देहीत्याह—**तन्म इति** । चातुर्येण प्रार्थितम् । त्वां द्रक्ष्यामि शरासनरहितम् । अतो मद्दर्शनमात्रेणैव शरासनं त्यक्तव्यमिति भावः । **धर्मभृतां श्रेष्ठेति** याचितदानं दत्तपरिपालनं च सूचितम् । यद्यप्यहं तत्र स्थास्यामि परं त्वया निर्देष्टव्यम् । त्वदाज्ञया चेत् स्थितिर्नियमेन स्थितिः स्यात् । त्वदाज्ञा च परिपालिता स्यात् । अत्राऽपि वञ्चनम् । "**शास्त्रफलं प्रयोक्तरी**"ति न्यायेन तत्पापं तवैव भविष्यतीति भावः । **नियत इति** वचनाद्धर्मार्थेष्वपि द्यूतादिषु मम वास इति ज्ञापितम् ॥ ३५ ॥ ३६ ॥

तत्तथैव कृतवानित्याह—

## सूत उवाच—

तत्तथाऽभ्यर्थितस्तस्मै स्थानानि कलये ददौ ।
द्यूतं पानं स्त्रियः सूना यत्राऽधर्मश्चतुर्विधः ॥ ३७ ॥

**तत्तथेति** । अस्याऽवश्यं स्थानं देयम् । अयं चाऽधर्मबन्धुः । द्यूतादिश्चाऽधर्मः । अतः स्थानान्तरे दत्ते तदप्यधर्मस्थानं भविष्यतीति विचार्य द्यूतादिकमेव स्थानं दत्तवानिति—**द्यूतमिति** । द्यूतमक्षक्रीडा । अनाधीनविषयं पानं मदिरायाः । स्त्रियः साधारण्यः । बहुवचनात् । सूना हिंसा । एतेषु यत्राऽधर्मो भवति तदस्य स्थानम् । न तु स्वभावतः शास्त्रतो वा यत्रैतानि भवन्ति तानि कलिस्थानानि भवन्ति । किञ्च । चतुर्विधोऽधर्मः । "**ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः**" । स्तेये द्यूतं प्रविष्टम् । अतो महापातकस्थानभूतम् । एतच्चतुष्टयं कलेः स्थानमित्यर्थः । कलिना स एव गृहीतो य एतानि करोति । **यत्रेति** पदादधर्मस्योद्देश्यत्वमेव ॥ ३७ ॥

ननु मम पञ्च स्थानानि श्रुतिबोधितान्यत एकमधिकं देयमित्याकाङ्क्षायामाह—

पुनश्च याचमानाय जातरूपमदाद्विभुः ।
ततोऽनृतं मदः कामो रजो वैरञ्च पञ्चमम् ॥ ३८ ॥
अमूनि पञ्च स्थानानि ह्यधर्मप्रभवः कलिः ।
औत्तरेयेण दत्तानि न्यवसत्तन्निदेशकृत् ॥ ३९ ॥

**पुनश्चेति** । एकवारं स्थानचतुष्टयं दत्तम् । पुनर्याचमानाय जातरूपं सुवर्णमदात् । स्तेये सामान्यत्वेन सुवर्णमागतम् । अधुना सुवर्णस्तेयत्वेन स्वरूपेण स्वर्णं कलिस्थानम् । नन्वयं महाननर्थः । कथं सुवर्णं तस्मै दत्तवानिति । तत्राऽऽह—**विभुरिति** । चकारात्स्वतन्त्रतयाऽर्पितानि स्थानानि यांचि-

१ त्वदाज्ञया व्यतिरेकेऽपीति क. ग. २ जीवरक्षणादिति ख. ३ क्रोधश्चेति क. घ. ४ पूजादिष्विति क. ५ "अभ्यर्थितस्तदा तस्मै" इति पाठोपलम्भेऽपि प्रतीकग्रहस्य भेदाद्यथोक्तमेव पाठोऽभ्युपेयः प्रतिभाति । अन्ये तूपलम्भानुरोधात्प्रतीकमेव परिवर्तयन्ति । तन्न युक्तम् । ६ अनाधीनेति ख. ७ न तानीति ख. ८ स्तेयं द्यूते प्रविष्टमिति घ. ङ. ९ सर्व एवेति क. ग. घ.

तानि । एषां स्थानानां पुनः श्रासानां न स्वरूपेण स्थानत्वं किन्तु कार्येन इति तानि कार्याणि क्रमेण गणयति—तत इति । यस्मादधर्मं इत्यनुवर्ततेऽतोऽनृतरूपं द्यूतं मदरूपं पानं कामरूपाः स्त्रियो रजः क्रोधस्तद्रूपा सूना सुवर्णं वैररूपम् । चकारादुभयविधं गृहीतम् । तत् पञ्चमम् । सुवर्णेऽपि वैरं हिंसायां च वैरमिति । एतानि पञ्च स्थानानि । अधर्मप्रवर्तकः । अधर्मोत्पादकः । आज्ञाभङ्गेन । उत्पन्नः पुत्रेण । अविवेकः सूचितः । तेषु न्यवसदित्यर्थः । तन्निर्देशकृत् । परीक्षिदाज्ञाकर्ता ॥ ३८ ॥ ३९ ॥

एवं कलेः स्थानानि निर्दिश्य प्रसङ्गाद्धर्मवर्तिन उपदिशति—

अथैतानि न सेवेत बुभूषुः पुरुषः क्वचित् ।
विशेषतो धर्मशीलो राजा लोकगुरुः पतिः ॥ ४० ॥

अथेति । अनृतादिरूपाण्येतानि न सेवेत । बुभूषुः उद्भविष्णुः । क्वचित् । प्रमादादपि । "पाक्षिकोऽपि दोषः परिहरणीय" इति पदार्थग्रहणे सेव्यमाने कदाचित्कलिस्थानमपि सेवेत । ततो महाननर्थो भवेत् । तस्मादेतानि पदार्थान्यपि दूरत एव परिहरणीयानि कलिस्थानशङ्कया । यत्र पुनर्व्यतिरेकेण निश्चयस्तत्र न विधिर्न प्रतिषेधः । सम्भावितमेतद्राज्ञ इति विशेषाऽऽकारेण निषेधति—विशेषत इति । धर्मशीलो राजा । तस्याऽधर्मप्रतिपक्षत्वात् । लोकगुरुरन्येषां उपदेशकर्ता । शिष्याणां तदाचारशिक्षणात् । पतिरिति । परिपालकः । राजधर्माः प्रजा इति ॥ ४० ॥

एवं कलिं प्रस्थाप्य राजा यत्कृतवांस्तत्कृतमाह—

वृषस्य नष्टांस्त्रीन् पादान् तपः शौचं दयामिति ।
प्रतिसन्दध आश्वास्य महीं च समवर्द्धयत् ॥ ४१ ॥

वृषस्येति । कालेन धर्मस्य ये त्रयः पादाः पूर्वोक्ता गतास्ताननूद्य पुनः प्रतिसन्दधे । सम्यक्सन्धानं कृतवान् । चतुर्विधमपि धर्मं प्रवर्तितवानित्यर्थः । पृथिव्याः सान्त्वनमाह—आश्वास्येति । समवर्द्धयत् । सर्वत्र भक्तिमार्गप्रचारेण कृष्यादिना च । पाषण्डदूरीकरणेन च । चकाराद्धर्ममप्यवर्द्धयत् ॥ ४१ ॥

तर्हि शान्तस्याऽपि कीर्त्यनुभावयोर्विद्यमानत्वात् "वर्तमानसामीप्ये वर्तमानवद्वे"ति न्यायेन श्रद्धातिशयजननार्थं दूरकथाव्यावृत्तये विद्यमानत्वेन निरूपयति—

स एष एतर्ह्यध्यास्ते ह्यासनं पार्थिवोचितम् ।
पितामहेनोपन्यस्तं राज्ञाऽरण्यं विविक्षता ॥ ४२ ॥

स एष इति । भगवत्सायुज्यं प्राप्तस्य सर्वत्र भगवत इव स्फुरणादेष इति निर्देशः । अत एतर्हीदानीमपि पार्थिवोचितमासनमध्यास्ते । जनमेजयस्तस्थाने तदासने नोपविशति । स एव भगवद्रूपो भूत्वा तत्राऽऽस्ते । हीति सर्वेषां प्रतीतिः । अत एव पार्थिवोचितं राज्ञामुचितमिदानीमध्यास्ते

१ तस्मादनन्तरं चतुर्थमेव इति ख. २ अनृतेति ख. ३ अनृतानि त्वाज्यानि ख. ४ तस्याऽधर्मप्रवर्तत्वं ख. ५ तस्माद्धर्मस्थापनविधिर्वर्तते ख.



इत्यर्थः । अन्यथा पार्थिवोचितमिति व्यर्थं स्यात् । सिंहासनान्तरमपि नाऽऽध्यास्ते । किन्तु पितामहेन राज्ञा युधिष्ठिरेण परित्यागं कृत्वा वनं विविक्षतोपन्यस्तम् ॥ ४२ ॥

ननु किमितदुपचारादुच्यते ? नेत्याह—

आस्तेऽधुना स राजर्षिः कौरवेन्द्रश्रियोल्लसत् ।
गजाह्वये महाराजश्चक्रवर्ती बृहच्छ्रवाः ॥ ४३ ॥

आस्तेऽधुनेति । अधुनाऽपि तथैवाऽऽस्ते । ननु देहान्तरं प्राप्य ? नेत्याह । स राजर्षिः । स एव राजर्षिरेव । साहसनष्टं वारयति—कौरवेन्द्रश्रियोल्लसदिति । कौरवेन्द्राणां श्रिया राजलक्ष्म्योल्लसन्यथा भवति तथा । आस्ते च । तत्रापि गजाह्वये । महाराज इति । राजश्रिया युक्त एव । चक्रं यं वर्तयत्याज्ञापयति च । तथैव बृहती कीर्तिर्यस्य । वन्दिभिः स्तूयमानः ॥ ४३ ॥

एवं भगवत्कृपया भागवतेन चाऽजरामरो भक्तभूत एव भगवानिव रमत इत्युक्त्वा तदर्थश्रानिवृत्तये तस्याऽलौकिकमेव रूपमुक्तं न तु लौकिकमित्यभिप्रायेणोपसंहरति—

इत्थम्भूतानुभावोऽयमभिमन्युसुतो नृपः ।
यस्य पालयतः क्षोणीं यूयं सत्राय दीक्षिताः ॥ ४४ ॥

इत्थम्भूतानुभावोऽयमिति । मृतोऽपि जीवंस्तिष्ठति । इत्थम्भूतानुभावः । कलिनिग्रहादिर्यो । अभिमन्युसुत इति महात्म्यमुक्तम् । तद्राज्य एव भवद्भिः सत्रमारब्धमित्याह—यस्य पालयत इति । अन्यथा भवन्तोऽपि भागवतश्रवणार्थं गच्छेयुः । संवत्सरदीक्षायाः कृतत्वात् "न कश्चिन्म्रियते तावदि"ति वाक्येन नैव विरोधः । अग्नीषोमीयप्रभृत्येव हिंसाया विधानात् । क्षोणीं पालयतः सतः । सत्राय सहस्रसंवत्सरार्थं । अन्यथाऽधर्मराजनि महत्कर्मारम्भो न घटते । अनेन कलौ महायागनिषेधोऽपि समर्थितो भवति ॥ ४४ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां प्रथमस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥

---

१ सिंहासनान्तरमिति ख. २ स राजर्षिरिति नास्ति ख. ३ स राजर्षिरेवेति ख ४ युक्त इति ख, ग. ५ चकारो नास्ति क. ख. ६ तदिदमेवेति क. ख. ७ नेति नास्ति ख. ८ अनुग्रहरानाति ख. ९ महायोगनिषेधकारीति क.

# अष्टादशोऽध्यायः।

अथाऽध्यायद्वयेनाऽस्य वृत्तमुत्तरमीर्यते ।
शापात्प्रायस्ततो राज्ये शापो वैराग्यबोधकः ॥ १ ॥
सङ्क्षेपकथनं पूर्वं श्रोतृप्रीत्यनुसारतः ।
विस्तारोक्त्यै तयोः श्रद्धा श्लाघा चाऽन्योन्यमीर्यते ॥ २ ॥
तादृशं फलवन्नाऽन्यदिति स्थापयितुं द्विजात् ।
शापस्तु हरिणा प्रोक्तस्तक्षकाग्नेरलौकिकात् ॥ ३ ॥
ज्ञानिनो देहनाशाय नाऽन्यथाऽमृतवर्षणात् ।
यादवेभ्यस्तथोत्कर्षः शापमुग्धेभ्य ईर्यते ॥ ४ ॥

एवं तस्य राज्यस्थितिमुक्त्वोत्तरस्थितिं सङ्क्षेपेणाऽऽह—

सूत उवाच—

यो वै द्रौण्यस्त्रविप्लुष्टो न मातुरुदरे मृतः।
अनुग्रहाद्भगवतः कृष्णस्याऽद्भुतकर्मणः ॥ १ ॥

**यो वै द्रौण्यस्त्रेति**। येन भगवता पूर्वं संरक्षितस्तेनैवेदानीमुपसंहृत इति बोधयति—**अद्भुतकर्मण इति**। विप्लुष्टो न मृतः। अमृतं पीत्वा मृत इति। **भगवतः कृष्णस्येति** प्रकटाप्रकटब्रह्मनामिनी। मातुरुदरे न मृतो गङ्गायां तु मृत इति ॥ १ ॥

**इदानीं** मरणे विशेषमाह—

ब्रह्मकोपोत्थिताद्यस्तु तक्षकात्प्राणविप्लवात् ।
न सम्मुमोहोरुभयाद्भगवत्यर्पिताशयः ॥ २ ॥

**ब्रह्मकोपोत्थितादिति**। तक्षकोऽप्यदग्ध्वा स्थातुमशक्तः। ब्रह्मास्त्रमग्राऽऽगत्य सफलं जातमिति **ब्रह्म**शब्दप्रयोगः। प्राणानां विप्लवो यस्मादिति। निरुद्धानामग्नौ प्रवेशान्महानुपद्रवः। सर्वत्र प्राणा नाऽग्निं स्पृशन्ति। अत्र स्पर्शाद्वा विप्लवः। अत एवोरुभयात्। सम्मोहाभावे हेतुः—**भगवत्यर्पिताशय इति**। आशयस्य तक्षकाग्रहणार्थं भगवति समर्पणम् ॥ २ ॥

तस्य देहत्यागप्रकारमाह—

उत्सृज्य सर्वतः सङ्गं विज्ञाताजितसंस्थितिः ।
वैयासकेर्जहौ शिष्यो गङ्गायां स्वं कलेवरम् ॥ ३ ॥

१ तादृशो इति क. २ संस्थापयितुमिति ग.घ. ३ द्विजानिति ख.ग. ४ ताक्षिकाग्नेरिति ग. ५ ब्रह्म इति ख.ग. ६ नाम्नीति घ. ङ. ७ इदानीमिति नास्ति ग. ८ विलम्ब इति ख.



**उत्सृज्येति**। प्रथमतः परित्यागस्ततो गुरुकृपया तस्य सत्सम्प्रदायाद्भगवत्स्वरूपविज्ञानं ततो गङ्गायां देहत्याग इति विशेषेण ज्ञाता अजितस्य संस्थितिर्येन। सम्यक् स्थितिर्व्यवस्था ॥ ३ ॥

कथं महाभये न सम्भ्रम इत्याकाङ्क्षायामाह—

नोत्तमश्लोकवार्त्तानां जुषतां तत्कथामृतम् ।
स्यात्सम्भ्रमोऽन्तकालेऽपि भजतां तत्पदाम्बुजम् ॥ ४ ॥

**नोत्तमश्लोकेति**। उत्तमश्लोकस्यैव वार्त्ता येषाम्। लौकिक्यपि वार्त्ता येषां भगवत्सम्बन्धिनी। सर्वदा तत्कथामृतं जुषताम्। उपनिबद्धां सद्भिः कथ्यमानाम्(?)। किञ्च। भगवत्पदाम्बुजं सेवमानानाम्। भ्रमस्तु सन्निपातकार्यम्। दोषा गुणाश्चैकीभूता यदेकत्वं सम्पद्यन्ते (?)। "**सन्निपातस्त्वहमिति ममेत्युद्धव या मतिः**"। व्यवहारश्च सन्निपातः। तेन यावज्जीवं सन्निपातव्यवहारः। अन्तेऽपि तत्कार्यं प्राप्नुवन्ति। देहेन्द्रियान्तःकरणैर्भगवदीयैकार्यकरणे पूर्वसन्निपातो निवर्त्तते। तत्र लौकिकी वार्त्ता तामसी। आवश्यकी राजसी। भजनं सात्त्विकम्। विपरीतं वा। आद्यं मानसम्। "**यद्धि मनसा ध्यायती**"ति श्रुतेः। अतो निरन्तरं कायेन्द्रियान्तःकरणैः सबीजे दोषे निराकृते त्रयाणां स्वभावपरावृत्तौ स्पर्शमणिस्पर्शेन लोहादेरिव सर्वस्याऽसंश्लिष्टभगवत्स्वरूपाभिनिवेशान्न भ्रमजनकत्वमित्यर्थः। यद्यप्यन्तकाले देहेन्द्रियान्तःकरणानां वैक्लव्यं सम्भवति तथापि तेषां कालस्य नाऽन्तकत्वमन्तकसम्बन्धित्वं वा। अमृतपानेन नित्यत्वादिति भावः ॥ ४ ॥

ननु कथं कालनियामकत्वं तेषाम्? तत्राऽऽह—

तावत्कलिर्न प्रभवेत्प्रविष्टोऽपीह सर्वतः ।
यावदीशो महानुर्व्यामाभिमन्यव एकराट् ॥ ५ ॥

**तावत्कलिरिति**। तस्य राज्येऽपि कालसम्बन्धो नास्ति। तत्र कथं तदायुषि सम्बन्धः। आधिदैविकत्वादस्य कलेः। ननु गुणानां गुण्यपेक्षया हीनत्वाद्भगवत्कृतं कालं कथमयं निराकृतवानित्यत आह—**प्रविष्टोऽपीति**। मणिना यथाऽग्निस्तम्भस्तथा राजनि विद्यमाने कलेः प्रतिष्टम्भः। भगवदीयत्वाविशेषेऽपि कार्यापेक्षया गुणानामुत्कृष्टत्वात्प्रतिष्टम्भ एव राज्ञा कृतः। न तु स्वदेशाद्दूरीकरणम्। तदाह—**इह सर्वतः प्रविष्टोऽपीति**। अनेन कालस्य देशपरिच्छेदो निवारितः। ननु प्रतिष्टम्भोऽपि भगवत्कृते कथं शक्यः? तत्राऽऽह—**ईश इति**। भगवत्प्रवेशादैश्वर्यदानाद्वा ईशत्वम्। स हि कर्त्तुमकर्त्तुमन्यथा कर्त्तुं समर्थः। किञ्च। भगवता कालोऽप्यधिकृतो राजा च। तयोः पुना राजा महान् कृतः। अतः प्रतिबन्धो युक्त एव। किञ्च। अयं भागिनेयपुत्रो व्यवहारे मान्यः। स तु वाहनरूपः। अतोऽप्यस्य महत्त्वम्। किञ्च। कलिः खण्डशः प्रवर्त्तते देशविषये। अन्येष्वष्टवर्षेषु त्रेतायुगसमः कालो वर्त्तत इति वचनात्। अयं चैकराट्। अतः खण्डमण्डलाधिपतिर्महाखण्डमण्डलेश्वरात्प्रतिबद्धो भवत्येव ॥ ५ ॥

१ तत्सम्प्रदायादिति घ. २ तत्पदाम्बुजमिति ग. ३ सम्पद्यत इति ग. ४ भगवदीयकार्य्यकारणैरिति क. भगवदीयकार्य्यकरणैरिति ख. ५ वर्त्तेत इति ग. ६ कार्य्येन्द्रियान्तःकरणैरिति क. ग. घ. ७ नान्तत्वमिति घ. ८ कालनियमकत्वमिति ख. ग. ९ कालेरिति घ. कालस्येति ध. काल इति क. १० इत्याहेति ख. ग. ११ ननु प्रविष्टोऽपि वशीकर्त्तुं कथं शक्य इति घ. १२ अष्टवर्षेष्विति ग. १३ महाखण्डेश्वरादिति क. ख. घ.

ननु काल एव कलिर्न प्रवृत्त इति कुतो नाऽङ्गीक्रियते । "तस्यर्से यः क्षणो नीत" इति वाक्यानुरोधात् । सूर्यगत्या गणनायां कालपरिच्छेदे कृतादिव्यवहारः । अतः प्रासङ्गिकोत्कर्षन्यायेन तदायुषा भगवता च काल एवोत्कृष्टः कस्मान्नोच्यत इत्याशङ्क्याऽऽह—

**यस्मिन्नहनि यर्ह्येव भगवानुत्ससर्ज गाम् ।**
**तदैवेहाऽनुवृत्तोऽसावधर्मप्रभवः कलिः ॥ ६ ॥**

**यस्मिन्नहनीति** । सत्यमेताभ्यामुत्कर्षः कर्तुं शक्यते । परं न सम्पन्नः । तत्र द्वापरान्ते भगवानवतीर्णः । कलिश्च न प्रविष्टः । तथाच भगवता सूर्यगतिरुत्कृष्टैव । अथ प्रचलिते भगवत्युत्कर्षकाभावात्परीक्षितश्चाऽनधिकारात्कलिः प्रविष्टः । अतः परं प्रविष्टस्य च्छेदने मर्यादैव भज्येत । देशाच्च निराकरणे पश्चादागत्य पुनस्तावन्तं कालमनुभवेत् । ततश्च कल्क्यवतारकालो बाध्येत । अतो भगवता सहाऽस्य समानबलत्वाभावान्नोत्कर्ष इत्यभिप्रायेणाऽऽह । यस्मिन् दिवसे यस्मिन् क्षणे भगवान् त्यक्तवांस्तदैवाऽयं कलिरनुवृत्तः । तदपेक्षया स्थित एव भगवति प्रचलिते स्वयमुपविष्टः । तस्मिन्नुपविष्ट एव सर्वे अधर्माः प्रवृत्ताः ॥ ६ ॥

ननु तथापि दुष्टत्वान्मारणमेवोचितं निराकरणं वा । भगवांश्च प्रार्थनीयः । सर्वेषां चोपकारः सिद्ध्यतीत्याशङ्क्याऽऽह—

**नाऽनुद्वेष्टि कलिं सम्राट् सारङ्ग इव सारभुक् ।**
**कुशलान्याशु सिध्यन्ति नेतराणि कृतानि यत् ॥ ७ ॥**

**नाऽनुद्वेष्टीति** । यद्यपि राजा सर्वं कर्तुं समर्थस्तथापि कलिं नाऽनुद्वेष्टि । यद्यपि धर्मो द्वेष्टि । स्वयं तु तमनु न द्वेष्टि । तत्र हेतुः—**सम्राडिति** । खण्डमण्डलाधिपतीनामन्योन्यद्वेषेऽपि तदनुरोधेन सम्राण्न द्वेष्टि । नन्वधर्मप्रभवत्वाद्युक्तो द्वेषः ? तत्राऽऽह—**सारभुगिति** । व्रीहिषु तुषाः सन्तीति ते न निराक्रियन्ते । अपि तु तुषविमोकेन ते भुज्यन्ते । तथाऽयमपि राजा सारमेव भुङ्क्ते । सारत्वं च तदेव यदाऽसारत्वेन (?) वेष्टितो भवति । अतः केनाऽप्यंशेननद्वेष्टि । ननु विषमधुसम्पृक्तान्नत्यागवद्गुणदोषयोस्तुल्यत्वाद्दोषस्य चाऽधिकत्वात्कुतो न त्यागः ? तत्राऽऽह—**सारङ्ग इवेति** । सारं गायतीति सारङ्गो भ्रमरः । स हि मधुना मत्तो गायति । तत्र केतक्यादिषु बहिःकण्टकवेष्टितेषु मकरन्दप्राचुर्यात्तत्र रमते । तदेकजीवनत्वात् । तथा च राजाऽपि "**कलौ खलु भविष्यन्ति नारायणपरायणा**" इति भगवद्गुणानां भक्तानां चाऽत्र सुलभत्वात्स्वस्य तदेकजीवनत्वाच्च भक्तिसिध्यर्थं न द्वेष्टीत्यर्थः । अधर्मांशनिराकरणं तु प्रतिबन्धेनाऽपि सेत्स्यतीति भावः । किञ्च । कृतस्याऽस्य च तुल्यता । तस्मादपि न द्वेष्टीत्याह—**कुशलानीति** । "**कृते तात्क्षणिकः (?) पाप (?) त्रेतायां द्वादशेऽहनि । द्वापरे मासमात्रेण कलौ संवत्सरेण तत्**" । तद्वैपरीत्येन च धर्मसिद्धिः । तदाह । **कुशलानि** पुण्याणि । **इतराणि** पापानि । **कृतानीति** प्रायेण कलौ संसर्गजानि न भवन्तीति ज्ञापितम् । यद्यस्मात्कृतान्येवेतराणि भवन्ति । अतो लोकोपकारार्थमपि न द्वेषः ॥ ७ ॥

१ छेदनेति ख. २ न स्वयं तु तमनु द्वेष्टीति घ. ३ न तुल्यतेति स्यात् ४ तात्क्षणिक इति क. ख.



किञ्च । नाऽयं कलिर्देशे प्रवर्त्तते । किन्तु पुरुषेषु । तत्रापि बालेषु । तत्रापि प्रमत्तेषु । अतः शिष्टत्वेन तस्य स्थितत्वादुपेक्षैव तत्र न द्वेष इत्याह—

**किं तु बालेषु शूरेण कलिना धीरभीरुणा ।**
**अप्रमत्तः प्रमत्तेषु यो वृको नृषु वर्त्तते ॥ ८ ॥**

**किं त्विति** । तुशब्देन पूर्वपक्षो देशस्थितिरूपो निवारितः । बालेषु धर्मार्थं प्रवृत्तेषु शीघ्रमेव फलसिद्धौ प्रपञ्चविलयः स्यात् । धर्मेणाऽन्तःकरणशुद्धौ ज्ञानोदयेन सर्वत्यागप्रसङ्गात् । अत एव तद्धर्मप्रतिबन्धार्थं शूरेण । ये तु मोक्षाधिकारिणो धीरास्तेभ्यस्तु बिभेति । किञ्च । वैराग्यहेतुश्चाऽयम् । यतः प्रमत्तेषु अप्रमत्तः । आयुःक्षयकरत्वात् । अत एव कलावल्पायुषो भवन्ति । ननु कथमेवमस्य स्वभावः ? तत्राऽऽह—**यो वृक इति** । अयं तु वृकरूपः । स रात्रौ शयानानरक्षितान् बालानेव गृह्णाति । न व्याघ्रवत्सर्वभक्षकः । अत एव न तद्वधार्थं महतां प्रवृत्तिः । एकवचनेनाऽसहायता सूचिता । तत्रापि विशेषः । नृषु वर्त्तते न नरोत्तमेष्वन्येषु वा ऋषिषु । अत उपेक्षणीय इत्यर्थः ॥ ८ ॥

एवं प्रसङ्गात्कलिस्वरूपं निरूप्य तत्कथामुपसंहरति—

**उपवर्णितमेतद्वः पुण्यं पारीक्षितं मया ।**
**वासुदेवकथोपेतमाख्यानं यदपृच्छत ॥ ९ ॥**

**उपवर्णितमिति** । एवं खण्डशो निरूपितस्य प्रकृतोपयोगित्वाभावात्पुण्यमित्याह । यथा गङ्गास्नानादिकं धर्मस्तथैतदुपाख्यानमपि परीक्षितः सम्बन्धि । कथने हेतुः—**वासुदेवकथोपेतमिति** । किञ्च । **यदाख्यानमपृच्छत** । "**तत्कथ्यतामि**"ति वाक्येन पृष्टत्वादुत्तरं दत्तम् । अन्यथा केवलैव भगवत्कथा कथिता स्यात् । "**सोऽहं वः श्रावयिष्यामी**"ति प्रतिज्ञानात् । कथासङ्क्षेपश्च ॥ ९ ॥

ननु यद्ययुक्तः प्रश्नः साक्षाद्भगवत्कथाया अनिरूपकत्वात् । तदा वयं तदैव कथं न निवारिताः । किं प्रासङ्गिकेनेति । तत्राऽऽह—

**या याः कथा भगवतः कथनीयोरुकर्मणः ।**
**गुणकर्माश्रयाः पुम्भिः संसेव्यास्ता बुभूषुभिः ॥ १० ॥**

**या याः कथा इति** । नाऽत्यन्तं कथाऽनुपयोगिनी । भगवत्कथाया आधारत्वात् । उत्तमाश्रयत्वमेवाऽधिकारित्वम् । अतो याः काश्चन कथा भगवतो **गुणकर्माश्रयाः** गुणान् कर्माणि चाऽऽश्रित्य प्रवृत्तास्ताः श्रोतव्याः । तत्र हेतुः—**कथनीयोरुकर्मण इति** । कथनीयानि उरु अधिकानि कर्माणि यस्य । भगवत्कथाया आधिक्यं निरूपकैकथायाः सद्भावे भवति । तदेव भक्तिजनकत्वम् । अन्यथा सहस्रनामपाठवद्धर्मोपयोगित्वं स्यात् । कथनीयानि, उरु यथा भवन्ति तथा, कर्माणि यस्य । केवलनिर्देशेन भगवत्कर्माणि न कथनीयानि । किन्तु साधारणानि संप्रतिष्ठानि कथनीयानीत्यर्थः । **पुम्भिरिति** । स्वतन्त्रैः । तत्रापि बुभूषुभिर्भवितुमिच्छुभिरुद्धविष्णुभिः । घृतसहितस्याऽन्नस्यैव पोषकत्वात् ॥ १० ॥

१ वसंत इति ख. घ. २ तुशब्दे इति ख. ग. ङ. ३ पूर्वपक्षोद्देशस्थितिरूप इति क. घ. ४ प्रमत्तेष्वयमप्रमत्त इति ख. ग. ५ नेति नास्ति ख. ६ निरूप्य तस्येति ख. ७ यदात्मानमिति ख. ग. घ. ८ आरब्धत्वादिति ख. ९ निरूपककथायाः सद्भावः इति क. १० भवन्तीति ग. घ. ११ सम्प्रतिष्ठानीति ख. १२ पोषकत्ववदिति क. ख.

अतः परमुत्तरे किं भविष्यतीति न जाने । प्रश्नादेवैतत्सिद्धिरित्याह—

**कुतः पुनर्गृणतो नाम तस्य महत्तमैकान्तपरायणस्य ।**
**योऽनन्तशक्तिर्भगवाननन्तो महद्गुणत्वाद्यमनन्तमाहुः ॥ १९ ॥**

**कुतः पुनरिति** । तस्य नाम गृणतो दौष्कुल्याधिः कुत्र तिष्ठतीति सम्बन्धः । इदं तु न स्वाभिप्रायेण । अन्यथा स्वश्लाघायां गर्वः स्यात् । अतः केवलं नामोच्चारणकर्तुः फलमुच्यते कुलरहितानामुद्धाराय कुलीनानां गर्वाभावाय च । एकवचननिर्देशाच्च न स्वाभिप्रायम् । नाम्नो माहात्म्यमाह—**महत्तमैकान्तपरायणस्येति** । महत्तमानामपि तन्नामोच्चारणे स्वस्याऽभीष्टस्थानत्वान्नामोच्चारयितुरपेक्षा भवति । प्रायेणाऽयमस्मदभीष्टं जानातीति । ततस्तेऽप्यनुवृत्ता भविष्यन्तीति भावः । एवं सर्वोपास्यत्वेन नामोच्चारणमाहात्म्यमुक्त्वा भगवन्माहात्म्यमाह कैमुतिकन्यायप्रदर्शनार्थम् । ततो महान्तो नाम भगवानित्युत्तरोत्तरमुत्कृष्टाः । अतस्तन्निष्ठायां तथैव फलमिति ज्ञापनार्थम् । अन्यथा नामोच्चारण एव शास्त्रं समाप्तं स्यात् । ततश्च भागवतानारम्भः प्रसज्येत । अतो भगवन्माहात्म्यं वदति—**योऽनन्तशक्तिरिति** । यस्य नामैतादृशं सोऽनन्तशक्तिरिति वक्तव्ये नामपुरस्सरं भगवन्माहात्म्यमुक्तं भविष्यतीति विपरीततया कथयन्नुत्तरवाक्यगतमेव यच्छब्दं प्रयुङ्क्ते । महतो भावो माहात्म्यम् । महत्त्वं च देशकालापरिच्छेदेन वस्त्वपरिच्छेदेन च । तद्भगवतस्त्रयं जातं तादृशम् । शक्तयः स्वरूपं गुणाश्च । स्वरूपतः कार्यतः फलतश्च । अतो नवधाऽनन्तत्वं भगवति पर्यवस्यति । तदाह—**योऽनन्तशक्तिरिति** । सर्वतोऽनन्ताः शक्तयो यस्य । अनन्ता शक्तिर्यस्येति वा । अनन्तेषु शक्तिर्यस्येति वा । एवमुत्तरत्राऽपि । भगवांश्चाऽनन्तः । अनेन स्वरूपस्याऽनन्तत्वमुच्यते । न विद्यतेऽन्तो यस्य यस्माद्यस्मिन्निति वा । तन्निष्ठानामप्यन्ताभावः सूचितः । किञ्च । गुणानां द्विरूपमनन्तत्वम् । महत्त्वेन गुणत्वेन च । गुणाः स्वरूपतोऽनन्ता महत्त्वं चाऽनन्तम् । एकस्मिन्नपि गुणे महत्त्वस्य परिच्छेदो नास्ति । च ( ? ) काराद्भगवत इव गुणानामप्यवान्तरभेदाः । एवमेकेन प्रकारेणाऽपरिच्छेदरूपेण माहात्म्यमुक्तम् । एवं माहात्म्यान्यनन्तानीत्यपि सूचितम् ॥ १९ ॥

माहात्म्यान्तरं विशेषाकारेण वक्तव्यमित्याकाङ्क्षायामाह—

**एतावताऽलं ननु सूचितेन गुणैरसाम्यानतिशायनस्य ।**
**हित्वेतरान्प्रार्थयतो विभूतिर्यस्याऽङ्घ्रिरेणुं जुषतेऽनभीप्सोः ॥ २० ॥**

**एतावताऽलमिति** । स्वभावतो माहात्म्यानि वक्तुमशक्यान्येव । सूचनं परं कर्तव्यम् । अन्यथा महाराजाधिराजस्य स्वरूपं स्पष्टतया कथितमपराधाय भवति । सूचनमपि बहु न कर्तव्यम् । तदाह । एतावता सूचितेनाऽलम् । एतावदपि सूचनं न कर्तव्यमित्यर्थः । **नन्विति** सम्बोधनं मम त्वर्थमन्तःकरणस्यैव । माहात्म्यरसाभिनिविष्टश्च वदति । माहात्म्यं हि तरतमभावेन निरूपणीयम् । तत्सजातीयतादृशपुरुषसम्भावनायां भवति । तद्भगवति न सम्भवतीत्याह—**गुणैरसाम्यानतिशायनस्येति** । गुणैर्हेतुभिः कृत्वा न साम्यमतिशयश्च यस्य । एवं स्वरूपशक्तिभिश्च । तथापि किञ्चित्सूच्यत इत्याह—**हित्वेतरानिति** । "त्वया विना क देव त्वमि"त्यादिवाक्यन्यायेन लक्ष्मीमूलकं सर्वम् । विचारिका च सा । एवं स्वरूपतो बुद्धितश्च महती यदि सर्वान् विहाय भगवन्तं भजते

१ दौःकुल्याधिरिति ख. २ स्वाभिप्रायेणेति क. ग. ३ कैमुत्यन्यायेन प्रदर्शनार्थमिति क. कैमुत्यन्यायप्रदर्शनार्थमिति ग. घ. ४ तारतम्यकथ इति ख. ५ सूचित इति नास्ति ख. ग. घ. ६ अनन्तान्यपीति घ.



तदा सर्वोत्तमत्वं न विविच्य वक्तव्यम् । सा हि सर्वोत्तमा यदि स्वतः स्थातुं शक्नुयात् किमर्थं भजेत ? भोगार्थं वा यदि, तदा प्रार्थयतोऽन्यानपि विहायाऽनभीप्सुं कथं भजेत ? तत्राप्यनभीप्सोरङ्घ्रिरेणुं कथं भजेत ? अतोऽङ्घ्रिरेणोरपि सा हीना । तदपेक्षया चाऽन्ये । तस्मान्माहात्म्यनिरूपणं न कर्तव्यम् । न हि सर्षपान्मेरुर्महानिति कश्चिद्वदति ॥ २० ॥

अस्तु वा प्रकृतिरूपत्वादस्याः स्त्रीत्वाद्वा बुद्ध्यभावः । तथाच महतो विचारपूर्वकं भजनं सूचनार्थं वक्तव्यमिति चेत् ? तत्राऽऽह—

**अथाऽपि यत्पादनखावसृष्टं जगद्विरिञ्चोपहृतार्हणाम्भः ।**
**सेशं पुनात्यन्यतमो मुकुन्दात्को नाम लोके भगवत्पदार्थः ॥ २१ ॥**

**अथाऽपीति** । यद्यपि विभूतित्वाल्लक्ष्म्या न स्त्रीत्वादिकृतदोषः सम्भवति । युक्तिश्चोक्ता । अथाऽपि "तुष्यतु दुर्जन" इति न्यायेन प्रकारान्तरेण माहात्म्यसूचनं निरूप्यते । त्रयो हि महान्तः । ब्रह्मा विष्णू रुद्रश्च । तत्र ब्रह्मा चरणक्षालनकर्ता । शिवश्चरणोदकधारकः । अतः परं को महान् भवेत् । तदाह । यत्पादनखावसृष्टमर्हणाम्भो **विरिञ्चेन** ब्रह्मणोपहृतं समर्पितम् । **अर्हणाम्भः** पूजासाधनोदकम् । गङ्गेति यावत् । **सेशं** महादेवसहितं जगत् पुनाति । नखावसृष्टमिति भिन्नं वा । तेन ब्रह्माण्डभेदेन यदा चरणजलमागतमलकनन्दादिरूपं तदपि सङ्गृहीतं भवति । अथवा । भगवदपेक्षया जलस्याऽतिहीनत्वं ज्ञापयति—**नखावसृष्टमिति** । नखोदकं ह्यतिहीनम् । ईशस्य पावित्र्यमग्रे वक्ष्यते । शेषं पुनातीति पाठे भगवद्व्यतिरिक्तं सर्वमेवाऽऽब्रह्म तृणस्तम्बपर्यन्तं पुनाति । नखोदककर्तृकपावनापेक्षा यदाऽन्येषां तदा भगवत्पदार्थः को वा भवेत् । ननु कोऽपि माऽस्तु । अक्षरात्परस्यैव भगवत्त्वात् । तत्राऽऽह—**लोक इति** । वेदे तु स भगवान् भवत्येव । लोकसिद्धोऽपि वक्तव्यः । लोकस्तु ब्रह्माण्डमात्रदर्शी । अतो ब्रह्माण्डे यो नायकः स भगवानित्युक्तं भवति । भगवच्छब्दो निरतिशयब्रह्मवाचकः ॥ २१ ॥

एवं युक्त्या प्रमाणेन च भगवत्त्वं स्थापयित्वाऽनुभावेनाऽपि भगवत्त्वमाह—

**यत्राऽनुरक्ताः सहसैव धीरा व्यपोह्य देहादिषु सङ्गमूढम् ।**
**व्रजन्ति तत्पारमहंस्यमन्त्यं यस्मिन्नहिंसोपरमः स्वधर्मः ॥ २२ ॥**

**यत्राऽनुरक्ता इति** । यथा नखोदकमन्यदीयं सर्वार्थनाशकं तदेव भगवदीयं सर्वपुरुषार्थसाधकं तथाऽन्यत्राऽनुराग आत्मनाशको भगवति स्वल्पोऽपि रागः सर्वपुरुषार्थसाधकः । तदाह । यत्र भगवति अनुरक्ता ये केचन । न ब्राह्मणत्वादिनियमो न वा साधनान्तरापेक्षा । तदाह—**सहसेति** । एकमत्र बाधकं यत् कामना बलादागतविषयभोगो वा । तत्परिहारार्थमाह—**धीरा इति** । आपाततः सुखकरत्वं तेषाम् । अतो विवेकेन धैर्यं कर्तव्यम् । अथवा । धीरा अपि भवन्ति । अनुराग एवाऽसहायः साधनमपेक्षितं साध्यं फलं च साधयतीत्यर्थः । रागो ह्यन्तःकरणधर्मः । स स्ववर्गं पुष्णाति । न तु स्ववर्गं नाशयति । भगवत्सम्बन्धं तु प्राप्य भगवता संस्कृतः स्ववर्गं सर्वमेव नाशयति । यतो यदेव बाधकं संसारहेतुभूतं तदेव स्ववर्गं सर्वं नाशयित्वा भगवत्पदं प्रापयतीत्युपलक्षणत्वाद्रा-

१ भजते इति क. ग. २ अपिनास्ति क. ख. ग. ३ विष्णुश्चेति क. ४ गङ्गोदकमितीति क. ५ सर्वस्वमेवेति क.

गस्य न द्वेषादिभिर्व्यभिचारः । देहादिषु रूढः सङ्गोऽहन्ताममतालक्षणः । तादृशमूढं सङ्गं व्यपोह्य । ऊढपदेन वेदेनाऽपि बोधितत्वं सूचितम् । यथा विवाहिता स्त्री न परित्याज्या तद्वद्देहादिषु सङ्गो न त्याज्य इति "**आत्मानं सततं रक्षेत्**" "**शरीरमाद्यं खलु धर्मसाधनमि**"ति । "**पुरुषस्याऽखिलार्थद**" श्च (?) वैदिकधर्मवाक्यैर्जनितामपि बुद्धिं त्यजन्तीत्यर्थः । "**स जहाति मतिं लोके वेदे च परिनिष्ठितामि**"ति वाक्यात् । ज्ञाने तु तावानेव पुरुषार्थः । अत्र तु सोऽवान्तरव्यापार इत्याह—**व्रजन्तीति** । यत्राऽनुरक्तास्तद्व्रजन्तीत्यर्थः । "**मद्भक्ता यान्ति मामपी**"ति वाक्यात् । नन्वस्य गौणफलत्वं भविष्यतीत्याशङ्क्याऽऽह—**पारमहंस्यमिति** । परमहंसैः प्राप्यम् । ननु क्रममुक्तौ ते वैश्वानरादिलोकमपि प्राप्नुवन्ति । तद्वदिदमप्यवान्तरस्थानं स्यादित्याशङ्क्याऽऽह—**अन्त्यमिति** । "**आनन्दमानन्दमयोऽवसानमि**"ति वाक्यप्रतिपादितम् । अतः परमन्यत्प्राप्तव्यं नाऽस्तीत्यर्थः । नन्वस्य धर्महेतुत्वाभावादवेदप्रतिपाद्यत्वेनाऽप्रामाणिकत्वं स्यात् । अतः पूर्वं निरूपितं न सन्मार्ग इत्याशङ्क्याऽऽह—**यस्मिन्नहिंसोपरमः स्वधर्म इति** । पूर्वकाण्डे धर्मः प्रतिपाद्यः । उत्तरकाण्डे ज्ञानसाध्योपरतिरविद्यायाः । एतद्द्वयमनुरागस्य स्वाभाविको धर्मः । यथा जलस्य रसः । अतो भक्तिधर्मप्रतिपादकत्वात्सर्ववेदानां न भक्त्या वेदविरोधः शङ्कनीयः । अहिंसापदेन च मुख्यो धर्मो निरूपितः । आलभतिर्न हिंसार्थ इत्यवोचाम । अतः सहजत्वाद्भक्तं प्रति विधिशक्तिरेव कुण्ठिता न तु विरोध इति भावः । एतावता भगवन्माहात्म्यमनन्तं न कस्याऽपि वक्तुं योग्यमित्युक्तम् ॥ २२ ॥

तर्हि भवान् कथं वक्ष्यतीत्याशङ्क्याऽऽह -

**अहं हि पृष्टोऽर्यमणो भवद्भिराचक्ष आत्मावगमोऽत्र यावान् ।**
**नभः पतन्त्यात्मसमं पतत्रिणस्तथा समं विष्णुगतिं विपश्चितः ॥ २३ ॥**

**अहं हीति** । हे **अर्यमणः** ! सूर्यसङ्काशाः । अनेन भवद्भिरेवोद्योतिताः स्मारिता भगवद्गुणाः स्वमाहात्म्येन वा बोधितास्ते भवद्भ्यो वक्तव्याः । अतो न ममाऽपूर्ववक्तृत्वं किन्त्वनुवादकत्वमिति न ब्राह्मणोपदेशकृतोऽपि दोषः । अत एवाऽऽह—**हीति** । अहं पृष्टो भगवद्गुणवर्णने आज्ञप्तो भवद्भिरेवाऽऽचक्षे । **भवद्भिरि**त्युभयत्र सम्बध्यते । परं स्वबुद्ध्यनुसारेण । तदाह—**आत्मावगमोऽत्र यावानिति** । यद्यपि "**अर्थं बुद्ध्वा वाक्यरचना नामे**"ति न्यायेन वाक्यार्थावगमः समायात्येव तथापि वेदपाठकवत् कथनं व्यावर्तितम् । तथा सत्यर्थावबोधो न स्यादिति । ननु किमेतावता स्यात् । भगवद्गुणानां सर्वेषामनिरूपणात् । तत्राऽऽह—**नभः पतन्तीति** । **पतत्रिणो** गरुडादयो **नभ** आकाशमात्मसममेवोत्पतन्ति । न त्वाकाशविशालतानुरोधेन । तथापि खेचरत्वं सिद्ध्यति । तथा ममाऽपि भगवद्गुणवक्तृत्वं सेत्स्यतीति भावः । ननु विषमो दृष्टान्तः । क्रिया तु परिच्छिन्नैव भवति । ज्ञानं त्वपरिच्छिन्नविषयकमपि भवतीत्याशङ्क्याऽऽह—**तथा सममिति** । विपश्चितो ज्ञानिनोऽपि विष्णोर्व्यापकस्य गतिं चरित्रं स्वयोग्यतानुसारेणैव जानन्ति । अन्यथा किञ्चिज्ज्ञत्वं न स्यात् । भगवत्तुल्यता च स्यात् । गतिमित्येकवचनं सर्वोऽपि गुण आकाशतुल्य इत्येकोऽपि गुणो न कैश्चित्सम्यगवगम्यत इत्युक्तम् । अतो न केवलं ममैवाऽयं दोषः किन्तु विषय एव तादृश इति ॥ २३ ॥

१ धर्मभक्तीति ग. २ हे इति नास्ति घ. ३ भवद्भिरेव द्योतिता इति क. ४ वेति नास्ति क. ५ कथने इति ख. ६ वाक्यरचनामितीति ख. वाक्यारचनमिति घ. ७ वाक्यावगम इति ग. ८ वेदपाठवदिति क. ग.



एवं न्यूनवक्तृत्वदोषं परिहृत्य पृष्टे उत्तरमाह—

**एकदा धनुरुद्यम्य विचरन् मृगयां वने ।**
**मृगाननुगतः श्रान्तस्तृषितः क्षुधितो भृशम् ।**
**जलाशयमचक्षाणः प्रविवेश तमाश्रमम् ॥ २४ ॥**

**एकदेति** । राज्ञः प्रमादाच्छापो जात इति वक्तुं स्वभावप्रवृत्तेरनर्थहेतुत्वं बोधयति । **धनुरुद्यम्येति** वधाभिनिवेशः सूचितः । वने मृगयां पारधिं चरन् धावतो मृगाननुगतः । मृगसङ्घातच्छोकोऽस्याऽपि सञ्जातः । "**आरण्याः पशवः कनीयांसः शुष्मा श्रुना**"इति श्रुतेः । अत एव श्रान्तः । देहवैक्लव्यं जातम् । तृषितः क्षुधितोऽपि जातः । दोषत्रयमुत्पन्नमित्यर्थः । अन्यथा महावीरस्य निरन्तरयुद्धकरणेऽप्यक्षीणबलस्य कथं श्रमादि स्यात् । तस्माद्दुष्टानुगमनं न विधेयम् । **भृशमिति** । सोढुमशक्यम् । दोषोत्पन्नस्य श्रमादेर्दोषजनकत्वमेव न गुणजनकत्वमिति वक्तुं तादृशस्य दोषान्तरमपि जातमित्याह—**जलाशयमिति** । **अचक्षाणः** अपश्यन् । जलाशयानामपि देवत्वात्तं प्रति तेऽपि तिरोहिता इति भावः । प्रकर्षेण प्रवेशः अपृष्ट्वा अननुज्ञातः । अतः स्थानपर्यन्तं गमनम् । **तमिति** प्रसिद्धम् । पराभूतद्रौणिमन्त्रस्थानम् ॥ २४ ॥

स्वतो दोषव्याप्तस्य सद्दर्शनेऽपि न सद्बुद्धिरुत्पन्ना । यथा सन्निपातव्याप्तो हविषाऽपि म्रियते तथा जातमित्याह **ददर्शेति** त्रिभिः सार्द्धैः । तत्र द्वयेन मुनेः स्वरूपं वर्णयति तस्य दोषाधिक्याय—

**ददर्श मुनिमासीनं शान्तं मीलितलोचनम् ।**
**प्रतिरुद्धेन्द्रियप्राणमनोबुद्धिमुपारतम् ॥ २५ ॥**
**स्थानत्रयात्परं प्राप्तं ब्रह्मभूतमविक्रियम् ।**
**विप्रकीर्णजटाच्छन्नं रौरवेणाऽजिनेन च ॥ २६ ॥**

**मुनिमिति** श्रवणमनने ब्रह्मविषयके सिद्धे तस्येति ज्ञापितम् । **आसीनमिति** निदिध्यासनपरत्वम् । योगे चाऽऽसनं तृतीयमङ्गम् । अतः पूर्वद्वयमप्यर्थादुक्तं भवति । **शान्तमिति** प्राणायामेन मनोनियमनमुक्तम् । **मीलितलोचनमिति** प्रत्याहारः । ध्यानधारणे वक्तुं प्रत्याहारमेव विशदयति—**प्रतिरुद्धेति** । अथवा । **मीलितलोचनमिति** विषयाणामप्रतिबन्धकत्वं सूचितम् । प्रतिलोमतया रुद्धा अन्तर्नीता इन्द्रियप्राणमनोबुद्धयो येन । एवं बाह्यविषयान्तर्विषयनिवृत्त्यनन्तरं स्वस्वरूपे विद्यमाने भगवति आ समन्ताद्रतः अनुरक्तः । तेन स्वरूपेण भगवत्सेवक इत्युक्तम् । अनेन ध्यानधारणे अपि सूचिते । समाधिमाह—**स्थानत्रयादिति** । जीवस्य चत्वारि स्थानानि जाग्रत्स्वप्नसुषुप्तिसमाधिरूपाणि । तत्र भगवतः कार्यद्वयं गुणाः स्वरूपं च क्रमेणाऽभिव्यक्ता (?) भासन्ते । अतोऽस्य स्थानत्रयात्परं समाधिं प्राप्तस्य स्वरूपं भासत इत्यर्थः । न केवलं मानमात्रं

१ मृगयायामिति घ. २ पारधीवदनुधावतो मृगानित्यादि क. ३ धृता इति घ. ४ अन्तरिति क. घ ५ पूर्वद्वयन्तगमनमिति क. घ. ६ बाह्यविषयमान्तर्विषयेति क. बाह्यविषयः अन्तर्विषमेति ख. बाह्यविषय आन्तर्विषयेति घ. बाह्यविषयआन्तविषयमिति घ. ७ समाधिप्राप्तस्येति क. ख. ग.

किन्तु फलमपि जातमित्याह—**ब्रह्मभूतमिति** । "**ब्रह्म वेद ब्रह्मैव भवती**"ति श्रुतेः । असम्प्रज्ञातसमाधित्वज्ञापनायाऽऽह—**अविक्रियमिति** । सर्वविकाररहितम् । अनेन देहायुर्वृद्धिक्षयादिकमपि निवर्त्तितम् । मनोव्यापारोऽपि निराकृतः । केवलं स्वरूपेणैव भगवन्तं सेवत इत्युक्तं भवति । बहिश्चोपघातकनिराकरणप्रकार पूर्वमेव कृतवानित्याह—**विप्रकीर्णेति** । विप्रकीर्णाभिर्जटाभिराच्छन्नम् । रुरुर्बहुशृङ्गमृगः । रौरवेण चर्मणा कृष्णाजिनेन चोपर्याच्छन्नम् । एतावता बहिरन्तर्व्यवस्थया स सर्वथा न प्रार्थनीय इति सूचितम् ॥ २५ ॥ २६ ॥

तादृशमपि याचितवानित्याह—

**विशुष्यत्तालुरुदकं तथाभूतमयाचत ।**
**अलब्धतृणभूम्यादिरसम्प्राप्तार्घ्यसूनृतः ।**
**अवज्ञातमिवाऽऽत्मानं मन्यमानश्चुकोप ह ॥ २७ ॥**

**विशुष्यत्तालुरिति** । विशेषेण शुष्यत्तालु यस्य । शोकेनैव तालुशोषणम् । **तथाभूतमिति** । पूर्वोक्तधर्मयुक्तम् । याचनमपि दोष एव । तेन दोषेण दोषान्तरमप्युत्पन्नमित्याह—**अलब्धेति** । "**तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता । एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचने**" ति सद्धर्मः । तच्चं तस्मिन्नदृष्ट्वा स्वस्य शिक्षकत्वं च स्मृत्वा शिक्षार्थमिव कोपं कृतवान् । नं लब्धा (?)। तृणं, भूमिः । आदिशब्देनोदकम् । तृणभूमी आदिर्यस्येति । जलस्याऽपेक्षितत्वादेवमुक्तम् । राजनिमित्तं विशेषधर्मोऽर्घ्यादिः । न सम्प्राप्ता अर्घ्यादिसूनृतान्ता येन । राजसु ब्राह्मणैः पाद्यस्याऽकर्तव्यत्वादर्घ्यग्रहणम् । तदप्राप्तौ दोषेण हेत्वन्तरं कल्पयति—**अवज्ञातमिति** । निषेधाभावाच्चेवप्रयोगः । यदि स्वयमेव जलादिकं गृह्णीयात्तदाऽपि न दोषः स्यात् । आपद्धर्मत्वात् । परमभिमानेन तदपि न कृतवान् । तदाह—**आत्मानं मन्यमान इति** । दोषेण दृष्टेः प्रतिरुद्धत्वात्तत्स्वरूपमविचार्यैव केवलं चुकोप । हेत्याश्चर्ये ॥ २७ ॥

क्रोधः शिक्षार्थमपि भवति । मन्युस्तु द्विष्ट एव । तदा तस्याऽन्यद्दोषद्वयमुत्पन्नमित्याह—

**अभूतपूर्वः सहसा क्षुत्तृड्भ्यामर्दितात्मनः ।**
**ब्राह्मणं प्रत्यभूद्ब्रह्मन् मत्सरो मन्युरेव च ॥ २८ ॥**

**अभूतपूर्व इति** । कदाऽप्येतादृशो दोषो नोत्पन्नो यस्तु ब्राह्मणे मत्सरः । **सहसेति** विचारोत्पत्तिर्निवारिता । देहधर्मा एव प्रबला जाता इत्याह—**क्षुत्तृड्भ्यामिति** । आत्मा अन्तःकरणं यस्य । एवं ब्राह्मणातिक्रमं श्रुत्वा शौनकस्य क्षोभो मा भवत्विति **ब्रह्मन्निति** सम्बोधनम् ।

१ उपघातनिराकरणेति क. २ शुष्यती तालुरिति क. ग. शुष्यन्ती तालुरिति ख. ३ स चेति क. ख. ग. घ. ४ शिक्षकमिति क. ग. ५ नकारो नास्ति ग. ६ दृष्टेऽप्रतिरुद्धत्वादिति ख. ७ निरूपितेति क. पूर्वज्ञानं निवारितमिति ग. क.



ब्राह्मण एव मत्सरो मन्युश्च जातः । परोत्कर्षासहनं **मत्सरः** । एवं दश दोषा उत्पन्नाश्चकारेण समुच्चिताः ॥ २८ ॥

उपसंहाराय दोषाणां फलमाह—

**स तु ब्रह्मऋषेरंसे गतासुमुरगं रुषा ।**
**विनिर्गच्छन्धनुःकोट्या निधाय पुरमागतः ॥ २९ ॥**

**स तु ब्रह्मऋषेरिति** । तुशब्देन पूर्वग्लानिर्निवारिता । कार्यस्य जातत्वात् । **कलेः स्थानप्रदानाद्धि ब्राह्मणातिक्रमे मतिः** । ब्रह्मभूतस्य ऋषेरिति प्रमेयप्रमाणोभयबलवत्त्वं सूचितम् । तन्नित्यम् । **अंस इति** । नीयमानः सर्पः शिरसः साक्षाद्ब्रह्मत्वादंस एव पतितः । तस्य वा हस्तोऽग्रे न चलितः । सर्पं हत्वा मरणानन्तरं गतासुं तमुत्थाय विनिर्गच्छन् धनुःकोट्योत्थाप्य अंसे निधाय स्वपुरमागतः । मृगयां गतो धनुषः स्वस्य च कार्यं कृत्वा समागतः । तत्रैव निकटे तिष्ठेच्चेत्सान्त्वयेदपि बालकम् ॥ २९ ॥

ननु तथा करणे राज्ञः कोऽभिप्रायः? तत्राऽऽह—

**एष किं निभृताशेषकरणो मीलितेक्षणः ।**
**मृषासमाधिराहोस्वित्किं नु स्यात्क्षत्रबन्धुभिः ॥ ३० ॥**

**एष किमिति** । निभृतान्यशेषाणि करणानि यस्य । तादृशो भूत्वा किं मीलितेक्षणः । आहोस्विदस्मद्वञ्चनार्थं मृषासमाधिज्ञापको मीलितेक्षण इति । ननु तथा ज्ञापने किं प्रयोजनम् ? तत्राऽऽह—**किं नु स्यादिति** । नु इति वितर्के । निश्चये वा । क्षत्रबन्धुभिः किं स्यादागतैर्गतैर्वा । क्षत्रबन्धुत्वज्ञानं योगात् । यद्यपि मृषासमाधित्वेऽपि न किञ्चिदनेन कर्तुं शक्यते तथापि चित्तसमाधानार्थमेवं विचार उत्पन्न इत्यर्थः ॥ ३० ॥

एवमविचारितकृतेरनर्थपर्यवसायित्वमाह—

**तस्य पुत्रोऽतितेजस्वी विचरन् बालकोऽर्भकैः ।**
**राज्ञाऽघं प्रापितं तातं श्रुत्वा तत्रेदमब्रवीत् ॥ ३१ ॥**

**तस्येति** । पुन्नाम्नो नरकात्त्रायत इति पुत्रः । स चेदस्मान्न त्रायते पुत्रत्वादपगतः स्यात् । अतितेजस्वी च । अनेन सामर्थ्यं द्योतितम् । अविवेकहेतुमप्याह । अर्भकैः सह बालक एवाऽऽश्रमप्रान्ते विचरन् । राज्ञा अपराधं पापं वा प्रापितं श्रुत्वा । मृतसर्पस्पर्शेऽपि पापं भवति । पापान्मरणमिति मरणं वा । आश्रमस्थवधेन वा । अपराधपक्षे राजकर्तृकोऽपराधो मुनिपर्यवसायी जात इति । **तातेति** स्नेहनाम । **तत्रेति** । यत्रैव श्रुतस्तत्रैवेदमब्रवीत् ॥ ३१ ॥

१ स समागत इति क.

अग्रे दण्डनिरूपणार्थं दण्डयोग्यतामाह त्रिभिः । अधर्मस्वामिद्रोहौ दण्डनिमित्तं राजनिष्ठम् । दण्डनसामर्थ्यञ्च स्वनिष्ठम् । तत्र प्रथमं दोषमाह—

**अहो अधर्मः पालानां पीव्नां बलिभुजामिव ।**
**स्वामिन्यघं यद्दासानां द्वारपाले शुनामिव ॥ ३२ ॥**

**अहो** इत्याश्चर्ये । पालानामधर्मः । धर्मपालका अधर्मं निराकुर्वन्ति । न तु कुर्वन्तीत्याश्चर्यम् । आश्चर्याभिनिविष्टो ध्यायन्नेदमाश्चर्यमिति ज्ञातवान् । अतोऽधर्महेतुं वदन् स्थानविशेषं प्राप्य तस्य हेतुत्वं ज्ञापयन् दृष्टान्तमाह—**पीव्नामिति** । स्थूलत्वमेवाऽधर्मकरणे हेतुः । नीचा राज्येन पुष्टा अधर्मं कृतवन्त इत्यर्थः । यथा श्वानो बलिना पुष्टा बलिदातारमेव भक्षयन्ति गृहं वा प्रविशन्ति । ब्राह्मणानां राज्यद्वयम् । स्वाराज्यं बहीराज्यं च । बहीराज्यं स्वभोग्यं न भवतीति स्वाराज्यसाधकत्वेन विनियुक्तम्[1] । अत एव क्षत्रियाः स्थापिताः । ब्रह्मणा निर्मिता भूः कश्यपेन च दत्ता । तथा परशुरामेण रघुनाथेन च । तथापि यद्ब्राह्मणैर्बहीराज्यं न कृतं तदन्तस्तत्करणार्थम् । तदेवाऽऽह—**स्वामिन्यघमिति** । दासानां यत्स्वामिन्यघमपराधकरणं पापं तच्छुनामिव जातिदोषेणाऽविवेकेन च जातम् । **द्वारपाले** द्वारपालने ये विनियुक्ताः श्वानः । द्वारपालनार्थं वा । ते यथा अज्ञानात्स्वामिनमेव भक्षयन्ति गृहं मा प्रविशत्विति तथा समाध्यर्थमेव राजा विनियुक्तः समाधिं मा करोत्वसमत्पूजां करोत्विति । एतावता शुनस्तुल्यता राज्ञो निरूपिता ॥ ३२ ॥

विषमदृष्टान्तशङ्कायामाह[2]—

**ब्राह्मणैः क्षत्रबन्धुर्हि द्वारपालो निरूपितः ।**
**स कथं तद्गृहे द्वाःस्थः सभाण्डं भोक्तुमर्हति ॥ ३३ ॥**

**ब्राह्मणैरिति** । अनेन स्वामिद्रोहः समर्थ्यते । **हीति** चतुर्धा निरूपणं बोधितम् । शरीरादिबाह्यपदार्थो द्वारम् । वस्तुतोऽत्र निरूपका भृगवः । अतो यैर्निरूपितं तेषामेव गृहे **द्वाःस्थः** सर्वदा द्वारपालकः **सभाण्डं** भोजनपाकपात्रस्थमन्नं भोक्तुमर्हति (?) ब्राह्मणमाज्ञापयितुं नाऽर्हति । तेषामेव कृपया राज्यकरणात् । ब्रह्मणो हि गृहं ब्रह्माण्डम् । तत्र सर्वपुरुषार्थोपभोगस्थानानि ब्राह्मणाः[3] । तदुपघातकनिराकरणात् द्वारपालको राजा । राज्यं बलिस्थानम् । ब्राह्मणमपि (?) कृषीवलवत् (?) बलिमध्यपातनात्सभाण्डभोजनम् । समाधिस्थापराधाद्गृहप्रवेशेन सभाण्डभोजनम् ॥ ३३ ॥

एवमपराधं समर्थयित्वा स्वस्य दण्डनसामर्थ्यं वदन् प्रकारान्तरं व्यावर्तयति—

**कृष्णे गते भगवति शास्तर्युत्पथगामिनाम् ।**
**तद्भिन्नसेतूनद्याऽहं शास्मि पश्यत मे बलम् ॥ ३४ ॥**

**कृष्णे गते भगवतीति** । सदानन्दरूपे स्वानुभवार्थमेव ब्राह्मणान्नियुज्य स्वस्थानं गते । भगवत्त्वात्स्वानन्दानुभवस्य सम्पादनार्थं पूर्वं ब्राह्मणप्रतिपक्षकशास्तरि । पालकानां तथात्वे ब्राह्मणैरेव[4] दण्डः कर्तव्यः । कोटिद्वयस्यैव स्थापितत्वात् । अतो द्वयमस्माभिरेव कर्त्तव्यमित्याह—**भिन्नसेतू-**

1 स्वाराज्यं साधकत्वेनेति क. ख. ग. स्वराज्यसाधकत्वेन विनियुक्ता इति घ. 2 शङ्कामाहेति क. घ. 3 सर्वपुरुषार्थफलोपभोगस्थानानि ब्रह्मण इति ग. 4 ब्रह्मणेति ख.



**निति** । भिन्नाः सेतवो मर्यादा यैः । अनेन स्वार्थपरित्याग उक्तः । ननु कदापि सेतुभेदनं न श्रुतम् ? तत्राऽऽह—**अद्येति** । अद्यैव जातमद्यैव दण्डनं कर्त्तव्यमित्यर्थः । स्वसामर्थ्यं तथाविधमस्तीति बालकान् बोधयति—**पश्यतेति** । आविर्भूतं ब्रह्मतेजः स्वस्मिन् स्वयं पश्यन् स्वमित्रत्वात्तानपि प्रदर्शयति ॥ ३४ ॥

एवमध्यवसायं कृत्वा यत्कृतवांस्तदाह—

**इत्युक्त्वा रोषताम्राक्षो वयस्यानृषिबालकः ।**
**कौशिक्याप उपस्पृश्य वाग्वज्रं विससर्ज ह ॥ ३५ ॥**

**इत्युक्त्वेति** । राजभावनया पालकत्वाध्यासाद्रोषः । तेन ताम्रे अक्षिणी यस्य । अनेन पुनर्विचारान्तरं न कृतवानिति ज्ञापितम् । कौशिकी नदी । तस्या **आपः**[1] अप **उपस्पृश्य** आचम्य स्वस्य ब्रह्मभावमाविर्भाव्य वाग्रूपं वज्रं विससर्ज "फट् फट् जहि" त्यादिमन्त्रानुक्त्वा । दधीच्यस्थिनिर्मितः स वज्रः । अयं तु ब्राह्मणानां मूलभूतो वाग्वज्रः ॥ ३५ ॥

तस्य वाग्वज्रस्याऽर्थमाह—

**इति लङ्घितमर्यादं तक्षकः सप्तमेऽहनि ।**
**धक्ष्यति स्म कुलाङ्गारं चोदितो मे पितृद्रुहम् ॥ ३६ ॥**

**इतीति** । एवम्प्रकारेण त्यक्तमर्यादं तक्षकः सप्तमेऽहनि **धक्ष्यति** भस्मसात्करिष्यति । **स्मेति** प्रसिद्धे । सर्वप्रसिद्ध्या तं भक्षयिष्यतीत्यर्थः । अनेन तस्य प्रतीकारो न भविष्यतीति सूचितम् । "**सप्त वै शीर्षण्याः प्राणा**" इति श्रुतेः शिरसो रक्षितत्वात्प्राणघातकत्वेऽपि तावत्कालं जीवनमुक्तम् । यदि शिरसि स्थापयेत्तदैव म्रियेत । ननु पाण्डवकुलोत्पन्नं कथं धक्ष्यति तक्षकः ? तत्राऽऽह—**कुलाङ्गारमिति** । यदीदानीं न दग्ध एतादृशापराधान्तरकरणे कुलमेव नाशयिष्यति । यादववत् । अतः पाण्डवानामुपकारार्थमेव तं धक्ष्यतीत्यर्थः । ननु प्रार्थितो न धक्ष्यतीत्याशङ्क्याऽऽह—**चोदितो म इति** । मत्प्रेरितो नाऽन्यथा करिष्यतीत्यर्थः[2] । अन्यथा तमपि धक्ष्यामीति भावः । एवमाज्ञापने हेतुः—**पितृद्रुहमिति** । अस्मत्पित्रे द्रुह्यतीति ॥ ३६ ॥

एवं शप्त्वा तस्मिन् तेजसि शान्ते मानुषभावेन गृहमागत्य रोदनं कृतवानित्याह—

**ततोऽभ्येत्याऽऽश्रमं बालो गलेसर्पकलेवरम् ।**
**पितरं वीक्ष्य दुःखार्तो मुक्तकण्ठो रुरोद ह ॥ ३७ ॥**

**तत इति** । **गलेसर्पकलेवरमित्यलुक्समासः** । बालत्वान्मृतो जीवति वेति न ज्ञातवान् । तादृशं पितरं वीक्ष्य दुःखेनाऽऽर्त्तः । **मुक्तकण्ठः** । प्लावितेन स्वरेण । पिता तु सर्पकण्ठः स्वयं मुक्तकण्ठः । **हेति** निश्चये ॥ ३७ ॥

1 आप इति नास्ति ख. ग. घ. ङ. 2 इति भाव इति ख.

ततः किं वृत्तम्? तदाह—

**स वा आङ्गिरसो ब्रह्मन् श्रुत्वा पुत्रविलापनम् ।**
**उन्मील्य शनकैर्नेत्रे दृष्ट्वा चांऽसे मृतोरगम् ॥ ३८ ॥**
**विसृज्य पुत्रं पप्रच्छ वत्स कस्माद्धि रोदिषि ।**
**केन वाऽपकृतं सर्वमित्युक्तः स न्यवेदयत् ॥ ३९ ॥**

**स वा इति । आङ्गिरसः** अङ्गिरसो गोत्रे उत्पन्नः । सहिष्णुत्वं कुलीनत्वं च सूचितम् । **ब्रह्मन्निति** शङ्कान्तरं वारितम् । न हि ब्रह्मभूता अन्यथा कुर्वन्ति । अतिस्वराघातेन समाधिर्नश्यति । स्वभवत् । तदा शनकैर्नेत्रे **उन्मील्य** उद्घाट्य अंसे च सर्पं दृष्ट्वा स्वभावात्तं प्रथमतो विसृज्य । पुत्रत्वान्नाऽन्यथा वचनं सम्भवति । प्रश्नमेवाऽऽह—**वत्सेति कृतमित्यन्तेन** । वाक्यद्वयम्—कस्माद्रोदिषि, केन वा तेऽपकृतमिति । विशेषकथने प्रयोजनाभावात्सङ्क्षेपेणाऽऽह—**सर्वमिति** ॥ ३८ ॥ ३९ ॥

तदा शमीकः शृङ्गिवचनं श्रुत्वा विचार्य न साधु कृतवानित्याह—

**निशम्य शप्तमतदर्हं नरेन्द्रं स ब्राह्मणो नाऽऽत्मजमभ्यनन्दत् ।**
**अहो बतांऽहो महदद्य ते कृतमल्पीयसि द्रोह उरुर्दमो धृतः ॥ ४० ॥**

**निशम्येति** । अयुक्तत्वे हेतुः—**नरेन्द्रमिति** । नन्वपराधिषु दण्ड एव कृतः । कुतो नाऽभ्यनन्दत्? तत्राऽऽह—**स ब्राह्मण इति** । "**ब्राह्मणाः क्षमयाऽर्हणतां गताः**" । क्षमाभावे ब्राह्मण्यमेव गच्छतीति भावः । ननु यथा राजा उपेक्षणीयस्तथाऽयमपि कुतो नोपेक्षितः? तत्राऽऽह—**आत्मजमिति** । अयमनुपेक्षणीयः । आत्मजत्वात् । "**अप्रतिषिद्धमनुमतं भवती**"ति न्यायेन तूष्णीम्भावेऽङ्गीकारे वा "**न ब्रह्मदण्डदग्धस्ये**"ति न्यायेन राज्ञः परलोकोऽपि गच्छेत् । अतः पितुरनुमत्या न कृतमिति शब्दार्थमात्रे सत्यता । न पर्यवसानतस्तथा फलमपि । पुत्रस्याऽपि मन्युं त्याजयति युक्तिभिः । अन्यथा तस्य दुर्मरणमेव स्यात् । अतो यथाऽस्याऽनुतापो भवति तथा वचनान्याह—**अहो इति** । राज्ञः शापः पुरुषार्थपञ्चकेनाऽपि विरुद्ध्यते । अतः स्वस्य पुरुषार्थपञ्चकहानिर्भविष्यतीति भयप्रदर्शनेनाऽनुतापजननम् । प्रथमतोऽधर्मः कृत इत्याह । **अहो** इत्याश्चर्ये । **बतेति** खेदे । **ते कृतं महदंहः** । त्वया कृतं महत्पापरूपम् । परमज्ञानात् । अन्यथा प्रायश्चित्तमपि न स्यात् । तदेवाऽऽह । अल्पीयसि द्रोहेऽपराधे महान् दण्डः कृतः । पर्यवसाने विचार्यमाणेऽस्मास्वल्पोऽपराधः । आश्रमस्थ एकः सर्पो हतः । सर्पस्पर्शनश्च स्नानहेतुः कारितः । भयं च जनितं तव । तस्य तु प्राणा एव हताः । न हि सर्पेण राज्ञस्तुल्यता भवति । न हि स्पर्शेन विपत्त्यासेस्तुल्यता । न ह्यापाततो भयेन निकटोपस्थितप्राणहारिमहाभयस्य । तस्माद्यथापराधदण्डाभावादधर्मः ॥ ४० ॥

१ साङ्गिरसो गोत्रे इति ख. घ. २ दण्डमेवेति घ. ३ कृत इति नास्ति क. ग. घ. ४ अत इति नास्ति क. घ.



नन्वस्माभिस्तुल्यमेव कृतम् । मारणे मारणं सर्पस्पर्शे सर्पस्पर्शो भये भयमिति? तत्राऽऽह—

**न वै नृभिर्नरदेवं पराख्यं सम्मातुमर्हस्यविपक्वबुद्धे ।**
**यत्तेजसा दुर्विषहेण गुप्ता विन्दन्ति भद्राण्यकुतोभयाः प्रजाः ॥ ४१ ॥**

**न वै नृभिरिति** । हे अविपक्वबुद्धे! न हि पदार्थानां तुल्यता वर्तते । मनुष्यैरेव राजा तुल्यो न भवति किं पुनः क्षुद्रजीवैः । ननु महाविदां नैवं वचनं युक्तम्? "**शुनि चैव श्वपाके च पण्डिताः समदर्शिन**" इति वाक्यात् । तत्राऽऽह—**पराख्यमिति** । इदं त्वक्षरविचारेण जीवेषु ब्रह्म तुल्यमित्युक्तम् । न तु भगवता सह जीवानां तुल्यता । भगवतो गुणावतारत्वाद्राज्ञः । "**स्थानेऽर्थे धर्ममखमन्वमरावनीशा**" इति वाक्यात् । "**ना विष्णुः पृथिवीपतिरि**"ति च । नन्वेतद्भक्तं सम्माननार्थमुक्तमिति चेत्? तत्राऽऽह—**यत्तेजसेति** । यस्य राज्ञस्तेजसा दुर्विषहेण चौरादिभिरसह्येन संरक्षिताः प्रजा अकुतोभयाः सत्यः कल्याणानि विन्दन्ति । जीवानां सर्वत्र समत्वाद्राजनि यत्तेजो या वा आज्ञाशक्तिः स्वरूपमात्रेणैव सर्वेषां भयनिवर्तनमेते न जीवधर्माः । अतो नोपचार इत्यर्थः ॥ ४१ ॥

एवमधर्मकरणेन धर्मविरोध उक्तः । अर्थविरोधमाह—

**अलक्ष्यमाणे नरदेवनाम्नि रथाङ्गपाणावयमङ्ग लोकः ।**
**तदा हि चौरप्रचुरो विनङ्क्ष्यत्यरक्ष्यमाणोऽविवरूथवत्क्षणात् ॥ ४२ ॥**

**अलक्ष्यमाण इति** । एकस्मिन्नपि दिवसे राजन्यलक्ष्यमाणे अपश्यति (?) सति । **नरदेव इति** नाममात्रम् । वस्तुतस्तु स चक्रपाणिः । तदाह । **अङ्ग** । पदार्थज्ञानमस्य भवत्वित्याग्रहपरित्यागेन श्रवणार्थं कोमलसम्बोधनम् । तस्य स्वरूपमात्रादर्शने अयं लोकश्चौरप्रचुरो भवति । प्रायेण सर्वे चौरा एव भवन्ति । विनश्यन्ति च । बुद्धिभ्रंशश्च भवतीत्याह । क्षणादेव मेषसमूहवत् पालकाभावे सर्वतो गत्वा नश्यन्तीत्यर्थः । अतः सर्वेषामर्थनाशादर्थविरोधः ॥ ४२ ॥

ननु तेषामर्थविरोधे का नो हानिः? तत्राऽऽह—

**तदद्य नः पापमुपैत्यनन्वयं यन्नष्टनाथस्य वसोर्विलुम्पकात् ।**
**परस्परं घ्नन्ति शपन्ति वृञ्जते पशून् स्त्रियोऽर्थान् पुरुदस्यवो जनाः ॥ ४३ ॥**

**तदद्येति** । तस्माद्धेतोरद्य पापमनन्वयमुपैति । अस्मान् प्रति निष्कारणमेवाऽस्माभिरकृतमेव पापमुपैति । ननु कथमकारणमुपैति । अन्यथा सर्वदैव स्यात्? तत्राऽऽह—**यन्नष्टनाथस्येति** । यस्मादस्मन्निमित्तं नष्टो नाथो यस्य लोकस्य तस्य यद्वसु तस्य विलुम्पकाच्चौरान्निमित्तात् । यद्यपि साक्षादस्माभिर्न कृतं तथाप्यस्मत्कृतेन कार्येण तथा जातमिति पापसम्बन्धः । न केवलमर्थनाश एव किन्तु कामनाशोऽपीत्याह—**परस्परमिति** । अन्योन्यमेव **घ्नन्ति** मारयन्ति **शपन्ति** गालीः प्रयच्छन्ति स्त्र्यादिपदार्थान् **वृञ्जते** अपहरन्ति ॥ ४३ ॥

१ नन्विति ख. घ. ङ. २ स्थानेऽवधर्मेति ग. ३ तदा हे अङ्गेति क. ख. ४ गता इति क. ग. घ. ५ वस्तु इति क. घ. ६ तथाऽस्मत्कृतेनेति क. ग.

प्राणिनः सर्वस्वं त्रयम्। पशवः स्त्रियोऽर्थाश्च। भूम्यादीनामेतत्साधकत्वम्। एतदभावे सर्वमेव कामेनोपभोग्यं नश्यतीत्याह—

**तदार्यधर्मश्च विलीयते नृणां वर्णाश्रमाचारयुतस्त्रयीमयः।**
**ततोऽर्थकामाभिनिवेशितात्मनां शुनां कपीनामिव वर्णसङ्करः॥ ४४॥**

**तदार्यधर्मश्चेति।** आर्याणां सतां धर्मः सदाचारलक्षणः सामान्यरूपः। स एव वर्णाश्रमसहितो विशेषरूपः। स एव पुनर्वेदत्रये प्रतिपाद्यो यज्ञरूपः। एतावता धर्मो नष्ट इत्युक्तम्। किमतो यद्येवम्? तत आह—**तत इति।** ऐहिकं त्रयमेव धर्मार्थकामाख्यम्। तत्र धर्मे गते अर्थकामाभिनिविष्टा एव भवन्ति। ततश्चाऽधर्महेतुर्वर्णसङ्करो भवति। निर्लज्जोपभोगो दुःखादिनाऽभिभूतश्चेति शुनां दृष्टान्तः। तेषामानुपूर्व्या अप्रसिद्धत्वात्पुरुषद्वयेऽप्येकोऽन्वयो न स्यात्। ततश्च सङ्करधर्मा अपि गच्छेयुः। किञ्च। वानरा वृक्षजीविकया जीवन्तो मातृभगिनीविवेकरहिता बुद्धिमन्तोऽप्येकस्यां शतं प्रवर्तन्ते। तत एकस्मिन्नपि पुरुषे वर्णत्वं नास्ति। ग्राम्यारण्यपशूपलक्षकं दृष्टान्तद्वयम्। तस्मात्समूलः कामो गच्छतीत्युक्तम्॥ ४४॥

एवं परम्परया दोषमुक्त्वा साक्षाद्दोषमाह—

**धर्मपालो नरपतिः स तु सम्राड् बृहच्छ्रवाः।**
**साक्षान्महाभागवतो राजर्षिर्हयमेधयाट्।**
**क्षुत्तृट्श्रमयुतो दीनो नैवाऽस्मच्छापमर्हति॥ ४५॥**

**धर्मपाल इति।** एकैकोऽपि गुणोऽस्माभिः सर्वात्मना पूज्यः। अस्य तु सर्वे गुणाः। धर्ममार्गेणाऽयं पूज्यः। तदाह—**धर्मपाल इति।** नीतिमार्गेणाऽप्ययं पूज्यः—**नरपतिरिति।** कामार्थमप्ययं पूज्यः—**सम्राडिति।** साम्राज्यश्रिया जुष्टः सर्वं दातुं समर्थ इति। प्रसिद्धिरपि पूजाहेतुः। तदाह—**बृहच्छ्रवा इति।** बृहत् श्रवः कीर्तिर्यस्य। भक्तिमार्गेणाऽप्ययं पूज्यः—**साक्षान्महाभागवत इति।** अन्ये तु गुरुद्वारा भगवताऽङ्गीकृता महाभागवता भवन्ति। अस्य तु भगवानेव गुरुः। अतः साक्षान्महाभागवतत्वम्। वैदिकविचारेणाऽप्ययं पूज्यः। वेदार्थपालकत्वान्मन्त्रद्रष्टृत्वाच्च। तदाह—**राजर्षिरिति।** कर्मणाऽप्ययं पूज्यः—**हयमेधयाडिति।** हयमेधेनेष्टवान्। किञ्च। धर्मादिविचारव्यतिरेकेणाऽपि केवललौकिकविचारेणाऽपि पूज्यः। तदाह—**क्षुत्तृट्श्रमयुत इति।** ते पूर्वमुक्ता योगाज्ज्ञाताः। विशुष्यत्तालुत्वाद्दीनः। एवं सर्वप्रकारेण पूज्यः शापं नाऽर्हति। तस्मात्पूज्यपूजाव्यतिक्रमादधर्मः। दोषैकदर्शनान्नीचत्वं च जातमित्यर्थः॥ ४५॥

किञ्च। भक्तद्रोहे भगवान् क्रुध्यति। तेन सर्वनाशो भविष्यतीति भीतः सन् भगवन्तं प्रार्थयते—

**अपापेषु स्वभृत्येषु बालेनाऽपक्वबुद्धिना।**
**पापं कृतं तद्भगवन् सर्वात्मा क्षन्तुमर्हसि॥ ४६॥**

१ कामनोपभोग्यमिति क. ग. घ. २ सदाचाररूप इति क. ग. घ. ३ अर्थकामा अभिनिविष्टा एवेति ख. अर्थकामा एव अभिनिविष्टा एवेति ग. घ. ४ प्रवर्तत इति क. वर्तन्त इति घ. ५ प्रजाहेतुरिति घ. ६ बृहच्छ्रवाः कीर्तिरिति ख. ७ सर्वेण प्रकारेणेति घ.



**अपापेष्विति।** हे भगवन्! स्वभृत्येषु तव भृत्येषु। पाल्यभृत्येषु वा। विचार्यमाणे अपापेषु। अपक्वबुद्धिना अदूरदर्शिना। "न वै शिशूनां गुणदोषयोः पदमि"ति ज्ञापनार्थमाह—**बालेनेति।** पापं शापरूपम्। क्षमायां हेतुः—**सर्वात्मेति।** सर्वेषामेव त्वमात्मा। अतः स्वकीयपरकीयकृतवैषम्याभावः। ननु ब्राह्मणानां किं भयम्? तत्राऽऽह—**भगवानिति।** अनेन मोक्षविरोध उक्तः॥ ४६॥

भक्तिविरोधं वदन् तेनाऽपि शापे दत्ते समः समाधिर्भविष्यतीत्याशङ्कां परिहरति—

**तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ता हता अपि।**
**नाऽस्य तत्प्रतिकुर्वन्ति तद्भक्ताः प्रभवोऽपि हि॥ ४७॥**

**तिरस्कृता इति।** अपि गालिदानादिभिस्तिरस्कृताः। वक्रोक्त्या विप्रलब्धा वञ्चिताः। शप्ता इदानीमेव। क्षिप्ता अधिक्षिप्ताः। हतास्ताडिताः। गुणक्रियास्वरूपाहङ्कारदेहनाशेऽपि न प्रतीकारं कुर्वन्तीत्यर्थः। प्रतिकूलतया करणं तु दूरापास्तम्। तत्र हेतुः—**तद्भक्ता इति।** अत एव समर्था अपि। हि युक्तोऽयमर्थः। शक्तौ क्षमाया उचितत्वात्॥ ४७॥

एवं पितुरनुतापनिरूपणेन राज्ञो निर्दुष्टत्वं निरूप्य सदुष्टस्य सदुष्टानुमोदनं युक्तमेवेतीमामाशङ्कां परिहर्तुमृषिं स्तौति—

**सूत उवाच—**

**इति पुत्रकृताघेन सोऽनुतप्तो महामुनिः।**
**स्वयं विप्रकृतो राज्ञा नैवाऽघं तदचिन्तयत्॥ ४८॥**

**इतीति।** अन्यकृतेनाऽपि पापेन सोऽनुतप्तो जातः। तत्र हेतुः—**महामुनिरिति।** भगवताऽप्यनुचितं ज्ञातमिति भगवद्धृदयपरिज्ञानान्महामुनित्वम्। किञ्च। सर्पस्थापनेन स्वयं राज्ञा विप्रकृतस्तदपराधं मनसाऽपि न स्मृतवान्। अतः परम्परयाऽपि पापभीरुत्वाद्भगवद्धृदयज्ञानाद्दोषादर्शित्वाच्च महान् मुनिः॥ ४८॥

उभयोस्तुल्यतयोपसंहरति—

**प्रायशः साधवो लोके परैर्द्वन्द्वेषु योजिताः।**
**न व्यथन्ति न हृष्यन्ति यत आत्माऽगुणाश्रयः॥ ४९॥**

**प्रायश इति।** साधवो, राजा मुनिश्च प्रकृते। सामान्यतस्तु सर्वे। लोके सर्वत्रैव। परैरसाधुभिः। तदानीं तेन राज्ञा ऋषिबालकेन च। साधारण्ये त्वन्यैः। द्वन्द्वेषु सुखदुःखादिषु योगं प्रापिताः। दुःखेषु योजिता न व्यथन्ति। सुखे च योजिता न हृष्यन्ति। तस्मादेतयोः पश्चात्क्षो-

१ स्वपाल्येति क. २ अविचार्यमाणेति क. ३ अपूर्वदर्शिनेति घ. ४ तिरस्कृता अपीति क. ५ अपिर्नास्ति क. ग. घ. ६ परैर्नास्ति ख. ७ दोषदर्शित्वादिति घ. ८ महामुनिरिति क. ९ तदानीन्तनराज्ञेति क. ग. घ. १० दुःखेन योजिता इति क. ग. ११ व्यथयन्तीति क. १२ सुखेनेति क. ग.

भाभावस्तद्युक्तमेव । तत्रोपपत्तिमाह—यत आत्माऽगुणाश्रय इति । गुणा हर्षादयः । तेषामाश्रयोऽन्तःकरणमेव । न त्वात्मा । अतस्तेषामन्तःकरणाध्यासाभावात्क्षोभाभाव उचित इति भावः ॥ ४९ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षित
विरचितायां प्रथमस्कन्धेऽष्टादशोऽध्यायः ॥ १८ ॥

---

## ऊनविंशोऽध्यायः ।

सर्वदोषनिवृत्तिस्तु पूर्वाध्याये निरूपिता ।
प्रमादेऽपीश्वरेच्छातो व्यामोहाभाववर्णनात् ॥ १ ॥
अधुना पूर्णगुणता वैराग्यज्ञानभक्तिषु ।
यशःकर्मसमाजश्रीभावेषु च निरूप्यते ॥ २ ॥
एकोनविंशे वैराग्यात्प्राये मुनिगणागमः ।
तत्र पृष्टार्थसन्देहे शुकागम इतीर्यते ॥ ३ ॥
मुनयो भगवद्भक्तयानं द्रष्टुं हरेः कथाम् ।
श्रोतुश्च भावितज्ज्ञानाद्विवादस्तु शुकोन्नतौ ॥ ४ ॥
वैराग्यस्य प्रकर्षेण प्रकर्षोऽत्र विवक्षितः ।
ज्ञाने तुल्येऽपि देवर्षेस्त्यागाभावान्न वक्तृता ॥ ५ ॥
भार्गवस्याऽपि रामस्य व्यासस्याऽपि हरेस्तनोः ।
गुरुणैव स्वरूपासिज्ञानदानान्न वक्तृता ॥ ६ ॥
द्वात्रिंशल्लक्षणोपेतः शुक एव ततो गुरुः ।
एतदर्थं हि भगवानवतीर्णो वृषध्वजः ।
बीजाधानोत्तरं रक्षा विष्णोरन्ते शिवात्मना ॥ ७ ॥

एवं पूर्वाध्याये राज्ञः शापो निरूपितः । इदानीमद्भुतकर्मणो भगवतः शापफलं निरूप्यते गङ्गा-सत्सङ्गज्ञानानि । तत्र प्रथमं वैराग्यापरनाम नैरपेक्ष्यमनुतापलक्षणतपसा सह निरूप्यते चतुर्भिः । "**कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते । प्रायश्चित्तं स्मृतं तस्य हरिसंस्मरणं परमि**"ति हरिसंस्मरणाङ्गभूतमनुतापं निरूपयन् भक्तस्य तद्भक्तिरूपमिति तदङ्गेन नैरपेक्ष्येण सह निरूपयति—

---

१ ईश्वरेच्छया इति घ. २ श्रीर्भावेष्विति क. ३ यतो महानिति क. ग. ४ पात्रतेति घ. ५ स्वरूपासिज्ञानेत्यादि क. ग. स्वरूपास्तिज्ञानेत्यादि घ. ६ बीजधानान्तरमिति ख. ७ अनुतापलक्षणमिति घ. ङ. ८ तद्भक्तिपरमिति क. तद्रूपमितीति ग.



### सूत उवाच—

**महीपतिस्त्वथ तत्कर्म गर्ह्यं विचिन्तयन्नात्मकृतं सुदुर्मनाः ।
अहो मयाऽनीचमनार्यवत्कृतं निरागसि ब्रह्मणि गूढतेजसि ॥ १ ॥**

**महीपतिरिति** । ततः समागत्य श्रमापनोदनानन्तरं यदा राज्यविचारार्थं सिंहासनस्थो महीपतिर्जातः । अथ तदेव पूर्वकृतं कर्म स्मृतवान् ब्राह्मणस्य गले सर्पदानलक्षणम् । तुशब्देन पूर्वभावो निवारितः । गर्ह्यं निषिद्धत्वेऽप्यपकीर्तिजनकम् । लोकद्वयनाशकमित्यर्थः । चिन्तान्तरपरित्यागेन विशेषाकारेण तदेव चिन्तयन् दुर्मना जातः । यद्यपि दण्डादिप्रकारेण चौरवधं करोति तदाऽप्यन्यद्वारा कारयति न तु साक्षात् । इदं तु स्वयमेव कृतमिति दुर्मना जातः । मनसः शोकजनकत्वाद्दुष्टत्वम् । शोके भगवत्स्मरणात्सुष्टुत्वम् । अन्यथा मूर्च्छैव स्यात् । तस्याऽनुतापाभिलापमाह । **अहो** इत्याश्चर्ये । **मया** भगवद्भक्तेन धर्मपालकेन **अनीचं** पापमपराधरूपं निःशङ्कम**नार्यवत्** स्वभावदुष्टवत् कृतम् । स्वभावदुष्टोऽपि नैतादृशेऽपराधं करोतीति विषयं वर्णयति—**निरागसि ब्रह्मणि गूढतेजसीति** । प्रमाणविचारेण लोकविचारेण वा निरपराधे न दण्डः क्रियते । किञ्च । प्रमेयविचारेणाऽपि जीव एव दण्डो न ब्रह्मणि । नीतिविचारेणाऽपि यत्र सर्वनाशो न सम्भावितस्तत्र दण्डः । न तु गुप्ततेजसि सर्वनाशके । गूढत्वान्न तदैव दाहः । अन्यथा तावन्मात्रदाहः स्यात् ॥ १ ॥

तर्हि किं कर्त्तव्यमित्याकाङ्क्षायां विषय एव करिष्यति न मया किञ्चित्कर्तव्यमित्याह—

**ध्रुवं ततो मे कृतदेवहेलनाद्दुरत्ययं व्यसनं नातिदीर्घात् ।
तदस्तु कामं ह्यघनिष्कृताय मे यथा न कुर्यां पुनरेवमद्धा ॥ २ ॥**

**ध्रुवमिति** । ननु वैष्णवस्य तव न किञ्चिद्भविष्यतीत्याशङ्क्याऽऽह—**देवहेलनादिति** । अन्तःस्थितो भगवानेव तेन ध्यायमानः । स तु देवालयरूपः । अतो देवालयापकारे देव एवाऽपकृतो भवतीति "**भक्तोऽपि भगवद्द्रोहमाचरन्नरकं व्रजेदि**"ति न्यायाद्ध्रुवं व्यसनं भविष्यति । व्यसनं नाम चिकीर्षितसर्वपुरुषार्थप्रतिबन्धपूर्वकस्वव्यापारसहितचित्तव्याकुलता । तच्च द्विविधम् । स्वाश्रयदेहादिनाशकमुपायनिवर्त्यं वा । तत्र दुरत्ययं स्वाश्रयनाशकं व्यसनम् । दुःखेनाऽत्ययो यस्येति दुःखरूपं फलं दत्वा शाम्यतीत्यर्थः । अत्युत्कटत्वाच्छीघ्रमेव भविष्यतीत्याह—**नातिदीर्घादिति** । तदैव न जात इत्यतिपदम् । प्रतीकारादनन्तरमेव सर्वस्याऽप्यप्रतीकार्यतापरिज्ञानात्प्रतीकारः क्रियतामित्याशङ्क्याऽऽह—**तदस्त्विति** । यस्य देहादिः प्रियो भवति यस्य भगवदपराधेऽपि देहादे रक्षणीयता भवति तस्य प्रतीकारप्रयत्नः । "**अस्माभिर्यदनुष्ठेयमि**"ति न्यायेनाऽस्माकं तदभीष्टमेव । अतः प्रार्थयते—**तदस्तु काममिति** । व्यसनस्य सङ्कोचो माऽस्तु । देहादिनाशस्याऽस्माभिरेव चिकीर्षितत्वात् । तथा प्रार्थनायां हेतुः—**अघनिष्कृतायेति** । पापापनोदाय । **मे** इति साक्षान्ममैवाऽस्तु । नन्वपराधो धर्मः । तदर्थं धर्मिनाशोऽनुचितः । असमानत्वात् । तत्राऽऽह—**यथा न कुर्यामिति** । शरीरे विद्यमाने साक्षात्करणं सम्भवति । शरीराद्यभावे तु राज्यपुत्रादिद्वारा । अतः अद्धा साक्षादेवाऽस्त्वित्यर्थः ॥ २ ॥

---

१ पूर्वपक्षवत्पूर्वभाव इति क. ग. पूर्वाभाव इति घ. २ दण्डादिप्रकारेणैवेति घ. ३ शोकेनेति क. घ. ४ प्रमाणविचारे इति ख. ५ स्वाश्रयदेहातिनाशक इति क. ख. ६ शाम्यतीत्यर्थ इति क. ग. ७ लेतीत्यर्थ इति घ. ङ. ७ इत्यपिपदमिति घ. ङ. ८ प्रतीकरणानन्तरमिति क. ग.

नन्वतिरागिणोऽप्येवमुक्तिः सम्भवतीति तद्व्यावृत्त्यर्थं पाक्षिकदोषपरिहारार्थं चाऽऽह—

**अद्यैव राज्यं बलमृद्धकोशं प्रकोपितब्रह्मकुलानलो मे ।**
**दहत्वभद्रस्य पुनर्न मेऽभूत्पापीयसी धीर्द्विजदेवगोभ्यः॥ ३ ॥**

**अद्यैवेति**। शेषरक्षार्थं नाऽऽत्मनि प्रार्थना किन्तु साक्षात्सम्बन्धाभावार्थम्। अतो ब्राह्मणापराधनैमित्तिकदेहनाशः। साक्षात्प्रकोपितो ब्रह्मकुलानलो राज्यं सेनां धनं च नाशयतु। सात्त्विकराजसतामससुकृतादेतत्त्रयं भवति। ततस्तत्कारणादृष्टस्य समाप्तत्वान्निष्प्रत्यूहं दहतु। तत्र साधकमाह—**अभद्रस्येति**। न विद्यते भद्रं यस्येति। न हि कल्याणादृष्टे प्रबुद्धे विद्यमाने पापीयसी धीर्भवति। अतः "**अपदोषतैव विगुणस्य गुण**" इति न्यायेन पुण्याभावे राज्यादीनां दोषजनकत्वात्तदभावप्रार्थना युक्तेत्याह—**पुनर्न मेऽभूदिति**। सकृद्धजातं तन्निमित्तदाहार्थे उपयुज्यते। अतः समीचीनं जातमिति विचारेण नैश्चिन्त्यं श्लोकत्रयार्थः॥ ३ ॥

महतां हि फलप्राप्तौ स्पृहाभाव एव विलम्बहेतुः। अतः स्पृहाया जातत्वात्तत्कदा भविष्यतीति चिन्तयन्नथ तदनन्तरमेव शापमशृणोदित्याह—

**स चिन्तयन्नित्थमथाऽशृणोद्यथा मुनेः सुतोक्तो निर्ऋतिस्तक्षकाख्यः।**
**स साधु मेने न चिरेण तक्षकानलं प्रसक्तस्य विरक्तिकारणम्॥ ४ ॥**

**स चिन्तयन्निति**। **इत्थमिति** पूर्वोक्तप्रकारेण। शमीकप्रेषितब्राह्मणमुखात्तक्षकाख्यो निर्ऋतिरित्यशृणोत्। यद्यपि **इति** पदं नास्ति न वा तथा पदं तथापि यथापदस्य सम्बन्धिनो विद्यमानत्वाद्यथा निर्ऋतिस्तथाऽशृणोदित्यर्थः। स्वरूपतः पदार्थस्य ज्ञातत्वात्प्रकारस्यैवाऽज्ञानादनधिगतार्थगन्तृत्वेन प्रकारस्यैव श्रोतव्यत्वम्। "**सर्वे ह्यस्य मृत्यवो वेष्टा (?)**" इति श्रुतेः। मृत्य्वन्तराभावान्न तक्षकस्य मृत्युहेतुत्वमपि तु मृत्युत्वमेवेत्याह—**तक्षकाख्य इति**। एवं श्रुत्वा यत्कृतवांस्तदाह—**स साधु मेन इति**। स इति पूर्वोक्तो राजा। अन्यथेदानीं विचारस्य कर्त्तव्यत्वे शीघ्रं साधु मननं न सम्भवेत्। ततश्च कर्त्तव्यनिर्द्धाराभावात्परिमितकाले विलम्बो भवेत्। तदाह—**न चिरेणेति**। स न चिरेण साधु मेने, किन्तु शीघ्रमेवेत्यर्थः। तक्षकानलस्य साधुत्वे हेतुः—**प्रसक्तस्य विरक्तिकारणमिति**। विषयेषु प्रसक्तस्य। विषयभोगस्याऽहेतुत्वं ज्ञापयन्नसमासमाह। नित्यसापेक्षत्वादसमर्थसमासः॥ ४ ॥

एवं निरपेक्षतां निरूप्य कर्त्तव्यत्वेन सन्यासलक्षणं वैराग्यमाह—

**अथो विहायेममुमुं च लोकं विमर्शितौ हेयतया पुरस्तात्।**
**कृष्णाङ्घ्रिसेवामधिमन्यमान उपाविशत्प्रायममर्त्यनद्याम्॥ ५ ॥**

**अथो इति**। इहामुत्रार्थफलभोगविरागो न ज्ञानार्थः किन्तु भगवत्सेवार्थ इति निरूपयितुमाह—**कृष्णाङ्घ्रिसेवामधिमन्यमान इति**। अत एव लोकपदप्रयोगः। न तु लोके भोगपरित्यागः। भक्तिमार्गेण भगवत्सेवायाः शरीरमात्रसाध्यत्वात्। ननु शापेनाऽयमेवं करोति परित्यागम्। अतः कथमस्य भक्तत्वमित्याशङ्क्याऽऽह—**विमर्शितौ हेयतया पुरस्तादिति**। पूर्वमेव त्यक्तव्याविति भगवत्सेवार्थं विचारितौ। केवलशरीरेण भगवत्सेवां करिष्यंस्तस्य शरीरस्य क्रियान्तरे विनियोगाभावार्थमनशनं कृतवानित्याह—**उपाविशत्प्रायमिति**। **प्रायम्**। **अनशनम्**। प्रायस्य सर्वथाऽन्नपरित्यागरूपस्य भगवद्व्रतेनाऽभीष्टत्वात्प्रायस्य कर्मत्वम्। अन्यथा तादर्थ्ये चतुर्थी स्यात्। अन्नमयत्वाच्छरीरस्य तदभावे वैक्लव्येन सेवाऽभावमाशङ्क्य अमर्त्यानां नदीत्वाद्गङ्गासमीप उपविष्टः। न विद्यते मर्त्यं येषां देवानां तेषां नदी। प्रत्यहमन्नभक्षणेन देहे वृद्धिक्षययोर्जायमानत्वात्पूर्वं साधनत्वेन गृहीतस्य देहस्य नाशाद्देहान्तरस्य च साधकत्वसन्देहाद्गङ्गायाश्च यथास्थितवस्तुस्थापकत्वाद्गङ्गातीरे प्रायः। अमर्त्यत्वं नदीकृतमेव। तत्तीरे जाता अमर्त्या भवन्तीति। अत इदमपि शरीरमुत्तरोत्तरं केवलतेजसा निष्पाद्यमानं गङ्गासम्बन्धादमर्त्यत्वमापन्नं सत् भगवत्सेवायां फलमुखाधिकारि भविष्यतीति तथा यत्नः। इदानीन्तनानामाधिभौतिकत्वादाधिभौतिकरूपेण साऽभिव्यक्ता न तत्फलं साधयति॥ ५ ॥

एवं योग्यदेहसाधकत्वेन गङ्गायाः परम्परोपयोगमुक्त्वा भक्तौ साक्षात्फलरूपमुपयोगमाह—

**या वै लसच्छ्रीतुलसीविमिश्रकृष्णाङ्घ्रिरेण्वभ्यधिकाम्बुनेत्री।**
**पुनाति लोकानुभयत्र सेशान्कस्तां न सेवेत मरिष्यमाणः॥ ६ ॥**

**या वै लसदिति**। अधिकारिशरीरं प्राप्य भगवत्सेवायां प्रथमतश्चरणप्रक्षालनम्। भावनायां तस्यां क्रियमाणायां प्रक्षालनं जातमित्यभिज्ञापिका गङ्गा। तस्या अभिज्ञापकं रूपमाह। या ब्रह्मसदने ब्रह्मकर्तृकचरणक्षालनात्पूर्वं नित्यपूजायां लक्ष्मीसमर्पिततुलसीचरणारविन्दे स्थिता। भक्तकार्यार्थं व्यापृतस्य भगवतश्चरणस्य वा भूतसंस्कारकपक्षमाश्रित्य "**तदन्तरप्रतिपत्तौ रंहतिसम्परिष्वक्त**" इति न्यायेन कृतप्राणिपुण्यपुञ्जस्य सम्बन्धिनां भक्तत्वे सति भगवदीयशरीरनिष्पादनार्थं भगवच्चरणे सम्बन्धं प्राप्य भक्तानां तत्सम्बन्धे तादृशं शरीरं निष्पादयितुं स्थितस्य चरणप्राप्तेः पूर्वमेव तत्प्राप्तिसाधकत्वं गङ्गाया वदति—**कृष्णाङ्घ्रिरेण्विति**। श्रीतुलस्या विमिश्रो योऽङ्घ्रिरेणुः। अनेन तस्मिञ्छरीरे भक्तत्वभक्त्योः सहजसम्बन्धे हेतुरुक्तः। बहूनां भूमौ स्थितानां भक्तानां तादृशशरीरनिष्पादनार्थं कृष्णाङ्घ्रिरेणव एव अमितः अधिका यस्य तादृशमम्बु नयतीत्यम्बुनेत्री। परिमितं च गङ्गाजलं परिमितं च कमण्डलुजलमपरिमिताश्च चरणरेणव इति न सम्यक्प्रक्षालनपर्याप्तमम्बु भवति। अतो रेणव एवाऽधिकाः। इदानीन्तनजलेऽपि भक्तं प्रत्येव तदभिव्यक्तीकरणं नाऽन्यं प्रतीति नेतृपदेन सूचितम्। तस्य प्रासङ्गिकं फलद्वयमाह—**पुनातीति**। त्रीनपि लोकानुभयत्राऽन्तर्बहिः सेकात् पुनाति। सेशान्वा। पालकमहादेवसहितान्। अनेन भक्तानां भूमावुत्पन्नानामधिकदोषसंबन्धाभावः सूचितः। अत एव यो मरिष्यमाणः पूर्वदेहत्यागेच्छुस्तादृशशरीरोत्पादिकां गङ्गां को वा न सेवेत॥ ६ ॥

१ अतो ब्राह्मणापराधार्थं नैमित्तिकं देशनाश इति क. ङ. २ नाशयेदिति ध. ङ. ३ असदिति ध. ङ. ४ तन्निमित्तदाहार्थे इति क. ख. ध. ५ स्पृहाभावे इति ख. ६ विलम्बे हेतुरिति क. ७ इति तथा अशृणोदिति क. ग. ८ सर्वेऽप्यस्येत्यादि ग. सर्वस्य मृत्यवो नेष्टा इति ध. ९ विषयभोग्यस्येति क. ग.

१ भगवद्व्रतत्वेनेति क. २ ज्ञायमानत्वादिति ग. ङ. ३ केवलं तेजसेति क. ग. ४ नित्यपूजायामेति ख. ५ भगवच्चरणसम्बन्धमिति ग. घ. ६ तत्सम्बन्धि इति क. ग. ७ नेत्रपदेनेति ग. घ. ८ सेकानिति ख. सेचानिति ग. घ.

तेषां सम्मतिमुखचेष्टामुपलभ्यैवमेव भविष्यतीत्यध्यवसायेन निश्चितः स्थित इत्याह—

सूत उवाच—

इति स्म राजाऽध्यवसाययुक्तः प्राचीनमूलेषु कुशेषु धीरः।
उदङ्मुखो दक्षिणकूल आस्ते समुद्रपत्न्याः स्वसुतन्यस्तभारः ॥१७॥

**इतीति।** **स्मेति** प्रसिद्धे। सर्वैरेव ज्ञातमेवं निश्चित्य स्थित इति। **अध्यवसायो** निश्चयः। भूमौ सर्वत्र राक्षसानां व्याप्तत्वादन्ते तदावेशो मा भवत्विति कुशेषूपविष्टः। उत्तमभक्तेर्देवा अधिकारिण इति पितृत्वव्यावृत्त्यर्थं देवत्वसिद्ध्यर्थं पूर्वाग्रेषु दर्भेषूपविष्टः। तदाह—**प्राचीनमूलेष्विति।** **प्राचीनानि** पश्चिमभागे स्थितानि मूलानि येषाम्। तक्षकादिकृतभयाभावायाऽऽह—**धीर इति।** **उदङ्मुखो** गङ्गासम्मुखः। **दक्षिणकूले** अन्तर्वेद्यामास्ते। पूर्ववल्लटप्रयोगः। **समुद्रपत्न्या इति।** इदानीं भगवदेकनिष्ठत्वान्नाऽन्यत्र दृष्टिरिति[1] भगवच्चरणारविन्दोदकत्वं परित्यज्य भगवत्प्राप्त्यर्थं लक्ष्मीपतेर्भगवतः समुद्रे शयनात्तत्पत्न्या दक्षिणकूलस्थितौ भगवन्तं वा समानयेदिमं वा तत्र नयेज्जामातृत्वाद्विज्ञापनां वा कुर्यादिति भगवल्लालसत्वज्ञापनायोक्तम्। प्राप्तराज्यचिन्तापरित्यागायाऽऽह—**स्वसुतन्यस्तभार इति।** स्वसुते न्यस्तो राज्यभारो येन ॥ १७ ॥

तदा देवैरनुमोदित इत्याह—

एवं तु तस्मिन्नरदेवदेवे प्रायोपविष्टे दिवि देवसङ्घाः।
प्रशस्य भूमौ व्यकिरन्प्रसूनैर्मुदा मुहुर्दुन्दुभयश्च नेदुः ॥१८॥

**एवं त्विति।** तुशब्देन तस्य सन्देहो निवारितः। नरदेवदेवत्वादिन्द्रतुल्यता। अनेनैव मार्गेण वैकुण्ठं गमिष्यतीति महाराजागमननिमित्तं वाद्यं चक्रुः। तदाह। दिव्येव देवसङ्घाः **प्रशस्य** साधु कृतमित्युक्त्वा। देवानुमोदने कार्यसिद्धिर्निश्चिता। भूमौ पुष्पवृष्टिं चक्रुः। इदं शकुनम्। **मुदा** हर्षेण। **दुन्दुभयो** देववाद्यानि **नेदुः** वादयामासुः। चकारादन्यान्यपि। तत्रोत्सवो जात इत्यर्थः। अनेन तस्य शापादिनाऽपि निश्चयेन गत्यन्तरं निवारितम् ॥ १८ ॥

महर्षीणां कृत्यमाह—

महर्षयस्तं समुपागता ये प्रशस्य साध्वित्यनुमोदमानाः।
ऊचुः प्रजानुग्रहशीलसारा यदुत्तमश्लोकगुणाभिरूपम् ॥ १९ ॥

**महर्षय इति।** सम्यगुपागता[2] राजनिर्याणपर्यन्तं तद्धितपूरकत्वेन समागताः। तेऽपि प्रशंसां कृत्वा। विप्रप्रशस्तं निरङ्गमपि साङ्गं भवतीति सूचितम्। अनुमोदमानाः साधु कृतमिति। अनेनेच्छया कृतत्वदोषो निवारितः। तेषां तथा कथने[3] हेतुमाह—**प्रजानुग्रहशीलसारा इति।** तेषामृषीणामेते राजानः प्रजाः। तास्वनुग्रहरूपमेव यच्छीलमनुग्रहहेतुभूतं वा तदेव सारो येषाम्। अनेन ते यद्यनुग्रहं न कुर्युर्निःसारा एव भवेयुरिति सूचितम्। किञ्च। परमभक्ते राजनि तत्कर्त्तव्यमेवेत्य-

1 नात्रदृष्टिरिति क. ग. 2 सम्यक् समुपागता इति क. ग. घ. 3 कथाकथने इति घ.



भिप्रायेणाऽऽह—**यदुत्तमश्लोकगुणाभिरूपमिति।** उत्तमश्लोकस्य गुणेषु श्रवणार्थमभिरूपो योग्यः। अथवा। उत्तमश्लोकगुणैस्तुल्यः। यथा गुणश्रवणार्थं स्थातव्यं तथैतद्दर्शनार्थमपि[1]। प्रथमपक्षेऽयं[2] मुख्योऽधिकारीति श्रोतृत्वात्तस्य प्रशंसनं कर्त्तव्यमित्यर्थः ॥ १९ ॥

प्रशंसनमेवाऽऽहुः—

न वा इदं राजर्षिवर्य चित्रं भवत्सु कृष्णं समनुव्रतेषु।
येऽध्यासनं राजकिरीटजुष्टं सद्यो जहुर्भगवत्पार्श्वकामाः ॥ २० ॥

**न वा इति।** हे राजर्षिवर्य! इदं सर्वपरित्यागेन भगवत्परत्वं भवत्सु चित्रं न। तत्र हेतुः—**कृष्णं समनुव्रतेष्विति।** सम्बोधनेन मर्यादायाः परमसीमा सूचिता। कृष्णमनु व्रतं येष्विति। यथा भगवान्सर्वं कार्यं कृत्वा प्रचलितस्तदीयैरपि तथा कर्त्तव्यमिति। तत्र निदर्शनं भवतां पितामहाः। ये पाण्डवा **अध्यासनं** सिंहासनं राजकिरीटैर्जुष्टं सार्वभौमासनमप्रतिद्वन्द्वं भगवत्पार्श्वगमनेच्छया सद्य एव जहुः। तथा त्वयाऽपि भगवत्पार्श्वे गन्तव्यमित्यर्थः ॥ २० ॥

एवं तं स्तुत्वा तस्याऽनुरोधमिव ज्ञापयन्तो गूढाभिसन्धानेनाऽऽहुः—

सर्वे वयं तावदिहाऽऽस्महेऽथ कलेवरं यावदसौ विहाय।
लोकं परं विरजस्कं विशोकं यास्यत्ययं भागवतप्रधानः ॥ २१ ॥

**सर्वे वयमिति।** अस्माभिः स्वोक्तं निर्वाह्य गन्तव्यम्। तावत्स्थातव्यमिति। तदेवाऽऽहुः। सर्व एव वयं यावदयं भगवत्स्थानं गच्छति तावदिहैवाऽऽस्महे स्थास्यामः। किं कृत्वा कुत्र गमिष्यतीत्याकाङ्क्षायामाह ( ? )—**अथेति।** सप्तदिनानन्तरं कलेवरं विहाय, असौ सङ्घातपरित्यागेनैकः, परं लोकं व्यापि वैकुण्ठं, यत्र रजःसम्बन्ध एव नाऽस्ति। शुद्धसत्त्वात्मकं प्रकृतेः परं वा। विशोकमतमस्कं निरवद्यं वा। सर्वथा यास्यति। तत्र हेतुः। भागवतेषु प्रधानः। भागवताः प्रधानं यस्येति वा। तावत्स्थातव्यमिति सम्बन्धः ॥ २१ ॥

एवं तेषामनुग्रहं श्रुत्वा बहुकालं स्थास्यन्तीति ज्ञात्वा तावन्मया सर्वे सन्देहा निवारणीया इति तदर्थं प्रष्टुं यत्कृतवांस्तदाह—

आश्रुत्य तेषां वचनं परीक्षित्समं मधुच्युद्गुरु चाऽव्यलीकम्।
अभाषतैतानभिवन्द्य युक्तं शुश्रूषमाणश्चरितानि विष्णोः ॥ २२ ॥

**आश्रुत्येति।** परीक्षितत्वात्तदीयवचनस्य सत्यता निर्धारिता। तेषां वचसि चत्वारो गुणाः सन्ति पुरुषार्थचतुष्टयहेतवः। तत्र **समं** स्वस्य राज्ञश्च तुल्यतया हितचिन्तनम्। अनेन ज्ञानरूपतोक्ता। **मधुच्युत्।** सर्वथा भगवत्समीपं यास्यतीति मधु च्योतति। अनेन कामरूपता। **गुरु च।** अर्थगौरवं तावत्स्थास्याम इति। सर्वहितं तावत्करिष्याम इत्यर्थतुल्यता। चकारात्प्रशंसा च। **अव्यलीकं** निष्कपटम्। "**सद्यो जहुरि**" ति। अनेन धर्मरूपता। एवं सर्वपुरुषार्थरूपं तेषां वचनं श्रुत्वा, एतानभिवन्द्य, विष्णोश्चरितानि शुश्रूषमाणो वक्ष्यमाणमुक्तवान् ॥ २२ ॥

1 तथैव तद्दर्शनार्थमपीति क. 2 प्रथमपक्षोऽयमिति ख.

तदेवाऽऽह—

राजोवाच—

समागताः सर्वत एव सर्वे वेदा यथा मूर्त्तिधरास्त्रिपृष्ठे ।
नेहाऽथ वाऽमुत्र च कश्चनाऽर्थः ऋते परानुग्रहमात्मशीलम् ॥ २३ ॥

**समागता इति** । अत्र सन्देहे नाऽन्यत्र गन्तव्यम् । यतः सर्वत एव यूयं सर्वे समागताः । प्रामाण्यं च भवत्स्वेव निर्णीतमित्याह—**वेदा यथेति** । **त्रिपृष्ठे** सत्यलोके । **मूर्त्तिधरा** अधिष्ठातृदेवतारूपविग्रहवन्तः । हेतुश्च भवद्वाक्ये नास्तीत्याह—**नेहेति** । इह वाऽमुत्र वा भवतां परानुग्रहव्यतिरेकेणाऽन्यत्प्रयोजनं नाऽस्ति । परानुग्रहोऽपि भवतामुद्देश्यो न भवति । किन्तु स्वभाव एव । अतः प्रमाणविचारेण प्रमेयविचारेण च भवद्वाक्ये शङ्कैव नास्ति ॥ २३ ॥

अतः किञ्चित्पृच्छामीत्याह—

ततश्च वः पृच्छ्यमिमं विपृच्छे विश्रभ्य विप्रा इतिकृत्यतायाम् ।
सर्वात्मना म्रियमाणैश्च कृत्यं शुद्धञ्च तत्राऽऽमृशताऽभियुक्ताः ॥ २४ ॥

**तत इति** । वः युष्मान् पृच्छ्यं प्रष्टव्यमेव "**नाऽपृष्टः कस्यचिद्ब्रूयादि**"ति श्रुतेरिमं बुद्धिस्थं विशेषेण पृच्छे । **विश्रभ्य** भवत्सु विश्वासं कृत्वा युक्तिमप्यविचार्य । **विप्रा इति** पूर्ववत् । **इतिकृत्यतायाम्** । इत्येवंप्रकारेण कर्त्तव्यं तदितिकर्त्तव्यम् । तस्य भाव इतिकर्त्तव्यता । तस्याम् । तन्निमित्तं कर्त्तव्यनिर्द्धारः साधनप्रकारनिर्द्धारश्च वक्तव्य इति भावः । तत्र कालविशेषेण कर्त्तव्यं पृच्छति । **सर्वात्मना** सर्वप्रकारेण नित्यतया जीवनदशायां म्रियमाणैश्चाऽन्तकाले कृत्यं किं कर्त्तव्यमिति । **शुद्धम्** । दानादीनां कर्तृशुद्ध्यभावात्कर्त्तव्यतासन्देहः । अनेन कालादिहेतूनां यत्र शुद्ध्यर्थं नाऽपेक्षा तद्वक्तव्यमिति फलितम् । तादृशं नाऽस्तीति न वक्तव्यम् । यतो भवन्तोऽभियुक्ताः । अतस्तादृशेऽर्थे आमृशत सर्वतः प्रमाणानि विचारयतेत्यर्थः ॥ २४ ॥

एवं पृष्टे सर्वपरित्यागकर्त्तुरपरित्यागी गुरुर्न भवतीति भगवत्प्रेरणया शुकः समागत इत्याह—

तत्राऽभवद्भगवान्व्यासपुत्रो यदृच्छया गामटमानोऽनपेक्षः ।
अलक्ष्यलिङ्गो निजलाभतुष्टो वृतश्च बालैरवधूतवेषः ॥ २५ ॥

**तत्राऽभवदिति** । तत्रैवाऽभवत् प्रादुर्भूतः । तथा सामर्थ्ये हेतुः—**भगवानिति** । भगवत्त्वे हेतुः—**व्यासपुत्र इति** । तेषां दृष्टौ तथा भानं माऽस्त्वित्यन्यथा प्रदर्शनमाह—**गामटमान इति** । पृथिवीपर्यटनं परमहंसानां धर्मः । **अनपेक्ष इति** । पर्यटनधर्मेण नहि किञ्चिदपेक्षते । अतो राजवल्लीलया पर्यटनमित्यर्थः । अलक्ष्याणि लिङ्गानि महापुरुषचिह्नानि यस्य । द्वात्रिंशल्लक्षणान्यपि तस्मिन् वर्त्तन्ते । तेषु ज्ञातेषु लोका राजत्वं सम्पादयेयुः । षोडश लक्षणानि राज्ञः । द्वात्रिंशल्लक्षणानि महाराजाधिराजस्य । स भगवान् ब्रह्मविद्वा भवति । तेषां फलमाह—**निजलाभतुष्ट इति** ।



निजलाभस्तोषश्चेति फलद्वयम् । निजलाभेन तुष्टः । उभयोर्हेतुहेतुमद्भावात्[1] । अतो "**आत्मलाभान्न परं विद्यत**" इति न श्रुतिविरोधः । क्रीडारूपं पर्यटनमिति ज्ञापयंल्लक्षणापरिज्ञाने हेतुमाह—**वृतश्च बालैरिति** । चकारात्स्त्रीभिरबुधैश्च । लक्षणानां परीक्षाभावायाऽऽह—**अवधूतवेष इति** । अवधूतस्येव वेषो यस्य । देहसंस्काररहितो जडोऽवधूतः । तत्र जडत्वांशो नाऽस्तीति ज्ञापयितुं वेषपदम् ॥ २५ ॥

तस्य द्वात्रिंशल्लक्षणान्यपि वक्तुमाह—

तं द्व्यष्टवर्षं सुकुमारपादकरोरुबाहंसकपोलगात्रम् ।
चार्वायताक्षोन्नसतुल्यकर्णं सुभ्र्वाननं कम्बुसुजातकण्ठम् ॥ २६ ॥
निगूढजत्रुं पृथुतुङ्गवक्षसमावर्त्तनाभिं वलिवल्गूदरञ्च ।
दिगम्बरं वक्त्रविकीर्णकेशं प्रलम्बबाहुं स्वमरोत्तमाभम् ॥ २७ ॥
श्यामं सदाऽपीच्यवयोऽङ्गलक्ष्म्या स्त्रीणां मनोज्ञं रुचिरस्मितेन ।
प्रत्युत्थितास्ते मुनयः स्वासनेभ्यस्तल्लक्षणज्ञा अपि गूढवर्चसम् ॥ २८ ॥
स विष्णुरातोऽतिथय आगताय तस्मै सपर्यां शिरसा जहार ।
ततो निवृत्ता ह्यबुधाः स्त्रियोऽर्भका महासने सोपविवेश पूजितः ॥ २९ ॥

**तं द्व्यष्टवर्षमिति** । तत्र कानिचिदन्तःस्थानि कानिचिद्बहिः स्थितानि । तत्र[2] सर्वत्र स्थितस्य स्वेच्छया प्रादुर्भावसामर्थ्यं, षड्गुणैश्वर्यसम्पत्तिः, भगवदीयत्वं, स्वेच्छया लीलाकरणं, निरपेक्षता, तिरोभावसामर्थ्यं, आत्मलाभः, सन्तोषश्च । एवमष्टौ गुणाः पूर्वोक्ताः । अन्यानाह—**द्व्यष्टवर्षम्** । द्विगुणा अष्टौ वर्षा यस्य । षोडशवार्षिकमित्यर्थः । वर्षा हि शरीरस्य वृद्धिक्षयहेतवः । तत्र षोडश वर्षाः केवलं वृद्धिहेतवः श्मश्रूत्पत्त्याऽवसीयन्ते । "**मृता वा एषा त्वगमेध्ये**"ति श्रुतेः केशानामपि तथात्वेऽप्युत्पत्तिशिष्टत्वान्न ते मृतत्वज्ञापकाः । अतः कालगुण एव तस्य न तत्कृतो दोष इति । अत उभयज्ञापनाय द्व्यष्टपदम् । **अग्रिमव्याख्यभावाय**[3] **सम्पत्स्थापनाय च**[4] । भगवद्विस्मरणहेतवो वा ते । अतो बहुकालीनस्य शिष्टकालस्मरणमाश्चर्यप्रसिद्धिश्चेति[5] गुणद्वयम् । **सुकुमाराः** सुष्ठु कुत्सितं मारयन्तीति निर्दुष्टाः सगुणाश्च पादादयः कपोलान्ता यस्य । तादृशं गात्रं यस्य । अनेन षड्गुणाः । चारु यथा भवति तथा आयते अक्षिणी[6] यस्य । ऊर्ध्वा नासिका यस्य । तुल्यौ कर्णौ यस्य । शोभने भ्रुवौ आनने[7] यस्य । कम्बुवत् शङ्खवत् त्रिवलीयुक्तः सुष्ठु जातः कण्ठो यस्य । अनेन पञ्च । निगूढं जत्रु यस्य । कण्ठमालास्थि जत्रु । पृथु तुङ्गं[8] वक्षो यस्य । आवर्त्ता नाभिर्यस्य । वलिभिर्वल्गु अश्वत्थपत्रवदुदरं यस्य । एते चत्वारः । चकाराद्गूढचिन्हम्[9] । एवं षड्विंशल्लक्षणान्युक्तानि । मध्ये तस्य लोकोपकारकं कार्यद्वयमाह—**दिगम्बरं वक्त्रविकीर्णकेशमिति** । तस्य [10]हि शरीरं ब्रह्मभावाद्भगवत इव व्यापकम् । तस्य वस्त्रं दिश एव भवन्ति । लौकिकपरिधाने अन्तरा परिच्छेदो लोकपीडा च स्यात् । अतो दिगम्बरत्वम् । वक्त्रा विकीर्णाः केशा

१ हेतुमद्भावादिति ग. २ तत्रेति क. ग. घ. ३ अग्रिमव्याख्याऽभावायेति क. ४ चकारो नास्ति ख. ग. घ. ङ. ५ आश्चर्यप्रसिद्धश्चेतीति ख. ६ अक्षे अक्षिणी यस्येति क. ख. ७ आ आननं यस्येति ग. घ. ङ. ८ एवं तुङ्गञ्च वक्षो यस्येति ख. ९ गूढवक्षमिति घ. १० हीति नास्ति ख.

यस्य । मन्त्रशिवात्मकास्तस्य केशाः । तत्राऽनुत्पादनार्थं वक्रता । अप्रासार्थं च विकीर्णता । अन्यथा ब्रह्मभावमपि प्रसेदीशः । वक्रत्वं गुणश्च । प्रकर्षेण लम्बौ बाहू यस्य । आजानुबाहुम् । स्वमरोत्तमो भगवान् देवरूपो विष्णुः । तस्येवाऽऽभा कान्तिर्यस्य । श्यामं श्यामवर्णम् । सर्वदा अपीच्यं स्त्रीणां हितकरं यत् वयः तारुण्यं तेनाऽङ्गस्य या लक्ष्मीस्तया स्त्रीणां मनोज्ञं सुखकरम् । अनेन सौन्दर्यातिशय उक्तः । तत्र स्त्रीदृष्टेर्निकषत्वात्तथोक्तम् । रुचिरं च स्मितम् । तेन च स्त्रीणां मनोज्ञम् । स्त्रियो हि द्विविधाः । चतुरा अचतुराश्च । उभयोः परिग्रहार्थं द्वयम् । एवं वक्रकेशादयः षट् । एवं लक्षणसम्पन्नं दृष्ट्वा सर्वे मुनय उत्थिता इत्याह—प्रत्युत्थिता इति । स्वासनेभ्यस्तं प्रत्युत्थिताः । न त्वन्यथा । तत्र ज्ञानमाह—तल्लक्षणज्ञा इति । उत्थाने ज्ञानस्य हेतुत्वम् । ज्ञाने मुनित्वस्य । न तु तल्लक्षणं लौकिकप्रमाणगम्यमित्याह । गूढं वर्चस्तेजो यस्य । एवं प्रश्नसमये सं समागतं एवेति राजा उत्थित एव स्थितस्तत्पदेन परामृश्यते । विष्णुरात इति । एतदर्थमेव भगवताऽहं रक्षित इति तस्य ज्ञानं सूचितम् । स च अतिथिरागमने नियतकालरहितः । तस्मै किं देयमित्याकाङ्क्षायां स आत्मानमेवाऽर्हतीति तस्मै शिरसा सपर्यामाजहार । शिरस्तस्मै समर्पितमित्यर्थः । ततोऽन्यथा भासनार्थं परिगृहीतानां पदार्थानां त्याग कृतवानित्याह—तत इति । गुणकार्यास्त्रयोऽपि निवृत्ताः । ततः स पूजितो महासने राजोपवेशनयोग्ये उपविवेश ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

ततः सर्वे ऋषयो दूरस्थिता अपि तस्य परितः समीप उपविष्टा इत्याह—

स संवृतस्तत्र महान् महीयसां ब्रह्मर्षिराजर्षिसुरर्षिसङ्घैः ।
व्यरोचताऽलं भगवान् यथेन्दुर्ग्रहर्क्षतारानिकरैः परीतः ॥ ३० ॥

स संवृत इति । ननु सर्वैः संवृतत्वे को हेतुः ? तत्राऽऽह—महान् महीयसामिति । ज्ञानिनामपि ज्ञानप्रद इत्यर्थः । तेषां तेजसा तस्याऽधिकतेजस्त्वमेव जातं न तु तत्तेजसोऽभिभव इत्याह—व्यरोचतेति । तस्य प्राकृतगुरुत्वं वारयति—अलं भगवानिति । अलमत्यर्थं पूर्त्यर्थं वा भगवानेव तद्रूपेण समागतः । तदा तस्य महत्त्वं सर्वजनीनं जातमिति दृष्टान्तमाह । यथा आकाशे चन्द्रमाः ग्रहैर्बुधादिभिः ऋक्षैरश्विन्यादिभिः प्रकीर्णकैस्तारानिकरैश्च व्याप्तः । दृष्टान्तदार्ष्टान्तिकयोस्तुल्यत्वार्थं त्रिविधा उक्ताः ॥ ३० ॥

इदानीं प्रश्नसमय एव समागत इत्ययमेव प्रष्टव्यो नाऽन्य इति भगवदिच्छा ज्ञात्वा तं पृष्टवानित्याह—

प्रशान्तमासीनमकुण्ठमेधसं मुनिं नृपो भागवतोऽभ्युपेत्य ।
प्रणम्य मूर्ध्नाऽवहितः कृताञ्जलिर्नत्वा गिरा सूनृतयाऽन्वपृच्छत् ॥ ३१ ॥

प्रशान्तमिति । गुरुशिष्ययोर्धर्मा उच्यन्ते प्रशान्तादिपदैः । तत्र चत्वारो गुरुधर्माः । ज्ञानं ज्ञानकार्यञ्च अव्यग्रत्वञ्च साधनमिति । प्रकृष्टशान्तिर्ज्ञानकार्यो । आसीनमित्यव्यग्रम् । अकुण्ठमेधो ज्ञानं यस्य । बुद्धेः प्राकृतत्वसम्भावनया तन्निराकरणाय मेधश्शब्दः प्रयुक्तः । मननं साधनम् ।

१ चकारो नास्ति ग. २ स इति नास्ति क. ग. घ. ३ समायात इतीति ग. ४ दूरस्था अपीति ख. ५ समभावत इति ख. ६ प्रशान्तेतीति क. ख. घ.



शिष्यगुणान् वक्तुं महतः शिष्यत्वे गूढार्थकथनमपि भवतीति नृपत्वं भागवतत्वं चाऽऽह—नृपो भागवत इति । ततः शिष्यस्य षड् धर्माः । तानाह—अभ्युपेत्येत्यादिभिः । प्रथमतो गुरोराभिमुख्येन गमनम् । ततः कायिकः साष्टाङ्गनमस्कारः । ततः सावधानता । ततो विज्ञापनार्थं बद्धाञ्जलित्वम् । ततो वाचिकनमस्कारः । ततो मधुरया वाचा प्रश्न इति । सत्यवाचा वा ॥ ३१ ॥

प्रश्नार्थं प्रथमतस्तं स्तौति—

राजोवाच—

अहो अद्य वयं ब्रह्मन् सत्सेव्याः क्षत्रबन्धवः ।
कृपयाऽतिथिरूपेण भवद्भिस्तीर्थकाः कृताः ॥ ३२ ॥

अहो इति । अहो अद्य वयमिति पूर्ववत् । ब्रह्मन्निति हेतुः । ब्रह्मसाक्षात्कारो बहिर्जात इत्याश्चर्यम् । वयञ्च महान्तो जाता इति । किञ्च । सद्भिरपि सेव्या वयं जाताः । अतः परमुपदेष्टृत्वमपि भविष्यतीत्यर्थः । स्वभावतस्तु वयं क्षत्रबन्धवः । क्षत्रिया बान्धवा येषाम् । क्षत्रियवंशे परमुत्पन्ना न तु तद्धर्मवन्तः । ते च ब्राह्मणपादशौचादाराद्विसृष्टाः । सेव्यताऽतिदूरे । नन्वागमनमात्रेण कथं सत्सेव्यता ? तत्राऽऽह—कृपयेति । यथा तीर्थानां गङ्गादीनां भवत्सम्बन्धेन तीर्थत्वं स्नातृरूपेण तथा वयं गृहस्था अतिथिरूपेण कृपया च करणाभ्यां भवद्भिः कर्तृकैस्तीर्थकाः कृताः । स्वार्थे कः स्वार्थोऽत्र विवक्षित इति ज्ञापनार्थः । तेनाऽस्मासु नौपचारिकं तीर्थत्वम् ॥ ३२ ॥

ननु स्नाने जलस्य देहसंयोगात्तद्गतं पापं तद्द्वारा तेषु गच्छतीति जलस्य तीर्थत्वं भवति । गृहस्थस्य तु कथमागमनमात्रेण तीर्थत्वम् ? तत्राऽऽह—

येषां संस्मरणात्पुंसां सद्यः शुद्ध्यन्ति वै गृहाः ।
किं पुनर्दर्शनस्पर्शपादशौचासनादिभिः ॥ ३३ ॥

येषामिति । येषु गृहेषु स्थित्वा भवतां स्मरणं क्रियते तेन स्मरणेन सूर्येणेव सर्वेषां गृहाणामशुद्धिलक्षणं तमो दूरीक्रियते । तत्र किं पुनर्वक्तव्यं भवतां दर्शनं कोटिसूर्याधिकप्रकाशं ज्ञानेन्द्रियाणां सर्वशोधकम् । स्पर्शस्तु जलस्पर्शवत्साक्षात्पापहारकः । चरणोदकं पुनर्भगवत इवाऽलौकिकजन्महेतुः । आसनादयश्च पूजावयवाः सर्वपुरुषार्थसाधकाः । अतस्तीर्थत्वं युक्तमेवेत्यर्थः ॥ ३३ ॥

नन्वनुक्तप्रायश्चित्तानि पापानि गच्छन्तु नाम । येषां तु प्रायश्चित्तं विहितं तानि न गच्छन्तीत्यध्यवसीयते । प्रायश्चित्तवैयर्थ्यापत्तेः । इत्याशङ्क्याऽऽह—

सान्निध्यात्ते महायोगिन् पातकानि महान्त्यपि ।
सद्यो नश्यन्ति वै पुंसां विष्णोरिव सुरेतराः ॥ ३४ ॥

१ कायिकसाष्टाङ्गेत्यादिः क. ग. घ. २ वाचनिकेति ग. ३ वेति नास्ति ख. ४ ब्रह्मसाक्षात्कारे इति क. ५ स्नानरूपेणेति क. ६ कृपयाऽनुकरणाभ्यामिति क. ग. घ. ङ. ७ देहस्य संयोगादिति क. ग. घ. ८ भगवतैवाऽलौकिकेत्यादि क. ख. ग. इवाऽलौकिकेत्यादि घ. भवत्येवाऽलौकिकेत्यादि ङ.

अपि मे भगवान्प्रीतः कृष्णः पाण्डुसुतप्रियः ।
पैतृष्वस्रेयप्रीत्यर्थं तद्गोत्रस्याऽऽत्तबान्धवः ॥ ३५ ॥

**सान्निध्यादिति** । प्रमाणबलेन हि प्रायश्चित्तान्युक्तानि । अत्र प्रमेयबलमित्याह—**महायोगिन्निति** । योगोऽस्याऽस्तीति योगी । योगेन स्वस्य पुरुषार्थसाधकः । महायोगी तु स्वयोगबलेनाऽन्येषामपि सर्वसाधकः । तत्र पापनिवृत्तिस्तवाऽऽनुषङ्गिकं कार्यमित्याह । महान्त्यपि पातकानि तव सन्निधिमात्रेणैव सद्यो नश्यन्ति । सान्निध्यस्याऽऽवृत्तिमपि नाऽपेक्षन्ते । स्थितिं वा । तत्र प्रमेयबलमेव दृष्टान्तयति—**विष्णोरिवेति** । यथा विष्णोः सन्निधिमात्रेणैव सुरप्रतिस्पर्धिनोऽपि महान्तो दैत्या नश्यन्ति । तद्वदित्यर्थः । किञ्च । भगवतैवाऽयमुपायः कृतः । अन्यथा ब्रह्मदण्डदग्धस्य निस्तारो न भविष्यतीति । तथापि प्रीतेः सन्नेव कृतवान् । अन्येनैव पापनिवृत्तेः । अन्यथा स्वकर्तव्यत्वमापद्यत । ननु तुभ्यं केन कर्मणा प्रीत इत्याशङ्क्याऽऽह—**पाण्डुसुतप्रिय इति** । पाण्डुसुताः प्रीतिविषया यस्य । ननु तावता तव किमागतम्? तत्राऽऽह—**पैतृष्वस्रेयेति** । पितृष्वसुः पुत्राः पाण्डवास्तेषां प्रीत्यर्थम् । अनेन पितुस्तत्स्वसुश्च प्रीतिराक्षिप्ता भवति । तद्गोत्रस्य पाण्डवगोत्रस्य । यद्वा । **बान्धवं** बन्धुत्वम् । तदात्तं स्वीकृतं येन । तत्प्रीत्यर्थं तद्वंशीयेषु हितं कृतवानित्यर्थः ॥ ३४ ॥ ३५ ॥

अस्मिन्नर्थे साधकं तर्कमाह—

अन्यथा तेऽव्यक्तगतेर्दर्शनं नः कथं नृणाम् ।
नितरां म्रियमाणानां संसिद्धस्य वनीयसः ॥ ३६ ॥

**अन्यथेति** । लोके अव्यक्ता गतिर्यस्य । स्वस्थानामपि मनुष्याणां त्वद्दर्शनं दुर्लभम् । कुतः पुनर्मृत्युग्रस्तानाम् । येनाऽदृष्टेन तुच्छनरत्वं मृत्युसंबन्धं च प्राप्तास्तदुभयनिवर्तकस्य नर्स तव दर्शनं नाऽदृष्टसाध्यं किन्तु भगवत्साध्यमेव । उभयनिवर्तकं रूपमाह—**संसिद्धस्य वनीयस इति** । सम्यक् सिद्धस्य अन्यस्याऽपि मृत्युनिवारकस्य । यथा सम्यक् सिद्धो रसः सर्वमृत्युनिवारको भवति तथाऽयमपीत्यर्थः । किञ्च । वनयिता याचयिता । वनयितृतमो **वनीयान्** । स्वयं तत्तद्गृहे गत्वा भवद्भ्यः सर्वपुरुषार्थान् दास्यामि प्रार्थयतेति वदन् यो गच्छति स तथा । तादृशस्य तव क्षुद्रनरत्वादिनिवारकस्य दर्शनं भगवत्साध्यमेवेत्यर्थः ॥ ३६ ॥

अतस्तद्दर्शनं दृष्टद्वारैव पुरुषार्थसाधकं भवत्विति किञ्चित्पृच्छामीत्याह—

अतः पृच्छामि संसिद्धिं योगिनां परमं गुरुम्
पुरुषस्येह यत्कार्यं म्रियमाणस्य सर्वथा ॥ ३७ ॥
यच्छ्रोतव्यमथो जाप्यं यत्कर्तव्यं नृभिः प्रभो ।
स्मर्तव्यं भजनीयं वा ब्रूहि यद्वा विपर्ययम् ॥ ३८ ॥

**अत इति** । ननु योगीश्वराणां विद्यमानत्वात्तान् विहाय कथं मामेव पृच्छसीत्याशङ्क्याऽऽह ।

१ प्रायश्चित्तानि युक्तानीति ख. ङ. २ नोपेक्षन्ते इति ख. ङ. ३ प्रमेयबलमिवेति क. ग. घ. ४ ब्रह्मदण्डस्येति क. ग. घ. ङ. ५ प्रीतः सन्नेवमिति ख. प्राप्तः सन्नेवेति घ. ६ पाण्डवगोत्रस्येति नास्ति ख. ७ कृतवानित्याहेति क. ग. घ. ङ. ८ तस्येति नास्ति ख.



योगिनां संसिद्धिं सम्यक्सिद्धिरूपम् । यथा बहुकालयोगेन काचिदलौकिकी सिद्धिर्भवति तथैव भवान् योगिना जातः । तेषां सर्वपुरुषार्थदातृत्वात् । किञ्च । तेषां त्वमेव गुरुः ज्ञानदाता । तद्वारा मोक्षप्रद इत्यर्थः । किञ्च । तेषां त्वमेव ... यतो वासुदेवो मोक्षं भजनेनेति । भक्तिदानाच्छ्रेष्ठो वा । एवं तत्प्रश्ने हेतुमुक्त्वा प्रश्नमाह—**पुरुषस्येति** । अत्र द्वादश प्रश्नाः । अधिकारिणो द्वैरूप्यात् कर्मणां पञ्चविधानां च द्वैरूप्यात् । यद्यपि ... भेदा भवन्ति तथापि कर्तृभेदस्य नियतत्वाद्विपर्ययपक्षके पर्यन्ताभावादिप्रकल्पितत्वया प्रश्न इति द्वादशविधत्वम् । तत्र प्रथममाह । इहेन गृहस्थाश्रमस्थितस्य जीवतः पुरुषस्य यत्कार्यं कृतिसाध्यं तत्कथयेति । द्वितीयमाह—**म्रियमाणस्येति** । म्रियमाणस्य सर्वथा आवश्यकं यत्कर्तव्यं तदाहेति ( ) । इदानीं साधारण्येनाऽऽह । म्रियमाणेन जीवता वा यच्छ्रोतव्यम् । श्रोत्रेन्द्रियकृत्यं व्यापारणीयम् । अनेन ज्ञानेन्द्रियाणां साधारणान्यपि भेदा अर्थादुक्ताः । इदानीं प्रक्रियान्तरेण वाङ्मनसस्य मिथुनस्य कर्तव्यो यो जपः स च वक्तव्यः । तत्र ज्ञानेन्द्रियद्वयस्य कृत्यं पृष्ट्वा केवलकर्मेन्द्रियाणां कर्तव्यं पृच्छति—**यत्कर्तव्यमिति** । नृभिरिति साधारण्येन । तथा कथने सामर्थ्यं सूचयति—**प्रभो इति** । एवं त्रयं वैदिकमार्गेण पृष्ट्वा भक्तिमार्गेण द्वयं पृच्छति । स्मर्तव्यमान्तरम् । भजनीयं बाह्यम् । वेत्यनियमे । आन्तरमपि भजनीयम् । अथवा निषेधमुखेन वक्तव्यम् । इतरनिषेधस्य शेषाभ्यनुज्ञाफलकत्वात् । अन्यथाऽभयकरणे प्रसज्येत । नियमविधावावश्यकदैहिकानां बाधः प्रसज्येत । अतस्तद्विपरीतेन वा वक्तव्यमित्याह—**यद्वेति** । **विपर्ययम्** । इदं न कर्तव्यमित्यादिरूपम् ॥ ३७ ॥ ३८ ॥

नन्वेकदैव किमिति पृच्छ्यते? तत्राऽऽह—

नूनं भगवतो ब्रह्मन् गृहेषु गृहमेधिनाम् ।
न लक्ष्यते ह्यवस्थानमपि गोदोहनं क्वचित् ॥ ३९ ॥

**नूनमिति** । हे ब्रह्मन्! क्षोभाभावाय सम्बोधनम् । गृहमेधिनां गृहेषु भगवतस्तवाऽवस्थानं न लक्ष्यते । कदाचिद्दैवगत्या सर्वेषां गृहेऽवस्थानं तदपि गोदोहनमात्रम् । गौर्दुह्यते यावता कालेन स कालो गोदोहनम् । **क्वचिदिति** । भिक्षार्थदातृगृहे । यद्यपि परमहंसानां भिक्षादिनियमो नाऽस्ति । योगिनां तु सुतरामेव । तत्रापि साक्षाद्भगवद्भावं प्राप्तस्य । तथापि गृहे नैषा बुद्धिर्येषाम् । केवलप्रवृत्तिस्वभावानाम् । तत्रापि पुत्रादिगृहेष्वपि मोहाधिक्ययुक्तेषु । तिरस्कारसम्भवात् । "**वानप्रस्थाश्रमपदेष्वभीक्ष्णं भैक्ष्यमाचरेदि**"ति वाक्यात् । भिक्षार्थमागतस्य भिक्षाऽदाने सर्वमेव सुकृतं गच्छेदिति तच्छङ्कया कार्यव्यापृतत्वं सम्भाव्य धर्मकार्यत्वबोधनाय गोदोहनमात्रं तिष्ठेत् । अनेनाऽग्निहोत्रिणां गृहस्थानां गृहे कदाचित्तिष्ठेदित्युक्तं भवति ॥ ३९ ॥

एवं पृष्टे उत्तरं दातुं यत्नं कृतवानित्याह सूतः—

सूत उवाच—

एवमाभाषितः पृष्टः स राज्ञा श्लक्ष्णया गिरा ।
प्रत्यभाषत धर्मज्ञो भगवान् बादरायणिः ॥ ४० ॥

१ सम्यक् सिद्धिं सिद्धिरूपमिति क. ख. ग. २ विकल्पितत्वयेति क. ख. ३ वाङ्मनसो मिथुनस्येति ङ. वाङ्मानसस्य मिथुनस्येति घ. ४ तुनास्ति क. ग. घ. ङ.

**एवमाभाषित इति । आभाषितः स्तुतः । श्लक्ष्णया स्नेहप्रकाशिकया । अवक्रया वा । प्रत्यभाषत** प्रतिप्रश्नमुत्तरं दत्तवान् । ब्रह्मविदस्तया कथने हेतुः—**धर्मज्ञ इति** । "**अब्रुवन् विब्रुवन् वाऽपी**"ति निषेधज्ञः । उत्तरदानेऽपि स्वस्य काऽपि क्षतिर्नाऽस्तीति ज्ञापयितुमाह—**भगवानिति** । आवश्यकत्वायाऽऽह—**बादरायणिरिति** । अन्यथा व्यासस्य भागवतकरणं व्यर्थं स्यात् । अतः शरीरं तत उत्पन्नमिति तन्निष्कृत्यर्थमप्युक्तवानित्यर्थः । एवमुत्तरावधि कृत्यं प्रथमस्कन्धे निरूपितमिति ॥ ४० ॥

आद्यस्कन्धस्य विवृतिः श्रीकृष्णचरणाम्बुजे ।
निवेदिताऽतियत्नेन नाकपुष्पाञ्जलिरुज्ज्वला ॥ १ ॥

सुज्ञेषु हस्तयुगलं पुरतो निधाय
विज्ञापयामि मुरवैरिपदाब्जनिष्ठः ।
उच्छृङ्खलाऽपि विवृतिर्मम चिन्तनीया
श्रीकृष्णपादयुगले विनिवेशितेति ॥ १ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षित-
विरचितायां प्रथमस्कन्ध ऊनविंशोऽध्यायः ॥ १९ ॥

**सम्पूर्णोऽयम्प्रथमस्कन्धः ।**

---

श्रीकृष्णार्पणमस्तु ।

---

१ प्रतिप्रश्नमिति ग. घ. ङ. २ तन्निष्कृत्यर्थमिति क. ३ उत्तमेति च. ङ.

## श्रीमद्भागवतप्रथमस्कन्धश्लोकानामकारादिवर्णानुक्रमः ।


| | पृष्ठम्. | | पृष्ठम्. | | पृष्ठम्. |
|---|---|---|---|---|---|
| अ. | | अपरे वसुदेवस्य ... ... | ११८ | अहो बत ... ... ... | १५५ |
| अग्निर्निसृष्टो ... ... ... | ११२ | अपापेषु ... ... ... | २८२ | अहो महीयसी... ... ... | १९२ |
| अङ्गुष्ठमात्रं ... ... ... | १०८ | अपि देवर्षिणा ... ... ... | २०० | अहो मे... ... ... ... | १२४ |
| अजातशत्रुः कृतमैत्रः ... ... | १९५ | अपि नः ... ... ... | १८९ | अहो वयं ... ... ... | २०१ |
| अजातशत्रुः पृथया ... ... | १५८ | अपि मद्यकृतप्रश्ने ... ... | १९६ | अहो वयं धन्यतमा ... ... | २८९ |
| अतः परं यदव्यक्त ... ... | ४१ | अपि मे... ... ... ... | २९८ | अहो सनाथा ... ... ... | १६३ |
| अतः पुम्भिः ... ... ... | २३ | अपि स्मरथ ... ... ... | १८० | अहं च तद्ब्रह्मकुले ... ... | ७७ |
| अतः पृच्छामि... ... ... | २९८ | अपि स्वस्त्यासते ... ... | २११ | अहं पुराऽतीतभवे ... ... | ६९ |
| अतो वै... ... ... ... | २७ | अपि स्वित्पर्य ... ... ... | २१४ | अहं हि पृष्टः ... ... ... | २७४ |
| अत्रिर्वसिष्ठः ... ... ... | २८८ | अपीपलन् ... ... ... | १७७ | आख्याहि वृष ... ... ... | २५२ |
| अथ तं सुखमासीनं ... ... | ५९ | अप्यद्य नस्त्वं ... ... ... | १२० | आजहार ... ... ... | २३७ |
| अथ ते ... ... ... ... | १०५ | अप्येष वंश्यान्... ... ... | १८१ | आत्मानञ्च ... ... ... | २४१ |
| अथ दूरागतान्... ... ... | १५८ | अप्रतर्क्यात् ... ... ... | २५४ | आत्मानञ्चाऽनुशोचामि ... | २४४ |
| अथवा देवमायाया ... ... | २५५ | अबिभ्रदर्यमा ... ... ... | १९० | आत्मारामाश्च ... ... ... | ९१ |
| अथ विश्वेश ... ... ... | १२१ | अभिद्रवति मां... ... ... | १०८ | आनर्तान् स ... ... ... | १६० |
| अथाऽऽख्याहि ... ... ... | १४ | अभिमन्युसुतं ... ... ... | ५१ | आपन्नः संसृतिं ... ... | १२ |
| अथाऽऽजगाम ... ... ... | ११७ | अभूतपूर्वः ... ... ... | २७६ | आमन्त्र्य ... ... ... | १०७ |
| अथाऽपि बत ... ... ... | ५७ | अमूनि पञ्च ... ... ... | २६१ | आमन्त्र्य चाऽस्य ... ... | १४६ |
| अथाऽपि यत्पाद ... ... | २०३ | अरक्ष्यमाणाः ... ... ... | २४२ | आमयो यश्च ... ... ... | ७३ |
| अथाऽविशत् ... ... ... | १३१ | अर्जुनः सहसा... ... ... | १०४ | आश्रुत्य तेषां ... ... ... | २९३ |
| अथाऽऽसौ ... ... ... | ७१ | अलक्ष्यमाणे ... ... ... | २८१ | आसते कुशलं ... ... ... | २१० |
| अथेह धन्या ... ... ... | ४६ | अवतारा ह्यसंख्येया... ... | ४२ | आस्तेऽधुना ... ... ... | २६३ |
| अथैतानि ... ... ... | २६२ | अवतारे षोडशमे ... ... | ४० | आह राजा ... ... ... | १२४ |
| अथोदीचीं ... ... ... | १९४ | अवापुर्दुरवापां... ... ... | २३४ | इ. | |
| अथोपस्पृश्य ... ... ... | ९५ | अशृण्वन्ताऽऽशिषः ... ... | १४९ | इति चिन्तयतः ... ... | २०९ |
| अथोपेत्य ... ... ... | १०० | अश्वत्थाम्नोपसृष्टेन ... ... | १०६ | इति चोदीरिताः ... ... | ११४ |
| अधो महाभाग... ... ... | ६३ | अष्टमे मेरुदेव्यां ... ... | ३८ | इति धर्मं ... ... ... | २५७ |
| अधो विहाय ... ... ... | २८६ | असौ गुणमये ... ... ... | ३२ | इति पुत्रकृताघेन ... ... | २८३ |
| अथर्वाङ्गिरसा ... ... ... | ५५ | अस्त्येव मे ... ... ... | ६० | इति प्रियां ... ... ... | ९४ |
| अद्यैव राज्यं ... ... ... | २८६ | अस्याऽनुभावं ... ... ... | १३१ | इति ब्रुवाणं ... ... ... | ४८ |
| अनर्थोपशमं ... ... ... | ९० | अस्यां वै ... ... ... | ९० | इति भीतः ... ... ... | १२६ |
| अन्तर्बहिश्च ... ... ... | ८५ | अस्त्रतेजः ... ... ... | १०९ | इति मतिरुपकल्पिता ... | ११६ |
| अन्तःस्थः ... ... ... | १०९ | अहस्तानि सहस्तानां ... ... | २०० | इति मूर्त्यभि ... ... ... | ७५ |
| अनवेक्षमाणः ... ... ... | २३३ | अहो अद्य ... ... ... | २९७ | इति राज्ञ उपादिश्य ... ... | १८३ |
| अन्यथा ते ... ... ... | २९८ | अहो अधर्मः ... ... ... | २७८ | इति लङ्घितमर्यादं ... ... | २७९ |
| अन्ये च देवर्षि... ... ... | २८८ | अहो अलं ... ... ... | १५५ | इति व्यवच्छिद्य ... ... | २८८ |
| अन्ये च मुनयो... ... ... | १२८ | अहो कष्टं ... ... ... | १२९ | इति सम्प्रश्न ... ... ... | १० |
| अन्योन्यमासीत् ... ... | १५० | अहो देवर्षिः ... ... ... | ८७ | इति स्म ... ... ... | २९२ |

पृष्ठम्.

इत्थम्भूतानुभावो ... ... २६३
इत्थं शरत्या ... ... ... ७२
इत्युक्तो धर्मराजेन ... ... १८९
इत्युक्त्वाऽथ ... ... ... २०५
इत्युक्त्वा रोष ... ... ... २७९
इदं भागवतं नाम ... ... ४७
इदं ममाऽऽचक्ष्व ... ... २६३
इदं हि पुंसस्तपसः ... ... ६९
इदं हि विश्वं ... ... ... ६८
इदानीं धर्म ... ... ... २५६
इमं स्वनिगमं ... ... ... ७५
इमे चाऽन्ये ... ... ... २४४
इमे जनपदाः ... ... ... १२१
इयञ्च भूः ... ... ... २५७

उ

उच्छिष्टलेपाधनु ... .. ७१
उत्सृज्य सर्वतः... ... ... २६४
उद्दामभावपिशुना ... ... १७३
उद्धवः सात्यकिः ... ... १४९
उपधार्य ... .. ... १०८
उपलेभेऽभिधावन्तीं ... ... १०७
उपवर्णितमेतद्वः ... ... २६७
उवाच चा ... ... ... १०१
उषित्वा हास्तिनपुरे ... ... १४६
ऊर्ध्वक्षिबाहवो... ... ... २०७

ऋ

ऋग्यजुःसामाथर्वाख्या ... ५४
ऋषयो मनवो ... ... ... ४२
ऋषिभिर्याचितो ... ... ३८

ए.

एकदा धनुरुद्यम्य ... ... २७५
एकदा निर्गतो... ... ... ७८
एकात्मजा मे ... ... ... ७७
एकोनविंशे ... ... ... ४१
एतदीशनं ... ... ... १७४
एतद्रूपं भगवतो ... ... ४२
एतच्चातुर ... ... ... ८६
एतन्नानावताराणां ... ... ३५
एतद्वः पाण्डवेयानां ... ... २५३
एतत्संसूचितं ... ... ... ७३
एताः परं ... ... ... १५७
एतावताऽलं ... ... ... २७२

पृष्ठम्.

एतावदुक्त्वा ... ... ... ८२
एते चांऽशकलाः ... ... ४२
एवं कृष्णमतेः ... ... ... ८४
एवं कृष्णसखः... ... ... २१६
एवं गृहेषु ... ... ... १९०
एवं चिन्तयतः... ... ... २२७
एवं जन्मानि ... ... ... ४४
एवं तु ... ... ... ... २९२
एवं धर्मे ... ... ... २५५
एवं निशम्य ... ... ... ७६
एवं नृणां . ... ... ७४
एवं नृपाणां ... ... ... १०२
एवं परीक्षता ... ... ... १००
एवं प्रवृत्तस्य ... ... ... ५६
एवं प्रसन्नमनसो ... ... २६
एवं बलिष्ठैः ... ... ... २२६
एवमाभाषितः... ... ... २९९
एवं यतन्तं ... ... ... ८१
एवं राजा . ... ... १९४
एवंविधा .. ... ... १५७
एवं सम्भाष्य ... ... ... ८७
एष किं... ... ... ... २७७
एष दाता ... ... .. १८२
एष राज्ञ ... ... ... २५१
एष वै भगवान् ... ... १३२

क

कच्चित्तेऽनामय ... ... २१३
कच्चित्त्वं ब्राह्मणं ... ... २१३
कच्चित्त्वं नाऽगमः ... ... २१४
कच्चिदानर्तपुर्यां ... ... २१०
कच्चिन्नाभिहतो ... ... २१३
कच्चित्प्रेष्ठतमेन... ... ... २१४
कच्चिद्भद्रे ... ... ... २४२
कच्चित्कालं ... ... ... १८९
कथमालक्षितः ... ... ५०
कथं वा... ... ... ... ५०
कया वृत्त्या ... ... ... १८८
कर्णधार इव ... ... ... १९७
कर्मण्यस्मिन् .. ... ... २६८
कलिमागत ... ... ... १५
कल्पान्त इद ... ... ... ८५
कच्चिद्राजाऽऽहुको ... ... २१०

पृष्ठम्.

कस्मिन्युगे ... ... ... ४९
कस्यं कृष्णे गते ... ... २४९
कस्त्वं मच्छरणे... ... ... २४५
कस्य हेतोः ... ... ... २३८
कामं ववर्ष ... ... ... १४५
कामस्य नेन्द्रियप्रीतिः... ... २१
कालकर्मगुणाधीनो ... ... २००
कालस्य च गतिं ... ... २०६
का वा सहेत ... ... ... २४७
किं तु बालेषु ... ... ... २६७
किं तेऽकामाः ... ... ... १७७
किमिदं स्वित् ... ... ... ९६
किं वा भागवता धर्मा... ... ५७
किं क्षत्रबन्धून् ... ... ... २४२
कुतः पुनर्गृणतो ... ... २७२
कुरुजाङ्गल ... ... ... १५८
कुरु प्रतिश्रुतं ... ... ... १०४
कुर्वाणा यत्र ... ... ... ७४
कृच्छ्रेण संस्तभ्य ... ... २१५
कृतवान् किल ... ... ... १५
कृपया स्नेह ... ... ... १९६
कृष्ण कृष्ण ... ... ... ९५
कृष्णं च तत्प्रभावज्ञ ... ... १२८
कृष्णाय वासुदेवाय ... ... ११२
कृष्ण एवं भगवति ... ... १४२
कृष्णे गते ... ... ... २०८
कृष्णे स्वधामोपगते ... ... ४७
केचिदाहुरजं ... ... ... ११८
केचिद्विकल्पवसना ... ... २५३
के वयं नामरूपाभ्यां ... ... १२१
को नाम तृप्येत् ... ... २६९
को वा भगवतः ... ... १३
कोऽवृश्चत्तव ... ... ... २५१
क्षुत्क्षामायुषां नृणां ... ... २३८

ग

गतस्वार्थ ... ... ... १९३
गताः सप्ताऽधुना ... ... २०७
गावश्च धर्मदुघा... ... ... २४८
गान्धारी द्रौपदी ... ... १८७
गीतं भगवता... ... ... २२७
गोपुरद्वार ... ... ... १६५
गोप्यावृदे ... ... ... ११७





पृष्ठम्.

च

चतुर्दशं नारसिंहं ... ... ४०
चातुर्होत्रं कर्म ... ... ... ५४
चित्रधातुविचित्राद्रीन् ... ७९
चीरवासा निराहारः ... ... २३२

ज

जगृहे पौरुषं ... ... ... ३३
जनेऽनागसि ... ... ... २५२
जन्म कर्म च ... ... ... ११७
जन्म गुह्यं ... ... ... ४२
जन्माद्यस्य ... ... ... २
जन्मैश्वर्य ... ... ... ११४
जलौकसां जले ... ... २२६
जितासनो जितश्वासः... ... २०१
जिह्मप्रायं व्यवसितं ... ... २०६
जिज्ञासितमधीतं ... ... ६०
जिज्ञासितं सुसं ... ... ५९
जिज्ञासितात्म ... ... १८३
जुगुप्सितं धर्मकृते ... ... ६४
ज्ञानं गुह्यतमं ... ... ... ७२
ज्ञानं विरक्तिः ... ... ... २४३

त

त एकदा ... ... ... ८
त एनमृषयो ... ... ... ५५
त एव वेदा ... ... ... ५५
तत आसाद्य ... ... ... ९८
ततः कलौ ... ... ... ४१
ततश्च वः ... ... ... २९४
ततः परीक्षित् ... ... ... २३६
ततः प्रादुरभूत्... ... ... ९४
ततः सप्तदशे ... ... ... ४०
ततः सप्तम ... ... ... ३८
ततः सर्वगुणोदर्के ... ... १७९
ततोऽन्यथा ... ... ... ६४
ततोऽभ्येत्य ... ... ... २७९
ततो युधिष्ठिरो ... ... १४२
तत्कथ्यतां ... ... ... २३८
तत्तथाऽभ्यर्थितः ... ... २११
तद्धर्मज्ञ ... ... ... १०१
तज्ज्ञानोद्भिन्नया ... ... २३५
तद्वाग्विसर्गो ... ... ... ६२
तदैव धनुस्त ... ... ... २२५
तच्छ्रद्दधाना ... ... ... २२
तत्सर्वं नः ... ... ... ५२

पृष्ठम्.

तथा परमहंसानां ... ... ११०
तथाप्येकान्तभ ... ... १३३
तथाऽयं ... ... ... ... ९६
तथाऽऽहृतं ... ... ... १००
तथैवाऽनुचराः ... ... ... २११
तदद्य नः ... ... ... २८१
तदभिप्रेतं ... ... ... १८५
तदसौ वध्यतां ... ... १००
तदा तदहं ... ... ... ७८
तदा ते भ्रातरः... ... ... १२७
तदार्यधर्मश्च ... ... ... २८२
तदा रजस्तमोभावाः ... ... २६
तदा शुचस्ते ... ... ... ९३
तदिदं भगवान्... ... ... २०१
तदिदं श्रोतुं ... ... ... १७६
तद्रोपसंहृत्य ... ... ... १३५
तत्रः परं ... ... ... २७१
तन्नो भवान् ... ... ... २७०
तन्नः शुश्रूष ... ... ... १२
तन्मे धर्मभृतां... ... ... २६०
तपः शौचं ... ... ... २५६
तमभिज्ञाय ... ... ... ५८
तमयं मन्यते ... ... ... १७४
तमात्मजैः ... ... ... १७१
तमापतन्तं ... ... ... ९४
तमिममहं ... ... ... १४१
तमुपश्रुत्य ... ... ... १६०
तमूचुर्ब्राह्मणाः ... ... ... १८०
तया विलसितेषु ... ... ३१
तयोरेवं कथयतोः ... ... २४७
तर्ह्येव च ... ... ... १०८
तस्माज्जह्यङ्ग ... ... ... २००
तस्मादिदं ... ... ... १३१
तस्मादेकेन ... ... ... २३
तस्मात्सभाज्ञा ... ... ... १६०
तस्मिन्निर्मनुजे ... ... ७९
तस्मिंस्तदा ... ... ... ७२
तस्मिन्स्व ... ... ... ८९
तस्य कर्माणि ... ... ... १४
तस्य जन्म ... ... ... १७६
तस्य निर्हरणादीनि ... ... १४२
तस्य पुत्रो ... ... ... ४९

पृष्ठम्.

तस्य पुत्रोऽतितेजस्वी... ... २०७
तस्य प्रीतमनाः ... ... १८०
तस्याऽन्तरायो ... ... २०४
तस्याऽपि तव ... ... ... १९३
तस्यैवं खिल ... ... ... ५८
तस्यैव मे ... ... ... २३०
तस्यैवं मेऽनुरक्तस्य ... ... ७२
तस्यैवं वर्तमानस्य ... ... २४१
तस्यैव हेतोः ... ... ... ६५
तक्षकादात्मनः... ... ... १८३
ताः पुत्रमङ्क ... ... ... १७१
तान् समेतान्... ... ... १२८
तावत्कलिर्न ... ... ... २६५
तिरस्कृता ... .. ... २८३
तुर्ये धर्मकला ... . ... ३७
तुलयाम ... .. .. २६८
तुष्टुवुर्मुनयो ... .. ... १४२
तृतीयमृषिसर्गं... .. ... ३१
तेन सम्भृतसम्भारः ... ... १८५
तेनाऽहं गुणपात्रेण ... ... २४४
ते निनीयोदकं... ... ... १०५
तेभ्यः परम ... ... ... २४१
ते व्यपेता ... ... ... ७०
ते साधु ... ... ... २३३
तं जिघांसुं ... ... ... २५८
तं द्यष्टवर्पं ... ... ... २९५
तं पादयोः ... ... ... २०९
तं बन्धुं ... ... ... १८७
तं भुक्तवन्तं ... ... ... १८७
तं मेनिरे ... ... ... १७५
तं मोपयान्तं ... ... ... २९०
तां बाढ ... ... ... १२३
तत्र कीर्तयतो ... ... ... ४८
तत्र गोमिथुनं ... ... ... २४८
तत्र तत्र ह ... ... ... १५९
तत्र तत्राऽञ्जसा ... ... १०
तत्र तत्रो ... ... ... २४०
तत्र दुन्दुभयो ... ... ... १४२
तत्र ब्रह्मर्षयः ... ... ... १२७
तत्रार्वेदधराः ... ... ... ५५
तत्र संजय ... ... ... १९५
तत्राऽन्वहं ... ... ... ७१

| | पृष्ठम्. | | पृष्ठम्. | | पृष्ठम्. |
|---|---|---|---|---|---|
| तत्राऽभवन् | २९४ | धर्मस्य ह्याप | २१ | नाऽऽधयो व्याधयः | १४५ |
| तत्राऽऽसीनं | १०६ | धर्मार्थकाम | १३५ | नाऽनुद्वेष्टि | २६६ |
| तत्राऽऽहाऽर्मापि | १०३ | धर्म्यं व्याख्यं | १०२ | नामान्यनन्तस्य | ८३ |
| तत्रोपजग्मु | २८८ | धान्वन्तरं द्वादशमं | ३९ | नारायणं नमस्कृत्य | १८ |
| तत्रोपनीतबलयो | १६० | ध्यायतश्चरणाम्भोजं | ७९ | नाऽहं वेद गतिं | १९७ |
| त्यक्त्वाऽऽत्मधर्म... | ६५ | धूम्रा दिशः | २०८ | नाऽहं वेदाऽऽऽम | १९७ |
| त्रिर्वै हुत्वा | २११ | धृतराष्ट्रः | २०२ | निगमकल्पतरोः | ६ |
| त्रिभुवनकमनं... | १३७ | धृतव्रतेन हि | ५६ | निगृह्यजन्तुं | २९५ |
| त्वमप्यद्भ्रश्रुत | ७५ | ध्वस्ता बलिसमः | १२८ | निद्रमाहोत्रसा | २३७ |
| त्वमात्मना | ६९ | ध्रुवं ततो मे | २८५ | नित्यं निरीक्षमाणानां | १६८ |
| त्वमाद्यः पुरुषः | ९६ | ध्वस्तमायागुणोदर्को | २०३ | निमित्तान्यत्यरिष्टानि | २०६ |
| त्वया खलु | ९ | न. | | निर्गते नारदे | ८८ |
| त्वयि मे | १२२ | न कश्चिन्म्रियते | २३९ | निशम्य प्रेष्ठं | १६६ |
| त्वं नः | १६ | नकुलः सहदेवश्च | १०२ | निशम्य भगवन्मार्गं | २२८ |
| त्वं पर्यटन् | ६१ | न चास्य कश्चि | ४५ | निशम्य भीमगदितं | १०३ |
| त्वं वा मृणालधवलः | २५० | न जातु कौरवेन्द्राणां... | २५० | निशम्य भीष्मोक्तं | १४५ |
| त्वां वर्तमानं | २५९ | नटनर्तक | १६७ | निशम्य शप्तं | २८० |
| द | | नताऽस्म ते | १६१ | निःश्रेयसाय | ४७ |
| ददर्श मुनिं | २७५ | न ते गुडाकेश... | २५८ | निष्पादितं | २०१ |
| दह्यमाने | २०४ | नद्यो नदाश्च | २०८ | नूनं भगवतो | २५९ |
| दर्शनस्पर्शन | १४८ | नद्यः समुद्रा | १४५ | नूनं व्रतस्नान | १५६ |
| दानधर्मान् | १३४ | नन्वप्रियं | १८९ | नेयं शोभिष्यते | १२१ |
| दिदृक्षुस्तदहं | ८१ | न पिबन्ति | २०९ | नैनं पार्थाऽर्हसि | ९९ |
| दुर्भगांश्च जनान् | ५४ | नमोऽकिञ्चनवित्ताय | ११५ | नैनो राज्ञः | १२५ |
| दृष्ट्वा निपतितं | १२७ | नमन्ति यत्पाद | ५१ | नैमिषेऽनिमिषक्षेत्रे | ७ |
| दृष्ट्वाऽनुयान्तं | ५० | नमः पङ्कजनाभाय | ११३ | नैष्कर्म्यमप्यच्युत | ६३ |
| दृष्ट्वाऽस्त्रतेज | ९८ | नमो भगवते | ७४ | नोत्तमश्लोकवार्तानां | २६५ |
| देवदत्तामिमां | ८५ | नमस्ये पुरुषं | ११० | न्यरुन्धन् | १४८ |
| देशकालार्थ | २२६ | न यद्वचश्चित्रपदं | ६२ | प | |
| दैवतानि | २०९ | नरदेवत्वमापन्नः | ४१ | पञ्चदशं वामनकं | ४० |
| दैवेनाऽप्रति | १८० | नर्माण्युदार | २२३ | पञ्चमः कपिलो | ३७ |
| द्रौपदी च | २३५ | नलवेणुशर | ७९ | पतितं पादयोः | २५८ |
| द्वापरे समनु | ५२ | न वयं | २५३ | पतिं प्रयान्तं | १९४ |
| द्वारि द्वारि | १६६ | न वर्तितव्यं | २५९ | पत्न्यः पतिं | १०१ |
| द्वितीयं तु | ३७ | नवा इदम् | २९३ | पत्न्यास्तवाऽपि | २१९ |
| ध | | न वेद कश्चिद् | ११६ | पप्रच्छ रथमारूढः | २४९ |
| धन्विनामग्रणीः | १८२ | न वै जनो जातु | ६७ | पराऽवरज्ञः | ५३ |
| धर्मपालो नरपतिः | २८२ | न वै नृभिः | २८१ | परिश्रान्तेन्द्रियात्मा | ७९ |
| धर्मः पदैकेन | २४१ | नष्टप्रायेषु | २५ | परीक्षितैवं | २६० |
| धर्मः प्रोज्झित | ५ | न ह्यस्य कर्हिचित् | १३१ | परीक्षितोऽथ | ९२ |
| धर्मः स्वनुष्ठितः | २० | न ह्यस्याऽस्यतमं | ९७ | पर्वतो नारदो | १२८ |
| धर्मं प्रवदतः | १३५ | नातिप्रसीदद्धृदयः | ५६ | पश्योत्पातान् | २०० |





| | पृष्ठम्. | | पृष्ठम्. | | पृष्ठम्. |
|---|---|---|---|---|---|
| पश्यन्त्यदो | ३५ | ब्राह्मणैः क्षत्रबन्धुः | २७८ | मा सौरभेय | २५० |
| पाण्डुपुत्रान् | १२९ | ब्रूहि योगेश्वरे | १६ | मुनयः साधु | १९ |
| पादैर्न्यूनं | २४१ | भ | | मुनिगणनृपवर्यै... | १४१ |
| पाराशर्यं महाभाग | ५९ | भगवानपि गोविन्दः | २११ | मुमुचुः प्रेम | १६७ |
| पार्थ प्रजाविता | १८२ | भगवानपि विप्रर्षे | १२७ | मुमुक्षवो घोररूपान् | २९ |
| पार्थिवाद्दारुणो... | २८ | भगवांस्तत्र | १६७ | मृगेन्द्र इव | १८१ |
| पितर्युपरते | १९९ | भक्तियोगेन | ८९ | मृत्युदूतः कपोतो | २०८ |
| पितामहसमः | १८२ | भक्त्याऽऽवेश्य | १३३ | मृदङ्गशङ्खभेर्यश्च | १३८ |
| पित्रा चाऽनुमतो | १४३ | भद्राश्वं केतुमालं | २४० | मेधातिथिर्देवल | २८८ |
| पितृभ्रातृ | १९२ | भर्तुः प्रियं | ९३ | य | |
| पुत्रशोकातुराः | १०४ | भवताऽनुदितप्रायं | ६१ | यच्छ्रोतव्यं | २९८ |
| पुनश्च भूयात् | २९१ | भवद्विधा | १८८ | यत्तेजसाऽथ | २२० |
| पुनश्च याचमानाय | २६१ | भवान् हि वेद | २४३ | यत्तेजसा नृप | २१८ |
| पुरुषस्वभाव | १३४ | भवाय नस्त्वं | १६२ | यत्पादशुश्रूषण... | २१२ |
| पृथयेत्थं | १२३ | भवेऽस्मिन् | ११९ | यत्पादसंश्रयाः | १२ |
| पृथाऽप्यनुश्रुत्य | २२८ | भारतव्यपदेशेन | ५७ | यत्सन्निधौ | २१८ |
| प्रगायतः स्ववीर्याणि | ८६ | भारावतारणाय | ११९ | यत्संश्रयात् | २१७ |
| प्रजोपप्लवं | ९८ | भावयत्येष | ३२ | यत्र कथाऽथ | २६० |
| प्रतिक्रिया न | १९१ | भिद्यते हृदयग्रन्थिः | २६ | यत्र धर्मसुतो | १३० |
| प्रतिश्रुतं च | ९९ | भिक्षुभिर्विप्रवसिते | ७६ | यत्रानुरक्ताः | २०३ |
| प्रत्युज्जग्मुः | १८७ | भिक्षुभिर्विप्रव... | ७७ | यत्रेमे सदसद्रूपे | ४४ |
| प्रद्युम्नश्चारुदेष्णश्च | १६६ | भूरीणि... | १० | यथा क्रीडोपस्कराणां | १९८ |
| प्रद्युम्नः सर्ववृष्णीनां | २१० | भेजिरे मुनयो | २८ | यथा गावो | १९८ |
| प्रयुज्यमाने | ८४ | भौतिकानां तु | ५३ | यथा धर्मादयः | ६१ |
| प्रविष्टस्तु | १७० | म | | यथा नभसि | ४३ |
| प्रह्वाभिवादन | १६८ | मङ्गलाय च | २११ | यथा पङ्केन | १२५ |
| प्रशान्तमासीनं | १९६ | मतिर्मयि | ८२ | यथा मत्स्यादि... | २२९ |
| प्राक्कल्पविषयां | ७६ | मत्तं प्रमत्तं | ९९ | यथा ह्यवहितो... | ३१ |
| प्रागकल्प्यं प्रश्रयः | २४३ | मधुरायां तथा... | २३० | यथा हृषीकेश... | ११३ |
| प्रायशः साधवो | २८३ | मधुभोज | १६५ | यदत्र क्रियते | ७४ |
| प्रायेणाऽल्पायुषः | १० | मन्दस्य मन्दप्रज्ञस्य | २२९ | यदध्याऽऽसितना | २४ |
| प्रायेणैतद्भगवतः | २२६ | मन्ये एते। | २०९ | यदा परीक्षित्... | २४० |
| प्रासादशिखरारूढाः | १४९ | मन्ये त्वां | ११६ | यदा मुकुन्दो | २२९ |
| प्रीत्युत्फुल्लमुखाः | १६० | मरुधन्वमतिक्रम्य | १५८ | यदा मृधे | ९१ |
| प्रेमातिभर | ८० | महर्षयस्त्वं | २९१ | यदाऽऽस्तरणं | ९४ |
| ब | | महीपतिस्त्वथ | २८५ | यदा ह्यधर्मेण | १५४ |
| बालद्विजसुहृद् | १२५ | मा कञ्चन | १९८ | यदोस्तु | २२२ |
| ब्रह्मकोपोत्थितात् | २६४ | माता सुतानां | ९३ | यद्वान्धवः | २२१ |
| ब्रह्मतेजोविनिर्मुक्तैः | ११० | मातुर्गर्भगतो | १०७ | यद्बाहुदण्डगुप्तायां | २१४ |
| ब्रह्मनद्यां | ८८ | मा मंस्था | १०९ | यद्बाहुदण्डाभ्युदय | २१३ |
| ब्रह्मबन्धुः | १०३ | मायाजवनिकाच्छन्न | ११० | ययाऽम्यग्ने | १०२ |
| ब्रह्मादयो बहुतिथं | २६५ | मा रोदीदस्य | १०२ | ययाऽऽयसं | १०९ |

पृष्ठम्.

यथेषोपरता ... ... ... ४४
यद्वाऽम्ब ते ... ... ... २४३
यन्मन्यसे ... ... ... १९९
यमादिभिः ... ... ... ८७
यया संमोहितो ... ... ८९
ययाऽहरत् ... ... ... २२९
यर्ह्यम्बुजाक्ष ... ... ... ११४
यस्याद्भः सम्पदो ... ... २०७
यस्मिन्नहनि ... ... ... २६६
यस्मिन् हरिः ... ... ... २५९
यस्य राष्ट्रे ... ... ... २५०
यस्य क्षणवियोगेन ... ... २१७
यस्याऽम्भसि ... ... ... ३४
यस्याऽवयवसंस्थानैः ... ... ३४
यस्याऽहमब्ज .. ... ... २४५
यः श्रद्धयैतत् ... ... २३५
यः स्वकात्परतो .. ... १९३
यः स्वानुभाव ... ... ... १८
यक्ष्यमाणोऽश्वमेधेन ... ... १८५
याजयित्वा ... ... ... १०६
यानि वेद ... ... ... ९
या याः कथाः ... ... ... २८७
यावतः कृतवान् ... ... १८६
या वीर्यशुल्केन ... ... १५७
या वै लसत् ... ... ... २८७
युधि तुरगरजो ... ... ... १३८
युधिष्ठिरस्तदाकर्ण्य ... ... १३४
युधिष्ठिरस्तत्परि ... ... २३०
युधिष्ठिरो लब्धराज्यो ... ... १९०
येन चैवाऽभिपन्नः ... ... १९१
येनैवाऽहं भगवतो ... ... ७२
येषां संस्मरणात् ... ... २९७
यैः कोपितं ... ... ... १०२
यो नो जुगोप ... ... ... २१९
यो भीष्मकर्ण ... ... ... २२२
या वै द्रौण्यस्त्र ... ... ... २६४
यो वै मम ... ... ... २४६
यं प्रव्रजन्तं ... ... ... १७
यं मन्यसे ... ... ... १५२

र

रजस्तमःप्रकृतयः ... ... २९
राजमार्गं गते ... ... ... १६८
राजर्षीणां जनयिता ... ... १८२
राजंस्त्वया ऽनुपृष्टानां ... ... २२५
राज्ञो हि ... ... ... २५२
रूपं भगवतो ... ... ... ८०
रूपं स जगृहे ... ... ... ३९

ल

ललितगतिविलास ... ... १४०

व

वञ्चितोऽहं ... ... ... २१६
वदन्ति तत्तत्त्व ... ... ... २२
वपनं द्रविणा ... ... ... १०४
वयं तु ... ... ... ... १४
वसिष्ठ इन्द्रप्रमद ... ... १२८
वाचं जुहाव ... ... .. २३१
वायुर्वाति ... ... ... २०८
वारणेन्द्रं ... ... १६६
वारमुख्याश्च ... ... १६७
वारुणीं मदिरां ... ... २२५
वासुदेवपरा वेदा ... ... ३०
वासुदेवपरं .. ... ... ३०
वासुदेवाह्वयनु ... ... २२५
वासुदेवे भगवति ... ... २०
विचक्षणो ... ... ... ६५
विजयरथकुटुम्ब ... ... १४०
विदुरोऽपि परित्यज्य ... ... २३५
विदुरस्तदभिप्रेत्य ... ... १९१
विदुरस्तीर्थयात्रायां ... ... १८६
विदुरस्तु तदाश्चर्यं ... ... २०४
विधूय तदमेयात्मा .. ... १७९
विपदः सन्तु ... ... ... ११४
विमुच्य रशनाबद्धं ... ... १०४
विमृज्य .. ... ... १९६
विलोक्योद्विग्न ... ... ... २१०
विशुद्धया धारणया ... ... १२६
विशुष्यत्तालुः ... ... ... २७६
विशोको ... ... ... २२८
विषान्महाग्नेः ... ... ... ११४
विसृज्य तत्र ... ... ... २६१
विसृज्य पुत्रं ... ... ... २८०
विज्ञानात्मनि ... ... ... २०३
वृकोदरश्च ... ... ... १४६
वृषं मृणालधवलं ... ... २४८
वृषस्य नष्टान् ... ... ... २६२
वेत्थ त्वं ... ... ... ९
वेत्थ त्वं द्रोणपुत्रस्य ... ... ९७
वंशाङ्कुरं ... ... ... १४४
व्यतीताः ... ... ... २०६
व्यवहितपृतना ... ... ... १३९
व्यसनं वीक्ष्य ... ... ... १०८
व्यासाद्यैरीश्वरे ... ... ... १२४

श

शय्यासनाटन ... ... ... २२४
शस्ताः कुर्वन्ति ... .. २०८
शितविशिखहतो ... ... १४०
शिबिराय निनीषन्तं ... ... ९८
शिवाय लोकस्य ... ... ५२
शिवैषोद्यन्तं ... ... ... २०८
शुश्रूषोः श्रद्दधानस्य ... ... २४
शूरो मातामहः ... ... २१
शोकेन शुष्यद्वदन ... ... २१०
शोचत्यश्रुकला ... ... ... २५७
श्यामं तदा ... ... ... २९५
श्रियो निवासो ... ... १६९
श्रीकृष्ण कृष्णसख ... ... १२२
श्रीमद्दीर्घचतुर्बाहुं ... ... १७८
श्रुत्वा भगवता ... ... ९७
शृण्वतां स्वकथाः ... ... २५
शृण्वन्ति गायन्ति ... ... १२०

ष

षष्ठमत्रेरपत्यत्वं ... ... ... ३८

स

स उच्चकासे ... ... ... १६०
स उत्तरस्य ... ... ... २३७
स एव जीवलोक ... ... ९६
स एव नरलोके ... ... १७३
स एव प्रथमं ... ... ... ३५
स एव भूयो ... ... ... १५३
स एवेदं ... ... ... ३०
स एष एतर्हि ... ... ... २६२
स एष भगवान् ... ... १०१
स एष लोके ... ... ... १८५
स कदाचित् ... ... ... ५३
सकृद्यद्दर्शितं ... ... ... ८२
सख्यं मैत्री ... ... ... २१६





पृष्ठम्.

स गोदोहनमात्रं ... ... ५१
स चिन्तयन् ... ... ... २८६
स तु ब्रह्मऋषेः ... ... २७७
सत्यं शौचं ... ... ... २४३
सत्त्वं रजस्तमः ... ... ... २७
सत्सङ्गान् ... ... ... १४७
सत्सेवया ... ... ... ८२
स देवदेवो ... ... ... १३४
सपदि सखिवचो ... ... १३८
सप्त स्वसारः ... ... ... २१०
समागताः ... ... ... २९४
सम्पदः क्रतवो ... ... १०७
सम्पद्यमानं ... ... ... १४२
सम्प्रस्थिते ... ... ... २०५
सम्प्रेषितो ... ... ... २०७
सम्मार्जितमहामार्ग ... ... १६६
स रहस्यो ... ... ... १०१
स राजपुत्रो ... ... ... १८४
सर्वं कालकृतं ... ... ... १३०
सर्वं तदिदं ... ... ८७
सर्वसुसर्वविभव ... ... १६५
सर्ववेदेतिहासानां ... ... ४७
सर्वसद्गुणमाहात्म्य ... ... १८२
सर्वात्मनः समदृशो ... ... १३३
सर्वे तमनु ... ... ... २६३
सर्वे वयं ... ... ... २९३
स वा अङ्गिरसो ... ... ८०
स वा अयं ... ... ... १५२
स वा अयं सख्यनु ... ... १५३
स वा इदं ... ... ... ४५
स विष्णुरातो ... ... ... २९५
स वेद धातुः ... ... ... ४६
स वै किल ... ... ... १५०
स वै निवृ ... ... ... ९१
स वै पुंसां ... ... ... १९
स वै भवान् ... ... ... ६०
स वै महाभागवतः ... ... २००
स सम्राट् ... ... ... ५१
स संवृत ... ... ... २९६
स संहिता ... ... ... ९०
स स्वपौत्रं ... ... ... २३०
सहस्रयुगप ... .. ... ८५
साधयित्वा ... ... ... १०६
सान्निध्यात्ते ... ... ... २९७
सान्त्वयामास ... ... ... १०६
सारथ्यपारषद ... ... ... २४१
साऽस्वतश्रा ... ... ... ७७
सितातपत्रं ... ... ... १४९
सितातपत्रव्य ... ... ... १००
सुखोपविष्टेषु ... ... ... २८९
सुभद्रा द्रौपदी ... ... ... १४६
सुरासुराणां ... ... ... ३९
सुषेणश्चारुदे ... ... ... २११
सूत जानासि ... ... ... ११
सूत जीव ... ... ... २६८
सूत सूत ... ... ... ४९
सूर्यं हतप्रभं ... ... ... २०८
सोऽयमद्य ... ... ... २०१
सोऽहं नृपेन्द्र ... ... ... २२४
सौत्ये वृतः ... ... ... २२३
संस्थितेऽभिरथे ... ... ११०
संहत्याऽन्योन्यं ... ... ९७
स्थानत्रयात्परं ... ... ... २०५
स्नात्वाऽनुसवनं ... ... २०२
स्त्रीबाल... ... ... ७८
स्त्रीणां मद्धतबन्धूनां ... ... १२५
स्त्रीशूद्रद्विज ... ... ... ५५
स्रोतोभिः ... ... ... २०२
स्वनिगमं ... ... ... १३९
स्वप्राणान्यः ... ... ... ९९
स्वयञ्च गुरुभिः ... ... ... १६८
स्वलङ्कृतं ... ... ... २४०
स्वायम्भुव कया ... ... ७६

ह

हत्वा स्वरिक्थ ... ... ... १४४
हन्ताऽस्मिन् ... ... ... ८१
हरेर्गुणाक्षिप्तमति ... ... ९२
हिरण्यं गां ... ... ... १८०

श्रीगोवर्द्धनोद्धरणधीराय नमः।

श्रीबालकृष्णाय नमः।

श्रीभागवतगूढार्थप्रकाशनपरायणाय नमः।

श्रीपितृप्रवर्तितपथप्रचारसुविचारकाय नमः।

श्रीभागवतप्रतिपदमणिवरभावांशुभूषितमूर्त्तिश्रीमद्वल्लभाचार्यचरणविरचिता

# श्रीसुबोधिनी।

(द्वितीयस्कन्धः)

स्कन्धे तु प्रथमे प्रोक्तास्त्रिविधा ह्यधिकारिणः।
तेषां कर्त्तव्यनिर्द्धारो द्वितीये विनिरूप्यते ॥ १ ॥
तस्मिन्निर्द्धारिते पश्चात्क्रियाविषयसङ्कथा।
अग्रे च तां प्रवक्ष्यामस्तृतीयादिभिरुत्तमैः ॥ २ ॥
निर्द्धारणेऽङ्गत्रितयं वस्तुनिर्द्धारणं पुरा।
श्रद्धा चैव विमर्शश्च वस्तुनिर्द्धारणं पुनः ॥ ३ ॥
प्रमाणेन प्रमेयेण साधनेन फलेन च।
एकत्र मानमेये हि फलं साधनमेकतः ॥ ४ ॥
अतोऽत्र वस्तुनिर्द्धारे ह्यध्यायद्वितयं मतम्।
श्रद्धाऽपि द्विविधा लोके श्रोतृवक्तृविभेदतः ॥ ५ ॥
फलोपकार्यङ्गमेतस्मादधिकारे ततो विशेत्।
विमर्शोऽपि द्विधा पूर्वमुत्पत्त्या चोपपत्तितः ॥ ६ ॥
त्रिविधे ते ततस्तत्र षडध्यायास्ततो दश।
तत्र तु प्रथमेऽध्याये कर्त्तव्यं विनिरूप्यते।
वस्तुनस्तत्त्वनिर्द्धारो मानमेयविभेदतः ॥ ७ ॥

पूर्वस्कन्धेऽधिकारनिरूपणे परीक्षितो मुख्याधिकारं निरूप्य तेन किं कर्त्तव्यमित्यपेक्षायां भगवत्कृपया सत्सङ्गे सति सर्वतत्त्वजिज्ञासार्थं प्रश्नः कर्त्तव्य इति प्रथमं प्रश्नद्वयं कृतम्। सर्वात्मना किं कर्त्तव्यं म्रियमाणैश्च किं कर्त्तव्यमिति। सर्वात्मना कर्त्तव्यं नाम यस्मिन्नकृते कोऽपि पुरुषार्थो न सिद्ध्यति तत्सर्वात्मना कर्त्तव्यम्। तत्राऽधिकारिणो न निर्द्धारिताः। ते चोत्तरदानसमये निर्द्धारणीयाः।

---

१ त चेति ख. ग. घ.   २ निर्द्धारणीय इति ख. ग. घ. निर्द्धारिता इति क.

म्रियमाणानां कर्तव्यनिर्द्धारो द्वितीयः[1]। ये पुनः श्रोतव्यादिपञ्च पदार्थाः पृष्टास्ते यथायथमेतन्निरूपणेनैव निरूपिता भविष्यन्ति । कांश्चिदग्रे निरूपयिष्यामः । अतो द्वयं निरूपणीयम्—सर्वात्मना कर्तव्यं म्रियमाणैश्च कर्तव्यमिति । तदर्थं सर्वेषां वस्तूनां याथात्म्यं निरूप्यं फलमुत्तमङ्गं श्रद्धा निरूप्या विचारश्च निरूप्यः । एतेषामावश्यकत्वं तत्तत्प्रकरणे निरूपयिष्यामः । तत्र सर्वात्मना कर्तव्यनिर्द्धारं चतुर्दशश्लोकैराह—वरीयानित्यादिभिः । कर्तव्यनिरूपणात्पूर्वमभिनन्दनं कर्तव्यं प्रश्नस्य हेतुत्वार्थम् । यथा क्षुधितस्याऽन्नदानं तथा साकाङ्क्षस्य कर्तव्यकथनम् । अधिकारनिर्द्धारश्च कर्तव्यः । विशेषतः पूर्वं प्रश्नशेषतया अनिरूपणात् । प्रेक्षापूर्वकारिणं प्रवर्तयन्फलमनिरूप्य विधिः प्रवर्तयितुं न शक्नोति । अतः फलनिर्द्धारार्थमधिकारो निरूपणीयः । तत्र दोषत्रयं निराकार्यम् । तदर्थं त्रयः श्लोकाः । तत्र प्रथमं प्रश्नमभिनन्दति—

श्रीशुक उवाच—

वरीयानेष ते प्रश्नः कृतो लोकहितो यतः ।
आत्मवित्सम्मतः पुंसां श्रोतव्यादिषु यः परः ॥ १ ॥

**वरीयानिति** । श्रोतव्यादिषु प्रश्नेषु मध्ये यः प्रथमतः पृष्टः सर्वात्मना किं कर्तव्यमिति एष प्रश्नो **वरीयान्** श्रेष्ठः । उत्तमत्वे हेतुमाह । यतः स तु ते तवोपकाराय । अन्ये त्वन्येषाम् । अस्मिन्नर्थे महतां सम्मतिमाह—**आत्मवित्सम्मत इति** । आत्मविदामप्ययं प्रश्नः सम्मतः । अनेनाऽत्र प्रश्नोत्तरे शुद्धेर्भेदोदय इति सूचितम् । किञ्च । पुंसां सर्वेषामेव विचारकाणां स्वतन्त्राणामयं प्रश्नः सम्मत इति सम्बन्धः । तस्मादस्योत्तरं कथयिष्यामीति भावः ॥ १ ॥

इदानीं फलप्रेप्सुमधिकारिणं निर्द्धारयितुं सर्वेषामेकं कर्तव्यं नाऽस्तीत्याह—

श्रोतव्यादीनि राजेन्द्र नृणां सन्ति सहस्रशः ।
अपश्यतामात्मतत्त्वं गृहेषु गृहमेधिनाम् ॥ २ ॥

**श्रोतव्यादीनीति** । अग्रिमप्रश्नानामनभिनन्दनाद्धीणता सूचितैव । तथापि यदि राज्ञस्तत्राऽऽकाङ्क्षा दृढा भवेत्तदा प्रथमोत्तरमुच्यमानं न सम्यगवगम्येत । अतोऽधिकारनिरूपणप्रस्तावे श्रोतव्यादीन्यपि निराकरोति । राजेन्द्रेति सम्बोधनात्—बहुविधाः पुरुषास्त्वयैव दृष्टा बहूनि च शास्त्राणि, तत्र तव तेषां वा न कोऽपि पुरुषार्थः सिद्ध इति तदनुभवस्य सम्मतिः प्रदर्शिता । प्रश्नैर्नृभिरिति वचनात्तज्ज्ञापनायोत्तरेऽप्याह । तर्हि तानि कुतो न वक्तव्यानि ? तत्राऽऽह—**सन्ति सहस्रश इति** । मत्कथनात्पूर्वमेव मत्कथनमनपेक्ष्य सहस्रशः सन्ति । सामान्येषु स्वाभिप्रेतानामप्रवेशार्थमाह—**अपश्यतामात्मतत्त्वमिति** । आत्मनस्तत्त्वमनारोपितं रूपम् । तच्छास्त्राभावादपश्यताम् । लोकव्यवहारेणाऽऽत्मा आरोपित एव दृश्यते देहादिरूपः संवलितो वा । ननु कथमुपाये विद्यमाने ते आत्मतत्त्वं न जानन्ति ? तत्राऽऽह—**गृहेषु गृहमेधिनामिति** । तैर्विविक्तात्मस्वरूपं ज्ञात्वा किं कर्तव्यम् । ते हि गृहमेधिनः गृह एव पर्यवसितमतयः । तेषां गृहोपयोगि यद्वेत्तदेव

१ श्रद्धा निरूप्येति ग. २ वक्ष्यमिति क. ग. ३ अग्रिमप्रश्नानभिनन्दनादिति क. ग. ४ नृणामिति क.



ज्ञातव्यम् । विविक्तात्मा तु गृहस्य बाधकः । अतो न ज्ञातव्यः । गृहेष्विति निमित्तसप्तमी तेषां गृहेषु बुद्धिरस्ति गृहैकनिष्ठा भविष्याम इति । अतो गृहाः प्राप्तव्याः । तस्माद्यथैव बुद्ध्या गृहसिद्धिस्तामेव बुद्धिं सम्पादयन्ति । सा च लोकप्रसिद्धग्रन्थैरेव पुष्टा नाऽस्मद्वाक्यमपेक्षते । अतस्तद्विषयकस्तव प्रश्नो न साधुः । अनेन म्रियमाणविषयको यः प्रश्नः स न स्तुतो न वा निन्दित इति तदुत्तरमग्रे वक्ष्यतीति सम्भाव्यते ॥ २ ॥

ननु केवलं गृहार्थे कथं तेषां बुद्धिः ? सद्बुद्धिसाधनानां विद्यमानत्वात् । तत्राऽऽह—

निद्रया ह्रियते नक्तं व्यवायेन च वा वयः ।
दिवा चाऽर्थेहया राजन् कुटुम्बभरणेन वा ॥ ३ ॥

निद्रया ह्रियते नक्तमिति । सत्सङ्गसाधनीभूतः समय एव तेषां नास्ति । तत्समयस्याऽन्यैरेवाऽपहारात् । तदाह । निद्रा चेष्टा चाऽर्द्धश आयुर्हर्त्र्यौ । तत्र निद्रया नक्तं वयो ह्रियते । रात्रिसम्बन्ध्यायुरज्ञानेन गच्छति । दिवा च दिनसम्बन्ध्यायुरर्थेहया गच्छति । अज्ञानादन्यथाज्ञानाच्च सर्वमायुर्गच्छतीत्युक्तं भवति । ननु न सर्वा रात्रिर्निद्रया गच्छति ? तत्राऽऽह—**व्यवायेन च वेति** । चकारात्तत्साधनेन । वेति प्रकारद्वयं परित्यज्य नाऽन्यः पक्षस्तेषु सम्भावितः । वयःशब्देन पुरुषार्थसाधनीभूतमायुस्तारुण्यमेव । तद्वद्गतं जरठः किं नु साधयेत् । बालो वा । **अर्थेहया** । गृहस्य मूलं धनम् । चकारान्निद्रया । अर्थार्थं प्रयत्नेन सिद्धेऽर्थे कुटुम्बभरणेन वा ॥ ३ ॥

ननु वैराग्यसाधनानां जायमानत्वात्कथं तेषां गृहे विचिकित्सा न जायते ? तत्राऽऽह—

देहापत्यकलत्रादिष्वात्मसैन्येष्वसत्स्वपि ।
तेषां प्रमत्तो निधनं पश्यन्नपि न पश्यति ॥ ४ ॥

देहापत्येति । त्रयो गृहे मुख्याः । देहः पुत्रो भार्या च । तन्मूलका अन्ये । ते च स्वभावतो गुणतश्च दुष्टाः । यत आत्मनाशकाः । ये हि यस्य परिकरा भवन्ति ते तं पोषयन्ति । एत आत्मसैन्यान्यात्मानमेव शत्रुभिर्घातयन्ति । अतोऽसन्तः । ननु किमतो यद्येवम् ? दैवमेतदित्याह । ते ह्यात्मघातदोषेण धनेन पोषिता निधनं प्राप्नुवन्ति । तदा दुष्टानां नाशादात्मनिष्ठो भवेत् । तदन्तःस्वदोषान्न जायत इत्याह—**प्रमत्त इति** । यथा अत्यन्तं मदिरामत्तो गतमपि वस्त्रं स्पृशन्नपि देहं वस्त्रगमनं नाऽनुसन्धत्ते तथाऽयमपि मृतानपि तान् पश्यन् जीवत इव तदर्थं प्रयतते । तस्माद्दान्तरदोषव्याप्तत्वादायुषो वृथा क्षयाद्गृह एव पर्यवसितबुद्धित्वात्तेषां श्रोतव्यादि न प्रष्टव्यमित्यर्थः । **बुद्धिश्चाऽऽयुश्च दोषाणामभावः कारणं यतः । यस्य नैते भविष्यन्ति तस्य नाऽस्त्यधिकारिता** ॥ ४ ॥

१ गृहे इति ख. २ परिहृत्येति ख. ३ आत्मसैन्या अपीति क. ४ एकमित्यादाद्यारभ्य नास्ति ख. ग. ५ स्वात्मेति ग. ६ जायत इति ख. ग. ७ इत्यन्तमिति क.

एवं प्रश्नमभिनन्द्य साधारण्यं परिहृत्याऽभयमिच्छतामुपायमाह—

तस्माद्भारत सर्वात्मा भगवान् हरिरीश्वरः ।

श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यश्चेच्छताऽभयम् ॥ ५ ॥

तस्मादिति । यस्मादाद्य एव पक्षः समीचीनः यस्मादन्यविषयकथाऽसमीचीनस्तस्माद्येषां संसाराद्भयमस्ति तद्भयनिवृत्त्यर्थं च यतन्ते तेषामभयमिच्छतां भगवाञ्छ्रोतव्यः । यद्यप्यत्र युक्तिर्वक्तव्या तथापि बहिर्मुखस्य बुद्धिर्युक्तिमपि न गृह्णातीति स्वभावतोऽधिकारी वक्तव्यः । तदाह । भारतेति विशिष्टाधिकारद्योतकमुक्तविश्वासाय । "दौष्यन्तिरत्यगान्मायामि"ति भरतस्य मायामोहाभावात्तद्धर्मपुरस्सरं तद्वंशोत्पन्नानामपि मायामोहाभावादुक्तविश्वासः । ननु वैदिकविधिशेषितानामग्निहोत्रादीनामात्मजिज्ञासाया वा कथनं परित्यज्य कथं भगवच्छ्रवणं विधीयते ? अवैदिकत्वात् । तत्राऽऽह—सर्वात्मेति । प्रमाणबलात्प्रमेयबलं महदित्यग्रे वक्ष्यते । प्रमेये च युक्तिर्वक्तव्या । तत्रैषा युक्तिः । अभयपर्यवसायित्वेन फलैः कृता एव भवन्तीति नाऽस्ति नियमः । अन्येषामपि कृतपुण्यपुञ्जानामभयेच्छासम्भवात् । अतस्तेषामुपायो वेदे नोक्त इति तदर्थं वक्तव्ये साधने तेनैव साधनेन त्रैवर्णिकानामपि पुरुषार्थसिद्धावावश्यकत्वाल्लाघवाच्च सर्वोपयोग्येक एवोपायो वक्तव्यः । स च सर्वात्मत्वाद्भगवतस्तद्विषय एव कश्चिद्वक्तव्यः । न हि स्वस्याऽऽत्मा कस्यचिन्न श्रोतव्यः । "आत्मा वा अरे श्रोतव्यः" "आत्मलाभान्न परं विद्यते" "तरति शोकमात्मविदि"ति श्रुतेः । तत्र स्वस्यात्मश्रवणे बोध्यमाने बोधकस्य वाक्यार्थपर्यवसानमेव स्यात् । आत्मपदस्य प्रकृतिविकृतिभावाभावाच्च । तस्मात्सर्वेषामेको य आत्मा भवति स एव श्रोतव्यः । अतः श्रुतावप्यात्मपदं सर्वात्मपरम् । न च जातिवाचकत्वमात्मपदस्य । तथा सति व्यक्तिरूपस्य स्वस्य गौणत्वेनाऽर्थान्तरत्वादिविषयत्वेऽनुपपत्त्यभावाच्च नाऽऽत्मनः कार्यं सिद्ध्येत् । सद्भावेऽप्यात्मज्ञानस्य विद्यमानत्वाच्छ्रुतौ प्रकारविशेषस्याऽनुक्तत्वाज्ज्ञानार्थं प्रयासो व्यर्थः स्यात् । श्रुतिश्चोपचरिता भवेत् । अतः सर्वात्मैव श्रोतव्यः । तस्य शारीरस्य च भेदाभावान्न स्वस्य गणना । किञ्च । "फलमत उपपत्तेरि"ति न्यायेन न केवलं ज्ञानमात्रेण फलम् । किन्तु श्रवणादिभिर्ज्ञाते ब्रह्मणि तत्फलं प्रयच्छति । नैवं निर्द्धर्मकं शारीररूपं वा स्यात् फलदाने असमर्थमेव स्यात् । अतः फलदानसमर्थरूप एवाऽऽत्मा श्रोतव्य इत्याह—भगवानिति । षड्गुणैश्वर्यसम्पन्नो न तु भ्रान्तशास्त्रैः प्रतिपन्नः । वेदार्थोऽप्ययमेवेत्यादिष्व । किञ्च । फलं दुःखाभावः सुखञ्च । तत्र प्रथमं दुःखाभावो मृग्यः । दुःखेऽसत्येव प्रथमं प्रवृत्तेः । तत्र श्रवणस्य तत्साध्यज्ञानस्य वैकफलत्वे सर्वफलत्वे वा आहारपृथक्त्वेन सर्वफलत्वनिर्द्धारात्प्रथमं जाते साक्षात्कारे दुःखनिवृत्तौ परमानन्दो न स्यात् । परमानन्दे वा स्वर्गादिसुखवद्दुःखनिवृत्तिर्न स्यात् । सन्नियोगशिष्टत्वेऽपि फलदातृत्वाद्भगवतो द्वयं न प्रयच्छेत् । अन्यथा आहारपृथक्त्वन्यायो भज्येत । अतः श्रवण एव तादृग्विषयो वक्तव्यः । यस्तूभयरूपो भवति । तदाह—हरिरीश्वर इति । हरित्वेन सर्वदुःखहर्तृत्वेनेश्वरत्वेन सर्वफलदातृत्वेन च श्रोतव्यः । "तं यथा यथोपासत" इति श्रुतेः । अतो धर्मचतुष्टययुक्तत्वेन गुणोपसंहारन्यायेन तादृशः श्रोतव्य इति विषयं व्यावर्त्तकधर्मैः परिच्छिद्य तत्र कर्त्तव्यमाह श्रोतव्यादित्रयम् । नन्वस्य शास्त्रस्य भक्तिफलकत्वाच्छ्रवणादिकं न धर्मरूपम् । उत्तमत्वकृकथनाच्च । अतो नवविधा भक्तिः कर्त्तव्यत्वेन वक्तव्या । तत्कथं

१ अत इति नास्ति ख. ग. २ तस्य चेति ख. ग. ३ तचेति ङ. ग. ४ स्वर्गादिवत्सुखवदिति ग.



त्रयमेवोच्यत इति चेत् ? सत्यम् । नवविधभक्तेर्वक्तव्यत्वेऽपि प्रेमानन्तरभावित्वादन्येषां त्रयमेवोक्तम् । त्रिभिः स्नेहे जाते अन्येषां कर्त्तव्यता त्वनुक्तसिद्धैव । ननु भगवाञ्छ्रोतव्य इति कोऽर्थः । तद्वाचकाः शब्दाः श्रोत्रेण ग्राह्यास्तेषामर्थो वा ज्ञातव्यः । अभिप्रायो वा । सर्वेषां वा केषाञ्चिदेव वा । आद्ये विधिर्व्यर्थः । प्रमाणवस्तुपरतन्त्रत्वेन ज्ञानस्य श्रोत्रेन्द्रियवतो यतः कुतश्चिच्छब्द उच्चारिते ज्ञानं भविष्यत्येव । गृहीतसङ्गतेस्तु पुनरर्थज्ञानमपि भविष्यति । न च तत्सम्पादने यत्नः कर्त्तव्य इति । दैवगत्या यत्नं विनाऽपि सर्वेषां तत्सम्भवात् । अथ भवेदा ? अशक्यत्वाऽसम्भवात् । जीवनानुपपत्तिश्च । किञ्च । भगवद्वाचकानां सर्वेषां पदवाक्यानामेकत्रोपस्थापयितुमशक्यत्वात्किञ्चित्पदवाक्यमात्रस्य सर्वजनीनत्वादवक्तव्यत्वम् । अथ शक्तितात्पर्यनिर्द्धारः पदवाक्ययोः श्रवणम् । तथैव कीर्त्तनं स्मरणं चेति चेन्न । सर्वेषां पदवाक्यानामनुपस्थितौ तन्निर्द्धारस्याऽशक्यत्वात् । यत्किञ्चित्पदवाक्यमात्रस्य तु शक्तितात्पर्यनिर्द्धारः सर्वजनीन इति नोपदेशो युक्त इति ? नैवम् । श्रोतव्यविषयत्वेन लीला दशविधा तुनः । उक्तैव वासुदेवस्य तदर्थमपरा कृतिः । शक्तितात्पर्यनिर्द्धारः सामान्येन पदादिगः । क्रियते स्कन्ध एवाऽत्र तेन नाऽप्रोक्तदूषणम् । भगवान् दशविधलीलायुक्तः श्रोतव्यः । अन्यथा विषयवाचकादचतुर्थेनैव श्रवणसिद्धेर्विधिवैयर्थ्यं स्यात् । तृतीयादिदशस्कन्धकृतिवैयर्थ्यं च । तावता शक्तितात्पर्यनिर्द्धारः सामान्यन्यायेन व्याकरणपूर्वमीमांसावत्राऽत्रैव क्रियते । तस्मान्न कोऽपि दोषः । एते हि चत्वारो गुणा अधिकारिफलनिरूपकत्वेनोक्ताः । न तु श्रोतव्यत्वेन । अवच्छेदकत्वेनैव तदुपयोगात् । गुणानामानन्त्येऽपि यथा दशलीलासु सर्वभगवत्त्वमत्र वक्ष्यते । अनुप्रवेशेऽपि यथाऽऽनन्त्यं तथाऽपि वक्ष्यते । अथाऽत्र त्रयं न विधातव्यम् । एकेनैव प्रेमद्वारा अभयसिद्धेः । न च मिलितानां त्रयाणां साधकत्वम् । परीक्षिति तदभावेनाऽभयाभावप्रसङ्गात् । श्रवणस्याऽऽवश्यकत्वाच्च न विकल्पेनाऽनेकविधानमिति वाच्यम् । अत्रोच्यते । त्रयाणामन्योन्यनिर्वाहकत्वेन विधानम् । तथाहि । कीर्त्तनाविधाने श्रवणमेव न निर्वहेत् । न चाऽध्ययनविधिवदेकविधानेनाऽन्यप्राप्तिरिति वाच्यम् । अध्यापनस्य संसारिकर्त्तव्यत्वेन विधिं विनाऽपि वृत्तित्वेन प्राप्तत्वात् । न चाऽत्र तथा । श्रवणेन कृतार्थस्य कीर्त्तने प्रवृत्त्यनुपपत्तेः । तर्हि कीर्त्तनमेव विधीयताम् । श्रवणं त्वर्थादेव भविष्यतीति । न । परीक्षिति तदभावात् । अभये वैलक्षण्याभावाच्च । तस्माच्छुकादीनामनिरपेक्षाणामपि कीर्त्तने प्रवृत्तिसिद्ध्यर्थं कीर्त्तनविधानम् । तदैव श्रवणसिद्धिः । फलं तु प्रत्येकमेव । अभयं तु भगवत्प्रवेशरूपम् । तदैव सर्वभयनिवृत्तेः । तर्हि स्मरणं न विधातव्यम् । न च श्रवणानन्तरस्मरणे विस्मरणात्कीर्त्तनानुपपत्तिरिति वाच्यम् । अन्यत्वप्रयुक्तत्वेन विध्यनुपपत्तेरिति चेन्न । सकृत्कृतकीर्त्तनस्याऽपि विस्मरणसम्भवात्कीर्त्तनशेषत्वेन स्मरणमायाति । विहिते तु स्मरणे श्रवणकीर्त्तने सदा भवतः । दोषान्तराप्रवेशश्च । किञ्च । त्रयाणां देहपातपर्यन्तमावृत्तिानामेवाऽभयसाधकत्वम् । उत्तरावधिर्देहपात एव । पूर्वावधिः संसारभयज्ञानम् । "आवृत्तिरसकृदुपदेशादि"ति न्यायेन स्मरणान्तरव्यावृत्त्यर्थम् । यद्यपि स्नेहे जाते आवृत्तिर्न विधातव्या । स्वत एव तत्सम्भवात् । अथाऽपि भरतवत्कदाचिदन्यासक्तिर्भवेत् । न च तथा सत्यधिकाराभावादेव निवृत्त्यर्थं इति वाच्यम् । तदभावार्थमेव विधानात् । तस्माद्यथासम्भवं देहपातपर्यन्तं त्रयाणामावृत्तिः कर्त्तव्या । ननु मननिदिध्यासने कुतो न विहिते । ज्ञानं च साध्यत्वेन कुतो नोक्तम् । "ज्ञानादेव तु कैवल्यमि"ति श्रुतिविरोधश्च । न च ज्ञानस्याऽर्थात्सिद्धिः । तथा सति ज्ञानस्य

१ तुर्यांसि ग. २ शक्तितात्पर्येति वर्णा न सन्ति ङ. ३ तावतामिति ङ.

व्यापारत्वं स्यात्। अत्र स्नेहस्य तथात्वेन विवक्षितत्वाच्चेति चेन्न । मनननिदिध्यासनयोरङ्गत्वेन श्रवणमध्यपातात् । तदत्रैवोत्तरत्र वक्ष्यते । ज्ञानं तु शाब्दं सिद्धमेव । प्रेम्णा क्रियमाणैस्त्रिभिर्भगवत्साक्षात्कारोऽपि सम्भवति । तथापि श्रवणादीनामेव कारणत्वम् । अन्तिमसाक्षात्कारस्य तु फलनान्तरीयकत्वात्फलमध्यपातः । न चाऽऽध्यात्मिकश्रवणवच्छ्रवणाद्याहितसंस्कारसध्रीचीनेन मनसा शरीरात्मसाक्षात्कारवद्भगवत्साक्षात्कारो वक्तुं शक्यः । "नाऽहं वेदैरि"ति वाक्यात् । न च शरीरसाक्षात्कार एव फलम् । सङ्घातादुद्गतस्य कैवल्यं प्राप्तस्य भगवच्छ्रवणे मुख्याधिकारात् । "एतावदरे खल्वमृतत्वमि"ति ब्रह्मप्रकरणस्थत्वाद्ब्रह्मात्मविषयकमेव । भगवतश्च स्वतन्त्रत्वाच्चाऽन्येन प्रकारेणाऽऽविर्भावः सम्भवति । यत्तु वाक्यात्स्वभवद्ब्रह्मात्मभावस्फूर्तिस्तेन वा सर्वाविद्यानिवृत्तिः स्वचरितार्थता वोच्यते । तज्ज्ञानदुर्बलानां मनोरथमात्रमेव । शुकसनकादीनामप्याऽपि परिभ्रमणात् । तस्मात्साक्षात्सुख एव सर्वभयनिवृत्तिः । "ब्रह्मैव सन्ब्रह्माऽप्येती"ति श्रुतिश्च तमेवाऽर्थं वक्ति । न चोपनिषदां वैयर्थ्यम् । अस्यैवाऽर्थस्याऽधिकारिभेदेन प्रकारभेदेन विधानात् । फलं तदेव । "न प्राप्नुवन्ति मामेवे"ति वाक्यात् । "वेदैश्च सर्वैरहमेव वेद्य" इति च । "सर्वे वेदा यत्पदमामनन्ति" "तद्विष्णोः परमं पदमि"ति च । "तदेव ब्रह्म परमं कवीनामि"ति च । तस्माद्वैदिकप्रकारेण भागवतप्रकारेण वा भगवति प्रवेशस्त्रैवर्णिकानाम् । अन्येषां तु भागवतप्रकारेणैव । न च व्यवस्थितविकल्पः । "किं पुनर्ब्राह्मणाः पुण्या" इति वाक्यात् । "क्लेशोऽधिकतरस्तेषामि"ति च । अत एव श्रुतिनिषिद्धिरपि नास्ति । शाण्डिल्यस्य तथा वचनं पूर्वं चित्तशुद्ध्यभावात् न जानेति नोपनिषद्भिः फलोदयः । चित्तशोधकानां वैदिकमार्गे क्लेशसाध्यत्वात् । अतः स्वपक्षस्थापनामात्रपरत्वादितरपक्षनिन्दावचनानां न तावता श्रुतिविरोधः सम्भवति । तस्मात्सूत्रविभागानुसारि वैदिकमार्गेण भगवन्मार्गेण वा यथाधिकारं सर्वेषां परमपुरुषार्थप्राप्तिः सर्वमनवद्यम् । विधिविशेषविचारस्तु न कर्त्तव्यः । तव्यप्रत्ययस्य विधावविधानात् । लिङ्लोट्प्रथमलकाराणामेव विधौ विधानात् । लोकवेदप्रसिद्धत्वाच्च भगवतो नाऽत्र विधिः सम्भवति । भक्तिशास्त्रत्वाच्च । फलसाधनता तु तादर्थ्येन विधानात्समभिव्याहारादेव लभ्यते । वाक्यार्थस्याऽपूर्वत्वाद्भावनापक्षश्च पूर्वमीमांसाभाष्य एव निराकृतः । अयं च तव्यप्रत्यय आवश्यके विहितः—"कृत्याश्चे"ति सूत्रेण । प्रश्नानुगुणश्चाऽयम् । तस्माद्भगवत्प्रवेशार्थं यावज्जीवं यथासम्भवं त्रयाणामावृत्तिः कर्त्तव्येति सिद्धम् । श्रोतव्यः कीर्तितव्यश्च । कीर्तितव्यः श्रोतव्यश्च । स्मर्तव्यः पूर्वोक्तश्च । एवं प्रतिपादनार्थं चकारद्वयम् । इच्छतेति पदाच्छ्रवणाद्यकरणे अभयमेव न भविष्यति न तु तदकरणकृतः प्रत्यवायोऽपीति सूचितम् ॥ ५ ॥

श्रवणस्याऽङ्गत्वे श्रुतेः संवादित्वात्स्मरणकीर्तनयोः फलहेतुत्वं साधनीयं वादिविप्रतिपत्तिनिराकरणाय । तत्र प्रथममितरासापेक्षत्वात्स्मरणस्य फलसाधकत्वं साधयति—

एतावान्साङ्ख्ययोगाभ्यां स्वधर्मपरिनिष्ठया ।
जन्मलाभः परः पुंसामन्ते नारायणस्मृतिः ॥ ६ ॥

एतावानिति । पञ्च सिद्धान्ताः स्वतन्त्रतया विहिताः । तत्र श्रुतिर्विष्णवी समप्रधानत्वेनोक्ता । पशुपतिमतस्य कल्पभेदेन तामसपरत्वेनोत्कर्षजननद्वारा परम्परया यथाययमुपयोगः । क्रममुक्तिहेतुत्वेन

१ त्यागमात्रेति ख. २ विधाविति नास्ति ख. ३ एतदभिव्याहारादेवेति ख.



था । अतः परं साङ्ख्ययोगौ धर्मशास्त्रं च सर्वाङ्गत्वेन प्रतिपादितम् । स्वतन्त्रतया प्रथममीमांसायां निन्दितत्वादन्यत्र प्रवेशमलभमानाः स्मरणशेषा भवन्तीत्याह । एतावान्पुरुषार्थ इत्यर्थः । बुद्धिस्थमेतच्छब्दार्थं विवृणोति—अन्ते नारायणस्मृतिरिति । अयमेव परो जन्मलाभः । स्वधर्मस्य पञ्चाग्निविद्याप्रकारेणोत्तमदेहजननं फलम् । तथा योगस्याऽपि । "शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायत"-इत्यारभ्य "अनेकजन्मसंसिद्धस्ततो याति परां गतिमि"त्युत्तमदेहप्राप्तियोगेनाऽप्यन्तिमो देहः साध्यते । साङ्ख्येऽपि—"बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते" इति वाक्यात् "ज्ञानिभ्योऽप्यधिको मत" इति योगप्रशंसावाक्याच्चाऽन्तिमजन्मसाधकत्वमेव । भगवद्धर्माणामपि व्रतोपवासादीनां भगवदीयदेहसाधकत्वम् । अतोऽन्तिमदेहे सर्वे उपक्षीणाः । न च सोऽपि देहः स्वरूपभूतः सन्फलसाधकः । किन्तु "अन्ते या मतिः सा गतिरि"ति न्यायात् "यं यं वाऽपि स्मरन्भावमि"ति भगवद्वाक्याच्चाऽन्ते भगवत्स्मरणहेतुत्वेन तदुपयोगः । स चेदस्मदुक्तप्रकारेण यस्मिन्कस्मिन्नपि देहे अन्ते भगवत्स्मरणं भवेत् तदा "प्रयान्ति परमां गतिमि"ति न्यायेन स एव देहोऽनन्तिमोऽप्यन्तिमत्वमापद्यमानो लाभत्वेन सम्पद्यते । योगादयश्च स्वस्वमार्गेण दूरफलाः सन्तोऽत्रैव प्रविशन्ति । अतो देहसाधकानां योगादीनां देहस्य चाऽयमेव लाभो यदन्ते नारायणस्मृतिरिति । अतोऽस्य साक्षाद्भगवत्प्रवेशहेतुत्वात्साऽत्र विशेषतया श्रुतिसंवादोऽपेक्षितः । यद्यपि भगवदीयत्वमपि जन्मलाभस्तथापि ततोऽप्ययं परः । ननु "अपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो एवाऽऽद्रियन्ते भगवदीयत्वेनैव परिसमाप्तसर्वार्था" इति वाक्यविरोध इति चेत्? तत्राऽऽह—पुंसामिति । भगवदीयत्वं हि साक्षाद्भगवदनुगृहीतानां पुष्टिमार्गीयाणां जन्मलाभरूपमित्युच्यते । इदं तु साङ्ख्यादिमार्गाणां प्रवाहिकमर्यादामार्गस्थानामपि तथात्वादन्ते या मतिरिति न्यायेनाऽन्ते भगवत्स्मृतौ तत्प्राप्तिर्भवतीति तस्यास्तथात्वमुच्यत इति नोक्तविरोधः । पुंसामिति । साधारणानामपीत्यर्थः । अतो महाफलत्वात्स्मरणस्य सर्वदा भगवान्स्मर्त्तव्य इति सिद्धम् ॥ ६ ॥

इदानीं कीर्तनस्य तथात्वं साधयति—

प्रायेण मुनयो राजन्निवृत्ता विधिषेधतः ।
नैर्गुण्यस्था रमन्ते स्म गुणानुकथने हरेः ॥ ७ ॥

प्रायेणेति । कीर्तनं तु ततोऽप्यधिकम् । येषामन्तिमं जन्म जातं ये च जीवन्मुक्ताः केवलं गुणातीत एव व्यवस्थिताः पुनरावृत्तिसम्भावनारहितास्तेऽपि हरेर्गुणानुकथने श्रवणानन्तरमाविनि कीर्तने परमानन्दरसमुपलभमानाः साधनदशायामेवैवं सुखमेतत्साध्यफलदशायां कीदृशं सुखं भविष्यतीति मन्यमाना रमन्ते । स्मेति प्रसिद्धेः । केचन पुनर्भगवत एव पर्यवसितास्ताः असम्प्रज्ञातसमाधयो वा तस्मिन्नेव सुखे स्थिताः । तेऽपि उत्थानाभावान्न रमन्ते । तद्व्यावृत्त्यर्थं प्रायग्रहणम् । राजन्निति सम्बोधनं तथाभूतवशीकरस्मरणाय । अत्र विषयरसादेव तथा रमणम् । न तु कृतेर्धर्महेतुत्वेन । ते हि कृतिगुणदोषसम्बन्धरहिताः । तदाह—निवृत्ता विधिषेधत इति । विधिसहितान्निषेधान्निवृत्ताः । "द्वयं तथा ब्रह्मणि कर्म नर्च्छती"ति न्यायेन ब्रह्मभूता अपि । "दोषबुद्ध्योभया-

१ पुष्टिजन्मलाभरूपमिति ख. २ तस्मादिति ख. ३ इत्यर्थ इति नास्ति ख.

तीत" इति वाक्यात् । विधिसहितनिषेधकथनेन चैनज्ज्ञापयति "बुधो बालकवत्क्रीडेदि"त्यादि-वाक्यानि यद्यपि विधिरूपाणि तथाप्यस्याऽग्रे निषेधाभावार्थं तेषां ग्रहणमिति । नैर्गुण्ये गुणत्रयातीते स्वस्मिन्नेव स्थिताः । विरोधाभासबोधनार्थं गुणग्रहणम् । तस्मात्स्वतन्त्रपुरुषार्थत्वात्कीर्तने शङ्काऽपि न कर्तव्या ॥ ७ ॥

एवं युक्त्या द्वयं समर्थयित्वा श्रवणस्याऽपि पुरुषार्थसाधकत्वे साधिते युक्तिमूलकमिदमप्रामाणिकमिति शङ्का स्यात् । तन्निवृत्त्यर्थमाह—

इदं भागवतं नाम पुराणं ब्रह्मसम्मितम् ।
अधीतवान्द्वापरादौ पितुर्द्वैपायनादहम् ॥ ८ ॥

इदमिति । पुराणमिति प्रमाणम् । भागवतं नामेति तदवान्तरभेदः । यौगिकश्चाऽयम् । तेन भगवता प्रोक्तं भगवत्प्रतिपादकं भगवत्फलकं चेति । अस्य दुर्बलत्वं वारयति । ब्रह्मणा वेदेन सम्मितम् । परब्रह्म वा सम्यक्मितं ज्ञातं यत्र । गुरुपरम्परामाह—पितुर्द्वैपायनादिति । तदानीन्तनकालस्य प्राणिबुद्धिनाशकत्वाभावमाह—द्वापरादाविति । द्वापरस्याऽऽदौ । तदानीमपि द्विगुणा बुद्धिर्न जाता । अधीतवानिति वेदवन्नियमेनाऽर्थावबोधपूर्वकमध्ययनमुक्तम् । पितुरिति । "पितैवोपनयेत्पुत्रमि"ति न्यायेन उपनयनाध्यापनयो[1]रेककर्तृकत्वादध्ययनप्रकारः सर्वोऽपि सुसम्पन्न इति सूचितम् ॥ ८ ॥

नन्वस्याऽध्ययनस्य वेदवत्सामग्रीश्रवणादिदमपि विचार्यमेव । अतो नाऽनेन केवलेन निर्द्धारितार्थः प्रतिपत्तुं शक्य इत्याशङ्क्याऽऽह—

परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया ।
गृहीतचेता राजर्षे आख्यानं यदधीतवान् ॥ ९ ॥

परिनिष्ठितोऽपीति । ममाऽध्ययनं न बालवत् । किन्तु विचारपूर्वकम् । प्रथमतोऽधिकार एव मया विचारितः । ममेदं कर्तव्यं न वेति । तत्र सर्वस्याऽप्यध्ययनस्य[2]—"आत्मन्यात्मानं परं विचिन्त"-इत्यादिश्रुतिभिरात्मपर्यवसानाद्गुणातीतसमाधिरूपे नित्यं स्थितः सन् । भागवतस्य च रसरूपत्वादनाकृतत्वं ज्ञात्वा यथा ब्रह्मणि लीनो न समाध्यवस्थां भजेत[3] तथा ब्रह्मरसादप्यधिकरसत्वाद्गुणैर्गृहीतचेताः आख्यानमधीतवान् । आकरस्थो यो रसः स स्वस्थाने स्थितः स्वस्मिन्नागतानपि न स्वात्मानं तथा प्रकाशयति । किन्तु केवलधर्मरूपेण प्रकटः । वृक्षे पात्रस्थपेयजले च दर्शनात् । यदा भगवांल्लीलारूपेण प्रकटो जातस्तदा तस्यां लीलायां यो रसः स एव रसो ब्रह्मणि परं नाऽभिव्यक्त इति निश्चित्य किमर्थं तदाशया स्थीयते तदपेक्षयाऽपीदानीमेव रसः कथं न पीयत इति विचारसहितलीलया गृहीतचित्तत्वम् । इममर्थमाह—उत्तमश्लोकेति । उत्तमैः श्लोक्यत इति भगवानुत्तमश्लोकः । गुणकरणादेव भगवतः स्तोत्रमपि जनैः सह सम्बन्धोऽपि । तस्मात्तः कथन भगवत्स्वरूपात्मको रसो निरतिशयत्वेऽपि सातिशयः स्वाऽभिव्यक्तया भोक्तव्य इति येषामिच्छा तैर्लीला श्रोतव्येति निर्द्धार्य मया श्रोतव्यरसाभिज्ञेन आख्यानमधीतमित्यर्थः । राजर्षे इति सम्बोधनं

१ उपनयनाध्यापनयोरिति ख. २ अध्यापनस्येति क. ३ भजेतेति ख. ४ अधिकारसरणादिति क.



यथा ऋषिदशायां राजत्वरसस्फूर्तिर्विका ज्ञानमिश्रत्वान्मान्यताविषयाव तथेदमपीति बुधो सम्मतिरुक्ता । अनेन मर्यादात्वेऽपि पुष्टिरूपमिदमित्युक्तम् ॥ ९ ॥

अतस्तादृशैरेव श्रोतव्यमिति कीर्तनरसास्वादनार्थं परिभ्रमता मया तादृशो भवानुपलब्धः । अतस्तदहं तेऽभिधास्यामीत्याह—

तदहं तेऽभिधास्यामि महापौरुषिको भवान् ।
यस्य श्रद्दधतामाशु स्यान्मुकुन्दे मतिः सती ॥ १० ॥

तदहमिति । तत्पूर्वोक्तमुद्धृतब्रह्मामृतरसभूतमहं कीर्तनरसप्रेप्सुस्ते तादृशाय तुभ्यमभिधास्यामि कथयिष्यामि । अथवा । ते त्वत्सम्बन्धिभूतं तत्त्वयि स्थापयित्वाऽहमेवाऽभितः सर्वतो धास्यामि पास्यामीत्यर्थः । पीतस्य पुना रसास्वादनं निष्काश्याऽन्यत्र स्थापयित्वा पुनः पाने भवति । इदं तु गर्भेपूपलब्धम् । अभितश्च पानं सेचनादिरूपम् । द्वैपायनपदस्याऽप्येतत्सूचकत्वम् । द्विर्गता आपो यत्रेति तद्भवत्वादन्तर्बहिः पाता उक्तः । अन्तःस्थबहिःस्थयोश्च गुणयोः । अतः सूक्ष्मरूपभागवतद्वयं बहिः स्थितं भगवता ब्रह्मणा च प्रकटितमन्तः प्रवेश्य पुनः प्रकटितवान् । अत एवोत्तरया चोपपत्त्या च भगवद्गुणानां स्वरूपविचारे तदुभयमुदाहृतम् । अन्यथा ब्रह्मणाऽनुभूयमानो भगवान् किमिति स्वगुणप्रकाशकं भागवतं वदेत् । सोऽपि नारदाय कथं वदेत् । अत उपपत्त्या भगवदपेक्षया गुणा अधिका निरूपिताः । उत्पत्तौ च अन्तःप्रविष्टा अपि ते गुणाः पुनर्बहिः कृताः । अतस्तेऽभिधास्यामीति सिद्धम् । ननु कथमहमत्राऽधिकारीत्याकाङ्क्षायामाह—महापौरुषिको भवानिति । महापुरुषस्य सम्बन्धी महापौरुषिकः । महापुरुषो हि कीर्त्यः । कीर्तिश्च गुणात् । तदीयत्वं च गुणास्वादनयोग्यतयैव । अन्यथा तादृशधर्मवतः सम्बन्धी न स्यात् । भवानिति । नाऽत्र तिरोहितमिव । एवं भगवद्गुणानामाधिक्यमुक्त्वा तेषां फलमाह—यस्येति । यस्याऽऽख्यानस्य सम्बन्धिनी या श्रद्धा तद्युक्तानां मोक्षदातरि स्वानन्ददायके सती पतिव्रतारूपा तदेकरसास्वादिनी मतिर्भवति ॥ १० ॥

एवं स्वरूपं फलं चोक्त्वा तत्र रसमात्रविचारतां दूरीकर्तुं सर्वेषामेव विचारकाणां सम्मतिमाह—

एतन्निर्विद्यमानानामिच्छतामकुतोभयम् ।
योगिनां नृप निर्णीतं हरेर्नामानुकीर्त्तनम् ॥ ११ ॥

एतदिति । अत्र सर्वैरेवैतन्निर्णीतम् । एतत् भगवद्गुणानुकथनरूपम् । निर्विद्यमानानां विरक्तीच्छूनां विरक्तिं वाऽन्विच्छताम् । अकुतोभयं ब्रह्मानन्दमिच्छताम् । तदर्थं योगादिकं च कुर्वताम् । एतन्निर्णीतं यद्धरेर्नामानुकीर्तनम् । तैर्वा तेषामर्थे वा । प्रथमतो विरक्ता ब्रह्मानन्दप्रेप्सवस्तद्ब्रह्म योगेनाऽनुभवन्तस्तादृशं रसं तत्राऽननुभूय तत्प्रकटस्थानं भगवन्नाम । इत्थिकारपूर्वकेऽर्थं दूरीकुर्वन्नेव तद्रसं पाययतीति । तन्नाम्नां पूर्वोक्तप्रकारेण तद्रसाभिव्यक्तियुक्तानां प्रथमं पानं कृत्वा पश्चादनुकीर्तनं कर्तव्यमिति शास्त्रार्थनिर्द्धारः । अतो भवानहं च महारसे पतितावित्युभयोरुत्तमाधिकारिणोः परमोत्साहः सूचितः ॥ ११ ॥

१ अथ चेति क. ख.

एवं गुणकथनश्रवणरसं श्रुत्वा स्वस्य शापेन शीघ्रमरणमनुस्मृत्य तादृशरसास्वादनाभावाद्विषीदन्तं राजानं प्रत्याह—

किं प्रमत्तस्य बहुभिः परोक्षैर्हायनैरिह ।
वरं मुहूर्त्तं विदितं घटेत श्रेयसे यतः ॥ १२ ॥

**किं प्रमत्तस्येति** । साधनीभूतमायुर्नाऽस्तीति विषादो न कर्तव्यः । यथा साकल्यस्याऽधिकारिणो रसाभिव्यक्तिस्तथा जीवनेयत्तापरिज्ञानरहितस्याऽनधिकारिणो नाऽभिव्यक्तिः । अतो जीवनेयत्ताज्ञापकः शाप उत्तम एव । अल्पता चोत्तमा । उत्तरावधेर्नैकट्यात् । आस्वाद्य परमरसं तस्मिन् रसे प्रवेशात्र पश्चात्तापः । अतः प्रमत्तस्य स्वार्थेऽनवहितस्य बहुभिरपि हायनैर्वर्षैरज्ञातैर्न किञ्चित्फलम् । ज्ञातं तु मुहूर्तमपि वरं पुरुषार्थसाधकम् । यतो ज्ञानात्तेनाऽपि क्षणेन पुरुषार्थसाधनाय घटेत ॥ १२ ॥

अतः शत्रूणामायुरिवाऽज्ञातं स्वायुर्न प्रयोजकं किन्तु ज्ञातमेवेत्यत्र दृष्टान्तमाह—

खट्वाङ्गो नाम राजर्षिर्ज्ञात्वेयत्तामिहाऽऽयुषः ।
मुहूर्त्तात्सर्वमुत्सृज्य गतवानभयं हरिम् ॥ १३ ॥

**खट्वाङ्गो नामेति** । खट्वाङ्गनामा दिलीपो देवपक्षपाती भूत्वा दैत्यान् हत्वा देवैर्वरं वृणीष्वेत्युक्त आयुषः परिमाणं ज्ञात्वा तदनुसारेण वरं प्रार्थयिष्यामीति विचिन्त्याऽऽयुःपरिमाणं पृष्टवान् । ततस्तद्वचनान्मुहूर्तमात्रं ज्ञात्वा भूमौ समागत्याऽग्रे पालत्वेन हरेरुक्तत्वात्तदतिरिक्तं सर्वं परित्यज्य अभयरूपं हरिं स्मरणेन गतः सन् तं प्राप्तवानित्यर्थः । तस्मात्कालभूयस्त्वं नाऽपेक्ष्यत इति भावः ॥ १३ ॥

तव तु मुहूर्तानां शतद्वयमधिकं चाऽस्ति । एकेनाऽपि मुहूर्तेन कार्यं सेत्स्यति । तथापि पूर्वमस्माभिरुक्तं श्रवणं यावदशविधलीलायुक्तभगवद्विषयकमुपकल्पयेत्याह—

तवाऽप्येतर्हि कौरव्य सप्ताहं जीवितावधिः ।
उपकल्पय तत्सर्वं तावद्यत्साम्परायिकम् ॥ १४ ॥

**तवाऽपीति** । यथा तस्य ज्ञातमायुरेवं तवाऽपीति । एतर्हि इदानीमपि । जीवितावधिः सप्ताहम् । सप्तदिनमात्रं जीवितस्याऽवधिः । अतस्तावत्पर्यन्तं सर्वमेव परलोकसाधनमुपकल्पय सम्पादय । सर्वं परित्यज्य भगवत्कथां शृण्वित्यर्थः । केचनाऽग्रे वक्ष्यमाणमाहुः । तत्प्रमेयविरोधादुपेक्ष्यम् ॥ १४ ॥

एवं सपरिकरं प्रथमप्रश्नोत्तरमुक्तं सर्वात्मना किं कर्तव्यमित्यस्य (?) । "अन्ते नारायणस्मृतिरि"ति च "गतवानभयं हरिमि"ति च वाक्याभ्यां "सर्वमुपकल्पये"त्यनेन चाऽन्तकालकर्तव्यमुपदिष्टमेव । सर्वात्मना सर्वसमये तदेव कर्तव्यं यतः । तथापि राज्ञश्चेद्धृदये तस्योत्तरं

१ परिणाममिति ख. २ परिणामिति ख. ३ अग्रे पालत्वेन हरेरुक्तत्वात्तदतिरिक्तमित्ययमंशो नास्ति ख.



देयमित्याकाङ्क्षा स्यात्तदाऽस्माभिरुच्यमानं श्रवणं न सम्यग्धृदये भासेतेति विशेषेणाऽन्तकालकर्तव्यं वदन् पूर्वोक्तस्य श्रवणस्य फलोपकार्युत्तराङ्गे मनननिदिध्यासने निरूपयति—

अन्तकाले तु पुरुष आगते गतसाध्वसः ।
छिन्द्यादसङ्गशस्त्रेण स्पृहां देहेऽनु ये च तम् ॥ १५ ॥
गृहात्प्रव्रजितो धीरः पुण्यतीर्थजलाप्लुतः ।
शुचौ विविक्त आसीनो विधिवत्कल्पितासने ॥ १६ ॥
अभ्यसेन्मनसा शुद्धं त्रिवृद्ब्रह्माक्षरं परम् ।
मनो यच्छेज्जितश्वासो ब्रह्मबीजमनुस्मरन् ॥ १७ ॥

**अन्तकाल इति** । मननं नाम युक्तिभिरनुचिन्तनम् । तत्र भगवाञ्छ्रोतव्य इत्युक्तम् । तत्र को भगवानित्याकाङ्क्षायां सर्वात्मेत्यादिपदैः सर्वपुरुषार्थरूपः सर्वफलसाधकः सर्वमेव भगवानित्युक्तं भवति । तत्र कथं सर्वं भगवानित्याकाङ्क्षायां "आत्मैवेदं सर्वम्" "ब्रह्मैवेदं सर्वम्" "अहं हरिः सर्वमिदं जनार्दन" इति वाक्यानां प्रमाणानां विद्यमानत्वेऽपि लौकिकयुक्त्यपेक्षायां सर्वस्याऽपि जगतो भगवच्छरीरे सन्निवेश उच्यते । पुरुषश्च भगवानित्यविवादम् । "पुरुषो ह वै नारायणोऽकामयते"ति श्रुतेः । "पुरुष एवेदं सर्वमि"ति च । तत्र सर्वस्याऽपि यावत् पुरुषशरीरे निवेशनं न क्रियते तावत् सर्वत्वं पुरुषस्य न मन्येत । अतः पुरुषशरीरे निवेशनं कथयति । किञ्च । पुरुषस्य शरीरे सर्वं वचनेन निवेशितमपि यद्यनुभवेन निश्चयादि स्यात्तदापि न मन्येत । अनस्तद्ध्यानरूपेण वदति । ध्यायमानस्य कदाचित्साक्षात्कारो भवेत्तदा तस्य शरीरे सर्वं पश्यन्निःसन्दिग्धो भवेदिति मननं निदिध्यासनावधि साक्षात्कारफलकं तत्त्वनिरूपणार्थमुपदिशन् "पाक्षिकोऽपि दोषः परिहरणीय" इति न्यायेन को वेदाऽन्तकाले स्मरणे क्रियमाणे ध्यानान्तरमपि भवेत्तदा तदेव भवेदिति तद्दोषपरिहारार्थं चित्तवृत्तिनिरोधरूपं योगं वदन् तदङ्गभूतध्यानविषयत्वेन भगवत्स्वरूपमपि वदन्नन्तकालकर्तव्यप्रश्नोत्तरमप्याह । तुशब्दस्त्वेतत्कर्तव्यमिति पक्षं व्यावर्तयति । पूर्वपक्षमतमेव किञ्चिदुच्यत इति वा पक्षं व्यावर्तयति । अन्तकालो मरणकालः । कालस्याऽन्तो वा वयोरूपस्य । राजदन्तादित्वात्परनिपातः । अन्तकस्य वा कालः । समागत इति ज्ञाते प्रथमसाधनं गतसाध्वस इति तदर्थं पूर्वोक्तं कर्तव्यम् । तदनु असङ्गशस्त्रेण वैराग्यशस्त्रेण देहे तमनु ये देहानुवर्तिनो गृहादयस्तेषु च स्पृहामभिलाषं ममैते भवन्तु तैःकृतोपकारो वेति छिन्द्यात् अन्तःकरणे तेषामपेक्षां त्यजेत् । इदं द्वितीयम् । ततो गृहात्प्रव्रजेत् । संन्यासं गृहीत्वा गच्छेत् । तृतीयम् । ततः शीतादिबाधायां धैर्यं चतुर्थम् । एते यमा उक्ताः । नियममाह—पुण्यतीर्थजलाप्लुत इति । पुण्यं जलमुद्धृतमपि भवतीति तीर्थपदम् । पुण्यपदेन काम्यतीर्थपरित्यागः । पुण्यरूपं तीर्थं गङ्गा वा । तीर्थपदेन घट्टो वा । "तीर्थं हि ते तां प्रावेदा-

१ मन्यत इति ख. पुरुषस्य शरीरे इति क. २ अन्तकालस्येति ख. ३ एवं तत्कृतेत्यादि क.

यन्त्री"ति श्रुतेः। आप्लुतः सम्यक् स्नातः। आसनमाह। शुचौ पवित्रे। विविक्ते एकान्ते। विधिवत् चैलाजिनकुशोत्तरप्रकारेण कल्पिते आसने आसीनः। अभ्यसेदिति सम्बन्धः। प्राणायाममाह— **अभ्यसेदिति**। सबीजप्राणायामे शीघ्रं वायुः स्थिरो भवति। पवनं च वायोश्चलनम्। अनित्रिवृद्ब्रह्माक्षरं अकारोकारमकारैर्वृतं महद्धितं वर्णत्रयात्मकमेकं प्रणवात्मकं निर्विकारं मङ्गलरूपं च। परम्। परापश्यन्तीमध्यमावैखरीप्रकारेषु प्रथमम्। अवर्णात्मकं वा। तदभ्यसेत्। तेन वायुजयो भवति। ततः प्रत्याहारमाह— **मनो यच्छेदिति**। जितश्वासमनेव मनोनियमनम्। श्वासजयश्च ब्रह्माक्षरेण। अतो ब्रह्मबीजमनुस्मरञ्जितश्वासो मनो यच्छेदिति सम्बन्धः॥ १५॥ १६॥ १७॥

प्रत्याहारे मनसश्चेन्द्रियाणामन्योन्यहेतुहेतुमद्भावेन भेदं निरूपयति—

**नियच्छेद्विषयेभ्योऽक्षान्मनसा बुद्धिसारथिः।**
**मनः कर्मभिराक्षिप्तं शुभार्थे धारयेद्धिया॥ १८॥**

**नियच्छेदिति**। मनसा इन्द्रियाणि विषयेभ्यो नियच्छेत्। विषयाणां दुष्टत्वबुद्धिर्मनसेन्द्रियनियमने सारथिः सहायः। पूर्वं मनसः क्रिया निवारिता प्राणायामेन। अधुना कर्मभिराक्षिप्तं प्रत्याहाररूपैः कर्मभिराक्षिप्तं आ समन्ताद्विषयेभ्यो दूरीभूतम्। विषयज्ञानाननुकूलमिति यावत्। तादृशं मनः शुभरूपे अर्थे धिया सर्वावयवव्यापिकया बुद्ध्या मानसीं मूर्तिं परिकल्प्य तत्र सर्वावयवस्थितं मनो धारणारूपं कुर्यात्। सर्वावयवे मनसः स्थापनं धारणा। एकावयवे मनोधारणं ध्यानमिति भेदः॥ १८॥

ध्यानमाह—

**तत्रैकावयवं ध्यायेदव्युच्छिन्नेन चेतसा।**
**मनो निर्विषयं युक्त्वा ततः किञ्चिन्न संस्मरेत्॥ १९॥**

**तत्रैकावयवमिति**। तत्र मनोगृहीतमूर्तावेकमवयवं ध्यायेत्। अव्युच्छिन्नेन पूर्वध्यातावयवसंश्लिष्टेन। अनेन खण्डशो ध्यानं निवारितम्। एकमप्यवयवमितरावयवैर्यथायोग्यं संश्लिष्टमेव ध्यायेत्। एवं ध्याने क्रियमाणे यदा मनो विषयवासनां त्यजति तदा इममपि विषयं त्याजयित्वा सर्वथा निर्विषयं युक्त्वा योगसहितं कृत्वा। सर्ववृत्तिनिरोधं कृत्वेत्यर्थः। ततः किमपि न संस्मरेत्। योगसाधितप्रयत्नेन चित्तं निरुद्ध्य तिष्ठेत्॥ १९॥

ततो यद्भवति तदाह—

**पदं तत्परमं विष्णोर्मनो यत्र प्रसीदति।**
**रजस्तमोभ्यामाक्षिप्तं विमूढं मन आत्मनः।**
**यच्छेद्धारणया धीरो हन्ति या तत्कृतं मलम्॥ २०॥**

**पदमिति**। एवं चित्तनिरोधे क्रियमाणे तच्चित्तं स्वयमेव प्रसीदति ध्यानाकारेण परिणमति। तस्य

१ अविकारमिति ख. २ प्रत्याहारे मनसश्चेत्यादि ख. ३ दूरीकृतमिति ख.



परिणामस्य य आधारस्तद्विष्णोः परमं पदम्। अन्यथा स्थलान्तरे निरुद्धं तदभिव्यक्तिं कुर्यादिति देहात्। अतो यत्र निरुद्धं प्रसीदति तदाधारसामर्थ्यादेव प्रसीदतीति प्रसादाधारो भगवत्पदमेव। चित्तप्रसादे यत्प्रकाशते तज्जीवात्मस्वरूपं पुरुषोत्तमस्य स्थानम्। "तस्याः शिखाया मध्ये परमात्मा व्यवस्थित" इति श्रुतेर्वह्निशिखात्वेनाप्युच्यमाना जीवकलैव। अथवा। अक्षरस्य भगवत्पदत्वात्तदंशो जीवोऽपि भगवत्पदम्। एवं यावत्कालं प्रसन्नं मनस्तिष्ठति तावत्तथैव स्थातव्यम्। "रजः सत्त्वं तमश्चैवे"ति न्यायेन कारणीभूतं रजस्तमो वा कालप्रेरितं सत् मनो विक्षिपति विमूढं वा करोति। तदा योगबलेनाऽन्येषामपि मनांसि भगवत्पदे भासन्ते। सर्वेषां जीवानां तत्रैकीभावात्। तत्राऽन्यमनोविक्षेपे न किञ्चित्कुर्यात्। यदा त्वात्मनो मनः कर्मणि क्षिपेद्रजो मूढं वा कुर्यात्तमस्तदा तद्दोषपरिहारार्थं पुनर्धारणया मनो यच्छेत्। तत्र नियमनसमये वासनया रजो विषयानुपस्थापयति। तमश्च निद्रादिकम्। तत्रोभयत्राऽपि धीरो भवेत्। तादृशी च धारणा कर्तव्या यया रजोदोषस्तमोदोषश्च दूरीक्रियते। चण्डिकाशिवादिधारणाव्यावृत्त्यर्थमुक्तम्— **हन्ति या तत्कृतं मलमिति**॥ २०॥

किञ्च। तादृशी धारणा कर्तव्या यया धारणया योगः सिद्ध्येत्। सन्ति च बहवो योगाश्चित्तनिरोधकाः कर्मादयः। तथापि भक्तिलक्षणो योगो यया सम्पद्यते तां धारणां कुर्यादित्याह—

**यत्र सन्धार्यमाणायां योगिनो भक्तिलक्षणः।**
**आशु सम्पद्यते योग आश्रयं भद्रमीक्षतः॥ २१॥**

**यत्रेति**। यत्र विषये सर्वावयवसंस्थितायां चित्तवृत्त्यां सत्याम्। योगिनश्चित्तनिरोधकस्य। भक्तिरेव लक्षणं यस्य योगस्यादित्सतदाऽपि भक्तिर्न व्यभिचरति, भक्त्यैव च तत्प्रसिद्धिस्तादृशो योगः सम्पद्यते। ननु योगस्य कस्माद्भक्तिलक्षणत्वम्? तत्राऽऽह— **आश्रयं भद्रमीक्षत इति**। भद्रं मनोहरम्। आश्रयं धारणायाः। भगवद्रूपमिति यावत्। तदीक्षतस्तद्ध्यायतः। भगवद्ध्याने भक्तिलक्षणो योगः सम्पद्यत इत्यर्थः॥ २१॥

तत्र राजा विशेषं पृच्छति—

राजोवाच—

**यथा सन्धार्यते ब्रह्मन् धारणा यत्र सम्मता।**
**यादृशी वा हरेदाशु पुरुषस्य मनोमलम्॥ २२॥**

**यथेति**। इयं धारणा कथं सन्धार्या। किं मानसीं मूर्तिं कृत्वा तत्र मनः स्थापनीयम्। आहोस्वित्कृतां भगवन्मूर्तिं स्मृत्वा। किञ्च। यत्र सम्मता यस्यां मूर्तौ सम्मता। अनन्तमूर्तित्वाद्भगवतो यस्यामेव मूर्तौ सर्वेषामेव योगिनां सम्मतिरस्ति। किञ्च। यादृशी वा। यादृक्प्रकारा। रूपप्राधान्येन धर्मप्राधान्येन वा। स्थूला सूक्ष्मा वा। निराकारा साकारा वा। शान्ता वा साग्रहा वा। तत्र यादृशी पुरुषस्य मनोमलं हन्ति तत्कथयेत्यर्थादुक्तं भवति। गुरोः सन्निधाने नियोगोऽनुचित इत्यभिप्रायबोधकवाक्यशेषमुक्त्वा नियोगांशं नोक्तवान्॥ २२॥

१ तमश्चेति न्यायेनेति ख.

तत्रोत्तरमाह—

श्रीशुक उवाच—

जितासनो जितश्वासो जितसङ्गो जितेन्द्रियः ।
स्थूले भगवतो रूपे मनः सन्धारयेद्धिया ॥ २३ ॥

जितासन इति । यादृशात्प्रश्नोत्तरम् । आसनादिजयसहिता सा मनोगतं हन्ति । जितसङ्गः । जितो विषयसङ्गो येन । अनेन मनोनियमनमुक्तम् । यत्र सम्मतेत्यस्योत्तरमाह—स्थूल इति । धिया निश्चयात्मिकया बुद्ध्या ॥ २३ ॥

ननु भगवतः कथं स्थूलं रूपम् । व्यापकन्तु फलरूपं न धारणामर्हतीति । अन्यानि मत्स्यादिरूपाण्यनिर्द्धारितपरिमाणानि । अतः स्थूलं किमित्याकाङ्क्षायामाह—

विशेषस्तस्य देहोऽयं स्थविष्ठश्च स्थवीयसाम् ।
यत्रेदं दृश्यते विश्वं भूतं भव्यं भवच्च सत् ॥ २४ ॥

विशेषस्तस्य देहोऽयमिति । विशेषः पृथिवी । सर्वे विशेषास्त्वद्या इति । "अतो विशेष" इति वाक्यात् । विशिष्टः शिष्टो यत्रेति वा । वेः कालस्य शेषो वा । अप्रत्यानां स्वेच्छया कालग्रासात् । अत एव भगवतो देहो विशेषः । कालस्य भगवच्चेष्टात्वात्तदभावे देहो भवत्येव । देहात्मनोः संयोगः सम्बन्ध इति साङ्ख्याः । तदेकदेशिनो योगिनश्चाऽध्यास इति । आवेश इत्यपरे । अयोगोलकवत् । अहङ्कारेणाऽहमिति स्वीकार इत्यपरे । ते परपाटेऽपि पक्षा भगवतो देहस्य च सम्बन्धप्रतिपादका न भवन्ति । किन्तु स्वस्वामिसम्बन्ध इति षष्ठ्या सम्बोधयति—तस्येति । "दिह उपचये" इति धातोरच्प्रत्यये कृते देह इति भवति । भगवतोऽयमुपचय इत्यर्थः । स्वरूपस्थितेनैव यद्यपि सर्वं कर्तुं शक्यते तथापि सर्वेषां पोषार्थं स्वरूपादप्यधिकमुपदानार्थमुपचितः सन् पुष्टः सन् सर्वं करोतीति तदेव रूपं भगवतो धारणाविषयो भवतीति सर्वेषां सम्मतिः । अयमित्यपरोक्षविषयः । यद्यप्येकदेश एव तथा तथापि तेनेतरानुमानं सुकरमिति इतरावयवज्ञानसहकृता प्रत्यक्षसामग्र्येव विशिष्टज्ञानं जनयतीत्ययमित्युक्तम् । स्थविष्ठश्च स्थवीयसामिति । प्रथनात्पृथिवी स्थविष्ठा स्थूला वा । अत्र शास्त्रे विरलावयवाः सूक्ष्माः । संहतावयवाः स्थूलाः । अत एवाऽऽकाशादयः सूक्ष्मास्तथा व्यवहाराऽगोचराः । पृथिवी तु सर्वव्यवहारगोचरा स्थूला । संहननशचिनैरवयवैर्गुणोऽवयवी प्रकटीक्रियते । तथा देहेनाऽपि भगवान्प्रकटीक्रियत इति ध्यानविषयतायां भगवानपि प्रकटो भवतीति तस्य स्थूलत्वनिरूपणम् । बुद्धौ प्रविष्टो वा बुद्धिमपि विग्रहयतीति पश्चात्स्थूला बुद्धिः सूक्ष्मान्विषयान्न ग्रहीष्यति । तेन मनसो रजस्तमःकृतो दोषो निवर्तितो भवति । चकारात्सुन्दरश्च । सर्वविशेषसमवायात् । तेन तत्र बुद्धिः स्थिरा भवति । स्थवीयसामाकाशादीनां मध्ये । उपचितावयवत्वादिति । अत एव "आकाशशरीरं ब्रह्मे"ति "वायुरात्मे"ति "ज्योतिषां ज्योतिरि"ति "तोयात्मने नम" इति वाक्यैः सर्वाण्येव भूतानि भगवच्छरीरत्वेनोक्तानि । तथाप्यस्मादेव विशेषादस्य धारणाविषयत्वम् । किञ्च । सर्वाणि रूपाण्यत्र सम्भवन्ति । इदं तु नाऽन्यत्र सम्भवतीत्यस्य ध्यानास्पदत्वम् । तदाह—यत्रेति ।



सर्वमेव विश्वमत्र व्यज्यते समुद्राः सूर्यो वायुराकाशश्च । अन्येषामपि सूक्ष्माणामेतदवान्तरभूतानामहङ्कारादीनाञ्च स्वयमेवाऽत्र निवेशं वक्ष्यति—"पातालमि"त्यादिना । किञ्च । कालोऽप्यत्र निविशते[1] कार्यद्वारेति तदाह—भूतं भव्यं भवच्चेति । अनुदयास्तमयरूपस्य कालस्य भूतत्वादिसाधकत्वम् । केनचिन्निमित्तेनाऽतीतत्वादिधर्मसम्बन्धात् । तत्रोत्पत्तिस्थितिविनाशलक्षणगुणत्रयप्रेरणात्त्रयात्वम् । अतः स्वकार्यसहितः कालो भगवच्चेष्टारूपोऽत्र स्पष्टतया प्रकाशत इति सर्वमेव भगवत्कार्यमत्र स्पष्टतया ज्ञातं भवति । भूतं जातम् । भव्यम् भाव्यम् । भवत् वर्तमानरूपम् । चकारात्कालत्रयसम्बन्धरहितमपि प्राणजीवादिस्वरूपमत्र दृश्यत इत्यर्थः । यदिति प्रसिद्धम् । नाऽत्र तिरोहितमिव किञ्चित् । अतो विशेषतः प्रमाणं न वक्तव्यमिति भावः ॥ २४ ॥

ननु जडस्य कथं ध्येयत्वम् । ध्यातस्य फलदानावश्यम्भावात् । क्रियान्तरवद्ध्यानस्य नाऽदृष्टद्वारा फलजनकत्वम् । ध्येयसाक्षात्कारस्यैव दृष्टत्वात् । भगवत्सम्बन्धाद्ध्येयत्वेऽपि "गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः" इति न्यायेन भगवानेव कथं न ध्यानविषयीक्रियते । तत्राऽऽह—

आण्डकोशे शरीरेऽस्मिन्सप्तावरणसंयुते ।
वैराजः पुरुषो योऽसौ भगवान्धारणाश्रयः ॥ २५ ॥

आण्डकोश इति । नेदं ध्यानविषयत्वेन निरूपितं किन्तु तदाश्रयत्वेन । अनेन "यत्र सन्धार्यते" इत्यपि निरूपितं भवति । भगवान् साक्षाद्विषयत्वेन आण्डकोशस्तु तदाधारत्वेन । यद्यपि स्वात्मन एव जीवस्याऽऽधारत्वं युक्तं तदप्यग्रिमाध्याये मतान्तरत्वेन वक्ष्यते । तथापि बहिः स्थितो भगवानन्तः प्रवेशनीय इति स्नेहाधिक्यसिद्ध्यर्थमात्मनो महत्त्वसिद्ध्यर्थं च प्रयत्नसाफल्याय च स्वात्मनि सिद्धभगवद्रूपापेक्षया सिद्धसाधनत्वदोषाभावात्स्मरणमात्रविषयत्वाच्च ध्यानसिद्ध्यर्थं ब्रह्माण्डाधार एव भगवान्विषयत्वेन निरूप्यते । अण्डसम्बन्धी आण्डः । स एव कोशो मुकुलितकमलरूपः । स एव शरीरम् । "भूतैर्यदा पञ्चभिरात्मसृष्टैरि"ति वाक्यात्स्वार्थं भगवाञ्छरीरमिदं कृतवान् । अतोऽत्र कृतं तस्य भोगाय भवति । भोगायतनत्वाच्छरीरस्य । अत आत्मापेक्षयाऽप्ययमेवाऽऽधारत्वेन ध्येय इति भावः । कोशरूपत्वादस्यैतद्देहवत्[2]सच्छिद्रता निवारिता । तत्रैव मकरन्दपानञ्च । अस्य शरीरस्य सुरक्षितत्वं कथयन्भगवद्व्यतिरिक्तस्यैव सर्वस्य तत्त्वसमूहस्याऽत्र निवेशमाह—सप्तावरणसंयुत इति । सप्त यान्यावरणानि तैः संयुक्ते । संयुक्तपदान्मध्ये शून्यं स्थानं निवारितम् । जलादिप्रकृत्यन्तानि सप्ताऽऽवरणरूपाणि । तत्र यो वैराजः पुरुषो द्वितीयपुरुषरूपो यः सर्वत्र शास्त्रे प्रसिद्धः असावित्यनुभवसिद्धश्च स एव वैराजो विराट्शरीरे प्रविष्टः । न तु जीवविशेषः कश्चित् । तदाह—भगवानिति । यो वैराजः पुरुष उक्तः स एव भगवान् योगिप्रत्यक्षसिद्धः । अत एव प्रचुरतराभ्यासादसाविति प्रत्यक्षतया निर्देशः । स तु धारणाया आश्रयः । तस्याऽऽश्रयः कोशः । यथा अयोगोलकस्थो वह्निः । यथा वा कमलस्थितो भ्रमरः । यथा वा प्रासादस्थितो राजा । आश्रयपदेन धारणायाः फलं स्वशरणमागतायाः सर्वथा दास्यतीति सूचितम् ॥ २५ ॥

---

१ निविशति इति क. २ उत्तरदेहवदिति ख.

इदानीं सर्वेषामेव सूक्ष्माणां साधारण्यां तत्र निवेशनं वक्तुं भगवत आधारत्वायाऽऽधाराणामवयवत्वं निरूपयति पातालमित्यादिभिः—

पातालमेतस्य हि पादमूलं पठन्ति पार्ष्णिप्रपदे रसातलम् ।
महातलं विश्वसृजोऽथ गुल्फौ तलातलं वै पुरुषस्य जङ्घे ॥ २६ ॥
द्वे जानुनी सुतलं विश्वमूर्तेरूरुद्वयं वितलं चाऽतलं च ।
महीतलं तज्जघनं महीपते नभस्तलं नाभिसरो गृणन्ति ॥ २७ ॥
उरःस्थलं ज्योतिरनीकमस्य ग्रीवा महर्वदनं वै जनोऽस्य ।
तपो रराटीं विदुरादिपुंसः सत्यं तु शीर्षाणि सहस्रशीर्ष्णः ॥ २८ ॥

चतुर्दश लोकाश्चतुर्दशभेदेनाऽवयवविन्यासत्वमापन्ना ध्यानविषयत्वमापद्यन्ते । न तु भगवदवयवा लोकत्वमापन्नाः । तथा सत्युत्तमस्य हीनभावादध्येयत्वमेव स्यात् । तदाह । पातालं सर्वाधोलोकः । पादमूलं पादारक्तस्थानम् । तथा सति वासुकिप्रभृतीनां रक्तत्वमुपपद्यते । अत्र प्रमाणमाह—पठन्तीति । वेदवदनादिसिद्धेयं प्रसिद्धिः । एतस्य शरीरस्य । भगवत्पक्षे साकारब्रह्मणश्चात्र व्यासत्वात- ज्ज्ञानमापन्नमिति । पार्ष्णिश्चरणपश्चाद्भागः । प्रपदं पादाग्रम् । प्रत्याहारेण तन्मध्यभागश्च । रसातलं तदुपरितनो लोकः । गुल्फौ पादग्रन्थिरूपौ । महातलं रसातलादुपरितनो लोकः । एवमग्रेऽपि पूर्वनि- रूपितस्योपरितनो लोकः पश्चान्निरूप्य इति । महातलस्य महत्त्वप्रयोगे हेतुमाह—विश्वसृज इति । सत आरभ्य सृष्टेराधिक्यात् । तस्य भिन्नखण्डत्वनिरूपणायाऽथशब्दः । एतावता पञ्चात्मकः पुरुष इति निरूपितो भवति । तत्र लोकद्वयमेकः खण्डः । अथ भिन्नप्रकारेण । गुल्फौ । त्रयाणामपि गुणानां पञ्च भेदा अप्युक्ता भवन्ति । केवलं तमः, रजस्तमः, रजः, रजःसत्त्वम्, सत्त्वमिति । तत्र केवलं तमो निरूपितम् । महातलादिसुतलपर्यन्तं द्वितीयः खण्डः । तत्र जङ्घे तलातलम् । पुरुषस्येति लोमशत्वम् । जङ्घे जङ्घाद्वयम् । उभयावयवत्वात्तत्रापि पदद्वयप्रयोगः । आधारत्वेन वा । सुतलं द्वे जानुनी । जानुनीपदेनैव जानुद्वये प्राप्ते पुनर्द्विपदं तस्य लोकस्य द्विरूपताज्ञापनार्थम् । अत एवाऽग्रे सुतलं शुद्धमिति वक्ष्यति । साधारणस्थानं स्वस्थितिस्थानञ्च । यत्र बलिस्तिष्ठति तच्छुद्धम् । अत एव तस्य प्रदर्शितं विश्वरूपमनुस्मारयति—विश्वमूर्तेरिति । वितलमतलञ्च ऊरुद्वयम् । एकमतलम् । एकं वितलम् । केचनाऽग्रपश्चाद्भावभेदेन द्वयमपि द्वयमाहुः । तल्लौकिकपुरुषन्यायेन तथा सम्भवेऽपि पश्चिमे ततोऽधस्तादित्यभावाच्चिन्त्यम् । अत्र चकारद्वयस्य विद्यमानत्वात्तथात्वं वा । तत्राऽप्यवान्तरभेदो वा । महादेवक्रीडास्थानं मयपुत्रस्थानञ्च स्वर्गापररूपम् । महीतलं पृथिवी । तस्य भगवतो जघनम् । उत्थितपुरुषस्यैवं व्यवस्था । ऊर्ध्वगोलस्य च । ध्येयस्तु स एव । महीपतेरिति राजरूपेणाऽत्र भ- गवत्स्थितिरुक्ता । नभस्तलमन्तरिक्षम् । नाभिसर इत्यन्तरिक्षे जलस्थितिरुक्ता । प्रत्यक्षविरोधेऽपि वेद- प्रमाणसिद्धमित्याह—गृणन्तीति । “सलिलं वा इदमन्तरासीद्यदतरन्तत्तारकाणां तार- कात्वमि”ति श्रुतेः । अत्र भगवन्मूर्तेरभावाद्बुद्धालयत्वाच्च नाभिकमलोद्भवसम्भवाच्च सरस्त्वेनैव निरू- पणम् । उरः वक्षस्थलम् । ज्योतिरनीकमादित्यादिध्रुवान्तं ज्योतिश्चक्रम् । तदस्य । तत्र नाऽन्यच्चि- न्तनीयमित्युक्तं भवति । शिशुमारस्य भगवत्त्वात् । हृदये च जीवस्थानं भवति । अतो ज्योतिरनीके शिशुमारे



भगवान् ध्येयः । ग्रीवा महर्लोकः । वदनं जनलोकश्चिबुकादिभ्रूपर्यन्तम् । अयमपि कण्ठं भगवतः । नित्यसुखस्थानत्वात् । तदग्रे वक्ष्यामः । तपोलोको रराटी ललाटं शून्यस्थानम् । स्त्रीपदप्रयोगः शृङ्गाराधारत्वख्यापनार्थः । आदिपुंस इति । तपसा तत्प्राप्यत इति । सत्यं तु शीर्षाणि । शिरसां बहुत्वे हेतुः—सहस्रशीर्ष्ण इति । “सहस्रशीर्षे”ति तस्य श्रौतत्वज्ञापनाय । तत्र ब्रह्मादीनां बहूनां लोकभेदात्सर्वेषां मूर्धन्यतासिद्धौ मूर्धानं यन्तीति शीर्ष्णां बहुवचनम् ॥ २६ ॥ २७ ॥ २८ ॥

एवं लोकानां सन्निवेशमुक्त्वा तत्रत्यानां जीवानां सन्निवेशमाह इन्द्रादय इत्यादिना—

इन्द्रादयो बाहव आहुरुस्राः कर्णौ दिशः श्रोत्रममुष्य शब्दः ।
नासत्यदस्रौ परमस्य नासे घ्राणश्च गन्धो मुखमग्निरिद्धः ॥ २९ ॥
द्यौरक्षिणी चक्षुरभूत्पतङ्गः पक्ष्माणि विष्णोरहनी उभे च ।
तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यमापोऽस्य तालू रस एव जिह्वा ॥ ३० ॥
छन्दांस्यनन्तस्य यशो गृणन्ति दंष्ट्रा यमः स्नेहकला द्विजानि ।
हासो जनोन्मादकरी च माया दुरन्तसर्गो यदपाङ्गमोक्षः ॥ ३१ ॥
व्रीडोत्तरोष्ठोऽधर एव लोभो धर्मः स्तनोऽधर्मपथश्च पृष्ठः ।
कस्तस्य मेढ्रं वृषणौ च मित्रौ कुक्षिः समुद्रा गिरयोऽस्थिसङ्घाः ॥ ३२ ॥
नद्योऽस्य नाड्योऽथ तनूरुहाणि महीरुहा विश्वतनोर्नृपेन्द्र ।
अनन्तवीर्यः श्वसितं मातरिश्वा गतिर्वयः कर्म गुणप्रवाहः ॥ ३३ ॥
ईशस्य केशान्विदुरम्बुवाहान्वासस्तु सन्ध्ये कुरुवर्य भूम्नः ।
अव्यक्तमाहुर्हृदयं मनश्च स चन्द्रमाः सर्वविकारकोशः ॥ ३४ ॥
विज्ञानशक्तिं महिमामनन्ति सर्वात्मनोऽन्तःकरणं गिरित्रम् ।
अश्वाश्वतर्युष्ट्रगजा नखानि सर्वे मृगाः पशवः श्रोणिदेशे ॥ ३५ ॥
वयांसि तद्व्याकरणं विचित्रं मनुर्मनीषा मनुजो निवासः ।
गन्धर्वविद्याधरचारणाप्सरः स्वरः स्मृतीरसुरानीकवीर्यः ॥ ३६ ॥
ब्रह्माननं क्षत्रभुजो महात्मा विडूरुरङ्घ्रिः श्रितकृष्णवर्णः ।
नानाभिधाभीज्यगणोपपन्नो द्रव्यात्मकः कर्म वितानयोगः ॥ ३७ ॥

यद्यपि येषां यत्स्थानं ते तत्र निविष्टा इत्यर्थादुक्तं भवति तथाप्यनियतस्थानजीवानां स्थानं निरूप्यते । यतो देवाः सर्वेषु लोकेषु परिभ्रमन्ति । अथवा । भगवदिन्द्रियाणामाधारत्वं न भविष्यतीति तन्निरूपणार्थं पृथङ्निरूपणम् । आधिदैविकास्ते देवाः । अन्येऽपि तत्प्रकरणे निरूपिता- स्तद्रूपा एव । इन्द्रादयो देवा उस्राः कर्मफलदातारः । भारवहनसमर्था उस्रा उच्यन्ते । उत् ऊर्ध्वं

सरन्तीति । "उरुगायेतं धूम्रपोहावि" त्यत्र तथा निरूपणात् । भगवद्भावदत्वश्च फलदातारः । भगवतः कर्णौ ब्रह्माण्डे दिशः । यस्तु शब्दः स भगवतः श्रोत्रमिन्द्रियम् । नासत्यदस्रौ अश्विनौ । नासे परमस्य । नासिकाद्वयं परमस्य यज्ञस्य । यज्ञ एव तत्कृतोपकारात् । अस्मदिन्द्रियाद्यधिष्ठातारो भगवदिन्द्रियगोलकानि । विषयस्त्विन्द्रियम् । गन्धोऽस्य घ्राणम् । इद्धो ज्वलन्नग्निः । अतो भगवन्मुखे यद्देयं तज्ज्वलदग्नौ देयम् । द्यौः स्वर्गलोकः शिशुमारस्थानभूतः । अक्षिणी गोलके । चक्षुरिन्द्रियं पतङ्गः सूर्यः । पतद्गच्छतीति । चक्षुरपि भगवदीयं स्वस्मिन्नत्यन्तलीनत्वेनादर्थम् । पक्ष्माणि चत्वारि नेत्रोन्मीलननिमीलनकर्तॄणि । विष्णोरिति । कालरूपस्य यज्ञस्वरूपस्य वा । अहनी रात्र्यहनी । उभे चेति देवमनुष्यभेदेन । चकारात्पितृब्रह्मणोरपि । परमेष्ठिधिष्ण्यं ब्रह्मस्थानं सत्यलोकाख्यं तस्य भगवतो भ्रूविजृम्भः । यं प्रति भ्रुवोर्विजृम्भणं सन्तोषेण प्रसारणं करोति तं ब्रह्मासने उपवेशयति । आपो जलानि वरुणपत्नीरूपाणि । अस्य तालुगोलकरूपा जिह्वा । जिह्वा इन्द्रियम् । एवकारेण रसवद्द्रव्यं निवारितम् । छन्दांसि गायत्र्यादीनि । परःसहस्रं छन्दांसि । तत्र सप्त मुख्यानि । यशः कीर्तिः । गृणन्तीति पूर्ववत्प्रमाणकथनम् । भगवद्दंष्ट्रा यमः । स्नेहकला मोहादयो द्विजानि दन्ताः । हासः हास्यं प्राणिनामुन्मादकर्त्री मायैव । चकारादनुन्मादकरी भक्तिरूपा च । माया पूर्वमुक्ता । दुरन्तसर्गः नित्यप्रवाहरूपा सृष्टिः । अपाङ्गमोक्षः कटाक्षमोक्षः । व्रीडा लज्जा । ब्राह्मणानामुपरि भवति । अधरः अधरोष्ठः । अधस्तनानामेव लोभो भवति । एवकारेणोपरितनानां लोभाभावः सूचितः । धर्मो ब्रह्मसुतो नरनारायणपिता । चतुष्पाद्धर्मो वा । एकस्तनो दक्षिणः । वामस्त्वधर्मः । अधर्ममार्गश्च भगवतः पृष्ठभागः । कः प्रजापतिः । मेण्ढ्रं (?) अधः (?) इन्द्रियमिति यावत् । मित्रौ मित्रावरुणौ । मित्रद्वयं वा । कुक्षिरुदरम् । सर्वेऽपि समुद्रा भगवत्कुक्षिः । गिरयः पर्वताः । अस्थिसमूहा पङ्क्तयः । नद्यो गङ्गाद्याः । अस्य भगवतो नाड्यः । तनूरुहाणि लोमानि । अथेत्यचेतनप्रायसृष्टिसन्निवेशार्थम् । राजसानां वा लोकास्तामसाः । देवादय एतदन्ताः सात्त्विकाः । महीरुहा वृक्षाः । षड्विधा अपि भगवतो लोमानि । विश्वतनोरिति । विश्वं तनौ यस्य । अनेन तेषां विश्वरूपत्वं निरूपितम् । अन्नाच्छादनरूपत्वात् । नृपेन्द्रेति सम्बोधनं महाराजस्य राज्ये एकस्मिन्नपि वृक्षे च्छिन्ने लोमच्छेदनवत्क्लेशो भवतीत्यनुभवस्य संवादार्थम् । अनन्तवीर्यस्य भगवतः श्वसितं नासापुटस्थवायुः । मातरिश्वा अयं वायुः । भगवतो गतिर्वयः कालः । कर्म भगवतो गुणप्रवाहः सत्त्वरजस्तमसां देवतिर्यङ्मनुष्यादिसृष्टिरूपः । ईशस्य ईश्वररूपस्य । अम्बुवाहा मेघाः । विभूरिति पूर्ववत्प्रमाणम् । वासः पीताम्बरम् । सन्ध्ये सन्ध्याद्वयम् । तुशब्देन मायाप्रभृत्यावृतिः । भूम्न इति । कालस्य । कुरूद्वहेति सम्बोधनं भगवतो महत्त्वज्ञापनार्थम् । अव्यक्तं प्रकृतिर्भगवतो हृदयम् । आहुरिति पूर्ववत् । स चन्द्रमा आधिदैविकरूपः सर्वविकाराणां कोषरूपं भगवन्मनः । तद्विकारे सर्वे विकारा उत्पद्यन्त इति । विज्ञानशक्तिं ज्ञानशक्तिम् । महिं महत्तत्त्वम् । अन्तःकरणमहङ्कारम् । गिरित्रं महादेवम् । सर्वात्मन इत्यहङ्कारस्य सर्वत्र स्थितिरुक्ता । अश्वादयश्चत्वारोऽवयवचतुष्टयनखानि । तत्राऽश्वौ हस्तयोः । वामहस्तानखानां श्रीपूपयोग इत्यश्वतरी । सर्वे मृगाः पशवश्च भगवतोऽवयवत्वाभावेऽपि श्रोणिदेशे श्रोणिस्थाने भवन्ति । अथवा । मृगाः पशवश्च श्रोणिस्थानद्वयम् । वयांसि पक्षिणस्तस्य भगवतो व्याकरणम् । "मयूराश्चित्रिता येने"ति वाक्यात् । मनुः स्वायम्भुवादिः । मनीषा इच्छा । मनुजो मनुष्यः । निवासो गृहम् । गन्धर्वादयोऽप्सरोन्ता एकवद्भावं

१ पूर्वंहेति ख. २ तद्विकाश इति ग.



प्राप्ताः । स्वरो भगवत्कर्तृको रागविशेषः । असुरानीकवर्यैः प्रह्लादः स्मृतिः स्मृतीः स्मृतयः । पाठान्तरे अप्सरोन्ताः प्रह्लादश्च स्वरस्मृती । आद्यः स्वरः । द्वितीयः स्मृतिः । वीर्यं इति पाठे पूर्वोक्ता एव स्वरस्मृतयः । असुरानीकं वीर्यं यस्य । समास एव उद्देश्यविधेयभावः । ब्रह्मभावः कश्चिद्धर्मः । यस्मिन् विद्यमाने ब्राह्मणशब्दवाच्यो भवति पुरुषः । ब्राह्मण्यापरनाम । ब्राह्मण्यं न जातिः । व्यक्तिसद्भावेऽपि तस्याऽपगमात् । "ब्राह्मण्यादेव हीयत" इति वाक्यानुरोधात् । वृत्त्यन्तरकल्पनायां प्रमाणाभावात् । नियतव्यञ्जकाभावाच्च । ब्राह्मण्यां ब्राह्मणाज्जातत्वं चतुर्मुखे तत्पुत्रेषु मानसेषु च अव्यापकम् । ऋषभपुत्रैरेकाशीतिर्ब्राह्मणा बभूवुरिति वाक्याच्च । तस्माच्छास्त्रे बहुवाक्यविरोधाद्ब्राह्मण्यं काचिद्देवता । सा यस्मिन्नेव देहेऽभिव्यक्ता भवति ते ब्राह्मणा इत्युच्यन्ते । अत एव शापादिना शूद्रत्वं चण्डालत्वमनुग्रहेण ब्रह्मत्वमिति । सा चोपनयनेन देहं समायाति । तदा बहूनि वाक्यानि सङ्गच्छन्ते । एवं क्षत्रम् । अत एव परशुरामे उभयनिवेशः । ब्रह्म आननं यस्य । क्षत्रं भुजो यस्य । पूर्वमिद्धोऽग्निर्मुखत्वेनोक्तो वाक्प्रकाशार्थम् । अतो वागिन्द्रियदेवताऽग्निः । इन्द्रादयश्च भोक्तारो बाहवः पूर्वमुक्ताः । अत्र तु रसाधिष्ठात्री देवता वरुणः । रसभोक्तृ ब्राह्मण्यम् । तथा रक्षाकर्तृ क्षत्रमिति । विट् ऊरू यस्य । वितलातलरूपस्याऽप्यूरुणो (?) वैश्यत्वम् । स्थितिनिर्वाहकत्वेन पूर्ववद्विशः । वृत्तेश्चतुर्विधत्वादङ्घ्रिवचनम् । विश ऊरू यस्येति । पञ्चभिः श्रितकृष्णवर्णः । श्रितः कृष्णवर्णो यम् । कृष्णवर्णः शूद्रत्वम् । वेदरहिता विद्या च । कर्म द्विविधम् । स्वाभाविकं वैशेषिकम् । स्वार्थं परार्थमिति यावत् । तत्र परार्थं पूर्वमुक्तं कर्म गुणप्रवाह इति । अत्र तु स्वार्थं कर्म । वितानयोगो यज्ञविस्तारः । वितानाः सप्ततन्तुवितानाः । तेषां योगो यत्र सत्रा (?) हीनेषु स भगवत्कर्म । तस्य द्रव्यकलामाह । नानाभिधाः नानानामान इज्यगणा देवगणाः पूज्यगणास्तत्राऽप्यभितः प्रधानगुणभावेन तेनोपपन्नः । द्रव्यात्मकश्च व्रीहियवादिसाध्यपुरोडाशादिः । देवतोद्देशेन द्रव्यत्यागो यागः । तत्र देवता द्रव्यञ्चाऽङ्गम् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७॥

एवं सर्वपदार्थानां भगवत्स्वरूपत्वायोद्देशप्रकारेण भगवच्छरीरे समावेशनमुक्त्वोपसंहरति—

**इयानसावीश्वरविग्रहस्य यः सन्निवेशः कथितो मया ते ।**
**सन्धार्यतेऽस्मिन्वपुषि स्थविष्ठे मनः स्वबुद्ध्या न यतोऽस्ति किंचित् ॥ ३८॥**

**इयानसाविति ।** ईश्वरविग्रहस्य विराड्देहस्य सन्निवेशः अवयवविन्यासप्रकारः इयानेतावानेव । नाऽधिको विन्यासोऽस्तीत्यर्थः । असौ अयमेव विन्यासो न त्वन्योऽपि विन्यासोऽस्ति । अथवा । असौ प्राकृतरूपो विन्यास इयानेतावान् । आनन्दमयस्य त्वन्यः । स उत्तरत्र वक्ष्यते । अत्र पदार्थानां विनिवेशस्योद्देशप्रकरणत्वान्नाऽस्माभिर्विवरणमुक्तम् । अग्रे विमर्शे वक्तव्यत्वात् । एवं निवेशकथनस्य प्रयोजनमाह—सन्धार्यत इति । अस्मिन्नेव वपुषि सर्वयोगिभिर्मनः सन्धार्यते । योगाङ्गधारणाविषयोऽयमेव क्रियते । स्थविष्ठ इति पूर्ववत् । वं सुखं पुष्णातीति वपुर्देहापरपर्यायः ।

१ एकाशीति ब्रह्मणेति ख. २ च चोपनयनेनेति ग. ३ वितलातलरूपस्याऽपि ऊरुणोर्वैश्यत्वमिति ऊरोः क्षितिवैश्यत्वमिति वा क. ऊरुणोर्वैश्यत्वमित्येव ग. वितलातलरूपस्याऽपि ऊरोर्वैश्यत्वमिति ख. ४ स्थितिनिर्वाहकत्वेऽपीति ग. ५ पूर्ववद्विश इति क. पूर्ववद्विशेष इति घ. ६ ऊरु इति क. ७ श्रितः कृष्णवर्ण इति क. ८ भगवत्कर्मा इति क. ९ पुरोडाशादय इति ख. १० अधिनास्ति क. ११ प्राकृतरूप इति ख. १२ निवेशनकथनस्येति क. ख.

तुल्यार्थत्वादस्याऽप्यर्थस्तत्रैवोक्तः। स्वबुद्ध्या आत्मबुद्ध्या आत्मरूपत्वेन। अन्यथा सर्वप्रवेशो न स्यात्। परमभक्तिराकाङ्क्षाभावश्च न भवेत्। फलस्य। भोगोऽतिक्रमश्च न भवेत्। एतस्मिन् धारणाविषये जाते कुत्र धारणा कर्तव्या कुत्र नेत्यादिसन्देहा गच्छेयुः। यतो—न यतोऽस्ति किञ्चित्। यस्माद्रूपादन्यद्भिन्नं किमपि नास्ति ॥ ३८ ॥

साधारणानां पञ्चप्रश्नेषु कर्तव्यमध्य एव श्रोतव्यस्मर्तव्ययोरनुप्रवेशान्नामानुकीर्तनेनैव जपस्योक्तत्वात्कर्तव्यमध्य एव कर्तव्यस्य प्रवेशाद्वैकल्पिकपक्षत्वाच्चाऽन्येषां भजनीयप्रश्नोऽवशिष्यते। तमाह—

स सर्वधीवृत्त्यनुभूतसर्व आत्मा यथा स्वप्नजनेक्षितैकः।
तं सत्यमानन्दनिधिं भजेत नाऽन्यत्र सज्जेयत आत्मपातः ॥ ३९ ॥

**स सर्वधीवृत्त्यनुभूतसर्व इति।** योऽत्र धारणाविषयत्वेनोक्तः सर्वात्मपदेन च श्रोतव्यविषयतावच्छेदकत्वाद्येन निरूपितो यस्य विवरणार्थमयं सन्निवेशो निरूपितः स एव श्रवणादिना भजनीयः। श्रवणादिना भगवत्सन्निधाने गत्वा तत्सायुज्यं वा प्राप्य साक्षात्तमेव भजेत। अन्यत्र फले साधनान्तरेणाऽनेन वा साधनेनाऽऽसक्तः स्वस्थानादपि पतेत्। यस्मात्तदवस्थायां तिष्ठति ततोऽपि पतेत्। अनेन प्रथमं फलार्थं भवतु पश्चात्तदर्थमपीत्यपि पक्षो निवारितः। नन्वस्य फलत्वं भजनीयत्वं वा कथम्? तत्राऽऽह—**आनन्दनिधिमिति।** भजनीयं फलमेव। साधनस्य पुरुषशेषत्वात्। यद्यपि फलमपि पुरुषशेषः। पुरुषानुभवविषयत्वादनुभवरूपत्वाद्वा। तथापि रसत्वेन रसप्रधानत्वेनैव भोगे रसिकता भवतीति फलं सेव्यम्। तच्च परमानन्दः। सोऽपि न गणनया प्राप्तो ब्रह्मणि स्थितः परिमितत्वात्। किन्त्वानन्दनिधिः। आनन्दो नितरां धीयतेऽस्मिन्निति पूर्णानन्दो भगवानेव सेव्यः। आनन्दपोषस्योक्तत्वात्तस्य तिरोभावमाशङ्क्याऽऽह—**सत्यमिति।** ननु फलान्तरविषये चित्तसद्भावे किं विधेयम्। “**उत्पन्नस्य हि कामस्य प्रतिवादो न शक्यते**” इति न्यायात्। तत्राऽऽह—**सर्वधीवृत्त्यनुभूतसर्व इति।** सर्वधीवृत्तिभिः सर्वेषां सर्वज्ञानजनकेन्द्रियवृत्तिभिरनुभूतं सर्वं येन। यत्किञ्चित्फलं येन केनचिदुपभोग्यं तत् तदिन्द्रियद्वारा अनेनैवोपभोग्यम्। अतः स्वरूपतोऽस्माधया अन्यत्नाऽवशिष्यते तथा फलमपि। एतदनुपभोग्यं फलञ्च नाऽवशिष्यते[1]। ननु कथमस्य भोक्तृत्वम्। तत्तदधिष्ठातॄणां विद्यमानत्वात्। तत्राऽऽह—**आत्मा यथेति।** तत्तदिन्द्रियाधिष्ठातॄणां दिगादीनां विद्यमानत्वेऽपि यथा आत्मा सर्वेन्द्रियानुभूतसर्व एवं भगवानपि तमप्येकदेशाभिमानिनमविगणय्य तेनाऽधिष्ठितैरेवेन्द्रियैः सर्वमनुभवतीत्यर्थः। नन्वात्मन इन्द्रियाधिष्ठातॄणामप्रतीतत्वादात्मीयत्वेनैवेन्द्रियाणां ग्रहणात्तस्य स्वगृहीतमात्रानुभवो भवतु नाम। भगवतस्तु समष्टिरूपस्य व्यष्टिषु देहस्थितकीटेष्विव प्रतीत्यभावादात्मीयत्वाभावाच्च तदिन्द्रियाणां कथं सर्वधीवृत्तिभिर्भगवाननुभवति? तत्राऽऽह—**स्वप्नजनेक्षितैक इति।** स्वप्नजनानामीक्षिता द्रष्टा यथैकः। स्वप्नस्य मायिकत्वेऽपि ज्ञानं न मायिकम्। तस्याऽऽत्मरूपत्वात्। तत्र स्वप्नद्रष्टाः पुरुषाः सर्वं पश्यन्तीति प्रतीतिरस्ति। तत्र पुरुषदेहानां मायिकत्वं न्यायसिद्धम्। तथापि तन्निष्ठा या प्रतीतिः सा न मायिकी। तत्र चैतन्यान्तराभावाद्भगवतो वा जीवस्य वा चैतन्यं भवति। स्वस्याऽपि द्रष्टृत्वाभावादिन्द्रियाणां गोलकाभावेन प्रदर्शनासामर्थ्याद्गोलकस्य च स्वाप्नस्य च मिथ्यात्वाद्भगवानेव पश्यतीति युक्त्याऽध्यवसीयते। निद्रावशाच्च तेन सह भेदो न स्फुरति। तथाऽन्यत्राऽपि स एव पश्यतीत्यध्यवसीयते स्वप्नदृष्टान्तेन[1]। ततस्तेषु देहेषु जीवसद्भावे असद्भावे वा भगवानेव द्रष्टेति निश्चीयते। तस्य चाऽस्मदिन्द्रियगोलकापेक्षा नास्ति। देवतानामेव गोलकत्वात्। विषयस्य चेन्द्रियत्वात्। विषये चाऽस्मदादीन्द्रियलयात्। कारणलयपक्षेऽपि वासनया तत्र विषयसद्भावात्[2]। कारणस्याऽलये लीनानामपि प्रकाशसम्भवात्स्वप्नाङ्गीकारे गौरवाच्च विषय एव लयोऽङ्गीकर्तव्यः। अन्यथा निद्राया अव्यवधायकत्वात्पुनरुद्बोधः कथं क्रियेत[3]। अहङ्कारस्त्वन्तमाध्यामरूप इन्द्रियवर्गीयते। न त्विन्द्रियकारणभूतः। तथा सति पुनः सृष्ट्यभावान्नोत्पद्येरन्। अतो विषयलीनानीन्द्रियाणि भगवदिन्द्रियलीनानि भवन्ति। अतः स्वप्नद्रष्टृविचारे[4] क्रियमाणे यथा सर्वं व्याप्य सर्वेषामात्मा भूत्वा सर्वं पश्यतीति निश्चयः। एवं जागरणावस्थायामपि तत्तद्विषये प्रविष्टानीन्द्रियाणि भगवदिन्द्रियप्रवेशाद्भगवज्ज्ञानसाधकानि भवन्ति। अन्यथा भगवान इन्द्रियातिरिक्तस्य विषयस्याऽभावात्किं गृह्णीयात्। तत्रेन्द्रिये सम्बद्धमात्मानं गृह्णन्नपि वैषम्याकाङ्क्षायामात्मनोऽवैषम्यात्परेन्द्रियवैषम्येऽनेन्द्रियस्यैव वैषम्यं सम्भवति[5]। अतोऽप्यस्मदिन्द्रियापेक्षा। स च सर्वैकः। भेदकप्रमाणाभावात्स्वप्नदृष्टान्तेन व्यावर्तकानामव्यावर्तकत्वात्। अतएव सर्वभोगसिद्धौ पुनर्यत्नान्तरेण भोगो न साधनीयः। आत्मनः पातसम्भवाच्च। देहस्थितकीटेषु तु स्वस्य सर्वात्मभावतिरोभावाज्जीवत्वाद्वा न स्फुरणमिति सर्वमविवादम् ॥ ३९ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां द्वितीयस्कन्धे प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः।



मानमेयविनिर्द्धारस्तत्त्वार्थं विनिरूपितः।
फलसाधननिर्द्धारो द्वितीये विनिरूप्यते ॥ १ ॥
द्विविधस्तत्त्वनिर्देशो बाह्याभ्यन्तरभेदतः।
बाह्यो निरूपितस्तत्र मानमेयपुरस्सरम् ॥ २ ॥
आन्तरं भिन्नमार्गेण फलसाधनयोर्यतः।
अतः साधननिर्द्धारः प्रथमं क्रियते स्फुटः।
पश्चात्फलस्य निर्द्धारस्ततस्तत्त्वं फलिष्यति ॥ ३ ॥

एवं पूर्वाध्याये सर्वेषां वस्तूनां प्रमाणतः प्रमेयतश्च तत्त्वं निर्द्धारितम्। भिन्नतया प्रतीतानामपि भगवति प्रवेशाद्भगवतो द्रष्टृत्वाच्च प्रसङ्गाद्भगवतः साधनत्वं फलत्वं चोक्तम्। तथापि बाह्यत्वान्न तयोस्तत्त्वनिर्द्धारः। इदानीं सर्वेषां केन रूपेण साधनता केन रूपेण च फलतेति विचार्यते। तत्र त्यागविषयत्वेन साधनता अवान्तरफलत्वेन च फलतेति सर्वपरित्यागेन जीवस्वरूपस्य साधनत्वं

---

१ अन्यत्राऽवशिष्यत इति ख.

१ स्वप्नदृष्टान्तेनेति ख. २ सम्भवादिति ख. ३ क्रियते इति ख. ४ स्वप्नदृष्टेति क. स्वप्नदृष्टृविचारे इति च. ५ सम्बद्ध आत्मानमिति क.

ब्रह्मस्वरूपस्य च फलत्वं निर्द्धारितं भविष्यति । तत्र पूर्वोक्तफलस्य साधनस्य वा प्रकृतोपयोगं वक्तुं वैराग्यशेषत्वेन तदुपयोगमाह—

श्रीशुक उवाच—

एवं पुरा धारणयाऽऽत्मयोनिर्नष्टां स्मृतिं प्रत्यवरुध्य तुष्टात् ।
तथा ससर्जेदममोघदृष्टिर्यथाऽप्ययात्प्राग्व्यवसायबुद्धिः ॥ १ ॥

एवं पुरेति । तथा सामर्थ्यं फलमिति केचित् । तद्ब्रह्मणः स्वतःसिद्धत्वान्नष्टस्मृतेः प्रत्यवरोधवचनाच्च विचारणीयम् । नष्टपदेन च सर्वथा नाशे पुनस्तुष्टेन भगवता तत्सम्पादने तोषहेतुत्वमेव भवेत् । न तु सामर्थ्यहेतुत्वमपि । अन्यथा सिद्धत्वात् । अत्र तु पूर्वविस्मृतोद्बोधहेतुत्वे दृढवैराग्यहेतुत्वं भगवत्तोषे वा सर्वहेतुत्वमिति प्रथमं तदेवोच्यते । पुरा दैनन्दिनप्रलयानन्तरम् । एवं धारणया पूर्वकल्पे या स्मृतिः पदार्थनिर्माणज्ञानं तत्प्रत्यवरुध्य पुनः ससर्जेति सम्बन्धः । तुष्टादिति हेतौ पञ्चमी । तुष्टाद्भगवतः सकाशाद्भगवतो हेतुभावाद्वा । यथा पूर्वं तथा ससर्ज । तोषे पूर्वज्ञानमेव हेतुः । यथा कश्चित्कञ्चन पदार्थं सङ्गोप्य बालके व्यामोहिते स चेदुपायेन तज्जानीयात्तदा सन्तुष्टो भवेत् पितृत्वात् । तथा स्वस्याऽपि सृष्टेः पूर्वं भगवन्निकटे स्थितत्वाद्धोमभोगार्थमागतस्य तद्विस्मरणादुपायेन तत्स्मरणे सन्तुष्टः सन् स्वरूपं प्रापयेदिति मुख्यं साधनं पूर्वोक्तधारणैव । तोषसाधनपक्षेऽपि "तुष्टे तु तत्र किमलभ्यमि"ति न्यायेनाऽन्यत्सर्वं सुगमं भविष्यतीति तदवश्यं साधनं कर्तव्यम् । सृष्टिसामर्थ्यं स्वप्रयोजकम् । परमधिकारित्वेन प्रतिबन्धकम् । आत्मयोनिर्ब्रह्मा । नष्टां विस्मृताम् । स्मृतिं पदार्थज्ञानम् । सृष्टेरनादित्वात्पूर्वमपि स्मरणेनैव कृतम् । अतः संस्कारनाशो नोक्तः । तुष्टाद्भगवतः सकाशात् । इदं सर्वं भगवत्येव लीनं स्थितम् । पुनस्तथैव यथाऽप्ययात् प्रलयात् प्राक् । पूर्वं यथेयं सृष्टिर्यया वा व्यवसायात्मिका बुद्धिर्यस्य तथाभूतः सन् तथा ससर्जेत्यर्थः ॥ १ ॥

इदानीमिहामुत्रार्थफलभोगवैराग्यं सर्वविषयत्यागार्थं साधनान्तरमाह—

शाब्दस्य हि ब्रह्मण एष पन्था यन्नामभिर्ध्यायति धीरपार्थैः ।
परिभ्रमंस्तत्र न विन्दतेऽर्थान्मायामये वासनया शयानः ॥ २ ॥
अतः कविर्नामसु यावदर्थः स्यादप्रमत्तो व्यवसायबुद्धिः ।
सिद्धेऽन्यथाऽर्थे न यतेत तत्तत्परिश्रमं तत्र समीक्षमाणः ॥ ३ ॥

शाब्दस्य हीति । सर्वे विषयास्त्यक्तव्याः । तत्र महतां लौकिकबाधाभावेऽपि परित्यागे वैदिकं बाधकं भवेत् । "यावज्जीवमग्निहोत्रं जुहुयात्स्वर्गकामः प्रजाकामः पशुकाम" इति । तत्र यावज्जीवाधिकारस्य नित्याङ्गत्वेन प्रजाकामनादीनां वा नित्यत्वे वैराग्यमकर्तव्यमेव स्यात् । कर्तव्यत्वे वा आन्तरमेव कर्तव्यं स्यात् । आत्मन्यग्निसमारोपणं वा कृत्वा अग्निहोत्रं कुर्वाण एव प्रव्रजेद्वा । जैरामर्याग्निहोत्रं वा कुर्यात् । सर्वेषां पदार्थानां श्रुतिमूलकत्वेन तद्विरोधेन पदार्थ-

१ तत्स्मरणेन सन्तुष्ट इति क. ख. २ जरामर्यादाग्निहोत्रमिति ख.



कल्पनाया अशक्यत्वात् । तस्माद्यथोक्ता एव पदार्थाः फले साधने चाऽवगन्तव्याः । तस्माद्वैराग्यं पूर्वोक्तप्रकारेण शास्त्रार्थनिर्द्धारो वा न सम्भवतीत्याशङ्क्य सर्वस्याऽपि वेदस्याऽर्थमाह । यथा परब्रह्म भगवानर्थरूपः । एवं वेदोऽपि शब्दराशिभूतं ब्रह्म । अम्बुराशिवत् । यथा ब्रह्मणि सर्वत्राऽऽनन्दः पूर्ण एवं शब्दब्रह्मण्यपि सर्वत्र फलमुच्यते स्वस्य ब्रह्मत्वख्यापनाय । शब्दब्रह्मत्वाच्च शब्दमात्रम् । अर्थस्तु परब्रह्मरूपमिति फलं तद्धाम् । अन्यथा एकस्मिन् कर्मणि प्रतिसाधनं धर्मधर्मिभेदेन क्रियाभेदेन चोच्यमानानि फलान्यप्रामाण्यमन्यानर्थक्यं वा सम्पादयेयुः । यथा "स्वर्गाय वा एतानि लोकाय हूयन्त" इत्युपक्रम्य दाक्षिणहोमे आहुतिचतुष्टये नैमित्तिके दक्षिणासंस्कारत्वेन क्रियमाणे गार्हपत्ये आहुतिद्वयम् । आग्नीध्रे उत्तरवेद्यां चैकैकाहुतिः । तत्र प्रत्येकमेकैकस्या आहुतेः ऋग्यादीनामपि माहात्म्यं वेदेन बोध्यते । "द्वाभ्यां गार्हपत्ये जुहोति द्विपाद्यजमानः प्रतिष्ठित्या" इति । यद्येतदाहुतिद्वय एव यजमानः प्रतिष्ठितस्तदा अन्यानर्थक्यमेव स्यात् । विरोधेनाऽप्रामाण्यं वा स्यात् । विकल्पस्तु न भवति । एककर्मत्वात् । किञ्च । "आग्नीध्रे जुहोत्यन्तरिक्ष एवाऽऽक्रमत" इति । यद्याग्नीध्रहोममात्रेणैव अन्तरिक्षाक्रमणसामर्थ्यं स्यात्तदा श्रुतिः प्रमाणं स्यात् । तत्प्रत्यक्षविरोधादसम्भावितम् । "आहवनीये जुहोति स्वर्गमेवैनं लोकं गमयती"ति तदानीमेव यजमानस्य स्वर्गप्रापणमनिष्टमिति प्रवृत्तिप्रतिबन्धकता च स्यात् । किञ्च । आहुतिद्वयसङ्ख्यया यजमानस्याऽत्र प्रतिष्ठितत्वमुक्त्वा "सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोत्यमुमेवैनं लोकं समारोहयती"ति होमसाधनऋचोः सूर्यप्रकाशकत्वेन धर्मेण स्वर्गाक्रमणलक्षणं फलमुक्तम् । तत्र सङ्ख्याफलेन विरुद्ध्यते । एवं सर्वत्र बहुफलत्वमन्योन्यविरुद्धफलत्वं बाधितफलत्वं च कर्मणां वेदप्रामाणिकमेव स्यात् । अतः प्रामाण्यार्थं किञ्चित्तात्पर्यं वर्णनीयम् । यथा च शब्दार्थो बाधितो न भवेत्तथा च वर्णनीयम् । तत्र षोडशर्त्विग्रूपस्य यजमानात्मकस्य यज्ञस्य सर्वलोकान्तःपातिनो भगवद्रूपस्य लीला सर्वत्र वर्ण्यते । यतः स भगवानेक एव सर्वरसानां विद्यमानत्वात्सर्वत्र सर्वपूर्णोऽपि यथा यत्र येन भोगेन लीलां कृतवान् तथा वेदो वदतीति निश्चीयते । ततश्च काण्डद्वयेऽप्ययमेव भगवान् विराड्रूपो यज्ञापरनामा प्रतिपाद्यत इति यदस्माभिः स्थूलधारणोक्ता वेदेनाऽपि तदेवोक्तेति शाब्दस्य ब्रह्मणोऽस्मदुक्त एव पन्थाः । किन्तु लोको भ्राम्यति । वाक्यार्थापरिज्ञानात् । यतो यत्र धीर्नामभिर्वाक्यार्थसम्बन्धरहितैरेव पदार्थं विनिश्चित्य खण्डशः साधनानां ज्ञात्वा तत्तदिच्छां करोति । तत्तन्नामैवाऽर्थं ध्यायति । न हि पदानां वाक्यार्थबोधने पदार्थेष्वपि बोधकत्वम् । युगपद्वृत्तिद्वयविरोधात् । अतः स्वार्थे अपार्थैरपि नामभिर्लोको भ्राम्यति । ततः स्वबुद्ध्या वेदार्थं मत्वा तत्र तत्र बुद्ध्या परिभ्रमंस्तदर्थं कर्म वा कुर्वन्नर्थान् फलरूपानुक्तांश्च विन्दते । किन्तु वासनया कामनाशब्देन तमेवाऽर्थं विचारयन् शयानो भवति । महामोहे निमग्नो भवतीत्यर्थः । तस्मादस्मदुक्ते वेदोक्ते च भेदाभावान्न प्रामाण्यसन्देहः कर्तव्य इति भावः । ननु यदि वेदो भिन्नप्रकारेण कमप्यर्थं प्रतिपादयेत्तदा कोऽपि पुरुषार्थो न सिद्ध्येत् । सर्वकरणासामर्थ्यात् । तस्मान्नैवं निर्णयो युक्त इत्याशङ्क्य यत्र सिद्धार्थानुवादकत्वेन महावाक्योपयोगार्थमवान्तरफलान्यनुवदति तानि लोकसिद्धत्वाच्छ्रुतिसु-

१ आनन्दमिति ख. २ चैकाहुतिरिति ग. ३ वदप्रामाणिकमिति ख. ग. घ. ४ षोडशर्त्विग्रूपयजमानात्मकस्येति ग. घ. ५ यथेति ख. ग. घ. ६ भागेनेति ख. । ७ अपार्थैरेवेति क.; ८ कस्यापि कोपीति क. ९ सर्वकारणाऽसामर्थ्यादिति क. ग.

स्तानि साधनानि तादृशफलार्थं कर्तव्यानि। यथा—"धन्वन्निव प्रपा असि"। अंगैः स्तुतौ लोकसिद्धा प्रपा दृष्टान्तीक्रियते। तथा—"**कारीर्या वृष्टिकामो यजेत**" "**श्येनेनाऽभिचरन् यजेते**"ति फलानि प्रत्यक्षसंवादीनि भगवल्लीलार्थमेव प्रतिपादितानि महावाक्यार्थोपयोगीनि। श्रुतेस्तात्पर्यं लोकदृष्टान्तरूपमवगन्तुं निपुणो भूत्वा येष्वनुवादफल्गुषु स्वसाधनेषु स्वस्य कार्यं सिद्ध्यति तावन्मात्रपरः स्यात्। "**शान्तो दान्त उपरतस्तितिक्षुरि**"ति शमादिकमुपक्रम्य "**आत्मन्येवाऽऽत्मानं पश्येत्**" "**स वै सर्वमिदं जगत्**" "**स स भूत स स भव्य**"मि"त्युक्त्वा "**ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाति विद्वानि**"ति। "**अम्भस्यपार**"इत्युपक्रम्य "**य एनं विदुरमृतास्ते भवन्ती**"त्युपसंहाररूपम्। यथा यस्य यत्राऽधिकारस्तावन्मात्रो भवेत्। तत्राऽप्यप्रमत्तः। न ह्येवंज्ञानमात्रेणाऽग्रिमकृतिनिरपेक्षेण कार्यं सिद्ध्यति। नन्वेवं गोधूमराशिपतितयवोद्धारणवद्गतिनिश्चयशुराल्लोकादिफलाभावादशक्यमेव स्यादित्याशङ्क्याऽऽह—**व्यवसायबुद्धिरि**ति। व्यवसायात्मिका बुद्धिर्यस्य। अतिविचारेण सर्वमालोच्य स्वार्थमुद्धृत्य निश्चित्य तत्साधनकरणार्थं दृढो भवेदित्यर्थः। तत्र किं कर्तव्यमित्याकाङ्क्षायां प्रथमतो लोकप्राप्तं देहादिनिर्वाहार्थं कार्यं न कर्तव्यमित्याह—**सिद्धेऽन्यथाऽर्थ इति**। अन्यथैव कालेन भगवता वा स्वभावेन कर्मणा लोकैर्वा देहनिर्वाहे सिद्धे स्वयं तत्र प्रयत्नं न कुर्यात्। स्वस्य हि परिमितः प्रयत्नः। स भगवत्सेवार्थं स्थापितो नाऽन्यत्र विनियोगमर्हति। किञ्च। **तत्तत्परिश्रमं तत्र समीक्षमाणः**। न केवलमन्यथासिद्धत्वमात्रं दूषणम्। तत्र देहनिर्वाहे तत्तत्परिश्रमं तेषां तेषां परिश्रममेकैकस्मिन् शय्यादिपदार्थे देहेन्द्रियबुद्ध्यादीनां परिश्रमं समीक्षमाणो न यतेतेति सम्बन्धः ॥ २ ॥ ३ ॥

अन्यथासिद्धिं क्लेशं च बोधयति—

> **सत्यां क्षितौ किं कशिपोः प्रयासैर्बाहौ स्वसिद्धे ह्युपबर्हणैः किम्।**
> **सत्यञ्जलौ किं पुरुधाऽन्नपात्र्या दिग्वल्कलादौ सति किं दुकूलैः ॥ ४॥**
> **चीराणि किं पथि न सन्ति दिशन्ति भिक्षां**
> **नैवाऽङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन्।**
> **रुद्धा गुहाः किमजितोऽवति नोपपन्नान्**
> **कस्माद्भजन्ति कवयो धनदुर्मदान्धान् ॥ ५ ॥**

**सत्यां क्षिताविति**। क्षितौ विस्तीर्णतया प्रसारितशय्यारूपायां वालुकादौ कोमलरूपायां वोपार्जनक्लेशव्यतिरेकेणैव सत्यां सिद्धायां कशिपोस्तूलिकाया वस्त्रकार्पाससीवनभूननास्तरणप्रयासैः किं फलम्। साधनगुणस्य तुल्यत्वेऽप्यत्र दुःखाधिक्यात्। किञ्च। स्वतःसिद्धे बाहौ। महापुरुषस्येन्द्रियवैकल्यशङ्काभावादेवमुक्तम्। उपबर्हणैः शिरस्युच्चतासाधनभूतैर्गल्लयोः पादयोश्च सतूलवस्त्रपुटैः किं प्रयोजनम्। भिन्नं वाक्यम्। अतस्तात्पर्येणैकवाक्यता। करपात्रेणाऽपि भिक्षानिर्वाहे अनेकविधान्नपात्र्या ताम्रादिमय्या किम्। सर्वत्र प्रयासानुसन्धानं कर्तव्यम्। उष्णकाले दिशः।

१ अग्रे स्तुताविसर्गः पाठः क. ख. ग. २ स्वसाधनेष्विति साधनेष्विति घ.



शीतकाले वल्कलादीनि। आदिशब्देन चीरपट्टादीनि। दुकूलैः पट्टवस्त्रैः किम्। किञ्च। महाविरक्तस्य जनैरपि किम्। लोका अपि सर्वे त्यक्तव्या इत्यर्थः। ननु सर्वत्र सर्वे पदार्था अन्यदीयाः साधनेनैव सिद्ध्यन्ति। क्षितिरपि कस्यचिद्भवति। अतस्तदाज्ञया स्थातव्यं तदनुरोधेन च। देहश्च पराधीनः। वल्कलादिकमपि साधनसाध्यम्। अतः सर्वदा सर्वनैरपेक्ष्यस्याऽशक्यत्वात्किञ्चित्सापेक्षतायां कर्तव्यायां "**मग्नश्चेत्पानालं विशेदि**"ति न्यायेन सर्वथा सापेक्षतैवाऽस्तु। तत्राऽऽह—**चीराणि किं पथि न सन्तीति**। चीराणि वस्त्रखण्डाः। पथीति तत्सम्पादनार्थमप्यन्यत्र न गन्तव्यमिति सूचितम्। अङ्घ्रिपा वृक्षाः। परभृतः परानेव बिभ्रति न तु तत्फलैस्तेषामुपकारः कश्चन। ते हि पक्वं फलं स्वत एव त्यजन्ति। ईषत्पक्वं तु चालनेन। ते तु देवतारूपा वैष्णवाश्च। भगवल्लीलार्थं जगतः सृष्टत्वादेकपरित्यागेऽन्यदीयं तद्भवति। अतश्चीराण्यपि भगवदीयानि। मार्गाश्च भगवदीयाः। गतिसाधनत्वात्। अतस्तेऽपि किं वस्त्राणि न प्रयच्छन्तीति योजनीयम्। पादसम्बन्धात्तद्दानं लक्ष्यते। गतमात्रे च क्षणविलम्बाद्वा फलदानाद्भिक्षादातृत्वम्। तेषां दस्युत्वमशुद्धत्वं च निवारितम्—**अङ्घ्रिपा इति**। जलातिरिक्तं च न भक्षयन्ति जलं चाऽङ्घ्रिभिरेव पिबन्ति। आतपादिभिश्च शाखाः शुद्धाः। वनस्थाः सहिष्णवश्च परार्थैकान्तजीविनश्च। अतस्तेष्वेव माधुकरी कर्तव्या। जलार्थमपि न लौकिकापेक्षेत्याह—**सरितोऽप्यशुष्यन्निति**। तदा हि कूपाद्यपेक्षा भवति। सरितां बहुत्वं महत्त्वं च सर्वप्रसिद्धम्। शीतवातातपवर्षानिवारणार्थमपि नाऽन्यापेक्षा कर्तव्येत्याह—**रुद्धा गुहा इति**। तासां निरोधस्याऽश्रवणात्। ननु कदाचित्सर्वाभावे गुहासु च व्याघ्रादिभये किं कर्तव्यम्? तत्राऽऽह—**किमजितोऽवतीति**। केनाऽपि न जितः। अतिसमर्थः। उपपन्नान् शरणागतान्। किं नाऽवति। आग्रहेण सर्वत्र कथनं तथाऽधिकारिणोऽपि तथा न कुर्वन्तीति। एवं सर्वकार्येष्वपि सिद्धेषु ये अधिकारिणोऽपि भूत्वा धनदुर्मदान्धान् भजन्ति धनेन यो दुष्टो मदो गर्वस्तेन अन्धान् आगतस्वरूपानभिज्ञान् कस्माद्धेतोर्भजन्तीति न जानीमः ॥ ४ ॥ ५ ॥

एवं प्रसङ्गादन्यानुपदिश्य तादृशेन निरपेक्षेण यत्कर्तव्यं तदाह—

> **एवं स्वचित्ते स्वत एव सिद्ध आत्मा प्रियोऽर्थो भगवाननन्तः।**
> **तं निर्वृतो नियतार्थो भजेत संसारहेतूपरमश्च यत्र ॥ ६ ॥**

**एवं स्वचित्त इति**। भजनीयोपार्जनक्लेशाभावायाऽऽह—**एवं स्वचित्त इति**। एवं सर्वप्रकारेण सर्वनैरपेक्ष्यं योऽन्तःकरणप्रेरणया साधयति सोऽन्तःकरणे तिष्ठतीत्यविवादम्। अत एवमस्माद्धेतोरेवम्प्रकारेण वा स्वचित्ते स्वाधीने चित्ते स्वत एव यत्नव्यतिरेकेणैव सिद्धे सति सिद्धौ वा तं भजेतेति सम्बन्धः। तादृशस्य भगवतो भजनीयं रूपं वक्तुं सर्वपुरुषार्थहेतुभूतधर्मवत्त्वमाह—**आत्मेत्यादि**पदैः। आत्मत्वात्प्रियत्वम्, प्रियत्वादर्थत्वम्, अर्थत्वाद्भगवत्त्वम्, भगवत्त्वादनन्तत्वमिति हेतुहेतुमद्भावोऽपि विशेषणानाम्। प्राणिनां सेव्योपयिकरूपाणि पञ्च। स्वात्मा देहो धनमीश्वरो नित्यकर्म च। तत्र भगवान् पञ्चरूपोऽपीत्याह। प्रथमतस्तेषामात्मा। वस्तुतोऽधिकारिणं

१ तेषामिति ख. ग. २ भजनीयस्येति ख. ३ एवंप्रकारेणेति घ. ४ यत्र व्यतिरेकेणेति क. यत्र व्यतिरेकेणेति घ. ५ सेव्योपयिकेति ख. सर्वोपयिकेति घ.

प्रति तत्त्वेन प्रकाशमानोऽपि । तस्मादवश्यं सेव्यः । उपपत्त्या सेवनमुक्तम् । रुच्या सेवनमाह—प्रिय इति । यथा प्राणो यथा वा देहः प्राणिनां प्रीतिविषयो भवति । आत्मत्वेन प्रीतिविषयत्वे प्राप्तेऽपि पुनर्यत्प्रीतिविषयकथनं प्रीतेः परिच्छिन्नत्वज्ञापनार्थम् । अतः सा प्रीतिरेकत्र विनियुक्ता नाऽन्यं तथात्वेन गृह्णाति । अतः सर्वरूपे एकस्मिन्नेव प्रीतिः कर्त्तव्या । अन्यथा खण्डशः एकस्मिन्नेकरूपे वा क्रियमाणा न सर्वपुरुषार्थं साधयेत् । प्रीतिस्तु भगवद्धर्मः । भगवान् सर्वेभ्यो जीवेभ्यस्तं खण्डशो दत्तवान् सुखार्थम् । अतो यत्रैव प्रीयते तत एव सुखं भवति । ततः स्वगुणमेव मत्वा भवतीत्युक्तं भवति । तथात्र विषयोऽपि सुखरूपो भवति तत्र तद्दाने महत्सुखं भवेत् । अतो देहादिभ्यः प्रीतिमाच्छिद्य भगवति स्थापयन्त्विति भावः । अर्थो धनरूपः । यावत्कार्यं तेन भविष्यति तत्सर्वं भगवता भविष्यतीति । अर्थशब्दस्य पदार्थवाचकत्वात्पदार्थरूपोऽपि भगवान् । सर्ववेदार्थः सर्वधनरूपः सर्ववस्तुरूपश्च सर्वनिवृत्तिरूपेण सर्वनिवर्त्तकश्च । भजने चैते धर्मा भजनीयविषयतावच्छेदकत्वेन गुणोपसंहारन्यायेन ग्राह्याः । तथा सति सर्वात्मकतया भजनं भवति । किञ्च । भगवान् षड्गुणैश्वर्यगम्यः । ऐश्वर्याद्यर्थमपि तस्य सेवनं भवति । श्रीशब्देनाऽत्र शोभा ग्राह्या । किञ्च । अनन्तो देशकालापरिच्छिन्नो नित्यः । एतावता पञ्चविंशति तत्त्वानि षड्विंशकश्च महाविष्णुः । षड्विंशतिप्रकारेण सेवितव्यः । तत्राऽऽत्मा द्विविधो जीवब्रह्मभेदेन । प्रिय एकादशविधः । एकादशेन्द्रियभोग्यत्वात् । अर्थः पञ्चविध उक्तः । भगवान् षड्विधः । अनन्तो द्विविधश्च । एवं सर्वप्रकारेण सेवितव्य इत्यर्थः । सेवकस्याऽधिकारिविशेषणभूतधर्मद्वयमाह—**तं निर्वृतो नियतार्थ इति** । एतदन्यनिवृत्त्यर्थम् । एकं च भगवति दार्ढ्यार्थम् । इमौ च धर्मावावश्यकौ । अन्यथा सर्वप्रकारेण सेवितोऽपि न पुरुषार्थो भवति । सर्वतो निर्वृतः । अन्यथा भक्षान्नन्यायो भवेत् । नियतो भगवत्येवाऽर्थः पुरुषार्थो यस्य । भगवान् वा । अन्यथा **"संशयात्मा विनश्यति"** । यद्यपि भगवानेव फलं न चाऽन्यदपेक्ष्यते तथाप्यानुषङ्गिकं फलं संसारहेतोरज्ञानस्य भगवद्वैमुख्यस्य वा निवृत्तिर्भवति । चकारात्सायुज्यादि ॥ ६ ॥

एवं भजनस्य सर्वोत्तमत्वं प्रतिपाद्य तादृशस्याऽकर्तॄन् शोचन्नाह—

कस्तां त्वनादृत्य परानुचिन्तामृते पशूनसतीं नाम युञ्ज्यात् ।
पश्यन् जनं पतितं वैतरिण्यां स्वकर्मजान्परितापान् जुषाणम् ॥ ७ ॥

**कस्तामिति** । तां भगवतः परामनुचिन्तां ध्यानेन रूपचिन्तनाम् । ऋते पशून् विना पशून् । अनादृत्य अकृत्वा । असतीं चिन्तकनाशिकां देहादिचिन्ताम् । **नामेति** प्रसिद्धे । युञ्ज्यात् स्त्रियमिव योजयेत् । अज्ञानाद्भवतु नाम योजनम् । तत्कृतमपकारं ज्ञात्वा कस्तां युञ्ज्यात् । अपकारं गणयति—**पश्यन् जनमिति** । यथा भगवद्भजने भगवदीयाः षड् गुणाः स्वस्मिन् सङ्क्रमन्ते तथा देहादिभजने तद्गताः षड् दोषाः सङ्क्रमन्ते । उत्पत्तिर्नाशो दुःखं कर्माणि परितापो हीनत्वं च । तदाह । जनमुत्पद्यमानम् । पतितं स्वस्थानाच्च्युतम् । मृतमिति यावत् । वैतरिण्यां यमद्वारस्थितनद्याम् । अनेनाऽसतीपरिग्रहे मृतो वैतरिण्यां पततीति सूचितम् । स्वकृतविविधकर्मफलं च

१ सरूपे इति ख. २ अपिर्नास्ति ख. ३ निर्वृत इति ख. ग. घ. ४ अपेक्षत इति ख. ५ ध्यानरूपचिन्तनामिति क.



सेवमानम् । परितापाः शोकादयः । अतः को वा अमृतं विहाय विषं भक्षयतीति प्ररोचनार्थं न बहु वक्तव्यमिति भावः ॥ ७ ॥

केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम् ।
चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्ति ॥ ८ ॥
प्रसन्नवक्त्रं नलिनायतेक्षणं कदम्बकिञ्जल्कपिशङ्गवाससम् ।
लसन्महारत्नहिरण्मयाङ्गदं स्फुरन्महारत्नकिरीटकुण्डलम् ॥ ९ ॥
उन्निद्रहृत्पङ्कजकर्णिकालये योगेश्वरास्थापितपादपल्लवम् ।
श्रीलक्ष्मणं कौस्तुभरत्नकन्धरमम्लानलक्ष्म्या वनमालयाऽञ्चितम् ॥१०
विभूषितं मेखलयाङ्गुलीयकैर्महाधनैर्नूपुरकङ्कणादिभिः ।
स्निग्धामलैः कुञ्चितनीलकुन्तलैर्विरोचमानाननहासपेशलम् ॥ ११ ॥
अदीनलीलाहसितेक्षणोल्लसद्भ्रूभङ्गसंसूचितभूर्यनुग्रहम् ।
ईक्षेत चिन्तामयमेनमीश्वरं यावन्मनो धारणयाऽवतिष्ठते ॥ १२ ॥
एकैकशोऽङ्गानि धियाऽनुभावयेत्पादादि यावद्धसितं गदाभृतः ।
जितं जितं स्थानमपोह्य धारयेत्परं परं शुद्ध्यति धीर्यथा यथा ॥१३॥

एवं सर्वार्थनिश्चयपूर्वकं भक्तिमार्गानुसारेण भगवद्विषयकं श्रवणादिकं साधनं कर्तव्यमिति सिद्धम् । अत्र केषाञ्चिन्मते सर्वनिर्द्धारो व्यर्थः । मुख्यभगवद्रूपं चतुर्भुजादि आनन्दमात्रकरपादमुखोदरादिरूपं ज्ञात्वा भजनं कर्तव्यमिति धारणायां स्थूलस्थाने भजनीयं भगवन्तं आनन्दरूपं योजयन्ति । केचिदिति वचनान्नाऽत्र सर्वसम्मतिः । अनेन ह्यानन्दाविर्भाव एव क्रियते न तु दोषनिवृत्तिः । यद्यपि नान्तरीयकपापादिनिवृत्तिः क्रियते तथापि सर्वभावत्वसम्पादकत्वाभावान्न रागादिनिवृत्तिः । भगवतो रूपाणि चत्वारि ध्येयानि । अङ्गुष्ठमात्रं, प्रादेशमात्रं, पुरुषमात्रं, पूर्वोक्तञ्च । तत्र स्वनैकट्यं प्रादेशमात्रस्यैवेति । वैश्वानरविद्यायां च सिद्धत्वात् शुद्धे च स्वहृदये मातुं शक्यत्वात् । अथवा । "अत्यतिष्ठद्दशाङ्गुलमि"ति पुरुषादतिरिक्तं रूपमतिरेकार्थं भजन्ते । अतिरिक्तमपि पुरुषाकारम् । वसन्तं तृतीयं पुरुषम् । तस्य स्थूलरूपं वर्णयति—**चतुर्भुजमिति** । कञ्जं कमलम् । रथाङ्गं चक्रम् । हस्तचतुष्टयेऽप्यायुधधारिणम् । अनेन सर्वतो रक्षा सूचिता । प्रवेशेऽपि तत्त्वानि तत्र स्थापयित्वा स्वयं प्रविशेदिति । धारणया पूर्वोक्तया । स्मरन्तीति विद्यमानत्वान्नाऽन्तर्मनसा कल्पनमपेक्ष्यते । किञ्च । प्रसन्नवक्त्रम् । प्रसन्नं भक्तेभ्यः फलदानार्थं वक्त्रं यस्य । नलिनवत् आयते दीर्घे ईक्षणे यस्य । कदम्बकिञ्जल्कवर्णपीतारक्तमन्तभागे चाऽन्ते मुक्ताफलसहितं रेखाकारश्च । कदम्बकिञ्जल्कवत्सुवर्णदण्डाकारसूत्रनद्धमुक्ताव्याप्तं कृतार्थीकृताशेषजीवयुक्तवेदरूपम् । एतादृशं भगवतः पीताम्बरम् । लसन्ति महारत्नानि यस्मिन् हिरण्मये अङ्गदे । अङ्गदं बाह्वाभरणम् । स्फुरन्ति महारत्नानि

१ भक्षयिष्यतीति ख. घ. २ गुरुरूपमिति क. ग. घ. ३ अपेक्ष्यते इति ग. घ. ४ पीतारक्तयुक्तमिति. क. ख. ५ चाऽन्ते इति ग. घ.

किरीटे कुण्डलयोश्च यस्य। उन्निद्रे विकसिते हृदयरूपे पङ्कजे या कर्णिका तस्मिन् यदालयं गृहं सूर्येन्दुवाय्वग्न्यगमं तस्मिन्नालये योगेश्वरैरा समन्तात्स्थापितं पादपल्लवं यस्य। श्रीः लक्ष्म चिह्नं यस्य। कौस्तुभरत्नं कन्धरायां यस्य। अम्लाना लक्ष्मीर्यस्याः। सर्वदा प्रत्यग्रविकसितपुष्पयुक्ता। तादृश्या वनमालया अञ्चितं पूजितम्। मेखलया कटिदोरकरूपया। अङ्गुलीयकैश्च महाधनैः अमूल्यरत्नादियुक्तैः। उभयत्र विशेषणम्। नूपुरमेकं महाराजचिह्नरूपम्। आदिशब्देन वलयादि। स्निग्धाश्च तेऽमलाश्च। कुञ्चिता नीलाः कुन्तलाः। तैर्विरोचमानं यदाननं तेन यो हासस्तेन सुन्दरम्। अदीनं यल्लीलाहसितम्। सर्वेभ्यो याचकेभ्यः सर्वफलदानेऽप्यसङ्कोचयुक्तमदीनम्। लीलाहसितेन युक्तं यदीक्षणं तेन उल्लसन्त्यौ ये भ्रुवौ तयोर्भङ्गस्तेन संसूचितः भूरि अधिकः अनुग्रहो येन। एतादृशं चिन्तया प्रकटीभूतं राजाधिराजरूपमीश्वरमीक्षेत। यावत् मनः धारणया सर्वाङ्गस्थितया अवतिष्ठते चाञ्चल्यं न प्राप्नोति। सर्वाङ्गास्फुरणे पुनरेकैकशोऽङ्गानि धारयेत्। एकं धृत्वा तस्य स्वाधीनतायां जातायां द्वितीयं धारयेदिति धियेत्युक्तम्। अत्र धारणायां क्रमो विवक्षितः। तदाह—पादादि यावद्धसितमिति। तृतीयस्कन्धे स्पष्टं भविष्यति। गदाभृत इति प्रार्थनीयता सूचिता। जितं जितं स्थानं स्वाधीनं स्वाधीनं स्थानं पादाद्ययोः ग्राहकबुद्ध्यग्रभागात्त्याजयित्वा तेनाऽग्रेणाऽन्यद्ग्राह्यम्। अन्यग्रहणे तथा भगवदवयवस्य अधिका गुणाः स्मर्तव्या यथा बुद्धिदोषा अपगच्छेयुः। तदपगमे बुद्धिर्विशदा भवति। तदा अवयवान्तरमपि माति। एवमुत्तरत्राऽपि। यथा यथा बुद्धिः शुद्ध्यति तथा तथा परं धारयेदित्यर्थः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

इयं च धारणा सञ्जातभक्तेर्भवति। यावत्पुनर्भक्तिर्न जायते तावत्पूर्वैव धारणा कर्तव्येत्याह—

यावन्न जायेत परावरेऽस्मिन् विश्वेश्वरे द्रष्टरि भक्तियोगः।
तावत्स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत ॥ १४ ॥

यावदिति। परेऽवरे यस्मात्। परावरत्वस्फुरणमपि सर्वोत्तमत्वरूपं प्रेमभक्तेरङ्गं माहात्म्यज्ञानापरपर्यायम्। अस्मिन्निति स्वयं भक्त्या तं पश्यन्नाह। द्रष्टरि सर्वसाक्षिणि पूर्वोक्तन्यायेन सर्ववस्तुषु चैतन्यरूपेण वा प्रत्यग्रूपेण वा प्रकाशमाने। योगपदेन ससाधनं साधनभूतं भक्तेः स्थिरं रूपमुक्तम्। तावत् स्थवीयः स्थूलम्। पुरुषस्य पूर्वोक्तस्य। क्रियावसाने अग्निहोत्रादिकं कृत्वा अव्यग्रशुद्धावस्थायाम्। संन्यासं गृहीत्वेति केचित्। तदा निरन्तरं स्मरणं भवति। परं क्रियाया हेतुत्वं न स्यात्। प्रतिबन्धकत्वकल्पनापेक्षया साधकत्वकल्पनाया उत्कृष्टत्वात्। "पुण्यतीर्थजलाप्लुत" इति नियमानामुक्तत्वाच्च। प्रयतः सावधानो भूत्वा। नियमेऽपि धर्मः। अन्यभावनापरित्यागार्थं वा ॥ १४ ॥

एवमन्तकाले पाक्षिकदोषपरिहारार्थं योगं साधयित्वा तस्य दृष्टोपायत्वज्ञापनाय बुद्धिपूर्वकं मरणप्रकारमाह स्थिरमित्यादिना—

स्थिरं सुखञ्चाऽऽसनमास्थितो यतिर्यदा जिहासुरिममङ्ग लोकम्।
देशे च काले च मनो न सज्जयेत् प्राणान्नियच्छेन्मनसा जितासुः ॥ १५ ॥

१ स्निग्धानि च तान्यमलानीति कुन्तलानीत्यन्तं क्लीबपाठः क. २ ग्राहकबुद्धिग्रहणादिति ख. ग. ग्राहकबुद्ध्यग्रभागादिति च.



मनः स्वबुद्ध्याऽमलया नियम्य क्षेत्रज्ञ एनां निनयेत्तमात्मनि।
आत्मानमात्मन्यवरुध्य धीरो लब्धोपशान्तिर्विरमेत कृत्यात् ॥ १६ ॥

फलमुख्यमेतदङ्गं सन्निहितम्। उत्तराङ्गमिति केचित्। अवान्तरव्यापार इत्यपरे। स्थिरमचञ्चलम्। सुखं कोमलम्। पद्मासनादिरूपं वृष्यादिरूपं वा। आ समन्तात् स्थितः। मनसाऽप्यन्यत्र गमनं निवारितम्। अतः परं संन्यासो नित्यः। तदा वा संन्यासः कर्तव्य इत्याह—यतिरिति। प्राणायामं कृत्वा पञ्चाक्षरं संन्यासमन्त्रं विजपित्वा "अभयमभयं भूतेभ्य" इति भूताभयदानमुक्त्वा ब्रह्मण्यविधिनिर्देशमुक्त्वा "वसुरण्वो विभूरसी"ति महोपनिषदर्थं भावयित्वा ब्रह्मणि प्रणवेन जीवयोजनं यतित्वम्। एवं भूत्वा तदा अन्यदा वा यदा जिहासुर्भवति। इमं लोकं देहम्। तदा देशकालापेक्षा न कर्तव्येत्याह—देशे च काले चेति। देशे बदरिकाश्रमादिपुण्यस्थाने। काले उत्तरायणे। चकारादुभयाङ्गधर्मेषु मनो नाऽऽसक्तं कुर्यात्। विशेषणभूत एव देशादौ चित्तं व्यापृतं मा भवेदिति तदा केवलं भगवन्निष्ठं मनः कृत्वा यद्देशादिभिर्भविष्यति तद्भगवतैव भविष्यतीति मनःस्थैर्यं विधाय प्राणान्नियच्छेत्। मूलाधारादपानं सङ्कोच्य तत्र प्राणं निधाय कुण्डलिनीप्रबोधनेन प्रबुद्धां तां प्राणापानसहितां सुषुम्णारन्ध्रे निवेश्य वायुमूर्ध्वं नयेदित्यर्थः। मनसा बुद्धिसहितेन देहचालनादिकमकृत्वा। एतत्सामर्थ्यं जितासोरेव भवतीति तदवसरे स्मारयति—जितासुरिति। एवङ्कृते वा जितासुर्भवति। यदा कश्चित्स्वग्रामान्निष्काश्यते तदा जयः सिद्धो भवति। तदनन्तरं मनः स्वबुद्ध्या आत्मबुद्ध्या सङ्घातव्यतिरिक्तरूपया। अमलया भक्त्यादिभिः शुद्धया। नियम्य स्थिरं कृत्वा प्रयत्नं त्याजयित्वा। दण्डवत्त्यक्त्वेति यावत्। स्वस्मिन् वा स्थापयित्वा बुद्ध्या वा संयोज्य। तां बुद्धिं मनःसमाहितां वा। क्षेत्रज्ञे शारीरे आत्मनि। यः क्षेत्रं देहादि अहमिति ममेदमिति वा अभिमन्यते तस्मिन् प्रवेशयेत्। तं क्षेत्रज्ञं भगवतो रूपविशेषे सर्वजीवसमूहरूपे आत्मनि "अहमात्मा गुडाकेश सर्वभूताशयस्थित" इति वाक्यनिरूपिते भगवद्विभूतिरूपे। तमात्मानं भगवति तस्मिन्नेव भगवद्रूपे। अवरुध्य एकीकृत्य पुनर्देहानुसन्धानार्थमिच्छामकृत्वा धीरो भूत्वा तत्राऽऽत्मनि लब्धोपशान्तिः कृत्यात् कोटिजन्मभिः कृतात् कर्तव्यात् सर्वेभ्य एव प्रयत्नेभ्य उपरतो भवेत्। समाधाविव स्थित्वा पुनर्नाऽऽगच्छेदित्यर्थः। अत्रैव मुक्तिरित्येकः पक्षः। एवं स्थिते देहः स्वयमेव स्वकारणलयाद्गच्छति। परं तत्राऽनुसन्धत्ते। एतत्तृतीये वक्ष्यते ॥ १५ ॥ १६ ॥

तस्य मुक्तित्वं वदति—

न यत्र कालोऽनिमिषां परः प्रभुः कुतो नु देवा जगतां य ईशिरे।
न यत्र सत्त्वं न रजस्तमश्च न वै विकारो न महान्प्रधानम् ॥ १७ ॥

न यत्रेति। यत्राऽऽत्मनि कालो न प्रभुः। अनिमिषां देवानां परः उत्कृष्टः मुख्याधिकारी। प्रभुः तेषामपि नियन्ता। अनेनाऽधिकारः सामर्थ्यं चोक्तम्। तथापि भगवति स्थितत्वान्न प्रभुः। कुतो नु देवा इन्द्रियाधिष्ठातारः। ते हि सर्वदा समीपस्थितं निष्काशयन्ति। तेषामितो निष्काशने सामर्थ्यं कैमुतिकन्यायेन निवारितम्। तेषां सामर्थ्यमाह—जगतां य ईशिर इति। सर्वजगति

१ वृष्यादिरूपं वेति ख. २ सम्भवतीति क. ग. ३ तदवसरमिति क. ४ तस्मिन्नेव वा भगवद्रूपे इति ख. ५ समाधिस्थमिति ख. ग. ६ तेषामपीतो निष्काने इति ख. ग.

ये प्रभवः । अतः कालस्य कालनियम्यानां वा न तत्र सामर्थ्यमित्युक्तम् । यद्यपि कालप्रेरणाव्यतिरेकेण गुणा न क्षुभ्यन्ति । अक्षुब्धाश्च स्वरूपान्न प्रच्यावयन्ति । तथापि क्षोभणे कालो गुणाधीन इति तेषां पृथङ्निराकरणमाह—न यत्रेति । चकारात्प्रकृतिगुणा अहङ्कारगुणाश्च । वै निश्चयेन । अहङ्कारोऽपि । स तु सर्वदा स्वरूपच्यावकः । अतो वैशब्दः । महान् महत्तत्त्वम् । प्रधानं प्रकृतिः । तत्र स्थितं कोऽपि न चालयतीत्यर्थः ॥ १७ ॥

ननु एवं तस्य स्थानस्य कथं माहात्म्यम् । तदाह—

परं पदं वैष्णवमामनन्ति तत् यन्नेति नेतीत्यतदुत्सिसृक्षवः ।
विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यार्हपदं पदे पदे ॥ १८ ॥

परं पदमिति । तत्सर्वेभ्यः पदेभ्यः स्थानेभ्य उत्कृष्टं पदमक्षररूपं पुरुषोत्तमपादरूपम् । अत एव वैष्णवम् । यत् वैष्णवं परं पदमामनन्तीति योजना । यदित्युद्देश्यम् । आमनन्तीति तत्र प्रमाणम् । केवलश्रुतेः प्रमाणत्वे उपचरितार्थत्वं वा कल्प्येत । अत आह—नेति नेतीत्यतदुत्सिसृक्षव इति । अतत् आत्मव्यतिरिक्तमस्मिन् शरीरे ये उत्सिसृक्षवो भवन्ति ते तद्वैष्णवं पदमिति वदन्ति । तदेकं ग्राह्यमन्यत्त्याज्यमिति विवेकः । न च तेषामुत्तमाधिकारादेव स्फुरणं भविष्यतीत्याशङ्क्य तेषामधिकारमाह—विसृज्येति । तेषामपेक्षितं गुणत्रयं वर्तते । सर्वथा देहाद्यात्मस्फूर्तित्यागः सर्वदोषाभावरूपः । न विद्यते अन्यस्मिन् सौहृदं येषाम् । अनेन पूर्वोक्तन्यायेन भगवति परमा प्रीतिरुक्ता । साधनमप्याह । अर्हपदं भगवच्चरणारविन्दम् । पदे पदे क्षणे क्षणे मनसः स्थापनस्थाने वा । उपगुह्य आलिङ्ग्य । आमनन्तीति सम्बन्धः । एतादृशस्यैव नाऽन्यथा भवतीत्यर्थः ॥ १८ ॥

इत्थं मुनिस्तूपरमेद्व्यवस्थितो विज्ञानदृग्वीर्यसुरन्धिताशयः ।
स्वपार्ष्णिनाऽऽपीड्य गुदं ततोऽनिलं स्थानेषु षट्सून्नमयेज्जितक्लमः ॥१९॥
नाभ्यां स्थितं हृद्यधिरोप्य तस्मादुदानगत्योरसि तं नयेन्मुनिः ।
ततोऽनुसन्धाय धिया मनस्वी स्वतालुमूलं शनकैर्नयेत ॥ २० ॥
तस्माद्भ्रुवोरन्तरमुन्नयेत निरुद्धसप्तायतनोऽनपेक्षः ।
स्थित्वा मुहूर्तार्धमकुण्ठदृष्टिर्निर्भिद्य मूर्धन् विसृजेत्परं गतः ॥ २१ ॥

इत्थमित्युपसंहारः । एवं स्थिते देहादिः स्वयमेव गमिष्यतीति भावः । पक्षान्तरमाह—मुनिस्त्विति । यदि तत्र स्थितो न भवेत् मननवत्साधनान्तरपरो भवेत् । भिन्नतया तत्स्वरूपं भासयते चेत्तदा तस्मादुपरमेत् । प्रकारान्तरेण पुरुषार्थः साधनीय इति । तमेव प्रकारान्तरमाह—व्यवस्थित इति । विशेषाकारेण तस्मिन्नेव पदे मनः स्थिरीकृत्य आत्मानं योजयित्वा भगवत्साक्षात्कारं ब्रह्मात्मभावं वा बहुकालमनुभूय तस्य विज्ञानस्य फलं प्राप्य विज्ञानमेव या दृक् अनुभवरूपं यज्ज्ञानं तस्य वीर्येण सामर्थ्येन सर्वाज्ञाननिवर्तकरूपेण सुष्ठु रन्धितः शोधितः रागादिनिराकरणेन शुद्धः कृतः आशयो यस्य तादृशो भवेत् । सम्यक् चित्तशोधनं कुर्यादित्यर्थः । तदा शुद्धे चित्ते देहत्यागार्थं यत्नं कुर्यादिति तत्त्यागोपायमाह—स्वपार्ष्णिनाऽऽपीड्येति । मूलाधारस्य पीडनं पार्ष्णिना कर्तव्यम् ।

१ उपचरितार्थत्वं कल्प्येतेति क. २ एतस्मिन्निति ख. ३ शोधित इति ख.



एकवचनेन पार्ष्णिद्वयपक्षो निवारितः । गुदं मूलाधारस्थानम् । ततः कुण्डलिनीप्रबोधात्ततो मूलाधारादनिलमुत्थाप्य षट्चक्रभेदनेनोर्ध्वं नयेत् । तत्र वायोः स्थानभूतानि षट् चक्राणि मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धि(?)आज्ञारूपाणि गुदे गुह्यस्थाने नाभौ हृदये तालुमूले भ्रूमध्ये च स्थितानि । तानि स्थानानि पद्मत्वेनोक्तानि चतुर्दलं, षड्दलं, अष्टदलं, द्वादशदलं, षोडशदलं, द्विदलमिति । तेषु वायोरूर्ध्वनयनमार्जवेन न भवतीत्यन्यत्र गमनशङ्कया साधनमाह—जितक्लम इति । वायोराकर्षणे जितः क्लमो येन । नाभिपर्यन्तमार्जवमग्रे वक्रता । अतो नाभ्यां स्थितं महता प्रयत्नेन हृद्यधिरोपणीयम् । तत्र हृत्पुण्डरीकमूर्ध्वनालमधोमुखम् । तद्वायुवशादूर्ध्वमुखं कर्तव्यम् । ततः प्रयत्नाधिक्याज्ज्ञान्यां स्थितमित्यनूद्य हृद्यधिरोपणमुक्तम् । तस्मादग्रे नयनं दुर्घटं तालुमूलस्थाने । उरस्युदानवायुरेव तिष्ठति । अन्योऽपि यो गच्छेत्तत्र स तद्भावमापन्न एव गच्छेत् । अत आह—उदानगत्योरसि तं नयेदिति । पूर्वाधिकारे हृदयपर्यन्तमेव वायोरानयनम् । अस्य त्वग्रे नयनमिति पूर्ववदाह—मुनिरिति । तत्र समागतस्थितिभावं प्राप्तस्याऽग्रे गमनार्थं तद्भावं त्यक्त्वा पूर्वभावमनुसन्धाय ततो महत्या बुद्ध्या ग्रहणस्थापनसमर्थया मनस्वी महाबुद्धिमान् स्वतालुमूलं तस्यैवाऽग्रिमस्थानं शीघ्रं नीतस्य मुखादिद्वारेण निर्गमनशङ्कया शनकैर्नयेत् । तत्र बुद्धेः सूक्ष्मता स्थिरता स्थापनार्थं नयनार्थं चेत्याह—सुधीरिति । एवं तालुमूले स्थिरीकृतं मुखादिच्छिद्रद्वारा निर्गमनशङ्कया निरुद्धसप्तायतनः निरुद्धानि सप्त असोः प्राणस्य अयनानि द्वाराणि येन तादृशो भूत्वा तस्मात्पूर्वस्थानाद्भ्रुवोरन्तरमूर्ध्वं नयेत् । तत्राऽऽज्ञाचक्रे तं वायुं स्थिरीकृत्य अन्तःकरणशुद्धेः पूर्वं निरूपितत्वात्सर्वापेक्षारहितो भूत्वा तत्र भगवद्ध्यानेन भगवदाविर्भावे जाते तत्राऽकुण्ठदृष्टिर्मुहूर्तार्धं स्थित्वा परं भगवन्तं गतः सायुज्यं प्राप्तः । पूर्वमेव वायोर्बहिर्निर्गमनार्थं प्रयत्नस्य कृतत्वात् । मूर्धानं ब्रह्मरन्ध्रं निर्भिद्य विसृजेत् । इन्द्रियाणि विसृजेत् । प्राणानामपि निस्सारणं केचिदिच्छन्ति । अग्रे तेषामप्युपयोगात् । केचित् "इहैव समवनीयन्त" इति वाक्यानुरोधात्प्राणानामत्रैवाऽऽत्मनि स्वमूलभूतासन्यरूपेण स्थितिमिच्छन्ति । प्राणस्य भोगासाधकत्वाच्च । "तमुत्क्रामन्तं प्राणोऽनूत्क्रामती"त्यमुक्तिविषयम् । उत्क्रान्तिचरणविचारेणाऽपि "वाङ् मनसि सम्पद्यत" इत्यादिभिः प्राणशब्देनेन्द्रियाण्युच्यन्ते । गमने वा आयुषो भावात् "मुख्ये कार्यसम्प्रत्यय" इति न्यायेन मुख्यानुरोधिप्राणानामिह लयः । तस्मादिन्द्रियाणि तत्सम्बद्धः प्राणश्च बहिर्निस्सारित इत्यर्थः ॥ १९ ॥ २० ॥ २१ ॥

एवं सद्यो मुक्तिर्द्विधा निरूपिता । उत्तममध्यमभेदात् । आद्यस्य वासनाया अक्षीणत्वाद्भोगेनैव तत्क्षयं मत्वा तं प्रति क्रममुक्तिं वदन्निन्द्रियादीनां स्वसङ्गे नयनमाह—

यदि प्रयास्यन् नृप पारमेष्ठ्यं वैहायसानामुत यद्विहारम् ।
अष्टाधिपत्यं गुणसन्निवाये सहैव गच्छेन्मनसेन्द्रियैश्च ॥ २२ ॥

यदीति । यदि प्रयास्यन् भवति तदा मनसा इन्द्रियैश्च सहैवोपगच्छेदिति सम्बन्धः । नृपेति सम्बोधनं सर्वपुरुषार्थसिद्धावपि यथा पारंपर्यादिगमनमक्षीणवासनत्वाद्राज्ञां तथेदमपीति सम्मत्यर्थम् । यदेव स्थानं प्रयास्यन्भवति तद्गणयति । पारमेष्ठ्यं ब्रह्मस्थानम् । वैहायसानां विमानमधिरुह्य

१ मूलाधारे स्वाधिष्ठानमिति ख. २ गुह्यमूले इति ख. ३ वाय्वाकर्षणेनेति ग. घ. ४ दुर्घटं ततः प्रयत्नाधिक्यादित्यधिकं ख. ५ पारम्पर्यादिगमनमिति ग.

स्त्रीभिः सह सर्वत्राऽन्तरिक्षे परिभ्रमतां यद्विहारस्थानं तत्र वा । उताऽप्यष्टाधिपत्यमष्टगुणैश्वर्यम् । किम्बहुना । गुणसन्निवाये ब्रह्माण्डे अधः उपरि मध्ये वा प्रयास्यन्भवति तत्रैव सह गच्छेत् । चकाराद्वासनाभिः प्राणैर्वा ॥ २२ ॥

नन्वेवं सामर्थ्यं कथं जीवस्येत्याशङ्क्याऽऽह—

**योगेश्वराणां गतिमाहुरन्तर्बहिस्त्रिलोक्याः पवनान्तरात्मनाम् ।**
**न कर्मभिस्तां गतिमाप्नुवन्ति विद्यातपोयोगसमाधिभाजाम् ॥ २३ ॥**

**योगेश्वराणामिति** । येषां स्वाधीनो योगः । यद्यपि स्वतो गमनसामर्थ्यं न भवति तथापि योगेन तद्भवतीति सर्वा गतय उच्यन्ते । **त्रिलोक्याः अन्तर्बहिश्चेति** । बहिः स्थिता अपि अन्तरायान्ति । अन्तः स्थिता अपि बहिर्गच्छन्ति । तत्र हेतुः—**पवनान्तरात्मनामिति** । पवनस्याऽन्तः आत्मा लिङ्गशरीरं येषाम् । अत्र त्रिलोकीति न ब्रह्माण्डाभिप्रायम् । किन्तु लोकत्रयमेव । यद्यपि कर्मभिरपि सर्वत्र ब्रह्माण्डे गमनमस्ति तथापि न तेषां स्वेच्छया गमनमित्याह—**तामिति** । या स्वच्छन्दा योगिनां सा न कर्मिणामित्यर्थः । ननूपायस्य तुल्यत्वेऽपि योगस्य कथं गौणता कथं कर्मणां मुख्यत्वमिति । तत्राऽऽह—**विद्यातपोयोगसमाधिभाजामिति** । कर्म तु स्वतन्त्रमसहायं जीवं स्वाधीनं करोति । योगे तु विद्यादयोऽन्येऽपि चत्वारः सन्ति । तत्संवेष्टितं जीवं योगः स्वाधीनं कर्तुं न शक्नोति । एवमन्येऽपि । ततश्च जीव एव स्वतन्त्रः । अन्ये तु गुणभूताः स्वेच्छया गमने सहायभूता भवन्ति । विद्या उपासना मन्त्रप्रकारेण । तपः कृच्छ्रादि । ज्ञानं वा । योगोऽष्टाङ्गः । समाधिः समाधिस्थितभगवद्दर्शनेन तज्जनितभक्तिसहितपरमधर्म उच्यते । एतेषु करणदशायामपि पुरुषस्य स्वातन्त्र्यम् । कर्ममार्गे तु विध्यधीनतेति ॥ २३ ॥

**एवं पुरुषस्य** स्वाधीनतां निरूप्य गमनप्रकारमाह **वैश्वानरं यातीत्यादिना**—

**वैश्वानरं याति विहायसा गतः सुषुम्णया ब्रह्मपथेन शोचिषा ।**
**विधूतकल्कोऽथ हरेरुदस्तात्प्रयाति चक्रं नृप शैशुमारम् ॥ २४ ॥**
**तद् विश्वनाभिं त्वतिवर्त्य विष्णोरणीयसा विरजेनाऽऽत्मनैकः ।**
**नमस्कृतं ब्रह्मविदामुपैति कल्पायुषो यद्विबुधा रमन्ते ॥ २५ ॥**
**अथो अनन्तस्य मुखानलेन दन्दह्यमानं स निरीक्ष्य विश्वम् ।**
**निर्याति सिद्धेश्वरजुष्टधिष्ण्यं यद्द्वैपरार्ध्यं तदु पारमेष्ठ्यम् ॥ २६ ॥**

यावदवसाने आनन्दमयस्तावद्यातीति सम्बन्धः । वैश्वानरमग्न्यधिष्ठातृदेवतालोकम् । **"अग्निर्ज्योतिरहः शुक्ल"** इति वाक्यप्रकारेण गमनम् । ननु तस्य लोकस्य दूरे विद्यमानत्वाद्बहुकालव्यवधानेन अन्तरा भोगाभावाद्भोगाभिनिवेशस्य विद्यमानत्वात्पुनरागमनं स्यात् । तदर्थमाह—**विहायसा गत इति** । आकाशमार्गेण गतः । पूर्वमेव **"पवनान्तरात्मनामि"** त्युक्तत्वाद्यथा वायो-

1. त्रिलोकी न ब्रह्माण्डाभिप्रायमिति क. ग. 2. नेति नास्ति. 3. स्वच्छन्दयोगिनामिति क. घ. 4. अन्ये गुणभूता इति क. ख. ग. 5. विध्यधीनतयेति क. ख. घ.



र्गमनं तथा तेषामपीत्यर्थः । ननु वायोरितस्ततो गमनसम्भवात्तद्वदस्याऽपि न ऋजुमार्गेण वैश्वानरे गमनं सम्भवति? तत्राऽऽह—**सुषुम्णयेति** । सुषुम्णामार्गेण गच्छतीति नाऽन्यत्र गमनम् । ननु सुषुम्णाऽपि कथं नाऽन्यत्र गच्छति? तत्राऽऽह—**ब्रह्मपथेनेति** । ब्रह्मणः पन्थाः । ब्रह्ममार्गत्वाद्ब्रह्मापि वैकुण्ठ एव गच्छति । ननु सुषुम्णाया नाडीरूपत्वात्कथं देहाद्बहिर्निर्गमनम्? तत्राऽऽह—**शोचिषेति** । तेजोरूपया । एवं तेन मार्गेण वैश्वानरलोकं गतस्य पूर्वमद्भिः सम्परिष्वक्तस्य गमनात्कामनाबाहुल्येन वा सकल्कत्वात् तत्र भोगे अग्निमध्यभोगात्कल्कशोषः । अतस्तदनन्तरं ज्योतिस्स्थानगमने आदित्यादि ध्रुवपर्यन्तं गमने विधूतकल्को भूत्वा, अथ भिन्नप्रक्रमेण तेजोमयशरीरेण हरेर्भगवतः स्वरूपभूतं शिशुमाररूपं चक्रमुपयाति । यद्यपि शिशुमारचक्रस्य भूमेः परितो विद्यमानत्वात्सर्वत्र गमनमायाति, तथाप्युदस्तादूर्ध्वमेव गच्छति । **नृपेति** सम्बोधनं शुद्धसत्वात्मकस्योर्ध्वगमनस्य संवादबोधकम् । यथा नरपालकस्य नृभिरूर्ध्वं नयनमिति । शिशुमारस्वरूपमग्रे वक्ष्यते । तत्र ध्रुवस्थानं शिशुमारस्याऽन्ते भवति । तद्ब्रह्माण्डस्य नाभिस्थानीयम् । ततोऽग्रे लोकचतुष्टयम् । तत्र तुशब्देन पूर्वरूपाद्रूपान्तरकरणमुक्तम् । ततो द्वितीयं ध्रुवे । **विष्णोरित्युभयत्र** सम्बध्यते । तत्र गमनयोग्यं शरीरं वर्णयति—**अणीयसा विरजेनाऽऽत्मनेति** । पूर्वापेक्षया तदणीयः । वायुप्रधानत्वात् । प्रशिथिलावयव इत्यर्थः । तत्रापि विरजः । वायोरपि लोकत्रय एव रजःसम्बन्धः । अथवा । पूर्वशरीरं तामसं स्थितं तद्वैश्वानरलोके त्यक्तम् । ततो द्वितीयं ध्रुवे त्यक्तम् । तृतीयमिदमिति तमोरजसोरभावाद्विरजेनेत्युक्तम् । केवलसत्त्वमयेन सत्त्वमिश्रेण वा । केवलसत्त्वेन ब्रह्माण्डभेदस्य वक्ष्यमाणत्वात् । आत्मना पूर्ववदात्मत्वेन गृहीतेन देहेन । **एक इति** । तत्र वैमानिकानां गमनाभावादसहायत्वेनैकाकित्वम् । ब्रह्मविदां स्थानं अन्यैर्नमस्कृतं केवलं ज्ञानिनामेव स्थितियोग्यं महर्लोकम् । यत्र महर्लोके । कल्पायुषः ब्रह्मकल्पपर्यन्तमायुर्येषाम् । विशेषेण बुधा ज्ञानिनो भृग्वादयो रमन्ते भगवद्गुणानुस्मरणैः ज्ञानेन वा समाधिरूपेण । अयमपि तत्र गतो ब्रह्मकल्पपर्यन्तं तिष्ठति । ततो भगवच्छयने जाते अनन्तस्य सङ्कर्षणस्य मुखाग्निना त्रैलोक्यमत्यन्तं दह्यमानं निरीक्ष्य ततो निर्याति भृग्वादिभिः सह । गमनस्य बहुकालव्यवधानत्वात् अथो इत्युक्तम् । सिद्धेश्वरैर्जुष्टानि धिष्ण्यानि यत्र जनस्तपोलोके । पारमेष्ठ्यं सत्यलोकस्थानम् । तदपि पूर्ववत्सिद्धेश्वरसेवितमित्यर्थः ॥ २५ ॥ २६ ॥

तत्र मुक्तिवत्सुखमाह—

**न यत्र शोको न जरा न मृत्युर्नाऽऽर्तिर्न चोद्वेग ऋते कुतश्चित् ।**
**यच्चित्ततोऽदः कृपयाऽनिदंविदां दुरन्तदुःखप्रभवानुदर्शनात् ॥ २७ ॥**

**न यत्रेति** । यत्र ब्रह्मलोके शोकः अज्ञानकार्यं नास्ति । न वा जरा देहधर्मः । न वा मृत्युः मृत्युग्रासः । नाऽऽधिः मनःपीडा अपि न । अन्तःकरणधर्माभावः । मृत्योः प्राणग्राहकत्वात्तद्धर्म इति केचित् । उद्वेगः बुद्धेः । असहिष्णुता वा । यद्यप्यसहिष्णुता उद्वेगश्च तत्राप्यस्ति, तथाप्यन्यतो न किन्तु स्वत एव । तदाह—**ऋते कुतश्चिदिति** । अन्यस्मादृते, किन्तु स्वत एव । स्वतस्त्वं विशदयति—**यच्चित्ततोऽद इति** । अदः प्रसिद्धं चित्ततः चित्ताद्धेतोः यत् तत्स्वानुभवगम्यमतो विशेषतो न वक्तुं शक्यमिति तथोक्तम् । तत्र विषयमाह—**अनिदंविदां दुरन्तदुःखप्रभवानु-**

1. ध्रुवेत्युक्तमिति क. ग. 2. नाम संस्थितमिति क. 3. वैश्वानरलोकेत्युक्तमिति ख.

**दर्शनादिति** । इदं स्थानमेतत्साधनं ज्ञानं मार्गप्रकारं वा न विदन्तीति तथा । दुरन्तं यद्दुःखं तस्य प्रभवो यत्र संसारे तस्य अनु पश्चाद्दर्शनम् । एकवारमुत्पन्ना अपि विवेकिनोऽपि पुनस्तत्रैव गच्छन्तीति तथा ॥ २७ ॥

ततः स्वेच्छया ब्रह्माण्डभेदनमाह—

**ततो विशेषं प्रतिपद्य निर्भयस्तेनाऽऽत्मनाऽपोऽनलमूर्त्तिरत्वरन् ।**
**ज्योतिर्मयो वायुमुपेत्य काले वाय्वात्मना खं बृहदात्मलिङ्गम् ॥ २८ ॥**

**ततो विशेषमिति** । अश्वमेधयाजिनोऽपि तत्र गच्छन्ति । तथा हिरण्यगर्भोपासकाः पूर्वोक्ताश्च । तत्र "**आ ब्रह्मभुवनाल्लोका**" इति वाक्यात्कर्मिणां पुनरावृत्तिः । हिरण्यगर्भोपासकानां ब्रह्मणा सह या ब्रह्मणो गतिः सा गतिः । पूर्वोक्तस्त्वण्डं भित्त्वा गच्छन्तीत्याह । ततः सत्यलोकाद्विशेषं पृथिव्यावरणरूपं प्रतिपद्य पृथिवीरूपो भूत्वा तत्र प्रविष्टः पृथिव्यावरणातिक्रमे आवरणरूपपृथिवीसायुज्यं प्राप्य तामतिक्रम्य पुनर्जलरूपेण जलसायुज्यं प्राप्य तदतिक्रम्यैत्येवमग्रेऽपि । आकाशातिक्रमपर्यन्तं गच्छति । सर्वत्र तेनाऽऽत्मनेति ज्ञातव्यम् । **अत्वरन्निति** तत्र तत्र गन्धादिभोगान्भुञ्जान एव विलम्ब्य । काले भोगेच्छावसाने उत्तरत्र गमनमिति सर्वत्र । खमाकाशम् । तत् बृहत् अनन्तमेव । शब्दब्रह्मरूपं वा । नादात्मकं वा । तस्य बृहत्त्वे हेतुः । आत्मनः भगवतो लिङ्गं शरीरम् । "**आकाशशरीरं ब्रह्मे**"ति श्रुतेः । भगवतो व्यापकत्वं अन्तर्बहिर्व्यवहारहेतुत्वं परिच्छेदापरिच्छेदौ शब्दब्रह्माश्रयत्वमित्यादिधर्मबोधकम् ॥ २८ ॥

एवमाकाशान्तपरित्यागे महाभूतांशाः परित्यक्ताः । विषयातिक्रमे इन्द्रियातिक्रममाह—

**घ्राणेन गन्धं रसनेन वै रसं रूपञ्च दृष्ट्या श्वसनं त्वचैव ।**
**श्रोत्रेण चोपेत्य नभोगुणत्वं प्राणेन चाऽऽकूतिमुपैति योगी ॥ २९ ॥**

**घ्राणेनेति** । प्राणेनेति पाठेऽपि स एवाऽर्थः । सर्वत्र तत्तदुपेत्य तद्भोगानन्तरं तत्तदतिक्रम्येति ज्ञातव्यम् । नभोगुणत्वं शब्दत्वम् । प्राणेन कर्मेन्द्रियसहितेन । तद्रूपेण वा । आकूतिं क्रियाप्रेरकमपि । उपैति त्यजतीति पूर्ववत् । योगीति योगसामर्थ्याविस्मरणम् ॥ २९ ॥

अहङ्काराद्यतिक्रममाह—

**स भूतसूक्ष्मेन्द्रियसन्निकर्षं मनोमयं देवमयं विकार्यम् ।**
**सम्प्राप्य गत्या सह तेन याति विज्ञानतत्त्वं गुणसन्निरोधम् ॥ ३० ॥**
**तेनाऽऽत्मनाऽऽत्मानमुपैति शान्तमानन्दमानन्दमयोऽवसाने ।**
**एतां गतिं भागवतीं गतो यः स वै पुनर्नेह विषज्जतेऽङ्ग ॥ ३१ ॥**

स एव योगी । भूतानां सूक्ष्माणामिन्द्रियाणां च सन्निकर्षमुत्पत्तिस्थानं तामसं राजसं चाऽहङ्कारं

१ आत्मप्रकारं वा इति ख. २ भेदनप्रकारमिति ख. ३ विशेषवाक्यादिति ख. ४ आकाशादतिक्रमपर्यन्तमिति ख. आकाशादिति क्रमपर्यन्तमिति ग.



मनोमयं देवमयमिति सात्त्विकं विकार्यं मूलाहङ्कारम् । तेन रूपेण गत्या सह याति । क्रियामहङ्कारं च त्यजतीत्यर्थः । विज्ञानतत्त्वं महत्तत्त्वम् । गुणसन्निरोधं प्रकृतिम् । सर्वत्र तेनाऽऽत्मनेति । अग्रे पुरुषावरणम् । तत्रापि तेनाऽऽत्मना आत्मानमुपैति । ततः शान्तं अक्षरम् । तत आनन्दं पुरुषोत्तमम् । स्वयमप्यानन्दमयो भूत्वोपैति । अवसाने । अतः परं गमनं नास्ति । "**मामुपेत्य तु कौन्तेये**"ति वाक्यमेतादृशपरमित्याह—**एतां गतिमिति** । ब्रह्माण्डमध्ये हृदयमध्ये ब्रह्माण्डात्परतो वा यत्रैवाऽऽनन्दमयो भूत्वा आनन्दरूपं भगवन्तं प्रविशति स नैवेह पुनः संसारं प्रविशति ॥ ३० ॥ ३१ ॥

एवमपुनरावृत्तिमार्गद्वयमुक्त्वा सद्योमुक्तिक्रममुक्तिरूपमुपसंहरति—

**एते सृती ते नृपदेव गीते त्वयाऽभिपृष्टे च सनातने च ।**
**ये वै पुरा ब्रह्मण आह पृष्ट आराधितो भगवान् वासुदेवः ॥ ३२ ॥**

**एते सृती इति** । एतेषां सर्वेषां पदार्थानामध्यायद्वयोक्तानां भगवत्स्वरूपत्वेनैव ज्ञानार्थमुक्तानां यथानिवेशं यथोपयोगं युक्तिभिर्विमर्शे स्वरूपं स्पष्टं भविष्यति । अत्र तूद्देशमात्रं कृतम् । तत्र स्पष्टमेव विवरिष्यामः । ते तुभ्यम् । हे नृपदेव । गीते राजत्वात्त्वत्सुखार्थं स्वरूपेण कीर्त्तिते । तत्रापि त्वया अभिपृष्टे । साधनस्य फलपर्यवसानात्साधनप्रश्नेनैव तत्प्रश्न उक्तो भवति । **सनातने च** । न हीदम्प्रथमतया कश्चिदस्मिन्मार्गे गच्छति किन्त्वनादिसिद्धे । अत्र गन्ता अग्रे स्पष्टो भविष्यति । अनादित्वे प्रमाणमाह—**ये वै पुरेति** । ब्रह्मणैवं पृष्टे ब्रह्मणे आह भगवानपि पृष्टः सन् । कथने हेतुः—**आराधित इति** । एवं कथने हेतुमाह—**वासुदेव इति** । मोक्षदातृत्वेनैवमुक्तवानित्यर्थः ॥ ३२ ॥

एवं फलं निरूप्योपसंहृत्यैतन्मार्गप्रवेशे कियन्त उपायाः सन्तीत्याकाङ्क्षायामाह—

**न ह्यतोऽन्यः शिवः पन्था विशतां संसृताविह ।**
**वासुदेवे भगवति भक्तियोगो यतो भवेत् ॥ ३३ ॥**

**न ह्यतोऽन्य इति** । अस्मात्पूर्वोक्तादन्यः शिवः कल्याणरूपः साधनदशायामपि सुखकरः पन्था आदौ तत्र निविष्टस्य पुनर्भ्रमाभावार्थं मार्गरूपः कोऽपि नास्ति । बहूनां च गतियोग्यः । एतदज्ञानेन इह संसारे विशतां, न तु निविष्टानां संसार्येकस्वभावानाम् । तं मार्गं पुनः स्मारयति—**वासुदेवे भगवति भक्तियोगो यतो भवेदिति** । मोक्षदानार्थमागते भगवति साक्षात्परब्रह्मरूपे सत्त्वाकारेण परिणतान्तःकरणे सत्त्वासने षड्गुणैश्वर्यरूपेणाऽऽविर्भूते येनैवोपायेन परमा प्रीतिर्भवति स एवोपाय इत्यर्थः । श्रवणादिभिः स्नेहः । ततो मननिदिध्यासनरूपेण ध्यानेन सर्वभावस्नेहो द्वितीयः । ततोऽपि सूक्ष्मध्यानेन हृदि भगवति समागते तत्र यः परमस्नेहः साक्षाद्भगवत्प्रवेशहेतुः स फलरूपोऽपि साधनरूपोऽपि अवान्तरव्यापाररूपोऽपीति तद्धेतुर्मार्गः गृहान्निर्गतस्येष्टदेशप्रवेशपर्यन्तं विततः । तत्र पूर्वभागः साधनरूपो मध्यभागोऽवान्तरव्यापाररूपोऽग्रिमो भगवत्सम्बद्धफलरूपः । तत्र श्रवणादि ध्यानद्वयं च क्रमाद्वितता भूमिः । प्रीतिः पादौ । सा चेत्प्रीतिस्तन्मार्गेण तावत्पर्यन्तं गच्छति तदा भगवन्तं प्रापयति नाऽन्यथेति ॥ ३३ ॥

१ रूपं प्रकृतिमिति ख. २ नृपदेवेति इति ख. घ. ३ राजत्वात्सुखार्थमिति ख. घ. ४ ब्रह्मणैव पृष्टे इति ख. ग. घ. ५ परब्रह्मस्वरूपे इति ख. ६ ध्यानेनेति नास्ति ख. घ. ७ तद्धेतुमार्ग इति ख. ग. ८ मध्यमेति क.

फलसाधननिर्धारः पूर्वमेव जात इत्याह—

**भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया ।**
**तदध्यवस्यत्कूटस्थो रतिरात्मन्यतो भवेत् ॥ ३४ ॥**

**भगवानिति** । प्रमेयबलेन स्वयमुक्त्वाऽपि प्रमाणबलेनाऽपि तद्वक्तव्यमिति पूर्वोक्तमनादिसिद्धं राशीभूतवेदं मनीषया विचारकबुद्ध्या आलोच्य फलत्वेनाऽऽत्मानं विनिश्चित्य साधनविचारे क्रियमाणे "**यमेवैष वृणुत**" इत्यादिवाक्यैः प्रीतिमेवाऽवान्तरव्यापारं ज्ञात्वा "**भक्त्यैव तुष्टिमभ्येती**"ति विचार्य मुख्यं साधनं भक्तिं ज्ञात्वा तत्साधकत्वेनाऽन्यदित्यध्यवस्यत् । तत्रापि कूटस्थो निश्चलः ॥ ३४ ॥

एवं प्रमाणेन युक्त्या च भक्तिमार्गं स्थिरीकृत्य अन्येषां मार्गाणां परम्परोपयोगं वक्तुमाह—

**भगवान् सर्वभूतेषु लक्षितः स्वात्मना हरिः ।**
**दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकैः ॥ ३५ ॥**

**भगवानिति** । प्रतिपुरुषं प्रतिविषयं शास्त्राणि प्रसृतानि । तानि न सर्वथा बाधितविषयाणि । परम्परोपयोगात् । भगवांस्तैः सर्वैरेव सर्वभूतेषु लक्षितः लक्षणया ज्ञापितः । नैयायिकैः कर्तृत्वेन, मीमांसकैः क्रियात्वेन, वेदान्तैरात्मत्वेन, साङ्ख्यादिभिः करणत्वेन । अन्यैश्च तद्भेदैर्ज्ञानत्वेन ज्ञातृत्वेन चाऽन्यैः । ज्ञानाधिष्ठातृत्वेन च । सर्वैरेव भगवानेकदेशे लक्षितः । अन्धहस्तिवत् । अनुभवेन युक्त्या च । स्वात्मना अनुभवेन । दृश्यैः । द्रष्टा । बुद्ध्यादिभिश्च लक्षणैरसाधारणचिह्नैः जीवेषु प्रवेशमलभमानैः क्रियादिभिः । अत एवाऽनुमापकैः तर्कसहकृतैः परोक्षज्ञानजनकैर्लक्षित इति सम्बन्धः । लक्षणया ज्ञापित इत्यर्थः ॥ ३५ ॥

तस्मात्सर्वेषामेव दर्शनानामप्रयोजकत्वात्पूर्वोक्तप्रकारेणैव कर्तव्यमित्युपसंहरति—

**तस्मात्सर्वात्मना राजन् हरिः सर्वत्र सर्वदा ।**
**श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान्नृणाम् ॥ ३६ ॥**

**तस्मादिति** । **सर्वात्मनेति** उत्तराङ्गसाहित्येन । **राजन्नि**त्यवधारणसामर्थ्यमुक्तम् । **हरिरिति** साधनदशायां जातदुःखदूरीकरणार्थम् । **सर्वत्र सर्वदेति** । देशकालविचारो न कर्तव्यः । पूर्ववच्छ्रोतव्यादिफलार्थम्—**भगवानिति** । **नृणामिति** मनुष्यमात्राधिकारित्वम् ॥ ३६ ॥

एवं मार्गं वस्तुतत्त्वं चोक्त्वा प्रकरणस्य समाप्तत्वात्साधारणश्रवणस्याऽपि शुद्धिद्वारा भगवत्प्रापकत्वमाह—

**पिबन्ति ये भगवत आत्मनः सतां कथामृतं श्रवणपुटेषु सम्भृतम् ।**
**पुनन्ति ते विषयविदूषिताशयं व्रजन्ति तच्चरणसरोरुहान्तिकम् ॥ ३७ ॥**

**पिबन्ति ये भगवत इति** । बहिः स्थितस्याऽन्तः प्रवेशनं पानम् । **भगवत आत्मनः सता**-

१ ज्ञात इति ख. ग. घ. २ मनुष्यमात्राधिकारित्वमितीति ख.



**मिति** । सर्वेषामेव भगवत्त्वेन भगवान् स्फुरति । सतां त्वात्मत्वेनाऽपि । सर्वे सकामाः सन्तः प्रेमैका इति विभागः । कथैवाऽमृतम् । श्रवणपुटेषु उत्तम्भितकर्णपुटेषु पूर्णम् । विषयैर्विदूषितमाशयं पुनन्ति । यथाऽन्तरसाध्यरोगव्याप्तो वैद्यैरमृतरसेन सिद्धः क्रियते, तथाऽन्तःकरणमपि विषयसहितैर्विशेषेण दूषितं सर्वथा सन्मार्गानर्हं तादृशमपि पुनन्ति । क्रमात्तच्चरणसरोरुहान्तिकं वैकुण्ठं भक्तं वा प्राप्नुवन्तीत्यर्थः ॥ ३७ ॥

**इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां द्वितीयस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥**

---

## तृतीयोऽध्यायः ।

**श्रोतव्यविषयत्वेन तत्त्वमेवं निरूपितम् ।**
**उद्देशेनाऽस्य निपुणं साधनं विनिरूप्यते ॥ १ ॥**
**अदृष्टं साधनं वाच्यं दृष्टं चाऽप्यत्र सम्मतम् ।**
**अन्यथा क्रियमाणस्तु विमर्शो व्यर्थतां व्रजेत् ॥ २ ॥**
**इन्द्रियाणामदुष्टत्वे ह्यनुकूले तथेश्वरे ।**
**साध्यं सम्पद्यते पूर्णमतोऽत्र द्वयमीर्यते ॥ ३ ॥**
**श्रद्धाऽपि तदभिप्रायाच्छ्रोतुर्वक्तुश्च गम्यते ।**
**तस्मात्साधनसंयुक्तः शृणुयान्नेतरो वृथा ॥ ४ ॥**

एवमध्यायद्वयेन श्रवणं सविषयं निरूप्य, महाफले श्रवणे सर्वेषामप्रवृत्तिं दृष्ट्वा, किञ्चिदस्ति निमित्तं यतः सर्वे न प्रवर्तन्त इत्याकाङ्क्षायां विषयस्य निर्दुष्टत्वात्करणदोषो वा तदधिष्ठातृदोषो वा भवेदित्याशङ्क्य, तयोरप्यधिष्ठातुर्बलिष्ठत्वात्तत्प्रतिबन्धादेव श्रवणादिष्वप्रवृत्तिरिति विनिश्चित्य, देवताना भजने तत्प्रतिबन्धो गमिष्यतीति पूर्वं देवतान्तरभजनं साधनीयं तत इन्द्रियाणां च शोधनमित्याशङ्क्य, देवतान्तरभजने पुनर्बहिर्मुखत्वात्तेषां नियतफलजनकत्वाच्च प्रतिबन्धाभावार्थं क्रियमाणे भजने दोषान्तरमापद्येतेति तेषां फलानां नियतत्वं प्रतिपादयितुं प्रथमं पूर्वेण संश्लेषं निवारयितुं पूर्वोक्तमुपसंहरति—

श्रीशुक उवाच—

**एवमेतन्निगदितं पृष्टवान् यद्भवान्मम ।**
**नृणां यन्म्रियमाणानां मनुष्येषु मनीषिणाम् ॥ १ ॥**

**एवमेतदिति** । मम मां प्रति । नृणां मध्ये ये म्रियमाणास्तेषामप्युक्तं मनुष्याणामपि मध्ये ये मनीषिणस्तेषामप्यर्थे श्रवणादिकमुक्तमित्यर्थः ॥ १ ॥

१ प्रेम्णा इति क. २ अतान्तविषयेत्यादि ख. ३ यथा इति ग.

ब्रह्मवर्चसकामस्तु यजेत ब्रह्मणस्पतिम् ।
इन्द्रमिन्द्रियकामस्तु प्रजाकामः प्रजापतीन् ॥ २ ॥
देवीं मायां तु श्रीकामस्तेजस्कामो विभावसुम् ।
वसुकामो वसून्रुद्रान् वीर्यकामोऽथ वीर्यवान् ॥ ३ ॥
अन्नाद्यकामस्त्वदितिं स्वर्गकामोऽदितेः सुतान् ।
विश्वान्देवान् राज्यकामः साध्यान् संसाधको विशाम् ॥ ४ ॥
आयुःकामोऽश्विनौ देवौ पुष्टिकाम इलां यजेत् ।
प्रतिष्ठाकामः पुरुषो रोदसी लोकमातरौ ॥ ५ ॥
रूपाभिकामो गन्धर्वान् स्त्रीकामोऽप्सरउर्वशीम् ।
आधिपत्यकामः सर्वेषां यजेत परमेष्ठिनम् ॥ ६ ॥
यज्ञं यजेद्यशस्कामः कोशकामः प्रचेतसम् ।
विद्याकामस्तु गिरिशं दाम्पत्यार्थमुमां सतीम् ॥ ७ ॥
धर्मार्थमुत्तमश्लोकं तन्तुं तन्वन्पितॄन्यजेत् ।
रक्षाकामः पुण्यजनानोजस्कामो मरुद्गणान् ॥ ८ ॥
राज्यकामो मनून् देवान्निर्ऋतिं त्वभिचरन् यजेत् ।
कामकामो यजेत्सोममकामः पुरुषं परम् ॥ ९ ॥

पूर्वोक्तमुपसंहृत्य देवतान्तरभजननिराकरणार्थं स्वमते अष्टाविंशतिदेवास्तत्त्वरूपाः, वेदे च ये त्रयस्त्रिंशद्देवा वसवो रुद्रा आदित्या इन्द्रः प्रजापतिश्चेति तेऽप्यत्रोक्तास्तत्त्वरूपेण । किं बहुना । सर्वे तत्त्वेष्वन्तर्भूताः । ते[1] त्वष्टाविंशतिः । "एते देवाः कला **विष्णोरि**"ति वाक्यात् । ते च प्रजापतिप्रभृतिसोमान्ताः । तत्र प्रथमं रजोगुणाभिमानिनी देवता ब्रह्मणस्पतिः । वेदादिकर्त्ता जगन्निर्माता चेत्यर्थः । तद्भजने ब्रह्मतेजो भवतीति ब्रह्मवर्चसकाम एव तं भजेदित्यर्थः । ततः सत्त्वाभिमानिनी इन्द्रो देवता यज्ञादिरूपः । तद्भजने इन्द्रियसिद्धिर्भवतीति इन्द्रियकामस्तं भजेत । एवमुत्तरत्राऽपि । प्रजाकामः पुत्रकामः[2] । प्रजापतीन् मरीच्यादीन् । तमोधिष्ठात्री देवता[3] । देवीं मायाम् । प्रकृत्यधिष्ठात्री देवता[4] । श्रीकामः धनकामः । सम्पत्तिरूपं धनम् । तेजस्कामः । स्वस्मिन्नधृष्यं तेजः । दुर्द्धर्षत्वमिति यावत् । विभावसुरग्निः । वसुकामः धनमात्रकामः । वसून् द्रोणादीन् । रुद्रान्[5] वामादीन् । वीर्यकामः पराक्रमकामः । अत्र फले विशेषमाह—**अथ वीर्यवानिति** । तदनन्तरमेव वीर्यवान् भवति । वागभिमानिनी देवता अग्निः । गन्धाभिमानिनी देवता वसवः । रुद्रा आकाशस्य । अदितिर्भूमेः । अन्नाद्यकामः अन्नभोजनकामः । अन्नभक्षणसामर्थ्यमन्नसमृद्धिर्वा । स्वर्गकामः

१ तेष्वष्टाविंशतिरिति ख. २ पुत्रकाम इति नास्ति क्वचित्. ३ देवतामिति ख. ४ देवतामिति ख. ५ रुद्रादीनिति क



स्वर्गलोककामः । अदितेः सुतान् द्वादशाऽऽदित्यान् । तेजोऽभिमानिनी[1] । विश्वेदेवाः विश्वायाः पुत्राः । राज्यकामः राजत्वकामः । साध्यान् साध्यायाः पुत्रान् । विशां देशस्थप्रजानां संसाधकः स्वाधीनकरणेच्छुः । विश्वेदेवा जलस्य । साध्या वायोः । आयुःकामः आयुष्याभिवृद्धिकामः । अश्विनौ अश्विनीकुमारौ । घ्राणदेवता । पुष्टिकामः स्थूलत्वकामः । सर्वान् पोषान् वा कामयते । इला भूमिः । शब्दाधिष्ठात्री देवता । प्रतिष्ठाकामः लोके सन्माननाकामः । **पुरुष इति** । योग्यस्यैवैषा कामना । एवमन्यत्राऽपि ज्ञातव्यम्[2] । रोदसी द्यावापृथिव्यौ । लोकानां मातरौ । लोकमातृत्वं गुणः । मातृकापूजायां विहिते वा । हस्ताभिमानिनी । रूपाभिकामः सौन्दर्यकामः । गन्धर्वान् विश्वावसुप्रभृतीन् । एता राष्ट्रभृतो देवताः । "एते वै गन्धर्वाप्सरसो यद्राष्ट्रभृत" इति श्रुतेः । स्त्रीकामः सुन्दरस्त्रीप्राप्तिकामः । अप्सरोरूपामुर्वशीम् । अधरारणिदेवताम् । देवपत्नीमध्ये वा । गन्धर्वा रूपस्य । अप्सरसो रसस्य । आधिपत्यकामः सर्वेषामहमधिपतिर्भविष्यामीति । परमेष्ठिनं गुह्याधिष्ठातारम् । यज्ञं यज्ञपुरुषम् । चरणाधिष्ठात्री[3] । यशस्कामः कीर्त्तिकामः । कोशकामः भाण्डारकामः । कोशो धनसञ्चयः । प्रचेतसं वरुणम् । रसनेन्द्रियाधिष्ठातारम्[4] । विद्याकामः । ब्रह्मविद्यादिविद्याः । गिरिशं महादेवम् । अहङ्काराधिष्ठातारम् । दाम्पत्यार्थं दम्पत्योः प्रीत्यर्थम् । उमां सतीम् । जन्मद्वयव्यापिनीं महादेवभार्याम् । धर्मार्थं धर्मसिद्ध्यर्थम् । उत्तमश्लोकं वेदवेद्यम् । तन्तुं तन्वन् सन्ततिं विस्तारयन् । पितॄन् अग्निष्वात्तादीन् । रक्षाकामः भूतादिभ्यः शत्रुभ्यो रक्षामिच्छन् पुण्यजनान् यक्षादीन् । ओजस्कामः इन्द्रियबलकामः । मरुद्गणान् दितिपुत्रान् । राज्यकामः राज्याधिपत्यकामः । मनून् देवान् स्वायम्भुवादीन् तन्मन्वन्तरदेवताश्च । निर्ऋतिं मृत्युम् । अभिचरन् शत्रुमरणमिच्छन् । कामकामः कन्दर्पवृद्धिमिच्छन् । सोमम् । अकामः सर्वकामरहितस्तु परं पुरुषं पुरुषोत्तमम् । अयमेकोनत्रिंशत् सर्वतत्त्वपतिः । सोमो मनसः । निर्ऋतिः पायोः । मनवो देवाश्चक्षुषः । मरुद्गणास्त्वचः । पुण्यजना जलस्य । पितरो महत्तत्त्वस्य । उत्तमश्लोकः पुरुषस्य । उमा श्रोत्रस्य । एवं कामनाभेदेन प्रकृतोपयोगिसर्वबलसिद्ध्यर्थं तत्तद्देवताभजनं कर्त्तव्यमित्युक्तम् । वैराग्यार्थं च भगवान् । तत्र कामना ब्रह्मवर्चसादिविषयाः । इयं[5] कामनाभेदेन भक्तिः साक्षात्परब्रह्मणो वासुदेवस्याऽसाधारणो धर्मः स्नेहात्मा । स तदैव[6] प्रकाशते यदा तत्र वर्चस्तेजः प्रकाशकं भवति । वेदेन ब्रह्ममात्रं प्रकाशयितुं शक्यं न तु ब्रह्मधर्मः साक्षात् । नाऽपि प्रत्यक्षतया । प्रत्यक्षसमवेता अप्यभिव्यञ्जकाभावे न प्रकाशन्ते । अतो ब्रह्मणि भगवति यद्वर्चस्तत्त्वेत्स्वस्मिन्नागच्छेद्दीपहस्त इव सर्वं पश्येत् । अतः प्रथमं ब्रह्मवर्चसकामना कर्त्तव्या । वेदस्य[7] वा प्रकाशनसामर्थ्यम् । न हि चक्षुर्व्यतिरेकेण स्फीतालोकमध्यवर्त्त्यपि घटः प्रकाशते । तद्ब्रह्मगतं वेदगतं वा को वा दातुं शक्त इति विचारे यो ब्रह्मणः पतिः वेदस्य वेदार्थस्य वा नियामकः येन वा तत्सामर्थ्यं तत्र निहितं भवति तेनैव दातुं शक्यत इति ब्रह्मधर्मान् सर्वान् गृहीत्वा जगति प्रकटनार्थं या रजोगुणदेवता सैवोपास्या । प्रकटनार्थमेव तत्प्रवृत्तेः । नाऽपि कूटस्थम् । तदर्थमप्रवृत्तत्वात्[8] । एवमुत्तरत्राऽपि । इन्द्रियव्यतिरेकेण स्वतो जीवात्मा प्रकाशकेऽपि ब्रह्मवर्चसे करणाभावान्न ज्ञातुं शक्त इतीन्द्रियमपेक्ष्यम् । इन्द्रियवानेव भगवच्छास्त्रेऽधिकारी । "को नु राजन्निन्द्रियवा-

१ तेजोऽभिमानिन इति ग. २ ज्ञातव्या इति क. ख. घ. ३ चरणाधिष्ठात्रीमिति क. ४ स्पर्शस्येति ख. ५ इयं हीति ख. घ. ६ तदैवेति ख. ग. ७ वेदस्य वेति ख. ८ भ्रमप्रवृत्तत्वादिति ग.

नि"ति वाक्यात् । तथेन्द्रियं स्वतो विद्यमानमपि ज्ञानक्रियारूपं कार्यं जनयदपि परमार्थवस्तुबोधक-स्वरूपत्वाभावादपेक्षितेन्द्रियाद्भिन्नम् । "इन्द्रस्य घृष्णं जघुष इन्द्रियं वीर्यमि"त्यादिश्रुतौ तदि-न्द्रियं प्रसिद्धम् । अन्यथा वृत्रहननं प्रजापत्युपधावनं च न स्यात् । अतोऽलौकिकपदार्थज्ञानकरणेन्द्रिय-प्राप्त्यर्थमिन्द्र उपास्यः । तेन हि तदुपायेन प्राप्तम् । यद्यपि प्रजापतिः प्रयोजकस्तथापि तत्पदार्थस्यान-भिज्ञत्वात्तस्यामपि तथात्वादिन्द्र एव सेव्यः । अन्यथेन्द्रस्य पुनःपुनरुपधावनं न भवेत् । अतो भिनो-त्पन्नं तस्य रसमिन्द्र एव जानातीति स एव सेव्यः । ऋणत्रयापाकरणार्थं सहायार्थं वा प्रजा पुत्रादि-रूपा अपेक्ष्यते । अन्यथा भगवद्भजने नैश्चिन्त्यं न स्यात् । तत्र स्वतो जायमानाः प्रजाः स्वापेक्षितं न कुर्वन्तीति स्वापेक्षितप्रजात्याभार्थं मरीच्यादय एव सेव्याः । ते हि ब्रह्मणोऽभिप्रेतं कृतवन्त इति । इदानीं भगवद्भजने लक्ष्मीरूपा सम्पत्तिरपेक्ष्यते । सैव भगवन्निष्ठा तत्र विनियोगमर्हति । अन्यां भग-वानपि न गृह्णीयात् । अतो भजनौपयिकां सम्पत्तिमिच्छन्मायामेव भजेत । तत्रैका माया व्यामोहिका । एका जगत्करणभूता । ते उभे न सेव्ये । अन्यत्राऽधिकृतत्वात् । देवतारूपा सात्त्विकी मोक्षदातुर्वासुदेवस्य मोक्षदानार्थमेव तादृशं रूपं गृहीतवतः तदुपयोगिसाधनसम्पादनार्थं लक्ष्मीरेव "विष्णोर्देहानुरूपां वै करोत्येषाऽऽत्मनस्तनुमि"ति वाक्यात्तद्दार्यारूपेण मायारूपं गृहीतवती। मया सहाऽऽगन्तव्यमिति नियोगकरणान्मायेत्यभिधानम् । "इत्थं विचिन्त्य परमः स तु वासु-देवनामा बभूव निजकारणमुक्तिदाता । तस्याऽऽज्ञयैव निगताऽथ रमाऽपि रूपं यत्र द्वितीयमिव यत्प्रवदन्ति मायामि"ति वाक्यात् । अत एव तुशब्देनाऽन्ये निवारिते । किञ्च । इन्द्रियेण सम्पत्त्या सहायेन प्रकाशेन च भगवद्धर्मेषु समानीतेषु स्वस्य धारणासामर्थ्यसिद्ध्यर्थं स्वस्मिन् तेजः अपेक्ष्यते । अन्यथा ते समागतास्तत्र न निविशेयुः । निविष्टा वा तदाश्रयं दहेयुः । अतः स्वयो-ग्यतासिद्ध्यर्थं तेजः अपेक्षितम् । तद्धि सर्वाभिभावकं सर्वमेव रूपं स्वसमानं करोति । तद्भगवन्निष्ठ-मेव वह्निना प्राप्तम् । विशेषेण भा दीप्तिः वसु धनं यस्येति विभावसुशब्दनिर्वचनात् । अतस्तेजस्कामो विभावसुमेव सेवेत । एवं धनस्याऽपि भगवद्भक्तोपयोगित्वार्थं (?) श्रवणादिसिद्ध्यर्थमुपदेशनार्थं वा देये(?)पेक्ष्यते । साधनरूपश्रवणादिकं तादृशैरेव भवतीति । शुककर्तृकं तु फलरूपम् । दृष्टरूप-त्वाच्च तदपेक्ष्यत एव । तच्चाग्न्याम्नायवसुष्वेव प्रतिष्ठितम् । "त इमं लोकमजयन्नि"ति श्रुतेः । एवं वीर्यस्य बलस्याऽपि भगवत्सेवौपयिकत्वाद्बलाधिष्ठानदेवताया वायोः स्थानभूतस्याऽन्तरिक्षस्य रुद्राः प्रभव इति देवताऽपि तदधीनेति वीर्यकामो रुद्रानेव भजेत । "तेऽन्तरिक्षमजयन्नि"ति श्रुतेः । एवमन्नादेरपि अन्नभक्षणस्य वा । "यच्चादिष्टनमं लोके यच्चाऽनिप्रियमात्मनः" इति वाक्यादन्नाद्यमपि काम्यम् । तत्राऽदितिरियमेव भूम्यधिष्ठात्री देवता । "साऽदितिरब्रवीद्वरं वृणा अथ मयाऽभि-गृह्णीध्वमि"त्युपाख्याने तस्यास्तादृशत्वप्रसिद्धेः । भूमौ भगवद्भजनं कृत्वा दिव्यानां पदार्थानाम-भावात्स्वर्गे कर्तव्यमिति स्वर्गकामना भवति । तत्राऽऽदित्याः प्रभवः । "तेऽमुं लोकमजयन्नि"ति श्रुतेः । विश्वेदेवास्तु राज्येऽधिकारिणः । सर्वदेवताधिष्ठातृदेवतारूपत्वात् । राजा च सर्वदेवतामयः । अतोऽत्र सर्वसमत्या भजनसिद्ध्यर्थं राजत्वमपेक्षितम् । भक्तिमार्गस्त्वलौकिक इत्यसाध्यसाधकपदार्थ-

१ तथेन्द्रियमिति क. २ वृत्रहरणमिति क. ग. घ. ३ प्रजालाभार्थं प्रजेति ख. ४ जगत्कारणभूता इति ग. घ. ५ लक्ष्म्येव इति ख. ६ सह गन्तव्यमिति घ. ७ नियता परमाऽपि रूपमिति ख. ८ चक्रे इति ग. ९ देवतेति ग. १० बलाधिष्ठानदेवता वायोरिति क. ग. घ. ११ अयजन्निति क. ग. घ. १२ वरे वृण इति क. ग. वरं वृणु इति घ. १३ पुराज्ये इति ख.



सिद्ध्यर्थं तदधिकारिणः साध्यान् भजेत । सर्वाश्चेत्प्रजाः स्वाधीना भवेयुस्तदा सर्वत्र भक्तिप्रचारो भवेदिति भक्तिप्रसरणार्थं तत्साधकत्वमपेक्ष्यते । आयुषस्तु भक्तसन्तत्यर्थमुपयोगः स्पष्ट एव । तत्रा-ऽश्विनौ आयुषः प्रभू इति तदुपासनम् । एवं पुष्टिरपि लोकार्थाऽऽत्र भगवत्कार्यमाविकेति सर्वपोष-कर्त्री भूमिं भजेत् । यतो भूमिष्ठा एव सर्वे वर्द्धन्ते अङ्कुरादयः । प्रतिष्ठाया अपि तद्वृत्तानुवृत्त्या प्रच-यार्थमपेक्षा भवति । प्रतिष्ठा च माहात्म्यादैश्वर्याद्वा । तत् द्यावापृथिव्योरेवोभयं प्रसिद्धमिति । भगवदधिष्ठानेषु रूपाभिव्यक्तिसामर्थ्यार्थं "रूपमिति गन्धर्वा" इति श्रुतेस्ते सेव्याः । नृत्यादिना भगवद्भजनार्थं तादृश्यीकामनायामनेकरूपकरणसमर्थोर्वशी सेव्या। नारायणोत्पन्नत्वात् ऋषिमातृत्वात् वैराग्यबोधनेन मुक्तिदातृत्वाच्च । पूर्वनिरुत्यादयस्तु नैवंरूपाः । आज्ञापनसामर्थ्यसिद्ध्यर्थं तथाभूतः परमेष्ठी चतुर्मुखः सेव्यः । स हि सर्वानाज्ञापयतीति । आज्ञापनस्य च भक्तिकारणता स्पष्टा । तथा यशसोऽपि । कीर्त्या हि सर्वे समायान्ति, पश्चात्तद्वृत्तमनुतिष्ठन्ते । यज्ञो हि यशः प्राप्तवान् । "देवा वै सत्रमासतर्द्धिपरिमितं यशस्कामा" इत्यत्र यज्ञेनैव यशसः प्राप्तत्वात्स सेव्यः । प्रचेता निधिपतिः । अलौकिकार्थदाने हि भगवदुत्सवादिर्भवति । विद्यायास्तु साक्षादुपयोगात् । "ईश्वराज्ज्ञानमन्विच्छेदि"ति वाक्यात् । "प्रतिकूले गृहं त्यजेदि"ति दाम्पत्यं भगवद्भज-नार्थमपेक्षितम् । तत्र परमभक्तायाः पतिभक्तस्वपतिनिष्ठतया बहुजन्मसिद्धत्वादुमा सेव्या । धर्मेण च भक्तिर्भवतीति पूर्वं साधितम् । उत्तमैश्च लोके वेदे धर्मप्रतिपादक एव सेव्यते । भक्तिमार्गस्य परम्परासिद्ध्यर्थं सन्तत्यपेक्षायां पितरो हि तदाशंसका इति तेषां भजनम् । रक्षायां कृपणापेक्षितत्वा-द्यक्षभजनम् । ओजस इन्द्रियशक्तेश्च नेत्रश्रोत्रपाटवरूपत्वात् । मरुद्गणाश्च पटवो भवन्ति । बहुधा च्छिन्ना अपि न मृता इति । महापुरुषपूजया सिद्धा इति । परित्यक्तदोषा इति ते सेव्याः । अधि-कारिणः सर्वविनियोगसामर्थ्यात्स्पष्टं मन्वन्तराधिपतयः सेव्याः । प्रतिबन्धकनिवृत्तेरपेक्षितत्वान्निर्-ऋतिः सेव्यः । कामनया सर्वं भवतीति भगवद्विषयककामनोत्पत्त्यर्थं रासप्रकरणे निरूपितस्य सोमस्य भजनं कर्तव्यम् । तेन हि भगवतोऽपि कामः पूरित इति । तादृशकामपितामहत्वाच्च ॥ २-९ ॥

एवं भगवदंशानां तत्तत्साधकत्वमुक्त्वा ससाधनभक्तिसिद्ध्यर्थमपि भगवानेव सेव्य इत्याह—

अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन भजेत पुरुषं परम् ॥ १० ॥

अकाम इति । वैराग्यकामः । पूर्वाध्यायोक्तन्यायेन स्वतन्त्रतया निष्कामो वा । सर्वकामः एत-दध्यायोक्तकामः । मोक्षकामो वा । उदारा धीर्यस्येति स्वतन्त्रो वा । तीव्रेण शीघ्रं भगवत्प्रापकेण । पूर्वोक्तमेव परं पुरुषं भजेत । भगवतैव ससाधनं साध्यं सेत्स्यतीति ॥ १० ॥

ननु भजनमेव कथं सिध्येत् कामनाभावे वकवन्ध्यप्रयासवदित्याशङ्क्य कामनया तत्साधनेऽप्य-न्तरङ्गसाधनसाधकमेव सेव्यमित्यभिप्रायेणाऽऽह—

एतावानेव यजतामिह निःश्रेयसोदयः ।
भगवत्यचलो भावो यद्भागवतसङ्गमः ॥ ११ ॥

१ तद्वृत्त्यानुवृत्त्या इति ख. २ देवा वै सत्रं समासत ऋद्धिपरिमितमिति क. ख. ३ ऋद्धिपरिमितमिति ग. सिद्धं परिमितमिति घ. ४ परमभक्तेः स्वपतिनिष्ठाया इति ग. परमभक्तस्त्वयमिति निष्ठयेति घ. ५ ओज इति क. ग. ६ कामपिता महत्त्वाच्चेति घ.

एतावानेवेति । सर्वाण्येव साधनानि साधनद्वये प्रविशन्ति । भगवद्भक्तसङ्गसाधकत्वेन भगवति रतिसाधकत्वेन च । एतावानर्थश्चेत्सिद्धस्तदा नाऽन्यकामना कर्तव्या । अतएव यजतां मध्ये इह अस्मिन्भक्तिमार्गे श्रेयसः परम उदय एतावानेव । द्वयमेव तदुक्तम् ॥ ११ ॥

तयोरप्येकं साधनं, येन तौ भवत एव । तदाह—

**ज्ञानं यदाऽऽप्रतिनिवृत्तगुणोर्मिचक्रमात्मप्रसाद उभयत्र गुणेष्वसङ्गः ।**
**कैवल्यसम्मतपथस्त्वथ भक्तियोगः को निर्वृतो हरिकथासु रतिं न कुर्यात् ॥१२॥**

**ज्ञानमिति ।** हरिकथासु रतिस्तयोः साधिका । कथारतिषु सत्सङ्गकथका अपि मिलन्ति, प्रेमाऽपि भवतीति । आनुषङ्गिकं चाऽन्यद्द्वयं भवतीत्याह । यासु कथासु आसमन्तात्प्रतिनिवृत्तं गुणोर्मीणामुत्पत्त्यादीनां चक्रं रागादिधर्मसमुदायो येन । सर्वोऽविद्यानिवर्तकमिति यावत् । तादृशं ज्ञानं भवति । तत्साधनमन्तःकरणप्रसादोऽपि भवति । तस्माऽपि साधनमैहिकामुष्मिकगुणेषु वैराग्यम् । एवं ससाधनं ज्ञानमपि सिद्ध्यति । सोपायो मार्गोऽयम् । कैवल्ये सम्मतस्तु मार्गो भक्तियोगः । अथेति भिन्नप्रक्रमे । स्वतन्त्रो न ज्ञानसाधनम् । न वा तत्सहायः । किन्तु पूर्वोक्तकामनया सिद्धसाधनसाध्यः । यत्राऽऽनुषङ्गिकं ज्ञानं भक्तिश्च भवति । भगवति प्रेम भक्तसङ्गश्च मुख्यतया भवति । तादृशीषु कथासु सन्मार्गवर्ती को वा रतिं न कुर्यादित्यर्थः । तत्राऽपि निर्वृतः अप्रवृत्तिमार्गपरः ॥ १२ ॥

एवं ससाधनं भक्तिमार्गमुपदिश्य तस्य विशेषाकाङ्क्षायामन्यद्वक्तव्यमिति तूष्णींभूतः । तथा सूतोऽपि । अयमर्थो गुप्ततया निरूपित इति शौनकादीनां हृदये समागतो नवेति सन्दिह्य तूष्णींभूतेऽपि । स्वाभिप्रायं शौनकः प्रकटयन् गुप्ततयोक्तमर्थं प्रकटयितुमाह—इत्यभिव्याहृत इति गायत्रीस्थिते स्वाभिप्रायं शौनकः प्रकटयन् । तदा द्ध्यायसमाप्तिः । इदमेव हि तस्य परिज्ञानं यद्भक्तयसाधकानां विद्यमानानां वैयर्थ्यज्ञानम् । तदा हि तत्साधनेषु प्रवृत्तिर्भवति । यस्तु सिद्धसाधनः स भगवत्सङ्गेऽपि सिद्धे कथायामपि रतौ सत्यां भगवति खेदार्थमेव यतोऽवशिष्यत इत्यस्मदपेक्षया राजा महान् । अतस्तत्प्रश्नानुसारेणैव भक्त्युपाये ज्ञाते तत्कर्तव्यमित्यभिप्रायेण प्रथमं प्रश्नं पृच्छति—इत्यभिव्याहृत इति चतुर्भिः ।

शौनक उवाच—

**इत्यभिव्याहृतो राजा निशम्य भरतर्षभः ।**
**किमन्यत्पृष्टवान् भूयो वैयासकिमृषिं कविम् ॥ १३ ॥**

अभितो व्याहृतः । उपदिष्ट इत्यर्थः । निशम्य तदभिप्रायं ज्ञात्वा । भरतर्षभत्वान्न व्यामोहः । अतः पूर्वोक्तमेव न पृष्टमित्यर्थः । अन्यदेव पृष्टवान् । यद्यपि सर्वमुक्तरितं तथापि प्रकारान्तरेण तदुपपादकरूपेण वा किं भूयः पृष्टवानित्यर्थः । शुकस्य विरक्तत्वाद्बहुकालस्थित्यभावेन न किञ्चित्पृष्टं भविष्यतीत्याशङ्क्याऽऽह—वैयासकिमिति । सर्वविस्तारकर्तुः पुत्रोऽपि तादृश इति । तत्राऽपि भागवतलक्षणं मद्याभिप्रायानृभगवदभिप्रायं जानातीति सर्वथा कथयिष्यतीति कीर्त्यभिप्रायेण ऋषिपदम् । विशेषकथनसामर्थ्यार्थं कविपदम् ॥ १३ ॥

---

१ साधाय इति ग. २ भिन्नक्रम इति ग. ३ उद्दिश्येति क. घ. ४ सूतोपि तथा इति ख. ५ वा नेतीति क. ६ इत्यभिव्याहृतमिति क. घ. ७ यावदध्यायसमाप्तिः इति क. ग. घ. ८ यतोऽवशिष्यत इति ख. ९ प्रश्नानुसारेणेति ख. १० भरतर्षभत्वादिति क. ख. घ. ११ विस्तारेति ग. घ.



तेन किं भवतामित्यपेक्षायामाह—

**एतच्छुश्रूषतां विद्वन् सूत नोऽर्हसि भाषितुम् ।**
**कथा हरिकथोदर्काः सतां स्युः सदसि ध्रुवम् ॥ १४ ॥**

एतदिति । एतच्छ्रवणेऽस्माकं महतीच्छा । त्वं च जानासि । सर्वत्र कथने च तवाऽधिकार एवेति सम्बोधनद्वयम्—विद्वन्, सूतेति । अतो नोऽस्मभ्यं भाषितुमर्हसि । श्रोतृवक्तृपरत्वव्यावृत्त्यर्थमाह—कथा हरिकथोदर्का इति । अन्या अपि कथाः सतां सदसि हरिकथोदर्का एव भवन्ति । हरिकथैव उदर्क उत्तरफलं यासु । ध्रुवमिति नाऽत्र सन्देहः ॥ १४ ॥

सत्सभायामेवैवं भवति । सुतरामपूर्वसत्सङ्गे । तत्रोभयोः सत्त्वमुक्त्वा तत्सङ्गे कथाऽऽवश्यकत्वं वक्तव्यम् । तत्र प्रथमं समागतस्य पृच्छकाधीनत्वात् पृच्छकस्य भगवद्भक्तत्वमाह—

**स वै भागवतो राजा पाण्डवेयो महारथः ।**
**बालक्रीडनकैः क्रीडन् कृष्णक्रीडां य आददे ॥ १५ ॥**

**स वै भागवत इति ।** निश्चयेन राजाऽपि स भागवत एव । अथवा । राजा हि बहु पृच्छति । भागवतश्च भगवदीयम् । तस्योभयरूपत्वाद्भगवदीयं बहु पृच्छतीत्यर्थः । तस्य भगवदीयत्वे साधनभूतं हेतुद्वयमाह—पाण्डवेयो महारथ इति । भगवदीयवंशे अवतीर्णत्वात्स्वधर्मनिष्ठत्वाच्च । फलमुक्तमनन्तरङ्गं साधनं तस्य चित्तस्वभावो भगवत्पर इत्याह । यस्तु बाल्ये बालक्रीडनकैः क्रीडनकं भगवन्तं स्थापयित्वा तत्सेवकत्वेन राजलीलामिव क्रीडति । वृन्दावनस्थां भगवत्क्रीडां वा अभिनयेनाऽनुकरोति ॥ १५ ॥

शुकोऽपि भगवद्भक्त इत्याह—

**वैयासकिश्च भगवान् वासुदेवपरायणः ।**
**उरुगायगुणोदाराः सतां स्युर्हि समागमे ॥ १६ ॥**

वैयासकिश्चेति । श्रोता तु भगवदीयानां वंशजो भगवदीयः । शुकस्तु भगवतः पुत्रो भगवान् । तथाभूतः सन् वासुदेवपरायणः । चकारादन्येऽपि तादृशाः । अतः सर्वेऽपि सन्तः । तेषां च नूतनः समागमः । तादृशे कथाः सर्वभक्तानां सम्मताः । सर्वपुरुषार्थानां स्वतन्त्रतया साधनाभावेऽपि दातारो ये भगवद्गुणास्ते यासु । अतस्ताः कथयेति पूर्वेणैव सम्बन्धः ॥ १६ ॥

इदानीं विद्यमानानां भक्त्यसाधकत्वे वैफल्यं वक्तुं भक्तिसाधकत्वे सफलत्वं कैमुतिकन्यायेनाऽऽह—

**आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ ।**
**तस्यर्ते यः क्षणो नीत उत्तमश्लोकवार्तया ॥ १७ ॥**

आयुर्हरतीति । "योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेति, मा मे प्रजाया मा पशूनां मा मम प्राणानादायोदगाः । असौ योऽस्तमेति स सर्वेषां

---

१ कथनं चेति क. ख. घ. २ उदर्कमुत्तरफलमिति क. ग. ३ प्रश्नेष्वेतीत्यर्थ इति ख. ४ फलमुक्तानन्तरमिति ख. घ. ५ भगवद्भावसाधकत्वेति क.

**भूतानां प्राणानादायाऽस्तमेति । मा मे प्रजाया मा पशूनामि**”त्यादि श्रुतिवाक्ये, असौ सूर्यः सर्वेषां प्राणिनामुद्यन्नस्तं च यन् सर्वेषामायुर्हरतीत्युक्तम् । तत्र मा मे प्रजाया इति कथनात्कस्यचिदायुर्न हरतीति ज्ञायते । तत्र को वेत्यपेक्षायामायुर्हरणार्थं स्थापितस्य सूर्यस्याऽधिकारिणः (१) लोकन्यायेनाऽधिकारदातुरन्तरङ्गस्य न हरतीति ज्ञायते । हृतं चाऽऽयुर्भगवदीयेभ्य एव प्रयच्छति । विनियोगस्याऽऽवश्यकत्वात् । यद्यपि वाक्ये प्रार्थकस्यैवाऽऽयुषो न हरणं, तथापि हरणस्याऽनित्यत्वज्ञापनेन तथाऽवसीयते । तस्य आयुः ऋते । “शतायुर्वै पुरुष” इति पुरुषस्य शतमायूंषि भवन्ति । एकेन वत्सरेण सर्वब्रह्माण्डपरिभ्रमणेनैकमायुर्हरति । तत्र तस्याऽऽयुर्ऋत इति यस्मिन्नायुषि स क्षणो भवेत् । यं उत्तमश्लोकवार्तया भगवत्समीपं नीतस्तदायुर्न गृह्णातीत्यर्थः । यत्तदोर्नित्यसम्बन्धात्तच्छब्देन क्षण एवोच्यते । सम्बन्धित्वं च स्वरूपत एवेति स यस्मिन्नायुषि भवतीति सिद्ध्यति । वर्षमध्ये एकोऽपि क्षण उत्तमश्लोकवार्तया स्वार्थं भगवदर्थं वा नीतश्चेत्, स्वकार्यं वार्तयैव कृतमिति शिष्टमपि सैव हरिष्यतीति स्वयं न हरतीति भावः ॥ १७ ॥

एवं क्षणमात्रेऽपि भगवत्कथासम्बन्धे आयुषः कृतार्थत्वेत्युपलक्षणविधया सर्वेषां कृतार्थत्वं निरूप्य तदभावे बह्वप्यायुः प्रार्थनयाऽऽहृतमपि व्यर्थमिति सदृष्टान्तमाह—

तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत ।
न खादन्ति न मेहन्ति किं ग्रामपशवोऽपरे ॥ १८ ॥

**तरव इति** । वृक्षाः किं बहुकालं न जीवन्ति । न तेषां स्वार्थे कश्चनोपयोगः । मुक्ताश्च न भवन्ति । अतो बहुकालजीवनं प्रार्थनयाऽपि प्राप्तं व्यर्थमित्यर्थः । ननु तेषामायुः प्राणं धृत्वा न तिष्ठतीति प्राणधारकत्वेन तदुपयोगो भविष्यतीत्याशङ्क्याऽऽह—**भस्त्राः किं न श्वसन्त्युतेति** । पूर्वमपि नासा चर्मपुटरूपैव, तन्मार्गेण वायुरागच्छति गच्छति च । भस्त्रायामप्येवमिति न प्राणधारणेन कोऽप्युपयोगः सिद्ध्यति । नन्वत्र स्वपरोपकाराणां सिद्धत्वान्न दृष्टान्ततुल्यतेत्याशङ्क्याऽऽह—**उतेति** । पुनस्तथा कृत्वाऽपि व्यर्थ इत्यर्थः । यथा इङ्गाला भस्त्राश्वासेन तप्ता भवन्त्यन्येऽपि तत्सम्बन्धाल्लोहादयः । तप्तानामाघातश्च भवति । अतः परोपतापाद्युपद्रवकर्तृत्वम् । तथा जीवनस्याऽपीति न कोऽपि विशेष इति भावः । पुरुषार्थसिद्ध्यभावस्तूभयत्र तुल्यः । ननु भोगोऽस्तीति चेत्? तत्राऽऽह— लोकानां भोगभ्रमोऽन्नादिभक्षणे । वस्तुतस्त्वेकत्र प्रविष्टोऽन्यत्र निर्गच्छति । यथा स्वशरीरान्निर्गतं शूकरमुखे प्रविश्य पुनर्निर्गच्छति, तथा भूमिवृक्षादेर्निर्गतं स्वस्याऽपि मुखे प्रविश्य विनिर्गच्छतीति न शूकरादिभ्यः कश्चन विशेषः । तुल्यत्वं यस्य न स्फुरति तं प्रत्येतदापादनमनिष्टम्, न ब्रह्मविदं प्रति । स हि प्राकृतः स्वात्मानं बहुमन्यते । अपरे इत्यनेनाऽयमप्येकः पशुः । “**तस्मात्रयः पशूनां हस्तादाना**” इति श्रुतेः । परं ग्रामपशुत्वेन निन्द्यत्वम् ॥ १८ ॥

एवं नीचैः सह तुल्यतामापाद्य ततोऽपि नीचतामाह—

श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः ।
न यत्कर्णपथोपेतो जातु नाम गदाग्रजः ॥ १९ ॥

१ अस्तमयन्निति ख. २ येभ्यः प्रयच्छतीति ख. ३ शत इति क. ४ य इति नास्ति क. ५ आयुषि स क्षणो भवतीति ख. ग. ६ अकृतमर्पाति घ. ७ भस्त्राः इति सर्वत्र. ८ सहि स्वात्मानमिति ख.



**श्वविड्वराहोष्ट्रखरैरिति** । एते चत्वारः पशवः सर्वलोकेषु निन्दिताः । तेषां स्तुतिं कोऽपि न करोति । भगवद्विमुखे पुरुषे च दृष्टे लोकास्तानेव स्तुवन्तीति तैरयं स्तुतः । भगवद्विमुखे दृष्टे एतस्माच्छ्वादयः समीचीना इति लोकाः स्तुवन्तीत्येते जानन्त्यस्मानयं स्तावयति समीचीन इत्येवं तैरयं स्तुतो भवतीति भावः । यद्यपि श्वा पुच्छचालनादिना ग्रासमात्रेऽपि स्वलालसतां ज्ञापयति तथाऽयमपि गृहस्थः । परं स स्वामिहितो भवति । अल्पसन्तोषी च । प्राकृतस्तु तद्विपरीतः । एवं विड्वराहोऽपि कुत्सितविषयासक्तो विण्मूत्रस्थाने रमते । तथाऽयमपि । तथापि सर्वानुपयुक्तमुपजीवति, न तत्र केऽपि भागिनः । अयं तु सर्वेषां भागं स्वयमश्नाति । यद्यप्युष्ट्राः कण्टकाद्यतिपरुषविषयभोक्तारस्तथापि स्वामिभारवाहकाः । अयं तु तद्विपरीतो न भगवतः कार्यं किञ्चित्करोति । यद्यपि खरः खरीपादताडितोऽपगच्छति पुरुषतुल्यस्तथापि न वक्रो न स्वामिकार्ये हठं करोति । अस्य तु तदीया दोषा एव न गुणाः सन्तीति ततोऽपि निन्दित इत्यर्थः । नैतत्पुरुषमात्रसाधारणम् । येषां पुनरन्नभक्षण उपयोगोऽस्ति तद्व्यावृत्त्यर्थमाह । “**मोघमन्नं विन्दते अप्रचेताः । अन्नेन प्राणाः । अन्नात्प्राणा भवन्ती**”ति च वैयर्थ्यं ज्ञानभक्त्युपयोगौ चाऽन्नस्य निरूपितौ । तत्र वैयर्थ्यपक्षे तुल्यता । पक्षद्वये तु पुरुषार्थपर्यवसानान्नेति तद्वैपरीत्यमाह—**न यत्कर्णपथोपेत इति** । यस्य **कर्णमार्गे** कदापि गदाग्रजः कृष्णः केवलं भक्तिप्रकाशनार्थं प्रकटो यस्य कर्णमार्गं न गतः । “**स्वानामि**”ति वाक्यात् । अयं च तदीयो न भवतीति निश्चितम् । अतो भक्तिमार्गज्ञाने निवारिते । गदस्तु मातापित्रोर्दुःखदूरीकरणानन्तरमुत्पन्न इति यत्र भगवत्कृतदुःखदूरीकरणमभिप्रेतं तत्र गदाग्रज इत्युच्यते॥१९॥

एवमायुषो देहस्य च भोगायतनस्य वैफल्यमुक्त्वा इन्द्रियाणां वैफल्यमाह—

बिले बतोरुक्रमविक्रमान् ये न शृण्वतः कर्णपुटे नरस्य ।
जिह्वाऽसती दार्दुरिकेव सूत न चोपगायत्युरुगायगाथाः ॥ २० ॥
भारः परं पट्टकिरीटजुष्टमप्युत्तमाङ्गं न नमेन्मुकुन्दम् ।
शावौ करौ नो कुरुतः सपर्यां हरेर्लसत्काञ्चनकङ्कणौ वा ॥ २१ ॥
बर्हायिते ते नयने नराणां लिङ्गानि विष्णोर्न निरीक्षतो ये ।
पादौ नृणां तौ द्रुमजन्मभाजौ क्षेत्राणि नाऽनुव्रजतो हरेर्यौ ॥२२॥
जीवञ्छवो भागवताङ्घ्रिरेणुं न जातु मर्त्योऽभिलभेत यस्तु ।
श्रीविष्णुपद्या मनुजस्तुलस्याः श्वसञ्छवो यस्तु न वेद गन्धम् ॥२३॥

**बिले इति** । बतेति खेदे । उरुक्रमस्य अतिविचित्रचरित्रस्य विक्रमान्न शृण्वतः **पुरुषस्य** ये कर्णपुटे ते बिले इत्यर्थः । तत्र स्वार्थप्रेतेन्द्रियाभावादपकारिसर्परूपप्राकृतेन्द्रियस्य विद्यमानत्वाच्छरीररूपगृहे अपकारिच्छिद्रे । यथा गृहे तादृशे बिले प्रविष्टः सर्पो गृहपतिं खादति, तथा प्राकृत्यः कथा एतत्कर्णे प्रविष्टा एनं सर्वतो नाशयन्तीत्यर्थः । “**तांस्तान्क्षिपन्त्यशरणेषु तमस्सु हन्त**”

१ संस्तुत इति घ. २ “भगवद्विमुखे दृष्टे इत्यादि स्तुतो भवतीति भाव” इत्यन्ता पङ्क्तिर्नास्ति क. ख. ङ. ३ स स्वामिहित इति क. ग. ङ. ४ गुणगणा इति ख. घ. ङ. ५ भक्तिमार्गज्ञानमार्गौ निवारितौ इति घ. ६ रेणुं न जातु इति ख. ग.

ति वाक्यात्। जिह्वा चाऽसती। भगवता हि सर्वेन्द्रियेभ्यो विरलेयं कृता रक्षिता च। सर्वदा च दन्तेभ्यो रक्षां करोति। एवमपि सा न भगवत्परा, किन्तु व्यभिचारिणीवाऽन्यस्तोत्रकरणादन्यगामिनी। तत्राऽपि विशेषमाह। दार्दुरिकेव भेकजिह्वेव। तस्याः जिह्वा न भगवता पृथक्कृता। न रक्षकत्वेन दन्ता दत्ताः। सा स्वत एव परुषा कीटादीन् भक्षयति। तथाऽस्याऽपि जिह्वा नियामकरहिता स्वत एव क्रूरा परघातार्थं प्रवृत्तेत्यर्थः। एवमपि दुष्टा विषयार्थमप्युरुगायगाथाश्चेद्गायति तदपि न काचिच्चिन्ता। तदपि नास्तीत्याह—न चोपगायत्युरुगायगाथा इति। पट्टाभिषिक्तस्य शिरः कुत्राऽपि न नमते। तादृशमपि पट्टकिरीटजुष्टं पट्टकिरीटाभ्यां प्रीत्या सेवितं, मोक्षदातारं चेन्न नमेत्तदा उत्तमाङ्गमपि भार एव। सामान्योपयोगस्याऽप्यसिद्धत्वात्। भोगजीवने तु पूर्वमेव निषिद्धे। अतिभारवाहकोऽपि हि न नमति। शावौ शवसम्बन्धिनौ अन्तःप्राणरहितौ। तथाऽन्तर्भगवत्सेवारहितौ। उपरिशोभाऽपि तत्रापि शवालङ्करणैः क्रियते। अत्राऽपि काञ्चनकङ्कणौ। चेत्यनादरे। नयने पुनः मुखशोभां कुर्वती प्रयोजनान्तराभावान्मयूरपिच्छनेत्रवद्भगवतो वैचित्र्यं ज्ञापयतः। ननु तत्र चैतन्यम्। भगवतो हि द्विविधा सृष्टिः। चेतना, अचेतना च भगवत्कार्यरहिता। चैतन्यस्य भगवद्रूपत्वात्। बर्हवदाचरतीति बर्हायितम्। लिङ्गानीति। भक्ता अधिष्ठानानि च। ये न निरीक्षतः न पश्यतः। पादावपि जङ्गमस्था अपि द्रुमजन्मैव भजतः। द्रुमे जन्म द्रुमजन्म। यद्यपि पानसाधनं न भवतस्तथापि भूमिस्थितिमात्रे तदुपयोगात्तत्तुल्यता। स्थावरयतिनमुच्यतया स्थापयतः। जीवन् शवः। शवो हि द्विविधः। अर्द्धजले पतितो द्विविधस्तिष्ठति मुमूर्षुर्मृतश्च। तत्र भागवताङ्घ्रिरेणुं यो न लभेत आतिथ्येन तत्पूजां न कुर्यात्, यस्य वा गृहे ते कदापि नायान्ति, स तु कालं मरणार्थमेव जीवतीत्यर्थः। यस्तु भगवत्प्रसादं न प्राप्नोति केनाऽपि प्रकारेण तस्य तु जीवनमपि नास्ति। जीवनरूपस्य भगवदीयरसस्याऽभावात्। परं श्वसिति। यथाऽर्द्धजले चेतनारहितः केवलं श्वसिति। अन्येषामपि कार्यं रुणद्धि। तथा श्रीविष्णुपदैकनिष्ठत्वेनैव या प्रसिद्धा तुलसी तस्या गन्धं कदापि नाऽऽघ्रातवान् भगवच्चरणारविन्दप्रसादत्वेन न गृहीतवान्। घ्राणस्य गन्धग्राहकत्वात्। तुलस्यां गन्धस्य च विद्यमानत्वात्। सर्पपुच्छच्छेदने चलनवदिन्द्रियतदधिष्ठातृदेवतापगमात्केवलं क्रियामात्रमस्तीत्याह—श्रीविष्णुपद्या इति॥ २०॥ २१॥ २२॥ २३॥

अन्तःकरणवैफल्यमाह—

तदश्मसारं हृदयं बतेदं यद्गृह्यमाणैर्हरिनामधेयैः।
न विक्रियेताऽथ यदा विकारो नेत्रे जलं गात्ररुहेषु हर्षः॥ २४॥

तदश्मसारमिति। बतेति खेदे। यद्यपि धैर्यं गुणः। भगवच्चरित्रमपि श्रुत्वा धीर एव वर्तते। तथापि लोहवत्तस्य धैर्यम्। अश्मनां सारभूतमिदमिति भक्त्यावेशात्स्वकीयमेव निन्दति। अनेन तत्र भगवच्चरणारविन्दस्थापनसम्भावना निवारिता। अतस्तत्प्रक्षालनं व्यर्थमिति भावः। यद्धृदयं गृह्यमाणैः स्वयमन्येन वा दुःखाग्निनिवृत्त्यर्थं हरेर्नामधेयैर्वाचकैः पदैर्यदा विकारं न प्राप्नोति। यस्य हि गृहे भगवदागमनं सम्भावितं, तत्र हि मार्जननिषेचनाद्यलङ्कारा भवन्ति। यत्र तु सम्भावनैव नास्ति चाण्डालगृहवत्तत्र विक्रिया नोत्पद्यते। अथ विकारा निरूप्यन्ते परिज्ञानार्थम्। यदा विकारोऽन्तःकरणे भवेत्तदा द्वयं ज्ञापकं भवेत्। नेत्रे जलं रोमाञ्चश्च। विकारो हि भगवदीयत्वेन परिणामः। तदा तदीयानां वैष्णवत्वम्। तत्र रोम्णां वृक्षत्वादुन्नतिर्वैष्णवत्वायुक्ता। रसस्याऽन्तःपूरणाद्वा। नेत्रं च कमलं भवति सजलम्। अन्यथा स्वस्थानच्युतं केवलं शुष्कमिति भावः॥ २४॥

---

१ तथापि इति क. ख. २ भेकजिह्वेवेति नास्ति क. ख. घ. ३ तस्य इति ग. ४ अतिभारवाहकोऽपि हि इति घ. ङ. ५ शावौ—शवेत्यादि क. ख. ङ. ६ ज्ञापयति इति क. ख. ग. ङ. ७ द्विधा सृष्टिः ख. इति ८ भजन्ति इति ख. ग. ९ स्थापयति इति क. ङ. स्थापयन्ति इति ख. ग.



तस्मात्सर्वेन्द्रियाणां देहादेश्च साफल्यार्थं भगवत्कथामभिधेहीत्याह—

अथाऽभिधेह्यङ्ग मनोऽनुकूलं प्रभाषसे भागवतप्रधानः।
यदाह वैयासकिरात्मविद्याविशारदो नृपतिं साधु पृष्टः॥ २५॥

अथाऽभिधेहीति। अङ्गेति कोमलसम्बोधनम्। अर्थानिश्रायविचारव्यतिरेकेणार्थं श्रवणमात्रेणैव त्वद्वाक्ये मनोहरत्वाऽनुभूतेः। अतस्त्वं भागवतप्रधानः। त्वद्वाक्ये भगवत्सम्बन्धात्। परं वैयासकिर्यदाह। स हि बहिर्मुखतां वार्ता न करिष्यति। आत्मविद्यायां निपुणत्वाज्ज्ञानयुक्तत्वाच्च। राजानं प्रति तेनैव प्रश्ने कृते कथकत्वाच्च। अनेन लोकवेदभक्त्यविरुद्धं तद्वचनमित्युक्तं भवति॥२५॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां द्वितीयस्कन्धे तृतीयोऽध्यायः॥ ३॥

---

## चतुर्थोऽध्यायः।



साधनं द्विविधं प्रोक्तं क्रियाकर्तृविभेदतः।
पूर्वाध्याये क्रियाङ्गानि वर्णितानि द्विरूपतः॥ १॥
प्रश्नेऽप्युत्तरशेषत्वात् क्रियायाश्च निरूपणात्।
स्वरूपतो ज्ञानतश्च कार्यसिद्धिर्यतो द्विधा॥ २॥
साधनं श्रोतृवक्त्रोश्च विमर्षाधिक्रिया यतः।
तदुच्यते मुख्ययोर्हि प्रश्नस्त्वाद्ये ससाधनः॥ ३॥
ज्ञात्वाऽथ नमनं देवे गुरावपि विशेषतः।
सामान्यमुत्तरं यद्धि तद्वक्तुरधिकारकृत्॥ ४॥
अतोऽध्याये चतुर्थे तु परीक्षिच्छुकयोः क्रमात्।
विमर्षणाधिकारो हि विचाराङ्गं निरूप्यते॥ ५॥

---

१ चण्डालगृहवदिति क. ख. ग. घ. २ विविधमिति क. ङ. ३ परीक्षिच्छुकयोरिति ङ.

व्यवसायात्मिका बुद्धिर्ममतात्याग एव च।
कथायाः श्रवणे श्रद्धा संन्यासो ज्ञानमेव च।
प्रश्नाच्चतुष्टयं पूर्वं श्रोतुरङ्गमिहोच्यते॥ ६॥

एवं पूर्वाध्यायान्ते राज्ञः शुकस्य च सम्बन्धिनी कथा वक्तव्येति प्रश्न उक्तः। तत्रोत्तरमाह—**वैयासकेरिति** चतुर्भिः।

सूत उवाच—

वैयासकेरिति वचस्तत्त्वनिश्चयमात्मनः।
उपधार्य मतिं कृष्णे औत्तरेयः सतीं व्यधात्॥ १॥

**प्रथमतो** भगवति सती मतिरुत्पन्नेत्याह। यद्यपि पूर्वं भगवति मतिः स्थितैव तथापि श्रद्धामात्रेण सा जातेत्यज्ञानसहिता सा असतीवदेव भवति। इदानीं सामान्यतो भगवन्तं ज्ञात्वा अस्ति कश्चिद्भगवान्फलरूपो भक्तिसाध्यः श्रवणादिना सेव्य इति सर्वरूपोऽन्तरश्च। तस्मिन्ध्याते तत्सायुज्यं च फलमिति। तद्भजनार्थमेव सर्वा कामना कर्तव्या। साधनानि च तत्रैव योजयितव्यानीति[2] **वैयासकेर्वचः** श्रुत्वा। अनेनाऽऽत्मतत्त्वं आत्मनो भगवतः स्वस्य च तत्त्वं याथात्म्यं विनिश्चित्य, मनसि पुनर्विचार्य, तद्धृदये स्थापयित्वा, आराध्यो भगवान् सर्वदेति सद्बुद्धिं कृतवानित्यर्थः॥ १॥

**पूर्वं** सामान्यतो गृहं त्यक्तमपि ममताया विद्यमानत्वादत्यक्तमिव भवति। तदिदानीं वैयासकेर्वाक्यात्त्यक्तवानित्याह—

आत्मजायासुतागारपशुद्रविणबन्धुषु।
राज्ये चाऽविकले नित्य निरूढां ममतां जहौ॥ २॥

**आत्मेति**। ममता हि व्याप्नुत्य[3] भगवति प्रविष्टा। अतो ममताया उत्तमं विषयं प्राप्य, पूर्वस्थामसमीचीनां त्यजति। आत्मा देहः। जायासुतागाराः भार्यापुत्रगृहाः। गावो द्रविणं बन्धवश्च। तेषु। राज्ये च ससाधने सिंहासनोपवेशनप्रभृति अद्यावधि नित्यनिरूढां ममतां जहौ॥ २॥

**पूर्वं** यथा ममताविषये देहादावितिकृत्यचिन्तां करोति, तथेदानीं ममताविषये भगवति इतिकृत्यचिन्तापरपर्यायं सन्देहं तदुन्नतिसिद्ध्यर्थं पृष्टवानित्याह—

पप्रच्छ चेममेवाऽर्थं यन्मां पृच्छथ सत्तमाः।
कृष्णानुभावश्रवणे श्रद्दधानो महामनाः॥ ३॥

**पप्रच्छ चेति**। चकारोऽनुक्तसमुच्चयार्थः[1]। जहौ पप्रच्छ च। उक्तार्थस्य च साधनतासिद्ध्यर्थं तेन पूर्वमुत्तरमुक्तमितीदानीमपि पृच्छ्यते। त्वत्पृष्टे तस्य च पृष्टे सरस्वतीसंवादो जात इत्याह। हे सत्तमाः, यन्मां पृच्छथ, इममेवार्थं स पृष्टवान्। शुकवाक्यस्य साधनत्वात्तस्य च भवतां च श्रोतृत्वेन तुल्यत्वाद्यथा भवतां तथा तस्याऽपि पृष्टे बुद्धिरुत्पन्ना युक्तेत्यर्थः। परमवान्तरभेदः कश्चिदस्ति।

१ चकारो नास्ति क. ख. ङ. २ योजितव्यानि इति क. ग. ३ व्याप्नुत्य इति क. व्याप्नुय इति ख. ग. ङ.



भवतां तु तद्वाक्यप्रकारेण पदार्थज्ञानेच्छा। तस्य तु भगवन्माहात्म्यज्ञानमेवेष्टमिति। तदाह—**कृष्णानुभावश्रवणे श्रद्दधान इति**। भगवन्माहात्म्यश्रवणे तस्य द्वयं जातं। श्रद्धा, मनसो विपुलता च। श्रद्धया तद्ग्रहणम्। विपुलतया अपूर्तिः॥ ३॥

शिष्टमन्त्यं कृत्यं कृतवानित्याह—

संस्थां विज्ञाय संन्यस्य कर्म त्रैवर्गिकं च यत्।
वासुदेवे भगवति आत्मभावं दृढं गतः॥ ४॥

**संस्थां विज्ञायेति**। सप्तमेऽहनि मृत्युं विज्ञाय धर्मार्थकामोपयोगि कर्म त्यक्त्वा, तत्साधनान्यपि त्यक्त्वा, मोक्षदातरि भगवति वासुदेवे आत्मनः अन्तःकरणस्य भावं रतिं स्नेहं दृढं प्राप्य पप्रच्छेति सम्बन्धः। आत्मनः स्वरूपस्य वा सत्तामग्रे स्थितिरूपाम्। आत्मत्वं वा॥ ४॥

एवं प्रश्नसाधनान्युक्त्वा प्रश्नं वक्तुमभिनन्दनमाह—

राजोवाच—

समीचीनं वचो ब्रह्मन् सर्वज्ञस्य तवाऽनघ।
तमो विशीर्यते मह्यं हरेः कथयतः कथाम्॥ ५॥

**समीचीनमिति**। यद्यपि त्वद्वचनस्याऽर्थो न ज्ञायते सर्वज्ञत्वात्तथापि त्वद्वचनं समीचीनम्। **ब्रह्मन्निति** सम्बोधनं वक्तुर्दोषाभावाय[1]। अनघेत्यभिमानाद्यभावाय[2]। तथापि मम स्वरूपाज्ञानरूपं तमस्त्वद्वाक्याद्विशीर्यते। तत्तु मदर्थमेवोक्तम्। त्रयं तु मया विनिश्चितं। त्वद्वाक्येन ममाऽज्ञानं नष्टम्। मदर्थमेव च त्वयोक्तम्। भगवतश्च कथा कथितेति॥ ५॥

अर्थापरिज्ञानात्सन्देहादिदानीं विशेषाः पृच्छ्यन्त इत्याह—

भूय एव विवित्सामि भगवानात्ममायया।
यथेदं सृजते विश्वं दुर्विभाव्यमनीश्वरैः।
यथा गोपायति विभुर्यथा संयच्छते पुनः॥ ६॥

**भूय एवेति**। विवित्सामि ज्ञातुमिच्छामि। तत्र सन्देहपञ्चकम्। उत्पत्तिस्थितिलयेष्वाधारे साधनेषु च। तत्रोत्पत्तौ सन्देहमाह—**यथेदमिति**। इदं जगत् यथा सृजते। किं कुम्भकारवत्? आहोस्वित्सिद्धवद्वाङ्मात्रेण? आहोस्विद्योगिवन्मनसा? आहोस्वित्कल्पवृक्षवत्सूते[3]? आहोस्विदभिव्यनक्ति? इत्युत्पत्तौ पञ्च सन्देहाः। एत एव रक्षाप्रलययोरनुवर्तन्ते। किञ्च। **दुर्विभाव्यमनीश्वरैरिति**। ये मया पञ्च प्रश्नाः कृतास्ते केऽपि भगवति न सम्भवन्ति। यत उत्पाद्यमानस्य मनसाऽप्याकलयितुमशक्यत्वात्। एवमुत्तरत्राऽपि। तर्हि न करोत्येवेति किमिति न निश्चीयते। न पालयति चेति। तत्राऽऽह—**विभुरिति**। **पुनरिति**[6]। पुनःपुनर्नाशितस्य नाशनमुत्पादितस्य चोत्पादनमिति॥ ६॥

१ वक्तृदोषाभावायेति ख. २ अभिमानाभावायेति क. ख. ३ वा कल्पवृक्षवत्प्रसूते वा अभिव्यनक्तीति क. ४ अत्र चद्वेति क. ५ दुर्मीश्वरैरिति ख. मूलव्याख्ययोः. ६ पुनरिति नास्ति क. ख.

चतुर्थं प्रश्नमाह—

यां यां शक्तिमुपाश्रित्य पुरुशक्तिरयं पुमान् ।
आत्मानं क्रीडयन् क्रीडन् करोति विकरोति च ॥ ७ ॥

**यां यां शक्तिमिति** । अत्र सृज्यः कः पदार्थः । किं केवल आत्मा, शक्तिसहितो वा । साहित्येऽपि क्रियाशक्तिरेवोत्पद्यते, शक्तिरेव वा । इति सन्देहे, तेष्वपि पक्षेषु कालभेदेन कृतिभेदेन वा व्यवस्थितेषु एकस्यां कृतौ यां शक्तिमुपाश्रित्य पुनर्द्वितीयकृतौ यां शक्तिमिति । एवं पञ्चस्वपि । तत्राप्यवान्तरभेदाः सन्ति । यतः पुरुशक्तिः । कालभेदाश्च बहवः सन्ति । यतः कालादिनियन्ता अयं पुमान् । आत्मानमेव करोति, विरुद्धमपि करोति, न करोति, विविधं वा करोति । अथवा । आत्मानमेव क्रीडयन्नन्यदेव किञ्चित्करोतीत्यादि सम्बन्धः । अथवा । क्रीडन्नात्मानमेव करोतीति । चकारादन्येऽपि पक्षाः स्वयमूह्याः ॥ ७ ॥

तर्ह्येवमनेकधा सन्देहे गुरुः प्रश्नं नार्हतीति । अतिवादात् । अतोऽन्य एव प्रष्टव्य इत्याशङ्क्याऽऽह—

नूनं भगवतो ब्रह्मन् हरेरद्भुतकर्मणः ।
दुर्विभाव्यमिवाऽऽभाति कविभिश्चाऽपि चेष्टितम् ॥ ८ ॥
तथा गुणांस्तु प्रकृतेर्युगपत्क्रमशोऽपि वा ।
बिभर्ति भूरिशस्त्वेकः कुर्वन्कर्माणि जन्मभिः ॥ ९ ॥

**नूनमिति** । ब्रह्मन्नित्यतिप्रश्नेऽप्यक्षोभाय । भगवतो हरेरिति दुःखाभावसुखयोः सिद्ध्यर्थमुक्तम् । किञ्च । सामान्यत एव भगवतश्चरित्रं दुर्बोधं केन गुणेन करोतीति । तत्रापि हरेः । अन्यदुःखनिवारणार्थं करोति । तत्राऽन्येषामानन्त्याद्दुःखानां चाऽऽनन्त्यात् केन प्रकारेण कृते सर्वेषां दुःखं गच्छतीति न ज्ञायते । तत्राऽप्यद्भुतकर्मणः । अन्यत्करोत्यन्यत्सम्पद्यत इति । अत एव कविभिरपि निपुणैरप्यनेकधा कल्पकैरपि दुर्विभाव्यम् । अतो नाऽन्यः प्रश्नमर्हतीत्यर्थः । किञ्च । केन साधनेन भगवान्करोति । गुणैरिति चेत् । तान्गुणान्किं क्रमशो गृह्णाति । युगपद्वा । न हि सर्वे युगपदुत्पद्यन्ते लीयन्ते वा । किञ्च भूरिशो वा गृह्णाति । प्रकृतेर्गुणान्बहुविधान्कृत्वा भूरिशो राशिप्रकारेण गृह्णाति । अथवा । तु पुनः स्वयमेकोऽप्यनेको भूत्वा युगपदादिभेदेन(?) गृह्णातीति । किञ्च । कर्माणि जन्मभिः कुर्वन् । नानाजन्मानि कृत्वा कर्माणि कुर्वन्करोति । कर्माधीनतया करोतीत्यर्थः ॥ ८ ॥ ९ ॥

एवं पञ्चप्रश्नान्निरूप्य साभिलाषतया प्रश्नानुपसंहरति—

विचिकित्सितमेतन्मे ब्रवीतु भगवान् यथा ।
शाब्दे ब्रह्मणि निष्णातः परस्मिंश्च भवान् खलु ॥ १० ॥

१ परः पुमानिति ख. पाठः. २ यस्यामिति क. घ. ङ. ३ इदं नास्ति गपुस्तके. ४ यथेत्यपि पाठः. ५ स्वयमेको भूत्वेति क. पाठः. ६ पञ्च प्रश्नानिति ख. ग. घ. ङ.



**विचिकित्सितमेतन्म इति** । मममैतज्ज्ञातुमिष्टं यथा यथावद्भगवान्ब्रवीतु कथयतु । कथने सामर्थ्यमाह । शाब्दे परस्मिन्नपि ब्रह्मणि तत्तत्साधनैर्भवान्निष्णातः । खल्विति प्रसिद्धे ॥ १० ॥

शुकोऽपि ससाधनं उत्तरमाहेत्याह—

## सूत उवाच—

इत्युपामन्त्रितो राज्ञा गुणानुकथने हरेः ।
हृषीकेशमनुस्मृत्य प्रतिवक्तुं प्रचक्रमे ॥ ११ ॥

**इत्युपामन्त्रित इति** । उपामन्त्रणं प्रार्थना । तदाऽस्मिन्नर्थे सर्वसन्देहवारको भगवानेवेति हृषीकेशं बुद्धिप्रेरकमनुस्मृत्य प्रत्युत्तरं दातुं प्रचक्रमे । उपक्रमं कृतवानित्यर्थः । उपक्रमो नाम देवतागुरुनमस्कारः । हरेर्गुणानुकथने उपामन्त्रित इति स्कन्धादावनुपक्रमे हेतुः ॥ ११ ॥

सर्वशास्त्रार्थनिर्द्धारः सप्तभिर्नमनोक्तिभिः । पञ्चभिः प्रार्थनावाक्यैर्माहात्म्यं तस्य वर्ण्यते । एकेन व्याससनमनमेतावच्छुकभाषितम् । अन्यत्कथाप्रसङ्गेन परोक्त्या वा निरूपितम् । नमनादेव भगवान्सर्वसंशयवारकः । प्रार्थितः कामनां दद्यान्नाऽन्यथेति हरेरणम् ॥ यद्यपि तेन पञ्च प्रश्नाः कृतास्तथापि सर्वसन्देहनिवारणार्थं भगवान्स्मृत इति तत्तत्सन्देहनिवृत्तिपूर्वकं भगवन्तमनूद्य नमस्करोति । तत्राऽऽदौ सृष्टिप्रकारे सन्दिहानं प्रति प्रकारं वदन्नमस्यति—

## श्रीशुक उवाच—

नमः परस्मै पुरुषाय भूयसे सदुद्भवस्थाननिरोधलीलया ।
गृहीतशक्तित्रितयाय देहिनामन्तर्भवायाऽनुपलभ्यवर्त्मने ॥ १२ ॥

**नम इति** । आदौ परः असङ्गोदासीन एक एवेत्यर्थः । तदनु स एव पुरुषः । अनेनाऽशरीरस्य विष्णोः पुरुषशरीरस्वीकारस्तादौ कथितः । तदनु "बहु स्यामि"ति वाञ्छया एक एव भूयान् । तदनु क्रीडार्थं जगदुत्पत्तिस्थितिसंहारैः स्वमायागुणभूतशक्तित्रयस्वीकारमाह—गृहीतशक्तित्रितयायेति । सदिति वचनादसतः सत्ता निवारिता । किञ्च । तस्योद्भवः स्थानं निरोधश्च लीलार्थम् । सद्रूपेण भगवानुत्पद्यते तिष्ठति लीयते चेति । अनेन क्रमोऽपि दर्शितः । यदंशस्य व्यापकत्वात्सृज्यमानस्य परिच्छेदाभावाद्युगपदेव देशभेदेन एकत्र क्रमेणैव यथा लीला सम्पद्यते तथा करोतीत्यर्थः । तदनु तत्राऽन्तर्यामितया प्रविशतीत्याह—देहिनामन्तर्भवायेति । नहि बहिःस्थितोऽन्तःप्रविशति । किन्त्वन्तरेवाऽऽविर्भवतीत्यर्थः । सृष्टेर्नामरूपभेदेन द्विरूपान्नामरूपात्मकं सर्वं सृष्ट्वा । सर्वमनुप्रविश्य । सर्वैरप्यनुपलभ्यं वर्त्म यस्य तादृशो जात इत्यर्थः । तेन गुरुवेदादिभिरेव तज्ज्ञानमित्यर्थः ॥ १२ ॥

१ मेतत्सन्दिग्धं ज्ञातुमिति ख. २ ससाधनमिति ग. ३ स्वीकार आदौ इति घ. ङ. ४ स्वमायया गुणभूतेति क. घ. ङ.

एवं भगवतो मूलरूपसमष्टिव्यष्ट्यन्तर्यामिफलरूपाणि पञ्च निरूपितानि सृष्टिस्थितिप्रलयभोगमोक्षार्थम् । इदानीमवतारप्रयोजनसन्देहं वारयन्नमस्यति—

**भूयो नमः सद्वृजिनच्छिदे सतामसम्भवायाऽखिलसत्त्वमूर्त्तये ।**
**पुंसां पुनः पारमहंस्य आश्रमे व्यवस्थितानामनुमृग्यदाशुषे ॥ १३ ॥**

**भूय इति** । अन्तर्यामितया करोत्येव पापादिनाशम् । बहिरपि करोतीति भूयःपदम् । अत्युपकारित्वाद्वा नमस्कारविशेषणम् । भगवतोऽवतारस्य सतां दुःखदूरीकरणमेव प्रयोजनम् । यद्यपि प्रकारान्तरेणाऽपि दुःखदूरीकरणं भवति, तथापि न सर्वात्मना तन्निवृत्तं भवति । सा दुःखसन्ततिर्भगवद्विनिर्गमनमारभ्य पुनः प्रवेशपर्यन्तमुद्भूतानुद्भूतरूपेण तिष्ठति । तां दूरीकर्तुं भगवत्सम्बन्ध एव शक्त इति मध्ये प्रादुर्भूतस्तां छिनत्ति । किञ्च । सतामसम्भवाय पुनरुत्पत्त्यभावाय । परब्रह्मणो देहग्रहणे, आविर्भावे वा नाऽन्यन्निमित्तमस्ति । सन्तो हि भगवद्धर्मसम्बन्धात्सत्त्वं प्राप्ता नैतु चिदानन्दत्वम् । पुनः सम्भवे सत्त्वसन्देहोऽपि । साधनानि तु सत्त्वएवोपक्षीणानि । अतो भगवान्स्वयमाविर्भूतस्तेषामाविर्भावाभावाय । अतो दुःखच्छेदनमल्पम् । तदीयो भावोऽपि स्वयमङ्गीक्रियत इति । किञ्च । अखिलानि सत्त्वानि सत्त्वगुणभेदा मूर्त्तौ यस्य । सत्त्वगुणः सर्वांशेन । तेनै साधनापेक्षायामपि स्वयमेव सर्वसाधनानि करोति । देवान्वा आविर्भावयति । एतदर्थमेव सत्त्वगुणान्निर्भाव इति लोकप्रसिद्धिः । अखिलानि सत्त्वानि जीवगणा मूर्त्तौ यस्येति वा । अनेनाऽनन्तजन्मसम्भवेऽपि तत्प्रतिनिधितया सर्वविधसर्वजीवानुत्पादितवान् । अतस्तेषां भगवदवतारेणैव स्वप्रतिनिधितया सर्वावताराद्वैवंविधोऽन्यो भक्तवत्सल इति भजनीयं रूपमुक्तम् । किञ्च । न केवलं भक्तानामेवोद्धारार्थे भगवानवतीर्णः किन्तु ज्ञानिनामपीत्याह—**पुंसामिति** । पारमहंस्ये आश्रमे व्यवस्थितानां प्रतिकल्पे संन्यासिरूपेणैव जातानां सनकादीनां ज्ञानेन पदार्थनैकट्यं भासमानानां दूरस्थितत्वेऽपि तथाभानरहितानां तदर्थमतिक्लेशं प्राप्नुवताम् । मृग्यं मृग्यमनु क्रममुक्तिसाक्षान्मुक्त्यवान्तरभेदानपि सामीप्यादीनपि दाशुषे दात्रे । अनुमृग्यानां दात्रे । वैदिकपदप्रयोगात्फलानां केवलवैदिकत्वम् । अनुमृग्यं विचार्यं वा । इदानीमपि जन्मकोटिभिर्विचारमेवार्हति । अतस्तेषां क्लेशनिराकरणाय स्वात्मद इत्यर्थः । न हि प्रकारान्तरेण भगवानात्मा लभ्यते । ज्ञानेनाऽप्यात्मत्वेन भासत एव । बालानां हस्ताग्रस्थचन्द्रवत् । **पुनरिति** पुनः पुनः । **पारमहंस्याश्रम इति** प्रत्यक्निष्ठारूपे आश्रमे । तत्र प्रविष्टा अबहिर्मुखा एव भवन्तीति । हंसास्तु मानसेऽपि रमन्ते । परमहंसास्तु ततोऽप्यन्तरतमे आत्मन्येव । आत्मानात्मसङ्घाते वा आत्मविमर्शनादनुमृग्यत्वम् ॥ १३ ॥

एवमवतारसन्देहं वारयन् सर्ववर्णानामावश्यकभजनीयत्वं निरूपितवान् । इदानीं प्रयोजनसन्देहं वारयन्भक्त्यैकलभ्यत्वं सोपपत्तिकमुपपादयन्नमस्यति—

**नमो नमस्तेऽस्त्वृषभाय सात्वतां विदूरकाष्ठाय मुहुः कुयोगिनाम् ।**
**निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नमः ॥ १४ ॥**

**नमो नमस्तेऽस्त्विति** । अत एव भक्त्युद्रेकेण बहुवारं नमस्संस्तदेव प्रार्थयते । शास्त्रे पूर्णानां भगवद्दर्शने जाते नमस्कार एव कर्तव्य इति सदुपशिक्षाविचारेणाऽन्यस्य स्वतोऽकर्तव्यत्वात् । "किमासनं ते गरुडासनाये" त्यादिवाक्यात् । अतस्तथाभूतानामस्माकं भगवत्साक्षात्कारे तथा नमनमेवाऽस्त्विति प्रार्थनया एतावदेव प्रयोजनमित्युक्तं सर्वैरेव साधनैः । किञ्च । ते तुभ्यमिति प्रत्यक्षतया न तु मह्यमिति तस्मा इति वा । इतः परमधिकं प्रयोजनमुद्देश्यं नास्तीति शास्त्रसङ्ग्रहः । किञ्च । **सात्वतामृषभायेति** सात्प्रत्ययुक्तानाम् । **"तदधीनवचने सातिरि"**ति सातिप्रत्ययो व्याकरणे विहित आत्मसादिति । तत्र सात्युक्ताः सात्वन्तः कदाचिदपि न स्वतन्त्राः किन्तु भगवदधीना एवेति तेषामृषभः । एवम्भावेन भगवत्स्वामित्वमपि प्रयोजनम् । नमनमात्रेणैव स्वतः पर्यवसाने तदधीनत्वलक्षणे अधिके धर्मे सम्पन्ने स्वसेवामपि कारयतीति वन्दनानन्तरं दास्यं प्रयोजनमिति निरूपितम् । ये पुनर्योगादिना तं प्राप्स्याम इति विचारयन्ति ते कुयोगिनः पृथिव्यामेव योगिन इति । न हि भूमावेव स्थिता ब्रह्माण्डात्परतः स्थितं वस्तु प्राप्नुवन्ति । अयं च कुत्सितो योगः कुत्सितं फलं भूमिष्ठं वा प्रयच्छेत् । अत एवाऽणिमादय एव तत्फलत्वेन निरूपिताः । योगस्तु स्वाधीनः । भगवांश्च न स्वाधीनो योगेश्वरश्च । अतो योगे व्यवसितमतीनां यस्यां दिशि भगवानस्ति सा दिगपि दूरे । साधनान्यपि ततोऽपि दूरे नयन्तीति विशेषेण दूरे काष्ठा यस्येति । अनेन नाऽन्यसाधनसाध्यं प्रयोजनमित्युक्तम् । सकृत्कुयोगित्वेऽप्युत्तरत्र दिव्यादियोगश्चेत्तदा प्राप्नुयादपि । मुहुः कुयोगित्वे आशाऽपि नास्तीत्यर्थः । प्राप्त्याशाभाव एव दूरकाष्ठात्वम् । मुहुःपदेन तेषां साधनाभावः सूचितः । अतो भक्त्येकलभ्यत्वं साधितमन्वयव्यतिरेकोक्त्या । किञ्च । **निरस्तसाम्येति** । काचिद्भगवतः सिद्धिरस्ति राधस्शब्दवाच्या । न तादृशी सिद्धिः क्वचिदन्यत्र । न वा ततोऽप्यधिका । तया सिद्ध्या भगवान्स्वगृह एव रमते । तच्चाऽक्षरात्मकं ब्रह्म । रंसन्निति स्वनिष्ठमेव रसं तत्सम्बन्धादभिव्यक्तं करोतीति । एतावता स्वरूपस्थितिव्यतिरेकेण नाऽन्यत्र रंसतीति भगवदीयो रसस्तत्रैव प्राप्तव्यः । गृहं च तस्यैव । तत्साधनं च निरस्तसाम्यातिशया सिद्धिः । अतोऽन्येषां सर्वथा तद्रसप्राप्तिर्दुर्लभा । गृहसेवकस्य तु सुलभेति । स हि स्वगृहे तां नीत्वा रंसतीत्यनयोपपत्त्या भक्त्येकलभ्यत्वम् । स्वधामनीत्यनेन नह्यन्यस्तत्र गन्तुं स्थातुं वा शक्नोतीति सूचितम् । ब्रह्मत्वादहेयत्वम् । निरन्तररसप्रवाहान्न सायुज्यापेक्षा । अतस्तादृशभक्त्यभावे केवलं नमनं कर्तव्यमिति तादृशाय नम इत्याह—**रंस्यते नम इति** । एवं ज्ञात्वा नमनमपि प्रयोजनमिति शुकादीनां तावन्मात्रपर्यवसानं सूचितम् ॥ १४ ॥

एवं प्रेमभक्तिमतो न किञ्चित्कर्तव्यमित्युक्त्वा बाह्यभक्तेः फलं नियमयन्नमस्यति—

**यत्कीर्त्तनं यत्स्मरणं यदीक्षणं यद्वन्दनं यच्छ्रवणं यदर्हणम् ।**
**लोकस्य सद्यो विधुनोति कल्मषं तस्मै सुभद्रश्रवसे नमो नमः ॥ १५ ॥**

**यत्कीर्त्तनमिति** । संसारिणां बाह्यषड्विधभक्त्या तत्क्षणे पापक्षय इत्यर्थः । ईक्षणं पादसेवनसाध्यम् । अत्र पापक्षयस्य तारतम्यं निरूपयितुं भिन्नः क्रमो निरूपितः । तत्र कीर्तनस्य स्वस्याऽन्येषां च सर्वपापनिवारकत्वाच्छ्रवणापेक्षयाऽपि महत्त्वं निरूपयितुं प्रथमं निरूपणम् । तदनु

१ अन्तर्यामितयेति क. २ ननु इति ख. ङ. ३ तेनेति नास्ति ख. घ. ङ. ४ अखिलात्मनि इति घ. ङ. ५ नैवंविधो भक्तवत्सल इति क. ग. घ. ङ. ६ निरूपितमिति क. ग. घ. ङ.

१ भगवांश्चाऽस्वाधीन इति क. ख. भगवांश्च स्वाधीन इति घ. ङ. २ न किञ्चित्कर्तव्यत्वमिति क. घ. ङ. ३ अन्येति क. ग. घ.

तस्याऽपि मूलभूतस्य तन्निर्वाहकस्य स्वात्ममात्रनिष्ठत्वेऽप्याध्यात्मिकपापनिराकरणादन्तःकरणशोधकत्वेन स्मरणं निरूपितम् । एवं कीर्तनस्मरणाभ्यां प्रेमोद्गमे जाते यद्भगवत ईक्षणं भगवदागमनेन स्वगमनेन वा । सानुभावाधिष्ठानस्य भगवत्प्रतिनिधित्वात्प्रीतेश्चाऽल्पत्वाद्भगवच्चालनाशक्तौ बहिरवीक्षणम् । अन्तर्वा भावनया । तद्दर्शनेनाऽऽधिदैविकपापनिवृत्तिः । "यद्देवानां चक्षुष्यागोअस्ती"ति श्रुतौ तत्पापं निरूपितम् । तद्भगवद्दृष्टिविषये तेषां क्रूरा दृष्टिर्निवर्तेत इति तद्दोषनिवृत्तिः । तदनन्तरं यद्वन्दनं तद्भगवदीयापराधलक्षणदोषनिवर्त्तकम् । वस्तुतो हि जीवो भगवत्सेवको भूत्वा बहुकालं तत्सेवामकृत्वा स्थित इति स्वधर्मपरित्यागेनाऽधर्मो भवति । तद्दर्शनानन्तरं वन्दनेनैव निवर्त्तते । ततस्तदनन्तरं भगवदीयानां मुखाद्भगवन्माहात्म्यश्रवणं तत्सर्ववस्तुषु याथात्म्यज्ञापकमिति तदज्ञानकृतं पापं मूलभूतमिति निवर्त्तते । ततो ज्ञाते माहात्म्ये यदनुक्षणं भगवतः अर्हणं पूजनम् । सत्कार इति यावत् । तद्भगवन्मायारूपं तद्व्यामोहनरूपं वा कल्मषं निवर्त्तयति । तदर्हणं हि प्रपत्तिरूपम् । अनन्यत्वाभावात्तत्वेन न व्यपदिष्टम् । अतो भक्तिमार्गानिविष्टानामन्येषामप्येवंप्रकारेण करणात्तत्तत्पापनिवर्त्तकत्वेन सर्वपापनिवृत्तिः फलं भवति । अतो भगवत्कीर्तिमूलत्वात्सर्वेषां भगवत्कीर्तिः सुभद्रा भवति । भद्राभद्रयोस्तुल्यत्वादभद्रनाशिका सुभद्रा भवति । प्रथमश्रवणं तु तदानीमन्तःप्रविश्याऽऽलोडनेन भूतेभ्यो देहादिभ्यः पापनिवर्त्तनासमर्थमिति प्रथमं तन्न निर्दिष्टम्, कीर्तनं तु तथात्वान्निर्दिष्टमिति विवेकः ॥ १५ ॥

एवं षड्विधभक्तेः षड्विधपापक्षयकर्तृत्वमुक्त्वा कीर्तेस्तावन्मात्रपर्यवसायित्वे मोक्षपर्यवसानाभावाच्छास्त्रविरोधः प्रसज्येतेति तस्या मुक्तिपर्यवसायित्वं प्रकारान्तरेण वदति—

**विचक्षणा यच्चरणावसादनात्सङ्गं व्युदस्योभयतोऽन्तरात्मनः ।**
**विन्दन्ति हि ब्रह्मगतिं गतक्लमास्तस्मै सुभद्रश्रवसे नमोनमः ॥ १६ ॥**

**विचक्षणा इति** । अचतुराणामेषा षड्विधा भक्तिरुक्ता । एवं षड्विधया चातुर्ये सम्पन्ने पश्चाद्विचक्षणाः सन्तो भगवच्चरणारविन्द एवाऽवसन्ना भवन्ति । न ततः पदार्थान्तरे उपयुक्ता भवन्ति । तदा तत्रैवाऽवसन्ना उभयतः सङ्गान्निवृत्ता भवन्ति । अवसादे हि सङ्गानां शैथिल्यं युक्तमेव । तत्राऽप्यन्तःकरणेन भगवत्यवसादनादन्तःकरणस्यैवोभयतः सङ्गव्युदासः । तदा पश्चात्कर्षकाणामभावाद्भगवता सह गमनसामर्थ्यं भवति । चरणे ह्युपसन्नाश्चरणेन सह गन्तुं समर्था भवन्ति । अतो ब्रह्मगतिं प्राप्नुवन्ति । ब्रह्मणा सह गतिः । ब्रह्मणि वा गतिः । अक्षरस्य चरणत्वे गृहत्वे वा तदुभयमुपपद्यते । अतो मार्गान्तरेणाऽप्येवं साधनेन पूर्वतुल्यता भवतीति द्वयोरप्येक एवाऽर्थ इति वक्ष्यमाणमुपपन्नं भवति । तस्य हि गतिर्ज्ञानरूपा । अत एव ज्ञानस्य क्रियात्वं धात्वर्थत्वं चोपपद्यते । ज्ञानस्य च क्रियात्वं भगवत्क्रियात्वेन । भगवत इन्द्रियाभावाज्जन्या क्रिया न सम्भवति । नित्या तु क्रिया न प्रसिद्धा । यागानां तु क्रियारूपेण भगवदाविर्भावात्पदार्थान्तरवत्क्रियाऽपि भवति भगवद्रूपम् । "तदेजति तन्नैजती"त्यादि तु विरुद्धसर्वधर्माश्रयत्वेन धर्मरूपेणाऽऽविर्भूतरूपं प्रतिपादयति । तस्मात्सच्चिदानन्दवन्न क्रिया स्वरूपभूता भवति । अतो ज्ञानमेव तेजः स्वभावं गच्छतीव प्रतिभातीति स्मरणेन मनो गच्छतीतिवद्भगवतो ज्ञानमेव क्रियारूपम् । तस्माद्भगवतो गतिं

१ तत्सर्वमन्तर्वा भावनयेति ख. मन्तर्भावनयेति ग. २ प्रकृतिरूपमिति क. ख. घ. ङ. ३ प्रविश्य लोडनेनेति ख..



चैतन्यरूपं विन्दन्ति । अलभ्यलाभवत्प्राप्नुवन्ति । "चिति तन्मात्रेण तदात्मकत्वादि"ति प्रकारेण । अत एव मुख्यसिद्धान्तात्फलेऽपि भेदः । हि युक्तश्चाऽयमर्थः । यतः कीर्तिर्मुक्तिपर्यवसायिनी । **गतक्लमा इति** । मार्गान्तरेणाऽपि ज्ञानादिना अक्षरोपासनया वा तदेव स्वरूपं प्राप्नुवन्ति । तथापि "क्लेशोऽधिकतरस्तेषामि"ति वाक्यात्ते क्लेशयुक्ता भवन्ति । कीर्तनप्रणालिकया तु ये गच्छन्ति ते गतक्लमा एव गच्छन्तीति साधनान्तराद्वैलक्षण्यम् । अत एव कीर्तिपुरस्सरं तन्नमस्यति । **सुभद्रश्रवस इति** पूर्ववत् । बाह्यभक्त्याऽप्येवमनुग्रहं करोतीत्यादरेण नमनवीप्सोभयत्र ॥ १६ ॥

एवं ज्ञानभक्तिमार्गौ सम्यगुपपाद्य कर्ममार्गेऽपि भजनावश्यकतां वदन् तेषां स्वरूपसन्देहं वारयति—

**तपस्विनो दानपरा यशस्विनो मनस्विनो मन्त्रविदः सुमङ्गलाः ।**
**क्षेमं न विन्दन्ति विना यदर्पणं तस्मै सुभद्रश्रवसे नमोनमः ॥ १७ ॥**

**तपस्विन इति** । यशस्विनः कूपारामादिकर्त्तारः । मन्त्रविदो मन्त्रोपासकाः । याज्ञिका वा । सुमङ्गलाः सदाचाराः । एते हि कर्ममार्गे षड्विधा उक्ताः । तपो हि सन्तापात्मकम् । तत्तु पाकवत्साधनपर्यवसायि न सुखं प्रयच्छति । न हि देहेन्द्रियाणि क्लिष्टानि सुखं प्रयच्छन्ति । विहितत्वात्फलदानेऽपि दातुः सम्बन्धाभावात् । आज्ञामात्रेण तथा करणेऽपि स्वात्मसमर्पकत्वेनैव तच्छोधनाभिप्रायात् । अदृष्टद्वारा फलजनने मानाभावात् । "कर्षयन्तः शरीरस्थं भूतग्राममि"ति बाधश्रवणाच्च । "मत्त एव पृथग्विधा" इति हेतुव्यपदेशात्परम्पराकल्पनायां मानाभावाद्भगवत्क्रीडौपयिकतां सम्पादयद्देहं भगवद्योग्यं करोति । यत्तु भगवान्सर्वात्मकः क्लेशं दृष्ट्वा फलं प्रयच्छति । अन्यक्लेशनिवृत्त्यर्थं वा । तन्न क्षेमात्मकम् । न हि भगवता दत्तं स्पर्धासूयादिसहितं भवितुमर्हति । एवं बहूनां भागिनां स्वयमन्येभ्यः प्रयच्छञ्छोषणेन वस्तुशोधनवदवशिष्टानि शोषयति । दत्तद्रव्यस्य तु नानाविनियोगसम्भवाच्च फलसाधकत्वं निश्चितम् । अतो भगवत्कर्त्तव्ये तत्पोषणक्रियायाः पर्यवसानात्तदसमर्पणे स्वातन्त्र्ये चौर्यापत्तेः सुतरां न क्षेमप्राप्तिः । कूपारामादिष्वपि विश्रामजनकत्वेन भगवच्चिकीर्षितकरणाद्दानवदेव तस्य निर्णयः । मनस्विनस्तु योगिन एव । ते कुयोगिविचारेणैव विचारिताः । सर्वेषामेव निरोधने तत्तदधिष्ठातृदेवद्रोहो भवत्येव । भगवत्समर्पणे तु तद्वचनेन तदुक्तमेव कृतमिति न कोऽपि दोषः सम्भवति । धर्ममार्गेऽपि "धर्मः क्षरति कीर्तनादि"त्यादिना नाशसम्भवात्समर्पणं युक्तम् । लोकेऽपि महाराजसमर्पणादौ भोगो वा कालनाशो वा सम्भवति । तत्र भगवदीयानां कालनाशाभावाद्भगवद्भोगे पुनस्तदीयत्वं वा प्रसादो वा भविष्यतीति पूर्ववदेव ज्ञानमार्गे भक्तिमार्गे वा प्रवेशो भविष्यतीति **सुभद्रश्रवस** इत्युक्तम् । मार्गत्रयस्था अपि भगवदीया इति भगवत्कीर्त्तिः । अन्येषां तु तत्र प्रवेशाभावादादरेण वीप्सया नमनम् ॥ १७ ॥

१ वाक्यात्क्लेशयुक्ता इति क. ग. घ. २ क्रीडोपयिकतामिति ख. ङ. ३ नानाविधयोगेति क. घ. ङ. नानाविधयोगेति ख. ४ भगवत्कर्त्तव्ये तत्पोषणेत्यादि क. ङ. भगवत्कर्तव्यतत्पोषणेत्यादि ख. भगवत्कर्तव्यतच्छोषणेत्यादि ग. ५ निरोधनेति ङ.

एवं साक्षाद्भगवत्सम्बन्धिनां भगवत्प्रवेशप्रकारमुक्त्वा साक्षात्सम्बन्धरहितानामपि तत्प्रवेशने प्रकारमाह तृतीयगतिव्यावृत्त्यर्थम् । तद्वक्ष्यति भगवान् "उदासीनोऽरिवद्वर्ज्य" इति[1] । तद्भगवदाश्रिता भगवदीयाश्रिता वा एकत्र । अन्ये द्वितीयकोटाविति निर्धारो भवति । तत आह—

**किरातहूणान्ध्रपुलिन्दपुल्कसा आभीरकङ्का यवनाः खसादयः ।**
**येऽन्ये च पापा यदपाश्रयाश्रयाः शुध्यन्ति तस्मै प्रभविष्णवे नमः ॥१८॥**

**किरातेति ।** किरातादयस्तत्तद्देशगिरिवासिनोऽन्त्यजा जातितः कार्यतश्च दुष्टाः भक्तसमाश्रयणमात्रेण शुद्धा भवन्ति । भक्ता इव भगवत्सेवायोग्या भवन्ति । अन्येऽपि पापाः प्रायश्चित्तानधिकृता अपि । एते नवविधा गणिताः[2] । अष्टदिङ्मध्यविवक्षया भक्तद्वाराऽपि माहात्म्यात्प्रभविष्णुत्वम् । "अपपरी वर्जने" इति ज्ञापनादपोपसर्गोऽतिशयार्थेऽपि वर्तते । व्याप्त्यर्थे वा । परित इत्यर्थे वा । तेन विश्वाधारत्वेन दुष्टानामपि दैत्यादीनां तदाश्रयत्वं निवारितम् ॥ १८ ॥

एवं स्वरूपतः प्रमाणतश्च सर्वसन्देहवारणं कृत्वा फलतः साधनतश्च तस्य माहात्म्यमाह—

**स एष आत्माऽऽत्मवतामधीश्वरस्त्रयीमयो धर्ममयस्तपोमयः ।**
**गतव्यलीकैरजशङ्करादिभिर्वितर्क्यलिङ्गो भगवान्प्रसीदताम् ॥१९॥**

**स एष इति ।** तत्र प्रथमं साधननिर्धारमाह—**प्रसीदतामिति ।** साधनं भगवत्प्रसाद एव । फलं स एव । उभयोरेष विनिश्चयः । तदाह—**भगवान्प्रसीदतामिति ।** अन्यत्तु साधनं प्रसादोपक्षीणम् । लोकद्वारा स्वानुभवद्वारा च सर्वाणि शास्त्राणि प्रवृत्तानि । वेदस्याऽपि तत्परत्वेनाऽर्थो निरूप्यते । तत्र—**अधिकारी प्रमाणं च सन्तश्च प्रीतिहेतवः । एतेऽप्यापाततः प्रोक्तास्तस्मात्सम्प्रार्थनं वरम् । सम्प्रार्थने हि सुमहान्साधनं फलमेव वा । कायादिभिः**[3] **करोत्येव तस्मात्साधननिश्चयः ।** तत्राऽधिकारिणो द्विविधाः । ये हि भगवत्प्रसादयोग्यास्ते आत्मवन्तः । आत्मशब्देन हि अन्तःकरणमात्मा च । तत्र ये आत्मवन्तस्तेषामात्मत्वेनाऽयं प्रकाशते । ये पुनरन्तःकरणवन्तः यथासुखमन्तःकरणं कर्तुं सम्भवन्ति तेषामधीश्वरः स्वामी । अन्तःकरणप्रेरको वा । स्वसेवां कारयति तद्योग्यं वा करोतीति । प्रमाणं च त्रिविधं श्रुतिस्मृतिपुराणाख्यम् । तत्र प्राधान्येन वेद इति तेनाऽपि यज्ञः प्रतिपादित इति यज्ञप्रतिपादकत्वेन त्रयी प्रमाणम् । स्मृतीनां तु धर्मप्रतिपादकत्वेन तत्राऽर्थस्यैव प्राधान्याद्धर्मप्रयोगः । पुराणं तु तपःप्रतिपादकम् । यावन्ति हि फलानि निरूपयति तपसैव तानि निरूपयति । तत्त्रितयरूपोऽपि भगवानेव । अर्थतः स्वरूपश्च । ततः किमधिकारेण किंवा प्रमाणेन । उभयोरपि फलकोटावेव प्रवेशात् । सतामाश्रयणेऽपि तथा । यतः अजशङ्करादिभिरपि वितर्क्यमेव लिङ्गं यस्य । सतां हि पराकाष्ठा ब्रह्मा वा महादेवो वा । तच्छिष्यास्तत्पुत्राश्चाऽन्ये । तैरपि विशेषेण तर्क्यमेव लिङ्गं यस्य न त्विदमित्थतया ज्ञेयम् । तर्कितं[4] हि भवति न भवति च । तेऽपि स्वस्य माहात्म्यमेव दृष्ट्वा भगवत्कृपया तज्जनितमिति भगवत्साक्षात्कारेण च तत्स्वरूपप्रसादयोर्निर्णयं कल्पयन्ति । एतादृशो हि भगवानेवं प्रसन्नो भवतीति । तत्र प्रमाणे नानाप्रकारेण निरूपणाल्लोकतश्च तथा प्रतीतेर्न तावन्मात्रतेति निश्चीयते । ते तु "शब्दात्प्रत्यक्षं

१ इति वचनादिति ख. २ एतेन विविधा इति ध. ङ. ३ कार्यादिभिरिति ग. कामादिभिरिति ङ. ४ वितर्कितमिति ङ. ङ.



पश्चीय" इति विशेषेण तर्कयन्ति । तस्मादेवमवगम्यते भगवानेव प्रसादं प्रार्थनीयो नाऽन्यत्राऽन्योऽपि ॥ १९ ॥

तस्मात्प्रार्थनायां सम्भवन्त्यां[1] नाऽन्यत्कर्तव्यमिति सिद्धम् । यदि प्रार्थनायां भगवान्न कुप्येत्[2] । लोके ह्यनधिकारी प्रार्थयन्क्रोधमुत्पादयति । यद्यपि प्रसादस्य साधारण्यादन्यस्याऽप्रार्थितत्वात्क्रोधो न सम्भवति तथापि सामान्येऽप्यनधिकारिणं प्रति तद्भवत्येव । अतस्तन्निर्णयार्थं प्रार्थनायोग्यं रूपमाह—

**श्रियः पतिर्यज्ञपतिः प्रजापतिर्धियां पतिर्लोकपतिर्धरापतिः ।**
**पतिर्गतिश्चाऽन्धकवृष्णिसात्वतां प्रसीदतां मे भगवान्सतां पतिः ॥२०॥**

**श्रियः पतिरिति ।** पतिः प्रार्थनीय इत्यविवादम् । कुध्यतु मा वा । तद्येषां पतिस्तैः प्रार्थनीयः । तत्र प्रथमं षड्विधानां पतित्वं निरूपयति । प्रथमं भगवाँल्लक्ष्मीपतिः । ततो लक्ष्म्यंशैः स्त्रीभिः प्रार्थितो न कुप्यति । अनेन स्नेहमार्गानुवर्तिभिरन्यैरपि प्रार्थितो न कुप्यति । एवं यज्ञपतिः । यज्ञपुरुषैः प्रार्थितो न कुप्यति । अत एव "यज्ञे यः कामयेते"[3]ति बहुधावचनं भगवत्पतित्वज्ञापकम् । किञ्च । प्रजापतिः । ये केवलं लौकिकाः प्रजामात्ररूपाः प्रकर्षेण जाता वा तेषां पतिः । साधारणैरपि प्रार्थ्यः । अल्पविशेषैरपि । किञ्च । धियां पतिः । ये केचित्कामपि बुद्धिं जानन्ति क्रियायां ज्ञाने वा शब्दतोऽर्थतो[4] वा तैरपि प्रार्थनीयः । किञ्च । लोकपतिः स्वर्गादिलोकानां पतिः । अतस्तद्गतैरपि प्रार्थनीयः । ततो धरायाश्च पतिः । अतो भूमिष्ठैरपि प्रार्थनीयः । **स्त्रीभिश्च याज्ञिकैर्लोकैर्बुद्धिमद्भिः स्थितैः क्वचित् । असाधनैरपि ह्येतैः प्रार्थनीयो हरिः पतिः ।** किञ्च । अन्धकवृष्णिसात्वतां पतिर्गतिश्च । पूर्वं भगवत्प्रार्थनायोग्यता निरूपिता । इदानीं फलमुखता निरूप्यते । पतिः फलम् । गतिः स्वनिष्ठं साधनम् । तच्चेत्फलं स्वनिष्ठत्वे सति साधनतां भजते[5] तदा फलोपभोगो भवति । न हि स्वसुखे दूरस्थः असाधनं वा स्वतन्त्रो वा तस्यां क्रियायां हेतुर्भवति । तद्भगवान्यादवैः प्रार्थितः पतिः सन् तेषां क्रियारूपोऽपि जातः । अतोऽनेन यावत्कर्तुं शक्यते तावत्तेषां भवति । अतः फलमुखपतित्वमत्र सिद्धमिति क्रोधसम्भावनाऽपि दूरे । चकारात्क्रियासाध्यरूपश्च । त्रिविधा हि यादवा गणितास्तामसराजससात्त्विकपुरुषभजनीयत्वं निरूपयितुम् । किञ्च । यत्र गुणव्यासैरपि भगवान्प्राप्यते प्रार्थ्यते च तत्राऽस्मदादीनां का चिन्तेति प्रसीदतां म इत्याह—**मह्यं प्रसीदतामिति ।** किंच । सतामयं पतिः । ये भगवत्येव सन्ति गुणेषु प्रविष्टाः गुणद्वारा भगवदाश्रयास्तेषां तु पतिरेव । अन्यान्प्रत्यौपचारिकं पतित्वम् । युक्त्या शास्त्रेण च सतामेव पतिः । अतोऽपि मह्यं प्रसीदतामिति भावः ॥ २० ॥

ननु भगवद्गुणेषु पृष्टेषु तत्कथनं परित्यज्य भगवत्प्रार्थना कुत्रोपयुज्यते ? तत्राऽऽह—

**यदङ्घ्र्यनुध्यानसमाधिधौतया धिया नु पश्यन्ति हि तत्त्वमात्मनः ।**
**वदन्ति चैतत्कवयो यथारुचं स मे मुकुन्दो भगवान्प्रसीदताम् ॥ २१ ॥**

**यदङ्घ्र्यनुध्यानेति ।** केवलं भगवत्प्रार्थनाव्यतिरेकेणाऽप्यङ्घ्र्यनुध्यानमात्रेणैवाऽऽतपाधव-

१ सम्भवन्त्यामिति ङ. ख. घ. ङ. २ भगवान्कुप्येदिति क. घ. ङ. ३ यज्ञे यज्ञे यत्कामयते इतीति ख. ग. घ. ङ. ४ शब्दादर्थतो वा इति घ. ५ भजेतेति घ. भजेदिति ङ.

स्थानेऽपि समाधौ प्रक्षालनमात्रेणैव यत्सर्वप्रमाणैरपि [1]स्पृष्टं न भवति तादृशमात्मतत्त्वं भगवत्स्वरूपयाथात्म्यं पश्यन्ति । बुद्धिः स्वभावतो वस्तुप्रकाशिका । सा स्वावरणाद्विषयावरणादुत्पन्नाऽपि न विषयं प्रकाशयति । इन्द्रियाणामावरणे नोत्पद्यत एव । विषयमात्रं बुद्ध्युत्पत्तौ कारणत्वेन मृग्यते । नतु[2] यत्प्रकारिका बुद्धिस्तद्विशिष्टम् । रजतादिभ्रमानुपपत्तेः । अतो विषयमात्रं पुरस्कृत्य सामग्र्यन्तरवशाद्वस्तुनो याथात्म्यमयाथात्म्यं वा बोधयति । तत्र शुद्धा वस्तुनो याथात्म्यं गृह्णाति । अत्र भगवच्छास्त्रे सर्वेषां पदार्थानां नित्यत्वात्कारणत्वेनाऽभिमतैरभिव्यक्तीक्रियते । एकश्च पदार्थो न जातिव्यक्तिविभेदकल्पना । एक एव घटोऽनेकधा भवति आविर्भवति तिरोभवति च । पदार्थानां सर्वेषां भगवत्त्वात् । तथा शब्दानां नित्यता तु सर्वैरेवाऽभियुक्तैः कात्यायनादिभिर्व्यवस्थापितेति नाऽस्माभिरत्यन्तं निरूप्यते । "**नित्ये शब्दार्थसम्बन्ध**" इति । नित्ये शब्दे अर्थसम्बन्ध इति च विवरणम् । आश्रयाभावे च जातिसम्बन्धयोः [3]स्थितिकल्पनाऽत्यन्ताऽप्रामाणिकी दृष्टस्य पदार्थस्य याथात्म्याज्ञाने शास्त्रतस्तदवगम्यते । अत एक एव घटो भगवत्त्वादनेकधा भवतीति "**स एकधा भवती**" त्यादिश्रुतिबलादनुपपत्तौ निवृत्तायां स्वबुद्धिदोषादन्यथा कल्पनं न प्रामाणिकम् । बहुकल्पनापत्तिश्च । अत एकैव बुद्धिर्बहुधा परिमृज्यमाना शोधकद्रव्यसंयोगसङ्घर्षणेन निर्मला भवति दर्पणवत् । तथा भगवच्चरणारविन्दद्वयं बुद्धौ संयोज्य सङ्घर्षणे क्रियमाणे शुद्धिविशेषं प्राप्नोति । शोधकद्रव्याणां तारतम्येन मलनिराकरणं शास्त्रसिद्धम् । अञ्जनादिषु तथा प्रसिद्धेः । यथाऽञ्जनविशेषे गोलकसंयुक्ते ततो निर्गता दृष्टिर्देवानपि पश्यति, तथाऽत्राऽपीति न काऽप्यनुपपत्तिः । अन्या तु वस्तुनो याथात्म्यं न बोधयति । दोषावृतत्वात् । यथा यथा दोषनिवृत्तिस्तथा तथा वस्तुयाथात्म्यस्फूर्तिः । अत एवाऽभ्याससूक्ष्मेक्षिकादीनामुपयोगः । विषये तु दोषो नास्त्येव । सुतरां भगवद्विषये आत्मविषये च । "[4]अपहतपाप्मत्वादि" श्रुतेः । तु इति निश्चयेन । अनुध्यानं नाम तत्परतया चिन्तनम् । तथा चिन्तनेनाऽपि तदात्मकता भवतीति समाधिः । न तु योगसम्बन्धी । किञ्च । एतदात्मतत्त्वं कविभिर्य[5]थाबुद्धि निरूप्यते । कविपदेन चोत्प्रेक्षासामर्थ्यं बोधितम् । क[7]श्चित्कथंचिदुत्प्रेक्षते वदति च तथा । अतो न वाक्याल्लौकिकाद्वस्तुयाथात्म्यस्फूर्तिः । किञ्च । भगवान्मुकुन्दो मोक्षदाता । वस्तुयाथात्म्यस्फूर्तिर्मोक्षाङ्गम् । तच्च तदैव सम्पद्यते यदा भगवान्मोक्षं दातुमिच्छति । इच्छा पुनरङ्घ्र्यनुध्यानेनैव [6]भवतीति । तस्माद्यः कश्चिद्यत्किञ्चिज्ज्ञातुमिच्छति तत्र भगवान्प्रार्थनीयः सकलतत्सिद्ध्यर्थम् । गुणा अपि ज्ञाता एव वक्तव्याः । ज्ञानसाधनं चाऽङ्घ्र्यनुध्यानम् । न केवलं तावन्मात्रमेव । किन्तु प्रार्थनासहितम् । भगवतः स्वतन्त्रत्वान्नाऽनुध्यानमात्रेण तथा कर्तुमिच्छति । अत आह—**प्रसीदतामिति** । यद्यपि भागवतनिर्माणे विषयप्रचारार्थं प्रसादो जात एव तथाऽप्यस्मदर्थं पुनर्भवतु स्वस्याऽपि रससिद्ध्यर्थम् ॥ २१ ॥

इदानीं सामान्यतः प्रसादं प्रार्थयित्वा प्रकृतोपयोगिप्रसादं प्रार्थयितुमस्य प्रसादावश्यकत्वमाह—

**प्रचोदिता येन पुरा सरस्वती वितन्वताऽजस्य सतीं स्मृतिं हृदि ।**
**स्वलक्षणा प्रादुरभूत्किलाऽऽस्यतः स मे ऋषीणामृषभः प्रसीदताम् ॥२२॥**

१ स्पष्टमिति घ. ङ. २ ननु यदिति ख. ३ स्थितिकल्पनात्यन्ता प्रामाणिका दृष्टस्येति ग. घ. ४ अपहतपाप्मत्वादिति ख. घ. पाप्मत्वादिति घ. ङ. ५ यथाबुद्धिरिति क. ६ भविष्यतीति ग. क. ७ कः कश्चिदिति क.



**प्रचोदिता येनेति** । अवश्यमिन्द्रियव्यापारे कर्तव्ये भगवान्प्रार्थनीयः । तत्रापि वाग्विषये । तत्रापि भगवदीयपदार्थवाचके । यतो ब्रह्मणाऽपि पूर्वं भगवद्ध्यानात्प्रार्थितो भगवांस्तस्य ब्रह्मणो हृदये प्रविश्य स्वप्रकाशिकां वेदरूपां वाणीमा[1]स्यतो निष्काशितवान् । अतो भगवद्गुणेषु वक्तव्येषु नित्यवाण्येव तद्भवतीति प्रकृते भगवत्प्रार्थना आवश्यकी । ननु योगेन पदार्थान्स्मृत्वा तद्वाचकपदानामुपनिबन्धने सम्भवति किं भगवद्ध्यानेन ? इत्यत आह—**अजस्य ब्रह्मणः हृदि सतीं स्मृतिं वितन्वतेति** । वाक्यार्थवाक्ययोर्नित्यत्वेऽपि [2]पूर्वमनुभूतेऽपि स्मरणमावश्यकम् । स्मरणमात्रं च न प्रमाणमिति स्मृतपदार्थानुभवसहिता साऽपेक्षिता । योगवद्भगवद्ध्यानस्याऽपि प्रत्यासत्तित्वात् । अतोऽन्तःकरणे प्रथमं सतीं, भगवदनुभवसहितां स्मृतिं पूर्वानुभूतानां भगवदीयानां पदार्थानां नि[3]र्माणाय पश्चात्तेनैव हृदा भगवत्प्रेरितेन अन्तर्वेदप्रादुर्भावात्पुनर्भगवत्प्रेरिता वाणी आस्यतो निर्गता । नहि भगवद्भार्या स्वतो बहिर्निर्गन्तुं शक्नोति । इयमपि वार्ता वक्तुमयुक्तेत्याशङ्क्य किलेत्याह । स्वस्य लक्षणमिव लक्षणं यस्याः । नित्यत्व[4]ब्रह्मशब्दवाच्यत्वानन्तत्वादिरूपम् । अथवा । स्वयमेव लक्षणं यस्याः । वेदानामिदमेवाऽसाधारणचिह्नं यद्भगवानेव वाच्य इति । अतः पूर्वानुभूतस्मरणे तद्द्वारा निर्गमेऽपि सर्वेन्द्रियप्रेरको भगवान्प्रसीदताम् ॥ २२ ॥

एवं शब्दानां भगवदधीनत्वेन तत्प्रादुर्भावार्थं भगवत्प्रार्थनामुक्त्वा, अर्थोऽपि भगवदधीन इति अस्मन्मुखनिर्गतायां वाचि भगवान्पतिरलङ्करणरूपेण प्रविशतामिति प्रार्थयते—

**भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः ।**
**भुङ्क्ते गुणान्षोडश षोडशात्मकः सोऽलंकृषीष्ट भगवान्वचांसि मे ॥ २३ ॥**

**भूतैर्महद्भिरिति । स्थितिर्भोगश्च सर्वत्र भगवत्कर्तृकौ यतः । अतो वाचि स्थितः कृष्णस्तां भुङ्क्तामिति कामना** । यद्यपि विराट्पुरुष एव, तथा प्रक्रिया सर्वत्र प्रसिद्धा, तथापि पुरुषत्वाविशेषात्स्वस्य भगवत्त्वं भगवतैव साधितमिति ज्ञापनार्थं भगवत एवेदं शरीरमित्यभिमानाभावार्थं वा व्यष्टिष्वपि समष्टिवत्प्रक्रियामाह । भूतैर्महद्भिः पञ्चमहाभूतैः स्वनिर्मितैरेव । इमाः देवतिर्यङ्मनुष्यादिरूपाः । अमूषु [5]पूर्षु स्वयमेव शेते । अन्यथा स्वस्य पुरुषत्वमेव न स्यात् । पुरि शेत इति व्युत्पत्त्या हि सः । इदं हि शयनं न निद्रारूपं किन्तु [6]सम्भोगार्थमेव । अत एव दक्षिणेऽक्ष्णि इन्द्र इतरत्रेन्द्राणीत्युपाख्यानमेतत्परमेव भवति । अत्र च सुप्त्वा न केवलं स्पर्शमात्रमुपभुङ्क्ते किन्तु षोडशाऽपि गुणान् । भोगेऽपि षोडशात्मको भूत्वा भुङ्क्ते । जडे शुष्के रसाभावात् । भगवान् हि[7] व्यापक आनन्दमयश्च । तत्र स्वरूपेणैव स्वरूपानुभवे तथा रसो न भवति । स्त्रीपुरुषाद्यवयवेषु तथोपलम्भात् । अतः स्वस्थितरसाविर्भावेन स्पष्टभोगार्थं भेदरूपमात्मानं विधाय तस्मिन्स्वस्मिन्प्रविष्टे बहुधा भिन्नः सन्नन्योन्यस्य रसमनुभवति । देहधारणाप्रयत्नेन भोगे व्यासङ्गो भविष्यतीति सुप्त्वा तथा भुङ्क्ते । यद्यपि विषयाः पञ्च, तथापि त्वच एव स्थानविशेषे सुखविशेषजननादिन्द्रियपुरस्सरेण यो विषयः स भि[8]न्नतया निर्दिष्ट इति षोडशत्वम् । यत्रेन्द्रियाणां गौणत्वं तत्र विषयप्राधा-

१ अस्येति क. ग. घ. ङ. २ पूर्वमनुभूतत्वेऽपीति क. ख. ३ निर्मायेति ग. घ. ङ. ४ ब्रह्मशब्दवाच्यानन्तत्वादिरूपमिति क. ग. घ. ङ. ५ पूरुषु इति क. ख. ६ सम्भोगार्थमिवेति घ. ङ. ७ हीति नास्ति क. ख. ८ भिन्नया इति क. ख.

न्यम् । भोगे कचिदिन्द्रियाणामप्राधान्यं, कचिदिन्द्रियाणामेव प्राधान्यम् । महाराजशरीरवत् । अत उभयविवक्षया षोडशेति वचनम् । एवं भगवन्माहात्म्यं सर्वत्र पूर्णमेव ज्ञातं भवति । अलङ्कृषीष्ट मे वचांसि अलङ्करोतु । छान्दसो दीर्घः । नन्वेवं नानात्वमापन्नः कथमलङ्कारार्थं प्रार्थ्यते ? तत्राऽऽह—भगवानिति । बहुवचनं सैसार्थाभिप्रायम् । मे इत्यन्यत्र ससार्थाभावो द्योतितः । भागवत एव ससार्थो यतः ॥ २३ ॥

एवं प्रार्थनामुक्त्वा स्वगुरुं व्यासं भगवन्तं नमस्यति—

नमस्तस्मै भगवते वासुदेवाय वेधसे ।
पपुर्ज्ञानमयं सौम्या यन्मुखाम्बुरुहासवम् ॥ २४ ॥

**नमस्तस्मै भगवत इति** । वासुदेव इति सर्वमोक्षदानार्थमेव भगवतो व्यासस्यावतारः । शब्दरूपां सृष्टिं करोतीति **वेधस इति** मोक्षोपायकथनम् । व्यासनमस्कारत्वं बोधयति **पपुरिति** । ज्ञानमयं सर्ववस्तुयाथात्म्यज्ञानप्रकाशकं भारतादि । **सौम्या इति** शान्त्या ज्ञाननिष्ठयोग्यता सूचिता । यस्य मुखमेव अम्बुरुहं कमलं तत्रत्यो मकरन्द एव प्रपञ्चविस्मारकत्वादासवशब्देनोच्यते । मोक्षस्य फलत्वाद्वक्तुश्च भगवत्त्वान्मुखासवपदाभ्यां पानेच्छाप्रतिबन्धेऽपि पानं सूचितम् । कामिनीमुखामोदे तथोपलम्भात् । तस्मात्सर्वेषां गुरुत्वाद्भगवत्त्वाच्च सभायामपि व्यासनमनं युक्तम् ॥ २४ ॥

एवं देवतागुरुनमस्कारं कृत्वा महता प्रबन्धेन तन्निरूपयितुं पूर्वप्रश्ने उत्तरमाह—

एतदेवाऽऽत्मभू राजन् नारदाय विपृच्छते ।
वेदगर्भोऽभ्यधात्साक्षाद्यदाह हरिरात्मने ॥ २५ ॥

**एतदेवेति** । यद्भवान्पृष्टवानेतदेव नारदेन पृष्ट आत्मभूर्ब्रह्मा प्रमेयबलपुष्टः । वेदा गर्भे यस्येति प्रमाणबलपुष्टोऽपि । प्रमेयस्य प्रमाणत्वेन विशिष्टबलपुष्टोऽपि । यदाह हरिरात्मन इति वाक्यात्तादृशमुखेनैव तत्रोत्तरे सन्देहनिवृत्तिर्भविष्यतीति पूर्ववस्तुनः सन्देहप्रश्नाभावाय स्वतोऽनिरूपणम् । पूर्वमेव करणानां दोषतारतम्यस्य निरूपितत्वान्नाऽत्र पुनरुक्तिः । साक्षादित्युभयत्र विशेषणम् । आत्मने ब्रह्मार्थे । परम्पराकथने तु मध्ये वक्तृदोषः प्रसज्येत । अत एव स्वतः कथनमपि निवारितम् । दोषाभावोऽपि प्रार्थनया ज्ञानेन च सूचितः । अनेन उत्पत्त्योपपत्त्या च विचारद्वयं वक्तव्यत्वेन प्रतिज्ञातमिति सूचितम् ॥ २५ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां
द्वितीयस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥

---

१ समर्थाभिप्रायमिति ग. २ यस्त्वं पृष्टवानिति ख. ग. ३ हरिरात्मनेति इति ग. ४ मध्यवक्तृदोष इति क. ख. घ. ५ प्रसज्येत इति घ.



## पञ्चमोऽध्यायः ।

विमर्शः षड्भिरध्यायैः क्रियते स द्विधा मतः ।
उत्पत्त्या चोपपत्त्या च तत्राऽऽद्योऽपि द्विधा मतः ॥ १ ॥
स्थूलान्तर्यामिभेदेन मूर्त्तामूर्त्तविभेदतः ।
स्थूलोऽपि द्विविधस्तत्र स्थूलमूर्तविमर्शने ॥ २ ॥
उत्पत्त्या पञ्चमाध्यायः सोपपत्त्या निरूपकः ।
पुरुषः क्रमतः शक्तित्रयं गृह्णन्भवादिकृत् ॥ ३ ॥
ईत्युक्त्वा नारदाजाभ्यां जन्मभिर्नेति गद्यते ।
एकीभूते प्रवेशेन निर्गमादपि विह्वलः ॥ ४ ॥
अथवा दार्ढ्यतासिद्ध्यै नारदः पृच्छति स्फुटम् ।
प्रश्नत्रयं नारदेन क्रियते तत्त्वनिर्णये ॥ ५ ॥
आत्मनो जगतश्चाऽपि निर्द्धारो भजनस्य च ।
द्वयोर्निर्द्धारशेषत्वं तेन प्रत्युत्तरं ततम् ॥ ६ ॥
द्वितीयस्य द्विरूपत्वं बहिरन्तर्व्यवस्थया ।
विराजोऽन्तर्मुखत्वाद्धि विपरीतेन वर्ण्यते ॥ ७ ॥
स्थूललिङ्गविभेदो वा तेनाऽध्यायद्वयं मतम् ।
प्रथमस्योत्तरं पश्चात्तदन्तर्यामिसम्भवे ॥ ८ ॥

एवं पूर्वाध्याये परीक्षिच्छुकयोः फलमुखं साधनं निरूप्य पूर्वोक्तस्य च साधनस्य च विचारार्थमध्यायषट्कारम्भः । तत्र पञ्चमाध्याये साधनस्य स्थूलरूपस्य चोत्पत्त्या निर्णय उच्यते । तत्र प्रथमं तत्त्वस्य दुर्ज्ञेयत्वं वदन्वक्तारं विशिनष्टि—

श्रीनारद उवाच—

देवदेव नमस्तेऽस्तु भूतभावन पूर्वज ।
तद्विजानीहि यज्ज्ञानमात्मतत्त्वविमर्शनम् ॥ १ ॥

**देवदेवेति** । अयं नमस्कारः प्रश्नार्थः । नारदो जिज्ञासार्थं प्रवृत्तः कथं देवनमस्कारं न कृतवानित्याशङ्क्याऽऽह । हे देवानां देव । अनेन देवतागुरुरूपो भवानेव ममेति न पृथङ्नमस्कारः कर्त्तव्य इति सूचितम् । अस्त्विति प्रार्थना प्रमेयसमाप्तिपर्यन्तं मङ्गलानुवृत्त्यर्थम् । आत्मानमुपदेक्ष्यति निश्चयेनेति । स्वप्रवृत्तौ हेतुज्ञापकं विशेषणमाह—**भूतभावनेति** । भूतानि भावयत्युत्पादयति । शोधयति वा । स्वयं वेदानुदरे दिव्याग्निरूपान्निवेश्य तत्र सर्वाञ्जीवान् शुद्धान्कृत्वा पश्चान्निष्काशयतीति शोधक-

---

१ विमर्श इति ग. २ विमर्शने इति क. ख. ३ इत्युक्ता इति घ. क. ४ साधनमुखमिति ग. ५ पूर्वोक्तस्य साधनस्येति क. ख.

त्वम् । **पूर्वजेति** । हे पितः । सन्देहे पूर्वज एव पृच्छयते । अथवा । सर्वापेक्षया भवानेव पूर्वमुत्पन्नः । अतस्त्वत्तः कोऽप्यन्यो महान्नास्तीति त्वमेव प्रष्टव्य इत्यर्थः । एवं तं स्तुत्वा प्रष्टव्यमाह—**तद्विजानीहीति** । तद्विशेषाकारेण त्वं जानीहि ज्ञापय वा ज्ञानं किमिति । सर्वे हि वदन्ति ज्ञानं ज्ञानमिति । तत्किं ज्ञानं आत्मा वा, आत्मसाक्षात्कारो वा, भगवत्साक्षात्कारो वा, श्रुतिसहितो वा, प्रवेशहेतुर्वा, भक्तिजनको वा, परोक्षं वा, स्मृतिरूपं वेति । तत्र निर्द्धार्य त्वया वक्तव्यमित्यर्थः । किञ्च । यत्राऽऽत्मतत्त्वस्य विमर्शनं विचारो भवति । अनेन ज्ञाने अङ्गद्वयमपि पृष्टं क आत्मा किं तत्त्वमिति । तत्राऽपि लोकेप्रसिद्धं तन्न भवति । किन्तु विचारसाध्यमिति विचारोऽपि वक्तव्य इति सूचितम् । एवं चत्वारः प्रश्नाः सम्पन्नाः ॥ १ ॥

किञ्च । तत्त्वे भेदान्पृच्छामीत्याह—

यद्रूपं यदधिष्ठानं यतः सृष्टमिदं प्रभो ।
यत्संस्थं यत्परं यच्च तत्तत्त्वं वद तत्त्वतः ॥ २ ॥

**यद्रूपमिति** । तत्त्वमनारोपितं रूपम् । तत्सर्वस्याऽपि जगतो जन्यत्वादात्मनोऽपि प्रादुर्भूतत्वात्सर्वस्यैवाऽऽरोपविषयत्वात् । अतस्तस्य रूपं वक्तव्यं । यद्रूपं स्वरूपं यस्य । आरोपितत्वानारोपितत्वे हि साधिष्ठाने भवतः । अतस्तदधिष्ठानमपि वदेत्याह—**यदधिष्ठानमिति** । लोकेऽपि जगतस्तत्त्वव्यवहारात्तत्त्वानां च तत्त्वव्यवहारान्मूलतत्त्वाभावे तन्न घटत इति जगतः कारणमपि तत्त्वं वदेत्याह—**यतः सृष्टमिदमिति** । वादिविप्रतिपत्तेश्च कुतो जगज्जातमिति । किञ्च । **यत्संस्थम्** । यस्मिन् संस्था स्थितिर्यस्य । संस्था मृत्युर्वा । विमर्शशेषत्वेन जगतो वा प्रश्नः । तदा तत्त्वे प्रश्नद्वयम् । सृष्टौ प्रश्नचतुष्टयम् । उत्पत्तिस्थितिप्रलयाः स्वरूपं चेति तद्विषयाः । तस्य भावस्तत्त्वमिति भगवतो भावो जगदेव । आत्मा तु तत् । अथवा सामान्यतस्तत्त्वं विचार्यते । तेनैकमनेकं वा फलिष्यति । **यत्परमिति** । यः परो नियन्ता यस्य । अनेन स्थितिरुक्ता । एकपक्षे तत्तत्त्वं कस्य परभूतमिति । को वा तस्य तत्त्वस्य ग्राहक इत्यर्थः । रूपं हि द्विविधं, प्रमाणतः स्वरूपतश्च । तत्र यद्रूपमिति प्रमाणतः । यच्चेति स्वरूपतः । तत्त्वस्य जगद्रूपत्वे भिन्नत्वे वा षडङ्गानि पृष्टानि । एतेषां भेदानां ज्ञानं यथा तत्त्वतो ज्ञातं भवति तथा वदेत्यर्थः ॥ २ ॥

यथा त्वं जानासि तथा ज्ञानमस्माकं कुर्वित्यभिप्रायेण तस्य सर्वज्ञतामाह—

सर्वं ह्येतद्भवान्वेद भूतभव्यभवत्प्रभुः ।
करामलकवद्विश्वं विज्ञानावसितं तव ॥ ३ ॥

**सर्वं ह्येतद्भवान्वेदेति** । अतीतानागतयोर्ज्ञानं न भविष्यतीति तस्य कालसाध्यत्वात्कालरूपस्तन्नियन्ता वा भवानेवेत्याह । यथा रहट्टघटिकायां केचनोद्गता मज्जन्त्युद्गच्छन्ति च, तथा काले जगन्निमज्जति तत उद्गच्छति । ततो यः काले बहिरपि तिष्ठति स हि सर्वं जानाति । यथा जले बहिरपि स्थितिः । किंच । योगजधर्मेणाऽपि तव सर्वं प्रत्यक्षमित्याह—**करामलकवदिति** । विज्ञा-

१ ज्ञानेनेति ग. २ लोके प्रसिद्धमिति घ. ङ. ३ एते इति ग. ४ सर्वस्यैवापरोक्षेत्यादि ग. ५ स्थूलतत्त्वाभावेति ग. ६. कस्यापरभूतमिति क. ख. परिभूतमिति घ.



नावसितं विज्ञाने स्थितं निश्चितमिति वा । **आवेशितमिति** पाठे उत्तरकार्यार्थं सर्वमेव ज्ञाने निवेशितम् । करस्थितमामलकफलं प्रति न कोऽपि सन्दिग्धे ॥ ३ ॥

किंच । त्वया स्वस्वरूपमपि वक्तव्यमित्याह—

यद्विज्ञानो यदाधारो यत्परस्त्वं यदात्मकः ।
एकः सृजसि भूतानि भूतैरेवाऽऽत्ममायया ॥ ४ ॥
आत्मन् भावयसे तान्येव पराभावयन्स्वयम् ।
आत्मशक्तिमवष्टभ्य ऊर्णनाभिरिवाक्लमः ॥ ५ ॥

**यद्विज्ञान इति** । यत् यतो वा विज्ञानं यस्य । तव विज्ञानदाता क इत्यर्थः । किञ्च । तव आधारः कः । तव च नियन्ता । त्वं च किमात्मक इति । एवं चत्वारः प्रश्नाः । साधारणत्वं वारयति यथा सर्वे तथाऽहमिति । **एकः सृजसि** । त्वमेक एव भूतानि देवतिर्यङ्मनुष्यरूपाणि भूतैस्तैरेव महाभूतैर्वा सृजसि । अतस्त्वयि चत्वारः प्रश्ना इत्यर्थः । आत्ममाययेत्याद्यग्रिमश्लोकः स्वातन्त्र्ये हेतुप्रतिपादकः । माहात्म्यबोधको वा पूर्वशेषः । आत्ममायया । स्वस्य सर्वभवनसामर्थ्येनैव सर्वं सृजसि । आत्मन्येव भावयसि पालयसि । तान्येव स्वयमेव पराभावयन् नाशयन् । **न पराभावयन्निति** पाठे पराभवमप्रापयन् । यस्मात्त्वमेव स्वशक्त्यैव जगदुत्पत्तिस्थितिनाशं करोषीत्यर्थः । आत्मानं वा पराभवमप्रापयन् सृष्टिस्थिती करोषीत्यर्थः । द्वयोरेव कथनं तथा दर्शनात् । असहायकरणे दृष्टान्तमाह—**आत्मशक्तिमिति** । स्वस्यैव सामर्थ्यमवलम्ब्य आकाशगमने पक्षिण इव । ऊर्णनाभिः कीटविशेषः । स हि ऊर्णां सूत्ररूपां स्वमुखतो निष्कास्य तेन विहारस्थानं कृत्वा विहृत्य पुनर्ग्रसति । तथाऽपि क्लमरहितश्च भवति । एवं भवानित्यर्थः ॥ ४ ॥ ५ ॥

एतादृशं तव सामर्थ्यं स्वत एव न परत इति मम मतिरित्याह—

नाऽहं वेद परं त्वस्मिन्नापरं न समं विभो ।
नामरूपगुणैर्भाव्यं सदसत्किञ्चिदन्यतः ॥ ६ ॥

**नाऽहं वेदेति** । अस्मिन्संसारे सर्वं त्वत्त एव भवतीत्यहं जाने । परमुत्कृष्टं । अपरं हीनं । समं वा अन्योऽन्यम् । एवं करणे सामर्थ्यमाह—**हे विभो इति** । किंच । नाम वेदाः । रूपं जगत् । गुणा ब्राह्मणादयः । तैर्भाव्यमुत्पाद्यम् । सदुत्कृष्टम् । असदपकृष्टम् । कार्यकारणरूपं वा । किंचिदप्यन्यस्मात्त्वद्व्यतिरिक्ताद्भाव्यमित्यहं न जाने ॥ ६ ॥

किमतो यद्येवम् ? तत्राऽऽह—

स भवानचरद्धोरं यत्तपः सुसमाहितः ।
तेन खेदयसे नस्त्वं पराशङ्कां प्रयच्छसि ॥ ७ ॥

१ तानि न परेति ख. ग. २ सृष्टिं स्थिरीकरोषीति ग. ३ निकृतीति ग. मज्जतीति घ. ४ ब्रह्मादय इति ख.

**स भवानचरदिति** । नहि स्वतश्चो घोरं तपः करोति । घोरशब्देन भगवत्तपोव्युदासः । नरनारायणादिभिः क्रियमाणं शान्तं तपः । यद्यस्मात् । सुसमाहित इत्यतिसावधानः । स्वाभाविकतपोव्युदासः । **"तपो मे हृदयमि"**ति वाक्या **"यस्य ज्ञानमयं तप"** इति च स्वभावत एव भवति । न हि स सावधानान्तःकरणः करोति । तेन ज्ञायत एतस्मादन्योऽस्ति महान्यमाराधयितुं तपः करोतीति । किंच । तेन तपःकरणेन कर्मणा नः अस्मान्खेदयसि । अस्माकमयमभिमानः स्थितोऽस्मत्पिता सर्वोत्तम इति । तपसि क्रियमाणे तद्गच्छति । परोऽन्योऽप्यस्तीत्याशङ्काऽप्युत्पद्यते । अतः सन्देहः । किं त्वत्तोऽन्यः कश्चिदस्ति न वेति ॥ ७ ॥

एतत्सर्वं कथयेत्याह—

**एतन्मे पृच्छतः सर्वं सर्वज्ञ सकलेश्वर ।**
**विजानीहि यथा चेदमहं बुद्ध्येऽनुशासितः ॥ ८ ॥**

**एतन्म इति** । अत्र त्रयोदश प्रश्ना भवन्ति । ज्ञानप्रश्नः । आत्मप्रश्नः । तत्त्वप्रश्नाः षट् । भक्तिविषयकाश्चत्वारः । अयमन्तिमश्चेति । सर्वं विजानीहि विशेषेण विचार्य वद, बोधय वा । यथा अनुशासितः सन् शिक्षितः सन्नहं बुद्ध्ये । सर्वज्ञत्वात्कथनसामर्थ्यम् । सर्वेश्वरत्वान्मद्बोधजननसामर्थ्यम् । प्रश्नमात्रेण न वदेदिति तस्य भगवद्भावबोधनम् । अज्ञानादयं प्रश्नो न भवति किन्तु यथा पिता कथयेत्तदर्थमेवं प्रक्रियया प्रश्न इत्युत्पत्तौ वक्ष्यते । अनेन प्रश्नोत्तरे अप्यग्रे विचारमर्हत इति ज्ञापितम् । अहं यथा बुद्ध्य इति वचनात्सर्वेषां पदार्थानामुत्पत्तितः स्वरूपं वक्तव्यमित्युक्तं भवति । अन्यथा भगवतोत्पत्तेरनुक्तत्वाद्ब्रह्माऽपि न वदेत् । अतो यथाधिकारं पदार्था वक्तव्या इति निर्द्धारितम् ॥ ८ ॥

इदानीं प्रथममन्तिमप्रश्नोत्तरं वक्तुं सर्वेषां प्रश्नानां एकपरत्वमाह—

**ब्रह्मोवाच—**

**सम्यक् कारुणिकस्येदं वत्स ते विचिकित्सितम् ।**
**यदहं चोदितः सौम्य भगवद्वीर्यदर्शने ॥ ९ ॥**

**सम्यगिति** । सर्वेषां प्रश्नानामुत्तरं भगवानेव । स एव ज्ञानादिः । तत्रैवाऽवान्तरभेदा द्वादश भवन्ति । त एव स्कन्धार्थत्वेन पर्यवसानं प्राप्स्यन्ति । तत्कथमित्यपेक्षायामाह । यदहं प्रेरितः भगवद्वीर्यस्य दर्शने ज्ञानार्थमिति । यदि सर्वैरेव प्रश्नैर्भगवानेवोत्तरत्वेन वक्तव्यो भवति तदैवं सङ्गच्छते । परं केनचित्केनचिद्रूपेण तत्तत्प्रश्नोत्तररूपो भगवान् । तानि रूपाण्यग्रे वक्तव्यानि । अत एव तस्य प्रश्नस्याऽभिनन्दनम् । अन्यथा कोपः कर्त्तव्यः स्यात् । भगवद्वीर्याणां वक्तव्यत्वेनोपस्थितत्वाच्च तदभावः । यत्त्वाऽयं प्रश्नः स कारुणिकस्य तव । अनेन व्याजेन सर्वे संसारान्मोचनीया इत्यहं च कृतार्थः कर्त्तव्य इति च । अन्यथा परमभागवतस्य तवाज्ञानं न सम्भवतीत्यभिप्रायः । **वत्सेति** स्नेहेन सम्बोधनम् । मातुरौधसं पय इव ब्रह्मणो हृदयाद्भगवच्चरित्रमुद्गतमस्तीति ज्ञापयति । विचिकित्सितं विचारितं ज्ञातुमिष्टं वा ॥ ९ ॥

१ च हीनः ख, पाठः. २ इत्युपपत्तामिति क. ग. घ. ३ यदहमिति ख.



एवं प्रश्नाभिनन्दनमुक्त्वा सन्तोषेण वक्तृत्वाधिकारं च निरूप्याऽन्तिमप्रश्नस्योत्तरमाह— नाऽहं वेदेत्यस्य—

**नाऽनृतं तव तच्चाऽपि यथा मां प्रब्रवीषि भोः ।**
**अविज्ञाय परं मत्त एतावत्त्वं यतो हि मे ॥ १० ॥**

**नाऽनृतमिति** । यत्तव वचनं त्वत्तोऽन्यो महान्नास्तीति । तदनृतं न भवति । अनृतं नामाऽन्यथा ज्ञात्वाऽन्यथावचनम् । न स्वज्ञानात् । तदज्ञवचनमित्येव लोकप्रसिद्धिः । अप्रामाण्यस्य तुल्यत्वेऽप्येवंवचने अनृतवाददोषो नाऽस्तीत्यर्थः । यथा मां प्रब्रवीषि त्वमेव महानिति । सत्यं तु न भवतीत्याह— **अविज्ञाय परं मत्त इति** । मत्तः परमुत्कृष्टं मन्नियन्तारमविज्ञायैतद्वचनमित्यर्थः । कोऽसावित्यपेक्षायामाह—**एतावत्त्वं यतो हि म इति** । यावन्त उत्कृष्टा मयि धर्मास्त्वयोदितास्ते हि सर्वे यत्सम्बन्धान्मयि जाताः स भगवानित्यर्थः ॥ १० ॥

एवमन्तिमप्रश्नोत्तरमुक्त्वा प्रथमप्रश्नोत्तरमाह—

**येन स्वरोचिषा विश्वं रोचितं रोचयाम्यहम् ।**
**यथाऽर्कोऽग्निर्यथा सोमो यथर्क्षग्रहतारकाः ॥ ११ ॥**

**येनेति** । भगवान् ज्ञानं भवति येन रूपेण तद्रूपमुच्यते । ज्ञानं हि स्वप्रकाशं सर्वमेव प्रकाशयति, दीपमपि प्रकाशयति यतः, तस्मात्सर्वप्रकाशकं स्वप्रकाशं यच्चैतन्यं भगवद्रूपं तज्ज्ञानमित्यर्थः । येन भगवता । स्वरोचिषा स्वप्रकाशेन स्वयमेव रोचते, स्वात्मानं वा रोचयतीति स्वरोचिः । **विश्वं** तेनैव रोचितं प्रकाशितम् । अव्यक्ते लीनं विश्वं तद्रोचिषा प्रकाशितं जातम् । तदा स्थूलतया ब्रह्माऽभिव्यनक्ति । तदाह—**रोचयाम्यहमिति** । यथा महाकाष्ठस्थितो वह्निर्मथनेनाऽभिव्यक्त एव तृणादिभिरभिव्यज्यते न तु सहसा तृणादिभिरभिव्यक्तुमर्हति । तत्र श्रुतिसिद्धं दृष्टान्तमाह— **यथाऽर्कोऽग्निरिति** । अन्ये तु जडा न स्वप्रकाशाः । तेजस्तु स्वप्रकाशमेव । तदपि चेद्भगवता प्रकाश्यं तदा कः सन्देहोऽन्यस्य तत्प्रकाश्यत्वे । तत्र श्रुतिः—**"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाती"**ति । तत्र विद्युतां कादाचित्कत्वान्न तद्ग्रहणम् । यथाऽर्को ज्ञानेन प्रकाशितमेव स्वयं प्रकाशयति । स्वयं च प्रकाशितः । **"यदादित्यगतं तेज"** इति वाक्यात्तत्रापि भगवत्तेज एव प्रकाशकम् । तथा मय्यपीत्यर्थः । एवमश्व्यादयः । ऋक्षाण्यश्विन्यादीनि । ग्रहा बुधादयः । अन्यास्तारकाः ॥ ११ ॥

एवं ज्ञानस्वरूपं भगवन्तं प्रतिपाद्य तत्कर्त्रन्यान्तराभावाद्भक्त्या नमस्यति—

**तस्मै नमो भगवते वासुदेवाय धीमहि ।**
**यन्मायया दुर्जयया मां ब्रुवन्ति जगद्गुरुम् ॥ १२ ॥**

**तस्मै नमो भगवत इति** । लोकवेदप्रसिद्धस्तच्छब्देनोच्यते । भगवत इति तस्य ज्ञानस्य

१ ज्ञात्वाऽन्यथेति ख. घ. २ भगवद्ज्ञानमिति ग. ३ सर्वप्रकाशस्वप्रकाशमिति ग. ४ स्वप्रकाशकमिति घ.

न धर्मत्वं नांऽशत्वम् । प्रयोजनं तु मोक्षः । तदाह—**वासुदेवायेति** । भक्तिर्मननम् । निदिध्यासनमन्तरङ्गं साधनम् । तदाह—**धीमहीति** । तन्नमो वा । एवं ज्ञानं निरूप्य सर्वेषां तदज्ञानं युक्तमेवेति विरोधाभावायाऽऽह—**यन्माययेति** । यस्य भगवतो ज्ञानरूपस्य वशवर्त्तिनी काचिच्छक्तिर्मायेति । सा जगत्कर्त्तुर्मायातो भिन्ना । एतस्या व्यामोह एव फलम् । तस्यास्तु जगतः करणत्वं कर्तृत्वं वा भगवदाज्ञया । तत्र मायायाः सामर्थ्यमाह—**दुर्जययेति** । तस्या जयः प्राणिमात्रस्याऽशक्यः । इयमेव माया वेदस्तुतौ मारणीयत्वेन वेदैः प्रार्थिता । ते हि ज्ञानं बोधयन्ति । एषा तु मोहयति । तस्याः फलं महत्स्वपि दृश्यत इत्याह—**मां ब्रुवन्ति जगद्गुरुमिति** । क्रियाशक्तेरन्याधीनत्वाज्जगद्गुरुमित्युक्तम् ॥ १२ ॥

तर्हीयं शक्तिर्मोहकस्वरूपत्वात्स्वाश्रयमपि व्यामोहयेदित्याशङ्क्याऽऽह—

**विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया ।**
**विमोहिता विकत्थन्ते ममाऽहमिति दुर्धियः ॥ १३ ॥**

**विलज्जमानयेति** । सा हि भगवतो भार्या स्वस्य भगवता सह निरन्तररमणार्थमन्येषां बुद्धिं मोहयति । तस्यास्तथात्वं भगवान् जानाति । अतो विलज्जमाना ईक्षापथेऽपि स्थातुं विलज्जते । अत एव ये तत्सन्मुखास्तान्न व्यामोहयति । पृष्ठतः प्रवृत्तानेव व्यामोहयति । तदेवाऽऽह । अमुया विमोहिताः ममाहमिति विकत्थन्ते । मोहने द्वारमाह—**दुर्धिय इति** । यतो धियमेव व्यामोहयति ॥ १३ ॥

एवं ज्ञानं सपरिकरं निरूप्य आत्मनिरूपणार्थं प्रथमतस्तत्त्वं निरूपयति—

**द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।**
**वासुदेवात्परो ब्रह्मन्न चाऽन्योऽर्थोऽस्ति तत्त्वतः ॥ १४ ॥**

**द्रव्यमिति** । इदं हि तत्त्वं न नाना । किन्तु सर्वेषामेकमेव तत्त्वम् । तत्र सर्वं पञ्चाङ्गम् । तेषां पञ्चानां यदि भगवानेव तत्त्वं तदा तत्कार्याणां सुतरामेव तदेव तत्त्वं भवति । तानि पञ्च गणयति । द्रव्यं अधिभूतं समवायिकारणं महाभूतादि । कर्म जगतो जन्मनिमित्तं साधारणम् । चकाराद्भूतसंस्काररूपं च । कालो गुणक्षोभकः । चकारान्निमित्तभूतश्च । यस्त्वाधारत्वेन सर्वत्र प्रतीयमानः । स्वभावः परिणामहेतुः । जीवो भोक्ता भगवदंशः । चकारात्तदभिमानिनी देवता च । तत्र कालकर्मस्वभावा निबन्धे सम्यङ् निरूपिताः । जीवोऽपि पृथङ्निरूपितः । द्रव्यं त्वत्रैव । सर्वं प्रकृतिकार्यमग्रे निरूपयिष्यते । एते सर्वे वासुदेवादन्ये न भवन्ति । एतेषां देवरूपत्वात्सत्त्वमूर्तिर्भगवान्निर्दिष्टस्तत्त्वनिरूपणे । तत्त्वत इति प्रतीयमानतया अन्यत्वेऽपि परमार्थतो नाऽन्यत्वम् । यतोऽस्तित्वं तस्यैव । ब्रह्मन्निति सम्बोधनं निरूपितेऽर्थे असम्भावनाव्यावृत्त्यर्थम् । यतस्त्वमेव ब्रह्म । अतोऽन्यस्य ब्रह्मत्वे कः सन्देह इति भावः । चकाराद्धर्मभेदोऽपि नास्तीत्यर्थः । अन्यत्वेन स्वरूपभेदो निराक्रियते । परत्वेनाऽधिष्ठातृभेदः । अर्थ इति युक्तिरुक्ता । नित्यो हि शब्दार्थसम्बन्धः ।

१ तस्येति क. ख. घ. २ जगत्कर्तृमायात इति क. ३ महाभूतानि इति घ.



तत्र शब्दा अर्थाश्च नित्याः । ते यदि भगवद्रूपा एव भवन्ति तदैव सदैकरूपं नित्यत्वं सिद्ध्यतीति ॥ १४ ॥

एवं सर्वेषां तत्त्वं भगवानित्युत्तरमुक्त्वा विमर्शनं यत्पृष्टं तत्रोत्तरमाह—

**नारायणपरा वेदा देवा नारायणाङ्गजाः ।**
**नारायणपरा लोका नारायणपरा मखाः ॥ १५ ॥**
**नारायणपरा योगा नारायणपरं तपः ।**
**नारायणपरं ज्ञानं नारायणपरा गतिः ॥ १६ ॥**

**नारायणपरा वेदा इति** । यदि भिन्नार्थत्वं सम्भवति तदा भूयान्विचारः कर्त्तव्यो भवेत् । तत्र स्वरूपतोऽर्थतः फलतः साधनतः परम्परातः । द्वितीयकाण्डेऽपि साधनतः कार्यतः फलतश्च भगवानेवेति कस्मिन्नप्यंशे विवादाभावाद्भगवानेव तत्त्वमिति विमर्शः । तत्र वेदानां भगवन्निःश्वासान्निर्गतानां पुनस्तत्रैव प्रवेक्ष्यमाणानां तात्पर्यं नारायण इति निर्विवादम् । मध्येऽपि ते स्वार्थं प्रत्याययन्तस्तदर्थस्य भगवद्रूपत्वाद्भगवत्परा एव भवन्ति । किञ्च । वैदिकानि चतुर्विधान्यपि पदानि भगवद्व्यवस्थितमर्थं व्याप्नुवन्ति सन्ति लोके पुरुषप्रयत्नोद्यतास्तमर्थमभिधाय कृतार्थानि सन्ति निवर्त्तन्ते । भगवद्व्यवस्थितानर्थान् जानन्त्विति हि तेषां प्रयासः । ततो भगवदभिप्रेतार्थसाधकत्वादपि भगवत्परा एव । एवं शब्दतोऽर्थतोऽभिधानतश्च भगवत्पराः । ननु संसर्गरूपो वाक्यार्थस्तेषामभिप्रेतोऽर्थो भवति । स च चतुर्विधो विध्यर्थवादमन्त्रनामधेयात्मकः । तत्र विध्यर्थस्य पुरुषप्रयत्नप्रेरणालक्षणस्य पुरुषप्रयत्ने तात्पर्यम् । पुरुषप्रयत्नाभिव्यङ्ग्ये भावे वा । विधेयार्थस्तवने त्वर्थवादाः । मन्त्रा अपि याज्याव्यतिरिक्ता देवताप्रतिपादनस्तुत्यादावुपयुक्ताः । याज्यास्तु देवतोद्देशद्रव्यत्यागे । नामधेयान्यपि धात्वर्थावच्छेदने तात्पर्ययुक्तानि । तस्मात्तदर्थे उपक्षीणानि कथं भगवति तात्पर्यमावहिष्यन्ति । तत्राऽऽह—**देवा नारायणाङ्गजाः । नारायणपरा लोका नारायणपरा मखा इति** । सर्वो हि वेदः प्रवर्त्तमानश्चतुर्विधोऽपि यागे उपयुज्यते । महावाक्यार्थत्वाद्यागस्य । तत्र हि यागः करणम् । स्वर्गादिः साध्यम् । तत्र साम्प्रतं पुरुषप्रयत्नेनाऽभिव्यक्ता यागाः स्वव्यापारं देवताप्रीतिं मध्ये जनयन्ति । अन्यथा व्यापाराभावे करणभावादेव प्रच्यवन्ते । अदृष्टादिकं तु न व्यापारः । यागेनाऽजन्यत्वात् । कल्पनायां मानाभावात् । दृष्टस्य व्यापारस्य विद्यमानत्वाच्च । ते हि देवतोद्देशेन द्रव्यत्यागं कुर्वन्तः स्वर्गं साधयन्ति । देवता चाऽन्यदीयं हविर्विधानेन गृहीत्वा किञ्चिदुपकर्त्तुमुचिता भवति । लोके तथोपलब्धेः । अन्यथा तदुद्देशद्रव्यत्यागत्वं यागस्य न स्यात् । द्रव्यसंस्कारकत्वेनाऽपि देवतोपयोगस्य वक्तुं शक्यत्वात् । निर्वापादारभ्य तत्सम्बन्धवचनस्य च प्रोक्षणादिवत्संस्कारपरत्वं घटते । यद्यपि देवतापदेषु विद्यमाना चतुर्थी तादर्थ्ये न भवति । उपपदविभक्तित्वात् । प्रीतिरप्यनित्या । कालान्तरस्मारकस्याऽप्यभावात् ।

१ शब्दार्थावेति क. ग. घं. ङ. २ अनित्या इति ग. ३ विमर्शनमिति क. ग. ङ. ४ परम्परा गत इति क. ख. ५ नामधेयार्थात्मक इति ख. ङ. ६ विध्यर्थस्य तु इति ख. ङ. ७ अभिव्यङ्ग्ये इति क. ख. ग. ङ. ८ उपक्षायमानानीति ग. ९ कल्पनायां मानाभावादित्यधिको ग्रन्थः ग. १० चेति नास्ति ग. घ. ११ तत्संस्कारेति ख.

तत्कल्पनायां गौरवम् । तथापि चतुर्थ्या निरर्थकत्वदोषनिवृत्त्यर्थमवश्यमर्थो वक्तव्यः । स चाऽन्यत्र सिद्धत्वात्सम्प्रदान एव भवति । देवतोद्देशप्रसिद्धेश्च । "यस्यै देवतायै हविर्गृहीतं स्या"दित्यत्र "अग्नये जुष्टं निर्वपामी"त्यादौ च चतुर्थ्यास्तादर्थ्यार्थत्वम् । नहि तत्र नमःस्वस्त्यादिपदानि सन्ति । यागे तु पुनः स्वर्गः फलत्वेनाऽभिमत इति केवलं देवताया उद्देश्यत्वाभावादवान्तरव्यापारविवक्षार्थं "नमःस्वस्तिस्वाहे"त्युपपदविभक्त्यनुशासनम् । न च प्रीतिर्व्यापारः । तस्या अन्यधर्मत्वेन स्वर्गजनकत्वाभावात् । देवता तु स्वर्गादावधिकृता फलं दातुं शक्नोति । अतो द्रव्येण प्रीता देवता व्यापारः । सा च नित्या चेतना च । यथानुरूपं च फलं नियमयितुं शक्ता । परं तस्या अपुरुषार्थत्वात्पुरुषस्याऽभिप्रेता न भवतीति न तावन्मात्रेण यागस्याऽन्यथासिद्धिः । अतो मध्ये व्यापाररूपदेवतापरत्वेऽपि भगवत्परत्वम् । यतो देवा नारायणस्याऽङ्गेभ्यो बाह्वादिभ्यो जाताः । न चाङ्गसेवार्थं प्रवृत्ता अङ्गे तात्पर्ययुक्ता भवन्ति । किन्त्वङ्गिनि । यद्यप्यैश्वर्येण वक्तव्यानि तथापि तेषां विग्रहस्यैवाङ्गत्वात्तत्र जाता अङ्गजा भवन्ति । प्रीतिपक्षेऽपि दृष्टत्वात्प्रामाणिकत्वाच्च पुनः स्मरणादिकल्पनं न गौरवाय । किञ्च । यत्र देवता व्यापारत्वेन गृहीता स स्वर्गादिरुद्देश्यो भवति । तस्य लोकत्वे सुखत्वे वा भगवदीयत्वं न व्यभिचरति । स्वर्गादिलोकानां "छदा स्वर्गादिलोक" इत्यादिना तदवयवत्वेन प्रतिपादनात् । "अस्यैवाऽऽनन्दस्याऽन्यानि भूतानि मात्रामुपजीवन्ती"ति श्रुत्या भगवदानन्दांशत्वात्स्वर्गादीनां यागकर्तुः स्वसम्पादने भगवदानन्दोपजीवकत्वात्फलदातृभगवत्क्रियानिष्पादकत्वाद्भगवत्परत्वं सुखस्याऽपि । एवमवान्तरमहाफलयोर्भगवदीयत्वे तदर्थं प्रवृत्ता मखा अपि भगवत्परा इत्यविवादम् । अतो वाक्यार्थविवक्षायामपि भगवत्परत्वमविवादमिति वेदानां भगवत्परत्वविमर्शः सिद्धः । अतःपरं पुराणानां भगवत्परत्वविमर्शः कर्तव्यः । पाक्षिकोऽपि दोषः परिहरणीय इति । तत्र पुराणेऽर्थचतुष्टयं साङ्ख्यं योगः पशुपतिमतं वैष्णवं प्रतिपाद्यम् । तत्राऽन्तिमस्यैतत्प्रवेशान्न विरोधशङ्का । योगो हि चित्तवृत्तिनिरोधात्मकः स्वतोऽपुरुषार्थभूतः पुरुषार्थसाधनं भवितुमर्हति । न च वेदविरुद्धार्थं कल्पयितुं शक्नोति । अप्रामाणिकत्वप्रसङ्गात् । न चाऽणिमादयस्तस्य मुख्यं फलम् । मोक्षपर्यवसायित्वाभावे अशास्त्रत्वापत्तेः । सिद्धयस्त्वन्तरायरूपाः कालक्षेपणहेतव इत्यग्रे वक्ष्यते । अतो मोक्षं साधयन्नपि योगो भगवति चित्तैकाग्र्यं साधयन्नेव साधयति । सबीजनिर्बीजध्यानयोर्भगवच्चरणारविन्दविषयत्वात् । अतस्तस्याऽप्यवान्तरविवक्षया पूर्ववद्भगवत्प्रीतिरेवावान्तरव्यापार इति कल्पनीयम् । चित्तसंस्कारपरत्वेऽपि फलं भगवदधीनमेवेति भगवन्मुखनिरीक्षकत्वमवश्यं कल्पनीयम् । योगा इति बहुवचनेन सर्वे योगभेदा भगवत्परा एव । एतस्य भगवत्परत्वमग्रे विस्तरेण वक्ष्यते । भगवत्प्राप्त्युपायत्वात्सामान्यतस्तत्परत्वमविवादम् । तपस्तु भगवदुपयोगि देहेन्द्रियसम्पादकत्वेन तत्परमेव । अन्यथा क्लेशात्मकस्य तस्य पुरुषार्थपर्यवसानं न स्यात् । पशुपतिमतं तु तपस्येवोपक्षीणम् । ज्ञानं द्विविधं—औपनिषदं साङ्ख्यसिद्धं च । तत्र यद्यपि परस्परं विरुद्धम् । औपनिषदं हि सर्वस्याऽऽत्मत्वप्रतिपादनेनाऽऽत्मत्वेन सर्वविषयकं भवति । इदं तु सर्वव्यावृत्तत्वेनाऽऽत्मविषयकम् । तथापि प्रथमप्रवृत्तस्याऽऽत्मानात्मसंस्कारात्पृथक्कृत्याऽऽत्मावगमनं मुख्यम् । अन्यथा सर्वस्यात्मत्वं प्रतिपद्यमानमात्माज्ञानादशक्यमेव स्यात् । ज्ञानस्य च ज्ञेय एव

१ तादर्थ्यत्वमिति क. ख. ग. ङ. तदर्थत्वमिति घ. २ नियन्तुमिति घ. नियमितुमिति ख. ङ. ३ अङ्गा एव वक्तव्या इति घ. ४ स्वर्गलोक इति क. स्वर्गादिलोक इति ख. ५ भूतानीति नास्ति क. ख. ६ भगवदंशत्वादिति क. ७ वैष्णवप्रतिपाद्यमिति ख. ८ कालक्षेपणहेतव इति क. ९ प्रतिपाद्यमानमिति ग. घ. ङ.



तात्पर्यम् । ज्ञेयस्तु नारायण एव । आत्मत्वात्सर्वत्वाद्ब्रह्मत्वाच्च । गतिरपि पूर्वोक्ता भगवत्परैव । सा हि ब्रह्मज्ञानफलं भवति । तदुक्तं "विन्दन्ति हि ब्रह्मगतिमि"त्यत्र ॥ १५ ॥ १६ ॥

एवं विमर्शं निरूप्य यद्रूपमित्यादि पदप्रश्नानग्रे विस्तरेण निरूपयिष्यन् यद्विज्ञानमित्यादि प्रश्नचतुष्टयस्य चतुर्भिः श्लोकैरुत्तरमाह—

> तस्याऽपि द्रष्टुरीशस्य कूटस्थस्याऽखिलात्मनः ।
> सृज्यं सृजामि सृष्टोऽहमीक्षयैवाऽभिचोदितः ॥ १७ ॥

तस्याऽपीति । तत्र प्रथमं यद्विज्ञान इत्यस्योत्तरम् । इदं हि ज्ञानं जगत्कार्योपयिकमिति न पूर्वेण गतार्थता । यतो विज्ञानं यस्येति प्रश्नात्प्रथमं तस्य विज्ञानं वक्तव्यम् । तथा च उपादानगोचरापरोक्षज्ञानं तत्साधकप्रकारेण साधनज्ञानं च प्रथमं भगवतोऽस्तीत्याह । तस्यैव कर्तृत्वात् । तस्याऽपि यत्सृज्यं तत्तेनैवाऽभिचोदितः सृजामीति सम्बन्धः । तस्य सृज्यत्वे हेतुः—द्रष्टुरिति । विश्वं कार्यं भगवतः सृज्यम् । तस्यैव द्रष्टृत्वात् । द्रष्टा हि कार्यं कर्तुं शक्यम् । न हि ज्ञानमात्रेण कर्तुं शक्यमित्यत आह—ईशस्येति । ईशः समर्थः सर्वं कर्तुमिति । ननु क्रियाज्ञानशक्तिमत्त्वेऽपि व्यापारावेशे लौकिकवत्क्लेशसम्भवादात्मनो विकृतत्वापत्तेर्भगवतः कर्तृत्वं न सम्भवतीत्याशङ्क्याऽऽह—कूटस्थस्येति । स हि सर्वं करोति कूटस्थ एव न तु विक्रियते । यथा कामधेनुः कल्पवृक्षश्चिन्तामणिर्वा । योगी वा यथा मनसा सृजति । अतः कूटस्थस्यैव कर्तृत्वसम्भवान्न काऽप्यनुपपत्तिः । ननु भगवान् सृष्टिं नाऽर्हति कर्तुम् । प्रयोजनविरोधात् । स हि स्वार्थं वा जीवार्थं वा करोति । स्वार्थं करणे जीवानामनुत्पादनं स्यात् । ततो भक्तिमार्गो विरुध्येत । सर्वेऽपि मार्गा विरुध्येरन् । बन्धमोक्षाद्यभावाद्वैचित्र्यमज्ञानं च न स्यात् । अत उभयार्थं जीवार्थं वा कर्तव्यमिति मन्तव्यम् । तत्र स्वांशे स्वस्याऽऽनन्दपूर्णत्वं भज्येत । परार्थत्वे वैषम्यनैर्घृण्ये प्रसज्येयाताम् । अत आह—अखिलात्मन इति । अखिलानामात्मा । आत्मसृष्टेर्न वैषम्यादि । आनन्दादिविरोधस्तु नास्ति । अखिलत्वात् । यथा खिला आत्मानो न भवन्ति केनाऽप्यंशेन । तेषां चाऽर्थे सृष्टिश्च क्रियते । उपभोगश्च सम्पाद्यते । एवं स्वस्य यः पूर्ण आनन्दस्तस्याऽप्यात्मा । भोगादिना तस्याऽप्युपचयं करोति । तथापि न तस्याऽनित्यत्वं न्यूनत्वं वा । तस्मादुभयविधाऽपि सृष्टिर्भगवतः कर्तुं युक्ता । तथापीश्वरत्वाद्भक्तिमार्गव्यवस्थापनाय मां सृष्ट्वा ईक्षयैवाऽऽज्ञाप्य मद्रूपेणैव सर्वं सृष्ट्वा स्वयं कूटस्थ एव स्थितः । तदा अहं तत्सृज्यं सृजामि तत एव ज्ञानशक्तिं क्रियाशक्तिं च लब्ध्वा । तदाह—ईक्षयैवेति । एवधा प्रेरणाद्भयप्राप्तिः ॥ १७ ॥

अनेन सामान्यतः स एवाऽऽधारः स एव नियन्ता । तदात्मकश्चाऽहमित्युक्तमेव । परमेतस्य हेतुर्विचार्यते—कथमयं भगवांस्त्वामन्यान्वा सृजति ? कथं वा एकात्मनि नियम्यनियामकभावः ? तत्राऽऽह—सत्त्वं रजस्तम इति द्वाभ्याम्—

> सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः ।
> स्थितिसर्गनिरोधेषु गृहीता मायया विभोः ॥ १८ ॥

१ जगत्कार्योपयिकमिति क. ख. घ. ङ. २ साधनं ज्ञानं चेति घ. ङ. ३ द्रष्टा इति ग. घ. ङ. ४ स्वार्थे इति क. ५ आनन्दविरोध इति ग. घ. ङ. ६ मकारो नास्ति ग. घ. ङ.

**कार्यकारणकर्तृत्वे द्रव्यज्ञानक्रियाश्रयाः ।**
**बध्नन्ति नित्यदा मुक्तं मायिनं पुरुषं गुणाः ॥ १९ ॥**

"**अवस्थितेरिति काशकृत्स्न**" इति मतमत्र सिद्धं भविष्यति । यथोर्णनाभिः सृष्ट्यर्थमेकामूर्णामुद्वमते तथा भगवानपि त्रिविधसृष्ट्यर्थं त्रीन्गुणानुद्वमते । गुणरूपत्वाच्च गुणशब्दव्यवहारः । सद्रूपेण निर्गतं सत्त्वमित्युच्यते । केवलचिद्रूपेण निर्गतं क्रियाशक्तिप्रधानत्वात्सदानन्दाभावाच्च रज इत्युच्यते । आनन्दांशाच्च तमः । ते भगवद्रूपा एव भगवता सृष्टाः । न च भगवति ते पूर्वं स्थिताः । तथा सति भगवदात्मकास्ते न भवेयुः । यथा कार्पासे नहि सूत्रम् । तदेव हि पश्चात्स्वावयवैः पौर्वापर्यमापद्यमानं सूत्रतामापद्यते । अत एव भगवान्निर्गुणः । ते गुणाः पुनः स्थितिसर्गनिरोधेषु उत्पत्तिस्थितिलयार्थं ते (?) गृहीताः । तेषामपि ग्रहणं मायया । एषा हि माया जगत्कर्त्री न तु व्यामोहिका । तदाह—**विभोरिति** । समर्थस्य जगत्कर्तुरित्यर्थः । सा हि तच्छक्तिः सर्वरूपभगवत्सम्बन्धात्सर्वप्रतिकृतिरूपा । सा जगत्करणे करणरूपा । अतः करणांशस्य तदीयत्वात्करणरूपेणैव निर्गता गुणा इति माययैव गृहीताः । ते मायावशे तिष्ठन्ति तत्पुत्रा इव । अतो य एव भगवदंशो जीवस्तस्यां रन्तुमिच्छति । तत्कार्ये वा । तं ते गुणा बध्नन्तीत्याह—**कार्यकारणकर्तृत्व इति** । कार्यमधिभूतं देहः । कारणमध्यात्ममिन्द्रियाणि । कर्ता आधिदैविकः अन्तःकरणम् । एतेषां भावः कार्यकारणकर्तृत्वम् । सङ्घातमिति यावत् । जीवस्य सङ्घातत्वनिमित्तम् । यथा केवलो जीवः सङ्घातरूपो भवति । ते हि मायया गृहीताः स्वकार्ये स्थापिताः । तदाह—**द्रव्यज्ञानक्रियाश्रया इति** । द्रव्यमधिभूतम् । ज्ञानमधिदैवम् । क्रिया आध्यात्मिकी । तत्त्रयं तेषामाश्रयः प्रत्येकमेकस्य । अतः स्वस्वाश्रये ते बध्नन्ति । आध्यात्मिकादिभावं परित्यज्य केवलं भवितुं न प्रयच्छन्ति । सर्वदा बध्नन्ति । बन्धने मायासम्बन्ध एव हेतुः । न च सम्बन्धमात्रमेव हेतुः । अन्यथा भगवतोऽपि बन्धनं स्यात् । किन्तु तत्र स्वातन्त्र्यं योऽभिमन्यते तस्याः पतिरहमिति । तदाह—**पुरुषमिति** । न तु तां करणत्वेन कार्यार्थं यो गृह्णाति । अतो गुणबद्धो नियोज्यो गुणकर्ता नियोजक इत्येकस्मिन्नेव रूपद्वयमुपपद्यते ॥ १८ ॥ १९ ॥

एवं जीवब्रह्मभावभेदं निरूप्य सामान्यत उत्तरितमपि यदाधाराद्युत्तरं विशेषाकारेणाऽऽह—

**स एष भगवाँल्लिङ्गैस्त्रिभिरेतैरधोक्षजः ।**
**स्वलक्षितगतिर्ब्रह्मन् सर्वेषां मम चेश्वरः ॥ २० ॥**

**स एष इति** । मायातत्कार्याणां द्रव्यादीनां विशेषाधारत्वं भगवतश्च सामान्याधारत्वमिति तत्रोत्तरमुक्त्वा मायित्वेन विशेषात्मत्वं च बोधितमिति यत्पर इत्येतदेव शिष्यते । नियामकस्य दर्शने पूर्वमात्मत्वात्तज्ज्ञानेऽपि नियमनं न सम्भविष्यतीति त्रिभिरेव एतैर्लिङ्गैः सत्त्वादिभिः सुष्ठु अलक्षिता गतिर्यस्य । यद्यपि स एवैषः । यः स्रष्टा स एव बद्धः । तथापि स्रष्टा भगवान् । एते च गुणा भगवतो लिङ्गभूता ज्ञापका बहिर्निर्गता धूमवद्दूरादेव पुरुषं ज्ञापयन्ति । न तु तं वेष्टयन्ति । अन्यैर्बन्धशङ्कां वारयति—**एतैरिति** । एतावन्त एव ते । तर्हि बद्धैः कथं न बध्यते ? तत्राऽऽह—

१ उत्पत्तिस्थितिप्रलयार्थत्वेन गृहीता इति ग. २ न बध्नन्तीति ग. ३ तरमनुक्त्वेति क. ख. ४ बाध्यते इति क.



**अधोक्षज इति** । ते चेत्तं पश्यन्ति क्रियया वा प्राप्नुवन्ति । तदा बध्नन्ति । तत्तु तेषामसम्भावितमिति । अत एव सुष्ठु अलक्षिता गतिर्यस्य । स्वैर्वा बद्धातिरिक्तैर्मुक्तैर्वा लक्षिता गतिर्यस्य । वस्तुतस्तु भक्ताः भगवता सह पश्चाद्वा समायान्तीति सर्वत्र निश्चयः । अत एव हे ब्रह्मन् त्वं तादृशः । तथापि सर्वेषां मम चकारात्तव च भगवानीश्वरो नियन्ता ॥ २० ॥

एवं प्रश्नचतुष्टयं परिहृत्य यद्रूपमित्यादि षट् प्रश्नानुत्तरयितुमारभते—

**कालं कर्म स्वभावं च मायेशो मायया स्वया ।**
**आत्मन् यदृच्छया प्राप्तं विबुभूषुरुपाददे ॥ २१ ॥**

**कालं कर्म स्वभावमिति** । त्रयाणामत्राऽध्याये उत्तरम् । त्रयाणामग्रिमाध्याये । तत्र प्रथमं यद्रूपमित्यस्योत्तरमाह । स्वभावतो यत्तदग्रे वक्ष्यते । परिदृश्यमानरूपतो यत्तदिदं कालकर्मस्वभावरूपमिति । अधिष्ठानं तु तत्त्वानि । तत्सहिताद्भगवतः सृष्टिरेषामिति । तत्र सर्वस्याऽपि जगतः कालकर्मस्वभावत्वे पूर्वं भगवता कालकर्मस्वभावानां ग्रहणं हेतुः । एते हि कालकर्मस्वभावा भगवतो रूपविशेषा अक्षरभेदाः सर्वत्र परिभ्रमन्ति । ते यदृच्छया भगवन्निकटेऽपि समागतास्तदा भगवता ते गृहीताः । तेऽपि पुनः करणकोटावेव निविष्टा इति माययैव गृहीताः । परमत्र माया करणं न तु कर्त्री । साऽपि न व्यामोहिका । किन्तु स्वकीया । मायायाश्चाऽयं नियामको न तु मायाभावं प्राप्तः । अस्यां सृष्टौ जीवानां बन्धने उत्पत्तिस्थितिप्रलयेषु च गुणानामुपयोगो न तु स्वस्य नानात्वे । अत एव विशेषेण बुभूषुः नानारूपो भविष्यामीति तान् गृहीतवान् । मायया पुनर्गृहीतास्तेऽपि नियोज्या जाताः ॥ २१ ॥

अतस्तेषां नियोगमाह—

**कालाद्गुणव्यतिकरः परिणामः स्वभावतः ।**
**कर्मणो जन्म महतः पुरुषाधिष्ठितादभूत् ॥ २२ ॥**

**कालाद्गुणव्यतिकर इति** । पूर्वं मायया गुणा गृहीताः । पश्चात्कालादयः । अतस्ते गुणेषु प्रविष्टाः । तत्र कालाद्गुणानां व्यतिकरो जातः सम्पर्को जातः । तदनु स्वभावसम्बन्धात्सम्पृक्ता गुणाः परिणता जाताः । तत्रापि कर्म जन्मनिमित्तं तत्र पतितमिति परिणतं तद्वस्तु गुणत्रयकार्यं कर्मसम्बन्धाज्जन्मरूपं जातम् । अनेन त्रैविध्यं सृष्टेरुक्तम् । यत्र कालाद्गुणव्यतिकर एव स भूतभविष्यद्वर्तमानात्मकः संवत्सररूपः काल एव जातः । तत्रापि स्वभावे अधिके प्रविष्टे परिणतं सत् जडादिरूपं घटरूपं भवति । ततोऽपि कर्म चेदधिकं प्रविशति तदा जीवाधिष्ठितदेहादिसंघातस्य जन्म भवति । तदिदमाह—**जन्म महतः पुरुषाधिष्ठितादभूदिति** । पुरुषाधिष्ठानं सर्वत्र । तथापि परिणतं वस्तु पुरुषाधिष्ठिताद्धेतोर्महतो जन्म जातम् । तस्य हि नामान्तराभावात्प्रथमं स्थूलतयोत्पन्नं महदित्युच्यते ॥ २२ ॥

१ त्वमिति नास्ति ख. २ चकारो नास्ति क. ख. ग. ३ अपीति नास्ति घ. ङ. ४ उपपन्नमिति क. ख. घ.

एवमेकस्य जीवस्य कालकर्मस्वभावैर्देहसम्बन्धो निरूपितः । इदानीं भगवत्प्रेरणया ते गुणा महत्तत्त्व एव लग्ना इत्याह—

**महतस्तु विकुर्वाणाद्रजःसत्त्वोपबृंहितात् ।**
**तमःप्रधानात्त्वभवद्द्रव्यज्ञानक्रियात्मकः ॥ २३ ॥**

**महतस्त्विति** । कालकर्मस्वभावैः स्वस्मिन्गुणव्यतिकरादिकार्ये कृते सोऽपि विकुर्वाणो जातः । तत्र गुणद्वयं सहायत्वेन प्रविशति । तमस्तु प्राधान्येन । तदाह—**रजःसत्त्वोपबृंहितात्तमःप्रधानादिति** । कश्चित्त्रिगुणात्मकः पदार्थो जातः । त्रयाणामनुप्रवेशात् । तदाह—**द्रव्यज्ञानक्रियात्मक इति** ॥ २३ ॥

तस्य नामाऽऽह—

**सोऽहङ्कार इति प्रोक्तो विकुर्वन् समभूत्त्रिधा ।**
**वैकारिकस्तैजसश्च तामसश्चेति यद्भिदा ।**
**द्रव्यशक्तिः क्रियाशक्तिर्ज्ञानशक्तिरिति प्रभो ॥ २४ ॥**

**सोऽहङ्कार इति प्रोक्त इति** । पूर्वं तु स्थूलमेकं कार्यमुत्पन्नमिति भगवता महानिति संज्ञा धृता । अस्य तु पिता महान् । स तु विशेषतो नामान्तरमजानन्नात्मानं प्रकृतिं च पश्यन्नुभयं नामत्वेन निर्दिशति—**अहङ्कार इति** । पित्रैव प्रोक्तः । सोऽपि पूर्ववत् कालादिसम्बन्धं प्राप्य विकुर्वन् । गुणानां प्रधानगुणभावे नियामकाभावात्स्वतन्त्राः सन्तः स्वाधिकरणमहङ्कारं त्रेधा कृतवन्त इत्याह—**समभूत्त्रिधेति** । तेषां भेदानाह—**वैकारिक इति** । वैकारिकः सात्त्विकः । तैजसो राजसः । चकारादवान्तरभेदा अपि तयोः सन्तीत्युक्तं भवति । एवं तामसश्चेत्यत्राऽपि । यद्भिदा यस्याऽहङ्कारस्यैवं त्रिरूपो भेद इत्यर्थः । एतेषां स्वस्वकार्यकरणे सामर्थ्यमाह—**द्रव्यशक्तिरिति** । तन्मध्ये तामसोऽहङ्कारो द्रव्यजननसामर्थ्ययुक्तः स द्रव्यमेव जनयति । अतस्तस्य गौणं नाम द्रव्यशक्तिरिति द्रव्ये शक्तिर्यस्येति । एवं राजसोऽहङ्कारः क्रियाशक्तिः । सात्त्विकस्तु ज्ञानशक्तिरिति । तत्र **प्रभो इति** सम्बोधनं तवाऽहङ्कारो ज्ञानशक्तिरूप इति बोधनार्थम् ॥ २४ ॥

इदानीं त्रयाणामपि कालादिसम्बन्धत्वात्सृष्टिकर्तृत्वात्प्रथमं तामसस्य तथात्वमाह—

**तामसादपि भूतादेर्विकुर्वाणादभून्नभः ।**
**तस्य मात्रा गुणः शब्दो लिङ्गं यद्द्रष्टृदृश्ययोः ॥ २५ ॥**

**तामसादपि भूतादेरिति** । तामसस्य भूतादिरित्यपरं नाम यौगिकम् । पृथिव्याद्याकाशान्तानां सामान्यं नाम भूतमिति । जातमित्यर्थः । भूतानि च तामसानि । अतस्तामसं यज्जातं तद्भूतमित्युच्यते । तस्य आदिः कारणं भूतादिरहङ्कारः । सोऽपि यदा विकुर्वाणः कार्यजननार्थमुद्यतस्तदा

१ स्वभावत्वेनेति ग. २ अस्येति घ. ङ. ३ आत्मानं कृतिंचेति ख. ग. ४ गुणभावेपीति ग. ५ सम्बन्धादिति क. लोकादिसम्बन्धादिति ग. ६ करणमिति क. ग.



पूर्ववत्कालादिसम्बन्धान्नभो नाम किञ्चित्कार्यं जातम् । अत्यन्ततामसत्वात्प्रकाशप्रवृत्तिरहितत्वान्न विद्यते भाः यस्येति । भा दीप्तावित्यस्य अप्रत्यये कृते आकारलोपे च कृते नभ इति भवति । ननु तस्य सर्वात्मना भानराहित्ये कथं तत्प्रतीतिः ? तत्राऽऽह—**तस्य मात्रा गुण इति** । तस्य शब्दः मात्रा गुणश्च । मा निषेधात्मिका माया । तां त्रायत इति मात्रा । भगवदावरणरूपां मायां हि पालयति । अत एव मात्रास्वासक्तो न भगवन्तं प्राप्नोति । अनेन वर्णात्मकः शब्दो व्युदस्तः । किञ्च । गुणः सः । आत्मबन्धक इत्यर्थः । पूर्वं गुणानां बन्धकत्वोक्तेः । मात्रा नाम परिणामविशेषः । आकाशः सर्वोऽपि व्यवहारे शब्दमात्रो भवतीति शब्दमात्रेणाऽऽकाशव्यवहारः । किञ्च । **लिङ्गं यद्द्रष्टृदृश्ययोरिति** । मात्रात्वं गुणत्वं च शब्दगतधर्ममात्रम् । नत्वसाधारणो धर्मः । तस्माच्छब्दस्य न तल्लक्षणम् । किन्तु द्रष्टृदृश्यलिङ्गत्वं शब्दत्वमिति । गजोगज इत्युक्ते स्वरेण गृहस्थितः पुरुषो बहिःस्थितमनुमिमीते द्रष्टारं दृश्यं च देवदत्तो गजं पश्यतीति ॥ २५ ॥

एवं तामसाहङ्कारादाकाशोत्पत्तिमुक्त्वा आकाशाद्वाय्वादीनामुत्पत्तिं क्रमेणाऽऽह—

**नभसोऽथ विकुर्वाणादभूत्स्पर्शगुणोऽनिलः ।**
**परान्वयाच्छब्दवांश्च प्राण ओजः सहो बलम् ॥ २६ ॥**

**नभसोऽथ विकुर्वाणादिति** । स्पर्शो गुणो यस्य । अनिलो वायुः । वायोर्गुणद्वयम्—स्वाभाविकः स्पर्शः । कारणान्वयाच्छब्दश्च । कार्यद्वयं च तस्याऽधिकमित्याह । प्राणो दशविधः । ओज इन्द्रियशक्तिः । सहो मनःशक्तिः । बलं शरीरशक्तिः । यद्यपि प्राणो राजसाहङ्कारकार्यमिति वक्ष्यते तथापि घ्राणेन्द्रियसहकारी गन्धग्राहकः प्राणोऽत्र गृहीतः । **"बुद्धिः प्राणश्च तैजसादि"**ति मतान्तरं वा । प्राणादिरूपो वायुरित्यर्थः । यत्राऽपि कालकर्मस्वभावत इति नोच्यते तत्राप्यनुषङ्गः कर्त्तव्यः । अथवा । अहङ्काराकाशयोः कालकर्मकार्यत्वाभावाल्लोकप्रतीत्या तन्नोक्तम् ॥ २६ ॥

वायोस्तु साधनविजातीयं कार्यमुत्पद्यत इति निमित्तमात्रं मा भवत्विति विशेषेण निरूपयति—

**वायोरपि विकुर्वाणात्कालकर्मस्वभावतः ।**
**उदपद्यत तेजो वै रूपवत्स्पर्शशब्दवत् ॥ २७ ॥**
**तेजसस्तु विकुर्वाणादासीदम्भो रसात्मकम् ।**
**रूपवत्स्पर्शवच्चाऽम्भो घोषवच्च परान्वयात् ॥ २८ ॥**
**विशेषस्तु विकुर्वाणादम्भसो गन्धवानभूत् ।**
**परान्वयाद्रसस्पर्शशब्दरूपगुणान्वितः ॥ २९ ॥**

**वायोरपीति** । उदपद्यत उत्पन्नम् । वैशब्देन नाऽत्र सन्देहः कर्त्तव्यः । गुणाधिक्यादेव वैलक्षण्यप्रतीतिः । न तु वायोः कार्यं न भवतीति । **"वायोरग्निरि"**ति श्रुतेः । तेजसो गुणत्रयमाह । रूपवत्, स्पर्शवत्, शब्दवत् । त्रयोऽपि गुणास्तत्र प्रतीयन्ते । येषां कार्यकारणभावो नाऽस्ति तेषां

१ मात्राणामपरिणामविशेष इति घ. २ मात्रत्वमिति ख. घ. ३ नभसस्तु विकुर्वाणादिति ख. ४ कार्यत्रयमिति ख. ५ अधिकारमिति क. ६ कालकर्मस्वभाव इति क.

परं विवादः । स च श्रुतिविरोधात्सिद्धान्ते उपेक्षणीयः । यत्तु विजातीयं न विजातीयस्याऽऽरम्भकमिति । तत्तु तन्तुपटयोरेव व्यभिचारि । न हि तन्तुपटयोरेका जातिः । तन्तुत्वं पटत्वं वा एकम् । नाऽपि पृथिवीत्वादयोऽत्र जातयो विवक्ष्यन्ते । नियामकाभावात् । स्थूलाग्नौ कारणत्वेन वायोरेवोपलम्भात् । न च तदवयवास्तत्रोपलभ्यन्ते पटे तन्तव इव । तस्माच्छ्रुतिप्रत्यक्षाभ्यां बाधितं शास्त्रमुपेक्षणीयम् । रसात्मकं रसतन्मात्रायुक्तम् । परान्वयाद्रूपवत्स्पर्शवद् घोषवच्च । घोषो ध्वन्यात्मकः शब्दः । अम्भसो विकुर्वाणाद्विशेषस्त्वभूत् । विशेषः पृथिवी । तुशब्देन सर्ववैलक्षण्यमस्याः । गन्धवानिति । गन्धो मुख्यो गुणः । परान्वयादन्येऽपि चत्वारः ॥ २७ ॥ २८ ॥ २९ ॥

एवं तामसाहङ्कारसृष्टिमुक्त्वा सात्त्विकाहङ्कारसृष्टिमाह—

**वैकारिकान्मनो जज्ञे देवा वैकारिका दश ।**
**दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ॥ ३० ॥**

**वैकारिकादिति** । सत्त्वलक्षणो गुणः सद्रूपस्य प्रथमविकारभूत इति तस्य वैकारिकसंज्ञा । वैकारिकात्सात्त्विकाहङ्कारान्मनः दश[1] इन्द्रियाधिष्ठातारो देवाश्च जाताः । अस्मिन् सिद्धान्ते मनसो देवता नोपेक्ष्यते[2] । आत्मनैकट्यादात्मैव देवता । ते देवा दिगादयः । अग्रे श्रोत्रादीनीन्द्रियाणि वक्ष्यति । तेषामेते क्रमेण देवाः । अश्विशब्देनाऽश्विनीकुमारौ । मित्रश्च कश्च[3] ॥ ३० ॥

राजसाहङ्कारकार्यमाह—

**तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाऽभवन् ।**
**ज्ञानशक्तिः क्रियाशक्तिर्बुद्धिः प्राणश्च तैजसौ ।**
**श्रोत्रं त्वग्घ्राणदृग्जिह्वा वाग्दोर्मेण्ढ्राङ्घ्रिपायवः ॥ ३१ ॥**

**तैजसादिति** । इन्द्रियाणि इन्द्र आत्मा ईयते अनेनेतीन्द्रियम् । आत्मा हि न चाक्षुषः । नाऽप्यन्येन्द्रियग्राह्यः । व्यवह्रियते च देवदत्तस्त्वं यज्ञदत्तस्त्वमिति । स च पश्यति शृणोतीत्येव प्रतीयते । तानीन्द्रियाणि दश । ननु ज्ञानेन्द्रियाणि ज्ञानप्राधान्यात्सात्त्विकानि भवितुमर्हन्ति । कर्मेन्द्रियाणि च जडपर्यवसानात्तामसानि भवितुमर्हन्ति । तत्कथमुभयं परित्यज्य दशाऽपीन्द्रियाणि राजसानीत्युच्यन्त इत्यत आह—**ज्ञानशक्तिरिति** । अत्रेन्द्रियाणां राजसत्वे निमित्तमन्यदस्ति । बुद्धिः प्राणश्च राजसाहङ्कारकार्यौ । नन्वेतदप्यसङ्गतम् । बुद्धिर्ज्ञानरूपा "**सत्त्वात्सञ्जायते ज्ञानमि**"ति सात्त्विकी भवितुमर्हति । प्राणश्च वायुरेव । श्वासोच्छ्वासाभ्यां वायुत्वप्रतीतेः । तत्राऽऽह—**ज्ञानशक्तिः क्रियाशक्तिरिति** । न ह्यस्मिन्मते बुद्धिर्ज्ञानं किन्तु ज्ञानशक्तिः । ज्ञानजनिका शक्तिर्यस्येति । यो बुद्धिमांस्तस्य पदार्थज्ञानं भवतीति, सुबुद्धिरयं पदार्थान् जानातीति च ज्ञानकारणत्वेन बुद्धिर्व्यपदिश्यते । कार्यकारणयोरभेदोपचाराच्च बुद्धिज्ञानयोः पर्यायत्वव्यवहारः । अन्यथा बुद्ध्यभावे बालस्य न पदार्थज्ञानं भवति सम्यक् । तन्न स्यात् । प्राणोऽपि वायोर्भिन्न एव । "**अथ हेनमासन्यं प्राणमूचुरि**"ति प्राणरूपां देवतां विलक्षणामाह श्रुतिः । "**यो वायुः स प्राण**"

१ दशेन्द्रियेति ख. २ नापेक्षिता इति घ. ३ मित्रः कश्चेति ख. मित्रकश्चेति क. घ. क.



इति तु भगवत्प्राणस्य वायुत्वात्तत्परम् । तस्माज्ज्ञानजननसामर्थ्यवत्त्वाज्ज्ञानाद्बुद्धिर्भिन्ना । नच सा सात्त्विकी । इन्द्रियमात्रासाध्यत्वात्[1] । सा हि बुद्धिर्ज्ञानेन्द्रियोपष्टम्भकत्वेन मृग्यते । यत्सात्त्विकमद्रव्यं तदिन्द्रियसाध्यमिति व्याप्तेः । अतो ज्ञानजनने शक्तिर्यस्य क्रियाजनने शक्तिर्यस्येति च तयोर्भिन्नधर्मत्वात्तावुभौ राजसाहङ्कारकार्यौ । अतस्ताभ्यां परिगृहीतानि द्विविधान्यपीन्द्रियाणि राजसाहङ्कारकार्याण्येव । तुशब्दः पूर्वपक्षं व्यावर्त्तयति । तानीन्द्रियाणि गणयति—**श्रोत्रमिति** । मेण्ढ्राङ्घ्र्योः कोपेन्द्रौ देवते । मित्रश्च पाय्वोः । अन्ये तु क्रमेणैव । तत्र दिग्वातौ श्रोत्रत्वचोः । घ्राणदृशोर्वैपरीत्यम्[2] । इन्द्रो बाह्वोः । वह्निर्वाचः । अश्विनौ नासिकयोः । प्रचेता जिह्वायाः । अर्को दृशोः । एवं क्रमः ॥ ३१ ॥

एवं सर्वेषां सृष्टिमुक्त्वा तदधिष्ठानत्वं[3] वदन् तत्त्वानां कार्यसृष्टिमाह—

**यदैतेऽसंहता भावा भूतेन्द्रियमनोगुणाः ।**
**यदायतननिर्माणे न शेकुर्ब्रह्मवित्तम ॥ ३२ ॥**
**तदा संहत्य चाऽन्योन्यं भगवच्छक्तिचोदिताः ।**
**सदसत्त्वमुपादाय चोभयं ससृजुर्ह्यदः ॥ ३३ ॥**

**यदैत इति** । यदा एते असंहताः । गुणत्रयकार्यत्वात् । न हि तामसादयो भिन्नस्वभावा एकत्र मिलन्ति । अत एव यदा आयतननिर्माणे[4] न शेकुः न समर्था जातास्तदा भगवत्प्रेरिता अण्डं ससृजुरिति सम्बन्धः । भूतानि, इन्द्रियाणि, मनो, गुणाश्च । गुणा देवाः शब्दादयो वा । तामसानामाद्यन्तनिवेशनं भूयस्त्वाय । आयतनं भगवच्छरीरं ब्रह्माण्डम् । ब्रह्मवित्तमेत्यस्मिन्नर्थे सर्वज्ञत्वात्संवादार्थं सम्बोधनम् । तमप्प्रत्ययस्तु भगवदुत्कर्षज्ञानार्थम् । अन्योन्यं संहत्य मिलित्वा । चकाराद्गुणभावमप्याश्रित्य । भगवच्छक्तिराज्ञाशक्तिः । तया चोदिताः प्रेरिताः । सदसत्त्वं उच्चनीचत्वं कार्यकारणभावं वा । सद्ब्रह्म । असज्जगत् । प्रकाशाऽप्रकाशभावं वा । चकारादन्यान् जीवगणांश्च । तदधिष्ठानि वा तत्संस्कृतभूतानि वा । उभयं समष्टिव्यष्ट्यात्मकम् । स्थूललिङ्गशरीरे वा । अदः तत् प्रसिद्धम् । हि युक्तोऽयमर्थः । अस्मिन्नर्थे तृतीयस्कन्धे उपपत्तिर्वक्ष्यते ॥ ३२ ॥ ३३ ॥

तैरण्डं सृष्टम् । तस्य भगवदायतनत्वार्थं भगवानागत इति वक्तव्यम् । तत्कस्य हेतोरित्याकाङ्क्षायामाह—

**वर्षपूगसहस्रान्ते तदण्डमुदकेशयम् ।**
**कालकर्मस्वभावस्थोऽजीवोऽजीवमजीवयत् ॥ ३४ ॥**
**स एव पुरुषस्तस्मादण्डं निर्भिद्य निर्गतः ।**
**सहस्रोर्वङ्घ्रिबाह्वक्षः सहस्राननशीर्षवान् ॥ ३५ ॥**

**वर्षपूगसहस्रान्त इति** । वर्षपूगानां सहस्रम् । पञ्चविधा अपि वर्षाः सहस्रं जाताः । तेषामन्ते

१ इन्द्रियमात्रत्वासाध्यत्वादिति घ. इन्द्रियमात्रसाध्यत्वादिति ग. २ घ्राणदृशोरिति ग. घ्राणदृश्योरिति घ. ३ यदधिष्ठानत्वमिति क. ग. घ. ४ निर्माणेरिति घ.

**सहस्रवर्षपर्यन्तमुदक** एव स्थितमण्डमजीवं च। जीवस्तत्र भोक्ता न कोऽपि प्रविष्टः। एतदर्थमेव भगवता विलम्बः कृतः। अतःपरमुदके स्थितं विलीनं भविष्यतीत्यजीवो जीवव्यतिरिक्तो भगवान्। **अजीवं** जीवरहितं अजीवयज्जीवयुक्तं कृतवान्। स्वयं प्रविश्य प्राणानपि तत्र योजितवानित्यर्थः। तदा भगवता अंशेन चाऽधिष्ठितो विराट् पुरुषशब्दवाच्यो जातः। तदा स एव पुरुषः। तस्मादेव हेतोः। जलाद्वा। अण्डं निर्भिद्य। कटाहं भित्त्वेति केचित्। केचित्तत्रैव कटाहाद्गोलकं पृथक्कृत्य निर्गतः। अण्डकटाहमात्मानं च पृथक्कृतवानित्यर्थ इति। वस्तुतोऽण्डभावं परित्यज्य पुरुषो भूत्वा यथासुखं परिवर्तत इति युक्तम्। तस्य तद्रूपं वर्णयति—**सहस्रोर्वङ्घ्रिबाह्वक्ष इति**। सहस्रं ऊरवः अङ्घ्रयः बाहवः अक्षीणि च यस्य। सहस्रमाननानि येषु तादृशशीर्षयुक्तः। "**सहस्रशीर्षा पुरुष**" इत्यर्थर्चस्याऽर्थरूपः स सम्पन्नः ॥ ३४ ॥ ३५ ॥

तस्य सर्वाधारत्वमाह—

**यस्येहाऽवयवैर्लोकान् कल्पयन्ति मनीषिणः।**
**कट्यादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः ॥ ३६ ॥**

**यस्येहाऽवयवैरिति**। एतावता यतः सृष्टं यद्रूपमिति द्वयसोक्तमुक्तम्। यस्याऽवयवैः पादादिभिः। लोकान् पातालादीन्। **मनीषिण इति** ध्यानार्थमेषा कल्पना। कट्यादिभिः पश्चाद्भागव्यवस्थया। अधः अधोभागे। सप्त अतलादयः। जघनादिभिः अग्रिमभागादारम्भः। अधोभागस्तूपरिभागादिमुखः। अतः कट्यादेर्जघनादेश्च न विरोधः ॥ ३६ ॥

एवं सामान्यत उद्देशमुक्त्वा भगवतो बाहुमुखादीनामवयवमध्यपातेऽपि मुख्यत्वात्तानग्रे निरूपयति—

**पुरुषस्य मुखं ब्रह्म क्षत्रमेतस्य बाहवः।**
**ऊर्वोर्वैश्यो भगवतः पद्भ्यां शूद्रोऽभ्यजायत ॥ ३७ ॥**

**पुरुषस्य मुखं ब्रह्मेति**। ऊर्वोरिति भेदेन निर्देशो भगवद्भावापत्तिनिषेधार्थः। वैश्यशूद्रयोर्मुक्त्यभावाय। पद्भ्यां शूद्रः। पद्भ्यामिति पञ्चमी। एते ब्राह्मणादयोऽधिकारिपुरुषास्तत्तज्जात्यधिष्ठातृदेवतारूपाः ॥ ३७ ॥

इदानीं लोककल्पनामाह—

**भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः।**
**हृदा स्वर्लोक उरसा महर्लोको महात्मनः ॥ ३८ ॥**
**ग्रीवायां जनलोकश्च तपोलोकः स्तनद्वयात्।**
**मूर्धभिः सत्यलोकस्तु ब्रह्मलोकः सनातनः ॥ ३९ ॥**

**भूर्लोक इति**। पद्भ्यां सप्तलोकपक्ष उच्यते। पादादिकटिपर्यन्तं भूर्लोकः। भुवर्लोकस्त्वस्य

१ इतीति नास्ति क. ग. घ. ङ. २ अक्षाणीति ख. ग. ङ.



नाभितः। हृदयं गर्तस्थानम्। उरस्तदुपरि उच्चस्थानम्। **महात्मन इति**। ततः परं ज्ञानिनामेव वासात्। महान्तः आत्मानो यत्रेति। स्तनद्वयात् नासिकाद्वयात्। "**स्तन शब्द**" इति व्युत्पत्त्या। मूर्द्धभिः सत्यलोकः। तुशब्देन मतान्तरे तत्राऽन्ये लोका उक्तास्ते निवारिताः ॥ ३८ ॥ ३९ ॥

इदानीं चतुर्दशलोकपक्षं वक्तुं पूर्वोक्ता एवैते उपरितना लोकाः। अधस्तनान्सप्ताऽऽह—

**तत्कट्यां चाऽतलं क्लृप्तमूरुभ्यां वितलं विभोः।**
**जानुभ्यां सुतलं शुद्धं जङ्घाभ्यां तु तलातलम् ॥ ४० ॥**
**महातलं तु गुल्फाभ्यां प्रपदाभ्यां रसातलम्।**
**पातालं पादतलत इति लोकमयः पुमान् ॥ ४१ ॥**

**तत्कट्यामिति**। उपरितनलोकानामुत्तमत्वाद्भगवदवयवानां कारणत्वमुक्तम्। अतलस्य तु मयपुत्रनिवासान्मोहैकबाहुल्याच्च भगवदवयवस्याऽऽधारत्वमात्रम्। क्लृप्तमिति पूर्वमेव। तामसत्वाद्विशेषध्याने तस्याऽनुपयोगात्। वितले महादेवस्य विद्यमानत्वाद्भगवतो महत्त्वमाह—**विभोरिति**। यस्तु महादेवस्याऽपि सुखप्रद इत्यर्थः। सुतलं शुद्धं भगवतो विद्यमानत्वात्। **लोकमय इति**। अवयवैः क्लृप्तानां लोकानां तत्रैव विद्यमानत्वाल्लोकमयत्वम्। **पुमानिति** नेदमुपासनार्थमुक्तं किन्तु पुमानेव तादृशः ॥ ४० ॥ ४१ ॥

त्रिलोकपक्षमाह—

**भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः।**
**स्वर्लोकः कल्पितो मूर्ध्ना इति वा लोककल्पना ॥ ४२ ॥**

**भूर्लोक इति**। पद्भ्यां कटिपर्यन्ताभ्याम्। नाभितः कट्यादिग्रीवापर्यन्तात्। मूर्ध्ना ग्रीवादिब्रह्मरन्ध्रपर्यन्तेन। **इति वा लोककल्पनेति**। कल्पना ह्यत्र त्रिविधा। गुणतः, विधातः, यत्नतश्चेति। यथाधिकारं व्यवस्था। सात्त्विकानां चतुर्दशलोकपक्षः। राजसानां सप्त। तामसानां त्रिलोकपक्ष इति ॥ ४२ ॥

**इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां द्वितीयस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥**

---

## षष्ठोऽध्यायः।

**अनित्ये जननं नित्ये परिच्छिन्ने समागमः।**
**नित्यापरिच्छिन्नतनौ प्राकट्यं चेति सा त्रिधा ॥ १ ॥**

१ आत्मा यत्रेति इति क. २ अधस्तनानिति क. ग. ३ मोहबाहुल्यादिति ख.

उत्पत्तिः स्थानसम्बन्धरूपा षष्ठे निरूप्यते ।
स्थूलस्याऽमूर्त्तरूपस्य तदभेददृशिः फलम् ॥ २ ॥
नारायणपरा वेदा इत्यनेन निरूपितम् ।
सामान्येन तदेवाऽत्र विस्तरेण निरूप्यते ॥ ३ ॥
पौरुषेण च सूक्तेन निर्धारितमिहोदितम् ।
कार्यस्य वस्त्वभेदोऽपि माहात्म्यं परतस्तथा ॥ ४ ॥
अमूर्त्तरूपं साधर्म्यं सर्वत्रैव हरेर्बृहत् ।
तेन सिद्धो वस्त्वभेदः स्थूलं ध्यानं च सिद्ध्यति ॥ ५ ॥

पूर्वाध्याये पूर्वमुद्दिष्टानां पदार्थानां मूर्त्तानां जननरूपोत्पत्तिर्निरूपिता । अनुद्दिष्टानामपि कालादीनां भगवत्त्वं स्पष्टतयैवोक्तम् । इदानीममूर्त्तानां जीवानां मूर्तेन सह सम्बन्धो निरूप्यते । येऽपि पूर्वं देवादय उत्पन्ना इत्युक्तास्तेऽपि विशिष्टा एवोत्पन्ना इति तत्र यदमूर्तं रूपं तदिदानीं पृथक्कृत्य स्थूलरूपे भगवत्यमूर्त्ते सर्वत्र विराजि प्रविष्टरूपे सम्बन्धो निरूप्यते । जीवप्रकरणत्वादस्य साधनं फलं चोत्पत्त्या निरूपणीयम् । माहात्म्यं च भगवतः अमूर्तमिति । तदप्यत्र निरूप्यते । ततश्च चत्वारोऽत्र पदार्था निरूप्याः । अमूर्तत्वसाधर्म्यादेकस्मिन्नध्याये निरूपणम् । प्रथमतः सर्वेषां जीवानां लिङ्गशरीरसामग्री भगवतो लिङ्गशरीरे सम्बद्धेति निरूप्यते—

ब्रह्मोवाच ।

वाचां वह्नेर्मुखं क्षेत्रं छन्दसां सप्त धातवः ।
हव्यकव्यामृतान्नानां जिह्वा सर्वरसस्य च ॥ १ ॥

तत्र वाचामस्मदादिवागिन्द्रियाणां तदधिष्ठातुर्वह्नेश्च भगवतो मुखं विवरात्मकं क्षेत्रं स्थानम् । भगवतो हि मुखद्वयम् । इन्द्रियरूपं गोलकरूपं च । तत्र गोलकरूपे ब्राह्मणरूपत्वं पूर्वं निरूपितं तैस्त्वोत्पादितैस्त्वनिरूपणाय । तथा पातालादीनामपि भगवदवयवेभ्य उत्पत्तिर्भगवति च स्थितिरतः पातालादिरूपो भगवानिति निरूपितम् । अत्र तु तद्विपरीतं जगदुद्दिश्य भगवत्त्वं विधीयते । तत्र तु भगवन्तमुद्दिश्य जगत्त्वं विहितम् । आधारत्वेन च निरूप्यत इत्यमूर्तानां छन्दसां ये भगवदवयवा अमूर्ता आधिदैविकास्ते छन्दसां स्थानमित्याह—**छन्दसामिति** । गायत्री, जगती, उष्णिक्, त्रिष्टुप्, अनुष्टुप्, पङ्क्तिः, बृहती च । सप्तधातवस्त्वङ्मांसरुधिरमेदोमज्जास्नाय्वस्थिदेवतारूपाः । एवं भगवन्मुखे मुखसम्बन्धिसर्वपदार्थानां शब्दार्थरूपाणां सम्बन्धं निरूप्य तत्र रसनेन्द्रियस्य विद्यमानत्वात्तत्सम्बन्धिनामपि तत्र सम्बन्धमाह—**हव्येति** । हव्यं देवानामन्नम् । अस्मिन्नेवाऽन्ने मन्त्रेण तद्धव्यमारोप्यते तदा पुरोडाशादीनां लौकिकानां हव्यत्वं भवति । एवं कव्यं पितॄणामन्नम् । अमृतमतिथ्याद्यन्नम् । अयाचितप्राप्तं वा व्रतहेतुभूतम् । अन्नं ब्राह्मणभुक्तशेषम् । प्राणादिद्वारा ज्ञानसाधनं वा । तेषां भगवतो जिह्वा । रसानां च षड्विधानां हव्यादिषु

१ उत्पत्तिस्थानेति ङ. ग. घ. ङ. २ निरूपिता इति क. ख. ग. ३ तत्रेति क. ख. ङ. ४ तत्त्वोपपादिततत्त्वेति क. घ. ङ. ५ येन इति ङ. ये इति नास्ति घ. ६ ये अमूर्ता इति घ. ७ तद्विदि नास्ति ङ.



सर्वत्र विद्यमानानाम् । चकारादस्मद्रसनेन्द्रियतदधिष्ठात्रोश्च स्थानम् । अनेन हव्यादिव्यतिरिक्तरसाना भगवज्जिह्वास्थानं न भवतीति विमर्शः । सर्वपदप्रयोगाद्भवतीत्यन्ये ॥ १ ॥

सर्वासूनां च वायोश्च तन्नासे परमायने ।
अश्विनोरोषधीनां च घ्राणे मोदप्रमोदयोः ॥ २ ॥

तथा सर्वेषामस्मदादीनामसूनां प्राणानां तदधिष्ठातुर्वायोः । चकाराद्प्राणसम्बन्धिना सर्वेषाम् । नासे नासापुटे आधिदैविके । परमत्वमाधिदैविकत्वमेव । अयनं स्थानम् । पुटद्वयमपि सर्वेषां स्थानम् । तत्र घ्राणेन्द्रियं त्वश्विनादीनां स्थानम् । ओषधीनां च व्रीह्यादिरूपाणाम् । "**तस्माल्लोमशा अन्तरतः प्राणा**" इति श्रुतेः । बहिस्तुल्यत्वाच्चौषधीनां भगवतो घ्राणे । **घ्राणमिति** वक्तव्ये आध्यात्ममपि घ्राणमन्तर्निवेश्य **घ्राणे इति** । मोदप्रमोदौ सुगन्धविशेषौ । मोदो हि दूराद्यो वाति सुगन्धः । प्रमोदो हि सर्वगन्धाभिभावकः ॥ २ ॥

रूपाणां तेजसां चक्षुर्दिवः सूर्यस्य चाऽक्षिणी ।
कर्णौ दिशां च तीर्थानां श्रोत्रमाकाशशब्दयोः ॥ ३ ॥
तद्गात्रं वस्तुसाराणां सौभगस्य च भाजनम् ।
त्वगस्य स्पर्शवायोश्च सर्वमेधस्य चैव हि ॥ ४ ॥

रूपाणामनेकविधानाम् । तेजसां नक्षत्रादीनाम् । भगवतश्चक्षुर्गोलकरूपम् । दिवः स्वर्गस्य सूर्यस्य च । चकारात्तत्सम्बन्धिनाम् । अक्षिणी पूर्ववत् । गोलकभेदेनेन्द्रियांशभेदो वा । कर्णौ गोलकरूपौ । दिशामस्मदादिश्रोत्रेन्द्रियदेवतानाम् । चकारादिन्द्रियाणां च । तीर्थानां गङ्गादीनाम् । कर्णौ स्थानमित्यर्थः । श्रोत्रमिन्द्रियमाकाशशब्दयोः । कर्णशष्कुल्यवच्छिन्ने नभस्युत्पन्नानां शब्दानां श्रोत्रेण ग्रहणाद्विषयाधारयोर्भगवदिन्द्रियं स्थानम् । वस्तूनां मध्ये ये सारभूताः सुवर्णादयः । उत्कृष्टरूपा वा देवतापरमार्थरूपाः । सौभगस्य सौन्दर्यस्य च । तत्सम्बन्धिनामन्येषां च । भगवद्गात्रं शरीरं स्थानम् । **भाजनमिति** । सर्वदा स्थानरूपं व्यवहारदशायामपि । अस्य भगवतस्त्वक् स्पर्शादीनां स्थानम् । मेधस्य पावित्र्यस्य । सर्वेषामेव पावित्र्यं भगवत्त्वगिन्द्रिये वर्तते । लोके हि जलाच्छुद्धिर्भवति । तदत्र भगवतः प्रस्वेदरूपम् । अतो मेधस्य भगवत्त्वचोऽधिष्ठानत्वे सन्देहो न कर्तव्य इत्याह—**चैव हीति** । चकारेण मेधाश्रया गृहीताः । एवकारेण च त्वगेव स्थानं नाऽन्यदिति । **हीति** युक्तत्वम् ॥ ३ ॥ ४ ॥

लोमान्युद्भिज्जजातीनां यैर्वा यज्ञः सुसम्भृतः ।
केशश्मश्रुनखान्यस्य शिलालोहाभ्रविद्युताम् ।
बाहवो लोकपालानां प्रायशः क्षेमकर्मणाम् ॥ ५ ॥

तत्र लोमानि सन्ति तान्युद्भिज्जादीनां स्थानानि । ऊर्ध्वं भिनत्तीत्युद्भिदङ्कुरादि तस्माज्जाता उद्भिज्जा

१ आश्विनादीनामिति क. ख. घ. २ लोमशान्तरत इति क. ख. लोमशा इति ग. लोमशात् इति ङ. ३ अङ्कुरादिः तस्मादिति ङ.

वृक्षादयः । तेषां जातयः अवान्तरा धवखदिरत्वादयः । सर्वे वृक्षा इति यावत् । अथवा । ये पापवृक्षा विभीतकादयस्तेषां न तानि स्थानानीत्याह—**यैर्वेति** । यैः पलाशादिभिर्यज्ञः सम्भृतो निष्पादितः । सम्भारहेतवो वा अश्वत्थादयः । भगवतः केशश्मश्रुनखानि शिलालोहाभ्रविद्युतां स्थानानि । तत्र शिलाया नखानि लोहस्य च । अभ्राणां केशाः । विद्युतां श्मश्रूणि । हिरण्यश्मश्रुत्वात् । बाहवो भगवत इन्द्रियरूपाः पालनकर्तारो देवा इन्द्रादयः तेषां स्थानानि । अन्येषामपि धर्मकर्तृणां भगवद्बाहवः स्थानम् । जगद्रक्षकत्वात् । "**सप्तभिर्धार्यते मही**"ति वाक्यात् । **प्रायश इति** सकामधर्मकर्तृव्युदासार्थमुक्तम् ॥ ५ ॥

**विक्रमो भूर्भुवः स्वश्च क्षेमस्य शरणस्य च ।**
**सर्वकामवरस्यापि हरेश्चरण आस्पदम् ॥ ६ ॥**

भगवतो विक्रमः पादविक्षेपो भूरादीनां स्थानम् । भूरादिशब्दा अव्ययानि । तेन षष्ठ्यन्तेऽप्येतदेव रूपम् । लोके क्षेमपदार्थस्य लब्धपरिपालनात्मकस्य । शरणपदार्थस्य चाऽऽश्रितरक्षणरूपस्य । चकारात्प्रपत्तिभक्त्योश्च भगवद्विक्रमः स्थानम् । यद्यपि पादावेव स्थानं तथापि क्रियासहिताविति विक्रम उक्तः । सर्वकामवरस्य सर्वेषां कामानामाशिषां वरस्य च देवप्रसादनिरूपकस्य । अपिशब्दादणिमादीनां मोक्षस्य च हरेश्चरण आस्पदं स्थानम् ॥ ६ ॥

**अपां वीर्यस्य सर्गस्य पर्जन्यस्य प्रजापतेः ।**
**पुंसः शिश्न उपस्थस्तु प्रजात्यानन्दनिर्वृतेः ॥ ७ ॥**

अपां जलानाम् । वीर्यस्य रेतसः । सर्गस्य सृष्टेः । पर्जन्यस्य मेघस्य । प्रजापतेर्ब्रह्मणस्तैस्य वक्तुः । इदानीं सृष्ट्यभिनिवेशाभावान्ममेति नोक्तम् । शिश्नो गोलकम् । उपस्थ इन्द्रियम् । तुशब्दः पूर्वव्यावृत्त्यर्थो लोकप्रसिद्धव्यावृत्त्यर्थो वा । प्रजातिनिमित्तो य आनन्दः स्वभार्यायां ऋतुकाले सम्भोगजनितो य आनन्दः । निर्वृतिः कामस्य उभयोः । अथवा । प्रजातिः सेकः । आनन्दः सुखं स्पर्शनिमित्तम् । निर्वृतिः कामशान्तिः । त्रयाणां भगवदिन्द्रियं स्थानम् ॥ ७ ॥

**पायुर्यमस्य मित्रस्य परिमोक्षस्य नारद ।**
**हिंसाया निर्ऋतेर्मृत्योर्निरयस्य गुदः स्मृतः ॥ ८ ॥**

भगवतः पायुः स्थानं यमादीनाम् । यमः पितृराजः । मित्रः पाय्वधिष्ठातृदेवता । परिमोक्षस्य मलत्यागलक्षणस्य सव्यापारस्येन्द्रियस्य । **नारदेति** सम्बोधनं ये ये कलहकर्तारस्तेषामपि तत्स्थानमिति सूचनार्थम् । अथवा । नारदो हरीतकीरूपः । अनुद्भूतकलहानां कलहमुद्भाव्य तद्द्वारा तेषां निवारकत्वात् । हिंसायाः प्राणिवधस्य । निर्ऋतेर्दिक्पतिरूपायाः । मृत्योर्मारकस्य । निरयस्य नरकस्य । भगवतो गुदः स्थानम् । असमीचीनानां तत्स्थानं वदन् भीतः सन्नाह—**स्मृत इति** । एवं हि स्मर्यते । पायुगुदयोर्गोलकेन्द्रियरूपत्वम् ॥ ८ ॥

१ रूपणस्येति क. ख. २ कामनानामिति क. ख. ग. ङ. ३ स्वस्येति घ. ४ निर्ऋतेरिति घ. ङ. ५ पायोमिति घ. ङ. ६ अधिष्ठात्री इति ग. ङ.



**पराभूतेरधर्मस्य तमसश्चापि पश्चिमः ।**
**नाड्यो नदनदीनां च गोत्राणामस्थिसंहतिः ॥ ९ ॥**

पराभूतेः पराजयस्य । अधर्मस्य पापस्य । तमसः अज्ञानस्य । अन्धकारस्य वा । **पश्चिमः** पृष्ठिभाग आश्रयः । चकारात्संसारस्याऽपि । भगवतो नाड्यो नदनदीनामाश्रयाः । नदाः शोणभद्रादयः । नद्यो यमुनाद्याः । गोत्राणां पर्वतानाम् । अस्थिसंहतिरस्थिसङ्घात आश्रयः ॥ ९ ॥

**अव्यक्तरससिन्धूनां भूतानां निधनस्य च ।**
**उदरं विदितं पुंसो हृदयं मनसः पदम् ॥ १० ॥**

अव्यक्तं प्रकृतिः । रससिन्धूनां क्षारादिसमुद्राणाम् । भूतानां पृथिव्यादिपञ्चभूतानाम् । अस्मदादीनां च । निधनस्य प्रलये प्रवेशस्य । चकारात्प्रलयानाम् । उदरं भगवतः स्थानम् । तथात्वे प्रमाणम्—**विदितमिति** । पुंस उदरमिति सम्बन्धः । अग्रेऽपि भगवतो हृदयमस्मदादीनां मनसः पदं स्थानम् ॥ १० ॥

**धर्मस्य मम तुभ्यं च कुमाराणां भवस्य च ।**
**विज्ञानस्य च तत्त्वस्य परमात्मा परायणम् ॥ ११ ॥**

धर्मस्य ब्रह्मणः स्तनाजातस्य । मम वक्तुश्चतुर्मुखस्य । तुभ्यं तव । अथवा । तव यत्प्रयोजनं रूपं भक्तिजनकं तस्य । चकारादन्येषां भक्तानाम् । कुमाराणां सनकादीनाम् । भवस्य महादेवस्य । चकाराज्ज्ञानिनां शुकादीनाम् । विज्ञानस्य । तत्त्वस्य महत्तत्त्वस्य । चकारात्सूत्रस्य । परमात्मा परमस्य आत्मा अन्तःकरणं । परायणं स्थानमित्यर्थः ॥ ११ ॥

एवं सर्वेषां परिच्छिन्नानामुत्पत्तिमुक्त्वा यदर्थमेतदुक्तं तदाह—**अहमिति सार्द्धैस्त्रिभिः**—

**अहं भवान् भवश्चैव य इमे मुनयोऽग्रजाः ।**
**सुरासुरनगा नागाः खगा मृगसरीसृपाः ॥ १२ ॥**
**गन्धर्वाप्सरसो यक्षा रक्षोभूतगणोरगाः ।**
**पशवः पितरः सिद्धा विद्याध्राश्चारणा द्रुमाः ॥ १३ ॥**

ब्रह्मादयः सर्वे भगवत्स्वरूपाः । समुदायो भगवान् । प्रत्येकं त एवेत्यपरे । अतःपरं फलनिरूपणार्थमधिकारिणं साधनं चै निरूपयन् पुरुषसूक्ते तन्निरूपितत्वात्तत्प्रकारेणैव निरूपयति । "**पुरुष एवेदं सर्व**"मिति वाक्ये इदं गुणत्रयकार्यं श्लोकत्रयेणोच्यते । तत्र अहं ब्रह्मा । भवान्नारदः । भवो महादेवः । चकारात् ये सम्बन्धिनः । एवकारेण तेषु सन्देहाभाव उक्तः । विशेषरूपेणाऽपि ते भगवन्त इत्यर्थः । ये इमे मरीच्यादयः । अन्येऽपि मुनयः । ते अग्रजास्तव ज्येष्ठभ्रातरः सनकादयः । एते शुद्धसत्त्वकार्याः । सुरा मिश्रसत्त्वकार्याः । असुरा रजोमिश्रकार्याः । नगादयस्तमोमिश्रकार्याः । नगाः

१ पृष्ठभाग इति घ. २ ब्रह्मणस्तनादित्यविसर्गः पाठः सर्वेषु पुस्तकेषु. ३ चकारो नास्ति घ. ४ सर्वमितीति इति ग. घ. ङ. ५ चकारात्रयसंबन्धिन इति क. ६ एवं कारेणेति ग. ङ.

पर्वताः । नागा गजाः । खगाः पक्षिणः । मृगा हरिणादयः । सरीसृपाः सर्पाः । एते शुद्धतामसाः । गन्धर्वाप्सरसो रजोमिश्राः । यक्षरक्षआदयस्तमोमिश्राः । उरगा जातिसर्पाः । पशुप्रभृतयः सत्त्वमिश्राः । पशवो गवादयः । सिद्धादयस्त्रयः अन्तरिक्षे सत्त्वादिगुणप्रधानाः । द्रुमाः केवलतामसाः ॥ १२ ॥ १३ ॥

तामसानाह—

**अन्ये च विविधा जीवा जलस्थलनभौकसः ।**
**ग्रहर्क्षकेतवस्तारास्तडितः स्तनयित्नवः ॥ १४ ॥**

**अन्ये चेति** । विविधा मत्स्यादयः । जलौकसः स्थलौकसो नभौकसश्च । ग्रहा बुधादयः । ऋक्षा अश्विन्यादयः । केतवो धूमकेतुप्रभृतयः । तारा अन्यानि नक्षत्राणि । तडितो विद्युतः । स्तनयित्नवो गर्जितानि ॥ १४ ॥

सर्वानुद्देशतो निरूप्य तेषां पुरुषत्वमाह—

**सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत् ।**
**तेनेदमावृतं विश्वं वितस्तिमधितिष्ठति ॥ १५ ॥**

**सर्वं पुरुष एवेति** । पूर्वोक्तं निरूपितं सर्वं पुरुष एव । इदमपि परिदृश्यमानं जडात्मकं सर्वं पुरुष एव । कालत्रयाधीनस्य पुरुषत्वाभावमाशङ्क्याऽऽह—**भूतं भव्यं भवदिति** । चकारात्तत्रोत्पन्नानामपि ग्रहणम् । **यदिति** प्रसिद्धम् । तेन श्रुतिसिद्धत्वान्नाऽत्र युक्तिर्वक्तव्येत्यर्थः । अनेन "**पुरुष एवेदं सर्वमि**"त्यर्द्धर्चार्थः कथितः । भगवतो विश्वमात्रत्वे तेन परिच्छेदसम्भवादपरिच्छिन्नताव्याहतिरित्याशङ्क्याऽऽह—**तेनेदमिति** । विश्वेन न भगवानावृतः परिच्छिन्नः किन्तु विश्वमेव तेन आवृतं परिच्छिन्नम् । जातिवत्परिच्छेदं वारयति—**वितस्तिमधितिष्ठतीति** । जातिर्हि तावन्मात्रे स्थिता तं व्याप्नोति । अयं तु वितस्तिमधितिष्ठति । "**अत्यतिष्ठद्दशाङ्गुलमि**"ति सूक्ते दशाङ्गुलमुक्तम् । वितस्तिस्तु द्वादशाङ्गुलम् । तथापि क्षुद्राङ्गुलिमानेन तदुपपद्यते । दशाङ्गुला वा वितस्तिः । अङ्गुष्ठदेशिनीमध्यं तावदेव । अनेनोभयध्याने सम्पूर्णो भगवान् ज्ञातो भवति । अतो विश्वात्मकः स्थूलः । वितस्त्यात्मकोऽतिरिक्तः । तुल्यश्च प्रमाणतोऽपि भवति । अष्टवितस्त्यात्मकः पुरुषः । ततः सर्वतो वितस्त्यात्मकोऽष्टवितस्त्यात्मकोऽपि भवत्यधिकोऽपि भवति । तस्माद्यावान् भगवान् सर्वं तावानधिकस्ततोऽप्यधिक इति न परिच्छेदः सम्भवति । किञ्च । नाऽयं वितस्तिमात्रे तिष्ठति किन्तु ततोऽप्यधिकं तिष्ठति । अतः सुतरां न परिच्छेदः ॥ १५ ॥

तत्र स्थितस्य ततोऽप्यधिकव्याप्तौ दृष्टान्तमाह—

**स्वधिष्ण्यं प्रतपन्प्राणो बहिश्च प्रतपत्यसौ ।**
**एवं विराजं प्रतपंस्तपत्यन्तर्बहिः पुमान् ॥ १६ ॥**

१ यक्षरक्षादय इति ग. घ. २ सर्वमर्द्धर्चार्थ इति क. ग. घ. ३ मधितिष्ठतेति ख. ४ अपरिच्छेद इति ग. घ. क.



**स्वधिष्ण्यमिति** । यथा प्राणः सूर्यः स्वधिष्ण्यं मण्डलं प्रतपन् बहिरपि सम्पूर्णं ब्रह्माण्डं प्रतपति । प्राणो वा आसन्यः स्वधिष्ण्यं शरीरं प्रतपन् सजीवं कुर्वन् बहिश्च फूत्कारनिःश्वासैः प्रतपति काष्ठादीनग्नियुक्तान्करोति । एवं पुरुषोऽपि विराजं प्रतपंस्तद्बहिरपि तपति । प्राणादीनां मध्यप्रकाशकत्वाभावात्सङ्कटिततया तत्र विवराभावान्मण्डलमध्यं न प्रकाशयति । अयं तु ब्रह्माण्डमध्यमपि प्रकाशयति । तदाह—**अन्तरिति** । पुरुषो हि स्वियं सर्वतः प्रकाशयति ॥ १६ ॥

एवमपरिच्छेदं स्वप्रकाशत्वं चोक्त्वा तेन ब्रह्मत्वं साधयित्वा तस्य प्रपञ्चनिःप्रपञ्चफलदातृत्वं साधयितुमुभयस्वामित्वमाह—

**सोऽमृतस्याऽभयस्येशो मर्त्यमन्नं यदत्यगात् ।**
**महिमैष ततो ब्रह्मन् पुरुषस्य दुरत्ययः ॥ १७ ॥**

**सोऽमृतस्येति** । स हि पुरुषः अमृतस्य नित्यसुखस्य अभयस्य मोक्षसुखस्य च ईशः स्वामी । उभयं दातुं शक्त इत्यर्थः । उभयदाने सामर्थ्यमाह—**मर्त्यमन्नमिति** । मर्त्यं मरणात्मकं विराट्शरीरं यद्यस्मादत्यगात् अतिक्रम्य स्थितः । अतोऽमृतं दातुं शक्तः । अन्नं अद्यते अत्ति च भूतानीति मृत्युं कर्मफलं वा । यस्मादतिक्रम्य स्थितस्तस्मादभयस्येशः । अनेन "**उताऽमृतत्वस्येशान**" इत्यर्द्धर्चार्थः कथितः । तत्र "**अन्नेनाऽतिरोहती**"ति अन्नेन हेतुना तिरोभावं न प्राप्नोति । सर्वे हि मृत्युना कर्मणा वा तिरोभावं प्राप्नुवन्ति । अयं तु न तथेत्यर्थः । ननु यः सर्वो न स सर्वातिरिक्तः । यो वाऽसर्वः यो वाऽतिरिक्तः स न सर्वः । प्रपञ्चस्याऽर्द्धपरिच्छेदकत्वं नाऽस्ति । तथा सति निजानन्दस्येशो न भवेत् । तस्मादविरोधप्रकारेण समर्थनानुपपत्तेः परस्परविरुद्धधर्माश्रयत्वेनाऽभेदो न स्यादित्याशङ्क्याऽऽह—**महिमैष ततो ब्रह्मन्निति** । ततो विरुद्धोभयधर्माश्रयत्वाद्भगवतो महिमा । न हि विरुद्धधर्माभ्यां स्वाश्रयभेदः कर्तुं शक्यते । एकस्मिन्नेवाश्रये उभयोर्जातत्वात् । किन्तु धर्माणां परस्परं विरोधो लोकवत्कार्यं कर्तुमसमर्थः स्वाश्रयस्य महिमानं बोधयति । सर्वत्र समर्थस्तत्र चेदसमर्थस्तदा तस्मिन् कश्चिन्महिमा वर्त्तते येन प्रतिबद्धः स्वकार्यं कर्तुं न शक्नोतीति सिद्धम् । तस्मादेष एव महिमा यद्विरुद्धधर्माश्रयत्वमिति । तस्य धर्मस्याऽनन्यसिद्धस्य कार्यसाधकत्वं न क्वचित्सिद्धमिति महिम्नः प्रतिबन्धकता न युक्ता । असमोर्द्धत्वाच्च धर्मस्य । न वा अविरोधः । उक्तिमात्रविरुद्धत्वात् । अतो विरुद्धधर्माश्रयत्वमेव महिमा । अलौकिकत्वात् । स च महिमा दुरत्ययः केनाऽप्यतिक्रान्तुमशक्यो बुद्ध्या कृत्या वा । अविरोधं वा एकधर्मनिराकरणं वा देशकालादिभेदेन व्यवस्थां वा न कश्चिदपि कर्तुं शक्तः । लोके उभयकार्यदर्शनात् । **ब्रह्मन्निति** सम्बोधनं भगवन्माहात्म्यबोधनार्थम् । सूक्ते तु महिम्न एतावत्त्वं प्रतिपाद्य तेन पुरुषमाहात्म्यमाह—महत्त्वेन हि माहात्म्यमतिशयितं भवति । स एव हि दुरत्ययार्थः ॥ १७ ॥

१ ब्रह्माण्डस्य मध्यमिति क. ख. २ स्वप्रकाशकत्वमिति ख. ग. घ. क. ३ स्वाम्यमिति ग. घ. ४ नाप्नोतीति इति ग. क. ५ प्रपञ्चस्योर्द्धमपरिच्छेदकत्वमिति क. ख. ६ विरुद्धोभधर्माभ्यामिति ख. ङ. ७ नकारो नास्ति क. ग. घ. क. ८ बोधार्थमिति क. ९ महित्वेनेति ट.

एवं भगवतोऽपरिच्छेदनिरूपणेन माहात्म्यं निरूप्योभयफलेशत्वं निरूपितम् । लोके तस्याऽप्रकटने कृते व्यर्थं भवेदिति तत्प्रकटनार्थं पुरुषभेदं फलभेदं च निरूपयति—

**पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः ।**
**अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्द्धसु ॥ १८ ॥**

**पादेषु सर्वभूतानीति** । पादेषु भूरादिलोकेषु सर्वाणि भूतानीत्यर्थः । अनेन स्थानभेदात्फलभेदो भविष्यतीति सूचितम् । ननु सर्वावयवेषु लोकत्वनिरूपणात्कथं पादेष्वेव सर्वे लोका इत्यत आह—**पुंसः स्थितिपद इति** । तिष्ठन्त्यस्मिन्निति स्थाः भूरादिलोकाः स्थितिशब्दवाच्या भवन्ति । स्थितयः पादा यस्येति स्थितिपात् । सर्वे हि लोका अवयवा अप्यवयविनं[1] भगवन्तं प्रति पादा एव । तत्तत्स्थानमधिष्ठाय यतो भगवांस्तिष्ठतीति । अत्र प्रमाणमाह—**विदुरिति** । "**पादोऽस्य सर्वा भूतानी**"[2]ति भगवन्माहात्म्यार्थं सर्वाण्यपि भूतान्येकः पाद इत्युक्तम् । अथवा । पादाः पादस्थिताः पुरुषाश्च । "तात्स्थ्यात्तद्व्यपदेश" इति न्यायेन पादा एव सर्वाणि भूतानि । एकवचनं तु जात्यभिप्रायम् । एवं भगवदवयवेषु सर्वेषां जीवानां स्थितिमुक्त्वा तद्भोग्यस्य फलस्य स्थितिमाह—**अमृतमिति** । भगवति सुखचतुष्टयमस्ति । अनित्यमेकं, नित्यं त्रिविधमिति । तस्य त्रिविधस्याऽप्यमृतं क्षेममभयमिति नामत्रयम् । तेषां स्थानमाह—**त्रिमूर्ध्नोऽधायि मूर्द्धस्विति**[3] । त्रयाणां लोकानां मूर्द्धा महर्लोकः । तस्य मूर्द्धसु जनस्तपःसत्यलोकेषु त्रिविधमपि सुखं स्थापितमित्यर्थः । अत्रैवं व्यवस्था । त्रिलोक्यामनित्यमेव सुखम् । महर्लोकेऽपि स्थानत्यागलक्षणस्य दुःखस्य विद्यमानत्वात् । "**यान्त्यूष्मणा महर्लोकमि**"ति वाक्यात्तत्राऽप्यनित्यप्रायं सुखम् । अतो जनलोके[4] अमृतं सुखम् । तस्य स्वरूपतः स्थानतश्च नाशाभावात् । तपोलोके तु क्षेमम् । अक्षेमदर्शनाभावात् । जनलोके तु महर्लोकात्पलाय्य आगतानां दुःखितानां दर्शनरूपमक्षेमदर्शनमस्ति । जनलोकस्थितास्तु नैव तपोलोके गच्छन्तीति तत्रत्यं सुखं क्षेममेव । सत्यलोके त्वभयं सुखम् । मोक्षप्रत्यासन्नत्वात् । अतो नित्यं सुखं त्रिष्वेव लोकेषु । इदमेवाऽभयं सुखं ज्ञानिनः प्राप्नुवन्ति न्यासिनः[5] । तदग्रे वक्ष्यते । "**त्रिपादस्याऽमृतं दिवी**"त्यस्याऽप्ययमेवाऽर्थः । अस्य त्रिपादमृतं दिवि । उपरितनलोकेष्वित्यर्थः । त्रिलोकपक्षाभिप्रायेण दिवीत्युक्तम् ॥ १८ ॥

एतेषां सुखानां भोक्तॄनाह—

**पादास्त्रयो बहिश्चाऽऽसन्नप्रजानां य आश्रमाः ।**
**अन्तस्त्रिलोक्यास्त्वपरो गृहमेधोऽबृहद्व्रतः ॥ १९ ॥**

**पादास्त्रयो बहिश्चाऽऽसन्निति** । चत्वारो वर्णा भगवतश्चत्वारः पादाः । यतो भगवांस्तानधितिष्ठति । तत्र त्रयः पादाः—ब्रह्मचारी, वानप्रस्थः, संन्यासी च । ते त्रयोऽपि त्रिलोक्या बहिश्चाऽऽसन् । चकारात्स्वेच्छया अन्तरपि[6] । तेषां व्युत्क्रान्तानां त्रयाणामेकं साधर्म्यमाह—**अप्रजानां य आश्रमा इति** । न प्रजायन्ते पुत्रादिरूपेणेत्यप्रजा गृहस्थव्यतिरिक्ताः । तेषां य आश्रमाः ।

1 अवयविन इति क. ख. ग. 2 विश्वाभूतानीति ग. 3 त्रिमूर्ध्नोऽधायीति ग. 4 जनलोको अमृतमिति ख.
5 संन्यासिन इति ग. घ. 6 अन्तरेऽपीति ग. घ.



आश्रमधर्मत्वेन ते न प्रजायन्ते न तु वन्ध्याः । अर्थात्ते सुखत्रयस्य भोक्तारः । अनित्यसुखभोक्तारमाह—**अन्तस्त्रिलोक्यास्त्वपर इति** । त्रिलोक्या अन्तः अपरो हीनः स गृहस्थः । गृह एव मेधा बुद्धिर्यस्येति बाध्यो दोषः । अबृहद्व्रत इत्यान्तरः । बृहत्स्थूलमूर्द्धरेतोरूपं व्रतं यस्य नास्ति स तथोक्तः ॥ १९ ॥

एवं वर्णचतुष्टयस्य स्वरूपं फलं चोक्त्वा तेषां वैलक्षण्ये[1] हेतुमाह—

**सृती विचक्रमे विष्वङ्[2] साशनानशने उभे ।**
**यदविद्या च विद्या च पुरुषस्तूभयाश्रयः ॥ २० ॥**

**सृती विचक्रमे विष्वङ्ङिति**[3] । न हि स्वभावत एव ते तथा जाताः । किन्तु भगवानेव मार्गद्वयेन गच्छति । तदनुरोधेन तेऽपि लोकास्तमनुगच्छन्ति । तदाह । सृती मार्गौ । विचक्रमे विशेषेणाऽऽक्रान्तवान् । विष्वङ् परितः । एकस्मिन्नपि मार्गे एकोऽप्यंशोऽनाक्रान्तो नास्तीत्यर्थः । तत्र भेदकमाह—**साशनानशने उभे इति** । एकः साशनमार्गः । अशनेन सहितं साशनं कर्मफलभोगसहितम् । एकस्त्वनशनमार्गः कर्मफलभोगरहितः । ते उभे । नत्वन्ययोरत्र निरूपणम् । ननु भगवान्[4]किमिति मार्गद्वयेन गच्छति ? तत्राऽऽह—**यदविद्या च विद्या चेति** । भगवतो गमने शक्तिद्वयमविद्या विद्या च । तत्राऽविद्या साशनमार्गे एव चलति । विद्या त्वनशनमार्गे । भगवांस्तूभयाश्रितस्तदनुरोधेनोभयत्र चलति । अन्यथा भगवच्छक्तित्वं तयोर्न स्यात् । चकारात्तत्कार्यं सामग्री च न मार्गान्तरे गच्छतीत्यर्थः ॥ २० ॥

एवं मार्गभेदेन भोक्तृभेदात्फलभेदं निरूप्य, तस्मात्पुरुषादयं विराट्पुरुषो भिन्न इति वक्तुं तत उत्पन्नत्वमाह—

**तस्मादण्डं[5] विराट् जज्ञे भूतेन्द्रियगुणात्मकः ।**
**तद्द्रव्यमत्यगाद्विश्वं गोभिः सूर्य इवाऽतपन् ॥ २१ ॥**

**तस्मादिति** । तस्मात्परमपुरुषान्नारायणादण्डं ब्रह्माण्डं जातम् । तस्मादधिदैवादिदमाध्यात्मिकमण्डं[6] जातमित्यर्थः । तस्मादण्डाद्विराड् जज्ञे । स च भूतेन्द्रियगुणात्मकः । भूतान्यधिभूतं द्रव्यम् । इन्द्रियाण्यध्यात्मम् । गुणा अधिदैवमिति । अथवा । महाभूतानि, इन्द्रियाणि, शब्दादयश्च विषयाः । शरीरेन्द्रियैर्विषयभोगकर्तेत्यर्थः । सोऽपि पितृवदाक्रमणं कृतवानित्याह—**तद्द्रव्यमत्यगादिति** । तद्विश्वात्मकं द्रव्यं ब्रह्माण्डरूपं स्वशरीरमत्यगात् । अतिक्रम्य दशाङ्गुलवृत्त्या स्थित इत्यर्थः । न केवलमपरिच्छेदसाम्यं किन्तु स्वप्रकाशकमपीत्याह—**गोभिः सूर्य इवाऽतपन्निति** । गोभिः स्वकिरणैर्यथा सूर्यः स्वधिष्ण्यमपि तपति बहिरपि, तद्वत् अयमपि स्वशरीरं बहिरपि प्रकाशितवानित्यर्थः ॥ २१ ॥

1 वैलक्षण्यहेतुमिति क. 2 विष्वङ् इति ग. ङ. 3 विष्वङ्ङिति सर्वत्र पुस्तकेषु पाठः. 4 भवानिति ख.
5 तस्मादण्डमिति क्वाचित्कः पाठः. 6 अध्यात्मिकमिति क.

एवं द्विविधं विश्वं प्रतिपाद्य, नियम्यनियामकभावार्थं पुरुषद्वयं च प्रतिपाद्य, अमूर्त्तानां समागममुक्त्वा, यज्ञरूपस्याऽपि भगवतः सर्वपदार्थसम्बन्धश्रवणात्तत्साधनभूतानां पदार्थानां भगवद्भिन्नत्वे पूर्वोक्तसर्वत्वं विरुध्येतेत्याशङ्क्य, तदीयपदार्थानामपि भगवानेव तत्त्वमित्याह—

**यदाऽस्य नाभ्यान्नलिनादहमासं महात्मनः ।**
**नाऽविदं यज्ञसम्भारान् पुरुषावयवादृते ॥ २२ ॥**

**यदाऽस्य नाभ्यान्नलिनादिति** । यदैतन्न निरूप्यते तदा जैमिनिसिद्धान्तन्यायेन पदार्थश्रुती पूर्वोक्तभगवत्स्वरूपवाचकानां वाक्यानामर्थवादत्वं स्यात् । अतो महता कष्टेन निरूपितमप्यनिरूपितं भवेत् । तस्माद्यज्ञोपयोगिपदार्थानां भगवदवयवत्वं निरूपयति । तत्र ब्रह्मा स्वयमाह–यदा अहं (?) अस्य नाभ्याः यन्नलिनं कमलं तस्मादहमासम्, तदा मया विचारितमयमाराधनीय इति । यतोऽयं महान् । महानात्मा स्वरूपमन्तःकरणं वा यस्य । अयं ह्याराधितो महत्फलं दास्यतीति । तदा केनाऽऽराधनीय इति जिज्ञासायां योगजधर्मेण यज्ञमपश्यम् । स कथं कर्त्तव्य इत्याकाङ्क्षायां वेदपर्यालोचनेन सम्भारैः पशुपुरोडाशादिभिः कर्त्तव्य इति ज्ञातम् । तत्र क ते पशुपुरोडाशादय इति जिज्ञासायां योगजधर्मेण ज्ञातवांस्तदाह—**नाऽविदं यज्ञसम्भारानिति** । पुरुषावयवव्यतिरेकेण अहं यज्ञस्य सम्भारान्नाऽविदं न ज्ञातवानस्मि । तदा स एव पुरुषो यज्ञरूपेण प्रादुर्भूत इत्यर्थः । अनेन साधनरूपः स इत्युक्तं भवति ॥ २२ ॥

तत्र के के सम्भारास्तेष्ववयवेषु दृष्टा इत्याकाङ्क्षायामाह—

**तेषु यज्ञस्य पशवः सवनस्पतयः कुशाः ।**
**इदं च देवयजनं कालश्चोरुगुणान्वितः ॥ २३ ॥**
**वस्तून्योषधयः स्नेहा रसलोहमृदो जलम् ।**
**ऋचो यजूंषि सामानि चातुर्होत्रं च सत्तम ॥ २४ ॥**
**नामधेयानि मन्त्राश्च दक्षिणाश्च व्रतानि च ।**
**देवतानुक्रमः कल्पः सङ्कल्पः सूत्रमेव च ॥ २५ ॥**
**गतयो मतयश्चैव प्रायश्चित्तं समर्पणम् ।**
**पुरुषावयवैरेते सम्भाराः सम्भृता मया ॥ २६ ॥**

**तेष्विति** । तेष्ववयवेषु यज्ञस्य सम्बन्धिनः पशवः अजादयः । सवनस्पतयो वनस्पतिसहिता यूपसहिताः । सवनस्पतयः कुशा इति वा सम्बन्धः । तदा वनस्पतयोऽश्वत्थादयः । कुशा बर्हीरूपाः । इदं च देवयजनम् । देवा इज्यन्ते अस्मिन्निति यज्ञभूमिर्देवयजनम् । इदमित्यङ्गुल्या प्रदर्शितम् । अनेन यज्ञभूमौ स्थित्वा भागवतं कथयतीति ज्ञापितम् । चकाराद्देवयजनान्तरमपि । कालो वसन्तादिः । चकाराद्योगविशेषो नैमित्तिकः । **उरुगुणान्वित इति । यदि तस्मिन्काले सूर्यो नाऽऽविः स्यात्–पुरस्ताच्चन्द्रमा अभ्युदियात्–सस्यसम्पत्तिर्भवेत् ।** अन्येऽपि

१ नाभ्यानलिनादिति क. २ यदाहेति ख. ङ.



गुणाः कालस्य बहवो वेदे उक्ताः । स उरुगुणान्वितः कालः । वस्तूनि पात्रादीनि । ओषधयो व्रीहियवादयः । स्नेहा घृतादयः । रसा दधिमध्वादयः । लोहाः स्वधित्यादयः । मृदो महावीराद्यर्थाः । जलं वसतीवरीप्रभृतयः । ऋचो यजूंषि सामानि वेदत्रयमन्त्राः । चातुर्होत्रं होत्रादिचतुर्गुणसाध्यं कर्म । चतुर्होतृनिदानकं वा । अत्र सत्तमेति सम्बोधनमुक्तार्थविश्वासाय । नामधेयानि ज्योतिष्टोमादीनि । मन्त्राः स्वाहाकारादयः । चकारान्निगदाः । दक्षिणा गावः । चकाराद्वराः । व्रतानि दीक्षादयः । चकारान्मांसभक्षणादिनिषेधादयः । देवतानुक्रम इज्यानां देवतानामानुपूर्वी आग्नेयः कृष्णग्रीव इत्यादिरूपा । कल्पः कल्पसूत्रम् । सङ्कल्पः कामनाविषयः । सूत्रं न्यायसूत्रम् । पद्धतिर्वा । गतयो विष्णुक्रमाद्याः । मतयो देवताध्यानानि । चकारादाचतुर्थात्कर्मणोऽभिसमीक्षणादि । प्रायश्चित्तं अनाज्ञातमित्यादि । समर्पणं संस्था । निवेदनं वा । एतावन्तो हि यज्ञे सम्भाराः । ते पुरुषावयवैरेव कृता इत्याह—**पुरुषावयवैरिति** । अत्राऽवयवादिव्यवस्था तृतीयस्कन्धे वक्ष्यते । एते सम्भाराः पुरुषावयवैरेव सम्भृताः । मयेति साधारणाधिकारिणा नैवं कर्तुं शक्यत इति सूचितम् ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

ततः किमत आह—

**इति सम्भृतसम्भारः पुरुषावयवैरहम् ।**
**तमेव पुरुषं यज्ञं तेनैवाऽयजमीश्वरम् ॥ २७ ॥**

**इति सम्भृतसम्भार इति** । इत्यमुना प्रकारेण पुरुषावयवैरेव सम्भृतसम्भारो भूत्वा तेन यज्ञेन तमेव पुरुषमयजम् । फलार्थं न यागः किन्त्वीश्वरार्थमिति । तदाह—**ईश्वरमिति** । यथा मया यागः कृत एवमेव करणमुचितम् । यज्ञीयान्पदार्थान् भक्त्या भगवदवयवाविर्भावं कृत्वा तत उत्पाद्य भगवत्प्रीत्यर्थमेव तैर्भगवत्कर्मकरणम् । भगवतो ह्यस्ति किञ्चित्कार्यं स्वार्थम् । यथा पुरुषस्य स्वप्रयोजनार्थं सर्वाणि कर्माणि तथा भगवतः प्रयोजनार्थं सर्वे यागाः । ततश्च ते यदि भगवदवयवैरेवोत्पादितैः पश्वादिभिर्भगवत्कार्यं कुर्युस्तदा भगवदर्थं तत्फलं भवति । नाऽन्यथा । यद्यपि लौकिका अपि पदार्थास्तथैवोत्पन्नास्तथापि ते सर्वार्था इति नैकान्ततो यागफलसाधकत्वम् । मध्यमाधिकारिणस्तु यज्ञार्थमेव तथा ज्ञात्वा तान्पदार्थान् सम्पाद्य यज्ञकरणे फलं भवति । परं तत्फलं समर्पणीयम् । यदा पुनस्तथा अज्ञानात्तैः पदार्थैर्यागं करोति तदा तत्फलं भगवान्न गृह्णाति । नह्यन्यदीयैः कृतं भगवान् गृह्णाति । यत्पुनर्यागार्थमेव न पदार्थाः सम्पादिताः किन्तु साधारणास्ते । तैस्तु फलमेव नोत्पद्यते । उत्पद्यमानं वा काकतालीयन्यायेनोत्पद्यते चेत्ते पदार्थास्तदर्थं भवेयुः । एवं यागश्चतुर्धा निष्पद्यते–उत्तम-मध्यम-निकृष्ट-निष्फलभेदेन । तत्र पशवो भगवत ऊरुदेशादुत्पन्नाः । लोमभ्यो वृक्षाः । स्वेदसहितेभ्यः कुशाः । देवयजनं पद्भ्याम् । कालः पक्ष्मभ्यः । वस्तून्योष्ठादिभिः । स्नेहा दृष्ट्या । रसा जिह्वातः । मृदो घ्राणात् । जलानि नाडीभ्यः । ऋचो यजूंषि सामानि कर्णाभ्यां मस्तकाच्च । चातुर्होत्रं कर्म बाहुभ्यः । नामधेयानि मुखात् । मन्त्राश्च शिरोऽवयवेभ्यः । दक्षिणा गावो वामोरुप्रदेशात् । व्रतानि मनसः । देवताऽनुक्रमः पर्वभ्यः । कल्पो

१ चकारान्निविनिगदा इति क. २ इत्यादिरूपाः इति ग. ङ. ३ एकातीति इति क. ख. ङ. ४ उत्पन्नेति ङ. ५ निष्पाद्यते इति ग.

बलात् । सङ्कल्पो बुद्धेः । सूत्रं प्राणात् । विहारयोगरूपं वा । गतयो विक्रमात् । मतयो ज्ञानेन्द्रियेभ्यः । प्रायश्चित्तं कर्मेन्द्रियेभ्यः । समर्पणमात्मनः । अन्येऽपि यज्ञियाः पदार्था यथायथमूह्याः । अत एव वेदे सर्वे यज्ञियाः पदार्था भक्तिमद्भिः साक्षात्क्रियन्ते । पश्चात्ततोऽवयवात्तेषां पदार्थानामाहरणं क्रियते । तदनन्तरं यागः । अन्यथा—अपश्यत्, आहरत्, अयजतेति वैयर्थ्यापत्तिः ॥ २७ ॥

**ततस्ते भ्रातर इमे प्रजानां पतयो नव ।**
**अयजन् व्यक्तमव्यक्तं पुरुषं सुसमाहिताः ॥ २८ ॥**

एवं यथा मया कृतं तथैव तत्करणानन्तरं ते इमे भ्रातरो मरीच्यादयः । प्रजानां पतयः । नवविधप्रजानां नवविधाः स्वयम् । अयजन् । ततः सात्त्विकसात्त्विकेषु व्यक्तो भगवान् । तामसतामसेष्वव्यक्तः । मध्यमेषु द्वयम् । तदाह—**व्यक्तमव्यक्तमिति** । सुसमाहिताः सावधानाः । अन्यार्थपदार्थैरमेलनार्थं ज्ञानार्थमुत्पादनार्थं वा ॥ २८ ॥

**ततश्च मनवः काल ईजिरे ऋषयोऽपरे ।**
**पितरो विबुधा दैत्या मनुष्याः क्रतुभिर्विभुम् ॥ २९ ॥**

तदनन्तरं बहुकालव्यवधानेन मनवः केवलमीजिरे । ऋषयश्चाऽपरे च । एते सत्त्वादिभेदा द्वितीयकक्षायाम् । ततस्तृतीयकक्षायां पितरो विबुधा दैत्याः राजसाः सात्त्विकास्तामसाश्च । मनुष्यास्तु चतुर्थकक्षायाम् । अतस्ते सन्निपातरूपा एकविधा एव । तथापि प्रमादपि कुर्वाणाः कामिकं किञ्चित्फलं प्राप्नुवन्ति समर्थत्वाद्भगवतः । तदाह—**विभुमिति** । **क्रतुभिरिति** द्वादशाहादिभिः ॥ २९ ॥

एवं सर्वपदार्थानामुत्पत्तिं भगवतः सकाशादुक्त्वा स्थितिमाह—

**नारायणे भगवति तदिदं विश्वमाहितम् ।**
**गृहीतमायोरुगुणः सर्गादावगुणः स्वतः ॥ ३० ॥**

**नारायण इति** । विश्वाधारत्वेन भगवदाधारत्वव्युदासार्थं नारायण इत्युक्तम् । "**आपो नारा इति प्रोक्ता**" इति प्रकारेण पुरुष एव नारायणः । तदिदमिति लौकिकं वैदिकं च । आहितं स्थापितम् ॥ ३० ॥

ननु भगवतैव चेदुत्पत्तिस्थिती क्रियेते, अर्थात्प्रलयश्च, तदा भवतां कोपयोगः ? तत्राऽऽह—

**सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः ।**
**विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक् ॥ ३१ ॥**

**सृजामि तन्नियुक्तोऽहमिति** । भगवान् हि प्रकारप्रदर्शनार्थं सर्वानेव पदार्थान् कृतवान् । ततः परम्परानिष्पत्त्यर्थं मामाज्ञापयति । संहारार्थं च महादेवम् । अतो ये भगवतोत्पादितास्तद्वंश्या वा ते भगवतैव मारणीया न महादेवादिशक्याः । अतो भगवदवतारः । पालनं तु भगवानेव करोती-

१ यज्ञीया इति ख. घ. २ अजयन्निति क. ख. ग. ३ गृहीतेत्याद्युत्तरार्धस्य व्याख्यानुपलम्भाच्छ्रीमदाचार्याभिमतत्वं सन्दिग्धम्. ४ शक्या इति घ.



त्याह—**विश्वमिति** । स हि पुरुषरूपेण विश्वं परिपालयति । अत एव तदनुरोधेनैव हरः संहरतीति तद्वशत्वमुक्तम् । यद्यप्येतावुत्पत्तिप्रलयौ कुरुतस्तथापि तत्करणसामर्थ्यं भगवदधीनमेवेत्याह—**त्रिशक्तिधृगिति** ॥ ३१ ॥

एवमंशत्रयं निरूप्य माहात्म्यं वक्तुं पूर्वोक्तमुपसंहरति—

**इति तेऽभिहितं तात यथेदमनुपृच्छसि ।**
**नाऽन्यद्भगवतः किञ्चिद्भाव्यं सदसदात्मकम् ॥ ३२ ॥**

**इतीति** । पृष्टं तु त्वयैतावदेव । माहात्म्यकथनं त्वर्थादायाति । तदग्रे कथयिष्यामीति भावः । किमुक्तमित्यपेक्षायामाह—**नाऽन्यद्भगवत इति** । यावन्तः प्रश्नाः कृताः स्वरूपतः प्रकारतो वा । तत्र सर्वत्र उत्तरं भगवानेव । यतो भगवद्व्यतिरिक्तं किमपि नास्ति । ननु सर्वाधारत्वेन वस्तुतत्त्वरूपेण च मतान्तरस्थैरपि सर्वं भगवानित्यङ्गीक्रियते । ततोऽस्मिन्मार्गे को विशेष इत्याकाङ्क्षायामाह—**भाव्यमिति** । यत्क्रियया निष्पाद्यम् । यत्र हि क्रिया व्यापृता भवति तद्भगवानित्यर्थः । ननु ब्रह्मवादेऽपि सर्वं ब्रह्म । ततोऽस्मिन्मार्गे को विशेषस्तत्राऽऽह—**सदसदात्मकमिति** । सदसद्व्यवहारयोग्यं घटादिकं शशशृङ्गादिकमपि । भ्रमविषयश्च । तस्माद्यत्राऽपि मिथ्याप्रत्ययस्तद्विषयोऽपि भगवान् । अन्यथा तस्य भानं ज्ञानं च नोत्पद्येत । अनुव्यवसायश्च न भवेत् ॥ ३२ ॥

एवं पूर्वोक्तमुपसंहृत्य तस्य माहात्म्यं वदन् तद्धर्माणां माहात्म्यं प्रथममाह—

**न भारती मेऽङ्ग मृषोपलक्ष्यते न वै क्वचिन्मे मनसो मृषा गतिः ।**
**न मे हृषीकाणि पतन्त्यसत्पथे यन्मे हृदौत्कण्ठ्यवता धृतो हरिः ॥ ३३ ॥**

**न भारती मेऽङ्गेति** । हृदये तिरोहितो भगवानसद्बुद्धिमुत्पादयति । अतो मयौत्कण्ठ्यवता प्रेमोद्गमवता हृदा भगवान् धृतः । तत्र च भारती वर्त्तते । सा हि भगवन्तमालिङ्ग्य मन्मुखात्तेन सह निःसरतीति कदाचिदपि मृषा नोपलक्ष्यते । भाविनाऽपि न बाधितविषया भवतीत्यर्थः । तथा मनोव्यापारोऽपि । न यः पदार्थो भावी तद्विषयको न भवतीत्याह—**न वै क्वचिन्मे मनस इति** । परम्परासम्बन्धेऽपि माहात्म्यम् । भगवता सहाऽहं सम्बद्धः । मम चाऽभिमानमात्रेण मनःप्रभृतयः सम्बद्धा इति ज्ञापनार्थं सर्वत्र म इत्युक्तम् । हृषीकाणि इन्द्रियाणि । असत्पथे निन्दितमार्गे । वाक्संबन्धे तु भगवान्न हृदये स्थापित इति न तेन व्यभिचारः । ननु धृतो भगवान् कथमिष्टं कृतवान् ? तत्राऽऽह—**हरिरिति** । औत्कण्ठ्यवता हृदेत्यनेनाऽयमर्थो निरूपितः—चित्ते भगवत्प्रेम सम्पादनीयम् । ततः प्रेमसंवलितं चित्तं सर्वत्र विद्यमानं भगवन्तं विषयीकरिष्यति । यथा रसनेन्द्रियसहिता जिह्वा द्रव्येषु विद्यमानान् रसान् स्वयमेव गृह्णाति । न तु तद्रसज्ञानं पूर्वमपेक्षते । तथा भक्त्याविष्टं चित्तं स्वयमेव भगवन्तं गृह्णाति । प्रतिनियतेन्द्रियवद्भगवद्भक्तिः ॥ ३३ ॥

१ यदापीति क. ख. ङ. २ तदापीति ख. ३ वस्तुत्वरूपेणेति घ. ङ. ४ भ्रमविषयं चेति ग. ५ भाविनाऽपीति ख. घ. ङ. ६ बाधितविषय इति ख. घ. ङ. ७ विषयीकरोतीति ग. विषयीकरिष्यतीति इति ख. ङ. ८ अपेक्षिते इति ख. घ. अपेक्ष्यते इति ग.

भगवान् केवलभक्त्यैकलभ्यः । न च तत्र प्रमाणान्तरमस्तीति बोधयितुमाह—

**सोऽहं समाम्नायमयस्तपोमयः प्रजापतीनामभिवन्दितः पतिः ।**
**आस्थाय योगं निपुणं समाहितस्तं नाऽध्यगच्छं यत आत्मसम्भवः ॥ ३४ ॥**

**सोऽहमिति** । भगवज्ज्ञाने प्रथमं वेदाः प्रमाणम् । साधनं तपः । प्रमाणाभिज्ञानं मननिदिध्यासनरूपम् । अन्तरङ्गं साधनं योगः । तत्फलं चित्तैकाग्र्यम् । तस्मिन् जाते उत्तमाधिकारिणो भगवत्साक्षात्कारो भवतीति न मन्तव्यमित्याह—**सोऽहमिति** । समाम्नायः पुनः पुनरावर्त्यमानो वेदः । [1]समाङ्भ्युपसर्गाभ्यां सहितो म्नाधातुरभ्यासार्थोऽर्थविधानसहितं वेदाभ्यासं बोधयति । तन्मयः तद्विकारस्तदभ्यासो वा । तपोमय इति साधनपरता । सहजं तप इति ज्ञापनार्थमुक्तम् । प्रजापतीनामभिवन्दित इति सर्वोपदेष्टृत्वेनाऽर्थविचार उक्तः । प्रजापतिशब्देन च तस्य ज्ञानस्य परम्पराऽपि सूचिता । तेच न प्रतारिता इत्याह—**पतिरिति** । न हि प्रजापतीनां पतिस्तान्वञ्चयति । एवं साङ्गं प्रमाणं निरूपितम् । प्रमाणं हि भगवत्साक्षात्कारे मनसः सहकारि । अतो मनसोऽपि [2]भगवद्ग्रहणयोग्यतामाह—**आस्थाय योगमिति** । **निपुणमिति** । न सिद्ध्यादिभिर्भ्रामकमित्यर्थः । एवं साधनसहितोऽपि तं नाऽध्यगच्छम् । **यत आत्मसम्भव इति** स्वस्याऽधिकार उत्कृष्टो निरूपितः । तस्माद्भक्त्यैव वशो भवति ज्ञातश्च नाऽन्यथेति निश्चयः ॥ ३४ ॥

तर्हि तत्र किं विधेयं भक्त्यर्थं सर्वैरित्याकाङ्क्षायामाह—

**नतोऽस्म्यहं तच्चरणं समीयुषां भवच्छिदं स्वस्त्ययनं सुमङ्गलम् ।**
**यो ह्यात्ममायाविभवं स्म पर्यगाद्यथा नभः स्वान्तमथाऽपरे कुतः ॥ ३५ ॥**

**नतोऽस्म्यहमिति** । तच्चरणमहं नतोऽस्मि । नमनातिरिक्तं मयाऽपि साधनं न ज्ञायते । कुतोऽन्ये ज्ञास्यन्तीति भावः । ननु नमनेन किं स्यात् ? तत्राऽऽह—**समीयुषां भवच्छिदमिति** । तच्चरणं ये सं सम्यक् ईयुषस्तत्प्राप्त्यर्थं कामपि तत्रत्यां क्रियां कुर्वाणास्तेषां संसारं दूरीकरोति । पुनः संसारप्राप्त्यभावाय भवं छिनत्तीत्युक्तम् । मूलत[3]श्छिन्ने प्रवाहे अग्रे निवृत्तिः स्वत एवेति तथोक्तम् । न केवलं दुःखमेव दूरीकरोति किन्तु कल्याणमपि प्रयच्छतीत्याह—**स्वस्त्ययनं सुमङ्गलमिति** । स्वस्ति कल्याणस्यैहिकस्य अयनं स्थानम् । आमुष्मिकस्याऽपि सूचकं सुमङ्गलम् । अतश्चरणनमनमेव कर्त्तव्यम् । तेनैवाऽर्थसिद्धिः । [4]ननु भगवान् भगवद्गुणा वा इदमित्थतया ज्ञातुं शक्याः । तत्र गुणानां ज्ञाने अशक्यतामाह—**यो हीति** । यो भगवान् आत्मनो मायायाः साधनभूताया विभवमैश्वर्यं स्वयमेव पर्यगात् । परीति निषेधार्थे । न ज्ञातवानित्यर्थः । स्मेति प्रसिद्धे । अनेन तथा [5]वचने स्वस्य दोषो निरा[6]कृतः । ननु मायाया विभवं भगवदीयमेवेति कथं भगवान् स्वसम्बन्धिनं पदार्थं न जानाति ? तत्र दृष्टान्तमाह—**यथा नभः स्वान्तमिति** । विद्यमाने अन्ते यस्त्वन्तं न जानाति स न सर्वज्ञः । न त्वविद्यमानेऽपि । न हि शशशृङ्गाज्ञानं सार्वज्ञ्यप्रतिबन्धकम् । यथा नभः स्वान्तं न जानाति । व्यापकत्वादन्ताभावाच्च । तथा भगवानपीत्यर्थः ॥ ३५ ॥

---

१ समामुपसर्गाभ्यामिति. क. ख. ङ. समोपसर्गाभ्यामिति ग. २ भगवद्ग्रहणेऽयोग्यतामिति क. ख. ३ छिन्ने वा प्रवाहे निवृत्तिरिति ङ. ४ नन्विति ग. ङ. ५ वचनेनेति ग. ६ निवारित. .ति ङ.



एवं गुणानामज्ञानं निरूप्य स्वरूपस्याऽप्यज्ञानं निरूपयति—

**नाऽहं न यूयं यदृतां गतिं विदुर्न वामदेवः किमुताऽपरे सुराः ।**
**यन्मायया मोहितबुद्धयस्त्विदं विनिर्मितं चाऽऽत्मसमं विचक्ष्महे ॥ ३६ ॥**

**नाऽहमिति** । भगवन्तं कश्चिज्ज्ञास्यतीति न मन्तव्यम् । यतो वयमेव महान्तोऽधिकारिणः सर्वप्रकारेण चेन्न जानीमः कथमन्यो ज्ञास्यतीति । तत्र अहं ब्रह्मा । यूयं सनकाद्यन्ताः सर्वे मत्पुत्राः । यस्य ऋतां सत्यरूपां गतिं न विद्मः । भगवज्ज्ञानं दूरे । किन्तु येन मार्गेण भगवान् गच्छति तां गतिमपि न जानीमः । यथा देवानां मनुष्या न जानन्ति तथा वयमपि भगवत इत्यर्थः । महादेवस्तु गुणावतारः सर्वगुरुः । "**ईश्वराज्ज्ञानमन्विच्छेदि**"ति वाक्याच्च स ज्ञास्यतीत्याशङ्क्याऽऽह—**न वामदेव इति** । वामदेवो महादेवः । अपरे ततो हीनाः । अज्ञाने उपपत्तिमाह—**यन्माययेति** । पूर्ववज्ज्ञानसम्बन्धिन्या मायया मोहिता बुद्धिर्येषाम् । बुद्ध्या गृहीतानि ज्ञानेन्द्रियाणि हि ज्ञानं जनयन्ति । तत्र बुद्धिश्चेन्मुग्धा ज्ञानवार्त्ता दूरे । तर्हीन्द्रियाणां वैफल्यं स्यात्तत्राऽऽह—**इदं विनिर्मितं आत्मसमं विचक्ष्मह इति** । भगवतैव विनिर्मितमिदं कार्यं जगद्रूपं स्वबुद्ध्यनुसारेण विचक्ष्महे । अनेन कार्यस्य प्रदर्शितत्वाद्भगवान्नास्तीति पक्षो निराकृतः । **आत्मसममिति** वचनात्तदपि न सम्यक् ज्ञायते । अन्यथा विशेषानुमानैर्भगवतः सर्वे विशेषा ज्ञाता भवेयुः । सर्वगुणप्रसिद्धिरूपत्वाज्जगतः ॥ ३६ ॥

एवं ज्ञानमार्गस्य दुर्ज्ञेयत्वमुक्त्वा भक्तिमार्गस्याऽप्यशक्यतामाह—

**यस्याऽवतारकर्माणि गायन्ति ह्यस्मदादयः ।**
**न यं विदन्ति तत्त्वेन तस्मै भगवते नमः ॥ ३७ ॥**

**यस्याऽवतारकर्माणीति** । साक्षाद्भक्तिर्नास्त्येव । परम्पराभक्तिः कथमपि केनचित्कर्त्तव्या । तत्र परम्पराभक्तिमध्ये गुणकीर्त्तनमुत्तममित्यस्मदादयोऽवतारकर्माणि गायन्ति । अवतारपदेन तस्य कर्माण्यपि न जानन्तीति सूचितम् । कर्मपदेन गुणास्तु न ज्ञायन्त एव । गुणा ह्युत्कर्षबोधकाः । के वा भगवतो धर्मा भगवतः सर्वोत्तमत्वमन्यं वोत्कर्षं साधयन्तीति ज्ञानं दुर्लभम् । अवतारपदेन च शरीरेणाऽऽकृत्या वा गूढो भगवानिति कार्यज्ञानवद्भक्तिरपि सोपाधिका निरूपिता । तर्हि किमर्थं कथयन्तीत्याशङ्क्याऽऽह—**गायन्तीति** । गानेन सुखं जायत इतीतरगानापेक्षया भगवद्गुणगाने सुखाभिव्यक्तेर्दृष्टत्वात्तदेव कुर्वन्तीत्यर्थः । हिशब्दस्त्विममेवाऽर्थमाह । तत्त्वमिदमित्थमेवंरूपम् । तथापि ज्ञानाऽज्ञानाभ्यामुपलक्षितो भगवान् कश्चिदस्तीति विनिश्चित्य मार्गद्वयेऽपि तत्र कर्त्तव्यान्तराभावान्नमनमेव कर्त्तव्यमित्याह—**तस्मा इति** । यद्यपि सर्वप्रमाणातीतस्तथापि सर्वत्र प्रसिद्धः । तत्र च नमनमेव कर्त्तव्यं नाऽन्यदिति । नमनञ्च—"**यादृशोऽसि हरे कृष्ण तादृशाय नमो नम**" इति ॥ ३७ ॥

एवं भगवतो माहात्म्यं निरूप्य पूर्वोक्तां सृष्टिमुपसंहरन् तत्त्वमुपसंहरति—

**स एष आद्यः पुरुषः कल्पे कल्पे सृजत्यजः ।**
**आत्माऽऽत्मन्यात्मनाऽऽत्मानं संयच्छति च पाति च ॥ ३८ ॥**

**स एष इति**। योऽस्माभिर्न ज्ञायते स एवैष इदानीमस्मद्बुद्धौ स्थित्वा सर्वं करोतीति। तस्यैव स्रष्टृत्वे हेतुः **आद्य इति**। **पुरुष इति** साधनम्। **कल्पे कल्प इति** सकृत्सृष्टिर्निवारिता। **अज इति** स्वस्य सदैकरूपत्वम्। उपादानत्वं करणत्वं कर्तृत्वं स्वस्यैवेत्याह। आत्मा स्वयमेव कर्ता। आत्मनि स्वस्मिन्नेवाऽधिकरणे। आत्मना स्वेनैव करणेन। आत्मानं विश्वरूपं स्वयमेव कर्म। अनेनाऽन्येऽपि विभक्त्यर्था ज्ञातव्याः। न केवलमुत्पादयति। अपि तु संयच्छति मारयति। पाति रक्षति[1]। चकारौ तु भिन्नविषयत्वव्युदासकौ। यदाऽपि हरति तदाऽप्युत्पादयति। एवमन्यस्मिन्नप्यन्यसम्बन्धनिरूपणार्थं वा। युक्तिस्त्वत्र महायोगसिद्धो बाह्यसाधनव्यतिरेकेणैव स्वेच्छया बहुरूपो भवति। भगवति तु योगादिकमपि नाऽपेक्ष्यते। सर्वसामर्थ्ययुक्तं स्वरूपमेव तथाभूतं यतः॥ ३८॥

ननु नाऽयं भगवन्मार्गः साधीयान्। एतदपेक्षया ज्ञानमार्ग एव ब्रह्मात्मस्वरूपभूत उत्तमः। स हि ज्ञातुं शक्यत इत्याशङ्क्य तं पक्षमनूद्य दूषयति—**विशुद्धमिति** द्वाभ्याम्—

**विशुद्धं केवलं ज्ञानं प्रत्यक् सम्यगवस्थितम्।**
**सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयम्॥ ३९॥**

एते हि द्वादश धर्मा देहादात्मनो वैलक्षण्यप्रतिपादकाः। तैर्ज्ञातै**रहंममेत्यसद्भावं देहादौ मोहजं त्यजेदिति** फलिष्यति। तत्र देहस्त्वत्यन्तं मलिनो मलमूत्रादिपूर्णत्वादशुद्धश्च। आत्मा तु विशेषेण शुद्धः। न हि शुद्धाशुद्धयोरैक्यम्। अनेनाऽऽत्मनः संस्काराः केऽपि नाऽपेक्ष्यन्त इत्युक्तं भवति। देहे कृतः संस्कारो व्यर्थ एव। अनेन प्रथमं सर्वसाधनपरित्यागः सूचितः। किञ्च। केवलोऽयमात्मा। एक एवाऽसहायः। देहस्तु पुत्रादिसर्वसहितः। आत्मनस्त्वेकत्वे ज्ञाते पुत्रादिचिन्ता दूरे गच्छति। तेन वैराग्यं सिद्धं भवति। एवं परित्यागो वैराग्यं च निरूपितम्। किञ्च। अयमात्मा ज्ञानरूपः। देहस्तु ज्ञेयः। अनेन ज्ञानार्थमपि यत्नो निराकृतः। न ह्यात्मा ज्ञेयो भवति। शास्त्राणि तु दूरात्परिचायकानि। तेन आत्मना स्वयं ज्ञातानि[4] लब्धसत्ताकानि भवन्ति। अतस्तानि प्रमाणानि स्वात्मानमेव तत्सम्बन्धात्प्रमाणमिति बोधयन्त्यात्मबोधकानीत्युपचर्यन्ते[5]। तस्मादेवम्भावे आत्मनो ज्ञाते ज्ञानार्थमपि प्रयत्नस्त्यक्तव्य इत्युक्तं भवति। किञ्च। अयमात्मा प्रत्यक् प्रत्यक्त्वेन वेद्यः। देहस्तु पराक्। अत आत्मन एवम्भावे ज्ञाते योगोऽपि व्यर्थः। तेन हि स्ववृत्तावात्मस्फूर्त्तिं कृत्वा पराक्त्वं सम्पाद्यत आत्मनः। यथा मथनेनाऽग्नेर्बाह्यत्वम्। ननु गूढं प्रकटीक्रियत इति योगोपयोगोऽस्तीत्यत आह—**सम्यगिति**। यथाऽऽत्मा वर्त्तते तथैव सम्यक्। न तु प्रकटितः। देहवैलक्षण्यं च। देहस्त्वसम्यक्। न हि यादृशोऽस्ति तादृश एव स्थापनीयः, किन्तु संस्कारैरुत्तमः कर्त्तव्यः। किञ्च। अयमात्मा अवस्थितः अचलः। तस्मात्तत्स्थिरीकरणार्थमात्मापोद्वापनरूपं मननं न[7] कर्त्तव्यम्। अनवस्थितस्य हि युक्त्या अवस्थापनम्। देहवैलक्षण्यं च सिद्धमेव। देहस्य सर्वथाऽनवस्थितत्वात्। अनेन नाडीशोधनादिना देहसिद्धिप्रयासोऽपि व्यर्थ इत्युक्तम्। किञ्च। अयमात्मा सत्यः सदैकरूपः। देहस्तु न तथेति स्पष्टमेव। अनेन कालान्तरे आत्मनोऽन्यथाभावो भविष्यतीति शङ्कया योगादिभिः प्रयत्न-

१ रक्षति चेति घ. ङ. २ तावद्रूप इति क. ग. ख तद्रूप इति ध. ३ देहकृत इति क. ङ. ४ ज्ञाता लब्धसत्ताका इति पुम्प्रयोगः क. ग. घ. ङ. ५ बोधयन्त इति घ. ङ. ६ स्ववृत्तौ वा इति ग. घ. ङ. ७ नकारो नास्ति ग. घ. ङ.



करणं निवारितम्। किञ्च। अयमात्मा पूर्णः। देहस्तु परिच्छिन्नः। अनेनाऽऽत्मनो न्यूनतापरिहारार्थमपि यत्नो न कर्त्तव्य इति सूचितम्। स्वत एव पूर्णत्वात्। ननु पूर्णस्याऽपि सदैकरूपस्याऽप्याकाशादेरावरणनिराकरणेन विशालता सम्पाद्यते। तथाऽऽत्मनोऽप्युपाधिनिराकरणार्थं यत्नः कर्त्तव्य इत्याशङ्क्य निराकरोति—**अनाद्यन्तमिति**। यस्य ह्याद्यन्तावुत्पत्तिप्रलयौ स्तः। स हि सजातीये घटपटादौ अन्वेतीति तस्योपाधयः सम्भवन्ति। नह्यन्तःकरणं शरीरमन्यद्वा आत्मन आवरकं सम्भवति। अविकारित्वादसङ्गत्वादव्यवहार्यत्वाच्च[1]। तस्मात्केनाऽप्यंशेन उत्पत्तिप्रलययोरभावादुपाधिनिराकरणार्थमपि न यत्नः कर्त्तव्यः। देहादयस्तु तत्प्रकाशेन भासन्ते। न तु तदुपाधयः। अत आत्मन एवम्भावेऽवगते देहनिराकरणार्थमपि प्रयत्नो व्यर्थः। ननु गुणैः क्षोभसम्भवादेवम्भावस्थित्यनुपपत्तेः सर्वदा तथास्थित्यर्थं गुणक्षोभनिराकरणाय यत्नः कर्त्तव्य इत्याशङ्क्याऽऽह—**निर्गुणमिति**। नह्यात्मनो गुणाः सन्ति। एते हि सत्त्वादयः प्रकृतेर्गुणाः। न ह्यन्यदीयैरसम्बद्धैरात्मनः क्षोभो भवितुमर्हति। तस्मात्तदर्थमपि न यत्नः कर्त्तव्यः। किञ्च। एतादृशस्त्वेमाव[2] आत्मा सर्वदा न तु कदाचिदित्याह—**नित्यमिति**। यावन्त आत्मनो धर्मा निरूपिताः परिचायकत्वेन तैः सहित आत्मा नित्यो न तु ते तत्रोत्पाद्यन्ते। तस्मात्तादृशत्वसिद्ध्यर्थमपि न यत्नः। किञ्च। यद्ययमात्मा ब्रह्मानन्दमयो[4] भवेत्तदा भगवत्सायुज्यं ब्रह्मता वा सम्पादनीया स्यात्। किन्त्वयमेव ब्रह्म भगवानिति। "**अयमात्मा ब्रह्म विज्ञानमयः**" इति श्रुतेः। "**अहमात्मा गुडाकेश**" इति च। तस्माद्भगवत्सायुज्यार्थं ब्रह्मभावार्थं वा न यत्नः कर्त्तव्य इत्याह—**अद्वयमिति**। न ह्यात्माद्वयरूपः। पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि। "**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती**"ति। "**अन्योऽसावन्योऽहमस्मी**" ति निन्दाश्रवणात्। नह्यात्मनि नानात्वमस्ति। वैलक्षण्यं तु दूरे। सर्वत्र[5] चैकरूपः सर्वत्राऽक्षोभ्यः सर्वत्रोत्पत्तिविनाशधर्मरहितः सर्वत्र परिच्छेदरहितः सर्वत्रैकरूपः सर्वत्र निश्चलः सर्वत्र समीचीनः सर्वत्र प्रत्यक्स्फूर्तिरूपः सर्वत्र ज्ञानरूपः सर्वत्राऽसङ्गोदासीनः शुद्धश्चेति परिचायकप्रकारेणाऽऽत्मन्यवगते कृतार्थो भवति। न किञ्चित्कृत्यमिति॥ ३९॥

एवमात्मज्ञानमार्गं निरूप्य तं पक्षं दूषयति—

**ऋषे विदन्ति मुनयः प्रशान्तात्मेन्द्रियाशयाः।**
**यदा तदैवाऽसत्तर्कैस्तिरोधीयेत विप्लुतम्॥ ४०॥**

**ऋष इति**। हे ऋषे नारद। त्वं हि मन्त्रद्रष्टा सर्वसिद्धान्तं जानासि। किमेतावता आत्मा एतादृश इति। प्रतीयमानस्याऽनर्थस्य निवृत्तिरपेक्ष्यते। यद्यात्मन्येतादृशेऽपि संसारः[6] स्यात्तदा अनिर्मोक्षः। भ्रमात्प्रतीतावपि भ्रमो निवर्त्तनीयः। एवंभावज्ञानादेव निवर्त्तनपक्षेऽपि ज्ञानं प्रमाणतः सम्पादनीयम्। तत्प्रमाणं वेदो भवितुं नाऽर्हति। बहुवादिविप्रतिपन्नत्वात्। किन्तु प्रमाणसहितं योगयुक्तं मन एवाऽऽत्मनस्तथात्वं बोधयति। तं पक्षमङ्गीकृत्य दूषयति। मुनयः यदा[7] मननशीलाः। प्रशान्त[8] आत्मा इन्द्रियाणि च येषाम्। शुद्धान्तःकरणा जितेन्द्रियाः। तैर्मनने क्रियमाण एवाऽऽत्मा भासते।

१ अधिकारित्वादिति घ. ङ. २ एतादृशः इति क. ३ स्वभावात्मेति क. ख. ४ नाऽऽनन्दमय इति ग. ५ सर्वत्र स चैकरूप इत्यादि ग. ६ यदि संसार इति ग. घ. ङ. ७ सदेति ग. ८ प्रशान्ता इति क. ख. घ. ९ एवमात्मेति क. ख.

तदेव गुणस्वरूपमसत्तर्कैः कुयुक्तिभिर्विप्लुतं सत्तिरोभूयेत तिरोभावं प्राप्नुयात् । सर्वदा एतादृश आत्मानुसन्धाने कदाचिदपि संसारस्फूर्तिर्न स्यात् । तथात्वे वा संसारस्फूर्त्तावनिर्मोक्षप्रसङ्गः शास्त्रवैफल्यञ्च । तस्माद्दृष्टानुपपत्त्या एतदभ्युपगन्तव्यम् । ये मुनयः प्रशान्तात्मेन्द्रियाशयास्तेषामात्मा तथाविधः स्फुरति तदा न संसारः । अन्यान्प्रति न स्फुरति तदा तेषां संसार इति । एवमपरोक्षकथा-परोक्षकथायामपि प्रमाणेन वेदादिना सत्तर्कसहितेन तत्स्फुरत्यसत्तर्कैर्विप्लुतं सत्तिरो भवतीति । अतः परमेतन्नियमनार्थं किञ्चिदङ्गीकर्तव्यम् । यस्मिन् क्रियमाणे असत्तर्कादिकमप्यभिभूय ज्ञानमुदेतीति । प्रशमादयस्तु प्रथमतो न सम्भवन्ति । तेषां साधनाभावात् । साधनाऽभावेऽपि यदि जायेरंस्तदा सर्वेदैव स्युः । तस्मात्तादृशमेकं साधनं वक्तव्यं यदव्यभिचारि भवति । भक्तिश्चेत्कृतमात्मनिरूपणेन । भक्तेः स्वातन्त्र्येणैव मोक्षदानात् । भगवतस्तादृशस्याऽऽत्मत्वाच्च । अतो भक्तिरहितः स मार्गो न सिद्ध्यति । भक्तौ च जातायां किं तेन मार्गेण । अत उभयथाऽप्यप्रयोजकं तत् । तस्माद्भगवतस्तदेकं रूपमात्मभूतमिति भगवन्माहात्म्यमेतत् । विभूतिर्वा । तस्माद्बालानां हस्ताग्रे चन्द्रबुद्धिवदात्मबुद्धिरिति न तच्छ्रवणमात्रेण कार्यसिद्धिरिति भावः ॥ ४० ॥

एवं मतान्तरं परिहृत्याऽवतारकर्माणि गायन्तीत्युक्तत्वात् के ते अवतारा इत्यपेक्षायामाह—

**आद्योऽवतारः पुरुषः परस्य कालः स्वभावः सदसन्मनश्च ।**
**द्रव्यं विकारो गुण इन्द्रियाणि विराट् स्वराट् स्थास्नु चरिष्णु भूम्नः ॥४१॥**

**आद्योऽवतार इति** । परस्य ब्रह्मणः पुरुषोत्तमस्याऽऽद्योऽवतारः पुरुषः प्रकृतिभर्त्ता । द्वितीयः कालः । तृतीयः स्वभावः । सदसत् कर्म प्रकृतिर्वा । मनश्च । इदं मन आधिदैविकं यत्सङ्कल्पद्वारा कामजनकं । यतः सृष्टिः । तदनन्तरमन्येऽप्यवतारा इत्याह । द्रव्यं पञ्चमहाभूतानि । विकारः अहङ्कारः । गुणास्त्रयः । पञ्च वा तन्मात्राः । इन्द्रियाणि दश । विराट् ब्रह्माण्डदेहः । स्वराट् तदभिमानी । स्थास्नु स्थावरम् । चरिष्णु जङ्गमम् । एतत्सर्वं भूम्नः अतिसमर्थस्यैते सर्वेऽवताराः । अवतारो नाम अवतरणं मूलस्थानादिहाऽऽगमनम् । तत्परमार्थतो भगवानेक एव तत्र स्थितः सर्वरूपेण इहाऽऽगत इति सर्वमेवाऽवताररूपम् ॥ ४१ ॥

अथ पुरुषोत्तमत्वाद्भगवतः सजातीयेभ्य उत्कर्षलक्षणगुणवत्त्वं चेत्तदा इमे अग्रे वक्ष्यमाणा इति तान् गणयति—

**अहं भवो यज्ञ इमे प्रजेशा दक्षादयो ये भवदादयश्च ।**
**भूलोकपाला भुवर्लोकपालाः स्वर्लोकपालास्तललोकपालाः ॥ ४२ ॥**
**गन्धर्वविद्याधरचारणेशा ये यक्षरक्षोरगनागनाथाः ।**
**ये वा ऋषीणामृषभाः पितृणां दैत्येन्द्रसिद्धेश्वरदानवेन्द्राः ।**
**अन्ये च ये प्रेतपिशाचभूतकूष्माण्डयादोमृगपक्ष्यधीशाः ॥ ४३ ॥**

१ आत्मतत्त्वाचेति क. घ. ङ. २ स्याच्चित्यपि ख. पाठः. ३ स्याच्चिति क. ख. ग. ४ स्थविरमिति घ. ५ पक्ष्यधीशा इत्यपि पाठः.



**यत् किञ्च लोके भगवन्महस्वदोजःसहस्वद्बलवत्क्षमावत् ।**
**श्रीह्रीर्विभूत्यात्मवदद्भुतार्णं तत्त्वं परं रूपवदस्वरूपम् ॥ ४४ ॥**

**अहमिति** । स्वहीनेभ्यः स्वसेवकेभ्य उत्कर्षो बहूनां वर्तत इति ते सर्वे भगवदवताराः । तत्र प्रथमम्—अहं ब्रह्मा । भवो महादेवः । यज्ञो यज्ञनारायणः । इमे प्रजेशा मरीच्यादयः । तत्र दक्षो मुख्यः कल्पान्तरे । अतो दक्षादयः । भवानादिर्येषां ते भवदादयो भक्ताः । चकारात्सनकादयः । एवं स्वभावत उत्कृष्टानुक्त्वा अधिकारेणोत्कृष्टानाह—**भूलोकपाला इति** । पाठान्तरे भूर्लोकपालाः । तदा भूरित्याद्यव्ययम् । भूलोकपालाः पृथिवीलोकपालाः । भुवर्लोकपाला अन्तरिक्षलोकपालाः । स्वर्लोकपाला उपरितनलोकपालाः । तललोकपाला अधस्तनलोकपालाः । गन्धर्वादीनां ये ईशाः । यक्षादीनां ये नाथाः । रक्षोरगेति सन्धिरार्षः । गन्धर्वादयो राजसाः । यक्षादयस्तामसाः । ऋषीणामृषभाः सात्त्विकाः । पितॄणां सन्निपालाः । एवं पूर्वत्राऽपि । दैत्येन्द्रादयो राजससात्त्विकतामसाः । इदानीं तमोमिश्रतामसानाह—**प्रेतपिशाचेति** । एतेषां स्वरूपं तृतीयस्कन्धे वक्ष्यते । प्रेतादीनां ये अधीशाः । किञ्च । यः कश्चनोत्कृष्टधर्मो भगादिः । भाग्यमैश्वर्यादि वा । तद्युक्तं यत्किञ्चिद्वस्तुमात्रं प्राणिमात्रं वा । महस्तेजः । ओज इन्द्रियशक्तिः । सहो मनःशक्तिः । ओजसा सहितं सहः । मनसश्चेन्द्रियाणां चाऽन्योन्योपकारात्तच्छक्तिद्वयमेकत्वेनोक्तम् ओजःसहस्वदिति । बलं देहशक्तिः । क्षमा सहिष्णुता । एते भगादयः पदार्था उत्कृष्टा एवाऽत्र विवक्षिताः । श्रीः शोभा । ह्रीर्लज्जा । विभूतिर्लक्ष्मीः । आत्मा बुद्धिः । श्रिया(?)द्यात्मपर्यन्तं चतुष्टयं यस्याऽस्ति स तथोक्तः । किञ्च । अद्भुतार्णम् अद्भुतवर्णरूपम् । विचित्ररूपम् । गवादिकं वा । किं बहुना । यत्किञ्चिद्रूपवत् मूर्तम् । प्रकाशमानमिति यावत् । तत्सर्वं परमेव तत्त्वम् । यदप्यस्वरूपं अमूर्तमाकाशादि । तदपि तत्त्वमित्यर्थः । अस्वरूपत्वेन रूपवत्त्वेन च तस्याऽपि प्रसिद्धेः ॥ ४२ ॥ ४३ ॥ ४४ ॥

एवमुत्कृष्टधर्मवत्त्वेन यदेव किञ्चिल्लोके प्रसिद्धं तदेव भगवदवताररूपमित्युक्त्वा यत्साक्षात्सच्चिदानन्दरूपमैश्वर्यादिर्सर्वगुणसहितं तन्मुख्यं भगवदवताररूपं ते कथयिष्यामीत्याह—

**प्राधान्यतो यानृष आमनन्ति लीलावतारान् पुरुषस्य भूम्नः ।**
**आपीयतां कर्णकषायशोषाननुक्रमिष्ये त इमान् सुपेशान् ॥ ४५ ॥**

**प्राधान्यत इति** । ऋषे इति सम्बोधनं तादृशश्रवणे अधिकारिद्योतकम् । यद्यपि भगवत्सृष्टौ सर्वमेवाऽवताररूपमिति मुख्यः पक्षस्तथापि तादृशस्याऽवतारत्वेन लोकप्रसिद्ध्यभावाल्लोके यानवतारान्प्राधान्येन मुख्यतया वदन्ति तेषां लीलावतारेति नाम । ते च पुनरवताराः कस्येत्यपेक्षायां यस्तु भूमा पुरुषो ब्रह्माण्डादधिकोऽन्तर्यामिरूपो द्वितीयध्यान उक्तस्तस्याऽवताराः । सच्चिदानन्दरूपा हि देहजीवान्तर्यामिणः । तत्र क्रमेण देहजीवरूपा उक्ताः । इदानीमन्तर्यामिरूपा उच्यन्त इति । आपीयताम् । ते हि न बहिःस्थापनयोग्याः । नाऽपि मध्ये । किन्तु सर्वान्तराः कर्त्तव्या इत्यासमन्तात्पीयतामित्यर्थः ।

१ भुवलोकपाला इति क. ख. २ सर्वत्राऽपीति ग. ३ भगादीत्यविसर्गः पाठः क. ख. ४ सह इत्यायंशो नास्ति ख. घ. ५ पादार्था इति ख. ६ गवादिकमिति क. ख. ग. घ. ७ अमूर्तरूपवत्वेनेति ग. रूपत्वेनेति घ. ङ. ८ सर्वेति नास्ति क. ख.

तेषां श्रवणस्य विशेषफलमाह—**कर्णकषायशोषानिति** । यद्यपि सर्वं चरित्रं भगवतस्तथापि लौकिकदोषेण कर्णयोर्दुष्टत्वाद्भगवच्चरित्रे न रुचिरुत्पद्यते । तत्रैतद्विशेषचरित्रं कर्णमलनिवारकमित्यस्मिञ्छ्रुते सर्वत्र रुचिरुत्पत्स्यत इत्यर्थः । अत एवाऽनुक्रमिष्ये आनुपूर्व्येण कथयिष्यामि । ते तुभ्यम् । विशेषेण त्वमेवाऽधिकारीति । इमान् बुद्धिस्थितान् । महता आडम्बरेण कथने हेतुः **सुपेशा-निति** । अतिसुन्दरान् मनोहरान् । कथनप्रतिज्ञा भिन्नप्रक्रमेण कथने हेतुः ॥ ४५ ॥

**इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां द्वितीयस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥**

---

## सप्तमोऽध्यायः ।

**एवमात्मातिरिक्तानामुत्पत्त्या निर्णयः कृतः ।**
**आत्मनोऽपि हरेरत्र निर्णयो विनिरूप्यते ॥ १ ॥**
**सूक्ष्मध्यानं पूर्वमुक्तं तस्याऽत्र विवृतिः स्फुटा ।**
**सप्तमे क्रियते येन तद्धर्मा वस्तुतो मताः ॥ २ ॥**
**उपासनायां सर्वस्य हरेर्धर्मस्य निर्णयः ।**
**स्वरूपगुणभेदेन बोधनार्थमिहोच्यते ॥ ३ ॥**
**मुख्यस्य च फलं त्वत्र निर्णीतं विनिरूप्यते ।**
**माहात्म्यादि तदङ्गं च विशिष्टं तेन सिद्ध्यति ॥ ४ ॥**

एवं जडजीवयोरुत्पत्त्या निर्णयमुक्त्वा अन्तर्यामिणोऽपि सर्वधर्मसहितस्य खण्डश उत्पत्तिरुच्यते । तथा सत्येकैकस्य धर्मस्य तादृशमाहात्म्यावगतौ विशिष्टस्य परममाहात्म्यं सेत्स्यतीति । अन्तर्यामिस्वरूपे "**प्रादेशमात्रं पुरुषं वसन्तमि**"त्यादिपदैर्यन्निरूपितं भगवत्स्वरूपम् तस्याऽत्र पदशोऽवतारा उच्यन्ते । तत्र प्रथमं प्रादेशमात्रत्वधर्मस्योत्पत्त्या यद्रूपं तत्प्रथममाह—

**ब्रह्मोवाच ।**

**यत्रोद्यतः क्षितितलोद्धरणाय बिभ्रत् क्रौडीं तनुं सकलयज्ञमयीमनन्तः ।**
**अन्तर्महार्णव उपागतमादिदैत्यं तं दंष्ट्रयाऽद्रिमिव वज्रधरो ददार ॥ १ ॥**

**यत्रोद्यत इति** । ब्रह्मणो हि भूम्युद्धारे चिन्ता काचिदुत्पन्ना कथमेनां समुन्नेष्य इति । तदा भगवद्ध्यानादन्तर्यामी भगवान् यः प्रादेशमात्रः स आविर्भूतः । स प्रादेशमात्रोऽपि नासापुटनिर्गमनार्थमङ्गुष्ठशिरोमात्रो भूत्वा पश्चात्स्थूलो जात इति प्रादेशमात्रत्वं स्थानसापेक्षं न तु स्वाभाविकमिति व्याख्यातम् । यत्रैव स्थितो भगवाननन्तो देशकालाद्यपरिच्छिन्नः क्षितितलोद्धरणायोद्यतः । यदैव भगवानिति विचारितवान् भूमिमुन्नेष्यामीति तदैव रूपमबिभ्रत् । नहि तस्य रूपग्रहणे देशकालवस्त्वाद्यपेक्षा । यतोऽन्तःकरण एव ब्रह्मणः स्थित्वा भूम्युद्धारेच्छयैव तत्रैव रूपं गृहीतवान् । अतोऽन्तर्यामिणो रूपग्रहणे न काऽप्यपेक्षेति सूचनार्थं प्रथममेव वराहावतार उक्तः । यत्रैवोद्यतस्तत्रैव बिभ्रत् धृतवानिति योजना । क्षितितलस्योद्धरणम् । तलपदेन कृत्रिमा भूमिरुक्ता समा च । पूर्वं हि ब्रह्मा पुष्करपर्णे स्थितो वराहरूपं कृत्वा काञ्चिन्मृत्तिकां तत उद्धृत्य पुष्करपर्णे प्रथनं कृतवान् । सा पृथिवी पुनर्निमग्ना । तदा तदुद्धारार्थमुद्यतस्तदेव रूपं धृतवान् । "**सोऽपश्यत्पुष्करपर्णं तिष्ठत् । सोऽमन्यत । अस्ति चैतत् यस्मिन्निदमधितिष्ठतीति । स वराहो रूपं कृत्वोपन्यमज्जत् । स पृथिवीमध आर्च्छत् । तस्या उपहत्योदमज्जत् । तत्पुष्करपर्णेऽप्रथयत् । यदप्रथयत्तत्पृथिव्यै पृथिवीत्वमि**"ति श्रुतेः । अतो भगवताऽपि क्रोडसम्बन्धिनी वराहसम्बन्धिनी तनुः कृता । जलात्पदार्थोद्धरणे तस्यैव सामर्थ्यात् । किञ्च । **सकलयज्ञमयीमिति** । यज्ञो हि मृगः । स वनगोचरः । स्रुगादिपदार्थानां तत्तुण्डरूपतुल्यत्वान्मृगत्वेऽपि वराहत्वम् । मन्युशब्दवाच्यत्वाच्च । यतः शतमन्युरिन्द्रः । अत्राऽपि "**पशूनां वा एष मन्युर्यद्वराह**" इति श्रुतेर्वराहस्य मन्युत्वात्सकलयज्ञमयी तनुः सा भवति । यथेयं तनुः सकलयज्ञमयी तथोत्तरत्र वक्ष्यते । अत्र रूपग्रहणेनैव तत्कार्यस्योक्तत्वात्कार्यान्तरमस्तीति तस्य निरूपकमाह । यज्ञे हि त्रयीद्विषो हन्तव्याः । भूमिश्च तैरेव तत्र नीता । "**असुरा वा उत्तरतः पृथिवीं पर्याचिकीर्षन्ति**"ति श्रुतेः । अतस्तद्वधे कर्तव्ये "**मुख्ये कार्यसम्प्रत्यय**" इति न्यायेनाऽऽदौ दैत्यत्वं प्राप्तमादिदैत्यं तं प्रसिद्धं ददार विदीर्णं कृतवान् । तस्य विदारणे हेतुरूपो दृष्टान्तः **अद्रिमिव वज्रधर इति** । यथा पर्वताः पक्षैरुद्यताः सर्वामेव पृथिवीं नाशयन्ति । तत्प्रतिपक्षतयेन्द्रेण च ते च्छिन्नपक्षाः कृतास्तथा भगवता हिरण्याक्षोऽपि भूम्यनिष्टकर्ता हत इत्यर्थः । तस्य च हननं समुद्र एव । तदाह—**अन्तर्महार्णव इति** । आगतमात्रत्वं वा । **दंष्ट्रयेति** तस्य न मुक्तिः । यमत्वाद्दंष्ट्रायाः । यदग्रे करेण हतवानित्यादि तत्र विदारणरूपम् ॥ १ ॥



एवं प्रादेशमात्रस्याऽवतारमुक्त्वा पुरुषरूपस्याऽवतारमाह—

**जातो रुचेरजनयत् सुयमान् सुयज्ञ आकूतिसूनुरमरानथ दक्षिणायाम् ।**
**लोकत्रयस्य महतीमहरद्यदार्तिं स्वायम्भुवेन मनुना हरिरित्यनूक्तः ॥ २ ॥**

**जातो रुचेरिति** । भगवतो हि यज्ञस्य ध्यानरूपकर्माधिष्ठात् रूपमेकत्र नाम चैकत्र । तत्र रूपं वराहे । नाम यज्ञनारायणे । स हि पुरुषरूपः । भगवान् पुरुषरूपाणि स्वरुच्या कृतवानिति रुचिनाम्नो ब्रह्मपुत्राज्जातः । तस्य भगवदवतारत्वे नियामकं रूपमाह—**अजनयत् सुयमानिति** । अन्यो हि जातः कियता कालेन भार्यया सम्बद्धः पुत्रान् जनयति । स हि दक्षिणया भार्यया सहित एव जातः । सुयमान्देवांस्तन्मन्वन्तराधिकारिणोऽजनयत् । सुयज्ञ इति नाम यस्य । शोभना यज्ञा यस्मात् । वराहो हि यज्ञरूपः । अयं देवतारूपः । आकूतिरिति मनोर्ज्येष्ठकन्या । आकूतिर्नामः

---

१ हरेस्त्वत्रेति घ. २ स्थानसापेक्ष्यमिति घ. ङ.

१ तदेवं रूपं बिभ्रदिति घ. ङ. २ तत्रैवमिति ग. ३ उच्यत इति क. ख. ग. ४ हृदय एवेति क. ख. ग. ५ प्रथममिति ख. ग. ङ. ६ अधाच्छेदिति क. अध्यच्छेदिति ग. अध आच्छेदिति ङ. ७ पृथिवीत्वमिति क. ख. ङ. ८ कार्यान्तरं तस्येति क. ९ विदीर्णने इति क. ग. ङ. १० ध्यानरूपकर्माधिष्ठानरूपमिति क. घ. ङ.

प्रयत्नः । यज्ञो हि तेनैवाऽभिव्यज्यते । **अमरानथ दक्षिणायामिति** । पूर्वं यज्ञभुजो देवान् सृष्ट्वा पुनरधिकारिणोऽपि देवान्सृष्टवानित्यथशब्दादवगम्यते । अथ अमरान् देवान् सृष्टवान् स्वत एव । अथ दक्षिणायां वाह्यान् देवानित्यर्थः । अवतारस्य प्रयोजनमाह—**लोकत्रयस्येति** । महती आर्त्तिर्वृष्टियज्ञकर्माभावेन । तत्त्रितयसम्पादनेन अहरत् । दैत्योपद्रवेण वा । तद्धननेन । तस्मिन्मन्वन्तर इन्द्राधिकारिणोऽन्यस्याऽभावात्स्वयमेवेन्द्रो जात इत्याह—**स्वायम्भुवेनेति** । स हि स्वायम्भुवमनोः पुत्रिकापुत्रः । एको हि ब्राह्मणरूपः क्षत्रियरूपोऽपि जातः । न हि भगवदवतारव्यतिरेकेण द्वयं भवति कश्चित् । अत एव स्वायम्भुवेन ब्रह्मपुत्रेण तन्मातामहेन मनुना पूर्वं यज्ञ इत्युक्तोऽप्यनु पश्चाद्धरिरितीन्द्र इत्युक्तः । न ह्येकोऽधिकारद्वयं कर्तुं शक्तः । तस्माद्यज्ञशब्दप्रयोगाद्धरिशब्दप्रयोगाच्च पुरुषद्वयरूपो भगवान्निरूपितः । अलौकिको हि यज्ञः सर्वलोकात्मको हरिरिति ॥ २ ॥

"**वसन्तमि**"ति भगवद्ध्याने भगवद्विशेषणमुक्तम् । तस्य स्वरूपं निर्द्धार्यते केवलवासलक्षणम् । न हि कश्चिदपि किञ्चिदप्यकृत्वा क्वचिदपि स्थातुं शक्नोति । "**न हि कश्चित्क्षणमपी**"ति वाक्यात् । अतः केवलस्थित्यर्थं स्वयं तथा स्थितः अन्यान् शिक्षयितुमेकं साङ्ख्यलक्षणं शास्त्रं कृतवान् । तदाह—

**जज्ञे च कर्दमगृहे द्विज देवहूत्यां स्त्रीभिः समं नवभिरात्मगतिं स्वमात्रे ।**
**ऊचे ययाऽऽत्मशमलं गुणसङ्गपङ्कमस्मिन्विधूय कपिलस्य गतिं प्रपेदे ॥ ३ ॥**

**जज्ञे च कर्दमगृह इति** । केवलस्थितिनिरूपणार्थमाविर्भूतो जातोऽपि यथा सर्वं कुर्वन्नपि न करोतीति बोधयिष्यति, तथा सर्वत्र जातोऽपि न जात इति ज्ञापनार्थं जज्ञे चेत्युक्तम् । कर्दमस्य गृहे । "**छायायाः कर्दमो जज्ञ**" इति ब्रह्मणश्छायात उत्पन्नोऽप्यनुत्पन्नप्राय इति तद्गृहे जातस्तथा प्रदर्शनार्थम् । किञ्च । कर्दमस्य गृहं जलं भवतीत्यतिशुद्ध उत्पत्तिरुक्ता । पुष्करपलाशवन्निर्लेपत्वज्ञापनार्थं वा । कृधातोः कर्त्रर्थे विच् प्रत्यये कृते गुणे लोपे च कृते करिति भवति । कृतिकर्त्ता भूत्वा यो दमरूपः । दमस्त्विन्द्रियसंयमः । तेन करोति न करोति चेति तस्य स्वरूपमेव । तादृशे हि जातः **साङ्ख्यप्रवर्तको** भवति । **द्विजेति** सम्बोधनं तथात्वाभावान्नारदस्याऽधिक्षेपबोधकम् । देवहूत्यां मनोर्द्वितीयकन्यायाम् । देवानां हूतिर्यस्यामिति सर्वदेवतामयी सा निरूपिता । अनेनाऽतिसौन्दर्यं तस्या निरूपितम् । **स्त्रीभिः समं नवभिरिति** । प्रकृतेर्गुणत्रयाभिमानिन्यो देवताः कर्तृत्वनिमित्तं सहैवाऽऽनीताः स्वयमकर्ता ताः कर्त्र्य इति । तासां भगिनीत्वख्यापनात्ता यत्र सम्बध्यन्ते स एव कर्त्ता, न तु सर्वथा असम्बद्ध इति साङ्ख्यसिद्धान्ते नियमो द्योतितः । अवतारस्य प्रयोजनमाह—**आत्मगतिमित्यादिना** । यस्य हृदयात्साङ्ख्यशास्त्रमुत्पद्यते स एव हि तत्र मुख्योऽधिकारी । स्वोत्पादकत्वबुद्धिनिवृत्त्यर्थं चाऽऽत्मतत्त्वरूपं साङ्ख्यं मात्रे उक्तवान् । आसुरिरपि साङ्ख्यं पठितवान् । तथापि तस्य प्रचारकत्वेनोपयोगान्न मुख्याधिकारित्वम् । इयं तु मुख्याधिकारिणी । यतस्तदैव आत्मशमलं गुणसङ्गपङ्कलक्षणं तस्मिन्नेव क्षणे विधूय यथा कपिलस्तथैव जाता । अतः स्त्रीजातिमत्त्वेऽपि मातृत्वेऽप्यात्मोपदेशः । आत्मनो गतिर्ज्ञानम् । स्वमात्र इत्युपदेशावश्यकता ।

१ अथेति नास्ति घ. २ क्विप् प्रत्यय इति क. ग. ङ. ३ अविक्षेप इति क. ङ. ४ गुणाभिमानिन्य इति ख. ५ यस्य हीति क. ख. ग. ६ स उत्पादकेति क. ७ लक्षण इति घ. ङ.



भगवदवतारत्वाच्च न गुरुम्य उपदेशो दोषाय । इदं हि ज्ञानं नित्यसिद्धम् । किन्त्वन्तःकरणदोषान्न भासते । अतोऽन्तःकरणस्य शमलं मोहजनकं पापम् । अस्मिन्नेवोपदेशे वा । कपिलस्य गतिं साङ्ख्यसिद्धान्तसिद्धानुभवम् । प्रपेदे प्राप्तवती ॥ ३ ॥

एवं भगवतो निश्चलस्थितिरूपं कपिलं निरूप्य चतुर्भुजत्वं भगवतो निरूपयति—

**अत्रेरपत्यमभिकाङ्क्षत आह तुष्टो दत्तो मयाऽहमिति यद्भगवान् स दत्तः ।**
**यत्पादपङ्कजपरागपवित्रदेहा योगर्द्धिमापुरुभयीं यदुहैहयाद्याः ॥ ४ ॥**

**अत्रेरिति** । न विद्यन्ते त्रयो यस्य । पुत्रत्रयमवश्यभाव्यम् । तदभावाद्भगवत्प्रार्थना । अथवा । भार्या स्वयं च । पुत्राभावादत्रित्वम् । तस्य हि पुत्रत्रयसहिते स्वस्मिन्सम्पन्ने चतुर्भुजत्वं भवति । चतस्रः क्रियाशक्तयो भवन्त्युत्पत्तिस्थितिप्रलयास्तपश्चेति । **योगस्तपश्च वंशश्च भगवद्भक्तिरेव च । एताः क्रियाश्चतस्रो हि भगवद्बाहुषु स्थिताः** । अथवा दातृदेयत्वमात्मनो बोधयत्यसौ । अत आत्मप्रदः कृष्णश्चतुर्भुज इतीरितः । तदाह—**अपत्यमभिकाङ्क्षतः** । अपगतिं त्याजयतीत्यपत्यं दुर्गतिनिवारकम् । तत्र पुत्रान्तरेण तेन वा पितृलोकप्रापणे परमार्थतो दुर्गतिरेव भवति । अतो भगवानेवं विचारितवान् । अयमपत्यं वाञ्छति तस्याऽपत्यार्थसिद्ध्यर्थमहमात्मानमेव दास्यामि । नाऽन्यथाऽपत्यत्वसिद्धिः । अभितः काङ्क्षणमेकेनैवाऽभ्युदयनिःश्रेयसोभयजननाय । अत एव स्वयमेवाऽऽह अत्रेस्तुष्टः सन् । भगवतो दत्तनामनिरुक्तिः न दत्तः पुत्रत्वेन किन्त्वात्मप्रदत्वेनेति । तदाह—**दत्तो मयाऽहमिति** । मया अहमेव दत्तः । एकस्य कर्मकर्तृभावो न भगवद्व्यतिरिक्तस्य भवति । धर्मशास्त्रे अदेयत्वेनाऽऽत्मादयो गणिताः । "**धर्मदासो ज्येष्ठपुत्रो भार्या स्वात्मा तथैव च । सर्वस्वं गुरुवर्गश्च नैव देयमिति स्थितिरि**"ति वाक्यात् । अतः कथं भगवानात्मानं दत्तवानित्याशङ्क्याऽऽह—**यद्भगवानिति** । यस्मादयं भगवान् । जीवधर्मा एवैते । भगवांस्त्वात्मप्रदः । अन्यथा भजनीय एव न स्यात् । अत एव स दत्तः दत्तनामा जातः । दत्तात्रेय इति पितृनाम्ना सह नाम । अवतारप्रयोजनमाह—**यत्पादपङ्कजेति** । पूर्ववत्पादपङ्कजपरागसंस्कृतानि भगवदीयदेहजनकानि भूतानि । तैः शुद्धो देहो येषाम् । अत एवोभयीं योगर्द्धिमापुः सद्योमुक्ति-क्रममुक्तिरूपाम् । अणिमादयस्तु क्रममुक्तावेव । ज्ञानभक्तिरूपां वा । यदुर्गुरुत्वभूतोऽयम् । हैहयः सहस्रार्जुनः । स हि यादवः । तेन ऐहिकी सिद्धिः सहस्रबाहुरूपा प्राप्ता मोक्षश्च । एतेषां पुष्टिमार्गनिष्ठत्वान्न मर्यादाविरोधो दोषाय । आदिशब्देन प्रह्लादादयः । अतो भगवद्बाहूनां सङ्ख्यायामेवंरूपत्वमित्युक्तम् ॥ ४ ॥

"कञ्जरथाङ्गशङ्खगदाधर"मित्यस्य विशेषणस्य स्वरूपमाह—

**तप्तं तपो विविधलोकसिसृक्षया मे आदौ सनात् स्वतपसः स चतुःसनोऽभूत् ।**
**प्राक्कल्पसम्प्लवविनष्टमिहाऽऽत्मतत्त्वं सम्यग्जगाद मुनयो यदचक्षताऽऽत्मन् ॥५॥**

१ तद्भावादिति क. ग. २ मातृदेयत्वमिति ख. ३ पुत्रान्तरे इति क. ग. ङ. ४ दत्तपुत्रत्वेनेति घ. ङ. ५ परागः संस्कृतानीति क. ख. ङ.

**तस्समिति** । एते हि सनकादयश्चत्वारो भगवदायुधरूपाः । ते हि यद्यपि तत्त्वरूपाः । मुख्यतत्त्वं गदा, अपां तत्त्वं शङ्खः, तेजस्तत्त्वं सुदर्शनं, कार्यतत्त्वं पद्ममिति । तेजोऽबन्नानि प्राणाश्चेत्युक्तं भवति । तेषां स्वरूपेणैव तत्त्वता । कार्यवत्त्वेन यद्रूपं तदिहोच्यते । न केवलं तत्त्वमात्रेण कार्याऽऽवेशरहितेनाऽऽयुधभावः सम्पद्यते । ते हि येन तथा भवन्ति तदुच्यते । "**तपो मे हृदयं साक्षादि**"ति वाक्याद्भगवतः साधनं तप एव । तद्धि क्रियया व्याप्तमिति हस्तैः पद्मादिधारणम् । तपसोऽपि वैलक्षण्यमाह—**मया पूर्वं चतुर्विधभूतनिकायसृष्ट्यर्थं तप्तं तपः** । आदौ सृष्टेः पूर्वम् । ततोऽपि न किञ्चिज्जातं यदा तदा तत्तपो भगवते दत्तं समर्पितम् । तस्य तपसः सनात् दानात् । षणु दाने । अतो दानाद्धेतोः स भगवानेव चतुःसनो जातः सनक-सनन्दन-सनातन-सनत्कुमाररूपेण । आवेशपक्षेऽप्येतदुपपद्यते । मूर्तिचतुष्टये एक एव भगवानाविष्ट इति । अवतारप्रयोजनमाह—**प्राक्कल्पसम्प्लवविनष्टमिति । यत्रः साङ्ख्यं च योगश्च ज्ञानं त्वत्र निरूप्यते** । पूर्वकल्पे आत्मज्ञानस्य सम्प्लवो नाशो जातः । तत्पुनरिह अस्मिन्कल्पे सम्यग्जगाद । अनुभवपर्यन्तं यथा भवति । येनैव सनकाद्युक्तेन मुनयो मननशीलाः श्रौतप्रकारेण मननमपि कुर्वाणा न तेन मार्गेणाऽऽत्मानं दृष्टवन्तः, किन्तु सनकोक्तमार्गेण । यस्मादात्मानमेवाऽचक्षत दृष्टवन्तः । **आत्मन्निति** द्वितीयाया लोपः । सप्तम्या वा । तदा स्वात्मनि भगवन्तं दृष्टवन्त इत्यर्थः । साधारणा भक्तिमार्गाधिकारिणो "**ये ये हताश्चक्रधरेण राजन्नि**"ति न्यायेनाऽनेन मार्गेण मुक्ता भवन्तीत्युक्तं भवति । ते हि पूर्वमपि भगवद्वैकुण्ठस्थितियोग्यास्तस्मात्प्रच्युता इति पुनस्तत्र नयनम् । अनेन स्मरणार्थोऽपि कथितः ॥ ५ ॥

"**प्रसन्नवक्त्रमि**"ति भगवद्धर्मसुतत्त्वा निरूपयति—**धर्मस्येति** द्वाभ्याम् । प्रसाद-वक्त्रधर्मभेदात् । कीदृशो हि भगवत्प्रसादः कीदृशं वक्त्रमिति तदुभयमत्र ज्ञातं भविष्यति—

**धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां नारायणो नर इति स्वतपःप्रभावः ।**
**दृष्ट्वाऽऽत्मनो भगवतो नियमावलोपं देव्यस्त्वनङ्गपृतना घटितुं न शेकुः ॥६॥**

भगवतः प्रसादो मुखं च धर्म एव प्रकटीभवति । तत्रापि पितुरंशः प्रसादो यज्ञांशो मुखम् । तदाह । **धर्मस्य दक्षदुहितरि** मूर्तिनाम्न्यामवतीर्ण इति । दक्षो हि यज्ञे । तत्र हि या क्रियाशक्तिः श्रद्धादिभ्योऽतिरिक्ता साक्षान्मूर्तिभूता सा मूर्तिः । तत्र तस्य रूपद्वयमाह—**नारायणो नर इति** । "**आपो नारा**" इति व्युत्पत्त्या भगवन्मुखं जले प्रतिष्ठितम् । नर इति सूत्रात्मा जीवो जलपिता । एकस्यैव नामद्वयं जलाधारत्वेन जलजनकत्वेन च । मुखं च तद्विधम् । अतो जलाधारत्वेन सर्वरसग्रहणं सूत्रत्वेन च वाग्व्यवहारः । एवमुभयात्मकं वक्त्रं नरनारायणरूपेण प्रकटं जातम् । वक्त्रस्यैवं प्रकटने यो गुणस्तमाह—**स्वतपःप्रभाव इति** । तपो हि वक्त्रस्यैव तप इति । "**तपो नाऽनशनात्परमि**"ति श्रुतेः । अतोऽवयवान्तरेण कृतं तपो नोत्कृष्टं भवति । वाक्कृतमनशनकृतं च तपः । तस्य वक्त्रस्यानुभावो यत्र । एको गुणस्तपः । द्वितीयस्तत्संसर्गी अनुभावः । स च सहजदोषाभावरूपः । तपसो हि सहभावी औत्पत्तिको दोषः क्रोधः । तस्याऽत्यन्ताभावसाहित्यं तपसोऽनुभावः ।

१ तर्हि यद्यपीति ख. २ सुदर्शनः इति ख. ३ कार्यत्वेनेति ख. कार्यंत इति ग. ४ तपसो वैलक्षण्यमिति ख. तपस्तोपि ग. ५ षन दान इति क. षण् दान इति ख. ग. ६ सम्प्लवे इति क. ख. ७ तद्विविधं चेति ख. ८ संसर्गेणानुभाव इति ख.



सकामत्वं बाह्यो दोषः । तदभावस्तु गुण एव नत्वनुभावः । तत्र हि प्रसादो दोषकर्तृषु वरदानम् । तदेकादशस्कन्धे विस्तरेण वक्ष्यते । इह दोषाभावमात्रमाह । तत्र प्रथमं बाह्यदोषाभावं वदति—**दृष्ट्वाऽऽत्मन इति** । अयं हि भगवानात्मा । न हि स्वस्य स्वदर्शने कामो भवति । अत आत्मन एव भगवतः सकाशान्नियमस्य स्वसहजधर्मस्य अवलोपं दृष्ट्वा । विपरीततया नाशोऽवलोपः । आत्मनः सकाशादेव सहजबन्धकान्यपि कर्माणि मोक्षप्रदानि भवन्ति । तथाप्येता अप्सरसो भगवत्सान्निध्यात्स्वात्मन्येव चरितदोषा मोहिकाः क्रुद्धाश्च जाताः । अत एतासां संकल्पो नष्टः । नत्वेता अप्रयोजकाः किन्तु देव्यः देवतारूपा अपि एता व्रतत्यागिन्यो जाताः । दूरे एतासामुपासनया व्रतसिद्धिः । एतासां क्रियाशक्तिमाह—**अनङ्गपृतना इति** । तुशब्देन स्त्रियोऽबला अप्रयोजका इति पक्षो निराकृतः । अङ्गरहितस्य पृतनाः सेनाः । न तस्य शरीरनाशाद्भिष्यति । अमूर्तप्रकारेण च घातयन्ति । तादृशो अपि संबन्धपात्रमपि प्राप्तुं न शेकुः । स्वीकृतो भगवति न कोऽपि क्षोभो जात इत्यर्थः ॥ ६ ॥

एवं बाह्यदोषं परिहृत्य आन्तरिकं दोषं कैमुतिकन्यायेन निराकरोति—

**कामं दहन्ति कृतिनो ननु रोषदृष्ट्या रोषं दहन्तमुत ते न दहन्त्यसह्यम् ।**
**सोऽयं यदन्तरमलं प्रविशन्बिभेति कामः कथं नु पुनरस्य मनः श्रयेत ॥ ७ ॥**

**कामं दहन्तीति** । एताः स्त्रियो देहं वा पातयामः कार्यं वा साधयाम इति समागताः । आद्ये अनङ्गपृतनात्वं सेत्स्यति । द्वितीये पृतनात्वमिति । तदुभयमपि न जातम् । तत्राऽऽश्चर्ये जाते ब्रह्मा स्वयं समाधत्ते । मया एवं ज्ञायते । कामादीनां जेतारो नाऽन्ये । किन्तु कामादय एव । तत्र यथा यथा तेषु कनिष्ठास्तथा तथा पूर्वजेतारः । अत एव ये कामं दहन्ति ते रोषदृष्ट्या दहन्ति । रोषेणैव तु कामो दह्यते नतु तैः । कृतिन इति साभिप्रायं वचनम् । कामस्य स्थानमदत्त्वा क्रोधस्य हि स्थानं दत्तवन्तः । नन्विति सम्बोधनं सम्मत्यर्थम् । रोषसहितया दृष्ट्या । कामस्तु हृदयं व्याप्नोति । क्रोधस्तु ज्ञानम् । अतो ज्ञाननाशे महती क्षतिरिति तेषां न कृतित्वम् । उभयोः परलोकनाशकत्वे तुल्येऽपि क्रोधस्त्वात्मानं दहति । अतो दाहकं न दहन्त्यदाहकं दहन्तीत्यतिभ्रान्तास्ते । दाहोऽपि न स्वल्पः । स कामविजयी क्रोधो यस्य अन्तरं निविशन् बिभेति । अहमपि कामवदशरीरो भविष्यामीति । तत्र कामः कथं तस्य हृदयं श्रयेत । क्रोधस्तु मलयुक्ते प्रविशति । भगवतस्त्वन्तरमलम् । अत एव निविशन् बिभेति । स हि मलक्षणमपि मलं नाशयिष्यतीति । अनेन कामक्रोधकृताः पदार्था न भगवन्मुखं प्रविशन्ति । न प्रसादहेतवो भवन्तीति निरूपितम् । किं बहुना । यावानर्थो नरनारायणयोस्तावान्मुखप्रसादयोरिति ज्ञातव्यम् ॥ ७ ॥

एवं प्रसन्नवक्त्रे निरूप्य नलिनायतेक्षणे निरूपयति—

**विद्धं सपत्न्युदितपत्रिभिरन्ति राज्ञो बालोऽपि सन्नुपगतस्तपसे वनानि ।**
**तस्मा अदाद्ध्रुवगतिं गृणते प्रसन्नो दिव्याः स्तुवन्ति मुनयो यदुपर्यधस्तात् ॥८॥**

१ न स्वस्येति ख. न सशरीर ग. २ तादृश्यपीति ख. ग. ३ आन्तरिकरोषमिति. क. ख. ४ प्रविशन् ख. ५ रोषेणत्विति ख. ६ महाक्षतिरिति ख. ७ त्वन्तरममलमिति ख. ग. ८ वक्त्रमिति ख. ग. ९ नलेक्षणमिति ख. ग.

**विद्ध इति** । नलिनवदायते ईक्षणे यस्येति सदृष्टान्तं दीर्घत्वं नेत्रे च निरूपणीये । तत्र वैकुण्ठस्थितो भगवान्नेत्रम् । तस्य दीर्घता ज्योतिश्चक्रम् । स हि तत्र स्थितः सर्वान् पश्यति । तस्य हि नलिनवदायतत्वं विचारणीयम् । तद्धि विकसितमेवाऽऽयतं भवति । तत्र विकासस्तपस इव । यथा जलस्थितमेव कमलं सूर्येण विकासमेति । तथोत्तमाधिकारिणि वन एव स्थितं भगवन्नेत्रं विकासयति । तदा हि स पश्यतीत्यर्थः । तत्राऽपि भगवदिच्छया तथाभूतं सकाममेव बहिः पश्यति । कामोऽपि क्लेशकृतश्चेत्तपोऽपि जगत्प्रकाशकं चेत्तदैवंरूपतेति ध्रुवकथा निरूप्यते—**सपत्न्युदितपत्त्रिभिरिति** तत्राऽऽसक्ष्यवेदना निरूपिता । मातुः सपत्नी । तया राज्ञः समीपे वाग्लक्षणा बाणाः प्रयुक्ताः "**न वत्स नृपतेर्धिष्ण्यमि**"त्यादयः । तैश्चाऽयं विद्धः । मर्मभेदिनो हि बाणा विध्यन्ति । पत्त्रिपदाच्च अप्रतीकारा उड्डीय विध्यन्तीति बोधितम् । अनेन विवेकादिना तस्य प्रतीकाराभाव उक्तः । बाह्योपायाभावमाह—**राज्ञः अन्तीति** । अतः परं राजाऽपि न वक्तव्यः । वेधस्य तेनैव दृष्टत्वात् । अनेन दीनत्वमुक्तम् । इदं हि भगवद्दर्शने बीजम् । द्वितीयं बीजमाह—**बाल इति** । तपसे तपःकरणार्थं वनान्युपगत इत्यधिकारः । **वनानीति** बहुवचनं फलसिद्ध्यर्थं सर्वेष्वेव वनेषु तपः करिष्यामीति दृढप्रतिज्ञाज्ञापनार्थम् । **तस्मा अदादिति** दृष्टिविकासः । **ध्रुवगतिमिति** फलस्य निश्चलता । **गृणते प्रसन्न इति** किरणानामन्तःप्रवेशनम् । स हि तपसा न सन्तुष्टः किन्तु बालः स्तोत्रं करोतीति । अन्यथा "**निवर्त्तयिष्ये प्रतियात स्वधाम**" इति वचनमनुपपन्नं स्यात् । न हि भगवानन्यथा निवर्त्तयितुं न शक्नोतीति किन्तु शक्त एव । स्तोत्रेण सन्तुष्टो बालाय ध्रुवगतिं दत्तवान् । ननु स्तोत्रस्य ध्रुवगतेश्च कः संबन्धः । तपस्तु भोगफलत्वात्तथा भवितुमप्यर्हतीत्याशङ्क्याऽऽह—**दिव्याः स्तुवन्तीति** । स हि निन्दावचनेन खिन्नस्तथा कृतवानिति सर्वदा स्तोत्रस्थानं दत्तवान् । यत्स्थानं दिव्याः सप्तर्षयोऽपि उपरिस्थितं अधःस्थिताः सन्तः स्तुवन्ति । यदिदं स्थानं प्रसादेन न प्राप्तं स्यात् । तपसा निर्बन्धेन वा प्राप्तं स्यात्तदा भगवदीयैः स्तोत्रं न क्रियेत । तत्रापि मुनयः स्तुवन्ति । तत्राऽप्युपरिस्थितं स्वयं चाधःस्थिताः ईर्ष्यामेव कर्तुं योग्याः । प्रसादकरण एव ध्रुवस्य पश्चात्तापोऽपि ॥ ८ ॥

एवं नलिनायतेक्षणं निरूप्य कदम्बकिञ्जल्कपिशङ्गवाससं निरूपयति—

**यद्वेनमुत्पथगतं द्विजवाक्यवज्रविप्लुष्टपौरुषभगं निरये पतन्तम् ।**
**त्रात्वार्थितो जगति पुत्रपदं च लेभे दुग्धा वसूनि वसुधा सकलानि येन ॥९॥**

अत्र हि पीताम्बरं कदम्बतुल्यता च निरूपणीया । कदम्बस्य वर्षाकाले हि किञ्जल्का भवन्ति । वर्षा च भूमिसन्तापे । यथा संतप्ते वृष्टिर्भवति । यथा वृष्टिः सर्वसन्तापहारिका । एवं पृथुकृतो दोहः सर्वसन्तापहारकः । पृथुश्च छन्दोमयः सर्ववेदार्थप्रतिपादकः पीताम्बररूपः । राजा हि स्वभावतो भूमेराच्छादको भवति । तदाज्ञया भूमिर्गुप्ता तिष्ठति । किन्त्वयं यथास्थितभूमिगोप्ता न भवतीति भूमेर्विच्छायकरणात्पीतत्वम् । अयं पृथुः पुत्रपदं लेभे । "**पुन्नाम्नो नरकात्त्रायते पितरं सुत**" इति पुत्रशब्दो व्युत्पाद्यते । तत्रान्ये नरकात्त्रायन्ते न वेति सन्देहो भवत्यदृष्टत्वात् । अयं तु नरकात्त्रायत एव । नरकाणां पायुस्थानत्वात्तदाच्छादकत्वेनैवास्य पीताम्बरत्वम् । रक्षणं हि प्राप्ते दुःखे । तदर्थमस्य पितुर्दुः-

१ स्तपस एवेति ख. ग. २ रित्यसक्ष्येति ख. ग. ३ विवेकिनेति ख. ४ निदानमिति ग. ५ कारण एवेति क. ग. कारणमेवेति ख. ६ क्षणत्वमिति ख. ७ अयमित्यारभ्य पीताम्बरत्वमित्यन्तं नास्ति क. घ. ८ पुत्रो हि पुम्नात्र इति क. ग. ९ अयंतु त्रायत एवेति क.



खप्राप्तिमाह—यद्वेनमुत्पथगतं अन्यायिनां मार्गे प्रवृत्तम् । अत एव ब्राह्मणानामपकारित्वात्तद्वाक्यवज्रेण नितरां प्लुष्टं पौरुषं भाग्यं च यस्य । अतो भाग्येन पौरुषेण चाऽनिस्तारः । नवा प्रजापालनलक्षणधर्मेण । उत्पथगतत्वात् । तस्माद्गुणाभावाद्दोषस्य च विद्यमानत्वान्नरके पतति । तस्मिन्समये तस्य करान्मथनेन निर्गतस्तं पालितवान् । तैरेव ब्राह्मणैरभ्यर्थितः । अत एव पुत्रो जातः । अवतारचरित्रमाह । दुग्धा वसूनि । सर्ववसूनि दुग्धा । वसूनि वस्तूनि । वसुधा पृथिवी । अनेन वसूनि वसुधा दुग्धा । यद्यप्यन्यानि वस्तून्यन्यैरेव दुग्धानि तथाप्येतन्मूलकत्वात् **सकलानि येनेत्युक्तम्** । अनेन वेदरूपस्य पीताम्बरस्यैवं सर्वकामपूरकत्वं नरकात्पालकत्वं च निरूपितम् । पीतत्वेन च सर्वदुःखनिवृत्तिः प्रासङ्गिकी । प्रजननगोपनं तु स्वभावादेव । तस्य रेखाकारत्वं सर्वगुणसद्भावात् ॥ ९ ॥

एवं पीताम्बरत्वं निरूप्य लसन्महारत्नहिरण्मयाङ्गदत्वं निरूपयति—

**नाभेरसावृषभ आस सुदेविसूनुर्यो वै चचार समदृग्जडयोगचर्याम् ।**
**यत्पारमहंस्यमृषयः पदमामनन्ति स्वस्थः प्रशान्तकरणः परिमुक्तसङ्गः ॥ १० ॥**

**नाभेरसाविति** । नाभिर्ब्राह्मणान्प्रार्थयित्वा यज्ञे आविर्भूतं भगवन्तं प्रार्थयित्वा भगवन्तं पुत्रत्वेन प्रार्थितवान् । नाभेर्भार्या सुदेविसंज्ञा तस्याः सूनुः । **असाविति** बुद्धिस्थः । **ऋषभ** इति नाम । अवतारस्य प्रयोजनम् **यो वै चचारेति** जडानां संबन्धिनी योगचर्या लोके प्रदर्शिता । **समदृगिति** ब्रह्मदृष्टिः । तस्या जडयोगचर्यायाः सद्ब्राह्यं रूपमाह । यत्पारमहंस्यं पदमामनन्ति । तस्य मार्गस्य निर्वाहकमवश्यकसाधनान्युपदिशन् स्वयं तादृशो जात इत्याह । प्रथमं परिमुक्तसङ्गः सर्वसङ्गपरित्यागं कृतवान् । तेन प्रशान्तकरणः प्रशान्तानि करणानि इन्द्रियाणि यस्य । तेन स्वस्थः स्वरूपस्थित इति दोषनिवृत्तिः कथिता । गुणस्तु समदृगिति सर्वत्र गुणदोषदृग्रहितः । सर्वभूतेषु वासुदेवदृष्टिर्वा । देवताक्रियामध्ये ह्यङ्गदनिवेशनम् । तत्रापि देवताभागे । अयं च ब्रह्मवित् कर्माणि त्यक्तवान् । हिरण्मयत्वं नाभिपुत्रत्वात् । महारत्नानि तु तत्पुत्राः । स हि ज्ञानकर्ममध्ये स्थितः । अतोऽङ्गदत्वम् । स्वस्थत्वादयो वा रत्नानि । समदृक् सुवर्णम् । जडयोगचर्या आकृतिः । इदं हि परमहंसानां पदम् । रत्नानि तु ते । अत ऋषभस्य यत्किञ्चित्कार्यं तदेवाऽङ्गदस्येति ज्ञातव्यम् । अध्यायत्रयेण च तच्चरित्रं वक्ष्यते । तत्र शोभा प्रथमाध्यायार्थः । महारत्नानि तद्वाक्यानि द्वितीयाध्यायार्थः । हिरण्मयत्वं ब्रह्मभावस्तृतीयाध्यायार्थः ॥ १० ॥

एवमङ्गदं निरूप्य स्फुरन्महारत्नकिरीटकुण्डलं निरूपयति—

**सत्रे समास भगवान् हयशीर्षनामा साक्षात्स यज्ञपुरुषस्तपनीयवर्णः ।**
**छन्दोमयो मखमयोऽखिलदेवतात्मा वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः ॥११॥**

**सत्रे समासेति** । हयग्रीवो हि किरीटकुण्डलात्मकः । स ह्युभयात्मको भवति । ब्रह्मविद्याप्रवर्त्तकत्वात् । किरीटं हयशिरः । कुण्डले देहः प्रवृत्तिनिवृत्तिरूपः । साङ्ख्ययोगयोराधारभूतो नृदेहः । स हि कर्मणि प्रादुर्भूतोऽभिसाध्ये । कुण्डलादिकमपि तथा । तदेवाऽऽह रूपत्रयम् ।

१ चकारो नास्ति ख. २ पौरुषेण वा न निस्तारः ख. ग. ३ पालनेरक्षणेति ख. ग. ४ तस्या रेखेति ख. ग.

छन्दोमयो मखमय इति कुण्डले । अखिलदेवतात्मा मुकुटः । अखिला न न्यूना ये देवा ब्रह्मादयस्ते भगवन्मस्तके पारमेष्ठ्ये स्थिताः । यद्धयग्रीवेण क्रियंते तत्सर्वं कुण्डलमुकुटकार्यम् । तस्य स्वरूपं ब्रह्मा निरूपयति । मम सत्रे यागे । आस आविर्भूतः । स प्रसिद्धो हयग्रीवो भगवानेव । दैत्यहयग्रीवनिराकरणार्थं भगवानिति । किंपुरुषादिरूपव्युदासार्थं च । नह्यन्यः सत्रे आविर्भावमर्हति । यतो हयशीर्ष एव साक्षाद्यज्ञपुरुषः सर्वयज्ञाधिष्ठात्री देवता । यतस्तपनीयवर्णः तपनीयवद्वर्णो यस्य । तपनीयं सुवर्णम् । यज्ञोऽप्यग्निसाध्य इति तपनीयो वर्णो यस्य । छन्दोमयो वेदात्मकः । मखमयो यज्ञात्मकः । अखिलदेवतात्मा । प्रमाणप्रमेयसाधनफलभूत इत्यर्थः । अखिलदेवताः साधनम् । आत्मा फलमिति । अवतारप्रयोजनमाह—वाचो बभूवुरिति । उशतीर्वाचो वेदलक्षणाः । अस्य नस्तो नासिकातः । श्वसतः श्वासं विमुञ्चतः । अस्य भगवतो जाताः । स्फुरन्महारत्नान्येव उशतीर्वाचः ॥ ११ ॥

एवं मुकुटकुण्डले निरूप्य उन्निद्रहृत्पङ्कजकर्णिकालये योगेश्वरास्थापितपादपल्लवं रूपं निरूपयति—

**मत्स्यो युगान्तसमये मनुनोपलब्धः क्षोणीमयो निखिलजीवनिकायकेतः ।**
**विस्रंसितानुरुभये सलिले मुखान्मे आदाय तत्र विजहार ह वेदमार्गान् ॥१२॥**

**मत्स्य इति** । मत्स्यो हि पल्लवरूपः । सत्यव्रतादीनां शिष्यत्वाद्गुरोस्तस्य भगवतः पादपल्लवं ज्ञानात्मकं हृदये स्थापितमेव । युगान्तसमये प्रलये । मनुना सत्यव्रतेन द्रविडेश्वरेण । मनुनेति भाविनी संज्ञा । तत्कृपयैव मनुत्वस्य भावित्वात् । तेन लब्धः । प्रथमं तदञ्जलिजले प्रादुर्भूतः । तस्य मत्स्यस्य उत्पत्तेरनिरूपितत्वाद्दृष्ट इत्युक्तम् । तस्य पादत्वार्थमाह—**क्षोणीमय इति** । स हि पृथिवीमयः । अत एव आध्यात्मिकीं पृथिवीं वहति । नौकारूपा हि पृथिवी तारिका । अत एव चरणः पोतः । किञ्च । भगवच्चरणो हि सर्वेषां भक्तानामाश्रयः । तदाह—**निखिलजीवनिकायकेत इति** । निखिला ये जीवाः संपूर्णा जीवा न विषयैः खण्डिताः तेषां निकायः समूहस्तस्य केतः स्थानम् । सर्वाणि बीजानि ऋषयश्च तदा नौकायां स्थिता इति । एतदेव हि रूपं चरणस्य । अत एव संसारसमुद्रतरणे पोतः । तस्याऽवतारचरित्रमाह—उरुभये विस्रंसितान् ब्रह्मणो भयात् मुखाद्विगलितान् वेदान् हयग्रीवो नाम दानवेन्द्रः अन्तिकेऽहरत् । तं हत्वा तत आदाय तत्र जले विजहार ह । **वेदमार्गानिति** । अन्येऽपि ज्ञानभक्तिप्रतिपादका वेदास्तत एवोद्धताः । **हेति** प्रसिद्धे । आश्चर्ये वा । अत एव शिष्याणां हृदयानि वेदमार्गैः कृत्वा विकसितानि भवन्ति । यज्ञोपयोगिवेदा हयग्रीवेणोद्धृताः, सर्वोपयोगिनस्तु मत्स्येनेति विशेषः ॥ १२ ॥

श्रीलक्ष्मणं निरूपयति—

**क्षीरोदधावमरदानवयूथपानामुन्मथ्नताममृतलब्धय आदिदेवः ।**
**पृष्ठेन कच्छपवपुर्विदधार गोत्रं निद्राक्षणोऽद्रिपरिवर्त्तकषाणकण्डूः ॥ १३ ॥**

**क्षीरोदधाविति** । कूर्मेण हि सुधया सह लक्ष्मीर्निष्पादिता । यावत्कार्यं कूर्मस्य तावज्जीवत्त्वस्य । यथा ब्राह्मणपादस्य स्पर्शस्तथा मन्दरस्य । यथा सर्वैर्ब्राह्मणैर्विचार्य स निरूपितस्तथा सर्वैर्देवदानवैर्मन्दरः कूर्मे निरूपितः । यथा घर्षणं तथा शास्त्रार्थनिर्णयः । क्षीरोदधौ ये अमरदानवानां यूथपा मथनं कुर्वन्ति तेषामुन्मथ्नताममृतप्राप्त्यर्थं आदिदेवः आधिदैविको देवो देवपक्षपाती कच्छपवपुः कूर्मावतारो भगवान् पृष्ठेन गोत्रं मन्दरं दधार । ननु किमिति मन्दरं स्थूलं भाररूपं धृतवान् ? तत्राऽऽह । निद्राक्षणः निद्रायां क्षणो यस्य । निद्रार्थं धृतवानित्यर्थः । ननु विपरीतमिदमुच्यते । निद्रालुर्हि सर्वमेव भारं दूरीकरोति ? तत्राऽऽह—**अद्रिपरिवर्त्तकषाणकण्डूरिति** । अद्रेः परिवर्त्तनेन कषाणा घर्षिता कण्डूर्यस्य । अतो घर्षणार्थमद्रिं धृतवानित्यर्थः । घर्षणेन हि सुखे जाते निद्रा भवति । यथा पर्वतधारणं सर्वेषां देवानाममृतपानसिद्ध्यर्थम् । एवं सर्वेषां भ्रान्तानां प्राणिनां सर्वपुरुषार्थसिद्ध्यर्थं परीक्षकब्राह्मणचरणधारणम् ॥ १३ ॥

कौस्तुभरत्नकन्धरं निरूपयति—

**त्रैविष्टपोरुभयहासनृसिंहरूपं कृत्वा भ्रमद्भ्रुकुटिदंष्ट्रकरालवक्त्रम् ।**
**दैत्येन्द्रमाशु गदयाऽभिपतन्तमाराद्रूरौ निपात्य विददार नखैः स्फुरन्तम् ॥१४॥**

**त्रैविष्टपोरुभयहेति** । नृसिंहः कौस्तुभरत्नकन्धरो भवति । यथा कौस्तुभस्य कण्ठे स्थापितस्य रश्मयः स्कन्धे निर्गताः केसरप्राया भवन्ति । एवमेव हि नृसिंहो भगवत्कौस्तुभरूपः । कौस्तुभं यद्भगवान्कण्ठे बिभर्ति तद्दैत्यानां वधार्थं भक्तजनोद्धारार्थं । सर्वे हि भगवदीया जीवाः कौस्तुभरूपम् । **"चैत्यस्य तत्त्वममलं मणिमस्य कण्ठ"** इति वाक्यात् । अतो भगवांस्तांश्चेद्धृदये न स्थापयेत्तदा मृत्युसाधनैः कर्मभिर्मृत्युग्रस्ता एव भवेयुः । अतो मृत्युगजनिवारको नृसिंहः प्रह्लादरक्षकस्तत्प्रतिपक्षहिरण्यकशिपुघाती । त्रैविष्टपा देवास्तेषां यदुरुभयं तद्धन्तीति तथा । स भगवान्नृसिंहरूपं कृतवान् । ग्रामारण्यवासिनो हि द्विविधा भक्ताः । उभयेषामुद्धरणार्थमुभयरूपम् । कौस्तुभोऽपि तथा । भ्रमयुक्ते ये भृकुटी तत्सहिता दंष्ट्राः ताभिः करालं वक्त्रं यस्य । भृकुटिपरिभ्रमणं ग्रासार्थमागतस्य कालस्य वक्रीकरणम् । तत्सहिता यदि दंष्ट्रा । यमोऽपि पराभूतः । अत एव करालं वक्त्रम् । अनेन ये केचिद्भक्तप्रतिपक्षास्ते तादृशं मुखं दृष्ट्वा सर्वथा न स्वकार्यं करिष्यन्तीति सूचितम् । अत एव भक्तप्रतिपक्षं दैत्येन्द्रम् । आशु शीघ्रं अन्यस्य सावधानताभावाय आभिमुख्येन पतन्तम् । गदया प्रहारसमर्थया । आराद्दूरादेव । ऊरौ निपात्य । स्फुरन्तं तं नखैर्विददार । नखैर्विदारणं मुक्त्यभावाय । ऊरौ निपातनं कामोद्भवाय । एवमेव हि कौस्तुभो भक्तप्रतिपक्षं संसारे कामे वा योजयति । स्फुरन्तमितस्ततः सर्पन्तम् ॥ १४ ॥

अम्लानलक्ष्म्या वनमालयाञ्चितं निरूपयति—**अन्तःसरस्युरुबलेनेति** द्वाभ्याम् ।

**अन्तःसरस्युरुबलेन पदे गृहीतो ग्राहेण यूथपतिरम्बुजहस्त आर्त्तः ।**
**आहेदमादिपुरुषाऽखिललोकनाथ तीर्थश्रवः श्रवणमङ्गलनामधेय ॥ १५ ॥**
**श्रुत्वा हरिस्तमरणार्थिनमप्रमेयश्चक्रायुधः पतगराजभुजाधिरूढः ।**
**चक्रेण नक्रवदनं परिपाट्य तस्माद्धस्ते प्रगृह्य भगवान्कृपयोज्जहार ॥ १६ ॥**

---

१ मुकुटमिति ख. २ क्रियेतेति ख. ३ पुरुषादिव्युदासार्थमिति ख. ४ तपनीयवर्ण इति ख.

१ देव इति नास्ति ख. २ कच्छपरूप इति ख. ३ दूरीकरोतीति इति क. घ., ४ तैः करालमिति क. घ. ५ केचिद्भगवत्प्रतीति ख. ६ भक्तिप्रतीति क.

**यो हरिः स वनमाला** । भक्ता हि गजेन्द्रमोक्षणरूपां भगवत्कीर्त्तिं श्रुत्वा सर्वथा प्रवर्त्तन्ते । वनमाला च कीर्त्तिमयी[1] । अम्लाना हि तस्य कान्तिः । न तत्र देवादीनां सहायो वरो वा । गजेन्द्रः केवलं भगवतैव मोचितः । न वा देवादीनां प्रार्थना । न वा तस्य लौकिका गुणा भगवत्प्रीतियोग्याः । तस्मात्केवलकृपयैव मोचित इत्यम्लानत्वम् । विलम्बासहिष्णुत्वाय विशेषणानि । अन्तःसरसि सरोमध्ये । उरुबलेन । देवलोच्छापेन[2] तादृशरूपस्य देवलकृपयैव महाबलत्वम् । **पदे गृहीत इति** क्रियाशक्तिः कुण्ठिता । ग्राहपदेन[3] चाऽनिवार्यप्रतिबन्धकत्वम् । **यूथपतिरिति** तस्मिन्मृते सर्वे एव मरिष्यन्तीति । अन्येषामसमर्थता वा । **अम्बुजहस्त इति** पूर्वक्रूरभावो निवारितः । भगवदाभिमुख्यार्थं च । भगवत्पूजार्थं वा अम्बुजग्रहणम् । आर्त्तत्वेन सर्वसाधनाभावः । नह्यन्ये तादृशे कृपां कुर्वन्ति । इदं चाऽऽह—**हे आदिपुरुष** । अनेन तवाऽऽवश्यंपालनीयोऽहम्[4] । मूलपुरुषत्वात् । अन्यो वा न वक्तव्यः । **अखिललोकनाथेति** सर्वलोकपालने त्वमेवाऽधिकृतः । अतो नाऽन्यो वक्तव्योऽपि । ननु तव दुःखानुभवहेतुप्रत्यग्रपापस्य विद्यमानत्वान्मया किं कर्त्तव्यमित्याशङ्कायामाह—**हे तीर्थश्रवः** । तीर्थरूपं श्रवः कीर्त्तिर्यस्य । तव कीर्त्तिस्मरणेनैव वयं धौतपापाः । ननु केवलमोचने न कश्चित्पुरुषार्थः । किन्तु वैकुण्ठयोग्यो देहः सम्पादनीयः । तदर्थं च शुभाऽदृष्टाभावात्किं मया विधेयमित्याशङ्क्याऽऽह—**हे श्रवणमङ्गलनामधेयेति** । श्रवणमात्रेणैव मङ्गलं सर्वशुभदायि नामधेयं यस्य । अनेन त्वन्नाममात्रेणैव सर्वशुभहेतु भाग्यं सिद्धम् । एवं पदचतुष्टये निरूपिते वैकुण्ठस्थितो भगवान् श्रुत्वा दूरादेव तं शरणार्थिनं ज्ञात्वा । केनाऽपि न ज्ञातः अयं गजेन्द्रोद्धारार्थं गच्छतीति । तथा सति कश्चिद्देवोऽन्यो वा स्वप्रतिष्ठार्थं हस्ते तं धृत्वा बहिः क्षिपेत् ? अत आह—**अप्रमेय इति** । **चक्रायुध इति** मुक्तिदानार्थम् । पतगराजभुजादधिरूढ उत्तीर्णः । अनेन तस्य कालग्रासानन्तरं मुक्तिदानं निवारितम् । न हि गजेन्द्रो देहत्यागं ज्ञातवान् । **"कालात्मकः सोऽथ सुपर्ण"** इति वाक्याद्गरुडस्य कालत्वम् । आगतस्य कृत्यमाह—**चक्रेण नक्रवदनमिति** । प्रतिबन्धकाभावं कृत्वेत्यर्थः । ननु तेन सहोद्धरणम्[5] । तस्मात्सङ्कटात् । हस्ते शुण्डादण्डे प्रकर्षेण गृहीत्वा । स्पर्शमात्रेणैव चतुर्भुजं रूपं संपाद्य तं गृहीत्वेत्यर्थः । भगवतोद्धृतत्वाद्ब्राह्मणानां शापलक्षणः प्रतिबन्धकोऽकिञ्चित्करः । **कृपयोज्जहारेति** जीवस्य साधनाभावो निरूपितः । परदुःखप्रहाणेच्छा कृपा । एवं हि भगवत्कीर्त्तिर्भक्तानुद्धरति । इदमेव चरित्रमुत्तरत्र भक्तिहेतुत्वेन विचारयिष्यते प्रह्लादवाक्येषु । ततः कीर्त्त्यैव प्रेमेति सिद्धं भविष्यति ॥ १५ ॥ १६ ॥

एवं वनमालां निरूप्य तेनाऽञ्चितत्वं च प्रेमजनकत्वेन सूचयित्वा विभूषितं मेखलयेति निरूपयति—**ज्यायान्गुणैरिति** द्वाभ्याम् ।

**ज्यायान् गुणैरवरजोऽप्यदितेः सुतानां लोकान् विचक्रम इमान् यदथाधियज्ञः ।**
**क्ष्मां वामनेन जगृहे त्रिपदच्छलेन याच्ञामृते पथि चरन् विभुभिर्न चाल्यः १७**

वामनो हि भगवतो मेखलारूपः । मेखला हि कटिस्थानबन्धिका भवति । **"स जघनादसुरानसृजत"**ति श्रुते**"र्जघने आत्ममुख्यानि"**ति च वाक्यात् । दैत्यबन्धकत्वेन मायामध्यन्तः पातयित्वा शोभां जनयतीत्याकुञ्चनप्रसारणधर्मवत्त्वाच्च वामनः कटिसूत्रमेव । अत एव गुणप्राधान्येन निरूपणम् । अदितेः सुतानां मध्ये अवरजोऽपि । अदितिर्हि भूमिरूपा । यद्यपि सर्वरूपत्वेन निरूप्यते तथापि तस्याः स्तुतिपरत्वादियं वा अदितिरित्येव मुख्या । तस्याः सुतास्तत्कीर्तिं रक्षां वा जनयन्ति । अतो रक्षाकीर्त्तिरूपं पीताम्बरं भवति । तां च दृढां करोति मेखला । गुणैर्ज्यायान् पुष्टः स्थूलो महानित्यर्थः । तस्य गुणानेवाह । गुणा ह्युत्कर्षाधायकाः । भगवतो जगत्कर्तुः सर्वप्रेरकस्य सर्वनियन्तुः कालचेष्टारूपस्य के वा ते धर्मा ये उत्कर्षमादधतीत्याशङ्क्य वामनस्य गुणास्त्वया भवन्तीति मेखलागुणप्रस्तावे तान्निरूपयति—**लोकान्विचक्रम इति** । भगवतो ब्रह्माण्डरूपस्य उरःकण्ठादिरूपेण उपरितनलोकानां निरूपणात् । तत्र स्वेनैवाऽऽक्रमणं न युक्तिसहितां बुद्धिमारोढुमर्हति । अतो भगवतोऽन्ये धर्मा बुद्ध्या परिकलितुं[2] शक्यन्ते । सर्वरूपेणैव भगवतः स्वाक्रमणं न बुद्धिगम्यमिति गुणत्वम् । बलिं प्रति पादस्याऽग्रे नयनप्रदर्शनं ममेच्छयैव भवन्तः स्वर्गादिलोकभोक्तारो जाताः । वस्तुतस्तु चरणावयवलोकभोक्तारः । तेषामुपर्याक्रमणं न नित्यम् । मेखला ह्युभयपरिच्छेदकर्त्री । **"ऊर्ध्वं वै पुरुषस्य नाभ्यै मेध्यमवाचीनममेध्यं यन्मध्यतः संनह्यति मेध्यं चैवाऽस्याऽमेध्यं च व्यावर्त्तयती"**ति श्रुतेर्मेखलायास्तदुभयपरिच्छेदकत्वम् । ततो दैत्यानां स्वर्गाऽऽक्रमणं न युक्तमिति व्यावर्त्तकेन व्यावृत्तिः क्रियते । अतो युक्त्या परमार्थतश्चाऽऽक्रमणं न संभावितम् । किञ्च । विशेषेण चङ्क्रमणं सुतरामसंभावितम् । विशेषो हि विक्रमणेन पततां लोकानां तेनैव स्तम्भनम् । पातिकैव क्रिया पालयन्ती पालयतीत्याश्चर्यम् । किञ्च । अतःपरमन्यो विशेष उच्यते भिन्नक्रमेणेत्याह—**अथेति** । लोकपरमार्थाभ्यां पूर्वमलौकिकं निरूपितम् । अधुना स्वयं यज्ञरूपो यज्ञस्थापनां कुर्वन् यज्ञविघ्नं करोतीति वेदेऽप्यलौकिकम् । तदाह—**यदथाधियज्ञ इति** । यस्मादयमधियज्ञः । एवं सर्वप्रकारेण बुद्ध्यगोचरत्वं विनिरूप्य रूपस्वभावविरुद्धं करोतीत्याह—**क्ष्मां वामनेन जगृहे त्रिपदच्छलेनेति** । वामनो हि स्वल्पामपि भूमिं देहेनाऽपि नाऽऽक्रमति । तेन सर्वभूमिग्रहणं सुतरामयुक्तम् । नमनेनैव हि मेखलया कटिराक्रम्यते । किञ्च । **त्रिपदच्छलेनेति** । न हि भगवतः पदत्रयमस्ति । छलं हि भ्रमजनकम् । मानं हि तत्र व्याप्तमेव तद्गृह्णाति । न हि भगवान् बुद्ध्या मानमुक्तवान् । चरणस्तु निष्काशितो न मानं भवति । अतो भगवता तृतीयः पादः कल्पनीय इति ज्ञातव्यम् । वामनवाक्यानुसन्धानेन तन्नामकपदैर्लोके अन्यथा प्रतीतिजनकैर्भूमियाचनं छलो भवति । **"माययेत्यसुरा"** इति तेषां मायारूपेणैव भगवान् भवतीति भगवता सत्यतया निरूपितमपि छलत्वेन पर्यवसितमिति तथोच्यते । एवं भगवतो महद्गुणान्विनिरूप्य तत्र जातं दोषं याचनलक्षणं निराकरोति—**याच्ञामृत इति** । याच्ञा हि द्विविधा । सेवककर्तृका प्रभुकर्तृका च । तत्र सेवककर्तृका प्रभोर्दोषावहा न प्रभुकर्तृका । वस्तुतस्तु इयं याच्ञा प्रभुकर्तृका । वस्तुतः प्रभोरपि धनं अन्येषु स्थापितं नीतिमार्गेण तस्य याचनमेवोचितम् । स्वेनैव तत्र स्थापितत्वात्पथि चरणम् । अनङ्गीकार एव हि बलाद्ग्रहणम् । न चाल्य इति स्थानान्न निष्कासनीयः । याच्ञां कृत्वा तु निष्कासनीयस्तदनङ्गीकारे । क्ष्मामिति भूमिमेव गृहीतवान् याच्ञयाऽपि । दैत्यानां हि तत्रोत्पन्नानां तत्स्वामित्वमेव । अतो हि बन्धनम् । अन्यथा पातालादिषु क्वचिदपि तत्स्वामित्वे ग्रहणं न स्यात् । अधरद्रव्य

---

१ गजेन्द्रे । केवलं इति क. ख. २ देवलशापेनेति शोधः क. ३ ग्राहबलेनेति ख. ४ ऽवश्यं पालनीय इति ख. ५ चक्रेणेतीति ख. ६ मित्याकाङ्क्षायामिति ख. ७ नन्वित्यारभ्य स्पर्शमात्रेणैवेत्यन्तं नास्ति ख.

१ बुद्धिसाध्या ख. २ परिकल्पितुमिति क. ख. ३ भ्रमनमिति ग. ४ नाभेर्मेध्यं ग. ५ न संभवतीति ख. ६ पालयन्तीति नास्ति ख. ७ न भगवानिति ख. ८ भगवतस्तृतीय ख. ९ वाक्यानुसंधानेनेति ख. १० ग्रहणमिति ख.

स्वाम्यं सर्वथा करिष्यत्येवेति बन्धनम् । अनेनाऽपि छलः समर्थितो भवति । एकस्यांऽशस्य याचनम् । अंशद्वयस्य त्याजनम् । त्रयाणां तु याचनं छलः । सन्नियोगशिष्टत्वात्त्रयाणां याचनम् । अन्यथा शेषाभ्यनुज्ञा स्यात् । क्रियाद्वयं वा आपद्येत । तस्मान्मेखलया भूमिग्रहणमुचितमेव ॥ १७ ॥

ननु भगवान् भक्तिमार्गविरुद्धं कथं कृतवान् । गुणा हि भक्तिजनकाः भक्तैरेव ग्राह्या आदरणीयाश्च । न च भगवान् भक्तिविरुद्धमपि करोतीति शास्त्रार्थो भवति । तस्मादस्य चरित्रस्य गुणत्वेऽपि न प्रकृतोपयोगिगुणत्वमित्याशङ्क्याऽऽह—

**नाऽर्थो बलेरयमुरुक्रमपादशौचमम्भः शिखाधृतवतो विबुधाधिपत्यम् ।**
**यो वै प्रतिश्रुतमृते न चिकीर्षदन्यदात्मानमङ्ग शिरसा हरयेऽभिमेने ॥ १८ ॥**

**नार्थो बलेरयमिति** । भक्तिविरोधस्तदाऽऽपतति यदि भक्तस्यानभिप्रेतः स्यात् । नहि मेखलया कटिबन्धनं कटिस्थानस्याऽनभिप्रेतं भवति । नहि भक्तस्य धनं भगवतोपभुज्यमानं तस्य दुःखाय भवति । तदीयस्य सर्वस्याऽपि तदर्थत्वात् । लोकप्रतीत्या तु यो विरोधः स गुण एव । भक्तैश्चेद्विरोधो मतः स्यात्तदापि परिहरणीयः । अभिमानवतामपि भक्तानामनभिप्रेतत्याजनं सुखकरमेव । तदाह । अस्य भक्तस्य बलेर्भगवत्पूजारूपस्य विबुधाधिपत्यम् अर्थः फलं पुरुषार्थो वा न भवति । पूजा ह्यसम्बद्धा न भगवत्प्रीतिं जनयतीति दैत्यानां सम्बन्धनिराकरणार्थं मन्त्रैस्तत्परिच्छेदकरणं युक्तमेव । अयं च लोकत्रयात्मको विषयो बलेर्नाऽर्थः । तर्हि कथं पूर्वं तेन गृहीतमित्याशङ्क्याऽऽह—**उरुक्रमपादशौचमिति** । स हि भगवच्चरणारविन्दे समर्पणार्थं पूर्वं गृहीतवान् । अधुना चरणप्रक्षालनं कृत्वा तत्तस्मिन्निवेद्य तच्चरणारविन्दोदकं शिखायां धृतवतो भगवदीयत्वं प्राप्तस्तादृशशरीरप्राप्तियोग्यतां वा प्राप्तः । कक्षात्रयमुपरिगतस्तादृशस्य प्रथमकक्षा न पुरुषार्थाय । न हि भगवता बलादयं कक्षात्रये नीतः । नह्ययं प्रत्याक्रमणेच्छुः । भगवांस्तु बलिस्थाने स्थितः श्रुत्यर्थपरिपालनाय । “**स वै विष्णुक्रमान्क्रमेत य इमान् लोकान् भ्रातृव्यस्य संविज्य पुनरिमं लोकं प्रत्यवरोहेदि**”ति श्रुतेः । “**ये यथा मां प्रपद्यन्त**” इति वाक्यात् । दानस्य साफल्याच्च । अनन्तगुणं हि पात्रे दत्तं भवति । अतोऽनन्तब्रह्माण्डाधारो भगवांस्तस्य सिद्धः । अतः पूर्वस्वीकृतत्रैलोक्यं नार्थः । किञ्च । पूर्वं महादेवाय त्रैलोक्यं दत्तं भगवतैव । पश्चाच्चरणोदकं मस्तके स्थापयित्वा ऐश्वर्यादौ विरक्तः सन् पुनश्चरणमेव ध्यायति । अयं च तथा । उरुक्रमस्यैव पादशौचं चरणारविन्दोदकं महादेवस्याऽस्याऽपि तुल्यम् । विबुधाधिपत्यं चाऽस्य नाऽर्थो यथा महादेवस्य । दास्यार्थं ह्येवं कृतवानिति ज्ञापनार्थं चरणारविन्दोदकधारणमेव हेतुत्वेनोक्तम् । नतु दानादि । अन्यशेषत्वात् । किञ्च । **यो वै प्रतिश्रुतमृते न चिकीर्षदन्यदिति** । यस्तु स्वसङ्कल्पनिर्वाहार्थं बहुविचारितवान् पश्चात्तृतीयपादार्थं स्वशिरो दत्तवान् । न ह्येतादृशः पूर्वदत्तं कामयते । भगवतस्त्वेवं करणं दैत्यत्वत्याजनार्थम् । देवेषु सत्यं दैत्येषु चाऽनृतं प्रतिष्ठितम् । तदशक्यमपि प्रतिश्रुतमनेन सत्यं चेत्कृतं तदा सत्ये प्रतिष्ठितो भगवद्धर्ममेव प्राप्तवान् । अन्यदिति रूपभेदोऽपि निवारितः । आत्मानं देहम् । **अङ्गेति** स्नेहसम्बोधनं तस्मिन्भगवतः स्नेहसूचनार्थम् । **शिरसेति** प्रधानेन सहाऽऽत्मसमर्पणं ब्रह्मज्ञानेन सहितं कृतमिति

१ छलं समर्थितमिति ख. ग. २ छलमिति ख. ग. ३ भक्तानभीति क. भक्तस्यनभिप्रेतं इति घ. ४ प्रतीत्या य इति ख. ५ मानवतां भक्तानां ग. ६ श्रुत्यर्थश्च पालनीय इति ग. ७ सत्वै विष्णुरिति क. ख. घ. ८ संविष्य क. संवियुज्य ग. ९ पात्रे दत्ते इति ग. १० महादेवस्यापीति ख.



सूचितं भवति । अयमात्मानं शिरसा सह हरये अभितो मेने । अनेन शरीरेण भगवत एव कार्यं न वा मम नान्येषामित्यभिशब्दार्थः । यथा हि तस्य मनोरथस्तथैव च सिद्धिः । यथा भगवते दत्तं वस्तु तदर्थं बध्वा स्थाप्यते तथा बलिः स्थापित इति न भक्तिविरोधः । अत एव तेषां गुणत्वात्तस्य महती भक्तिर्जाता । अन्यथा मात्सर्यादिकमुत्पद्येत जयविजयवत् । तस्मादेतेषां गुणत्वाद्दामनो मेखला । तेन च विभूषितत्वं सर्वत्र भक्तावुपयोगात् । माहात्म्यज्ञाने स्नेहे च फले चेति ॥ १८ ॥

अङ्गुलीयकैर्विभूषितत्वमाह—

**तुभ्यं च नारद भृशं भगवान् प्रवृद्धभावेन साधुपरितुष्ट उवाच योगम् ।**
**ज्ञानं च भागवतमात्मसतत्त्वदीपं यद्वासुदेवशरणा विदुरञ्जसैव ॥ १९ ॥**

**तुभ्यं च नारदेति** । अङ्गुलीयकानि दश विंशतिर्वा भवन्ति । तावन्ति हि भगवद्रूपाणि यावन्ति नारदेन दृष्टानि । अन्यैरपि । नारदं प्रति भगवदवतारा “**दर्शनं यान्ति चेतसी**”ति वाक्यादनन्ता एव । अङ्गुलयश्चतुर्भुजे विंशतिर्भवन्ति । अनन्तभुजत्वेऽनन्ताः । नारदेन तत्सदृशैरन्यैश्च परिदृश्यमाना हि मूर्तयो भगवतोऽनन्ताः । अत एव तुभ्यं चेति चकारः । तेषामङ्गुलीयकत्वमवयवान्तोपयोगात् । ते हि भक्ताः संसारान्ते भवन्ति । अनेन सर्वात्मकस्य भगवतो भक्ता अङ्गुलय इति निरूपितम् । ते हि सर्वशरीरोपकारिणः सर्वक्रियाहेतवः । महाधनैरिति विशेषणात्तेषु बहुधनमस्तीति ज्ञापितम् । तानि धनान्यग्रे वक्ष्यामः । तुभ्यं नारदाय । त्वदुपयोगार्थं चकारादन्योपयोगार्थं च योगमुवाचेति सम्बन्धः । तत्र साधुपरितुष्ट इति हेतुः । तस्य योगस्य मूल्यरूपत्वात् । नहि केनाऽप्यंशेनाऽपरितुष्टः स्वमूल्यं वदति । चतस्रो ह्यङ्गुलय एकश्चाऽङ्गुष्ठः स च समावद्वीर्यो(?) भवति ताभिः । सा हि भक्तिरङ्गुष्ठमूल्यं भवति । तेन परितुष्टो वा भगवान् । योगो ज्ञानं परिचर्या शरीरज्ञानं चाऽङ्गुलीस्थानीयाः । चतुर्भिरपि भक्तहितो भगवान् प्राप्यते भक्त्या च । तदाह । भृशमत्यर्थम् । प्रवृद्धभावेन निरन्तरश्रवणादिना तत्तन्मार्गे उत्पन्ना प्रीतिः सर्वं हृदयं पूर्णं विधाय यदोच्छलिता भवति । यया बहिः स्पष्टतया प्रेमाऽनुभूयते स प्रवृद्धो भावः । तेनैव भगवान् परितुष्यति । गुणानां भगवतश्चाऽवगाहनयोग्यत्वात् । अत एव साधुपरितुष्टः । परितोषानन्तरमपि भक्तिपूरस्य विद्यमानत्वात्परितोषस्य साधुत्वम् अपरितोषासहभावः स्वनित्यता च । परितस्त्वं तु तदीयानामप्युद्धारकत्वेन । तदा हि योगमाह । तथोपायमुक्तवान् येनोपायेन भगवान् दृश्यत एव । बहिर्दर्शने भक्तिरेव हेतुः । अन्तर्दर्शने योगः । विद्यमानस्य दर्शने द्वयं भगवतो ज्ञानं जीवानामात्मतत्त्वप्रदर्शनं च । चकाराद्ब्रह्मज्ञानं च । ब्रह्मस्वरूपज्ञानं ब्रह्ममीमांसायां निरूपितम् । निर्धर्मकः सर्वधर्मादिरूपेण स्वयमेवाऽऽविर्भवतीति । भागवतं पुरुषोत्तमज्ञानम् । आत्मनो जीवस्य तत्त्वं शुद्धचैतन्यरूपम् । तत्प्रकाशो वृत्तिफलनेन स्वतो वा आविर्भावेन । तज्ज्ञानं दीपस्तेन सहितं आत्मसतत्त्वदीपम् । ब्रह्मात्मत्वज्ञानं वा । चकारात्क्रियायोगः । तस्य फलं भक्तिरित्यग्रे वक्ष्यते । ननु योगयज्ञज्ञानादीनां पूर्वमेव सिद्धत्वाद्बहुभिश्च प्रकाशितत्वात्तदर्थं किं भगवदवतारेणेत्यत आह—**यद्वासुदेवशरणा इति** । यस्मान्नारदार्थं प्रोक्तपञ्चरात्रादेः । वासुदेवशरणाः मोक्षदातुः सत्त्वाधिष्ठात्रीदेवतारूपस्य शरणगमनमात्रेणैव तपआदी-

१ यो नास्ति ख. २ विवृद्धेति पाठः ख. ग. ३ भुजे त्वनन्ताः क. घ. ४ समानवदिति ख. ग. ५ शरीरेति घ. ६ सर्वहृदयमिति ख. ७ यदा बहिरिति ख. ग. ८ ब्रह्म. ज्ञानं क. घ. ९ योगज्ञानादीनां ख. १० सर्वोधिष्ठातृदेवतेति ख.

नामभावेऽपि । अञ्जसा सामस्त्येनैव सुगममार्गेणैव विदुर्ज्ञानवन्तः । आश्रयमात्रेणैव सुगमतया परिज्ञानं पुनःकथने हेतुः । अथवा भगवद्भक्ता भगवत्पराः कर्म वा योगं वा ज्ञानानि वा न मन्यन्त एवेति तदर्थं भगवतैतान्युक्तानि । अतःपरं भगवदुक्तानीति परमश्रद्धया तेषु प्रवर्त्तन्ते मार्गगताश्च भवन्ति कृतार्थाश्च । अन्यथा उत्तया उन्मादाश्च भवेयुः । भक्तेर्मादकत्वात् । एतदर्थं भगवान् भक्तिसाधकान्युक्तवानित्यर्थः ॥ १९ ॥

नूपुरकङ्कणादिभिर्विभूषितं निरूपयति—**चक्रं चेति** । अत्राऽऽदिशब्देन द्वादशाङ्गोपयोग्याभरणान्युच्यन्ते । तत्र पादयोर्हस्तानां च नूपुरकङ्कणादिभिर्ध्येयत्वम् । एवं कण्ठाभरणानि मुकुटादीनि च । सर्वाण्येतानि द्वादशाङ्गविभागेन द्वादशविधानि । तानि मन्वन्तरावतारेणोच्यन्ते । यद्यपि मेखलाया वनमालायाश्चैतन्मध्य एव वचनमुचितम् । तथा सति चतुर्दशत्वं मन्वन्तरावतारसङ्ख्या चोपपद्यते । तथापि तयोर्विशेषप्रयोजनस्य विद्यमानत्वात्पृथङ्निरूपणमुक्तम् । एतेषामपि विशेषणं महाधनानीति सर्वमन्वन्तरेषु भगवान् योगादिकमुपदिशतीति सूचितम् । तदाह—

**चक्रं च दिक्ष्ववहितं दशसु स्वतेजो मन्वन्तरेषु मनुवंशधरो बिभर्त्ति ।**
**दुष्टेषु राजसु दमं व्यदधात्स्वकीर्त्तिं सत्ये त्रिपृष्ठ उशतीं प्रथयंश्चरित्रैः ॥ २० ॥**

**चक्रमिति** । मन्वन्तरेषु भगवान् स्वतेजो बिभर्त्ति पालनसामर्थ्यं बिभर्त्ति । सर्वं मन्वन्तरं साङ्गं परिपालयतीत्यर्थः । ननु मनुवंश्यानां विद्यमानत्वात्सर्वांशेन भगवत्परिपालनं किमर्थमित्याशङ्क्याह—**मनुवंशधर इति** । मनोर्वंशमयमेव बिभर्त्ति । मन्वन्तरमेकसप्ततियुगात्मकम् । तत्र कलौ सर्वेषां नाशः शूद्रादिभावात् । अतो भगवतैव परिपाल्यन्ते यथा देवापिमनू । ननु ऋष्यादीनां विद्यमानत्वात्तेषां नाशशङ्काभावात्किं भगवता तदंशकार्यं कर्त्तव्यम् ? तत्राऽऽह—**चक्रमिति** । ते हि चतुर्विधाः मन्वृषिदेवतेन्द्ररूपाः । ते स्वरूपतो विद्यमाना अप्याज्ञारूपेण न वर्त्तन्ते । तदर्थमाह—**चक्रं बिभर्त्तीति** । तानेव ऋषीनाज्ञारूपान्कृत्वा बिभर्त्तीत्यर्थः । "**सर्वे पुरुषशासना**" इति वाक्यात् । चकारात्स्वतन्त्रतया । आज्ञां सेनां च बिभर्त्ति नियमनार्थं सहायार्थं च । तेषामाज्ञाकरणे हेतुः **दिक्ष्ववहितमिति** । दशसु दिक्षु अवहितं स्थापितं सावधानं वा । यथा यो यत्र स्थापनीयस्तं तथा स्थापयतीत्यर्थः । विशेषकार्यमाह—**दुष्टेषु राजसु दमं व्यदधात्** । पालकानां दुष्टत्वे तद्दण्डकरणं विशेषकार्यम् । अनेन लोकरक्षा निरूपिता । एवं लोकवेदरक्षां निरूप्य भक्तिरक्षां निरूपयति—**स्वकीर्त्तिं सत्ये त्रिपृष्ठे प्रथयन्निति** । यथा पातालादुद्धृत्य भूमिः पुष्करपर्णे प्रथिता, एवं त्रैलोक्ये स्थितां कीर्त्तिं त्रयाणां लोकानां पृष्ठभूते सत्यलोके स्थापितवान् । इत उद्धरणेन तत्र स्थापने हेतुः **उशतीमिति** । कमनीयाम् । अत्र हि प्राकृतधर्मैः प्राकृतबुद्धिभिश्च संबद्धा जलमग्नेव कीर्त्तिः । सा हि वस्तुतः शुद्धा भवति । तां सत्यलोके प्रथितवान् । सत्यलोकस्थानामुपकारजननाज्ज्ञानभक्त्यर्थं भगवच्चरित्राणि तत्र गीयन्ते । ततस्तत्र स्थिताः सर्व एव भगवन्तं जानन्तीति सर्वलोकविख्यातो भगवांस्तदवयवाभरणभूत इत्यर्थः । आदिशब्दस्याऽपरिच्छिन्नत्वान्मन्वन्तरेषु बहून्यवान्तरावतरणानि सूचयति ॥ २० ॥

१ शरणं यताश्चेति ग. २ साधनान्येतान्युक्तवानिति क. ख. ग. ३ सर्वमतीति ख. ग. ४ सर्वमेति क. ५ सर्वमन्वन्तरं क. सर्वमेवेति ख.ग. ६ किमर्थमित्याह क. ग. ७ वेदलोकरक्षामिति क.ख. ८ जलपर्णे इति ग. ९ न्तरावरणानीति ख. वतारापि ग.



स्निग्धामलैः कुञ्चितनीलकुन्तलैर्विरोचमानाननहासपेशलं भगवन्तं निरूपयति—**धन्वन्तरिरित्यादिपञ्चभिः** । कुन्तलानां धर्मैः कुन्तलैश्च विरोचमानमाननम् । तादृश आनने हासेन पेशलो भवति भगवान् । तत्र हासपेशलो रघुनाथो हास्यरूपो भवति सर्वमोहनरूपः परमसुन्दरः । तस्य कार्यं गूढमित्यग्रे वक्ष्यते । कुञ्चितनीलकुन्तलरूपः परशुरामः । बहुधा चरित्रकरणादनेकरूपत्वं तस्य । तद्गतधर्मः स्निग्धामलरूपो धन्वन्तरिः । तेन ह्यमृतेन शास्त्रेण च सर्वे स्निग्धा अमलाश्च कृताः । देवा हि रूक्षा अमृतेन भगवति स्निग्धाः कृताः । वैद्यकशास्त्रेण चाऽमला भवन्तीत्यविवादम् । उभयोः कार्ये भूमौ विद्यमान एव रघुनाथोऽवतीर्ण इति तादृशे मुखारविन्दे हास्यरूपत्वं भगवतः । यद्भगवद्धास्येन कार्यं तद्रघुनाथेन कार्यमिति । तत्र आननं भगवतो धर्माधारब्राह्मणाः । तत्र **आरोग्ये** धर्मसिद्धिः स्याद्रक्षा च धनुषो भवेत् । अतो धर्मसिद्ध्यर्थं धन्वन्तरिरवतीर्ण इति तच्चरित्रमाह—

**धन्वन्तरिश्च भगवान् स्वयमेव कीर्त्तिर्नाम्ना नृणां पुरुरुजां रुजमाशु हन्ति ।**
**यज्ञे च भागममृतायुरवाप रुद्धमायुश्च वेदमनुशास्त्यवतीर्य लोके ॥ २१ ॥**

**धन्वन्तरिश्चेति** । दृष्टोपकारत्वात्स स्वयमेव कीर्त्तिभूतः । चकारात्स्त्रीरूपं च । उभयमपि भगवान् । तस्य धर्मः कीर्त्तिर्भवत्येव । तथापि कीर्त्तिरूपताऽप्युच्यते । तत्र हेतुर्नाम्नैव **पुरुरुजां** महारोगग्रस्तानां रुजमाशु हन्ति । धन्वन्तरिनामस्मरणेनैव सर्वे रोगा गच्छन्तीत्यर्थः । **नृणामिति** रोगसम्भावनयोक्तम् । नामोच्चारयितृत्वाद्वा । वस्तुतस्तु शास्त्रद्वारा सर्वेषामेव रोगान्हन्ति । **नाम च** तस्य शास्त्रम् । सर्वेषामुपकारिणां यज्ञे भागा निरूपिता वाय्वादीनाम् । तथा अनेनाऽपि आरोग्यलक्षणं धर्मं विधाय यज्ञे भागं च प्राप्तवान् । "**बर्हिरनुप्रहरतीति वाचि स्वाहे**"ति मन्त्रेण समिष्टयजुषि बर्हिषोऽनुप्रहरणं क्रियते । तत्र वाचो देवतात्वं शान्त्या इति फलान्न संभवतीति सर्वशान्तिकरी या वाक् धन्वन्तरिप्रोक्ता सा भागमर्हतीति यज्ञे धन्वन्तरिभागः । **रुद्धमिति** पूर्वं बर्हिषोऽनुप्रहरणाभावः प्रायेण सूचितः । "**न बर्हिरनुप्रहरेदि**"त्यग्निहोत्रे तस्य निषेधात्संस्थायामेव बर्हिषोऽनुप्रहरणम् । सम्यक् स्थितिश्चाऽऽरोग्यकार्यमिति बर्हिरेव तस्य भागः । अन्यद्वा चिन्त्यम् । शाखान्तरीये वा स्पष्टम् । किञ्च । आयुर्वेदं च कृतवान् । पूर्वं मथने प्रादुर्भूतस्तत्रैव तिरोहितः । पुनश्च काशिराजगृहेऽवतीर्य "**धन्वन्तरिर्दैर्घ्यतम**" इति वाक्यादायुर्वेदं प्रवर्त्तितवान् । चकारादन्यदपि । अस्याऽवतारस्य धर्मरूपत्वमेव न धर्मिरूपत्वम् । तेनौषधादिद्वारा परम्परोपयोगः ॥ २१ ॥

कुन्तलानां स्वरूपमाह—

**क्षत्रं क्षयाय विधिनोपभृतं महात्मा ब्रह्मध्रुगुज्झितपथं नरकार्त्तिलिप्सु ।**
**उद्धन्त्यसाववनिकण्टकमुग्रवीर्यं त्रिःसप्तकृत्व उरुधारपरश्वधेन ॥ २२ ॥**

**क्षत्रमिति** । कुञ्चितनीलत्वं धर्मः । कुञ्चितत्वं कुटिलता । नीलत्वं च श्यामता । क्षत्रियहन्तृत्वात्कुटिलता । भूमिकण्टकोद्धारकत्वाच्छ्यामतेति । अथवा । चतुर्भिर्विशेषणैः संहितानि कुन्तलानि धन्वन्तरिः । अमृतोद्गमत्वात् शीतत्वात् यज्ञभागभुक्त्वात् अवतीर्णत्वाच्च । तत्र श्यामत्वं मथनान्निर्ग-

१ हासरूपत्वं ख. २ यद्भगदिति ख. ३ दृष्टोपायत्वादिति ग. ४ इत्य आभिरिति ग. ५ शान्तिकरेति ग. ६ होत्रेतरनिषेधात् ख. ग. ७ दैर्घ्यतमस इति ख. ग. ८ तेन तु औषधेति ग. ९ संहिताः कुन्तला इति ख.

तस्य । कुटिलत्वं स्त्रीरूपस्य । अमलत्वं यज्ञभुजः । आयुर्वेदकरणात्सर्वविघ्नघ्नत्वम् । स्वस्याऽवतारबाहुल्याद्बहुवचनम् । मुख्यत्वं परशुरामस्य । स हि वैश्वानरस्याऽवतारः । अत एव सर्वक्षत्रियभक्षकः । विशेषेण रोचमानत्वं धर्मरक्षाकरणात् । क्षत्रं क्षत्रियाः । क्षयायैव विधिना उपभृतं धृतम् । उप समीपे धृतं वा । यथा पशुर्भ्रियते । "**भवाय नाशाये**"ति वाक्यात् । वधे हेतुः **ब्रह्मध्रुगिति** । ननु क्षत्रस्य कथं ब्रह्मद्रोहजनकत्वम् । तत्राऽऽह—**उज्झितपथमिति** । उज्झितः पन्था येन । सन्मार्गपरित्यागाद्ब्रह्मद्रोहे मतिः । तर्हि सन्मार्गबोधनेन कथं न व्यावर्त्यते ? तत्राऽऽह—**नरकार्त्तिलिप्स्विति** । नरकलक्षणामेवाऽऽर्त्तिं वाञ्छति । परलोकदुःखमङ्गीकृत्योत्पथेन प्रवृत्तमतो न बोधनेन निवर्त्तते । अत एवोद्धन्ति ऊर्द्धमुत्क्षिप्य तान् दूरीकरोति । अनेन यदेवाऽस्याऽमेध्यं तदपहन्तीति सूचितम् । **महात्मेति** अल्पद्रोहः प्रयोजनार्थं क्रियमाणो न तद्धृदयं बाधते । मूढा एव हि दृष्टप्रत्ययाः । महात्मानस्तु पर्यवसानबुद्धयः । असाविति यज्ञकर्त्ता । उद्धननं हि तेनैव क्रियते । किञ्च । एतत्क्षत्रं मारणीयमेव । अवनिकण्टकत्वात् । भूमिर्हि भगवतः पादौ । सर्वो हि स्वपादकण्टकोद्धारं करोति । यद्यपि सर्वात्मत्वात्तस्य व्यथा भवति तथाप्युग्रवीर्यः । न हि क्रौर्यावलम्बनव्यतिरेकेण कण्टकोद्धारो भवति । अनेन नैर्घृण्यमपि निवारितम् । **त्रिःसप्तकृत्व इति** । सप्तधा हननेनैकवारं भूमेर्निष्कण्टकता जाता । पुनर्ब्राह्मणादुत्पन्नाः सप्तधा हताः । पुनरेवमिति त्रिः । **उरुधारपरश्वधेनेति** । शस्त्रेण हननं परलोकार्थम् । परश्वधः परशुः । उरुधारत्वाद्बहुधा हननेऽपि न कुण्ठता । अनेन वधे क्लेशाभावो निरूपितः ॥ २२ ॥

हासपेशलत्वं निरूपयति—

**अस्मत्प्रसादसुमुखः कलया कलेश इक्ष्वाकुवंश अवतीर्य गुरोर्निदेशे ।**
**तिष्ठन् वनं सदयितानुज आविवेश यस्मिन्विरुध्य दशकन्धर आर्त्तिमार्च्छत् २३**

**अस्मत्प्रसादसुमुख इति** । हासो हि त्रिविधः । इतरगर्वनिवारक इतरव्यामोहकः प्रसादहेतुश्च । तत्र प्रथमं प्रसादहेतुमाह । यद्यपि रघुनाथचरित्रस्याऽनन्तत्वं तथापि हासत्वमात्रोपयोगाद्गुणत्रयकार्यं चरित्रत्रयमेवोपलक्षणत्वेन निरूप्यते । तत्र प्रथमं सात्त्विकं चरित्रमाह—**अस्मत्प्रसादसुमुखः** । ब्रह्मादीनां प्रसादार्थं सुमुखः प्रसन्नवदनः । अनेन ब्रह्मप्रार्थनया भगवानवतीर्ण इत्युक्तम् । कलया परमकान्त्या सीतया वा । कलया वा कलेशः । यस्तु सर्वकलानिधिर्वैकुण्ठवासी विष्णुः स यस्य कलया । हासो हि कार्यस्याऽल्पत्वे भवति । तस्माद्रक्षाऽल्पं कार्यम् । तदर्थं भगवतः काचित्कला या वैकुण्ठे स्थिता पालयति । अनेन भगवान्पूर्ण एव रघुनाथोऽवतीर्ण इति सूचितम् । कला वा ऋष्यादयः । अतस्तेषां सङ्कटे तत्पतित्वादनेनैव निस्तारः कर्त्तव्य इति सूचितम् । कलानां वा सङ्कर्षणादीनामीशो वासुदेवः । सर्वकलानिपुणो वा लक्ष्म्या सहावतीर्णः । तदैव पेशलो भवति । स भगवानिक्ष्वाकुवंशेऽवतीर्य । इक्ष्वाकुर्भक्त इति नृसिंहपुराणे प्रसिद्धिः । यदर्थं श्रीरङ्गो ब्रह्मसदनात्समानीतः । तस्योद्धारार्थं तद्वंशेऽवतीर्णः । देवहितकार्यकर्तृत्वं धर्मज्ञानादिसाहित्यं स्वावतरणेन भक्तोद्धारो गुर्वाज्ञाकरणं वनवास एतावत्सात्त्विककार्यम् । अनुभावस्तु विरोधेन दशकन्धरार्त्तिः । सत्त्वविरोधे तमसो लयो युक्त एव । गुरोर्दशरथस्याऽऽज्ञा तस्यां स्थितः । व्रतमिव तत्पालनं कृतवानित्यर्थः । वनमाविवेश । ननु वने तस्य किञ्चित्कार्यम् । अपि तु वास एव कार्यमिति वनस्य कर्मता । दयिता सीता अनुजो लक्ष्मणस्ताभ्यां सहितः । अनेन कलया कलेश इति यावानागतस्तावान्वनं गत इति सूचितम् । इतरसहायाभावार्थं वा । आसमन्तात्प्रवेशो बहुकालस्थित्यर्थः । अत एव यस्मिन्रघुनाथे विरोधनिमित्तत्वमेव भगवतो ननु विरोधहेतुत्वम् । विरुध्य विरोधं कृत्वा । दशकन्धरो रावणः । अनेन महत्त्वं वा बहुत्वं वा न निस्तारहेतुरिति सूचितम् । आर्त्तिं पीडां चिन्ताशोकादिकम् । त्रयाणां वनवास आरब्धः । देवानां कामनया तथा सङ्कल्पः कृतः । तत्र भार्यया सह स्थितस्य न मुख्यो वनवासो भवति । न भर्तृसहितायाः स्त्रियः । अत उभयोर्वियोगेन वनवासः प्रदर्शितः । वियोगजननादिरूपमेव विरोधः । प्रथमाऽऽर्त्तिस्तु खरादिमारणेन ॥ २३ ॥

एवं सात्त्विकचरित्रं भगवत उक्त्वा राजसमाह—

**यस्मा अदादुदधिरूढभयाङ्गवेगो मार्गं सपद्यरिपुरं हरवद्दिधक्षोः ।**
**दूरेसुहृन्मथितरोषसुशोणदृष्ट्या तातप्यमानमकरोरगनक्रचक्रः ॥ २४ ॥**

**यस्मा अदादिति** । उदधिः समुद्रः यस्मै मार्गमदात् । **ऊढभयाङ्गवेगः** । ऊढं भयं येन । समुद्रशरीरस्य भयं भार्येव हृदये निविष्टम् । तादृशाङ्गस्य अङ्गे वा वेगः कम्पो यस्य । अथवा । ऊढं यद्भयं मृत्युरूपं तस्याऽङ्गानि शोषणादीनि तेषां वेगो यस्य । मृतप्रायो जात इत्यर्थः । सपदि तत्क्षणमेव । अरिपुरं लङ्काम् । हरवत् हरस्येव । महादेवसंहितं वा पुरम् । दिधक्षोः दग्धुमिच्छोः । दूरे सुहृद्भार्या यस्य भ्राता वा भरतोऽन्ये वा सुहृदः । मथितो यो रोषस्तेन सुशोणा या दृष्टिस्तया तातप्यमानाः अतिशयेन तप्यमाना मकरादयस्तेषां चक्रं यस्मिन् । एवं ह्याख्यायिका । रावणेन सीतायां हृतायां दशकन्धरवधार्थं प्रवृत्तस्य रघुनाथस्य मध्येऽन्तरायभूतः समुद्रः स्थितः । स स्वकीयैः पुरुषैः कृत इति तत्र पदाक्रमणमकृत्वा प्रायोपवेशनं कृतवान् । स ह्यस्मदीयवंशेऽवतीर्णोऽस्मदवतारणेऽप्युपायं न जानाति स कथं रक्षांसि हन्यादिति । परमत्रैवाऽयं तिष्ठत्विति मार्गं न दत्तवान् । तदा भगवान् स्वबाणं सन्धितवान् । तदा तस्य नेत्रयोरारक्तिमा जाता तेन समुद्रस्य क्षोभो जात इति । मार्गदानं न प्रीत्येति भगवन्माहात्म्यज्ञापनार्थं भयादयस्तस्मिन्प्रविष्टास्तदा मार्गं दत्तवानिति । यदि महादेवः सहायमपि कुर्यात्स्वभक्तस्य स्वयं वा पुरे तिष्ठेत्तदा तेन सह पुरं ज्वालनीयमिति । रावणवधस्त्वल्पः । पुरमेव ज्वालनीयमितीच्छा । यस्मिन्पुरे दुःखिता सीता तिष्ठतीति । भगवतो रोषे दूरे स्थितानां सुहृदां दुःखं हेतुः । अमथिते हि दधनि क्वचिद्दृढता क्वचिज्जलं क्वचिन्मध्यभावो भवति । मथिते त्वेकरूपता । तथा परीक्षार्थं हितार्थं परमार्थतो वा विघ्ने कृते पूर्वं बहुधा विचारितत्वात्सीतोद्धारस्य अवश्यं कर्त्तव्यत्वात्त रोषप्रतिबन्धको विवेकादिर्जात इति सूचनार्थं मथितपदम् । दृष्टिमात्रेणैव समुद्रताप इति माहात्म्यम् । राजसचरित्रत्वाद्रोपकथा ॥ २४ ॥

एवं राजसचरित्रमुक्त्वा तामसमाह—

**वक्षस्थलस्पर्शरुग्णमहेन्द्रवाहदन्तैर्विडम्बितककुब्जयरूढहासम् ।**
**सद्योऽसुभिः सह विनेष्यति दारहर्त्तुर्विस्फूर्जितैर्धनुष उच्चरतोऽधिसैन्ये ॥२५॥**

१ तस्येति ख. २ बहुत्वं ग. ३ सर्वत्रेति क. ४ कथं तेनेति ख. ५ व्यावर्त्यन्ते ख. ६ यज्ञहर्ता ख. ७ वैकुण्ठस्थितेति ख. ग. ८ स्वावतारणेन क. ख. ९ तत्परिपालनं ख. ग.

१ वनवास इति ग. घ. २ द्विरूपमेव ग. ३ हृदयनिविष्टं ख. ग. ४ संहितं वा ख. ५ दिधिक्षोरिति क. ख. ६ कममकृत्वा ख. ग. ७ दधिवीति क. ख.

**वक्षस्थलस्पर्शेति**। स भगवान् रघुनाथस्तस्य रावणस्य असुभिः प्राणैः सह हासं गर्वं विनेष्यति दूरीकरिष्यति। दूरीकरणे हेतुः **दारहर्त्तुरिति**। प्राणहरणेऽप्येतदेव हेतुः। आततायित्वात्। नहि तन्मारणार्थे बाणा अपेक्ष्यन्ते किन्तु धनुषो विस्फूर्जितैरेव। धनुषो विशेषणम् **अधिसैन्ये उच्चरत इति**। ऊर्ध्वं चरतः। बाणरूपं मलं वा त्यजतः। अनेन तस्य गतिर्निवारिता। धनुषो माहात्म्यार्थं हासं विशिनष्टि। वक्षस्थलस्पर्शेन भग्ना ये महेन्द्रवाहस्यैरावतस्य दन्तास्तैर्विडम्बितो यः ककुब्जयो दिग्जयस्तेन रूढो यो हासः। तस्य हि सामर्थ्यद्वयं रावणस्य शारीरं शत्रुजयकृतं च। तत्र शारीरेण सामर्थ्येन शत्रुजय उपहस्यते। यतस्तस्य वक्षस्थलस्पर्शमात्रेणैवैरावतदन्ता भग्नाः। तादृशस्य दिग्विजयो नोत्कर्षहेतुः। तेन दिग्विजयिनां सामर्थ्यादप्यस्य महत्सामर्थ्यमिति महान् गर्वः। स गर्वो गच्छन् महाभिमानिनः प्राणैः सह गतः। न हि भगवतो हासस्याग्रेऽन्यो हसति। तस्मात्तदपगमनमुचितमेवेति भावः। एवं रघुनाथचरित्रमुपलक्षणविधया निरूप्य हासत्वं समर्थितम्॥ २५॥

एवं हासपेशलं निरूप्य अदीनलीलाहसितेक्षणोल्लसद्भ्रूभङ्गसंसूचितभूर्यनुग्रहं निरूपयति—**भूमेः सुरेतरेति** दशभिः। यद्यप्येकैकस्मिन्नवतारे अपरिमितानि चरित्राणि सन्ति तथापि विमर्शे येषामुपयोगस्ते निरूप्यन्ते। यत उद्देशे दशैव पदार्था निरूपिताः—अदीनत्वं, लीलात्वं, हसितत्वं, ईक्षणत्वं, उल्लसत्त्वं, भ्रूत्वं, भङ्गत्वं, संसूचितत्वं, भूरित्वं, अनुग्रहत्वं चेति। अनेन दशविधा अपि लीला अस्मिन्नवतारे सन्तीति यावान्वा अयमात्मा तावानयमिति सूचितम्। अनेन दशविधलीलानामेकमुखत्वेनैकार्थत्वं च सूचितम्। तदुपपत्त्या निरूपणे उद्देशतो निरूपयिष्यति। तत्राऽदीनत्वं सर्गः। दीनो हि वस्त्वभावात्। यथासुखं वस्तुरूपेण स्वयमेव प्रादुर्भावाददीनत्वम्। अभिलषितवस्तुप्राप्तौ दीनत्वं गच्छति। न विद्यन्ते दीना यस्मादिति परार्थसृष्टावपि जीवानां दीनत्वं गच्छति सृष्टावेव। विसर्गो हि लीला स्पष्टा। हसितं स्थानम्। स हि भगवान्नाट्य इव प्रहसनरूपेण तत्तन्मर्यादया तांस्तान् स्थापयति स्वस्य हासार्थमेव। अन्यथा परमार्थे भगवत्स्वरूपे का मर्यादा। ईक्षणं पुष्टिः। भगवदीक्षिता एव हि पुष्टा भवन्ति। भ्रूरूपा ऊतिः। यथाऽन्तःकरणे वासना तथा भ्रुवोश्चलनम्। भङ्गो हि सद्धर्मः। स हि सर्वान् स्वस्थानाद्भ्रंशयति। तदग्रे विस्तारयिष्यामः। उल्लसत्त्वमीशानुकथा। स हि वंशो भगवदुल्लासो भवति। यथाक्रमो वा। तदा ऊतिरुल्लासः। यथा प्रह्लादो धर्मश्च प्रमेयप्रमाणोल्लासौ। तदा सद्धर्मो भ्रूरूपो भवति। भङ्गश्च वंशः। आत्मा हि तत्र भग्नो भवति। संसूचनं निरोधः। तदग्रे उपपादयिष्यामः। भूरित्वं मुक्तिः। एको हि भगवानेव मुक्तः। अन्येऽपि तथा भवन्तीति। अनुग्रह आश्रयः। न हि सर्वथा अननुगृहीतः स्वस्मिन्कमपि स्थापयति। इयं च दशविधलीला कृष्णस्यैवेत्यवतारोऽप्ययं भगवानवतारी। अतः सर्गरूपमदीनत्वं प्रथमतो निरूपयति—

**भूमेः सुरेतरवरूथविमर्दितायाः क्लेशव्ययाय कलया सितकृष्णकेशः।**
**जातः करिष्यति जनानुपलक्ष्यमार्गः कर्माणि चात्ममहिमोपनिबन्धनानि २६**

सर्गो ह्यशरीरस्य शरीरस्वीकारः। तत्र न दीनो यस्मादिति द्वितीयोऽर्थो हेतुत्वेन प्रविशति। तत्र त्रिविधा भक्ता दीनाः भगवदवतारे हेतवस्तदाह। भूमेः पृथिव्याः। सुरेतरा दैत्या दानवा राक्षसाश्च।

१ स्पर्शेन स्पर्शमात्रेण ख. २ अपरिमितान्येवेति क. ख. ग. ३ विमर्शोपयोगित्वेन दशधर्मा इति ग. ४ अत्र तथा कृष्णावतारेऽप्यपरिमितानि चरित्राणि सन्ति तथापि विमर्शोपयोगित्वेन दश धर्मा निरूप्यन्ते इत्यधिकः पाठः ख. ५ लीला निरूपिता अस्मिन् ख. ग. ६ भवतीति ख. ७ अनुग्रहः स्वस्मिन्निति ख. ८ दशविधा ख.



सुरेतरत्वेनैव धर्मप्रतिपक्षाः क्रोडीकृताः। तैर्विमर्दिता। **प्रकटः परमानन्दो यदा भूमेस्तदैव हि। मर्दनक्लेशहानिः स्यादित्यानन्दः समागतः।** तस्याः क्लेशव्ययाय। कलया बलभद्रेण सह। सितकृष्णौ केशौ यस्य स वैकुण्ठस्थित एव समागत इति कश्चित्। वस्तुतस्तु यः सितकृष्णकेशः स गोविन्दस्य कलया। सङ्कर्षणरूपत्वात्। संहाररूपतामसशक्त्या सितकृष्णरूपस्य सङ्कर्षणस्य कलया कृष्णकेशरूपेणाऽऽपीति वक्ष्यते। इदमप्येकं प्रयोजनं कृष्णः केशो यथाऽवतीर्णो भवतीति। नतु तावन्मात्रम्। मर्दनक्लेशदूरीकरणासमर्थत्वात्। "**ताविमौ वै भगवतो हरेरंशाविहाऽऽगतावि**"ति वाक्यविरोधात्। "**तदा वां परितुष्टोऽहममुना वपुषे**"ति वाक्यविरोधश्च। तस्मान्मर्दनक्लेशाभावार्थं साक्षादानन्दमयः। पुत्रत्वेन वंशजननार्थं प्रद्युम्नः। धर्मरक्षार्थमनिरुद्धो नारायणांशः। भूमिभारनिराकरणार्थं सितकृष्णकेशांशः। **जनानुपलक्ष्यमार्ग इति** प्रद्युम्नो वंशकृत्। **कर्माणि करिष्यतीत्य**निरुद्धः। चतुर्णामपि कार्यचतुष्टयं भारव्ययाय चेति चकारेण सूचितम्। तेनैकरूपेणैव चतुर्मूर्तेरपि चरित्रं निरूप्यते। एकमेव चरित्रं मोक्षभक्ती निरूपयति। भूमिभारहरणं, वसुदेवदेवकीकामनापूरणं, धर्मरक्षा चेति। विस्तरे तु प्रकरणभेदेन वक्ष्यति। एवं चतुर्मूर्तिर्भगवान्न जातः। अनेन सर्वाण्येव वाक्यानि यथाश्रुतं समर्थितानि। अन्यथा प्रत्येकवाक्यानि **तयोरेको बलभद्रो बभूवे**त्यादीनि विरुद्धानि भवेयुः। जन्म कर्म च स्वस्य संपादयिष्यति त्रिविधदुःखदूरीकरणाय। **भूमिर्माता तथा चाऽन्ये दुःखभाजो हरिप्रियाः। कंसादेः कालतो ज्ञानात्त्रिधा दुःखं च तद्गतमिति** वक्ष्यते। भूमिस्तु कार्यरूपापि भवतीति विचारे सैवोक्ता। अदितिर्मातेति तस्या भूमित्वं स्पष्टमेव। अन्येऽपि भूमिसंबन्धादेव दुःखिताः। जनैरनुपलक्ष्यो मार्गो यस्य। जनाः साधारणाः। भगवन्मार्गस्य उपलक्षणमपि ते न जानन्ति। मार्ग एवंप्रकारेण भगवदागमनम्। कर्माणि च करिष्यतीति। चकाराज्ज्ञानं भक्तिं च कथयिष्यति। कर्माण्यनिरुद्धचरित्रत्वाय विशिनष्टि। आत्ममहिम्न उपनिबन्धनं येषु। आत्मत्वाज्ज्ञानजनकत्वम्। महिमपदाद्भक्तिः। उप समीपे नितरां बन्धनाद्धर्मः। त्रिभिस्त्रिविधं दुःखं गच्छति। एवं भगवच्चरित्रं भगवन्माहात्म्यमेव सूचयति। एतावता सर्वे अदीना भवन्ति॥ २६॥

लीलां निरूपयन् पूर्वोक्तस्य हेतुमपि निरूपयति विमर्शमध्यपातात्—

**तोकेन जीवहरणं यदुलूकिकायास्त्रैमासिकस्य च पदा शकटोऽपवृत्तः।**
**यद्रिङ्गताऽन्तरगतेन दिविस्पृशोर्वा उन्मूलनं त्वितरथाऽर्जुनयोर्न भाव्यम्॥२७॥**

**तोकेन जीवहरणमिति**। यद्ययं भगवान् चतुर्मूर्तिर्न भवेत्तदैव तच्चरित्रचतुष्टयं न सङ्गच्छेत। पूतनाऽसुपयःपानेन तन्मोक्षः। शकटोपमर्दः। यमलार्जुनमध्यगमनं। तदुन्मूलनं च। न हि वासुदेवादन्यो मोक्षं दातुं शक्तः। न हि सङ्कर्षणादन्यः स्पर्शमात्रेण नाशकः। न ह्यनिरुद्धादन्यो नारदशापविमोक्षार्थं सान्निध्यनिरूपणेन वृक्षयोरन्तरा गच्छति। न हि प्रद्युम्नादन्यः शापजन्ममूलोच्छेदपूर्वकं पूर्वस्थितदेवताजन्म संपादयति। भगवत्त्वं चैतैरेव स्थाप्यते। यतस्तोकेन बालकेन उलूकिकायाः पूतनायाः जीवहरणम्। यत्र हि कार्यं तत्र साधनमवश्यं भावि। यत्र पुनः साधनव्यतिरेकेणैव साध्यमुत्पद्यते तत्परब्रह्मस्वरूपमित्येवाऽवगन्तव्यम्। सर्वभवनसमर्थरूपत्वात्तस्य। किञ्च।

१ क्रोडीभूताः ग. २ विमर्दितायाः ग. ३ नैजरूपेणैवेति ग. ४ आत्मनो महिम्न इति ग. ५ तदेतच्चैत्रैरिति ख. ग.

उलूकस्य भार्या उलूकिका । उलूकदुहिता वा । उलूकरूपैव वा । सा हि दिवाभीतरूपा भवति । सन्मार्गविमुखा प्रतिपक्षा च । अनेन प्रमाणबलं तस्याः मुक्तौ निवारितम् । तस्याः जीवानां हरणं स्वस्मिंल्लयप्रापणम् । हृतं हि स्वस्मिन्नाऽऽनीयते । "**इहैव समवनीयन्ते प्राणा**" इति । मुक्तिश्चैषा । तस्मात्प्रमेयबलेन सा मुक्तेति मन्तव्यम् । प्रमेयं च शुद्धं परब्रह्म । न केनाऽप्यंशेन न्यूनम् । तथासति तादृशस्य मुक्तिदानसमर्थत्वं न सम्भवति । अतः साधनव्यतिरेकेणैव साध्यकरणान्मुक्तिदानाच्च साक्षात्पुरुषोत्तमः कृष्णः । किञ्च । त्रैमासिकस्येति मासत्रयपरिमितः । कालावयवास्त्रय एव भगवतः परिच्छेदका जाताः । ते हि स्वभावतोऽसमर्था मूर्तिभेदं संपादयन्ति । तेन शकटं निर्माय शकटे विहृत्य शकटं नाशितवानिति त्रिमूर्तिरुक्तो भवति । त्रयाणामपि नाशने हेतुत्वव्युदासाय पदेत्युक्तम् । संकर्षणेन योग्यत्वात् । अपवर्तो विरुद्धतया पतनम् । अनेन महाबलनिरूपणेन पूर्णा क्रियाशक्तिरुक्ता । "**प्रबालमृदङ्घ्रिहतमि**"ति वाक्यात्साधनाभावः सूचितः । पूर्ववत्परब्रह्मत्वं पूर्णक्रियाशक्तिं च सूचयति । एवं ज्ञानक्रियाशक्ती प्रतिपाद्य भक्तिमार्गसमर्थनायाऽऽचिन्त्यसामर्थ्यं प्रतिपादयति—**यद्रिङ्गताऽन्तरगतेनेति** । यदेतत्रयमितरथा न सम्भाव्यमित्यर्थः । रिङ्गता हस्तपादैश्चलता । तयोरन्तरगतेन तयोरुन्मूलनं परब्रह्मत्वबोधकम् । पूतनायां मुखसम्बन्धोऽपि स्थितः । शकटे पादाग्रमात्रम् । अर्जुनयोस्तदपि न । किन्तु परम्परया दूरसम्बन्धः । उलूखलेन वृक्षयोः सम्बन्धः । रज्वा चोलूखलस्य । भगवता च रज्वाः । यदि बलेन कृतं स्याद्रज्जुत्रोटनं प्रथमं भवेत् । अल्पबलत्वात् । उलूखलस्य वा । भगवत्सम्बन्धे विचारिते सर्वेषां वा । तत्राऽप्युन्मूलनं न सम्भावितम् । तिर्यगञ्चनस्य दृढभूमौ मध्यभङ्गहेतुत्वात् । इदमपि पूर्ववत्परब्रह्मत्वसाधकमिच्छाशक्तिसाधकं च । एषा हि भगवतो लीला ज्ञानक्रिये इच्छा च । इतरथा न भाव्यमिति सर्वत्राऽग्रिमश्लोकेषु केचिद्योजयन्ति । वस्तुतस्त्वत्रैव । अग्रे सम्बन्धबोधकपदाभावात् ॥ २७ ॥

एवं लीलां विनिरूप्य हसितं निरूपयति—

**यद्वै व्रजे व्रजपशून् विषतोयपीथान् बालानजीवयदनुग्रहदृष्टिवृष्ट्या ।**
**तच्छुद्धयेऽतिविषवीर्यविलोलजिह्वमुच्चाटयिष्यदुरगं विहरन् ह्रदिन्याम् ॥२८॥**

**यद्वै व्रजे व्रजपशूनिति** । यद्यस्मात्कारणाद्व्रजे गोष्ठे व्रजपशून् व्रजरूपान्बालकान् पशूंश्च । स्वकीयान्वा । विषतोयपीथान् विषतोयस्य पीथं पानं येषाम् । यथा सोमपीथेन मृत्युग्रस्ता अमरा भवन्ति । तथा विषतोयपीथानप्यजीवयत् । पशून्बालांश्चाऽजीवयदित्येकः पक्षः । **अनुग्रहदृष्टिवृष्ट्येति** साधनम् । तस्या यमुनायाः शुद्धये । अतिविषवीर्येण विलोला जिह्वा यस्य । तं कालियं विहरन्नेवोच्चाटयिष्यन् । अत्रेकारलोपश्छान्दसः । उच्चाटयिष्यतीत्यर्थः । नुमभावो वा । विहरन्नुच्चाटयिष्यन्नजीवयदिति सम्बन्धः । अत्र पशुपालजीवनमनुग्रहदृष्टिवृष्ट्या साधनेन कार्यं निरूपितम् । इदं त्वल्पालौकिकम् । विहरणं च गरुडादिभिरपि सिद्धं भवति । योगिनोऽपि हि दृष्ट्या जीवयन्ति । उपसर्गनिपातसहितादटधातोर्वा आटयिष्यदिति लृङ्क्रियातिपत्तौ । यदा तं दूरीकरिष्यति तदा अजीवयत् । अन्यथा जीवितमप्यजीवितमेव । हास्यार्थमिदं चरित्रं भवति । वयं कृष्णं पालयिष्याम

---

१ रूपेव वेति ख. २ तस्य मुक्ताविति ख. ३ पूर्ववद्ब्रह्मपरत्वं ख. ४ हस्तपादाभ्यां ख. ५ इतरथर्जुनेति ख. ६ कालीयं घ. ७ मुच्चाटयन्निति ख. ग. ८ पि दृष्ट्येति ख. ग.



इत्येषां बुद्धिः । तदद्य स्पष्टमेव तान् पालयित्वा स्वयं तत्र प्रविष्टः कथमेते पालयिष्यन्तीति । पश्चात्तानकिञ्चित्करान् दृष्ट्वा हसतीति । अथवा । पशून्पालानिति ये पशुरूपाः पाला आधिदैविकास्तानजीवयत् । ते ह्यपराधिनः कालेन हताः । भगवद्भक्तानां विषपानहेतुत्वात् विषतोयस्य पीथं पानं येभ्य इति । कालस्तानेव ग्रसति नतु भगवदीयान्निरपराधिनः । मण्डूकादयो मृतप्राया वृष्ट्योद्गच्छन्तीति दृष्टेर्वृष्टित्वम् । तेष्वनुग्रहो ब्रह्मत्वबोधकः । न ह्यन्य आधिदैविकेष्वनुग्रहकरणसमर्थः । यदेतन्न भाव्यमिति च संयोजना सङ्गच्छते । लौकिकसाधनेषु मन्त्रादिना विषं दूरीकृत्य पश्चाज्जीवनं प्रसिद्धम् । अत्र सविषाणामेव जीवनं भगवत्कार्यमिति कश्चित् । हास्यमात्रत्वे न काचिच्चिन्ता ॥ २८ ॥

हसितं निरूप्य ईक्षणं निरूपयति—

**तत्कर्म दिव्यमिव यन्निशि निःशयानं दावाग्निना शुचिवने परिदह्यमाने ।**
**उन्नेष्यति व्रजमितोऽवसितान्तकालं नेत्रे पिधाप्य सबलोऽनधिगम्यवीर्यः ॥२९॥**

**तत्कर्म दिव्यमिवेति** । तस्य भगवतः कर्म दिव्यमिव । दिवि भवं दिव्यं अलौकिकम् । इवेतीन्द्रादीनामप्यशक्यम् । यद्दावाग्निना ग्रीष्मसम्बन्धिनि वने परिदह्यमाने सति तन्मध्ये निशि निःश्वयानं व्रजमुन्नेष्यति ततोऽन्यत्र स्थापयिष्यति । इतः अस्मात्स्थानात् । इतो हेतोर्वा । अवसितः अन्तकालो येन । अस्माकमयमन्तकाल इति व्रजस्थैर्विचारितम् । इदं हि चरित्रं दावाग्निविमोचकं वारद्वयनिष्पन्नम् । कालीयह्रदसमीपे, मुञ्जाटव्यां च । तत्रैकत्र नेत्रे पिधाप्य मुञ्जाटवीं त्याजयित्वा समानीताः । अन्यत्र तु निशि निःशयानमिति । अन्यानि साधारणपदान्युभयत्र । ईक्षणमपि द्विरूपं नेत्रद्वयेन जन्यते । तस्मात्सङ्कटादुन्नेष्यतीत्युभयत्र साधारणम् । उन्नयनं हि देवार्थं पृथक्करणम् । तयैते स्वार्थं रक्षिताः । अग्निपानं ब्रह्मधर्मः अन्यत्र नयनं च । यदत्राऽग्निपानं न निर्दिष्टं तत्पुनः प्रश्नव्यावृत्त्यर्थम् । अन्यथा कथमग्निं पीतवानिति प्रश्नः स्यात् । अत एव दिव्यमिवेत्युक्तवान् । नतु स्वरूपम् । देवगुह्यं चैतत् ॥ २९ ॥

एवमीक्षणं विनिरूप्य उल्लसत्त्वं निरूपयति—

**गृह्णीत यद्यदुपबन्धममुष्य माता शुल्बं सुतस्य न तु तत्तदमुष्य माति ।**
**यज्जृम्भतोऽस्य वदने भुवनानि गोपी संवीक्ष्य शङ्कितमनाः प्रतिबोधिताऽऽसीत्**

**गृह्णीतेति** । इदं हि चरित्रं भगवतो ब्रह्मत्वबोधकम् । अन्यत्तु योगमन्त्रमण्यादिभिरपि सिद्ध्यतीति नैकान्तिकं भगवत्त्वसाधकम् । यथैतच्चरित्रद्वयं भगवत्त्वं साधयति तथा भाष्ये निरूपितमधिकरणद्वयेन । न हि यः सर्वात्मको न भवति येन रूपेण स हि तेन बन्धनं नाऽर्हतीति युक्तम् । यदेव बन्धनार्थं उपबन्धं रज्जुं गृह्णीत गृह्णाति तत्तदेव अमुष्य बन्धने न माति । भगवत एवाऽऽद्यन्तयोर्विद्यमानत्वाद्बहवोऽपि योजिता एकमिव भवन्ति । तस्य च परिदृश्यमानमुदरं सर्ववस्तुषु वस्तुस्वरूपमेव । आद्यन्तयोश्च विद्यमानं । तस्मादमानं युक्तम् । किञ्च । यस्य भगवतो जृम्भमाणस्य

---

१ अपराधिना कालेन-घ. २ मण्डूकादयो हीति ख. ग. ३ सङ्गच्छन्ते ख. ग. ४ तान्यत्र घ. ५ तत्रैव नेत्रे क. घ. ६ साधारणानि पदानि ख. साधारणान्युभयत्र ग. ७ निर्दिष्टं पुनः ख. ग. ८ सिद्ध्यति नैकान्तिकं ख. ग. ९ यन्तयोर्वा विद्येति क. ग. घ. . १० एकमेवेति ख. ग.

मुखे भुवनानि संवीक्ष्य शङ्कितमनाः प्रतिबोधिताऽप्यासीत् । इदं हि चरित्रद्वयं विश्वाधारत्वमनुभवमोहकत्वं च । यः सर्वेषु भूतेषु तिष्ठन् सर्वाणि भूतान्यन्तरयतीत्यन्तरः । स हि गोकुले तिष्ठन् गोकुलमन्तः स्थापयति । न चैतन्मायिकम् । श्रुतिसिद्धत्वात् । यशोदायाश्च तत्राऽप्यनुभवात् । विचारेणाऽपि **"अथो अमुष्यैव ममाऽर्भकस्ये"**ति वाक्याद्ब्रह्मधर्म एवाऽयम् । अस्तु वा तत् । तदानीमेव शङ्किता प्रतिबोधिताऽप्यासीत् । पुत्र एवाऽयं ममेति ज्ञातवती । नह्यनुभवस्य स्मृतिसंस्काराजनकत्वं भगवन्मायाव्यतिरेकेण सम्भवति । अयमेव हि भगवत उल्लासः । जृम्भा च भगवतैव जनिता मुखविकासहेत्वर्थम् । अतो निमित्तान्तरेऽपि मुखविकासे जगत्प्रदर्शनं तदैव हि प्रतिबोधनम् । प्रथमप्रदर्शने[1] तु मुचिस्मितेत्येवाऽध्यायसमाप्तिः । **"वैष्णवीं व्यतनोन्मायामि"**ति तत्रैवोक्तत्वात् । एवं चतुर्भिः श्लोकैः चतुर्मूर्तेर्भगवतः सङ्कर्षणा-निरुद्ध-प्रद्युम्न-वासुदेवनिर्णय उक्तः । सर्वे वा सर्वत्र ॥ ३० ॥

एवमुल्लासं निरूप्य भ्रुवं निरूपयति । भ्रूशब्देन हि भगवत्कृतं फलमुच्यते । **"तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यमि"**[2]ति वाक्यात् । तत्फलं दुःखाभावसुखरूपम् । दुःखस्य परमा सीमा नरकादिः । सुखस्य परमा सीमा वैकुण्ठाख्यम् । तदुभयं भगवान् साधनरहितेभ्यः करोतीति विचारेण भगवत्त्वम् । तत्र दुःखाभावद्वयमाह—

**नन्दं च मोक्ष्यति भयाद्वरुणस्य पाशाद्गोपान् बिलेषु पिहितान् मयसूनुना च ।**
**अह्न्यापृतं निशि शयानमतिश्रमेण लोकं विकुण्ठमुपनेष्यति गोकुलं स्वम् ॥३१॥**

**नन्दं च मोक्ष्यतीति** । भयात्सर्परूपात् वरुणस्य पाशाच्च । उभयत्राऽपि नन्दो रक्षितो व्रते[3] यात्रायां प्रवृत्तः । अनेनाऽन्ये धर्मा अस्वधर्माः । भगवद्धर्मा एव स्वधर्माः । अतो भगवानात्मा । तस्मात्परब्रह्मेत्यविवादम् । नन्दं चेति चकारो यशोदाया उद्धारं कृत्वा नन्दस्याऽपि समुद्धारं कृतवानित्युक्तसमुच्चयार्थः । नन्द एव वा[4] वारद्वयं मोचित इति । वरुणस्य पाशाद्द्वयं तस्मात् । अन्येषामपि दुःखदूरीकरणमाह—**गोपान् बिलेषु पिहितान् मयसूनुना चेति** । मयसूनुर्व्योमासुरः । स हि गोपरूपः समागतो बालकान्मेषायितान्नीत्वा गुहायां स्थापितवान् । तत्र च तेनैव मार्गेण पातालगमने बिलानि सन्ति । तत उक्तं—**बिलेषु पिहितानिति** । सर्पादयो वा तत्र निहितान्नयेयुरिति बिलपदम् । चकारादन्येऽप्युपद्रवा अनुक्ताः स्वयमूह्याः । एवं दुःखाभावमुक्त्वा परमसुखमाह—**अह्न्यापृतमिति** । अह्नि दिवसे आपृतं लौकिकक्रियया[5] व्याप्तम् । **निशि शयानमतिश्रमेणेति** निर्भरनिद्रया रात्रौ व्याप्तम् । एवमहोरात्रं परलोकसाधनरहितं स्वमेव वैकुण्ठं व्यापिवैकुण्ठं उप समीप एव नेष्यति । स्वनिकट एव मायाजवनिकां दूरीकृत्य तत्रैव वैकुण्ठे नीतवान् । इदं चरित्रं न योगस्य, न मायायाः, न कालस्य, न मण्यादीनाम् । अतो ब्रह्मचरित्रमेवैतत् । नयने हेतुः **स्वमिति** । आत्मत्वेन भगवांस्तत्परिगृहीतवान् ॥ ३१ ॥

एवं भ्रुवं निरूप्य भङ्गं निरूपयति—

**गोपैर्मखे प्रतिहते व्रजविप्लवाय देवेऽभिवर्षति पशून् कृपया रिरक्षुः ।**
**धर्त्तोच्छिलीन्ध्रमिव सप्त दिनानि सप्तवर्षो महीध्रमनघैककरे सलीलम् ॥३२॥**

१ प्रथमदर्शने ख. २ परमेष्ठ्येति क. घ. ३ व्रतयात्रेति ख. ग. ४ वा नास्ति ख. ५ क्रियाव्याप्तं ख. घ.



**गोपैर्मखे प्रतिहत इति** । पूर्वसिद्धफलस्य भङ्गोऽत्र[1] निरूप्यते । मखेन रक्षा । मखभङ्गेन क्लेशः । देवताप्रीतिश्च मखफलम् । नियतफलत्वं च तस्य निरूप्य तत्प्रतिघात उच्यते । गोपाः सर्वदा मखं कुर्वन्ति । तैरेव कृत्वा भगवांस्तं मखं दूरीकृतवान् । तस्मिन्मखे प्रतिहते रक्षकत्वात्तदभावे देवे अभिवर्षति व्रजनाश आरब्धः । अनेन देवताप्रीतियोगफलमिति निश्चितम् । समर्यावलम्बन एव मर्यादा त्यक्तव्येति सूचितम् । तदा कृपया रिरक्षुर्भगवान् जातः । तदा सप्तवर्षः सप्तदिनानि महीध्रं गोवर्द्धनमेककरे सलीलं धृतवान् । अनघेति सम्बोधनमुक्तविश्वासाय । धर्त्ता धरिष्यति । **उच्छिलीन्ध्रमिवेति** भाराभावाय । वर्षाकाले हि[2] उच्छिलीन्ध्रोद्गमः । अलौकिकवर्षात्वादलौकिकोच्छिलीन्ध्रोद्गम इतीन्द्रो बोधितः । सप्तदिनानीति सप्ततन्तुर्यज्ञो बाधितः सप्तदिनानि दुःखं प्रयच्छतीति । यत्रैव धर्मबाधो दृश्यते तत्रैव सप्तदिनान्युच्यन्ते । निवर्त्त्यं चेद्दुःखं[3] तदा सप्त दिनानि निरन्तरं दुःखं भवति । अग्रे निवर्त्तते । अनिवर्त्त्यं चेत्सप्तम एव दिवसे भवति । स्वयमपि सप्तवर्षः । सप्तधा परिच्छिन्नं कालमतिक्रान्तवान् । अत एव सप्ततन्तुमखभङ्गः अन्यथा फलं च । मर्यादा हि साङ्गेन वेदेन जन्यते । अङ्गानि षट् । आत्मा चैकः । अयं च संवत्सरः प्रजापतिः स साङ्गवेदप्रवर्तक[4] इति तमतिक्रम्य पश्चात्सप्ततन्तुमतिक्रान्तवान् । कालस्य भगवदवच्छेदकत्वाभावात्सप्तवर्षवेष्टनमेव[5] सप्तवर्षत्वम् । अयं च धर्मः सप्तमो भङ्गात्मकः । एककर इति एकां क्रियाशक्तिं स्थापितवान् । **"तैरयं साध्यतां मख"** इति वचनात् । अन्यथा तथैव गोवर्द्धनं स्थापयेत्[6] । **सलीलमिति** । वस्तुतस्तु यागस्य तथात्वाभावाद्भगवतैव तथा संपादनाद्भगवदिच्छयैव गोवर्द्धनः स्थितः । हस्तस्तु केवलं शास्त्रार्थत्वाय प्रदर्शितः । तथापि निरोधोपवासैर्दुःखावश्यकत्वं मत्वा तन्निराकरणाय लीलां कृतवान् । सा[7] हि वेणुवादनरूपा भवति । सप्तरन्ध्रैरमृतपूरकः । तथा सति प्राणाभ्युदयनिःश्रेयसफलसिद्धिः । अतो निरोधदुःखमुपवासदुःखं वा न जातमित्यर्थः ॥ ३२ ॥

एवं भङ्गं[8] विनिरूप्य संसूचनं निरूपयति—

**क्रीडन् वने निशि निशाकररश्मिगौर्यां रासोत्सुकः कलपदायतमूर्च्छितेन ।**
**उद्दीपितस्मररुजां व्रजभृद्वधूनां हर्त्तुर्हरिष्यति शिरो धनदानुजस्य ॥ ३३ ॥**

**क्रीडन् वने निशीति** । भगवतो हीदं संसूचनं स्वरूपफलार्थं । सम्यक्त्वं चाऽनिष्टनिवृत्तिमपि करोतीति । गोप्यो हि तत्र निदर्शनम् । ता एव हि भगवन्तं प्राप्तवत्यः । तत्सम्बन्धि चरित्रमेव भगवन्मार्गे फलसूचकम् । वने वृन्दावने । निशि रात्र्याम् । लौकिकवैदिकक्रियायां निवृत्तायां लोकेऽपि विनिवृत्ते तदा क्रीडति । तदाह—**क्रीडन् वने निशीति** । तन्निवर्तिका भक्तिरेव । अत एव निशाकरः । तस्य रश्मयो भक्तिप्रकाराः मनोरूपत्वादस्य[9] चन्द्रस्य तदिच्छाविशेषाः । तैं रश्मिभिर्गौरी रञ्जिता सर्वनिवृत्तिः । तादृश्येव निवृत्तिर्भगवत्क्रीडाहेतुः । अतएव भगवान् रासोत्सुकः । रासो नाम रसेन पूर्णः पदार्थोऽन्यसम्बन्धरहितः । स हि विचार्यमाणे प्रियाबहुस्त्रीकर्त्तृको नृत्यविशेषो भवति । तत्र भोगो वा । केवलं शृङ्गाररसाभिनिविष्टः । यथा भक्तगुणसौन्दर्याभिनिविष्टः । तदा अन्तः रसेन पूर्णस्तद्रसाविर्भावार्थं कलपदायतमूर्च्छनां कृतवान् । सा हि मूर्च्छनाऽन्येषां हृदये

१ भङ्गो निरूप्यते घ. २ हि नास्ति ख. ३ निवर्त्यते चेदिति ख. ४ प्रवर्तिव इतीति क. घ. ५ सप्तवर्षवेष्टनमेवेति क. ६ स्थापयेत् । अत्र तैरयं साध्यतामिति वाक्यमिति विशेषः ख. ग. ७ स हि वेणुवादनरूपो घ. ८ भङ्गं निरूप्येति घ. ९ रूपत्वादस्य तदिच्छेति ग.

रसार्थं विवरं करोति । तस्मिंश्च विवरे-भगवत्सम्बन्धाभावेन रसपूरणाभावात्तदर्थं भगवत्स्मरणात्मकः स्मरः प्रविष्टः । स हि विषयाभावाद्रोगत्वेन पर्यवसितः । सर्वो हि रसपूरकः स्वविषयमप्राप्य बुभुक्षादिवद्रोगतामापद्यते । अन्यथा देहनाशं मृत्युं वा न कुर्यात् । अनेन तासां मुख्योऽधिकारो निवारितः । भगवद्विषयकस्य कामस्य भगवद्धर्मप्रवेशाभावात् । अत एव तादृशीनां भगवत्सम्बन्धप्रतिबन्धकः कामाधिष्ठातृदेवतारूपः । अर्थाधिष्ठात्रीदेवताया धनदरूपाया भ्राता । अनुजत्वात्सोऽपि तादृशः । स तासां प्रतिबन्धको जातः । एवमपि सति भगवान् स्वेच्छया प्रवृत्त इति व्रजभृद्वधूनां हर्तुः शङ्खचूडस्य शिरो हरिष्यति । गुणत्रयाविष्टानामेव तादृशरोगरूपकामसद्भावे तत्प्रतिबन्धो भवति नतु गुणत्रयातीते भगवत्यासक्तानामतस्तस्य शिरो हृतवान् । कला अव्यक्तमधुरा अनभिव्यक्तपरमानन्दप्रतिपादकाः शब्दब्रह्मरूपाः स्वराः । तेषां पदं स्थानं गीतादि । तथाभूतानि वा पदानि । वाक्यार्थस्य तत्राऽप्रयोजकत्वात्पदानामेव तत्र स्वातन्त्र्यम् । आयतमूर्च्छनं दीर्घमूर्च्छनम् । मूर्च्छना हि सङ्गीते प्रसिद्धा स्वराणाम् । तस्य आयतत्वं सर्वचित्तप्रवेशयोग्यरूपता । मूर्च्छितशब्दाच्च रसान्तरमविवेकादिकं वा नोत्पत्स्यत इति सूचितम् । उद्दीपितो यथाऽग्निर्दहति तथा स्मरेण तास्तथाभूता इव जाताः । अतएव स्मरस्य रोगत्वम् । व्रजमेव बिभ्रतीति न तद्भर्तृणां रक्षकत्वम् । वधूत्वात्तासामेवाऽतिश्लीभावेन प्रतिबन्धकनिवृत्त्यभावः सूचितः । अतएव स हर्त्ता जातः । एवं भगवान् मुख्याधिकाराभावेऽपि स्वलक्षणं फलं प्रयच्छतीति गोपिकासम्बन्धिचरित्रं संसूचकं भवति ॥ ३३ ॥

एवं संसूचनं निरूप्य भूरिभावं निरूपयति भूर्यनुग्रहं वा द्वाभ्याम्—

**ये च प्रलम्बखरदर्दुरकेश्यरिष्टमल्लेभकंसयवनाः कुजपौण्ड्रकाद्याः ।**
**अन्ये च शाल्वकपिबल्वलदन्तवक्रसप्तोक्षशम्बरविदूरथरुक्मिमुख्याः ॥ ३४ ॥**

**ये च प्रलम्बेति ।** एते सर्वे दैत्या दैत्यांशराजानश्च भगवता हतास्तदीयं निलयं वैकुण्ठं गताः । ये च पुनः प्रलम्बादयो बलभद्रादिभिर्हतास्तत्रापि ये भगवन्मुखारविन्दं पश्यन्तः प्राणान् जहुः पार्थास्त्रपूता धर्मयुद्धेन हतास्तेऽपि वैकुण्ठमेव गताः । अन्ये ये प्रलम्बादयस्ते अदर्शनं गताः । अव्यक्ते प्रकृतौ लीना इत्यर्थः । अथवा । प्रथमश्लोकोक्ता भूरिरूपं प्रकृतिमेव गताः । तस्या व्यापकत्वाद्भूरित्वम् । द्वितीयोक्ता भगवन्तं गता इति । अथवा । उभये एते आवेशिनः प्रकृतिं गताः । अभिमानिनस्तु तदीयं निलयं गता इत्यर्थः । खरो धेनुकः । दर्दुरः कश्चिदन्यो यथा बकस्तथा सोऽपि । बक एव वा जलवासात् । **बकदर्दुरेति** पाठे अघासुरो वा दर्दुर इति केचित् । अरिष्टो वृषभासुरः । मल्लाश्चाणूरादयः । इभः कुवलयापीडः । यवनः कालयवनः । यवना वा मुचुकुन्दात्समागत्य ये मथुरायां हताः । कुजो नरकासुरः । पौण्ड्रको मिथ्यावासुदेवः । आदिशब्देन काशिराजप्रभृतयः । एते स्वभावत एव हताः । न तु देवान्तरवरपुष्टाः । अतो वरपुष्टत्वविशेषणेन अन्यत्वम् । ते च शाल्वादयः । कपिर्द्विविदः । स रघुनाथभक्तोऽपि तद्भक्तसङ्गेऽपि दुःसङ्गाद्धतः । शम्बरस्तु मायाशतवित् । अत्रैव वा बल्वलः । सोऽपि यज्ञविघ्नकर्तृत्वादृषीणामप्यशक्यत्वाद्धरसिद्ध इति ज्ञातव्यम् । सप्तोक्षाः बलीवर्देषु प्रविष्टा दैत्याः । ते हि भगवत्स्पर्शमात्रेण हताः । अत एव तदर्थं सप्त-

१ धिष्ठात्री देवतेति ख. २ देवतारूपाया इति ख. ग. ३ पितोऽभिर्यथेति ख. ४ संसूचनामिति ख. ५ मात्रेणैवेति ख.



रूपाणि कृतवान् । ते हि त्रिपुरवदेकक्षणे वध्याः अन्यथा अवध्या इति । बलीवर्दा एव पश्चाद्वा मृता इति । अन्ये वा सप्त बलीवर्दाः । विदूरथो दन्तवक्रभ्राता । रुक्मी शालकः स मुख्यो येषां बिन्दानुविन्दादीनाम् । एते ह्येकैकशो भगवता सह युद्धे तद्भ्रातृपुत्रैर्वा हताः ॥ ३४ ॥

अतः परं निमित्तान्तरेण भगवत्सारथ्ये युद्धे हतानाह—

**ये वा मृधे समितिशालिन आत्तचापाः काम्बोजमत्स्यकुरुकैकयसृञ्जयार्णाः ।**
**यास्यन्त्यदर्शनमलं बलपार्थभीमव्याजाह्वयेन हरिणा निलयं तदीयम् ॥ ३५ ॥**

**ये वेति ।** एतेषां भगवतैव सह युध्यमानत्वात् द्वेषभावाच्च मुक्तिर्युक्तापि । अन्ये तु निमित्तान्तरेण हता इति ये वेत्यनादरः । समितिशालिनो युद्धे पराक्रमवन्तः । सप्तम्या अलुक् । अत एव मृधे सङ्ग्राम आत्तचापाः । धर्मनिष्ठता सूचिता । काम्बोजादयोऽर्णान्तास्तत्तद्देशक्षत्रियाः । दशार्णा वा अर्णाः । सृञ्जयाः पाञ्चालाः । सृञ्जयाद्या इति पाठे धृष्टद्युम्नप्रभृतयः । एकैकश उभयपक्षेऽपि हताः । अन्यथा पाण्डवानामर्थे मृतानां मुक्तिर्न स्यात् । प्रथमतः अदर्शनं गताः । यावद्भगवानत्र स्थितस्तावदद्दृष्टा भूत्वा अत्रैव स्थित्वा भगवता सह गता इत्यर्थः । अत्र प्रलम्बो बलभद्रेण हतः खरश्च । मल्लयवना यथायथम् । शम्बरः प्रद्युम्नेन । रुक्मी च बलभद्रेण । काम्बोजादयो भीमादिभिः । अत्र सर्वत्र बलपार्थभीमा इति तेष्वाविष्टस्य भगवत एव नाम । परं व्याजेन । बलपार्थभीमेति व्याजाह्वयानि यस्य । एतद्धननं भगवच्चरित्रम् । आत्मत्वात् । अतएव हननादिकमनुक्त्वैव तैद्गृहे गमनं निरूपितम् । "जातः कंसवधार्थाये"त्यादि तु दृश्यमानाभिप्रायं कल्पान्तराभिप्रायं वा ॥ ३५ ॥

एवं भूर्यनुग्रहं निरूप्य चिन्तामयं निरूपयति—

**कालेन मीलितदृशामवमृश्य नृणां स्तोकायुषां स्वनिगमो बत दूरपारः ।**
**आविर्हितस्त्वनुयुगं स हि सत्यवत्यां वेदद्रुमं विटपशो विभजिष्यति स्म ॥३६॥**

**कालेनेति ।** भगवतो हि चिन्ता व्यासरूपा । व्यासो हि चिन्तया सर्ववेदार्थं विनिश्चित्य भगवत्स्वरूपं लोकेभ्य उपदिशति । कालेन द्वापरादिना मीलिता आच्छादिता दृष्टिर्येषां एतादृशानां नृणाम् । स्वनिगमो दूरपारः आकलयितुमशक्य इति स्वयमाविर्भूतः । अनुयुगमिति वेदद्रुमं विटपशो विभजिष्यतीत्यनेन सम्बध्यते । प्रतिद्वापरान्तं वेदविभागः । अतः पुराणान्यप्येकस्य चतुर्युगस्य व्यवस्थां कथयन्तीति सूचितम् । विटपश इति वेदानां विभागे कृत्रिमत्वशङ्कानिवृत्त्यर्थम् । शाखास्वरूपं तु निबन्धे निरूपितम् । एकस्या भगवन्मूर्तेः स्वरूपप्रतिपादको वेदराशिः शाखेति । वेदस्य द्रुमत्वमपि पूर्वं निरूपितम् । स्मेति प्रसिद्धे । तस्मादत्र बहु न वक्तव्यमिति भावः ॥ ३६ ॥

इदानीमेतं निरूपयति—

**देवद्विषां निगमवर्त्मनि धिष्ठितानां पूर्भिर्मयेन विहिताभिरदृश्यमूर्भिः ।**
**लोकान् घ्नतां मतिविमोहमतिप्रलोभं वेषं विधाय बहु भाष्यत औपधर्म्यम् ३७**

१ च नास्ति ख. २ ह्या यस्येति ख. ग. ३ तद्गृहगमनमिति ग. ४ धियामिति पाठः ख. ग. ५ रूपाचिन्तयेति ग.

**देवद्विषामिति** । एषो(?) बुद्धः साम्प्रतं विद्यमानत्वात् । तस्य स्वरूपमिदमेव यदिदानीं वर्त्तते । अनेन ब्रह्मणोऽपि निरूपणसमयः कलिरेवेति । **वेदमार्गविरोधेन येषां करणमण्वपि । ते हि पाषण्डिनो ज्ञेया वेदार्थस्य विनिन्दकाः** । देवद्विषां दैत्यानाम् । ते हि देवान् द्विषन्ति । अनेन देवप्रार्थनया दैत्यमोहनार्थं बुद्धावतार इति सूचितम् । निगमवर्त्मनि धिष्ठितानां वेदप्रतिपादितमार्गे व्यवस्थितानाम् । यद्यपि वेद एव दैत्यव्यामोहनार्थं बहव उपाया निरूपिताः । तथापि सामान्यत एव वेदवैमुख्यार्थमयमवतारः । धिष्ठिता अधिष्ठाय स्थिताः । वयमेव वेदप्रवर्त्तका इति लोकानां व्यामोहार्थं आत्मानं वैदिकत्वेन ज्ञापयित्वा समागतान् व्यामोहयन्तीत्यर्थः । पूर्भिः त्रिपुररूपाभिः । अदृश्यमूर्भिः । मूर्माया । अतएव 'स्त्रियां क्तिन्नि'ति मूर्भिरिति भवति । मायाकार्यं किञ्चिदित्यर्थः । अदृश्या मूर्यासु ता अदृश्यमुरः ताभिः पूर्भिस्त्रिपुरैः । ता एव हि मयेन विहिताः कृताः प्रेरिता वा । अनेन मार्गद्वयमपि ते नाशयन्तीति सूचितं वैदिकं लौकिकं च । अनेन सर्वथा तन्नाशः कर्त्तव्य इति भगवदवतारहेतुर्निरूपितः । किञ्च । न केवलं लोकहननमेव देवद्रोहाचरणम् । यज्ञाद्य-करणबोधनेन आत्मन एव वैदिकत्वेन देवत्वसम्पादकत्वं च । तथा चाऽयथा सृष्टिर्निरूपिता भवति । तयोः स्वरूपतो नाशे पुनस्तथैव भवन्तीति बुद्धिव्यामोह एव कर्त्तव्यः । अतो मतिविमोहं कृतवान् । अत्यन्तं प्रलोभो यत्र । अल्पेनैव साधनेन बहुफलनिरूपकं शास्त्रं कृतवान् । वेषं बुद्धवेषम् । अहं सर्वज्ञ इत्यात्मानं ख्यापयित्वा तेषां हृदयवार्त्तामुक्त्वा विश्वासमुत्पाद्य विपरीतोपदेशनं मतिविमोहनम् । मतिविमोहनेन सहितो मतिप्रलोभो वा । तथा सति विद्यमानाया मतेर्विमोहोऽन्यथाकरणम-विद्यमानायाश्चाऽमार्गभूताया उत्पादनमिति । औपधर्म्यं पाषण्डधर्मान् ॥ ३७ ॥

एवमेतं निरूप्य ईश्वरं निरूपयति—

**यर्ह्यालयेष्वपि सतां न हरेः कथाः स्युः पाषण्डिनो द्विजजना वृषला नृदेवाः ।**
**स्वाहा स्वधा वषडिति स्म गिरो न यत्र शास्ता भविष्यति कलेर्भगवान् युगान्ते ३८**

**यर्ह्यालयेष्वपीति** । वहिः सर्वत्र भगवत्कथा युगान्तरेषु स्थिताः । ततो द्वापरादिषु सतामाल-येषु । कलिप्राचुर्ये सतामप्यालयेषु हरेः कथा न भविष्यन्ति, तदा शास्ता कल्किरूपेण भविष्यतीति । कलियुगस्याऽऽरम्भ एव परीक्षिति भगवानाविष्टः कलिनिग्रहं कृतवान् । तथापि तथा न निगृहीतः कलिः । भगवद्धर्माणां प्रवर्त्तमानत्वात् । ते हि कलिमलसंहतिकलनाः । न केवलं भगवद्धर्माभाव एव किन्तु वैदिकोऽपि धर्मो गत इति निरूपयति । धर्मो हि जन्यते ब्राह्मणैः । पाल्यते राजभिः । ते उभये नष्टाः । पाषण्डिनो द्विजजना जाताः । पाषण्डधर्मानेव कुर्वन्ति बोधयन्ति च । नृदेवा राजानश्च शूद्रा एव जाताः । तत्रापि वृषमेव लान्ति आददत इति वृषलाः । म्लेच्छा इति यावत् । धर्ममेव स्वयं गृह्णन्ति नाशनार्थम् । कुर्वन्ति वा प्रमाणनाशनाय । ते हि नृणां देवाः पूज्याः । अनेन पाल्याः पालकाश्च उभये दुष्टा इति ज्ञापितम् । किञ्च । धर्माभासोऽपि गतः । सर्वत्र विधि-च्छलरूपेणाऽनुकरणेन धर्माभासानेव कुर्वन्ति । तत्र देवादीनां सान्निध्याभावात् यागाभावेऽपि स्वाहादिशब्दाः श्रूयन्ते । तेऽपि यदा न श्रूयन्ते तदा भगवानवतीर्ण इत्याह—**स्वाहा स्वधेति** ।

१ ब्रह्मणापीति ख. २ मूर्तिरिति ख. ३ अदृश्यमूर इति ख. ४ व्यामोहमिति ख. ग. ५ विमोहेनेति क. ख. ६ न्यथाकरणे अविद्येति ख. ७ श्च मार्ग इति ख. ८ ते नृणामिति ग. ९ च नास्ति क. ख.



**स्वाहेति होमाः, स्वधेति श्राद्धानि, वषडिति यागाः । राजसतामससात्त्विका एते । स्मेति प्रसिद्धाः** । गिर इत्यर्थाभावः । यत्र गृहेषु देशे वा । एवं कल्क्यवतारे हेतुत्रयम् । भक्त्यभावः, धर्माभावः, आभास-धर्माभावो वेदाभावो वा । अनेन सत्ययुगे त्रयं प्रवर्तयिष्यतीति ज्ञापितम् । युगान्ते चतुर्युगसमाप्तौ । **भगवानिति** तस्मिन्नवतारे सर्वभगवद्धर्माविर्भावः ॥ ३८ ॥

एवं सर्वमेवान्तर्यामिणं सर्वधर्मसहितमुत्पत्त्या विचार्य "**यावन्मनो धारणयाऽवतिष्ठन्**" इत्यंशं विचारयिष्यन् भगवतो माहात्म्यमाह—**सर्गे तपोऽहमिति** त्रिभिः ।

**सर्गे तपोऽहमृषयो नव ये प्रजेशाः स्थानेऽथ धर्ममखमन्वमरावनीशाः ।**
**अन्ते त्वधर्महरमन्युवशासुराद्या मायाविभूतय इमाः पुरुशक्तिभाजः ॥ ३९ ॥**

एतादृशभगवन्मूर्त्तिध्यानेन मनसोऽवस्थाने हेतुर्भगवन्माहात्म्यम् । न हि महान् बहुकालं तिष्ठति । अव्यवस्थितमनसा वा महान् चिन्तनीयो भवति । सम्यक्स्फुरणाभावेनाऽपराधप्रसङ्गात् । महतश्च धारणात् वैक्लव्यं भवतीति प्रकारत्रयेण निरूपणम् । तत्र प्रथमं महान् सर्वदा न तिष्ठतीत्यत्र को हेतुरित्याकाङ्क्षायां स हि न सर्वदैकरूपः स्वगुणैः कालभेदेन नानाविधो भवतीति सर्वदा तस्य नैकरू-पेणाऽवस्थानम् । तदाह । सर्गे सृष्टिनिमित्तं भगवानेतावन्ति रूपाणि करोतीत्याह । तपः । अहं ब्रह्मा । ऋषयो नव मरीच्यादयः । ये प्रजेशाः प्रजोत्पादने समर्थाः । गुणत्रयेण सृष्टिरिति त्रयो निरूपिताः । ऋषय इति वेदा वा । तथा सति चैतुर्मूर्त्तिः सृष्टिं करोतीति । तत्र तपो वासुदेवः । "**यस्य ज्ञान-मयं तप**" इति । प्रजेशाः सङ्कर्षणरूपाः । ऐश्वर्यं हि तत्र प्रतिष्ठितमिति । सृष्ट्यपेक्षया स्थाने बहु-कार्यमिति तत्र पञ्च रूपाणि निरूपयति । स्थाने मर्यादापालनार्थम् । **अथेति** भिन्नक्रमे । धर्मः प्रथमोऽनिरुद्धः । मखो यज्ञः । धर्मो ह्यत्राऽऽचाररूपः प्रमाणशब्दश्रवणानन्तरभाविनी प्रवृत्तिः । मखस्तु प्रयत्नव्यङ्ग्यो भगवद्रूपोऽनन्तमूर्त्तिः । उत्पत्तौ यो वेदो गृहीतस्तदर्थोऽत्र साङ्गो गृहीतः । मनुर्धर्मप्रवर्त्तकः । तदन्तरस्य सद्धर्मत्वात् । अमरा देवास्ते स्वर्गपरिपालकाः । अवनीशा राजानो भूमिपालकाः । संहारे ततोऽप्यधिकापेक्षायामप्यनादरेण निरूपयति—**अन्त इति** । संहारार्थम-धर्मः । हरो यज्ञप्रतिपक्षः । मन्युवशाः सर्पादयो मनुप्रतिपक्षाः । असद्रूपाः असुरा देवप्रतिपक्षाः । आदिशब्देन भूमौ नाशकाश्चौरव्याघ्रादयः । तेषामसुरपक्षपातित्वात्तदादित्वम् । ननु कथमेवमनेकरूपत्वं भगवतस्तत्राऽऽह—**मायाविभूतय इति** । मायायै विभूतयः मायायां मायायाः मायया वा । माया हि पूर्वं निरूपिता । इयं जगत्कारणभूता । स हि यदा जगद्रूपेण भवति । भगवतो वा निमि-त्तत्वमापद्यते तथाऽऽकृतिसमर्पणाय । भगवतो वा सेवार्थमुत्कृष्टानि साधनानि सम्पादयति । भगव-त्कर्तृके वा जगति करणत्वमापद्यते । तदा तन्निमित्तमेतावन्ति रूपाणि भगवान् करोति । अन्यथा तस्याः करणत्वादयो नोपपद्येरन् । नन्वेतेषु समागतेषु तस्याः कार्यं नोपपद्यते । तत्राऽऽह—**पुरु-शक्तिभाज इति** । सर्वभवनसमर्थाया मायाया एकस्मिन्नपि कार्ये सर्वसामर्थ्या विद्यमानत्वात्सर्वं कार्यमेकदैव स्यात् । विलम्बे कारणाभावात् । भगवदिच्छाया निमित्तत्वेऽपि तस्या अदृष्टरूपाया नियामकान्येतानि रूपाणि, बोधकानि वा । एतेषां नियतसामर्थ्यान्न पूर्वोक्तदोषः ॥ ३९ ॥

१ ध्याने मनस इति ख. २ स न हि सर्वदेति ग. ३ चतुर्मूर्ति सृष्टिं ग. ४ मन्युवंशा इति ख. ५ चौरेति क. ग. ६ मायायां नास्ति ग. ७ तस्येति ग.

एवं भगवतः प्रतिक्षणं नानारूपत्वादेकविधा धारणा न तिष्ठतीति यावदित्युक्तम् । एवं महान् बहुकालं न तिष्ठतीति निरूपितम् । इदानीं अव्यवस्थितमनसा वा महान्न चिन्तनीयो भवतीतीमं पक्षं विशदयति—

**विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह यः पार्थिवान्यपि कविर्विममे रजांसि ।**
**चस्कम्भ यः स्वरहसाऽस्खलताऽऽत्रिपृष्ठं यस्मात्त्रिसाम्यसदनादुरुकम्पयानम् ४०**

**विष्णोर्नु वीर्यगणनामिति** । सर्वेषामेवाऽव्यवस्थितमनस्त्वात् को वाऽर्हतीत्युक्तम् । मनस एव तत्राऽसामर्थ्याद्योग्यताऽपि नाऽस्तीत्युक्तम् । जीवस्य तपोयोगादिभिः सामर्थ्यवृद्धावपि मनसो वा सहायबाहुल्ये स्वाभाविकधर्मस्याऽनिवृत्तत्वादत्यन्तं ब्रह्माऽपि न समर्थ इति तमप्प्रत्ययः । जगदाद्यर्थे सामर्थ्ये वर्त्तमानेऽप्यत्र भगवतः सर्वांशधारणे न सामर्थ्यमित्याह—**इहेति** । नन्वेवंरूपेण मनसा ज्ञानजननान्निश्चितपदार्थबोधकत्वे तत्रापि सामर्थ्यं भविष्यतीत्याशङ्क्याऽऽह—**नु इति** । एतदपि वितर्केणोच्यते नतु निश्चितम् । सामर्थ्ये हेतुमाह—**यः पार्थिवानीति** । कार्यसृष्टौ समर्थजीवानां गणनायां यः सृष्ट्यभिमानी ब्रह्मा । यत्र सहायतामापन्नानि तत्त्वानि ब्रह्माण्डं जनयन्ति स रजोगुणाधिष्ठाता कतमः । तेन हि पूर्वमस्मिन्ब्रह्माण्डे ये जीवा उत्पाद्यन्ते तेषां भोगादृष्टेन संस्कृतान्परमाणून् महाराशीकृत्य ब्रह्माण्डोपादानापरोक्षज्ञानेन भगवदिच्छयैव तादृशसामर्थ्येन ब्रह्माण्डमुत्पाद्यत इति परमाणुगणनसामर्थ्याद्वैलक्षण्यज्ञानाच्च त तथात्वेनाऽऽशङ्क्य निराकरोति । विवेचनार्थं कविपदम् । रजांसीति दुर्लक्ष्य सूक्ष्मत्वात् । तादृशस्याऽप्यसामर्थ्ये हेतुः—**चस्कम्भेति** । इयत्तापरिमाणवन्तो हि गुणा गणयितुं शक्यन्ते विवेचयितुं वा । भगवतस्त्वेकोऽपि गुण इयत्तारहितः । मनसोऽपि स्थूलत्वात्, निरवयवत्वाच्चाऽसङ्गित्वाच्च । तदाह । आत्रिपृष्ठं ब्रह्मलोकमभिव्याप्य । अस्खलता स्वरंहसा असाधारणवेगेन सर्वागम्येन वा । उरुकम्पो यानेषु यस्मिंस्तादृशं त्रिपृष्ठं सर्वं च । ततः त्रिसाम्यसदनाद्गुणत्रयसाम्यावस्थसत्यलोकात्सर्वमित्यर्थात् । उरुकम्पयानं वा । चस्कम्भ उपर्येव स्तम्भितवान् । तस्मात्पातकेन गुणेन रक्षणमशक्यमिति मनसोऽप्याकलनाभावादियत्ताभावः । संख्यापरिच्छेदाभावस्त्वग्रे वक्ष्यते ॥ ४० ॥

एवं महद्गुणा अव्यवस्थितमनसा आकलयितुमशक्या इति धारणयेत्युक्तम् । धारणा हि यथाकथञ्चिन्मनसा परिकल्प्य क्रियत इति । महतश्च धारणाद्वैकल्यं भवतीत्यवतिष्ठत इति यदुक्तं तदर्थं महत्त्वं निरूपयति—

**नाऽन्तं विदाम्यहममी मुनयोऽग्रजास्ते मायाबलस्य पुरुषस्य कुतोऽपरे ये ।**
**गायन् गुणान् दशशतानन आदिदेवः शेषोऽधुनाऽपि समवस्यति नास्य पारम् ४१**

**नाऽन्तं विदामीति** । अहं ब्रह्मा सर्वदा भगवद्गुणानामेवाऽभिव्यञ्जकजगत्कर्त्ता । यावज्जन्म कार्याणि कुर्वन्नपि पुत्रद्वारा कारयन्नपि स्वतिरोभावे स्वस्य वाऽन्यस्य वा विनियोगादन्तं न विदामीत्यर्थः । मुनयोऽपि तथा । योगोऽपि मदन्तर्गतमेव फलं साधयतीति सुतरां त्वदग्रजा मत्पुत्राः सनकादयो मरीच्यादयो वा । ते हि मदंशभूता मदपेक्षया अल्पमेव विषयीकुर्वन्तीति । तेषां गणनेच्छा-

१ रजोगुणोधिष्ठातेति ख. २ गणकेति ख. ३ सूत्ररवादिति ख. ४ कम्पमानं क. ५ अव्यवस्थितेति ख. ६ मदन्तमेवेति ख.



निवृत्तौ हेतुमाह—**मायाबलस्येति** । क्षणमात्रेण ब्रह्माण्डकोटिजननसमर्थाया मायाया अपि बलं यस्मात् । किञ्च । पुरुषस्य मायाभर्तुः । भगवदाहितमेव हि तेजः सा जनयतीति । कुतः अपरे कालादयः । तेषामपि भगवच्चेष्टारूपत्वात् । अस्मदादयो वा । पुरुषापेक्षया अपरत्वे कालादयः । स्वापेक्षया त्वस्मदादयः । अस्मदादीनां प्रथमत एव अनन्तत्वज्ञानान्निवृत्तावपि शेषो वेदाभिमानिनी देवता । सहस्रवदनः सहस्रप्रकारेणैकं पदार्थं वक्तुं शक्तः । अत एव आदिदेवः । तत्प्रतिपाद्या एव हि सर्वे देवाः । यावान् भगवान् तद्व्यतिरिक्तसर्वरूपः शेषः । सृष्टेरनादित्वात्तत आरभ्य गणनायामप्यद्याऽपि नाऽन्तं समवस्यति एतावन्तोऽग्रे गणनीया इति । अनन्तत्वात्सृष्टेरग्रेऽपि । अत आह—**नाऽस्य पारमिति** । अस्य गुणस्य । भगवतो वा । बहून् गुणान् गणयितुं प्रवृत्त एकस्याऽपि पारं न गतवानिति वा । एवं सर्वथा भगवतो महत्त्वं निरूप्य धारणाया अशक्यत्वात् यावदिति निरूपितम् ॥ ४१ ॥

नन्वेतादृशत्वे भगवतः क्षणमपि धारणा न स्यादित्याशङ्क्याऽऽह—

**येषां स एव भगवान् दययेदनन्तः सर्वात्मनाऽऽश्रितपदो यदि निर्व्यलीकम् ।**
**ते दुस्तरामतितरन्त्यथ देवमायां नैषां ममाऽहमिति धीः श्वशृगालभक्ष्ये ॥४२॥**

**येषामिति** । सर्वमार्गप्रवर्त्तकत्वाद्भगवतो मोक्षदातुः अवश्यं धारणा प्रवर्त्तनीयेति यान् पुरुषविशेषानात्मीयत्वेन गृह्णाति तेषां धारणायोग्यतेत्याह—**दययेदिति** । तेषामपि न साधनत्वेन तथात्वसम्पादनं किन्तु दययैव । **स एव भगवानिति** । यः सर्वमार्गप्रवर्त्तकः । न तु गुर्वादीनामपि क्रियां । भगवत्त्वात्स्वेच्छया तथा करणम् । अनियमेन करणप्राप्तावतिदुःखित्वेन दीनत्वे दयया तानेव योजयतीति दयायाः करणत्वम् । सर्वेषु च दयाभावः अनन्तत्वात् । तथा सत्यन्येषां गुणानामुपमर्दात्सर्वमुक्त्या सृष्टेरन्तवत्त्वे भगवतोऽनन्तत्वं भज्येत । ननु तथाविधानां किं धारणामात्रेण स्वयमेव तथा फलं प्रयच्छतीत्याशङ्क्य साधनेनैव सर्वं भगवान् करोतीति साधनमुपदिशति—**सर्वात्मनाऽऽश्रितपद इति** । भगवद्दयाया ज्ञापकं धारणम् । तस्मिन् सति भगवदिच्छानुगुण्यादन्यानि साधनानि सिद्धिं प्राप्स्यन्तीति सर्वभावेन भगवत्प्रपत्तिः कर्त्तव्या । तदाह । सर्वात्मना आश्रितः पादो यैः । व्यलीकं कापट्यं फलसम्बन्धो वा । सर्वात्मत्वेन फलार्थस्याऽपि भजनस्य प्राप्तत्वान्निर्व्यलीकमिति तन्निषेधः । तेषां फलसिद्धिमाह—**ते दुस्तरामिति** । अथाऽऽश्रयणानन्तरम् । पूर्वमेव दुस्तरत्वादथशब्दो मध्ये निरूपितः । अथवा । ते दुस्तरां मोहिकां मायां तरन्ति । तदा भगवद्भक्तिर्ज्ञानसिद्धिर्भवति । अथ तदनन्तरम् । देवमायां देवरूपस्य भगवतो द्योतनात्कारणाद्वा क्रीडाद्यर्थं वा या माया तामाधिदैविकीं पश्चात्तरन्ति । भगवति सायुज्यं प्राप्नुवन्तीत्यर्थः । तेषां तरणेऽभिज्ञानमिदानीमाह—**नैषामिति** । एषां श्वशृगालभक्ष्ये न ममेति । इदमभिज्ञानं तरणे । स एव तरिष्यतीति ज्ञातव्यम् । अहं ममेति दौर्जन्यं न यस्य देहादौ । सर्वत्रैव हि महत्कार्येऽभिज्ञानेनैव प्रवृत्तिः । "अह्नां विधान्यामि"त्यत्रोक्तम् । श्वशृगालभक्ष्य इति पर्यवसानेनाऽन्यदीयत्वनिश्चयार्थमुक्तं तत्तस्य पर्यवसितं फलम् । अन्यानि त्ववान्तरफलानि । तथा

१ वेदा इति ख. २ क्षणमात्रमपीति ख. ३ धारणीया ख. ४ कृपा इति ख. ५ प्राप्तावपीति ख. ६ सृष्टेरन्तत्वे इति ख. ७ धारणमात्रेणेति ख. ८ प्रयच्छतीति ख. ९ प्रतिपत्तिः ख. १० फलं वेति ख. ११ फलस्यार्थस्यापि ख. १२ देवरूपां देवस्येति ख.

देहस्य स्वोपयोगोऽवान्तरफलमेव । तस्मात्स्वोपयोगोऽपि देहादेर्न मुख्यं फलम् । अतः फलार्थे यत्नो न कर्तव्य इति हेतुरपि सूचितः । श्वसृगालेति ग्रामारण्ययोर्भक्षका उपलक्षिताः । तेन यत्राऽयं देहस्तिष्ठति तदाश्रयाः सर्व एव गृह्यन्ते । तेन मत्स्यादीनामपि परिग्रहः । अथवा । तादृशस्य नाऽपमृत्युसम्भावनेति ग्रामारण्यभेदेन तावेव भक्षकौ । ताभ्यामुपरोधान्न काकादीनां प्रवेशः । बहुधा विनियोगसम्भवादुपलक्षणमेवेति निश्चयः ॥ ४२ ॥

एवं **"यावन्मनोधारणयाऽवतिष्ठत"** इति सुनिरूपितम् । **"एकैकशोऽङ्गानि धियाऽनुधारयेदि"**ति निरूपयति—**वेदाऽहमङ्गेति** चतुर्भिः ।

**वेदाऽहमङ्ग परमस्य हि योगमायां यूयं भवश्च भगवानथ दैत्यवर्यः ।**
**पत्नी मनोः स च मनुश्च तदात्मजाश्च प्राचीनबर्हिर्ऋभुरङ्ग उत ध्रुवश्च ॥४३॥**
**इक्ष्वाकुरैलमुचुकुन्दविदेहगाधिरघ्वम्बरीषसगरा गयनाहुषाद्याः ।**
**मान्धात्रलर्कशतधन्वनुरन्तिदेवदेवव्रतो बलिरमूर्त्तरयो दिलीपः ॥ ४४ ॥**
**सौभर्युतङ्कशिबिदेवलपिप्पलादाः सारस्वतोद्धवपराशरभूरिषेणाः ।**
**येऽन्ये विभीषणहनूमदुपेन्द्रदत्तपार्थार्ष्टिषेणविदुरश्रुतदेववर्याः ॥ ४५ ॥**

तत्र त्रिविधा भक्ताः श्लोकत्रयेण सङ्गृहीताः । भक्तभक्तास्त्वेकेन । एते हि भगवदंशधारकाः । एतादृशत्व एकांशधारणासिद्धिः । पूर्वाधिकारे सम्पन्ने उत्तराधिकारार्थं प्रयत्नः कर्तव्य इति । प्रथमं ब्रह्मा । अन्तिमः शुकः पक्षी । तत्र प्रथमं शुकाधिकारे सम्पन्ने तदनन्तरं क्रमेण ब्रह्मपर्यन्तमधिकारा भवन्ति । इदमेव पादादित्वेनोच्यते । अथवा । चरणसेवा ब्रह्मण एव सिद्धा । स एव हि तच्चरणक्षालनादिना पूजां विधाय गङ्गामुत्पादितवान् । हसितं शुकादयो भगवतश्चित्ररूपाः । तत्र प्रथमं परमसात्त्विका निरूपिताः । तदनु राजसास्तामसाश्च । भगवज्ज्ञाने भक्तिमार्गस्य मुख्यत्वात् भक्ता एव गण्यन्ते । तत्राऽऽपाततः किञ्चित्स्वरूपमहं वेद । परमस्य पुरुषोत्तमस्य । योगमायां जगज्जननार्थमाज्ञापितां मायाम् । सा हि प्रथमतो ह्याज्ञाकारिणी । तस्याः स्वरूपे ज्ञाते भगवान् ज्ञातो भवति । तद्द्वारैव हि लोके भगवदाविर्भावात् । ब्रह्मा जानातीत्यत्र गुणानां सृष्टिहेतुत्वात्सर्वगुणसिद्धये ब्रह्मा सर्वं करोतीति हेतुर्हिशब्देन सूचितः । मायाया आधिदैविकत्वज्ञापनार्थं योगपदम् । आध्यात्मिकत्वमिति केचित् । यूयं नारदेन सहिता मरीच्यादयः । भवश्च महादेवः । एते त्रयः सात्त्विकादयः । भवस्य भगवत्त्वं भक्तिविरुद्धाचारस्याऽभक्तत्वबोधनव्यावृत्त्यर्थम् । ज्ञाननिष्ठान् सनकादीन् गणयत्येकरूपेण—**अथ दैत्यवर्य इति** । अनेन दैत्यवर्यः सनकादिरेवेति विचारितम् । अन्यथा राजसेषु गणनीयः स्यात् । दैत्यवर्यः प्रह्लादः । अथेति भिन्नप्रक्रमं प्राप्तः । भक्तमुख्यत्वात् । मनोः पत्नी शतरूपा निरूपिता । कायमित्यत्र स्त्रीलिङ्गस्य प्रथमनिर्देशात् । सर्वत्र चकारास्तदीयानां संग्राहकाः । तदात्मजाः प्रियव्रतोत्तानपादावाकूतिदेवहूतिप्रसूतयः । ऋभुर्विष्णुपुराणे प्रसिद्धः । अङ्गो वेनपिता । उतेति ध्रुवसिद्धिः स्पष्टेति । इक्ष्वाकुप्रभृतयो राजसाः । नाहुषो ययातिः । यदुप्रभृतय आदिशब्देनोच्यन्ते । मान्धात्रादिरन्तिदेवान्तैः सहितो देवव्रतो भीष्मः । एकवद्भावो वाऽनपुंसकश्च । सौभर्यादयस्तदनन्तरभा-

१ परार्थे इति ख. २ गुणप्रसिद्धय इति ख. ३ भिन्नक्रममिति ख. ४ कार्यमित्यत्रेति ग. ५ ध्रुवे फलसिद्धिरिति ख.ग.



विनः । मत्स्यसङ्गादिना तथात्वम् । उतङ्को भारते प्रसिद्धः । पिप्पलादः कश्चित् । सारस्वतो दधीचिः । उपेन्द्रदत्तः परीक्षित् । पार्थोऽर्जुनः । अन्ये च यथायथं प्रसिद्धाः ॥ ४३ ॥ ४४ ॥ ४५ ॥

तेषां फलमाह—

**ते वै विदन्त्यतितरन्ति च देवमायां स्त्रीशूद्रहूणशबरा अपि पापजीवाः ।**
**यद्यद्भुतक्रमपरायणशीलशिक्षास्तीर्यग्जना अपि किमु श्रुतधारणा ये ॥४६॥**

**ते वै विदन्त्यतितरन्ति चेति** । तां मायां ज्ञात्वा तामेव तरन्तीति । अस्मदादीनामपि तरणोपायमाह—**स्त्रीशूद्रहूणशबरा अपीति** । तामसेषु स्त्रियः सात्त्विक्यः । शूद्रो राजसः । हूणस्तामसः । शबरादयस्ततोऽप्यधमाः । पापेनैव जीवन्तीति पापजीवाः । एते विदन्ति तरन्ति च । यदि अद्भुतक्रमस्य भगवतः परायणाः सेवकाः तेषां यदि शीलेन शिक्षिता भवेयुः । अद्भुतः क्रमः पादविक्षेपः क्रियाशक्तिर्यस्येति भगवतः सामान्यतः परायणत्वं यस्य कस्यचित्सुलभम् । तस्य परायणास्तु क्षणमात्रमप्यन्यचित्ता न भवन्ति । अन्यथाऽद्भुतक्रमत्वाद्भगवानन्यत्र गच्छेत् । तेषामपि न वचनमात्रेण शिक्षितं प्रयोजकं किन्तु शीलेन सह । यथा ते भगवत्परास्तथा चेत्तदाज्ञया तेऽपि भवन्ति । किञ्च । स्त्रियादिषु नासम्भावना कर्तव्या । यतस्तिर्यग्जना अपि मुक्ता भवन्ति । यथा नामादिपाठनेन शुकादयः । श्रुतधारणाः श्रुतार्थालोचनसमर्थाः । तस्मादंशतो ज्ञाने सर्व एवाऽधिकारिणः । सर्वथा ज्ञाने न कोऽपि । भगवद्भक्तसङ्गाभावे तु न किञ्चिज्जानन्ति ॥ ४६ ॥

एवमेकैकशो धारणस्य स्वरूपमुत्पत्त्या विनिरूप्य **"जितं जितं स्थानमपोह्य धारयेदि"**त्यस्याऽर्थमुत्पत्त्या विचारयति—**शश्वदिति** द्वाभ्याम् ।

**शश्वत् प्रशान्तमभयं प्रतिबोधमात्रं शुद्धं समं सदसतः परमात्मतत्त्वम् ।**
**शब्दो न यत्र पुरुकारकवान् क्रियार्थो माया परैत्यभिमुखे च विलज्जमाना॥४७॥**
**तद्वै पदं भगवतः परमस्य पुंसो ब्रह्मेति यद्विदुरजस्रसुखं विशोकम् ।**
**सध्र्यङ्नियम्य यतयो यमकर्त्तहेतिं जह्युः स्वराडिव निपानखनित्रमिन्द्रः॥४८॥**

स एव भगवदंशः स्वाधीनो भवति यः स्वात्मत्वेन स्वयमेव स्फुरति । अन्यथा बुद्ध्या व्यवस्थापितस्तदपगमेऽपगच्छेत् । पादादीनां च स्वरूपमेतदेव । तत्र प्रथमं पादस्वरूपे विचारितेऽन्यत्स्वयमेव ज्ञास्यतीति लक्षणेन प्रथमं पादस्वरूपं निरूपयति—**तद्वै पदं भगवतः परमस्य पुंस इति** । दश धर्मा भगवतश्चरणारविन्दे निरूपिता दशलीलारूपाः । तथा सति प्रत्येकावयवे दशलीला उक्ता भवन्ति । तत्र भगवच्चरणारविन्दं कीदृशमित्यपेक्षायां यत्सर्वदा तच्चरणारविन्दं । यत्तु कदाचित्तन्न । अनेन कालेन भगवत्स्वरूपं निर्धारितं कालापरिच्छिन्नं तदिति । यत्कालेन परिच्छिन्नं तन्न तत् । प्रशान्तं गुणत्रयक्षोभरहितम् । सत्त्वस्याऽपि दयादिना क्षोभात्तदभावाय प्रशब्दः । एवं प्रेर्यप्रेरकयोरपरिच्छेदो निरूपितः । इदानीं सर्वपरिच्छेदकस्य कालस्याऽऽत्रापरिच्छेदकत्वमाह—**अभयमिति** । भयरहितम् । एवं संसारधर्माभावनिरूपणेन दोषाभावमुक्त्वा स्वरूपमाह—

१ मुत्पत्त्या निरूप्य ख. ग. २ भगवतश्चरणारविन्दं ग. ३ क्षोभनात् क. ख. क्षोभनादिति ग.

**प्रतिबोधमात्रं शुद्धं सममिति ।** प्रतिबोधमात्रमनुभवरूपम् । मात्रशब्देन प्रमातृप्रमाणप्रमेयसम्बन्धो निवारितः । त्रितयसम्बन्धरहिता या प्रमा तद्भगवत्पदमित्यर्थः । मात्रपदेनैव शुद्धताया उक्तत्वात् शुद्धमानन्दरूपम् । समं सद्रूपम् । एवं सच्चिदानन्दरूपमित्युक्तं भवति । अस्य पदस्य सर्वव्यवहारातीतत्वं वदति चतुर्भिर्विशेषणैः । व्यवहारोऽपि हि चतुर्द्धा भवति । प्रपञ्चत्वेन आत्मीयत्वेन शब्दत्वेन शब्दार्थत्वेन च । तत्र व्यवहारातीतत्वमाह—**सदसतः परमिति ।** कार्यकारणभावात्परम् । प्रकृतेर्वा । आत्मीयो न भवतीति आत्मव्यवहारोऽपि नास्तीत्याह । आत्मनस्तत्त्वं परमार्थस्वरूपम् । व्यवहारस्तत्कृतस्तदन्यस्मिन्भवति । आत्मनः सिद्धत्वान्न तत्र व्यवहारः । शाब्दिकं व्यवहारं निराकरोति—**शब्दो न यत्रेति ।** भगवत्पदे कर्मत्वाद्यभावान्न कारकत्वम् । अक्रियारूपत्वात् तदव्यञ्जकत्वाद्वा न धात्वर्थत्वम् । अप्रयत्नरूपत्वान्न प्रत्ययार्थत्वम् । अनेन शब्दे प्रधानरूपत्वाभावे नामाख्यातार्थत्वाभावादुपसर्गनिपातार्थत्वं दूरादेव निवारितम् । **कारकवान् क्रियार्थ इति ।** नामाख्यातयोः सम्बन्धकथनाद्वाक्यार्थोऽपि न भवतीत्युक्तम् । भगवदाज्ञया मायाव्यवहार्यत्वे जीवानामिवाज्ञानादिनिवृत्तिद्वारा व्यवहार्यत्वं स्यात् । तदपि नास्तीत्याह—**माया परैति** दूरादेवापगच्छति । तस्यां गमने हेतुः—**विलज्जमानेति** । इयं चरणदासी । ज्ञानरूपत्वाच्च भगवतः । इयं मोहिका । अत एव तस्या जनव्यामोहकत्वं भगवान् जानातीति । ये वा अभिमुखाश्चकारादनुचराश्च ज्ञानिनो भक्ताश्च तत्र सर्वत्रैव विलज्जमाना । विशेषतो लज्जा अंशतोऽपि कार्याकरणं द्योतयति । एवं दशभिर्विशेषणैर्भगवत्पदं लक्षयित्वा तस्य प्रसिद्धिमाह—**ब्रह्मेति यद्विदुरिति ।** यद्भगवत्पदं सर्ववेदान्तविचारका ब्रह्मेति विदुः । तस्मिन्नेव ब्रह्मणि ईश्वरत्वेन कश्चिदुद्गच्छेत्तदा स भगवान् । पूर्वोक्तं तु पदम् । स एव चेन्नियामको भवेत्तदा परमः । तत्पदम् । स एव चेद्भोक्ता तदा पुमान् । एवं विचारेण ब्रह्मविदोऽपि ब्रह्मेति तद्वदन्ति । एवं तस्य प्रसिद्धिमुक्त्वा तस्य सहजं फलमाह—**अजस्रसुखं विशोकमिति ।** परमानन्दो दुःखाभावश्च फलं तदुभयरूपं तदित्यर्थः । तत्र साधनान्याह—**सम्यङ्नियम्येति ।** सम्यगञ्चतीति सम्यङ्मनः । यदात्मानं संसारेऽञ्चति तादृशं मनो नियम्य । तद्भावं तस्य दूरीकृत्येत्यर्थः । इदमान्तरं साधनम् । बहिःसाधनं संन्यासः । तदाह—**यतय इति ।** एवं दोषाभावप्रभृति फलपर्यन्तं पदं निरूप्य विजितार्थो विचारितः । जितं जितं स्थानमपोह्येति विचारयति । तत्र जितानां स्वाधीनीकृतानां पदानां न परित्यागः । तथा सति पूर्वप्रयासवैयर्थ्यापत्तेः । किन्तु जितं स्थानं भगवच्चरणारविन्दाश्रयभूतं साधनसमुदायमपोह्य दूरीकृत्येत्याह । ससाधनस्य पदस्य जितत्वात्पदं स्थापनीयम् । साधनं त्यक्तव्यमित्यर्थः । नन्वस्य त्यागस्य किं प्रयोजनं तत्राऽऽह—**धारयेत्परम्परमिति ।** अग्रिमावयवस्वाधीनीकरणार्थमुत्तरोत्तरसम्बन्धिनां धारणमिति दृष्टान्तेन स्पष्टयति—**स्वराडिव निपानखनित्रमिति ।** यथा स्वराट् स्वर्गाधिपतिर्मेघादीनां स्वामी । निपानखनित्रं कूपखननसाधनं कुद्दालादि त्यजति । एवं भगवत्पदप्राप्त्यर्थं कृतानि क्षुद्राण्यपि साधनानि पदमाहात्म्यात् महाफलत्वेन पदे सम्पन्ने पूर्वमज्ञानात्क्षुद्रपदार्थसाधकानि सङ्गृहीतानि त्यजतीत्यर्थः । स्वराट् साधकानि तु गृह्णात्येव । एवमुत्तरत्र सर्वांशे फले निष्पन्ने इन्द्रो भूत्वा परमैश्वर्यं प्राप्य सर्वमेव त्यजतीति भावः ॥ ४७ ॥ ४८ ॥

१ मनुभवस्वरूपमिति ख. २ व्यवहारो हीति ख. ३ शब्देनेति ग. ४ तस्या अपगमने इति ख. ५ दनुचराश्चेति ख. ६ तदा स परम इति ख. ७ तद्वदित्यर्थः ख. ८ सहजमितीति ख.



एवमुद्देशाध्याये निरूपितस्य भगवत्स्वरूपस्योत्पत्त्या विचारमुक्त्वा साधनाध्याये "**अकामः सर्वकामो वे**"ति वाक्ये तदेव स्वरूपं पुनः फलसाधकत्वेनोक्तम् । तमंशमत्रोत्पत्त्या विचारयति—

**स श्रेयसामपि विभुर्भगवान् यतोऽस्य भावस्वभावविहितस्य सतः प्रसिद्धिः ।**
**देहे स्वधातुविगमेऽनुविशीर्यमाणे व्योमेव तत्र पुरुषो न विशीर्यतेऽजः ॥४९॥**

**स श्रेयसामपि विभुरिति ।** स वस्तुतः स्वतः परमपुरुषार्थरूपः । एतादृशोऽपि यदि कश्चित्कामयते स्वर्गादिकमपि तदपि प्रयच्छति । यतः सर्वेषामपि श्रेयसां फलानामयमेव विभुः समर्थ उत्पादयितुं दातुं च । यतोऽयं भगवान् परमानन्दरूपोऽपि षड्गुणान् बिभर्त्तीति । तत्र हेतुमाह । यतः अस्य जगतः भावस्वभावविहितस्य सतो भगवतः सद्रूपादेव प्रकर्षेण सिद्धिरुत्पत्तिः । सर्वमेव हि जगद्द्विरूपम् । एकं भावविहितमन्यत्स्वभावविहितम् । भावो धात्वर्थः क्रिया तदभिव्यञ्जको वा । तेन निष्पद्यते किञ्चिज्जगत् । सामान्यक्रियाभावः । तद्विकाराः भावविकारा उत्पत्त्यादयः । तेन ये केचनोत्पद्यन्ते प्राप्यन्ते अभिव्यज्यन्ते वा ज्ञायन्ते वा ते सर्वे भावविहिताः । ये तु नित्यनिरतिशयादिरूपा अक्षरकालादयस्ते स्वभावविहिताः । तेषां स्वरूपमेव भावः क्रियादिरूपस्तेन विहिताः । स्वतःसिद्धा इत्यर्थः । एवं क्रियातः स्वतश्च सिद्धाः सर्वे ब्रह्मणः सद्रूपादेव प्रसिद्धाः लब्धसत्ताकाः । अन्यस्य सत्संपादकत्वाभावात् । तस्माद्भगवानेव सर्वफलानामुत्पादको दाता चेति युक्तम् । एवं स्वरूपादिफलान्तं भगवत्स्वरूपं विचार्य फलदानप्रस्तावे फलं कस्येत्याकाङ्क्षायां तच्चेत्फलं भगवत एव भवेत्तदा विचारप्रवृत्तिवैयर्थ्यापत्तिरिति जीवस्य फलमिति वक्तव्यम् । तत्र जीवो नाम कः पदार्थ इति जिज्ञासायां यो देहवान् स जीव इति लोकवेदप्रसिद्ध्या देहसम्बन्धी जीव इति निश्चीयते । तत्र सन्नियोगशिष्टत्वे देहेन सह उत्पद्यते । देहे लीयमाने विलीयत इति मन्तव्यम् । अन्यथा पृथगपि तस्य प्रतीतिः स्यात् । "**अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशत**" इति देहाभावे न कोऽपि पुरुषार्थः सिद्ध्यतीति देहान्वयव्यतिरेकानुविधानादस्मिन्नेव देहे यदात्मनः फलं तत्फलं नाऽन्यदिति मतं निराकरोति—**देहे स्वधातुविगम इति ।** अयं हि देहो नाऽऽत्मा । किंत्वात्मन आवरणरूपः । तत्सम्बन्धेनैव तस्य सुखदुःखजननात् । "**नित्यः सर्वगतः स्थाणुरि**"ति वाक्येन तस्य सर्वगतत्वादिश्रवणाच्च । तस्माद्यथा घट आकाशपरिच्छेदकस्तथा देहोऽप्यात्मपरिच्छेदकः । एवं यथा नोत्पत्तिस्तथा देहनाशेऽपि न तस्य नाशः । तथा च यदाकदाचित्तस्य फलं फलमेव । देहस्तु स्वधातुविगमेन विशीर्यते । तस्योत्पादका ये धातवः संस्कृतभूतावयवाः । अन्नादयस्तु तदुपष्टम्भकाः । ते हि धातवः स्वसमवेतं फलं जनयित्वा कृतार्थाः सन्तो निवर्त्तन्ते तदा तैः सह जातो निवर्त्तते । तथाऽयमात्मा देहेन सह जातः । यथा देहो धातुभिः । तस्मात्फले न काऽप्यनुपपत्तिरिति ॥ ४९ ॥

उक्तमर्थमुपसंहरति—

**सोऽयं तेऽभिहितस्तात भगवान् विश्वभावनः ।**
**समासेन हरेर्नाऽन्यदन्यस्मात्सदसच्च यत् ॥ ५० ॥**

१ वा नास्ति ख. २ सर्वेषामुत्पादक इति ग. ३ स्वभावादीति ख. ४ ये धातव इति ख. ५ न देहेनेति ग.

**सोऽयं तेऽभिहित इति ।** मयैतावता कालेन भगवानेव निरूपितो दशविधलीलायुक्तः । भगवत्त्वेन षड्गुणाः । विश्वभावनत्वेन चत्वार उत्पत्त्यादयो मोक्षश्च । धर्मादयो वा । तैरेव हि विश्वं भाव्यते । एवं विश्वभावनो भगवानेतावता प्रबन्धेन निरूपितः । श्रवणं तव सम्पादितमिति भावः । विस्तरेण निरूप्य सङ्क्षेपेण निरूपयति बुद्धिसौकर्यार्थम्—**समासेनेति ।** यावानर्थो मया विस्तरेण निरूपितस्तस्याऽयं समासः सङ्क्षेपो भगवानेव सर्वं भगवत एव सर्वमिति । उपचारव्यावृत्त्यर्थं निषेधमुखेनाऽऽह—**हरेर्नान्यत् ।** हरिरेव सर्वं हरेरन्यन्न । हरेरेव सर्वं नत्वन्यस्मात् । सदसत् उत्कृष्टमपकृष्टं च । चकारात्कालादिकमपि । **यदिति** प्रसिद्धम् ॥ ५० ॥

एवं सङ्क्षेपविस्तराभ्यां निरूप्य शास्त्रमुपसंहरति—

**इदं भागवतं नाम यन्मे भगवतोदितम् ।**
**सङ्ग्रहोऽयं विभूतीनां त्वमेतद्विपुलीकुरु ॥ ५१ ॥**

**इदमिति ।** यदिदं मया निरूपितं तद्भागवतम् । भगवता प्रोक्तं भगवत्फलकं भागवतं नाम । तत्र तृतीयार्थमाह—**यन्मे भगवतोदितमिति ।** यन्मे मह्यं भगवता उदितं स्वयमिति । अस्माद्धेतोः इदं भागवतं नाम । ननु भगवता हि स्वरूपं सर्वमेवोपवर्णितम् । तत्कथमेतावदेवेत्याशङ्क्याऽऽह—**सङ्ग्रहोऽयमिति ।** अयं विभूतीनां सङ्ग्रहः सङ्कोचः । सङ्क्षेपविस्तरौ ह्यधिकारानुसारेण निरूप्येते । तत्र त्वमुत्तमोऽधिकारी । अतस्तुभ्यं सङ्क्षेपेण निरूपितम् । त्वं त्वन्येषामर्थं एतद्विपुलीकुरु विस्तरेण वर्णय ॥ ५१ ॥

विस्तारकथने हेतुः—

**यथा हरौ भगवति नृणां भक्तिर्भविष्यति ।**
**सर्वात्मन्यखिलाधार इति सङ्कल्प्य वर्णय ॥ ५२ ॥**

**यथा हरौ भगवतीति ।** माहात्म्यज्ञानपूर्वकसुदृढसर्वतोधिकस्नेहस्य भक्तित्वान्माहात्म्यज्ञानव्यतिरेकेण तस्या अनुदयान्माहात्म्यज्ञाने विस्तारकथनस्य हेतुत्वान्माहात्म्यज्ञापनेन भक्तिजननार्थं विस्तारो वक्तव्यः । किं बहुना । यथैव भक्तिर्भविष्यति तथैव वक्तव्यः । अनेनाऽधिकारानुसारेण पदार्था वक्तव्या इत्युक्तम् । ननु निरूपितेऽपि माहात्म्ये सम्बन्धाभावात्कथं भक्तिर्भविष्यति । "**आत्मनस्तु कामाय सर्वं प्रियं भवती**"ति श्रुतेरात्मैव परमप्रेमाश्रयः । अन्यत्र तु तदुपाधिकं प्रेम । तद्भगवति कथं निरुपाधिकं प्रेमेत्याशङ्क्याऽऽह—**सर्वात्मनीति ।** अयं भगवान सर्वेषामात्मा । यथा सर्वात्मत्वं तदुपादितम् । एवमात्मत्वेन स्नेहविषयत्वं प्रतिपाद्य पुत्रादिसर्वविषयस्नेहप्रतिपादनार्थं भगवत्कृतमुपकारं दर्शयति—**अखिलाधार इति ।** सर्वेषामाधारभूतो भगवान् सर्वप्रकारेण । अतस्तस्मिन्नुचितः स्नेह इति । यदा लोकेभ्यो भगवद्गुणा विस्तरेण वक्तव्यास्तदा फलान्तरं नोद्देश्यं किन्तु भगवद्भक्तिरेव सर्वेषां भवत्विति मनसि निश्चित्य गुणा वक्तव्या इत्याह—**इति सङ्कल्प्येति ।** वर्णय । एकैकं पदार्थं बहुभिः प्रकारैः कथयेत्यर्थः ॥ ५२ ॥

१ उदितमितीदि ख. २ विस्तरौ अधिकारेति ग. ३ सम्बन्धात्मभावात् क. ख. स्वभावाभावात्कथमिति ख.



ननु विस्तारकथने तेषां भवति भक्तिः । मम किं स्यात्तत्राऽऽह—

**मायां वर्णयतोऽमुष्य ईश्वरस्याऽनुमोदतः ।**
**शृण्वतः श्रद्धया नित्यं माययाऽऽत्मा न मुह्यति ॥ ५३ ॥**

**मायां वर्णयत इति ।** एषा हि भगवतो माया । सर्वसामर्थ्यानामेव वर्णनीयत्वात् । दशविधलीलानां भगवच्छक्तित्वात् । मायां वर्णयत आत्मा न मुह्यतीति सम्बन्धः । ननु मायावर्णनेऽन्तःकरणस्य मोहो भवेन्न त्वमोह इति । तत्राऽऽह—**अमुष्य ईश्वरस्य मायामिति ।** अन्येन वर्ण्यमानां वा अनुमोदतः । सम्यङ्निरूप्यत इति वस्तुतः शृण्वतोऽपि । यद्यपि मुख्यं फलं भक्तिस्तदभावे अन्तःकरणस्य मायया मोहस्तु सर्वथा न भवति तस्माल्लोकोपकारार्थं स्वार्थं च श्रवणादिकं कर्त्तव्यमिति सिद्धम् ॥ ५३ ॥

**इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां**
**द्वितीयस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥**

---

## अष्टमोऽध्यायः ।

**एवं निर्द्धारभजनमुत्पत्त्या च विमर्शनम् ।**
**द्वयं सिद्धं विराड्ब्रह्मरूपयोस्तत्त्वनिश्चये ॥ १ ॥**
**उपपत्त्या विमर्शस्तु त्रिभिरत्र निरूप्यते ।**
**आक्षेपसिद्धान्तफलैः सोपपत्तिस्त्रिधा यतः ॥ २ ॥**
**अष्टमे सन्दिहानस्य प्रश्न आक्षेपगर्भितः ।**
**राज्ञो निरूप्यते प्रश्नास्तन्मूला अपरेऽपि च ॥ ३ ॥**

उक्तप्रकारकस्थूलसूक्ष्मरूपाक्षेपे सर्वानुपपत्तिर्भविष्यतीत्याशङ्कां वक्तुं कथायां प्रोत्साहयति षड्भिः—**ब्रह्मणा चोदित इति ।**

राजोवाच ।

**ब्रह्मणा चोदितो ब्रह्मन् गुणाख्यानेऽगुणस्य च ।**
**यस्मै यस्मै यथा प्राह नारदो देवदर्शनः ॥ १ ॥**

पूर्वाध्यायान्ते त्वमेतद्विपुलीकुर्वित्युक्तम् । तत्सङ्क्षेपश्रवणेनैव यदा महती भक्तिरुत्पद्यते तदा विस्तरे किं भविष्यतीति परमादरेण पृच्छति—**ब्रह्मन्निति** सर्वज्ञत्वाय सम्बोधनम् । **ब्रह्मणा** प्रेरितो नारदो भगवद्गुणकथनार्थं यस्मै यस्मै यथा प्राह तत्कथयेत्यग्रेण सम्बन्धः । **अगुणस्य च**

१ सर्वेषामिति ग. तेषां भक्तिर्भवतीति ख. २ दोषो भवेदिति ग. ३ निर्द्धार्य भजनं ख. ४ प्रकारस्य ग. ५ जनयेति क. ख. ६ बोधित इति मूलव्याख्ययोः ग. ७ एवं पूर्वेति ग. ८ विस्तारेणेति ग. ९ तथा कथयेति ख.

गुणाख्याने । सूक्ष्मरूपं त्वगुणम् । चकारात्स्थूलरूपं च । तस्य गुणानामुत्कर्षबोधकधर्माणामाख्याने कथने कथनार्थं ब्रह्मणा नोदितः । नानाधिकारेण वर्णनीयत्वाद्यस्मै यस्मै यथा प्राहेत्युक्तम् । अन्यथा कस्मै प्राहेत्येव ब्रूयात् । तस्य तथा कथने सामर्थ्यमाह—**देवदर्शन इति** ॥ १ ॥

नन्वनेन भवतः कोपयोगस्तत्राऽऽह—

**एतद्वेदितुमिच्छामि तत्त्वं वेदविदांवर ।**
**हरेरद्भुतवीर्यस्य कथा लोकसुमङ्गलाः ॥ २ ॥**
**कथयस्व महाभाग यथाऽहमखिलात्मनि ।**
**कृष्णे निवेश्य निःसङ्गं मनस्त्यक्ष्ये कलेवरम् ॥ ३ ॥**

**एतद्वेदितुमिच्छामीति** । इदं हि तत्त्वं कीदृशे अधिकारे कीदृशं वक्तव्यमिति । ज्ञातव्यं चैतत्स्वाधिकारार्थं परबोधनार्थं च । नन्वेतन्मया कथं ज्ञातव्यं, मया तु स्वाधिकारेण ज्ञातव्यमित्याशङ्क्याऽऽह—**वेदविदांवरेति** । वेदे हि स्वाधिकारेणाऽन्याधिकारेण च पदार्था निरूप्यन्ते । ते च सर्वे ब्राह्मणैर्ज्ञायन्ते । वसन्तादयः कालाः । यथर्ष्याधानमन्त्राः । अश्वमेधादयः क्रतवः । पुनःस्तोमादयश्च नैमित्तिकाः । तथैतदपि शास्त्रं सर्वाधिकारेण प्रवृत्तं तत्तदधिकारभेदेन पदार्थान्निरूपयति । वेदानुसारेण च तत्तदधिकारानुसारेण व्यवस्था । तत्सर्वं वेदविद्भिर्ज्ञायत इति सम्बोधनम् । एवं पूर्वोक्तार्थसम्बन्धिप्रश्नमुक्त्वा स्वाभिप्रेतं प्रश्नान्तरमाह—**हरेरद्भुतवीर्यस्येति** सार्द्धेन । हरेः कथाः कथयस्व । आत्मनेपदेन स्वार्थमपि तद्भविष्यतीति ज्ञापितम् । ननु सर्वदुःखहर्तुर्भगवतः कथाः सर्वपुराणप्रसिद्धास्तत्किमद्य विशेषकथनेनेत्याशङ्क्याऽऽह—**अद्भुतवीर्यस्येति** । न हि भगवच्चरित्रं सुगमम् । अन्यथा करोत्यन्यथा च सम्पद्यते । तस्मात्स्वरूपतः पर्यवसानतश्च नानारूपत्वाद्भगवद्गुणा विविच्य ज्ञातव्याः । किञ्च । भगवत्कथा लोकसुमङ्गलाः । किञ्चिद्वस्तु पुरुषमात्रं सुमङ्गलं भवति यथा रक्षाबन्धनं अलङ्कारा वा । किञ्चिद्गृहमङ्गलं यथा गृहालङ्काराः । किञ्चिद्वंशस्य यथा पुत्रजन्म । किञ्चिद्ग्रामदेशानां यथा रक्षा वृष्ट्यादिर्वा । कथास्तु सर्वलोकसुमङ्गलाः । प्राणिनां भुवनानां च परमकल्याणं कुर्वन्ति । **महाभागेति** सम्बोधनं । तवैवैतादृशार्थकथनेऽधिकारो नत्वन्यस्य । अन्ये तु भगवता तुच्छफलेऽधिकृतास्त्वं तु महाफल इति सम्बोधनम् । पूर्वं यथाधिकारेण वक्तव्यमित्युक्तत्वान्ममैतादृशोऽधिकारोऽस्ति तत्र यदुचितं तद्वक्तव्यमित्यभिप्रायेण स्वाधिकारमवस्थाभिप्रेतयुक्तं निरूपयति—**यथाऽहमखिलात्मनीति** । मम मनोरथ एतावान् । यदैहिकामुष्मिकसर्वविषयेभ्यो मन आकृष्य एकत्र भगवत्येव निवेश्य पश्चात्प्राणांस्त्यजामीति । एतस्मिञ्जन्मन्येतावत्कर्तव्यम् । एवं कृते यद्भविष्यति तदग्रे निरूपयिष्यति । नन्वेतत्सुलभं नाऽत्र शास्त्रमपेक्ष्यते । दृष्ट एव कृष्णो मनश्च महतां स्वाधीनमतः कृष्णे निवेश्यतां किं विलम्बेनेत्याशङ्क्याऽऽह—**अखिलात्मनीति** । कृष्णोऽस्माभिर्ज्ञातोऽप्यज्ञातोऽस्ति । परिच्छिन्नो वा ज्ञातः । स हि सर्वात्मना सर्वात्मत्वेन ज्ञातव्यः । तत्तु न पूर्वं वृत्तम् । "**तं यथायथोपासते**" इति श्रुतावुपासनानुसारेण फलस्योक्तत्वात्सर्वं फलं तदैव भवति यदि सर्वात्मत्वेनैवोपास्यते । अन्यथा त्वकृत्स्नो भवेत् । **तद्वैतान्भूत्वाऽवती**"ति च सर्वतो

१ चोदित इति ख. २ ज्ञातव्यमित्याशङ्क्येति ग. ३ दधिकारेणेति ग. ४ प्रश्नसम्बन्धमिति ग. ५ मपि भविष्यतीति घ. ६ तत्करोतीति ग. ७ च कल्याणमिति ग. ८ सर्वत्वेनेति घ. ९ तद्वैनानिति ख.



रक्षा च सिद्ध्यति । न केवलं साधारणं मनो भगवति निवेशनीयम् । तथा सत्यशुद्धमनसः अशुद्धमेव फलं भवेत् । तस्माद्यथा मनो निःसङ्गं भवति । यथा वाऽसम्भावना-विपरीतभावनाव्युदासेन सर्वात्मकत्वं हृदये स्फुरति तथोपायो वक्तव्य इत्यर्थः ॥ २ ॥ ३ ॥

मनसो निवेशने अग्रिमं कार्यं स्वयमेव सेत्स्यतीत्याह—

**शृण्वतः श्रद्धया नित्यं गृणतश्च स्वचेष्टितम् ।**
**कालेन नाऽतिदीर्घेण भगवान् विशते हृदि ॥ ४ ॥**

**शृण्वतः श्रद्धयेति** । यदा यस्मिन् यस्य मनो भवति कामात्प्रेरणया वा तदा तं शृणोति कीर्त्तयति च । श्रद्धा च तत्रोत्पद्यते । अतः श्रवणादिनिर्वाहकं मनोनिवेशनम् । श्रद्धा हि श्रवणकीर्त्तनयोरङ्गम् । दीर्घकालादरनैरन्तर्येण क्रियमाणस्यैव श्रवणादेः फलसाधकत्वात् । तदा दीर्घकालत्वे नैरन्तर्यं च नित्यपदेनोच्येते । गृणतश्चेति चकारात्स्मरणादिकमपि सङ्गृहीतम् । धर्मिव्यतिरेकेण धर्माणां प्रवेशाभावात्स्वगुणैः सह भगवान् शीघ्रमेव प्रविशति हृदयमिति । स्वानां यतोऽयं भगवान् भगवतैव शास्त्रस्याऽस्य कृतत्वात् ॥ ४ ॥

ततः किमत आह—

**प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम् ।**
**धुनोति शमलं कृष्णः सलिलस्य यथा शरत् ॥ ५ ॥**
**धौतात्मा पुरुषः कृष्णपादमूलं न मुञ्चति ।**
**मुक्तसर्वपरिक्लेशः पान्थः स्वशरणं यथा ॥ ६ ॥**

**प्रविष्ट इति** । कीर्त्तनेऽपि श्रवणस्य विद्यमानत्वात् मुखस्य गुणनिर्गमनहेतुत्वात्कर्णरन्ध्रेणेत्युक्तम् । रन्ध्रशब्दः प्रवेशहेत्वर्थः । एकवचनमतिसावधानश्रवणार्थम् । यतो लोके सावधानश्रवणे एकैव कर्णशष्कुली व्याप्रियते तदेन्द्रियमेकमुखमेव भवति । **स्वानामिति** कृतात्मनिवेदिनाम् । न केवलं हृदयमात्रे प्रविशति । किन्तु भावसरोरुहे । भावो रतिरिति केचित् । धातुसामान्यार्थः सत्तारूपो भगवानित्यपरे । कारणरूपस्त्वविनाशीभावः । स निरन्तरश्रवणेन हृदयरूपो जात इति । स चेत्पुनर्भक्त्या विकासं प्राप्तः सरोवररूपो भवति । साधनरूपभक्तिः श्रवणसम्पुटिता यदि तस्मिन् बीजतामापद्यते । प्रेम्णा च हृदयं पूरितमेव तिष्ठति तदा बीजवृद्धौ श्रवणादिना कमलं भवति । तदेव हि भगवदासनं गृहं च भगवतः । तदा तत्र प्रविष्टो भगवान् शमलं सर्वमेव धुनोति । यद्यपि पापक्षयः सर्वोऽपि पूर्वमेव जातस्तथापि शमलं तिष्ठति । शं अलं यस्मादिति शमलम् । ऐहिकामुष्मिकफलानि शंशब्देनोच्यन्ते शमादयश्च । केवलपुण्येन च भोगाभावात्तत्र नान्तरीयकपापसहितमेव पुण्यं भोगसाधनमिति तस्मिन् मूलभूते पापे विद्यमाने वैराग्यं कदापि न भवतीति तदा तद्भगवान् दूरीकरोति । ननु शमा-

१ मनसा अशुद्धमिति क. ख. २ तत्रेति ग. ३ धर्मव्यतिरेकेणेति ख. घ. ४ निर्गमने हेतुत्वादिति क. घ. ५ मपीति ख. ६ स्वनिरन्तरेति क. घ. ७ पापक्षयः पूर्वमेवेति ग.

दिसाधकस्याऽपि गतत्वात् ज्ञानाभावे कथमग्रिमकार्यसिद्धिरिति । तत्राऽऽह—**कृष्ण इति** । सदानन्दरूपो भगवान् स्वयमेव पुरुषार्थरूपो न ज्ञानादिसाधनमपेक्षत इत्यर्थः । अत्र दृष्टान्तेन स्पष्टयति—**सलिलस्य यथा शरदिति** । सरःशब्देन यत्सलिलं तदत्रोच्यते । यथा शरदित्येव दृष्टान्तः । यथा लौकिकं जलं शरदा निर्मलं क्रियते न तु वर्षासु कथमपि निर्मलं भवति । तथा प्रेमरूपं यज्जलं तदपि भगवता निर्मलं भवतीत्यर्थः । यदाऽन्तःकरणं सर्वदोषरहितं भवति तदा नीरोगः पुरुषः कृष्णपादमूलं न मुञ्चति । न हि कश्चिन्नीरोगः सदानन्दं त्यजति । तस्य ग्राहक आत्मैव नीरोगः । यथा बुभुक्षाऽन्नस्य । अत एव भगवानन्तःकरणस्य आत्मेत्येव नाम धृतवान् । अतः स तदेकग्राहकः दोषवशादन्यान् गृह्णाति । यथा चक्षुः । तदा भक्तिमार्गानुसारेणैव मनः पदार्थान् गृह्णातीति कृष्णपादमूलेति पदम् । मूलपदेन चाऽयं सर्वोऽपि विलासस्तन्मूलक इति ज्ञापयति । ततो व्यापिवैकुण्ठे श्रीकृष्णचरणारविन्दे तद्रसामृततृप्तः सुखेन तिष्ठतीति फलितम् । परावृत्तिशङ्का तु नास्ति मुक्तपरिक्लेशत्वात् । अविद्यादिवशादेवाऽहरहर्ब्रह्मलोकं गता अपि निवर्त्तन्ते । परिशब्देन तत्रापि क्लेशशङ्का निवारिता । सर्वपदेन स्वाभीष्टसिद्ध्या नान्तरीयकोऽपि क्लेशो निवारितः । पन्थाः केवलमार्गदर्शी । शरणं गृहम् । स्वशब्देन पराधीनक्लेशो निवारितः । भगवदधीनत्वेन क्लेश इति शङ्का दृष्टान्तेन निवार्यते ॥ ५ ॥ ६ ॥

एवं स्वार्थं मनोनिवेशनोपायं पृष्ट्वा सन्दिग्धान्साधारणानन्यान्पृच्छत्यसम्भावनादिव्युदासार्थम्—**यद्धातुमत** इत्यादिभिः । अत्र पूर्वं पदार्थत्रयं निरूपितम् । भगवतो रूपद्वयं फलार्थं जीवश्च । तत्र जीवे एकः प्रश्नः । सूक्ष्मे भगवति निःसन्दिग्धं पदार्थानां निरूपितत्वात् विशेषतो बुद्ध्यगोचरत्वाच्च शङ्कैव नोदेति । स्थूले रूपे तु सर्वे प्रश्नास्तद्याथात्म्यज्ञापकाः । तस्मात्प्रश्नद्वयम् । अत एवोत्तरे अध्यायद्वयमेव । तत्र जीवे सन्देहात्पृच्छति—

> **यद्धातुमतो ब्रह्मन् देहारम्भोऽस्य धातुभिः ।**
> **यदृच्छया हेतुना वा भवन्तो जानते यथा ॥ ७ ॥**

**यद्धातुमत इति** । अयं जीवो वस्तुतोऽधातुमान् धातुसम्बन्धरहितः । धातवः पूर्वदेहसम्पादका निरूपिताः । तैः सहाऽस्य नाऽदृष्टद्वारकः सम्बन्धः । प्रथमसृष्टौ तदभावात् । अनादित्वे भगवच्छास्त्रविरोधात् । किञ्च । असङ्गश्रुत्या नाऽयं वस्तुतः सम्बध्यते । भगवदिच्छापक्षे हिताकरणादिदोषाः । तस्मात्केनाऽप्युपायेन धातुसम्बन्धनिरूपणस्याऽशक्यत्वात्प्रश्नः । **ब्रह्मन्निति** सम्बोधनं तदुपादानोच्छेदकपरिज्ञानार्थम् । अस्य जीवस्य देहारम्भः । यदृच्छया भगवदिच्छया । अकस्मात्पक्षेण वा । हेतुना वा अनाद्यविद्यादिना वा । अत्र निर्णयो वक्तव्य इत्यर्थः । परमार्थे बहुवादिविप्रतिपत्तित्वाद्भवन्तो यथा जानते तथा वक्तव्यमित्यर्थः ॥ ७ ॥

---

१ तिष्ठतीति ख. २ तदेति ग. घ. ३ करण आत्मन्येव ख. ४ मूलेतीति पदमिति ग. ५ मुक्तसर्वपरिक्लेशत्वात् ख. ग. ६ स्वाभीष्टसर्वसिद्ध्या ख. सर्वसिद्धौ ग. ७ मनोऽव्युदासार्थं ग. ८ स्थूलरूपे त्विति ग. ९ दोष इति ख. १० पक्षे नवेति ख.



जीवस्य देहसम्बन्धः कथमिति प्रश्नार्थः । ईश्वरस्याऽपि देहसम्बन्धः किमर्थ इति । इच्छया देहग्रहणं तु सम्भवति । परं किमर्थमितीमं प्रयोजनप्रश्नं वक्तुं देहसम्बन्धस्थिरीकरणे कार्यहेतुकमनुमानं प्रमाणत्वेन निरूपयति—

> **आसीद्यदुदरात्पद्मं लोकसंस्थानलक्षणम् ।**
> **यावानयं वै पुरुष इयत्तावयवैः पृथक् ॥ ८ ॥**
> **तावानसाविति प्रोक्तः संस्थावयववानिव ।**
> **अजः सृजति भूतानि भूतात्मा यदनुग्रहः ॥ ९ ॥**

**आसीद्यदुदरात्पद्ममिति** । प्रतिष्ठामात्रत्वं तस्य नाऽस्तीत्याह । लोकानां संस्थानमेव लक्षणं चिह्नं यस्य । लोकस्थित्यर्थमेव पद्मोत्पत्तिः । अनेन लोकस्थितिलक्षणस्य कार्यस्य विद्यमानत्वात्तदाधारपद्मकारणत्वेन शरीरसिद्धिः । नच तत्साकारमेव ब्रह्म केवलमाविर्भूतमिति मन्तव्यमिति शङ्कां वारयति—**यावानयं वै पुरुष इति** । अयं प्राकृतः पुरुषो यावान् करचरणाद्यवयवैः यावत्परिमाणवान् तावानसावपि । यदि तस्याऽऽविर्भावस्तदा अस्याऽपि सद्भावस्तस्य तथात्वे सति तस्य तिरोभावे फलानुपपत्तिस्तदवस्था । इयत्ता एतावत्त्वं हस्तद्वयं पादद्वयमित्यादि । पृथक् देहात् अन्योन्यं भक्षणो वा । तथा भगवतोऽपि देहः तावान् तावत्प्रमाणकस्त्वया निरूपितः । ननु सहस्रोर्वङ्घ्रिबाह्वक्षोऽयं निरूपितः कथं प्राकृतवद्भविष्यति । तत्राऽऽह—**इवेति** । यद्यपि बाह्वादीनां सहस्रं निरूपितं तथापि बाहुत्वान्नातिरिच्यत इति प्राकृततुल्यता । किञ्च । नाऽयं देहरूपः किन्तु देहाद्व्यतिरिक्तः । ब्रह्मणः प्रसादहेतुत्वात् । तदाह—अजो ब्रह्मा । यदनुग्रहः यस्याऽनुग्रहयुक्तः । अनुग्रहादेव भूतात्मत्वम् । व्यष्टीनामात्मा । भूतानि व्यष्टिरूपाणि सृजति ॥ ८ ॥ ९ ॥

अस्य सामर्थ्यस्य स्वतस्त्वशङ्कां वारयति—

> **ददृशे येन तद्रूपं नाभिपद्मसमुद्भवः ।**
> **स चाऽपि यत्र पुरुषो विश्वस्थित्युद्भवाप्ययः ॥ १० ॥**
> **मुक्त्वाऽऽत्ममायां मायेशः शेते सर्वगुहाशयः ।**
> **पुरुषावयवैर्लोकाः सपालाः पूर्वकल्पिताः ॥ ११ ॥**
> **लोकैरमुष्याऽवयवाः सपालैरिति शुश्रुम ।**
> **यावान् कल्पो विकल्पो वा यथा कालोऽनुमीयते ॥ १२ ॥**
> **भूतभव्यभवच्छब्द आयुर्मानं च यत्सतः ।**
> **कालस्याऽनुगतिर्या तु लक्ष्यतेऽण्वी बृहत्यपि ।**
> **यावत्यः कर्मगतयो यादृशीर्द्विजसत्तम ॥ १३ ॥**

**ददृशे येनेति** । तस्य स्वकारणभूतस्य नारायणस्य रूपं येन प्रसादेन ददृशे । प्रसादादेव नाभि-

---

१ उपपत्तिस्तदवस्था ख.

पद्मे समुद्भवो यस्य । एवं ब्रह्मण उत्पत्तिस्थिती भगवदनुग्रहेणैवेति निरूप्य तस्य शयनमपि तस्मिन्नेव रूप इति प्रतिदिनमुद्गमनतिरोभावाभ्यां तदनुग्रहस्तस्मिंस्थिर इति ब्रह्मणः शयनं निरूपयति । स चाऽपि ब्रह्माऽपि यत्र शेते तत्र ब्रह्मणो माहात्म्यमाह । विश्वस्य स्थित्युत्पत्त्यप्यया यस्मात् । पूर्वं भूतानां सृष्टिरेवोक्ता । इदानीं प्रलयान्ताः सर्वे भावविकारास्तत एवेति विशेषः । आत्मनो मायां सर्वकरणसामर्थ्यं निशायां तत् त्यक्त्वा शेते । निशा पुनस्तत्त्यागादेव भवति । तथा करणे हेतुः—**मायेश इति** । मायाया नियन्ता । तस्या नियमनार्थमेव तां त्यजतीत्यर्थः । पतिरूपत्वं वा ईशत्वम् । तथा सति कार्यावस्थां तां त्यक्त्वा तया सह क्रीडार्थं शेत इत्यर्थः । मायात्यागे वा सामर्थ्यं घोष्यते—**मायेश इति** । नियामकस्त्वन्तर्याम्येवेति कथमस्य मायेशत्वम्? तत्राऽऽह—**सर्वगुहाशय इति** । सर्वेषां गुहासु हृदयेषु आशयः स्थानं यस्य । अन्तःकरणप्रेरणं वा । तस्मात्सर्वान्तर्यामित्वान्मायेशत्वम् । तस्मात्तस्य देहसम्बन्धः किमर्थ इति प्रश्नः । सचाऽपीति वा नारायण एवोच्यते । यत्र प्रलयजले शेते प्राकृतवत्तस्याऽप्यवस्थानां विद्यमानत्वात्तस्य देहवत्त्वम् । एवं जीवब्रह्मणोर्देहनिमित्तं पृष्ट्वा शुकब्रह्मवाक्ययोरवान्तरवैलक्षण्यं दूरीकर्त्तुं पृच्छति—**पुरुषावयवैरिति** । "**भूर्लोकः कल्पितः पद्भ्यामि**"ति वाक्यात्पुरुषावयवैर्लोककल्पना निरूपिता । त्वया पुनः "**पातालमेतस्य हि पादमूलमि**"ति वाक्याल्लोकैरमुष्याऽवयवा निरूपिताः । तत्र निर्णयो वक्तव्य इत्यर्थः । यद्यपि भवतां ब्रह्मणश्च एकवाक्यतैव तथाऽस्माभिः श्रुतमिति स सन्देहो निवारणीय इत्युक्तं **शुश्रुम इति** । अतःपरं तदनुगुणा एव पदार्थाः पृच्छ्यन्ते—**यावान् कल्प इति** । कल्पः प्राकृतः । विकल्पो वैकृतः । यस्मिन् कल्पे ब्रह्मा उत्पद्यते यत्र च प्रतिबुध्यते तेषां प्रमाणं स्वरूपं च वक्तव्यमित्यर्थः । कालानुमानज्ञानं घटिकापरिज्ञानम् । यथा वक्ष्यति "**द्वादशार्द्धपलोन्मानमि**"ति । यावान्यथेति यथायोग्यं सर्वत्रैवाऽनुषज्यते । तेन भूतभव्यभवच्छब्दो यावान् यथेति वाक्यं भवति कालस्य विशेषणम् । **भूतभव्यभवच्छब्द इति** । भूतं भव्यं भवत् एते शब्दा यस्मात्स कालः कथमनुमीयत इति पूर्वेणैव सम्बन्धः । भूतादिपदानां प्रयोगनिमित्तं स्वरूपं पृच्छ्यत इति वा । आयुषः परिमाणं यत्तद्वक्तव्यमित्यग्रेण सम्बन्धः । सतो देवतिर्यङ्मनुष्यादीनाम् । **सत इति** पदं विद्यमानत्वधर्मं सूचयति । अनेनाऽऽविर्भूतः कः कियत्कालं तिष्ठतीति प्रश्नः सङ्गच्छते । अन्यथा वैनाशिकप्रक्रियाया अनङ्गीकारात्सर्व एव कालः सर्वस्याऽऽयुर्भवेत् । प्रश्नान्तरमाह—**कालस्याऽनुगतिरिति** । कालस्य अनु अण्वी गतिः बृहती च । अणुः कालो महान् कालश्च कथं ज्ञायत इत्यर्थः । स्वभावतः कालो न ज्ञायते किन्तु कार्यद्वारा । इदमिदानीमिति कार्यद्वारा । सैव कालस्याऽनुगतिः कार्ये गच्छति तदनुवर्त्तनम् । तत्र स्थूलसूक्ष्माणां कार्याणां नित्यत्वात् । अवान्तराणामनियतकालत्वात् । कालस्याऽनुगतिर्या तां कथयेत्यर्थः । सूर्यगत्या तां वक्ष्यति । ननु कालस्य भेदा एव न सन्तीत्याशङ्क्याऽऽह—**या तु लक्ष्यत इति** । सर्वत्र इदानीमिति प्रतीतेः पदार्थानुवृत्तिः कालस्य लक्ष्यते । अन्यथा आकाशादिवत्तस्याऽप्यभिलापो न स्यात् । तस्या अण्वी बृहत्यपि । क्षणमात्रेण गतो महता कालेन गत इति । तथा च कालानुगतिरस्ति परं तत्र नियामकं वक्तव्यमिति प्रश्नः । कर्मणां नानाविधानां गतयः प्रवृत्तिप्रकाराः नानाविधयोनिसम्पादनेन सुखदुःखप्रदानेन च

१ स्थित्युद्भवाप्यया इति ख. २ देहत्वमिति ग. घ. ३ च नास्ति ग. घ. ४ सर्वत्राऽनुषज्यते ग. ५ स्वरूपं चेति ग. ६ देनेति ख. ग. ७ अनुगतिः ख. घ. ८ मनियमित ग. ९ तथा अण्वीति ख. ग.



यावत्यो यादृशीरिति परिमाणप्रकारौ प्रश्नविषयौ । द्विजसत्तमेति सम्बोधनं महत्या कर्मगत्येति ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

तज्ज्ञानावश्यकत्वं सूचयति—

यस्मिन्कर्मसमावायो यथा येनोपगृह्यते ।
गुणानां गुणिनां चैव परिणाममभीप्सताम् ॥ १४ ॥
भूपातालककुब्व्योमग्रहनक्षत्रभूभृताम् ।
सरित्समुद्रद्वीपानां सम्भवश्चैतदोकसाम् ॥ १५ ॥
प्रमाणमण्डकोशस्य बाह्याभ्यन्तरभेदतः ।
महतां चाऽनुचरितं वर्णाश्रमविनिश्चयः ॥ १६ ॥
अवतारानुचरितं यदाश्चर्यतमं हरेः ।
युगानि युगमानं च धर्मो यश्च युगे युगे ॥ १७ ॥
नृणां साधारणो धर्मः सविशेषश्च यादृशः ।
श्रेणीनां राजर्षीणां च धर्मः कृच्छ्रेषु जीविनाम् ॥ १८ ॥
तत्त्वानां परिसङ्ख्यानं लक्षणं हेतुलक्षणम् ।
पुरुषाराधनविधिर्योगस्याऽऽध्यात्मिकस्य च ॥ १९ ॥
योगेश्वरैश्वर्यगतिर्लिङ्गभङ्गस्तु योगिनाम् ।
वेदोपवेदधर्माणामितिहासपुराणयोः ॥ २० ॥
सम्प्लवः सर्वभूतानां विक्रमः प्रतिसङ्क्रमः ।
इष्टापूर्त्तस्य काम्यानां त्रिवर्गस्य च यो विधिः ॥ २१ ॥
यो वाऽनुशायिनां सर्गः पाषण्डस्य च सम्भवः ।
आत्मनो बन्धमोक्षौ च व्यवस्थानं स्वरूपतः ॥ २२ ॥
यथाऽऽत्मतन्त्रो भगवान् विक्रीडत्यात्ममायया ।
विसृज्य वा यथा मायामुदास्ते साक्षिवद्विभुः ॥ २३ ॥

यस्मिन्निति । यस्मिन्कर्मसमावाय इति प्रश्नान्तरम् । गुणानां सत्त्वादीनां परिणामं देवतिर्यङ्मनुष्यादिरूपं अभीप्सताम् । गुणिनां कार्याणां गुणसमुदायरूपाणां मध्ये । यस्मिन्कर्मसमावायः । कर्मणां शुक्ललोहितकृष्णानां समवायो मेलनमित्येकः प्रश्नः । शुक्लं कर्म देवेष्वेव । कृष्णं पातालवासिनाम् । अन्तरिक्षस्थानां वा । समावायो मनुष्येष्विति वक्ष्यते । किञ्च । यथा कर्मसमवायः किं

१ परिणाम घ. २ यस्मिन्धर्मसमवाय इति ख. ३ कर्मणीति घ. ४ समवाय इति ख. ग. ५ देवेष्विति ख. ६ समवाय इति ग.

गुणानां समशो मेलनं न्यूनाधिकभावेन वा । किञ्च । येन कर्मसमवायः । केन वा कर्माणि योज्यन्ते उपगृह्यन्ते स्वीक्रियन्ते । जीवेन भगवता कालादिना वा । गुणिनामपि परिणाममभीप्सतामिति कथनार्थं गुणगुणिनोः सह निरूपणम् । यथा देवावतार इन्द्रावतार इति । भूपातालादीनां तदोकसां च सम्भवः यथा यावानिति प्रश्नः । अण्डकोशस्य प्रमाणं ब्रह्माण्डं कियत्प्रमाणकमिति । कोशशब्देन पत्राणां विकाशाभावात् पत्रस्थानीयलोकपरिमाणमपि लोकानामुपर्यधोभावोऽपि निरूपणीय इति सूचितम् । बाह्यतः कियत् । आन्तरतः कियत् । यथाऽन्तरप्रमाणं वक्ष्यति **सूर्याण्डगोलयोर्मध्ये कोट्यः स्युः पञ्चविंशतिरि**"ति । "**तथा बाह्यं दशोत्तरैरि**"ति । महतां सताम् । तेषामनुचरितं भक्तिः । चकाराज्ज्ञानिनाम् । विपरीतं वा । वर्णानामाश्रमाणां च विनिश्चयः आचारतः स्वरूपतश्च । अवताराणामनुचरितम् । तत्रापि यदाश्चर्यतमं कालियदमनगोवर्द्धनोद्धरणादि । युगानि कानि कियन्तीति । युगमानं संवत्सरभेदेन । नृणां साधारणो धर्मः सत्यवचनादिः । सविशेषः यागादिसहितः । श्रेणीनामेकशिल्पोपजीविनाम् । राजर्षीणां राजानो भूत्वा ये ऋषयः । यथा मन्वादयः । तेषां साधारणो धर्मो विशेषधर्मश्च कथनीयः । धर्मकृच्छ्रेषु धर्मसङ्कटेषु । आपत्स्वित्यर्थः । जीविनां केवलजीववतां धर्मकरणासमर्थानां को धर्म इति प्रश्नः । तत्त्वानां प्रकृत्यादीनाम् । परिसङ्ख्यानं गणना । सांख्यमिति यावत् । तेषामेव लक्षणं व्यावर्त्तको धर्मः । तेषामेव हेतुपूर्वकं च लक्षणं तथात्वं तस्य कुत इति । पुरुषाराधनविधिः भगवत्परिचर्याप्रकारः । तथा योगस्य विधिः । योगविशेषस्याऽऽध्यात्मिकस्य च विधिः । योगस्त्वष्टाङ्गः साधारणः । आध्यात्मिकस्तु श्रवणमनननिदिध्यासनैरधिकः । चकाराद्राजयोगादीनां लक्षणं कथयेति प्रश्नः । योगेश्वराणामैश्वर्यगतिं यथा कर्दमस्य । **लिङ्गभङ्गस्तु योगिनाम्** । लिङ्गशरीरस्य भङ्गः । यथा "**न देहं बुबुधे गतम्**" । "**देहं तु तन्नचरमः स्थितमुत्थितं वे**"ति । वेदाश्चत्वारः । उपवेदाश्चत्वार आयुर्वेदादयः । धर्माणि धर्मशास्त्राणि । इतिहासो भारतादिः । पुराणं ब्राह्मादि । एतेषां लक्षणं परिमाणं च वक्तव्यमिति प्रश्नः । सम्प्लवो नाशः । यावान् यथेति प्रश्नः । सर्वभूतानां महतां भौतिकानां च विक्रमः पराक्रमः । कार्यकरणं भूतानामेव । प्रतिसङ्क्रमः कारणेऽनुप्रवेशः पूर्ववत् । इष्टं यागादि कर्मरूपेण क्रियमाणम् । पूर्त्तं खातादि । तयोरेकफलत्वात्सहप्रयोगः । कामानां अन्येषां काम्यकर्मणाम् । अथवा । कामानां विषयाणां यो भोगप्रकारः सः विधिः के विषया भोक्तव्याः के नेति । त्रिवर्गस्य धर्मार्थकामाख्यस्य । स्वतन्त्रपुरुषार्थपक्षेण त्रिवर्गनिरूपणान्न पौनरुक्त्यम् । एतेषां स्वरूपमुत्तरत्र वक्ष्यति । विधिः प्रकारः । नित्यनैमित्तिकादिविधयो वा । यश्चाऽनुशायिनां सर्गः । अनुशायिनो जीवविशेषाः । ये भगवच्छयनमनु शेरते त्रैलोक्यकर्मानुवर्त्तिनः । दैत्याः ज्ञानिनश्च तदनुवर्त्तिनश्च नाऽनुशायिनः । अन्ये जीवास्त्वनुशायिनः । अनुशायिनां यः सर्गः स यावान् यादृश इति प्रश्नः । पाषण्डस्य वेदमार्गविरोधिनः । चकाराद्विधर्मादेः सम्भव उत्पत्तिर्यादृश इति प्रश्नः । आत्मनो जीवस्य अनुशायिव्यतिरिक्तस्य बन्धमोक्षौ ज्ञानिनां मोक्षो दैत्यानां बन्ध उभयमुभयेषामिति वा प्रश्नः । **व्यवस्थानं स्वरूपतः** । बन्धमोक्षव्यतिरेकेण आत्मा कथं तिष्ठति कीदृग्रूप इति प्रश्नः । अस्योत्तरं—"**अशरीरं वाव सन्तमि**"ति भविष्यतीति । भगवान् वा अत्र ब्रह्माण्डे अवतीर्णः स्वतन्त्रोऽपि यथा आत्ममायया विक्रीडति । अवतीर्य भगवान् कथं क्रीडतीत्यर्थः । अथवा । वैकुण्ठेऽन्यत्र वा कथं

१ धिक्यभावेनेति ग. २ परिणाममपीति ख. ३ यथा बाह्यतिति ग. ४ अध्यात्मिक इति घ. ५ तत्रेति ग. ६ पुरुषार्थक्षेपणादिति ग. ७ वक्ष्यते इति ख. ग. ८ वक्ष्यतीति ख.



क्रीडतीति । मायासम्बन्धे कीदृशं भगवच्चरित्रमित्यर्थः । मायां विसृज्य वा यथा भगवानुदास्ते । साक्षिरूपं हि सर्वं पश्यत्युदासीनं साङ्ख्यसिद्धान्तगम्यं तदेकं भगवतो रूपम् । तद्वन्मूलरूपमप्याहोस्विन्नेति प्रश्नः । उभयकरणसमर्थत्वात्सन्देह इति विभुरित्यनेनोक्तम् ॥ १४–२३ ॥

एवमत्यन्तोपयोगिनः प्रश्नान्निरूप्य सामान्यतोऽन्यान्पृच्छन्नुपसंहरति—

**सर्वमेतच्च भगवन् पृच्छतो मेऽनुपूर्वशः ।**
**तत्त्वतोऽर्हस्युदाहर्तुं प्रपन्नाय महामुने ॥ २४ ॥**

**सर्वमेतच्चेति** । एतत्पूर्वोक्तम् । चकारादपृष्टमपि । भगवन् भवान् पृच्छतो मे मम कार्यार्थम् । अनुपूर्वशः प्रश्नानुपूर्व्येण । यथाजिज्ञासमत्र प्रश्नाः कृताः । क्रमेणोत्तरे तथा तथा चित्तं समाहितं भवतीत्यानुपूर्व्येणैव वक्तव्यमित्युक्तम् । अस्मदधिकारानुसारेण वा न वक्तव्यं किन्तु तत्त्वतः । अनेन मतान्तराण्यपि व्युदस्तानि । यद्यपि ममाऽधिकारो नास्ति श्रवणे तथापि त्वमुदाहर्तुमर्हसि । श्रोतुरप्यधिकारोऽपेक्ष्यत इति चेत्तत्राह—**प्रपन्नायेति** । प्रपन्नाय हि सर्वं वक्तव्यम् । नचैतदुपचारवचनम् । तद्भवानेव जानातीत्याह—**महामुन इति** । मुनिरन्तःकरणस्थितं जानाति । महामुनिस्तु भाव्यमपीति । मम यत्तत्त्वज्ञानं भाव्यं मम या वा प्रपत्तिस्तदुभयं भवान् जानातीति सम्बोधनम् ॥२४॥

ननु सर्वे मुनयः । सर्वे च सर्वज्ञाः । ते च नानाविधवक्तारः । यथा तेषां पाक्षिकं प्रामाण्यं तथा ममाऽपि भविष्यतीति न शङ्कनीयम् । तदाह—

**अत्र प्रमाणं भगवान् परमेष्ठी यथाऽऽत्मभूः ।**
**परे चेहाऽनुतिष्ठन्ति पूर्वेषां पूर्वजैः कृतम् ॥ २५ ॥**

**अत्र प्रमाणं भगवानिति** । प्रमाणशब्दः अबाधितज्ञाने वर्त्तते । बाधयोग्यव्यतिरिक्ते वा । तत्सम्बन्धी यः प्रमाता प्रमाकरणं वा प्रमाविषयो वा तत्सर्वं प्रमाणमित्युच्यते । केचित्तु प्रमाणशब्दं नानार्थमाहुः । तत्र येषां ज्ञानप्रामाण्यं न व्यभिचरति उत्पत्तिप्रभृत्यामरणं ते प्रमाणशब्देनोच्यन्ते । यथाऽस्मिन्नर्थे वेदव्यतिरिक्ते प्रमेये यथा आत्मभूः प्रमाणम् । यथा ऋषीणामन्योन्यं विरोधाः, न तथा कस्यचिदपि ब्रह्मवाक्ये । तस्य परमप्रामाण्ये हेतुः—**आत्मभूरिति** । **परमेष्ठीति** । परमे तिष्ठतीति । उत्पत्त्या स्थित्या च भगवत्पर इति तत्प्रामाण्यम् । एवं भगवानपि प्रमाणमित्यर्थः । ननु केवलं भगवद्वचनेन कथं प्रामाण्यं भविष्यति, जायमानं वा कथं सर्वजनीनं भविष्यतीत्याशङ्क्याह—**परे चेहाऽनुतिष्ठन्तीति** । परे च मत्तोऽपि ये महान्तः अधिगतपरमार्थास्तेऽपि त्वदुक्तेऽर्थे विश्वासं कुर्वन्त्यनुतिष्ठन्ति च तं पदार्थम् । इह अस्मिन् भक्तिमार्गे । तेषामपि पूर्वेषां पूर्वजैः कृतम् । त्वदुक्तोऽर्थः सर्वैरेवाऽनुष्ठितः सर्वैरेव क्रियते । अतस्त्वद्वाक्यं सर्वत्र प्रमाणम् । अथवा अस्माकं साक्षाद्भगवानेव प्रमाणम् । परे अन्ये तु स्वपूर्वेषामपि ये पूर्वजास्तैर्यत्कृतं तदेवाऽनुतिष्ठन्ति । चस्त्वर्थे । न तु प्रमाणं किञ्चिद्विचारयन्ति । अस्माकं तु त्वदुक्ते न सन्देह इत्यर्थः ॥ २५ ॥

१ वा नास्ति ग. २ सामर्थ्यादिति ग. ३ मत्कार्यार्थमिति ख. ४ णोत्तरेणेति ग. ५ प्रतिपत्तिरिति ग. ६ ज्ञानमिति ख. ग. ७ भगवद्वचनेनेति क. ग.

किञ्च । त्वद्वचनादेव जीवामि । अन्यथा मरणमेव स्यात् । तक्षकाख्यमहाभयस्य श्रुतत्वात् । तदाह—

**न मेऽसवः परायान्ति ब्रह्मन्ननशनादमी ।**
**पिबतोऽच्युतपीयूषमन्यत्र कुपिताद्द्विजात् ॥ २६ ॥**

**न मेऽसवः परायान्तीति** । मे असवः प्राणाः अनशनादपि न परायान्ति नाऽपगच्छन्ति । **ब्रह्मन्निति** सम्बोधनं तज्ज्ञानाय । अनशनं हि प्राणनिवारकम् । **अमीति** बाधितप्राणानां प्रदर्शनम् । राजत्वादेकेनैवोपवासेन क्लिष्टः । अगमने हेतुमाह—**पिबतोऽच्युतपीयूषमिति** । अच्युतस्य सम्बन्धि कथारूपं पीयूषम् । अच्युत एव वा पीयूषम् । अनेन स्वस्योत्तमाधिकारो द्योतितः । ननु यथेदममृतं क्षुधं निवारयति तथा शापमपि निवारयिष्यतीत्याशङ्क्याऽऽह—**अन्यत्र कुपिताद्द्विजादिति** । अनेन कथामृतेन सर्वे एव प्राणोपघातका निवर्त्तन्ते । परं यः कुपिताद्द्विजात् तक्षकाख्यो यः प्राणोपघातकः स न निवर्त्तते । अन्यथा स कोपस्तमेव द्विजं नाशयेत् । मृत्युना ह्याक्रान्तः कोप एकं सर्वथा नाशयति । तत्र ब्राह्मणमरणापेक्षया स्वमरणमेव वरमित्यस्मत्कामनया सर्वनिवारकमपीदममृतं तन्न निवारयिष्यतीत्यर्थः ।

एवमापाततः प्रश्नार्थो निरूपितः । अस्याऽध्यायस्य विमर्शमध्यपातात् विमर्शोपयोगी कश्चन पदार्थो वक्तव्यः । तत्रोपपत्तिविमर्शस्योपक्रान्तत्वादुपपत्तेस्त्रिरूपत्वादाक्षेपसिद्धान्तफलेषु प्रथममाक्षेपो वक्तव्यः । स सर्वाक्षेपकश्चेत् श्रोतुरधिकारं प्रच्यावयेदिति सप्ताध्याय्यां यत्प्रमेयं निरूपितं तत्र सम्मतस्य पर्यवसानपर्यन्तं स्वबोधं निरूप्य यत्रैव पर्यवसानज्ञानं तद्यथाश्रुतमाक्षिपतीति पूर्वपक्षाध्यायोऽयमिति मन्तव्यम् । अन्यथा पूर्वाध्यायानां स्वस्य वा वैयर्थ्यमापादयेत् । प्रश्नैतावत्त्वं चाऽसङ्गतं स्यात् । अनन्ता एव प्रश्नाः कर्त्तव्याः स्युः । ते आक्षिप्यन्ते । अन्ये च पर्यवसितार्थकथनेन स्वबोधविषया जाता इति बोध्यन्ते । अन्यथा शृण्वत इत्यादिश्लोकैर्निरूपितं प्रमेयं शुकेनाऽनिरूपितमित्यप्रामाणिकं स्यात् । गुरोर्वा शङ्कामुत्पादयेत् । तस्मात्सप्ताध्याय्येवात्र पूर्वपक्षेण विचार्यते । तत्र प्रथमं श्रोतव्यादीनीति श्लोकत्रयेण साधारणाधिकारं निवार्य अभयमिच्छतां य उपायः कथितः सोऽनुपपन्नः । ब्रह्मणा नानाधिकारेण प्रमेयवक्तव्यत्वोपदेशात् । तदाह—**ब्रह्मणा नोदित इति** । इदमेव हि तत्त्वमधिकारभेदेन सर्वं निरूपणीयमिति । अतः केषाञ्चिदधिकारः केषाञ्चिन्नाऽऽधिकार इति पक्षो न सम्भवति । "**सर्वेऽधिकारिणो ह्यत्र विष्णुभक्तौ यथा नृपे**"ति वाक्यविरोधश्च । अतः—**एतद्वेदितुमिच्छामीति** वचनम् । यदप्युक्तं केवलं भगवान् श्रोतव्य इति । तदप्यनुपपन्नम् । अद्भुतवीर्यस्यैव श्रोतव्यत्वात् । अन्यथेदं वक्ष्यमाणं फलमनुपपन्नं स्यात् । चरित्रमात्रत्वे भगवान् स्वभावत एव प्रविष्ट इति कस्याऽपि संसारो न स्यात् । शास्त्रवैफल्यं च । तदाह—**हरेरद्भुतवीर्यस्येति** । अद्भुतवीर्यस्य कथा अद्भुतवीर्यरूपाः । तथा सति श्रवणादीनां दृष्टमेव द्वारं स्यात् । अन्यथा त्वदृष्टकल्पना प्रसज्येत । दोषाणां प्रतिबन्धकत्वाच्च न फलम् । "**गुणानुषक्तं व्यसनाय जन्तोरि**"ति वाक्यविरोधश्च । तदाह—**यथाऽहमखिलात्मनीति** । श्रवणादिना भगवति मनोनिवेशने अस्मिन् जन्मन्येतावदेव फलम् । जन्मान्तरे त्वन्यत् । यदुक्तं अल्पेनैव कालेन कार्यं सिद्ध्यतीति । तदप्यसङ्ग-

१ न यान्तीति ख. २ क्षुधामिति घ. ३ स्वस्य वैयर्थ्यमिति ग. ४ वक्तव्योपदेशादिति ख. ५ निवेशेऽस्मिन्निति ख.



तम् । दृष्टोपाये भगवतो बहुकर्त्तव्यत्वात् । तदाह—**शृण्वत इति** । स्वार्थं तु मनोनिवेशनमेव । अत एव निर्धार्य वदति—**त्यक्ष्ये कलेवरमिति** । ततो भगवान् मनसा गृहीत इति जन्मान्तरे भगवत्स्यैवौपयिकं शरीरं निष्पादयति तदानीं स्नानामिति भविष्यति भावसरोरुहत्वं च । बहिःस्थितस्यैवाऽन्तःप्रवेशने कार्यसिद्धिर्न त्वन्तःस्थितेन कार्यम् । यथा दार्वग्निना । तदाह—**विशत इति** । अन्यथा प्रक्रियान्तरे रागाभावो जन्मशतेऽनापि न स्यात् । शरीरेन्द्रियाणां गुणकार्यत्वात् । अस्यां प्रक्रियायां तु प्रकर्षेण आग्रहेण प्रविष्टः शमलं धुनोति । तदा च शिथिलावयवत्वे मूलबन्धाप्रच्यावे गुणैरेवाऽग्रिमकार्यं स्यात् । अतो धुनोतीत्येवोक्तम् । तदा द्वितीयमभयं भवति । न भयं यस्मादिति अभयरूपो भगवान् मनसा प्राप्तः । अतो मृत्युगृहीतशरीराद्यभावात् न विद्यते भयं यस्येति द्वितीयं फलति । सिद्धान्तफलैरग्रिमदशमस्कन्धार्थेऽवगते न भयमस्मादिति भयनाशक एव स्वयं भविष्यति । तद्वक्ष्यति—"**मृत्यवो नैव धक्ष्यन्ति मृत्यूनां मृत्युमीश्वरमि**"ति । अन्यथा प्रथमपक्ष एव पर्यवसाने गुरोरप्रयोजकता स्यात् । तस्मादेतस्यैव त्रयं भवति । यदप्युक्तं जीवानां स्वभावक्रिययाऽनर्थो भवतीति । तदप्यसङ्गतम् । जीवानां किं स्वभावत एव देहादिसम्बन्ध ईश्वरेच्छया वेति । आद्ये सर्वेषामेवाऽनिर्मोक्षप्रसङ्गः । द्वितीये न ते पर्यनुयोगमर्हन्ति । भगवतैव तथा सम्पाद्यमानत्वात् । एतदभिप्रेत्याह—**यद्धातुमत इति** । यदप्युक्तं श्रोतव्यं भगवद्विशेषणचतुष्टयं सर्वात्मा भगवान् हरिरीश्वर इति । तदप्यसङ्गतम् । तदाह—**आसीद्यदुदरात्पद्ममिति** । सर्वात्मा भगवान् श्रोतव्यत्वेन निरूपितः । तस्योदराच्च पद्मजननं निरूपितम् । पद्माधारत्वेन तस्य पद्माद्भिन्नत्वात् जगतश्च पद्माधारत्वात् सर्वात्मत्वं नोपपद्यते । औपचारिकप्रयोगस्तु न फलजनक इति सिद्धम् । **किञ्च** । भगवत्त्वं च नोपपद्यते । तदाह—**यावानयं वै पुरुष इति** । प्राकृततुल्यत्वादित्यर्थः । हरित्वं च नोपपद्यते । तदाह—**अजः सृजतीति** । भगवदनुग्रहमपि प्राप्य यतोऽयमजः सर्वभूतजातं सृजति । महति कर्मणि व्यापृतोऽतिखिन्नः । भूतात्मा च जायते तत्तत्स्वभावं प्राप्नोति । एतदेवाऽग्रे वक्ष्यति—"**शयानो बहुचिन्तये**"ति । ईश्वरत्वं च नोपपद्यते । तदाह—**स चाऽपि यत्र पुरुष इति** । अस्याऽपि प्राकृततुल्यत्वं जगत्कार्यव्यापृतत्वं मायाग्रहणपरित्यागक्लेशः शयनं गूढस्थानस्थितिरिति । यदप्युक्तं पातालमेतस्येत्यादि । तदप्यसङ्गतम् । तदाह—**पुरुषावयवैरिति** । अन्योन्यविरोधादुभयमप्यसङ्गतमिति भावः । यदप्युक्तं इन्द्रादयो बाहव आहुरिति । तदप्यसङ्गतम् । कल्पभेदानां विद्यमानत्वात् प्रतिकल्पमिन्द्रादीनां नानात्वात् बाहूनामनियतत्वापत्तिः । अधिकारशब्दत्वेऽप्यधिकृतानां भेदात् स दोषस्तदवस्थः । इन्द्रत्वधर्मस्याऽबाहुत्वात् । यदप्याहुरित्युक्तं प्रमाणं । तदप्यसङ्गतम् । विकल्पानां विद्यमानत्वात् । विकल्पा युगभेदाः । ब्रह्मकल्पान्तरकल्पा वा । उभयेषामपि प्रतिकल्पं भिन्नत्वान्न बाहुप्रमाणयोर्व्यवस्था । किञ्च । यदप्युक्तं कर्णौ दिश इति । दिशामव्यवस्थितत्वात्कर्णत्वं नोपपद्यते । दिशस्तु सूर्येण क्रियन्ते । "**सूर्येण हि विभज्यन्ते दिश**" इति वाक्याद्यत्रोदेति सा प्राचीत्यादि । अतः कालानुमापके सूर्ये विचार्यमाणे दिशो न सन्त्येव कुतस्तासां कर्णत्वम् । व्यवहारस्त्वौपचारिकैरपि भवति । पदार्थनिर्णयस्तु नैवंविधः । यदप्युक्तं श्रोत्रममुष्य शब्द इति । तदपि नोपपद्यते । कालभेदेनैव शब्दानां प्रवृत्तत्वात् । तदाह—**भूतभव्यभवच्छब्द इति** । एते ह्येकदा न प्रवर्त्तन्त इति श्रोत्रं नियतं न स्यात् । शब्दविशेषस्य श्रोत्रत्वे तु

१ तदा स्नानामिति ख. २ दशस्कन्धेति घ. ३ तस्य नास्ति घ. ४ प्रयोजकस्तु घ, ५ व्यापृतत्वं ग. ६ आद्यः क्लेश इति ख. ७ भेतस्य हि पादेत्यादि ख. ८ हि नास्ति ख.

सर्वरूपत्वमुपसंह्रियमाणमसङ्गतं स्यात् । यदप्युक्तं नासत्यदस्रौ परमस्य नासे इति । अश्विनीकुमारयोरायुर्वेदप्रवर्तकत्वं वक्तव्यम् । तदाऽऽयुषः स्वरूपं विचारणीयम् । किं भगवद्दत्तमायुः प्राणिनां नियतमनियतं वेति । उभयथाऽपि नासत्ययोरप्रयोजकत्वम् । अतः स्वत आयुर्माने विचार्यमाण अश्विनयोरेवाऽनिरूप्यत्वात् नासिकात्वं दूरे । एवं घ्राणोऽस्य गन्धो मुखमग्निरिद्ध इति । गन्धश्चाऽग्निश्च त्रिक्षणावस्थायां । अतः कालस्याऽनुगतिः स्थूला वा सूक्ष्मा वा यदि विचार्यते तदा गन्धाग्नी यौश्च न सङ्गच्छन्त इत्यर्थः । किञ्च । चक्षुरभूत्पतङ्गः पक्ष्माणि विष्णोरहनी उभे चेति पूर्ववत् । यतः कर्मगतिषु विचार्यमाणासु केनचित्कर्मणा सूर्यस्य परावृत्तौ सूर्यानन्तत्वे च दिनरात्रिव्यवस्थायाः सूर्यगतिकृतत्वात् तस्याश्च कर्मरूपत्वात् । भगवच्चक्षुरेव नोपपद्यते न वा पक्ष्माणि । यादृशीरिति तस्यैवाऽवान्तरभेदः । किञ्च । यदुक्तं तद्भ्रूविजृम्भः परमेष्ठ्यधिष्ण्यमिति । तदपि कर्मसाध्यमेव । तदाह—**यस्मिन् कर्मसमावाय** इति । अयं ब्रह्मा गुणानां गुणिनां च कर्मसमावाये उक्तः । तत्र का भगवद्भ्रूविजृम्भा । एतेनैव आपोऽस्य तालू रस एव जिह्वेत्याक्षिप्तमेव । अनेन यानि कानि गोलकत्वेन निरूपितानीन्द्रियत्वेन च तानि सर्वाण्याक्षिप्तानि वेदितव्यानि । किञ्च । आपोऽस्य तालु इत्यारभ्याऽसुरानीकवर्यं इत्यन्तेनोक्ताः पदार्था विशेषसामान्यविचारेण गतार्था भविष्यन्तीति विशेषपदार्थानाधाराधेयभावापन्नान् दशपदार्थान्निरूपयति—**भूपातालेति**। एतेषां दशपदार्थानां स्वकार्यसहितानां विचारे क्रियमाणे सामान्यतो ब्रह्माण्डे च विचार्यमाणे ब्रह्माण्डमेवाऽऽयाति। न भगवान् भगवदवयवा वा केनाऽपि प्रकारेण सङ्गच्छन्ते । तस्मात्सिद्धं ब्रह्माण्डं दूरीकृत्य पुरुषत्वकल्पना व्यर्थेति भावः । असुरानीकवर्यं इत्याक्षिपति—**महतां चाऽनुचरितमिति** । ब्रह्माननमित्यादि वर्णाश्रमविनिश्चयेन । यदुक्तं नानाभिधाभीज्यगुणोपपन्न इति । अत्र यो यज्ञो निरूपितो भगवत्कर्मत्वेन तस्याऽप्राकृतत्वान्नित्यत्वाच्च पूर्वोक्तदोषसम्बन्धाभावात्तदेकमुपपद्यत इत्याशङ्क्य नवपदार्थविचारेण तदपि प्रत्युक्तं भविष्यतीति नवपदार्थान्पृच्छति—**अवतारानुचरितमिति** द्वाभ्याम् । यागो हि देवतोद्देशेन द्रव्यत्यागात्मकः । तत्र देवता द्रव्यं क्रिया चेति त्रयं देशादयः षडङ्गानि एवं नव । तत्र देवता भगवदवतारेण विचारिता भवति । स चाऽवतारो लोक इति लौकिकः । युगानि तु विचारणीयानि । तेषु विचारितेषु द्रव्यमपि निराकृतं भविष्यति। यथा "**यज्ञवास्त्वभ्यवायन् ते पश्यन् पुरोडाशं कूर्मभूतं सर्पन्तमि**"ति । एतत्कर्म कदा । युगेषु वा युगेभ्यो भिन्नकाले वा । युगविशेषे चेत्ततः पूर्वं द्रव्याभावाद्यागो न स्यात् । एवमन्यत्राऽपि । युगमाने च विचार्यमाणे यागानामन्यथात्वात्क्रियैव न सङ्गच्छते । यथा त्रेतामुखे यज्ञोत्पत्तिः । किञ्च । युगधर्मः कालः । नृणां साधारणो धर्म इति देशः । सविशेषो यादृश इति द्रव्याणि गुणभेदभिन्नानि द्विधा निरूपितानि । श्रेणीनामिति कर्त्तारः । राजर्षीणामिति मन्त्राः । धर्मकृच्छ्रेष्विति कर्माणि । अत एव षट्सु धर्मप्रयोगोऽङ्गत्वख्यापनाय । यदप्युक्तं इशानसावीश्वरविग्रहस्येति । तदपि तत्त्वविचारेण प्रत्याख्यातं भविष्यति । तत्त्वानामेकदेशेन ब्रह्माण्डनिर्माणम्। तत्र "**न यतोऽस्ति किञ्चिदि**"ति वचनमनुपपन्नं स्यात् । अतःपरं द्वितीयाध्यायारम्भः । तत्रादावेव यदुक्तम् एवं पुरा धारणयेति । तदसङ्गतम्। तत्त्वानां लक्षणविचारेण । लक्षणं तेषां सृष्टिकरणसामर्थ्यम् । तस्यैवाऽसाधारणधर्मत्वात् । तस्मिन् ज्ञाते तदंशैरेव ब्रह्मणि प्रविष्टैः कार्यसिद्धेस्तस्य ज्ञानादीनां वैयर्थ्यापत्तिः । यदपि शाब्दस्य हि ब्रह्मण एष पन्था इत्यादिभिर्वैराग्य-

१ परमेष्ठिधिष्ण्यं इति ख. २ समवाय इति ख. ३ त्यादिक्षिप्तमेवेति ख. ४ विशेषस्येति ख. ५ भिधोपपन्नमिति ख. ६ भवन्तीति ख. ७ वायं ते पश्यत पुरोडाशमिति ख. ८ कारणेति ख.



पुरःसरं स्वचित्ते स्थितं भगवन्तं चिन्तयेदिति । तदपि तत्त्वानां हेतुपूर्वकलक्षणे विचार्यमाणे पूर्ववद्भविष्यति । तत्र चित्तस्य महत्तत्त्वरूपत्वान्महति विद्यमान एव भगवांस्तत्र भवतीति स्वचित्ते कः सिद्धः । आत्मनश्च सिद्धिस्तत्र दूरापास्ता । "**चित्तं तन्महदात्मकमि**"ति हेतुलक्षणम् । यदप्युक्तं केचित्स्वदेहान्तर्हृदयावकाश इति । तदपि पुरुषपूजायां विचार्यमाणायां "**मनोमयी मणिमयी**"ति वाक्यान्मानसी मूर्तिः सा । स कथं भगवान् भवेदिति । स्थूलसूक्ष्मधारणासिद्ध्यर्थं योगद्वयं निरूपितम् । तदपि योगस्वरूपे विचार्यमाणे चित्तवृत्तिनिरोधत्वादसङ्गतमेव भविष्यति । यदप्युक्तं स्थिरं सुखं चाऽऽसनमास्थितो यतिरिति । तदप्यसङ्गतम् । जीवत एव योगिनः सर्वलोकगमनसम्भवात् किं मरणेन । यथा कर्दमस्य । ऐश्वर्यपदेन चाऽर्जुनादयोऽप्यनेनैव देहेन स्वर्गं गताः परिगृहीताः । यदप्युक्तं आनन्दमानन्दमयोऽवसान इति । तदपि योगिनो लिङ्गभङ्गे विचार्यमाणे असङ्गतं भवति । यदप्युक्तं भगवान् ब्रह्म कात्स्न्र्येनेति । तदपि वेदविचारे क्रियमाणे असङ्गतं भवति । यदि भगवानात्मा । सिद्धमेव तस्मिन् प्रेम । उपदेशश्च व्यर्थः । नाऽस्ति चेत्प्रेम तदा न स आत्मा । अज्ञानादात्माप्यात्मत्वेन न ज्ञात इति चेत्परात्मवत् । तदाप्यात्मत्वमेवोपदेष्टव्यम् । न च प्रेमार्थं यत्नः कर्तव्यः । यदपि कामनाभेदेन देवतान्तरभजनमुक्तं तदपि वेदादिविचारे असङ्गतमिति तृतीयादिः । वेदे हि तदर्थमन्यदेव साधनं निरूपितमिति । भक्त्यर्थनिरूपणं तु भक्तिनिराकरणेनैव निराकृतम् । यदप्युत्पत्त्या विमर्शनमुक्तं तदपि सम्प्लवादिविचारेण निराकृतं भविष्यति । यदिदं जगत् प्रलयं यास्यति प्रवृद्धं वा भविष्यति कारणे वा लीनं भविष्यति । तदा किं भगवतः सकाशादुत्पत्त्या । स्वत एवोत्पद्यतां अन्यथा वा । विशेषाभावात् । यदपि यज्ञादीनां स्वरूपनिर्वाहार्थं भगवदवयवकल्पना निरूपिता । सापि इष्टापूर्तादिविचारेण निवारिता भवति । लौकिकैरलौकिकैर्वा पदार्थैर्योगे निष्पन्ने भूतसंस्कारे आत्मसंस्कारे वा भगवत्संस्कारे वा फलतो वा न कश्चिद्विशेषः । भगवदीयत्वादेस्त्वन्यथैव सिद्धेः । यदप्युक्तमात्मानं सृजतीति, तदप्यनुशायिनां सर्गे विचार्यमाणे निराकृतं भविष्यति । यतस्ते भगवद्विलक्षणा वक्तव्याः । यदप्युक्तं तत्त्वं परं रूपवदस्वरूपमिति । तदपि पाषण्डधर्मे विचार्यमाणे निराकृतं भविष्यति । दैत्यानां व्यामोहनार्थं पाषण्डोत्पत्तिः । दैत्याश्च के भगवानन्यो वा । भगवांश्चेत् सापि भगवल्लीलेति पाषण्डत्वमेव न स्यात् । भक्तिरपि निराकृता भवति । पाषण्डत्वेऽपि स्थिरीभूते न दैत्यानां भगवत्त्वम् । यदप्युक्तं कर्णकषायशोषानिति । तदप्यसङ्गतम् । चिदात्मनो बन्धमोक्षौ विचार्येते । बन्धो भगवदिच्छया मोक्षश्च । तत्र किं कर्णकषायशोषणेन । भिन्नतया चाऽवस्थाने निरूपिते सर्वमेव साधनं व्यर्थं स्यात् । भगवद्रूपत्वात्तस्य । अवतारवर्णनं च व्यर्थम् । भगवतो मायायां क्रीडनमेव तादृशमिति सर्वमेव जगदवतारो भवति किं विशेषेण । मायापरित्यागे अवतारलीलामपि परित्यजेत् । यदप्युक्तं स्वमेतद्विपुलीकुर्विति । तदपि न वक्तव्यम् । यथा भवान् भक्तिरसेन वदति तत्किं कस्याचित्प्रेरणया । प्रामाण्यं च त्वय्येव सिद्धम् । तदाह—**अथ प्रमाणमिति** । यदप्युक्तं मायां वर्णयत आत्मा न मुह्यतीति । तदप्यल्पमसङ्गतं च । यतो मम प्रायेणाऽपि प्राणा न गच्छन्ति श्रूयमाणमपि तक्षको भक्षयिष्यति ॥ २६ ॥

१ तदपीति नास्ति ख. २ स्वात्मनश्चेति ख. ३ भवेदिति ख. ४ वा नास्ति ख. ५ रूपमिति ख. ६ वाऽवस्थाने ख. ७ त्यागे वा ख.

एवं पूर्वपक्षे कृते भगवन्माहात्म्ये स्थिरीकृते शुकस्य सन्तोष एव जातो न कोप इत्याह—

सूत उवाच ।

**स उपामन्त्रितो राज्ञा कथायामिति सत्पतेः ।**
**ब्रह्मरातो भृशं प्रीतो विष्णुरातेन संसदि ॥ २७ ॥**

**स उपामन्त्रित इति ।** स शुकः । उपामन्त्रितः प्रार्थितः । **"उपामन्त्रयन्त राज्येन पितरो यमि"**त्यत्र तदर्थनिर्द्धारात् । **इति** एवंप्रकारकथायाम् । युक्तिपूर्वं भगवद्गुणा निरूपणीया इति । तथा सति भगवतो महत्सुखं भवति । सत्पतित्वात् । तथा सति निःसन्दिग्धो भगवल्लीलाप्रत्ययो भवतीति भगवत्तोषहेतुरयं प्रश्न इति भावः । तत्राप्ययं ब्रह्मरातः ब्रह्मणा वेदेन रक्षितः । अस्मदर्थे युक्तिमयं कथयिष्यतीति । अत एव भृशं प्रीतः । मम जन्मसाफल्यं जातमिति । राजा च विष्णुरातः । विष्णुना एतदर्थमेवाऽयं संरक्षितः । यदयं क्षोदपूर्वं निःसन्दिग्धं मां ज्ञास्यतीति । अत एव स्वजन्मसाफल्यार्थं सभायामेव पृष्टवान् ॥ २७ ॥

एवं युक्तिपूर्वकं भगवत्कथायां वक्तव्यायां लौकिकी युक्तिरप्रयोजिकेत्युपपत्तिरूपं भागवतमेवोक्तवानित्याह—

**प्राह भागवतं नाम पुराणं ब्रह्मसम्मितम् ।**
**ब्रह्मणे भगवत्प्रोक्तं ब्रह्मकल्प उपागते ॥ २८ ॥**

**प्राह भागवतं नामेति ।** पुराणमिति प्रमाणम् । **ब्रह्मसम्मितमि**त्युक्तिसहितम् । ननु कति भागवतानि सन्ति । बहुषु स्थलेषु भिन्नप्रकारेण भागवतकथनाच्छङ्का । तत्राऽऽह—**ब्रह्मणे भगवता प्रोक्तमिति ।** विषयात्मकं तु भागवतमनेकधा । विमर्शात्मकं तु द्वेधा । तत्रोत्पत्तिप्रकारेण निरूपितं ब्रह्मणा नारदायोक्तम् । उपपत्तिप्रकारेण तु ब्रह्मणे भगवता प्रोक्तम् । अत्र स्थूले भागवते सर्वे प्रकारा उपनिबध्यन्ते । भागवतप्रवृत्तेरनेकधात्वज्ञापनाय । तत्राऽन्यस्य पदार्थस्य ब्रह्मणा स्वयमेव ज्ञातत्वादुपपत्तिः परं वक्तव्या नान्यदिति वक्तुं ब्रह्मकल्प उपागत इत्युक्तम् । ब्रह्मकल्पे समागते । तत्र हि शब्दब्रह्मण एव सर्वोत्पत्तिः । या उपपत्तिर्भागवते वर्त्तते ॥ २८ ॥

ततोऽन्यविषयोऽपि प्रश्न इति भागवतात्पृथगेव तं परिहृत्य पश्चाद्भागवतोपपत्तिं वक्ष्यतीत्याह—

**यद्यत्परीक्षिदृषभः पाण्डूनामनुपृच्छति ।**
**आनुपूर्व्येण तत्सर्वमाख्यातुमुपचक्रमे ॥ २९ ॥**

**यद्यत्परीक्षिदिति ।** पाण्डूनामृषभः भगवद्भक्तानां मध्ये मुख्यः । यद्यदनुपृच्छति पूर्वोक्तहेतुप्रश्नादिरूपम् । आनुपूर्व्येणैव तत्सर्वं वक्तुमुपक्रमं कृतवान् । यथाकाङ्क्षमुत्तराणि दत्तवानित्यर्थः । चकारादधिकामपि युक्तिमुक्तवानिति भावः ॥ २९ ॥

**इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां द्वितीयस्कन्धे अष्टमाऽध्यायविवरणम् ॥ ८ ॥**

---

१ न्महात्मनेति ख. २ इतीति एवमिति घ. ३ युक्तिपूर्वकमिति ख. ४ सतामिति घ. ५ पूर्वकमिति ख. ग. ६ अप्रयोजकेति घ. ७ प्रकारेण कथनादिति ग. ८ विमर्षात्मकमिति ख. ९ एवोत्पत्तिरिति घ.



# नवमोऽध्यायः ।

**नवमे तूत्तरं प्राह जीवब्रह्मस्वरूपयोः ।**
**सन्देहवारकं पूर्वकथनस्याऽपि वस्तुताम् ॥ १ ॥**
**पारम्पर्यकथा चाऽस्य शुद्ध्याधिक्यवगम्यते ।**
**नाऽन्यथेत्यस्य सन्देहनाशनाय निरूपिता ॥ २ ॥**

अन्येषां सन्देहानां जीवब्रह्मसन्देहमूलत्वात्प्रथमं जीवसन्देहं वारयति—**आत्ममायामृत इति** त्रिभिः । यत्तेनोक्तं यद्धातुमतो ब्रह्मन्निति । अस्य जीवस्य देहसम्बन्धः कथमिति । जीवत्वं कथमिति अन्यशब्देन प्राप्तम् । तत्र जीवत्वे जाते बहवो हेतवो भविष्यन्ति देहसम्बन्धे इति प्रथमं जीवत्वमुपपादयति—

श्रीशुक उवाच ।

**आत्ममायामृते राजन् परस्याऽनुभवात्मनः ।**
**न घटेताऽर्थसम्बन्धः स्वप्नद्रष्टुरिवाऽञ्जसा ॥ १ ॥**

**आत्ममायामृत इति ।** तत्र सदानन्दरूपो भगवानेककोटिनिविष्टः । चिद्रूपश्चाऽपरः । तस्य माया द्विविधेति पूर्वं निरूपितम् । तत्र चिद्रूपस्य माया व्यामोहिका । सा स्वपुरुषं व्यामोहयित्वा जीवतामापादयतीति । जीवतीति जीवः केवलं प्राणधारणप्रयत्नवान् । स हि मायया व्यामोहितो व्याकुलः सन् सदानन्दकृतसृष्टौ यः सूत्रात्मक आसन्यो दशविधप्राणरूपस्तमवलम्ब्य तिष्ठति तदा जीव इत्युच्यते । **"जीव प्राणधारण"** इति धातोः कर्त्तरि अच्प्रत्ययः । बोधरूपोऽप्ययमानन्दरूपस्य पृथग्भूतत्वादानन्दार्थं तया व्यामोहितत्सम्बन्धादानन्दो भविष्यतीति बुद्ध्या तया सम्बध्यते । अयं च विभागो **"बहु स्यां प्रजायेये"**तीच्छया । इच्छाऽपि सर्वभवनसमर्थं स्वरूपमेव धर्मरूपेण भवत् इच्छारूपेणाऽपि भवति । तत्र सदंशस्य क्रियारूपा शक्तिः । चिदंशस्य व्यामोहिका माया । आनन्दरूपस्य जगत्कारणभूता । एतत्त्रितयरूपा शक्तिः सच्चिदानन्दरूपस्य भावत्वतत्त्वादिवाच्या । तथा भगवतो भावस्तु स्वरूपादेव निर्मितात् । न च सर्वदा भवतीति शङ्कनीयम् । आपादकहेतुभूतस्य कालस्याऽभावात् । जाते पुनः काले तस्यैव नियामकत्वान्न सर्वदा भविष्यति । पूर्वमेव जातत्वात् तत्सङ्गे इच्छादीनामपि जातत्वादिच्छादयस्तदंशभूतास्तान् सदेकरूपान् स्थापयन्ति । तथा च तस्या अंशं परिगृह्णाति भगवानिच्छारूपम् । स एव कामः **"सोऽकामयते"**ति श्रुत्युक्तः । तया कृत्वा भेदरूपया सच्चिदानन्दा धर्माः स्वयं भिद्यमानाः स्वाश्रयमपि भिन्दन्ति । तदा स भगवान् सर्वतःपाणिपादान्तो भवति साकारतां चाऽऽपद्यते । भिन्नोऽपि तया मिलितः अभिन्न इवाऽखण्डो भवति । तदपेक्षया कार्यरूपस्याऽल्पत्वात् । तानि त्रीण्यपि रूपाणि पूर्णशब्देनोच्यन्ते । अत एव सद्रूपस्य कार्ये प्रत्येकपर्यवसायित्वम् । **"प्रजायेये"**तीच्छया उत्कर्षापकर्षरूपेण जाताः । तत्र आनन्द

---

१ शुद्ध्याधिक्ये घ. २ मायापीति ख. ३ या माया सेति ख. ४ समर्थस्वरूप इति ख. ५ भावः त्वतत्वादिवाच्यः ख. ६ निर्मितत्वादिति ख.

उत्कृष्टः। तदेतरौ तं सेवमानौ जातौ। ततश्च तयोर्धर्मौ ज्ञानक्रिये भगवच्छक्तिरूपे जाते। तदा स आनन्दो ज्ञानक्रियाशक्तिमान् जातः। तदा चिदंशस्य शक्तिरानन्दे गतत्वात् ज्ञानधर्मस्य तं व्यामोहयति तदा तस्य जीवत्वम्। सदंशस्तु क्रियाशक्तेर्गतत्वादव्यक्ततामापद्यते। पश्चान्मूलभूतक्रियांशाभिः क्रियाभिर्यथायथमभिव्यज्यते। पश्चात्तस्यां तत्कृतधर्मे वा तिरोभूते स्वयमपि तिरोभवति। तदा तस्यां मूलेच्छया जातः शब्दोऽभिव्यक्त एव तिष्ठति जीवभगवद्बुद्धिषु। जीवे भगवति वा। एवं चिद्रूपोऽपि ज्ञानशक्त्यंशभूतैर्ज्ञानैरभिव्यज्यते तिरोभवति च। प्रयत्नस्तु तस्याऽपराधीन इति स जीवग्रहणार्थं सर्वदा तिष्ठति। स चेद्भगवांस्तस्मै तां पूर्णां ज्ञानशक्तिं प्रयच्छेत् तदा तां मोहिकां मायां त्यजति। प्रयत्नं च त्यजति। स्वरूपे चिद्रूपे चाऽवतिष्ठते। अपराधीनश्च भवति। जगत्कर्तृत्वं तु न भवति। तस्य सा माया शक्तिर्न भवति। उत्कर्षोऽपि न भवति। आनन्दस्यैवोत्कृष्टत्वात्। हीनता त्वापाततो वर्तते। आनन्देन सह मिलितस्त्वानन्दोऽपि भवति। स चेत्स्वधर्मेण संगृह्णीयात्। इयं प्रक्रिया सर्वश्रुतिवाक्यानुरोधेन श्रुतार्थापत्तिसिद्धा सर्वत्रैवोपयुज्यते। अन्यथा प्रक्रिया तु वाक्यानि बाधते। जीवभेदं त्वग्रे निरूपयिष्यामः। एतदेवाऽऽह—आत्ममायां आत्मनः स्वस्य चिद्रूपस्य मायां व्यामोहिकामृते। अस्य चिद्रूपस्य। **राजन्निति** सम्बोधनं राजसत्वात्तव स्वरूपाज्ञानमिति दयां बोधयति। व्यामोहानन्तरमेव देहसम्बन्ध इति तादृशं विशेषमाह—**अनुभवात्मन इति**। वस्तुतस्त्वनुभवात्मा परं सामर्थ्यं भगवति गतमस्ति यतो व्यामोहो भविष्यति। अन्यथाऽर्थसम्बन्ध इव व्यामोहोऽपि न भवेत्। व्यामोहव्यतिरेकेण केवलशक्त्यभावेनार्थसम्बन्धो निरूपयितुमशक्यः। सहजशक्तिश्च सा। तस्या दोषत्वेन पर्यवसानं हीनभावात्। जीवस्य सामर्थ्यलाभेऽपि तस्या हीनभावापगमः पृथग्भूताया न भविष्यति। तया व्यामोहे तु अर्थेन देहादिना सम्बन्धः सुखेन घटते। मोहितस्याऽर्थसम्बन्धं दृष्टान्तेन स्पष्टयति—**स्वप्नद्रष्टुरिवेति**। निद्रया व्यामोहितो भगवत्कृतां मायिकीं सृष्टिं पश्यत्यभिमन्यते च। निद्रायाः सैवेत उद्गमाभावात् मूलभगवन्मायया कृत्वा सा शीघ्रं तिरोभूता भवति तदा स जागर्ति। एवं स्वप्नदृष्टान्तेन तस्य व्यामोहं निरूप्य दार्ष्टान्तिके विशेषमाह—**अञ्जसेति**। सामस्त्येन। स्वप्नकोटयोऽत्र मध्ये भवन्ति। इदं त्वेकमेव जन्मकोटिष्वनुवर्तते॥ १॥

एवं तस्याः सम्बन्धमात्रं निरूप्य कार्यं निरूपयति—

**बहुरूप इवाऽऽभाति मायया बहुरूपया।**
**रममाणो गुणेष्वस्या ममाहमिति मन्यते॥ २॥**

**बहुरूप इवेति**। सा ह्याभासमूलमाया बहुरूपा भवति। तया सम्बद्धोऽयं स्वयमपि बहुरूपो भवति। इवेति वचनं तस्याः सम्यक्स्वरूपसमर्पकाभावात्। तदा आनन्दार्थं तस्या गुणेषु रममाणः। तस्याः गुणान् गृहीतुमिच्छुः। **ममाहमिति**। ममेति गुणेषु। अहमिति मायायाम्। सम्बन्धप्रतिपादकावेतौ शब्दौ तस्य स्वरूपेऽर्थं समर्पयतः॥ २॥

१ तस्या इति ख. २ तं गृह्णीयादिति ख. ३ भावोपगत इति ख. ४ अनर्थेनेति ख. ५ सर्वत्रोद्गमेति क. ख. ६ मायारूपा बहिति घ.



एवं तस्याः कार्यमुक्त्वा तत्परित्यागोपायमाह—

**यर्हि वाव महिम्नि स्वे परस्मिन् कालमाययोः।**
**रमेत गतसम्मोहस्त्यक्त्वोदास्ते तदोभयम्॥ ३॥**

**यर्हि वावेति**। यर्हि कदाचिन्मूलभूतस्य इच्छावशात्। **वावेति** निश्चयेन। **स्वे महिम्नि** स्वस्य महिमरूपे भगवति आनन्दे। गुणक्षोभककालस्य मोहिकाया जगत्कर्तृकाया मायाया नियन्तरि। तयोः कार्यं स्वेच्छया दूरीकृत्य प्रसन्नतया स्थिते यदि रमेत। तत्रापि भगवानेनं प्रति सर्वथा स्वमाहात्म्यं न बोधयतीति तस्य स्वामित्वे यदि सन्देहं न कुर्यात्, तदा गतसन्देह उभयं त्यजति। व्यामोहिकां मायां, गुणान्, तत्कार्यं देहादिकं वा, ममाहमिति भावं वा त्यक्त्वा उदास्ते तस्यामासक्तिं न करोति तदा निस्तार इति भावः॥ ३॥

एवं जीवसन्देहं परिहृत्य ब्रह्मसन्देहं निवारयति—**आत्मतत्त्वविशुद्ध्यर्थमित्यारभ्य न विमुह्यति कर्हिचिदित्यन्तेन**—

**आत्मतत्त्वविशुद्ध्यर्थं यदाह भगवानृतम्।**
**ब्रह्मणे दर्शयन् रूपमव्यलीकव्रतादृतः॥ ४॥**

अत्राऽपि मुक्तिरस्माभिः प्रक्रियया निरूपितैव। स्वरूपमेऽवाग्रे निरूप्यते। तत्र प्रथमं ब्रह्मणोऽपि देहसम्बन्धाज्जीवतुल्यं इति यद्दूषणं सर्वात्मकत्वानुपपत्तिर्वा तदत्र निराक्रियते। आत्मनस्तत्त्वं यथार्थं रूपं तस्य विशुद्ध्यर्थम्। लौकिकानां ज्ञानेन लौकिकभावेनाऽन्यथा प्रतिभानलक्षणां शुद्धिं दूरीकृत्य विशेषशुद्धिं सम्यग्बोधलक्षणां जनयितुम्। यदाह। न केवलं वचनं किन्तु ऋतं सत्यं स्वस्याऽऽनन्दरूपं ब्रह्मणे प्रदर्शयन् यदाहेति सम्बन्धः। प्रदर्शने कथने च हेतुः—**अव्यलीकव्रतादृत इति**। निष्कपटव्रतेन आदृतः सेवितः सन्तुष्टो वा॥ ४॥

एवं भगवद्वचनं वक्तव्यत्वेनोपक्षिप्य सन्तोषार्थमव्यलीकव्रतं ब्रह्मणो निरूपयति—

**स आदिदेवो जगतां परो गुरुः स्वधिष्ण्यमास्थाय सिसृक्षयैक्षत।**
**तां नाऽध्यगच्छद् दृशमत्र संमतां प्रपञ्चनिर्माणविधिर्यया भवेत्॥ ५॥**

**स इति**। नियमविशेषे व्रतशब्दः प्रवर्तते। स त्वत्र सर्वेन्द्रियाणां प्राणस्य च सर्वविषयपरित्यागेन निरोधात्मकः। स चेत्स्वरूपतः फलतश्चैकविषयो भवति तदा निर्व्यलीकः। अयं च ब्रह्मा भगवदर्थं सृष्टिं करिष्यामीति सङ्कल्प्य पश्चात्साधनान्यालोचयितुं प्रवृत्तस्तानि साधनानि भगवदात्मनि भगवदिच्छानुसारेण कार्यं कुर्वन्तीति यादृशमयं चिकीर्षति तादृशं भगवतो नाऽभिप्रेतमिति ते पदार्था न स्फुरिताः। तदा सन्निकर्षाभावात्तद्विषयकः साक्षात्कारो न जात इत्याह—स ब्रह्मा। यतोऽयं स्वयमेव प्रसिद्धः। तस्मात्प्रसिद्धस्याऽन्यस्याऽभावान्न ततः सन्देहनिवृत्तिः। **आदिदेव इति** देवतान्तरोपासनापि निवारिता। गुरुरप्यन्यो नास्ति यतस्तदुपदेशेन वा कार्यं सिद्ध्यति। यतोऽयमेव

१ सन्देहः भवमिति ग. २ तुष्यता इति ग. ३ भावनेति ग. ४ बोधनलक्षणामिति ख. ५ दात्मकनीति क. ग. ६ यमेव प्रसिद्ध इति क. ग.

सर्वस्याऽपि गुरुः । तीर्थाद्याश्रयणमपि नाऽस्तीत्याह—**स्वधिष्ण्यमास्थायेति** । अथवा । सर्वैरेतैर्विशेषणैरहमेव महान् किं ममाऽन्येन साधनेनेति मङ्गलादिकमप्यकृत्वा केवलं सिसृक्षया स्रष्टुमिच्छया साधनान्यैक्षत । तदा पूर्वोक्तन्यायेन साधनोपस्थित्यभावात् तादृशं नाऽध्यगच्छत् । आलोचनादिकं त्वनुमानतर्कादिरूपं प्रकृतोपयोगि न भवति । उपादानगोचरापरोक्षज्ञानस्यैव साधनत्वात् । तदाह—**प्रपञ्चनिर्माणविधिर्यया भवेदिति** । यया दृशा प्रपञ्चस्य निर्माणमुत्पादनं तत्र विधिः प्रकारो यया भवति तां न प्राप्तवानित्यर्थः ॥ ५ ॥

प्रकारः सर्वोऽपि ज्ञानेनैव सम्पाद्यते तदा तमेवाऽर्थं चिन्तयामास । यथा भगवच्चिन्तया भगवान् प्रत्यक्षो भवति तथा साधनचिन्तया साधनान्यपि प्रत्यक्षाणि भविष्यन्तीति । अनेन यः साधनमेव चिन्तयति न तु साधनसाधनं स भ्रान्तो भवतीति ज्ञापितम् । तदा भगवान् मदर्थमयं प्रयासं करोतीति तस्मै साधनमुपदिष्टवान् । तद्भगवन्मुखनिर्गतं वाक्यं मन्त्ररूपमिति मन्त्रोद्धारप्रकारेण तन्निरूपयति—

**स चिन्तयन् द्व्यक्षरमेकदाऽम्भस्युपाशृणोद्द्विर्गदितं वचो विभुः ।**
**स्पर्शेषु यत् षोडशमेकविंशं निष्किञ्चनानां नृप यद्धनं विदुः ॥ ६ ॥**
**निशम्य तद्वक्तृदिदृक्षया दिशो विलोक्य तत्राऽन्यदपश्यमानः ।**
**स्वधिष्ण्यमास्थाय विमृश्य तद्धितं तपस्युपादिष्ट इवाऽऽदधे मनः ॥ ७ ॥**

**स चिन्तयन्निति** । पूर्वोक्तप्रकारेण स ब्रह्मा चिन्तयन् । अम्भसि जलमध्ये लीनो यथा वदति तद्वाक्यमिव द्व्यक्षरमुपाशृणोत् । द्वे अक्षरे यस्मिन् पदे तादृशमेकं पदमशृणोत् । तदपि द्विर्गदितं वारद्वयमुच्चारितम् । अनेन पदभेदो निवारितः । पदनित्यता च निरूपिता । तदा द्विरुक्तं पदं वाक्यरूपं जातमिति वच इत्युक्तम् । ननु व्याकुलश्चिन्ताकुलितश्च कथं जल उत्पन्नं तं शब्दमर्थादिपुरस्सरेण निर्धारितवांस्तत्राऽऽह—**विभुरिति** । अक्षरद्वयस्योद्धारमाह—**स्पर्शेषु यत्षोडशमेकविंशमिति** । स्वराणां द्विरूपता । स्वतन्त्रता इतरप्रधानाङ्गता च । तत्राऽक्षरद्वयस्य स्वतन्त्रतया निरूपणात्साङ्गमेव स्पर्शद्वयं भवति । तत्रापि प्रथमातिक्रमे कारणाभावादकारसहितं भवति । तत्र काद्यो मावसानाः स्पर्शाः पञ्चविंशतिः पञ्चवर्गात्मकाः । तत्र चतुर्थपञ्चमयोरादिवर्णौ षोडशैकविंशरूपौ भवतः । तकारपकारावित्युक्तं भवति । तत्र साच्कस्यैवाऽर्थसमर्थकत्वात् निर्णयार्थं तदर्थमाह—**निष्किञ्चनानामिति** । अदृष्टजनकतापस्य कृच्छ्रादेस्तपधात्वर्थत्वात्तज्ज्ञापकाऽस्प्रत्ययाभावेऽपि धातुमात्रं लक्षणयाऽर्थपरमित्यभिप्रेत्याऽऽह । न विद्यते किञ्चन येषाम् । किञ्चित् तापस्य निवारकम् । अतः स्वरक्षितस्य पदार्थस्य प्रतिबन्धकनिवृत्तेरावश्यकत्वात् तपःकर्त्तारो निष्किञ्चना एव भवन्ति । तदाह—**निष्किञ्चनानां धनमिति** । नृपेति सम्बोधनं तस्य धनस्य माहात्म्यदर्शित्वात् । **यदिति** प्रसिद्धम् । सर्वप्रकारेण तद्रक्षणीयमिति धनम् । धनकार्यकर्तृत्वाद्वा । तत्र प्रमाणमाह—**विदुरिति** । यतो लोके तपोधना इति प्रसिद्धाः । तद्धि पदमवश्यं स्पष्टवर्णात्मकमिति न वायुजलसम्बन्धादुत्पद्यते किन्तु वक्त्रा केनचिदुक्तमिति निश्चित्य तद्वक्तृदिदृक्षया दिशो विलोक्य तत्राऽन्यम-

१ तथा साधनान्यपीति ख. २ भगवता ख. भगवान्स्वार्थमयं ग. ३ मुपदिष्टमिति ख. ४ तद्विरुक्तमिति ग. ५ समर्पकत्वादिति ख. ६ अन्तःस्वेति ख.



पश्यमानः स्वयं तु नोक्तवानिति ज्ञात्वा अन्यं चाऽपश्यन् तदन्वेषणार्थं स्थलान्तरेऽपि गत्वा परितो वा भ्रमणं विधाय । पुनः स्वधिष्ण्यमास्थाय वक्तृचिन्तां परित्यज्य पदं विचारितवान् । तत्र पदचतुष्टयमध्ये आख्यातमेव तद्भवतीति निश्चित्याऽन्यस्य तादृशरूपाभावाल्लोट् परस्मैपदमध्यमपुरुषैकवचनं द्विरुक्तमिति निश्चित्य लोडर्थविचारे विध्यादिष्वर्थेषु प्रथमातिक्रमे कारणाभावात् विध्यर्थ एवाऽयमिति निश्चित्य आज्ञैव विध्यर्थ इति परोक्षापरोक्षभेदेन क्रियाया लिङ्लोटोर्विधानात् । प्रेर्यपरोक्षापरोक्षभेदेन च प्रथमपुरुषमध्यमपुरुषयोर्विधानात् भवच्छब्देऽप्याज्ञापरोक्षत्वबोधनात् । प्रत्यक्षतया प्रत्यक्षं मां पश्यन् मदग्रे तपः कुर्विति तपस्युपादिष्ट इव तपसि मन आदधे ॥ ६ ॥ ७ ॥

तदा तपः कृतवानिति—

**दिव्यं सहस्राब्दममोघदर्शनो जितानिलात्मा विजितोभयेन्द्रियः ।**
**अतप्यत स्माऽखिललोकतापनं तपस्तपीयांस्तपतां समाहितः ॥ ८ ॥**

**दिव्यं सहस्राब्दमिति** । सन्तापजनका योगज्ञानप्राणाः । तस्य त्रयमपि सम्पन्नमिति वक्तुं त्रयं विशेषणतया निरूपयति । **अमोघदर्शन** इति ज्ञानम् । अथवा । यस्तेन पदार्थनिर्धारः कृतः स तस्य इति वा निरूप्यते । **जितानिलात्मेति** योगजनितस्तपःशुद्धिर्वा । **विजितोभयेन्द्रिय** इत्यपि । जितोऽनिल आत्मा अन्तःकरणं येन । विशेषेण जितानि ज्ञानकर्मेन्द्रियाणि येन । **अतप्यत** आहारपरित्यागेन प्राणनिरोधेनाऽऽत्मानं संतप्तं कृतवान् । तदा तस्मिन् विद्यमाना लोकाः संतप्ता जाताः । यथा घर्मेण वस्त्रशोषणे जाड्यं गच्छति तथा लोकानाम् । तदाह—**अखिललोकतापनमिति** । अखिललोकस्य तापनं यस्मात् । तपसि सहजा ये दोषाः क्रोधग्लान्युद्वेगादयस्ते तस्य न जाता इति तदर्थं विशेषणं तपतां मध्ये अतितपीयानिति । **समाहित इति** सावधानः फले । यथा पाचको रसनिष्पत्तिं ज्ञात्वा पश्चान्न तपति । तदर्थं च दत्तदृष्टिर्भवति । तथाऽयमपीत्यर्थः ॥ ८ ॥

एवं क्रियमाणे फलं जातमित्याह—

**तस्मै स्वलोकं भगवान् समाहितः संदर्शयामास परं न यत्परम् ।**
**व्यपेतसंक्लेशविमोहसाध्वसं स्वदृष्टवद्भिर्विबुधैरभिष्टुतम् ॥ ९ ॥**

**तस्मै स्वलोकमिति** । स हि भगवदर्थं सृष्टिं कर्तुं विचारयति । भगवांस्त्वेतादृशे लोके तिष्ठति न ह्येतादृशो ब्रह्मशक्यः । अतस्तस्य गर्वपरिहारार्थं स्वलोकं प्रदर्शितवान् । अन्यथा आत्मानमेव प्रदर्शयेत् । कृत्रिमवैकुण्ठस्य लक्ष्म्या अधिकृतत्वात् स्वलोकपदेन व्यापिवैकुण्ठमेवोच्यते । यद्यपि तमेव प्रदर्शयति तथापि तत्प्रदर्शनं न भगवतः किञ्चित्कार्यं जनयति किन्तु तस्यैव भक्तिजनकम् । अत आह—**तस्मा इति** । **भगवानिति** प्रदर्शनसामर्थ्यार्थमुक्तम् । अन्यथा तदृश्यं कथं दृश्यं भवेत् । **समाहित इति** । स्वदृष्टिं तद्दृष्टौ योजयित्वा लोकं प्रदर्शयन्नप्यग्रे स्वदृष्टेः पृथक्करणार्थं यथा तद्दृष्ट्यैकं न प्राप्नोति तथा सावधान इत्यर्थः । लोकस्य वा तिरोभावस्वभावात्तद्दृष्टिस्पर्शेऽपि यथा न तिरोहितं भवेत् तदर्थं वा सावधानः । परं कृत्रिमवैकुण्ठात् । ब्रह्मस्वरूपं वा । प्रभुत्वेन हरेः

१ वक्तृविचारमिति ख. २ द्वयमिति ख. ३ अनिलतप इति ख. ग. ४ तदृश्यं भवेत् ख. तादृशं ग. ५ यथा यथेति ख. ग. ६ तदर्थं सावधान इति ख. ग.

**स्फूर्त्तौ लोकत्वेन तदुद्भव** इत्यक्षररूपं वा । **न यत्परमिति ।** न विद्यते यतः परमुत्कृष्टमन्यत् । अक्षरस्याऽप्यनेकधा प्रदर्शनसंभावनयाऽप्येतदुक्तम् । तस्य गुणातीतत्वकथनार्थं गुणासाधारणधर्मान्निवारयति—**व्यपेतेति** । विशेषेणाऽपेताः संक्लेशादयो यस्मात् । सम्यक् क्लेशा अविद्यादयस्तमसः । विशेषेण मोहो रजसः । साध्वसं सत्त्वस्य । साधु रस्यते क्षिप्यतेऽनेनेति साध्वसम् । सर्वस्मादेवाऽकार्यात् साधुस्तेन भयेन पृथक् क्रियत इति । व्यवहारेणाऽपि तस्य सगुणत्वं निवारयति—**स्वदृष्टवद्भिरिति** । स्वस्यैव स्वस्मिन् वा दृष्टं दर्शनमात्मज्ञानं तद्वद्भिः । ब्रह्मविद्भिरेव तत्राऽपि स्तोत्रेण व्यवह्रियत इति न ब्रह्मत्वक्षतिः । तद्द्वाराऽन्यव्यवहारोऽपि भविष्यतीत्याशङ्क्य विशेषेण बुधैरित्युक्तम् । अभितः स्तुतिः सर्वोऽपि परिकरस्तादृश इति ॥ ९ ॥

एवं गुणकार्यं निवार्य गुणानपि निवारयति—

**प्रवर्त्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं न च कालविक्रमः ।**
**न यत्र माया किमुताऽपरे हरेरनुव्रता यत्र सुरासुरार्चिताः ॥ १० ॥**

**प्रवर्त्तते यत्रेति** । यत्र लोके रजस्तमश्च न प्रवर्तते । सत्त्वं च न ताभ्यां मिश्रम् । अनेन शुद्धं सत्त्वं तत्र प्रवर्त्तत इति ज्ञापितम् । तदपि ब्रह्मत्वबाधकमिति चेत् । न । वासुदेववदक्षरस्याऽप्युद्भवे शुद्धसत्त्वस्याऽऽधारत्वेनाऽपेक्षितत्वात् । अन्यथा निराकारे साकारता न सम्पद्येत । तावताऽपि न तस्मिन् गुणसम्बन्धः । आकारसमर्पणार्थमेव तत्सम्बन्धात् । यथा प्रतिकृतिसम्बन्धः पित्तलादीनाम् । तथापि प्रतिमादौ तदाकृतिव्यतिरेकेण न तत्राऽन्यो धर्मोऽस्ति । न च तत्राऽन्तर्बहिः पित्तलस्य व्यतिरेकेणाऽन्यः पदार्थो विद्यते । तस्माद्ब्रह्मत्वमविरुद्धम् । सम्बन्धश्च भगवदिच्छयेति न तद्गतो दोषः । अक्षरस्वरूपं च निबन्धे निरूपितम् । किञ्च । गुणास्तत्रैव भवन्ति यत्र तत्क्षोभकः कालो भवति । अन्यथा तेषां स्थितिर्व्यर्था स्यात् । कार्यार्थमेव हि तेऽङ्गीक्रियन्त इत्यभिप्रायेणाऽऽह—**न च कालविक्रम इति** । कालस्याऽपि तत्र विक्रमो नास्ति । कालस्तु वर्त्तते सत्त्ववत् । अन्यथा कदाचिदेव कथमभिव्यज्येत । **आनन्दांशतिरोभावः सत्त्वमात्रेण तत्र हीति** निरूपणाच्चिद्रूपं तदित्युक्तं भवति । गणितश्चाऽऽनन्दस्तत्रोपपद्यते । अतो मोहिका माया तत्र सम्भविष्यतीत्यत आह—**न यत्र मायेति** । माया ह्यानन्दार्थं परिगृह्यते । अक्षरस्य च सामर्थ्यं न भगवता गृहीतम् । "**एतस्याऽक्षरस्य प्रशासने गार्गी**"त्यादिश्रुतेः । "**ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्द**" इति च । तस्मादस्य सालोक्य एव ब्रह्मभावः । अतस्तस्य तत्रत्यानां च मायाकार्याभावान्न तत्र व्यामोहिका माया । यत्र मायैव नास्ति तत्र किमुतापरे बद्धा जीवाः । ननु भगवत्सेवकानां पराधीनत्वादिभिर्बन्धसम्भवात्कथं ते निषिध्यन्त इत्यत आह—**हरेरनुव्रता यत्रेति** । हरेरनु पश्चाद्व्रतं येषाम् । यथा हरिस्तथा ते । अनशनात्मकं शरणागतपालनात्मकं व्रतं येषाम् । यथा भगवानुद्गच्छति सर्वोद्धारार्थम्, तथा तेऽपि लोकेभ्यो भक्त्युपदेशार्थं स्वावेशेन भक्तिजननार्थं चाऽऽविर्भवन्ति । किञ्च । यत्र वैकुण्ठे ते विद्यमानाः सुरासुरार्चिता भवन्ति । सत्त्वरजःपरिणामा ह्येते । तमसस्तत्र सम्भावनैव नाऽस्ति । यदि ते राजसास्तामसा वा भवेयुस्तदा तादृशैरर्चिता न भवेयुः । न ह्युत्कर्षाभावे समानैरर्चनं सम्भवति । असुरा

१ तदुद्गम इति ख. २ स्वरूपं वेति ख. ग. ३ आकारस्येति ख. ४ व्यज्यते इति क. ख. ५ हरेः पश्चादिति ख.



अप्याविर्भूतेन भगवता सह युद्धार्थमागताः कियत्कालं भगवत्सम्बन्धे परमं सुखमनुभूय पश्चात्पराजिता अपि कदापि तादृशसुखस्याऽननुभवात्तत्र नित्यसम्बन्धान् स्तुवन्ति धन्या एत इति । साक्षादपि पूजनं प्रह्लादादिभिः । सुरैस्त्वावरणत्वेन पूज्यन्त एव ॥ १० ॥

तेषां भगवत्तुल्यरूपं निरूपयितुमनुवर्णयति—

**श्यामावदाताः शतपत्रलोचनाः पिशङ्गवस्त्राः सुरुचः सुपेशसः ।**
**सर्वे चतुर्बाहव उन्मिषन्मणिप्रवेकनिष्काभरणाः सुवर्चसः ।**
**प्रवालवैडूर्यमृणालवर्चसः परिस्फुरत्कुण्डलमौलिमालिनः ॥ ११ ॥**

**श्यामावदाता इति** । भगवतः षोडशगुणाः प्रसिद्धाः । सच्चिदानन्दानां प्रत्येकं पञ्च गुणाः समुदायस्यैक इति । तत्र भगवत्सेवकानां दश गुणाः । अक्षरस्य सच्चिद्रूपत्वात् । तान् दश गुणान्निरूपयति—**श्यामावदाता इति** । लोकत्वेन तदुद्गमान्नाऽत्र श्यामादीनामुपपत्तिर्वक्तव्या । श्यामाश्च तेऽवदाताश्च । इन्द्रनीलमणिवत् । मध्यन्दिनसवितृमण्डलमध्यवत् । यथा वीतार्चिषोऽग्नेर्नीलोपकाशो(?)र्चिस्तद्वद्वा । एवं शुद्धरूपता निरूपिता । सौन्दर्यं निरूपयति—**शतपत्रलोचना इति** । कमलनयनाः । एवं स्वरूपतस्तुल्यत्वमुक्त्वा सामग्र्यापि तुल्यतामाह—**पिशङ्गवस्त्रा इति** । सर्वे पीताम्बराः । सूर्यमण्डलस्याऽपि श्यामावदातत्वात्तस्य यथाऽशीतला रुक् तद्वन्न भवति । न वा चन्द्रस्येवाऽल्पा रुक् । किन्तु सुरुचः । शोभना रुचो येषाम् । न च तद्दर्शने घटादिवद्विषयसंस्कारकं तेजोऽपेक्ष्यते । किञ्च । **सुपेशसः** अतिकोमलाः । **रूपं गन्धश्च शब्दश्च रसश्च स्पर्श एव च । सत्त्वस्यैते पञ्च गुणाः सर्वोत्कृष्टा निरूपिताः । चिदंशस्याऽपरे पञ्च सर्वोत्कृष्टा भुजादयः** । सर्वे चतुर्बाहवः । धर्मार्थकाममोक्षास्तेषां हस्तप्राप्ता इति निरूपणार्थं चतुर्भुजत्वम् । उन्मिषन्तो मणिप्रवेका मण्युत्तमाः निष्कादिपदकाद्याभरणेषु येषाम् । यद्यपि गृहादिष्वलङ्कारा भवन्ति तथापि पदकादयश्चेतनानामेव । **सुवर्चसः** । वर्चश्चेतनकान्तिः । यथा महापुरुषाणां दिव्यस्त्रीणां वा तदेव वर्चःशब्देनोच्यते । सुष्ठु वर्चो येषाम् । सर्वोत्तमदेहकान्तयः । सर्वेषामेकरूपत्वं प्राप्तं विशेषेण निवारयति—**प्रवालवैडूर्यमृणालवर्चस इति** । यथा प्रवालेभ्योऽन्तःस्निग्धा गौरकान्तिर्निर्गच्छति तथा तेभ्योऽपि श्यामावदातेभ्यो गौररूपा कान्तिर्निर्गच्छति । ते बहुभिर्विषयैर्भगवद्भक्तिकर्त्तारस्तथात्वं बोधयितुं तत्र तादृशकान्तिमन्तो भवन्ति । एवं वैडूर्यस्य स्निग्धार्धपीतश्यामच्छविकान्तिः । व्रततीर्थादिभिः सेवया च ये पूर्वं भक्ताः ये ज्ञानेन भक्तास्ते मृणालवर्चसः । एवमेकरूपत्वेऽपि पूर्वकृतभक्तिप्रकारभेदादनेकरूपास्त इति निरूपितम् । परमोत्साहयुक्तास्त इति तेषामन्तःकरणधर्मनिरूपणार्थं विशेषणान्तरमाह । परितः स्फुरतां कुण्डलानां मौलीनां च या मालास्ता विद्यन्ते येषु । कुण्डलपरिभ्रामणेन मुकुटपरिभ्रामणेन च सोत्साहभगवत्परिचर्याकर्त्तार इति भजनानन्दस्तेषु निरूपितः ॥११॥

एवं तत्रत्यानां भगवत्सेवकानां निर्दोषत्वमुक्त्वा लोकत्वाय वैकुण्ठस्य गुणानाह—**भ्राजिष्णुभिरिति** द्वाभ्याम् ।

**भ्राजिष्णुभिर्यः परितो विराजते लसद्विमानावलिभिर्महात्मनाम् ।**
**विद्योतमानः प्रमदोत्तमाद्युभिः सविद्युदभ्रावलिभिर्यथा नभः ॥ १२ ॥**

१ संवद्या इति ख. संवद्यानिति ग. २ रुक् येषामिति ख. ३ संस्कारकतेज इति ख. ४ परिस्फुरतामिति ख.

सेवकानां भगवतश्च क्रमेण विषयानन्दो निरूप्यते । तत्रापि भगवान् प्रथमं सेवकानेव सानन्दान् करोतीति तेषामेव विषयानन्दनिरूपणम् । विषयेषु तावदचला इति तदाधारेषु विमानमिति स्वस्य च परिज्ञानमितीश्वरकृतभयाभाव इति चतुर्भिर्गुणैर्विषयोत्कर्षः । अन्नादीनां तु दोषाभावे प्रवेशः । रसादीनां त्वेतदङ्गत्वम् । तदाह । भ्राजिष्णुभिः कान्तिमद्भिर्विमानावलिभिर्विमानपङ्क्तिभिर्यो लोकः परितो विराजते । वैकुण्ठशोभाधायकानि विमानानि भगवतैव निरूपितानीति न तत्र कापि शङ्का । लसन्तीति सर्वोत्कृष्टानि । महात्मनामिति सर्वज्ञानाम् । परिच्छेदं परित्यज्य पूर्णत्वं वा प्रापितानाम् । किञ्च । प्रमदोत्तमाद्युभिः । प्रमदोत्तमास्तेषां भोगहेतवः । अन्यथा भोगरागो न भवेत् । किन्तु विषयकृतरागेणैव रागवत्त्वमिति भगवदिच्छयैव तथात्वमिति निरूपितम् । तासां कान्तिभिरयं लोको विद्योतमानः । लोकापेक्षयाऽपि तासामतिकान्तित्वं निरूपितं भोगार्थमेव । तासामपि कान्तिः पुरुषसहितानामेव न केवलानामिति दृष्टान्तेनाऽऽह—यथा विद्युत्सहिताभिरभ्रावलिभिर्मेघपङ्क्तिभिर्नभ आकाशं सर्वतो व्याप्तं तद्वदित्यर्थः ॥ १२ ॥

एवं सेवकानां महाभोगमुपपाद्य तत्र भगवतो महाभोगोपपादनार्थं लक्ष्मीमनुवर्णयति—

**श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः ।**
**प्रेङ्खं श्रिता या कुसुमाकरानुगैर्विगीयमाना प्रियकर्म गायती ॥ १३ ॥**

**श्रीर्यत्रेति** । यदा भगवान् स्वशक्तिरूपेणाऽऽविर्भूतस्तदा शक्तीनां मध्ये श्रीः प्रथमा । सा शरीर एव बलवत्पूर्वं स्थिता । यदा भगवान् प्रभुत्वेनाऽऽविर्भूतस्तदा साऽपि भोग्यत्वेनाऽऽविर्भूता भार्येव । तदाह—**रूपिणीति** । साऽपि सच्चिद्रूपा स्वार्थम् । तस्याः शरीरं तु ब्रह्मानन्दरूपम् । अत एवोरुगायपादयोर्विभूतिभिर्मानं करोतीति । सा ह्यक्षरस्याऽऽनन्दरूपा । अक्षररूपौ च पादौ । अतः सा स्वात्मचरणावेवाऽऽनन्दयुक्तौ करोति । इदमेव हि सन्माननम् । **उरुगायेति** । उरुभिर्मैत्रैर्गीयत इति । **"तद्विष्णोः परमं पदम्"** । **"विष्णोर्नु कं वीर्याणि"**त्यादि **"अधोरुगाय"** इत्यादिभिः सर्वश्रुत्यर्थ उरुगायः पुरुषोत्तमः । तस्य तु चरणावक्षरमिति निरूपितम् । बहुधेति पञ्चभिरेव गुणैर्भक्त्या च । एवं तस्या भगवदर्थमानन्दरूपायाः प्रयोजनमुक्त्वा स्वार्थं चिद्रूपायाः प्रयोजनमाह—**प्रेङ्खं श्रितेति** । या लक्ष्मीः प्रेङ्खं हिन्दोलां श्रिता तत्रोपविश्य सर्वथा चित्तनिवृत्त्यर्थं कुसुमाकरानुगैर्वसन्तसेवकैर्भ्रमरैः स्वयं गीयमानाऽपि । सर्वावयवस्थितपुष्पाद्यामोदार्थं समागता भ्रमरा बहुकालं निकटस्थित्यर्थं तां वस्तुतो गायन्ति । स्वयं तु भगवत्कर्माणि गायति । अन्यथाऽक्षरे लीना स्यात् । अत एव साक्षात्सम्बन्धाभावाय प्रेङ्खं श्रिता । तस्मालयव्यावृत्त्यर्थं सैव गुणान् गायति । तत्रत्यः कुसुमाकरः फलपूर्वावस्थारूपः परमनिवृत्त्यात्मा । तस्याधिष्ठात्र्यो देवता एनामानन्दरूपां स्तुवन्ति । स्वस्याऽपि फलरूपत्वात् । अनेनाऽक्षरकृतं भयं व्यावृत्तम् यतस्तदीया मन्यन्त इति । यदा मानावसरो नास्ति तदा स्वरक्षार्थं प्रियकर्माणि गायति । एकवचनं तु स्वोद्धाराभिप्रायम् ॥ १३ ॥

१ क्रमेण नास्ति ग. २ ज्ञातमिति ग. ३ यथा इति ख. ४ आविर्भूतः शक्तीनामिति ख. ग. ५ सा चेति ख. ग. ६ स्वरूपमिति ख. ७ निरूपयन्तीति ख. ८ कर्माणीति ख.



एवं भोग्यरूपां तां निरूप्य तस्या भोक्तारं भगवन्तं निरूपयति—

**ददर्श तत्राऽखिलसात्वतां पतिं श्रियः पतिं यज्ञपतिं जगत्पतिम् ।**
**सुनन्दनन्दप्रबलार्हणादिभिः स्वपार्षदमुख्यैः परिसेवितं विभुम् ॥ १४ ॥**
**भृत्यप्रसादाभिमुखं दृगासवं प्रसन्नहासारुणचारुलोचनम् ।**
**किरीटिनं कुण्डलिनं चतुर्भुजं पीताम्बरं वक्षसि लक्षितं श्रिया ॥ १५ ॥**

**ददर्श तत्रेति** । पूर्वोक्तमपि सर्वं ब्रह्मा दृष्टवान् । लोकस्य प्रदर्शितत्वात् । तत्र स्थितं भगवन्तं सर्वसामग्रीसहितमनुवर्णयति । तत्र सच्चिदानन्दरूपो भगवान् यदाविर्भूतस्तद्ब्रह्मणे तत्प्रयोजनपरिज्ञानार्थमेव । तत्र प्रथमं सर्वे ये सात्वता भगवत्सेवकाः देवा धर्मपराः सात्त्विकाश्च त्रयाणामपि पतिः । अनेन यदा कदाचिद्भगवानवतरति तदैतेषामेव कार्यार्थेऽवतरतीति ज्ञापितम् । किञ्च । **श्रियः पतिं** लक्ष्म्याः पतिम् । यदा भगवान् स्वभोगार्थं जगत्करोति तदा सर्वं लक्ष्मीरूपमेव करोतीति बोधितम् । अनेनाऽवतारेषु भोग्या लक्ष्मीरूपा एवेति । स्वरूपत आवेशतो वा । किञ्च । यज्ञानां पतिर्भगवान् । यदा भगवान् वेदान् करोति तदा स्वस्य भोगार्थं करोति । अनेन सर्वे यज्ञा भगवदर्था एवेति । किञ्च । जगतः पतिर्भगवान् जगद्यत्करोति तत्तत्र क्रीडार्थमेव करोति । तस्यैव पतित्वात् । वैकुण्ठे पुनस्ते मूर्तिरूपाः सच्चिद्रूपा इति ज्ञापनार्थाः । अखिलसात्वताः लक्ष्मीर्यज्ञो जगच्चेति चत्वार एते भगवद्भोग्याः । एतदनुप्रवेश एव भगवति सम्बन्ध इति सर्वत्र ज्ञेयम् । अत एव निरोधे जगत्सात्त्वतयज्ञलक्ष्मीरूपाः पूर्वलीलासमसङ्ख्ययाऽऽभिर्मूर्तिभिरध्यायार्थाः सन्तो भगवद्भोगायोपयुक्ता निरूपिताः । ते चत्वारो मूर्तिरूपाः भगवता परिगृहीता ब्रह्मणे प्रदर्शिताः । किञ्च । सुनन्दनन्दादयो भगवद्भक्तिरूपाः । ते सख्येन सहिताऽष्टविधाः श्रवणाद्यधिष्ठातारः । पार्षदाः सर्वे तदधिष्ठिताः श्रवणादयः । तत्र चत्वारो नामतो गणिताः । लोके त एव प्रभविष्यन्तीति । तत्र सुनन्दनन्दप्रबलाः कीर्तनश्रवणस्मरणात्मकाः । श्रवणादयो वा विपर्ययेण । चतुर्थस्तु अर्हणरूपः । नामसामान्यात्स एव गृह्यते । आदिशब्देन चाऽन्ये । एतेषु सिद्धेषु पुनर्वैकुण्ठे गतानामितरसिद्धिर्ज्ञापिता । विभुं प्रभुरूपम् । एवं सर्ववेष्टितोऽपि भृत्येभ्य एव प्रसादं दातुमभिमुखः सर्वापेक्षया भृत्या एव प्रिया इति । अनेन सहजप्रसादो भृत्येषु । अन्येषु तु धर्मार्थकाममोक्षरूपेषु चतुर्षु क्रमेण प्रसादः । तत्र धर्मो यज्ञः, अर्थो जगत्, कामो लक्ष्मीः, सन्त इति, भृत्या भक्तिरिति, पञ्च पदार्था निरूपिताः । पञ्चानां भोगो नियामकत्वं च । विशेषस्तु भृत्यप्रसादाभिमुखत्वम् । किञ्च । अन्येषु चतुर्षु सर्वेषु वा दृगासवं दृगेव आसवो मादको यस्य । भगवता दृष्टा आत्मानं न स्मरन्ति । अनेन ज्ञानस्य यत्प्रपञ्चविस्मारकत्वं तद्भगवद्दृष्टिरूपस्यैव नाऽन्यस्येति सूचितम् । एते पदार्था ब्रह्मणो बोधार्थं निरूप्यन्ते मूलोपपत्तिरेतादृशीति । अथवा । भक्तेषु प्रसादः कामिषु माद इति । किञ्च । **प्रसन्नहासारुणचारुलोचनम्** । प्रसन्नो यो हासस्तद्युक्तं अरुणवर्णं चारु मनोहरं लोचनं यस्य । भगवति हासः प्रसन्नः । हासो हि जनोन्मादकरी माया निरूपिता । इयमागन्तुकशक्तिरन्यैव । सा हि प्रसन्ना स्वकार्यकरणेऽतिसमर्था । तेन भगवन्मायया

१ विभिः पार्षदेति ध. २ श्रियः पतिः लक्ष्म्याः पतिरिति क. ग. घ. ३ स्वभोगार्थमेवेति ख. ग. ४ पतिर्भगवान् ख. ग. ५ ज्ञापनार्थः ख. ज्ञापनार्थं ग. ६ जगत् सत् यज्ञेति ख. ७ कीर्तेः श्रवणेति ख. ८ पञ्चसु भोग इति ख.

सुतरामुन्मत्ताः सन्तो ब्रह्मणः कार्यतामापत्स्यन्त इति सूचितम् । अरुण इत्यारक्तिमा अल्पप्रकाशः । तदेव चारु मनोहरम् । जगद्धि आपाततो ज्ञातं सुखकरं भवति । न तु सर्वथा ज्ञातमज्ञातं वा । ज्ञातोत्तमत्वे पुनर्भगवन्नेत्रनिष्ठे । कालवशादेव ज्ञातः समीचीनश्च भवतीति ज्ञापितं न तु सर्वथाऽज्ञातः कश्चित्समीचीनो वा भवतीति सूचितम् । किञ्च । भगवानाधार आधेयश्च । तत्र पञ्चानामाधारोऽन्येषामाधेय इति । तत्राऽऽधाररूपाणि पञ्च गणयति—**किरीटिनं कुण्डलिनं चतुर्भुजं पीताम्बरं वक्षसि लक्षितं श्रियेति** । किरीटं शिरसि धार्यम् । कुण्डले कर्णधार्ये । ततोऽधस्ताच्चत्वारो भुजाः । ततोऽप्यधस्तात्पीताम्बरम् । एवं ये भगवदवयवभूता लोकास्ते चतुर्मूर्तेर्भगवत आश्रिता इति । तावता सर्वमेव कार्यं भगवदाश्रितमिति ज्ञापितम् । एतावता विराड्भगवानिति ब्रह्मा बोधितः ॥ १४ ॥ १५ ॥

आधेयं निरूपयति—

**अध्यर्हणीयासनमास्थितं परं वृतं चतुःषोडशपञ्चशक्तिभिः ।**
**युक्तं भगैः स्वैरितरत्र चाऽध्रुवैः स्व एव धामन् रममाणमीश्वरम् ॥ १६ ॥**

**अध्यर्हणीयासनमास्थितमिति** । अधि अधिकं अर्हणीयं सर्वैरेव धर्मादिभिः पूज्यम् । तत्सम्बन्धेन वा पूज्यम् । तादृशमासनमास्थाय स्थितम् । तदधिष्ठातृदेवताव्युदासायाऽऽह—**परमिति** । तेभ्य उत्तमम् । नियन्तारं वा । मुख्यं तदक्षरात्मकम् । अक्षरं हि लोकात्मकमासनात्मकं चरणात्मकं चेति । आधिभौतिकमाध्यात्मिकमाधिदैविकमिति । तस्यांऽशाः पञ्चविंशतितत्त्वानि । तान्यग्रे निरूपयिष्यन्ते । पीठांशत्वेन च । तदाह—**वृतं चतुःषोडशपञ्चशक्तिभिरिति** । तत्र चत्वारः प्रकृतिपुरुषमहदहङ्काराः प्रथमावरणरूपाः चतुर्दलकमलवत् । ततः षोडश एकादशेन्द्रियाणि पञ्चतन्मात्राश्चेति द्वितीयावरणम् षोडशदलकमलवत् । ततः पञ्चभिर्महाभूतैर्वृतम् । एवमावरणत्रयं निरूपितम् । तान्यतिक्रम्य यो भगवत्समीपे गच्छति स गच्छति । एवं सर्वतत्त्वसहितमक्षरमासनमिति निरूपितम् । किञ्च । **युक्तं भगैः स्वैः** । ऐश्वर्यादयः षड्गुणा मूर्तिमन्तो भगवन्तमावेष्ट्य तिष्ठन्ति । ते चैश्वर्यादयो भगवदेकनिष्ठा नाऽन्यत्राऽऽविष्टा भवन्ति । इतरत्र च पार्षदादिषु अध्रुवैः । चकाराद्राजादिष्वपि । एतावता भगवच्छब्दप्रयोगः सर्वत्र । तथापि ध्रुवा ऐश्वर्यादयो भगवत्येव । अध्रुवास्त्वन्यत्र । तेन तरतमभावेनैव भगवत्त्वम् । अनेन "**ब्रह्म वेद ब्रह्मैव भवति**" । "**यो यच्छ्रद्धः स एव सः**" । "**स आत्मानं यच्छती**"ति सर्वे पदार्था व्याख्याताः । अतः असाधारणानि भगवत्येव । मुक्तापेक्षयाऽपि भगवान् महानिति ज्ञापितम् । न हि तदानीं कृपया जाता ऐश्वर्यादयो नित्या भवन्ति । एवं सर्वसामग्र्यां विद्यमानायामपि स्वस्मिन्नेव रमते । आनन्दमयत्वात् । ननु सुखानुभवः फलम् । स्वस्यस्वानन्दत्वेऽप्यनुभावाभावात्कथं भोगस्तत्राऽऽह—**धामन्निति** । तेजोरूपे प्रकाशके स्वस्मिन् । अप्रकाशे हि ज्ञानं प्रकाशकमपेक्ष्यते । न तु स्वप्रकाशे । अनेन जीवानां भगवान् भोग्य इति पक्षो व्युदस्तः । एवमपीश्वरं नियन्तारम् । यद्यपि स्वस्य क्वापि रमणापेक्षा नास्ति तथापि सर्वनियन्ता ॥ १६ ॥

---

१ भगवान्विराडिति ख. ग. २ मास्थितं अधीति ग. ३ मावेश्येति घ. ४ अनजुभवादिति ग. अनुभवादिति ख. ५ अपेक्षत इति ख. ग.



**तद्दर्शनाह्लादपरिप्लुतान्तरो हृष्यत्तनुः प्रेमभराश्रुलोचनः ।**
**ननाम पादाम्बुजमस्य विश्वसृग् यत्पारमहंस्येन पथाऽधिगम्यते ॥ १७ ॥**

एवं सर्वसन्देहनिवर्त्तकं भगवत्स्वरूपं दृष्ट्वा तद्दर्शनेन य आह्लादः आनन्दानुभवेन यः सन्तोषः तेन परिप्लुतमन्तरं यस्य तादृशो भूत्वा ननामेत्यग्रेण सम्बन्धः । तपो हि किञ्चित्कामनार्थं करोति । तया च कामनया हृदयं साकाङ्क्षमपूरितं तिष्ठति । तदानन्दानुभवेन फलरूपेण कामितापेक्षयाऽप्यधिकफलत्वादन्तःकरणं परिप्लुतम् । यथा महापूरे सर्वमेव गर्त्तजातं पूर्णं सत् उच्छलितं भवति । तथा ब्रह्मणोऽपि चित्तं जातमित्यर्थः । अत एव तस्याऽग्रे वचनासामर्थ्यम् । किञ्च । अन्तःपूर्ण आनन्दो बहिरप्युद्गत इत्याह—**हृष्यत्तनुरिति** । तदा ज्ञानशक्तिरप्यानन्दे निमग्ना न फलान्तरं बोधयतीति ज्ञापयितुं **प्रेमभराश्रुलोचन** इत्युक्तम् । प्रेमभरेण जातानि यान्यश्रूणि तानि लोचनयोर्यस्येति । पूर्वं भगवति प्रेम स्थितं तदाधारे परिप्लुते ततो निर्गतं सन्नेत्रयोर्ज्ञानजनकत्वात्तत्र परिचयमिव प्राप्य तद्द्वारा जलरूपेण निर्गतमिति । भरो भारः । भाराक्रान्ते स्वेदो भवत्येव । तदाह । प्रेमभरेणाश्रूणीति । स्वभावतो न स्रवन्तीत्यश्रुत्वम् । तदा कर्त्तव्यान्तराभावात् **ननाम पादाम्बुजमिति** भक्तिप्रकारेण । **अस्येति** पूर्वोक्तरूपस्य ब्रह्मणोऽपेक्षितरूपस्य । अपेक्षामेव बोधयति—**विश्वसृगिति** । विश्वं सृजतीति । नन्वेवं दर्शने नमनमेव कुतः कृतवान् सायुज्यं कुतो न प्राप्तवानितीयमपि शङ्का निवारिता । यतोऽयं विश्वकृत् । अधिकारित्वान्न प्राप्तवानिति भावः । ननु चरणारविन्दस्य तुल्यत्वात् समर्थत्वाच्चाऽधिकारे कुतो न सायुज्यमत आह—**यत्पारमहंस्येन पथाऽधिगम्यत इति** । परमहंसमार्गेणैव दृष्टं चेत् तदैव पादाम्बुजं प्राप्यते । नतु प्रकारान्तरेण दृष्टं सायुज्यहेतुर्भवति ॥ १७ ॥

एवं नमनं कृत्वा ब्रह्मणि तूष्णीम्भूते किञ्चिदपि वक्तुमसमर्थे स्वयमेव भगवांस्तदभीप्सितमुक्तवानित्याह—

**तं प्रीयमाणं समवस्थितं तदा प्रजाविसर्गे निजशासनार्हणम् ।**
**बभाष ईषत्स्मितशोचिषा गिरा प्रियः प्रियं प्रीतमनाः करे स्पृशन् ॥१८॥**

**तं प्रीयमाणमिति** । यत्र साधनमभीप्सितं फलं च तत्र प्रकारान्तरव्यावृत्त्यर्थं प्रारब्धफलसिद्ध्यर्थमेव तस्य प्रोत्साहनम् । अन्यथात्वे तु भगवतस्तूष्णीम्भावः । प्रसन्नत्वाद्यथाभिलषितदानम् । अत्र तु साधनमपि स्वोपदिष्टमिति तस्या वरयाचनप्रेरणम् । अन्यथा स्वाभिलषितमात्रत्वे निर्बन्धेन करणे पदार्थज्ञानेऽप्यन्यथाकरणमापद्येत । अतः स्वयं स्वेच्छासमानविषयां तदिच्छामुत्पाद्य तद्द्वारेणैव स्वाभिलषितं करिष्यामीति भगवदिच्छया ब्रह्मणस्तूष्णीम्भावः । भगवत्याविर्भूते वस्तुमाहात्म्यात्सम्बन्धाद्वा अभिलषितार्थसिद्धिहेतुत्वाद्वा भगवद्दर्शनेन प्रीयमाणः परमप्रीतियुक्तो ब्रह्मा । सम्यक् चाऽवस्थितो नतु तपसा क्लिष्टः । अन्यथा आज्ञापि न देया स्यात् । दोषरहितो वा । तदेत्युभयत्र सम्बन्धः । पूर्वं क्लिष्टोऽपि तदा न क्लिष्टः । अत एव तदैव प्रजानिर्माणार्थं निजाज्ञाकरणसमर्थः । एतादृशं ब्रह्माणं ज्ञात्वा स्वरूपयोग्यतामवगत्य तस्य सहकारियोग्यतासम्पादनाय बभाषे उक्तवान् । भाषणमेव प्रयोजनं न भवतीति वाचः करणतामाह—**गिरेति** । भगवद्रूपे दृष्टे उत्तमे चाऽधिकारे

---

१ ब्रह्मणश्चित्तमिति ख. २ बोधयतां संपादयितुमिति ख.

सम्पन्ने भगवद्वाक्यात्तत्त्वज्ञानमेव भविष्यतीत्याशङ्क्याऽऽह—**ईषत्स्मितशोचिषेति** । सर्ववस्तुषु वस्तुस्वरूपं यत् तदज्ञानार्थं मोह इति ईषत्पदेनोक्तम् । यद्यपि तदेव महत् तथापि ब्रह्मण इच्छामात्रेणैतद्भविष्यतीति तत्कार्यस्याऽल्पत्वम् । स्मितमपि मन्दहासस्तस्याऽपि ज्ञानम् । परं न फलपर्यवसायि । भवत्वस्य वस्तुस्वरूपज्ञानं तथापि यत्तस्य फलं तदिदानीं मा भवत्विति स्मितम् । फलेऽपि मोक्षलक्षणमेव फलं मा भवतु सर्वज्ञत्वमलौकिकतेजस्त्वं भवत्विति शोचिषेत्युक्तम् । स्मिते एव शोचिर्यस्येति । स्मितैमिव वा । यदसाधारणं स्वकर्तव्यं तदन्येन न कर्तव्यमित्याशङ्क्य प्रियेण तदपि कर्तव्यमिति **प्रियमित्युक्तम्** । तस्य प्रियत्वं भगवतः सम्बन्धात् स्वभावतो वा यदि स्यात् तदा शास्त्रं विरुद्ध्येतेति ब्रह्मगतं स्नेहं स्वस्नेहे हेतुत्वेन निरूपयति—**प्रिय इति** । **"ये यथा मां प्रपद्यन्ते"** इत्ययमर्थः सूचितः । भगवद्वाक्ये भगवन्मन उत्पादकमिति तस्याऽप्रसादे वागप्यप्रसन्ना स्यात् । तथा च **"उत त्वः पश्यन्न ददर्श वाचमि"**तिवद्ब्रह्मणो वाक्यार्थप्रतीतिर्न स्यात् । अत आह—**प्रीतमना इति** । प्रीतं मनो यस्य । स्वकार्यं ब्रह्मणा जन्यत इति । **करे स्पृशन्निति** क्रियाशक्त्याधानम् । ज्ञानशक्तिस्तु वाक्यात् एवमुभयसम्पन्नं स्वाभीष्टं करिष्यतीति॥ १८ ॥

मनसो बहिरस्वातन्त्र्यात् वाचमाह—

श्रीभगवानुवाच—

**त्वयाऽहं तोषितः सम्यग्वेदगर्भ सिसृक्षया ।**
**चिरं भृतेन तपसा दुस्तोषः कूटयोगिनाम् ॥ १९ ॥**

**त्वयाऽहं तोषित इति** । सृष्ट्यर्थं तपःकरणे भगवतो वरदानं कुत्रोपयुज्यत इत्याशङ्क्य तेन तपसा अहमेव प्रीत इत्याह । अयमेवाऽस्मिन् शास्त्रे मुख्यः सिद्धान्तः । यो भगवत्कर्तव्यं करोति महता प्रयत्नेन स मुख्यः । यस्तु भगवत्सेवां करोति स मध्यमः । यस्तु स्वार्थं भगवन्तं सेवते सोऽधम इति । ब्रह्मणा त्वाद्यः पक्षः कृत इति भगवानतितुष्टः । तदाह—**सम्यगिति** । कथं ब्रह्मणाऽयमर्थो ज्ञात इति तत्राऽऽह—**वेदगर्भेति** । वेदा गर्भे यस्य । वेदानामिदमेव तात्पर्यं यद्भगवत्कार्यं कर्तव्यमिति। अत एव सर्वत्र—**"प्रजापतिरकामयत प्रजाः सृजेयेति"** । **"ऋतवो वै प्रजाकामाः प्रजां नाऽविन्दन्त तेऽकामयन्त प्रजां सृजेमहि प्रजामवरुन्धीमहि प्रजां विन्देमहि प्रजावन्तः स्यामे"**ति । **"अग्निहोत्रं जुहोति"**। **"यदेव किञ्च यजमानस्य स्वं तस्यैव तद्रेतः सिञ्चति प्रजनन"** इति । अन्यथा लौकिकार्थपरत्वे वेदानामनुवादकत्वेनाऽप्रामाण्यं स्यात् । अत एवाऽऽपाततो ये वेदज्ञास्ते नेममर्थं जानन्तीति तद्व्यावृत्त्यर्थं गर्भपदप्रयोगः । तत्र हि वेदाः स्थिराः बुद्धौ तु त्रिक्षणावस्थायिन इति । सिसृक्षयैवाऽहं तोषितः । तत्रापि तदर्थं महान् क्लेशः कृत इति सुतरामेवाऽहं तुष्ट इति हेत्वन्तरमाह—**चिरं भृतेन तपसेति**। यद्यपि सिसृक्षासम्बन्धव्यतिरेकेण केवलतपसा तोषो न भवति । तथा सति सिसृक्षा तत्रैवाऽङ्गं भवति । तथापि मुख्या सेति पृथग्घेतुत्वम् । तपस्तु सन्तापात्मकं सकृदेवोत्पद्यते । तदेव यदि प्रयत्नेन तिरोभावमप्रापयत् भ्रियते तदोत्कर्षो भवति । विरम्य विरम्य प्रारम्भैस्तु प्रथमतुल्य एव ।

१ स्मितमेवेति ख. २ स्मितमेवेति ख. ३ शास्त्रे विबुध्येतेति ख. ४ स्नेहहेतुत्वेनेति ग. ५ सन्तुष्ट इति ख. ६ प्रारम्भः प्रथमेति ख.



अभ्यासेन संस्कारः परं वर्द्धते न तु फलम् । अतस्तद्व्यावृत्त्यर्थमाह—**चिरं भृतेनेति** । एकमेव तपो मध्ये प्रयत्नान्तररहितं सञ्जातस्य शोषकत्वेनाऽधिकारं सम्पादयत् तोषहेतुर्भवति । सामर्थ्यविशेषं वा । अतो दीर्घकालधरणैकवचनानि तपसि युक्तानि भवन्ति । केवलतपसैव भगवत्तोषमाशङ्क्य प्ररोचनार्थमेव भगवान्वदतीति ब्रह्मणो बुद्धिं परिहर्तुमाह—**दुस्तोष इति** । तपोधारकत्वेन योगोऽपेक्ष्यते । तपःस्वरूपं चाऽग्रे वक्ष्यते । अतो ये भगवत्कार्यं न कुर्वन्ति ते तपस्विनो न भवन्ति । तेषां योगे तपसोऽभावात् शून्य एव स योगस्तपःसहित इति भ्रमाद्भासते । अतस्ते कूटयोगिन इत्युक्तम् । तेषां दुस्तोषः दुःखेन तोषो यस्य । योगस्य निर्बन्धात्मकत्वात् ते स्वात्मानं पीडयन्तीति तदृयया निर्बन्धेन सन्तोषः । यथा प्रायोपवेशिनः ॥ १९ ॥

एवं स्वसन्तोषमुपपाद्य वरार्थं प्रेरयति—

**वरं वरय भद्रं ते वरेशमभिवाञ्छितम् ।**
**ब्रह्मन् श्रेयःपरिश्रामः पुंसां मद्दर्शनावधिः ॥ २० ॥**

**वरं वरयेति** । अन्यकामनयैव कार्यं कर्तव्यमिति भगवदिच्छा । वरस्तु स्वकामितपदार्थः । कामनया च नाश इति न शङ्कनीयमित्याह—**भद्रं त इति**। वृतेऽपि वरे मदर्थमेवोपयोगात्तव न कापि चिन्ता । अतस्तव भद्रमेव । **वरेशमिति** । वरस्तु भगवत्स्वरूपावधिः । तत्राऽन्यस्याऽसामर्थ्यमतोऽहमेव वरेशः । अन्ये तु वराभासेशाः कूटयोगिवत् । तत उक्तमभितो वाञ्छितमिति । **सर्वथा** वरत्वेन प्रतिपन्नम् । ननु पूर्वकृततपसा भवान्प्रसन्नः । एवं पुनस्तपसाऽभीप्सितार्थसिद्धिरपि भविष्यति । किं वरेण ? तत्राऽऽह—**ब्रह्मन् श्रेयःपरिश्राम इति** । ब्रह्मन्निति सम्बोधनमुक्तार्थसम्बोधाय । श्रेयोनिमित्तं यः परिश्रामः स तु मद्दर्शनमेवाऽवधिर्यस्य तथोक्तः । पुंसामित्यन्येषामपि। मच्छब्देन च पुरुषोत्तमोऽभिप्रेतो न त्ववतारः । तेन तृतीयस्कन्धे **"भूयस्त्वं तप आतिष्ठे"**तिवचनं न विरुद्धम् । तस्य पुरुषावतारत्वात् । एवमन्यत्राऽपि ॥ २० ॥

नन्वन्यथाऽर्थे सिद्धे ईश्वरप्रार्थना न क्रियते । लोके हि कष्टेनाऽपि पदार्थाः साध्यन्त इत्याशङ्क्य न प्रकारान्तरेणाऽयमर्थः सेत्स्यतीति वक्तुं पूर्वं जाता अपि पदार्था न केवलं तपसा जाताः किन्तु मदिच्छयेत्याह—

**मनीषितानुभावोऽयं मम लोकावलोकनम् ।**
**यदुपश्रुत्य रहसि चकर्थ परमं तपः ॥ २१ ॥**

**मनीषितानुभावोऽयमिति** । मनीषितस्य अनुभावः । ममैवैषेच्छा यदयं वैकुण्ठं पश्यत्विति । अन्यथा अक्षरात्मकस्य चक्षुषा दर्शनमुपायसहस्रेणाऽपि न भवति । **"पराञ्चि खानि व्यतृणत्स्वयम्भूरि"**ति श्रुतेश्च । बहिः स्थितोऽपि पदार्थो योग्य एव गृह्यते नाऽयोग्यः । न हि योगिनोऽपि चक्षुषा आकाशं पश्यन्ति । सामर्थ्याधानमप्यर्वाक्पदार्थेषु न त्वक्षरेऽपि वा । ननु मनीषितेऽपि कथमेवम्? । तपस इच्छायाश्च भगवच्छक्तित्वेन तुल्यत्वात् । तत्राऽऽह—**अनुभावोऽयमिति** । न केवलं मनीषया शक्तितुल्यत्वादिदं कार्यं किन्तु तस्या अनुभावः । **सर्वासां शक्तीनां**

१ दयतोषे इति ख. २ भरणेति ख. ग. ३ परिभ्रमः क. ख. ग.

मध्ये इच्छाशक्तिरुत्कृष्टा । सर्वमूलत्वात् । अन्यास्तु तत्साध्याः । अतस्तस्या एवाऽयमनुभावो मम लोकस्य वैकुण्ठस्याऽवलोकनं दर्शनम् । नन्वेवं सति तपो व्यर्थं स्यात् । तथा सति पूर्वमेव कथं न दर्शनं लोकस्य । अत इच्छोत्पादकत्वेन साक्षाद्दर्शनहेतुत्वेन वा तपोऽवश्यं वक्तव्यमित्याशङ्क्याऽऽह—यदुपश्रुत्येति । तपो हि मयैवोपदिष्टं । यतस्तपतपेति मद्वाक्यं श्रुत्वा । रहसि एकान्ते । उभयत्रैतद्विशेषणम् । परमं तपश्चकर्थ । पूर्वत्र विशेषणत्वे एकान्तवचनत्वात्तत्कथनं विश्वासाय । उत्तरत्र तु गुप्ततयैव तपःकरणं कीर्त्तनेन क्षरणशङ्काभावाय । परममिति स्वरूपतः फलतश्चोत्कृष्टम् । इदमपि मनीषितानुभावरूपम् ॥ २१ ॥

नन्वेवं सति मनीषा अप्रयोजिका तपसः कृतत्वादित्याशङ्क्याऽऽह—

प्रत्यादिष्टं मया तत्र त्वयि कर्मविमोहिते ।
तपो मे हृदयं साक्षादात्माऽहं तपसोऽनघ ॥ २२ ॥

प्रत्यादिष्टमिति । कर्मणा विमोहितः कर्मविमोहितः । सृष्टीच्छया व्यापृतो ब्रह्मा प्रयोजनसन्देहेन विमोहितः किं स्वार्थं परार्थं वा कर्त्तव्यमिति । तदा कर्मजनितमोहव्यावृत्त्यर्थं तप उपदिष्टं न तु कार्यार्थम् । कार्यविलम्बस्तु मोहाभावार्थः । एवं तपःप्रयोजनमुक्त्वा तपःस्वरूपमाह—तपो मे हृदयमिति । यथा भगवान् षड्गुणस्तथा तपोऽपि षड्गुणम् । तथा सति तस्य षड्गुणत्वे ज्ञाते तपसैव कार्यं भविष्यति किं भगवतेत्याशङ्का निवृत्ता भविष्यति । तपसः षड्गुणानाह । तपो मे हृदयमन्तरङ्गा शक्तिः । हृदयमेव वा । साक्षादिति उपचारनिवृत्तिः । "यस्य ज्ञानमयं तप" इति श्रुतेः । ज्ञानात्मकत्वं हृदयस्यैव । मद्धृदयत्वं तस्यैश्वर्यम् । किञ्च । अहमेव तस्यात्मा । मदात्मकत्वं तस्य वीर्यम् । यद्यपि भगवान् सर्वस्याऽऽत्मा तथापि न स्वरूपात्मत्वमत्र विवक्षितं किन्तु कार्यात्मत्वम् । ततश्च यत्किञ्चिदहं कर्तुं शक्तस्तत्सर्वं तपसाऽपि भवति । अतोऽवतारवद्रूपान्तरं तप इत्यर्थः ॥ २२ ॥

ननु तथापि न भगवत्तुल्यता तपसो जगदकर्तृत्वादित्याशङ्क्य उत्पत्तिस्थितिप्रलयकर्तृत्वं तस्याऽऽह—सृजामीति । बिभर्मि तपसा विश्वमित्यन्तेन ।

सृजामि तपसैवेदं ग्रसामि तपसा पुनः ।
बिभर्मि तपसा विश्वं वीर्यं मे दुःसहं तपः ॥ २३ ॥

यद्यपि करणत्वं सृष्ट्यादौ, तथापि "स्वव्यापारे हि कर्तृत्वं सर्वत्रैवाऽस्ति कारक" इति न्यायेन कर्तृत्वमपि । एवं स्वरूपगुणकार्याणि तस्य निरूपितानि । तथा सति भगवतस्तस्य वा वैयर्थ्यमाशङ्क्याऽऽह—वीर्यमिति । तपस्तु मम पराक्रमो धर्मरूपः । न हि कार्यसाधकधर्मेण धर्मी धर्मो वाऽन्यथासिद्धो भवति । आश्रयस्य प्रयोजकस्य चाऽवश्यमपेक्षणात् । अतस्तपसो मद्रूपत्वात्पूर्वमपि मया स्वस्वरूपमेवोपदिष्टम् । परमेतावान्विशेषः । किञ्चिन्मम स्वरूपं क्रिययाऽभिव्यज्यते किञ्चिज्ज्ञानेनेति । तपस्तु क्रियया । तस्माद्यत्तपसा जायते मदुपदिष्टेन तन्मयैव जायत इति वैलक्षण्यार्थं वाऽतीवाऽऽग्रहः कर्त्तव्यः ॥ २३ ॥

१ भावः लोकस्येति ग. २ विशेषणं त्वेकान्वेति ख. ३ मदात्मकं तस्येति ग.



एवं सोपपत्तिकवरप्रार्थनायामाज्ञप्तो ब्रह्मा आज्ञापने प्रतीतं दोषं परिहृत्य वरं प्रार्थयते—भगवन् सर्वभूतानामित्यादि पञ्चभिः ।

ब्रह्मोवाच ।

भगवन् सर्वभूतानामध्यक्षोऽवस्थितो गुहाम् ।
वेद ह्यप्रतिरुद्धेन प्रज्ञानेन चिकीर्षितम् ॥ २४ ॥
तथापि नाथमानस्य नाथ नाथय नाथितम् ।
परावरे यथा रूपे जानीयां ते त्वरूपिणः ॥ २५ ॥
यथाऽऽत्ममायायोगेन नानाशक्त्युपबृंहितम् ।
विलुम्पन् विसृजन् गृह्णन् बिभ्रदात्मानमात्मना ॥ २६ ॥
क्रीडस्यमोघसङ्कल्प ऊर्णनाभिर्यथोर्णुते ।
तथा तद्विषयां धेहि मनीषां मयि माधव ॥ २७ ॥
भगवच्छिक्षितमहं करवाणि ह्यतन्द्रितः ।
नेहमानः प्रजासर्गं बध्येयं यदनुग्रहात् ॥ २८ ॥

चत्वारोऽर्थाः प्रार्थनीयाः । दोषपरिहारार्थं चाऽऽद्यः । तमाह—हे भगवन् । पूर्वं सहसा भगवद्दर्शनेनाऽऽगतसाध्वसोऽसमर्थो जातः । इदानीं भगवद्वाक्येन स्पर्शेन च सावधानः सोपपत्तिकं वदति—भगवन्निति सम्बोधनं स्वरूपपरिज्ञापकम् । त्वं हि सर्वान्तरात्मा सर्वेषां हृदयं जानासि । अतो यन्ममाऽभिप्रेतं तत्तव ज्ञातमेव । तथा च ज्ञातृज्ञापनं पिष्टपेषः । तथापि याचितमेव देयमिति यदि । अथवा । न ज्ञायतेऽस्य तत्त्वं किमित्येवमाह भगवानिति । तस्मिन्नपि पक्षे भगवदाज्ञा कर्त्तव्येति प्रार्थनमावश्यकम् । तद्वक्ष्यति—तथापीति । सर्वभूतानामध्यक्षः । सर्वकार्येषु प्रेरको नियामको वा । यथा लोके कर्माध्यक्षस्तथा भगवान् सर्वाध्यक्षः । अनेन भगवदाज्ञाव्यतिरेकेण न कस्याऽपि कोऽपि धर्मोऽन्तर्बहिर्वोत्पद्यते । अतः कामनाऽप्युत्पन्ना त्वयैवोत्पादितेति तत्पूरणमपि त्वयैव कर्त्तव्यमिति न मम भारः । स्वपुत्रान् हि सर्व एव पुष्णन्ति । किञ्च । गुहामवस्थितः हृदयाकाशमधिष्ठाय स्थितः । अतः सर्वं तव विदितम् । किञ्च । चिकीर्षितमपि भवान् वेद । यतोऽप्रतिरुद्धेन कालादिभिः प्रतिरोधो यस्य ज्ञानस्य नास्ति । कार्यबोधने उत्पत्तौ वा प्रत्यासत्त्यर्थं वा केनाऽप्यंशेन प्रतिरोधो नास्ति । अतो ज्ञातत्वात् ज्ञानोत्पत्तिस्थान एव विद्यमानत्वादिच्छायाश्चोत्पादकत्वाद्भगवता न प्रष्टव्यं न वा वक्तव्यं तथापि तवाऽऽज्ञापरिपालनार्थं कथयिष्यामीत्याह—तथापीति । परमेकमेव प्रार्थ्यते । याचितं देयं न तु युक्तमयुक्तं वेति विचारणीयम् । तदाह—नाथितं नाथयेति । "नाथृ" याच्ञायाम् । अतो नाथितं याचितम् । नाथय प्रयच्छ । अवश्यदाने हेतुः—हे नाथेति । स्वामी हि सेवकेभ्यः प्रयच्छत्येव । अनन्यगतिकत्वात्तेषाम् । एवं प्रार्थयित्वा प्रथमं द्वयं प्रार्थयते—परावरे यथा रूपे इति । ममाऽयं महान् सन्देहः कस्त्वं परः कोऽपर

१ च्चोत्पादकत्वादिति च.

इति । **किंवा तव पुरुषोत्तमरूपं किंवेदं परिदृश्यमानमिति** । एते परावरे रूपे । पुरुषोत्तमाक्षररूपे आविर्भूतानाविर्भूतरूपे अवतारावतारिरूपे वा यथा जानीयां तथा वरो देयः । नन्वेतानि रूपाणि वेद एव प्रसिद्धानि वेदानुसन्धानादेव ज्ञातव्यानि किमिति वरत्वेन प्रार्थ्यते? तत्राऽऽह— **ते त्वरूपिण इति** । तुशब्दः पक्षं व्यावर्त्तयति । न तद्रूपमस्तीश्वरे यन्न वेदे श्रुतमस्तीत्येकस्येश्वरस्य सर्वाणि रूपाणि वेदे प्रतिपाद्यन्ते । अन्ये वीर्यादयः पञ्च । भगवांश्चाऽनुक्त एव तिष्ठति । तस्मादेतानि षडपि न पृच्छ्यन्ते साम्प्रतम् । किंच । मूलरूपस्य धर्माकारेणाऽप्यजातस्य यत्परं रूपं, यद्वा सर्वरूपेण जातस्य पश्चाज्जायमानमवरं रूपं ते ज्ञातुं प्रार्थयामीत्यर्थः । अनेनाऽऽद्यन्तरूपपरिज्ञानं भवति । तथा च सत्येतावत्कर्त्तव्यमिति ज्ञातं स्यात् । तच्च ज्ञानं कर्माङ्गमिति प्रसिद्धम् । एवमाद्यन्तरूपज्ञानं प्रार्थयित्वा मध्यस्थानि सर्वाण्येव रूपाणि ज्ञातुं प्रार्थयते । तथा सति तत्तदुपयोगार्थं सृष्टिकरणं सुगमं स्यात् । सृष्टिज्ञानं तु पूर्वमेव वर्त्तत इति न तत्प्रार्थयते । सिसृक्षायां वा प्रार्थयिष्यते अंशभेदेन । यथा आत्मनः स्वस्य पुरुषोत्तमस्य माया कार्यकारणरूपिण्यनन्ता । तस्याः सर्वतो योगेन तस्यास्त्रिगुणत्वात्तत्सम्बन्धेन नानाभावमुत्पत्त्यादिरूपं शक्त्यादिरूपं च तेनोपबृंहितमात्मानं विसृजन् विशेषेण कुर्वन् । गृह्णन् बिभ्रत् । आत्मानमेव गृह्णन्नुत्पन्नमात्मसात्कुर्वन् । बिभ्रत् आत्मानमेवोत्पन्नं भाररूपं स्वयमेव धारयन् । यदा पुनर्भारं वोढुं नेच्छति तदा विशेषेण लुम्पन् स्वयमेव कर्तृकर्मकरणरूपः क्रीडसि । तथा क्रीडाज्ञानं ममाऽस्त्विति प्रार्थना । तथा सति कृतिः सुगमा भवति। ननु भगवानेव यदि सर्वं करोति तदा ब्रह्मणा किं कर्त्तव्यमित्याशङ्क्याऽऽह—**अमोघसङ्कल्प इति**। अमोघः सङ्कल्पो यस्य । सङ्कल्पमात्रेणैव भगवान् करोति । कृत्या तु मया कारयतीत्यर्थः । नन्वेक एव **कथमनेकानि रूपाणि** करोत्यतो ब्रह्मादिरूपाणि स करोतीति मन्तव्यमित्याशङ्क्याऽऽह दृष्टान्तेन— **ऊर्णनाभिरिति** । यथोर्णनाभिः साधनान्तरनिरपेक्षः स्वरूपभूतयैवोर्णया क्रीडति ऊर्णामेवोत्पादयति स्थापयति भक्षयति च । तथा भगवानप्यात्मानं करोति । कृतिमात्रे दृष्टान्तः । स्वरूपं त्वज्ञातमेव । दृष्टान्ते तु ऊर्णारूपमेव मृज्यादिभावं प्राप्नोति न तूर्णनाभिः । आश्रयं चाऽपेक्षते । दुष्टत्वं चोत्पादितस्य भवति । अतस्तस्य स्वरूपं ज्ञातव्यम् । अन्यानपेक्षतामात्रे दृष्टान्तः । नाऽपि तस्य सर्वानपेक्षता । देशादीनामपेक्षितत्वात् । अतो दृष्टान्तमात्रेण ज्ञानं न भवतीति भवानेव तत्सम्पादयत्विति प्रार्थयते—**तथा तद्विषयां धेहीति** । भगवान्करोतीत्यविवादम् । श्रुतिरपि कृतिमेवाऽऽह नतु स्वरूपम् । अतस्त्वमेव तां मनीषां बुद्धिं धेहि मयि स्थापय । न तूपदेशेन तत्सिद्धिरिति भावः । मदुक्तं पित्रा भवता कर्त्तव्यमेवेति सम्बोधयति— **माधवेति** । यथा लक्ष्मीपतिर्भार्योक्तं करोति तथा पुत्रोक्तं कर्त्तव्यमिति । एवं ज्ञाने वरद्वयं प्रार्थितं निरूप्य क्रियायामपि वरद्वयं प्रार्थयते शिक्षां गर्वाभावं च । तत्र प्रथमं शिक्षामाह—**भगवच्छिक्षितमिति** । भगवता अहं शिक्षणीयः एवंप्रकारेण सृष्टिं कुर्विति । शिक्षा नाम बोधिका क्रिया विषयान्तरव्युदासेनाऽभीष्टविषयपरा । तस्याः कर्त्ता शिक्षकः । शिक्षितस्त्वाश्रयः । तत्र क्रियाया गुणभूताया अपि कर्मत्वेन विवक्षितायाः कर्मभावं परित्यज्य आश्रयभावमेवाऽवलम्बते सैव क्रिया । तस्यास्त्वाश्रयः कर्मभावमवलम्बते । पठने शिक्षितो देवदत्तो लिखने शिक्षित इति । प्रकृते तु क्रियायाः कर्मत्वेनैव विवक्षितत्वात्तद्विषय एवाऽऽश्रयतां प्राप्तः । न तु तदाश्रयो ब्रह्मा । स च

१ किन्त्विति क. ख. २ लोकप्रसिद्धमिति ख. ३ शिक्षायां वेति ख. ४ नापेक्ष्यत इति ख. ५ मात्रेणेति ख. ६ भावमाक्रम्यत इति ख.



विषयो जगद्रूपः । तथा सति तस्मिन् जगति यथा शिक्षोचिता तथा कुर्वित्यर्थः । पश्चात्तथा शिक्षां प्राप्य यथोचितं मया कर्त्तव्यम् । यथा फलकादावतिबालकशिक्षायां गुर्वादिरेव प्रथमतोऽक्षराणि लिखति तदुपर्येव बालकस्तथाऽङ्गुलिचालनं करोति । हस्ते धृत्वाऽङ्गुलिचालनं गुरोः प्रयासाधिक्यजनकं भवति । फलके तु सुगमम् । संस्कारेण हृदये तदुल्लेखापेक्षया जगत्येव तदुल्लेखनं सुगमं ममाऽपि हितकरम् । अथाऽपि मानेन पदार्थकर्त्तारो न बध्यन्ते । तथा अहमपि भगवता येन प्रकारेण निष्पादितं जगत्तेनैव प्रकारेण स्वक्रियामपि तत्र सम्पादयिष्याम्यग्रे शिक्षार्थम् । नन्वेवं करणे आलस्यं भवति, ज्ञात्वा करणे त्वनालस्यमत आह—**अतन्द्रित इति** । तन्द्रामप्राप्त एवाऽहं करिष्यामि । युक्तोऽयमर्थः । भगवता शिक्षिते न कस्यचित्तन्द्रा भवति । ननु किमित्येवं प्रार्थ्यते? तत्राऽऽह—**नेहमान इति** । प्रजासर्गमीहमानो निष्पादनार्थं व्यापृतः यस्य शिक्षणस्य भगवतो वा अनुग्रहान्न बध्येयम् । अन्यथाकरणादेव बन्धः । वैषम्यनैर्घृण्ये प्रजासर्गे भगवतस्ततो बन्धः । शिक्षायां तु नाऽस्य वैषम्यं न नैर्घृण्यम् ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

एवं क्रियायां शिक्षां प्रार्थयित्वा तथाकरणे यो दोषस्तदभावं च प्रार्थयते—

**यावत्सखा सख्युरिवेश ते कृतः प्रजा विसर्गे विभजामि भोजनम् ।**
**अविक्लवस्ते परिकर्मणि स्थितो मा मे समुन्नद्धमदोऽजमानिनः ॥ २९ ॥**

**यावत्सखेति** । सखा सख्युर्यावत्करोति तथा भगवान्मां कृतवान् । मम पुरस्कारं वा । किमतो यद्येवं तत्राऽऽह—**प्रजाविसर्गे विभजामि भोजनमिति** । यदा सख्युः स्वसाम्यमापादयति सखायं स्वसमानं करोति । वस्तुतश्चिदानन्दयोः समानता । तत्र भगवानानन्दो ब्रह्मा चिद्रूपः । एवं वस्तुतः सख्येऽपि क्रियाज्ञानशक्ती भगवत्स्येव सिद्धे इति । इदानीं भगवान् क्रियाज्ञानादिभिः स्वसमानं कृतवान् । तदा सर्वशक्तिसम्पन्नो विविधसर्गे प्रजाः विभजामि । सत्त्वरजस्तमोगुणभेदेन, ऐश्वर्यादिधर्मेषु उच्चावचभेदेन, धर्मादिपुरुषार्थोपयोगिभेदेन च प्रजा विभजामि । तेषां भोजनं भोग्यवस्तूनि च विभजामि । प्रजासृष्टिसमय एव वा तेषां भोजनं विभजामि । यद्यप्यत्र तथा ते त्वया कृत इति नास्ति तथापि अर्थात् यावत्सखा सख्युरित्युक्ते करोतीति प्राप्यते । तथा इवेति पदेनाऽपि तावत्प्राप्यते । अतो न न्यूनता । केचित्तु यावद्विभजामीति योजयन्ति तावन्मदो मा समुन्नद्ध इति सम्बन्धं च वदन्ति । तत्रापि तावदित्यध्याहारस्तुल्यः । कालावच्छेदेन च मदाभावप्रार्थनाऽयुक्ता । ततोऽपि किमत आह । ते परिकर्मणि अविक्लवश्च स्थितः त्वत्सेवारूपे आज्ञारूपे वा कर्मणि स्थितः । एवमेते त्रयः पदार्थाः । सख्येन तच्छक्तिलाभः । प्रजादिविभागसामर्थ्यम् । तव सेवायां चाऽविक्लवः अवैक्लव्यम् एतत्त्रयं यद्यपि गुणभूतं तथापि मादृशस्य तुच्छत्वाद्दोषरूपं भवति । अतस्त्रिभिर्दोषैरजमानिनः अहं न कस्माज्जातोऽतोऽज एवाऽहमिति । भगवत्सकाशात्प्राप्ता एते गुणा दूरे । भगवतः सकाशात्स्वस्य जन्माऽपि न मन्यते । तादृशस्य सम्यगुन्नद्धो मदो भवति । स मे मा भवत्विति प्रार्थना ॥ २९ ॥

१ प्राप्त इवेति ख. २ नन्वेति ख. ३ वस्तुंवेति क. ख. ४ परिकर्मणे इति ख. ५ एवमेवेति ख. ६ तत्र भवतीति ख.

एवं परावरज्ञानं, क्रीडाज्ञानं, शिक्षा, गर्वाभावश्चेति चत्वारः प्रार्थिताः । तत्र क्रमाज्ज्ञानद्वये श्लोकद्वयम् । शिक्षायां चतुःश्लोकी । अनेनैव गर्वाभाव इत्यन्तिमः श्लोकः । एवं सप्तभिः श्लोकैश्चतुर्णामुत्तरं भवति । तत्र प्रथमं ज्ञानद्वये उत्तरमाह—

**श्रीभगवानुवाच—**

**ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् ।**
**सरहस्यं तदङ्गं च गृहाण गदितं मया ॥ ३० ॥**

**ज्ञानमिति ।** मे पुरुषोत्तमस्य यज्ज्ञानं, तत्परमगुह्यं वक्तव्यं न भवति । यादृशं मां पश्यसि तादृश एवाऽहं पुरुषोत्तमः । इदमेव ममाऽऽदिरूपं अन्तिमं रूपं च । इदं मदन्यः कोऽपि न जानाति । अतो मयैव गदितं सामान्यतो निरूपितं त्वं गृहाण । भगवद्बुद्धौ सिद्धं भगवद्गुणज्ञानावताररूपं भगवज्ज्ञानं गृहाणेत्यर्थः । भगवतो हि ज्ञानं गदितमपि कृपाव्यतिरेकेण न प्राप्यत इति सिद्धवत्कारेण दददाह—**गृहाणेति** । उपदेशपूर्वकं ब्रह्मणे ज्ञानं दत्तवानित्यर्थः । तस्य ज्ञानस्य परिकरमाह—**यद्विज्ञानसमन्वितमिति** । विविधं ज्ञानं विज्ञानम् । अस्याऽनुभवस्य जातत्वादस्यैव ज्ञानरूपत्वाद्विज्ञानं नाऽनुभवः किन्तु अखिलसात्वतां पतिमित्यादि पतिचतुष्टयज्ञानं विज्ञानं तेन समन्वितं ज्ञानम् । तस्य रहस्यं सुनन्दनन्दादिवेष्टितत्वम् । भक्तिरिति[1] यावत् । तस्याऽङ्गं "भृत्यप्रसादाभिमुखमि"त्यादिभिर्निरूपितानि प्रसादादीनि । चकारस्त्वनुक्तसर्वसमुच्चयार्थः । किं बहुना । यत्किञ्चित्त्वया वैकुण्ठे दृष्टं तस्य सर्वस्य ज्ञानं तव भवत्वित्यर्थः ॥ ३० ॥

द्वितीयं ज्ञानमाह—

**यावानहं यथाभावो यद्रूपगुणकर्मकः ।**
**तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात् ॥ ३१ ॥**

**यावानहमिति** । प्रमाणतो यावानहं परिमाणतोऽपि । यथाभावः यादृशो मम कारणभूतो भावः सर्वकार्यकरणाय सर्वशक्तिरूपः । यावन्ति रूपाणि गुणाः कर्माणि च यस्य । यानि वा गुणादीनि । एतदपि पूर्ववत् । तदाह—तथैव ते मदनुग्रहात्तत्त्वविज्ञानमस्तु । तत्त्वतो विशेषेण ज्ञानं सर्वेषां याथार्थ्यं तव स्फुरत्वित्यर्थः ॥ ३१ ॥

एवं ज्ञानद्वयं निरूपयितुमशक्यत्वान्निरूपणे वा ब्रह्मणो हृदये स्फुरणासम्भवात् स्वयमेव दत्त्वा शिक्षार्थं चतुःश्लोकीमाह—

**अहमेवाऽऽसमेवाऽग्रे नाऽन्यद्यत्सदसत्परम् ।**
**पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥ ३२ ॥**

**अहमेवाऽऽसमेवाऽग्र इति** । यद्रूपं भगवान् जगत्करोति तच्छिक्षायां[3] प्रार्थितम् । तत्राऽऽह । अहमेव तद्रूपो जातः नाऽन्यदिति । अन्यथाभानं च मन्मायेयेति[4] । जडे देहादौ मध्ये जीव-

१ अन्तिमश्लोक इति क. २ भगवद्भक्तिरिति ख. ग. ३ तदिच्छायामिति ख. ग. ४ मायेतीति ख.



प्रतीतिश्च घटादावाकाशप्रतीतिवत् । आधाराधेयभावो बाह्याभ्यन्तरभेदहेतुश्चाऽहमेवेति । स्वरूपतो मूलभूतं जगत् । प्रतीतितो मायारूपं अनुप्रवेशको जीव इति सर्वं जगत्सर्वप्रकारेणाहमेवेति ज्ञात्वा स्वस्वरूपमपि तथा ज्ञातव्यम् । इयमेव शिक्षा । एवं मद्रूपो भूत्वा मद्रूपं चेज्जगत्करोति तदा गर्वो न भवतीति तद्धेतुभूतो मोहोऽपि न भवतीति पञ्चश्लोकानामर्थः । तत्र सर्वं जगत्कथं भगवानित्याकाङ्क्षायां तज्जलानिति हेतुं विस्तरेण वदति । सृष्टेः पूर्वं अहमेव । **"एको नारायण आसीन्न ब्रह्मा न च शङ्करः ।" "वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शङ्कर"** इति श्रुतेः सृष्टेः पूर्वमहमेव । किञ्च । मत्तोऽपि पूर्वमिति नाऽऽशङ्कनीयम् । यथा जगतः पूर्वमहं मत्तोऽपि पूर्वमन्यदिति तदैवं भवेत् यदि कदाचिदप्यहं नाऽऽसम् । तत्तु मम न सम्भवति । सद्रूपेणैव निरूपणात् । **"सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयमि"**ति श्रुतेरासमेव । अग्रे सृष्टेः पूर्वम् । **"असद्वा इदमग्र आसीत्ततो वै सदजायते"**त्यादीनां पश्चात् प्रतीयमानजगतः पूर्वमेतादृग्रूपेणाऽनवस्थितत्वप्रतिपादकत्वात् । अन्यथा असतः सत्ताबोधकत्वे विरोधः । **"नाऽसतो विद्यते भाव"** इति वाक्यात् । **"नाऽसदासीन्नो सदासीत्तदानीमि"**त्यादेस्तु स्थूलसूक्ष्मकार्यपरत्वम् । **"आपो वा इदमग्रे सलिलमासीदि"**ति त्ववान्तरकल्पाभिप्रायेण । आपो नानाविधानि जलानि[4] इदं तत्कार्यं च जगत्सर्वं सलिलं प्रलयोदकरूपमेवाऽऽसीदित्यर्थः । **"अव्यक्तादीनि भूतानी"**ति तु अव्यक्तरूपं ब्रह्मैव । लीनत्वकल्पकस्य पश्चादेव सिद्धेः पश्चादेव पूर्वलीनत्वं सिध्यति । न पूर्वम् । अनेन **"प्रकृतिं पुरुषं चे"**त्यपि निरस्तम् । मतान्तरत्वात् । **"आसीज्ज्ञानमथो ह्यर्थ"** इति वाक्यविरोधाच्च । **"तम आसीदि"**ति तमोऽपि ब्रह्मैव । सर्वतः गुप्तत्वेन[5] साम्यात् । न प्रकृतिः । **"किमावरीवः कुहकस्य शर्मन्नि"**ति कार्याश्रयप्रयोजनाभावात् तस्याः कार्यैकोन्नेयस्वरूपाया[6] अभावात् । एवमन्यान्यपि वाक्यानि तत्तद्भावप्रकारेण बोधयन्ति पूर्वमेकरूपे भगवति न बाधकानि भवन्ति । अत एव श्रुतिसिद्धत्वादन्यानि तत्काले निषेधति—**नाऽन्यदिति** । सदसतोः श्रुतौ पूर्वसिद्धत्वेऽपि न तयोरन्यत्वम् । तदाह—**सदसदिति** । सच्छब्देनाऽसच्छब्देन च ब्रह्मैवोच्यत इत्यर्थः । **"योऽस्मात्परस्मात्पर"** इति परशब्देनापि न कालादिरुच्यते । किन्त्वहमेव । तस्मात्पूर्वमहमेवेति सिद्धम् । अभावास्त्वन्मते तिरोभावातिरिक्ता न भवन्तीति तस्य च भगवच्छक्तित्वात् **"पूर्ववद्"**इति न्यायेन शक्तिधर्माणामपि तदोद्गतत्वाभावेन[7] कालस्याऽपि निरूपणसमय एव तथावचनात्प्रकृतितुल्यत्वेन भगवानेक एव सिद्ध इत्यविवादम् । किञ्च । **पश्चादहं** । सर्वभवनसमर्थात्स्वरूपादेव चेष्टावत्प्रादुर्भावः कालस्य पश्चाद्गुणरूपेण शक्तिरूपेण च पश्चात्कार्यरूपेण । **"स आत्मानं स्वयमकुरुते"**ति श्रुतेः । असतः सत्तानङ्गीकाराच्च । **यदेतदिति** परिदृश्यमानं सर्वम् । चकारादपरिदृश्यमानमप्रसिद्धं च । अनेन जीवा अपि सङ्गृहीताः । **स्वमेतच्चेति** पाठे जीवजडात्मकं सर्वमहमेवेत्यर्थः । अयं मुख्यो[8] ब्रह्मवादः । ननु पदार्थविरोधे शब्दो न प्रमाणम् । भगवांश्च सर्वदोषरहितः । विकारादयश्च दोषाः । सर्वशब्दे सङ्कोचाभावादुपदेश्याभावः शास्त्रोच्छेदश्च । प्रयोजनाभावात् हिताकरणादिदोषप्रसक्तिः । पुरुषोत्तमत्वाभावश्च । तस्मादनेकदोषदुष्टत्वाद्ब्रह्मवादोऽनुपपन्न इति चेन्नैवम् । **प्रत्यक्षादृष्टविषये पदार्थाः श्रुतिबोधिताः । परस्परं विरुद्धास्ते नैकशेषं भजन्ति हि । उभयोर्वैदिकत्वेन कः स्यादत्र नियामकः । विचार-**

१ बाह्यान्तरेति क. ख. २ भेदे हेतुरिति ख. ग. ३ जीवरूपमिति ख. ग. ४ जलानीति ख. ग. ५ गुप्तत्वेनेति ख. ६ पाया भावादिति ख. ७ तदोद्गतत्वेति ख. ग. ८ मुख्ये इति ख.

**काणां बुद्धिस्तु सोपजीव्या श्रुतेः सदा। क्रियाविद्यापरत्वे तु विकल्पेनैकवाक्यता। दुष्टोऽप्याश्रीयते पक्षो विकल्पाख्यः श्रुतेर्बलात्। तथैव भगवद्रूपं यथा हस्तादयः पृथक्। यथा सर्वाविरोधः स्यात्तथैवाऽत्र विचारणम्। सर्वरूपसमर्थत्वमतो ब्रह्मणि गीयते। अन्यथा प्रतिभानं यद्दुष्टनीचादिभेदतः। तद्भानं तस्य कर्त्ता च हरिरेव तथाविधः। यत्किञ्चिद्दूषणं त्वत्र दूष्यं चाऽपि हरिः स्वयम्। विरुद्धपक्षाः सर्वेऽपि सर्वमत्रैव शोभते। योऽवशिष्येत सोऽस्म्यहमिति।** उद्भूतस्य सर्वस्य तिरोभावप्रापणे यत्तिरोभूतं न भवति, तिरोभावस्तदाश्रयो वा, अंशभेदेन वा तदप्यहमस्मीत्यनेन सर्वा एव क्रियास्तद्विषयश्चाऽहमिति ज्ञापयति ॥ ३२ ॥

एवं तज्जलानिति हेतुं विविच्य सर्वमात्मैवेति प्रमेयं विनिश्चित्य प्रमाणवैयर्थ्यमाशङ्क्य प्रवृत्तिसङ्कोचपरत्वात् गुणदोषविषयत्वात् सोऽप्येका भगवल्लीलेति मायां निरूपयति—

**ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चाऽऽत्मनि ।**
**तद्विद्यादात्मनो मायां यथाऽऽभासो यथा तमः ॥ ३३ ॥**

**ऋतेऽर्थमिति** । यद्वस्तु स्वरूपे अन्यथा प्रतिभासते तत् आत्मनां जीवानां व्यामोहिका[1] या माया पूर्वं निरूपिता तस्याः कार्यम् । सा हि जीवं व्यामोहयित्वा तत्सम्बन्धिनमन्तःकरणबुद्ध्यादिकमपि व्यामोहयति । तया व्यामोहिता बुद्धिः पदार्थानन्यथा मन्यते । न तु पदार्था अन्यथा भवन्ति । **बुद्ध्यर्थमेव हि** प्रमाणानि साधनानि च । कानिचिद्बुद्धिजनितदोषनिवर्त्तकानि । कानिचिद्गुणाधायकानि । माया च द्विधा भ्रमं जनयति । विद्यमानं न प्रकाशयति । अविद्यमानं च प्रकाशयति देशकालव्यत्यासेन । तदाह—**अर्थमृते यत्प्रतीयेत न प्रतीयेत च** । अर्थादर्थः । अर्थो न प्रतीयते । अर्थमृते प्रतीयत इति । तस्मात्पदार्थानां याथात्म्यज्ञापनार्थं प्रमाणमित्युक्तं भवति । ननु वस्त्वेव कुतो न तथास्तु । कैश्चिद्वादिभिर्जगतो मायिकत्वस्वीकारादिति चेत् । भवेदेतदेवं यदि विचारे पर्यवस्यति । प्रमाणभूतो वेदः **"सर्वं खल्विदं ब्रह्मैवे"**त्याह । ब्रह्मविदां प्रतीतिरपि तथा । भ्रान्तप्रतीतेस्तु नाऽर्थनियामकत्वम् । अन्यथा भ्रमदृष्ट्या गृहीतं जगद्भ्रमरूपमेव[2] स्यात् । अतो विषये विषयता काचित्स्वीकर्त्तव्या यया दृष्टिः सविषया भवति । अन्यथा पदार्थानां स्थिरत्वाद्भ्रमदृष्टिर्निर्विषया स्यात् । अतोऽन्यत्रैव सिद्धभ्रमिर्मायया पुरःस्थिते विषये समानीयते । दृष्ट्यनुरोधित्वात्तस्याः । अतो यथाऽधिकारं जीवदृष्टिं[3] पुरस्कृत्य व्यामोहिकया मायया व्यत्यासेन पदार्थाः सम्पाद्यन्ते । एवं सर्वत्र जगति सा बुद्धिभ्रमं जनयति अन्यत्राऽन्यविषयतां सम्पादयति । विषयता मायाजन्या । विषयो भगवान् । मायायामेव विषयतारूपं भगवतः स्वरूपं प्रकटितमिति । तदपि न निःस्वभावम् । आत्मशक्तित्वान्मायाऽपि न निःस्वभावा । चिद्विलासत्वाद्बुद्धेः परं तामेव व्यामोहयति यावन्न ब्रह्मभावः । सा हि भगवदीयैः सर्वैरेव पदार्थैर्विरुध्यते । ते हि भगवद्विषयकं ज्ञानं जनयन्ति । अतो विषयताजनितं ज्ञानं भ्रान्तं विषयजनितं प्रमेति । एवं यथा जगति, आत्मन्यपि तथेत्याह—**चाऽऽत्मनीति** । आत्मनि च विद्यमानं न प्रकाशयति । अविद्यमानं प्रकाशयति । ननु सर्वजनीनप्रतीत्यनुरोधेन जगद्रूपोऽयं विषयो ब्रह्मणो भिन्न एव कुतो नाङ्गीक्रियते तत्रा-

1 मोहिकाय इति ग. 2 भ्रमद्रूपमिति घ. 3 जीवदृष्टिमिति क.



ऽऽह—**तद्विद्यादात्मनो मायामिति** । यस्मात्कारणादविद्यमानमेव बोधयति विद्यमानं न बोधयति तस्मात्कारणात्तां मायामेव विद्यात् । न हि विषयश्चक्षुर्वा जडं नियतस्वभावमन्यथाप्रतीतिहेतुर्भवति । तत्र दृष्टान्तमाह—**यथाऽऽभासो तथा तम इति** । यथा द्विचन्द्राद्याभासो[1] माययैव जन्यते । न तु प्रतीत्यनुरोधेन चन्द्रद्वयं कल्प्यते । एवं विषयताऽपि मायया जन्यते । बुद्धिस्तु चिद्विलास इति न मायाजनिता । अन्यथा ब्रह्मविदोऽपि बुद्धिस्तथा स्यात् । ततश्च सर्वविप्लवः । सा च विषयता द्विधा[3] । आच्छादिकैका । अन्यथाप्रतीतिहेतुश्चाऽपरा[4] । सा उभयविधाऽपि मायैव जन्यते यथाऽऽभासः । ननु मायायाः कथमेवं पदार्थजनकत्वम् । व्यामोहजनकत्वमेव तस्याः । न च विषयातिरिक्ता विषयता क्वचिदुपलभ्येत्याशङ्क्याऽऽह—**यथा तम इति** । यथाऽन्धकारः पदार्थस्तेजोऽभावे जन्यते । यत्रैव तेजोऽभावस्तत्रैवाऽन्धकारं जनयति माया । इयमेव व्यामोहिका । अत एव दिवाभीतान्प्रति नाऽन्धकारं जनयति । ते तु तेजोऽभावमेव गृह्णन्ति । तेषां दृष्टेः कोमलत्वाद्बलवत्तेजो दृष्टिप्रतिबन्धकं भवति । तदभावे सुखेन विषयान् गृह्णन्ति । अस्मदादीनामपि तेजो न विषयसंस्कारकं । न वा चक्षुषः । किन्तु तेजोऽभावे मायया तमोजननात् सैव दृष्ट्या विषयीक्रियते न तु विषयः । अतस्तमोनिवृत्त्यर्थमेव तेजः । तथैव लोकप्रतीतिः । सा च विषयता चक्षुषा गृह्यते । विषयाद्भिन्नतया स्वात्मसात्क्रियते । परिभ्रमणे तथा सिद्धेः । **"यथा हि भानोरुदयो नृचक्षुषामि"**ति वाक्ये चक्षुःसम्बन्धिन एव तमसो नाशकत्वम् । न तु स्वभावत एव किञ्चित्तमः । अन्यथा स्पर्शेनाऽपि ज्ञाने[5] तत्प्रतिबन्धकं स्यात् । स्पर्शेन वा तद्बुध्येत । तम इति चोपलक्षणम् । आदर्शे च मुखं जनयति । न च परावृत्तं चक्षुर्मुखमेव गृह्णातीति मन्तव्यम् । तथा सति दर्पणान्तरे सामासस्य प्रतीतिर्न स्यात् । न चेदमेव मुखमुभयत्र प्रतिबिम्बितं[2] इति वाच्यम् । असम्मुखदिक्कानामपि प्रतिबिम्बदर्शनात् । अयमेव वा आभासः । तस्माद्दर्पणे मुखजननवत्तेजोऽभावेऽन्धकारजननवन्माया मोहितपुरुषबुद्धावपि विषयताद्वयं जनयतीत्यर्थः । तत्रैका ब्रह्मरूपतां न प्रकाशयति । एका तु जगद्रूपा विषयता । तदुभयव्यावृत्त्यर्थं सर्वाणि प्रमाणानीति भावः ॥ ३३ ॥

एवं प्रमेयं प्रमाणं च निरूप्य विषयं निरूपयति—

**यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु ।**
**प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥ ३४ ॥**

**यथा महान्ति भूतानीति** । वेदेन हि प्रकारद्वयेन पदार्था निरूप्यन्ते—साकारो निराकारः, सावयवो निरवयवः, पूर्णः परिच्छिन्न इत्यादिप्रकारेण । तदुभयमपि यथा विषयो भवति तदर्थमिदमारभ्यते । अन्यथैकपक्षो विषयता स्यात् । तथा सति वेदानामंशतोऽप्रामाण्यं भवेत् । अतः सर्ववेदप्रामाण्यसिद्ध्यै[6] उभयविधो विषयो निरूप्यते । यथा महान्ति भूतानि आकाशादीनि भूतेषु घटादिषु उच्चावचेष्वनेकरूपेषु स्थूलसूक्ष्मदीर्घह्रस्ववक्रर्ज्वादिभिन्नेषु कारणत्वेन प्रविष्टानि, पुनरनुप्रविष्टानि भवन्ति, ततोऽप्यप्रविष्टानि[7] भवन्ति । तथा अहं सर्वत्र कारणभूतः सर्वत्राऽनुप्रविष्टोऽपि न कारणभूतो नाऽनुप्रविष्ट इत्यर्थः । **तेष्विति** पुनर्वचनं वाक्यद्वयबोधार्थम्[8] । अन्यथा नकारः पूर्ववाक्य एव सम्बध्येत । कारणं हि कार्येऽनुप्रविशति । कार्यं च कारणे समवेतमुत्पद्यते । अन्यथा पटस्य निरा-

1 तद्विन्द्वादिति ख. 2 बिम्बादिति क. घ. 3 द्विविधेति ग. 4 प्रतीतिश्चापरेति ग. 5 ज्ञानेनेति ख. 6 सिद्धे उभयेति ख. 7 विष्टानि चेति ख. ग. 8 बोधनार्थमिति ख. घ.

धारतयोत्पत्तिः स्यात् । तथा सति नोत्पद्येत । उत्पद्यमानं वा सर्वत्रोत्पद्येत । यथा घटो भगवान् यथा शब्दः । कुम्भकारकृत्या प्राकृत एव घट उत्पद्यते । विषयतावत् । ननु भगवद्रूपः सिद्धत्वात् । शब्दोऽपि ताल्वोष्ठपुटव्यापारेणोत्पद्यमानः सर्वत्रैव श्रोत्रेषूत्पद्यते । एवं निराधारः पटोऽपि भवेत् । तथा सति तन्त्वाधारतयोत्पन्ने पटे यदि तन्तवो न प्रविशेयुस्तदा पटे तन्तुप्रतीतिर्न स्यात् । जायमाना वा भ्रान्ता स्यात् । अबाधितत्वाच्च न भ्रान्ता । शुष्का तु युक्तिः क्वापि पदमलभमाना स्वयमेव भ्रान्ता भवति । अत एकस्यैवाऽऽधारत्वमाधेयत्वं चै कारणकाले कार्यकाले च व्यवस्थितं भवति । एवं महाभूतेषु त्रयम् आधारत्वं, आधेयत्वं, विशेषत आधेयत्वमिति । तदाह—**प्रविष्टान्यप्रविष्टानीति** । अथवा । महाभूतेषु पञ्चधा कारणत्वेन पूर्वमेव तत्र विद्यमानत्वेन महाभूतत्वेन चेत्यप्रवेशस्त्रेधा । कारणप्रवेशवत्प्रवेशत्वेन पृथक्प्रवेशत्वेन च प्रवेशो द्वेधा । तथा तेष्विति पञ्चधाऽपि । नै तेष्विति पुनः पञ्चधा । एवं भगवति दशधा भवति । तथा सति सर्वत्र जगति भगवान् दशविधलीलायुक्तो दशधा ज्ञातव्यः ॥ ३४ ॥

एवं प्रमेयं प्रमाणं विषयं च निरूप्य निरूप्यान्तरशङ्कां वारयन् त्रिष्वप्युपपत्तिं वदति—

**एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनाऽऽत्मनः ।**
**अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा ॥ ३५ ॥**

**एतावदेव जिज्ञास्यमिति** । निरूपणं तु जिज्ञासानुरोधेन । जिज्ञासा तु त्रिष्वेव न तु शास्त्रान्तरवत् षोडशधा । तस्यात्मोपयोगाभावात् । आत्मार्थमेव हि जिज्ञास्यम् । तदाह—**तत्त्वजिज्ञासुनाऽऽत्मन इति** । प्रमेयं ज्ञानम्, प्रमाणं वैराग्यम्, विषयो दशविधलीलाभक्तिः । आत्मनस्त्वेतावदेवोपयुज्यते । अन्यत्तु देहाद्यर्थम् । एवं निरूप्याऽऽन्तरं निराकृत्य त्रिष्वप्युपपत्तिमाह—**अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदेति** । अन्वयव्यतिरेकाभ्यामित्युपपत्तिः । यदित्यादि त्रयमुद्देश्यम् । तत्र सर्वं भगवान् कथमित्याकाङ्क्षायामन्वयव्यतिरेकाभ्यामिति । सर्वत्र भगवतोऽन्वयोऽस्ति । घटः सन् पटः सन् भासत इति प्रियमिति च सर्वत्रैवैकस्याऽन्वयः । अन्यथा एकशब्दानुवृत्तिः प्रतीत्यनुवृत्तिर्वा न स्यात् । विशेषेणाऽतिरिच्यत इति व्यतिरेकः । घटादिभ्यः किमतिरिच्यते । घटस्तु घटान्नाऽतिरिच्यते तथा पटः पटात् । किन्तु सद्घटादप्यतिरिच्यते पटादपि । एवं सर्वत्र यत्सर्वं सत्सर्वस्मादतिरिच्यते तद्ब्रह्मैव । नन्वेकमेव ब्रह्मत्वसाधकमस्तु किं द्वाभ्यामितिचेन्न । अन्वयेन ब्रह्मत्वं न सिद्ध्यति । जगति जगतोऽप्यन्वयात् । यद्यपि घटादेर्व्यतिरिच्यते जगत्तथापि जगतो न व्यतिरिच्यते । खपुष्पादिकं तु जगतो व्यतिरिच्यते परं नाऽन्वेति । सत् जगतो व्यतिरिच्यते । भगवतोऽपि सत्त्वात्कारणस्याऽपि सत्त्वात् । अतो यस्याऽन्वयव्यतिरेकौ तदेव सर्वम् । किञ्च । यत्सर्वत्र स्यात् । यद्वा सर्वदा देशकालौ यस्य परिच्छेदकौ न भवतः । तत्राप्यन्वयव्यतिरेकाभ्याम् । माया ह्यन्वयेन परिच्छिद्यते । न हि मायाविषये आभासे सदन्वयोऽस्ति । न चाऽऽभासः सतो न व्यतिरिच्यते स्वस्यैवाऽसत्त्वात् । भगवांस्तु मायायामप्यस्ति । अतिरिक्तेऽपि । एवं कालेऽपि । विषये घटे सत्कारणम्, सत्कार्यम्, सदाधारः, सदाधेयम् । सत्त्वेऽप्यतिरिक्तता । न हि मृदेव घटः । तदा मृदवस्थायामपि घटप्रतीतिः स्यात् । घटशब्दप्रयोगश्च । एवं कार्ये सर्वदा पञ्चधा

१ भगवान्शब्द इति घ. २ च नास्ति ख. ३ न पुनरिति ग. ४ सर्वत्रेति ग. ५ त्वनुपपत्तिर्वेति ख. ग. ६ ब्रह्म साधकमिति ग. ७ तत इति ग. ८ सदाधेयमिति नास्ति ख.



भगवानन्वेति । पञ्चधा वै व्यतिरिच्यते । घटो हि पटादिभ्यो व्यतिरिच्यते । कारणादपि व्यतिरिच्यते । घटान्तरादपि व्यतिरिच्यते । आविर्भावात्तिरोभावाच्च व्यतिरिच्यते । घटस्य ह्याविर्भावस्तिरोभावश्च । अत एकस्मिन्घटे आविर्भावतिरोभावाभ्यां दशधा भगवानस्ति । एवं सर्वत्र दशलीलायुक्तो भगवान् । अनेन स्वरूपं भगवान् । देशप्रतीतिस्तु मायिकी । कालप्रतीतिस्तु लीलया । एवं देशकालवस्त्वपरिच्छिन्नं देशकालवस्तुरूपं चाऽहमेवेति । एतावदेव जिज्ञास्यम् । इदमेवोपपत्त्या विचारितम् । उत्पत्त्या च । "पुरुष एवेदं सर्वम्" "**वितस्तिमधितिष्ठती**"ति । उद्देशे च "**न यतोऽस्ति किञ्चित्**" "**प्रादेशमात्रं पुरुषं वसन्तमि**"ति च । एवं भगवतो ब्रह्मणः शिक्षा निरूपिता । ब्रह्मरूपं जगज्ज्ञातव्यं जगतो व्यतिरिच्यत इति न तत्राऽऽसक्तिः कर्तव्या । एकस्मिन्नपि पदार्थे सर्वलीलासहितो भगवानस्तीति च देशकालवस्तुरूपः सन् देशकालवस्तुभ्यो व्यतिरिच्यत इति ॥ ३५ ॥

एवं शिक्षां निरूप्य गर्वाभावे एतदनुसन्धानमेव कारणमित्याह—

**एतन्मतं ममातिष्ठ परमेण समाधिना ।**
**भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचित् ॥ ३६ ॥**

**एतन्मतमिति** । सर्वं भगवान् । अन्यथाप्रतीतिर्मायया । सर्वत्र भगवान् सर्वलीलासहितः सर्वदोषविवर्जित इति एतन्मतं मम भगवतः । इदं हि भगवच्छास्त्रं मम आतिष्ठ । यथा तत्तन्मतानुसारिणस्तत्र तत्र प्रतिष्ठितास्तथा भवानप्यस्मिन्मते प्रतिष्ठितो भवतु । अतः कुतर्का बहव उत्पत्स्यन्ते ते सर्वेऽनुभवेनैव दूरीकर्तव्याः । तदाह—**परमेण समाधिनेति** । समाधिश्चित्तैकाग्र्यम् । सूक्ष्मदृष्ट्यैतज्ज्ञातव्यम् । आपाततो दृष्ट्या विचारेण वा नैतन्मतं ज्ञातं भविष्यति । ज्ञाते त्वस्मिन्महाकल्पेऽवान्तरकल्पेषु च सृष्टिप्रलययोर्न मुह्यति । किञ्च । कर्हिचिदपि न मुह्यति । कदाचिदपि माया तं न व्यामोहयति । अस्य मतस्य मायायाश्च विरोधात् । तत्रैव माया यत्रैवैतन्मतं नास्तीत्यर्थः ॥ ३६ ॥

एवमुपदिश्य यत्कृतवांस्तदाह—

**श्रीशुक उवाच—**

**संप्रदिश्यैवमजनो जनानां परमेष्ठिनम् ।**
**पश्यतस्तस्य तद्रूपमात्मनो न्यरुणद्धरिः ॥ ३७ ॥**

**संप्रदिश्यैवमिति** । एवं सम्यक्प्रकारेणाऽनुभवारूढपर्यन्तं स्वमतमुपदिश्य स्वयं तिरोदधे वा यतः । ननु सर्वरूपो भगवान् सर्वप्रतिकृतिवत् तत्कथं न स्थापितवान् । तथा सति सृष्टिः सुगमा भवति ? तत्राऽऽह—**अजन इति** । न जनः अजनः । जनाद्व्यतिरिक्तः । इदं हि रूपं न विश्वरूपं किन्तु तस्माद्व्यतिरिक्तं तस्याऽऽधिदैविकम् । अत एतद्ध्यानादेव कार्यं नत्वेतद्दृष्ट्वा कर्तव्यम् । अप्रतिकृतिरूपत्वात् । जनस्तु जनस्य प्रतिकृतिर्न त्वजनः । तर्हि कथमयं जनसृष्टिं ज्ञास्यति ? तत्राऽऽह—**जनानां परमेष्ठिनमिति** । जायन्त इति जनास्तेषां परमो नियामको भावः । यतस्ते

१ च नास्ति ग. २ तिष्ठतेति ख. ग. ३ समातिष्ठेति पाठः ख.- ग. ४ भगवानपीति ग. ५ तत्रैतदिति ख. ६ प्रकृतिवदिति ख. ग. ७ त्वेतद्दृष्टेति घ. ८ जनदृष्टिमिति ख.

जायन्ते तिष्ठन्ति तदधीनाश्च भवन्ति तस्मिन्पदे तिष्ठतीति परमेष्ठी जनोत्पादनाद्यधिकारी । तस्येदं रूपं ध्यानेनोपयोगि न तु साक्षात् । तादृशनिर्माणे स्वस्य न सामर्थ्यम् । यतः पश्यत एव तस्य तद्रूपं न्यरुणत् आवृतवान् । ननु परमकृपालुः किमिति तद्रूपमावृतवान् ? तत्राऽऽह—**हरिरिति** । ब्रह्मणो जनानां च सर्वदुःखहर्त्ता । अतो निर्बन्धनिवृत्त्यर्थमुपसंहृतवानित्यर्थः ॥ ३७ ॥

ततो यज्जातं तदाह—

**अन्तर्हितेन्द्रियार्थाय हरये विहिताञ्जलिः ।**
**सर्वभूतमयो विश्वं ससर्जेदं स पूर्ववत् ॥ ३८ ॥**

**अन्तर्हितेन्द्रियार्थायेति** । इन्द्रियाणामर्थ इन्द्रियार्थः । अन्तर्हितश्चाऽसाविन्द्रियार्थश्च । भगवान् सर्वेन्द्रियातीतोऽपि स्वेच्छया भक्तेन्द्रियाणामर्थरूपो जातः । सर्वेषामपि भगवानर्थ इति सुतरां भक्ताश्रयाणामिन्द्रियाणां चेतनसृष्टिपक्षे तेषामेव मुक्त्यर्थं, जडपक्षे तदधिष्ठातॄणां कृतार्थत्वाय भगवानर्थो भवति । एवं सति ब्रह्मणः समष्टित्वात् तस्य तदंशानां व्यष्टीनां च निरिन्द्रियत्वं स्यात् । अतस्तेषां दुःखनिवृत्तये पूर्वमिन्द्रियार्थोऽपि सन्निदानीमन्तर्हितः इन्द्रियाविषयो जातः । एवंभवनं ब्रह्मण उपकारायेति ज्ञापयति—**हरय इति** । अत एव विहितोऽञ्जलिर्येन । विशेषेण हितोऽञ्जलिर्वा यस्य । भगवांश्चेज्जीवेभ्य उपकरोति तदा जीवैः स उपकारोऽञ्जलिना ग्राह्यः । अयमेव जीवानां विहितः । नत्वन्यः कश्चनोपकारः सेवा वा भगवतः कर्त्तुं शक्या । भगवत्स्वरूपस्य दृष्टत्वात् । इदमेव तेषां बहु यद्भगवता क्रियमाणं न निषेधन्ति । शास्त्रतो विहितोऽपि ब्रह्मणा स्वयमप्यनुष्ठित इति विहितः कृत इत्यर्थः । ततो भगवदुक्तार्थानुसन्धानेन स्वयं सर्वभूतमयो जातः । आत्मनोऽपि तथाभावस्य विहितत्वात् । भूतशब्देन प्रादुर्भूतमात्रमुच्यते । भगवदाज्ञया वा यावत्प्रादुर्भूतं तत्सर्वं ब्रह्मणि प्रविष्टमिति वा । तदनन्तरं विश्वं सृष्टवान् । तदा आत्मसृष्टेर्वैषम्यं न भविष्यति । अत एव ब्रह्मा सः पूर्ववदेव जातः । जगच्च पूर्ववदेव कृतवान् । यथा भगवता सृष्टं, यथा वा स्वेनैव सृष्टमिति ॥ ३८ ॥

एवमुपदेशं कार्यपर्यवसायिनं निरूप्य तस्योपदेशस्य प्रचारमाह—

**प्रजापतिर्धर्मपतिरेकदा नियमान्यमान् ।**
**भद्रं प्रजानामन्विच्छन्नाऽऽतिष्ठत्स्वार्थकाम्यया ॥ ३९ ॥**

**प्रजापतिरिति** । यथा स्वयं भगवदुपदेशेन कृतार्थः एवं सर्वे कृतार्था भवन्त्विति प्रजानां भद्रमन्विच्छन् तेषामधिकाराभावमाशङ्क्य, अधिकारसम्पादने अशक्तिमप्याशङ्क्य, पित्रा कृतं पुत्राणामर्थे भवतीति "**यस्मिन् जात एतामिष्टिं निर्वपती**"ति श्रुतौ तथा सिद्धत्वात् स्वयं तदर्थं नियमान् यमांश्चाऽऽतिष्ठत् कृतवान् । तत्र विहित एव धर्मः पुत्राणामर्थे भवतीति प्रकारान्तरमाह—**प्रजापतिरिति** । यथा पतिकृतं भार्यायै भवति तथा प्रजानामपि भविष्यतीति । नन्वेतदपि स्वीपरमेव न त्वन्यपरमित्याशङ्क्य धर्मनियामकत्वेन यथा धर्मं प्रेरयेत्तथा तत्र गच्छेदिति स्वयं कृत्वा प्रजाभ्यो दत्तवानिति ज्ञापयितुमाह—**धर्मपतिरिति** । **एकदेति** । निश्चिन्ततादशायां भावार्थज्ञाने प्रचरण-

१ ज्ञानां चेति ग. २ रचित इति ग. ३ निषेधयन्तीति ख. ४ ब्रह्मसर्व इति ग. ५ प्रकारमिति ख. घ. ६ कृते इति घ. ७ पुत्रार्थे इति ग. ८ ज्ञानेनेति ख. ९ प्रचारणेति ग.



काले वा । नियमा अब्भक्षादयः । यमा अहिंसादयः । इन्द्रियान्तःकरणनियमनमेव यमनियमात्मकम् । यथेन्द्रियाणि लौकिकक्रियायां प्रवृत्तानि ततो नियम्य वैदिकक्रियापराणि क्रियन्ते । एवमन्तःकरणमपि लौकिकज्ञानान्नियम्य वैदिके ज्ञाने योज्यते । तदुभयमपि ब्रह्मा प्रजानामर्थे कृतवानित्यर्थः । नन्वेवं ब्रह्मणो निर्बन्धे को हेतुस्तत्राऽऽह—**स्वार्थकाम्ययेति** । स्वस्य अर्थः प्रयोजनमिति यावत् । "**एतन्मतं ममाऽऽतिष्ठे**"ति भगवदाज्ञया मतेऽवस्थितिः कर्त्तव्या । सा च प्रचारणादेव भवति । अतः प्रचारणार्थं तथा कृतवान् । किञ्च । "**न पतिश्च स स्यादि**"ति वाक्यात् प्रजानां कृतार्थत्वाभावे स्वस्य तत्पतित्वमनर्थायेति स्वार्थमेव तथा कृतवानित्यर्थः ॥ ३९ ॥

तस्य तथा करणं फलपर्यवसायि जातमित्याह—

**तं नारदः प्रियतमो रिक्थादानामनुव्रतः ।**
**शुश्रूषमाणः शीलेन प्रश्रयेण दमेन च ॥ ४० ॥**

**तं नारद इति** । तं पूर्वोक्तधर्मवन्तम् । नारं द्यति खण्डयतीति नारदः । ददातीति वा । नराणां जीवानां समूहो नारम् । नारदो हि सर्वेषां जीवानां जीवभावं दूरीकरोति । नारायणस्याऽऽधारभूतं हृदयं वा सम्पादयति । अतो नारदोऽत्राऽधिकारी । किञ्च । प्रियाय पुत्राय तद्देयमिति नारदो रिक्थादानां पुत्राणां मध्ये प्रियतमो भवति । रिक्थं धनमाददत इति रिक्थादाः । रिक्थं हि बहुविधम् । तत्रेदं मताख्यं परमं रिक्थम् । अतः प्रियतम एवाऽर्हति । यथाऽयं प्रियतमस्तथैव रिक्थमिति । किञ्च । न केवलं प्रीतिविषयः किन्त्वनुव्रतः अनु पश्चाद्व्रतं यस्येति । सेवक इत्यर्थः । सेवको हि स्वामी यत्करोति तदनुगुणं सर्वं करोति । अतो ब्रह्मणा यत्कर्त्तव्यं तत्र साधकोऽयम् । किञ्च । शुश्रूषमाणः सेवां कुर्वाणः । शुश्रूषाभिरताय देयम् । तस्यैव च फलति । शुश्रूषाऽपि न स्वेच्छया कर्त्तव्या किन्तु शीलेन । यथा स्वामिनः शीलं भवति स्वभावो भवति । तद्रोचकेन वा स्वस्यैव सुस्वभावेन विहितमपि तदेव भवति । तदपि न साहङ्कारेण कर्त्तव्यं किन्तु प्रश्रयेण विनयेन । विनीतस्यैव हि सेवा फलपर्यवसायिनी भवति । किञ्च । दमेन इन्द्रियदमनेन । इन्द्रियलोलुपेन कृतं शङ्कोत्पादनाद्य प्रसादहेतुर्भवति । चकारादन्येऽपि स्तुत्यादयः प्रजापतितोषहेतवः परिगृह्यन्ते । सा सेवा न स्वतो धर्मरूपा नारदेन क्रियते । किन्त्वितरशेषा ॥ ४० ॥

तदाह—

**मायां विविदिषुर्विष्णोर्मायेशस्य महामुनिः ।**
**महाभागवतो राजन् पितरं पर्यतोषयत् ॥ ४१ ॥**

**मायां विविदिषुरिति** । मायेशस्येति सम्बन्धिनिर्देशान्माया जगत्कारणभूता गृह्यते । न तु व्यामोहिका । स हि पूर्वं माययैव तथा भगवान् भवतीति ज्ञातवान् । पूर्वकल्पे तथैव जातत्वात् । एतावानेवाऽत्र विशेषः कश्चित्कदाचित्कारणत्वेन तां स्वीकरोति कदाचिन्नेति । उभयथाऽपि पदार्थे न कोऽपि विशेषः । बुद्धिगम्या च सा भवति प्रष्टुं च शक्यते । व्यवहारस्तु केवले ईश्वरे अयुक्तः

१ ममेति भगवदिति ग. २ जीवानां नास्ति ख. ३ नारदोऽधिकारीति घ. ४ चैतदिति ग. ५ इष्टमिति ख.

अशक्यश्च । अतो विष्णोर्व्यापकस्य त्रितयपरिच्छेदरहितस्य मायां त्रितयरूपां सर्वत्र करणभूतां स्वांशमायया मोहिकां दशप्रकारहेतुभूतां च । तदाह—**मायेशस्येति** । मायां नियमयतीति मायायाः करणता । **महामुनिरिति** अत्यन्तं मननशीलः । स हि द्वितीयां मायां जानाति । अतस्तामपि निवर्तयितुं योग्यो भवतीति तथोक्तम् । मुनिरेव स्वहितं जानाति । महामुनिस्तु परमहितम् । किञ्च । **महाभागवत इति** दशविधलीलाश्रवणाधिकारी । अत्र **राजन्निति** सम्बोधनं भवानपि तादृश इति ज्ञापनार्थम् । **पितरमिति** विश्वासाय । परितस्तोषणं फलपर्यवसायि ॥ ४१ ॥

ततः किमत आह—

**तुष्टं निशाम्य पितरं लोकानां प्रपितामहम् ।**
**देवर्षिः परिपप्रच्छ भवान्यन्माऽनुपृच्छति ॥ ४२ ॥**

**तुष्टं निशाम्येति** । निशम्य ज्ञात्वा । शमस्य ज्ञानपरत्वमुक्तम् । तस्योत्कृष्टत्वं सम्यग्ज्ञाने भवति । प्रश्नयोग्यतार्थमाह—**पितरमिति** । न केवलं स्वार्थम्, किन्तु सर्वार्थमित्याह—**लोकानां प्रपितामहमिति** । "**अनुशिष्टेन हि भाव्यं पितुः पुत्रेण** ।" अतः पिता मां चेच्छिक्षयेन्मया पुत्रप्राया लोकाः शिक्षणीया इति वक्ष्यतीत्यपि ज्ञातवान् । देवऋषित्वाद्देवानामप्युपास्यं मन्त्रं यः पश्यति स ब्रह्मणो हृदयं जानातीत्यविवादम् । परितः प्रश्नः ससाधनः । यथा त्वया पूर्वपक्षेण पृष्टं तथा तेनाऽपि पृष्टमित्याह—**भवान्यन्माऽनुपृच्छतीति** ॥ ४२ ॥

तदा तस्याऽर्थत्रयं पूर्वमेव ज्ञातमिति सर्वसन्देहनिवारकं तृतीयमेवोक्तवान् । तदाह—

**तस्मा इदं भागवतं पुराणं दशलक्षणम् ।**
**प्रोक्तं भगवता प्राह प्रीतः पुत्राय भूतकृत् ॥ ४३ ॥**

**दशलक्षणमिति** । दश लक्षणान्यन्यानि पुराणान्तरे भवन्ति । तानि लोकप्रसिद्धानि । तद्व्यावृत्त्यर्थमाह—**भागवतमिति** । भगवता प्रोक्तं भगवत्स्वरूपं प्रतिपाद्यमिति । अनेन प्रथमसिद्धान्तोऽपि कथितः । **पुराणमिति** लोकप्रतीतिसिद्धत्वात् द्वितीयोऽपि । **इदमिति** स्वप्रतीतिसिद्धमङ्गुल्या निर्दिशति । अनेन चतुर्थोऽपि कथितः । अनेन चतुःश्लोकोक्तं सिद्धान्तचतुष्टयमपि कथितवान् । प्रामाण्यार्थं परम्परामाह—**प्रोक्तं भगवतेति** । नन्वेतद्गूढं परमसमाधिगम्यं कथमुक्तवान् । अत आह—**प्रीत इति** । पुत्रत्वादावश्यकमपि । ननु मायाज्ञानार्थं स प्रवृत्तो मायिकीं भगवल्लीलां तस्मा अनुक्त्वा किमिति सिद्धान्तं कथयति । तत्राऽऽह—**पुत्रायेति** । अमार्गेणाऽपि गच्छन्पुत्रो निवार्यते । मार्ग एवोपदिश्यत इति । किञ्च । सर्वाण्येव भूतान्ययं करोति । अतः सर्वार्थमेतद्द्वारा प्रकाशितवानित्याह—**भूतकृदिति** ॥ ४३ ॥

ब्रह्मणोऽभिप्रेतमपि कृतवानित्याह—

**नारदः प्राह मुनये सरस्वत्यास्तटे नृप ।**
**ध्यायते ब्रह्म परमं व्यासायाऽमिततेजसे ॥ ४४ ॥**

१ कारणभूतामिति ख. २ निशाम्येति ख. ३ स्वरूपप्रतिपाद्यमिति ख. ४ मेवेति ख. ग.



**नारदः प्राहेति** । व्यासस्य तादृशश्रवणयोग्यतायै चत्वारि विशेषणानि । तत्र प्रथमं चतुर्थयोग्यता । मुनिर्हि स्वस्वरूपं भगवत्त्वेन ध्यायति । दशलीलापरिज्ञानार्थं परब्रह्म ध्यायत इति । यस्तु पुरुषोत्तमं ध्यायति स हि तस्य दशविधां लीलां ज्ञातुं शक्नोति । **व्यासायेति** । वेदविस्तारकर्तृत्वेन सर्वबुद्ध्यनुरोधित्वात् व्यामोहिकां मायां ज्ञातुं शक्तः । **अमिततेजस इति** भगवत्स्वरूपं ज्ञातुं शक्तः । अलौकिकं हि तेजो ब्रह्मज्ञाने प्रयोजकं भवति । ब्रह्मज्ञानसाध्यं हि तत् । तथाभूतमत्र भगवज्ज्ञाने उपयुज्यते ॥ ४४ ॥

एवं परम्परामुक्त्वा सामान्यतः सर्वदूषणानि परिहृत्य प्रश्नत्वेन पृष्टानर्थान्निरूपयितुमाह—

**यदुताऽहं त्वया पृष्टो वैराजात्पुरुषादिदम् ।**
**यथाऽऽसीत्तदुपाख्यास्ये प्रश्नानन्यांश्च कृत्स्नशः ॥ ४५ ॥**

**यदुताऽहमिति** । उतेति दूषणव्यतिरेकेण केवलं प्रश्नरूपेणाऽपि पृष्टम् । तदपि पृष्टे मया वक्तव्यमिति तदुपाख्यास्ये । तत्र प्रश्ने सामान्यविशेषभेदेन रूपद्वयम् । तत्र सामान्यं रूपं वैराजात्पुरुषात्कथमेतज्जातमिति । विशेषस्तु तत्तद्भेदेन । तदाह—**प्रश्नानन्यांश्चेति** । **अन्यानित्यनेन** तदुपयोगिनोऽपि ये अन्येऽपृष्टाः । सर्वमेतच्चेति चकारेण तेऽप्युच्यन्ते । चकारेण ततोऽप्यन्ये अन्यैरपि कृताः । **कृत्स्नश इति** एकैकः प्रश्नो बहुधा निरूप्यत इत्युक्तम् ॥ ४५ ॥

**इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां**
**द्वितीयस्कन्धे नवमोऽध्यायः ॥ ९ ॥**

---

## दशमोऽध्यायः ।

**इत्याक्षेपसमाधाने निरूप्य हरिजीवयोः ।**
**उपपत्त्या तयोरेव रूपदेहाविहोदितौ ॥ १ ॥**
**दशधा ज्ञायते रूपं हरेरन्यत्त्रिधा मतम् ।**
**आध्यात्मिकादिभेदेन गुणतः कर्मतोऽपि हि ॥ २ ॥**

एवं पूर्वाध्याये उपदेशे पदार्थचतुष्टयं निरूप्य तृतीयव्यतिरिक्तानां पक्षाणां श्रुत्यादिषु प्रसिद्धत्वात्तद्विस्तारमनुक्त्वैकस्मिन्पदार्थे दश लीला अलौकिका इति ताः स्वरूपतो लक्षणतश्च निरूपयति । यद्यपि ते लौकिका दश पदार्था बहिर्मुखतया पुराणान्तरेषु सिद्धास्तथाप्यत्र भागवते ते न भवन्ति । किन्त्वेत इत्याह—

**श्रीशुक उवाच—**

**अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः ।**
**मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ॥ १ ॥**

१ तादृशलीलाश्रवणेति ग. २ अध्यात्मिकेति क. ग. घ. ३ त्वात्तद्विस्तारमिति ग.

**अत्रेति** । अत्र भागवते । आश्रयान्ताः सर्गादयो दश पदार्था निरूप्यन्ते[1] । अत्र सिद्धान्ते वा । एतेषां दशानामर्थस्तत्तत्स्कन्धे विस्तरेण कथयिष्यते । तथापि सामान्यतो निरूप्यन्ते[2] । तत्राऽशरीरस्य विष्णोः पुरुषशरीरस्वीकारः सर्गः । पुरुषाद्ब्रह्मादीनामुत्पत्तिर्विसर्गः । उत्पन्नानां तत्तन्मर्यादया पालनं स्थानम् । स्थितानामभिवृद्धिः पोषणम् । पुष्टानामाचार ऊतिः । तत्रापि सदाचारो मन्वन्तरम् । तत्रापि विष्णुभक्तिरीशानुकथा । भक्तानां प्रपञ्चाभावो निरोधः । निष्प्रपञ्चानां स्वरूपलाभो मुक्तिः । मुक्तानां ब्रह्मस्वरूपेणाऽवस्थानमाश्रय इति । प्रत्येकपदार्थे तु सर्गः कारणत्वेन तत्र भगवत्स्थितिः । विसर्गः कार्यत्वेन पूर्वमेव तत्र विद्यमानत्वम् । पटे तन्तुषु सिद्धे हि तन्तवः पटे प्रतीयन्ते । स्थानं सर्ववस्तुषु वस्तुस्वरूपेण मूलरूपेण च तत्तन्मर्यादारूपम् । पुष्टिः कार्यसिद्ध्यर्थं सर्वसमर्थस्य तत्र प्रवेशः । ब्रह्मज्ञानिनः प्रतीतिसिद्ध्यर्थं तत्र तादृशलीलाप्रदर्शनमूतिः । एवं पञ्चधा भगवदन्वयेन सर्ववस्तुषु भगवल्लीला । व्यतिरेकेणाऽपि पञ्चधा । तत्र कारणाद्भिन्नरूपेण घटरूपमभिन्नभावेन सतां धर्महेतुः प्रापञ्चिकोऽपि विधिविषयो भवतीति स्वरूपाद्व्यतिरिक्तो मन्वन्तराणि । स एव पुनर्भक्तिविषयत्वेन भगवत्सेवैकरूपेण धर्मेण लौकिकवैदिकव्यतिरिक्ततामापद्यत इतीशानुकथारूपो भवति । स एव पुनर्लौकिकवैदिकभक्तानां स्वरूपेच्छूनां परित्यागरूपेण पूर्वोक्तान्निरुणद्धीति निरोधरूपो भवति । तादृशोऽपि सन्नात्मानं परित्याजयित्वा तानपि तादृशस्वस्मात् परित्याजनरूपो भवतीति मुक्तिरूपो भवति । घटादिषु वा भगवतोऽसङ्गोदासीनरूपता मुक्तिः । आश्रयस्तु नव प्रकाराणामपि स्वरूपाणामाधारो भवतीति । एतदज्ञाने सर्वाण्येव शास्त्राणि व्याकुलानि भवन्ति । अतो भागवतशास्त्रं सर्वोद्धारकं सर्वनिर्वाहकं च ॥ १ ॥

नन्वत्र दश पदार्थाः कथं निरूप्यन्ते ? शास्त्रभेदप्रसङ्गात् । एकस्मिन् शास्त्रे ह्येकं प्रतिपाद्यं नतु समप्रधानतया बहूनि प्रतिपाद्यानि भवन्तीत्याह—

दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् ।
वर्णयन्ति महात्मानः श्रुतेनाऽर्थेन चाञ्जसा ॥ २ ॥

**दशमस्य विशुद्ध्यर्थमिति** । दशमोऽत्राऽऽश्रयः । तस्य विशेषेण शुद्धिः । सर्वत्रैव हि पदार्थे दश धर्माः सन्ति भगवद्रूपाः । तत्रैको ग्राह्योऽन्ये तु त्याज्याः । तत्र ते यदि न निरूपिता भवन्ति ग्राह्यत्याज्यविवेको न भवति । अतो यावद्दूरं गुणसम्बन्धः स त्याज्यः । भगवदाश्रये व्यभिचारापत्तेः[3] । अनन्याश्रयभङ्गश्च । तत उत्तरोत्तरा[4] एते धर्मा भवन्तीति यः पर्यवसानेऽवशिष्यते स ग्राह्य इति तुषादिवदाश्रयावरकत्वेनैते धर्माः प्रतिपाद्यन्ते । अत एतैर्निरूपितैराश्रयः पदार्थान्तरात्स्पष्टः शुद्धो निरूपितो भवति । अत एतेषामपि स्वरूपज्ञानार्थं लक्षणानि निरूपणीयानि । तदाह—**लक्षणमिति** । यथा गोः सास्ना असाधारणो धर्मस्तथा सर्गादीनां लक्षणमत्रोच्यते नतु स्वरूपम् । स्वरूपं त्वग्रे वक्ष्यामोऽग्रिमस्कन्धैः । तेषां लक्षणमेतदित्यत्र प्रमाणमाह—**वर्णयन्तीति** । तेषां भगवत्त्वात्तल्लक्षणमल्पेन वक्तुमशक्यमित्यत आह—**महात्मान इति** । महानात्मा अन्तःकरणं येषाम् । अन्तःकरणे भगवच्चरणारविन्दविक्रमो यदा तदा महत्त्वम् । तदैव हि भगवत्स्वरूपाणि

१ निरूप्यते इति क. निरूपयिष्यते इति ख. २ निरूप्यते इति घ. ३ मपीति ख. ४ ूत्तरीरिति ग. घ. ५ रूपधर्मभावेनेति क. ६ तादृशस्वस्मादिति क. ७ उत्तरोत्तरमेव इति ख. ८ वत्पर्यवसान इति ख.



ज्ञातानि भवन्ति । ननु भगवान् प्रमेयं तत्सामर्थ्येन ज्ञातं प्रमेयबलमेव भवति नतु प्रमाणस्येत्यत आह—**श्रुतेनाऽर्थेनेति** । यः सर्वत्र वेदादौ पदार्थः श्रुतः स सर्वोऽपि भगवदीय इति "**सर्वे वेदा यत्पदमामनन्ती**"ति वाक्यात् । "**शतꣳ शुक्राणि यत्रैकं भवन्ति। सर्वे होतारो यत्रैकं भवन्ती**"ति श्रुतेः । अनुग्राहकप्रमाणप्रमेयानामेकपर्यवसानविधानात् यत्र त्रयोऽप्येते पर्यवस्यन्ति स आश्रयः । एते त्रयोऽन्योन्यप्रवेशान्नव सर्गादीनां लक्षणरूपा भवन्ति । तत्र सर्गादिषु प्रमेयं लक्षणम् । कारणप्राधान्यात् । पुष्ट्यादिषु प्रमाणम् । ईशानुकथादिषु ज्योतींषीति । अर्थादेते उत्पत्तिस्थितिप्रलयात्मानो भवन्ति । उत्पत्तिर्हि कारणतः कार्यत आधारतश्च । स्थितिरपि पोषणतो विलासतो धर्मतश्च । प्रलयोऽपि अहन्ताममतारूपस्य ईशानुकथया लक्षणम् । सङ्घातस्य प्रलयो निरोधः[1] । न मुक्तजीवानां ब्रह्मणि प्रवेशलक्षणया । तस्माच्छ्रुतेनैवाऽर्थेन चकारात्तत्साधनयुक्त्या[2] च वर्णयन्तीत्यर्थः । तत्राऽप्यञ्जसा सामस्त्येन । नतु क्लिष्टकल्पनया किन्त्वार्जवेनैव ॥ २ ॥

तानि लक्षणान्याह—

भूतमात्रेन्द्रियधियां जन्मसर्ग उदाहृतः ।
ब्रह्मणो गुणवैषम्याद्विसर्गः पौरुषः स्मृतः ॥ ३ ॥
स्थितिर्वैकुण्ठविजयः पोषणं तदनुग्रहः ।
मन्वन्तराणि सद्धर्म ऊतयः कर्मवासनाः ॥ ४ ॥

**भूतमात्रेन्द्रियधियामिति** । भूतानि महाभूतानि । पञ्च तन्मात्राणि च । शब्दादीनि पञ्च । इन्द्रियाणि दश । धीर्बुद्धिः अन्तःकरणात्मिका चतुर्द्धा । एवं चतुर्विंशतितत्त्वान्युक्तानि भवन्ति । तेषामपि कारणत्वेन त्रयो गुणाः । तेषां वैषम्यात् गुणत्वेनाऽऽविर्भावात् । तेषामपि कारणं ब्रह्म । अतः परम्परया अष्टाविंशतिभेदा भवन्ति । तेषां जन्म सर्गः । सर्गोऽपि द्विविधः । प्रत्येकं समुदायेन च । वैषम्यं च चतुर्विधं भवति । ते हि प्रत्येकं विषमाः समुदायेऽनापि विषमा भवन्ति । त्रिविध एव वा । एवं सर्गस्त्रयस्त्रिंशच्चतुस्त्रिंशद्भेदभिन्नो वा भवति । विसर्गस्य लक्षणमाह—**विसर्गः पौरुषः स्मृत इति** । पुरुषाद्ये जातास्ते विसर्गशब्देनोच्यन्ते । तत्र प्रमाणं स्मृतिर्महताम् । पुरुषाल्लोकत्रयभेदेन तद्भेदा एकत्रिंशद्भवन्ति । "**अष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्या**" इति । स्थितिं लक्षयति—**वैकुण्ठस्य** विशिष्टो जयो यत्रेति । प्राकृतेषु चतुर्विंशतिधा । जीवब्रह्मभेदेन आत्मनि द्विधेति[3] षड्विंशतिभिन्ना । पुष्टिं लक्षयति—**तदनुग्रह इति** । तस्य वैकुण्ठस्य जितेषु स्वाधीनीकृतेषु योऽयमनुग्रहः तेषु मर्यादार्थं[4] सर्व पृथक्कृत्य शिष्टेष्वनुग्रहः । महाभूतेष्वात्मद्वये च नानुग्रहः । तत्र मर्यादैव । ऊतिसद्धर्मयोर्वासनाधर्मरूपत्वात् धर्मजनिता वासनेति विपरीततया लक्षयति—**मन्वन्तराणि सद्धर्म इति** । सतां धर्मस्त्रिविधो भवति कायवाङ्मनोभिः[5] कृतः । कायिको दशधा । वाचनिकश्च दशधा । इन्द्रियोपलक्षकत्वात् । मानसश्चतुर्द्धा । अन्तःकरणोपलक्षकत्वात् । इष्टं चिन्तयति, इष्टमावापोद्वापाभ्यां विचारयति, इष्टमाशंसते, इष्टं करिष्यामीत्यध्यवस्यति । एवमन्तःकरणे चतुर्द्धा सद्धर्मः । सर्वेन्द्रियैश्च सद्धर्मकरणम् । रेतोपाननिरोधेन

१ निरोधेनयुक्तेति ख. २ चकारात्साधनेति ख. ३ द्वेधेति क. घ. ४ मर्यादार्थं पृथगिति ख. ५ मनोभिः । तत्र कायिक इति ग.

धर्महेतुत्वं तयोः । आश्रयादानतृंप्तिश्रवननजाड्यतापनिर्बन्धदूरीकरणैः शब्दादिदोनेन च सद्धर्मः शरीरे दशधा । एवं चतुर्विंशतिभेदो भवति । ऊतीर्लक्षयति—**कर्मवासना इति** । कर्मजनिता वासनाः कर्मवासनाः । तत्र शरीरस्य कर्मेन्द्रियाणां च सम्बन्धिनः सद्धर्मा वासनाजनकाः । नतु ज्ञानेन्द्रियान्तःकरणानाम् । अतः पञ्चदशधा भवन्ति ॥ ३ ॥ ४ ॥

ईशानुकथां लक्षयति—

**अवतारानुचरितं हरेश्चाऽस्यानुवर्त्तिनाम् ।**
**पुंसामीशकथाः प्रोक्ता नानाख्यानोपबृंहिताः ॥ ५ ॥**

**अवतारानुचरितमिति** । ईशानुकथा द्विविधा । ईशस्य तदनुवर्तिनां च कथा । तदुभयं लक्षयति । तत्र ईशकथामाह—**अवतारानुचरितमिति** । सर्वभूतदुःखदूरीकरणार्थमाविर्भूतस्य भगवतश्चरित्रमीशानुकथा । अस्याऽनुवर्त्तिनामिति द्वितीयस्य लक्षणम् । यथा भगवान् सर्वदुःखनिवारकस्तथा ये दुःखनिवारकाः ते तदनुशब्देनोच्यन्ते । तत्रेशस्य हरेरिति विशेषणात् दुःखदूरीकरणं सुखप्रापणं चेति । अतो दुःखनिवारणे गुणभेदेन तदनुवर्त्तिनो नवधा भवन्ति । ईशस्याऽपि चरित्रं कर्मज्ञानभक्तिभेदैस्त्रिधा भवति । तथाऽनुवर्त्तिनोऽप्यविद्यालक्षणदुःखदूरीकर्त्तारो ज्ञानिन एकविधा भवन्ति । एवं दुःखदूरीकरणे त्रयोदश भेदाः । सुखप्रापणे दशधा सर्वेन्द्रियसुखप्रापकास्तदनुवर्त्तिन एकश्च भगवानित्यत्रमेकादश उभये चतुर्विंशतिः । तेषां प्रत्येकनिरूपणार्थं नानाख्यानोपबृंहिता इत्युक्तम् ॥ ५ ॥

निरोधं लक्षयति—

**निरोधोऽस्याऽनुशयनमात्मनः सह शक्तिभिः ।**
**मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः ॥ ६ ॥**

**अस्याऽनुशयनमिति** । अस्य भगवतः अनु पश्चाच्छयनं शक्तीः शाययित्वा तद्भोगार्थं स्वस्य शयनम् । अस्येति पुरोवर्त्ती आत्मत्वेन प्रकाशमानोऽङ्गुल्या निर्दिश्यते । आत्मनो देहस्य । सहेत्युभयत्र । देहशक्तयो द्वासप्ततिभेदा नाडीरूपाः । स्वस्य श्रियादयो द्वादश । शयनं च त्रिविधं जाग्रत्स्वप्नसुषुप्तिभेदेन । अतः सप्ताशीति भेदा भवन्ति । मुक्तिं लक्षयति—**हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिरिति** । अन्यथारूपं तत्त्वरूपं तस्य परित्यागः स्वरूपमेकम् । अवस्था द्विविधा सामान्यविशेषभेदेन । उभयत्र लक्षणं मिलितम् । तत्रापि पूर्वं तत्त्वपरित्यागः । तत्त्वान्यष्टाविंशतिः । एवमेकत्रिंशद्भेदा भवन्ति ॥ ६ ॥

आश्रयं लक्षयति—

**आभासश्च निरोधश्च यतश्चाऽध्यवसीयते ।**
**स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते ॥ ७ ॥**

१ प्राप्तिश्राव्यता इति ख. २ दाने चेति घ. ३ ऊति लक्षयतीति क. ऊतिर्लक्षयतीति ख. ४ निवारिका इति क. ५ श्यादय इति ख. श्रियाश्रय इति घ.



**आभासश्चेति** । आश्रयो द्विविधः । शास्त्रमार्गेणाऽऽश्रीयत इति प्रपत्त्या, सायुज्येन वा, उत्पत्तिस्थितिप्रलयैर्वा । क्रियया आश्रयणं पञ्चधा । ज्ञानेनाऽऽश्रयणमष्टधा । मनसो द्विःस्वभावत्वात्तस्योभयत्र सम्बन्धः । अन्तःकरणानां मध्ये अहङ्कारस्य नाऽऽश्रयहेतुत्वम् । एवं त्रयोदशधा भवति । एवमपि राशिद्वयात्मको भवति क्रियाज्ञानभेदेन । तत्र प्रथमतः क्रियया आश्रयं प्रतिपादयति—**आभासश्चेति** । आभास उत्पत्तिः । चकारात्तमश्च । आभासशब्देन च उत्पत्त्यादयः सर्वे । वस्तुतो मायिकानामेव न स्वस्येति विषयताया आश्रयत्वं बोधयति । निरोधस्तयोरेव । इदमाश्रयत्वं कर्तृत्वेन । तदेव क्रियया आश्रयत्वं भवति । आभासनिरोधावुत्पत्तिप्रलयौ । अन्ये विकारा एतदन्तर्भाविनः । **पूर्वरूपपरित्यागो द्वितीयस्याऽऽदिमस्तथा । उभावेकीकृतौ लोके वृध्यादिभिरुदीरिताविति** । **अध्यवसीयत इति** । यतो भगवतः सकाशान्न केवलमेते विकारा जायन्ते किन्तु प्रकाश्यन्ते च भगवतैव । चकारात्तेषु स्वभावोऽपि सम्पाद्यते । अतोऽस्ति भाति प्रियमिति त्रयं भगवत्कार्यं तत्कारणत्वेनाऽऽश्रयः । एतदेव तस्याऽधिष्ठानत्वम् । तदाह—**स आश्रय इति** । स भगवानाश्रय इत्यर्थः । यतः सच्चिदानन्दरूपत्वात्पूर्वोक्ता धर्मा भवन्ति । अयमेव भगवान् शास्त्रान्तरे नामान्तरेण व्यपदिश्यत इति सर्वसमन्वयार्थं नामान्तरमाह । परं ब्रह्मेति वेदे । परमात्मेति स्मृतौ । शब्द्यत एव । शब्दमात्रं भिद्यते । अर्थस्त्वेक एव । वेदचतुर्मुखवर्णव्युदासार्थं परशब्दः । जीवव्युदासार्थं द्वितीयः ॥ ७ ॥

एवं क्रियाश्रयं निरूप्य ज्ञानाश्रयं निरूपयति—**योऽध्यात्मिकोऽयमिति** द्वाभ्याम् ।

**योऽध्यात्मिकोऽयं पुरुषः सोऽसावेवाऽऽधिदैविकः ।**
**यस्तत्रोभयविच्छेदः स स्मृतो ह्याधिभौतिकः ॥ ८ ॥**

ज्ञानमग्रे निरूपयितुं ज्ञेयमत्र निरूप्यते । ज्ञेयं त्रिविधमाध्यात्मिकादिभेदेन । आत्मानमध्यध्यात्मम् । आत्मा देहस्तमधिष्ठाय ये तिष्ठन्तीन्द्रियान्तःकरणानि प्राणाश्च तेऽध्यात्मानः । तानधिष्ठाय यस्तिष्ठति शारीर आत्मा स आध्यात्मिकः । सोऽयमेव पुरुषो यः श्रोतृवक्तृत्वेन व्यवह्रियते । यस्त्वेतदन्तर्यामी स आधिदैविकः । अधिदेवानामिन्द्रियाधिष्ठातृदेवानां नियामकत्वेन तानधिष्ठाय यः स्थितः स आधिदैविकः । सोऽप्ययमेव । एक एवेन्द्रियाणीन्द्रियाधिष्ठातृदेवांश्चाऽधितिष्ठन् शब्दद्वयेनोच्यते । अतएव देवाधिष्ठानसामर्थ्यमन्तर्यामिण इति स एतस्याऽपि पूज्यत्वेन निरूप्यते । एकस्यैव उभयविधविच्छेदकर्त्ता शब्दद्वयप्रवृत्तिनिमित्तभूत आधिभौतिकः । भूतान्यधिष्ठाय ये तिष्ठन्ति रूपादयस्तेऽधिभूतास्तत्समुदायोऽवयवी आधिभौतिको देहः । देहे विद्यमान एवेन्द्रियाभिमानित्वमिन्द्रियप्रेरकत्वं च । नोचेदेक एवाऽऽत्मा । अस्योभयविच्छेदकत्वे महतां स्मृतिः स्मरणं प्रमाणम् । तदाह—**स्मृत इति** ॥ ८ ॥

एवं ज्ञेयं निरूप्य तद्विषयकज्ञानाधारत्वेनाऽऽश्रयं निरूपयति—

**एकमेकतराभावाद्यदा नोपलभामहे ।**
**त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः ॥ ९ ॥**

१ ज्ञान स्थित इति ख. २ स्मृतिः प्रमाणमिति ख.

**एकमेकतराभावादिति । त्रितयं तत्र यो वेद स आश्रय इति ।** ननु जीवोऽपि त्रितयं वेद । अन्तर्याम्यपि । अत आश्रयलक्षणमतिव्यापकमित्याशङ्क्याऽऽह । एकं त्रयाणां मध्ये एकतरस्य स्वातिरिक्तस्य अभावाद्धेतोः एकं नोपलभामहे किन्तु भावेनैवोपलभामहे । एकमप्यन्ययोर्भावेन उपलभ्यते नत्वभावेन । तदा "**सापेक्षमसमर्थं भवती**"ति न तेषामन्यतरस्त्रितयं ज्ञातुं शक्तः । अन्तर्याम्यपि स्वव्यापारे व्यापृतस्त्रितयमध्ये प्रविष्टो न त्रितयं जानाति । यथा देहजीवयोस्त्रितयाज्ञानं सर्वजनीनं तथाऽन्तर्यामिणोऽपि ज्ञेयम् । एवं सति यस्त्रितयं वेद स आश्रयः । तस्य नामान्तरमप्याह—**आत्मेति ।** अतति व्याप्नोतीत्यात्मा । अत एवाऽस्य लीलात्वादात्मा विभूतित्वेन गणितः । "**अहमात्मा गुडाकेशे**"ति । इदमेकं भगवतो रूपम् । भगवानेव वा ज्ञानाश्रयत्वे य आत्मत्वेन निरूपितः । ननु तस्याऽपि स्वज्ञानाभावात् स्वाधिष्ठातृज्ञानाभावाच्च तस्याऽप्यन्य आश्रयः स्यादत आह—**स्वाश्रय इति ।** स तु स्वात्मानमेवाऽऽश्रित्य तिष्ठति न तस्याऽऽश्रयान्तरापेक्षा । अनेन स्वप्रकाशः स इत्युक्तं भवति ॥ ९ ॥

एवं दश लक्षणानि निरूप्य त्रितयनिरूपणार्थं पूर्वोक्तं विराजमुपपत्त्या सह निरूपयति—

पुरुषोऽण्डं विनिर्भिद्य यदाऽसौ स विनिर्गतः ।
आत्मनोऽयनमन्विच्छन्नपोऽस्राक्षीच्छुचिः शुचीः ॥ १० ॥
तास्ववात्सीत्स्वसृष्टासु सहस्रं परिवत्सरान् ।
तेन नारायणो नाम यदापः पुरुषोद्भवाः ॥ ११ ॥

**पुरुषोऽण्डमिति ।** "**यावानयं वै पुरुष**" इत्यत्र नामरूपे तस्याऽऽक्षिप्ते जीवतुल्यतया । तत्र जीववैलक्षण्यं निरूपयितुं स्वेच्छयैव तस्य नाम इन्द्रियाणि चेति जीवसाम्यं निराकरोति । तत्र प्रथमं नामनिरुक्तिमाह—**पुरुषोऽण्डमिति** द्वाभ्याम् । पुरुषो विराट् । ब्रह्माण्डं विनिर्भिद्य कटाहात्पृथक्कृत्य नारिकेलगोलकवत् यदा विनिर्गतः स्वे सर्वकार्ये समर्थो जातः । अथवा । अण्डमेव वा भित्त्वा निर्गतः । तदा अण्डे न जलाद्यावरणव्यवस्था । पुराणान्तरानुरोधेन परमण्डे स्थित इति व्याख्यायते । वस्तुतस्तु कटाहं विनिर्भिद्यैव निर्गतः । अत एवाऽऽत्मन आश्रयापेक्षा । पूर्वमण्डमेवाऽऽश्रयत्वेन स्थितम् । तस्मिन् भग्ने आश्रयान्तरमन्विच्छन् अपोऽस्राक्षीत् । स्वयं शुद्धो ज्ञानपूर्णो भगवदवतारः स्वाश्रयं शुद्धमेव सृष्टवान् । सर्वस्याऽपि शुद्धिर्जलेनेति जलं सृष्टवान् । अपामपि शुद्धिः फेनतरङ्गादिराहित्येन । ततस्तास्वेवाऽप्सु स्वसृष्टास्ववात्सीत् । न ह्यन्य एवमपः स्रष्टुं तत्र स्थातुं वा शक्नोति । स्वसृष्टास्वित्यनेनाऽपां महत्त्वेन स्वमहत्त्वं बोधयन् जीवाद्यन्तराभावेन च तत्कृतं भयमशुद्धिं च निवारयति । अत्र वासस्तूष्णींभावेन । **सहस्रं परिवत्सरानिति ।** स नारायणावतारो ब्रह्ममानेन सहस्रपरिवत्सरमात्रं तिष्ठतीति ज्ञायते । शयनार्थं वा । सहस्रपरिवत्सरं शयनं कृत्वा पश्चात् सृष्टिं करोति । एतावान् कालः स्वदेहे निष्पाद्यमानानां सर्वेषां जीवानां सर्वनिर्वाहार्थं । एवं सति तस्य नारायणेति नाम जातमित्याह—**तेन नारायणो नामेति ।** नारमयनं यस्येति नारायणः । नन्वस्य जलमयनं तत्कथं नारायण इति । तत्राऽऽह—**यदापः पुरुषोद्भवा इति ।** यद्यस्मादापः पुरुषशब्दवाच्यान्नरादेवोत्पन्नाः । पूर्वं हि पुरुषः । स एव नारायणेपूर्वभावित्वान्नर इत्युच्यते । भगवदा-

१ भयत्वेनात्मत्वेनेति ख. २ स सर्वेति ग. ३ कार्यसमर्थ इति ख. ४ ब्रह्ममावेनेति ख. ५ नारायणः पूर्वेति ख.



वेशात् । तस्माज्जाता आपः तेन नाराः । ता अयनं यस्येति भवत्येव नारायणः । एवं स्वनिर्मितेनैव कार्येण स्वस्य नामानि भवन्तीति न प्राकृततुल्यता ॥ १० ॥ ११ ॥

किञ्च । अस्मादपि हेतोर्न प्राकृततुल्यतेत्याह—

द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ॥ १२ ॥

**द्रव्यं कर्म च कालश्चेति ।** द्रव्यमधिभूतं महाभूतादि । कर्माऽध्यात्ममदृष्टादि । काल आधिदैविको नियन्ता सर्वनिमित्तभूतः । स्वभावः परिणामहेतुः । जीवो भोक्ता । उपादानं निमित्तं च क्षोभको हेतुरेव च । भोक्ता चेति समस्तार्थे समर्थाः कृपया हरेः । तदाह—**यदनुग्रहत इति ।** एवकारेण जीवानां विशेषाकारेण भगवत्कृपाधीनत्वं बोधितम् । चकारादन्यान्यपि साधनानि दण्डादीनि भगवत्कृपयैव । सन्ति आविर्भूतानि तिष्ठन्ति । कार्यक्षमाणि च भवन्ति । अन्यथाऽव्यक्तमेतानपकर्षति । यथा व्याघ्रः पशुम् । तदाह—**न सन्तीति ।** नाऽत्र भगवतः क्रोधोऽप्यपेक्ष्यते । किन्तूपेक्षामात्रेणाऽव्यक्तस्तानुपसंहरति । अनेन "**यावान् कल्प**" इत्यादिषु ये कालादय आक्षिप्तास्ते सर्वे समाहिता ज्ञेयाः ॥ १२ ॥

किञ्च । भगवाननन्तः कथं सृष्ट्यादि करोतीति न शङ्कनीयम् । यतस्तस्य सृष्टिप्रकार एवमित्याह—**एको नानात्वमन्विच्छन्नित्यादिभिः ।**

एको नानात्वमन्विच्छन् योगतल्पात्समुत्थितः ।
वीर्यं हिरण्मयं देवो मायया व्यसृजत्त्रिधा ॥ १३ ॥

भगवानेक एव जले शयानोऽनेकरूपो भविष्यामीतीच्छां कृतवान् । ततः **शयानस्तल्पादुत्थितो** यथा पुरुषः शय्यात उत्तिष्ठति । ततस्तस्य स्वात्मनो बहुधेच्छायां तस्य वासुदेवस्य मायारूपा या भार्या तया हेतुभूतया तस्याः सन्निधिमात्रेणैव स्वस्मिन्नेव विद्यमानं बीजात्मकं **वीर्यं** सच्चिदानन्दरूपं **त्रिधा** सद्रूपचिद्रूपानन्दरूपभेदेन त्रिधा असृजत् ॥ १३ ॥

भेदत्रयमपि गणयति—

अधिदैवमथाऽध्यात्ममधिभूतमिति प्रभुः ।
यथैकं पौरुषं वीर्यं त्रिधाऽभिद्यत तच्छृणु ॥ १४ ॥

प्रथमतः अधिदैवं आनन्दांशभूतम् । अथ तदनन्तरं अध्यात्मं चिद्रूपम् । ततः अधिभूतं सद्रूपम् । कथं कृतवानित्यपेक्षायामाह—**प्रभुरिति ।** सर्वसमर्थः । इतिशब्दः प्रकारे । यथैतत्त्रयं निर्मितं तथाऽन्येऽपि प्रकारा निर्मिता इति । अनेन सर्वे त्रिविधा उद्धरिताः । प्रकारविशेषेणाऽपि त्रैविध्यं जातं निरूपयति—**यथैकमिति ।** प्रकारव्यतिरेकेणेच्छयैव त्रैविध्यं भवति तथापि प्रकारेणाऽपि निरूप्यते । यथा एकमभिद्यत । अखण्डस्य यथा भेदस्तथा शृण्वित्यर्थः ॥ १४ ॥

१ क्रोधोऽपेक्ष्यत इति ख. २ अव्यक्तं तानुपेति ख. ३ प्रकारमेवमिति ग. ४ जीवात्मकं ग. ५ आधिदैवमिति ग. ६ जातमिति ख.

तदेवाऽऽह—

अन्तःशरीर आकाशात्पुरुषस्य विचेष्टतः ।
ओजः सहो बलं जज्ञे ततः प्राणो महानसुः ॥ १५ ॥

**अन्तःशरीर इति** । शरीरमध्ये हृदयस्थाने य आकाशस्तस्मादाकाशाद्धेतोः पुरुषश्चेष्टां कृतवान् । निरवकाशश्चेष्टितुं न समर्थ इत्यधिकरणेऽप्याकाशस्य हेतुत्वम् । पुरुषस्य नारायणस्य । विचेष्टतः शरीरमध्य एव चेष्टां कुर्वतः । इदं तु तस्यैव शक्यम् । तदा तस्य चेष्टात इन्द्रियान्तःकरणदेहानां सामर्थ्यानि जातानीत्याह—**ओजः सहो बलं जज्ञ इति** । ततः तदनन्तरं प्राणो जातः । तस्य प्राणस्य वायुत्वं निराकरोति—**महानिति** । महत्तत्त्वांशभूतः सूत्रात्मा । न तु भौतिको वायुः । अन्येऽपि प्राणाः सन्तीति विशेषणमाह—**असुरिति** । सुरित्यनुकरणशब्दः श्वासवायुः । स न भवतीत्यसुः । भौतिकादतिरिक्त इति यावत् ॥ १५ ॥

भगवच्चेष्टामात्रेणैवेन्द्रियादिशक्तयः प्राणाश्च जाताः । तस्य प्राणस्य माहात्म्यमाह—

अनु प्राणन्ति यं प्राणाः प्राणन्तं सर्वजन्तुषु ।
अपानन्तमपानन्ति नरदेवमिवाऽनुगाः ॥ १६ ॥

**अनु प्राणन्तीति** । पूर्वं राजसाहङ्कारात्प्राणादीनामुत्पत्तिरुक्ता । ते आधिदैविकरूपाः[2] । एते त्वाध्यात्मिकरूपाः । यं प्राणन्तमनु[3] प्राणन्ति कार्यं कुर्वन्ति । प्राणाः इन्द्रियाणि । तत्रापि न स्वरूपस्थमनु किन्तु प्राणन्तमनु । क्रियाया अपि क्रियापेक्षा सूचिता । तदा तस्य सर्वत्रैव तथात्वं जातमित्याह—**सर्वजन्तुष्विति** । आब्रह्मतृणस्तम्बेषु । अपानन्तमपगच्छन्तमनु इन्द्रियाण्यप्यपगच्छन्ति । तस्योपलक्षकत्वं वारयति दृष्टान्तेन—**नरदेवमिवाऽनुगा इति** । राजानमनु सेवका इव ॥ १६ ॥

एवं तस्य माहात्म्यमुक्त्वा ततोऽग्रे सृष्टिमाह—

प्राणेन क्षिपता क्षुत्तृडन्तरा जायते प्रभोः ।
पिपासतो जक्षतश्च प्राङ्मुखं निरभिद्यत ॥ १७ ॥
मुखतस्तालु निर्भिन्नं जिह्वा तत्रोपजायत ।
ततो नानारसो जज्ञे जिह्वया योऽधिगम्यते ॥ १८ ॥

**प्राणेन क्षिपता क्षुत्तृडिति** । प्राणः करणम्[4] । क्षिपता क्षेपयुक्तेन । अन्तःस्थितानि वस्तूनि मलादीनि क्षिपता इतस्ततो विक्षिपता । क्षुत्तृट् अग्निविशेषावित्येके । मृत्युरित्यपरे । ऊष्मविशेष इत्येके । भगवानेव वैश्वानररूपः क्षुत्तृड्वृत्तिद्वयात्मकः । अन्तरा उदरमध्ये । ततस्तद्वशात् पिपासा जिघृक्षा च जाता । ततो बहिःस्थितपदार्थान् जलान्नरूपान् । पिपासतो जक्षतश्च पातुमिच्छोर्भोक्तुमिच्छोश्च । प्राक् पूर्वभागे । पुरुषेणैव हि विभज्यन्ते दिशः । मुखं विवरात्मकम् । निरभिद्यत भिन्नं जातम् । तथापि न स्फुटितमिव किन्तु द्वारमिव । तत्रैव मुखे विवरात्मके । तस्मादेव मुखाद्धेतुभूतात् । तालु लोके जिह्वेति प्रसिद्धं तन्मध्ये निर्गतम् । उपर्यधो देवा अंशत एकीभूताः पदार्थादनार्थे[1] तालुरूपेण निर्गता इत्यर्थः । तत्र जिह्वेन्द्रियं उपजायत आविर्भूतमित्यर्थः । तत इन्द्रियाधिष्ठितमुत्पत्त्यनन्तरं वा । नानारसो जज्ञे मधुरादिः । **सर्वोऽपि विषयस्तत्र जायते कारणस्वतः** । बहिःस्थितो वा तस्येच्छावशतो जायते रसः । अनेनाऽन्नादीनामप्येवैव व्यवस्था ज्ञापिता । अन्तःस्थितिपक्षेऽपि तालुव्यापारेणैव तालुद्वारा क्षुत्तृट्क्षोभकं[2] भवतीति मुखादिनिर्माणम् । उपदीका(?) गजादिवत् । बहिर्विषयपक्षे तु न सन्देहः । रसाः शृङ्गारादयोऽपि भवन्तीति तद्व्यावृत्त्यर्थमाह—**जिह्वया योऽधिगम्यत इति** । अधिगम्यते ज्ञायते, विषयतया स्वीक्रियत इति वा ॥ १७ ॥ १८ ॥



ततस्तस्मिन्नेव स्थान इन्द्रियान्तरं जातमित्याह—

विवक्षोर्मुखतो भूम्नो वह्निर्वाग्व्याहृतं तयोः ।
जले वै तस्य सुचिरं निरोधः समजायत ॥ १९ ॥
नासिके निरभिद्येतां दोधूयति नभस्वति ।
तत्र वायुर्गन्धवहो घ्राणो नसि जिघृक्षतः ॥ २० ॥

**विवक्षोरिति** । वेदरूपां वाणीं वक्तुमिच्छोः । मुखतः विवरात्मकाद्धेतुभूतात् । भूम्नो व्यापकस्य आकाशरूपस्य । मुखत इत्येतस्य विशेषणम् । आकाश एव यतः शब्दो भवति । यथा तालुरूपे जिह्वा तिष्ठति तथा मुखमध्ये य आकाशस्तस्मिन्वागिन्द्रियं तिष्ठतीत्यर्थः । तत्र प्रथमं वह्निर्देवता वाक् स्त्रीरूपा न भर्तारं विना निर्गच्छतीति ततोऽत्र[3] देवता प्रथमं निरूपिता । ततो वाक् इन्द्रियम् । ततोऽन्यत्राऽपि प्रथमं देवता पश्चादिन्द्रियमिति ज्ञापितम् । **व्याहृतं तयोरिति** । तयोः सम्बन्धि व्याहृतं वाग्व्यापारो देवताधिष्ठितेन्द्रियसाध्यो न केवलसाध्यः । एवमन्यत्राऽपि । ततश्चालनेनाऽन्तर्वायुरुद्गतः । स चाऽन्तःपूर्णः क्षोभं जनयतीति तन्निवृत्त्यर्थं नासिके नासापुटे निरभिद्येताम् । तस्य बहिःपदार्थग्रहणावश्यकत्वाभावेऽप्यन्तःस्थितवायोरेव निमित्तत्वमाह—**दोधूयति नभस्वतीति** । नभस्वान्वायुस्तस्मिन्नत्यन्तं कम्पमाने सति । अथवा नासिकायां चलनात्मको वायुरेव गोलकरूपः । तत्र वायुर्देवता । गन्धं वहतीति गन्धवहो वायुर्घ्राणो वा । उभयोर्मध्ये विशेषणं गन्धस्य विषयस्य बोधकम् । घ्राण इन्द्रियम् । **नसि जिघृक्षत इति** । नासिका गोलकस्थानीया । गोलकाधाररूपा वा । गन्धं जिघृक्षतः आघ्रातुमिच्छतो भगवतः । निरभिद्यत उद्गतं जातं गृहीतुमिति यथायोग्यं क्रियां अनुसन्धेयाः[4] ॥ १९ ॥ २० ॥

एवं मुखनासिके उपपाद्य अक्षिणी निरूपयितुमाह—

यदात्मनि निरालोकमात्मानं च दिदृक्षतः ।
निर्भिन्ने अक्षिणी तस्य ज्योतिश्चक्षुर्गुणग्रहः ॥ २१ ॥
बोध्यमानस्य ऋषिभिरात्मनस्तज्जिघृक्षतः ।
कर्णौ च निरभिद्येतां दिशः श्रोत्रं गुणग्रहः ॥ २२ ॥

---

१ निर्विकाशश्चेष्टितुमसमर्थ इति ख. २ दैविकभूताः ग. ३ प्राणमनु इति ख. ४ कारणमिति ख.

१ पदार्थोदनार्थमिति ग. २ क्षोभकमिति ख. ३ तत्रातो देवतेति ख. ४ क्रियानुसन्धेयेति ख.

**यदाऽऽत्मनि निरालोकमिति** । आसीदित्यर्थः । आत्मा देहः । तत्र कीदृशोऽहमिति यदा न ज्ञातवान् । कीदृशे च स्थाने तिष्ठामि । अन्यच्च स्वसम्बन्धिनं दिदृक्षतः । अक्षिणी निर्भिन्ने । चक्षुरादीनामालोकापेक्षा नाऽस्तीति पूर्वमेवोक्तम् । तस्यं तु मायामोहो नाऽस्तीति न मायाऽकृतप्रतिबन्धः । निरालोकस्त्वदर्शनकृतः । तत्र देवता ज्योतिः । सूर्य इति यावत् । सूर्यस्य ज्योतीरूपं आधिदैविकम् । आध्यात्मिकं तु मण्डलं सूर्यशब्दवाच्यम् । किरणास्त्वाधिभौतिकाः । अतोऽत्र आधिदैविकमेवेति ज्योतिःशब्दप्रयोगः । चक्षुरिन्द्रियम् । गुणो रूपम् । पञ्चानां मध्ये रूपस्यैव प्रसिद्धत्वादेवतेन्द्रियाभ्यां गुणज्ञानं भवतीत्यर्थः । तदनन्तरं भगवन्तं महापुरुषं ऋषयो मन्त्राः स्तोतुमारब्धवन्तस्तदा । ऋषिभिः स्तूयमानस्य साक्षात्त्वं परब्रह्मेति बोध्यमानस्य । आत्मनः पूर्वोक्तस्य । देहव्यावृत्त्यर्थं वा । तज्जिघृक्षतः तैरुच्यमानं स्वरूपं गृहीतुमिच्छतः । कर्णौ निरभिद्येतां गोलकरूपे । दिशो देवताः । श्रोत्रमिन्द्रियम् । गुणग्रहः शब्दग्रहणम् । शब्दस्य पूर्वसिद्धत्वात् ॥ २१ ॥ २२ ॥

एवं त्रीणीन्द्रियाणि द्विगोलकानि निरूपितानि । व्यापकमिन्द्रियमाह—

वस्तुनो मृदुकाठिन्यं लघुगुर्वुष्णशीतताम् ।
जिघृक्षतस्त्वङ्‌ निर्भिन्ना तस्यां लोम महीरुहाः ॥ २३ ॥

**वस्तुन इति** । वस्तुनो घटपटादेर्लघ्वादीन् जिघृक्षतः त्वक् निर्भिन्ना । तस्यां लोम इन्द्रियम् । महीरुहा देवाः । लघु सूक्ष्मम् । लघुशब्दो धर्मवाची धर्मिणमपि प्रचुरप्रयोगाद्बोधयति । तदभिप्रायेण लाघवादिशब्दाः । अत एव चातुर्यादौ लाघवशब्दः । अत्र लघुशब्दः स्पर्शविशेषवाची । यथा सूक्ष्मवायुस्पर्शः । मृदुत्वं तु गाढस्पर्शे नाऽवगम्यते । सर्वत्र स्पर्शविधाने लघुस्पर्श एव विधीयते कर्णादिषु । काठिन्यं कठिनस्पर्शः पाषाणादिषु । मृदुस्तु कोमलः । पिच्छिलताऽपि तस्यैव भेदः पट्टवस्त्रादिषु । गुरुत्वमपि स्पर्शः । यद्यपि शास्त्रान्तरे भिन्नो धर्म उत्तोलनादिनाऽवगम्यते । तथापि सोऽस्मिन् शास्त्रे स्पर्श एव । स्पर्शसहितेनैव तोलनादिनाऽवगमात् । स्पर्शरहितं तोलनमनुमानम् । अन्यथा कारणे गुरुत्वस्याऽभावात् कार्ये कथं भवेत् । बहुत्वं तु महत्त्वबोधकमेव । न गुरुत्वबोधकम् । केचित्तु शिथिलावयवयोगेन लघुत्वं श्लिष्टावयवयोगेन गुरुत्वमाहुः । तदप्यसङ्गतम् । स्पर्शातिरिक्तस्य संयोगस्य निरूपयितुमशक्यत्वात् । स्पृष्टमेव संयुक्तमुच्यते लोके । अन्यथा स्पर्शातिरेकेण चाण्डालादिसंयोगे प्रायश्चित्तमन्यत्स्यात् । तस्मात्प्रशिथिलावयवसंयोगादिनिरूपणेऽपि लघुत्वं गुरुत्वं स्पर्श एव । श्लेषस्तु विभागाभाव एव । अनेनाऽपि संयोगो नाऽतिरिच्यते । संयुक्ता अप्यङ्गुलयश्चतस्रो भवन्ति । संश्लेषे तु न तथा यथा मिलिताङ्गुलेः । तस्मान्न स्पर्शातिरिक्तः संयोगः । न च गुरुत्वादयः । उष्णं ईषदुष्णस्पर्शः । अत्युष्णस्य स्पर्शायोग्यत्वात् । त्वचो दाहसम्भवात् । शीतता शीतस्पर्शः । अथवा । लघुकाठिन्यं लघुकठिनयोर्भावः । लाघवं काठिन्यं च । मृद्वाद्यन्ते तल्प्रत्ययः सर्वत्रैव सम्बध्यते । द्वन्द्वान्ते श्रूयमाणत्वात् । ततो मृदुत्वं गुरुत्वमुष्णत्वं शीतत्वमिति । यः शब्दो यद्धर्मपुरःसरेण धर्मिणि प्रवर्तते तस्य भावः स एव धर्मः । अतः शब्दप्रवृत्तिनिमित्तमेव भाव इति केचित् । सर्वत्राऽनुस्यूतः सत्तापरपर्यायः । तदंशा एव सर्वैः शब्दैरुच्यन्त इति सर्वशब्दवाच्यो भाव इति शास्त्रार्थः । अभावशब्देऽपि निषेधपूर्वको भावः प्रतीयते । अन्यथा अभावो निःस्वभावः स्यात् । अत्र त्वगिन्द्रिये

१ वायुः स्पर्श इति ख. २ अत्युष्णस्पर्शेति ख.



भेदद्वयमस्ति । कण्डूः स्पर्शश्च तयोर्विषयः । बहिःस्पर्श एव कण्डूः । अन्तस्तु स्पर्शोऽपि । स च लोमशब्दवाच्यः कण्डूग्राहकः । तत्र महीरुहा देवाः । अधिष्ठानं तूभयोरेकम् ॥ २३ ॥

द्वितीयमाह—

तत्र चाऽन्तर्बहिर्वायुस्त्वचाऽऽलब्धगुणो वृतः ।
हस्तौ रुरुहतुस्तस्य नानाकर्मचिकीर्षया ।
तयोस्तु बलवानिन्द्र आदानमुभयाश्रयम् ॥ २४ ॥
गतिं जिगीषतः पादौ रुरुहातेऽभिकामिकाम् ।
पद्भ्यां यज्ञः स्वयं हव्यं कर्मभिः क्रियते नृभिः ॥ २५ ॥

**तत्र चाऽन्तर्बहिर्वायुरिति** । चकारेण त्वचो लोमव्यतिरिक्तस्थानमप्यस्त्यन्तरिति सूचितम् । तत्र वायुर्देवता । अन्तर्बहिरिति पूर्वदेवताया अधिकविषयत्वं सूचितम् । **त्वचाऽऽलब्धगुण इति** त्वगिन्द्रियेण स्पर्शग्रहणम् । अत्र देवतायाः प्राधान्यम् । अन्यथायोगे वायुग्रहणेन गृहीतं न स्यात् । **वृत इति** । अन्तर्बहिरावृतो वायुरित्यर्थः । अनेन बहिर्वायुर्न देवतेत्युक्तम् । एवं त्वचं निरूप्य ज्ञानेन्द्रियाणि समाप्य कर्मेन्द्रियाणि निरूपयति—**हस्तौ रुरुहतुरिति** । नानाकर्माणि कर्तव्यानीतीच्छया । अत्र प्ररोहात्मकावेताविति शाखारूपत्वं सूचितम् । एतयोरुभयोर्गोलकद्वयम् । तयोस्तु बलवानिन्द्रः । तयोर्हस्तयोर्बलमिन्द्रियम् । इन्द्रो देवता । आदानं कर्म । उभयाश्रयं देवतेन्द्रियाश्रयम् । पूर्ववन्न देवताप्राधान्यम् । अभिकामिकां गतिं जिगीषतः पादौ रुरुहाते । पद्भ्यामितीन्द्रियम् । यज्ञो देवता स्वयमिति विष्णुः । अभिकामिका अभीष्टा नानादेशगमनेच्छाविषया । तादृशस्य पादौ हस्ताविव शाखारूपेण रुरुहाते । अपदानामपि गतिरस्ति । चतुष्पदामपि । तथापि द्विपदां यथा सर्वत्र गमनं न तथाऽन्येषामिति पादद्वयकामना । ननु विराट्पुरुषस्य स्थिरत्वात् किं पद्भ्यां कार्यम् । अस्थिरत्वे वा लोकेषु व्याकोपः स्यात् । रूपान्तरकल्पनायां च प्रक्रमविरोध इत्याशङ्क्याऽऽह—**स्वयं हव्यं कर्मभिः क्रियते नृभिरिति** । हव्यस्य पुरोडाशादेर्भगवत्त्वं निरूप्यते—**स्वयं हव्यमिति** । तथा सति तस्याऽवश्यं फलसाधकत्वं वक्तव्यम् । यतः कारणान्नृभिः कर्मभिस्तद्धव्यं क्रियते । तदेव पुरोडाशादिकं देवतोद्देशेनाऽग्नौ प्रक्षिप्तं सत् यागरूपतामापद्य तं जीवं गृहीत्वा लोकान्तरे गच्छति । तत्रावश्यं गत्यर्थं पादावपेक्ष्येते । अन्यथा जीवगतौ कर्मरूपतया वा गमनसाधकत्वे यत्र क्वचिद्गमनं स्यात् । न च तद्रूपान्तरम् । अस्यैव तत्राऽऽविष्टत्वात् । न वा एतदधिष्ठातृदेवता । तस्या अभावात् । भावे वा तस्या एतदेकनिष्ठत्वात् । यज्ञस्यैव हि स्वर्गबोधकत्वात् । "स्रुती विचक्रमे विष्वङ्‌"ङिति वाक्याच्च । किञ्च । भूमावेव यागो हविश्च क्रियते । पादौ चेन्न भवेतां तद्रूपा भूमिरेव न भवेत् । स्वर्गादिगतिश्च । अतः स्वयमेव यज्ञः स्वयमेव हव्यं चेत्यभीष्टगतिसिद्ध्यर्थं पशुपुत्रस्वर्गादिभावापत्त्यर्थं पादावपेक्ष्येते । किञ्च । यज्ञो हि पादयोरधिष्ठात्री देवता । तदभावे सोऽपि न भवेत् । स च लोके प्रसिद्धः । तस्यालौकिकत्वेऽपि तदर्थं क्रियमाणपुरोडाशादेः प्रत्यक्षसिद्धस्याऽपलापाशक्तेः । अतो लोके नृभिर्द्रव्यात्मकयागकरणात् तदन्यथानुपपत्त्या भगवतः पादौ वर्तेते इति सिद्धम् ॥ २४ ॥ २५ ॥

१ स्यात् । अन्तरिति ख.

आदौ वाग्लक्षणमेकं कर्मेन्द्रियं निरूपितम् । हस्तपादाविदानीं निरूपितौ । अवशिष्टे निरूपयति—**निरभिद्यतेति** द्वाभ्याम् ।

**निरभिद्यत शिश्नो वै प्रजानन्दामृतार्थिनः ।**
**उपस्थ आसीत् कामानां प्रियं तदुभयाश्रयम् ॥ २६ ॥**

**शिश्नो** गोलकं तस्य रूपान्तराभावात्तदभावमाशङ्क्य वै इति निश्चयमाह । कारणे चेत्तन्न स्यात् तद्बीजे कार्ये पुरुषादिषु तत्कथं भवेत् । अतस्तत्र सन्देहो न कर्तव्य इत्यर्थः । प्रजारूपो योऽयमानन्दः सम्भोगसुखं प्रजाजनको वा । प्रजा च आनन्दश्चेति अमृतं च वा । "**प्रजामनु प्रजायन्ते तदु ते मर्त्याऽमृतमि**"ति श्रुतेः । अमृतं मोक्षो वा । ऋणत्रयापाकरणसाध्यः । "**नाऽपुत्रस्य लोकोऽस्ती**"ति च । "**अष्टाशीतिसहस्राणी**"त्यादिवाक्यान्यूर्ध्वरेतसां प्रशंसापराणि । त्रैविधवृद्धानां तु वेद एव प्रमाणम् । अतो मोक्षो वा अमृतम् । त्रितयप्रेप्सोरिन्द्रियं निर्गतमित्यर्थः । उपस्थ इन्द्रियम् । कामानां प्रियं स्त्रीसम्भोगानां सम्बन्धि यत्सुखं तदुभयाश्रयं देवतेन्द्रियाश्रयम् । अथवा । कामानां स्थानं पूर्वोक्तमासीदित्यर्थः । कामो देवता । तदभिमानी इत्येके । काम एव देवतेति मुख्यः सिद्धान्तः । तदभावे केवलेन्द्रियेण सुखाजननं प्रत्यक्षसिद्धम् ॥ २६ ॥

अवशिष्टमाह—

**उत्सिसृक्षोर्धातुमलं निरभिद्यत वै गुदम् ।**
**ततः पायुस्ततो मित्र उत्सर्ग उभयाश्रयः ॥ २७ ॥**

**उत्सिसृक्षोरि**ति । धातूनां मलम् । धातवो हि त्वगादयो मज्जान्ताः । ते कालादिना निरन्तरं पच्यन्ते । अन्नादीनां तु[1] पोषकत्वम् । अतस्तत्पोषणेऽन्नादिभिः क्रियमाणे रसस्य तत्र प्रवेशे योऽसारो भागोऽवशिष्यते तन्मलं न त्वन्नस्य । तस्य स्वकार्यकरणात् । अतो धातोरेव मलम् । गुदमिति पायुस्थाने मांसविशेषः । स रोगादिना निर्गतः प्रत्यक्षो भवति । तदनन्तरं पायुस्तत्रेन्द्रियम् । मित्रो देवता । न हि सर्वमित्रव्यतिरेकेण तादृशे कश्चिद्देवो भवेत् । उत्सर्गः कर्म । उभयाश्रयः पूर्ववत् ॥ २७ ॥

एवं नवद्वाराणि निरूपितानि । दशेन्द्रियाणां मध्ये त्रयाणां न द्वाराणि । उभयं त्वेकत्र । त्रयाणां द्वयं द्वयम् । एवमिन्द्रियाणां द्वाराणां च न समसङ्ख्या । अतो द्वारान्तरमाह प्राणादीनां नियामकत्वाय—

**आसिसृक्षोः पुरः पुर्या नाभिद्वारमपानतः ।**
**तत्राऽपानस्ततो मृत्युः पृथक्त्वमुभयाश्रयम् ॥ २८ ॥**
**आदित्सोरन्नपानानामासन् कुक्ष्यन्त्रनाडयः ।**
**नद्यः समुद्राश्च तयोस्तुष्टिः पुष्टिस्तदाश्रये ॥ २९ ॥**

१ तु तत्पोषकत्वमिति ख.



**निदिध्यासोरात्ममायां हृदयं निरभिद्यत ।**
**ततो मनश्चन्द्र इति सङ्कल्पः काम एव च ॥ ३० ॥**

**आसिसृक्षोरि**ति । मलं हि द्विविधम् । प्रत्यहं जायमानं प्रतिजन्मनि जायमानं च । तत्र प्रत्यहं जायमानस्य मलस्य परित्यागार्थे पायुः । सम्पूर्णजन्मनि[1] जायमानस्य देहरूपस्य मलस्य परित्यागार्थे नाभिद्वारम् । पुरः शरीराणि । पुर्याः शरीरात् उत्सिसृक्षोः नाभिद्वारं जातमिति सम्बन्धः । यथा आमरणं धातवोऽनुवर्तन्ते । तस्य पोषकमन्नं । मलं तु प्रसिद्धम् । एवं "**बहु स्यामि**"ति भगवदिच्छामारभ्य भगवत्प्रवेशपर्यन्तं भगवच्चिदंशस्य[2] जीवस्य एकमेव शरीरमनुवर्तते । तस्य पोषकान्यन्यानि शरीराण्यन्नवत् अन्नमयानि । तानि भोजनवदुत्पत्तौ गृह्यन्ते । मलपरित्यागवन्मरणे त्यज्यन्ते । प्राणो क्षुत्पादकः । अपानो मारकः । अतस्तद्द्वारमपानादुत्पन्नम् । तत्राऽपान इन्द्रियं मृत्युर्देवता । पृथक्त्वं प्राणापानयोर्विश्लेषो मरणात्मकः । तदुभयाश्रयमिति पूर्ववत् । नाभिद्वारेण तच्छरीरं निर्गच्छति । तस्य नाभिद्वारेण वा प्रयत्नेन मलवदिदं शरीरं त्यजति । यथेदं शरीरं बहुकालं तिष्ठति तस्य पोषादिकं जनयति । तथाऽन्नपानादिकमपि कियत्कालं स्थितमेव धातुपोषं जनयतीति अन्नपानानामादित्सुः स्थापनेच्छुर्भगवान् जातः । ततस्तस्य कुक्ष्यन्त्रनाडय आसन् । तत्र कुक्षिर्गोलकमुदराभ्यन्तराकाशः । अन्त्राण्यन्नस्थापनार्थमिन्द्रियाणि । नाड्यः पानार्थम् । नद्यः समुद्राश्च तयोर्देवते । नद्यो नाडीनाम् । अन्त्राणामुदरस्य च समुद्राः । अत एव चकार उभयार्थः । "**नाडीर्नद्यो लोहितेने**"ति वाक्यात् । "**क्षुत्तृड्भ्यामुदरं सिन्धुरि**"ति च । तुष्टिराप्यायनम् । पुष्टिर्देहवृद्धिरन्नस्य । तुष्टिपुष्टी तदाश्रये इन्द्रियदेवताश्रये । आत्मनो मायां जगत्कर्त्रीम् । कीदृश्येषा कथमहमेतत्प्रतिकृतिरूपो भविष्यामीत्यात्ममायाया निदिध्यासनम् । तदा हृदयं गोलकं निरभिद्यत । ततो मनइन्द्रियम् । चन्द्रो देवता । सङ्कल्पो ज्ञानरूपः । कामः क्रियारूपः । मनस्तूभयात्मकमित्युभयं कार्यं निर्दिष्टम् । सङ्कल्पस्य कार्यं काम इति तु ज्ञानस्य क्रियां प्रति कारणत्वेन । अतं[3] एवेत्यवधारणे । चकारेणेन्द्रियानुरोधः ॥ २८ ॥ ॥ २९ ॥ ३० ॥

एवं सर्वस्य त्रैविध्यं निरूप्य गोलकानामाधिभौतिकत्वमिन्द्रियाणामाध्यात्मिकत्वं देवतानामाधिदैविकत्वमिति समुदितस्य त्रिरूपत्वम् । त्वगादीनां केवलान्नमयत्वेनाऽत्रैविध्यमाशङ्क्य त्रैविध्यमाह—

**त्वक्चर्ममांसरुधिरमेदोमज्जास्थिधातवः ।**
**भूम्यप्तेजोमयाः सप्त प्राणो व्योमाम्बुवायुभिः ॥ ३१ ॥**

**त्वक्चर्ममांसेति** । त्वगुपरितना । चर्म स्थूलम् । रुधिरस्य पूर्वभावेऽपि मांसभावात्प्रथमतो[4] मांसनिरूपणम् । मेदो वृक्ष्यादिषु प्रसिद्धम् । मज्जाऽस्थ्यन्तर्गता । अस्थि प्रसिद्धम् । स्नायुप्रसिद्धं तस्य मेदोमध्येऽन्तर्भावः । तदस्थ्नामावरणरूपम् । एते सप्ताऽपि तेजोबन्नमयाः । तदाह—**भूम्यप्तेजोमया इति** । भूमिरन्नस्थानीया । पाञ्चभौतिकत्वेऽपि त्रिरूपत्वं क्रमात् । त्रिरूपा एव वा । प्राणस्य त्रैविध्यमाह—**व्योमाम्बुवायुभिरि**ति । सर्वदेहव्यापकत्वेनाऽऽप्यायकत्वेन वायुस्वरूपत्वेन च प्राणोऽपि त्रिविधो व्योमाम्बुवायुभिः ॥ ३१ ॥

१ संपूर्णे इति ख. २ भगवति तदंशस्येति ख. ३ अत एव । एवेति क. ४ मांसाभावादिति ख.

इन्द्रियाणामपि त्रैविध्यमाह—

गुणात्मकानीन्द्रियाणि भूतादिप्रभवा गुणाः ।
मनः सर्वविकारात्मा बुद्धिर्विज्ञानरूपिणी ॥ ३२ ॥

**गुणात्मकानीन्द्रियाणीति**। त्रिगुणमयानीन्द्रियाणि सर्वाण्येव। अत एव लौकिकीं प्रवृत्तिं धर्मं भक्तिज्ञाने च जनयन्ति। अहङ्कारस्याऽपि त्रैविध्यमाह—**भूतादिप्रभवा गुणा इति**। भूतादिरहङ्कारः। भूतादीनां प्रभवो यत्र। भूतादेर्वा प्रभवो येषाम्। अहङ्कारस्य त्रैविध्यं स्पष्टमेव भूताद्यादिभेदात्। भूतादिशब्देनाऽहङ्कार एव वा। तस्माद्गुणत्रयोत्पत्तिः स्पष्टैव। तेन गुणजनकत्वेन त्रिगुणत्वं स्पष्टम्। मनसोऽपि त्रैविध्यमाह—**मनः सर्वविकारात्मेति**। सर्वे हि विकारास्त्रिविधाः। तन्मयत्वान्मनोऽपि त्रिविधम्। बुद्धिरपि त्रिविधेत्याह—**बुद्धिर्विज्ञानरूपिणीति**। विविधं ज्ञानं विज्ञानम्। तत्त्रिविधमिति तद्रूपिणी बुद्धिरपि त्रिविधा ॥ ३२ ॥

एवं सर्वस्य[1] त्रैविध्यमुपपाद्य उपसंहरति—

एतद्भगवतो रूपं स्थूलं ते व्याहृतं मया ।
मह्यादिभिश्चाऽऽवरणैरष्टभिर्बहिरावृतम् ॥ ३३ ॥

**एतद्भगवतो रूपमिति**। एतत्पूर्वनिर्दिष्टं सर्वमेव त्रिविधं भगवतो रूपं स्थूलो देहः। ते तुभ्यं त्वदर्थं मया व्याहृतमित्यर्थः। त्रिगुणत्वेन यन्निरूपणं[2] तत्तत्राऽधिकारेण निरूपितम्। भगवतो हि रूपं सर्वेषामधिकारानुसारेण सर्वरूपत्वेन भासते। "तं यथायथोपासते" इति श्रुतेः ॥ ३३ ॥

एवं राज्ञे त्रैविध्यं निरूप्य सूक्ष्मं रूपं ततोऽप्युत्तमाधिकार्यर्थे अव्यक्तरूपं निरूपयति—

अतः परं सूक्ष्मतममव्यक्तं निर्विशेषणम् ।
अनादिमध्यनिधनं नित्यं वाङ्मनसः परम् ॥ ३४ ॥

**अतः परमिति**। मह्यादिसप्तावरणसहितात्स्थूलरूपात्परं व्यतिरिक्तमुत्कृष्टमेतन्नियामकम्। सूक्ष्मतमं आकाशाद्यपेक्षयाऽप्यतिसूक्ष्मम्। तस्य रूपविशेषनिरूपणं न कर्तव्यम्। यतस्तदव्यक्तं केनाऽपि धर्मेण न प्रकटम्। ततस्तस्य विशेषाः प्रकटा भविष्यन्तीत्याशङ्क्याऽऽह—**निर्विशेषणमिति**। सर्वविशेषणरहितम्। सर्वव्यावर्तकधर्मरहितमित्यर्थः। तस्योत्पत्त्यादिकं नाऽस्तीत्याह—**अनादिमध्यनिधनमिति**। आदिमध्यावसानरहितम्। नित्यं सदैकरूपम्। वाङ्मनसः परं सर्वव्यवहारातीतम् ॥ ३४ ॥

**एवं स्थूलसदृशं** सर्वप्रकारेण सूक्ष्ममिति निरूपितम्। उभयमप्युपसंहरति—

अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते ।
उभे अपि न गृह्णन्ति मायासृष्टे विपश्चितः ॥ ३५ ॥

1 सर्वत्रैविध्यमिति ख. 2 निरूपणं तत्रेति ख.



**अमुनी भगवद्रूपे इति**। मया ते त्वदर्थमेवाऽनुवर्णिते पूर्ववत्। अस्माकं तु नाऽनेनोपयोगः। तदाह—**उभे अपि न गृह्णन्तीति**। तत्र हेतुः—**मायासृष्टे इति**। मायायाः कार्यकारणरूपायाः[*1] सम्बन्धेनैवंरूपो जात इति। यतस्ते विपश्चितः साक्षात्स्वरूपज्ञातारः ॥ ३५ ॥

ननु तर्हि भगवान् कथमेवंरूपं करोतीत्याशङ्क्याऽऽह—

स वाच्यवाचकतया भगवान् ब्रह्मरूपधृक् ।
नामरूपक्रिया धत्ते सकर्माऽकर्मकः परः ॥ ३६ ॥

**स वाच्यवाचकतयेति**। स भगवान्। वाच्यवाचकत्वं अनामरूपात्मनि नामरूपे विधाय तादृशो भूत्वा जगतः पालनादिकं करोतीति वाच्यवाचकतया स्वरूपाप्रच्युत एव ब्रह्मरूपं सच्चिदानन्दं बिभ्रत् सर्वेषामपि जीवानां नामरूपक्रिया धत्ते। नामानि रूपाणि क्रियाश्च स्वसदृशान्करोतीत्यर्थः। स्वयं च सकर्मा। न च पुनरेतादृश एव। यतो वस्तुतोऽकर्मकः सर्वकर्मरहितः। सर्वेषां नियामकश्च। एतादृशोऽपि सर्वानुत्पादयितुं त्रिगुणात्मकं अव्यक्तं च रूपं करोतीत्यर्थः ॥ ३६ ॥

ननु के ते येषामर्थे स्वयं त्रिविधो जात इति। तत्राऽऽह—**प्रजापतीनित्यादिभिस्त्रिभिः**—

प्रजापतीन् मनून् देवान् ऋषीन् पितृगणान् पृथक् ।
सिद्धचारणगन्धर्वविद्याध्रसुरगुह्यकान् ॥ ३७ ॥
किन्नराप्सरसो नागान् सर्पान् किम्पुरुषानपि ।
मातृरक्षःपिशाचांश्च प्रेतभूतविनायकान् ॥ ३८ ॥
कूष्माण्डोन्मादवेतालान् यातुधानान् ग्रहानपि ।
खगान् मृगान् पशून् वृक्षान् गिरीन्नृप सरीसृपान् ।
द्विविधाश्चतुर्विधा येऽन्ये जलस्थलनभौकसः ॥ ३९ ॥

एके प्रत्येकगुणप्रधानाः। एके मिश्राः। तत्र प्रत्येकान् श्लोकत्रयेण गणयति। तत्राप्युत्तरोत्तरहीनता। प्रथमं प्रजापतयो मरीच्यादयो गुह्यकान्ताः सत्त्वापकर्षरूपाः। किन्नरादयो विनायकान्ता राजसाः। कूष्माण्डादयः सरीसृपान्तास्तामसाः। अन्ये तत्तद्भेदेषु मिश्रा इति तानेकेन गणयति—**द्विविधा इति** स्थावरजङ्गमभेदेन। चतुर्विधा जरायुजाण्डजस्वेदजोद्भिज्जाः। ये पूर्वोक्तादन्ये ते सर्वे सङ्करजाता इति ज्ञेयाः। तथापि स्थानतस्त्रैगुण्यं तदाह—**जलस्थलनभौकस इति**। जलादयः स्थानानि येषाम्। तत्र जलस्था राजसाः। स्थलस्थाः सात्त्विकाः। नभस्थास्तामसाः ॥ ३७ ॥ ॥ ३८ ॥ ३९ ॥

*1 कार्यकरणेति ख.

एवं स्वरूपतः स्थानतश्च सर्वेषां त्रैविध्यमुपपाद्य फलतोऽपि त्रैविध्यमाह—

कुशलाकुशला मिश्राः कर्मणां गतयस्त्विमाः ।
सत्त्वं रजस्तम इति तिस्रः सुर-नृ-नारकाः ॥ ४० ॥

**कुशलाकुशला मिश्रा इति** । कर्मणां त्रिविधा गतिः सात्त्विकादिविभेदेन । सात्त्विकं कर्म शुभफलं कुशलशब्देनोच्यते । तामसं कर्माऽऽशुभफलमकुशलशब्देनोच्यते । राजसं कर्मोभयफलं मिश्रशब्देनोच्यते । एवं कर्मगतयः कर्मसाधनफलप्रकारास्त्रिविधाः । कुशलाश्चाऽकुशलाश्च कुशलाकुशलाः । मिश्रा अभिन्नाः । कर्मणामिमा एव गतयो न त्वन्याः । तासां मूलनामान्याह—**सत्त्वं रजस्तम इति** । कुशलाकुशलमिश्राणामेतानि मूलनामानि । सत्त्वं कुशलनाम । तमोऽकुशलनाम । रजो मिश्रनाम । तत्कृतदेहा अपि त्रिविधा इत्याह । सुरनृनारकाः । सत्त्वं रजस्तम इति तिस्र इत्युभयत्र सम्बध्यते । सुराः सत्त्वम् । नरा रजः । नारकास्तम इति तिस्र एव । पश्वादयो नारकमध्य एव ॥ ४० ॥

ननु त्रिविधा एव गतय उच्यन्ते । प्रकारास्तु कोटिशो भवन्ति । तत्राऽऽह—

तत्राप्येकैकशो राजन् भिद्यन्ते गतयस्त्रिधा ।
यदैवैकतरोऽन्याभ्यां स्वभाव उपहन्यते ॥ ४१ ॥

**तत्राप्येकैकशो राजन्निति** । बहवो मया त्रिविधा गणिताः । तेष्वेकैकशस्त्रिविधा ये प्रजापतयो गणितास्तेऽपि त्रिविधाः । ये वा सरीसृपास्तेऽपि । राजन्निति सम्बोधनं पुरुषाणां नानाविधत्वज्ञापनार्थम् । ननु कथमेकमनेकधा भवति ? तत्राऽऽह—**यदैवैकतर इति** । यदा एकतरः स्वभावः सात्त्विकादिः अन्याभ्यां स्वव्यतिरिक्ताभ्यां उपहन्यते बलवद्भ्यामभिभूयते । तत्र बलाभिभवतारतम्येनैकस्याऽनेकरूपाणि भवन्ति ॥ ४१ ॥

एवं कार्यत्रैविध्यमुपपाद्योपसंहरन् भगवतः सात्त्विकीं लीलां पालनाख्यामुपपादयति—

स एवेदं जगद्धाता भगवान्धर्मरूपधृक् ।
पुष्णाति स्थापयन्नित्यं तिर्यङ्नरसुरात्मभिः ॥ ४२ ॥

**स एवेदमिति** । स एव त्रिविधजगत्कर्त्ता तदर्थं त्रिविधश्च । सृष्टमिदं जगत् भगवान् भगशब्दवाच्यैः स्वगुणैः पालनसमर्थैर्धर्मरूपधृक् । धर्मेण च स्थापयन् तत्तन्मर्यादायां पुष्णाति अभिवृद्धं करोति । नित्यमित्युत्पत्तिक्षणमारभ्य अन्तपर्यन्तं प्रतिक्षणं पुष्णाति । तदुपघातकासुराविर्भावे तिर्यङ्नसुरात्मभिः त्रिविधैर्मत्स्यादिरूपै रामादिरूपैर्वामनादिरूपैश्च सर्वं जगत् परिपालयतीत्यर्थः ॥ ४२ ॥

तृतीयां लीलामाह—

ततः कालाग्निरुद्रात्मा यत्सृष्टमिदमात्मनः ।
संनियच्छति कालेन घनानीकमिवाऽनिलः ॥ ४३ ॥

१ मिश्रा मिश्राः इति क. २ यदेकैकतर इति ख.



**कालाग्निरुद्रात्मेति** । कालः प्रलयकालः । तत्साधकोऽग्निः सङ्कर्षणमुखानलः । तत्राऽनले यो रुद्रस्त्र्यक्षस्त्रिशिखं शूलमुत्तम्भयन्नुदतिष्ठत् तद्रूपो भूत्वा आत्मनः सकाशादेव यत्सृष्टमूर्णावन्तुवत् संनियच्छति उपसंहरति । कालेन करणेन । यथोत्पादने माया करणं पालने चाऽवतारास्तथा संहरणे कालः करणम् । उत्पत्त्यादिभिः संहारान्तैः कृतैरप्याधारे न किञ्चिद्विकृतता जायेत इत्यत्र दृष्टान्तमाह—**घनानीकमिवाऽनिल इति** । मेघानां समूहं यथा वायुरपकर्षति । वायुनाऽपकृष्टा मेघा यथा न ज्ञायन्ते क्व गता इति तथा संस्कारं सर्वमेव नाशयतीत्यर्थः ॥ ४३ ॥

एवं भगवत्कृतानुत्पत्तिस्थितिप्रलयान्निरूप्येदं भगवत्कर्तृकं जगदुत्पत्त्यादि ब्रह्मवादिसम्मतमित्याह—

इत्थम्भावेन कथितो भगवान् भगवत्तमाः ।
नेत्थम्भावेन हि परं द्रष्टुमर्हन्ति सूरयः ॥ ४४ ॥

**इत्थम्भावेन कथित इति** । हे भगवत्तमाः । राजानं बोधयितुमेवंप्रकारेणाऽस्माभिर्जगदुत्पत्तिस्थितिकर्त्ता भगवानुक्तस्तदाह—**इत्थम्भावेन कथित इति** । पूर्वोक्तप्रकार एवेत्थम्भावः । भगवानिति तथा कथनेऽप्यदोषाय । स हि सर्वैः स्वाधिकारेण बुध्यते बोध्यते च । भगवत्तमा इति अत्यन्तमधिकारिणः । भवदर्थं त्वग्रे निरूप्यते । तदाह—**नेत्थम्भावेनेति** । परं मायातीतं भगवन्तं स्वत एव सर्वं पूर्वोक्तप्रकारेण सूरयो ब्रह्मविदो द्रष्टुं नाऽर्हन्ति ॥ ४४ ॥

तत्र हेतुमाह—

नाऽस्य कर्माणि जन्मादौ परस्याऽनुविधीयते ।
कर्त्तृत्वप्रतिषेधार्थं माययाऽऽरोपितं हि तत् ॥ ४५ ॥

**नाऽस्य कर्माणीति** । अस्य जन्मादौ कर्माणि । मायानियन्तुः परस्य । नाऽनुविधीयते अनुविधानं न क्रियते । परः सम्बन्धिरूपेण नाऽनुविधानं करोतीत्यर्थः । कुत इत्यपेक्षायामाह—**माययाऽऽरोपितं हि तदिति** । जगद्भावादयः सर्वे व्यामोहिकमायाकार्यविषयतारूपाः । ते न भगवत्कार्या इति तत्र कर्तृत्वादिना भगवदनुसन्धानं नास्तीत्यर्थः । तर्हि किमिति निरूप्यते जगत्कर्तृत्वं भगवति ? तत्राऽऽह—**कर्त्तृत्वप्रतिषेधार्थमिति** । प्रतीतं हि कर्तृत्वं प्रतिषेध्यं भगवांस्तु स्वरूपं पश्चादहमित्येवोक्तवान् । न तु मया कृतमिति । अहं वा जातमिति । बुद्धिसौकर्यार्थमेव तथा निरूपितं मायया करोतीति स्वयमेव जायत इति । तज्जत्वादित्यपि तदेव जः नतु तस्माज्जात इति । तस्मादुत्पत्त्यादिकल्पनाहीनं सर्वं ब्रह्मेत्येव ब्रह्मविद्भिर्ज्ञातव्यं न तु कल्पनायुक्तम् । यतो माययाऽऽरोपितं तत् ॥ ४५ ॥

एवं ब्रह्मवादं कर्तृवादं च निरूप्य एतादृशं रूपं भगवतः कस्मिन्कल्प इत्याकाङ्क्षायां ब्रह्मकल्प इत्युत्तरमाह—

अयं तु ब्रह्मणः कल्पः सविकल्प उदाहृतः ।
विधिः साधारणो यत्र सर्गाः प्राकृतवैकृताः ॥ ४६ ॥

१ देहस्तम्भैरप्याधारेति ख. २ ज्ञायते इति ख.

**अयं तु ब्रह्मणः कल्प इति । कदाचित्सर्वमात्मैव भवतीह जनार्दन इति ।** ब्रह्मकल्पे । विकल्पे तु ब्रह्मकल्पावान्तरकल्पे मायया सर्वरूपो भवतीत्युभयमप्यत्र निरूपितमिति ब्रह्मणः कल्पः सविकल्प उदाहृत इत्युक्तम् । तुशब्देनाऽन्ये कल्पाः प्राकृता व्यावर्तिताः । अत एवाऽत्र दशविधा लीलास्तुल्याः कल्पान्तरे तु विषमास्तदाह—**विधिः साधारणो यत्रेति ।** यत्र ब्रह्मकल्पे प्राकृतानां वैकृतानां च कल्पानां विधिरुत्पत्तिप्रकारः साधारणः । प्राकृते वा कल्पे वैकृते वा ये उत्पद्यन्ते ते तुल्याः । नतु कल्पान्तरवत्प्राकृतास्त्रय एव । वैकृता अन्ये । उभयात्मकस्तु कौमार इत्यादिविशेषाः । तेऽत्र न सन्ति । विधिः साधारणो यत्रेत्येकं वाक्यम् । यत्र सर्गाः प्राकृतवैकृता इत्यपरम् । प्राकृता एव वैकृता न त्वतिरिक्ता इत्यर्थः ॥ ४६ ॥

एतावता सर्वेषां प्रश्नानामुत्तरमुक्तम् । उभयोर्नोक्तं कालकल्पयोः । तदग्रे वक्ष्यामीत्याह—

**परिमाणं च कालस्य कल्पलक्षणविग्रहम् ।**
**यथा पुरस्ताद्व्याख्यास्ये पाद्मं कल्पमथो शृणु ॥ ४७ ॥**

**परिमाणं च कालस्येति ।** परमाण्वादिद्विपरार्द्धावसानस्य कालस्य परिमाणं परिमाणहेतुः सूर्यगत्यादिः । सोऽग्रे वक्तव्यः । चकारात्स्वरूपं कार्यं च । **कल्पलक्षणविग्रहमिति ।** कल्पानां लक्षणं धर्मव्यवस्था । कृते एतादृशो धर्मः एतादृशी प्रवृत्तिरिति लक्षणम् । विग्रहः शरीरं एतावद्युगमिति । सहस्रचतुष्टयात्मकं कृतमिति यथा । एतद्द्वयम् । **यथा पुरस्ताद्व्याख्यास्ये ।** यथा यथावत्[२] । यथा पुरस्ताद्वा पूर्वकल्पे यथैतयो रूपं तथा व्याख्यास्ये । एवं विस्तरेण सर्वं वक्तुं कल्पान्तरमुपक्षिपति—**पाद्मं कल्पमथो शृण्विति ।** सर्गादीनां विशेषाः पाद्मकल्पे भवन्ति । अतो भगवद्दशलीलाविस्तारार्थं अथो भिन्नप्रक्रमेण शृणु । सावधानतया श्रवणार्थमुपदेशः । अनेनैकस्य दिवसस्य विरतिर्ज्ञायते । यतो भिन्नप्रक्रमेण श्रवणं बोधयति ॥ ४७ ॥

एवं शुकपरीक्षित्संवादे विरते शौनको भगवत्कथाश्रवणे व्यग्रस्तादृशीं कथां पूर्वनिरूपितां पृच्छति । यस्यां कथायां कतिपयप्रश्नार्थज्ञानेऽपि परमा रतिर्भवति तादृशमेव हि श्रोतव्यम् । तदाह सूतः—"**विदुरस्तीर्थयात्रायामि**"त्यत्र "**यावतः कृतवान् प्रश्नान् क्षत्ता कौषारवाग्रतः । जातैकभक्तिर्गोविन्दे तेभ्यश्चोपरराम ह**"ेति । भागवतं श्रावयिष्यामीति यद्यपि सूतेन प्रतिज्ञातं तथापि विदुरमैत्रेयसंवादलक्षणस्य भागवतस्य शीघ्रफलत्वात् तदेव त्वया कथनीयमिति प्रोत्साहयति शौनकः—**यदाह भगवानिति** त्रिभिः ।

**शौनक उवाच—**

**यदाह भगवान् सूत क्षत्ता भागवतोत्तमः ।**
**चचार तीर्थानि भुवस्त्यक्त्वा बन्धून् सुदुस्त्यजान् ॥ ४८ ॥**

---

१ ब्रह्मकल्पः घ. २ वत् । पुरस्तादिति ख.



**कुत्र कौषारवेस्तस्य संवादोऽध्यात्मसंज्ञितः ।**
**यद्वा स भगवांस्तस्मै पृष्टस्तत्त्वमुवाच ह ॥ ४९ ॥**
**ब्रूहि नस्तदिदं सौम्य विदुरस्य विचेष्टितम् ।**
**बन्धुत्यागनिमित्तं च तथैवाऽऽगतवान् पुनः ॥ ५० ॥**

**भगवानिति** मैत्रेयस्य सर्वज्ञता सूचिता । यदाह भगवानिति भिन्नं वाक्यम् । भगवान्[illegible] इत्यर्थः । अथवा । क्षत्तृमैत्रेयसंवादे भगवान् यदाह । यत् भगवतो वाक्यं ताभ्यां निरूपितमित्यर्थः । **यदाह नो भवानिति** पाठः स्पष्टः । **सूतेति** सम्बोधनम् । कुत्राऽऽह किमाह[illegible]माह । क्षत्ता भागवतोत्तमो बन्धूंस्त्यक्त्वा भुवस्तीर्थानि चचार । तादृशश्च कौषारवेश्च संवादः कुत्र विषये । यत्र भगवद्वाक्ये तदर्थे वा विचारात्मकः संवादस्तत्कथयेति वक्तव्ये भगवद्वाक्यस्यैव मुख्यत्वात्तत्रैव भगवद्वाक्यविशेषे संवादो भविष्यतीति ज्ञात्वाऽपि विशेषज्ञानार्थं कुत्रेति पृच्छति । देशप्रश्ने तु कुत्र देशे स संवादो जात इति । त्वया कथितेऽपि[१] स्वयं वा तत्र गत्वा श्रोतव्यमित्यभिप्रायः । पाठान्तरे इतिशब्दोऽध्याहर्तव्यः । **सुदुस्त्यजानिति** तदादेशोपदेशचरितानि विदुरस्य पृच्छति । भागवतेष्व उत्तमः । यस्त्वापद्दशायामपि न विभ्रान्तः । भुवस्तीर्थानीति गन्तुं ज्ञातुं च शक्यानि । तान्यपि वक्तव्यानीत्यभिप्रायः । यैः सम्यक् शुद्धो भक्तिं प्राप्तवानिति । ततोऽपि पूर्वमेव तस्य चित्तशुद्धिरुत्कृष्टा जातेति ज्ञापयति—**त्यक्त्वा बन्धूनिति । सुदुस्त्यजानिति** अन्तःकरणेनाऽपि त्यक्त्वा इति ज्ञायते । एतावता परीक्षिदपेक्षयाऽपि स मुख्यश्रोता निरूपितः । कुषारोः पुत्रः कौषारविः । **कौषारवस्य वा**[२] । प्रथमपक्षे बाह्वादित्वादिञ् । तस्य पूर्वोक्तस्य विदुरस्य । उभयोस्तुल्यत्वाय षष्ठ्यौ । अर्थात्संवादोऽपि पृष्टः । अन्यथा केवलस्थानं श्रुतमप्यप्रयोजकं स्यात् । **अध्यात्मसंज्ञित इति ।** स संवादः श्रोतुः कार्यसाधक इत्यध्यात्मशब्देनोक्तः । अन्यथा तदज्ञानाद्विशेषणमयुक्तं स्यात् । अध्यात्मेति संज्ञापितः[३] । अनेन संवादेनैवाऽन्योन्यकथारूपेणैव तस्य भक्तिर्जातेति संवादस्यैव माहात्म्यमुक्तम् । यद्वेति पक्षान्तरम् । वाशब्दः पूर्वपक्षं व्यावर्त्तयति । न स्थानविशेषे संवादात्तस्य भक्तिः किन्तूपदेशादित्यपि पक्षे तमुपदेशं वदेत्याह—**यद्वेति । स भगवानिति ।** भगवत्सहितः । केवलेनोपदिष्टं कथं हृदयारूढं भवेत् । तस्मा इति केवलं तदर्थमेव । पृष्ट इति नहि तादृशः स्वार्थं यादृशं तादृशं पृच्छति । वक्ताऽपि यत्तत्त्वमुक्तवान् । तद्ब्रूहीति सम्बन्धः । हेत्याश्चर्ये । विदुरस्य विचेष्टितं वक्तव्यम् । तत्त्वोपदेशो विदुरस्याऽनुचित इत्याश्चर्यम् । तथाप्युपदेशो जात इति तस्य विशिष्टं किञ्चिच्चेष्टितमस्ति येन तादृशोऽप्युपदेशमर्हति[४] । किञ्च । बन्धुत्यागेऽपि निमित्तं वक्तव्यम् । अन्यथा शूद्रयोनावुत्पन्नस्य प्रमादोऽनुचितः स्यात् । चकाराज्ज्ञानहेतावपि निमित्तं वक्तव्यम् । किञ्च । तज्ज्ञानं सर्वथोत्तमम् । यज्ज्ञानप्राप्तौ पूर्वजातवैमनस्यादिकं परित्यज्य दैहिकीं व्रीडां परित्यज्य तथैवाऽसंस्कृतरूपेणैव पुनरागतवान् । अतः साक्षात्सर्वमोहनिवर्त्तकमुत्तमाधिकारनिरूपकं यज्ज्ञानं तत्संवादे सम्पन्नं तदपि भगवदुक्तमेव भविष्यतीति तत्कथयेत्यर्थः ॥ ४८ ॥ ४९ ॥ ५० ॥

---

१ त्वया अकथितेऽपीति ख. २ कुमारवस्येति ख. ३ संज्ञापित इति क. ख. ४ मर्हतीति ख.

एवं ऋषिभिः पृष्टस्तदुत्तरं वदन् शुकोक्तमेव तदिति सरस्वतीसंवादात् यथा विदुरादीनां भक्तिस्तथा भवतामपि भविष्यतीति बोधयन् भवतां वाक्यं संवादिजातमित्याह—

राज्ञा परीक्षिता पृष्टो यदवोचन्महामुनिः ।
तद्वोऽभिधास्ये शृणुत राज्ञः प्रश्नानुसारतः ॥ ५१ ॥

**राज्ञा परीक्षिता पृष्ट इति ।** अयमेवाऽर्थः परीक्षिताऽपि पृष्टः शुकेन यदा कथाक्षेपः कृतः एवमेतत्पुरा पृष्ट इति । तदा महामुनिः । तत्स्वरूपतः पर्यवसानतश्च जानन्नवोचत् । तदेव वो युष्मभ्यमभिधास्ये कथयिष्यामि । एवं सति पूर्वं यद्भवद्भिः पृष्टं यदाह भगवान् शुक इति, यच्चेदानीं यदपि मयोक्तं सोऽहं वः श्रावयिष्यामीति तदप्यविरुद्धं भवति । अतः शुकोक्तिमेव कथयिष्यामि परं सावधानतया शृणुत । शुकस्तु तत्र सभायामृषिभिर्बहुधा पृष्टं बह्वेवोक्तवांस्तन्मुख्यश्रोतृबुद्ध्यनुसारि न भवतीति प्रकृतत्वाभावात् तद्व्यावृत्त्यर्थमाह—**राज्ञः प्रश्नानुसारत इति ।** राज्ञः प्रश्नमनुसृत्य तदुत्तरत्वेनैव यदुक्तं तत्कथयिष्यामीत्यर्थः ॥ ५१ ॥

द्वितीयस्कन्धविवृतिः श्रीकृष्णचरणाम्बुजे ।
निवेदिताऽतियत्नेन युक्तिपुष्पाञ्जलिः स्फुटा ॥ १ ॥

भक्तेषु शास्त्रहृदयेषु निवेदयामि शास्त्रार्थतो यदि हरिर्भवतामभीष्टः ।
तत्पश्यताऽऽत्र विवृतिं भगवद्गुणानां सन्देहवारणविचारणतः प्रसन्नाम् ॥ २ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां
द्वितीयस्कन्धे दशमोऽध्यायः ॥ १० ॥

सम्पूर्णोऽयं द्वितीयस्कन्धः ।

---

श्रीकृष्णार्पणमस्तु ।

---

# श्रीमद्भागवतद्वितीयस्कन्धश्लोकानामकारादिवर्णानुक्रमः।


पृष्ठम्.

अ.

अकामः सर्वकामो वा ... ७१
अतः कविर्नामसु ... ... २२
अतः परं सूक्ष्मतमं ... ... १८७
अत्र प्रमाणं भगवान् ... ... १३९
अत्र सर्गो विसर्गश्च ... ... १०१
अत्रेरपत्यमभिकाङ्क्षत... ... ९९
अथाऽभिधेह्यङ्ग मनो ... ... ४७
अथो अनन्तस्य मुखा ... ३१
अद्रीनलीकाहसिते ... ... २०
अधिदैवमथाऽध्यात्म ... ... १७७
अध्यर्हणीयासनमा ... ... १५४
अनु प्राणन्ति यं प्राणाः ... १०८
अन्तकाले तु पुरुष ... ... ११
अन्तर्हितेन्द्रियार्थाय ... ... १६८
अन्तःशरीर आकाशात् ... १०८
अन्तःसरस्युरुबलेन ... ... १०५
अन्नाद्यकामस्त्वदितिं ... ... ३८
अन्ये च विविधा जीवाः ... ८२
अपां वीर्यस्य सर्गस्य ... ... ८०
अभ्यसेन्मनसा शुद्धं ... ... ११
अमुनी भगवद्रूपे ... ... १८४
अयं तु ब्रह्मणः कल्पः ... १८०
अवतारानुचरितं ... ... १३७
अवतारानुचरितं ... ... १७४
अव्यक्तरससिन्धूनां ... ... ८१
[illegible] ... ... ११२
अहं भवान् भवश्चैव ... ... ८१
अहं भवो यज्ञ इमे ... ... ९४
अहमेवाऽऽसमेवाऽग्रे ... ... १६२

आ.

आण्डकोशे शरीरेऽस्मिन् ... १५
आत्मजायासुतागार ... ... ४८
आत्मतत्त्वविशुद्ध्यर्थं ... ... १३७
आत्मन् भावयसे तानि ... ६३
आत्ममायामृते राजन् ... १३५
आद्यिस्तोरचयामानां ... ... १८२
आद्योऽवतारः पुरुषः ... ... ९४

पृष्ठम्.

आभासश्च निरोधश्च ... ... १७४
आयुःकामोऽश्विनौ देवौ ... ३८
आयुर्हरति वै पुंसां ... ... ४६
आसिसृक्षोः पुरः पुर्या ... १८२
आसीद्यदुदरात्पद्मं ... ... १३५

इ.

इक्ष्वाकुरैलमुचुकुन्द ... ... १२६
इति तेऽभिहितं तात ... ... ८९
इति संभृतसंभारः ... ... ८७
इत्थम्भावेन कथितो ... ... १८०
इत्थं मुनिस्तूपरमेत् ... ... ३०
इत्यभिव्याहृतो राजा ... ... ४२
इत्युपामन्त्रितो राज्ञा ... ... ५१
इदं भागवतं नाम ... ... ८
इदं भागवतं नाम ... ... १३०
इन्द्रादयो बाहव आहु ... १७
इयानसावीश्वर ... ... १९

ई.

ईशस्य केशान्विदुरम्बु ... १७

उ.

उत्सिसृक्षोर्धातुमलं ... ... १८२
उन्निद्रहृत्पङ्कजकर्णिका ... २७
उरःस्थलं ज्योतिरनीक ... १६

ऋ.

ऋतेऽर्थं यत्प्रतीयेत ... ... १६६
ऋषे विदन्ति मुनयः ... ... ९६

ए.

एकमेकतराभावात् ... ... १७५
एकैकशोऽङ्गानि धिया ... २७
एको नानात्वमन्विच्छन् ... १७७
एतन्मुमूर्षतो ब्रह्मन् ... ... ४६
एतदेवात्मभू राजन् ... ... ६०
एतद्वेदितुमिच्छामि ... ... १३२
एतद्भगवतो रूपम् ... ... १८४
एतन्निर्विद्यमानानां ... ... ९
एतन्मतं समातिष्ठ ... ... १६७
एतन्मे पृच्छतः सर्वं ... ... ६४
एतावदेव जिज्ञास्यं ... ... १६६

पृष्ठम्.

एतावानेव यजतां ... ... ७१
एतावान्सांख्ययोगाभ्यां ... ६
एते सती ते नृप ... ... ३५
एवं पुरा धारणया ... ... २२
एवमेतन्निगदितं ... ... ३७
एवं स्वचित्ते स्वत एव ... २५

क.

कथमस्य महाभाग ... ... १३२
कस्तां त्वनादृत्य परा ... ... २६
कामं दहन्ति कृतिनो... ... १०३
कार्यकारणकर्तृत्वे ... ... ७०
कालं कर्म स्वभावं च ... ७१
कालाद्गुणव्यतिकरः ... ... ७१
कालेन मीलितदृशा ... ... १२१
किन्नरानप्सरो नागान् ... १८५
किं प्रमत्तस्य बहुभिः ... ... १०
किरातहूणान्ध्रपुलिन्द ... ५६
क्रीडन् वने निशि निशा ... ११९
क्रीडस्यमोघसङ्कल्प ... ... १५९
कुत्र कौचारवेक्षस्य ... ... १८९
कुशलाकुशला मिश्राः ... १८५
कूष्माण्डोन्मादवेतालान् ... १८५
केचित्स्वदेहान्तर्हृदया... ... २७
क्षत्रं क्षयाय विधिनो ... ... १११
क्षीरोदधावमरदानव ... ... १०४

ख.

खट्वाङ्गो नाम राजर्षिः ... १०

ग.

गतयो मतयश्चैव ... ... ८६
गार्हं जिगीषतः पादौ... ... १८१
गन्धर्वविद्याधरचारणे... ... ९४
गन्धर्वाप्सरसो यक्षा ... ... ८१
गुणात्मकानीन्द्रियाणि ... १८७
गृहात्प्रव्रजितो धीरः ... ... ११
गृहीत[illegible]... ... ११७
गोपैर्मखे प्रतिहते ... ... ११८
ग्रीवायां जनलोकस्य ... ... ७६

पृष्ठम्.

घ.

घ्राणेन गन्धं रसनेन ... ... ३४

च.

चक्रं च दिक्ष्वविहतं ... ... ११०
चीराणि किं पथि न ... ... २४

छ.

छन्दांस्यनन्तस्य यशो ... ... १७

ज.

जज्ञे च कर्दमगृहे ... ... ९८
जातो रुचेरजनयत् ... ... ९७
जितासनो जितश्वासो... ... १४
जीवच्छवो भागवता ... ४५
ज्यायान् गुणैरवरजो ... ... १०६
ज्ञानं परमगुह्यं मे ... ... १६२
ज्ञानं यदा प्रतिनिवृत्त ... ४२

त.

ततः कालाग्निरुद्रात्मा ... १८६
ततश्च मनवः काल ... ... ८८
ततस्ते भ्रातर इमे ... ... ८८
ततो विशेषं प्रतिपद्य ... ... ३४
तत्कट्यां चातलं क्लृप्तं ... ... ७७
तत्कर्म दिव्यमिव यत्... ... ११७
तत्र चान्तर्बहिर्वायुः ... ... १८१
तत्राप्येकैकशो राजन्... ... १८६
तत्रैकावयवं ध्यायेत् ... ... १२
तत्त्वानां परिसङ्ख्यानं... ... १३७
तथा गुणांस्तु प्रकृतेः ... ... ५०
तथापि नाथमानस्य ... ... १५९
तदश्मसारं हृदयं ... ... ४६
तदहं तेऽभिधास्यामि ... ... ९
तदा संहत्य चाऽन्योन्यं ... ५
तद्गात्रं वस्तुसाराणां ... ... ७९
तद्दर्शनाह्लादपरि ... ... १५५
तद् विश्वनाभिं त्वति ... ... ३२
तद्वै पदं भगवतः ... ... १२७
तपस्विनो दानपरा ... ... ५५
तप्तं तपो विविधलोक ... ९९
तरवः किं न जीवन्ति ... ४४
तवाऽप्येतर्हि कौरव्य ... ... १०
तस्मा इदं भागवतं ... ... १७०
तस्मात्सर्वात्मना राजन् ... ३६
तस्मादण्डं विराड् जज्ञे ... ८५

पृष्ठम्.

तस्माद्भारत सर्वात्मा ... ... ४
तस्माद्भ्रुवोरन्तरमुन्न ... ... १०
तस्मै नमो भगवते ... ... ९५
तस्मै स्वलोकं भगवान् ... १४९
तस्याऽपि द्रष्टुरीशस्य ... ... ६९
तामसादपि भूतादेः ... ... ७२
तावानसाविति प्रोक्तः ... १३५
तास्ववात्सीत्स्वसृष्टासु ... १७६
तुभ्यं च नारद भृशं ... ... १०९
तुष्टं निशाम्य पितरं ... ... १७०
तैजसस्तु विकुर्वाणात् ... ७३
तेनाऽऽत्मनाऽऽत्मान ... ... ३४
ते वै विदन्त्यतितरन्ति ... १२७
तेषु यज्ञस्य पशवः ... ... ८६
तैजसात्तु विकुर्वाणात् ... ७४
तोकेन जीवहरणं ... ... ११५
तं नारदः प्रियतमो ... ... १६९
तं प्रीयमाणं समव ... ... १५५
त्रैविष्टपोरुभयहास ... ... १०५
त्वक्चर्ममांसरुधिर ... ... १८३
त्वयाहं तोषितः सम्यक् ... १५६

द.

ददर्श तत्राखिलसात्वतां ... १५३
ददृशे येन तद्रूपं ... ... १३५
दशमस्य विशुद्ध्यर्थं ... ... १७२
दिव्यं सहस्राब्दममोघ ... १४९
देवदेव नमस्तेऽस्तु ... ... ६१
देवद्विषां निगमवर्त्म ... ... १२१
देवीं मायां तु श्रीकामः ... ३८
देहापत्यकलत्रादि ... ... २
द्यौरक्षिणी चक्षुरभूत् ... ... १७
द्रव्यं कर्म च कालश्च ... ... ६६
द्रव्यं कर्म च कालश्च .. ... १७७
द्वे जानुनी सुतलं ... ... १६

ध.

धन्वन्तरिश्च भगवान्... ... ११६
धर्मस्य मम तुभ्यं च ... ... ८१
धर्मस्य दक्षदुहितर्यज ... ... १००
धर्मार्थमुत्तमश्लोकं ... ... ३८
धौतात्मा पुरुषः कृष्ण ... १३३

न.

नतोऽस्म्यहं त्वच्चरणं ... ... ९०
नद्योऽस्य नाड्योऽथ ... ... [illegible]

पृष्ठम्.

नन्दं च मोक्ष्यति भयात् ... ११८
नभसोऽथ विकुर्वाणात् ... ७३
न भारती मेऽङ्ग मृषा ... ८९
नमस्तस्मै भगवते ... ... ६०
नमः परस्मै पुरुषाय ... ... ५१
न मेऽसवः परायान्ति ... १४०
नमो नमस्तेऽस्त्वृषभाय ... ५२
न यत्र कालोऽनिमिषां ... २९
न यत्र शोको न जरा ... ३३
न ह्यतोऽन्यः शिवः पन्था ... ३५
नाऽनृतं तव तच्चापि ... ... ६५
नान्तं विदाम्यहममी ... ... १२४
नाभेरसावृषभ आस ... ... १०३
नाभ्यां स्थितं हृदयि ... ... ३०
नामधेयानि मन्त्राश्च ... ... ८६
नारदः प्राह मुनये ... ... १७०
नारायणपरा योगा ... ... ६७
नारायणपरा वेदा ... ... ६७
नारायणे भगवति ... ... ८८
नार्यो बलेरयमुरु ... ... १०८
नासिके निरभिद्येताम् ... १७९
नाऽस्य कर्मणि जन्मादौ ... १८७
नाहं न यूयं यदृतां ... ... ९१
नाहं वेद परं त्वस्मिन् ... ६३
निदिध्यासोरात्ममायां ... १८३
निद्रया ह्रियते नक्तं ... ... ३
नियच्छेद्विषयेभ्योऽक्षान् ... १२
निरभिद्यत शिश्नो वै ... ... १८२
निरोधोऽस्याऽनुशयनं... ... १७४
निशाम्य तद्वक्तृदिदृक्षया ... १४८
नूनं भगवतो ब्रह्मन् ... ... ५०
नृणां साधारणो धर्मः ... १३७

प.

पदं तत्परमं विष्णोः ... ... १२
पप्रच्छ चेममेवार्थं ... ... ४८
परं पदं वैष्णवमाम ... ... ३०
पराभूतेरधर्मस्य ... ... ८१
परिमाणं च कालस्य ... ... १८८
परिनिष्ठितोऽपि नैर्गुण्य ... ८
पातालमेतस्य हि ... ... १६
पादास्त्रयो बहिश्चासन् ... ८४
पादेषु सर्वभूतानि ... ... ८४
पायुर्यमस्य मित्रस्य .. ... ८०.



पृष्ठम्.

पिबन्ति ये भगवत ... ... ३६
पुरुषोऽण्डं विनिर्भिद्य ... ... १७६
पुरुषस्य मुखं ब्रह्म ... ... ७६
प्रचोदिता येन पुरा ... ... ५८
प्रजापतिर्धर्मपतिः ... ... १६८
प्रजापतीन्मनून्देवान् ... ... १८५
प्रत्यादिष्टं मया तत्र ... ... १५८
प्रमाणमण्डकोशस्य ... ... १३०
प्रवर्तते यत्र रजस्तमः... ... १५०
प्रविष्टः कर्णरन्ध्रेण ... ... १३१
प्रस्वबकं नलिनायते ... २०
प्रायेण क्षिपता क्षुत्तृड् ... १७८
प्राधान्यतो यानृष ... ... ९५
प्रायेण मुनयो राजन्... ... ७
प्राह भागवतं नाम ... ... १४४

ब.

बर्हायिते ते नयने ... ... ४५
बहुरूप इवाभाति ... ... १४५
बिले बतोरुक्रम ... ... ४५
बोध्यमानस्य ऋषिभिः ... १७९
ब्रह्मणा चोदितो ब्रह्मन् ... १३१
ब्रह्मवर्चसकामस्तु ... ... ३८
ब्रह्माननं क्षत्रभुजो ... ... १७
ब्रूहि मस्तदिदं सौम्य ... ... १८९

भ.

भगवच्छिक्षितमहं ... ... १५९
भगवन् सर्वभूतानां ... ... १५९
भगवान्ब्रह्म कार्त्स्न्येन... ... ३६
भगवान् सर्वभूतेषु ... ... ३६
भारः परं पट्टकिरीट ... ... ४५
भूतभव्यभवच्छब्द ... ... १३५
भूतमात्रेन्द्रियधियां ... ... १७३
भूतैर्महद्भिर्य इमाः ... ... ५९
भूपातालककुब्व्योम ... ... १२७
भूमेः सुरेतरवरूथ ... ... ११४
भूय एव विवित्सामि ... ... ४९
भूयो नमः सद्वृजिन ... ... ५२
भूर्लोकः कल्पितः पद्भ्यां ... ७६
भूर्लोकः कल्पितः पद्भ्यां ... ७७
भृत्यप्रसादाभिमुखं ... ... १५३
भ्राजिष्णुभिर्यः परितो ... १५१

पृष्ठम्.

म.

मत्स्यो युगान्तसमये ... ... १०४
मनः स्वबुद्ध्याऽमलया ... २९
मनीषितानुभावोऽयं ... ... १५७
महतस्तु विकुर्वाणात्... ... ७२
महातलं तु गुल्फाभ्यां ... ७७
मायां वर्णयतोऽमुष्य... ... १३१
मायां विविदिषुर्विष्णोः ... १३९
मुक्तात्ममायां मायेशः ... १३५
मुखतस्तालु निर्भिन्नं ... ... १७८

य.

यज्ञं यजेद्यशस्कामः ... ... ३८
यत्किञ्च लोके भगवत् ... ९५
यत्कीर्तनं यत्स्मरणं ... ... ५३
यत्र सन्धार्यमाणायां ... ... १३
यत्रोद्यतः क्षितितलो ... ... ९६
यथात्मतन्त्रो भगवान् ... १३७
यथाऽऽत्ममायायोगेन ... १५९
यथा महान्ति भूतानि ... १६५
यथा सन्धार्यते ब्रह्मन् ... १३
यथा हरौ भगवति ... ... १३०
यदङ्घ्र्यनुध्यानसमा ... ... ५७
यद्धातुमतो ब्रह्मन् ... ... १३४
यदात्मनि निरालोकं ... ... १७९
यदाऽस्य नाभ्यान्नलिनात् ... ८९
यदाह भगवान्सूत ... ... १८८
यदि प्रयास्यन्नृप ... ... ३१
यद्युताऽहं त्वया पृष्टो... ... १७१
यद्येतेऽसंहता भावाः ... ... ७५
यद्यत्परीक्षिदृषभः ... ... १४४
यद्रूपं यदधिष्ठानं ... ... ६२
यद्विज्ञानो यदाधारो ... ... ६३
यद्वेनमुत्पथगतं ... ... १०२
यद्वै व्रजे व्रजपशून् ... ... ११६
यस्मा अदादुदधिरूढ ... ... ११३
यस्मिन्कर्मसमावायः ... ... १३७
यस्याऽवतारकर्माणि ... ... ९१
यस्येहाऽवयवैर्लोकान् ... ... ७६
यर्हि वाव महिम्नि स्वे ... १४७
यर्ह्यालयेष्वपि सतां ... ... १२२
यां यां शक्तिमुपाश्रित्य ... ५०
यावत्सखा सख्युरिवेश ... १६१

पृष्ठम्.

यावन्न जायेत परा ... ... २८
यावानहं यथाभावो ... ... १६२
ये च प्रलम्बखरदर्दुर ... १२०
येन स्वरोचिषा विश्वं ... ... ६५
ये वा मृधे समिति ... ... १२१
येषां स एव भगवान् ... १२५
योगेश्वराणां गतिमाहु ... ३३
योगेश्वरैश्वर्यगतिः ... ... १३७
योऽध्यात्मिकोऽयं पुरुषः ... १७५
यो वाऽनुशायिनां सर्गः ... १३७

र.

राज्यकामो मनून् देवान् ... ३४
राज्ञा परीक्षिता पृष्टः... ... १९०
रूपाणां तेजसां चक्षुः ... ७९
रूपाभिकामो गन्धर्वान् ... ३८

ल.

लोकैरमुष्यावयवाः ... ... १३५
लोमान्युद्भिज्जजातीनां ... ७९

व.

वक्षःस्थलस्पर्शरुग्ण ... ... ११३
वयांसि तद्व्याकरणं ... ... १७
वरं वरय भद्रं ते ... ... १५७
वरीयानेष ते प्रश्नः ... ... २
वर्षपूगसहस्रान्ते ... ... ७५
वस्तुनो मृदुकाठिन्यं ... ... १८०
वस्त्वन्योपधयः खेदा... ... ८९
वाचां वह्नेर्मुखं क्षत्रं ... ... ७८
वायोरपि विकुर्वाणात् ... ७३
विक्रमो भूर्भुवः स्वश्च... ... ८०
विचक्षणा यच्चरणा ... ... ५४
विचिकित्सितमेतन्मे ... ... ५०
विज्ञानशक्तिं महिमा ... ... १७
विद्धं सपत्न्युदित ... ... १०१
विभूषितं मेखलया ... ... २७
विलज्जमानया यस्य ... ... ६६
विवक्षोर्मुखतो भूम्नो ... ... १७५
विशुद्धं केवलं ज्ञानं ... ... ९२
विशेषस्तस्य देहोऽयं ... ... १४
विशेषस्तु विकुर्वाणात् ... ७३
विष्णोर्नु वीर्यगणनां ... ... ११४
वेदाहमङ्ग परमस्य ... ... १६६
वैकारिकान्मनो जज्ञे ... ... ७४

२५

| | पृष्ठम्. | | पृष्ठम्. | | पृष्ठम्. |
|---|---|---|---|---|---|
| वैयासकिश्च भगवान् ... ... | ४३ | स एव पुरुषस्तस्मात् ... ... | ७५ | स वाच्यवाचकतया ... ... | १८५ |
| वैयासकेरिति वचः ... ... | ४८ | स एवेदं जगद्धाता ... ... | १८६ | स वै भगवतो राजा ... ... | ४६ |
| वैश्वानरं याति विहा ... ... | ३२ | स एष आत्मात्मवता ... | ५६ | स श्रेयसामपि विभुः ... ... | १२९ |
| व्रीडोत्तरोष्ठोऽधर एव... ... | १० | स एष आद्यः पुरुषः ... ... | ९१ | स सर्वधीवृत्यनु ... ... | २० |
| | | स एष भगवाँल्लिङ्गैः ... ... | ७० | संप्रदश्यैवमजनो ... ... | १६७ |
| श. | | स चिन्तयन् द्व्यक्षर ... ... | १४८ | सम्भवः सर्वभूतानां ... ... | १३७ |
| शश्वत्प्रशान्तमभयं ... ... | १२७ | सत्यां क्षितौ किं कशिपोः ... | २४ | संस्थां विज्ञाय संन्यस्य ... | ४९ |
| शाब्दस्य हि ब्रह्मण ... ... | २२ | सत्रे समास भगवान्... ... | १०३ | सृजामि तन्नियुक्तोऽहं ... | ८८ |
| शृण्वतः श्रद्धया नित्यं ... | १३३ | सत्त्वं रजस्तम इति ... ... | ६९ | सृजामि तपसैवेदं ... ... | १५८ |
| श्यामावदाताः शतपत्र ... | १५१ | स भवानचरद्धोरं ... ... | ६३ | सृती विचक्रमे विश्वङ् ... | ८५ |
| श्रियः पतिर्यज्ञपतिः ... ... | ५७ | स भूतसूक्ष्मेन्द्रिय ... ... | ३४ | सोऽमृतस्याभयस्येशो... ... | ८३ |
| श्रीयंत्र रूपिण्युरुगाय... ... | १५२ | समीचीनं वचो ब्रह्मन् ... | ४९ | सोऽयं तेऽभिहितस्तात ... | १२९ |
| श्रुत्वा हरिस्तमरणा ... ... | १०५ | सम्यक् कारुणिकस्येदं ... | ६४ | सोऽहङ्कार इति प्रोक्तो ... | ७३ |
| श्रोतव्यादीनि राजेन्द्र ... | २ | सर्गे तपोऽहमृषयो ... ... | १२३ | सोऽहं समाम्नायमयः... ... | ९० |
| श्वविड्वराहोष्ट्रखरैः ... ... | ४४ | सर्वमेतच्च भगवन् ... ... | १३९ | सौभर्युतङ्कशिबि ... ... | १२६ |
| | | सर्वं पुरुष एवेदं ... ... | ८२ | स्वधिष्ण्यं प्रतपन्प्राणो ... | ८२ |
| स. | | सर्वं ह्येतद्भवान्वेद ... ... | ६२ | स्थितिर्वैकुण्ठविजयः ... ... | १०३ |
| स आदिदेवो जगतां ... ... | १४७ | सर्वासूनां च वायोश्च ... ... | ७९ | स्थिरं सुखञ्चासन ... ... | २८ |

श्रीकृष्णाय नमः ।

# प्रास्ताविकम् ।

श्रीमदाचार्यश्रीमद्वल्लभाधीश्वरप्रणीतग्रन्थेषु श्रीसुबोधिनी मूर्धन्येति बहूनां विदुषामभिप्रायः । श्रीसुबोधिनी श्रीमदाचार्यचरणैः प्रणीता प्रथम-द्वितीय-तृतीय-दशम-स्कन्धेषु उपलभ्यते । एकादशस्कन्धस्याध्यायचतुष्टयोपर्यपि दृश्यते । एतन्मूलश्रीसुबोधिन्या मुद्रणं नित्यस्वरूपब्रह्मचारिणा कृतमेव पूर्वम् । तदनन्तरं श्रीमद्गोस्वामिकुलतिलकश्रीगोवर्धनलालजीमहाराजचरणानामाश्रयेण पण्डितप्रकाण्डेन कविकाव्यरत्नाकरेण भट्टबलभद्रशर्मणा प्रथमसुबोधिनीमुद्रणं कृतम्, तथापि तत्र श्रीमद्गोस्वामिवर्यश्रीनृसिंहलालजीमहाराजचरणाश्रितशास्त्रिबद्रुणलालस्य पूर्वं मुद्रितस्य पुस्तकस्योपयोगो न कृत इति प्रतिभाति । यतः प्रकाशादिटीकासु स्वीकृताः शुद्धाः पाठाः टिप्पणेषु प्रायो निवेशिताः, अनावश्यकानि क्वचित् भ्रमोत्पादकानि च प्रश्नचिह्नानि मध्येमध्ये निक्षिप्तानि । अतः श्रीसुबोधिन्या अध्ययनं कथं साम्प्रदायिकैः कर्तव्यमिति प्रश्न उपस्थितः । साहित्यं विना तदध्ययनं तन्मुद्रणं च नैव संतोषप्रदमिति निश्चित्य तत्साहित्यसम्पादनायास्माभिः प्रयत्नः कृतः । श्रीमदाचार्यकृपया प्रथमस्कन्धसुबोधिन्या विवरणचतुष्टयमुपलब्धम् । एकं चाचाश्रीगोपेशानाम्, द्वितीयं श्रीपुरुषोत्तमानाम्, तृतीयं श्रीवल्लभानाम्, चतुर्थं श्रीगोकुलोत्सवानां च । केचित् स्वतन्त्रलेखा अपि प्राप्ताः । श्रीसुबोधिन्याः सम्यगध्ययने एतत्साहित्यप्राकट्यमत्यन्तमुपकरिष्यतीत्यत्र नैव स्वल्पोपि संदेहोस्माकम् । श्रीमत्प्रभुचरणकृपया कदाचित् तदपि सेत्स्यतीति विश्वासः । एतेषु विवरणेषु श्रीपुरुषोत्तमानां प्रकाशो विस्तृतत्वात् शास्त्रदृष्ट्या योजितत्वात् एतस्मिंश्च चाचाश्रीगोपेशकृतायाः टीकायाः प्रायः समग्राया अपि समावेशितत्वात् तन्मुद्रणस्यात्यावश्यकत्वाच्च प्रथमं मुद्रणे स्वीकृतः । श्रीसुबोधिन्या अवगाहनेऽयमत्यन्तमनुग्राहकोऽस्तीति तु निर्विवादं तदध्येतॄणाम् । एतन्मुद्रणार्थः द्रव्यप्रबन्धः सुरतिस्थश्रीमद्गोस्वामिश्रीव्रजरत्नलालकृपया जातः । तेषामेव प्रेरणया सुरतिस्थवैष्णवश्रेष्ठिव्रजदासप्रभुगंगारामेण भरतीयेत्याख्येन प्रथमसुबोधिनीप्रकाशमुद्रणव्ययो दत्तः ।

प्रथमसुबोधिनीप्रकाशमुद्रणं संवत् १९७८ वर्षे प्रारब्धम् । तथापि प्रकाशपुस्तकानां प्राप्तस्थानानां संदिग्धत्वादशुद्धत्वात् त्रुटिभूयस्त्वाच्च मुद्रणकार्यं स्थगितमिवासीत् । संवत् १९८१ वर्षे अस्मन्मित्रवैद्यकलाकस्य श्रीनाथद्वारे गमनं जातम् । तत्रत्यसंग्रहात् श्रीमत्कविमत्किशोरैरेकं प्राचीनं प्रथमप्रकाशपुस्तकं श्रीमद्गोवर्धनलालजीमहाराजानामाज्ञया

दृष्यम् । तत्पुस्तकोपरि श्रीपुरुषोत्तमानां श्रीहस्ताक्षरेषु कृतः शोधोपि एकस्मिन् पत्रे दृष्टः । तत्पुस्तकं प्रामाणिकमिति स्वीकृत्यास्माभिः पाठादियोजनं प्रायः तदाधारेणास्मिन् मुद्रणे कृतम्, तथापि यत्र तत्पुस्तकं संदिग्धं प्राप्तम्, तत्र निम्नलिखितानामन्यपुस्तकानामुपयोगः कृतः । तानि चेमानि ।

(१) एतत्पुस्तकं संवत् १८३७ वर्षे कार्तिकमासे कृष्णपञ्चम्यां लिखितम् । 'त्रवाडी पद्मप्राणजीवप्पेन' 'गुसांईजीश्रीश्रीश्रीगोविन्दरायाणां तस्यात्मजौ लालजीश्रीविठ्ठलेश्वरायजीलालजीश्रीगोकुलोत्सवरायजीवाचनार्थम्' । एतत्पण्डितगट्टूलालजीसंग्रहस्थम् । अन्यत्रादृष्टो भूयान् शोधोऽस्मिन् प्राप्तः ।

(२) नड्पुरस्थ-पुष्टिमार्गीय-पुस्तकालय-संग्रहस्थम्, भगवदीयत्रिभुवनदासपीताम्बरदासद्वारा प्राप्तम् । संवत् १७९७ वर्षे पौषमासे कृष्णपक्षे चतुर्थ्यां गुरुवासरे लिखितम् । उमरेठग्रामनिवासि-औदिच्यटोलकीयाज्ञातीय-व्यास-हृदयरामात्मजजीवरामेण लिखितमिदम् । इदं प्रायः शुद्धम्, तथापि नैव केनचिदपि वाचितं दृश्यते ।

(३) कंकरपल्लीस्थश्रीमद्गोस्वामिश्रीव्रजभूषणानाम् । संवत् १८२४ वर्षे पौषकृष्णसप्तम्यां शनिवारे लिखितम् । इदं पुस्तकं कंकरपल्लीस्थश्रीमद्गोस्वामिनीश्रीसौन्दर्यवतीवहुजीमहाराजकृपया तद्भ्रातृभट्टकरञ्जीछगुलालजीद्वारा प्राप्तम् । प्रायः शुद्धम् ।

(४) 'शास्त्रिकल्याणजी कानजी' इत्येतैः स्वयं लिखितं शोधितं च । एतत् पुस्तकं मुम्बास्थश्रीगोकुलाधीशजीमन्दिरस्थसंग्रहात् श्रीमद्गोस्वामिमधुलालकृपया प्राप्तम् ।

(५) श्रीमद्गोस्वामिरणछोडलालानाम् । नूतनमिदं श्रीमद्गोस्वामिश्रीजीवनेशैः स्ववाचनार्थं संपादितम् ।

(६) श्रीमद्गोस्वामिवृन्दमहाराजश्रीगोकुलनाथानाम् । नूतनमिदम् ।

(७) पं. गट्टूलालजीसंग्रहस्थम् ।

श्रीनाथद्वारीयपुस्तकोपरि श्रीपुरुषोत्तमानां श्रीहस्ताक्षरेषु 'ग्रन्थसंख्या ३०००' इति लिखितं दृश्यते । 'श्रीव्रजोत्सवानामिदं'मित्यपि तत्रैव दृश्यते । सप्तमलालश्रीघनश्यामानां श्रीगोपेशनामानः सूनव आसन् । तत्पुत्राश्च श्रीव्रजोत्सवाः । संभवति च श्रीपुरुषोत्तमैरेतत्पुस्तकं निजमित्रत्वात् श्रीव्रजोत्सवेभ्यः समर्पितम् । एतेन श्रीपुरुषोत्तमानां श्रीगोपेशानां बहुमानपुरःसरं 'चाचा'त्वेनोपन्यासो स्पष्टो भवति । यद्येतदनुमानं न युक्तम्, तदा तु तृतीयलालश्रीबालकृष्णानां वंश्यश्रीव्रजोत्सवानामिदं पुस्तकं स्यादिति ।



श्रीकङ्करपल्लीस्थश्रीमन्मातृचरणश्रीमद्गोस्वामिनीश्रीसौन्दर्यवतीनां परमोदारानुग्रहेण श्रीश्रीद्वारकानाथमन्दिरस्थसंग्रहात् श्रीपुरुषोत्तमानां प्राचीनं चित्रं समुपलब्धम् । तत् तादृशमेव सिद्धमत्र निवेशितमिति ।

अत्रापि 'धैर्यलाल व्रजदास सांकलीया' 'जमनादास कानजी' 'पुरुषोत्तमदास कानजी' 'हीरालाल मूळजीभाई' 'गोवर्धनदास प्रागजी' 'वल्लभदास मोरारजी' इत्यादीनां मित्राणामुपकारस्तु स्मर्तव्य एव । तथैवोपरिनिर्दिष्टानां श्रीमद्गोस्वामिबालकानां तदाश्रितपण्डितानां चोपकारः प्राचीनशुद्धहस्तलिखितपुस्तकप्रदानेन प्राचीनचित्रवितरणेन च जातोऽविस्मर्तव्य एव ।

एवमष्टपुस्तकाधारेणायं ग्रन्थः शोधितः । शोधनस्य जीवकार्यत्वात् तस्य च स्वभावतो दुष्टत्वात् दोषा अत्रापि न स्युरिति वक्तुमस्माकं नैव शक्यम्, तथापि पुस्तकस्यास्य प्रामाणिकत्वसम्पादने यावान् प्रयासो मानुषः सुलभः, स सर्वोपि कृत इति ।

स च कस्यचिदपि भगवदीयस्य प्रथमस्कन्धश्रीसुबोधिन्याः शास्त्रदृष्ट्या अध्ययने किञ्चिदपि सौकर्यं करिष्यतीति विचारेण, तं परमपरिश्रमेण शोधितं श्रीमत्प्रभुचरणकमलेषु समर्पयाम इति ।

पौषशुक्लप्रतिपद्<br>संवत् १९८२<br>मुंबई. } मूलचन्द्र तेलीवाला.

## शोधपत्रम् ।

तदुपपादयन्ति अधिकारीत्यादि । तथा च सेवाधिकारे सम्पन्ने भगवान् स्वयमायाति, तदा चरणक्षालनमेव प्रथमत इति तत्करणत्वं च गंगाया इति साक्षात् चरणसम्बन्धात्मकः फलरूप उपयोग इत्यर्थः । ननु भवत्वेवम्, तथापि योग्यदेहसाधने कथमस्य हेतुत्वमित्यत आहुः भावनायामित्यादि । तस्यामिति । सेवायाम् । अभिज्ञापिकेति । स्मारिका । तथा च तत्स्मारणेन कर्ममयमनःसंस्कारकतया तदित्यर्थः । ननु ब्रह्मणा चरणक्षालनमात्रस्य कृतत्वात् कथं सेवाभिज्ञापकतेत्यत आहुः तस्या इत्यादि । ननु भगवतो मोचकस्वभावत्वात् तत्संबन्धिन्या मोचकत्वमेवोचितम्, न तु योग्यशरीरसाधकत्वमित्यत आहुः भक्तकार्येत्यादि । भक्ता बलिर्देवाश्च । तत्कार्यमुद्धारः स्वर्गप्राप्तिश्च, तदर्थं व्यापृतस्य उत्क्षेपादिक्रियां तन्वानस्य, हेतुगर्भं विशेषणं, भगवच्चरणस्य वा । भूतसंस्कारपक्षम् । भावप्रधानः । भूतसंस्कारकत्वपक्षमाश्रित्य उक्तव्यापारवत्त्वात् तदनुसंधाय प्रकृते कथं तत्संस्कारकत्वमित्यपेक्षायां तदन्तरेति साधनाध्यायारंभसूत्रोक्तन्यायेन । तत्र हि पूर्वजन्मनि निष्कामयज्ञकर्तुर्ज्ञानरहितस्य मरणे यज्ञात्मकभगवदभिव्यक्त्यभावात् भूतसंस्कारक एव यज्ञो जात इति निष्कामत्वाच्च यज्ञसचिवा देवास्तुष्टा इति तदधीनान्येव च भूतानीति ते देवास्तस्याग्रे ज्ञानयोग्यदेहसिद्ध्यर्थं तत्र तत्र हुत्वा पञ्चाग्निविद्याप्रकारेण रेतो निष्पाद्य तस्य शरीरं संपादयन्तीति प्रतिपादितम् । तेन न्यायेन कृतप्राणिपुण्यपुञ्जस्य पूर्वजन्मनि कृतो यः पुण्यपुञ्जः श्रवणादीनां साधनभक्तीनां साक्षात् मोक्षसाधनत्वं ज्ञात्वा तान्त्रिकीदीक्षापूर्वकं विहितत्वेन कृतं यदुपासनामार्गीयं श्रवणादिनवकम् । तत्पूर्वोक्तयज्ञवत् भूतसंस्कारकमेव जातमिति यथा तस्य यज्ञस्य स्वव्यापारभूतदेवाधीनानि देहजनकानि भूतानीति विद्यायोग्यदेहनिष्पादनार्थं देवसम्बन्धं प्राप्य पञ्चाग्निविद्योक्तहोमरूपेण स यज्ञस्तिष्ठति, तथा पूर्वोक्तनवकमपि सम्बन्धिनां निषेक्तृपोषकरूपाणां पित्रादीनां भक्तत्वे सति तद्द्वारा भगवदीयशरीरनिष्पादनार्थं तुलसीचरणामृतचरणरेणुरूपाणि भूतानि संस्कुर्वद् गंगासंबन्धिनि भगवच्चरणे संबन्धं प्राप्य विहितत्वेन रूपेण तिष्ठतीति भक्तानां तादृशपुण्यश्रवणादिकृतां तत्संबन्धि तादृशशरीरं निष्पादयितुं चरणामृतचरणरेणुसंबन्धिनं साक्षात् सेवायोग्यं देहं निष्पादयितुं स्थितस्य नवकस्य गंगातोषकत्वात् चरणप्राप्तेः पूर्वमेव तत्प्राप्तिसाधकं चरणामृतचरणरेणुप्राप्तिसाधकत्वं गंगायाः प्यासः सूतश्च प्रदतीत्येतादृशचरणसंबन्धेन तस्याः तादृशं सामर्थ्यमित्यर्थः । भक्त्योरिति । विहिताविहितभक्त्योः । सेशानिति । अस्मिन् पक्षे उभयत्रेत्यस्य स्थितिदशायां संहारदशायां चेत्यर्थो बोध्यः ।

१ इदं शोधपत्रं १०७ पृष्ठे श्लोके १-११-६ इत्यत्र ज्ञातव्यमिति ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

# श्रीमद्भागवतप्रथमस्कन्धसुबोधिनीप्रकाशः ।

### श्रीमद्गोस्वामिश्रीमत्पुरुषोत्तमचरणविरचितः ।

नमः श्रीवल्लभाचार्यचरणाब्जनखेन्दवे ।<br>
यत्प्रकाशितहृद्देशा भक्त्यम्भोधितरङ्गिताः ॥ १ ॥<br>
प्रभञ्जनशिलाशनिव्यथितसर्वदिङ्मण्डले<br>
सुरेश्वरनिदेशतः प्रलयवारिदे वर्षति ।<br>
क्षितिध्रविपदीकृतक्षितिधरद्रुहः स्वीकृत-<br>
व्रजेक्षितसुधाम्बुधेर्भगवतः कृपायै नमः ॥ २ ॥

अथ श्रीमद्भागवतं व्याचिख्यासवः श्रीमदाचार्यचरणास्तत्प्रतिपाद्यं भगवन्तमिष्ट-
सिद्ध्यर्थं नमस्यन्ति वन्दे श्रीकृष्णदेवमिति । ' कृषिर्भूवाचकः शब्दो
१-१-० णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयत ' इति
श्रुतेः कृष्णशब्देन परं वस्तूच्यते । श्रिया सहितः कृष्णः स चासौ देवश्च तं वन्देऽभिवादये स्तौमि चेत्यर्थः । श्रीपदेन ब्रह्मानन्दरूपायाश्चिच्छक्तेर्देवीरूपाया मायायाश्च सङ्ग्रहः । कृष्णपदेनावताररूपस्यापि सङ्ग्रहः । देवपदेन लीलावैशिष्ट्यम् । तेन यः परपुरुषो द्विविधया श्रिया चतुर्भिर्व्यूहैर्नानावतारैः क्रीडति, स भजनीय इति सर्वस्य श्रीभागवतस्यार्थः । ' अपश्यत् पुरुषं पूर्ण'मित्यादिसन्दर्भेण तथा निश्चयात् । यद्यपि तेषु तेषु तन्त्रेषु तत्तद्व्यूहो भगवान् प्रतिपाद्यते, तथापि श्रीभागवते साक्षान्नारायणोदितपञ्चरात्रतिकश्चतुर्व्यूह एव प्रतिपादित इति तान् वदन्तः प्रथममनिष्टनिवारणार्थं तत इष्टप्राप्त्यर्थं च सङ्कर्षणवासुदेवव्यूहरूपत्वं विशेषणाभ्यां बोधयन्ति मुरनरकभिदं[1] वेदवेदान्तवेद्यमिति । श्रीभागवते हि प्रादुर्भूत एव भगवानुच्यते । तत्रोक्तव्यूहाभ्यां कार्यसिद्धौ पूर्णाविर्भावः किमर्थमिति शङ्कानिवृत्त्यर्थमाहुः लोक इत्यादि । अपारो यः प्रादुरासीदित्यन्वयः । ' तथा परमहंसाना'मिति वाक्यमत्रानुसन्धेयम् । अधिकरणनिर्देशेन प्रद्युम्नव्यूहरूपताप्युक्ता, तस्यैव वंशसम्बन्धात् । अनिरुद्धव्यूहत्वमाहुः यस्यासीद्रूपमेव त्रिभुवनतरण

१ दैत्यसंहारकत्वात् सङ्कर्षणस्य मुरनरकभिदमिति विशेषणेन तद्बोधनम्, वेदवेदान्तवेद्यस्यैव मोक्षदातृत्वात् द्वितीयविशेषणेन वासुदेवव्यूहबोधनमिति भावः ।

इति । त्रिभुवनसहितं तरणं त्रिभुवनतरणम् । निमित्ते सप्तमी । तन्निमित्तम् । प्रवृत्तिनिवृत्तिभेदेन द्विविधस्य धर्मस्य फलं त्रिलोकी मोक्षश्च तदुभयनिमित्तभूतं यस्य रूपमेवासीत् । अस्तिरूपत्यर्थः । 'हरितो रोहितादासी'दित्यादिप्रयोगात् । कुण्ठिते त्रिलोक्यादिहेतौ धर्मे तद्रक्षार्थं प्रकटमित्यर्थः । 'यदा यदा ही'त्यादिवाक्यमत्रानुसन्धेयम् । एवं रूपावतरणप्रयोजनमुक्त्वा नामावतरणप्रयोजनमाहुः भक्तीत्यादि । प्रथमश्चोच्चारणे, द्वितीयोऽप्यर्थे । तथा च, यथा मुदा स्वार्थं स्वतन्त्रभक्तिं प्रकटितवान्, तथा शास्त्रात्मकं रूपमपि मुदैव प्रकटितवानित्यर्थः । एतेन श्रीभागवतप्रकटने भगवदानन्द एव सङ्गतिरित्युक्तम् । एतत्कथनप्रयोजनमाहुः स नो भूतिहेतुरिति । व्याख्यानरूपसम्पद्धेतुः सोऽस्माकमस्त्वित्यर्थः ॥ १ ॥

आनुकूल्यमात्रेण व्याख्यानसम्पत्संभवेऽपि तत्र भगवदनधिष्ठाने तस्य लौकिकतुल्यतासंभवात् तन्निवारणाय तत्र पतित्वेन भगवत्स्थितिं प्रार्थयन्तः पूर्वमपि वाचि स्थितिं बोधयितुं श्रुतिसूत्रादिप्रतिपाद्यं तत्स्वरूपमाहुः कर्ता ज्ञ इत्यादि । य ईदृशो विजयते, य एवं वितनुते, स मम वाचि पतिरस्त्विति सम्बन्धः । 'कर्ता ज्ञः सकलस्ये'त्यनेन 'यतो वा इमानी'ति 'जन्माद्यस्य यत' इति श्रुतिसूत्रोक्तरूपत्वमुक्तम् । 'निगमभू'रित्यनेन शास्त्रयोनित्वसूत्रोक्तरूपत्वमुक्तम् । सर्वस्वरूपोऽपि सन् सर्वस्यापि विधारण इत्यनेनोपादानत्वमात्यत्वं सेतुत्वं चोक्तम् । तेन वाच्यपि स्थितिः साधिता । अन्तर्यामिब्राह्मणे 'यो वाचि तिष्ठ'न्निति श्रावणात् । प्रार्थितपूरकत्वायाहुः निर्दोषसर्वेष्टद इति । निर्दोषाणां सर्वेष्टदातेत्यर्थः । तेन प्रार्थितप्राप्तौ जीवधर्म एव हेतुः, न तु भगवद्धर्म इत्यपि बोधितम् । इष्टदाने प्रकारमाहुः यो लीलाभिरित्यादि । तापनीयानुसारेण मूलरूपतुल्यत्वं बोधयितुमाहुः पूर्णगुणभूरिति । एवं मूलरूपमवताररूपं च श्रीभागवतप्रतिपाद्यं निरूपितम् ॥ २ ॥

अतः परं शिष्टाचारप्राप्तं पितृनमस्कारं कुर्वन्ति श्रीमदित्यादि । अत्र श्रीगोपीपतिवन्दिन इत्यनेन परंपरया विष्णुस्वामिमतानुवर्तिगोपालोपासकत्वं सूचितम् । सुमनसीत्यादिना ज्ञानोपदेशकथनादहंग्रहोपासकत्वम् । नाममाहात्म्यकथनेनाहंग्रहोपासनाजनितसामर्थ्यवत्त्वम् । पूर्णोपासकत्वबोधनाय हरय इति ॥ ३ ॥

एवं कृतं मङ्गलं शिष्यशिक्षार्थमुपनिबध्य मुख्यमध्यमजघन्याधिकारिणां यथार्हफलदातृत्वस्यारम्भे स्फुटमनुक्तत्वात् सर्वेषां श्रवणे प्रवृत्तिः कुण्ठिता भवेदिति तन्निवृत्त्यर्थं तत्तत्फलानुकूलं श्रीभागवतस्वरूपमिति निरूपयन्ति श्रीमद्भागवतेति । लोके इति । दैवसृष्टौ । नन्वेकस्यैवागमत्वं सुरतरुत्वं फलत्वं चेति त्रिरूपत्वं कथमित्याशङ्कायां समादधते

१ धर्मरक्षारूपानिरुद्धकार्यदर्शनेन तद्रूपत्वमित्यर्थः । २ व्याख्यानरूपस्ववचने ।



भाषेत्यादि । 'भाषास्तु त्रिविधाः प्रोक्ता' इति वाक्यात् भाषाणां लौकिकीमतान्तरसमाधिभाषाणां यो भेदो नानात्वं तेन यो विभेदस्तारतम्यं तस्माद्धेतोस्त्रयं पूर्वोक्तरूपत्रयं विरुद्धं नो स्यात्, यत इदं पुराणं महत् । मह पूजायाम् । पूजितमतो हेतोरित्यर्थः । नन्वेवं सत्यंशेन तथात्वम्, न तु सर्वस्य, ततश्च त्रिरूपत्वं भज्येतैव, यथा हि नखकेशनेत्रादिषु रूपान्तरसत्त्वेऽपि पुरुषो गौर एव व्यपदिश्यते, न तु नानारूप इति तद्वदिति शङ्कायां प्रतियोगिभेदेन पुरुषस्य पितृपुत्रादिरूपत्ववत् तत्तदधिकारिभेदे फलभेदात्त्रयात्वं समर्थयन्ति भक्तयंश इत्यादि । 'यस्यां वै श्रूयमाणाया'मिति वाक्ये भक्त्युत्पादकत्वकथनात् तस्यां जातायां स्वतन्त्रपुरुषार्थत्वेन श्रवणादिना आस्वाद्यमाने भक्त्यंशे तं प्रति सम्पूर्णस्यैव फलता फलरूपत्वम् । 'इदं भगवता पूर्व'मितिवाक्ये भगवत्प्रकाशितत्वकथनात् 'सर्ववेदेतिहासाना'मितिवाक्ये सारत्वकथनात् तदनुसंदधानान् प्रति प्रमाणसुबले, प्रमाणस्य शब्दस्य सुष्ठु यद्बलमनपेक्षत्वरूपं तस्मिन्नंशे संपूर्णस्यैव वेदत्वं वेदरूपत्वम् । 'विप्रोधीत्याप्नुयात्प्रज्ञा'मित्यादिवाक्यार्थमनुसन्दधानान् प्रति अर्थे, तत्तत्पुरुषार्थे सुरतरुस्तत्तत्कामपूरणात् । अतस्त्रिरूपत्वं संपूर्णस्यैवोपपन्नमित्यर्थः । एवञ्च 'कैवल्यैकप्रयोजन'मित्यत्रैकशब्दो मुख्यवाचीति बोध्यम् । तथा कैवल्यपदमपि लीलामोक्षोभयपरम्, 'लोकवत्तु लीलाकैवल्य'मितिसूत्रे लीलाया अपि तथात्वेनोक्तेः । अतो न कोऽपि शङ्कालेशः ।

प्रक्षिप्ताध्यायनिवृत्त्यर्थं शाखासङ्ख्यामाहुः शाखाद्विवह्निद्वयम् । ३३२ । अङ्कानां वामतो गतिः । इयमेव सङ्ख्या श्रीधरीयेऽपि, 'द्वात्रिंशत्त्रिशतं च यस्य विलसच्छाखा' इति कथनात् । यद्यपि काव्यवदलङ्कारा आचार्यैर्नादृताः, तथापि केचन श्रुतौ सूत्रेऽप्यादृताः, यथा 'असावादित्यो देवमधु' इत्यत्र, 'शरीररूपकविन्यस्तगृहीते'रित्यत्र । अतस्तद्बोधनायात्र रूपकमादृतमिति ज्ञेयम् । इदं च मूलेऽप्यभिप्रेतम्, अन्यथा भागेषु स्कन्धपदं व्यासचरणा न प्रयुञ्जुः ॥ ४ ॥

एवं तत्तत्फलानुकूलं श्रीभागवतस्वरूपं निरूप्य पूर्वं बहुभिर्व्याख्यातत्वेऽपि स्वस्य तत्र प्रवृत्तौ सङ्गतिं वदन्तो व्याख्यानं प्रतिजानते अर्थमित्यादि । विवे विगतं वं सुखं यस्मादिति विवस्तादृशे लोके सति तस्य श्रीभागवतस्यार्थं अर्चितुम्, 'अर्च पूजने' 'अच इत्येके' इति पाणिनिना पठितत्वात् पूजितं वक्ष्यमाणरीत्या सप्तार्थाविरोधेन प्रकटीकरणमेव पूजनं तत्कर्तुम्, हि यतो हेतोः वैश्वानरादन्यो विभुर्न । विभुत्वे हेतुः वाक्पतेरिति । 'उत त्वः पश्यन्न ददर्श वाच'मित्यत्र यथा जाया स्वतनुं पत्ये प्रकटयति, एवं

१ त्रिरूपत्वम् । २ अर्थमित्यादि । वस्तुतस्तु यङ्लुगन्ताद्विचेः पर्याप्तवचनेष्वलमर्थेष्विति सूत्रेण तुमुन् । न च गुणो यङ्लुकोरित्यभ्यासस्य गुणे सति वेवेचितुमिति रूपं शंक्यम् । संज्ञापूर्वकविधेरनित्यत्वात् । नाप्येकाच उपदेशेनुदात्तादितीण्निषेधः शंक्यः । 'श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च । यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकी'त्यनुशासनेन तन्निषेधादिति ।

वागपि कस्मैचिदेव स्वार्थं प्रकटयतीति श्रावणात् । तत्र दृष्टान्तानुरोधेन दार्ष्टान्तिकेपि स्वपतावेव प्रकटयतीति ज्ञायते । पतित्वं वक्तावेव । 'तस्याग्निरास्यं निर्भिन्नं लोकपालोऽविशत्पदम् । वाचा स्वांशेने'ति वाक्ये वाचोऽग्न्यंशत्वस्य स्मरणात् । तत्र तादृशेऽर्यार्चनहेतौ विभुत्वे सति श्रीपतिर्भगवान् व्यासवत्, स्वांशं मां मानुषतनुं विधाय, आज्ञां च अर्थात् तत्कर्तुं दत्त्वा, यस्मात्कृपावलोकनपटुर्जातः, अत उक्तहेतोर्व्यासस्य विष्णोः प्रियं गूढार्थं मुदा बहुधा प्रकटीकरोमि । अत्र गूढार्थप्रकटीकरणे आज्ञाजनिता मुद्धेतुः । बहुधा प्रकटने उभयप्रियत्वं हेतुः । अतस्तथेत्यर्थः ॥ ५ ॥

प्रकटने प्रकारमाहुः लक्षणानां नैवेति । सप्तानामिति । शास्त्रस्कन्धप्रकरणाध्यायवाक्यपदाक्षरीयाणाम् । इहेति । अस्मिन् व्याख्याने । सङ्कोचत इति । व्यवहारप्रयोजनकाच्छक्तिसङ्कोचात् । अर्थत्रयं तु वक्ष्यामीति । सोपपत्तिकमत्र वक्ष्यामि । निबन्धेस्ति चतुष्टयमिति । शास्त्रस्कन्धप्रकरणाध्यायानां येऽर्थास्तच्चतुष्टयं निबन्धे सोपपत्तिकमस्तीत्यतोऽत्र त्रयं वक्ष्यामीत्यर्थः । शेषं स्फुटम् ।

प्रथमे श्लोके । भगवदाज्ञयेति । 'दूतानामिव वर्णित'मिति न्यायकेन नारदोपदे-
शेनेत्यर्थः । ननु बीजभावेनैवोपनिबबन्धेत्यत्र किं प्रमाणमित्याकाङ्क्षायां
१-१-१ प्रसङ्गतः श्लोकत्रयसङ्गतिं व्युत्पादयन्ति अत्र हीत्यादि । ततश्च
श्लोकत्रयार्थापत्तिरेव प्रमाणत्वेन फलिष्यति । गायत्र्यर्थस्य बीजत्वमुपपादयितुं प्रथमं लक्षणवाक्ये वृत्रासुरवधकथनप्रयोजनमाहुः यथा हीत्यादि । यज्ञात्मकत्वं तु 'तत्त्वष्टाहवनीयमुपप्रावर्तयत् स्वाहेन्द्रशत्रुर्वर्धस्वे'ति श्रुतेराहुत्युत्पन्नत्वाद्बोध्यम् । भक्त्यात्मकत्वं च 'अहं हरे तवे'त्यादिषु तद्वाक्येष्वेव प्रकटम् । न चायं श्रौतानुवादः । 'जज्ञे त्वष्टुर्दक्षिणाग्नौ' इत्युत्पत्तिस्थानभेदकथनादिविरोधात् । तथा च प्रतिबन्धकनिवृत्त्यै वेदवदत्र तन्निरूपणमित्यर्थः । गायत्र्यारंभकथनप्रयोजनमाहुः गायत्रीत्यादि । ततश्च यदि बीजत्वाय गायत्र्यर्थनिरूपणं न स्यात्, तदा लक्षणवाक्ये 'गायत्रीमधिकृत्य धर्मविस्तारो वर्ण्यते' इत्यादिकं नोक्तं स्यात् । अतस्तथेति भावः । एवं चात्र लक्षणवाक्ये उभयोक्त्या भक्तिजन-

१ येनासौ वक्तव्यं प्रतिपद्यत इति । २ अर्थो भागवतार्थः तस्यार्चनं पूजनम्, तत्र हेतुः, स्वसार्थप्रकटनम्, तत्र विभुत्वे सतीत्यर्थः । ३ व्यवहारः प्रयोजनम्, यस्यैतादृशाच्छक्तिसंकोचात् । यथा शास्त्रार्थपदशक्तिः समग्रा भागवतार्थेऽस्ति, एवं स्कन्धार्थपदशक्तिर्न, किन्तु स्कन्धार्थे एव । एवमुत्तरत्रापि शक्तिसंकोचोऽवधेयः । ४ स यशवेशसं कृत्वा प्रासहा सोममपिबत्, तस्य यदत्यशिष्यत, तत् त्वष्टाहवनीयमुपप्रावर्तयत् । स्वाहेन्द्रशत्रुर्वर्धस्वेति यदवर्तयत् तद्वृत्रस्य वृत्रत्वम् । यदब्रवीत् स्वाहेन्द्रशत्रुर्वर्धस्वेति तस्मादस्य इन्द्रः शत्रुरभवदिति श्रुतेः । आहवनीयहोमं कृत्वा उप समीपे पश्चाद् दक्षिणाग्नौ प्रावर्तयत्, परावर्त्य दक्षिणाग्नौ होमं कृतवान् । आतिचारिकास्तत्रैव हुताः । ५ भक्तित्वम् ।



कथर्मनिरूपकत्वं भक्तिप्रतिबन्धनिवर्तकतन्निरूपकत्वं च लक्षणत्वेनोक्तं ज्ञेयम् । एवं प्रथमश्लोकसङ्गतिर्हेतुतारूपोक्ता ।

द्वितीयस्याहुः किञ्चेत्यादि, संहितेत्यन्तम् । एषेति । व्यासानुभूतरूपा । किं तेनेत्याहुः तत्र हीत्यादि । तथा च धर्मपदेन भक्त्यर्थः प्रयत्न उच्यते । वेद्यमित्यादिना ज्ञानस्य कथनेन ज्ञानस्य व्यापारता निरूप्यते । अयमेव च वेदार्थः । द्वितीयस्कन्धे 'भगवान् ब्रह्म कात्स्न्र्येने'तिवक्ष्यमाणत्वात् । तावता वेदस्य वृक्षरूपताभिसन्धीयते । सुहृद इत्यादि । एतेन दशस्कन्धानामर्थः सङ्गृहीतो ज्ञेयः । द्वादशे आश्रयनिरूपणेनाऽऽत्मत्वस्य, शेषैश्च नवभिः प्रत्येकं त्रिविधानामुत्पत्तिस्थितिप्रलयानां निरूपणेन माहात्म्यज्ञानपूर्वकसुदृढसर्वाधिकस्नेह एव पर्यवसानात् ।

तृतीयस्याहुः यथा हि यज्ञा इत्यादि । अन्योन्यहेतुभूत इति । परस्परोपकारकः । भक्तिहेतुरिति । साक्षात्परंपरया च तथा । निरूप्यत इति । तृतीये पानोपदेशान्निरूप्यते । अत इत्यादि । तथा चोपोद्घातसङ्गत्या श्लोकत्रयनिरूपणमित्यर्थः । ननु द्वादशे स्कन्धे ॐकारं प्रकृत्य 'स सर्वमन्त्रोपनिषद्वेदबीजं सनातन'मिति कथनात् बीजता प्रणवस्य स्फुटा । 'ॐमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यान'मित्यादिश्रुतेश्च । एवं व्याहृतिष्वपि स्मर्यते इति तत्सर्वमतिहाय कुतो गायत्र्या एवार्थो निरूप्यत इत्यत आहुः यद्यपीत्यादि । नन्वेवं सति गायत्र्येव कुतो नोपनिबद्धेत्यत आहुः किञ्चेत्यादि । तथा च विनियोगद्वयदर्शनेनार्थे सन्देहात् तन्निरासायार्थमेवोक्तवान् । ततश्चोपस्थानस्थले 'एकं सद्विप्रा' इति श्रुतिस्वारस्येन तत्राप्यग्न्यन्तर्यामिणि तद्वदने तद्रूपके भगवत्येव तात्पर्यम्, नत्वग्नौ । भगवत्सामर्थ्येनैव च मन्देहादिनिवारणम् । 'ऐन्द्या गार्हपत्यमुपतिष्ठत'इतिवद्वाक्यमात्रेणापि विनियोगसंभवेनार्थसन्देहानपायात् । निवारणे चेत्यत्र चोनुक्तसमुच्चायकः । तेनोपनयने विनियोगोपि सङ्गृह्यते । अत एवमर्थकथने विनियोगत्रयस्यापि परस्परानुगुण्यमिति बोधयितुमर्थकथनमिति भावः ।

एवमर्थकथने उपपत्तिमुक्त्वा श्लोकं व्याख्यातुं प्रथमं गायत्र्यर्थमाहुः तत्रेत्यादि । अत्र षष्ठ्यन्तद्वयस्यार्थोक्त्या सूर्यो निवारितः । भर्गःशब्दस्यासुनन्तत्वबोधनेन शिवो निवारितः । धीपदव्याख्याने निरङ्कुशसर्वेन्द्रियप्रेरकत्वबोधनादितरवारणे ब्रह्मपरत्वे चोपपत्तिरुक्ता ज्ञेया । इदं यथा तथा प्रहस्ताख्ये वादे प्रपञ्चितं मयेति नात्रोपपाद्यते । जन्म आद्यस्येति पक्षस्येतरैरनुक्तत्वात् तत्र प्रमाणमाहुः तस्माद्धेत्यादि । ननु जन्मादित्रयमनादृत्य जन्मैवात्र किमिति गृह्यते इत्यत आहुः गायत्र्यर्थ इत्यादि । तथा च गायत्र्यनुरोधाज्ज-

१ भूर्भुवः सुवरिति लोकत्रयं व्याहृतिशब्देनोच्यते । भूर्भुवःसुवरिति वा तिस्रो व्याहृतय इति तैत्तिरीयश्रुतेः । २ मन्देहादिराक्षसनाशेन होमप्रसिद्धिः । अत उक्तं 'मन्देहारुणे दीप' इति श्रुतौ ।

थेत्यर्थः । ननु यद्येवं तर्हि जन्मादीतिपक्षः किमित्युक्त इत्याकाङ्क्षायां तत्रोपपत्तिं वदन्त आहुः अथवेत्यादि । तथाच श्रुतिसिद्धत्वात् सोपि सङ्गृह्यते इत्यर्थः । स्थितिभङ्गस्येत्यादि । स्थितिसहितो भङ्गः स्थितिभङ्गः उत्तरपदलोपी समासः । जन्मादीति सामान्ये नपुंसकम् । अत्र जन्मनः कुटादिशब्दे कुटस्येव समुदायघटकत्वेनावयवत्वात्तदुपलक्षितसमुदायवर्तिधातुभ्यो विवक्षितप्रत्ययानां ङिद्भावे यथा न संविज्ञानम्, तथात्र जन्मन इत्यतद्गुणसंविज्ञान इत्यर्थः । अधिकोक्त्यादिपरिहारायैवं व्याख्यातम् । अस्मिन् पक्षे कल्पनाबाहुल्यमित्यरुच्या पक्षान्तरमाहुः उत्पत्तीत्यादि । जन्मनः समुदायविशेषणत्वविवक्षायां स इत्यर्थः । तर्ह्यधिकोक्त्यादिदूषणस्यावकाश इत्यत आहुः वेदार्थेत्यादि । तथा च 'यतो वे'त्यादिश्रुत्यर्थसङ्ग्रहपूर्वकमत्र तथोच्यते इत्यदोष इत्यर्थः । अनेनेति । कामधेन्वादिवदविकृतत्वबोधकाव्ययनिर्देशेन । विपरीतमित्यत्र परमाणुकारणवादस्यापि सङ्ग्रहः । अन्वेतीत्यन्वय इति । अनुर्लक्षणे, तत्तल्लक्षीकृत्य यस्तत्र तत्र व्याप्य वर्तते सोन्वय इत्यर्थः । एवञ्च, अनारोपितानागन्तुकरूपेणानुवृत्तिः समवाय इति तत्स्वरूपमपि बोधितं ज्ञेयम् । यत्रेत्यादि । एतेनाखण्डब्रह्मवाद उक्तः । ननु व्यासचरणैस्तर्कपादे समवायो दूषित इति कथं समवायिकारणं ब्रह्मेत्युच्यते इत्यत आहुः स्थितीत्यादि । आदिपदेन भावविकारान्तरम् । यथापेक्षमिति । तत्तदनुकूलाधारत्वेन । तथा च व्यासपादैर्वैशेषिकादिप्रतिपन्नो दूष्यते, न तु तादात्म्यरूपोपीत्यतो न दोषः । कारणस्य नित्यत्वेनातिरिक्तपक्षेपि ' यत्र येने'ति श्लोके यथापदोक्तप्रकारमध्ये प्रवेशादपि न दोष इत्यर्थः । नन्वतिरिक्तपक्षे समवायस्य प्रलये अपेक्षाकथनमनुपपन्नम्, तस्य सम्बन्धत्वेन द्विनिष्ठत्वात्कार्यरूपप्रतियोगिनाश आधारनाशेन तत्स्थितेर्वक्तुमशक्यत्वादित्यत आहुः अथवेत्यादि । ननु लोकसिद्धावन्वयव्यतिरेकौ विहाय किमित्येवं व्याख्यायते इत्यत आहुः प्रत्यक्षेत्यादि । ननु तयोः शब्दानुग्राहकत्वाङ्गीकारेपि को दोष इत्यतः आहुः नवेत्यादि । एतेन श्रीधरोक्तिर्निरस्ता ज्ञेया । सिद्धमाहुः तस्मादित्यादि । सर्वप्रकारेणेति । समवायित्वेन निमित्तत्वेनाधिष्ठानत्वेन प्रयोजकत्वेन चेत्यर्थः । अनतिप्रयोजनाय सप्तमीति । वैराग्यस्य पूर्णत्वेन कस्यापीप्सिततमत्वाभावेन कर्मषष्ठीमनुक्त्वा विषयसप्तम्युक्तेरित्यर्थः । एतदेव विशदयन्ति ज्ञानशक्तेरित्यादिना । अर्थशब्देन कथं फललाभ इत्यत आहुः प्रयोजनवाचीति । 'अर्थोभिधेयरैवस्तुप्रयोजननिवृत्तिष्वि'ति कोशादित्यर्थः । एवमौदासीन्ये उपेक्षा आयातीति परार्थसृष्टौ पुरुषार्थसिद्धिर्न स्यादिति तदर्थं पक्षान्तरमाहुः अथवेत्यादि । तथा च 'निमित्तात् कर्मयोग'-इत्यनेन फले सप्तमी । सा च कर्मभूतानां जीवानां योगस्य स्वस्वामिभावाद्यात्मकस्य यथापेक्षं सत्त्वात् बोध्या । तथा च जीवानामर्थेष्वभिन्न इत्यर्थः । प्रकारभेदादित्यादि । जीवानां स्वरूपत्वेपीश्वरत्वस्य तत्राप्रकारत्वात् तदर्थं सृष्टिकरणं न



स्वराट्त्वव्याघातकमित्यर्थः । रमणश्रुत्यनुसारेण सृष्टेः स्वार्थत्वमङ्गीकृत्य पक्षान्तरमाहुः अथवेत्यादि । तेनेति । रूढ्यादरेण । अपुष्टार्थत्वमाशङ्क्य पक्षान्तरमाहुः अक्लेशार्थं वेत्यादि । तथा च प्रलयप्रयोजनमनेनोच्यते इत्यर्थः । एतावतेति । प्रथमपादेनेत्यर्थः । नास्तीति । तिरोभावाभावेन वेदस्वरूपस्य नित्यत्वान्नास्तीत्यर्थः । सूक्ष्मतयेति । प्रस्तावसङ्कुल्येत्यर्थः । तेन इत्यस्यार्थमाहुः य इत्यादि । यदिति लुप्तसप्तमीकमिति ज्ञापयन्ति यस्मिन्निति । वैदिकानिति । एवं वदन्तो मीमांसका मुह्यन्तीति शेषः । आत्ममात्रमिति वदन्तो वेदान्तैकदेशिनो मुह्यन्तीति शेषः । नैयायिकाद्यास्तु शिष्टापरिग्रहेण सूरित्वाभावादेव व्यावर्तिता ज्ञेयाः । ननु सूरित्वे कथं मोह इत्यत आहुः मोह इत्यादि । 'ज्ञानिनामपि चेतांसी'ति 'मामेव ये प्रपद्यन्त' इति वाक्यद्वयविचारेण तथावसीयत इत्यर्थः । नन्वन्यस्य वेदार्थवित्त्वाभावे मीमांसकादिरीत्या यज्ञादिकरणेन फलाभाव आपाद्येत, तथा सति पुत्रेष्ट्यादावपि विसंवादः स्यादित्यत आहुः वेदस्येत्यादि । अत्र गमकद्वयमाहुः तथैवेत्यादिना । मन्दमत्यर्थं वेदविभाजनात् । पुरूरवसः कामनायामेव त्रेतायां त्रयीप्राकट्यात्तथेत्यर्थः । क्वचिदिति । पुरूरवसः पूर्वकृतयुगे वेत्यर्थः । 'वेदः प्रणव एवे'ति 'यो ब्रह्माण'मिति वाक्यद्वयविचारेण सिद्धं व्यासाशयमाहुः सर्वथेत्यादि । जलादावित्यादिपदेन यथा दुर्योधनस्य 'स्थलं मत्वा जलेऽपत'दिति मयमायाभ्रमस्तादृशः सङ्गृह्यते । मण्यादिष्विति । पार्थिवेषु । मेघेष्विति । वारिप्रधानेषु । एवं षड्भिर्दृष्टान्तैरेकैकस्मिन् द्वौ द्वौ विनिमयावुक्तौ । तत्र प्रथमषष्ठौ तेजोविषयौ, द्वितीयपञ्चमौ वारिविषयौ, तृतीयचतुर्थौ मृद्विषयौ बोध्यौ । सजातीयभ्रमा इत्यादिना 'तमिमं मन्यते लोको ह्यसङ्गमपि सङ्गिनम् । आत्मौपम्येन मनुजं व्यापृण्वानं यतोऽबुध'इत्यादिभ्रमाः सङ्गृहीताः । अवतारादिष्वित्यादिपदेन प्राप्तफला भक्ता ग्राह्याः । 'देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिना'मितिवाक्यात् । एतदेव स्फुटीकुर्वन्ति निमित्ताधिकरणयोरित्यनेन । तथा च यदर्थः यन्निष्ठश्च त्रिसर्गो मृषेत्यर्थः । तत्कारणमिति । प्रकृतिः । तदधिकरणानीति । गुणाः । तदर्था इति । रूपादयः । ननु मायावादिवद्देहेन्द्रियादीनां केवलमिथ्यात्वप्रतिपादने को दोष इत्यत आहुः केवलेत्यादि । खपुष्पाधारत्वस्य कुत्राप्यव्यवहारात् त्रिसर्गस्य तद्वत्केवलमिथ्यात्वप्रतिपादने तथेत्यर्थः । दूषणस्य लौकिकत्वात् नैर्बल्यमाशङ्क्य तदुपष्टम्भाय दूषणान्तरगर्भं हेत्वन्तरमाहुः सर्वाधारत्वादिति । 'सदायतनाः सत्प्रतिष्ठा' इत्यत्र ब्रह्मणः सर्वाधारत्वं श्राव्यते । सर्वस्य मिथ्यात्वे तदपि विरुध्येतेत्यर्थः । गमकान्तरमाहुः एतदर्थमित्यादि । एतदर्थमिति । अन्यत्र त्रिसर्गस्य सत्यत्वार्थम् । तथा च दृष्टान्तेषु तथैव सिद्धत्वादपि दार्ष्टान्तिके त्रिसर्गेन्यत्र सत्यत्वमुपेत्यैव ब्रह्मणि मिथ्यात्वं वक्तुमुचितमित्यर्थः । सिद्धमाहुः लोकदृष्ट्या प्रतीत इति । तत्र हेतुः अन्यस्मिन्नित्यादि । तया चोक्तहेतोस्त्रिसर्गोऽवतारादिषु लोकदृष्ट्या प्रतीत

इत्यर्थः । तत्र दृष्टान्तार्थं स्पष्टयन्ति प्रभृतीत्यादि । तेनान्यत्र सतां संसर्गिणां ब्रह्मणि संसर्ग एव मिथ्येति साधयित्वा संसर्गबोधकानि षण्मतान्याहुः केचिदित्यादिना । चले कृष्ण इति । आविष्टे कृष्ण इत्यर्थः । ननु यद्येवं तर्हि कथं भगवति देहादिव्यवहार इत्यत आहुः यथेत्यादि । उत्तरत्रेति । एवमित्यादि । तथा चाध्यासराहित्येनाविद्याविषयत्वात् तन्निवारकत्वरूपो भर्गःशब्दार्थ उक्त इत्यर्थः । शिष्टमिति । यथाधिकारमभयम् । उभयत्रेति । गायत्र्यामत्र चेत्यर्थः ॥ १ ॥

धर्मः प्रोज्झितेत्यत्र । मध्यमभावमिति । बीजफलयोरन्तरा वर्तमानं वृक्ष-
भावमित्यर्थः । कण्ठतः कल्पद्रुमत्वानुक्तेः कथं तत्प्रत्ययः इत्यतस्तदुप-
१-१-२
पादयन्ति धर्म इत्यादिना । धर्म इति । श्रवणादिरूपः । ज्ञानमिति ।
भगवज्ज्ञानम् । विशिष्टकल्पद्रुमत्वमिति । कामिताधिकदानात् तथा । वेदश्चेति । चो वेदाविरुद्धसमुच्चायकः । पूर्वोक्तन्यायेनेति । सूरिमोहकत्वेन । उक्तरूपेणेति । विधिबोधितत्वरूपेण । भागवत एवेत्येवकारेण भारतेपि कैतवं बोधितम् । 'भारते भगवद्धर्माणामपर्याप्तफलवचनात् कैतवम्, अत्र तु न क्वापि प्ररोचने'ति सूक्ष्मटीकायां कथनात् । कृपालुत्वेत्यादि । एकादशे भगवता साधुलक्षणत्वेन तेषामेवोक्तत्वाच्चेत्यर्थः । अविद्यावद्विषयत्वमिति । वेद्यस्येत्यनुषज्यते । शिवपदं विवृण्वन्ति यज्ञादिष्विवित्यादि । नन्वत्र व्यासैर्मत्कृतमित्येव कुतो नोक्तम्, अत आहुः समाधावित्यादि । तथा च भगवत्प्रेरणया कृतत्वेन स्वस्यास्वातन्त्र्यज्ञापनाय तथोक्तिरितिभावः । उपासनाकाण्डोत्कर्षमिति । अत्र पञ्चमीतत्पुरुषः । स्थानाधिष्ठानेष्विवेति । मथुरादिष्वपि तत्त्वाविष्टत्वादिरूपेणैव स्वाधीनतेत्यर्थः । प्रतिपादकानामिति । ब्रह्मनारदादीनाम् । वस्तुनिर्देश इति । मङ्गलरूप इत्यर्थः ।

निगमकल्पतरोरित्यत्र । रूपकादरणे निगमकल्पतरुपदे उपमितसमासादन्यत्र
च सादृश्याद्गौणीप्रसक्त्या कैतवे जातेऽन्यत्रापि तथा शङ्का स्यादिति
१-१-३
तन्निवृत्तयेऽत्रोक्तस्यार्थस्य वाच्यत्वमुपपादयितुं रूपकानादरे हेतुमाहुः
काव्यवदित्यादिना । बुद्धिपरिकल्पितमिति । व्याकरणे व्युत्पत्तिपक्षवत्पुराणादिषु लोकसिद्धानुवादेपि शब्दार्थयोः सहजसम्बन्धाभावेन तथेत्यर्थः । प्रमेयस्वरूपमाहुः तत्र व्यापीत्यादि । ननु शब्दस्य मूर्तिभूतत्वं रसात्मकत्वं चाप्रयोजकमित्याशङ्कायां वेदात्मकस्य शब्दस्य तथात्वं स्पष्टयन्ति तत्रेत्यादि । तथा च यथा 'सैषा त्रय्येव विद्या तपती'ति श्रुत्या वेदात्मकत्वेन निश्चितस्याप्यादित्यस्य मधुविद्यायां मूर्तिभूतत्वं रसात्मकत्वं च सिद्धम्, तथेहापीत्यर्थः । न च 'कल्पनोपदेशाच्च मध्वादिवदविरोध'इतिसूत्रे

१ तत्त्वादिरूपेणेति पाठः ।



व्यासपादैर्मधुविद्यायां गौणी प्रतिपादितेति तद्विरोधात् कथमत्र वाच्यार्थप्रतिपत्तिरिति वाच्यम् । 'वैषम्यनैर्घृण्य'सूत्रस्य लोकबुद्ध्यनुसारित्ववदस्य वादिबुद्ध्यनुसारित्वात् । पञ्चशिखप्रणीतसाङ्ख्यसमासवृत्तौ सूर्यस्य चक्षुरधिदैवतत्वेन सिद्धस्य श्रुत्युक्तमधुत्वासंभवे तेनापि तत्र गौण्येवादरणीयेति तद्वदजाशब्देपि गौण्यादरणीयेति बोधनार्थत्वात् । अन्यथा ईक्षत्यादिष्वपि गौणीप्रसक्त्या सिद्धान्तभङ्गप्रसङ्गात् । 'श्रुतेस्तु शब्दमूलत्वा'दित्यादिसूत्रवैयर्थ्यापातात् । अतो 'वैषम्य'सूत्रस्य तथात्वे 'आत्मकृति'सूत्रवदेतस्य तथात्वे ईक्षत्यादिसूत्राणामेव गमकत्वान्न तद्विरोधः । नापि भाष्यविरोधः । 'कल्पनोपदेशाच्चे'ति चकारस्य परोक्षवादबोधकत्वेन व्याख्याततयास्यैवार्थस्यादरणादिति । अतःपरं प्रत्यक्षविरोधोऽवशिष्यते, तं परिहर्तुमाहुः तथेत्यादि । तथाच विरोधाल्लक्षणाङ्गीकारे स्वाप्रत्यक्षमात्रे तथाप्रत्या शक्त्युच्छेदे शास्त्रमेव विप्लूयेतेत्यन्यथानुपपत्त्यात्र शक्तिरेवादरणीयेत्यर्थः । ननु श्रीभागवतस्य वेदफलत्वमुक्तम्, तत्र फलं द्विविधम्, जघन्यं शिरस्यं च, आद्यं पनसादि, द्वितीयमाम्रादि, वेदे च काण्डद्वयम्, तत्र पूर्वकाण्डफलत्वे 'त्रैगुण्यविषया वेदा' इत्यस्यापि जघन्यत्वं स्यादिति तन्निवारणाय निगमपदस्यार्थमाहुः वेदस्येत्यादि । परमोपनिषदित्यनेन बृहज्जाबालादिरूपा निवार्यते । तत्र भस्मग्रहणविध्यादिनिरूपणेन नितरां ब्रह्मगमकत्वाभावादिति । शिरस्यस्यापि फलस्यापक्वत्वे तथारसाभावादस्यापि तथात्वे एतत्प्रतिपादितार्थस्याप्युत्कृष्टत्वं न स्यादिति तदभावाय गलितपदतात्पर्यमाहुः अतीत्यादि । अनधिकारिणी वृक इव, देवकार्यार्थं बलाविव, भगवद्वाक्यत्वाच्छलवादोपि संभवतीति तदभावायाहुः शुक इत्यादि । पिता हीत्यादि च । अमृत इवेत्यादेस्तात्पर्यमाहुः तथेत्यादि । तच्चेति । श्रीभागवतम् । चोप्यर्थः प्रेमसमुच्चायकः । तदेकीभूतमित्यत्र तत्पदेन प्रेम बोध्यम् । अयमर्थः । सञ्जातभक्तीनामेव हृद्यारोहतीति तदितरेषामर्थे 'भगवान् ब्रह्म कार्त्स्न्येने'ति वक्ष्यमाणमनुसन्धाय पक्षान्तरमाहुः अथवेत्यादि । तादृशशब्दराशिप्रतिपाद्यार्थरूपं फलमाहुः शुद्धा इत्यादि । तथा चैवमर्थे बुद्धे मन्दानामपि प्रवृत्तिर्भवतीत्यर्थः । तादृशशब्दप्रकाशे हेतुमाहुः अयमित्यादि । फलप्राप्तौ निदर्शनमाहुः अन्य इत्यादि । संयुतत्वेपि निदर्शनमाहुः सम्यगित्यादि । इक्षुवदिति । आवश्यकत्वायेत्यर्थः । फलस्य रसात्मकत्वे प्रत्यक्षविरोधपरिहाराय दृष्टान्तमाहुः निर्बीजेत्यादि । कानिचिदिति । द्राक्षाविशेषपीलुतूदादीनि । ननु तथापि पेयत्वं तु दुर्घटमित्यत आहुः यथेत्यादि, भावुका भविष्णव इति । 'लषपतपदस्थाभूवृषे'त्यनेन ताच्छील्यार्थे भुव उकञ् । भुवश्चेत्यत्र चकारेण भाषायाः समुच्चये इष्णुच् । 'भूष्णुर्भविष्णुर्भविते'त्यमरः । तथा च भवनसाधुकारिण इत्यर्थः । णिजन्तादेतमंगीकृत्य पक्षान्तरमाहुः भाववन्नेत्यादि । भाग्यवाचिभावुकशब्दादर्शआद्यचि कृतेप्येवं प्रयोगो भवतीति तमप्यर्थं सङ्गृह्णन्ति भाग्यवतामिति ॥ ३ ॥

नैमिष इत्यत्र । न कार्यत्व इति । अत एवोपनिषदादिभ्यो न भक्तिः, तेषु सृष्ट्या-
१-१-४ दीनां कार्यत्वेनैव श्रावणादिति भावः । अनायासस्त्वेनेति । न विद्यते
आयासो यस्येत्यनायासस्तत्त्वेनेत्यर्थः । स्वरूप मङ्गतिभेदेनेति । प्रश्न-
कर्तृस्वरूपवक्तृप्रश्नयोः कथनेनेत्यर्थः । शीर्यत इति । अत्रेति शेषः । प्रजापतीत्यादि ।
तदुक्तं वायवीये 'भ्रमतोऽधर्मचक्रस्य यत्र नेमिरशीर्यत । कर्मणा तेन विख्यातं नैमिशं
मुनिपूजित'मिति । निमिषमात्रेणेत्यादि । तदुक्तं वाराहे भगवता गौरमुखमुनिं प्रति
'उवाच निमिषेणेदं निहितं दानवं बलम् । अरण्येस्मिन् ततस्त्वेतन्नैमिषारण्यसंज्ञितम् ।
भविष्यती'त्यादिना । सहस्रसंवत्सरसाध्यमिति । एतेनास्मिन् सत्रे सहस्रदिनसाध्यत्वं
वदन्तो भाट्टा निरस्ता वेदितव्याः । श्रीबलदेवतीर्थयात्रायां 'यावत्सत्रं समाप्यत' इति वाक्ये
सत्र एव सूतवधात् । तस्यैवेदानीमप्यनुवर्तमानत्वात् । न च 'कलिमागतमाज्ञाये'ति वाक्ये
आरम्भस्यैव बोधनादिदं सत्रमन्यदेवेति वाच्यम् । तथापि परीक्षिद्राजस्य त्रिवर्षत्वाभा-
वाद्युष्मदभिमतासिद्धेः । 'त्रिवृतः संवत्सरा' इत्यादौ लक्षणां विनैव निर्वाहाच्चेति ।
तत्र भगवदाविर्भावस्तु तृतीयस्कन्धीये सत्रे 'पुरा विश्वसृजां वसूना'मिति श्लोके सुबो-
धिन्यां प्रदर्शितः । भगवन्दानन्दांशभून इति । 'एतस्यैवानन्दस्यान्यानि भूतानि
मात्रामुपजीवन्ती'ति श्रुतेः । श्रीधरमतं दूषयन्ति न तु स्वर्गीयतेत्यादि । लोकात्म-
कस्य स्वरूपमाहुः स चेत्यादि । तेन गृहविमानात्मके विद्यमानेपि यदभावे तत्र न
सुखं तादृशो देवविशेषो लोकाधिदैविक इत्यर्थः ॥ ४ ॥

न एकदेत्यत्र । ननु 'नाडिकाः षट्पञ्चाशत् प्रात'रिति वाक्ये यदा षट्पञ्चा-
१-१-५ शच्च नाडिका व्यतियन्ति, ततः प्रातः । तत्र होमो वेदोदितसूर्योदया-
नन्तरहोमं विरुणद्धीति तत्राहुः न चेत्यादि । पक्षान्तरस्वीकारा-
दिति । 'पूर्वात् परबलीयस्त्व'न्यायेन वैष्णवपक्षस्वीकारादित्यर्थः । 'उमिति प्रतिपद्यते'
इतिश्रुतौ स्फुटमिदमिति 'आदरादलोप'धिकरणाज्ज्ञेयम् । तदुपपादयन्ति नथे-
त्यादिना । अन्येषामिति । क्षत्रधर्मोपजीवित्ववैश्यस्वरूपमध्यमजघन्यवृत्तिसूतानाम् ।
सूतोत्पत्तिवृत्ती तु वायवीये उक्ते । 'वैन्यस्य हि पृथोर्यज्ञे वर्तमाने महात्मनः । सुत्याया-
मभवत्सूतः प्रथमं वर्णवैकृतम् । ऐन्द्रेण हविषा तत्र हविः पृक्तं बृहस्पतेः । जुहावेन्द्राय
देवाय ततः सूतो व्यजायत ।' तस्य मुख्यां वृत्तिं पौराणिकीमुक्त्वा 'मध्यमो ह्येष सूतानां
क्षत्रधर्मोपजीवनम् । रथनागाश्वचरितं जघन्यं च चिकित्सित'मिति । न्यूनभावा-
दिति । अनादरादित्यर्थः । भगवदादरादिति । 'ल्यब्लोपे पञ्चमी' । भगवदादरं
वीक्ष्येत्यर्थः । आदरोक्तितात्पर्यमाहुः सर्वत्रेत्यादि ॥ ५ ॥

१ दिन ।



त्वयेत्यत्र । आकरस्थानीति । शतकोटिप्रविस्तरस्थानि । मूलसंहिता-
१-१-६ चतुष्टयमिति । सांख्ययोगपाशुपतवैष्णवरूपमिति प्रतिभाति ॥ ६ ॥
अन्ये चेत्यत्र । चित्पदासङ्गत्या पक्षान्तरमाहुः भूतभविष्यत्काला
१-१-७ इति । भूता भविष्यन्तश्चार्थाः कालश्चेत्यर्थः ॥ ७ ॥
प्रायेणेत्यत्र । अनेनेति । अल्पायुष्ट्वकथनेन । आद्य इति । सहस्रसमादि-
रूपः । धर्मबोधनायेति । अस्मिन् वाक्ये सभाप्रविष्टस्य जान-
१-१-१० तस्तूष्णीभावेपि दोषकथनात्तद्बोधनायेत्यर्थः । साधनस्य इति । उत्त-
रकथनस्येति शेषः । पूज्यत्वायेति । 'कलौ खलु भविष्यन्ति नारायणपरायणा' इति
वाक्यात्तथेत्यर्थः ॥ १० ॥
अत इत्यत्र । यदिति प्रसिद्धं वा सारमिति । 'प्रक्रान्तप्रसिद्धानुभूतार्थविष-
यस्तच्छब्दो यच्छब्दं नापेक्षत' इति न्यायस्य यच्छब्देपि तुल्यत्वात्
१-१-११ पक्षान्तरमाहुः यदित्यादि । पारम्पर्यफलव्यभिचारेति । व्यभि-
चारशब्दो द्वन्द्वान्ते श्रूयमाणत्वादुभयत्र सम्बध्यते । ईषेति । 'ईष गतिहिंसादानेषु' ।
महत्सुखावाप्तिरिति । अत्र षष्ठीतत्पुरुषात् परममहत्परिमाणमितिवदात्वाभावः ॥११॥
सूत जानासीत्यत्र । जीवधर्मा इति । अविद्याकामकर्माणि ।
१-१-१२ मुक्ता वेति । सनकादय इत्यर्थः ॥ १२ ॥
यस्यावतार इत्यत्र । भवशब्दस्य संसारवाचित्वेन प्रसिद्धस्यान्यैः संपत्त्यर्थक-
त्वेन व्याख्यातस्याप्यत्र प्रकरणानुरोधात् मोक्षवाचित्वे उपपत्तिमाहुः
१-१-१३ भू सत्तायामित्यादि । मोक्षे सत्यविद्यानिवृत्तेरर्थादेव सिद्धेश्चकारवैय-
र्थ्यमित्यरुच्या पक्षान्तरमाहुः चितीत्यादि । चैतन्येऽनुप्रवेशः परममोक्षः ॥ १३ ॥
आपन्न इत्यत्र । तन्माहात्म्यमाहेति । अवतारस्य मोक्षार्थत्वं सम-
१-१-१४ र्थयितुमाहेत्यर्थः ॥ १४ ॥
यत्पादेत्यत्र । तयोरिति । ज्ञानकर्मणोः । तत्र हेतुः कालेत्यादि । अग्रेण वा
सम्बन्ध इति । उपस्पृष्टा इति । अस्येति शेषः । तत्र हेतुः तेषा-
१-१-१५ मित्यादि । 'सा राजन् दर्शनादेव ब्रह्महत्यापहारिणी'त्यस्य यमुनासङ्ग-
मोत्तरकालविषयत्वात् । 'अनुसेवये'त्युपलक्षणे तृतीया, 'जटाभिस्तापस' इतिवदित्या-
शयेनाहुः भगवदित्यादि । पुनन्तीति । आप इत्यर्थात् । एवं व्यतिरेकेऽङ्गीक्रियमाणे
योजना क्लिष्टा भवतीति पक्षान्तरमाहुः अथवेत्यादि । नन्वेवं बहुषु वाक्येषु लक्षणादि-
क्लेशः प्रसज्यत इत्याशङ्क्य तद्दोषनिवृत्तय आहुः आपातत इत्यादि । तथा च न क्वापि
वाक्ये क्लेश इत्यर्थः ॥ १५ ॥

को वेत्यत्र । स्वतश्चान्याप्रवृत्त्यर्थमिति । स्वाभाविकाश्चोद्व्यावृत्त्यर्थमित्यर्थः ।
पुण्यश्लोका ईड्यकर्माणो येनेति समासमभिप्रेत्यार्थान्तरमाहुः तानि-
१-१-१६ त्यादि । ईड्यकर्मण इत्यर्थः । अस्यापुष्टार्थत्वमाशङ्क्य प्रथमपक्षस्यैव
तात्पर्यान्तरमाहुः तेषामित्यादि । कीर्तिरिति । ईड्यपदबोधिता सेत्यर्थः । यशो लक्ष-
यन्ति आधारेत्यादि । प्रतापवारणाय सर्वलोकाह्लादकेति । चन्द्रकिरणादिवारणाय
शुण इति । विसर्पीति तु स्वभावकथनम् ॥ १६ ॥

तस्य कर्माणीत्यत्र । अवान्तरफलेति । अवान्तरफलं शुद्धिरूपम् । तथाचा-
१-१-१७ विचारेण सर्वेषां शुद्धिदानार्थमुदारत्वोक्तिरित्यर्थः ॥ १७ ॥
वयं त्वित्यत्र । पदशब्दस्याक्षरवाचकत्वाय योगमाहुः पद्यत
१-१-१९ इत्यादि ॥ १८ ॥
१-१-२० कृतवानित्यत्र । येभ्य इति हेतौ पञ्चमी बोध्या ॥ २० ॥
कलिमित्यत्र । सर्वदोषनिवर्तक इति । विहितकर्मादिरूपप्रतिबन्धकनिवर्तक
१-१-२१ इत्यर्थः ॥ २१ ॥

इति सुबोधिनीप्रकाशे प्रथमस्कन्धे प्रथमाध्यायविवृतिः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

अथ द्वितीयाध्यायं विवरिषवः सङ्गतिमाहुः कथेतिद्वाभ्याम् । तथा च प्रश्नो-
त्तरभावः प्रथमाग्रिमाणां द्वितीयतृतीययोरवसरः शेषशेषिभावो वा सङ्ग-
१-२-० तिरित्यर्थः । फलसाधनरूपाणामिति । फलं च साधनरूपाणि चेति
द्वन्द्वः । रूपाणि प्रकाराः । शेषिणामिति । संसर्गे मत्वर्थीयः । शिष्टानामवतारार्थधर्मिणाम् ।
यं प्रव्रजन्तमित्यत्र । दूरादाह्वाने दूराद्धूते चेत्यनेन प्लुते जाते 'प्लुतप्रगृह्या'
इत्यनेन प्रकृतिभावात्सन्ध्यनुपपत्तिमाशङ्क्याहुः प्रेम्णेत्यादि । तथा चात्र
१-२-२ सन्धेरार्षत्वं वदतः श्रीधरस्य विरहकातरपदतात्पर्याज्ञानमित्यर्थः । अभि-
नेदुरित्यनेनोक्तस्य प्रतिध्वानरूपस्याभिनदनस्य वृक्षयुक्ते देशे अभाव इति तत्र तमुपपाद-
यितुमाहुः स सर्वेत्यादि । तथा चातो वृक्षेष्वप्युत्तरदानरूपः प्रतिध्वनिर्युक्त इत्यर्थः ।
नन्वत्र यन्मयतया प्रतिध्वनिरुक्तः, सः कः, ज्ञानयोगयोः शुके व्यासे च सत्त्वादित्याका-
ङ्क्षायामाहुः कर्तुरित्यादि । एतदुपष्टम्भायैतन्नियामकं शुकनिष्ठमाहुः विष्णोरित्यादि ।
एवं व्याख्यानं श्रीधरीयेपि । परमेवं व्याख्याने शुकस्तरुरूपेणोत्तरं दत्तवानिति भवति ।



तथा सति मूलोक्तं तरूणामभिनादकर्तृत्वं च विरुध्यत इत्यरुच्या पक्षान्तरमाहुः अथ-
वेत्यादि । अस्मिन् पक्षे तन्मयतयेत्यस्याजुहावेत्यनेन सम्बन्धः । अर्थस्तु शुकमय-
त्वमेव । तथा सति मूलेऽभिनादकथनप्रयोजनाभाव इति शङ्कायामाहुः तेषामित्यादि ।
तथा च सर्वभूतहृदयपदेन तदर्थसिद्धिः । अन्यथैतस्यानतिप्रयोजनत्वम् । अत इदमेव
व्याख्यानं युक्तमिति भावः ॥ २ ॥

य इत्यत्र । विशेषमाहेति । इतरेष्वपि ज्ञानदातृत्वेन गुरुत्वरूपं विशेषमाहेत्यर्थः ।
एतस्येति । सूतस्येत्यर्थः । तादृशानामिति । पुराणानाम् । 'सूत त्वं
१-२-३ पूजितोस्माभिः सारात्सारं वदस्व न' इत्येवंजातीयवाक्यानां तत्रापि
सत्त्वादिति । तथा च तद्व्यावृत्त्यर्थमेकपदमित्यर्थः ॥ ३ ॥

मुनय इत्यत्र । द्वितीयप्रश्न इत्यादि । 'येनात्मा सुप्रसीदती'त्युक्ते प्रश्ने द्विती-
यमन्तःकरणप्रसादरूपं फलमेभ्य एव मुन्यर्थमेव भवतीत्यर्थः । सामा-
१-२-५ न्योत्तरमिति । इदं चतुर्थपादेन गम्यते । तस्य प्रश्नानुवादरूपत्वादिति ।
स वा इत्यत्र । निरूपयतीति । प्रथमपद्ये सामान्यत उक्तं विशेषाकारेण वक्ती-
त्यर्थः । स चेति । भगवत्प्रसाद इत्यर्थः । तत्परम्परायामित्यादि ।
१-२-६ साधनपरम्परायां धर्मवैराग्ययोर्यथायोग्यं निवेशनमुच्यत इत्यर्थः ।
आहेति । द्वाभ्यामाहेत्यर्थः । स चेति । स्वर्गादिसाधक इत्यर्थः । तेन तत्र धर्मत्वसन्देहस्त-
द्विचारे ज्ञातो भविष्यतीति भावः । व्यावर्तकमित्यादि । श्रीधरमतमिदम् । श्रवणादि-
लक्षणभक्तिजनकस्य परत्वमनूद्य स एवैकान्तिकं श्रेय इति तत्र व्याख्यानात् । साधन-
त्वेनेति । फलदानसाधनत्वेन ॥ ६ ॥

१-२-७ वासुदेवेत्यत्र । अन्य इति । मूर्तिरूपोऽवताररूपो वेत्यर्थः ॥ ७ ॥
धर्म इत्यत्र । वक्तुमिति । 'धर्मस्य ह्यापवर्ग्यस्ये'त्यादिभिश्चतुर्भिर्वक्तुमित्यर्थः ।
अन्यव्यावृत्त्यर्थमिति । धर्मत्वव्यावृत्त्यर्थम् । एतेन पूर्वं स्वर्गादिसाधके
१-२-८ धर्मत्वं सन्दिग्धमिति यदुक्तं तत्साधितम् । साधारणधर्मस्येति । सर्वे-
षामावश्यकस्य नित्यस्य ॥ ८ ॥

धर्मस्येत्यत्र । ननु भवतु सामान्यधर्मस्य तथात्वम्, तस्य 'दत्तो धावती'त्या-
दिवत्फलसंस्कारत्वेन स्वतःफलवत्त्वाभावात्, मुख्यकर्माभावे केवलस्य
१-२-९ तस्याप्रयोजकत्वाच्च, परन्तु फलसाधकत्वेन विहितस्य काम्यस्य
कथं न धर्मत्वमित्याकाङ्क्षायां तस्य तथात्वमुपपादयन्ति पुत्रादीत्यादि । फलस्ये-
त्यादि । तस्मिन् पुत्रादिरूपेण फलत्वाभिमानस्याविद्याकार्यत्वेन तस्य तथात्वादि-
त्यर्थः । तथाचानर्थसाधकत्वेनार्थत्वाभावान्न धर्म इति भावः । तत्स्वरूपं किमित्याका-

ङ्कायां तत्परिच्छिन्दन्ति किन्त्वित्यादि । भित्त्यादिकृतिवदिति । यथा कामनाविशेषरूपे निमित्ते भित्त्यादिकरणेन स्वसम्बन्धो नियम्यते, तथा तादृशधर्मेणापि कामनाविशेषरूपे निमित्ते स्वस्य सम्बन्धो नियम्यत इति तथेत्यर्थः। 'काम्ये नैमित्तिकत्वम्, नैमित्तिके विकारः स्या'दिति सूत्रात् सिद्धम् । ननु यथा 'यस्याहिताग्नेरग्निर्गृहान् दहेत्, सोऽग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपे'दित्यादौ नैमित्तिकस्यापि निर्वापस्य धर्मत्वम्, एवं 'चित्रया यजेत पशुकामः' 'दैविकया निर्वपेत् प्रजाकाम' इत्यादावपि चोदनारूपस्य धर्मलक्षणस्य सत्त्वात् कथं न धर्मत्वमित्यत आहुः तत्रेत्यादि । ननु तत्र 'देवांश्च याभिर्यजत' इतिवद्यदुपबन्धाद्यभावात् कथमनुवादत्वनिश्चय इत्यत आहुः चित्तेत्यादि । 'क्षुत आचामे'दित्यादिना शुद्धिविधायकशास्त्रेण, 'शुद्धः कर्माचरे'दित्यादिना च शुद्धेरङ्गत्वावगमात् तस्या बाह्याया इवान्तर्याया अप्यावश्यकत्वात् तदभावेनाधिकाराभावात् 'यदेव विद्यया करोति तत्तदेवास्य वीर्यवत्तरं भवति' 'विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवे'दित्यादिभिश्च ज्ञानस्याप्यङ्गतया वाक्यतात्पर्यज्ञानस्याप्यावश्यकत्वात् तदभावेनान्यथाकरणे देवताधिष्ठानाभावात् क्रियाया लौकिकत्वम् । तथा च शुष्केष्टिवदनुकरणरूपत्वात् यजतिवैयर्थ्यमित्यर्थः । हेत्वन्तरमाहुः फलमित्यादि । तथा च यथा 'देवांश्चे'त्यत्र वाक्यान्तरसिद्धानुवादकत्वम्, तथा तेषु लोकसिद्धानुवादकत्वमिति यजतिवैयर्थ्यमित्यर्थः । ननु कामितमित्यादि । 'चोदनालक्षणोऽर्थो धर्म' इति सूत्रस्य 'वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्म' इत्यर्थकथनात् कामितमित्यकथनात् कामितस्यैव प्रयोजनत्वात् तत्साधकस्य कथं न धर्मत्वमित्यर्थः । ननु वाक्येषु तत्तत्फलोद्देशेनैव तस्य तस्य यागादेर्विधानदर्शनात् कथं विधिस्पर्शाभावोऽवगन्तुं शक्य इत्यत आहुः अन्यथेत्यादि । लौकिकेपि विधिस्पर्शो यद्यभ्युपेयते, तदा तथा स्यात्, अतस्तत्र तृतीयाबोधितकरणत्वेन फलसिद्धिः, न तु धर्मत्वमपि तत्र प्रयोजकम्, अतस्तदनुरोधेन लक्षणार्थस्तथा न शक्यवचन इत्यर्थः । ननु तया क्रियया अपूर्वजननात् कथं न तस्या धर्मत्वमित्यत आहुः अपूर्वेत्यादि । आरोग्यधनादिरूपदृष्टफललाभेनादृष्टस्यापूर्वस्य कल्पनमप्रयोजकम्, अतो नेत्यर्थः । ननु यागोत्तरं कालविलम्बेन फलजननात् मध्येऽपूर्वं क्रिययैवोत्पद्यत इत्यवश्यमङ्गीकर्तव्यम्, अन्यथा तदेव फलं स्यात्, नैव स्याद्वा । तत्राद्ये प्रत्यक्षविरोधः, अन्त्ये श्रुतौ दोषप्रसक्तिः, तदुत्पद्यत एवेति कथं न धर्मत्वमितिशङ्कायां तदुत्पत्तिमुपगम्य दूषणान्तरमाहुः किञ्चैते हीत्यादि । एवं रैरूपस्यार्थस्य धर्मकार्यत्वं खण्डितम् । शेषं खण्डयन्ति तथा नेत्यादि । अपरत्वान्न परमार्थरूपाः । 'प्रकर्षेण युज्यते' इति 'युज्यतेऽनेने'ति वा प्रयोजनं तदुभयरूपत्वाभावान्न प्रयोजनरूपा इत्यर्थः । नन्वेवं सति काम्येष्टिपशुकाण्डस्य धर्मपरत्वहानिः, तथा च 'वेदोऽखिलो धर्ममूल'मित्यखिलविरोध इत्याशङ्कायां गौणधर्मत्वं तत्रोपगम्याहुः किञ्च धर्म इत्यादि । तथा चेयमत्र व्यवस्था,



यदा लौकिकफलासक्त्या वेदस्य तत्परत्वं निश्चित्य काम्यं कर्म करोति, तदा तस्य श्येनादिवदनर्थत्वात् न धर्मत्वम् । यदा च भगवत्कृपादिना तस्यौषधरोचनवत् प्ररोचनयातिबहिर्मुखसांमुख्यार्थतां ज्ञात्वा लोकसङ्ग्रहाय करोति, तदा गौणधर्मत्वमित्युभयथापि पुत्रादीनां लौकिकानां न धर्मफलत्वमिति सिद्धम् । एवं धर्मस्यार्थसाधकत्वं दूषितम् ।

अतः परमर्थस्य कामसाधकत्वं दूषयितुं धर्मसाधकत्वं च साधयितुमग्रिममवतारयन्ति नन्वित्यादि । पूर्वपूर्वसाधनरूपा इति । पूर्वपूर्वं यथा स्यात्तथा साधनरूपा इत्यर्थः । 'धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते' इत्यादि 'कामाः फलभूताश्च धर्मार्थयो'रित्यादि चात्र साधकं ज्ञेयम् । अत्र कामस्य मोक्षसाधकत्वं 'प्रजापतिरमृतमानन्द इत्युपस्थ' इति दृष्टान्तद्वारा प्रतिभाति । एतं कार्यकारणभावं प्रत्यक्षविरोधाद्दूषयन्ति अदृष्टादित्यादि । दृश्यत इति । होमदानादिरूपो दृश्यते । तथा च यथा 'एष उ एव साधु कर्म कारयती'त्यादिश्रुत्युक्तमपि ईश्वरप्रवर्तकत्वमतं मीमांसकैर्नाद्रियते, तथा अपूर्वद्वारा धर्मोऽर्थसाधक इति मतं दृष्टविरोधान्मुमुक्षूणामप्यनादरणीयमित्यर्थः । तर्हीति । अर्थत्वेन धर्मत्वेन कार्यकारणभावव्यभिचारेपि कामत्वेनार्थत्वेन कार्यकारणभावस्याढ्येषु दर्शनात् धर्मत्वेनार्थत्वेन कार्यकारणभावस्य साधितत्वादव्यभिचाराद्वेत्यर्थः । इदं दूषयन्ति काम इत्यादि । विषयसुखमिति । 'इन्द्रियाणां स्वे स्वे विषये आनुकूल्येन प्रवृत्तिः काम' इति कामसूत्रे आनुकूल्यपदेन सुखस्य बोधनात् तदेव कामः । तथा चायमपि कार्यकारणभावः प्रत्यक्षविरुद्ध इत्यर्थः । ननु विषयकोटावर्थस्य निवेशात् विषयकारणतायाश्चाङ्गीकारात् कथं प्रत्यक्षविरोध इत्यत आहुः तत्रेत्यादि । विषयांशेऽर्थस्य स्रक्चन्दनवनिताधनादिरूपस्य उपयोगोपि न, इति कुतस्तरां कारणतेत्यर्थः । ननु मास्त्वर्थस्य कामं प्रति साक्षात्कारणता, तथापि स्रक्चन्दनवसनादिभी रूपादीनामुत्कर्षः सम्पाद्यत इत्युत्कर्षप्रयोजकतया कारणत्वं केन वार्यतामित्यत आहुः न चेत्यादि । अर्थ इतिशेषः । कुतो नेत्यत आहुः सिद्धानीत्यादि । अर्थस्य किं स्वनिष्ठरूपादिसम्पादनेन कामजनकत्वम्, उतार्थान्तरनिष्ठतत्सम्पादनेनेति विचारणीयम् । तत्राद्यं प्रत्यक्षविरुद्धम्, स्रगादेः स्वगुणोत्कर्षसंपादकत्वादर्शनात् । द्वितीयं चेत्, तत्रापि विचारणीयम्, किं भोक्तृनिष्ठतत्सम्पादनेन, उत भोग्यनिष्ठतत्संपादनेन । तत्राद्ये स्वर्थे प्राप्ते रूपादिकं गच्छति । युद्धप्रतिग्रहादिनार्थप्राप्तौ तथा दर्शनात् । अर्थस्य विषयनाशकत्वेन कामनाशकत्वम् । द्वितीये तु स्त्रीयोऽर्थो भोग्याधीनो भवतीति स्वतो गतेऽर्थे रूपादिविषयप्राप्तिरित्यर्थनाशनद्वारा विषयस्यैव कामजनकत्वम्, न त्वर्थस्य विषयोत्कर्षजननद्वारेत्युभयथा वैपरीत्यमायातमित्यर्थः । ननु द्वितीये स्त्रीयार्थस्य भोग्याधीनतया गमनेपि तेन भोग्यरूपक्रयादेरर्थस्य स्वाधीनतासंपादनात्तेन क्रयादिना चोत्कृष्टविषयसुखसिद्धेरर्थस्य कामजनकत्वं सिद्धमितिचेत्, तत्राहुः पराभूत्तावित्यादि । साध्य-

साधनतेति । कामसाधनता । तथा चार्थस्यार्थान्तरसाधकतया कामजनकत्वं यद्युपेयते, तदापि स्त्रिया पुत्ररूपार्थप्राप्तौ स्त्रीरूपनाशदर्शनात् विषयनाशनद्वारा कामनाशकत्वरूपं पूर्वोक्तमेव वैपरीत्यमापतितमित्यर्थः । सिद्धमाहुः तथा चेत्यादि । अर्थरूपा इति । अर्थ्यते अभीप्स्यते इत्यर्थ इति योगेनार्थरूपा इत्यर्थः । लोकेत्यादि । 'रूढिर्योगमपहरती'तिन्यायात्तथेत्यर्थः । अर्थेत्यादि । एवं प्रयोजकत्वेनार्थस्य कामजनकत्वाङ्गीकारेऽर्थस्य धर्मजनकत्वदर्शनादर्थसाधकस्य करदण्डचौर्यादेरपि धर्मजनकत्वापत्तेरित्यर्थः । तर्हि लोके कथं साधनत्वप्रत्यय इत्यत आहुः लोक इत्यादि । तर्हि प्रसिद्धेः सार्वजनीनत्वात्तादृशप्रतीतेः भ्रान्तत्वं कथं वक्तुं शक्यमित्यत आहुः कदर्यस्येत्यादि । ननु कदर्यत्वस्य प्रतिबन्धकत्वात् नान्वयव्यभिचार इत्यत आहुः पश्वादीनामित्यादि । ननु तृणारणिमणिन्यायेन पशुत्वस्यापि व्यक्तिविशेषं प्रति कारणत्वे व्यतिरेकव्यभिचारोपि नेत्यत आहुः तथेत्यादि । तथा चान्वयव्यतिरेकव्यभिचारदर्शनात् प्रसिद्धिर्देहात्मप्रसिद्धिवद्भ्रान्तेत्यर्थः । तथाचेत्यादि । घटादिरूपा पृथिवी, लोहलेख्या, पार्थिवत्वात्, वृक्षादिवदित्यत्र लोहलेख्यत्वपार्थिवत्वयोरिव साहचर्यमात्रमप्रयोजकमित्यर्थः । एवं कामो लाभायेति व्याख्यातम् । ननु मास्तु कामार्थयोरवच्छेदकावच्छेदेन कार्यकारणभावः, परं तत्तद्व्यक्तित्वावच्छिन्नः सः प्रत्यक्षेण वसनालङ्कारवनितादिषु प्रमितः केन वार्यतामित्याकाङ्क्षायां कामस्य नेत्यर्थं व्याकुर्वन्ति किञ्चेत्यादि । जीवनमात्रपर्यवसित इति । 'शरीरस्थितिहेतुत्वादाहारसधर्माणो हि कामा' इति वात्स्यायनसूत्रसिद्धः । अनशनादिना रोगादिदर्शनात् तन्निवृत्त्या जीवनमात्रसाधक इत्यर्थः । स्वतः सिद्ध इति । ईश्वरनिर्मितः । मतान्तरे अदृष्टनियतः । सुखात्मकस्य कामस्यात्र ग्रहणे साध्यसाधनभावव्याघातात्कामपदमत्र लाक्षणिकत्वेन व्याकुर्वन्ति विषयभोग इति । उभयत्रेति । पूर्वार्धोत्तरार्धयोः । क्रम इति । उच्यमानोऽङ्गीकार्य इति शेषः । अर्थो वेति । स जीवनस्यार्थो न इति शेषः ॥९।१०॥

वदन्तीत्यत्र । समुदायपक्ष इति । तेषां भावस्तत्त्वमिति पक्षे । सर्वो-
१-२-११
पजीवकत्वादिति । सर्वे उपजीवका यस्य तस्य तथात्वात्, सर्वोपजी-
व्यत्वादित्यर्थः ॥ ११ ॥

तच्छ्रद्दधाना इत्यत्र । तच्छब्दस्य पूर्वपरामर्शित्वात् पूर्वश्लोकोक्तं धर्ममा-
१-२-१२
दाय श्लोकोक्तसाधनानां क्रमं वदन्ति तदर्थमित्यादि ॥ १२ ॥

अतः पुम्भिरित्यत्र । बीजेत्यादि । पञ्चाग्निविद्याप्रकारेण सिद्धशरीरास्तादृशं
धर्मं कुर्वन्तीत्यर्थः । तादृशशरीराभावेपि केचन तादृशधर्मकर्तारो दृश्यन्ते,
१-२-१३
तत्र कारणाकाङ्क्षायामाहुः धर्मेत्यादि । ममैष काम इति । इदं षष्ठस्कन्धे प्राचेतसं दक्षं प्रति भगवद्वाक्यम् । 'प्रीतोहं ते प्रजानाथ यत्तेस्योद्बृंहणं तपः ।



ममैष कामो भूतानां यद् भूयासुर्विभूतय' इति । अत्र दक्षकृततपःपोषकत्वेन प्रकृतार्थसिद्धिः । कर्मणि प्रयोग इत्यादि । कर्मणि प्रयोगे हि 'देवदत्तेन तण्डुलः पच्यत' इत्यादौ क्रियाजन्यं विक्लृतिरूपं फलं कर्मरूपे तण्डुल एव, न तु कर्तरि देवदत्ते । तथात्रानुष्ठाने सुष्ठुत्वेन धर्म एव यदोपक्षीणो भवति विक्लृत्या तण्डुल इव सुष्ठुत्वेन व्याप्तो भवति, न तु कर्तापि तज्जन्यप्रतिष्ठादिना, प्रतिष्ठादिफलेप्सुर्न भवतीत्यर्थ इति । फलमिति । कर्तृकामितम्, न भगवत्प्रसाद इत्यर्थः । शमादय इति । 'शमो दमः तपः शौच'मिति गीताद्युक्ताः । कालद्रव्ययज्ञादिभेदा इति । कालयज्ञभेदा अग्निहोत्रादयः । द्रव्ययज्ञादिभेदाः 'द्रव्ययज्ञास्तपोयज्ञा' इतिवाक्योक्ताः । शम्प्रत्ययेनेति । मङ्गलवचन एव शम्प्रत्ययस्य प्राचुर्येण प्रयोगात् तेन तथेत्यर्थः । स एव वा धर्म इति । यः स्वनुष्ठितः स एव धर्म इत्युद्देश्यविधेयभावादित्यर्थः । सुबोधिन्यां संसिद्धिर्ह्यात्मतोषणमितिपाठो भाति ॥१३॥

यदनुध्यासिनेत्यत्र । तद्धेतुनेति । क्षयहेतुना भोगेनेत्यर्थः । विद्यमानस्येति ।
चिदचिद्ग्रन्थेर्मोहग्रन्थेश्चेत्यर्थः । घुणाक्षरन्यायमिति । घुणः कीटः,
१-२-१५
तच्चरणेन यदृच्छया कदाचिद्भूमौ अक्षराणि भवन्ति, तन्न्यायमित्यर्थः ।
बहुवचनमिति । यद्येक एव यदनुध्यानेन कर्मग्रन्थिनिबन्धनं छिनत्ति, तदायं न्यायः प्रसरेत्, किन्तु बहव इति कोविदा इत्यर्थः । स्वत इति । ध्यानत्वेन रूपेण । तद्धर्मेणेति । ध्यानरूपेणेत्यर्थः ॥ १५ ॥

एवमित्यादि । कामादिभगवत्तोषान्तया श्रवणादिधर्मपरम्परया । शुश्रूषोरि-
त्यत्र । निरूपयतीति । गृहत्यागादिशुश्रूषान्तकथनेन निरूपयतीत्यर्थः ।
१-२-१६
सूचितमिति । वाक्येन सूचितम् । अस्याङ्गीकारायेति । 'किरातहूणा-
न्ध्रे'तिवाक्यात् भगवदाश्रिताश्रयणे शुद्धिरिति महत्पदेन भगवदाश्रिता एव गृह्यन्ते, तथा च तत्सेवने अस्याप्यङ्गीकारो भवतीति ज्ञापनाय तथा प्रयोग इत्यर्थः ॥ १६ ॥

शृण्वतामित्यत्र । स्वशब्दस्यात्मीयेपि रूढत्वात्तद्विहाय कुत एवं व्याख्यायते
इत्यत आहुः स्वीयेत्यादि । स्वीया इति व्याख्याने स्वस्येमा इत्यर्थात्
१-२-१७
कथासम्बन्धिनो भगवतः स्वातन्त्र्यमायातीति स्वातन्त्र्याद्धृदि आयाति,
नायाति वा, ततश्चाभद्रधूननमपि सन्दिग्धं स्यात्, अतस्तद्विहायैवं व्याख्यायते इत्यर्थः । पुण्यशब्दार्थमाहुः अपहृतेत्यादि । कामादीनीति । आदिपदेनाविद्या कर्म च । क्रमेणेति । शुश्रूषोः, शृण्वताम्, नष्टप्रायेष्विति श्लोकक्रमेणेत्यर्थः ॥ १७ ॥

नष्टप्रायेष्वित्यत्र । भगवद्भक्तानां चेति । चकारेण तत्कथा समु-
१-२-१८
च्चीयते ॥ १८ ॥

तदेत्यत्र । कामलोभादीनां मिश्रसत्त्वभावस्यानुभाविकत्वादाहुः कामक्रोधादय

इति । तटस्थतयेति । तद्वाचकशब्दाकथनात्तथेत्यर्थः । यत्पदस्य कामा-
१-२-१९ दिविशेषणत्वे तत्पदाध्याहारापत्तिः, अतस्तन्निवृत्तये यत्पदार्थमाहुः ये
चेति । कामक्रोधादि कामलोभादि मोहादयः, एतैरनाविद्धमिति योजना । गतगृहा-
निवेति । गृहाणि रजस्तमसी, तद्रहितानि वेत्यर्थः । कथमित्यत आहुः अत एवेत्यादि ।
रजस्तमोरूपगृहाभावादेव तद्धर्माणां सत्ताभावाद्धरन्तीति न क्रियासम्बन्ध इत्यर्थः । मूल-
गुणसूचित्वव्यतिरेकेणेति । अन्तःस्थो भगवानभद्राणि धुन्वंस्तानपि कुण्ठितान् करो-
तीति तेषां सूचित्वाभावो ज्ञेयः । तदा लयावस्थामित्यादि । रजस्तमोरूपमूलगुणकौण्ठ्ये
भगवता कृते सत्त्वस्थे भगवति लीयमानमित्यर्थः । सत्त्वनिमित्तमिति । सत्त्वार्थम् ।
सत्त्व इति । मूलस्थसप्तम्या व्याख्यानमिदम् । तेनेति । चित्तेन ॥ १९ ॥

भिद्यत इत्यत्र । विद्यया अविद्यानाश इव पुनरविद्यया विद्यानाशोपि भवती-
त्याहुः आत्मनो हीत्यादि । 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य
१-२-२१ बन्धविपर्ययौ'विति जाताः पदार्था इत्यर्थः । न निवर्तन्त इति ।
नारदेन तथात्वस्याग्रे वक्ष्यमाणत्वात् । जातेपीति । न निवर्तन्त इति पूर्वेण सम्बन्धः ।

अतो वै इत्यत्र । कृतेरनित्यत्वात् नित्यं कृत्यसंभवेन यावज्जीवाग्निहोत्रे सायंप्रा-
तःकालवदत्र कालविशेषो विवक्षितस्तस्य वाक्येऽदर्शनात् सदापदव्या-
१-२-२२ ख्यातमपि कालं पुनर्व्याकुर्वन्ति क्षणे क्षण इति । एवमप्यपुष्टार्थत्वमित्य-
तो मुत्पदेन तद्योजयन्ति प्रतिक्षणमित्यादि । मुनादीनामधिकारस्य स्वरूपमाहुः विषय
इत्यादि । विषय इति । भक्तिविषयः ॥ २२ ॥

सत्त्वमित्यत्र । ब्रह्मणोपीत्यत्राविः शङ्कागर्हायाम् । शेषत्वाभावेपीति । गुण-
शेषत्वाभावेपि । उपाधीत्यादि । तथा चोपाधीनां सत्त्वादीनां प्रयो-
१-२-२३ जकत्वात्तथेत्यतो नियम इत्यर्थः । केषाञ्चिदिति । माध्वानाम् । इवेति ।
वैधर्म्ये दृष्टान्तः । न ब्रह्मण इति । 'निर्गुणस्य गुणात्मन' इत्यत्र द्वितीयस्कन्धे वक्ष्यमाणा
नेत्यर्थः । अत्र चैतन्यस्वरूपभेदवादी शङ्कते नन्वित्यादि । पुरुष इति । शारीरः ।
गुणप्रेरणयेति । गुणकृतप्रेरणया । साङ्ख्यास्त्वित्यादि । तेषां कार्येश्वरवादात् प्रकृत्या
नित्यसम्बद्धं चैतन्यमेवेश्वर इति तेषां मतम् । अन्ये इति । पातञ्जला मायावादिनश्च ।
भ्रमादिति । उपधानप्रयुक्तात् भ्रमात् । किञ्चिद्रूपमिति । कूटस्थचैतन्यस्याक्षरात्मन
एकदेशः । ननु प्रकृतिपुरुषौ विना कार्यादर्शनात्कारणरूपौ तौ विना तयोर्निर्माणासंभवात्
तौ नित्यावेव स्वीकार्यौ, ततश्च साङ्ख्यमतवत्तत्रैव विश्रान्तिरापद्येतेति को विशेषः साङ्ख्यात्,
अथ भ्रमात्सम्बन्धो वाच्यः, तर्हि को विशेषो मायावादिभ्य इत्याकाङ्क्षायां तौ विनापि
तयोर्जननं दृष्टान्तेन समर्थयन्ति यथेत्यादि । प्रकृत्यपेक्षेति । न प्रकृतिपुरुषनिर्माण इति



शेषः । नैतावतेति । न तज्जननोत्तरं सत्येनापि तत्सम्बन्धेन । लुग्वेति । हर्यादिशब्दा-
ज्जातस्य सोर्लुक् । न प्रत्ययोत्पत्तिरिति । डुदाञ् दाने । अत सातत्यगमन इत्यादाविव
द्वन्द्वान्तादपि सा नेत्यर्थः । सम्पादयतीति । तत्क्रतुन्यायेन संपादयति । तानीति ।
सत्त्वादीनि । नाशशङ्काभावादिति । सत्त्वोपाधेः स्थापकत्वात्तथेत्यर्थः । मुख्यपक्षमाहुः
यदीत्यादि । तेन सहोपाधिरिति । यादृशं यं भजन्ति तेन सह स एवोपाधिस्तेषामपि
भवति । तथा च तस्योपाधिनिवृत्तौ तत्सायुज्यं प्राप्तानां तेषामप्युपाधिनिवृत्तिः, न तु
ततः पूर्वमित्यर्थः ॥ २३ ॥

पार्थिवादित्यत्र । अयमर्थो गूढ इत्यादि । स्वरूपैक्येपि उपाधिवैशिष्ट्येन फलवै-
शिष्ट्यरूपोऽर्थ उपाधेरप्रयोजकत्वस्फूर्त्या सन्देहेन ज्ञातुमशक्य इति दृढोपा-
१-२-२४ धित्वेन तत्तत्कार्यजननत्वे दृष्टान्तमाहेत्यर्थः । तत्रापीति । तेजोमार्गणेपि ।
तेषामिति । तेजोदृढोपाधिभूतानां दारूणाम् । इतीति । उपाधिभूतानां तेषां एवं स्वनिष्ठो-
पाधिवशेन तत्तत्कार्यजनकत्वम् । तत्रापीति । तदुपहितेग्नावपि । एवं तेजोदृढोपाधिभूतानां
दारूणां स्वावान्तरोपाधिवशेन त्रयीमयत्वपर्यन्तं हीनमध्यमोत्तमकार्यजनकत्वं व्याख्या-
तम् । एवं व्याख्याने उपाधेरेव कार्यजनकत्वमायाति, न तूपहितस्य, इत्यतः प्रकारा-
न्तरेणाहुः तत्र लोक इत्यादि । तदिति । सामान्ये नपुंसकम् । अधूमः शुष्क इति ।
सङ्ग्रह इति शेषः । पूर्वं रूपमिति । अग्नेः प्राथमिकं रूपम् । अस्मिन्नपि पक्षे प्राथमिक-
रूपस्य तथोपकारकत्वं नायातीत्यतः पक्षान्तरमाहुः अथवा जल इत्यादि । भूयसो
जलस्य स्वल्पाग्निनाशकत्वादार्द्रामघटे विद्यमानेपि जले तस्य घटस्याप्याधारत्वं दारु
संपादयतीत्यर्थः । पूर्वोक्तरूपतेति । दृढोपाधिरूपता । कार्यमिति । सेवककार्यम् । जीव-
पुरःसरेणेति । नृणामित्युक्त्या तथेत्यर्थः ।

भेजिरे इत्यत्र । सत्त्वमुक्तमिति । कार्योक्त्यानुमापितमित्यर्थः । सामानाधिकर-
ण्येन प्रतिपादनमिति । विरुद्धार्थयोरभेदान्वये समानविभक्तिकत्वस्य
१-२-२५ तन्त्रत्वात्तथेत्यर्थः । स्वरूपानन्दायेति । जीवानन्दाय ।

मुमुक्षव इत्यत्र । तथा सतीति । धर्मे सति । नेति । शान्तत्वसन्देहाभे-
१-२-२६ त्यर्थः । भजनीयानीति । भक्ताभयङ्करत्वाद्भजनीयानीत्यर्थः ।

रज इत्यत्र । निश्चयार्थ इति । वैशब्द इत्यर्थः । ईश्वरभजन इति ।
१-२-२७ भूतेशभजने ।

वासुदेवेत्यत्र । सर्वगुणमयमिति । सत्त्वमित्यर्थात् । गुणशब्दोत्र दोषविरुद्धपरः ।
युक्तेः प्राधान्यादिति । प्रथमाधिकारे युक्तेः प्राधान्यादित्यन्वयः ।
१-२-२८ सर्वाणि पश्येति । 'साङ्ख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथेति' मोक्ष-

धर्मवाक्यात्तथेत्यर्थः । परमतोपन्यासेनेति । ‘एकं साङ्ख्यं च योगं च वेदारण्यकमेव च । परस्पराङ्गान्येतानि पञ्चरात्रं च कथ्यते’ इति परस्पराङ्गकथने तत्रैव पाशुपतानुक्ते-स्तथेत्यर्थः । अपेक्षितरूपेणेति । ‘सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते । यथागतं तथा ज्ञानं निष्ठा नारायणः परः’ इति तत्रैव वाक्यात् पाशुपतस्यापि वासुदेवपरत्वे सिद्धे पुरः-स्फूर्तिकस्य पशुपतिभजनस्य प्रथमाधिकारत्वबोधकेन रूपेणेत्यर्थः । वासुदेवपरमिति । पूर्वोक्तरीत्या प्रमाणप्रमेयसाधनानां सत्त्वेन फलस्य सुखांशत्वेन च वासुदेवतात्पर्यकम् ।

एवमिति । फलसाधनयोर्बोधकत्वेन परम्परात्रयेण विषयादिबोधनेन चेत्यर्थः ।
निर्णीतमिति । फलं वासुदेवसाक्षात्कारः सर्वेषां श्रेयस्तत्साधनं च
१-२-३०
धर्मादि कथारत्यन्तमात्मप्रसादनमिति निर्णीतमित्यर्थः । अवतारतु-
ल्यत्वेनेति । अवतारान्तरतुल्यत्वज्ञानेन । कथयिष्यतीति । अवसरसङ्गत्यात्र वक्तु-मुचितमिति तत्र कथयिष्यतीत्यर्थः । स एवेदमित्यत्र । पञ्चभिरिति । एतेन पञ्चमः श्लोकः कृष्णावतारप्रयोजनप्रश्नोत्तररूप इति श्रीधरमतं निवारितम् । तत्र सामा-न्यतः कथनेन विशेषाकाङ्क्षाया अपूरणात् । सृष्टिस्त्वगुणादेवेति । मूलसृष्टिः प्राथ-मिकी सा तथा, अगुणादेव गुणसृष्टेर्वक्तव्यत्वादित्यर्थः । गुणत्रयेणापीत्यादि । ब्रह्मणः शिवस्य विष्णोश्च शुद्धरजस्तमःसत्त्वरूपत्वात्तादृशेभ्यः प्रत्येकं रजस्तमःसत्त्वमिश्रणे सृष्टिसंहारपालनानि भवन्तीत्यर्थः । एतच्च वायुसंहितादौ ब्रह्मा पुरुषकालविराड्भिः, विष्णुरनिरुद्धप्रद्युम्नसंकर्षणैः, शिवो भवमृडहरैः सृष्टिस्थितिसंहारान् करोतीत्येवं प्रकारेण बोधितम् । कौर्मेऽपि । ‘एका भगवतो मूर्तिर्ज्ञानरूपा शिवामला । वासुदेवाभिधाना सा गुणातीता सुनिष्कला । द्वितीया रुद्रसंज्ञा स्यात्तामसी शेषसंज्ञिता । निहन्ति सकलं चान्या वैष्णवी परमा तनुः । सत्त्वोद्रिक्ता तृतीयाख्या प्रद्युम्नेति च संज्ञिता । जगत्पालयते सर्वं सा विष्णुप्रकृतिर्ध्रुवा । चतुर्थी वासुदेवस्य मूर्तिर्ब्रह्मेति संज्ञिता । राजसी चानिरुद्धाख्या पुरुषः सृष्टिकारिके’ति । एतेनैव सगुणनिर्गुणयोरभेदोपि सिद्धो ज्ञेयः । गुणस्यासनत्वस्फू-र्तावगुणत्वात्तदभिप्रायनिरवस्फूर्तौ तस्यैव सगुणत्वादिति । एवमेव ब्रह्मशिवयोरपि निर्गु-णसगुणभावो ज्ञेयः । ननु त्रिभ्योपि कार्यत्रये शुद्धा गुणाः कथं बोद्धव्या इत्यत आहुः शुद्धा इत्यादि । इयमिति । मायाकरणिका । वैदिकप्रथमसृष्टेः सकाशादस्याः को भेद इत्यत आहुः वैदिके त्वित्यादि । तथा च वेदे शक्तेर्जननम्, अस्यां तु सा करणम्, तेन सा सृष्टिरितः प्राथमिकीत्यर्थः । प्रतिकृतिरूपेति । सञ्ज्ञायकरूपा । संयोज्येति । पूरयित्वा । चकारसूचितमर्थं वक्तुं प्रसङ्गादाहुः निद्रापीत्यादि । वैदिकपौराणिकजग-तोर्भगवद्रूपत्वाविशेषेपि यो भेदस्तं प्रकारं बोधयितुमाहुः वेदे त्वित्यादि । स्वस्यानन्ते-त्यादि । वैदिक्यां सृष्टावनुत्पन्ना सा भगवत्स्पर्शेन सङ्क्रान्तभगवद्गुणा सती गुणमयी



भवतीत्यर्थः । गुणाक्तमिवेति । पूरितात्रन्यायेन तथात्वम् । प्राकृतगुणरहित इति । गुणानां प्राकृतत्वस्य भगवत्सम्बन्धानन्तरभावित्वात्तथेत्यर्थः ॥ ३० ॥

तथेत्यत्र । अन्तर्यामिणोन्तःप्रविष्टस्य क्वचिदीषत्क्वचिद्भूयः स्फुरणे दृष्टान्तद्वयमाहुः
स्वदिरेत्यादि । तथा च प्रेरकत्वस्य तद्धर्मत्वादत्र स्वल्पं तद्यथास्मदादिषु
१-२-३१
तत्रैषद्भानम्, यत्र भूयस्तत्रासमन्ताद्भानम्, यथा नृगादिष्विति भावः ।
प्रथमे आकीषदर्थः । स्फुरणमिति । तत्तज्ज्ञानस्य प्रकाशः । अस्मिन् मते जीववदुपाधि-वशेनैकस्यैवान्तर्यामिणोपि नानात्वं ज्ञेयम् ॥ ३१ ॥

असाविःयत्र । स्वांशकल्पनेति । गुणानां भगवदंशत्वात्तथेत्यर्थः । नितरा-
मिति । एतेन निर्विष्टपदे वर्णागमो बोधितः । कर्तृकरणयोर्भेदेन सृष्टि-
१-२-३३
भेदं समर्थयन्ति साक्षादित्यादिना । हेतु इत्यत्र ‘इह तु’ इति पाठो
भाति । सप्तमीसमासे चतुर्थीसमासे च करणत्वम्, तृतीयासमासे कर्तृत्वमिति त्रिधापि सृष्ट्योर्भेद एवेत्यर्थः । मुख्यतया स्थिताविति । दृढाभ्यासे ॥ ३३ ॥
भावयतीत्यत्र । उभयत्र हेतुमाहेति । एतेन लीलाभिरवतारैरिति
१-२-३४
तृतीययोर्लुका पदभेदो बोधितः ॥ ३४ ॥

इति प्रथमस्कन्धसुबोधिनीप्रकाशे द्वितीयाध्यायविवरणम् ॥ २ ॥

---

## अथ तृतीयाध्यायविवरणम् ।

अथ तृतीयाध्यायं विवरिषवः सङ्गतिं वदन्तः कृष्णावतारप्रयोजनस्यानुक्तत्वं
ज्ञापयितुं पूर्वोक्तमनुवदन्ति निरूपिता इत्यादि । निर्णय उच्यत इति
१-३-०
शेषः । अवतारेति । अवतारा रामादयः अर्थाः, सर्वसाध्यो भगवान्
धर्मी पुरुषस्तेषामित्यर्थः । तेनावसरः सङ्गतिरित्यर्थः । अनुक्तत्वे श्रोतृजिज्ञासापूर्तिः कथमित्याकाङ्क्षायामाहुः कृष्णेत्यादि सार्धम् । साधारणमिति । सामान्यमुक्तम् ‘प्रसा’दिति-श्लोके । निर्णय इति । देवतिर्यङ्नरादिषु अवतारनिर्णयोऽधिकः विशेष इति पूर्वश्लोके इत्यर्थः । तेनेति । निर्णयेन । पष्ठस्योत्तरमत्राध्याये कथ्यत इत्यत आहुः वस्तुत इति ।

जगृहे इत्यत्र । अवतारकथोत्तरस्य पुरुषप्रारम्भैव कथने बीजमाहुः यद्यपीति ।
‘अव्यक्तोऽक्षर इत्युक्त’ इति गीतावाक्ये परमत्वापरत्वकथनादक्षरं व्यापिवैकु-
१-३-१
ण्ठात्मकं तस्याधिभौतिकमाध्यात्मिकं वा प्रकृतिपुरुषजनकं तदंशाः काल-
कर्मस्वभावाः कार्याणि तत्त्वानि तेषु ‘मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्’ ‘काल-

रूपोवतीर्ण ' इत्यादिवाक्यैरवतरणमस्ति, तथापि द्विरूपता योनित्वाधिकारित्वादिरूपता वर्तत इति तथेत्यर्थः । द्वैतरूपतेत्यपि पाठेऽप्ययमेवार्थः । ननु मनुष्यत्वादिना द्विरूपताग्रे वक्ष्यमाणेषु कुमाराद्यवतारेषु वर्तते इति द्विरूपता नाक्षरादित्यागबीजत्वेन शक्यवचनेत्यरुच्या पक्षान्तरमाहुः लीला इत्यादि । केचिदत्र विराड्जीवान्तर्यामिणो भगवतो विराड्रूपेणोपासनार्थं ब्रह्माण्डस्य भगवच्छरीरत्वं कल्पनयोच्यत इत्याहुः, तथा सति 'जगृहे' इति भूतप्रयोगो विरुध्येत इति, तदभावाय विराजो वस्तुतो भगवच्छरीरं वक्तुं पीठिकामाहुः भूतेत्यादि । अत्र साक्षाल्लीला 'एतस्माज्जायते प्राण' इत्यादिश्रुत्युक्ता । द्वितीया तु ' तस्माद्वा एतस्मादात्मन आकाशः संभूत ' इत्याद्युक्ता । ब्रह्माण्डं विराड्रूपम् । निर्माणपक्षः पुरुषसूक्ते । अनिर्माणस्तूक्तश्रुतिषु ज्ञेयः । ननु पुंसूक्ते ब्रह्माण्डस्य जीवशरीरताप्युच्यते, तस्य का गतिरित्यत आहुः निर्माणपक्ष इत्यादि । कश्चिन्नेति । भारते सभापर्वाणि यमसभायां दाशरथे रामस्य कथनात्कस्मिंश्चित्कल्पे रामोवतारो नेत्यर्थः । मुक्तिः सुलभेति । भगवत्त्वेन ज्ञानादि दत्वापि मोचयतीति सुलभा । जीवत्वे तु 'युक्तं भगैः स्वैरितरत्र चाध्रुवै'रिति ध्रुवत्वाभावादेकांशस्थितविश्वो ददातीत्येतदपेक्षया सा मुक्तिर्न सुलभा । किञ्च । तत्तद्वर्षस्थानां श्रीकृष्णावतारातिरिक्तोपासकानां जीवोपासकतया न मुक्तिः सुलभा । 'एतन्नानावताराणां निधानं बीजमव्यय'मिति श्रीकृष्णावतारातिरिक्तावताराणां पुरुषावतारनिधानत्वात् । ब्रह्मत्वे तु ब्रह्मनिधानत्वादवताराणामिदि तदुपासकानां मुक्तिः सुलभेत्यर्थः । अस्त्वेवं द्वैविध्यम्, तथाप्यत्र ब्रह्मशरीरत्वं कुत इत्यपेक्षायामाहुः अत्रेत्यादि । प्रमाणमत्राहुः विष्णोरित्यादि । इदं वाक्यं श्रीधरीये, 'विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः । प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् । तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यत' इति । रूपत्रित्वे बीजमाहुः पुरुषशब्द इत्यादि । एतास्तिस्रोपि व्युत्पत्तयः श्रौत्यः । 'पुरा आसे'ति 'पुरमुषर्ता'ति द्वयं बृहदारण्यके पुरुषविधब्राह्मणे ' स यत्पूर्वोस्मात् सर्वस्मात् सर्वान् पाप्मन औषत् तस्मादुच्यते पुरुष इति'। तृतीयापि तत्रैव मधुब्राह्मणे ' पुरुः पुरुष आविशत् ' इति । अस्मिन् पक्ष इति । तृतीयपक्षे देहाध्यासो नेत्यर्थः । पुरा विद्यमानत्वेन शरीरोत्पत्तेः पूर्वमेव तत्सत्ताज्ञापनात् । मधुब्राह्मणश्रुतेः, अध्यासस्तु परमाणूनां रेतःकणाश्रयजीवेन मिलने रजस्वला····वकरणे भवति, प्रकृते तु तदभावः । 'उष दाह इती'ति पक्षे स्वमितिशेषः । जीवोपीति । पुरिवसनसम्भवाज्जीवोपि भवतीत्यर्थः । भगवानेवेति । पुरदाहपुरासनयोर्जीवे अभावादिति भावः । द्वितीय एवात्रोच्यत इत्यत्र गमकमाहुः अण्डजत्वादित्यादि । प्रकरणानुरोधेन मुक्त्यर्थमेवावतारकथाप्रश्नस्यापि सिद्धेस्तदर्थकस्यैवोत्तरस्य वाच्यत्वादन्तर्निर्माणस्य खगादिष्वन्तरेव दृष्टत्वात् । अतोत्र द्वितीय एवोच्यत इत्यर्थः । नन्वेवं सति तृतीयपक्ष एवाङ्गीकार्य इत्यत आहुः अस्येत्यादि । मूले 'पौरुषं रूप'मित्यनेन पुरुषस-



म्बन्धित्वमुच्यते । तेन पुरुषविधमभिप्रेतम् । तदेवैकादशेपि 'तन्मायाफलरूपेणे'त्यादिना भगवता निरूपितमतस्तथेत्यर्थः । यदि तृतीयपक्षः स्यात्, अन्तर्यामीव प्रविशेत्, प्रकृते तु सर्वनिर्माणं भोगश्चेति द्वितीयपक्ष एवेति भावः । अधिकारीति । अधिकारी जीवो नास्तीति बोधनार्थम् । व्याख्याने तु वाक्यार्थ उक्त इत्यपौनरुक्त्यम् । अप्स्विति । तृतीयस्कन्धे षष्ठे ' हिरण्मयः स पुरुषः सहस्रपरिवत्सरान् । आण्डकोश उवासाप्सु सर्वसत्त्वोपबृंहितः । स वै विश्वसृजां गर्भो देवकर्मात्मशक्तिमान् । विबभाजात्मनात्मानमेकधा दशधा त्रिधा । एष ह्यशेषसत्त्वानामात्मांशः परमात्मनः । आद्योऽवतारो यत्रासौ भूतग्रामो विभाव्यत' इत्यत्रोक्ताप्सु बीजजब्रह्माण्डम् । एवं त्रयोविंशे सिद्धे सत्त्वादिगुणानां पुरुषस्य च ब्रह्माण्डे न्यूनतां परिहरन्ति अस्यां सृष्टाविति । स्वयमिति । 'आसीज्ज्ञानमयो ह्यर्थ' इत्यादिवाक्येभ्यः । न किञ्चिदिति । प्रकृतेरंशत्रयं पुरुषः स्वयं चेत्यष्टाविंशतितत्त्वेषु न किञ्चिदवशिष्टमित्यर्थः । अवशिष्टानामत्रैवान्तर्भावे वा । अधिकारीति । ब्रह्मादीनामित्यर्थः ॥ १ ॥

यस्याम्भसीत्यत्र । ननु केति । देहपरिग्रहं विना केत्यर्थः । दैनंदिनेति ।
ब्रह्मकल्पान्ते नैमित्तिकप्रलयेत्यर्थः । सायुज्यसृष्टिवदिति । सायु-
१-३-२ ज्योत्तरं पुनस्तेषां सृष्टिवदित्यर्थः । योगभूतत्वं तस्याः स्फुटीकुर्वन्ति
गुह्यं चेत्यादि । यथा योगो गुप्तं जीवं प्रकटीकरोति, तथेयं सुषुप्तौ प्राज्ञसम्बन्ध्यानन्दं प्रकटीकरोतीति तथेत्यर्थः । तदर्थमिति । आनन्दार्थं योगार्थं वेत्यर्थः ॥ २ ॥

यस्यावयवेत्यत्र । । स चेति । विराड्देहः । मध्यभाव इति । वृक्षभावे जरा-
युभावे वेति प्रतिभाति । बीजं पूर्वभावः, वृक्षो मध्यभावः, फलमुत्तर-
१-३-३ भावः । बीजं पूर्वभावः, जरायुर्मध्यभावः, देह उत्तरभाव इति जरायुभावे
जरायोरन्तरव्याप्तावत्रापि तथात्वसिद्ध्या 'अवयवसंस्थानैः कल्पित' इति विरुद्धं स्यात्, अत आहुः वस्तुतस्त्विति । उक्तोपपत्तिरिति । बीजत्वरूपेत्यर्थः । तथा च भगवतो रूपं तत्, भगवतो बीजत्वादिति भावः । रजोनुवेधाभावेपि कार्योन्मुखत्वे हेतुं व्याकुर्वन्ति हर्षेणेत्यादि ॥ ३ ॥

पश्यन्तीत्यत्र । करणत्वेनेति । लोकरचनायां करणत्वेन, यतो लोकरचना
ब्रह्माण्डेन जायत इति । अतो न पुरुषो नावतार इत्यर्थः । रूपमिति ।
१-३-४ करादिविशिष्टं रूपं व्यवहारयोग्यम् । साकारता चानन्दयोगात् । तथा
च सदानन्दमित्यर्थः । सृष्टिजननमिति । गुह्यादिस्थानानां गुरुपदेनैव ग्रहणात् तत्र सृष्टिजननमुक्तम् । न नानात्वमिति । श्रोत्रातिरिक्तेन्द्रियाण्यपेक्ष्यापि न नानात्वम्, किन्त्वेकत्वमेव, सर्वत्र स्पर्शोपलब्धेरित्यर्थः । पादपदेन भुजपदेन वोपलक्षितं न

नानात्वमिति । तथा चाप्रदमहैश्वर्यादेव त्वगिन्द्रियमपि सिद्धमित्यर्थः । एवमेव शिष्टं कर्मेन्द्रियं बोध्यम् ॥ ४ ॥

एतस्मादित्यत्र । जघनादय इति । ब्रह्मणोंऽशा जघनादयः, तेभ्योऽपि
१-३-५ सृष्टिस्मरणात् ॥ ५ ॥

स एव प्रथममित्यत्र । स्मृत इति । अवतारत्वेन पञ्चरात्रस्मृतावुक्तः । अशुद्ध-
शुद्धभावेनेति । शुद्धसत्त्वात्मकमिश्रसत्त्वात्मकभावेन । द्विविधमिति
१-३-६ शेषः । द्विधेति । अवतारो द्विधा । परमिति अवतरणम् । नन्वत्राविशेषेण कथनादवतारावेशभेदः कुतो निश्चेय इत्यत आहुः तत्र निर्णय इत्यादि । नारायण इति । धर्मपुत्रः । कृष्णस्तापस इति । कूर्मपुराणादौ साम्बजननार्थं तपः कुर्वाणः । मनुरिति । स्वायंभुवः । कामकामपुत्रौ वृहद्रूपौ । नरो धर्मपुत्रः । विशेषावेशित इत्यत्र विशेषस्तु भूतादिरूपावृत्त्यर्थम्, कृथावदनादिकाले तेष्वप्यावेशादिति । अविशेषेणेति । सङ्कर्षणतौल्येन, न तु कार्यविचारेणेत्यर्थः । तत्र गमकमाहुः स्फुटमिति । 'अन्ये चांशकला'इत्यत्र पदद्वयोक्तया निर्णयात्तथेत्यर्थः ॥ ६ ॥

द्वितीयमित्यत्र । एतदवतारिका रसगतामित्यादि । न भवेदिति । स्वर्गादेः
कर्मभूमित्वाभावाद्भवेदित्यर्थः । द्वितीयस्कन्ध इति । सप्तमाध्याये ।
१-३-७ आदिवराह इत्यादि । एतच्च तृतीयस्कन्धे त्रयोदशाध्याये वर्तते । आदिस्तु सर्वेषां च करणानामाधिदैविकं रूपम् । 'खुरक्षोभैरजनिर्गाभिः प्लाव्यमाना रसां गतेति व्याख्यान । अग्र इति । तृतीयस्कन्धत्रयोदशाध्याये । वराहकल्पे वराहजन्मदिने निर्मिते । विरोधेनेति । अत्र विराजो वाराहोत्पत्तिः, तत्र ब्रह्मण इति विरोधस्तत्परिहारम् । अत्र प्रथमद्वितीयादिशब्दो निर्देशमात्रापेक्षया श्रीधरीय उक्तः, तन्न, किन्तु हेत्वन्तरेणेति तं बोधयितुमाहुः अयं मन्युरूप इत्यादि । 'पशूनां वा एष मन्युर्यद्वराह' इति श्रुतेस्तद्रूपं अश्वमेधादिरूपेण क्षत्रिये प्रतिष्ठित इति ब्राह्मणोत्तरभावित्वात् द्वितीयत्वमित्यर्थः । नारदस्य पूर्वभावित्वात् सङ्ख्या विरुध्यत इत्यत एवमुक्तम् । एवमग्रेऽपि बोद्धव्यम् ॥ ७ ॥

तृतीयमित्यत्र । इति तृतीयत्वमिति । अधिकरणकर्मणोरपेक्षया तथेत्यर्थः ।
अधिकरणत्वस्य नारदेऽपि सत्त्वात् पक्षान्तरमाहुः द्रव्येत्यादि । तेनेति ।
१-३-८ परिचरणेन ॥ ८ ॥

तुर्ये धर्मकलेति श्लोकं व्याचक्षते । नरनारायणेत्यादि । अत्र तुरीयत्वोपपा-
दनाय ब्रह्मचर्येत्यादि फक्किकापेक्षिता; तदग्रे अथवेत्यादि । धर्मकला
१-३-९ इत्यत्र धर्मकलेत्येवं क्रमः पाठश्च प्रतिभाति । पक्षान्तरमुपपादयन्ति



श्रद्धेत्यादिना, त्रिविध इत्यन्तैः । श्रद्धादयः स्वायंभुवदक्षसुताः धर्मपत्न्यस्तांश्च धर्मकलाः, 'श्रद्धा वा एष आत्मनो यत्पत्नी'ति श्रुतेः । त्रिविध इति । भक्तियुक्त एकः, वैराग्ययुक्तोऽपर इति तथा । तथा च धर्मचातुर्विध्यात्तुरीयत्वमित्यर्थः । अन्यत्रेति । नात्र तद्विवक्षितमित्यर्थः । ज्ञानसाध्येति । सुखरूपा ।

तादृशमिति । कर्मान् विषयात्मकान् लातीति । स्त्रीशूद्रयोः पापयोनि-
१-३-११ त्वेन विषयात्मकत्वात् तयोर्हितमिति ज्ञापनाय कपिल इति नामेत्यर्थः ११

ततः सप्तम इत्यत्र । ब्राह्मणानां षड्विधत्वमिति । यद्यपि वाराहस्य क्षत्रिये
प्रतिष्ठितत्वम्, तथापि प्राकट्यं ब्रह्मणः सकाशात् ब्रह्मभावेनेति
१-३१-२ सङ्ख्यापूर्तिः ॥ १२ ॥

अष्टम इत्यत्र । प्रतिपक्षशङ्कामिति । बुद्धावतारवेदविरुद्धशङ्काम् । अन्त्या-
श्रमित्वाद्येति । श्वेताश्वतरोपनिषदि अन्त्याश्रमः प्रसिद्धस्तद्धर्माच ।
१-३-१३ चकारेण धैर्यात् । सर्वाश्रमनमस्कृतत्वे बीजमाहुः एषा हीत्यादिना॥१३॥

ऋषिभिरित्यत्र । कर्मद्वयस्येत्यादि । 'अकथितं चे'ति सूत्रेऽपादानादिविशेषैर-
विवक्षितस्य कर्मसंज्ञाविधानेऽप्युदासीनस्य कर्मत्वादर्शनादकथितेऽपीप्सि-
१-३-१४ ततममिष्यते एव, अन्यथा योगस्यापि कर्मत्वेन ग्रहणापत्तेरतस्तथेत्यर्थः॥

रूपं स इत्यत्र । एकमिति । रूपम् । अपरमिति । वचनम् । विपरीतमिति ।
वैश्याद्विपरीतम् । वैश्ये हि रूपमवञ्चकं वचनं वञ्चकम् । मत्स्ये तु रूपं
१-३-१५ वञ्चकम्, वचनं मात्स्यकौर्मायुर्वेदरूपमवञ्चकमतस्तथेत्यर्थः। बाधित इति। कल्पसमाप्तौ दैनन्दिनप्रलयात् कल्पस्य च चतुर्दशमन्वन्तरात्मकत्वात् तत्समाप्तिश्चतुर्दशमन्वन्तरोत्तरं भवति । चाक्षुषस्तु षष्ठ इत्यतो बाधित इत्यर्थः । केचिदिति । श्रीधरादयः । क्रमनियमेनेति । वैवस्वतोत्तरं सावर्णिरौच्यभौत्यमेकसावर्णिऋतुऋतुधामविष्वक्सेना मात्स्ये । तथैव 'सावर्णाः पञ्च रौच्यश्च भौत्यस्त्वागामिनस्त्वमी'ति मार्कण्डेये चान्येषां क्रमान्तरेण दर्शनात् । अधिकारिणामिति । भक्तत्वादिति शेषः । तथा चोक्तं मात्स्ये 'स्वकार्ये सर्वमिदमुत्पाद्य सचराचरम् । कल्पक्षये विनिर्वृत्ते मुच्यन्ते ब्रह्मणा सहे'ति । तथापि चाक्षुषस्य चतुर्दशत्वे का वा युक्तिरित्यत आहुः कल्पेष्वित्यादि । तथा च सात्त्विके सात्त्विकमन्वन्तरस्य राजसे राजसस्येत्येवं प्राथम्ये कदाचिद्राजसस्यापि प्राथम्यात् चाक्षुषस्यापि चतुर्दशत्वमविरुद्धमित्यर्थः । मन्वन्तरान्तरे उत्पन्न इति । उपमतामसवदित्यर्थः । भाविनी संज्ञेति । वाग्दानोत्तरं विवाहाभावेऽपि स्नुषेतिवदित्यर्थः ॥ १५॥

सुरासुराणामित्यत्र । ननु मत्स्यस्य वञ्चकहितकारित्वे मूले स्पष्टेन कूर्मस्येति
कथमस्य वैश्यकोटौ निवेश इत्यत आहुः कापट्येनेत्यादि । कापट्ये-
१-३-१६ नेति । 'क्लेशभाजो भविष्यन्ति दैत्या यूयं फलग्रहा' इति बोधितेन । ननु

मत्स्यावतारं चाक्षुषे प्रलय उक्त्वा कूर्म एकादश उक्तः, ततश्च दशमत्वं मत्स्य आयाति, नवमसङ्ख्यासंदंशाच्च । ततश्च क्रमविचारं चाक्षुषमन्वन्तरीयस्य कूर्मस्य पाश्चात्यत्वात् पूर्वप्रलयो मायिक एव सेत्स्यति न वास्तवः, क्रमेण बाधादित्यत आहुः पूर्वेत्यादि । तथा च कल्पान्तरे कूर्मावतार इति न प्रलयो मायिक इति भावः । वञ्चनाधिक्यादिति । पूर्वमहिमुखग्रहणादिना तथात्वादित्यर्थः ॥ १६ ॥

धान्वन्तरमित्यत्र । धन्वन्तर्यवतारस्य किं प्रयोजनममृतपानादेर्मोहिन्यवतार-
१-३-१७ कार्यत्वेनाष्टमे कथितत्वादित्याशंकायामाहुः धन्वन्तरीत्यादि । तथा
चायुर्वेदप्रवर्तनादिकमेव प्रयोजनमित्यर्थः । स्फुटं तर्हि प्रकृते कुतो नोक्तमित्यत आहुः प्रकृत इत्यादि । आयुर्वेदस्य जीवार्थत्वेन तदवतारेऽनुपयोगान्न तत्त्वेन स्फुटमुक्तमित्यर्थः । ननु पानकर्मत्वेनामृते वक्तव्ये देवा एव किमित्युक्ता इत्यपेक्षायामाहुः देवेत्यादि । न भगवत्कार्यमिति । तत्पानमिति शेषः । प्रयोजककर्तरीति । पाययितरि मोहिनीरूपे । कर्मत्वेनेति । कर्तुरीप्सिततमत्वेनेति भावः । सर्वैर्न दृश्यत इत्यत्र मानमाहुः सुरैरित्यादि । मूले 'मोहिन्याऽन्यानमोहय'दित्युक्त्वा देवानां मोहाभावात् तथेत्यर्थः । ननु मोहस्य भावजनकत्वेनोक्तत्वात्तदभाव एव सुराणामस्तु, स्त्रीरूपादर्शने किं मानमत आहुः राहुसूचनादिति । यदि चन्द्रार्काभ्यां स्त्रीरूपं दृष्टं स्यात्, तदा तस्यां राहुदण्डसामर्थ्याभावात्तस्यै सूचनमसङ्गतं स्यात्, अतस्तदन्यथानुपपत्तिरेव तथेत्यर्थः । नन्वेवं सत्येकमेव रूपमिति संख्याविरोध इत्यत आहुः अमृतेत्यादि । विच्छेदेनेति । विभागेन । तथा च धन्वन्तरिविभक्तत्वेन दैत्यैर्दर्शनात्संख्याया अविरोध इत्यर्थः ॥ १७ ॥

चतुर्दशमित्यत्र । नारायणवदिति । यथा नारायणः साक्षाद्भगवदवतारः, तथा
१-३-१८ नृसिंह इत्यर्थः । स्वीयमिति । द्वारपालम् । तदीयमिति पुत्रम् ।
ऊर्जितमिति । अवध्यत्वहर्षेण भिन्नमर्यादम् । ननु पुनर्मूलरूपनिरूपणेऽस्य किं प्रयोजनमित्याकांक्षायां तदाहुः भक्तिरित्यादि । मूलरूपे जातभक्तिर्मूलरूपानवच्छिन्ना अंशमात्रपर्यवसानेन निवर्तत इति ज्ञापनाय पुनस्तदुक्तिरित्यर्थः । कलकेर्मूलरूपत्वं कथमित्यत उपपत्तिमाहुः सायुज्य इत्यादि । भगवत्स्वरूपैक्ये सेव्यसेवकभावनिवृत्तावपि भगवत्सामर्थ्येनैव पुनर्भेदाद्यथा सेवारम्भः, तथात्र सकलसाधननिवृत्तावपि भगवदङ्गरागसुगन्धसंसर्गमात्रेण पुनः कृतारम्भ इति तादृशसामर्थ्यमेव मूलत्वे हेतुरित्यर्थः ॥ १८ ॥

पञ्चदशमित्यत्र । धर्मस्येति । ऐश्वर्यस्येत्यर्थः । पूर्वस्मादिति । नृसिंहस्वरू-
१-३-१९ पात्पूर्वोक्तेभ्यश्चतुर्दशेभ्यो वा । इह परात्मान इति । इहलोकपर-
लोकदेहाः ॥ १९ ॥



ततः सप्तदश इत्यत्र । ( प्रकृत इति । ब्रह्मभावेन निरूपणे तृतीय इत्यर्थः ) ।
१-३-२१ प्रमेयबलमालम्ब्येति । प्रमेयस्य यज्ञब्रह्मरूपस्य बलं भुक्तिमुक्तिदा-
तृत्वरूपमालम्ब्य विचार्येत्यर्थः । भक्त्यर्थमित्यनेन प्रयोजनान्तर-
मुक्तम् । (अपरश्चेति । स्वशाखातिरिक्तो वेदभागः ) ॥ २१ ॥

१-३-२३ एकोनविंश इत्यत्र । अत्र तकारलोप इति । विंशतिमश्छन्दे तमप्य-
स्ययतकारलोपः ॥ २३ ॥

( अथासावित्यत्र । आदिकूर्मस्येति । 'विलोक्य विघ्नेशविधिं तदेश्वरो दुरन्त-
१-३-२५ वीर्यो वितथाभिसन्धिः । कृत्वा वपुः काच्छपमद्भुतं महत्प्रविश्य तोयं
गिरिमुज्जहारे'त्यष्टमे पुरुषोत्तमस्योक्तः, तथापि भक्तिदानाद्यभावादादिकूर्मस्येति, स तु पञ्चमेऽष्टादशे 'हिरण्मयेऽपि भगवान्निवसति कूर्मतनुं बिभ्राण' इत्यादिना स्तुतोऽस्ति । विष्णोरिति । आयुर्वेदप्रणेतृत्वेन पालकत्वाद्विष्णोरित्यर्थः । एवमग्रेपि) ॥२५॥

एतद्रूपमित्यत्र । विचारमाहेति । ऊहापोहेन विवक्षितसाधनं विचारः । तथा चोहापोहेन तस्य भगवत्त्वशासनप्रकारमाहेत्यर्थः । रूपमिति । शरीरमित्यर्थः । तेनाधिदैवा-
१-३-३० दिकवादो विशिष्टाद्वैतापरपर्यायोत्र ज्ञाप्यते, तदाहुः अरूपवदिति ।
अयं न्याय उत्तरतन्त्रे साधनाध्याये द्वितीयपाद उभयलिङ्गाधिकरणेऽस्ति, तदर्थस्तु—तद्ब्रह्म अरूपवदेव हि । रूप्यते निरूप्यते व्यवह्रियत इति रूपं सर्वव्यवहारविषयत्वं तद्युक्तं रूपवद्विश्वम्, ब्रह्म तु तद्विलक्षणमेव, कार्यादंशाच्च कारणस्यांशिनो वैलक्षण्यस्य युक्तत्वात् । ननु कारणत्वादवैलक्षण्यमपि युक्तमत आह । तत्प्रधानत्वात् । तस्य प्रकरणिनः प्रधानत्वात् । मुख्यत्वात् । यत्र हि यत् प्रतिपाद्यते, तत्र तदेव हि मुख्यम्, अत्र ब्रह्म प्रतिपाद्यत इति ब्रह्मधर्माः प्रशासनादय एव, नतु जडजीवधर्मा इति । अत्र शरीरप्रकरणाद्रूपपदेन शरीरमुच्यते । इदं चैकदेशिमतं सूताधिकारानुसारेणोच्यते, सिद्धान्ते त्वहिकुण्डलन्यायः । स तु मुख्यसिद्धान्ते वक्ष्यते । तस्या एवेति । जाता इत्यर्थः । ननु सात्र गुणमयी । निष्पादितमिति । मन्दिरवन्निष्पादितम् । सन्निहिन इत्यस्यैव व्याख्यानमाविर्भूत इत्यादि ॥ ३० ॥

यथा नभसीत्यत्र । तथा सतीति । ब्रह्मणो बहिर्वदाविर्भूतत्वे सति । ततश्चेति ।
१-३-३१ प्रतीतिविरोधात् । अयमिति । एतच्छरीरविशिष्टो भगवान् । तद्व्य-
तिरिक्तस्येति । द्रष्टृव्यतिरिक्तस्य । कथमिति । अदृश्येऽध्यारोपासम्भवात्कथमित्यर्थः । वस्तुत इत्यादि । तथा चादृश्य आकाशे यथा मेघा आरोपिताः, तथा ब्रह्मशरीरे ब्रह्माण्डे दृश्यत्वमप्यारोपितम् । ततश्च यथा मेघद्रष्टृणामाकाशधर्मोऽवकाशो न प्रतीयते, तथा प्राकृतत्वेन द्रष्टृणां चेतनत्वमपि न प्रतीयत इति तदप्रत्ययमात्रेण भग-

चक्षुरनाविष्टत्वस्य न सिद्धिरित्यर्थः । ननु 'पराञ्चि खानी'ति श्रुतेर्भगवान् पराचामदृश्यः, आकाशस्तु केषाञ्चिन्मते पराचामपि दृश्य इति विरुद्धो दृष्टान्त इत्यत आहुः येषामित्यादि । तथा चाकाशेऽसम्भवद्धर्माणां वायुस्थितानामाकाशस्थत्वप्रतीतिवत्स्वविषयस्थितदृश्यत्वस्य ब्रह्मशरीरे प्रतीतिरित्यस्मिन्नंशे दृष्टान्त इत्यर्थः । तर्हि द्वितीयदृष्टान्तस्य किं प्रयोजनमत आहुः अत्रेत्यादि । अत्रेति । उक्तदृष्टान्ते । तथा नास्तीति । दार्ष्टान्तिकसमाना नास्ति । दृष्टान्ते त्वदृश्यधर्मो दृश्ये आरोप्यते, दार्ष्टान्तिके तु दृश्यधर्मस्यादृश्ये आरोपो विवक्षित इत्यसमानता, तेनास्वरसेन दृष्टान्तान्तरमुच्यत इत्यर्थः । यथा वात्येत्यादि । वायुः सर्वमतेऽप्यदृश्यः, तत्र यथा पृथिव्या दृश्याया रेणुरारोपितस्तथेत्यर्थः । तथा च यदि वाचो धेनुत्ववत् भगवतो ब्रह्माण्डत्वेनोपासनार्थं ब्रह्माण्डं भगवत्यारोपितमित्यभिप्रेयात्, तदा द्रष्टरि दृश्यमारोपितमिति ब्रूयात् । ननु दृश्यमिति । तेन दृश्यत्वादिधर्मकं शरीरमारोपितमिति व्याख्यानं न युक्तम्, दृश्यपदे लक्षणाप्रसंगात् । जगृह इति मूलार्थवादस्य योजकधर्मोपदर्शनादेश्च बाधप्रसंगादित्यर्थः ॥ ३१ ॥

अतः परमित्यत्र । इति निरूपयतीति । इति वक्तुं भगवदुपाध्यन्तरं जीवं निरूप-
यतीत्यर्थः । वस्तुत्वादिति । चेष्टाद्यनुमेयवस्तुत्वात् । केचनेत्यादि ।
१-३-३२
श्रीधराद्याः । 'जीवो जीवेन निर्मुक्त' इत्यादौ जीवोपाधौ लिङ्गशरीरेपि जीवपदप्रयोगदर्शनाज्जीवपदेन लिङ्गशरीरं मन्यन्त इत्यर्थः । तद् दूषयन्ति तथेत्यादि । तथा सति प्राणप्रभृतिविवेकेन भगवानुपक्रान्तत्वात्प्राप्तः, जीवस्त्वनुपक्रान्तत्वादप्राप्त इति तद्विचारेण तथेति नात्र लिङ्गशरीरमुच्यत इत्यर्थः । तथा च ब्रह्मणोंऽशतो लिङ्गशरीरसम्बन्धोऽनुचितो जीवतुल्यतापत्तिश्चेति भावः । पुनर्भव इति । अस्तीति शेषः । तथा च 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इत्यादिना श्रुतौ लिङ्गभूतानामुत्क्रमः श्राव्यते, न तूत्क्रमः, अत उत्क्रमणलिङ्गेनापि न जीवोपाधिरत्रोच्यत इति तथेत्यर्थः । भगवदुपाधिरिति । भगवतान्तर्यामिरूपेणोप समीपे धीयते पोष्यत इति तथा ॥ ३२ ॥

यद्येषेत्यत्र । न निस्स्वभावत्वमिति । नाशत्वम् । तस्याः पूर्वावस्थामाहुः
यदेति । मतिरिति, विद्या । स्वाराज्यं करोतीति । इति विदुस्त-
१-३-३४
त्त्वज्ञा इति शेषः । तथा च मायया विद्यारूपेण परिणामे जीवोऽयं जडोऽयमिति भेदबुद्धिर्गच्छति, तावता स्वरूपलाभोऽस्य भवतीत्यवतारकथायां शुभं फलमुक्तम् । सर्वं हरिरित्येतदर्थमिति । द्वितीयाध्याये 'सत्त्वं यद्ब्रह्मदर्शन'मित्यनेन सत्त्वस्यादूरत्वेन ब्रह्मानुभवरूपत्वं यदुक्तमासीत्, तस्यानुभवस्याकारः 'सर्वं हरि'रिति, तत्प्रदर्शनार्थमित्यर्थः ॥ ३४ ॥

एवं जन्मानीत्यत्र । अन्यत्रापीति । भवप्रवाहान्तरेऽपि । उपदेशातिदेशयोरि-



१-३-३५
त्यादि । उपदेशः प्राथमिकं कथनम्, अतिदेशस्तु अन्यत्र प्रसिद्धस्य
धर्मस्यान्यत्र कार्यवशात्प्राप्तिः । प्रकृते तु पुरुषावतारजन्मादिकथनमुपदेशः, 'एवं जन्मानी'त्यनेनान्यत्र तदतिदेशस्तयोः । को विशेष इति । अवतारकथाप्रश्नेन भगवत्त्वादेरपृष्टत्वात्तत्कथनस्य किं प्रयोजनमित्यर्थः । नास्तीति । 'न हि विरोध उभय'मिति वाक्यात्नास्तीत्यर्थः । अनेकविधो भवतीति । तेन मायिकरूपमायावादयोरप्येकदेशत्वेन संग्रहः, अथवा प्रेरणाविशेषरूपधर्मभेदादनेकविधो भवतीत्यर्थः ॥ ३५ ॥

स वा इत्यत्र । वर्णयन्तीति यदुक्तं तस्यैवाग्रिमश्लोकत्रयं प्रपञ्च इति बोधयन्ति
कथं वर्णयन्तीत्यादि । तथा च जगत्कर्तृत्वादिना वर्णयन्ति ।
१-३-३६
सृजतीति । सर्गादिलीलाः । अमोघलील इति । स्वरूपं सृष्टिद्वारा च ज्ञायत इति बोध्यम् । ननु द्वितीयाध्याये 'स एवेद'मित्यादिना लीलानामुक्तत्वात्पुनस्तत्कथने प्रयोजनं तथा न दृश्यत इति षट्प्रश्नपूरणं च न जातमिति चाशङ्कयोर्निवृत्तये पक्षान्तरमाहुः अथवेत्यादि । अत्र तच्छब्दः प्रसिद्धार्थविषयः, न तु प्रक्रान्तविषय इत्याशयेनाहुः पुरुषोत्तम इति । 'अतोऽस्मि लोके वेदे चे'ति वाक्यात् । अत्रापि पूर्वं 'कृष्णस्तु भगवान् स्वय'मिति कथनात्, अवतरस्यापि सत्त्वाच्च । इदमिति । परिदृश्यमानं विश्वत्वस्य । निवारित इति । समभिव्याहारेण भगवत्कृतपरिदृश्यमानयोर्विधेयत्वबोधनान्निवारितः । व्यर्था स्यादिति । फलासिद्ध्या तथा, नात्रानित्यत्वं जगतो भविष्यति, तत्कृता फलासिद्धिरपि तु भगवतीवाक्षरादिषु अमोघलीलत्वं न भवतीति निष्फललीलया फलासिद्धिरिति भावः । हेतुमाहुः कार्येति । कालाक्षरपुरुषाणां स्यात् । लीलासेति । तेन सम्यक्स्फुरणमित्यर्थः । अन्येषामिति । अक्षरकालपुरुषाणां कार्यव्यापृतत्वेनेत्यर्थः । तथात्वेनेति । भोक्तृत्वेनेत्यर्थः । सज्जन्ते, भगवाँस्त्वभिजाकर्षीति, अतो न सज्जत इति जीवेभ्यो वैलक्षण्यम् । प्रमाणमिवेति । मूलः स्वानुभवं कथयतीत्यर्थः । उक्तेति । तथा च देहेषु जीवानामध्यासः सम्बन्धः । न दृष्टसम्भव इति । न दृष्टे निरंकुशकारणत्वसम्भव इत्यर्थः । तदा भोगे दोष इति । अतीन्द्रियेन भोगस्याप्युक्तत्वात्समये भोगे जीवतुल्यत्वम् । अभावत्वापत्तिरित्याशंक्याहेति । क्षयादप्रत्यापत्तिरित्याशंक्य तदुभयाभावप्रकारमाहेत्यर्थः । भोग इति । जीवकर्तृकभोगः । तत्रेत्यादि । जीवकर्तृके भोगे । केवलानां धर्मरहितानां धर्मिणां ग्रहणं जीवैरशक्यम्, तथा च धर्मरहिता धर्मिणो धर्मिरहिता धर्माश्च भगवद्भोग्याः, इतरेतरसंसृष्टा गन्धवत्पुष्परूपा धर्मधर्मिणस्तु जीवभोग्या इति भोग्यभेद इत्यर्थः । प्रकारभेदमाहुः इन्द्रियाणामित्यादि । भोग इति । सर्वांशेन भोगः । जिघ्रतीत्यादि । तथा च गन्धमुपाददातीत्यर्थात्केवलधर्ममात्रं गृह्णातीत्यर्थः । लक्षणां वारयितुमाहुः लोक इत्यादि । इत्युक्तमिति । इतिहेतोर्जिघ्रतीत्युक्तम् । तथा च केवलधर्मग्रहणस्यानुभवसंवादित्वाय धर्मग्रहणबोधकः शब्दोऽत्र प्रयुक्तोऽतो न लाक्ष-

णिक इत्यर्थः। एवकारेण रसनादयो व्यवच्छिद्यन्ते, तत्र धर्मिणोपि ग्रहात्। षडिन्द्रियाणां वर्गत्वं साधयित्वा तद्विषयाणां तावत्त्वं बोधयन्ति अष्टाविंशतीत्यादि। अष्टाविंशतिभेदानीति पाठे तत्त्वानीति शेषः। तेषु भगवद्भोग्यमाहुः तेषां रसानिति। सारभूतानंशान्। तथा च प्रकारभेदान्न जीवतुल्यत्वम्, भोग्यभेदान्न क्षय इत्यर्थः। जीवानामेकदेशसम्बन्धे हेतुमाहुः ज्ञानसहितानामित्यादि। मुख्यतया मनोग्राह्यं ज्ञानमेवेत्यतो रूपादीनां तत्साहित्यमत्रोक्तम्। तदधीनत्वमिति। ईश एव रसाधीन इत्यर्थः। एवं चास्मिञ्छ्लोके प्रथमावतरणिकोक्तं वर्णनं लीला च प्रतिपादिता। द्वितीयपक्षे तु रसभोगात्मकमवतारप्रयोजनमुक्तं ज्ञेयम् ॥ ३५ ॥

न चास्येत्यत्र। वस्तुतस्त्विति। 'अविज्ञातं विजानता'मितिश्रुतेरित्यर्थः। स्वतः
आम्रादयः कर्कटीविशेषप्रभृतयः अधिकरणतः श्वदृतौ भृतं दुग्धादि,
१-२-३७ अधिकारिभेदेन कीटादिदूषितान्नादि। द्वितीयापि कोटिरिति।
नानुभूयन्त इति कोटिः। तथा च साकारव्यापकत्वाद्रूपान्तरेणानुभूयन्ते, नतु स्वेनेत्यर्थः। प्रमाणान्तरस्येति। 'यस्य ब्रह्म च क्षत्रं चे'ति शब्दादतिरिक्तस्य। तथा च कालरूपेण ब्रह्मक्षत्रादि भुनक्ति, नतु स्वयमिति भावः। कस्मै प्रयोजनायेत्यादि। 'अर्वाग्देवा अस्य विसर्जनेनाथ को वेद यत आबभूवे'ति श्रुतेरित्यर्थः। कौशल्येति। ब्राह्मणादेराकृतिगणत्वात्ष्यञ्। कौशलेनेति वा पाठः। ऊर्तीरिति। ऊतयः कर्मवासनाः कर्माभिव्यंग्या दृष्टरूपा इत्यर्थः। निपातेत्यादि। ऊतियूतीत्यादिना ऊतिशब्दो निपातितः, तत्र यथा उशब्द इति धातोरुपूर्वस्य क्तिनि ऊतिरिति भवति ज्वरत्वरेत्यू अवते रूपं तथापि नितरां विचारात्पातनादज्ञानं तद्भेदानां प्रेमपरवशतां वा द्योतयत्ययं ग्रन्थः। अथवा लीलापदं स्वरूपदं वा परित्यज्योतिपदं प्रयुक्तं कर्मवासनावान्तरभेदा न ज्ञायन्ते यथा, तथा भगवतोऽपीति बोधयति। अथवा। सूत्रकृता स्वरप्रक्रियायामूतिरुदात्त इत्यनुक्तात्र पठिता सूत्रकृदादिमते प्रकृतिप्रत्ययभेदाज्ञानं द्योतयति तद्वदित्यर्थः। विस्तारगत इति। तथा च वेदादीनामप्यर्वाचीनतया न तैरपि ज्ञायते इत्यज्ञाने हेतुरित्यर्थः। चतुर्भिरिति। धातृपदसूचितार्वाचीनत्वजन्तुत्वकुमनीषित्वाज्ञत्वैः। अत्रापि यथायथं स्वरूपाज्ञानं कथं करोति, किमर्थं वा करोति, कथं किमर्थं वा जिघ्रतीति भोगादिप्रकाराज्ञानं चोक्तं ज्ञेयम् ॥ ३७ ॥

स वेदेत्यत्र। ननु धातृत्वादज्ञानेऽपि कार्यलिङ्गकानुमानेन ज्ञातो भविष्यतीत्यत
आहुः कार्यं तु लौकिकमिति। 'कर्मगुणप्रवाह' इति वाक्यात्कार्यं
१-२-३८ लोकान्तःपाति, अतो यथाकथञ्चिज्ज्ञापकम्, नतु वस्तुत इदमित्थं
ज्ञानजनकमित्यर्थः। तर्हि कथं ज्ञानमित्याकांक्षायां तदुपायमाहुः तदित्यादि। तत्कार्य



मार्गपरिज्ञाने सति ज्ञापकं भवतीति शेषः। तन्मार्गेति। अनेन पदवीपदप्रयोगतात्पर्यमुक्तं भवति। मार्गो भक्तिः। कथमेवमित्यपेक्षायां तत्प्रकारमाहुः सर्वेत्यादि। सद्भावादिति। गतिसद्भावात्। तथा च गत्याधारभूतो मार्गः कार्यभूत इति गतिज्ञाने तदाधारभूतकार्यतत्त्वज्ञानं भवति, तेन ज्ञानेन धूमप्रमित्या वह्निरिव भगवतो ज्ञानं भवतीति तदर्थं गतिः मार्गपदवीपदोक्तौ ज्ञातुमावश्यकमित्यर्थः। मन आदौ भगवत आविर्भावे तत्प्राप्तिरित्यर्थः। ननु विवर्ते मन आदौ आविर्भूतमपि तथेति किमनेनेत्यत आहुः बुद्ध्येति। बुद्ध्या सद्भावं प्राप्य कार्याणां तत्त्वं परमार्थतत्त्वं ज्ञायेतेत्यर्थः। तस्येत्यादि। 'धातुः पदवीं वेदे'त्यस्य नान्यथैम्। प्रमाणाज्ज्ञानप्रभाव इति। प्रमाणैरज्ञानसत्तायामित्यर्थः। ननु वैकुण्ठादिस्थैर्ज्ञानी भगवानुपदेष्टव्य इति वक्तुमाहुः कदाचिदिति। न समाप्यन इति। तथा चातिवेगवशान्मनोवत्साकारोऽपि न ज्ञायतेऽप्यधिकाराभावाच्च नोपदिश्यत इत्यर्थः। प्रलय एवेति। जगदनुकूलक्रियाभावात्प्रलय इत्यर्थः। ननु गतिज्ञानाय किमिति साधनोपदेशः, 'गतिर्वेद' इतिवाक्यात्कालस्य गतित्वेन तस्येव गत्यन्तरस्याप्यनुमानेन शक्यज्ञानत्वादित्यत आहुः किञ्चेत्यादि। तथा च कालोऽपि दुर्ज्ञेयश्चेत्तद्दृष्टान्तेन गत्यन्तरज्ञानं दुर्घटमिति साधनोपदेश आवश्यक एवेत्यर्थः। कालस्य दुर्ज्ञेयत्वं तु ब्रह्मपुराणोपान्त्ये मायानुकीर्तनाध्याये द्रष्टव्यम्। अथवा। कालरूपदृष्टान्ताभावादेव न तद्‍ज्ञानमित्यर्थः। कालचक्राभिजल्पस्य सत्त्वात्पक्षान्तरमाहुः अथवेति। हस्तेत्यादि। लोके तथा प्रसिद्धिः। अत्रयाचितत्वेन हस्ताधारो विरुद्धधर्मवत्त्वज्ञापनायेदम्। शकटस्यैरिति। शकटं जगत्। गतीति। मायाज्ञानपक्षाद्वार इत्यर्थः। योधिनाविति। सन्तताउवृत्तिपदाभ्यां बोधितौ। चरणेति। यस्तत्पादसरोजगन्धं भजेत, स तत्पदवीं वेदेति तथा। लोकेऽप्येवम्। स चेति। 'स वेदे'त्यादेरर्थः। भक्तिपक्षे त्वित्यादि। अस्मिन्पक्षे परोक्षवाद इति लक्षणा न दोषायेति ज्ञेयम्। भक्तिमार्ग इति। 'भवत्पदाम्भोरुहनाव'मित्यत्र व्याख्यातः ॥ ३८ ॥

अथेत्यत्र। हीनमर्पाति। मूतम्। 'यानि वेदविदां श्रेष्ठ' इत्यत्र, 'कथायां
सक्षणा हरे'रित्यत्र च सिध्यति। एवं प्रकार इति। धन्यत्वस्येत्यर्थात्।
१-२-३९ मूलस्थसर्वात्मकपदे ऐकान्तिकमित्यर्थः श्रीधरीये व्याख्यातः, अत्र
तु सर्वात्मक इति सप्तम्यन्तं वेदान्तवेद्यतां चेत्यनेन व्याख्यातम्। सर्वात्मक एव वेदान्तवेद्यता, आकाशादिपदानां श्रवणात्। तथा च सर्वात्मक आत्मभावमिति पाठः। सुहृदेति। वेदान्तवेद्य एव सुहृदस्नेह इति बोधाय्यम्। प्रयुज्येति। तथा चात्मनि भाव आत्मभाव इति समासे एकदेशान्वयः सप्तम्यन्तानाम्। पुनः शब्दार्थ इति। अर्थैचयात्पुनःशब्दः ॥ ३९ ॥

१-३-४० इदमित्यत्र । जातिशब्द इति । पुराणत्वं जातिरित्यर्थः ॥ ४० ॥

निःश्रेयसायेत्यत्र । लक्ष्म्या इति । लक्ष्म्याः श्रवणात् । भागवते भगवतः श्रवण-
१-३-४१ माशंक्याहुः सर्वगताया इति । तथा च भगवच्छ्रवणेऽपि लक्ष्मीश्रवण-
मिति भावः । कथं कल्याणहेतुत्वं लक्ष्म्याः श्रवणस्येत्यत आहुः
भक्ताया इति । तथा च भक्तायाः श्रवणाद्भक्त्या कल्याणमित्यर्थः । स्वत इति । 'सारं सारं समुद्धृत'मितिश्लोकात् । गुणत इति । वास्तववस्तुवेद्यत्वतः । अर्थत इति । अर्थो हि भगवान्ततः ॥ ४१ ॥

१-३-४३ कृष्ण इत्यत्र । स्थित इति । धर्मे स्थिते धर्मस्य शरणचिन्ता ॥४३॥
तत्रेत्यत्र । पूरितवानिति । भगवद्रसेन शुकं पूरितवान् ।
१-३-४४ अहं चेत्यत्र । यस्येति । श्रीभागवतस्येत्यर्थः ॥

इति श्रीप्रथमस्कन्धे सुबोधिनीप्रकाशे तृतीयाध्यायविवरणम् ॥ ३ ॥

---

## अथ चतुर्थाध्यायविवरणम् ।

अथ चतुर्थाध्यायं विवरिषवः पूर्वप्रकरणस्य समाप्तत्वादग्रिमस्य प्रारभ्यमाणत्वात्तयोः पूर्वापरीभावे हेतुं स्फुटीकर्तुं द्वयोरर्थमाहुः एवमित्यादि । स्वाधिकारत इति । ल्यब्लोपे पञ्चमी, स्वाधिकारमाश्रित्येत्यर्थः । त्रिभिरिति । अध्यायैः । त्याज्यसमत्वेन इति । अदृष्टद्वारेणोपकारी धर्मः । फलव्यभिचारत्वात्त्याज्यः, तस्यात्रापि तेन रूपेण तुल्यत्वात् । शास्त्रमिति । उपदेशः । त्याज्यसाम्यादत्र प्रथमत्वं वा अवतारादुत्तमत्वं वा वक्तव्यम्, न तु मध्यमत्वमित्याशङ्क्य मध्यमत्व उपपत्तिमाहुःनारदेत्यादि । नारं नरसम्बन्धिज्ञानं ददातीति नारदः इति निरुक्त्या ज्ञानदाने नारदस्याधिकारो ज्ञेयः । स चाध्यायसमाप्तौ स्फुटिष्यति । तथा चोत्तमत्वस्यौचित्येऽप्युक्तहेतुभ्यां मध्यमत्वमित्यर्थः । एतेन पूर्वापरीभावे हेतुरप्युक्त एव । तेन व्यासोक्तिविचारे प्रसङ्गः सङ्गतिः स्फुटति । अतःपरं सूतोक्तौ सङ्गतिं वदिष्यन्तोऽध्यायार्थमाहुः तत्रेत्यादि । हेतुर्वैराग्यम् । 'तस्य पुत्रो' 'दृष्ट्वानुयान्त'मित्यादिभिः शुकस्यापि[1] विरक्ततावोधनात् स्वापेक्षयाऽस्योत्कृष्टत्वाच्च तत्कथाया मध्यमत्वं तत्रापि स्फुटतीति तद्विचारेऽपि स एवार्थ इत्यर्थः ।

इतीत्यत्र । पृच्छन्तीत्याह । व्यास[2] इति । एतेन प्रसङ्गः प्रश्नः सङ्गतिरित्युक्तम् ।
१-४-१ पृष्ट इति भावेक्तः ॥ १ ॥

सूत सूतेत्यत्र । निर्धारणादित्यादि । 'न निर्धारणे'ति सूत्रेण समासनिषे-
१-४-२ धाच्चेत्यर्थः ॥ २ ॥

---

१ शुकस्याविरक्ततेति पाठः । २ आयास इत्यत्र व्यास इति पाठः सूचितः ।



कस्मिन् युग इत्यत्र । हेतुनेति । निमित्तेन प्रयोजकेन च । उदाहरणेन तं
स्फुटीकुर्वन्ति यथेत्यादि । श्रीभागवतप्रवृत्तौ चित्तवैयग्र्यं निमित्तं तद-
१-४-३ भावः प्रयोजक इति । भवत्विति । प्रेरणं भवतु, तथापि प्रेरकः कुतः
प्रेरितवानित्यर्थः । एक इति । प्रेरकप्रश्नः ॥ ३ ॥

तस्य पुत्र इत्यत्र । स्वप्नदृष्टेत्यादि । इदं ब्रह्मविस्वपोपकम् । ब्रह्मविदः स्वप्ना-
भावस्य तृतीयस्कन्धनिबन्ध उपपादितत्वात् श्रुत्युक्तासु हिताख्यासु
१-४-४ नाडीषु जीवस्येन्द्रियैः सह प्रवेशे 'तद्यथा महामत्स्य उभे कूले'त्यादि-
श्रुत्युक्तानि यानि स्वप्नदृष्टान्यरिष्टानि तान्यपि 'मन एव मनुष्याणां पूर्वरूपाणि शंसति । भविष्याणि च भद्रं ते' इति वाक्याद्भूतभावीन्येव, तथा तेषां ज्ञाने तन्निवृत्त्यपेक्षा स्यात्. जाते ज्ञाने तु मूलाविद्यानाशात् तदाधिभौतिक्या निद्राया अपि निवृत्तेर्मनसा तेषामदर्शने तन्निवृत्तिज्ञानात् तदपेक्षारहित इत्यर्थः ॥ ४ ॥

कथमित्यस्याभासे । कथयन्तीति न मन्तव्यमिति । कथयन्तीति सम्भवति,
तथापि न मन्तव्यमित्यर्थः । विवृतौ । बहिःस्थैर्यादिनेति । शाखायां
१-४-६ स्थिरचेष्टायाम् ॥ ६ ॥

१-४-७ कथं वेत्यस्याभासः । अस्तु वा नगर इत्यादि ॥ ७ ॥

स गोदोहनेत्यत्र । अस्तु वेति । संवाद इति शेषः । तीर्थीकरणप्रयोजनमाहुः
तथेत्यादिना । तथेति । यथेदानीमतिप्रवृत्तिनिष्ठा, तथेत्यर्थः । सङ्क-
१-४-८ दोषादिति । 'गृहेष्वि'त्यनेन सूचितात् । धर्मदोहार्थमिति । अग्निहो-
त्रोपयोगिदोहार्थम् ॥ ८ ॥

शिवाय लोकस्येत्यत्र । पराश्रयमिति । परेषां शरणभूतम् । निर्वेदहेतुरित्यादि ।
राज्ञां वृत्तिं करादानदण्डशुल्कादिदारुणाम् । मध्यपानां दीर्घसत्र-
१-४-१२ व्याजेन विससर्ज हे'तिवत् स त्यक्तव्य इत्यर्थः । ननु राजधर्मस्यापि द्रिप-
द्रष्यजनकत्वादस्ति निर्वेदहेतुत्वमिति चेत्, तत्राहुः कस्येत्यादि । हेतुत्वमिति । निर्वेदहेतुत्वम् । तथा च तद्विचारेऽपि शस्त्रसंन्यास उचितः, न तु देहत्याग इत्यर्थः । देहस्यात्याज्यत्वे हेतुमाहुः काल इत्यादि ॥ १२ ॥

द्वापर इत्यत्र । कर्तृप्रश्ने सपरिकरः कर्ता वक्तव्यः, न तु तज्जन्मादिनिराकाङ्क्षायां
जन्मकथनप्रयोजनमाहुः भागवतेत्यादि । ब्रह्मकल्पस्येत्यादि ।
१-४-१४ अत्रायमाशयः । मूले 'तृतीये युगपर्यये' इति कथनादष्टाविंशतितमायां
यद्वापरस्य निष्टचौ तत्रोत्पन्नाथाः सत्यवत्या एतन्मन्वन्तरीयतृतीयपर्यायद्वापरेऽवतारान्

तस्यापि निवृत्तौ तस्याः सोमवंशीयत्वेन तद्रहितमन्वन्तराणामपि निवृत्तावेतत्कल्पस्यैव निवृत्तभूतस्य कल्पान्तरस्यावश्यं मृग्यत्वात् तस्मिन् विचार्यमाणे रजोगुणस्यैव प्रथमं क्षोभात् 'प्रथमः कल्पो राजस' इति ब्रह्मकल्पस्य राजसत्वे 'चाक्षुषो दधिसम्भव' इत्यत्रोक्तन्यायेन तत्र राजसमन्वन्तरप्राथम्ये प्राप्ते, तत्र सूर्याद्यपेक्षासत्त्वात् 'मृतेण्ड एष एतस्मिन् यद्भूत्ततो मार्तण्ड' इति निरुक्त्या जगतामग्नीषोमात्मकत्वेन च सोमस्यापि तदा सत्त्वेन तद्वंशे जाते तृतीयपर्यायद्वापर एव सत्यवत्या उत्पत्तौ वक्ष्यमाणयुक्त्या पराशरस्यापि तदानीं सत्त्वात् तृतीयपर्यावृत्तौ व्यासजन्मेत्यर्थः । तृतीय इत्यादिकथनस्य प्रयोजनमाहुः प्रथममित्यादि । तथा च भक्तिप्रचारार्थत्वात्तृतीये पर्याये जन्मेति भावः । माध्वास्तु 'अधीतवान् द्वापरादा'वित्यस्य व्याख्याने 'व्यासः षड्शतवर्षीयो धृतराष्ट्रमजीजन'दिति वाक्यादस्मिन् कल्पे व्यासजन्माहुः । द्वापरस्य तात्पर्यमाहुः नचापीत्यादि । धर्माणां बाधकत्वादिति । कृतत्रेतयोर्धर्मसन्देहाभावेनासन्दिग्धतया क्रियमाणानां तेषां भक्तिबोधकत्वात् । द्विपरताया: सन्देह इति । 'द्वापरौ युगसंशया'विति कोशात् द्वापरशब्द उभयार्थः, प्रकृते शक्तिनियन्त्रणाभावादेकयात्तया पुष्पवच्छब्दवदुभयं वक्ति । द्विपरता तूक्ता मात्स्ये 'द्वैधमुत्पद्यते चैव युगे तस्मिन् श्रुतौ स्मृता'वित्यादिना । एवञ्च द्वापरान्ते व्यासावतार आयाति, तदाहुः सर्वेषामिति । ऋषीणाम् । एवं जन्मकालस्वरूपं निर्णीयाधिकरणस्वरूपमाहुः पराशरस्येत्यादि । पुराणान्तरेष्विति । विष्णुपुराणादिषु । मातुर्भक्तत्वायाहुः उपरीत्यादि । उपरिचरस्य वैष्णवत्वं मात्स्य एव प्रसिद्धम् । बीजधर्मयुक्तेति । वैष्णवत्वयुक्ता । तथा चैतयोरेतादृशत्वात्तत्र व्यासावतार इत्यर्थः । ज्ञानस्य त्विति । प्रवृत्तिरिति शेषः । प्रयोजनमिति । अवतारप्रयोजनम् ॥ १४ ॥

स कदाचिदित्यत्र । प्रासङ्गिकमिति । अवतारकार्यम् । अनेनेति । पापपरा-
जितसरस्वतीजलोपस्पर्शनेन । पुण्यनक्षत्रस्येत्यादि । 'यत्पुण्यं नक्षत्र'-
१-४-१५ मित्यत्र श्रुतौ आदिमजघन्यपुण्यनक्षत्राङ्कितमार्गे यावत्सूर्यगतिः, ताव-
त्कालस्य पुण्याहरूपस्य ज्ञापकं कालगुणा आर्तवास्तेषां च ज्ञापकमित्यर्थः ॥ १५ ॥

परावरेत्यत्र । अवतार इति । व्यासावतारः । व्यतिकरशब्दस्य नाशे प्रसि-
द्ध्यभावात् पक्षान्तरमाहुः अनधीत्यादि । तथा चानधिकारसम्मि-
१-४-१६ श्रणमित्यर्थेऽङ्गीकृतेऽर्थादेव नाशप्राप्तिरित्यर्थः ॥ १६ ॥

१-४-१७ अश्रद्दधानानित्यत्र । इत्याहेति । 'ह्रसितायुष' इति विशेषणमाहेत्यर्थः ।

चातुर्होत्रमित्यत्र । ननु कालकृते दोषे तदधीनस्य यज्ञस्य कथं सर्वहितकरत्व-
मित्यत आहुः आर्षेत्यादि । तथापि मन्दबोधनाय तामाहुः युक्तिरिति ।
१-४-१९ तदुभयात्मकत्वादिति । 'स विष्ण्वाख्योऽधियज्ञोऽसौ कालः कलयतां

१ नक्षत्रान्दिकेति पाठः ।



वर' इतिवाक्यादित्यर्थः । स चेति । यज्ञश्च । 'यज्ञो वै विष्णु'रिति श्रुतेः । तथा च प्रमाणतः प्रमेयतश्च यज्ञस्य बलिष्ठत्वं युक्तिरित्यर्थः । सर्ववेदैकवाक्यतामित्यादि । यज्ञस्य सर्ववेदार्थतां वक्तुं यज्ञस्य स्वरूपमाहेत्यर्थः । त इति, अध्वर्यूद्गातृहोतृब्रह्माणः । एवं व्याख्याने सोममात्रप्रतिपादकत्वं स्यात्, नत्वग्निहोत्रादिप्रतिपादकत्वमपीत्यरुच्या पक्षान्तरमाहुः अथवेत्यादि । 'चित्तिः स्रु'गित्यादिः 'सामाध्वर्यु'रित्यन्तो दशहोतृमन्त्रः । 'पृथिवी होते'त्यादि'रूपवक्ते'त्यन्तश्चतुर्होत्राख्यः । 'अग्निर्होते'त्या'द्युपवक्ते'त्यन्तः पञ्चहोत्राख्यः । 'सूर्यं ते चक्षु'रित्यादिः 'शरीरे'रित्यन्तः 'वाग्घोते'त्यादि 'र्जुहोमी'त्यन्तश्चेति द्वौ षड्ढोतृमन्त्रौ । 'महाहवि'रित्यादिरुद्गातान्तो मन्त्रः सप्तहोत्राख्यः । एतेषां मन्त्राणां यज्ञहेतुत्वं चातुर्होतृशब्दवाच्यत्वं च ब्राह्मणे दर्शितम् । 'चतुर्होतृभ्योऽधियज्ञो निर्मित' इत्यादिना । 'त्वं वै मे हूतः प्रत्यश्रौषी'रित्यादि च तत्र हि ।' तदेतदभिसन्धायोक्तं ते अग्निहोत्रादीनां मूलमिति । ननु कर्मणस्त्रिक्षणावस्थायित्वनियमदर्शनात् प्रत्यक्षविरोध इत्यत आहुः कर्मेति । नामधेयमित्यादि । तथा च स्वरूपस्य भेदाभ्न तस्य तथात्वम् । लौकिकक्रियायां तु तदभिव्यञ्जकत्वेन यागादिप्रयोगो भाक्त इत्यदोषः । अकुशलत्वयेति । तत्तद्यागप्रकरणभेदनेनामिश्रतया । एवं सति पञ्चविधत्वं स्यात्, ततश्च चतुर्विधपदं विरुध्येतेति पक्षान्तरमाहुः अभिन्नेत्यादि ॥ १९ ॥

ऋग्यजुरित्यत्र । वेदशब्देत्यादि । वेदानां लक्षणमेवं ज्ञेयम् । सच्छन्दस्कं वाक्यं
ऋक्, तद्भूयिष्ठो वेदः ऋग्वेदः । एवमग्रेऽपि । तद्रहितं यजुः । गानप्रयु-
१-४-२० क्तमुभयं साम । वेदत्रितयभिन्नो वेदोऽथर्व इति । तस्यैभ्य एव निर्गत-
त्वात् पृथग्लक्षणं प्रसिद्धं नास्ति ॥ २० ॥

तत्रेत्यत्र । ननु धर्मस्य चोदनालक्षणत्वात्तस्याश्च यजुर्वेदसिद्धत्वात् पूर्वं यजुर्वेदः
कुतो नोक्तः, किञ्च, त्रिभागोक्तौ ऋग्यजुःसामेति क्रमः, अत्र तु
१-४-२१ 'ऋक्सामयजुषा'मिति विरोध इत्यत आहुः अत्र त्वित्यादि । तथा
च 'आदित्यो वा एष एतन्मण्डल' मित्यत्र ऋक्सामयजुषामेव क्रम उक्त इति तं मन्त्र-
क्रममादायात्र तथोक्तमित्यर्थः ॥ २१ ॥

१-४-२३ स एव इत्यत्र । खण्डशो व्यास इति । खण्डशो विस्तारे ।

त एव वेदा इत्यत्र । लक्षणैः समानादिभिरिति । लक्षणैः प्रातिशाख्य-
ग्रन्थैस्तत्रोक्तैः समानादिभिरित्यर्थः । व्यासत्वादिति । तदर्थमधिका-
१-४-२४ रित्वात् ॥ २४ ॥

स्त्रीशूद्रेत्यत्र । अवीरवतीनामिति । पतिपुत्रहीनानाम् । अस्मिन्नर्थ इति ।

मनसि विचारित एवार्थ इत्यर्थः । ननु त्रयीसाध्यस्य फलस्य भारतेन
१-४-२५ कथं सिद्धिरित्याकाङ्क्षायामेवंपदोक्तं विचारितप्रकारमाहुः यद्यप्यस्या-
दि । अर्थलौकिकन्यायेन भट्टेष्विति । भट्टमते यथा लौकिकक्रियारूपस्य यागस्या-
पूर्वरूपालौकिकव्यापारवत्तयार्थलौकिकत्वम्, तथा पुराणेषु भारते च सर्वाधिकारिकत्वा-
द्वेदव्याख्यानरूपत्वाच्च तथेति तेन न्यायेनेत्यर्थः । अन्यार्थमिति । प्रकथनार्थम् । तथा-
त्वावगतिरिति । अलौकिकत्वावगतिः ॥ २५ ॥

एवं प्रवृत्तस्येत्यत्र । वेदव्यास इति । भारतरूपे वेदव्याख्याने । श्रीधरोक्तं
व्याख्यानं सङ्गृह्णन्ते अथवेत्यादि । तथा च सर्वप्रकारेण (दया) यथा
१-४-२६ कृता, तथा अत्राप्युक्ता अपि धर्मस्य प्रकारास्तदर्थं कृता इति धर्मस्यैव
सर्वात्मकत्वमिति भावः ॥ २६ ॥

नातिप्रसीदद्दित्यत्र । अधिकारित्वादित्यादि । यो हि यत्राधिकृतः, तस्य
पूर्णे स्वकार्ये निष्पन्ने तोष इति तदभावात्फलाभाव इत्यर्थः । मद्धा-
१-४-२७ धिकारित्वादिति । एकान्तस्थित्यभावे धर्मादिप्रश्नकर्तॄणां बहूनामागम-
नादिना वैयग्र्यापत्तेरितिभावः ॥ २७ ॥

भारतव्यपदेशेनेत्यत्र । कल्पसूत्रवन्मुख्यवेदार्थप्रतिपादकत्वे शूद्रादीनां द्रष्टृत्वं न
स्यात्, अन्यप्रतिपादकत्वे आम्नायार्थदर्शकत्वं भारते न स्यादित्युभ-
१-४-२९ यसामञ्जस्यार्थं यादृशो धर्मो भारते प्रतिपादितस्तमाहुः आम्नाय
इत्यादिना । तथा चातएवार्थालौकिकत्वं तदुक्तधर्मस्येति भावः ॥ २९ ॥

अथापीत्यत्र । फलव्यभिचारमुपपादयन्ति आत्मनामित्यादि । अयमर्थः ।
सत्त्वशुद्धौ कैवल्यस्फूर्तेस्तदभावे भेदस्फुरणाद्देहाद्युपाधिभेदमादायात्मनां
१-४-३० भेदं मन्यते । तथा च देह इत्यादिप्रयोगेण सर्वात्मभावतिरोभावो ज्ञाप्यते ।
तेन फलव्यभिचार उपपन्न इति भावः । देहस्य उपपत्तिमाहुः ब्राह्मणेत्यादि । नन्वात्मनो
देहत्वं देहात्मस्फूर्तौ, व्यासस्य तु योगित्वात् तदभाव इति कथमियमुक्तिरित्यत आहुः
मानसश्च योगीति । मनसि साधुर्मानसः । तथा च योगिनो मानसत्वेन योगिमतेपि
पुरुषभेदाङ्गीकारात् ततोपि न सर्वात्मभाव इति भावः । तन्मतेपि पुरुषाणां व्यापकत्वा-
द्विवक्षितो भेदो नोपपन्न इत्यरुच्या पक्षान्तरमाहुः अत्रेत्यादि । श्रौतविचारे अत्रांश-
भेदान्नैयायिकविचारे द्रव्यान्तरत्वान्मनसो भेद इति तमुपाधीकृत्य वा आत्मभेद इत्यर्थः ।
एवमप्येकस्यात्मन एकस्यैव मनस उपाधित्वा‘न्मे देह’ इति स्वस्य देहाद्भेदो न सङ्ग-
च्छत इत्यतः पक्षद्वयमन्यदाहुः अध्यासेनेत्यादि । अविवेकसङ्क्रमणं नाम चिदात्म-
नस्तत्तद्वृत्त्युपारोहः । तथा सति तत्तद्वृत्तिभेदात्सङ्क्रान्तस्यापि भेद इति प्रयोगोपपत्ति-



रित्यर्थः । तत्रेति, देहे । तथास्फुरणादिति । असम्पन्नत्वस्फुरणात् । स्वस्मिन्निति ।
मे इत्यनेनोक्ते सङ्घातरूपात्मनि । ब्रह्मवर्चस्येनेति । ‘ब्रह्मवर्चसादुपसङ्ख्यान’मिति
वार्तिकेन निमित्तार्थे यत् । निमित्तं चात्र संयोगः । तथा च वेदाध्ययनाध्यापनाद्युत्कर्ष-
जन्या चेतनकान्तिर्ब्रह्मवर्चसं तत्संयोगेनेत्यर्थः ॥ ३० ॥

किं वेत्यत्र । त एवेत्यत्र त इत्यनेन धर्मा एवोच्यन्ते, न तु सन्निहिता अपि
परमहंसा इत्याहुः यदीत्यादि । पारम्पर्यादक्षरनिष्ठत्वाद्गौणता, न तु
१-४-३१ मुख्यत्वम् । तथा च तेष्वच्युतप्रियत्वस्यासम्भवान्मूलविरोधः स्यादिति
तच्छब्दस्य व्यवहितपरामर्शित्वमेव युक्तमित्यर्थः ॥ ३१ ॥

आश्रमपदप्रयोग इति । परमहंसपदप्रयोगः । ननु भागवतधर्माणां सर्वाधिकार-
त्वात् कथं परमहंसपदप्रयोग इत्यत आहुः मुख्येत्यादि । एतादृश
१-४-३२ इति । योग्याज्ञानदानरूपे । तस्येत्यत्र । कथमिति । किमर्थमित्यर्थः ।
न विरोध इति । पश्चाज्ज्ञानेन कथनान्न विरोधः ॥ ३२ ॥

तमित्यत्र । साकाङ्क्षस्येति । खेदनिवृत्तिसाकाङ्क्षस्य । अभिज्ञायाश्चिन्त्यं स्वरू-
पमाहुः नारदेत्यादि । स्व इति । आत्मीयः । अत्रेति । उक्तविधे
१-४-३३ खेदे । अलौकिकमिति । अदृष्टार्थम् ॥ ३३ ॥

इति श्रीप्रथमस्कन्धसुबोधिनीप्रकाशे चतुर्थाध्यायविवरणम् ।

---

## अथ पञ्चमाध्यायविवरणम् ।

---

अथ पञ्चमाध्यायं विवरिषवः सङ्गतिं वक्तुं पूर्वाध्यायार्थानुवादपूर्वकं तामाहुः
चतुर्थ इत्यादि । सन्देह इति । फलाजननाद्धर्मस्यापरत्वं यथोक्तरीत्या
१-५-१ करणात्परत्वं चावगाहमानः स्वरूपविषयकः संशय इत्यर्थः । निर्णय
इति । अपरत्वरूपः सः । तेन सूतोक्तौ शेषशेषिभावः, व्यासोक्तौ तु सामान्यविशेष-
भावः सङ्गतिरित्यर्थः । अवान्तरवाक्यसङ्गतिमाहुः उद्दङ्कणमित्यादि । मध्यमत्वमधिका-
रित्वं तस्मादुद्दङ्कणं न खेददूरीकरणाय तर्ककरणं ‘पाराशर्य’इत्यादिभिस्त्रिभिरादौ दृष्टान्तस्य
स्वदृष्टान्तस्य ‘अहंपुरे’त्यादिभिरन्ते यन्निरूपणं तद्धि यतो हेतोः उत्तरस्य हेतुत्वान्निर्ण-
यहेतुत्वादस्ति तेन हेतुता उपोद्घातश्च सङ्गतिरित्यर्थः ॥ १ ॥

पाराशर्येत्यत्र । सन्दिग्ध इति । तिङन्तमिदम् । सम्बोधनमात्रेण कथमुद्बोध
इत्यत आहुः समर्थस्येत्यादि । अधिकार इति । योग्यतायाम् । कृता-
१-५-२ र्थत्वमिति । कृतकार्यत्वम् । समुदाय इति । व्यासचिन्तायां ‘ मे देह ’

इत्यत्र 'प' इत्यनेन यथा सङ्घातः परामृश्यते, तथात्र 'भवत' इत्यनेन सङ्घातः परामृश्यत इत्यर्थः। स्वेनैवेत्यादि। सङ्घाताभिमानिनैवापरितोष इत्यर्थः। अस्मिन् पक्षे तुशब्दकथनेनाग्रिमे पक्षे विषयप्राप्तावपरितोषो बोध्यते। अनेनेति। अर्थद्वयसङ्ग्राहकेणात्मनेति पदेन। एवं मानस इति। उभयथा परितुष्यतीति शेषः। पूर्वरूप इति। शारीररूपे॥ २॥

१-५-३ जिज्ञासितं सुसम्पन्नमित्यत्र। पाठान्तरमाहुः इति ते महदिति॥३॥

जिज्ञासितमधीतं चेत्यत्र। धर्माध्यापने गमकमाहुः जैमिनिरित्यादि। औत्प-
त्तिकसूत्रादौ व्यासोक्तानुवादादित्यर्थः। द्वितीया वेदस्येति। एतेन
१-५-४
पूर्वमीमांसासूत्राण्यपि प्रणीतानि बोध्यन्ते। सनातनपदवैयर्थ्यपरिहा-
रायाहुः बृहत्त्वमेवोक्तमिति। अनीहयेति। धर्माभिव्यञ्जकचेष्टाराहित्येन। इति चेति। इति श्रुतेश्चेत्यर्थः॥ ४॥

अस्तीत्यत्र। तन्मूलपदं व्याकुर्वन्ति साधनेत्यादि। प्रमेयबलादिति। भगव-
त्प्रपत्त्वेन भगवन्नैकट्यतस्तत्स्वरूपबलादित्यर्थः। असाधनफलस-
१-५-५
म्बन्ध इति। साधनाभावेपि भगवदैक्यप्राप्तिरित्यर्थः। श्रुतिविरोध-
मिवाशङ्क्य पक्षान्तरमाहुः भगवत्सेवकमिति॥ ५॥

स वै भवानित्यत्र। कालादिनिरपेक्ष इति। इदं वेदगुह्यत्वज्ञापक-
१-५-६
मित्यर्थः॥ ६॥

त्वमित्यत्र। स्वतोपीति। भगवदवतारत्वादित्यर्थः। अपेक्षितरूपमिति।
व्यासस्य नारदे यादृशं ज्ञानं स्वखेदनिवृत्त्यर्थमपेक्षितम्, तादृग्रूपं ज्ञानं
१-५-७
नारदे वर्तत इत्यर्थः॥ ७॥

भवतेत्यत्र। सिद्धवत्कारेणाहेति। हेतुपूर्वकं तज्ज्ञानन्यूनत्वस्य कारणमाहे-
त्यर्थः। न्यूनत्वहेतुं व्याकर्तुमुपपादयन्ति अग्निहोत्रेत्यादि। तथा च
१-५-८
यथाग्निहोत्रादिबाह्यविषयकज्ञानस्य सत्त्वेपि दीपादिव्यतिरेकेण तत्फला-
भावात् सतोपि ज्ञानस्य खिलता, तथान्तःप्रकाशकव्यतिरेकेणान्तरार्थालाभात्तज्ज्ञानस्यापि सेति यशःकथनाभावो न्यूनत्वहेतुरित्यर्थः। ननु तदकथनाभावेपि ज्ञानादिभिरान्तराणामहमादीनां प्रकाशान्न तस्य न्यूनत्वहेतुतेत्यत आहुः भगवदीयेत्यादि। कुत इत्याकाङ्क्षायामाहुः ते चेत्यादि। तथा च यथा स्वल्पेन दीपेन न महागृहादिप्रकाशः, तथा स्वल्पेन ज्ञानेन तेषामिति तथेत्यर्थः। ननु यशस्तु गीतम्, अतः कथमप्रकाशः, कथं वा दर्शनस्य खिलत्वमत आहुः यद्यपीत्यादि। व्यामोहकलीलात्वेपीति। सारथ्या-



देरित्यर्थः। अत एव 'यच्चावहासार्थ' मित्याद्यर्जुनवाक्यम्। तथैवेति। व्यामोहकत्वेनेत्यर्थः। दृष्टान्तमाहुः पूर्वेत्यादि। आहेति। अनुदितप्रायपदेनाह। खिलत्वस्वरूपमाहुः अमलमित्यादिना। अमलमिति। मलमावरकं तद्रहितम्। तथा च भारते इतरशेषत्वाद्यावरकसत्त्वाद्यशसोऽमलस्याभावः खिलत्वहेतुरिति तेन तथेत्यर्थः॥ ८॥

न यदित्यत्र। प्रतिपादकानामिति। इतरशेषत्वेन यशःप्रतिपादकानाम्।
प्रमाणेत्यादि। भारतस्याम्नायार्थत्वान्नैवमिति शङ्कायामिति शेषः।
१-५-१०
विषयकैर्भोजनवदिति। वैर्भोजने तृप्तिमात्रम्, परमग्रेऽनिष्टम्, तथात्र
अन्यशेषत्वेन श्रवणे श्रवणाभिमानमात्रम्, परमग्रे न कृतार्थत्वादिकम्, किन्तु धर्मादय एवेत्यर्थः। कथमर्थविशेषाभाव इत्यत आहुः तत्रत्यमित्यादि। हरेर्यश इति। हरेर्यशो न, किन्तु तत्त्वेन प्रतिपादितम्, वाचो धेनुवदित्यर्थः। प्रकारान्तरेणापि फलाभावं व्युत्पादयन्ति वच इत्यादि। तथा च साम्नो भगवत्प्रियत्वाद्रागादीनां च मोक्षमार्गत्वात्तदभावेनापि तथेत्यर्थः। मुख्येत्यादि। भारतानां प्रतिपादकमिदमिति भारतवदिति च भारतपदव्युत्पत्त्या भगवत्प्रतिपादकत्वाभावेन भगवतः शास्त्रार्थत्वाभावाश्च मुख्यतया प्रतिपादकत्वम्, तत्प्रमेयस्य भगवत्कार्यकर्तृत्वाभावाद्भगवज्जातीयत्वाभावात्तत्सारूप्याभावादेकत्र मुख्यतया प्रतिपादितस्य प्रशंसार्थत्वाभावा'च्छत्रिणो यान्ति कुन्ताः प्रविशन्ती'तिवल्लिङ्गभूमभ्यामपि तदभावाच्च न गौण्यापि, शैत्यपावनत्वादिप्रतीत्यर्थं गङ्गापदेन तीरवन्न तत्पदैः कृतार्थताद्यर्थं भगवान् लक्ष्यत इति न लक्षणयापि। प्रकरणभेदाभावान्न तेनापि। आदिपदेन व्यञ्जनातात्पर्ये। न च 'मुनिर्विवक्षु'रितिवाक्यात्तात्पर्यं भगवतीति वाच्यम्। तत्रापि धर्मत्वेन विवक्षुरित्यर्थस्य विवक्षितत्वात्। यथा कथञ्चिदापादनेपि मोक्षधर्म इत्यादिसमाख्यया फलव्यभिचारेण च तथानिर्णयात्। तदेतदभिसन्धायाहुः न दोष इति। अकृतार्थत्वादिदोषो नेत्यर्थः। वयस इमे वायसा इति योगं रूढिं च पुरस्कृत्याहुः वृद्धा काका इति॥ १०॥

तद्वागित्यत्र। अभ्युपगमेन वेति। अवद्यत्वाभ्युपगमेनेत्यर्थः। प्रथमपक्षेऽव-
द्यत्वं कर्तृदोषात्। द्वितीये बुद्धिपूर्वकम्। तृतीये आरोपितमिति
१-५-११
ज्ञेयम्। तच्चेति। अघविप्लावने। अस्मिन् श्लोके सिद्धमर्थमाहुः भगवत्सम्बन्धिनामित्यारभ्य इतिनिरूपितमित्यन्तम्। भगवच्छब्दा इति। मुख्यतया भगवत्प्रतिपादकाः शब्दाः॥ ११॥

नैष्कर्म्यमित्यत्र। इदानीमिति। शब्दोत्तमत्वादेरर्थोत्तमत्वाद्यधीनत्वात्तन्निकर्ष-
निरूपणानन्तरमित्यर्थः। अत्र साङ्ख्यं वैदिकमिति द्वैविध्यं नैष्कर्म्य-
१-५-१२
निरञ्जनपदबोधितम्। भक्त्यनलङ्कृतस्य केवलस्य तस्योभयविधस्याशो-
भायां गमकमाहुः ज्ञानस्येत्यादि। तथा च गृहशोभया दीपस्येव ज्ञानवतो भवतो मनः-

प्रसादाभावेनाशोभया ज्ञानस्याशोभा गम्यत इत्यर्थः । अशोभा चात्रात्मप्रकाशकत्वरूपा विवक्षितफलाजनकत्वरूपा च ज्ञेया । ननु भक्त्यभावेपि भगवदवतारत्वात् व्यासस्य कथमशोभेत्यत आहुः सुवर्णेत्यादि । ननु साङ्ख्ये पञ्चविंशतितत्त्वज्ञानेन वेदे 'तमेव विदित्वे'त्यादिषु ब्रह्मज्ञानेनैव फलस्योक्तत्वात् तत एव तत्सिद्धेः कथमशोभेत्याकाङ्क्षायां तां व्युत्पादयन्ति यद्यपीति । निरूप्यैरे इति । कार्येश्वरं । तथा च तदभावादेव 'शैवान् पाशुपतान् दृष्ट्वा लोकायतिककापिलान् । विकर्मस्थान् द्विजान् शूद्रान् सवासा जलमाविशे'दिति पुराणेषु तस्याशोभेत्यर्थः । तर्हि सेश्वरे कथमशोभेत्यत आहुः सेश्वरेत्यादि । तथेत्यध्याहार्यम् । तथा सेश्वरेपि नास्तीत्यर्थः । तत्र हेतुः सगुण एवेति । तन्मते ईश्वरस्य सर्वदा सात्त्विकविग्रहाविनाभावाङ्गीकारात्तन्मतीयेश्वरस्य नाच्युतत्वमिति प्रणिधानरूपतद्भक्तेरपि नाच्युतभक्तित्वम् । अत एव तदशोभेत्यर्थः । तर्हि वैदिके कथमशोभेत्यत आहुः वैदिक इत्यादि । समन्वयाध्याये 'शब्द इति चे'दिति सूत्रे वैदिक्याः सृष्टेर्नित्यायाः सिद्धत्वात् पुरुषसूक्ते च तथासिद्धत्वाज्ज्ञानपूर्वके यज्ञादिकरणे यजमानादिरूपदेवतानां यजमानादिष्वावेशेन यज्ञस्याधिदैविकत्वम्, तदभावे यज्ञस्य लौकिकत्वात् । 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि'ति तार्तीयीकेधिकरणे ज्ञानस्वरूपोपकारार्थं सर्वापेक्षायाश्चोक्तत्वात्सर्वपदे आदिपदे च भक्तेः सङ्ग्राह्यत्वेन सा तथेति तदभावे ज्ञानाभावादेवाशोभेत्यर्थः । ननु 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण' इत्यादावुपासितरूपाया भक्तेः श्रावितत्वात् तत्सत्त्वे कथं भक्त्यभाव इत्याकाङ्क्षायां भावपदतात्पर्यमाहुः सा चेत्यादि । तथा च स्नेहरूपत्वाभावान्न सा भक्तिरित्यर्थः । अपेक्षार्थकत्वेनानुक्तसमुच्चायकत्वमभिप्रेत्याहुः किं बहुनेत्यादि । इत्याहेति । इति कैमुतिकन्यायेनाहेत्यर्थः । कुतः पुनरिति । अत्रापि शोभन इत्यनुषज्यते । विशेषणत्रयतात्पर्यमाहुः तत्रेत्यादि । नेति । अग्रे संसारजननात्तथेत्यर्थः । नास्तीति । 'यत्करोषी'त्यादिगीतावाक्ययेऽर्पण एव कर्मबन्धनमोक्षकथनात्तथेत्यर्थः । तदाहेति । तस्मात्तदभावेऽशोभामाहेत्यर्थः । भवतीति । फलसाधकं भवतीत्यर्थः ॥ १२ ॥

अतो महाभागेत्यत्र । इत्याहेति । इतीदमनेन सन्दर्भेणाहेत्यर्थः । तादृशा इति । सर्वमोचकाः । अप्रसिद्धत्वादिति । चरित्रयाथात्म्यज्ञापनहेतो-
१-५-१३ स्तथात्वात् । ननु समाधौ भगवत्स्फुरणे व्यामोहकमपि स्फुरिष्यतीति चेत्, तत्राहुः तस्यापीत्यादि । तथा च तस्य तथात्वे ज्ञाते तदपि भक्तिमेव जनयिष्यतीतिभावः । एवं पूर्वोक्तखेदनिवृत्त्यर्थः भगवद्गुणस्मरणं साधनमुपदिष्टम् ॥ १३ ॥

ततोऽन्यथेत्यत्र । विपरीते बाधकमाहेति । अधिकारसार्थक्यनिष्पादकं भगवच्चेष्टितोपदेशरूपं साधनान्तरमुपदेष्टुं चरित्रातिरिक्तकथने बाधकमाहे-
१-५-१४ त्यर्थः । बाधकमुपपादयन्ति अभिधेयेत्यादिना । नियतत्वाभावा-



दिति । बुद्धिकल्पितत्वेन स्थिरत्वाभावात् । तथा चैकैकस्य धर्मादेर्बुद्धिकल्पितत्वेनानन्त्यादेकस्यापि स्वरूपं न सम्यङ्निरूपयितुं शक्यम्, 'कर्मण्यकर्म यः पश्ये'दितिवच्च तथेत्यभिधेयापर्यवसानमतिरिक्तकथने बाधकमित्यर्थः । ननु भगवद्गुणेष्वप्यानन्त्यस्य भवद्भिरुक्तत्वादयं दोषस्तत्रापि तुल्य इति चेत्, तत्राहुः भगवत इत्यादि । तथा च बुद्धिकल्पितत्वाभावेन स्थिरत्वात्तेषां सम्यक्कथनं सम्भवत इति न तत्रायं दोष इत्यर्थः । अत इति । निरूपणीयविषयेयत्ताभावात् । दोषान्तरमाहुः किञ्चेत्यादि । दुःखात्मकत्वादिति । अतो'ऽन्यदार्त'मिति श्रुतेस्तथेत्यर्थः । एवं वैयासज्ञानस्य स्वरूपखिलत्वबोधकं दोषद्वयमुक्त्वा मूलव्याख्यानेन स्फुटीकुर्वन्ति तदाहेत्यादि । अन्यथेति । आनन्दरूपाच्चरित्रादन्यप्रकारकम् । ननु वास्तवविचारे तु न दोष इति शङ्कायां तदविचार एव दोष इत्याहुः यद्यपीत्यादि । नन्वस्त्वयं दोषः, परं तस्य कथं निवृत्तिरित्याकाङ्क्षायां किञ्चनेत्यस्य फलितार्थं वदन्तस्तन्निवृत्तिप्रकारमाहुः अनादरणीयमिति । अत्र ततोन्यथेत्युद्दिश्य किञ्चनेत्यनादरणीयत्वं विधीयत इत्यनादरणीयत्वकथनादेव वाक्यसमाप्तिरिति तद्दोषनिवृत्तिरित्यर्थः । तदनूद्येति । अन्यथाकथितमनादरणीयत्वेनानूद्य । तत्पर्यवसानाभावादिति । भगवत्पर्यवसानाभावात् । दुःस्थेति । दुःखिता । दुःस्थितपदस्यायमर्थ उक्तः । अनास्पदत्वे हेतुमाहुः किञ्चेत्यादि । पृथग्दर्शनकृतानीत्यादि । प्रवाहे पदशक्त्यादरणात्तन्नित्यत्वेऽभ्युपगते पदार्थानामनित्यत्वात्तथेत्यर्थः । स्वयंपदेनात्र बुद्धिर्ज्ञेया सर्वत्र । अन्यदित्यादि । तथा चान्यस्य कल्पितत्वेनाभिन्नत्वाद्बुद्धेरास्पदालाभ इत्यर्थः । एवं दृष्टिसृष्टिवाद इवापद्यत इत्यर्थान्तरमाहुः दुःस्थितेत्यादि ॥ १४ ॥

जुगुप्सितमित्यत्र । भद्रा इति । 'तत्रैवं शक्यते वक्तुं येन्धपङ्ग्वादयो नराः । गृहस्थत्वं न शक्ष्यन्ति कर्तुं तेषामयं विधिः । नैष्ठिकब्रह्मचर्यं वा परि-
१-५-१५ व्राजकताथवा । तैरवश्यं ग्रहीतव्या तेनादावेतदुच्यते' इति मतान्तरोपन्यासे आहुरित्यर्थः ॥ १५ ॥

विचक्षण इत्यत्र । इत्याहेति । इतिशङ्कायां तृतीयस्य प्रयोजनमाहेत्यर्थः । निवृत्तिमार्गं इति । निष्कामं कर्म कार्यमिति मार्गे । ब्रह्मसुखं चेति ।
१-५-१६ ज्ञानमार्ग इत्यर्थः । निवृत्तिमार्ग इत्यनेनैव विधान्तरस्यापि सङ्ग्रहान्न तस्य पृथगुक्तिः । प्रयत्न इति । कर्तव्य इति शेषः । अस्त्विति । 'न निर्विण्णो नातिसक्त' इति पृथगुक्तत्वादस्त्वित्यर्थः । निवृत्तितः सुखमित्यस्यार्थः 'सर्वेहोपरतिस्तनुः सुख'मिति । 'सुखमित्यात्मनो रूपं सर्वेहोपरतिस्तनु'रिति सप्तमस्कन्धे वाक्यात् सर्वेहोपरतिस्तनुःस्थापिका यस्येत्यर्थः । निवृत्तित इति सार्वविभक्तिकस्तसिः प्रथमार्थे । तथा च सर्वेहोपरतिर्निष्क्रियत्वं तनुराकारो यस्य तादृशं सुखमित्यर्थः । वाक्यसिद्धत्वादेवं

शब्द उक्तः । तावतापीति । तादृशसुखज्ञानेपीत्यर्थः । विभोरिति । विष्णुः प्रभुः स्वतन्त्रः, तथा च ज्ञातेपि सुखे तद्दित्सायां तत्प्राप्त्यभावान्न कार्यसिद्धिरित्यर्थः । उत्तरार्धं व्याचक्षते अनात्मन इत्यादि । पूर्वेणेति । पूर्वार्धे उक्तेन सुखपदेन । अध्याहारदोषाभावाय योजनान्तरमाहुः अथवेत्यादि । अनात्मनो गुणैः प्रवर्तमानस्य निवृत्तितस्तत्सङ्गाभावेनानन्तपारस्य विभोः सुखं वेदितुं को विचक्षणोऽर्हतीति, न तु तेषामनात्मगुणानां तथा करणे समर्थः, ततस्तदर्थं भवान् दीप्तिमान् त्वं विभोश्चेष्टितं दर्शयेति योजना । अस्मिन् पक्षे दूरान्वयदोषात् पक्षान्तरमाहुः यद्वेति । तथा चात्मनो निवृत्तिः सुखं पूर्वोक्तो वेदितुं योग्यः, न त्वेतादृशः । ततो हेतोः प्रवर्तमानस्यार्थे दर्शयेरर्थः । एवमपि तादर्थ्यस्य सम्बन्धत्वेन विवक्षायां षष्ठीति क्लेशात् पक्षान्तरमाहुः तत्सम्बन्धी वेति । विधिनिरूपित इति । एतेनास्मिन्नपि सिद्धान्ते धर्मत्वमिति प्रतिभाति ॥ १६ ॥

त्यक्त्वेत्यत्र । तथा सतीति । सर्वाधिकारवत्त्वेन जघन्यत्वे सति । जन्मान्तरे-
त्यादि । अस्मिन् वाक्ये भक्त्युद्भवस्योक्तरीत्यां पापक्षये उक्तत्वात् लौकि-
१-५-१७ कधर्मिणोश्च पापक्षयाभावादर्थबलेन कर्मकर्तुरधिकारलाभ इति विरो-
धात्तथेत्यर्थः । एवं लब्धेप्यधिकारे तुल्यबल(त्व) वणाशक्तिरिति तत्परिहारायाहुः यथेत्यादि । अत्रापीति । विहितभक्तिमार्गेपि । नन्वेवं सत्यारम्भदशायामुच्छृङ्खलतैवापततीत्यत आहुः बाधकानामित्यादि । बाधकानि काम्यानि, चिरकालासाध्यानि तीर्थसत्रादीनि ज्ञेयानि । तथा चेति । 'तावत्कर्माणी'ति वाक्ये कर्मकरणस्योत्तरावधेरुक्तत्वात् तद्विचारेणेत्यर्थः । ननु दासत्वाद्युक्तिः श्रुतावंशत्वसमर्थनार्था, न तु सेवकत्वार्था, ब्रह्मसूत्रे तथा निर्णयादित्यत आहुः अंशत्वेपीत्यादि । एतदिति । अंशत्वम् । अन्तरङ्गमिति । भजनं सगुणोपासनारूपत्वाद्धर्मान्तरापेक्षयोत्कृष्टमित्यर्थः । भजन्नपक्क इति दूषयन्ति जीवस्येत्यादि । सायुज्यसाधनत्वादिति । 'भगवान् भजतां मुकुन्दो मुक्तिं ददाति' इत्यादिवाक्यैस्तथेत्यर्थः । पाताभावेप्यपक्वता तु वर्तेत इति शङ्कां निराकुर्वन्ति अयमेवेति । भजनधर्म एव सायुज्यसाधनत्वरूपोर्थो वा । परमोपाधित्वादिति । परं सगुणं ब्रह्म मीयतेऽनेनेति परमस्तादृशोपाधित्वादित्यर्थः । स्वशब्देनेति । अभजतां ततः फलाभावं ज्ञापयितुं लौकिकवैदिकधर्मस्य स्वधर्मत्वं स्वशब्देनोच्यत इत्यर्थः । तत्साध्यस्यार्थस्यानर्थत्वं बोधयन्ति अभजतामित्यादिना । देहाद्यधिकारेण प्रोक्तस्यापि धर्मस्य प्रमाणसिद्धत्वात्तत्त्यागे दोषोपि सम्भाव्यते इत्याशङ्कायां तयोरधिकारिभेदेन दोषाभावमाहुः विधर्म इत्यादि । तथा चान्तर्मुखत्वेनाधिकारभेदात्तैस्त्याज्य एवेत्यर्थः । इदं सप्तमस्कन्धे नारदवाक्यम् । एतेषां स्वरूपमपि तत्रैवोक्तं 'धर्मबाधो विधर्मः स्यात् परधर्मोन्यचोदितः । उपधर्मस्तु पाषण्डो दम्भो वा शब्दभिच्छलः । यस्त्विच्छया कृतः पुंभिराभासो ह्याश्रमात् पृथ'गिति । श्रीधरीये विवृतश्च । 'धर्मबुद्ध्या यस्मिन् क्रियमाणे



स्वधर्मबाधः स विधर्मः । अन्यस्य चोदितोन्यस्य परधर्मः । उपमा उपधर्मः । शब्दभिच्छब्दभेदोन्यथाव्याख्यानम् । यथा 'दशावरान भोजये'दित्यत्र दशभ्योऽवरानिति । शब्दभृदिति पाठे शब्दमात्रं बिभर्ति, यथा 'गां दद्या'दित्युक्तेर्मरिष्यन्त्या गोर्दानमिति । ननु भजने यदि पाताभावः, तदाशङ्कानुत्थानादनुवाद एव बाधित इति वैतण्डिकशङ्कायां तत्तात्पर्यमाहुः अथेत्यादि । तथा चोक्तन्यायेन तत्कथनमिति न शङ्कालेश इत्यर्थः । सिद्धमाहुः तस्मादित्यादि । अधिकारभेदान्न केनापि प्रमाणेन विरोध इत्यर्थः ॥१७॥

तस्यैवेति श्लोकमवतारयन्ति किञ्चेत्यादि । साधनमुक्त्वा इति । साधनस्व-
रूपद्वारा । तत्रेति । प्रमेयबलविचारे । तत्र विचारयत्विति । फेन-
१-५-१८ बुद्बुदरूपत्वे विचारयतु । अक्षरपर्यन्तमिति । अक्षरप्राप्तिपर्यन्तम् ।
अक्षरावधीति वा । विधिरिति । प्रयतेतेत्युक्तो यत्नविधिः । तद्धि वैधमिति । तथा च फलस्यापूर्वत्वेन तत्साधनत्वस्याप्राप्तत्वात्तत्साधनत्वं वैधमित्यर्थः । पूर्वग्रन्थानुरोधेन धात्वर्थं सङ्कोच्य वैधस्वरूपमाहुः यत्न इत्यादि । 'तं भजे'दित्यादिश्रुत्यनुवादत्वनिरासायाहुः धर्मेत्यादि । भक्तिसेवेति । भक्त्यर्थं सेवा । निरुपधिप्रेम्णा सेवा वा । ननु भगवत्प्रीतिहेतुना कर्मणा भक्तिजनकादृष्टाङ्गीकारे किं बाधकमित्यत आहुः फलेत्यादि । अकामिनस्याप्यदृष्टस्य जन्मान्तरे फलसमर्पणार्थमङ्गीकारः । प्रकृते तु भगवत्यर्पितं कर्म भगवत्प्रीतिहेतुः । 'तत्कुरुष्व मदर्पणम्' 'शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः' 'एतान्यपि तु कर्माणी'त्यादिषु तादृशस्य भगवतोक्तत्वात्तथाकृतेन भगवानेव प्रीयते, आज्ञाकरणात्, सा च तेनाविर्भूता नित्या, न तु जन्या, भगवद्धर्मत्वात् । अत एव चानश्वरा । एवं सति जन्मान्तरे तथैव फलसिद्धावदृष्टोपगमोऽप्रामाणिकत्वाद्गौरवप्रासाच्च फलविपर्ययरूपोऽसङ्गत इत्यर्थः । अफलत्वेनेत्यादि । भक्तेस्तत्फलत्वाभावेन भक्त्यर्थमदृष्टजननं न सम्भवतीत्यर्थः । नान्तिमत्वसाधकमिति । अदृष्टमिति शेषः । ननु भक्तेः कालाद्यजन्यत्वं चेत्स्यात्, तदा ज्योतिर्ग्रन्थे जातके देवपूजारतिर्वैकुण्ठादागतिः पुनर्वैकुण्ठगतिश्च शुभग्रहफलतया न ज्ञायेतेत्यत आहुः जातकेपीत्यादि । तस्मादिति । कालादृष्टाजन्यत्वात् । उत्तरार्धं व्याचक्षते न चेत्यादि । ननु सुखार्थं पित्रादयोनुकूलयितव्या इति कथं भक्त्यर्थमेव यत्नः सिध्यतीत्यत आहुः तेषामित्यादि । तथा च कालप्रातिकूल्ये क्रियायां न सिद्धिरित्यर्थः । तर्हि काल एवानुकूलयितव्य इति चेत्, तत्राहुः स चेत्यादि । ननु सुखार्थं देशापेक्षासत्त्वान्न केवलं कालेन सुखसिद्धिरिति तत्सम्पादनाय तु यतनीयमेवेति कथमेकान्ततो भजनयत्नसिद्धिरित्यत आहुः न चेत्यादि । तथा चाकालानानुकूल्ये तदर्थोपि यत्नो व्यर्थ

१ प्रवीयत इति पाठः । २ कालादृष्टजन्यत्वादिति पाठः । ३ क्रियायां ।

इत्यर्थः । ननु कालोपि न स्वतन्त्रः, देशं विना फलानुत्पादकत्वादित्याशङ्कायामाहुः तुल्यस्त्वे इत्यादि । तथा चैवमपि कालापेक्षानपायाद्व्यर्थ एव यत्न इत्यर्थः । ननु मास्तु सुखार्थो यत्नः, दुःखाभावाय तु प्रतिविधातव्यमित्यत आहुः प्रतीत्यादि ॥ १८ ॥

न वै इत्यत्र । तर्कमिति । बाधकनिवर्तकं तर्कम् । तं व्याख्यातुं बाधकं विशद-
यन्ति नन्वित्यादि । पराधीनत्वेनेति । कालाद्यधीत्वेनन । अङ्गी-
१-५-१५ कृत्यापीति । 'तुष्यतु दुर्जन' इतिन्यायेनेत्यर्थः। ननु यद्येवं तर्हि तुष्यतु दुर्जनन्यायकस्यापि परिहारस्य किं प्रयोजनमत आहुः साधारणेत्यादि । यथा भरतादिरिति । साधारणभक्तः । स यथा जन्म प्राप्तवान्, तद्दृष्टान्तेन पातः शंक्येतेति तादृशस्थलेपि तदभावाय परिहार इत्यर्थः । सत्यवादी ब्राह्मण इति । उद्योगपर्वणि कौशिकः कश्चित्सत्यवादी चौरैः पृष्टः सार्थं कचिन्निलीनं तेभ्य आचख्यौ, ततस्ते सर्वे चौरैर्लुण्ठिता मारिताश्च, ततस्तेन सत्यवादेन स नरके पपातेति भगवतार्जुनं प्रत्युक्तम्, स यथा सत्येन तथाभूत्, एवं भगवत्सेवकोपि भगवदपराधाद्भगवता तथा भविष्यति, भरतवत् । तथा च यदि भक्तिरेकान्ततः फलसाधिका स्यात्, भरतो न पतेत्, यतो नैवमतो नैवमिति बाधकतर्कमङ्गीकृत्यापीत्यर्थो भवति । परिहारतर्कस्तु, मुकुन्दसेवी यदि संसृतिमाव्रजेत्, अन्यसेवकवदाव्रजेत्, यदि तथा स्यात्, तदा संसृतिं विहातुं नेच्छेत्, इतरसेवकवत् । यतः संसृतिं विहातुमिच्छति, तस्मादितरवन्न संसृतिं व्रजति, यतस्तथा न व्रजति, ततो भक्तिरेकान्ततः फलसाधिकेति । इच्छामपीति। मात्रादीच्छाम् ॥१९॥

इदं हीत्यत्र । दुर्लभत्व इति । भ्रमतां कालादिभिरलभ्यत्वे । भूयस्त्वकथनं
चेति । चोप्यर्थे । इति शास्त्रार्थत्वायेति । इति श्रुतेर्भगवतः शास्त्रा-
१-५-२० र्थरूपत्वायेत्यर्थः। निरूपणीयमिति । सुलभत्वाय भूयस्त्वकथनोपपत्तये च निरूपणीयम् । कार्यमिति । भगवत्समर्पणं कार्यम् । उत्तम इति । उत्तमाधिकारिविषये । प्रकारत्रयेण निरूपणीयमिति । निरूपणीयोऽर्थः प्रकारत्रयेण निरूप्यत इत्यर्थः । तर्हीति । स्वस्य सर्वस्य च भगवत्त्वे ॥ २० ॥

त्वमात्मनात्मानमित्यत्र । साफल्यं चेति । कुर्विति शेषः । साधनमिति ।
ज्ञानसाधनम् । तथेति । कलात्वम् । तत्रेति । कलात्वज्ञाने । तथा च
१-५-२१ यथा धर्मादयोऽर्थाः स्वतः स्फुरिताः, तथेदमपि स्फुरिष्यतीत्यर्थः । अवतीर्ण इति । अत्र व्यापिवैकुण्ठादत्रागमनरूपोऽवतारपदार्थो ज्ञातव्यः । तत्पदस्यार्थः अत इति । शिवपदस्यार्थः शान्तसुखायेति । तन्महानुभावेनिममस्तमभिमेत्याहुः अस्येत्यादि । अवाङ्मनोगोचरत्वादित्यत्र वाक्सहितं मन इत्येवं समासो बोध्यः॥२१॥

इदं हि पुंस इत्यत्र । तानीति । स्वरूपसाधनफलानि । उक्तत्रिरूपतां विवृण्वन्ति



एवं सर्वैरित्यादिना । अर्थशब्दस्य वस्तुनि प्रयोजने च रूढत्वात्तृतीय-
१-५-२२ यार्थे बहुव्रीहौ गृहीतेमेतिवद्वर्णविकृतावविच्युतोर्थ इति पदं साधनमपि बोधयतीति त्रितयलाभ इत्यर्थः । अविच्युतार्थ इति वा मूलपाठोभिमेत इति न कोपि शङ्कालेशः । निषिद्धमिति । ' कः क्षेमो निजपरयोः' 'कर्षयन्तः शरीरस्थं भूतग्राम'मित्यादिषु यन्निन्दितं तदित्यर्थः ॥ २२ ॥

अहं पुरेत्यत्र । उक्तविश्वासाय सम्वादात् । मननेन ज्ञातस्य मज्जन्मनो
वाक्येन सम्वादादुक्तविश्वासायेत्यर्थः। तदानीमिति । तस्मिन् जन्मनि
१-५-२३ वा । परमहंससेवातः प्राग्वा । म सम्भवतीति । शूद्रस्योच्छिष्टदाननिषेधात् । आश्रमिणामित्यादि । 'वर्षासु ध्रुवशीलोष्टमास्स्वेकाकी यतिश्चरे'दित्यारुणीश्रुतेः । 'चतुरो मासान् वार्षिकान् ग्रामे नगरेपि वा वसे'दितिकठश्रुतेश्चेत्यर्थः ॥ २३ ॥

ते मयीत्यत्र । साधनकथनमिति । गुणगानरूपसाधनकथनम् । तदाहेति । तस्य
स्वत एव निवृत्तिमाहेत्यर्थः । बाधकज्ञानस्येति । तुल्यदर्शनरूपस्य ।
८-५-२४ सेव्यवश्यत्वमिति । फलमिति शेषः। अनपेक्षाया इति । न विद्यते अपेक्षा यस्याः सानपेक्षा, तुल्यदर्शनत्वेनापेक्षितायाः सेवाया इत्यर्थः । द्वितीयमिति । निर्दुष्टानुवृत्तिः प्रथमं साधनम्, तदपेक्षयेदं द्वितीयमित्यर्थः ॥ २४ ॥

उच्छिष्टलेपेत्यत्र । अयं धर्म इति । शूद्रायामत्र्यैदानादिरूपः[1] । तत्रापि
साधारणेष्विति । शूद्रेपि सेवकव्यतिरिक्तेषु । 'न शूद्राये'ति वाक्यस्य
१-५-२५ स्नातकप्रकरणस्थत्वेन शूद्रस्य चाविशिष्टत्वेन तथेत्यर्थः । मार्गभेदेनाप्यदोषमाहुः सेवा चेत्यादि । अस्य न्यायेत्यादि । 'यस्य येन गुणः, तस्य तत्र रुचि'रिति लोकन्यायसिद्धत्वकथनाय स्मेत्यनुषज्य प्रजायत इति लट्प्रयोगः कृतः । अन्यथा व्यजायतेत्येव प्रयुञ्ज्यादित्यर्थः ॥ २५ ॥

तत्रान्वहमित्यत्र । ख्यापयितुमिति । अन्वहमित्यस्य प्रगायतामित्यनेन सम्बन्ध
इति शेषः । तद्भावेनेति । भगवति प्रेम्णेत्यर्थः । तस्या इत्यादि ।
१-५-२६ तया श्रवणभक्त्या नारदत्वं सम्पादितमिति सान्यस्याप्येतावत्त्वसम्पादिकेत्यर्थः । श्रवणफलमिति । श्रवणस्य प्राथमिकं फलम् । अत इति । उत्तरारम्भाभावे पूर्वविच्छेदस्याप्रयोजकत्वात् । अनुपदमिति । पदं लक्षीकृत्येत्यर्थः । हिर्हेतौ ॥ २६ ॥

तस्मिन्नित्यत्र । नियमार्थमिति । कार्यकारणभावाव्यभिचारार्थम् । तत्त्वमा-
वश्यकमिति । तद्रूपतावश्यभाविनीत्यर्थः । पूर्वोक्तयेति । ' स एवेदं
१-५-२७ ससर्जे'त्यत्रोक्तया । अस्येत्यारभ्य यावदित्यन्तेन 'इदं हि विश्वमि'ति

१ मत्यदानादिरूपः ।

श्लोकोक्तत्रेधानिरूपणमध्ये 'इतरो भगवा'निति प्रथमाधिकारकज्ञानस्यात्र स्वस्मिन् प्रथमं भवनं विवृतम् ॥ २७ ॥

इत्थमित्यत्र । मासचतुष्टयमित्यनुक्त्वा 'शरत्प्रावृषिकावृतू' इत्युक्त्या सूचितमर्था-
न्तरमाहुः पञ्चकं वेति। वैद्यके 'प्रावृण्मिथुनकर्कटौ' 'सिंहकन्ये स्मृता
१-५-२८ वर्षास्तुलावृश्चिककौ शर' दितिकथनात् शरदो वृश्चिकान्तत्वेन पञ्चर्तुपक्षे
प्रावृषश्चतुर्मासात्मकत्वेन षण्मासप्राप्तावपि आषाढीमारभ्यैव संन्यासिनः स्थितेरुक्तत्वात् गते
मिथुने मासपञ्चकमेव ऋतुद्वयं भवतीति तथेत्यर्थः । ज्ञानस्साधनमिति । तेषामित्यर्थात् २८

१-५-२९ तस्यैवमित्यत्र । पृथगुक्तिरिति । बालपदेन पृथक्कथनम् ॥ २९ ॥

ज्ञानं गुह्यतममिति श्लोकं व्याकुर्वन्ति अस्ति किञ्चिदित्यादिना । वत्सं
लातीत्यादि । अत्र स्नेहपक्षे दीनेषु वत्सलो येषामिति व्यधिकरण-
१-५-३० पदो बहुव्रीहिः ॥ ३० ॥

येनैवेत्यत्र । अहो इति पाठान्तरं ज्ञेयम् । ननु प्रकाशमानस्य कथमस्फूर्तिरित्यत
आहुः लेखनदशानुसन्धेयेति । यथा हृदि विद्यमानानां प्रकाशमाना-
१-५-३१ नामपि वाक्यानां लेखनवेलायां न स्फूर्तिः, तथात्रेति बोध्यमित्यर्थः
भगवदुक्तज्ञानस्य फलं वदन्तो येनेतिपदस्यार्थमाहुः क्रमेत्यादि । तथा च मायानुभाव-
ज्ञानक्रममात्रेण, न तु तद्व्यापारीकृत्येत्यर्थः ॥ ३१ ॥

एतदित्यत्र । एतैरुपद्रुत इति। 'तस्मिन् महन्मुखरिता मधुभिच्चरित्रपीयूषशेष-
सरितः परितः स्रवन्ति । ता ये पिबन्त्यवितृषो नृप गाढकर्णैस्तान्न स्पृश-
१-५-३२ न्त्यशनतृड्भयशोकमोहाः' 'एतैरुपद्रुतो नित्यं जीवलोकः स्वभावजैः ।
न करोति हरेर्नूनं कथामृतनिधौ रतिम्' इति वचनादित्यर्थः । योजितमिति । 'यत्करोषि
यदश्नासी'त्युक्तया रीत्या भगवत्यर्पितम् । तत्र 'शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसी'तिकथनात् । भावनया प्रापितमिति ।
यथोक्तं राजधर्मे व्यासेन । 'यथा हि पुरुषो वृक्षं छिन्द्यात्परशुना वने । कर्तुरेव भवत्येवं
परशोर्न कथञ्चन । न चैतदिष्टं कौन्तेय यदन्येन कृतं फलम् । प्राप्नुयाद्यदि तस्माद्वापीश्वरे
तन्निवेशये'ति । प्राप्नुयादिति । अन्यः प्राप्नुयात् । तथा च ईश्वरः कारयतीति भावनया
ईश्वरे प्रापितमित्यर्थः । अत एवं प्रकारद्वयेन भगवत्सम्बद्धं कर्मैव तापत्रयचिकित्सितरू-
पमिति तात्पर्यम् ॥ ३२ ॥

आमय इत्यत्र । तच्चैवेति । भगवति भावनीये कर्मण्येव । योगा इति । क्रिया-
योगाः । दध्यादिवदिति । यथा 'दध्ना जुहोति' 'दध्नेन्द्रियकामस्य
१-५-३३ जुहुयात्' 'खादिरे बध्नाति' 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इत्यादि-



विहितदध्यादिवदित्यर्थः । सर्वापेक्षा चेति । अयं न्याय उत्तरतंत्रे तृतीयस्य तुरीयपा-
देऽस्ति। तत्रहि पूर्वं 'पुरुषार्थोऽतः शब्दा'दित्यादिभिर्ज्ञानस्य फलसाधने कर्मापेक्षा नास्तीति
साधयित्वा, अथेदानीं चिन्त्यते, ज्ञानस्वरूपोपकारित्वं कर्मणोऽस्ति, न वेति । तत्र
'आचार्यवान् पुरुषो वेदे'ति श्रुतेर्गुरूपसत्तितदुपदेशादिभिरेव तत्सम्भवान्न तदपेक्षेति पूर्वः
पक्षः । सिद्धान्तस्तु, सर्वापेक्षा सर्वेषां कर्मज्ञानभक्तीनामस्ति पुरुषोत्तमज्ञानोत्पत्तौ अपेक्षा,
कुतः, यज्ञादिश्रुतेः, वेदः सर्वोऽपि पुरुषार्थपर्यवसायी, पुरुषार्थश्च भगवत्प्राप्तिरेव, नान्यत्,
सा चेज्ज्ञानादेव, तदा यज्ञादीनां निरूपणमनर्थकं स्यात्, अतस्तत्परिहाराय मन्तव्ये
कर्मणां पुरुषार्थसाधकत्वे ज्ञानस्वरूपोपकारकत्वेन तथात्वं मन्तव्यम् । तदपि निष्काम-
कर्मकर्तृत्वे। वाजसनेयिशाखायां 'यथाकारी यथाचारी तथा भवती'त्यादिना सकामस्य
कर्तुः पुनरावृत्तिमुक्त्वा, 'अथाकामयमानो योऽकाम' इत्यादिना 'ब्रह्मैव सन् ब्रह्माप्येती'-
त्यन्तेन पूर्वोक्तकर्मकर्तुरेवाकामत्वे तत्फलकथनात् । 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते'
इति स्मृतेश्च । तत्र दृष्टान्तः । अश्ववदिति । स्वेष्टफलसाधकदेशव्यवधानात्मकदेशातिक्रम
एवाश्वस्य यथा साधनत्वम्, न तु तत्फलसिद्धावपि, तथाधिकारित्रिविधप्रतिबन्धनि-
वृत्तावेव कर्मणां साधनत्वमुपकारकत्वम्, न तु भगवत्प्राप्तिरूपे ज्ञानफलेऽपीति । सूचितं
इति । व्यासस्य स्वोक्तिस्मारणाय सूचितः । तथा च पूर्वतन्त्रापेक्षयोत्तरतन्त्रस्य प्रबल-
त्वात्संयोगपृथक्त्वन्यायबाधेन ततो न पुनः संसार इत्यर्थः ॥ ३५ ॥

१-५-३७ नमो भगवन इत्यत्र । तस्य फलमिति । ध्यानस्य फलम् ॥ ३७ ॥

इति श्रीप्रथमस्कन्धसुबोधिनीप्रकाशे पञ्चमाध्यायविवरणम् ॥ ५ ॥

---

## अथ षष्ठाध्यायविवरणम् ।

अथ षष्ठाध्यायं विवरिषवः सङ्गतिं वक्तुं द्वयोरर्थमाहुः मध्यमेनेत्यादि । तस्यै-
वेति । श्रवणस्यैव । वर्ण्यत इति । फलमित्यनुषज्यते । बाल्याभाव इति । कीर्तनाभावे ।
इति निरूप्यत इति । इतो हेतोर्व्यासपादैरुपनिबध्यते । तथा च फलोपोद्घातः सङ्गति-
रित्यर्थः । श्रोतव्यविषयनिरूपकस्येति । श्रोतव्यो यो विषय ऐश्वर्यदानरूपस्तन्नि-
रूपयितुर्नारदस्येत्यर्थः । भवतीति । श्रोतुर्भवतीत्यर्थः ॥

एवं निशम्येत्यत्र । तूष्णीम्भावे हेतुमाहुः आदरेत्यादि । तथा च मदुक्तौ व्या-
१-६-१ सस्यादरोऽस्ति न वेति ज्ञातुं नारदस्य तूष्णींभाव इत्यर्थः ॥ १ ॥
१-६-२ भिक्षुभिरित्यत्र । तदेति । कालेन संस्कारनाशे ॥ २ ॥

उत्तरग्रन्थे भिक्षुभिरित्यत्र । प्रथमप्रश्न इति । कृतिप्रश्ने । एतेषां त्रयोविंशति-

श्लोकानां तात्पर्यमाहुः ब्रह्मविद इत्यादि । 'एकात्मजे'त्यादिश्लोकचतुष्टयोक्तितात्पर्यमाहुः भगवानित्यादि । अग्रिमावस्था भगवत्साक्षात्कारार्थकयत्नकरणावस्था । आनुगुण्यसन्देहे यत्कार्यं तदाहुः अन्यासक्तिरित्यादि । तादृशमिति । आनुगुण्यजनकम् ॥५॥

एकात्मजेत्यत्र । आत्मन इति । ममेत्यर्थः । तत्रेति । मातृकर्तव्यपदार्थमध्ये ।
१-६-६ योग इति । अलब्धस्य सम्पादनम् ॥ ६ ॥

एकदेत्यत्र । भगवानिति । दूरीकृतवानित्यनेन सम्बध्यते । स्थापित इति ।
१-६-९ य इति शेषः ॥ ९ ॥

तदा तदहमित्यत्र । ईशस्य भक्तानामिति समभिव्याहारसूचितमर्थमाहुः
१-६-१० भक्तानामित्यादि । भक्तानामेव कल्याणमभीप्सन्निष्ट इत्यर्थः ॥१०॥
१-६-१२ चित्रधात्वित्यत्र । देवखाता इति । पुष्करिणीरितिशेषः ॥ १२ ॥

परिश्रान्तेत्यत्र । परिश्रमे हेतुमाहुः बहिर्मुखत्वे जात इति । भगवदनुसन्धान-
१-६-१४ विच्युतौ जातायामित्यर्थः ॥ १४ ॥
१-६-१५ तस्मिन्नितिश्लोकं व्याकुर्वन्ति । एवं सावधान इत्यादि ॥ १५ ॥

ध्यायत इति श्लोकं व्याचक्षते तस्मिन्नित्यादि । रूपमिति श्लोकं व्याचक्षते ।
१-६-१६ ततो भगवदित्यादि । भर्तृन्वेनेति । कान्तपदस्यार्थः ॥ १६ ॥
१-६-२१ हन्तेत्यत्र । अन्यथेति । देशानुक्तौ ॥ २१ ॥

मतिर्मयीत्यत्र । अनेनेति । भगवदनुग्रहजन्येन पूर्वजन्मादिस्मरणेन । तत्रेति ।
१-६-२४ भगवद्वाक्ये ॥ २४ ॥

एतावदित्यत्र । जातमिति । भूतपदस्यार्थः । तथाकथन इति । अदृश्येन रूपेण कथने । आत्मातिरिक्तरूपस्याप्यनुमानगम्यत्वं नास्तीत्याहुः अतिरि-
१-६-२५ क्तेत्यादि । सर्वत्रेति । अस्मदादिकृतेषु साधनेषु । उक्तमिति । नम-
नमुक्तम् ॥ २५ ॥

नामानीत्यत्र । अविद्यारूपा इति । योगदर्शने 'विपर्ययो मिथ्याज्ञानमतद्रूपप्रति-
१-६-२६ ष्ठ'मिति विपर्ययं लक्षयित्वा 'अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशा' इति विपर्ययस्य भेदा उक्ताः । तेषामेव भाष्ये व्यासपादैः 'तमो मोहो महामोहस्तामिस्रोन्धतामिस्र' इति पर्वत्वेन व्याख्यातत्वात्तत्पर्वरूपा इत्यर्थः । तत्र च्येति । कर्मादिषु च । पृथगिति । 'निर्विण्णानां ज्ञानयोगः कर्मयोगस्तु कामिनाम् । न निर्विण्णो नातिसक्तो भक्तियोगोस्य सिद्धिद' इत्येकादशे वाक्यादित्यर्थः । यदिति । अनुकल्परूपम् । श्रुतिसिद्धत्वादिति । मण्डलब्राह्मणे 'तमेतमग्निरित्युपासतेऽध्वर्यव' इत्युपक्रम्य, यजुःसामादिरूपाण्युक्त्वा, 'तस्मादेवंवित्सर्वैरेवैतैरुपासीते'ति श्रावणादि-



त्यर्थः । न सर्वैरित्यादि । 'तद्धैतान् भूत्वावती'तिश्रुतावुपास्यरूपेणैव रक्षोक्तेः सर्वरूपानुपासने तद्रूपेणाभवनात् सर्वत्र त्रिविधरागनिवृत्तिः प्रतिबन्धान्तरनिवृत्तिश्च न स्यादित्यर्थः । दूषणान्तरमाहुः श्रोतुरित्यादि । सर्वत्रायं ब्रह्म न जानातीति श्रोतुर्बुद्धिः स्यात्, सर्वत्राज्ञानेऽस्यै श्रुतिविरुद्धत्वात्पाषण्डताशङ्का स्वस्यापि स्यादित्यर्थः । तत्रेति । नाम्नामानन्त्ये । तानिति । लोकान् । नामोच्चारण एवेति । नतु वस्त्रादित्यागेपीत्यर्थः । स्वस्याबाधकानीति । चित्ताविक्षेपकानि । कृतपदं करिष्यमाणानामप्युपलक्षकमित्याशयेनाहुः अथवेत्यादि । एकमित्यादि । चरित्रस्मरणरूपमङ्गं नामोच्चारणसाधनत्वेनोक्तवेत्यर्थः । लौकिकालौकिकानीति । सन्माननानाश्चर्यावलोकनादीनि पुण्यदेशानुभवाज्ञादीनि चेत्यर्थः । तदाहेति । गतस्पृहपदेनाहेत्यर्थः । अपरिच्छिन्नानीति । देशकालकृतनियमरहितानि । अत एव यावज्जीवाधिकारकस्यानिर्वाहादेव । द्वितीयाध्याये जैमिनिसूत्रीये कर्मभेदः नित्यकाम्याग्निहोत्रादेः प्रयोगभेदः । परिच्छेदकदेशकालसम्बन्धे 'प्रयागे वपनं कुर्यात्' 'तुलामकरमेषेषु प्रातः स्नायी भवेन्नर' इत्यादिवाक्योक्तदेशकालसम्बन्धे, किं कुर्यात्, परिच्छिन्नापरिच्छिन्नयोर्वपनादिपर्यटनयोर्मध्ये कतरत्कुर्यादित्यर्थः । तत इत्यादि । तथाच कृतिसाध्यत्वासाध्यत्वविचारो हि शरीररक्षाविचारमूलकस्तस्याविचार्यत्वेन तदप्यविचार्य पर्यटेदेवेत्यर्थः॥ २६ ॥

एवं कृष्णमतेरित्यत्र । भोगसमाप्ताविति । चरमक्षणे । शापसमाप्ताविति ।
१-६-२७ ब्रह्मवैवर्ते ब्रह्मणा नारदं प्रति 'गृहस्थाश्रमं कुरु त्व' मित्याज्ञप्ते नारदो न कृतवानित्यतः शापो दत्तः, 'त्वं स्त्रीकामो दासीसुतश्च भवेति'ति कथितम्, तेनाहं पूर्वमुपबर्हणगन्धर्वो भूत्वा, ततो दास्यामुत्पन्नः, तस्य शापस्य समाप्तावित्यर्थः । केचिदिति । विजयध्वजादयः । अस्मिन् पक्षे तडित्पदं क्रियाविशेषणम् । एतस्याः शैघ्र्ये प्रसिद्ध्यभावाच्छ्रीधरोक्तपक्षान्तरमाहुः सौदामिनी वेति । सपर्वते स्फटिकमये इति तत्प्रान्तसम्भवात्तडिदतिस्फुटा भवतीति कालस्य तद्वदतिस्फुटत्वाय दृष्टान्तः । श्रीधरीयेऽन्यदपि पक्षद्वयमुक्तम् । सुदाममाला तत्र भवेति मालाकारेत्यर्थ इति । 'तडिदित्यन्तकवधयो'रिति नैरुक्तिकस्मरणात् तडिदन्तिक इत्यर्थ इति च । एतेषु सर्वेषु पक्षेष्वपुष्टार्थत्वं सौदामिनीपदे इकारदौर्लभ्यं चेतिदूषणसत्त्वात्पक्षान्तरमाहुः एकं वा पदमिति । तथा प्रसिद्ध्यभावाद्विकल्पवाचकपदोक्तिः । अत्रापि दोषमाशङ्क्य परिहरन्ति तडिदिवेत्यादि । आदिपदेन 'तडितोऽधि वरुणः सम्बन्धा'दित्यादिप्रयोगः सङ्गृह्यते ॥ २७ ॥

प्रयुज्यमान इत्यत्र । नन्वारब्धकर्मनिवृत्तौ 'गन्ता मज्जनतामसी'ति वरादेरपि निवृत्तेरग्रे शरीरं कथमभूदित्यत आहुः वरादिकमिति । तथा चार-
१-६-२८ ब्धत्वाभावान्न पूर्वं निवृत्तिः, किन्तु देहग्रहणोत्तरं तस्याप्यारब्धत्वे जाते

१ अज्ञानेन बन्धुः भवीत्यादि पाठः ।

निवृत्तिरित्यर्थः । **ब्रह्माण्डपर्यवसायीति** । ब्रह्माण्डात्मा । **तर्हीति** । ब्रह्माण्डात्मकत्वं ॥ २८ ॥

कल्पान्त इत्यत्र । **ब्रह्मापि नाभिद्वारेत्यादि** । एतदुक्तं कौर्मे 'तनावनार्य
१-६-२९ विश्वात्मा देहमाविश्य चक्रिणः । अवाप वैष्णवीं निद्रामेकीभूयाथ
विष्णुने'ति ॥ २९ ॥

**इति श्रीभागवते प्रथमस्कन्धसुबोधिनीप्रकाशे षष्ठाध्यायविवरणम् ॥ ६ ॥**

---

## अथ सप्तमाध्यायविवरणम् ।

अथ सप्तमाध्यायं विवरिषवः पूर्वप्रकरणस्य समाप्तत्वादुत्तरस्य चारप्स्यमाणत्वात्तयोः सङ्गतिं वक्तुमाहुः **एवमित्यादि** । एवं शौनकप्रश्नमुखेन त्रिभिर्नारदव्याससम्वादं **निरूप्य**, मध्यमस्याधिकारस्य स्वातन्त्र्येण निरूपणात् निरूपणं विधाय, अथैतदनन्तरमुत्त**माभिधा** उत्तमाधिकाराभिधानं त्रयोदशभिरध्यायैर्व्यासचरणैः क्रियत इति शेषः । तथा च व्यासपादोक्तावसरः प्रसङ्गो वा सूतोक्तौ तु प्रश्नोत्तरभाव एव सङ्गतिरित्यर्थः । नन्वस्य **कथमुत्तमत्वमित्याकाङ्क्षायामाहुः साधक इत्यादि** । अयं वर्ण्यमानो भगवानत्र प्रजानां दीनतया साधारणरूपाणां पतिः समन्ततो रक्षकः सन् साधकः । **अधिकारश्च स्वतन्त्रः, अत उत्तमत्वम्** । मध्यमे भगवतः साधकत्वेपि नारदस्य प्रजारूपत्वाभावान्न प्रजापतित्वेन **साधकत्वम्** । प्रथमे चाधिकारस्य न स्वातन्त्र्यम् । प्रकृते तूभयसत्त्वादुत्तमत्वमित्यर्थः । **कुत एतदवगम्यत** इत्यत आहुः **साधकोयमित्यादि** । **निरूप्यत इति** । सप्तमे सप्तमा**दिषडध्याय्यां** वा निरूप्यत इत्यर्थः । अस्तूत्तमत्वम्, परमध्यायाः किमित्यधिका इत्यत **आहुः द्वादशेत्यादि** । **निरूप्यत** इति पूर्वेण सम्बन्धः । **चोवधारणे** । अवान्तरप्रकर**णानि विभजन्ति निरूप्यते षड्भिरित्यादि** । तथेति । षड्भिरित्यर्थः । **हेतुषडध्यायीं विभजन्तः** प्रस्तुताध्यायस्यार्थमाहुः **हेतुरित्यादि** । **द्विविध इति** । सामान्यविशेषभेदेन **द्विविधः** । नन्वेवमष्टविधत्वेऽष्टाध्याया अपेक्षिता इत्यत आहुः **सप्तम इत्यादि** । एतदेव **प्रपञ्चयन्ति अत्र** हीत्यादिना । निरूप्यन्त इति । उक्तक्रमप्रातिलोम्येन निरूप्यते । सामान्यहेतुत्रयं स्फुटीकुर्वन्ति **यस्येत्यादि** । श्रीभागवतव्यासयोरपि भगवद्रूपत्वान्नोक्त**विरोधः** । भक्तमनोरथपूरणमिति । तेन प्रकारेणाश्वत्थामपोचनाद्द्रौपद्यादिमनो**रथपूरणम्** । एवञ्चात्र सामान्यहेतुत्वं भगवतो भक्तमनोरथपूरकत्वेन विशेषरूपत्वेपि देह**रक्षकत्वेन** ज्ञेयम् ।

**ब्रह्मनद्यामित्यत्र** । **पुरो हविश्चेति** । 'पुरोहविषि देवयजने याजये'दिति विधाय



'एतद्वै पुरोहविर्देवयजनं यस्य होता प्रातरनुवाकमनुब्रुवन्नग्निमप आदित्यमभि-
१-६-२ विपश्यती'ति । तल्लक्षणं तैत्तरीये षष्ठाष्टके श्रावितं तादृशमित्यर्थः । **शम्याप्रास्यतेऽस्मिन्निति** । शम्या गदाकारकाष्ठविशेषो यज्ञायुधम् । प्रास्यते प्रविध्यते बलेन प्रक्षिप्यत इति यावत् । यस्मिन् देशे स इत्यर्थः । नाम निरूप्य तत्तात्पर्यमाहुः **तदग्नेरित्यादि** । **तदुपपादयन्ति तदैवेत्यादि** । यदा तत्प्रियं धाम भवति, तदैवाग्निः गार्हपत्यादिः स्वस्थानात्कुण्डादाशम्याप्रासात् शम्या प्रवेधदेशमभिव्याप्यापक्षायति अङ्गाररूपेण बहिः पततीत्यर्थः । इदमेव कल्पकारेणोक्तम् । 'यस्याहिताग्नेरग्निरपक्षायेदाशम्याप्रासा'दिति । अत्रैव प्रकारान्तरेणाहुः **यदीत्यादि** । यदि परस्तरां शम्यापतनदेशादन्यदेशे अपक्षायेत्, अङ्गारोऽपगम्य पतेदित्यर्थः । इयं श्रुतिर्ब्राह्मणेऽच्छिद्रेऽस्ति कल्पसूत्रे च ॥ २ ॥

**भक्तियोगेनेत्यत्र** । तदाधारमिति । स्फुरितपदार्थाधारं मन इत्यर्थः । **अप-
श्यदित्यत्र** । पुरा आसेतिव्युत्पत्त्या पुरुषपदेनैव पुरुषोत्तमप्राप्तेः
१-७-४ पूर्णपदमनतिप्रयोजनमित्यरुच्या पूर्णपदस्य प्रयोजनान्तरमाहुः **जीवेत्यादि** ॥ ४ ॥

**अनर्थोपशममित्यत्र** । नन्नु मोहस्याज्ञानकार्यत्वाज्ज्ञानेनैव तन्निवृत्तिसम्भवेन
मोहनिवर्तकतया ज्ञानस्यैव दर्शनं युक्तमिति कुतो भक्तेस्तथात्वेन दर्शन-
१-७-६ मित्याकाङ्क्षायां ज्ञानस्यातथात्वं भक्तेस्तथात्वं च व्युत्पादयन्ति **ज्ञानकाशयेत्यादि** । इतीति । अतो ज्ञानस्वरूपस्य सन्दिग्धत्वादित्यर्थः । **द्विरूपत्वादिति** । 'आगमोऽपः प्रजा देशः कालः कर्म च जन्म च । ध्यानं मन्त्रोथ संस्कारो दशैते गुणहेतवः । तत्तत्सात्त्विकमेवैषां यद्यद्वृद्धाः प्रचक्षते । निन्दन्ति तामसं तत्तद्राजसं तदुपेक्षित'मिति वाक्ये वृद्धवाक्यैः सात्त्विकत्वज्ञानोक्त्या वृद्धानामपि बहुविधत्वेन तथात्वादित्यर्थः । ननु मायाज्ञानोपायः सन्ध्याधिकरणे व्यासपादैरुक्त इति तदनुसारेण ज्ञातायां तद्विलक्षणतया ज्ञानस्वरूपमपि ज्ञास्यत इत्यत आहुः **कात्स्न्र्येनेत्यादि** । आदिपदेन बाधाभावः शास्त्रसम्वादः फलसम्वादश्च सङ्गृह्यते । **अनर्थनिवर्तकत्वमिति** । जन्मादि**निवर्तकत्वमिति** । जन्मादिनिवर्तकत्वं कुतो नेत्याकाङ्क्षायामाहुः **यथेत्यादि** । नन्वनर्थप्राप्तिजनको मोहश्चेज्ज्ञानेन निवृत्तः, तदा मायाया विद्यमानत्वेप्यकिञ्चित्करत्वम्, अन्यथा ज्ञानेनानर्थनिवृत्तिबोधकानां शास्त्राणामप्रामाण्यप्रसङ्गेन महानुपप्लवः स्यादित्यत आहुः **शास्त्रेत्यादि** । तथा चातो मायानिवृत्तिरावश्यकैवेत्यर्थः । तर्हि शास्त्रस्य का गतिरित्यत आहुः **शास्त्रं त्वित्यादि** । साधकमिति । ज्ञानसाधकम् । ज्ञानमिति । उत्पद्यत इति शेषः । अत्र प्रमाणमाहुः **मामेवेत्यादि** । **शास्त्रीय इवेति** । शास्त्रीये धर्मे यथा श्रद्धा, तथेत्यर्थः । ननु यद्येवमेव पदार्थाः, तदान्येषामपि ऋषीणां योगिनां तथा भासेरन्,

यदि भासेरन्, तदा तयोच्येरन, यतो नैवम्, अतो नैवमिति शङ्कायामाहुः अन्यथे-
त्यादि । राजसादिभिरिति । कर्तृभिः साधनैश्च क्रियमाण इति शेषः ॥ ६ ॥

अस्यामित्यत्र । तदुपपादितं प्रथमश्लोके इति । 'जन्माद्यस्ये'ति श्लोके
१-७-६ 'यथा हि वेदे यज्ञीया' इत्यारभ्य 'भागवतसंहिते'त्यन्तेनोपपादित-
मित्यर्थः । इतः प्रथमश्लोके वा । कृष्ण इत्यादिपदद्वयव्याख्याने-
नोत्तममध्यमप्रथमाधिकारिणां भक्तिविषय उक्तो ज्ञेयः । स्वतन्त्रस्येति । इदं 'पुंस'
इत्यस्य व्याख्यानम् । स्वातन्त्र्यं चात्र देवतान्तरे साधनान्तरे च निष्ठाराहित्यं बोध्यम् ७

स संहितामित्यत्र । अन्यव्यावृत्त्यर्थ इति । संहितान्तरपाठनादिव्यावृत्त्यर्थः ।
अनुक्रमेण शोधयित्वेति । यथाक्रममुक्तानुक्तदुरुक्तचिन्तां कृत्वा ।
१-७-८ अयं पक्षः श्रीधरोक्तः । अस्मिन् पक्षे समाधेः सदोषत्वमायातीत्यरुच्या
पक्षान्तरमाहुः आनुपूर्व्येण वेति । समाधौ क्रियमाणे सर्वा लीला युगपदेव भाता इति
पूर्वं भानानुसारेणोक्त्वापि पश्चाद्यथास्थानं तन्निबन्धनं आनुपूर्व्यं तत्कृत्वेत्यर्थः । पाठनं
तु द्वादशानामपि स्कन्धानां भाति । आरम्भ एव 'शुकमुखादमृतद्रवे'ति कथनात् ।
समाप्तौ सूतेनापि 'कस्मै येने'ति श्लोके 'योगीन्द्राय तदात्मना च भगवद्राताये'ति कथ-
नाच्च । लोकानुवर्तीति । चेदिति शेषः ॥ ८ ॥

१-७-९ स वा इत्यत्र । उक्तमिति । मन्तव्य इति श्रुतौ हेतुत्वेनोक्तमित्यर्थः॥९॥

आत्मारामा इत्यत्र । नन्वेषा भक्तिजनिका संहितेति भक्तिमार्गीयाणां तत्राद-
रात् ते किं न स्थिता यत्तान् विहाय व्यासचरणा मुक्तं शुकं तत्प्रचा-
१-७-१० राय योजितवन्त इत्यत आहुः मार्गान्तरेत्यादि ॥ १० ॥

हरेर्गुणेत्यत्र । फलं गृहीतमिति । विषयेन्द्रियसंयोगफलं ज्ञानं तद्गुणैर्गृहीत-
मित्यर्थः । शुको महादेव इति । 'द्वैपायनाच्छुको जज्ञे भगवानेव
१-७-११ शङ्करः । अंशांशेनावतीर्योर्व्यां स्वं प्राप परमं पद'मिति कूर्मपुराणात्तथे-
त्यर्थः । स्वप्रतिष्ठार्थमिति । स्वस्य प्रकर्षेण स्थित्यर्थमित्यर्थः ॥ ११ ॥

परीक्षित इत्यत्र । परिपालितमिति । भावे क्तः परिपालनमित्यर्थः । परिपा-
लित इति वा पाठः । तावदर्थ्यमिति । तावदर्थस्य भावस्तावद-
१-७-१२ र्थ्यम्, एवं प्रकारकं परिपालनमित्यर्थः । पृष्टमित्यादि । पृष्टं परी-
क्षितमनूद्य तदाहतज्जन्मादिहेतुकथनं प्रतिजानीत इत्यर्थः । एतेनाधिकारोक्ति प्रति
हेतुतागर्भः प्रसङ्गः सङ्गतिरुक्ता ज्ञेया । ननु पाण्डवसंस्थादेरपृष्टत्वात्तदुक्तेः किं प्रयोजन-
मत आहुः पुरुषेत्यादि । संस्थामिति । सम्यक्स्थितिः प्रकारम्, देहत्यागप्रकारं चेत्यर्थः ।
अप्रतिबन्धार्थमित्युक्ते कथं प्रतिबन्धसंभावनेति शङ्कोदेति, तन्निवृत्त्यर्थं प्रतिबन्धकत्वं



स्फुटीकुर्वन्ति प्रतिबन्धकत्वेत्यादि । यद्यप्यत्र नैकमातत्वम्, तथाप्येकस्वामिकक्षेत्रभात-
त्वात्तथेतिभावः । ग्रहणमिति । मुक्तेर्ग्रहणम् । अतएवेति । पाण्डुमोचनादेव । अन्य-
थेति । सर्वथापृष्टत्वे । प्रथमाध्याये 'को वा भगवतस्तस्ये'त्यनेन भगवद्यशःश्रवणादरस्य
सूचितत्वान्नासङ्गतिरित्यर्थः ॥ १२ ॥

१-७-१७ इति प्रियामित्यत्र । स्वरक्षेति । रक्षापदं धनुषि च रथे च सम्बध्यते ।१७।

स्वमाय इत्यत्र । न प्राकृता इति । न स्वभावजाः । अत्र प्रकृतिमाययोर्भिन्नतया
निर्देशात् प्रकृतिपदस्य स्वभावपरत्वं बोध्यम् । पूर्वानिति । दोषतया
१-७-२३ सम्भावितान् धर्मान् ॥ २३ ॥
श्रुत्वा भगवतेत्यत्र । प्रयोक्तृघातकत्वमिति । प्रथमब्रह्मास्त्रप्र-
१-७-२९ योक्तृद्रौणिघातकत्वम् ॥ २९ ॥
प्रजोपप्लवमितिश्लोकं व्याकुर्वन्ति अतःपरमित्यादि । उपसंहृतमिति ।
१-७-३२ अर्जुनेनेति शेषः । स्वस्यापीति । दाहलक्षणमिति शेषः ॥ ३२ ॥
१-७-३३ तत आसाद्येति श्लोकं व्याकुर्वते तत इत्यादि ॥ ३३ ॥
१-७ ३४ शिबिरायेत्यत्र । सूचितमिति । कालरूपत्वात्सूचितम् ॥ ३४ ॥

स्वप्राणानित्यत्र । प्राणाप्राणैर्जीवनमित्यत्र प्राणापानैरिति पाठो भाति ।
यस्य तत्रेत्यादि । यस्य पुंसस्तत्र तयोः प्राणापानयोः जीवनहेत्वो-
१-७-३७ र्मध्ये प्राणैः प्राणजीवनं तद्युक्तमित्यर्थः । ननु नेदमयुक्तं यागे व्यभि-
चारादित्यत आहुः धर्मे त्वित्यादि । उभयतारकत्वादिति । 'सगृहः सपशुः
सुवर्गं लोकमेती'ति तैत्तिरीये श्रावणेन तस्याः हिंसायाः कर्तृपशुतारकत्वादित्यर्थः । युक्त
इति । प्राणसङ्क्षय इति शेषः । धर्म्यादिति । धर्मजनकाद्युद्धात्, तथा च युद्धेन मारणीय
इत्यर्थः ॥ ३७ ॥

तदसावित्यत्र । आत्मन इत्यस्यार्थः पुत्रानिति । भर्तुश्चेति चकारसूचितमर्थ-
माहुः कुलेत्यादि । द्रोणकुले दुर्योधनकुले चेत्यर्थः । अवध्यत्वहेतु-
१-७-४० रिति । द्रौणेरवध्यत्वप्रयोजको हेतुः । तथा चैतत्त्रयं ज्ञात्वा कामतो
वधोऽर्जुनेन न कृत इत्यर्थः ॥ ३९ ॥ ४० ॥

अथोपेत्येत्यत्र । हेतुपदमिति । हेतुभूतं पदम् । नन्वेतदानयने 'त्रिशिखैः शिर
उपाहरे' इति प्रतिज्ञाया कथं पूर्तिरित्याकाङ्क्षायामाहुः अयं त्विति ।
१-७-४१ देहस्त्विति । प्रतिज्ञातं त्विति च ॥ ४१ ॥

उवाचेत्यत्र । षडङ्गसहितमिति । 'धर्म्यं न्याय्य'मित्येतद्विवरिष्यमाणषडङ्गसहि-

१-७-४३ वम् । बलिष्ठमिति । ब्राह्मण्यमितिशेषः । नितरां गुरुरिति । एतेन
भगवन्मुखत्वरूपो धर्मो महत्त्वादादरणीय इत्युक्तम् ॥ ४३ ॥

१-७-४५ स एष इत्यत्र । नान्वगादिति । द्रोणानुगमनं न कृतवतीत्यर्थः ॥४५॥

तद्धर्मज्ञेत्यत्र । वृजिने प्राप्ते इति । अन्तर्भावितण्यर्थः । अधर्मप्राय इति ।
'विषमधिया रचितो य' इतिवाक्यं चित्रकेतुस्तुतौ षष्ठस्कन्धे । अत्र पूर्व-
१-७-४६ श्लोके भागवतधर्मस्यानवद्यतामुक्त्वा 'विषममतिर्न यत्र नृणां त्वमहमिति
मम तवेति च यदन्यत्र । विषमधिया रचितो यः स ह्यविशुद्धः क्षयिष्णुरधर्मबहुलः' इति
वाक्यकथनादत्रापि धर्म एव परामृष्यत इति तथेत्यर्थः ॥ ४६ ॥ ४७ ॥

१-७-४८ यैः कोपितमिति श्लोकं व्याकुर्वन्ति धर्मस्त्वित्यादि । तच्चेदिति ।
ब्रह्मकुलं चेदित्यर्थः ॥ ४८ ॥

तत्राहेत्यत्र । तत्त्वसहित इति । तत्त्वमनारोपितं रूपं तेन युक्तः । प्रामा-
१-७-५१ णिका इति । प्रमाणपर्यवसितमतयः । सूत्रात्मकत्वे क्रोधो न युक्त
इत्यत आहुः अधर्मेत्यादि । भीमवचनस्यार्थमाहुः तस्येत्यादि ॥५१॥

निशम्येत्यत्र । उक्तवानिति । पूर्ववाक्यप्रतिनन्दनसूचितवाक्याभ्यां कथित-
वान् । भिन्नं वाक्यमिति । भगवत्कृतप्रतिनन्दनकथनोत्तरं चतुर्भुजपद-
१-७-५२ प्रयोगादेवावगन्तव्यमिति शेषः । नैकतापि विरुद्धानामिति । विरुद्धानां
वाक्यानां एकतापि एकवाक्यतापि नेत्यर्थः । परस्परेत्यादि । ताभ्यां वाक्याभ्यां सम्भू-
यैककार्यजननाय तावेव तदुभयवाक्यार्थावेव स्तंभितवान् स्थापितवानित्यर्थः । आहे-
ति । भगवानाहेत्यर्थः ॥ ५२ ॥

१-७-५३ मयैवोभयमित्यत्र । ज्ञात्वा मया समाम्नातमिति । द्रौपदीभीमहार्दं
ज्ञात्वा समाम्नातम्, न तु शास्त्रत्वेनेत्यर्थः ॥ ५३ ॥

इति श्रीप्रथमस्कन्धसुबोधिनीप्रकाशे सप्तमाध्यायविवरणम् ॥ ७ ॥

---

## अथ अष्टमाध्यायविवरणम् ।

अथाष्टमाध्यायं विवरिषवः सङ्गतिं वक्तुं द्वयोरर्थमाहुः एवमित्यादिद्वाभ्याम् । एवमुक्तप्रकारेण या निरूपिता, सा सर्वहेतुकथायै सर्वेषां मनोरथपूरणे यो हेतुः भक्तिरूपस्तत्कथनार्थं निरूपिता । चकारेण सूतोक्तावपि हेतुनिरूपणेन तत्रापि श्रीभागवतप्रतिष्ठाहेतुभूतं यत्परीक्षितो भगवदीयत्वं तत्रापि हेतुस्तत्पूर्वजानां वैष्णवत्वं तत्कथनार्थं



निरूपिता । अष्टमे वाक्यकरणफलं सूतोक्तौ वैष्णवत्वदार्ढ्यार्थं निरूप्यत इति शेषः । अत्रेदं बोध्यम् । चतुर्थाध्याये शौनकादिभिः श्रीभागवतविषयकः तत्कर्तृविषयको वक्तृविषयकः श्रोतृविषयकश्चेति चत्वारः प्रश्नाः कृताः । तन्मध्ये प्रथमस्योत्तरमग्रिमस्कन्धैर्वेक्तव्यम् । द्वितीयस्योत्तरं 'द्वापरे समनुप्राप्ते' इत्यारभ्य 'शुकमध्यापयामास निवृत्तिनिरतं मुनि'रित्यन्तैः साधिकैस्त्रिभिरध्यायैरुक्तम् । तदवान्तरप्रश्नोत्तरं चोक्तम् । ततस्तृतीयस्य तु कथनाध्ययनभेदेन वारद्वयं प्रश्नेपि सप्तमाध्याये अध्ययनविषयकस्योत्तर एव 'नित्यं विष्णुजनप्रिय' इत्यनेन कथनविषयकस्याप्युत्तरं सूचितम् । अतः परं चतुर्थोऽवशिष्यते, स तु जन्मकर्मप्रायोपवेशहेतुप्राणत्यागविषयत्वेन चतुर्धा । तत्र जन्मनो महाश्चर्यत्वस्य तैर्ज्ञातत्वात् तत्र हेतुर्वक्तव्यः । अन्यथा विशेषणस्यापार्थत्वप्रसक्तेः । एवञ्च तद्धेतुर्महाश्चर्यत्वहेतुर्भगवदीयत्वम्, तत्रापि हेतुः पूर्वजानां वैष्णवत्वम्, तत्रापि प्राथमिकस्तद्धेतुः सर्वेषां भगवद्वाक्यनिष्ठत्वरूप एव सप्तमे सिद्ध इति सोऽत्रानूदितः । तेनात्र सूतोक्तौ हेतुहेतुमद्भाव एवं प्रकारक इति बोधितम् । पूर्वं तु व्यासोक्तसङ्गतिप्रदर्शनाय भक्तमनोरथपूरकत्वमर्थ उक्त इति न पूर्वोत्तरविरोधः । अत एवात्र 'कथायै चे'ति चकारो भक्तमनोरथपूरकत्वेपि भगवद्वाक्यनिष्ठत्वस्य हेतुतासूचनायोक्त इति । एवमष्टमाध्यायार्थेपि द्रष्टव्यम् । आहेति । यत्तदोर्नित्यसम्बन्धात्तदाहेत्यर्थः । अत्रैकं षोडशश्लोकैः सेत्स्यति, तदनन्तरं तु द्वितीयं पृथास्तोत्रान्तैः सेत्स्यति, शेषानुतापकथा त्वेतदुपोद्घातत्वेनेति सूतोक्तौ प्रासङ्गिकी भगवत्कथा । व्यासोक्तौ तु सर्वदुःखनिवृत्तिपूर्वकभक्तिप्रदत्वमिति बोद्धव्यम् । एवमग्रिमाध्यायेपि ।

घातयित्वेत्यत्र । कचस्पर्शमात्रेण कथमायुषः क्षय इत्याकाङ्क्षायामाहुः निरपराधे-
त्यादि । प्राणानामुत्तमादिति । आयतनादिति शेषः । 'अर्वाग्बिल-
१-८-५ श्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूप'मिति श्रुतिव्याख्याने
'शिरो वै अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः प्राणा वै यश' इति श्रावणात् प्राणानामुत्तमायतनं
शिरस्तत्प्राप्य आयुषः प्राणाधीनस्य तत्र तथात्वात्तथेत्यर्थः ॥ ५ ॥

याजयित्वेति श्लोकं व्याचक्षते तरतीत्यादिना । रात्रिसत्राधिकरणेनार्थवादि-
कफलस्यात्रोपादेयत्वे सिद्धे आहारपृथक्त्वपक्षेण आहार आहरणं प्रयो-
१-८-६ गस्तत्पृथक्त्वपक्षस्य 'तत्र सर्वेऽविशेषा'दित्यधिकरणे सिद्धत्वात्तेनेत्यर्थः ।
इदं पूर्वतन्त्रे चतुर्थस्य तृतीयपादे चिन्तितम् । तथाहि । 'सार्वकाम्यमङ्गकामैः प्रकरणा'-
दित्यस्मिन्नधिकरणे दर्शपूर्णमासज्योतिष्टोमादेः सर्वकामार्थत्वं सिद्धम् । तत्र कामा नैमि-
त्तिकाः, ज्योतिष्टोमादिस्वरूपं निमित्तम् । तत्र सर्वेषु कामेष्वविशिष्टमिति सकृज्ज्योतिष्टो-
माद्यनुष्ठानेप्येकमिवा(न्यो?)न्यान्यपि फलानि बाधकाभावाद्भवन्तीति युगपत्सर्वफलसिद्धि-
रिति प्राप्ते ब्रूमः । नात्र ज्योतिष्टोमं निमित्तीकृत्य कामा विधीयन्ते, कामानामननुष्ठेय-
त्वात्, किन्तु पुरुषस्य स्वत एव प्राप्तान् कामानुद्दिश्य ज्योतिष्टोमादिर्विधीयते । अत-

स्तेषां स्वर्गपश्वादीनां परस्परनिरपेक्षाणामेव फलत्वात् तत्तत्साधनत्वेन चोद्यमानो ज्योतिष्टोमादिरपि तत्तदर्थं पृथक् प्रयोगमर्हतीति वाक्यविचारादवसीयत इति ॥ ६ ॥

१-८-७ उपलेभेत्यत्र । प्रारम्भाद्यभावादिति । अत्र पाठः प्राहृत्याद्यभावादिति भाति ॥ ७ ॥

१-८-८ पाहि पाहीत्यत्र । आगच्छन्त्येवेति । अत्र आगच्छन्त्या एवेति, प्रदर्शयन्नित्यत्र प्रदर्शयन्त्या इति, बोधयन्नित्यत्र बोधयन्तीवेति पाठो भाति । इत्युक्तं भवतीति । यथा पिधेहीत्यादौ द्वारादिपदार्थस्याभिनयेन प्रतीतिः, तथात्रापीत्यर्थः ॥ ८ ॥

१-८-९ अभिद्रवतीत्यत्र । अप्रतिकार्यपक्ष इति । अप्रतिकार्यत्वपक्षे ॥ ९ ॥

१-८-११ तर्ह्येवेत्यत्र । उभयत्रेति । पाण्डवेषु सायकेषु च ॥ ११ ॥

१-८-१२ व्यसनमित्यत्र । दूरापास्तमिति । प्रतिकारकरणमितिशेषः । तद्वैनानित्यादि । तथाच विषयरूपेण विषयार्थं रक्षिता इत्यर्थः ॥ १२ ॥

१-८-१३ अन्तःस्थ इत्यत्र । ओषधे त्रायस्वैनमितिवदिति । दीक्षणीयायां दीक्षाङ्गत्वे विहिते केशश्मश्रुवेपने क्षुरस्य नतिर्यङ्निधानमनया श्रुत्या कल्पे विहितं 'ओषधे त्रायस्वैनमिति स्वधीतं निर्यञ्चं निदधाती'ति । तथाचौषधे दाहनिधान एनं यजमानं त्रायस्व त्वक्छेदनाकरणाद्रक्षेत्यर्थात् यथा स्वधितिना रक्षा, तथा मायासंबन्धिदोषाजननात्तया आवरणमित्यर्थः । बहिः स्थितस्येति । बहिःस्थितकर्तृकमित्यर्थः । सुवर्णतेजोवदिति । तस्य तैजसत्वात् तेजो यथाकारणत्वेनान्तःस्थितं तथेत्यर्थः । दोष इति । ब्रह्मास्त्रस्य ब्रह्मशिरोरूपत्वात्तत्सम्बन्धे शिवस्येव पिशाचत्वदोप इत्यर्थः ॥ १३ ॥

१-८-१४ यद्यप्येत्यत्र । प्रतिकूलक्रियेति । नाशिका क्रिया । व्यावर्तकक्रियेति । स्तम्भिका क्रिया । अन्यथेति । वैष्णवनिर्णयाभावे ॥ १४ ॥

१-८-१५ मा मंस्थेत्यत्र । तथात्वमिति । सात्त्विकत्वम् । तथात्वं न स्यादिति । स्वकार्यकरणसमर्थत्वं न स्यात् । एवं भगवद्वाक्यकरणजनितदोषस्य भगवत्कृतं समाधानमुक्तम् । अतः परं गुणपोषणमुच्यते, तत्र रक्षणं गुणस्तस्य पोषणं भक्त्यर्थत्वम्, तदत्र पृथास्तुत्या उच्यत इत्याशयेनाहुः एवं भगवतेत्यादि । स्तुत्यर्थबोधककारिकायां कृतहेलाज्ञेति एकं पदम् । कृतहेलाज्ञानवतीत्यर्थः । अग्रिमस्वारस्यात्पदद्वयं वा ॥ १५ ॥

नमस्य इत्यत्र । एवमज्ञेति । एतादृशं भवन्तं शब्दादिना जानन्त्यप्यात्मत्वेनाजा-



१-८-१७-१८ नन्तीत्यर्थः । दृश्यमानापेक्षयेति । दृश्यमानं मनुष्यत्वक्षत्रियत्वादि तदपेक्षया । जडव्युदासार्थमिति । आद्यत्वं प्रकृत्याकाशादीनामपि तत्तन्मते वर्तते इति तद्व्युदासार्थमित्यर्थः । तर्ह्याद्यपदमनतिप्रयोजनमित्याशङ्कायामाहुः जीवेत्यादि । पितृरूपत्वमिति । 'पिताहमस्य जगत' इति वाक्योक्तं तद्रूपत्वम् । न दृश्यत इति । 'पराञ्चि खानी'तिश्रुतेस्तथेत्यर्थः । कार्येत्यादि । सर्वानुमानापेक्षया कार्यलिङ्गकानुमानस्य सर्वथानुमापकत्वेपि भगवतोऽदृश्यत्वेन कार्यस्य तत्सहचारादर्शनेन व्याप्तिनिश्चया(भावा)त्तथेत्यर्थः । अत एवेति । उक्तस्वभावत्वादेव । अपीति । अलक्ष्यमिति शेषः । तेनालक्ष्यपदस्यावृत्तिर्बोध्या । गुरुणा वेति । अपदस्य गुरुवाचकत्वात्तथेत्यर्थः । अज्ञत्वकथनमिति । 'न वेद स' इति श्रुतावज्ञत्वकथनमित्यर्थः । कारणत्वं गच्छेदित्यादि । कारणत्वादीनां स्वरूपसंबन्धविशेषत्वेन स्वरूपद्वयात्मकत्वादेकतरनाशेपि तथात्वादित्यर्थः ॥ १७, ॥ १८ ॥

१-८-१९ तथा परमेत्यत्र । आविर्भावान्यथानुपपत्त्येति । अज्ञापनार्थत्वे तदनुपपत्त्येत्यर्थः । रसजननायेति । नवरसोत्पादनायेत्यर्थः । दोषहेतुरूपेति । दोषप्राकट्यहेतुरूपेत्यर्थः ॥ १९ ॥

१-८-२० कृष्णायेत्यत्र । स्वोद्धारार्थमिति । स्वकीयोद्धारार्थम् । अज्ञानदशायामनपस्कार्यत्वे दृष्टान्तः यथेत्यादि । अस्मिन् पक्षे वासुदेवपदं मूलरूपपरम् । इदं च सूतेनानूद्यते इति सत्त्वोपहितमेव मूलरूपं स्यादित्यरुच्या पक्षान्तरमाहुः कृष्णायेति वेति । पालकपुत्र इति । पालकस्य पुत्र इत्यर्थः । ननु कुमारपदेन कथमेतदुपलभ्यत इत्यत आहुः स्कन्द इत्यादि । वसतीवरीवदिति । यथायं शब्दो यज्ञियजलविशेषवाचको निगमसिद्धस्तथेत्यर्थः । सम्बन्धमोचकत्वमिति । सम्बन्धेन मोचकत्वम् ॥ २० ॥

१-८-२१ नम इत्यत्र । पङ्कजनेत्रायेति सर्वपतित्वमिति । 'को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवे'दित्यादिषु पुराणवाक्येषु पुण्डरीकाक्षपदस्य विष्णौ रूढत्वाद्विष्णोश्च लौगाक्षिगृह्ये 'विष्णवे सर्वाधिपतये स्वाहे'तिवाक्येन सर्वाधिपतित्वस्योक्तत्वात्पङ्कजनेत्रत्वात्तथात्वं कल्पनाक्लेशेनायातीति तद्विहाय प्रकारान्तरेण सर्वपतित्वमाहुः वस्पतेत्यादि । प्रयच्छेदिति । भक्तिं प्रयच्छेत् ॥ २१ ॥

१-८-२२ यथेत्यादि । महतीति । कौतुकजनकत्वेन दुर्ज्ञेयेत्यर्थः । तर्ह्येतल्लीलानुसन्धाने किं वक्तव्यमित्यपेक्षायामाहुः भक्तेत्यादि । गुणत्वेपीत्यत्र गुणत्वेनेति पाठो भाति ॥ २२ ॥

१-८-२३ विषादित्यत्र । आस्मेति श्रीधरीये पाठः, अत्र तु स्मेत्येव पाठः ॥२३॥

---

१ तै. सं. ६.४.२.

जन्मैश्वर्येत्यत्र । नवप्रकारा इति । स्वरूपगुणेति कारिकया पूर्वमुक्ताः । तदाहुः
स्वरूपेत्यादि । तदुपपादयन्ति तत्रेत्यादि । ज्ञात इति । उक्तश्लोक-
१-८-२५ त्रयोक्तप्रकारेण ज्ञाते । एवमग्रेऽपि । समीपगमन इत्यादि । समीपगमन-
पदेन पादसेवनम् । तस्मिन् सति तानि भवन्तीति सर्वापगमनादिर्द्वितीयः खण्ड इत्यर्थः । सख्यात्मनिवेदन इति । एतयोर्दैन्यनिवारकत्वात्तृतीयत्वं बोध्यम् । अप्यद्येति श्लोके तद्व्युत्पादयिष्यते । तत्रेति । तेषु षट्सु । तत्र तत्रेति । तत्तच्छ्लोकव्याख्याने । दुष्ट-दुर्ज्ञेयत्वस्य पादसेवनं प्रति कारणतामुपपादयन्ति तत्र प्रथममित्यादिना । दुष्टानामि-त्यादि । दुष्टसम्बन्धिनो ये तादृशव्यापारास्तेषाम् । पेयमिति । सुरारूपपन्नमलमितिशेषः । तत्कुलस्येति । तस्य कुलस्येत्यर्थः । जात्यन्तरमापन्न इति । म्लेच्छादिभावं प्राप्तः । मादकस्येति । मादकसम्बन्धिन इत्यर्थः । पूर्वोक्तरहिता इति । उक्तचतुर्विधपद-रहिताः । इतीति । इदं बोधयतानेन वाक्येनेत्यर्थः ॥ २५ ॥

न वेदेत्यत्र । चिकीर्षितावेदने हेतुमाहुः सामान्यत इत्यादि । क्वचिदिति ।
कस्मिन्नपि काले । स्वाभाविकधर्मस्य भ्रमहेतुत्वे भगवद्धर्माणामेव मित्रा-
१-८-२८ दिभावं प्रति हेतुतायातीत्याशङ्कां वारयितुमाहुः स्वाभाविकस्येत्यादि ।
सर्वभावित इति । इतजन्तम् । सञ्जातसर्वभाव इत्यर्थः ॥ २८ ॥

जन्म कर्म चेत्यत्र । न पूजयेति । मनुष्यादिरूपतयैव ज्ञानात्तथेति लक्षणज्ञान-
स्यैव तद्रूपपूजनहेतुत्वमित्यर्थः । अस्यानुकरणस्यात्यन्ततां स्फुटीकर्तु-
१-८-२९ माहुः विश्वस्मिन्नित्यादि । तथा चास्मिन्ननुकरणे उभयथाज्ञा य स
इति हेतोरस्यात्यन्तत्वमित्यर्थः । अत्यन्तत्वमत्राश्चर्यजनकत्वरूपं ज्ञेयम् ॥ २९ ॥

गोपीत्यत्र । सा कुतो न स्वाभाविकीत्याकाङ्क्षायामाहुः तत्राहेति । तदुपपाद-
१-८-३० यतीत्यर्थः ॥ ३० ॥

केचिदाहुरित्यत्र । भगवदिच्छाज्ञानादिति । इच्छाया अज्ञानादित्यर्थः । यशः
स्वरूपं तद्बीजकथनमुखेनाहुः तद्वंश्येत्यादि । यथा चन्दनसन्निहि-
१-८-३१ तवृक्षान्तराणां तथेत्यर्थः ॥ ३१ ॥

अपर इत्यत्र । देहमुख्यत्वेऽपि तुल्ये कथं द्वितीयमतमित्यपेक्षायां मतान्तरे बीज-
माहुः अपर इत्यादि । कृतप्रयत्नत्वादिरपि वसुदेवविशेषणम् । कृत-
१-८-३२ तपस्त्वादित्यर्थः । अनेनेति । अजस्यैव जातत्वकथनाद्विरुद्धधर्माश्रयत्व-
बोधनेनेत्यर्थः । तत्रेति । जनने । अनेनेति । दैत्यमुक्तिदातृत्वसूचनेन । अत एवेत्यादि । दैत्यमुक्तिदातृत्वादेव उभयोः एतत्क्षेमासुरवधयोः भगवत्कार्यत्वमित्यर्थः । अन्यथेति । मुक्तिदानं विना । असुरवधस्य कार्यत्वाङ्गीकारे ॥ ३२ ॥



भारावतारणेत्यत्र । कालान्तरीयत्वादिति । पूर्वजन्मद्वयसम्बन्धेन तथात्वात् ।
तथा च तदर्थमाविर्भावे पूर्ववदंशेन प्रादुर्भवेत्, न तु पूर्णस्तथाभवेत्,
१-८-३३ अतो नेदं प्रयोजनमिति तेषामाशयः । कामप्रधाना इति । त्रिवर्ग-
प्रधानाः । स्वतन्त्रफलतेति । भारावतरणस्येति शेषः । तथा च सुखसाधनस्य स्वतन्त्रफ-लतेति विरुद्धमापद्येतेतिभावः । दैहिक इव भवतीति । दैहिक इव भासते । ननु विस्म-रणे कथमुत्तारणमित्यत आहुः बुद्ध्या हीत्यादि । तथा चारोपकाभावादधःपात इत्युत्ता-रणमित्यर्थः । अनेनेति । उदधिनौदृष्टान्तेन । अनभिप्रेतत्वमिति । भारावतारणार्थं स्वाव-तारस्य तथात्वमित्यर्थः । एवं कृतमिति । अनेन प्रकारेण भारावतरणं कृतम् । ननु देवहितकरणादीनामपि प्रयोजनानां दृश्यमानत्वात् कथमेकमेव प्रयोजनत्वेनोच्यते इत्यत आहुः एकपक्ष इत्यादि । सर्वेषां मुख्यप्रयोजनत्वाङ्गीकारे को दोष इत्याकांक्षायामाहुः अन्यथेत्यादि । एकस्मिन् देहे प्रयोजनभेदेन नानारूपस्थितेः श्रुतिसिद्धत्वेन निबन्धे दर्शितत्वादत्रापि तद्भेदे तथा स्यादित्यर्थः ॥ ३३ ॥

भवेस्मिन्नित्यत्र । स्वरूपनिरूपण इति । 'तथापरमहंसाना'मिति श्लोके इत्यर्थः ।
ननु तत्रापि भक्तियोगपदेन श्रवणादिरेव विवक्षित इति तस्मादस्य को
१-८-३४ विशेषो येनास्य पूर्वपक्षकोटिपात इत्यत आहुः मुक्तीत्यादि । निर-
न्तरोत्पत्तिमार्गोद्गमनेनेति । 'जायस्व म्रियस्वे'ति श्रावितो निरन्तरोत्पत्तिमार्गः । ल्यब्लोपे पञ्चमी । तं प्राप्य कालिकप्रलयादिविचारेण यद्गमनं पूर्वावस्थानिवृत्तिस्तेन भवे उत्पत्तिरित्यर्थः । स्थित्येति । वर्तमानार्थकशानज्बोधितया स्थित्या । निरूपितमिति । 'एवं नृणां क्रियायोगा' इत्यादिना निरूपितम् । भगवद्धर्मपरत्व इति । तद्विषयत्वे ॥३४॥

शृण्वन्तीत्यत्र । स्वतः सेवामिति । स्वतः पुरुषार्थरूपां सेवाम् । एतदिति ।
स्वतः सेवनरूपं दास्यम् । तर्हि किमिति फलनिरूपणमित्यत आहुः
१-८-३५ तथापीत्यादि । एवमत्रापीति । स्वयमुद्यम्येत्यर्थः । एतेषामिति ।
श्रवणगानोपदेशानाम् । स्मरणनन्दनसहितानां वा । श्रवणकीर्तनानीति बहुवचनं गान-स्याप्युपलक्षकम् । अवान्तरफलं स्मरणानन्दौ । अत इति । श्रवणादिभ्यः ॥ ३५ ॥

अप्यद्येत्यत्र । दैन्यं निरूपयतीति । दैन्यमनोजस्त्वं तद्दृष्ट्वा हि भगवान् भक्तेषु
सख्यं प्रकटयति, यथा पुरञ्जनोपाख्यानेऽन्तर्यामिणा प्रकटितम्, अतः
१-८-३६ सख्यं प्रति तस्य कारणत्वबोधनाय तन्निरूपयतीत्यर्थः । विषयाभाव
इति । दुःखाभावे । त्यागसम्भावनायां बीजमाहुः अन्यदेत्यादि ॥ ३६ ॥

१-८-३७ के वयमितिश्लोकं व्याकुर्वते नव वयमित्यादि ॥ ३७ ॥

१-८-३८ नेयं शोभिष्यते इति श्लोकं व्याकुर्वते किञ्चायं देश इत्यादि ॥३८॥

अथेत्यत्र । **द्वयमेव हि साध्यमिति** । आत्मनिवेदने वक्ष्यमाणयोर्द्वयोरेव यतो
हेतुत्वमतो द्वयमेव साध्यमित्यर्थः । नास्तीत्यादि । तथा चात्मव्यति-
१-८-४० रिक्ताभावपक्षे प्रार्थनवैयर्थ्यमित्यर्थः । प्रतीतेनेति । आत्मानात्मोदा-
सीनतया प्रतीतेन । न कर्तव्यः स्यादिति । तथा च शास्त्रेषु ज्ञानिनां विरागत्वोक्ति-
विरुद्धयेतेत्यर्थः । उक्तत्वादिति । 'इदं सर्वं यदयमात्मे'त्यादावुक्तत्वात् । स्फुरणा-
दिति । तत्परित्याग आवश्यक इति शेषः । नन्वेवं ज्ञायते चेत्परित्यागः कर्तव्य इत्यत-
स्तस्य दुष्करत्वमाहुः त्वदित्यादि । तथा च न तत्रास्मत्सामर्थ्यमितिभावः । विधेय-
दशायामित्यादि । विधेयत्वस्फूर्तौ सत्यां शास्त्रेण हेतुना स्नेहः पुत्रादिषु मया क्रियते,
तत्स्नेहकरणं विरुद्धशास्त्रैः पुत्रत्वादिधर्मबोधकैर्नाश्यते, तथा च तौ स्नेहतदभावावदृढत्वा-
दप्रयोजकावित्यर्थः । अविमोक इति । तथा चातः प्रार्थ्यत इति भावः ॥ ४० ॥

त्वयीत्यत्र । **स्नेहं प्रार्थयन** इति । आत्मनिवेदनहेतुत्वेन स्नेहं प्रार्थयत इत्यर्थः ।
ज्ञानेनेति । भगवति ह्यात्माधिष्ठातृत्वज्ञानेन । **प्रतिबन्धकागणनाया-**
१-८-४१ मिति । तत्तिरस्कृतया प्रतिबध्यते ॥ ४१ ॥

**श्रीकृष्णेत्यत्र** । **सम्बोधयदिति** । क्रियाविशेषणमिदम् । **स्वरूपमिति** ।
'नमस्य' इत्यादिश्लोकत्रये गीतोक्तस्य पुरुषोत्तमस्वरूपस्य सिद्धत्वात्तस्य
१-८-४२ श्रौतत्वं बोधयितुं मूलनाम्ना स्वरूपमेवं बोध्यते इत्यर्थः । गाम्भीर्यो-
दय इति । तेन वैष्णवतन्त्रोक्तरूपतापि सूचितेति भावः । हविस्त्याग इति । यागात्मा
धर्म इति शेषः । अन्येषामिति । फलानामित्यर्थः । यद्योगेनेत्यादि । योगो हि चित्त-
वृत्तिनिरोधात्मकः, तेन करणे मनसो रुद्धत्वान्न प्रसाद इत्यतोतिदैन्यम्, तथा च
तदीश्वरत्वेन तन्नियामकत्वाद्वृत्त्यनिरोधे चित्तप्रसादाद्दैन्यनिवृत्तिरिति भावः ॥ ४२ ॥

पृथयेतिश्लोकं व्याचक्षते एवं स्तुतेत्यादि । आहेति । पृथयेतिश्लोकं आह ।
नन्वत्र मोहनं किमित्युच्यत इत्याकाङ्क्षायां तत्तात्पर्यमाहुः विषये-
१-८-४३ त्यादि । भगवद्गुणेष्वियत्ताभावादखिलोदयस्तुतेरशक्यत्वेनाखिलपद-
वैयर्थ्यमाशङ्क्य खिलं न्यूनमखिला अन्यूना इति यौगिकार्थं पुरस्कृत्य भगवद्गुणेषु स्वतो
न्यूनत्वाभावात् स्फुरणाभावस्फुरणप्रयुक्तौ खिलत्वतदभावावित्याशयेनाहुः परितः
स्फुरिताः सर्वे इति । यावन्तः स्फुरितास्ते सर्वे इत्यर्थः । नन्वस्त्वेवम्, तथापि कुन्ती-
बुद्ध्या तेषां कथमखिलत्वमित्याकाङ्क्षायामाहुः गुणानामित्यादि । तथा चैवं कुन्तीबुद्ध्या
अखिलत्वमित्यर्थः । एवमखिलत्वसाधने उपपत्तिमाहुः एकधेत्यादि । एकस्य नानात्व-
मेव श्रुतावभिप्रेतम्, निबन्धे तथोपपादनादित्यत उपपत्त्यन्तरमाहुः तथा लीलाश्चेति ।



श्रीधरमतं दूषयन्ति नु स्तुतावित्यादि । जयविजयपातनाद्वेति । यथा तत्र स्वविचा-
रितमेव कृतवान्, तथात्रापीतिबोधनायेत्यर्थः ॥ ४३ ॥

तामित्यत्र । प्रार्थितामिति । रतिमित्यर्थः । एवं स्तोत्रप्रार्थनाङ्गीकारमुखेन
गुणपोषणमुक्तम् । अतः परं युधिष्ठिरानुतापग्रन्थः किमर्थ इत्याकाङ्क्षा-
१-८-४४ यामाहुः इयं हीत्यादि । तथा च दोषसमाधाने गुणपोषणे च
भगवतोऽद्भुतकर्मत्वं व्युत्पादयितुमेष ग्रन्थ उपोद्घातरूप इत्यर्थः । अल इति । मुक्तत्वात् ।
तथात्वादिति । 'द्युतं च मांसं च सुरा च वेश्या पापर्द्धि चौर्यं परदारसेवे'त्येवं सप्तत्वात् ।
तथा च द्युतादिव्यसनान्मुक्तस्यापि शोकात्मा बन्ध इत्यद्भुतमित्यर्थः । नन्वस्त्वेवम्, तथापि
द्युतव्यसनविमोकस्य बहुकालमारभ्य जातत्वादिदानीमेव किमिति बन्ध इत्यत आहुः
स्वस्मिन्नित्यादि । 'कृष्णे त्वि'त्यनेनापि 'यदैवे'त्यादिकमनुषज्यते । तथा च 'यक्ष्यमा-
णोऽश्वमेधेन ज्ञातिद्रोहजिहासये'त्यादिवाक्यात्स्वार्थं यदा वाजिमेधाः कृताः, तदा मोहो-
ऽभवदित्यर्थः ॥ ४५ ॥

१-८-४९ नैनो राज्ञ इतिश्लोकं व्याचक्षते नन्वित्यादि ॥ ४९ ॥

यथा पङ्केनेत्यत्र । अयथाविधसाधनैरिति । सम्पादितो यज्ञ
१-८-५१ इति शेषः ॥ ५१ ॥

इति श्रीप्रथमस्कन्धसुबोधिनीप्रकाशेऽष्टमाध्यायविवरणम् ॥ ८ ॥

---

## अथ नवमाध्यायविवरणम् ।

अथ नवमाध्यायं विवरिषवः सङ्गतिं वक्तुमष्टमादिचतुर्षु परीक्षिद्रक्षाया अनि-
रूपणे हेतुं सपरिकरं त्रिभिर्वदन्तोऽग्रे तन्निरूपणे हेतुमाहुः लोक इत्यादि । कार्यं स्फुटी-
कुर्वन्ति ऐहिकेत्यादि । कथमेवमत आहुः श्रीत्यादि । निरूपितेति । अष्टमे निरूपिता ।
मध्ये इति । नवमादित्रये । तथा च व्यासोक्तौ सूतोक्तौ चाङ्गाङ्गीभावो निर्वाहकत्वं चेति
समानैव सङ्गतिरित्यर्थः । ऐहिकेत्यादि । कारिकोक्तमर्थं व्याकुर्वन्ति एवमित्यादि ।
तेनैककार्यत्वं सङ्गतिः फलिष्यति । रक्षापूर्वाङ्गेनेति । मायावरणेन । नन्वैहिकामुष्मिक-
योरेकसम्बन्धाय पाण्डवमुक्तिरेव निरूप्या, भीष्ममुक्तिकथनस्य कः प्रसङ्ग इत्यत आहुः
नवम इत्यादि । स्वस्येति । स्वकीयस्य भिन्नत्वं 'यस्तान् द्वेष्टि स मां द्वेष्टी'त्युद्योगे
भगवद्वाक्यात्पाण्डवद्वेषेण अभगवदीयत्वं प्राप्तस्य मुक्त्यभावसंशये तच्छान्त्यै संशय-
शान्त्यै वर्ण्यत इत्यर्थः । ननु तथापि तत्र भगवद्गमनादिरूपस्य भीष्मपुरस्कारस्य कथनं
कुत इत्याकाङ्क्षायामाहुः पुरस्कृत इत्यादि । पुरस्कृतो भीष्मः । अघं द्रोहरूपं भगवद-

पराधमुत्सृज्य देहं जह्यादिति हेतोः पुरस्कार ईरितः । तथा च भक्तेन कृतेपि द्रोहे भगवान् तन्निवर्तनार्थं स्वयमेव प्रतिबन्धं दूरीकरोतीति ज्ञापयितुं तदुक्तिरिति भावः । प्रासङ्गिकं प्रयोजनान्तरमाहुः राज्ञ इत्यादि । राज्ञो युधिष्ठिरस्य यो मोहस्तस्याप्यनुपेक्षणीयत्वात्तदुपदेशतो निवृत्तिरपि वक्तव्या, अन्यथा क्लेशे विद्यमाने 'अन्ते या मतिः सा गति'रितिन्यायाद्राज्ञोपि मुक्तिप्रतिबन्धः स्यात्, अतस्तदर्थमपि पुरस्कारोक्तिरित्यर्थः । शेषं स्फुटम् । तथापीति । उद्धार्यत्वेपि । तादृग्रूपेणेति । आततायुद्धारकरूपेण ॥१॥

१-९-३ भगवानित्यत्र । भगवतोनुवृत्तिरिति । भगवत्कर्तृकानुवृत्तिः ॥३॥

दृष्ट्वेत्यत्र । यादृश इति । यादृशस्तादृश इत्यर्थः । आगत्येत्यादि । आगत्य यद्गमनं तत्तु लोकात् लोकमाश्रित्य लोकसङ्ग्रहार्थमित्यर्थः । लोक-
१-९-४ सङ्ग्रहस्वरूपमाहुः । भक्तस्तथा नम्यः, न चेत्, यदि भक्तो न स्यात् । विपरीतत्वं दोग्धृभावमापन्नः प्राप्तः कथमेवं नम्यो भवेदिति अयं यादृशतादृशभक्तस्य नम्यत्वबोधनरूपो लोकसङ्ग्रह इत्यर्थः ॥ ४ ॥

१-९-५ तत्रेत्यत्र । स्वार्थदर्शनादिति । काले मनःसङ्गः स्वार्थस्तद्दर्शनादित्यर्थः । बाधकविषयत्वमिति । बाधकस्य तद्धर्ममुख्यत्वसाधकयुक्त्यादेर्विषयत्वमित्यर्थः ।

१-९-६ पर्वत इत्यत्र । न देवर्षित्वमात्रमिति । अत इति शेषः ॥ ६ ॥

कृष्णं चेत्यत्र । कथं पूजितवानिति । सम्बन्धित्वेन वा ज्ञातित्वेन वेश्वरत्वादिना वेत्यर्थः । मायाया देहग्रहणोक्तौ मायावादिवत्काल्पनिको देह इति
१-९-१० शङ्का स्यात्तन्निवृत्त्यर्थमाहुः प्राकृतेत्यादि । निरूपित इति । सूतेन निरूपितः । उत्तरत्रेति । दशमाध्याये कौरवेन्द्रपुरस्त्रीवाक्येषु, तस्य वास्तवत्वं तु 'यस्यामतं तस्य मतं' 'अविज्ञातं विजानतां विज्ञातमविजानता'मित्यादिश्रुत्या ज्ञेयम् ॥ १० ॥

१-९-१२ अहो कष्टमित्यत्र । निरन्वयमिति । प्रसिद्धहेतुरहितम् ॥ १२ ॥

सर्वं कालकृतमित्यत्र । बहूनामित्यादि । 'ईश्वरो वा भवेत् कर्ता पुरुषो वापि भारत । हठो वा विद्यते लोके कर्मजं वा फलं स्मृत'मिति राजधर्मे-
१-९-१४ ऽन्यत्र लोकादीनां कर्तृत्वप्रतिपादनादित्यर्थः । निराकरणादिति । धर्मनन्दनपदेन कर्मणः धर्माश्रयपदेन लोकस्य च निराकरणादित्यर्थः । सहवृत्त्येति । वक्ष्यमाणया सहवृत्त्या । वश्यत्वे हेतुः यथेत्यादि । कालमित्येति । कालमानेनेत्यर्थः ॥ १४ ॥

तस्मादित्यत्र । दैवतन्त्रमित्यनेन कालस्य निरूपितत्वादिति सम्बन्धः ।
१-९-१७ सर्वाधीनकथनादिति । अत्र बहुव्रीहिर्बोध्यः ॥ १७ ॥

इति मतिरित्यत्र । अभेदेपि शक्तिरूपत्वेन भिन्नाभिन्नतया प्रकृतिस्वरूपे विवृते



तस्याः उद्भवो नायाति तत्संयोगादन्यस्यैव त्वापातात्स्याशयेनाहुः न
१-९-३२ घटत इत्यादि ॥ ३२ ॥

त्रिभुवने इत्यत्र । स्वरूप इति । जीवात्मरूपे । तथा सर्वातीति । शास्त्रसंस्कारेण सौन्दर्ये सति । औत्पत्तिक इत्यादि । एतेन 'श्यामाच्छबलं
१-९-३३ प्रपद्य' इति श्रुत्युक्तरूपता निबन्धोक्तरीत्या स्मारिता । अनेनेति । हृत्सम्बन्धिना । पीताम्बरस्य मायारूपत्वे प्रकाशकत्वासम्भवाद्विशेषान्तरं ज्ञापितं स्वरूपमाहुः तथा वेद इत्यादि । सूर्यो हि त्रय्यात्मा स्वात्मना यथाङ्गानि प्रकाशयति तथेत्यर्थः । पीताम्बरस्य वेदत्वं तु 'वासश्छन्दोमयं पीत'मिति द्वादशस्कन्धवाक्याद्बोध्यम् । स्वरूपाच्छादकत्वेन । उक्त इति । वरे उक्ते । अनेनेति । भगवद्वाक्यकथनेन । स्पष्टमिति । अवकाशदानेन प्रतीत्या च स्पष्टमित्यर्थः । ननमिति । न विद्यते नः निषेधो यस्येति ननम् । त एव वा त इति । ते ब्रह्मविद एव वा ते । कुं धाः कुं मंस्कृतपृथिव्यात्मकं शरीरं लान्ति गृह्णन्तीत्यर्थः । अग्निब्राह्मणरूपमिति । अग्निरूपं ब्राह्मणरूपं चेत्यर्थः । अग्नेरासनत्वं च । 'रविमध्ये स्थितः सोमः सोममध्ये हुताशनः । वह्निमध्ये स्थितं सत्त्वं सत्त्वस्यान्तः स्थितोऽच्युत' इति मैत्रायणीयश्रुतौ 'वह्निमध्ये मद्रूपं मयैतद्ध्यानमङ्गल'मित्येकादशस्कन्धे सिद्धम् । नन्वनवसररतिप्रार्थनस्योत्तमाधिकारे सम्भवासम्भावत्वे 'मम निश्चिते'त्याद्युत्तरग्रन्थविरोध इत्यत आहुः भगवदित्यादि । नत्त्व इति । अन्तःकरणादिजेतृत्वे । तथा च तदानीं तदभावान्न विरोध इत्यर्थः । ननु तदानीं तदभावे इदानीं कथमीदृशो भाव इत्यत आहुः एवमित्यादि । तथा च भगवत्स्वरूपाभेदादेवैवं भाव इत्यर्थः । एतस्याः सात्त्विकसात्त्विकीत्वं तु सर्वकमनीयतया मुग्धमनस्त्वेन प्रकाशकत्वेन च सत्त्वकार्यकरणाज्ज्ञेयम् ॥ ३३ ॥

युधीत्यत्र । भक्तश्रवणकटुकत्वाद्दूरान्वयेन प्रकारान्तरमाहुः युद्धेत्यादि । ननु रजोधूसरत्वादिकं शोभाजनकत्वाभावान्न रतिजनकमिति कुतस्तद्वर्णन-
१-९-३४ मत्रेत्याकाङ्क्षायामाहुः राजसेत्यादि । पर्यवसानेन कालकामरोधनाय च पक्षान्तरमाहुः अथवेत्यादि । सूर्यादीनां तुरगत्वे मानमाहुः अग्निरित्यादि । श्रुतिस्तु 'अग्निर्वा अश्वो वायुः रश्मिः आदित्यो वाजी एताभिरेवास्मै देवताभिरेवैनं युनक्ति' इति ब्राह्मणप्रथमकाण्डीयतृतीयप्रपाठकषष्ठानुवाके वाजपेयप्रकरणेऽस्ति । ते च ते इत्यादि । 'यदि प्रयास्य'न्नित्यादिनोक्ताः क्रमयुक्तपथिकादय इत्यर्थः । भिन्ना चेति । एकाग्राः ब्रह्मविदश्चेत्यर्थः । च समुच्चय इति । चोत्र न निपातरूपः । समुच्चयेऽव्ययत्वस्य वैकल्पिकत्वात् । 'चश्चन्द्रदस्युशोभासु पुंसि पक्षे समुच्चये । अथार्थे वाक्यविस्तारे प्रसङ्गे पादपूरणे । अन्योन्यार्थे समाहारे मर्यादायामनुक्रमे । पुनरर्थेऽव्ययं पश्चादुत्तरेषु व्यवस्थित'

इत्येकाक्षरकोशे तथोक्तत्वात्। इतरयोगार्थत्वपक्षे यद्यप्यव्ययत्वं कोश उक्तम्, तथापि तुना अपिनेत्यादिवदत्र नामत्वमेव चस्य विवक्षणीयम्। आनने यस्येति। भक्ष्यभूता यस्येत्यर्थः। सद्रूप इति। अस्मिन् पक्षे बाहुलकात्तकारस्य यकार अकारात् पूर्वभावश्च बोध्यः। महासामर्थ्यमिति। 'यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम्। महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ती'ति कम्पनाधिकरणविषयवाक्यश्रावितं तदित्यर्थः। पूर्वश्लोकार्थ इति। अनवद्यभक्तिप्राप्तिरूपे ॥ ३४ ॥

१-९-३५ सपदीत्यत्र। तृतीयो गुण इति। तमो गुणः। पूर्ववदिति। तादृशत्वेपि भक्तवत्सल इत्यर्थः ॥ ३५ ॥

व्यवहितेत्यत्र। विहिता इति। विशेषेण हिताः। आत्मविचारस्वरूपमाहुः

१-९-३६ ममैव क्रियेत्यादि। 'मत्तः सर्वं प्रवर्तते' 'यदा यदा हि धर्मस्य' 'वासांसि जीर्णानि' इत्यादिवाक्यान्यत्रोदाहरणत्वेन बोध्यानि। अस्य परमत्वे परः को वेत्यत आहुः स एव पर इत्यादि। तथा च परत्वेपि परमत्वं प्राप्तस्येत्यर्थः। अत्रापि 'मत्तः परतरं नान्यत्' 'मत्तः स्मृतिर्ज्ञानमपोहनं चे'त्यादि द्रष्टव्यम्। एवं रूपभेद इवायातीत्यरुच्या पक्षान्तरमाहुः तदवस्थां प्राप्तस्येति। आत्मविद्योपदेशेन युद्धकारणेन चास्याः अवस्थायाः सात्त्विकराजसत्वं ज्ञेयम् ॥ ३६ ॥

स्वनिगमेत्यत्र। अधिका चेत्यादि। 'अहं भक्तपराधीन' इत्येवमधिका कृते-

१-९-३७ त्यर्थः। रथस्यैव चक्रे इति। तेन भारते क्षुरान्ततीक्ष्णाग्रत्वकथनमपि सुदर्शनावेशादितिबोधितम्। दोषाभावमिति। प्रतिज्ञात्यागेपि दोषाभावम्। भक्षणाय प्रवृत्तत्वेन फलावदारणवन्मारणार्थत्वाभावादिति। उपर्याच्छादनार्थमिति। भारते 'व्यालम्बी पीतान्तपट' इति विशेषणेनोत्तरीयस्य पीतान्तत्वकथनाद्रविकरगौरवत्वाभावेन न वेदरूपतेति मायारूपत्वात्तदर्थमित्यर्थः। आच्छादनस्वरूपमाहुः अर्जुनो रक्षित इति। मुक्त्यर्थतामाच्छायार्जुनरक्षार्थता प्रकटीकृतेत्यर्थः। द्वितीयमाहुः स इत्यादि। स इति। उत्तरीयपटः। रतिकार्यकर्तृत्वादिति। मुक्तिदानकर्तृत्वात्। अत्र स्वप्रतिज्ञात्यागस्तामसोऽभियानं राजसमिति तामसराजसत्वमवस्थाया ज्ञेयम् ॥ ३७ ॥

शितेत्यत्र। अत्राततायिनो म इति सम्बन्धषष्ठी, तेन मत्सम्बन्धी सन् मद्वधार्थ-

१-९-३८ मभिससारेत्यर्थो भवति, तथा सति शितविशिखहतत्वादिकं राजसं वधार्थमभिसरणमित्यवस्थाया राजसतामसत्वम् ॥ ३८ ॥

१-९-३९ विजयेत्यत्र। ईक्षणीयतया सुखजननं सात्त्विकं हतानां स्वरूपप्रापकत्वं तामसमित्यवस्थाया राजसतामसत्वमित्यत्रस्थायाः स्वथात्वम् ॥ ३९ ॥



१-९-४० ललितेत्यत्र। उन्मदान्धपदोक्तमोहजनकत्वं तामसं निरीक्षणं च सात्त्विकं तदेवोक्तकार्यजनकत्वान्मुख्यमित्यवस्थायाः सात्त्विकतामसत्वम् ॥ ४० ॥

मुनीत्यादि। न त्वेतस्मिन्निति। न त्वेतच्छरीरान्तर्वर्तीत्यर्थः। अत्र राजसूयस्य

१-९-४१ राजकर्तृकत्वे राजसत्वात्तत्सम्बन्धितयार्हणीयत्वस्य राजसत्वम्। ज्ञानोत्थं निश्चयात्सात्त्विकत्वम्। सावस्था तादृशी ज्ञेया ॥ ४१ ॥

१-९-४२ तमिममित्यत्र। न तु जीववदिति। नतस्याभिमानितयेत्यर्थः। क इति। भिन्ना अभिन्ना वा ॥ ४२ ॥

इति श्रीप्रथमस्कन्धसुबोधिनीप्रकाशे नवमाध्यायविवरणम् ॥ ९ ॥

## अथ दशमाध्यायविवरणम्।

अथ दशमाध्यायं विवरिषवः पूर्वाध्यायार्थमनुवदन्तः प्रस्तुतस्यार्थमाहुः नैश्चि-

१-१०-० न्त्येत्यादि। निरूप्यत इति। नैश्चिन्त्यसिद्धये निरूप्यते। एतेन सर्वभक्तसमाधानपूर्वकस्वस्थानप्राप्तिरूपं तृतीयकार्यं यत्प्रागुक्तं तेनास्यार्थसङ्गतिर्बोधिता। तत्प्रकारमाहुः पाण्डवेत्यादि। ननु पाण्डवसुखदानं त्वादावेव वक्ष्यते, शेषे त्वध्याये सर्वेषां भगवत्परत्वमिति तस्य कथमध्यायार्थेन संगतिरित्यत आहुः कृष्णेत्यादि। तथा च शेषे हेतुतयोच्यते इति सैव सङ्गतिरित्यर्थः। एतेन पूर्वमध्यायार्थत्वेनोक्तं सर्वमुक्तिदातृत्वमपि समर्थितम्।

एवं सर्वमर्थं सङ्गृह्य व्याख्यातुं कथासङ्गतिं वदन्तः श्लोकमवतारयन्ति पूर्वा-

१-१०-१ ध्यायेत्यादि। राज्यस्थितिमिति। राज्ये युधिष्ठिरस्य स्थितिप्रकारम्। कौरववधस्तु घटत इति बोधयितुमाहुः अवध्येत्यादि। प्रकारान्तरेणापि तेषामधर्मित्वबोधनायाहुः अस्वेत्यादि। नन्वेवं वधे दोषाभावे राज्यकरणस्य कथं दुष्टतेत्यत आहुः अनेनेति। रिक्थस्पृध्पदेन। इति सम्बन्ध इति। एवं सन्देहबोधनाय सर्वत्र शत्रुप्रभादौ सम्बन्ध इत्यर्थः। सन्देह इति तु पाठः प्रतिभाति। तदासत्र ??। इदानीं वेति। वाशब्द एवकारार्थो वाक्यालङ्कारे। प्रतिकूलत्वे इति। पूर्वविरोधप्रतिकूलत्वे ॥ १ ॥

वंशामित्यत्र। अन्योन्येत्यादि। तथा च स्वयंकृतत्वात्स्वयं प्रतीकाराभाव इत्यर्थः।

१-१०-२ अभिवृद्धीत्यादि। तथा च वंशवृद्ध्यर्थं संरोहितवानिति भावः। ननु मोक्षदानार्थमुद्यतस्तद्विरुद्धे राज्ये कथं निवेशितवानित्याकाङ्क्षायामाहुः अथवेत्यादि ॥ २ ॥

१-१०-४ काममित्यत्र। कर्मादिना इति। त्रिविधसौख्यरूपा गुणा इति शेषः ४

उषित्वेत्यादीनां तात्पर्यमाहुः कारिकया । धृथैवेत्यादि । भक्तिश्च ज्ञानं च तत्कृता उत्सवाश्चेति समासः । नन्वन्ते मुक्तिं विनापि वैयर्थ्यमेवेति तन्निवृत्तये
१-१०-७ आहुः कृष्णेत्यादि । 'विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिण' इत्यादिवाक्यात् तथेत्यर्थः । हस्तिनापुरे भगवतो या स्थितिः सा मथुरादिस्थितेर्विलक्षणेति बोधनाय तत्तात्पर्यमाहुः हस्तीत्यादि । वास इति । भगवतः स्थितिः । निरन्तरस्थितिर्मथुरादिसम्बन्धिनी । कालवशादेव स्थितवान्, न स्वेच्छयेति वारयितुमाहुः कालस्येत्यादि । स्थितेः कथं मुक्तिहेतुत्वमित्याकाङ्क्षायां तत्प्रकारमाहुः स्थित्वेत्यादि । भाव आशयः । गान्धार्यां विराटतनयातिदेशस्य तात्पर्यमाहुः यथेत्यादि । उत्तराया भर्ता मारितः, पुत्रो रक्षितः, गान्धार्याः पुत्रो मारितः, भर्ता रक्षित इत्येकैकमारणरक्षणसाम्यात्तथेत्यतिदेशोक्तिरित्यर्थः । विरहासहनोक्त्यवसरे राजार्जुनौ कुतो नोक्तावित्यत आहुः राजेत्यादि । एकशेषादिति । 'पुमान् स्त्रिये'ति सूत्रोक्तादेकशेषात् ॥७-१०॥

सत्सङ्गानित्यत्र । लौकिकमित्यादि । भगवत्प्रभावादिना भगवत्यलौकिकत्वस्य ज्ञातत्वात्सर्वप्रकारेण लौकिकं न भवतीत्यर्थः । विरहस्य दुःसहत्वं सम-
१-१०-११ र्थयितुं विरहानुभवं व्युत्पादयन्ति उपदिष्टेत्यादि । उपदिष्टेपीत्याद्युक्तदशाद्वये सत्सङ्गादित्यादिकं यथायथं रसोत्पत्तौ हेतुद्वयम् । सत्सङ्गादिजन्यस्य रसस्य ज्ञानादिनाऽभवने हेतुमाहुः मानसेत्यादि । तथा च तद्वैलक्षण्येन तयोः सकाशाज्जायमानस्य सुखस्यापि वैलक्षण्ये हेतुभेदाद्यथा तत्र रसवैजात्यम्, तथात्रापि रसवैजात्यमिति ज्ञानादिना सत्सङ्गादिजन्यरसाभवने सिद्धेऽन्तर्यामित्वेन सत्ता ज्ञानदशायामपि बहिस्तदभावाद्विरहो युक्त एवेत्यर्थः । ननु सुखानुभवादानमात्मा वा मनो वा, अतस्तयोर्विद्यमानत्वेन तत्र सत्ताज्ञाने विद्यमाने निमित्तमात्रवैजात्येन कार्यवैजात्यं न युक्तमिति ज्ञानादिनापि तादृशरसः सम्भवदुक्तिक इति विरहोनुपपन्न इति शङ्कायामाहुः स्त्रिया इत्यादि । चात्पुंसः । दोषस्फूर्त्येति । दोषपूर्विकया स्फूर्त्या । तथा च स्रक्चन्दनवनितादिषु पर्यायेण द्वेषेच्छादिदर्शनात्तन्निष्ठरसस्य स्वनिष्ठकामादिदोषकृतया प्रियत्वादिस्फूर्त्या अभिव्यक्तिर्दृश्यते इति तस्याः उत्कटकामतया तस्यां कामस्य सार्वदिकत्वात् तस्याः स्वतः सुखं सदा स्यात्, तथा सति विरहदुःखं न तस्याः स्यात्, तच्च दृश्यते, अतो निमित्तवैजात्ये कार्यवैजात्यमवश्यमङ्गीकार्यम् । तथा सति बहिः सम्बन्धजन्यस्य रसस्य कामादिदोषैरेवाभिव्यक्तेर्ज्ञानादिनाऽभवनाद्विरहो युक्त एवेत्यर्थः । ननु रसस्य सुखविशेषरूपत्वात् तदभिव्यक्तिं प्रति स्वनिष्ठदोषस्फूर्तेः कारणता न युक्ता, सायुज्यादावभिव्यक्तस्यात्मसुखस्य दोषं विनैवाभिव्यक्तेर्व्यतिरेकव्यभिचारात् । अतो यथा तत्र, तथा भगवद्रसाभिव्यक्तावपीति ज्ञानादिना रसाभिव्यक्तेर्विरहो न युक्त इत्यत आहुः



सायुज्येत्यादि । भिन्नतया स्थितज्ञानमिति । भिन्नतया स्थित इत्याकारकं ज्ञानम् । तथा च कामाद्यभावेपि दोषान्तरस्य तत्र सत्त्वात् न व्यभिचार इतीहापि तेनैवाभिव्यक्तिरिति ज्ञानेन रसाभावाद्विरहो युक्त एवेत्यर्थः । भिन्नज्ञानादेर्दोषत्वे युक्तिमाहुः अन्यथेत्यादि । भिन्नत्वज्ञानादेर्दोषत्वे शङ्कते नन्वित्यादि । कार्यदुष्टत्वस्य कारणे दोषताप्रयोजकत्वात् प्रकृते च कार्यस्य भक्तिप्राचुर्यादिबोधकतयाऽदुष्टत्वाद्विरहकारणस्य भिन्नत्वज्ञानादेर्गुणत्वमेवाङ्गीकार्यम्, न तु दोषत्वमित्यर्थः । तदुक्तमुपगम्य परिहरन्ति सत्यमित्यादि । तथा च यद्यपि त्वदुक्तयुक्त्या गुणत्वमुचितम्, तथापि यथा 'क्षुत्खलु वै मनुष्यस्य भ्रातृव्यः अशनया मृत्युरेवे'त्यादिश्रुत्या बुभुक्षादीनां दोषत्वकथनादप्रयोजकम्, तथा 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुत' इत्यादिश्रुत्या भिन्नत्वज्ञानादेर्दोषत्वकथनादेतयोरपि गुणत्वमप्रयोजकमित्यर्थः । ननु बुभुक्षादीनां लोकेपि दोषत्वात्तद्दृष्टान्तेनात्र गुणत्वत्यागो नोचित इति शङ्कायां लोके तेषां दोषत्वं परिहरन्ति अन्यथेत्यादि । तथा च यथा लोके तेषां गुणत्वं शास्त्रे दोषत्वम्, एवमेतयोरपि भक्तौ गुणत्वं शास्त्रे दोषत्वमित्यर्थः । सिद्धमाहुः तस्मादित्यादि । रसस्य दोषाभिव्यङ्ग्यत्वनियमात् तथेत्यर्थः । एतादृशस्य रसजनकत्वे शास्त्रीयदशापेक्षयैतादृशदशाया उत्तमत्वे च मानमाहुः अत एवेत्यादि । तथा चास्य दर्शनस्य दोषजन्यत्वेपीदमेवाधिकं 'गोविन्दभुजगुप्तायां द्वारकायां कुरूद्वह । अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालस' इत्यादिवाक्यादतोनेन ज्ञानोपमर्दाद्विरहो युक्त इत्यर्थः । आधिक्ये मानान्तरमाहुः किञ्चेत्यादि । तथा चास्मादेव विशेषान्मुक्तेषु देहसम्बन्धं मुक्तानां सृष्टिं च करोतीत्यतो ज्ञानादिदशापेक्षयेयमेवाधिकेत्यर्थः । तेन सिद्धमाहुः अत इत्यादि । यतो भगवान् 'क्वचिद्गुणोपि दोषः स्याद्दोषोपि विधिना गुण' इतिवत्तत्तत्कार्यार्थं ततत्तथा तथा व्यवस्थापयतीति तथेत्यर्थः ।

श्लोकव्याख्याने सत्सङ्गपदं पञ्चम्यन्तमपि सम्भवतीत्याशयेनाहुः तदनन्तरमिति । ननु भगवद्विरहासहनप्रस्तावे सत्सङ्गत्यागाशक्तिनिरूपणं कुत्रोपयुज्यत इत्याकाङ्क्षायामाहुः यदर्थमित्यादि । तथा च भगवत्संबन्धादेव तत्त्यागानिच्छेति तद्विरहासहनप्रस्तावे तदुक्तिरुचितैवेत्यर्थः । प्रकारान्तरेणाप्युपयोगमाहुः अत्याग इत्यादि । सिद्धमाहुः कीर्तेरित्यादि । पूर्वमुक्तत्वादिति । स्तुतिप्रस्तावे पूर्वाध्याये उक्तत्वात् ॥ ११ ॥

१-१०-१२ वीक्षन्त इत्यत्र । न विरोध इति । सम्बन्धस्य न विरोध इत्यर्थः ॥१२॥

मृदङ्गेत्यत्र । भेर्या आनद्धभेदे गणना, 'ताड्यमानासु भेरीष्वि'ति
१-१०-१४ भारते प्रयोगाज्ज्ञेया ॥ १४ ॥

प्रासादेत्यत्र । 'भक्तिधर्मज्ञाने'त्यत्र धर्मपदेन स्त्रीस्वभावरूपो धर्मो
१-१०-१५ गृह्यते ॥ १५ ॥

उद्धव इत्यत्र । विष्णोः पद इत्यादि । अस्यां श्रुतौ मधुन आनन्दादेर्भ-
१-१०-१७ गवत्पदाधिकरणकत्वकथनात् तेषां तादृशज्ञानवत्त्वज्ञापनाय मधुपद-
मुक्तमित्यर्थः ॥ १७ ॥
अभ्युपगन्तेत्यत्र । तथापीति । अनुवादत्वेनाप्रामाण्यत्वेपीत्यर्थः ।
१-१०-१८ गृहीता इति । प्रमाणत्वेन गृहीताः ॥ १८ ॥

स वै किलेत्यत्र । प्रमाणे नेति । अत्र प्रमाण इति सप्तम्यन्तम् । नेति भिन्नं
पदं बोध्यम् । प्रतिपाद्यत इतिशेषः । तत्र गमकमाहुः आत्मेत्यादि ।
१-१०-२० 'पूर्वमेवे'त्यादिश्रुतिस्तु आरुणकेतुकब्राह्मणस्था । तथा च स पुरुषः
पुराणो भविष्यति, नायमित्यर्थः । अत्रेति । उक्तश्रुतिषु । इदानीन्तनैरिति । ब्रह्मविष्णु-
महेशादिभिः । नन्वस्मदाद्यपेक्षया पुरातनत्वं तेषामस्तीत्यतिव्याप्तिर्दुर्वारेत्यत आहुः यत्कि-
ञ्चिदित्यादि । कयाचिदिति । 'पूर्वमेवे'तिश्रुतेः कूर्मवाक्यत्वेन कूर्मस्यावतारत्वरूपया
मायाभर्तृत्वरूपया वेत्यर्थः । एतदिति । एकस्य सत्त्वम् । अग्रे तदानीमिति । 'सदेव
सौम्येदमग्र' 'नासदासीन्नो सदासीत्तदानी'मित्यादिश्रौतशब्दोक्तिः । प्रमाणाभावा-
दित्यादि । विशेष्यान्वितैवकारेण सदसन्निषेधेन च तदभावात् । पश्चादिति । 'रेतोधा
आस'न्नित्यादिश्रुत्युक्त वक्राद्युत्पत्त्यनन्तरम् । तदानीन्तनेत्यादि । पाश्चात्यव्यवहा-
रमाश्रित्य ततः पूर्वस्थितिबोधनार्थं तथोक्तमित्यर्थः । अत्र गमकमाहुः उभयेत्यादि ।
तथा च 'सदासीदग्र आसी'दित्येवमुभयसत्ताप्रतिपादने तथेत्यर्थः । ननु तत्र कालस-
त्तानूद्यत एव, न तु प्रतिपाद्यत इति न वाक्यभेद इत्यत आहुः ततः पूर्वमित्यादि ।
'सदेवे'त्यादिश्रुतिः सर्वतः पूर्ववृत्तान्तं वदन्ती एवकारेण चेतरं व्यवच्छिन्दन्ती
प्रमाणान्तरस्याप्यसत्तां पूर्वं बोधयतीति तदभावान्नानुवादः शक्यवचन इति काल-
प्रतिपादकत्वमेवादरणीयम्, तथा सति दोषस्तदवस्थ इत्यर्थः । कालप्रतिपादकत्वे
दूषणान्तरमाहुः एकमित्यादि । पूर्वं कालसत्ताप्राप्तौ तद्भ्रमनिरासायात्र वाक्यशेषे
एकपदमन्ययोगव्यवच्छेदपूर्वकमुक्त्वा एकपदस्य वाचकत्वान्मुख्येतरव्यवच्छेद एव
वाक्यार्थ इतिभ्रमनिरासायाद्वितीयपदस्यात्र श्रावणात्तद्विरोध इत्यर्थः । एतद्व्याकुर्वन्ति
कथमित्यादि । निराकुर्वन्निति । अद्वितीयपदेन निराकुर्वन् । बोधनसमयानुसा-
रेणेति । बोधनमर्यादानुसारेण । ननु मास्तु कालः, तथापि आसनक्रियाया विद्य-
मानत्वात् कथमेकसत्तासिद्धिरित्यत आहुः आसनेत्यादि । पूर्ववद्वेति सिद्धान्तानु-
सारेणेति । 'पूर्ववद्वे'त्यधिकरणे यः सिद्धान्तस्तदनुसारेण । जगदात्मनीति । अनारोपि-
तानागन्तुकं रूपमात्मपदेनोच्यते, तथा च जगतोऽनारोपितानागन्तुकरूपे इत्यर्थः । काले-
त्यादि । कालस्यापि क्वचिदुपादानत्वकथनात्तादृशः कालो भविष्यतीति कथमेतदेकसत्ता-



सिद्धिरित्याशङ्कायां तन्निराकरणार्थमित्यर्थः । ईश्वर इति । 'प्रकृतिर्ह्यस्योपादानमाधारः
पुरुषः परः । सतोऽभिव्यञ्जकः कालो ब्रह्मतत्त्रितयं त्वहम्'इति वाक्यात्सर्वेषामपि मूलरूपः
स्वयमेवेत्यर्थः । जीवेत्यादि । ननु तथापि 'नित्यो नित्याना'मित्यादिश्रुतौ जीवानां
नित्यत्वनिरूपणात्तत्सत्तायां कथमेतदेकसत्तेति शङ्कायां जीवनिराकरणार्थमित्यर्थः ।
नितरामित्यादि । 'सर्व एवात्मानो व्युच्चरन्ती'ति श्रुत्या व्युच्चरणोत्तरमेवांशानां जीवरू-
पेण प्राकट्यात् ततः पूर्वमप्राकट्येन तत्सिद्धिरित्यर्थः ॥ २० ॥

स एवेत्यत्र । सम्प्रेति । सृष्टिकरणे । कालं सृष्टवानिति । तृतीयस्कन्धे काल-
निरूपणे 'पुरुषस्तदुपादानमात्मानं लीलयाऽसृज'दितिवाक्यादित्यर्थः ।
१-१०-२१ द्विविधेति । वक्ष्यमाणकार्यद्वयकरणाद्विविधा । प्रतिकृत्येति । पूरि-
तपात्रसञ्चायकतुल्यरूपया । स्वेच्छयेति । अविद्याकामकर्मभिर्भ्रमणात् स्वकामेन ।
तदेति । एवं कार्यद्वयकरणे । जीवार्थेति । जीवपुरुषार्थसिद्ध्यर्था । केवलया तया
सृष्टिकरणे मोक्षप्रतिबन्धादिति । इदानीन्तनाया इति । जीवसृष्टिकालसम्बन्धिन्याः ।
जगद्रूपेण भवनार्थं भगवतस्तत्सम्बन्धप्रकारमाहुः तद्व्यापारेत्यादि । 'सर्वयोनिषु कौन्तेय
मूर्तयः प्रभवन्ति याः । तासां ब्रह्म महद्योनिरहं बीजप्रदः पिते'तिवाक्यादित्यर्थः । वेद-
करणप्रयोजनमाहुः केवलेत्यादि । तेन व्यामोहितेष्विति । 'यन्नामभिध्यायति धीर-
पार्थै'रितिवाक्यात्तथेत्यर्थः ॥ २१ ॥

स वा अयं यत्पदमित्यत्र । ननु ब्रह्मविद्भिः समाधिनान्तरात्मोपास्यते इति
बहिर्विद्यमानस्यास्य कथं तथात्वमित्याकाङ्क्षायामाहुः बाह्येत्यादि ।
१-१०-२२ पूर्वमिति । 'स वै किलाय'मिति श्लोके 'य एक आसी'दित्यनेनेत्यर्थः ।
तद्वाक्यादिति । 'आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा । असितो देवलो व्यास'
इति तेषां वाक्यात् । त्वमिति । त्वम्पदवाच्यत्वेनोपदिष्ट इत्यर्थः ॥ २२ ॥

स वा अयं सखीत्यत्र । जीवतुल्यता स्यादिति । अहन्ताममताभ्यां संसारा-
सक्तिः स्यादित्यर्थः । दोषसम्बन्ध इति सप्तमी । नेति भिन्नं पदम् ।
१-१०-२३ क्षतिरिति । सौन्दर्यहानिः । एतेन 'अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं
जग'दित्यादिश्रुत्युक्तोवयवावयविभावो जीवब्रह्मणोर्बोधितः । स इति । श्वैत्यश्यामत्वादि-
सम्बन्धवद्धोकृत्वसम्बन्धः । गुणत्वे हेतुमाहुः तदर्थमित्यादि । जीवार्थमेव प्रपञ्चस्य
भोग्यत्वेन निष्पन्नतया भोग्यत्वरूपतत्स्वभावाभिव्यञ्जकत्वादित्यर्थः । ननु कर्तृत्वभोक्तृ-
त्वयोः साहचर्यस्य लोके दृष्टत्वात्तर्हि कर्तृत्वमप्यस्त्विति चेत्, तत्राहुः अंशानामित्यादि ।
तथा च व्याप्त्यभावे साहचर्यमात्रमप्रयोजकमिति न तत्सिद्धिरित्यर्थः । त्रिपदबहुव्रीहेः
क्वाचित्कत्वाद्व्याख्यानान्तरमाहुः सखिभिर्वेत्यादि । अत्रेति । अनुगीतत्वे । वक्तृत्व-

मिति । कविनिबद्धायाः कथायाः सखीनां वक्तृत्वम् । विशङ्कलिततयेति । भिन्नतया । प्रक्रियाधा इति । प्रकरणस्य । सर्ववेदान्तप्रत्ययाधिकरणं साधनाध्यायतृतीयपादारम्भे । सर्वत्र प्रसिद्धोपदेशाधिकरणं प्रथमस्य द्वितीयपादारम्भे । तत्रेति । सर्गादिषु ॥ २३ ॥

यदा हीत्यत्र । सामान्यविशेषभेदेनेति । लोकस्थितिलौकिकस्थितिभेदेन । तत्रेति । स्थितिसर्गसंहारेषु । इत्यादीति । वाक्यादितिशेषः । तत्र
१–१०–२४ यदेति । उपमर्देन प्रादुर्भावे विशेषस्थितिकाले । स्थिताविति । लौकिकस्थितौ । निवेद्येति । स्वदौर्बल्यं निवेद्य । नैमित्तिकमुक्तम् । यदापदेन कालविशेषबोधनाद्भगवदागमनं नैमित्तिकमुक्तमित्यर्थः । वर्तुलमिति । लोष्टवन्निबिडम् । निमित्तमिति । अवतरणे निमित्तम् । यदा यदेत्यादि । तथा चास्मिन् वाक्येऽहमितिपदादस्यैव तत्कार्यम्, न सगुणस्य विष्णोरित्यर्थः ॥ २४ ॥

अहो अलमित्यत्र । सतामिति । भगवदीयानां यादवानाम् । तस्य
१–१०–२५ पूजन इति । तत्कृते पूजने । सर्वैरिति । देवै ऋषिभिश्च ॥ २५ ॥
१–१०–२६ अहो धतेत्यत्र । स्थितिरिति । भगवत्स्थितिः । तत्रत्यानां वा ॥२६॥

नूनमित्यत्र । एवमिति । मर्यादापुष्टिभेदेन स्त्रीणां स्वरूपे भेदद्वयम् । एकमिति । गृहीतपाणित्वम् । भगवत्फलमिति । भगवत्सम्बन्धिफलम् । 'सुपां
१–१०–२७ सुलु'गिति लुप्तविभक्तिकं सखिपदमित्याशयेनाहुः हे सख्य इति ॥२७॥

एवंविधा इत्यत्र । पुरयोषितामित्यनेन तासां धार्ष्ट्यबोधनमुच्चैः कथने
१–१०–३० हेतुर्बोध्यः । अभिनन्दने हेतुः सत्यकथनं बोध्यम् ॥ ३० ॥
१–१०–३२ अथेत्यत्र । उभयत्रेति । मिलने भिन्नतया गमने चेत्यर्थः ॥ ३२ ॥

इति श्रीप्रथमस्कन्धसुबोधिनीप्रकाशे दशमाध्यायविवरणम् ॥ १० ॥

---

## अथैकादशाध्यायविवरणम् ।

अथैकादशाध्यायं विवरिषवोऽवसररूपां सङ्गतिं बोधयितुं पूर्वाध्यायार्थमनुवदन्तः प्रस्तुतार्थमाहुः एवं कौरवेत्यादि । कथमुदीर्यत इत्याकाङ्क्षायां तद्धेतूनवान्तरार्थानाहुः प्रवेशे चेत्यादि । एवं त्रिधोत्सवकथनेन कथं सर्वभक्तसौख्यमत आहुः प्राकृतेत्यादि । तथा च तेषां सात्त्विकादिभेदेन त्रैविध्यात्तेन तथेत्यर्थः । शास्त्रार्थं जानतां कथमेवमत आहुः कृष्णोच्छ्रातस्तदिति । प्रत्यापत्तिः पूर्वसजातीयसुखस्य पुनः प्राप्तिः । तथा चैवं सर्वसौख्यं निरूप्यत इत्यर्थः । प्रवेशे उत्सवो मङ्गलात्मेति तानि गणयन्ति



शङ्खनाद इत्यादि । स्निग्धदर्शनं स्निग्धविषयकं भगवत्कृतं दर्शनम् । तदन्त इति । तत्पुरोभागे ।

तत्रोपनीतेत्यत्र । तत्रेतिमूलस्थपदस्य भगवन्निकट इत्यर्थः । सूर्योद्देशेनेत्यादिना उपढौकनमित्यन्तेन व्याख्यानेन इदानीन्तनैरप्येवंभावेनोप-
१–११–४ ढौकनं कार्यमितिशिक्षा बोधिता । कार्यमिति । भगवता कार्यम् । तथा च निजलाभेन भगवल्लाभेन आत्मारामं पूर्णकामं यथा स्यात्तथा आदृता इति योजना बोध्येर्थः । एवं श्लोकद्वयस्य प्रत्येकवाक्यत्वपक्षे द्वितीयश्लोके तिङन्तक्रियाविरहेण क्लिष्टमिव मन्वाना युग्मवाक्यत्वमङ्गीकृत्य पक्षान्तरमाहुः अथवेत्यादि । नन्वादृता इत्यन्तमेकं वाक्यम्, आत्मेत्याद्यर्भका इत्यन्तमपरमित्येवमादरणीयं दूरान्वयदोषाभावादित्याशङ्कायामाहुः स्तोत्रेत्यादि । तथा चैवमन्वयाङ्गीकारे कर्माकाङ्क्षायाः पूर्वार्धेन पूरणात्पितरमित्याद्यर्धस्यासङ्गतिः पुनरादाने समाप्तपुनरात्तत्वं दूरान्वयश्चेत्यतो नायं पक्षो युक्तः, किन्तु पूर्वोक्त एव युक्त इत्यर्थः । अस्मिन् पक्षे प्रतिर्लक्षणे कर्मप्रवचनीयस्तद्योग इयं द्वितीयेत्याशयेन द्वितीयान्तानामर्थमाहुः उत्कृष्टैरित्यादि । अवान्तरप्रकरणविचारे उक्तश्रुतेर्जीवप्रकरणस्थत्वेनानुपष्टंभकत्वमित्यरुच्या पक्षान्तरमाहुः अथवेत्यादि । तिरोभावानुपपत्तिदशायामिति । द्वन्द्वान्ते श्रूयमाणस्य दशाशब्दस्य प्रत्येकमभिसम्बन्धः । अव्यक्तादिनिधनस्त्वादिति । अव्यक्तमादिनिधनयोर्येषां पदार्थानां तादृशत्वादिति व्यधिकरणपदो बहुव्रीहिः । उक्तमिति । व्याख्यातमित्यर्थः । निजपदस्य स्वरूपवाचकत्वपक्षेऽर्थमाहुः अवतीर्णेत्यादि । अन्यैरादृतत्वादुत्तरार्धे दृष्टान्तवाक्यत्वाङ्गीकारेण दोषाभावाच्च तृतीयामपि योजनामङ्गीकृत्य तस्मिन् पक्षेऽर्थमाहुः स्तोत्रेत्यादि ॥ ५ ॥

नताः स्मेत्यत्र । नत्राद्यानामिति । पुरुषेष्वाद्यानाम् । वाक्यार्थो न भवतीति । समभिव्याहारलभ्यो न भवतीत्यर्थः । अत्र नमनमात्रवाक्यं
१–११–६ स्त्रीणाम् । तत्पूर्वकं सर्वं ज्ञानिनामिति बोध्यम् ॥ ६ ॥

भवायेत्यत्र । उद्भवायेति । तथा च 'भवाय भवे'ति प्रार्थनमेव वक्तॄणां विषयित्वगमकं ज्ञेयमित्यर्थः । जरायुवदित्यादि । तथा च त्वन्निष्ठमातृता-
१–११–७ निर्वाहकत्वात् गौण्या वा तस्या मातृत्वमिति न तथा तव मातृत्वहानिरित्यर्थः । तदर्थविहितेति । भगवदर्थविहितेत्यर्थः । तत्रेति । कर्मज्ञानभक्तिषु । मोहनार्थं वेति । वाशब्द एवकारार्थः । 'छागो वा मन्त्रदर्शना'दित्यादिवत् । तत्रेति । तेषु पाषण्डादिमार्गेषु जातेषु । तर्हि भगवति कथं सद्गुरुत्वमित्यत आहुः त्वमित्यादि । इदमष्टमस्कन्धसमाप्तौ मत्स्यावतारस्तुतौ सत्यव्रतवाक्यम् । 'जनो जनस्यादिशतेऽसतीं मतिं यया प्रपद्येत दुरत्ययं तमः । त्वं त्वव्ययं ज्ञानममोघमञ्जसा प्रपद्यते येन जनो निजं पद'-

मिति । तस्माच्चथेत्यर्थः । गुरुशुश्रूषयेतिवाक्यादिति । ‘नाहमिज्याप्रजातिभ्यां तपसोपशमेन वा । तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथे’ति वाक्ये साधनान्तरापेक्षया तस्या एव स्वतोषसाधनत्वकथनाच्चथेत्यर्थः । अङ्गदेवता इति । अङ्गकर्मदेवता आवरणदेवताश्च । कृतीति । अनष्टसत्कर्मा । ‘धर्मः क्षरती’त्यादि । यथातिवत् कथञ्चित् कथनेपि नाशसंभवात् । तत्र प्रायश्चित्ताभावबोधनेन पुनःकर्मान्तरेण पुनस्तत्संपादनाशक्तेश्चेत्यर्थः । द्वितीयवाक्यस्थस्य कृतशब्दस्योपकारवाचकत्वपक्षेऽपि ‘न ते मापङ्क जानन्ती’ति वाक्येन भगवत्कृतोपकाराज्ञाने तद्वननाच्चथेति बोध्यम् ॥ बभूविमेति । प्रार्थनायां लिट्छान्दसः ७

अहो सनाथा इत्यत्र । अपेक्षाभावान्नियन्ता नापेक्ष्यते इति । सापेक्षो

१-११-८ ह्यधिकं गृह्णातीति तादृशवारणार्थं नियन्त्रपेक्षा, भगवत्पराणां त्वपेक्षाया एवाभावात् ग्रहणं दूरापेतमतो नापेक्ष्यते । तथा च तदभावादेव तेषां सर्वतो भयाभाव इति भावः । त इति । भगवत्पराः । वयमिति । अल्पभक्तियुक्ताः । इदं पुनरिति । आश्चर्यान्तरमित्यर्थः । पुनस्ततोन्यदाश्चर्यान्तरमाहुः किञ्चेत्यादि । अनेनेति । स्मितपदेन । उभाभ्यामिति । उक्तव्यञ्जिताभ्यां स्नेहदयाभ्याम् ॥ ८ ॥

मधुभोजेत्यत्र । पञ्चसु श्लोकेषु वर्णनीयानर्थान् सङ्गृह्णन्ति अधिष्ठानेत्यादि ।

१-११-११ एतेषां सुन्दरमित्यादिनान्वयः । अङ्गविभेदत इति । अङ्गानां द्वारादीनां विभेदतः अलङ्कारकृतवैशेष्यादित्यर्थः । अधिष्ठातॄन् वर्णयन्तीति । विद्यातुल्यत्वं व्युत्पादयितुं सा यथाधिष्ठातृशुद्धौ स्थिरा भवति, तथेयमिति बोधनाय तान् वर्णयतीत्यर्थः । षड्भिर्गुणैस्तत्कथने कथं स्थैर्ये तौल्यमित्यतो व्युत्पादयन्ति सत्त्वेत्यादि । पुरी चेत्यादि । तथा चेन्द्रियैर्गोपने यथा सत्त्वरूपान्तःकरणस्यानाशः, तथा तैर्गोपने पुर्या इति तथेत्यर्थः । ननु देहं विनेन्द्रियैर्न सत्त्वरक्षेत्यनस्तत्कार्यकारित्वं विशेषणेन बोधयन्ति यथात्मा देह इत्यादि । नन्वत्र गुणतो रक्षा विवक्षिता, सा तु नैवं सिद्ध्यतीति पक्षान्तरमाहुः वायुर्वेति । आत्मपदेन कथं वायुलाभ इत्यत उपपादयन्ति अहं मनुरित्यादि । तथा च यद्यपि बृहदारण्यकेऽस्याः श्रुतेर्वायुपरत्वं न सिद्ध्यति, तथापि बह्वृचसंहितायां सिद्ध्यतीत्यर्थः । ननु वायुरत्र कौष्ठ्यो विवक्षितः, स त्वेवमपि नायातीत्यत आहुः मण्डलेत्यादि । तथा च मण्डलानां दशत्वेन ‘दश वै पशुषु प्राणा’ इति श्रुत्युक्तप्राणसमानसङ्ख्याकत्वात्तथा तल्लाभाद्यथोपपत्तिरित्यर्थः । अत्र व्याख्यानक्लेशादात्मपदस्य भगवत्परत्वमङ्गीकृत्य पक्षान्तरमाहुः बलं सेना चेत्यादि । तथा च यथान्तर्यामिणा सन्मार्गप्रेरणेनान्तःकरणसत्त्वं रक्ष्यते, तथैतैर्गृहरक्षणेन पुरीति तथेत्यर्थः । सर्वप्रवेशन इति । सर्वेषां यादवानां पुर्यां प्रविश्य स्थितौ । तथा च यथा वासुकिप्रभृतिभिः प्रविश्य स्वपुरीं भोगवत्याख्या रक्ष्यते, तथेत्यर्थः । अस्मिन् दृष्टान्ते प्राणा



नायान्तीति पक्षान्तरमाहुः शरीरमित्यादि । तेषां पुर्या भोगवतीति नाम तथा न प्रसिद्धमिति पक्षान्तरमाहुः गङ्गाप्रवाहो वेति ।

१-११-१३ गोपुरेत्यत्र । उत्तराङ्गमिति । उत्तरश्लोके वक्ष्यमाणा यान्तःशोभा तदङ्गमिदं विशेषणमित्यर्थः ॥ १३ ॥

१-११-१५ द्वारि द्वारीत्यत्र । अन्तर्नीत इति । स्वहृदये गृहे नीत इत्यर्थः ॥१५॥

१-११-१८ प्रणयागतसाध्वसा इत्यत्र । लौकिकपदार्थपदेन सम्बन्ध उच्यते॥१८॥

१-११-२१ भगवानित्यत्र । न पाक्षिकफलत्वमिति । न कादाचित्कसत्कारविषयत्वम् ॥ २१ ॥

१-११-२२ प्रह्वेत्यत्र । कृतवानिति । ‘ये यथा मां प्रपद्यन्ते’ इति प्रतिज्ञानादुचितं कृतवानित्यर्थः । करस्पर्शः शिरसि हस्तस्थापनम् ॥ २२ ॥

स्वयं चेत्यत्र । प्रयच्छतीति । विषयान् प्रयच्छति । तथा च विषयाणां बन्ध-

१-११-२३ कत्वाभावेन तद्दाने दोषाभाव इति भावः । अन्यशब्दस्यार्थान्तरमाहुः नूतनेत्यादि । ननु पुरिप्रवेशस्य पूर्वमुक्तत्वात्पुनः तत्प्रवेशो व्यावर्तकत्वेन वक्तव्यः, पुरमाविशन्नाशीर्भिर्बन्धुभिश्च युज्यमानो जात इति, तत्कुतः पुनस्तत्प्रवेशकथनमित्यत आहुः अत्रेत्यादि । तथाचात्रानर्तपुर्यां द्वारकायाश्च सत्त्वेन पूर्वमानर्तप्रवेशस्योक्तत्वेप्यत्र द्वारकाप्रवेशक्रियाया एव सर्वोत्कृष्टत्वाच्चथोच्यत इत्यर्थः । ननु तावता सर्वोत्कृष्टत्वे स्तोत्रादिनिरूपणवैयर्थ्यं स्यादित्यत आहुः केवलमित्यादि । आदिपदेन स्वप्रार्थनम् ॥ २३ ॥

१-११-२४ राजमार्गमित्यत्र । मर्यादास्थितस्त्रीणामिति । आवरणे तिष्ठन्तीनामित्यर्थः ॥ २४ ॥

नित्यमित्यत्र । कथमुत्सवत्वमिति । अतिशयितानन्दजनकत्वं ह्युत्सवत्वम् ।

१-११-२५ तच्च दर्शनस्य नित्यत्वादतिशयाजनकत्वेन कथं केन प्रकारेणेत्याशङ्क्याह तदुपपादनाय नेत्रतृप्त्यभावं तद्धेतुत्वेनाहेत्यर्थः । अत्र मूले उत्सवहेतुत्वेन दृगवितृप्तिरुच्यते, तस्या अपि हेतुत्वेन भगवदङ्गानां स्वाधीनत्वाभाव उच्यते । यद्यपि निरीक्षमाणानां द्वारकौकसां नित्यप्रभोर्दर्शनम्, तथापि तेषां दृशो न वितृप्यन्ति, हि यतो हेतोः अङ्गं श्रियो धामेत्यादिर्न स्वाधीनं स्वस्मादिति वचनव्यक्तेः । तामुपपादयन्ति नित्योत्सवत्वादित्यादि । प्रतिक्षणमन्यान्यविषयरूपप्रदर्शनेनान्यान्यानन्दजनकत्वात्तथेत्यर्थः । तृतीयस्कन्धे ‘तया विश्रंसितज्ञाना’ इत्यत्र

ज्ञानस्य चिरकालस्थायिताया व्यवस्थाप्यत्वेनात्र धारावाहिकत्वकथनं मतान्तरीयप्रसिद्ध्यभिप्रायेण। तथा चोत्तरोत्तरज्ञानेन पूर्वपूर्वज्ञानतिरोभावाद्धारावाहिकतुल्यैकज्ञानत्वं नेत्यर्थो बोध्यः। ननु मास्तु ज्ञानस्य धारावाहिकत्वम्, तथापि तत्तद्रूपदर्शनजनितानन्देन दृशां तृप्तेः सम्भवादवितृप्तिः कुत इत्याकाङ्क्षायामाहुः अलौकिकेत्यादि। नन्वस्तु रुचिः, तथापि भगवतो विषयत्वात्तदंशे तु तृप्तिः स्यादेवेति कथं विशेषतस्तदभाव इत्यत आहुः न विषयत्वमित्यादि। तथा च 'पराञ्चि खानी'ति श्रुतेः भगवद्दर्शने प्रमाणानामसामर्थ्यात्तत्र भगवत्सामर्थ्येन दर्शने 'अहं पश्यामी'त्यभिमानमात्रम्। तथा सत्युचितैवातृप्तिरित्यर्थः। ननु तथापि तटस्थस्य रुच्युत्पादकत्वादर्शनाद्रुच्यनुरोधेन भगवत्सामर्थ्याद्भगवतो ज्ञानविषयत्वमत्रोपेयम्, तथा सति नावितृप्तिरित्यत आहुः रुचिरित्यादि। सकृत्पूर्वं दृष्टविषयस्यासामर्थ्यादित्यर्थः। अत एवेति। सकृद्दर्शनादेव। नन्वेवं रुच्युत्पादकत्वे सर्वैर्भक्त्या भगवान् कुतो न गृह्यते, भक्त्या दर्शनप्रकारस्य पूर्वाध्याये स्थापितत्वादित्यत आहुः दोषादित्यादि। भगवत्पराङ्मुखत्वेन भक्त्यभावरूपदोषात्तथेत्यर्थः। तद्वक्ष्यते **तमिमं मन्यते लोक** इत्यत्र। स दोषः किन्निष्ठो येनाग्रहणमित्याकाङ्क्षायां तदधिकरणमाहुः तत्रेत्यादि। अग्रहणप्रयोजके दोषे विचारणीये दृष्टेस्तेजस्त्वात् 'सूर्यश्चक्षुस्तथारूपं ज्योतिषो न पृथग् भवे'दित्यादिवाक्यैस्तेजोरूपत्वात्तस्य च 'तत्तेजो विद्धि मामक'मिति वाक्येन भगवदीयत्वात्तत्र तदभावे विषयदोषेण तद्ग्राह्यविषयस्य प्राकृतत्वात्तत्सम्बन्धेनैव चण्डालाग्निवद्दुष्टता। तथा च तद्ग्रहणस्वाभाव्याद्भगवद्ग्रहणासामर्थ्यम्। मार्गणं मार्गः, धर्ममार्गे धर्मविचारे तु कर्तृधर्मसम्बन्धेपि कर्ता जीवोन्तःकरणं वा तद्धर्मः साधारणत्वेन यो भगवत्यध्यासस्तत्सम्बन्धेपि दुष्टतेति तेनाग्रहणमित्यर्थः। एवं दोषं निश्चित्य द्रष्टृषु तदभावं स्फुटीकुर्वन्ति स चेत्यादि। द्वारकौकसामिति। द्वारं कायति वदतीति द्वारका। तथा च तत्रैव वासेन भक्तिरूपदर्शनसाधनोपदेशात्प्राकृतत्वरूपविषयदोषस्य अध्यासरूपकर्तृदोषस्य च सम्बन्धाभावात् स नास्तीत्यर्थः। सर्वे इति। मोक्षादिफलप्रतिबन्धकाः। ननु द्वारकावासमात्रेण सर्वदोषनिरीक्षणस्यावितृप्तिहेतुता नोच्येतेत्यत आहुः पराञ्चीत्यादि। उभयसाधकत्वमिति। दोषनिवृत्तिः तृप्तिश्चेत्युभयोः साधकत्वम्। दृश्यत इति। द्वितीयक्षणे दृश्यते। तथाच द्वितीयक्षणे पूर्वक्षणस्थदर्शनेन रुचिः, द्वितीयक्षणस्थेन त्वलौकिकबोधः, पुनरग्रिमे तत्र रुचिरित्येवं रुचिप्राचुर्ये युक्तैवावितृप्तिरित्यर्थः। नन्वुक्तं तटस्थस्य रुच्यनुत्पादकत्वम्, अतस्तदापि विषयसम्बन्ध उपेयः, तथासति तृप्तिरवर्जनीयेत्यत आहुः यद्यपीत्यादि। एवमतृप्तौ हेतुं समर्थयित्वात्यन्तातृप्तौ हेत्वन्तराणि स्फुटीकुर्वन्ति दृशा इत्यादिना॥ २५॥



सारङ्गाणामित्यत्र। सारङ्गपदेऽतिपरोक्षवृत्त्या वर्णागमो बोध्यः, हंस इतिवत्।
पुनश्चेति। निर्वचनान्तरविचारे। सर इति। द्रवद्द्रव्यमित्यर्थः। स
१-११-२६ इति। रससमूहप्रासारः। एतेषां पदाम्बुजसम्बन्धे 'तपस्विनो दानपरा' इति वाक्यं प्रमाणत्वेन बोध्यम्। एवमन्यत्रापि। समुदायशक्त्येति। कोशान्तरे सारङ्गशब्दस्य भ्रमरे शक्त्या॥ २६॥

प्रविष्टस्स्वित्यत्र। भेदे कारणाभावादिति। स्त्रीणां पृथग्धर्मशीलत्वं
१-११-२८ हि गृहान्तरस्थितौ कारणं तदभावात्॥ २७॥

तमात्मजैरित्यत्र। भृगुणा भगवन्माहात्म्यस्यानुभूतत्वात्तदंशे प्रधानस्य तत्राप्य-
१-११-३२ तन्माहात्म्यज्ञानं भविष्यतीत्याशयेनाहुः भगवन्माहात्म्येत्यादि।

यद्यपीत्यत्र। कृतत्वादिति। पार्श्वगतेः कृतत्वात्। स चात्यन्तमिति। स
मनोरथोत्यन्तमित्यर्थः। पूर्वोक्त इति। मनोरथः। श्रीरिति। इयं
१-११-३३ देवीरूपा ज्ञेया, चिच्छक्तेर्बलवद्भगवन्निष्ठत्वात्॥ ३३॥

एवं नृपाणामित्यत्र। न लोकसदृश इति। अतः स्वयमेवानुवर्तत इति
शेषः। तत्रापीत्यादि। तथा चेदं तेषामागन्तुकं कार्यमित्यर्थः। तत्रेति।
१-११-३४ तेषां तादृशे कार्यद्वये तैर्जाते। निमित्तमिति। सहकारि॥ ३४॥

तन्मयमित्यत्र। आत्मानमिति। स्वस्वरूपं भगवत्स्वरूपमिति यावत्। तात्प-
र्यापरिज्ञानादित्यादि। भगवता स्वस्मिन्नज्ञत्वादिबोधनेऽन्येषां कृते
१-११-३७ तत्तात्पर्यापरिज्ञानादित्यर्थः। तथामन्तेति। सञ्जितमन्ता॥ ३७॥

एतदीशनमित्यत्र। बोधनक्रियाया इत्यादि। स्वस्मिन्नज्ञत्वादिबोधनरूपायां
भगवत्क्रियायां यथा जीवाज्ञानजनकत्वमित्यर्थः। ज्ञापयतीति। अज्ञा-
१-११-३८ नादिकं भगवति जीवत्वं ज्ञापयतीत्यर्थः। विमतं अज्ञानादिकं न दोषजन्यम्, अयोग्यप्रतारणार्थत्वात्, भरतीयजडत्वादिवदित्यनुमानेन पूर्वोक्तहेतोः साध्यसमत्वशङ्कायां हेत्वन्तरमाहुः भ्रमेत्यादि। तथा च विमतो जीवः, भ्रमजनकत्वेन प्रतारकत्वात्, जडभरतादिवदित्यनुमानेन जीवत्वमित्यर्थः। एवमाशङ्क्येति। ईदृशानुमानेन ज्ञानिजीवत्वमाशङ्क्य। भ्रमादिति। विषयेष्वानन्दजनकत्वोत्कृष्टत्वभ्रमात्। तथा च विमतो विषयसम्बन्धः न जीवधर्मः, दोषाजन्यत्वात्, दत्तादिकृतसुरापानादिवदिति प्रत्यनुमानेन बाधितत्वादित्यर्थः। ईश्वरत्वबोधक इति। विमतः सम्बन्धः ईशधर्मः, नियतकार्यजनककार्यप्रतिबन्धकत्वात्, दत्तीयसुरापानादिवदिति प्रयोगात्तथेत्यर्थः। अत्र च नियतविषयासक्तिरूपकार्यजनकं मनः तत्कार्यासक्तिप्रतिबन्धकत्वं सङ्कल्पस्येतीश्वरधर्मत्वम्, एवं योगिस्वैराचरणस्यापीशधर्मत्वमेव योगजत्वादतो न हेतौ दोषः। ननु विमतो नेशधर्मः नियत-

कार्यजनककार्यप्रतिबन्धकत्वान्मणिमन्त्रादिनिष्ठदाहप्रतिबन्धकधर्मवदिति दृष्टान्तान्तरेण हेतोः साधारणत्वमिति चेत्, तत्राहुः मणीत्यादि । तथा चैवं हेतोः साधारणत्वेपि तत्तज्जीवधर्मे व्यभिचाराभावेनोक्तहेतौ चेतनधर्मत्वे सतीत्येवं विशेषिते साधारण्यपरिहारात्तस्येश्वरधर्मत्वे सिद्धे ईश्वरत्वबोधकता निःप्रत्यूहेत्यर्थः । तदेतद्धृदिकृत्वाहुः अत इत्यादि । सर्वाश्रयत्वादिति । तच्च ब्रह्मवादे स्वरूपेण तादात्म्येन वा । मतान्तरे तु संयोगादिनापीति बोध्यम् । तस्माद्धेतोस्ते सदा भगवति वर्तन्त इत्यर्थः । संयुक्तेत्यादि । जीवात्मसंयुक्तं मनस्तत्र समवायः सङ्गादीनाम्, तेन संबन्धेन ते सदा परमात्मन्येव वर्तन्त इत्यर्थः । ते इति । प्रकृतिगुणाः । न भवेयुरिति । कार्यसम्पादने भगवत्स्वभक्ताज्जीवाश्रिता एव भवेयुः, तथा च सर्वस्य भगवदाश्रितत्वानुरोधात्स्वकार्यासम्पादकानामेवाश्रितत्वमङ्गीकार्यमित्यर्थः । ननु कार्यासम्पादने तत्सत्तायां प्रमाणाभावान्मास्तु तदाश्रितत्वमित्यत आहुः भगवत इत्यादि । सिद्धमाहुः तथाचेत्यादि । अनाश्रित्येति । नियमतोनाश्रित्य । अन्याश्रितानां व्यधिकरणत्वात्कथमन्यत्र दोषजनकत्वमित्यत आहुः अन्याश्रयैरित्यादि । चौरादिषु रोगेषु चेति । यथान्याश्रितधनस्य कृपादेश्चान्यत्र जिघृक्षादिकार्यजनने तच्चौर्यलाम्पट्यदोषजनकत्वम्, यथा चान्यत्र विद्यमानस्य कुष्ठादिरोगस्य 'कुष्ठी यावत्पश्यती'तिवाक्यात् दर्शनविषयदोषजनकत्वं तथेत्यर्थः । अत्रेति । नियताश्रितस्य दोषाजनकत्वे । एवमुपराध्य सर्वमर्थं संगृह्णन्ति एकस्यैवेत्यादि । अविद्यावदिति । अविद्या यथा जीवव्यामोहिका तथेत्यर्थः । दोषनिराकरणार्थमिति । 'अज्ञानिनः सुरवरेशमधिक्षिपन्त' इतिन्यायेन भगवदस्मरणरूपदोषनिराकरणार्थम् ॥ ३८ ॥

तं मेनिर इत्यत्र । दर्शनज्ञानानीति । न्यायादिदर्शनसिद्धानि ज्ञानानि ।
१-११-३९ केचिदिति । निरीश्वरकापिलाः । अन्य इति । बाह्याः । अपर इति ।
जैमिनीयाः । अन्य इति । वैशेषिकाद्याः । केचिदिति । साङ्ख्यैकदेशिनः । मूलप्रमाणाज्ञानादिति । ब्रह्मणि मूलप्रमाणं वेदस्तदर्थाज्ञानादित्यर्थः । मूलकारणेति पाठे ब्रह्मज्ञाने मूलकारणं वेद इति स एवार्थः ॥ ३९ ॥

इति श्रीप्रथमस्कन्धसुबोधिनीप्रकाशे एकादशाध्यायविवरणम् ॥ ११ ॥

---

## अथ द्वादशाध्यायविवरणम् ।

अथ द्वादशाध्यायं विवरिषवः पूर्वसङ्गतिनिरूपणपूर्वकं तस्यार्थमाहुः एवमित्यादि । एवमिति । पञ्चाध्याय्युक्तप्रकारेण । अधुनेति । द्वादशाध्याये । नन्वेवं दाहाद्यनन्तरं किमिति रक्षा कृता, पूर्वमपि करणे भगवतः सामर्थ्यादित्यत आहुः यथेत्यादिद्वयम् । तथा चैतदर्थमेवं रक्षेत्यर्थः । अतः परं व्याख्यातुकामाः शौनकस्य तात्पर्यमाहुः व्यवहितेत्यादि ।

१-१२-४ अपीपलदित्यत्र । शास्त्रानुसारेण फलजननं कृष्णमेधायाः सम्यक्
तत्त्वज्ञाने हेतुः ॥ ४ ॥
१-१२-६ किं तेऽकामा इत्यत्र । अकामा इति । अकामिता इत्यर्थः । पूर्ववदिति । सम्वादार्थमित्यर्थः ॥ ६ ॥

मातुरित्यत्र । ननु देवैर्दैन्धनस्य क्वचिदसिद्धात्वात्र तदकरणं युज्येत, नत्वप्रसिद्धमिति शङ्कायामाहुः अत्रेत्यादि । 'देवा वै राजन्याज्जायमानादबिभयु'-
१-१२-७ रिति तैत्तिरीयसंहिताश्रुतौ भयस्योक्तत्वात् तेन बन्धनमपि युज्येतेति नामसिद्धिरित्यर्थः । तपः स्वधर्मसहित इति । अस्त्रदह्यमानत्वमेव तपः कृच्छ्रादिवत् । सन्तापात्मकत्वात् । स्वधर्मो वीरत्वं ताभ्यां सहित इत्यर्थः ॥ ७ ॥

अङ्गुष्ठमात्र इति । अर्थस्त्वेवान्तरपरिमाणकोप्यङ्गुष्ठं पादावयवं चकारादालोम-
नखाग्रं च सम्पूर्णदाप्याश्रितः, आसमन्तात्तत्र तत्र कार्यं कुर्वन् स्थित
१-१२-८ इति । शेषं स्फुटम् । श्रुतिस्तु तैत्तिरीये बृहन्नारायणोपनिषदि ॥ ८ ॥

गदापाणिमित्यत्र । तेजोग्रास इत्यादि । तेजसो वायुकार्यत्वेन तस्य वायावेव
लयात्तथेत्यर्थः । अप्रकटयदिति । प्रकटं करोतीत्यस्मिन्नर्थे तत्करोति
१-१२-९ तदाचष्ट इत्यनेन णिच् ॥ ९ ॥
१-१२-१३ तस्य प्रीतेत्यत्र । अपूर्वपक्षमिति । नैमित्तिकमात्मसंस्कारपक्षम् ॥ १३ ॥
१-१२-१८ अप्येष इत्यत्र । चरित्रस्वभावोत्कर्षाविति । चरित्रोत्कर्षः स्वभा-
वोत्कर्षश्चेत्यर्थः ॥ १८ ॥

दौष्यन्तिरिव यज्वनामित्यत्र । नन्वत्र चकाराभावाद्यज्वनां भिन्नो सम्बन्धो
न युक्त इत्यत आहुः सर्वत्रेत्यादि । सर्वत्रानुक्तचकारे वाक्येपि चकारः
१-१२-२० पूर्वोक्तसम्बन्धः प्रत्येकसमुदायाभ्यां कीर्तिसम्बन्धो दृष्टान्ते दार्ष्टान्तिके
च प्रमाणसिद्धो दृष्टान्तीयगुणवशेनार्थादेव बोध्य इत्यर्थः ॥ २० ॥

जयाभाव इति । परेण जेतुमयोग्यत्वम् । मूले सर्वे सद्गुणमाहात्म्यपदं सप्तम्य-
न्तमित्याशयेनाहुः तदर्थमिति । 'चर्मणि द्वीपिनं हन्ती'तिवदत्र ताद-
१-१२-२४ र्थ्ये सप्तमीत्यर्थः ॥ २४ ॥
जिज्ञासितात्मयाथात्म्य इत्यत्र । प्रत्यापत्त्यर्थ इति । ब्रह्मात्वस्य
१-१२-२८ पुनः प्राप्त्यर्थः । तदेव विवृण्वन्ति एतावदित्यादि ॥ २८ ॥

---

१ कामजनने च इति स्यात् । अत्र पाठः संदिग्धः ।

१-१२-२९ इति राज्ञ इत्यत्र । इत्युक्तमिति । अनेन सन्दर्भेणायमर्थ उक्त इत्यर्थः २८

स एषेत्यत्र । पूर्वस्य च फलमिति । रक्षणस्य फलमित्यर्थः । परित ईक्षा-
मित इति । अत्र पृषोदरादित्वेनाकारनाशः । इतृजन्तस्यार्थकथनं
१-१२-३० वेति ज्ञेयम् । इतरसामग्रीरहित इति । 'शब्दादेव प्रमित' इत्येत-
त्सूत्रविषयवाक्योक्तधर्मरहित इत्यर्थः ॥ ३० ॥

यक्ष्यमाण इत्यत्र । देवताधिष्ठानादिति । भावप्रधानो निर्देशः ।
१-१२-३२ हेतुनिर्देशो वा । पूर्वमिति दशमाध्यायारम्भे ॥ ३२ ॥

तदभिप्रेतेत्यत्र । तद्द्रोहस्तेषां पीडेति । पूर्वश्लोके व्याख्यात-
१-१२-३३ त्वादत्र तदर्थकथनम् ॥ ३३ ॥

इति श्रीप्रथमस्कन्धसुबोधिनीप्रकाशे द्वादशाध्यायविवरणम् ॥

---

## अथ त्रयोदशाध्यायविवरणम् ।

अथ त्रयोदशाध्यायं विवरिषवः पूर्वप्रकरणसमाप्तिं बोधयन्ति एवमित्यादि । सपरिकरहेतुनिरूपणपूर्वकं निरूपितेत्यर्थः । अग्रिमायां वैराग्यषडध्याय्यां तावतां प्रयोजनं सार्धैश्चतुर्भिर्वदन्तः पूर्वं त्रयाणामाहुः पुरुषत्रयेत्यादि द्विरूपत्वादिति । मुक्तेर्हेतुकार्यवि-भेदतो द्विरूपत्वात् । हेतुर्भगवत्प्रयाणं कार्यं नियामकलयभावनादिकं तद्भेदतो द्विरूपत्वात् । सनिमित्ताम् । प्रयाणसूचकोत्पातदर्शनादिरूपनिमित्तसहिताम् । तामध्यायद्वयेनाहेत्यर्थः । ननु पुरुषत्रयमुक्तेः कथमेतन्मुक्त्यर्थतेत्यत आहुः अमुक्तपितृकेत्यादि । बाधेन इति । अमुक्तिस्तेषां बाध्यते, अतस्तन्मुक्तेः सकाशाद्राज्ञो निश्चिन्ततासिद्ध्यै इहास्मिन्नध्यायत्रये राज्ञश्चित्तशुद्धिरुच्यते, सा मुक्तावुपकारिणीति तत्प्रयोजकतया पुरुषत्रयमुक्तेस्तन्मुक्त्यर्थ-तेत्यर्थः । शेषाणां चतुर्णांमर्थमाहुः तत इत्यादि । नान्यथेति । सत्सङ्गं विना । तथा च सत्सङ्गस्यावश्यकत्वबोधनार्थमग्रिमा सपरिकरवैराग्यानन्तरभाविनी ऊनविंशाध्यायस्थ कथेत्यर्थः । अवान्तरव्यापार इति । पूर्वं सनत्सुजातादिकृतोपदेशस्य निर्वेदोत्पादना-दिना स्मारणात्तथेत्यर्थः । बहुकालव्यवहितस्य सनत्सुजातीयस्य पुनः कथनाभावे स्मर-णायोगात्कथने च गुरुत्वस्यैव सिद्धिरित्यरुच्या पक्षान्तरमाहुः धर्मराजत्वेन गुरुर्वेति । अयं पक्ष 'एवं राजे'ति श्लोकस्यात् बोधितपदात्सिद्ध्यति । प्रथमस्तु ततः पूर्वग्रन्थात् । ननु धर्मराजत्वस्य प्रागपि सत्त्वात्तदानीमुपदेशकर्तृत्वप्रसक्तावपि स्वस्यानधिकारकथन-पूर्वकं तदकरणमिति तस्येदानीमपि सत्त्वात् कथं गुरुत्वं युज्यते इत्यत आहुः भगवते-



त्यादि । स्मरणं 'यस्य ज्ञानोपदेशाये'तिवाक्ये स्फुटिष्यति । अतो द्वितीयः पक्षोपि युक्त एवेत्यर्थः । तर्हि तदर्थं तत्कथैव पूर्वं कुतो नोक्तेत्यत आहुः विदुरेत्यादि । तथा च तस्याः पुराणलक्षणग्रन्थे प्रविष्टत्वाद्बहुत्वाच्च नेदानीं सोक्ता, किन्तु गुरुत्वरूपप्रयोज-नसिद्ध्यर्थं तदुक्तैव कथोक्तेति नोक्तार्थे सन्देह इत्यर्थः । एवं मुक्त्युपोद्घातत्वेन प्रसङ्गमु-पपाद्य व्याकुर्वन्ति विदुर इत्यादि । मूले आत्मविविित्सित इत्यत्र बहुव्रीहौ आहि-ताग्न्यादिष्विति आत्मपदस्य पूर्वनिपातः । विविदिसितपदं च विशेषज्ञाने रूढमित्यवग-न्तव्यम् । विशेषेण ज्ञानस्याकारं फलोक्तिमुखेन विवृण्वन्ति अयमर्थ इत्यादि । तथा च तया लीलया साङ्ख्यसिद्ध इव साक्षादिति न ज्ञातः, किन्तु भगवद्दासत्वादिवैशिष्ट्येनो-पनिषत्सिद्धरूपेण ज्ञात इत्यर्थः । अग्रिमचरित्रमिति । पञ्चमादिस्कन्धान्तरोक्तम् । फलज्ञानादिति । फलमनुपदोक्तरीतिकस्वस्वरूपावस्थानरूपं तस्य ज्ञानात् । इदमेव विशेषतो ज्ञानम् ॥

एतन्निगमनायाग्रिमश्लोकं विवृण्वन्ति अत एवेत्यादि । यथाधिकारं निर्णय
इति । बन्धुत्वनिर्णयः । ज्ञानमोक्षाभ्यां बन्धनं सत्त्वगुणवज्ज्ञेयम् ।
१-१३-२ ताभ्यामपि गुरुत्वेनासक्तिजननादिति ॥ २ ॥

मुमुक्षुरित्यत्र । भगवतः प्रेम एवेत्यत्र प्रेम इवेति पाठः प्रतिभाति । निषे-
धाभाव इति । पूजा न मया ग्राह्येति निषेधस्याभावः । कुलक्षयप्र-
१-१३-६ योजकत्वान्निषेधः सम्भाव्यते अग्रिमवाक्यकथनानुसारात्, तदभा-
वायैतदुक्तम् । तदर्थमिति । लोके हि नानादेशयात्रां कुर्वाणाः स्वस्य पक्षित्वं वदन्ति वयं पक्षिण इति, तदा स्मरणं न सम्भवतीति तन्निवृत्तय इत्यर्थः । अर्थपदमत्र निवृत्तौ मशकार्थो धूम इतिवत् । विचिकित्सेति । अयं शब्दो ग्लानौ रूढो जुगुप्सावत्प्रयोगवशाज्ज्ञेयः । क्लेशाजनितमिति । पूर्वानुभूतक्लेशजनितम् । षष्ठ्यन्तपदं तृतीयया कथं व्याख्यायते इति शङ्कानिवृत्तय आहुः जीवनेत्यादि । परित्यागभावनामिति । जीवनस्येति शेषः॥६॥

भवद्विधा इत्यत्र । प्रयासजननादिति । तीर्थपापनाशप्रयासजननात् । इदमेव
१-१३-१० सूचितं विवेकधैर्याश्रयग्रन्थे ' विशेषतश्चेदाज्ञा स्या'दिति पद्येन १०

अपि न इत्यत्र । ज्ञास्यतीति । सम्भावनायां लृट् । लज्जयेति ।
१-१३-११ अवधूतवेशकृतलज्जया ॥ ११ ॥

१-१३-१२ नन्वप्रियमित्यत्र । स्वकार्यमिति । विदुराभिप्रेतं कार्यम् ॥ १२ ॥

एवं गृहेष्वित्यत्र । भगवन्तं दृष्ट्वेति । द्वारकायां गत्वा तत्र दृष्ट्वा ।
१-१३-१७ अन्यथा चेदिति । यदि स्वार्थे प्रवृत्ता न भवेयुरित्यर्थः ॥ १७ ॥

१-१३-१८ विदुर इत्यत्र । कालस्येति । कलियुगरूपस्य । तत्र लिङ्गं परमदुस्तरत्वं
बोध्यम् ॥ १८ ॥

राजन्नित्यत्र । पत्नीरिवेति । अष्टावक्रशप्ता भौमाहृताः कृष्णपत्नीरिव । तासां
१-१३-१८ तथात्वं पाद्मोत्तरखण्डे प्रसिद्धम् । पूर्वमिति । विश्वरूपदर्शनावसरे
'अमी च त्वां सुरसङ्घा विशन्ति केचिद्भिताः प्राञ्जलयो गृणन्ती'ति-
भयलिङ्गात् । वेधदीक्षान्यायेनेति । यथा वेधदीक्षायां गुरुणा स्वनिष्ठं ज्ञानं शिष्ये सञ्चार्यते, यथोपकोसलविद्यायां 'ब्रह्मविद इव सौम्य ते मुखं भाति, को नु त्वानुशशासे'त्यादि । यथा च तान्त्रिकदीक्षायां गुरुणा देवता स्वस्मिन् सन्निधाप्य शिष्ये सञ्चार्यते, तेन न्यायेनेत्यर्थः । अन्यत्रेति । पाण्डववञ्चनादौ । द्वितीय इति । आद्ये ॥१८॥

१-१३-२० येन चैवेत्यत्र । स्वनिष्पादित इति । कालनिष्पादितः ॥ २० ॥

अग्निरित्यत्र । सामान्यविशेषभावादिति । लाक्षागृहे समातृकाणां पञ्चा-
नामपकाराचत्समानम्, विषोदके तु भीमस्यैवापकाराद्विशेष इति
१-१३-२३ पश्चात्तद्ग्रहणमित्यर्थः । तेपीति । दूषिता इति शेषः ॥ २३ ॥

तस्यापीत्यत्र । अनालोचितयाचक इति । अनालोचितं यथा स्यात्तथा
१-१३-२४ याचकः, वस्तुयाच्यस्वदातॄणां चतुर्णामन्यतमस्य वा स्वरूपादिकमवि-
चार्य यो याचते, तादृश इत्यर्थः ॥ २४ ॥

इतोर्वागित्यत्र । हीनत्वबोधनायेति । धृतराष्ट्रस्येत्यर्थः । स्वतन्त्राणामिति ।
पुंसामित्यस्य विवरणम् । देशसापेक्ष इति । पुरुष इति शेषः । तथा च
१-१३-२६ देशापेक्षां परित्यज्य यात्वित्यर्थः । अत एवेति । स्वदेशापेक्षात्यागा-
देव । परित्यागवैयर्थ्योपपत्तेरिति । देशत्यागोत्तरमपि बुद्धिभ्रंशे तथात्वापत्तेरित्यर्थः । ननु तस्यैव हेतोरित्यत्र देशस्य परमफलासाधकत्वमुक्तम्, तथा 'भयं द्वितीये'त्यत्र धनस्यापि तथात्वमुक्तम्, तथा सति कोविदत्वस्य प्रमादाभावस्य च तत्साधकत्वं फलतीति ताभ्यामेवैव फलार्थं प्रयतनीयम्, त्यागे को विशेष अत आहुः तस्यैवेत्यादि । तथा च तत्र तयोरसाधकत्वमात्रमुक्तम्, नतु बाधकत्वम्, अतस्तत्र केवलेन कालेन देशेन च न परमफलविरोध इत्यर्थः । तथा च तत्र तथास्तु, प्रकृते तु कालस्य बाधकताया प्रत्यक्षा-[1]नुमानाभ्यां सिद्धत्वात्तन्नियम्यैः स्वैर्व्याप्तस्यापि तथात्वाद्विरोध एवेति देशस्त्याज्य एवेत्यर्थः । एतदेवाहुः तदित्यादि । केचिदित्यादि । श्रीधरो वोपदेवाद्याः गतस्वार्थेति श्लोकव्याख्यातपक्षस्थं धीरं मन्यन्त इत्यर्थः ॥ २५ ॥

१ अध्यक्षानुमानाभ्यामिति पाठः ।



पतिमित्यत्र । पौनरुक्त्यपरिहारायाहुः अबाधिकेति । 'विप्रस्य वै सन्न्यसतो '
इत्यत्रोक्तैर्बाधकैर्दैवैरनाविष्टेत्यर्थः । अनुवादादिति । नारदकृतानुवा-
१-१३-२९ दात् । ननु नारदेन विदुरोपदेशाद्गत इति कुतो नोक्तम्, तत्राहुः साक्षा-
दित्यादि । विरोध इति । विदुरोस्मासु पूर्वं स्निग्धः, इदानीमस्मद्दोषदर्शी जात इत्याकारको विरोधो युधिष्ठिरस्य मनस्यापद्येत, तदनुचितम्, विदुरस्यान्यत्र तात्पर्यात्, अतस्तदभावार्थं नोक्तवानित्यर्थः । नन्वस्मिन्नध्याये धृतराष्ट्रस्य मुक्तिमात्रं वक्तव्यम्, तत्तु 'धृतराष्ट्रः सह भ्रात्रे ' त्यादिना वक्ष्यति, ततः पूर्वं युधिष्ठिरप्रश्नादिकं व्यासप्रश्नाभ्यां किमित्युक्तमित्याकाङ्क्षायां युधिष्ठिरादिमुक्तिर्यामिमाध्याययोर्वक्ष्यते, तदुपोद्घातत्वेनात्रेदमुक्तम् । तथा धृतराष्ट्रमुक्तेः प्रकृतत्वात्तदुपयुक्तत्वेनाप्युक्तम्, तथान्योपदेशायाप्युक्तमित्याशयं कारिकाभिराहुः यावदित्यादि । प्राक्कथेति । युधिष्ठिरप्रश्नादिकथा ॥२९॥

अजातशत्रुरित्यत्र । अनुद्धरणाभ्युदयेति । गार्हपत्यादिकं कुण्डादग्नीनामुद्धर-
णात्पूर्वं सूर्योदये तत्प्रायश्चित्तत्वेन तद्विधानमित्यर्थः । क्रमेणेति ।
१-१३-३० आवश्यकं पूर्वं ततः सन्ध्या ततस्तर्पणमिति क्रमेण ॥ ३० ॥

अथाजगामेत्यत्र । प्रमादमिति । आत्मघातादिरूपमनर्थम् । उद्वेगा-
१-१३-३७ द्धीनत्वादिति । उद्वेगेन हीनत्वात् । अधिकारजाघन्यादित्यर्थः ॥३७॥

मा कञ्चनेत्यत्र । शोको हीत्यादि । शोको हि यथा मानभङ्गादौ स्वन्यूनतायां
तस्य मननेन विशिष्टंज्ञानम्[2] । तत्र च शत्रुनाशादिनिदिध्यासनेति
१-१३-४० व्याप्तिवारणाय विशेषणदलम्, स्वन्यूनतापादकमनिष्टज्ञानं शोक इत्युक्ते
पुत्रादिनाशश्रवणजन्यशाब्दमात्रेति व्याप्तिरिति तद्वारणायं विशेष्यदलम् । तादृशशाब्दस्यापि लक्ष्यत्वाङ्गीकारे तु प्रयोगैप्रसिद्धयोर्विरोध[3] एव दोष इति समुदितोपादानम् । निदिध्यासनं प्रयत्नपूर्वकं विशिष्टज्ञानम्, तदेतदभिसन्धायाहुः कोपीत्यादि । शोकाकरणे हेत्वन्तरमाहुः किञ्चेत्यादि । ननु स्वपुत्रनाशादौ कथं हितकरणानुसन्धानं स्वार्थपक्षे इत्यत आहुः ममतास्पदेत्यादि । सैवेति । स्वहितकरणरूपा । लीलात्वेन विचारेपि सैवानुसन्धेयेत्याशयेनाहुः उभयथेत्यादि ॥ ४० ॥

यथा गाव इत्यत्र । तदर्थमिति । लीलार्थम् । अन्यथेति । लीलायां दोष-
स्वाद्यभिसन्धाने । दीर्घरज्जुरिति । यस्यां रज्जौ बलीवर्दान्नसि प्रोतान्
१-१३-४१ कृत्वा रज्ज्वन्तरेण बध्यन्ते, सा तन्ती तद्रूपेत्यर्थः । आधारत्वमिति ।
प्राकृतक्रियारूपतुपाधारत्वम् । असंस्कृतारूपत्वमित्यर्थः । मनध्यासे कथमिन्द्रियव्या-

१ धृतराष्ट्रमात्रमिति पाठः । २ मनने अनिष्टज्ञानमिति पाठः । ३ प्रयोगप्रसिद्धयोः ।

पार इत्यत आहुः इन्द्रियाणीत्यादि । प्रेरकस्येति । इन्द्रियाधिष्ठातुः । अध्यासं कृत्वेति । देहादिषु तत्सम्बन्धिषु च यथायथमहन्तां ममतां चेत्यर्थः । किञ्च भगवत इत्यादि । इत आरभ्य यथा क्रीडोपस्कराणामित्यस्य व्याख्यानम् । कुतश्चिद्योजयतीत्यत्र । सार्वविभक्तिकस्तसिः । केनचिदित्यर्थः ॥ ४१ ॥

१-१३-४३ यन्मन्यस इत्यत्र । न चेति मूलस्यार्थमाहुः नासीदस्ति भविष्यतीति । अत्र त्रिष्वपि नञोन्वयः ॥ ४३ ॥

१-१३-४५ कालकर्मेत्यत्र । राजशब्दस्य देहवाचकत्वादिति । इदं देहोयमित्यस्येदमो व्याख्यानं निमित्तमिति, न रक्षाकर्तेत्यर्थः ॥ ४५ ॥

अहस्तानीत्यत्र । दूषयतीति । द्वाभ्यां दूषयतीत्यर्थः । तत्र सामान्यप्रकार इति । अन्नात्तृभावे सामान्यप्रकारः । भावे चेति । जीवानधिष्ठितस्य सत्त्वेपि ॥ ४६ ॥
१-१३-४६

तदिदमित्यत्र । तत्राहेति । तादृश्यां शङ्कायां खाद्यानां खादकानां चाभेदमाहेत्यर्थः । सृष्टानामपीति । परस्परमभेदादित्यर्थः । बहिरिति ।
१-१३-४७ प्रकटयतीति शेषः । लौकिक इति । तथा च वस्तुविचारे कूर्माङ्गवदन्तःप्रवेशान्न दोष इत्यर्थः । आदित्यादि । आसमन्तादद्नमात् आतः भक्षणान्मा निषेधात्मकः केवलो भवत्यवतिष्ठते इत्यर्थः । 'परोनुनासिको वे'ति सन्धेर्वैकल्पिकत्वान्नत्वाभावः[1] । पृषोदरादित्वाद्वा । दत्वनत्वयोरभावस्तेनात्मेत्यतिपरोक्षवृत्त्या सिद्ध्यतीति ज्ञेयम् । आत् अभजनादिति पाठो न भाति । नहीत्याद्यग्रिमग्रन्थानुरोधादित्यपि ज्ञेयम् ॥ ४७ ॥

सोयमद्येत्यत्र । सर्वरूपेण रक्षकत्वमिति । व्यापकत्वेन भक्ष्यभक्षकत्वेन सर्ववस्तुस्वरूपत्वेन चेत्यर्थः । संहारलीलायां कथं पालकत्वमित्यत आहुः
१-१३-४८ दोषदूरीकरणेनेति । तथा च तदापि पालकत्वमव्याहतमिति भावः । विशेषाधिकारित्वादिति । संहरणे विशेषाधिकारित्वात् । मौसलस्य जातत्वात्कथमेवमुक्तिरित्यत आहुः मोहान्तरेत्यादि । निवारकत्वेनेति । स्थापनीयानां मृत्युनिवारकत्वेन मोहनिवारकत्वेन वा ॥ ४८ ॥

१-१३-५० धृतराष्ट्र इत्यत्र । पल्लवीकृतमिति । पल्लववदीषद्धनीकृतम् ॥ ५० ॥

स्नात्वेत्यत्र । अग्नय एव संस्क्रियन्ते इति । न फलार्थं होम
१-१३-५२ इत्यर्थः । त्रिमुख्येति । तथा च सापि त्यक्तेत्यर्थः ॥ ५२ ॥

---

[1] नानुनासिकः २. [ भक्ष्य. ।



विज्ञानात्मनीत्यत्र । स एवेति । निर्विकल्पसमाधिरेव । अत्रेति । आत्मविचारे । देहमानसभेदेनेति । देहाभिमानित्वमनोभिमानित्वभेदेन ।
१-१३-५४ ब्रह्माण्डाभिमानेति । ब्रह्माण्डे अहमित्यभिमानो यस्य सः । प्रकृत्यधिष्ठातृत्वमित्यादि । तथा च चतुर्थे आत्मनि प्रविलीन इत्यर्थः ॥ ५४ ॥

स वा इत्यत्र । आग्नेय्याः धारणाया यजमानस्यावश्यकत्वायाहुः
१-१३-५६ आधानेत्यादि । तथा च तस्य तदभिन्नत्वात्तेन साधारणा कार्यैवेत्यर्थः ॥ ५६ ॥

इति श्रीप्रथमस्कन्धसुबोधिनीप्रकाशे त्रयोदशाध्यायविवरणम् ॥ ३ ॥

---

## अथ चतुर्दशाध्यायविवरणम् ।

अथ चतुर्दशाध्यायं विवरिषवोऽवसरस्यसङ्गतिबोधनाय पूर्वाध्यायार्थमनुवदन्तः प्रस्तुताग्रिमयोरर्थमाहुः एवं हीत्यादि । अत इति । एतदनन्तरम् । ननु द्वाभ्यां हेतुपूर्वकथनस्य किं प्रयोजनमत आहुः तेषामित्यादिद्वयम् । महद्रिति । भूमित्यागरूपम् । तथा च तद्धेतुत्वेनात्र तत्कथनमित्यर्थः । ननु तथापि तत्तु द्वितीये वाच्यम्, तथात्वस्य कथं हेतुबोधकत्वमित्यत आहुः सम्भावनायामित्यादि । इति चेति । एवं प्रकारेण तत्र हेत्वन्तराणि समुच्चेतुं विनिरूप्यत इति पूर्वेण संबन्धः । एतदेव निगमयन्ति भगवद्गमनं तस्मादित्यादि ॥

१-१४-१ सम्प्रस्थित इत्यत्र । यदा नायादिति । व्यतीता इत्यस्यार्थः ॥ १ ॥

जिह्मप्रायमित्यत्र । न शक्येति । नानुमातुं शक्या । सौहार्दमिति । नानुमातुं शक्यमिति शेषः । तस्मा इति । युधिष्ठिरार्थम् । तत्कृतार्थत्वार्थं
१-१४-४ तस्यैतद्द्वयं भातमित्यर्थः ॥ ४ ॥

भगवानपीत्यत्र । अयुक्तत्वेपीति । भगवत्त्वादेवायुक्तत्वेपि । बहूनामिति । अस्मादृशामन्यदेशवासिनाम् । आराध्यानामित्यादिनोक्तहेतुद्वयेनान्यत्र
१-१४-३४ गमनसम्भवात् पुर आस्ते इति बहिर्मुखेत्यादिहेतोः सुधर्मायामास्ते इति भक्तानामपि कालवशेन तथात्वाच्च सुहृद्वृत इति प्रकारविशेषं पृच्छतीत्यर्थः । सुखपदप्रयोजनमाहुः स्यमन्तकेत्यादि ॥ ३४ ॥

मङ्गलायेत्यत्र, क्षेमाय भवाये'त्यत्र साधारणानामधिकाराभावं हृदिकृत्वाहुः निविष्टपदरक्षणायेति । ये द्वारकादौ निविष्टाः, तेषां स्थानरक्षार्थम-
१-१४-३५ धिकपदप्राप्त्यर्थं चेत्यर्थः । तादृशा इति । मङ्गलजनकादृष्टवन्त एव सृष्टाः सन्तीत्यर्थः । अथवेत्यादि । तथा चादृष्टाभावेपि तत्सम्पादनसामर्थ्यान्न दोष

इत्यर्थः । यथा प्रकृतिपरिणाममित्येकं पदं सिद्ध इति क्रियाया विशेषणम् । ध्वनि-
नेति । काव्याङ्गप्रधानवाक्येन वा ॥ ३५ ॥

१-१४-३७ धत्पादशुश्रूषणेत्यत्र । अन्यस्त्विति । भोगात्मकं तु । विषयबला-
दिति । शुश्रूषणविषयस्य भगवतो बलात् ॥ ३७ ॥

१-१४-४० न दत्तमित्यत्र । अधर्म्याणीति । 'स्याद्धर्मपस्त्रिया'मित्यमरः ।
तद्विरुद्धमधर्मम् ॥ ४० ॥

१-१४-४२ पराजितेत्यत्र । नसमास इति । नैकधेत्यादिवन्नशब्देन सह सुप्-
सुपेति समास इत्यर्थः ॥ ४२ ॥

अपिस्वित् पर्यभुङ्क्था इत्यत्र । सम्भोज्येति ह्रस्वान्तपाठे प्रयोगसम्भवप्रकार-
१-१४-४३ माहुः अथादावुत्तरे विभाग इति । इदं लक्षणग्रन्थस्य प्रातिशाख्यस्य
सूत्रम् । तथा च 'अथादावुत्तरे विभागे ह्रस्वं व्यञ्जनं पर' इति सूत्रेण
यथा देवयते शीकयते इत्येवमादेः पदस्य देवाय ते यजमानाय शर्म, शीकाय ते स्वाहे-
त्येवं संहिताध्ययनदशायां दीर्घो बोध्यते. तेन न्यायेनात्रापि पदविभागे ह्रस्वः, संहिता-
यामेव दीर्घ इत्यर्थः । सूत्रार्थस्तु, अथेत्यधिकारे । आदावुत्तरे पदादौ पदान्ते च संहि-
तायां वर्तमानो दीर्घो यदि व्यञ्जनपरः स्यात्, तदा विभागे पदपाठे ह्रस्वमापद्यत इति
त्रिभाष्यरत्ने व्याख्यातः । तत्र स्वारसिकमेकपद्यम्, अत्र तु समासकृतमित्यतोत्र न्याय-
पदमुक्तं ज्ञेयम् ॥ ४३ ॥

इति श्रीप्रथमस्कन्धसुबोधिनीप्रकाशे चतुर्दशाध्यायविवरणम् ॥ १४ ॥

---

## अथ पञ्चदशाध्यायविवरणम् ।

अथ पञ्चदशाध्यायं विवरिषवः सङ्गतेः प्रागेवोक्तत्वात्तां स्मारयन्तः प्रस्तुतस्या-
र्थमाहुः एवमित्यादि । विनिश्चयादिति । ल्यब्लोपे पञ्चमी । शास्त्ररीतावपि विशेष-
माहुः भार्येत्यादि । तथा च यथा 'ये देवा यज्ञहन' इत्यादीन् मन्त्रानुक्त्वा 'इत्याहेमानेव
लोकांस्तीर्त्वा सगृहः सपशुः सुवर्गं लोकमेती'ति तत्पाठेन सपरिकरस्य यजमानस्य
सुवर्गो लोकः श्राव्यते, तथात्र भक्त्येति निरूप्यत इत्यर्थः । अवान्तरवाक्यतात्पर्यमाहुः
प्रेमेत्यादि । आहेति । सूत आह । पर इति । उत्कृष्ट भक्तः ।

एवं कृष्णसख इत्यत्र । भगवतो जनार्दनत्वेन कालरूपत्वेन च मुक्त्यवसरे देहत्यागे
च तस्यावश्यकतया 'स्वलङ्कृताः कान्तसखावरूथः' इत्यादिषु बहु-
१-१५-१ व्रीहौ सखिशब्दस्य साहित्येपि प्रयोगात्तमाश्रित्य पक्षान्तरमाहुः एतद्-



द्वारा वेत्यादि । कृष्णसखः कृष्णसहित इत्यर्थः । एतस्यार्थस्याभिप्रेतत्वाय विपक्षे
बाधकांस्तर्कानाहुः अन्यथेत्यादि । यद्यर्जुने भगवत्साहित्यं न स्यात्, तदा पूर्वोपदेश-
स्मरणस्येदानीमिव तदानीमपि सम्भवात्तत एव वैराग्यादेरपि सिद्धेस्तस्मादेव स्थाना-
न्महाप्रस्थानगमनमुचितं स्यात् । न'र्जुनेनान्विता' इति भगवद्वाक्यादुज्जायानयनायागमन-
मिति नानेन साहित्यसिद्धिरित्यत आहुः अर्जुनेत्यादि । उक्तरीत्य इन्द्रप्रस्थस्योक्तत्वा-
दिन्द्रप्रस्थादेव तथा स्यात्, न तु गजाह्वयात्तथेत्यर्थः । बाधकतर्कमुक्त्वा साधकतर्कमाहुः
तावदित्यादि । नारदेन 'ह्यवशेषं प्रतीक्षत' इति भगवत्कृतां प्रतीक्षामुक्त्वैतेषां प्रती-
क्षणमुक्तम् । मौसलस्यैवावशेषत्वाङ्गीकारे तस्य वृत्तत्वेन तद्वाक्यमप्यप्रमाणं स्यादिति
तदर्थं तथेत्यर्थः । युक्त्यन्तरमाहुः कृष्णाविति । अश्विनोरिव नरनारायणोरपि
साहित्यस्य नियतत्वात्तदपि सत्यं स्यादित्यर्थः । ननु यदि सार्वदिकं साहित्यम्, तदाप-
राजयाद्यवस्था न स्युरिति नेदं युक्तमिति शङ्कायामाहुः अवस्थेत्यादि । सर्वत्र भगवत्तेज-
सैव कार्यसिद्धिः, नान्यथेत्यर्जुनस्य विश्वासार्थं भगवतैव लीला सा कृता, अन्यथा
असुरमोहाद्यर्थं अज्ञत्वादिकं स्वस्मिन् पूर्वं प्रकटीकृतं तथेत्यर्थः । अवस्थाप्रकटनस्य
लीलात्वे विश्वासार्थत्वे च युक्तिमाहुः अन्यथेत्यादि । यद्येवमर्जुनावस्थां न प्रकटयेत्,
तदा तस्याहङ्कारे मुक्त्यभावेन तथा स्यादित्यर्थः । ननु मुक्तेर्दैवकार्यत्वात्तद्दानेपि न साव-
शेषकर्तृत्वमितिशङ्कायामाहुः अर्जुनस्येत्यादि । तदभावे मास्तु सावशेषकर्तृत्वम्, तथापि
तस्याहङ्कारसत्तायां तेजः शोकस्तेजोविषयको यः शोकः स न युक्तः स्यात्, अतो विश्वा-
सार्थं सा लीलेत्यर्थः । फलमपि गमकत्वेनात्राहुः अत एवेति । 'एवं गृहेषु सक्ताना'-
मित्याद्युक्तं संसारावेशं प्राप्यापीत्यर्थः । रूपमेवार्जुन इति । 'इन्द्रो देवते'तिवल्लिङ्ग-
भेदेपि विशेषणविशेष्यभावः ॥ १ ॥

कृच्छ्रेणेत्यत्र । ननु भगवतो नित्यत्वव्यापकत्वेऽनुभवन्तमर्जुनं प्रति भगवतः
परोक्षत्वाभावात् कथं तदुक्तिरित्यत आहुः स्वेच्छयेत्यादि । तथा च
१-१५-२ तदानीं तादृशेच्छया तथेत्यर्थः ॥ २ ॥

यत्संश्रयादित्यत्र । गुणस्वभावभेदेनेति । गुणा इतरेतरसङ्कीर्णाः सत्त्वादयः
स्वभावोऽर्जुनस्य प्रकृतिः ताभ्यां कृतो यो भेदो वैषम्यं तेनेत्यर्थः । चतुर्द-
१-१५-७ शस्यार्थमाहुः तेनान्यस्य च सङ्ख्य इति । अन्यस्येति । तेजसः ।
चतुर्दशगतिमिति । चतुर्दशप्रकारम् । तेजसा मध्ये सर्वमिति । ह्रियमाणेन तेजसा-
पन्मध्यस्थं सर्वमेव हृतमित्यर्थः ॥ ७ ॥

१-१५-१२ यत्तेजसेत्यत्र । चरित्रमितीति । इति हेतोर्भिन्नः प्रक्रम इत्यर्थः ॥ १२ ॥

तत्रैवेत्यत्र । ननु पूर्वश्लोकवदुत्तरश्लोकानामपि यत्पदोपबन्धवतां सत्त्वाद-

१-१५-१३ स्मिन्नेव मध्यस्थे किमिति मोष उच्यत इत्याकाङ्क्षायामाहुः तमसे-
त्यादि । गुणनिरूपणादिति । आजमीढपदेन मोक्षदाननिरूपणात् ।
तथा चैवं हेतुद्वयात् परोक्षत्वं मोक्षदातृत्वं च वक्तुं मोपमाहेत्यर्थः । ब्रह्माण्डविग्रहत्वा-
दिति । तथा च तेन रूपेणातिपरोक्षतया मोषहेतुत्वमित्यर्थः । तेजोपहरणेपीति ।
कार्यकारणोत्तरं तेजोपहरणेपीत्यर्थः। एवं सर्वसम्मतपाठपादस्य मध्ये मोपोक्तिः समर्थिताः।
अतःपरं सिद्धान्तपक्षेण समर्थयन्ति वस्तुत इत्यादि । ननु गुणैः कार्यान्तरमपि जायत
एवेति त्रयेणैव निरूपणं कुत इत्याकाङ्क्षायामाहुः लोकत्रयेत्यादि । नृदेवदैत्यात्मका
ये लोकास्तज्जयस्यैवार्जुनेष्यमाणत्वादित्यर्थः । यत्तेजसेतिश्लोके दैत्यजयस्यास्पष्टत्वा-
त्तत्स्फुटीकर्तुमाहुः दैत्येत्यादि । अत्र दैत्यजय इत्यादौ सप्तम्यन्तः पाठः प्रतिभाति ।
तथा च तस्मिन्नेवं निरूपणीयेपि अभीष्टेषु भोगस्य प्राधान्यात्तत एव तत्र निरूपित इत्यर्थः।
तर्हि तन्निरूपणे किं मानमत आहुः अर्थादित्यादि । आसनार्द्धप्राप्तिरूपस्यार्थस्य देवारा-
तिवधादेव जातत्वात्तन्निरूपणेनार्थादेव निरूपितोपि देवलोकवृत्तान्तोपसंहारे तदनुवदनभ-
गवत्कृतवञ्चनयोः शेषतयाङ्गतयाग्रिमश्लोके निरूपितः। तथा चाग्रेनुवाद एव मानमित्यर्थः।
ननु तथापि मध्ये वञ्चननिरूपणस्य तात्पर्यमाहुः दैत्यानामित्यादि । तत्प्राधान्या-
दिति । वञ्चनप्राधान्यात् । तथा चेदानीं संहारकालत्वात्तत्र च ' अन्ते त्वधर्महरमन्युवशा-
सुराद्या ' इति वाक्येनासुराणामुपकरणरूपत्वादिदानीं तदनुगुणत्वबोधनाय तदुक्तिरि-
त्यर्थः । नन्वेवं सत्यग्रे भगवच्चरित्रनिरूपणस्य किं प्रयोजनम्, प्रश्नोत्तरस्य तावतैव जात-
त्वादित्याकाङ्क्षायामाहुः यदित्यादि । नात्यन्तमिति । आपाततः प्रतीयमानोपि तेषु
श्लोकेषु सोत्यन्तं न सिध्यतीत्यर्थः । अनुग्रह उपकारः । अत्यन्तासिद्धौ गमकद्वयमाहुः
भूभारेत्यादि । सिद्धमाहुः अत इति । यद्वान्धवेत्यादिपद्यत्रयस्यावतारकार्यबोधन-
मात्रार्थत्वात् । नन्वेवं सति मध्ये एतेषां किं प्रयोजनमित्याकाङ्क्षायां तत्तात्पर्यं कारिका-
भ्यामाहुः कारणमित्यादि । इतरसंहारस्यार्जुनद्वारा कारणं स्वयं तत्करणं अर्जुनसंहारप्र-
तिबन्धश्चेतित्रयं भगवतस्तूष्णींकृत्येपि भगवत्कृतत्वमेषां ज्ञापयितुं कथ्यत इत्यर्थः । तदिति।
स्वकृतत्वज्ञापनम् । एवं कथनस्य प्रयोजनमाहुः दोषेत्यादि । सिद्धमाहुः अत इत्यादि ।
अन्तःसाधनं बलम्, बहिःसाधनं धन्वादिसामर्थ्यम्, तथा चैवमुपपत्तौ तेषां श्लोकानां
विगीतत्वं युक्तमेवेत्यर्थः । सर्वसम्मतपक्षमाश्रित्याहुः तमोमिश्रेत्यादि । विगीतत्वा-
भिप्रायेणाहुः हेतुत्वेनेत्यादि । एवमग्रेपि । ॥ १३ ॥

१-१५-१४ यद्वान्धव इत्यत्र । कथं निवारितेत्यत आहुः तेनेत्यादि । निलीय
गमननिरासे एकस्य तत्राशक्तत्वान्निवारितेत्यर्थः ॥ १४ ॥

सौत्य इत्यत्र । फलस्येति । आनन्दरूपस्य भगवतः । ततः स इति ।



१-१५-१७ जीवः । प्राप्तत्वादिति । यथेष्टविनियोगे हेतुः । अल्पमिति । अस्वं
फलम् ॥ १७ ॥

नर्माणीत्यत्र । अयथार्थत्वादिति । अपुरुषार्थत्वादित्यर्थः । तत्रानैकान्तिक-
१-१५-१८ मिति । स्मिते वशीकरणव्यभिचारम् । सम्बोधयतीति । वशीकरणार्थं
सम्बन्धित्वेन सम्बोधयति । सञ्जल्पितस्त्वमिति । प्रतिवादिजयमात्रफ-
लककथाया जल्पत्वेन तथेत्यर्थः ॥ १८ ॥

१-१५-१९ शय्येत्यत्र । प्रतिकारे कृत इति । भगवता कृते । अन्ये इति । अर्जु-
नकृताः । तस्यापीति । पितुरपीत्यर्थः ॥ १९ ॥

सोहमित्यत्र । अस्य विचार इति । वक्ष्यमाणे कार्ये प्रतीकारस्य विचार
१-१५-२० इत्यर्थः । ततः पराणां कार्याणां का सम्भावनेत्यत आहुः प्रियस्ये-
त्यादि । यथा सारथ्यमित्यर्थः । स्वनिष्ठाः कार्याभावहेतवस्त्रिविधभग-
वद्राहित्यानि भगवन्निष्ठकार्याभावहेतुः सुहृत्त्वाभावः ॥ २० ॥

तद्वै धनुरित्यत्र । प्राप्ताप्राप्तविवेकेनेति । कार्यनिष्पत्तिकारणत्वेन किं प्राप्तं
१-१५-२१ किं वाप्राप्तमिति विचारेण । इदानीं त्वित्यादिव्यतिरेकदशायां तु तद्ध-
नुरादिकमाधारत्वेन ईशाधारत्वेन हेतुना अन्यथासिद्धं तत्स्वरूपस्य
स्वातन्त्र्येणान्वयव्यतिरेकाभावादीशवत्त्वेन तद्ग्रहणात्स्वरूपतो जयाकारणत्वेन सिद्धमि-
त्यर्थः । तदभावो वेति । स्वरूपाभाव एव वा असत्त्वमित्यर्थः । फलसाधकस्य तद्रूपत्वेमा-
नमाहुः तत एवेत्यादि। स्थित इनीति। अवशिष्ट इति हेतोरित्यर्थः । विनियुक्त इति ।
धनुरादिर्विनियुक्तः । कुहक इति । सकपटः । फलवैफल्यमित्यादि । परिग्रहरक्षाभा-
वेनाराधनवैयर्थ्यं साध्यवैफल्यं रक्षावैयर्थ्यं साधनवैफल्यं धन्वादिवैयर्थ्यम् ॥ २१ ॥

१-१५-२२ २४ राजन्नित्यत्र । द्वितीय इति । स्वास्वास्थ्ये । प्रथमस्येति । सर्वप्र-
श्नस्य । निश्चीयत इति । अत्रापि निश्चीयते ॥ २२ ॥

देशकालेत्यत्र । भगवदीयत्वादिति । वाक्यानां भगवदीयत्वात् । भगवान्
१-१५-२७ हि अन्यत्करोत्यन्यत्सम्पद्यते तथा वाक्यान्यपीत्यर्थः । अत्र तूष्णी-
म्भावः कण्ठतोनुक्तोपि अग्रे चिन्तनोक्त्यार्थबलादेव पूर्ववाक्यशेष-
त्वेनावगन्तव्यः ॥ २७ ॥

१-१५-२८ एवमित्यत्र । स्वभावत एव ज्ञानरूपत्वमिति । 'बुद्धिर्विज्ञानरूपि-
णी'ति वाक्याद्विशिष्टज्ञानसमानाकारत्वम् ॥ २८ ॥

वासुदेवाङ्घ्रीत्यत्र । भगवत्स्वरूपयोरिति । जीवपरमात्मनोरित्यर्थः । जीव-

भगवत्स्वरूपयोरिति वा पाठः प्रतिभाति । सोऽर्जुनो जात इति ।
१-१५-२९-३० 'वलक्षो धवलोऽर्जुनः' शुद्धो जात इत्यर्थः । त्रिक्षणावस्थायीति ।
मतान्तरानुसारेण पूर्वपक्षतयोक्तम् । मूले ज्ञानस्य रुद्धत्वकथनेन चिरकालस्थायित्वस्यैवाभि-
प्रेतत्वात् । ज्ञानतिरोभावं दूरीकृतवानिति । पुनः प्राप्तिस्वरूपव्याख्यानाच्चेति ज्ञेयम् ॥२९॥
विशोक इत्यत्र । तत इति । ज्ञानानुसन्धानानन्तरम् । अन्तःप्रवेशेनेति ।
सर्वान्तःप्रवेशेन । असम्भव इति । न विद्यते संशयानां सम्भवोऽय-
१-१५-३१ स्मिन्निति सप्तम्यर्थे बहुव्रीहिः । न पुनरुद्गम इति । तात्पर्यार्थः ॥३१॥
यथाहरदित्यत्र । आभासे । आत्मत्वादिति । नियन्तृत्वादित्यर्थः । न दोष-
भाव इति । अत्र न दोष इत्येव पाठः प्रतिभाति । विजहाविति ।
१-१५-३४ तथा च कार्ये निर्वृत्ते प्रयोजनाभावादेवं कृतमित्यर्थः । द्वयमिति ।
भूभारभूततनुस्तद्वर्तितनुश्चेति द्वयम् । अत्र तयोस्तन्वोः सत्यत्वम्, कण्टकदृष्टान्ताद्द्वयोः
साम्यकथनाच्च । अनित्यत्वं परम् ॥ ३४ ॥

यथेत्यत्र । एवमिदमपीति । तथा च भूभारक्षपणार्थं यो मर्त्यवेशस्तमपीत्यर्थः ।
अत्र कलेवरस्यावस्तुत्वम्, त्यक्तरि नटदृष्टान्तात् । 'कृष्णो ह्यत्यक्तदे-
१-१५-३५ होऽपि त्यक्तदेहस्य देहवत् । आत्मानं दर्शयामास स्वरूपसदृशाकृति'मिति
ब्रह्माण्डवाक्याच्च ज्ञेयम् ॥ ३५ ॥

यदा मुकुन्द इत्यत्र । निर्गमनस्यैव शरणत्वे हेतुः तदतिरिक्तेत्यादि ।
प्रत्यन्तस्य गन्तव्यपदेनान्वयः । सर्वेषु युगेषु कालत्वाविशेषेऽपि कलि-
१-१५-३६ धर्माणामेव मोक्षबाधकत्वम्, तथा सर्वेषु देशेषु देशत्वाविशेषेऽपि देशवि-
शेषस्य कुतस्तद्व्याप्तिराहित्यं येन युधिष्ठिरस्य तत्र गमने बुद्धिरित्याकाङ्क्षायां व्याख्येय-
श्लोकद्वयस्य तात्पर्यमाहुः कलिरित्यादि । 'त्वं कालमल' इत्युक्तो 'मले शुद्धिर्न
विद्यते' इति ब्रह्मवैवर्तीयकार्तिकमाहात्म्ये कलिं प्रति ब्रह्मणो वाक्यात् । कलिः कालमलम्,
अतो मलत्वरूपाद्विशेषात्तद्धर्माणां मोक्षबाधकत्वमितिभावः । कालस्य सर्वोपादानत्वात् सर्वं
कालस्तेन मूलेऽस्य सर्वत्र व्याप्तिसम्भवेऽपि स्वामी 'कालस्वामी तु माधवः कालोपादेयाद्यतो
यस्माद्देशान्निवर्तते तिरोहितो भवति, तत्र तस्मिन् देशे निकृष्टता । तत्र दृष्टान्तः वह्ना-
विवेति । यथा निवृत्ते वह्नौ पार्थिवस्य भस्मतया निकृष्टता, भस्मनोऽग्निपुरीषत्वात् ।
'अग्नेर्भस्मास्यग्नेः पुरीषमसीति' श्रुतेः । तर्हि देशान्तरस्य कथं शुद्धत्वम्, तत्राहुः दारा-
वित्यादि । तदन्तर्बहिः सत्त्वेन न तथा निकृष्टता, एवं देशान्तरेऽन्तर्भगवतः सत्त्वेन न
निकृष्टत्वम् । अतो देशान्तरगतिर्युधिष्ठिरस्य मता बुद्धावारूढेत्यर्थः । दाराविति पुंलि-

१ मलेति पाठः ।



ङ्गनिर्देशस्तु लिङ्गस्य लोकाश्रयत्वेनाशिष्यत्वात् । 'नित्यं शलाका स्त्रिया'मिति ज्ञापकात् ।
ननु भगवत्सत्तयैव चेत्कलिकर्षाभावः, तर्हि भक्तत्वेन युधिष्ठिरेऽपि तत्सत्त्वान्निर्गमनमनर्थक-
मित्याकाङ्क्षायामाहुः अग्निभावेऽपीत्यादि । यथारणौ वह्निसत्त्वेऽपि काष्ठेन मथनद्वारा
प्रकाशनात् स(अग्निः) साध्यः, तथात्र भगवत्सत्त्वेऽपि देशान्तरगत्या स प्रकाश्य इति हेतोर्यु-
धिष्ठिरस्य गमननिश्चय इत्यर्थः । ननु भगवतो व्यापकत्वात्पूर्वोक्तं सर्वमसम्भवीत्यत आहुः
यद्यपीत्यादि । केचिदत्र 'स्वतन्वा सह महीं जहा'विति व्याकुर्वते, तद्दूषयन्ति भूमी-
त्यादि । तथा चैवं व्याख्याने जहाविति त्यागवाचकपदे विध्यनुवादवैरूप्यापत्तिः ।
सा ह्यस्यानुपपद्यमानत्वात् तृतीयाया अप्यसम्भव इत्यर्थः ॥ ३६ ॥

युधिष्ठिर इत्यत्र । स इत्यादि । युधिष्ठिरे ज्ञानाविकाससमन्ता कलिर्युधिष्ठिरा-
१-१५-३७ दीन् पाण्डवानपि भगवत्कृपानवलोकितान् मन्यत इत्यर्थः ॥ ३७ ॥

सः स्वपौत्रमित्यत्र । नीचापदसूचितमर्थमाहुः अन्ये त्वित्यादि । स्त्रिया कृतेन
चरणसंवाहनादिना एकदेशे भुज्यमाने वस्त्ररहिताया अपि स्त्रियः पतित्वं
१-१५-३८ स्वस्मिन् मन्यन्त इति योजना । वस्त्ररहिता इत्यत्र वस्त्ररहिताया
इति षष्ठ्यन्तः पाठः प्रतिभाति । पित्रोः द्विकर्मकत्वाभावेन स्वपौत्रं पतिरभ्यषिञ्चदिति
प्रयोगानुपपत्तिमाशङ्क्य तदुपपत्त्यर्थमाहुः पतिमित्यादि । अनुवादानङ्गीकारे दोषमाहुः
पतित्वेत्यादि । अनुशासनाभावेन द्वितीयायाश्चतुर्थ्यर्थे लक्षणाद्धातोर्द्विकर्मकत्वकल्पना च
स्यादित्यर्थः ॥ ३९ ॥

विसृज्येत्यत्र । अशास्त्रत्वादिति । न विद्यते शास्त्रमस्मिन्नित्यशास्त्रं तथात्वा-
दशास्त्रीयत्वादित्यर्थः । ननु शेषाभ्यनुज्ञानङ्गीकारे चीरवासस्त्वोक्ति-
१-१५-४० विरोधस्यत इत्यत आहुः चीरेत्यादि । तत्परित्यागतुल्यत्वेन वस्त्रपरि-
त्यागानुकल्पत्वेन वस्त्रपरित्यागज्ञापनार्थमिति न विरोध इत्यर्थः । ननु प्राजापत्येष्टिकथना-
दिनैव सन्न्यासारम्भे सिद्धे दुकूलादिप्रयाणीयनापि निराकृतैवेति पुनर्निर्ममत्वोक्तेः किं
प्रयोजनमत आहुः परित्यागेत्यादि । नन्वहन्तात्यागकथनस्य किं प्रयोजनमत आहुः
मध्य इति । अहन्तामध्ये । ननु ब्रह्मवादे 'मत्तः स्मृतिर्ज्ञानमपोहनं चे'ति वाक्याद्ध्यास-
स्येश्वरकर्तृकत्वात् किमिति कृतो वा त्याग इत्यत आहुः भगवत्कृतेत्यादि । तदाज्ञयेति ।
'वाचं यच्छ मनो यच्छ प्राणान् यच्छेन्द्रियाणि च । आत्मानमात्मना यच्छ न भूयः
कल्पसेऽध्वने'इत्यादिरूपया ॥ ४० ॥

वाचमित्यत्र । नन्वहन्ताऽध्यासपरित्यागः, तथापि तच्चिह्नस्यापि देहादिलये भाव-
नीये देहस्यान्नमयत्वा'दन्नं मर्त्यापते मर्त्य'मित्येकादशोक्तप्रकारेण लयो
१-१५-४१ भावनीयः । अथ साग्निकत्वाद्यज्ञावश्यकत्वम्, तदा 'श्रोत्रादीनीन्द्रि-

याण्यन्ये संयमाग्निषु जुह्वति' इत्यादिगीतोक्तप्रकारेषु केनचित्प्रकारेण होतव्यं किमित्ययं वागादिहोमप्रकार इत्याकाङ्क्षायां साधित्वेन द्वितीयस्यावश्यकत्वेऽपि गीतायां नानाप्रकारकथनात्तेषु नियम्यस्य नियामके होमः सर्वत्र सिद्ध्यतीति प्रकारान् वैकल्पिकत्वादनादृत्य सिद्धमादाय यथाकथञ्चिद्धोमेष्वाज्ञासिद्धिरित्याशयेनाहुः तत्रापीत्यादि । सम्पादितमिति । यस्य यत्सम्बन्धित्वं सम्पादितम् । तदाहुतीति । तस्माद्धेतोरेतं क्रममाहेत्यर्थः । सम्बन्धं प्रमाणेन स्फुटीकुर्वन्ति वागित्यादि । तथा च तस्यां हुतायां निमित्तापाये नैमित्तिकस्याप्यपाय इति शरीरसम्बन्धोऽप्यपैष्यतीति तदर्थं तथेत्यर्थः । वाचो मनःसम्बन्धित्वमाहुः मनस इत्यादि । ननु देवपत्नीकथनप्रस्तावे 'वाग्जाये'रिति श्रावणात्कथं मनोभार्यात्वमित्यत आहुः प्राकृती हि सेति । यतो हेतोः सात्र हूयमाना प्राकृती तेन मनोभार्या वैदिकीतोऽतिरिक्तेत्यर्थः । नन्वत्राहुतिरूपा स्ववक्तव्या वाक् स्वश्रोतव्या परस्य वाग्वा देवतारूपा वा । आद्ये बद्धवागित्यग्निपर्यवसानापत्तिः, द्वितीयतृतीययोस्तु तन्नियमासम्भवेनाहुतित्वासम्भव इति शङ्कायां तां निरसितुं व्यवच्छिन्दन्ति आत्मन इत्यादि । तयेत्याहुतिरूपया । नेति । नाहुतित्वेन । भगवत्कर्तृकाध्यासपक्षेऽप्ययमेव होमप्रकार आवश्यक इत्यत्र बीजमाहुः ईश्वरेत्यादि । हि यतो हेतोः ईश्वरकर्तृकाध्यासे आज्ञया निवर्तनीयेऽधीने लयो मुख्यः, अधिक इनः अधीनः निरङ्कुशेश्वर इति यावत् । तस्मिन् लयो मुख्यस्तत्सायुज्यसम्पादकः । अतोऽयं प्रकार आवश्यक इत्यर्थः । स त्वाहुत्य न भवतीति क्रमस्यावश्यकत्वे यस्य यन्नियन्तत्वं तदाहुः नत्रेत्यादि । मनोऽधीनत्वं मनो नियम्यत्वम् । अभिमानिनीति । भगवती प्रजापतेरिवेति । इदमुपाख्यानं 'प्रजापते आशया वै श्राम्यसी'ति श्रुतौ प्रायोऽस्ति । एतेन दृष्टान्तेन तस्या आहुतिसम्पादने तन्नियमे प्रमाणमुक्तम् । सिद्धमाहु तथेत्यादि । निवर्तयिष्यन इति । भगवता निवर्तनीया । तथा चास्याहुतित्वे तत्सम्बन्धेन सर्वा एव वाच आहुतिभावं प्राप्य निवृत्ता भविष्यन्तीत्यर्थः । वाचः स्वनियामकाधीनत्वं तन्नियामके मनसि तथात्वमतिदिशन्ति तथेत्यादि । हेतुमुखेन तत्र प्रमाणमाहुः तद्गतागतिभ्यामिति । 'स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयते, एवमेव खलु सौम्य मनो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते, प्राणबन्धनं हि सौम्य मन' इतिच्छान्दोग्यश्रुतौ मनोगतागतिभ्यां मनसः प्राणाधीनत्वनिरूपणादित्यर्थः । विपरीतमुद्भाव्य समादधते यद्यपीत्यादि । अग्र इति । निरोधानन्तरम् । ननु तथा सति तौल्यादाहुतिक्रमस्य वैकल्पिकत्वापत्तिरित्यरुच्या पक्षान्तरमाहुः तन्निरोधेनेत्यादि । प्राणनिरोधेनेत्यर्थः । तथापि दोषतादवस्थ्यमिति फलमुखेन स्मृतिप्रमाणत्वेनाहुः तथाचेत्यादि । तथा चेति । चोऽवधारणे । प्राणनिरोधेन मनोनिरोध



एव देहसम्बन्धापगमः । अत एवेति । प्राणनिरोधेन देहसम्बन्धापगमादेव । तन्मूलत्वकथनमिति । मनोमूलकत्वकथनम् । तथा च फलमेवास्य प्राणाधीनत्वगमकम्, अतो मनसः प्राणनिरोधकरणत्वम्, न प्राणस्य मनोधीनत्वप्रयोजकमित्यर्थः । नन्वत्रेश्वरे होमस्योपक्रान्तत्वादेतस्मिन् तद्दृष्टान्तस्मिन् होमकथनं विरोत्स्यत इत्याशङ्कायामाहुः होमेत्यादि । प्रकृतस्येति । युधिष्ठिरदेहादेः । तथात्वसम्पादनार्थमिति । मुक्तिसाधनाधिकारसम्पादनार्थम् । पूजायामित्यादि । यथैकादशे 'एवं जीवकलां ध्यायन्नादान्ते सिद्धभाविनाम् । तयात्मभूतया पिण्डे व्याप्ते सम्पूज्य तन्मयः' इत्यादौ पूजायोग्यत्वार्थं भावनया केवलचिदात्मकदेहनिर्माणवदित्यर्थः । प्राणस्यापानाधीनत्वं स्फुटीकुर्वन्ति प्रयत्नेनेत्यादि । वायुनेति । तस्य वायुना । अत्रापि 'प्राणो वै ग्रहः सोऽपानेनातिग्रहेण गृहीतोऽपानेन हि गन्धान् जिघ्रति' इति श्रुतिरनुसन्धेया । ननु प्रमाणस्यानुपलम्भात् मृत्योः कथमपाननियामकत्वमित्यत आहुः मृत्युनेत्यादि । 'स ऊर्ध्वं क्रियत' इति अपानः प्राणकर्षणायोत्क्षिप्यते । प्राणेऽपानाधीनतायाः साङ्गिकत्वं बोधयितुं योगिविशेषाणां मतमनूद्य परिहरन्ति केचनेत्यादि । तत्रेति । दुर्गतिस्थले । अत्रैवेति । स्वनियामके । तस्मान्न दुर्गतिरित्यर्थः । स मृत्युः को वेत्यपेक्षायामाहुः अशानयेत्यादि । तस्य कथं पञ्चत्वाधीनत्वमित्यत आहुः स सर्वेत्यादि । तत्र निरुद्धाविति । देहे निरुद्धौ । तस्य नियामकानीति । मृत्योर्नियामकानि । नियच्छन्तीति । प्रतिबध्नन्ति । अत इति । भक्षणपोषणयोरभावात् । नन्वेवं पञ्चभूताधीने मृत्यौ तस्य पञ्चसु होमो युक्तः, न पञ्चत्वे, अत्र दृष्टं यन्मृत्युनियामकत्वम्, तत्कस्य धर्म इति विमर्शेऽत्र होममाहुः एवमित्यादि । प्राप्ताप्राप्तविवेकेनेति । तस्य संख्यात्वेन मृत्युनियामकत्वायोगादित्याकांक्षायां तत्स्वरूपनिश्चायनपूर्वकं तदुपसेचनश्रुत्या भगवत एवेति प्राप्तम्, भूतानां तु प्रमाणभावेन न प्राप्तमिति तद्विवेकेन । भगवत्कार्यत्वादिति । ल्यब्लोपे पञ्चमी । भगवत्कार्यत्वं निश्चित्य । तत्प्रदिष्टस्येति । तादृशव्यवहारनियामकसंख्यारूपेण प्रविष्टस्य । एवं मृत्युहोमपर्यन्तं व्याख्यायाग्रिमश्लोकं व्याकर्तुमतिदिशन्ति एवं तत्रापीति । एवं नियामके नियम्यलयभावनया, तत्रापि त्रित्वे तन्नियम्यस्य पञ्चत्वस्य होमार्थे निर्णयेऽपि प्राप्ताप्राप्तविवेकरूपा युक्तिश्च शब्देन समुच्चीयत इति शेषः । सा कथमित्याकांक्षायां तां युक्तिं स्फुटीकुर्वन्ति स्वत इत्यादि । पञ्चानां क्रमत उत्पत्तेस्ततः पूर्वं स्वत एव सहसा भगवतः पञ्चत्वाभावात् तन्नियामकः पूर्वोऽवधिर्वक्तव्यः । स च विचार्यमाणस्त्रित्वं प्राप्तो भगवानेव पर्यवस्यति, तत्कथमित्याकांक्षायां भूतोत्पत्तेः पूर्वं द्विपदातिक्रमस्यैव, द्वे च ते पदे च द्विपदं गरुडकालौ तयोरतिक्रमस्यैव शक्यत्वात् सुकरत्वात् स्वस्मिन्नित्यादिनोक्तरीत्या स्वकाललक्ष्मीभिस्त्रित्वं प्राप्तः स्वगरुडप्रकृतिभिर्वा त्रित्वं प्राप्तो भगवानेव प्राप्ताप्राप्तविवेकेन पञ्चभूतानियामकतया

अग्नित्वं प्राप्त इत्यर्थः। अग्निं व्युत्पाद्य होममाहुः तदेवमित्यादि। तच्चैकत्वे जुहोदिति त्रित्वहोमं व्याकुर्वन्ति तत्रापीत्यादि। प्रकृतिस्वरूपे इति। तदात्मना एकत्वरूपे भगवतीत्यर्थः। 'सर्वमात्मन्यजुहवी'तित्यनेनोक्तमेकत्वहोमं व्याकुर्वन्ति सा हीत्यादि। शेषं स्फुटम्। अथवेत्यादि। अस्मिन् पक्षे एकत्वस्यात्मपदवाच्येऽक्षरे होमः। प्रकृतिपुरुषयोस्तुल्यबलत्वेनैकस्मिन् नियामकताया अशक्यवचनत्वात्। एवं पक्षद्वयेपि नवाहुतयः, नवैवाग्नयः। तदिदमभिप्रेत्याहुः एवं भगवत्यादि॥ ४२॥

चीरवासा इत्यत्र। अतः परमित्यादि। अतः परं एवं प्रकारेण देहप्रतिपत्त्या-
१-१५-४३ दिना जातायाः परममुक्तेरनन्तरं यदि 'अक्षरधिया'मिति सूत्रोक्त-
न्यायेन भगवदिच्छया अस्य युधिष्ठिरस्य देह उत्पद्यते, तदा पार्षदवत् ब्राह्मो वा चिदात्मको वा भगवत्सेवार्थमुत्पत्स्यत इत्यर्थः। बीजस्येति। संसरणबीजस्य प्राणादेः। एतादृशस्येति। बीजादिरहितस्य। एतदपरित्याग इति। देहापरित्यागे। नौकोत्तारणवदिति। नौकात्यागवत्।

अनवेक्षमाण इत्यत्र। नन्वेवं देहाद्यध्यासाभावे 'निरगा'दित्यनेनोक्तस्य गमनस्य
१-१५-४४ कथं सिद्धिरित्यत आहुः दग्धेत्यादि। दग्धे पटे पटत्वजातिवदनभि-
मानेपि संस्काररूपो गुणस्तिष्ठति, तेन सिद्धिरित्यर्थः।

ते साधुकृत्येत्यत्र। अस्तीति। 'यत्कर्मभिर्यत्तपसे'त्यादिवाक्यादस्ति।
१-१५-४५ भक्तिश्च पञ्चम इति। तैरनुभूत इति शेषः॥ ४१॥ ४२॥

१-१५-४७ तद्ध्यानेत्यत्र तेनेति। बहिर्निर्गमनेन॥ ४७॥

अवापुरित्यत्र। प्रत्येकमगमने हेतुरिति। आचारराहित्यमन्तःकर-
१-१५-४८ णदोषश्चेति द्वयं प्रत्येकं तथेत्यर्थः॥ ४८॥

इति श्रीप्रथमस्कन्धसुबोधिनीप्रकाशे पञ्चदशाध्यायविवरणम्॥ १५॥

---

## अथ षोडशाध्यायविवरणम्।

षोडशाध्यायं विवरिषवः सङ्गतिं वक्तुं पूर्वाध्यायत्रयार्थमनुवदन्ति मुक्तिरित्यादि। पूर्वमिति। पूर्वाङ्गत्वात्पूर्वमित्यर्थः। पितृहेतुन इति। पितृभ्यो हेतुभ्यः। इदं पारलौकिकबन्धस्येत्यनेनान्वेति। प्रस्तुताध्यायत्रयार्थमाहुः ऐहिकेत्यादि। अधुनेत्यस्मिन् प्रकरणे। तेनोभयोः प्रकरणयोरेककार्यत्वं सङ्गतिरित्यर्थः। अत्राध्यायद्वयप्रयोजनमाहुः अधिकारेत्यादि। निवार्यत इति। बन्धो निवार्यते। अतो द्वैविध्यादध्यायद्वयमपेक्ष्यत इत्यर्थः। अवान्तरार्थानस्याध्यायस्याहुः प्रथममित्यादि। यद्भवेदिति। यद्गूरक्षादिकं राजत्वाद्भवेत्, सामान्येन तन्निरूप्यते। अश्वमेधादिकं तु विशेषत इत्यर्थः। विशेषतो निरूपणप्रयोजनमाहुः अन्यथेत्यादि। द्विविध इति। लौकिको वैदिकश्च। पूर्वपक्षे न्यूनत्वं लौकिको दोषः। अयाज्ञिकत्वं च वैदिक इति। आधिदैविकरक्षायाः किं प्रयोजनमत आहुः स्थापित इत्यादि। धर्म इति शेषः। मूलदोषादिति। काले धर्मः क्रियत इति तस्य मूलं कालस्तद्दोषात्। शेषं स्फुटम्॥ १॥



स उत्तरस्येत्यत्र। 'मातुलस्येव योषे'ति वाक्यस्य विधायकत्वे, समानयोग-
१-१६-२ क्षेमत्वाद्धन्वन्निनेत्यादीनामपि विधायकत्वापत्तिः, तथा च सति प्रत्यक्ष-
श्रुत्यैव सर्वनिर्वाहाच्छिरयानुमेयश्रुत्यङ्गीकारो व्यासादीनां मुधैव स्यादित्यत आहुः अत इत्यादि। तथा च यत्र स्मार्तः प्रतिषेधः, तत्र लौकिकारत्वेन श्रुत्याशयो व्यवस्थाप्यः। कुमारशिखाधारणवत्तत्रापि विधेरुन्नेतुं शक्यत्वात्। अन्यथोभयोर्निरवकाशत्वेनान्यतरबाधापत्तिः। यत्तु भाट्टाः। मातुलकन्यापरिणयस्य केवलशिष्टाचारमूलकत्वं स्मृतिपादपञ्चमाधिकरणद्वितीयवर्णके व्यवस्थापयन्ति। तदेतेन प्रत्युक्तं ज्ञेयम्। दूरतोपि श्रुत्याश्रयाभावे केवलस्य दुर्योधनाद्याचारवद्भ्रान्ताचारत्वेनाप्रामाण्याच्छिष्टानादरणीयत्वापत्तेः। अतः श्येनादिवत्तत्करणमिति युक्तमुत्पश्यामः। नाम्नेत्यादि। इराया मुख्यासु द्वादशभगवच्छक्तिषु 'श्रिया पुष्ट्ये'ति वाक्ये गणनात्तद्रूपत्वेन तथेत्यर्थः। श्रुताविति। 'इरावती धेनुमती हि भूतम्सूयवसिनी मनवे यशस्ये व्यस्कभ्ना रोदसी विष्णुरेत' इति श्रुतौ॥ २॥

आजह्रेत्यत्र। पूर्ववदिति। जातकोक्तकालगुणवशात्। अनेनेति। परी-
१-१६-३ क्षिता। ननु पूर्वतन्त्रे देवताया मन्त्रमयत्वप्रतिपादनात् कथमक्षिगो-
चरत्वमित्यत आहुः हविरित्यादि। क्रियमाणा इति। मन्त्रमयत्वेन क्रियमाणाः। तथाचोत्तरतन्त्रे देवताविग्रहाधिकरणे तस्या विग्रहस्थापनात्पूर्वतन्त्रं मध्यमाधिकारिपरम्। अतो न विरोध इत्यर्थः॥ ३॥

१-१६-४ निजग्राहेत्यत्र। पापाधिष्ठातृत्वादिति। कलेस्तथात्वात्॥ ४॥

कस्य हेतोरित्यत्र। समुच्चयप्रतीतिरिति। यथा ब्राह्मणाः शूद्राः प्रवेशनीया
१-१६-५ इत्यादौ तथेत्यर्थः। अशक्यत्वं विवृण्वन्ति विग्रहेत्यादि। तद्विशे-
षणत्वेनेति। कलिविशेषणत्वेन॥ ५॥

किमन्यैरित्यत्र। उभयस्योभयं प्रतियोगीति। उक्तालापद्वयं भगवत्कद-
१-१६-६ कथयोः प्रतिकूलतया योगिविरुद्धत्वेन सम्बन्धीत्यर्थः॥ ६॥

अमृतमिच्छतामिति। एतेन मूले मर्त्यानामृतमिच्छतामित्यत्र मर्त्यादमृत-
मिति पाठः सुबोधिन्यां प्रतिभाति। उक्तयोजनायामर्थस्याध्याहा-
रसम्भवात्पक्षान्तरमाहुः पूर्वेण वेति। उक्तयोजनयोर्मध्ये पूर्वेव साधी-

यसी उत्तरश्लोकानां स्वारस्यादिति ज्ञापयितुमग्रिमं व्याकुर्वन्ति सहस्रेत्यादि । निश्चय इति । 'विश्वसृजः प्रथमा' इत्यत्र हिरण्मयशकुनिरूपब्रह्मप्रादुर्भावश्रावणात् तथेत्यर्थः । स इति । मृत्युः । ननु यज्ञे मृत्युभागः को वा सर्वेहविषां तत्तदेव तत्त्वेन तत्र मृत्योरप्रवेशात् क्वचित्प्रवेशेऽप्यसार्वत्रिकत्वादित्याशङ्कायामाहुः अवस्थाभेदेनेति । तथा च नीयमानावस्थानां पशूनां तद्भागत्वात् पशुयागे तत्प्रवेशात्तथेत्यर्थः । यागान्तरेऽपि प्रवेशायाहुः रौद्रमित्यादि । तथा च घृतस्य सर्वयागेषु सत्त्वान्मृत्यो रुद्रावस्थया घृतस्य गोनिष्ठत्वावस्थया च यागमात्रे तस्य तथात्वमित्यर्थः । शामित्र इतिवक्तव्ये यत्कर्मपदमधिकमुक्तं तत्तात्पर्यमाहुः तत्रेत्यादि । इह भगवानाहूतः । शामित्रकर्मणि मृत्युराहूतः । इत्युभयाह्वानपक्षमङ्गीकृत्याहुः अर्थमित्यादि । अर्थं निश्चित्येति । भाविनमर्थं निश्चित्य ।

न कश्चिदित्यत्र । स्वापकीर्तिनिवारणार्थमिति । अत्र प्रथमश्रुतावायुरणमुक्तम्,

तच्चोद्यमनम् । 'सर्वे सर्वाभ्य एव देवताभ्य सर्वेभ्यः पृष्ठेभ्य आत्मा-

१-१६-८ नमागुरतेयाः सत्रायागुरत इति सर्वाभ्य इत्यादौ चतुर्थी' । तथा चोक्तसर्वार्थपात्मानमुद्यमयतीत्यतोपकीर्तिः । द्वितीयस्यां तु 'सर्वासां वा एते प्रजानां प्राणैरासते ये सत्रमासते तस्मात्पृच्छति किमेते सत्रिण'इति स्फुटैवापकीर्तिरिति तदर्थं तथेत्यर्थः । एवं विचारितमित्यग्रिमेण अस्याप्यन्वयः ॥ ८ ॥

१-१६-९ मन्दस्येत्यत्र । सामर्थ्यमिति । मृत्युनिवारणसामर्थ्यम् ॥ ९ ॥

१-१६-१० यदेत्यत्र । कलिनिग्रहस्येति । कथ्यमानस्य तस्येत्यर्थः ॥ १० ॥

१-१६-१० यदापरीक्षिदित्यत्र । कलिप्रवेशकथनादुत्क्रमेव ।

१-१६-१७ तस्यैवमित्यत्र । उक्तमेवेति ।

धर्म इत्यत्र । प्रवृत्ताविति । पृथिवीधर्मयोर्विशेषणम् । छायापदस्यातपाभावार्थ-

कत्वमभिप्रेत्य प्रकारान्तरेण वैवर्ण्यमाहुः च्छरणा इत्यादि । वत्सरहिताया

१-१६-१८ गोः पितृपयोगित्वं 'पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थ'मिति तद्विबोधकश्रुत्या ज्ञेयम् । अभिवान्या मृतवत्सा । मन्थः सक्तुः । व्याख्यातमिति । पितृपयोगिकथनेनाभिवान्यात्वबोधनादेवोक्तार्थम् ॥

१-१६-२६ सत्यमित्यत्र । शोके हर्षे चेति । इदानींतनशोके भाविकहर्षे चेत्यर्थः ॥

ब्रह्मादय इत्यत्र । सर्वसाधारण्येन सर्वशोकहेतुभूतयोर्भगवद्राहित्य-

१-१६-३२ कलीक्षितयोः कथनेन प्रश्नोत्तरपूर्तौ ब्रह्मादय इत्यादिकथनस्य प्रयोजनमाहुः अलमित्यादि । तत्रोक्तगुणवद्भगवद्राहित्यस्य शोकप्रयोजकत्वात्ते गुणाः सहजा इति मूलग्रन्थानुरोधाद्वक्तव्यमिति तद्व्याख्याय मतान्तरं दूषयितुमुपक्षिपन्ति अत्र केचिदिति । मायावादिनः । तदीयत्वे गुणत्वमेव भज्येतेति । तमसः प्रलायकत्वेन स्वातन्त्र्यस्य तमोगुणत्वात् कौशलादीनां रजोगुणत्वाद्रजस्तमसोश्च हेयत्वेन तेषां गुणत्व-



मेव न स्यात्, विग्रहस्य सात्त्विकत्वाङ्गीकारेऽपि तत्र तेषां प्रवेशाऽसम्भवादपि तद्गुणत्वं न स्यादित्यर्थः । ब्रह्मत्वं वा भवेदिति । सत्त्वादीनामसत्त्वादेतेषामपि तथात्वाभावेन तत्राभावेन निर्विशेषब्रह्मत्वमेव भगवतः स्यात्, तन्नीश्वरत्वमित्यर्थः । तेषां सदसद्विलक्षणत्वे तु 'न सत्तन्नासदुच्यते' इति गीतावाक्येन ब्रह्मणस्तथात्वात्तेषामपि ब्रह्मत्वं स्यात्, न तु गुणत्वमिति वार्थः । नन्वेते गुणा भगवति नारोपिताः, किन्त्वागन्तुकाः, अतो निर्विशेषत्वाभावान्न ब्रह्मत्वम्, किन्त्वीश्वरत्वमिति चेत्, तत्राहुः संयोगजन्य इत्यादि । तथा च तथा चेत्तदासनारण्यवद्भगवति प्रतीयमाना अपि ते गुणा नैव स्युर्न भगवत इत्यर्थः । ननु भूतद्रव्यवत्ते भगवत्युत्पद्यन्ते, न तु पराङ्गयन्ति, अतो भगवदीया इति चेत्, तत्राहुः उत्पत्तावित्यादि । न च नित्यपदस्य यावद्वस्तुभावित्वपरत्वं युक्तः, 'न व्ययन्ति स्म कर्हिचि'दिति चतुर्थपादस्य स्वारस्यविरोधात्तेः । अतस्तद्विरोधो दुरुद्धर एवेत्यर्थः । ननु गुणसम्बन्धः सार्वदिक एवाङ्गीक्रियत इति न पूर्वोक्तो दोष इत्यत आहुः सगुण इत्यादि । सत्त्वादिगुणस्वरूपविचारेण दूषणान्तरमाहुः केत्येत्यादि । अस्तु सगुणस्तथापि कानुपपत्तिर्यदर्थं भगवति सत्त्वादयः कल्प्यन्ते, निर्विशेषस्य जगत्कर्तृत्वाद्ययोगात्तद्युक्तानां तेषामसम्भव इति चेद्वाढम्, तर्हि तेषां सत्त्वादीनां सामर्थ्यं विचारणीयम्, किमेते तां परिहर्तुं शक्ता न वेति । तत्राद्यस्तु न सङ्गच्छते । तथाहि । ते जडाः किं ब्रह्मणि स्वत एव सम्बद्धाः, हेतुना वा । आद्ये त्रयाणामन्योन्यमिथुनवृत्तित्वेन सम्बन्धस्याविशिष्टत्वाद्युगपत्कार्यत्रयापत्त्या सृष्टिस्थित्यादिव्यवस्थाभङ्गप्रसङ्गः । अथ चलत्वाद्रजः प्राक्संसृज्यते, ततोऽन्यस्ततः इतर इति गुणस्वभाव एव व्यवस्थापक इति चेत्तर्हि सर्वप्रलायकत्वात्प्रथमं तमः कुतस्तूष्णीकं, वस्त्वभावादिति चेत्, तर्हि उत्पद्यमानानेन द्वितीयक्षणे ग्रसतु । अथ सत्त्वेन प्रतिबन्धान्न तथेति चेत्, तर्हि सत्त्वस्यापि सर्वदा सत्त्वान्न जातु प्रलयोऽस्तु । अथान्योन्योपमर्दकत्वमपि तेषां स्वभाव इति तत्त्वोपमर्दान्तुरोन प्रलय इति चेत्, तर्हि वैनाशिकक्रियाया अनङ्गीकारात् ग्रस्यमानानां द्वितीयक्षण उत्पत्तिरस्तु । स्वभावस्यानपेक्षत्वात् हेत्वन्तरस्यानुपेक्षत्वाच्च । अतोऽत्र विनियमभङ्गादाकास्मिकवादानतीतः सामायवादप्रसङ्गः । [illegible] 'जन्मा वा इत्यादि'-त्यादिश्रुतिविरोधश्च । अथ हेतुना सम्बद्धास्तर्हि स [illegible] कार्योत्पत्तिः, साङ्ख्यमतापत्तिश्च । हेतुश्च क इत्यपि विचारणीयम् । काल इति चेत्, अद्वैतहानिः । इच्छा चेत्, तदपि तथा । तत्रापि तस्याः क्रमानपेक्षायामव्यवस्थाप्रसङ्गः । अपेक्षायां तत्र हेतोरवश्यवाच्यत्वेन गुणानां तथात्वाङ्गीकारे स्वभाववादापत्त्या तद्दोषतादवस्थ्यम् । तेषामवस्तुत्वेनाङ्गीकारात्ततः कार्याभावे शून्यवादप्रसक्तिः । अतस्तेषां सामर्थ्यविचारे भगवति तत्सम्बन्धकल्पनमसङ्गतमित्यर्थः । ननु भेदवादमङ्गीकृत्य सत्त्वादीनां चेतनत्वं चाङ्गीकृत्य तत्सम्बन्धं च नित्यमङ्गीकृत्य स्वातन्त्र्यादीनां गुणधर्माणां भगवति

नित्यत्वमङ्गीक्रियते इति चेत्, तत्राहुः अथेत्यादि । प्रासङ्गिकं परिहृत्य प्रस्तुतमाहुः बहुतिथमित्यादि । विशेषेणात्मप्रशोके को वा हेतुरित्याकाङ्क्षायामाहुः भगवत्त्यागस्येति । भगवत्कृतत्यागस्य । विचार्यत इति । स्वतस्त्यागे भगवतः स्वतन्त्रत्वाददोषः, स्वात्मदोषेण त्यागे त्वधिक इति निश्चेतुं त्यागहेतुर्विचार्यत इत्यर्थः ॥ ३२ ॥

सर्वानर्थायेत्यत्र । कर्मधारयः तदित्यादि । एकेन त्यक्तं ह्यन्योपेक्षत इति तेन
ग्रहणे सर्वेऽनर्था इत्यर्थः । हेत्वन्तरमाहुः संघातप्रवेशेनेति । व्युच्च-
१-१६-२२ रणोत्तरमपि यावन्न सङ्घातप्रवेशः, तावत् न तत्त्यागः, अतस्तेन सापेक्षत्वेऽपेक्षाया अनर्थमूलत्वात्तथेत्यर्थः । प्रकृते को वानर्थ इत्यत आहुः हीनेत्यादि । हीनेन हीनस्य वापेक्षायां भगवदीयत्वरूपस्वरूपमेव नश्यतीति स एवानर्थ इत्यर्थः । अत इति । एतत्सर्वमवगत्य । समर्थेति । अन्यस्य हीनतानिवारणसमर्था । निर्वाहार्थं चेति । चकारात् स्वस्य भगवदीयताया अपि निर्वाहार्थम् । कार्यं कारणं चानुपदमत्रैव व्याख्यास्यते । अन्य इति । ब्रह्मादयः । तत्सेवकाः । भगवतः सेवकाः । सपत्नीति । समानभाग्या । अत एवमस्माकं सर्वेषां भगवदीयत्वाद्विवक्षितं वक्तुं सर्वत्यागसूचकं भजनरूपं तस्याः कृत्यमाहेत्यर्थः । तस्या इत्यादि । तस्याः स्वकार्ये औदासीन्यं वक्तुं प्रथमतः स उच्यते इत्यर्थः । कटाक्षपदेनेति । तद्वाचकापाङ्गपदेन । उच्यत इति । भावोद्धारिणान्तानां चतुर्णामभावे तादृशदृष्टेरसम्भवादर्थबलेन समर्प्यते । अत इति । एषां दुर्लभानां लक्ष्मीदृष्ट्या सिद्धिमवगत्य । तादृशा इति । लक्ष्मीकटाक्षमोक्षकामाः । उक्त्वेति । तत्रौदासीन्यबोधनायोक्त्वा । जन्मस्थानमिति । 'पुनश्च पद्मादुद्भूता । आदित्योभूद्यदा हरि'रिति विष्णुपुराणवाक्याज्जन्मस्थानम् । एतेन सिद्धमाहुः पता-वतेत्यादि । तत्त्वाय चेति । भजत इति शेषः ॥

तस्यैरत्यत्र । भगवद्ग्रहणमिति । 'ततो विभूति'मित्युत्तरार्द्धे तच्छब्देन
भगवद्ग्रहणम् । तदर्थमिति । सङ्घाते विद्यमानानामप्यमृताधिका-
१-१६-३३ रार्थम् ॥ ३३ ॥

न्यौनिरत्यत्र । विशेष्यभूतश्लोकोक्तावपि पदसमभिव्याहारसूचितमर्थमाहुः अन्ये-
षां च त्रित्वयुक्तानामिति । ते च ब्रह्मादयः सात्त्विकादिभेदभिन्नाः
१-१६-३३ भक्ताश्च ज्ञेयाः ॥ ३३ ॥
१-१६-३४ यो वा इत्यत्र । मूलभूतामिति । भगवत्कृते त्यागे मुख्यहेतुभूताम् ॥

इति श्रीप्रथमस्कन्धसुबोधिनीप्रकाशे षोडशाध्यायविवरणम् ॥ १६ ॥

---



# अथ सप्तदशाध्यायविवरणम् ।

अथ सप्तदशाध्यायं विवरिषवोऽध्यायार्थस्य पूर्वमुक्तत्वेपि विशेषेणावान्तरार्थान् बोधयितुं पुनराहुः ततः सप्तदशे इत्यादि । विद इति । तत्स्वरूपज्ञातु राज्ञः सकाशात् । प्रथमं सान्त्वननिरूपणतात्पर्यमाहुः प्रथममित्यादि । विचारत इति । अयमधर्मचक्षुरतस्तादृशान्येव स्थानान्यस्य देयानि, अन्यथान्यस्याप्यधर्मस्थानत्वापत्त्या महानेवानर्थ इति विचार्य धर्मस्थापनतात्पर्यमाहुः विवेकस्थापनायेति । नानावाक्यकृतो यो विमोहस्तन्निवारको योधिकारिविवेकस्तत्स्थापनाय । तस्यापि प्रयोजनं हि यतो हेतोः ततः विवेकादस्य राज्ञः सर्वसामर्थ्यसम्बन्धः । आधिदैविकं ज्ञातुं सामर्थ्यसत्ता बोध्यत इत्यर्थः । तस्यापि प्रयोजनम्, अग्रिमाध्यायेऽद्भुतं वैराग्यं वक्तुं तदुपोद्घातता । एतेनाग्रिमसङ्गतिरुक्ता । मूर्तामूर्ता इत्यादि । अलौकिकसामर्थ्यमवगन्तुं प्रत्यक्षा जाता इति शेषः । ज्ञानानन्तरं धर्मप्रचारसामर्थ्यं बोधयितुं प्रतिसन्धानकथैत्याशयेनाहुः सन्धानमित्यादि । तेन हेतुनास्य धर्मस्य स्वयं स्वत एवाश्वासनं कृतम्, भूमेस्तु शोकस्य हेतूनां निवारणात् परम्परयेत्यर्थः ॥

वृषमित्यत्र । तत्र प्रत्यहं धाह्यक्षय इति । पश्चाङ्गवैकल्ये बाह्यस्य धर्मस्य क्षयः
सूचित इत्यर्थः । तदुपपादयन्ति कर्मेत्यादि । कर्मक्षय उक्त इति ।
१-१७-२ मूत्रणस्य विसर्गरूपत्वात् कर्मेन्द्रियसाध्यत्वाच्च बाह्यस्याचारादिरूपकर्मणः क्षय उक्त इत्यर्थः । इवेत्यनुकरणादिति । इवपदबोधितादनुकरणात् । दम्भेन करणमिवपदेन बोध्यते इति बाह्यधर्मस्य क्रियारूपस्य क्षय उक्त इत्यर्थः । रोग सूचित इति । तथा च दुष्कर्मभोगसूचनात् । तेनापि बाह्यधर्मक्षय उक्त इत्यर्थः । चञ्चला भवतीति । तेन फलानुपयोगाद् क्षयस्तस्योक्त इत्यर्थः । सीदन्तमित्यस्यार्थमाहुः जाड्येन वेपन्तमिति । इत्येव सम्बन्ध इति । पूर्वश्लोकोक्तक्रिययैव सम्बन्धः, नतु 'पप्रच्छे'त्युत्तरश्लोकोक्तया तत्र धारणोद्योगस्यैव दर्शनादग्रे कलि प्रत्येव पूर्वं प्रश्नाच्चेत्यर्थः ॥

कस्त्वमित्यत्र । निश्चयभेदादिति । अद्विमत्त्वनिश्चयस्य पूर्ववाक्ये जातत्वेपि तद्वि-
शेषनिश्चयस्य द्वितीयोक्तकर्मणा जातत्वाचेन द्वितीय इत्यर्थः । पूर्ववाक्यो-
१-१७-५ क्तकर्मणापि तस्य सम्भवादित्यरुच्या पक्षान्तरमाहुः अथेत्यादि ॥

द्वितीयस्याभासे । तथापीति । एवं प्रश्नोत्तरमपि ॥

मा सौरभेयेत्यत्र । एवं कथनमिति । अवस्थानुवादेनास्मासु दुष्टत्वमिवारोपय-
१-१७-९ त्कथनम् ॥
१-१७-११ एष इत्यत्र । स्वकर्तृकहिंसाविषया इति । परीक्षितकर्तृकतद्विषयाः ॥

आख्यादीत्यत्र। एतस्य शिक्षार्थं दण्डकरणपक्षेपीति। अयं शूद्रो वृषस्य
शिक्षायै दण्डं कृतवानिति पक्षेपि। तथापीति। वैरूप्यकरणे। वैरूप्य-
१-१७-१३ करणमेवास्योचितम्, न तु मारणमित्यर्थः। पूर्ववदिति। प्रायेण
विगीतम्॥

१-१७-१५ राज्ञ इत्यत्र। त्यक्तशासनस्येति। दत्तभूताभयस्य॥

एतद्व इत्यत्र। अयमिति। राजा। तथा भातीति। बहिर्मुखो भाति। सर्व-
१-१७-१६ प्रमाणार्थ इति। इदं भगवत्पदव्याख्यानम्॥

न वयमित्यत्र। उपदिशतीति। परोक्षेणोपदिशति। नन्वेवं परोक्षेण किमि-
त्युपदेश इत्यत आहुः अयमर्थ इत्यादि। द्वैराश्यादिति। श्रुति-
१-१७-१७ स्मृतिभेदेन द्वैराश्यात्। तादृक्स्वभावेति। हसन्स्वभावेत्यर्थः।
पुरुष इति। न्यायवैशेषिकमीमांसकमते। अन्तःकरणं साङ्ख्यपातञ्जलमते। शरीरं धर्म-
शास्त्रमते। अन्यानीति। देशकालद्रव्यमन्त्रकर्माणि। व्यष्टिमेव हेतुं मन्यन्ते इति।
अस्मदादिशरीरमेव स्वक्लेशबीजं मन्यन्त इत्यर्थः। आत्मनैवेति। पक्षान्तरेप्येवं
तृतीया सहार्थे। तेन दैवकर्मस्वभावेषु सर्वत्रात्मपदान्वयो बोध्यः। प्रथमपक्षे तु करणार्थे।
तथा च तेन क्लेशा भवन्तीति शेषः। समष्टिमिति। ब्रह्माण्डशरीराभिमानिनम्।
कारणमिति। व्यष्टिक्लेशकारणम्। पुरुषकारणवादिनः पातञ्जलाद्याः। पौराणिकविशेषा
वा। पुरुषं मन्यन्त इति। तत्त्वात्मकं तथा मन्यन्ते। कर्मेति। भिन्नं पदम्। अन्ये
पुनरिति। पौराणिकविशेषाः। विवेचनस्वरूपमाहुः नियामकत्वमित्यादि॥

धर्मं ब्रवीषीत्यत्र। स्वरूपासिद्धिमिति। पक्षे हेत्वभावम्। धर्मवक्तृत्वादिति।
द्वितीयमनुमानमुक्तमित्यर्थः। स्वरूपासिद्धिवारणायानुमानान्तरं वदती-
१-१७-२१ त्याहुः किञ्चेत्यादि। तथा च वृषत्वेपि प्रयोजकान्तरमन्तरेण मनुष्य-
वाणीवक्तृत्वादनुमिते अलौकिकत्वे, तेषु तस्यैव तथात्वं ततोपि त्वं धर्म एवेत्यर्थः।
अर्थादधर्मस्येति। सूचकस्येत्यन्वयः। तथा चाधर्मस्य यः सूचकः अनेनाधर्मः कृत
इति शृङ्गग्राहिकया वक्ता तस्येत्यर्थः॥

तप इत्यत्र। अन्यथानिरूपणस्येति। 'सत्यं दया तपो दान'मित्येव कथनस्य।
परदुःखप्रहाणेच्छेति। इदं न दयालक्षणम्। पूर्वं परदुःखासहनं
१-१७-२३ दयेति लक्षितत्वात् एकादशस्कन्धसुबोधिन्यां तथा प्रतिपादयिष्यमाण-
त्वाच्च। ननु 'न हिंस्या'दित्यादिश्रुतिभिर्निषेध्यत्वेन प्रत्तियोगिनोऽधर्मस्याप्यवगमात्
कथमधर्मे प्रमाणाभाव इत्यत आहुः निवृत्त्यर्थमित्यादि। अनुवादे गमकमाहुः अन्यथे-
त्यादि। अधर्मस्यापि प्रमाणवाक्यार्थत्वे अर्थद्वयाभावेन वाक्यभेदः स्यात्, अतो न



'हिंस्या'दित्यादिष्वपि निषेधविधानार्थं हिंसादेरधर्मस्यानुवाद एव स्वीकार्य इत्यर्थः।
भूमिरिति। कर्मभूमिः। अधर्ममिति। व्यवस्थापयतीति शेषः। कृशाविशेष इति।
भगवद्दासत्वाभिमानसम्पाङ्गभगवद्दानादिकृतदर्पोत्कर्षे। गोब्राह्मणाद्यर्थकातृत्वदशायाम्।
ननु सम्बुध्यन्ते धर्मपदे विभक्तिव्यत्यासाच्चां निवर्तयेदिति व्याख्यानमयुक्तमि-
त्यत आहुः विभक्तीत्यादि। व्यत्यासानङ्गीकारे स्वात्मानमित्यध्याहारः स्यादित्यर्थः।
नन्वधर्मस्य पदार्थान्तरत्वेन कालभिन्नत्वात्कथमुद्देश्यविधेयभाव इत्याकाङ्क्षायां तस्य
पर्यवसानं विचारयन्ति अपरिच्छिन्न इत्यारभ्य कलिरित्यर्थ इत्यन्तेन। एवं युगवि-
भागे उपपत्तिमाहुः कालस्येत्यादि। त्रिलोचनराशीति। अधर्मराशीत्यर्थः। अधर्मा-
शप्रवेश इति। अवच्छेदके काले तत्प्रवेशः। तथा च यथा सम्वत्सररूपेण परिभ्रमन्
सर्वमन्तः स्थापयति, तथाऽधर्मांशमपीति तथा विभाग इत्यर्थः। ननु कृतकल्योर्धर्माधर्मा-
वच्छेदकत्वे किं मानमत आहुः ये वा इत्यादि। प्रसङ्गान्निर्द्धारितमिति। 'देवस्य
सवितुः प्रात'रित्यनुवाके प्रातःसङ्गवमध्याह्नापराह्णसायाह्नानां सवितृमित्रबृहस्पतिभृगु-
वरुणदेवत्यत्वेन पुण्यत्वं वदन्त्या श्रुत्या तदवान्तराणां सम्बन्धिनां चतुर्णामग्निष्टोमोकथ्य-
षोडश्यतिरात्रकरणेनात्सवीर्यत्वं च वदन्त्या चत्वार्यश्लीलानीति वदन्त्या चतुर्णां
कालावयवानामेतद्भावचतुष्टयरूपत्वं निर्द्धारितमित्यर्थः। मध्यभागेनेति। घटस्या-
न्तर्बहिराकाशो मध्ये घटस्तथोभयतः कालो मध्येऽधर्मः। एवं तत्युद्देश्यविधेयभावस्यावच्छे-
दकत्वे पर्यवसानमित्यर्थः। पूर्वमिति। द्वापरत्रेतयोरित्यर्थः। ननु द्वापरत्रेतयोः कलि-
सद्भावे किं मानमित्याकाङ्क्षायां पूर्वोक्तां श्रुतिमेव स्मारयन्ति अत एवेत्यादि॥

१-१७-२७ इतीत्यत्र। उक्तसमुच्चयार्थ इति। स्वल्पतद्दुःखज्ञानसमुच्चयार्थः।
१-१७-२८ तमित्यत्र। स्वकुटुम्बमिति। कलिकुटुम्बम्।
पतितमित्यत्र। सोपीति। गतिनाशोपि। तत्र जात इति।
१-१७-२९ अधर्ममारणावसरे जात इत्यर्थः। पशुरिति। राजा पशुः।
त्वामित्यत्र। ज्येष्ठा दारिद्र्यसम्पादनमिति। पुराणे अलक्ष्म्या
१-१७-३१ लक्ष्मी ज्येष्ठभगिनीत्वाज्ज्येष्ठेतिनाम्ना प्रसिद्धेस्तथेत्यर्थः॥ ३१॥
यस्मिन्नित्यत्र। धर्मपक्षे विस्ताराभाव इति। धर्मादेव फलमदृष्टद्वारेतिपक्षे
शं तनोत्यनेनोक्तो यः सुखविस्तारस्तदभावः। फलस्य तददृष्टनियत-
१-१७-३३ त्वादित्यर्थः। तथास्त्विति। एकोस्त्वित्यर्थः॥ ३२॥
१-१७-३८ पुनश्चेत्यत्र। पुनः प्रासानामिति। स्वातन्त्र्येण प्राप्तानाम्॥ ३८॥
अथेत्यत्र। पदार्थाग्रहेणेति। पदार्थस्वरूपस्याविचारेणापाततः पदार्थप्रतीत्ये-
त्यर्थः। यत्रेति। स्वस्त्रीसेवनादौ। न विधिर्न प्रतिषेध इति। लोके
१-१७-४० 'व्यवायामिषमद्यसेवे'तिवाक्यात्तदाकाङ्क्षानिवृत्तये नियम इत्यर्थः॥४०॥

स एष इत्यत्र । शान्तस्येति । अविद्यमानस्य । भगवत इव स्फुरणा-
१-१७-४२ दिति । यथा भगवतो व्यापकत्वं तथा सायुज्यं प्राप्तेपि व्याप-
कत्वाविर्भावात् ॥ ४२ ॥
इत्थम्भूतेत्यत्र । संवत्सरेत्यादि । तथा च दीक्षायां शमित्रस्याभावेन
१-१७-४४ मृत्योराह्वानाभावादविरोध इत्यर्थः ॥ ४४ ॥

इति श्रीप्रथमस्कन्धसुबोधिनीप्रकाशे सप्तदशाध्यायविवरणम् ॥ १६ ॥

## अथ अष्टादशाध्यायविवरणम् ।

अथाष्टादशाध्यायं विवरिषवः पूर्वोत्तराध्यायसङ्गतिं बोधयितुमध्यायद्वयार्थमाहुः अथेत्यादि । अथाद्भुतवैराग्योपोद्घातत्वेनालौकिकसामर्थ्यबोधनानन्तरमध्यायद्वयेन वैराग्यदार्ढ्यबोधकं राज्ञश्चरित्रमीर्यते । तत्र प्रकारमाहुः शापादित्यादि । शापात्मायः, ततः मायं द्वारीकृत्य शापो राज्ये [1]वैराग्यबोधकः । तर्हि द्वयोः किमिति तत्कथनं तत्राहुः सङ्क्षेपकथनं पूर्वमिति । तथा चैतयोः सूतवाक्ये सामान्यविशेषभावः सङ्गतिरित्यर्थः । किमिति सङ्क्षेप इत्यत आहुः श्रोत्रित्यादि । सूतशौनकवाक्यानां तात्पर्यमाहुः तयोरित्यादि । स्थापयितुमित्यन्तम् । तयोरिति । वक्तृश्रोत्रोः । तादृशमिति । श्रद्धया प्रोत्साहेन चोक्तं श्रुतं च । ननु शापो यथा मायद्वारा वैराग्यरूपोत्कर्षबोधकः, तथा स्वरूपेणाधर्मस्यापि बोधक इति कथं तेनोत्कर्षसिद्धिरित्यत आहुः द्विजादित्यादि । हरिणा प्रोक्त इति । ब्राह्मणस्य मुखरूपत्वात्तथा । नान्यथामृततर्पणादिति । शापाभावे श्रीभागवतात्मककथामृततर्पणाज्ज्ञानिदेहनाशो नेत्यर्थः । तथा च तत्प्रतिपत्त्यर्थं स इति नोत्कर्षहानिरित्यर्थः । शेषं स्फुटम् । तथा सोधर्मोपि 'शापो मेनुग्रहायैवे'ति न्यायेन फलत उत्कर्षस्यैव साधक इति न कोपि दोष इत्यर्थः ॥

यो वेत्यत्र । प्रकटाप्रकटनामनी इति । प्रकटस्य कालरूपस्याप्रकटस्य
१-१८-१ सदानन्दरूपस्य नामनी इत्यर्थः ॥ १ ॥
१-१८-२ ब्रह्मकोपेत्यत्र । कोपपदतात्पर्यमाहुः तक्षक इत्यादि ॥ २ ॥
नोत्तमेत्यत्र । अन्त्यकाले भ्रमाभावबोधनात् कारणसद्भावे च भ्रमाभीक्ष्ण्य-
दर्शनादत्र कथं तदभाव इत्याशङ्कायां भगवच्छास्त्रानुसारेण तत्कारण-
१-१८-४ मन्यत्र तत्सत्त्वमत्र तदभावं च साधयन्ति भ्रमस्त्वित्यादि । सन्नि-
पातः कः कीदृशश्चेत्यत आहुः दोषा इत्यादि । दोषा रजस्तमसो वृत्तयः गुणाः सत्त्वस्य

[1] व्यवहारबोधकः ।



वृत्तयः । 'शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः । तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिः स्वनिर्वृतिः । काम ईहा मदस्तृष्णा स्तम्भ आशीर्भिदा सुखम् । मदोत्साहो यशः प्रीतिर्हास्यं वीर्यं बलोद्यमः । क्रोधो लोभोऽनृतं हिंसा या आरम्भः क्रमः कलिः । शोकमोहौ विषादार्ती निद्राशा भीरनुद्यम' इत्यत्रोक्तास्ते एकीभूता यथासम्भवमुद्भूतानुद्भूतरूपेण संहताः एकत्वं पिण्डीभावेनैकस्वरूपत्वायोगं यदा प्राप्नुवन्ति, स तेषां पिण्डीभावः सन्निपातः, यथा वैद्यके पूर्वं त्रिदोषः, ततः सन्निपातस्तथेत्यर्थः । स च 'सन्निपातस्त्वह'मिति भगवद्वाक्यात् 'व्यवहारः सन्निपातो मनोमात्रेन्द्रियासुभि'रिति भगवद्वाक्याच्चाहंममाभिमानरूपो मनोमात्रेन्द्रियप्राणस्वाभाविकव्यापारात्मकव्यवहाररूपश्चेति द्विप्रकारक इत्यर्थः । एवं भ्रमकारणमुक्त्वा तस्य सार्वदिकत्वं भ्रमाभीक्ष्ण्याय बोधयन्ति तेनेत्यादि । तेनाहंममाभिमानेन यावज्जीवं मनोमात्रेन्द्रियप्राणानामात्मसन्निधानपर्यन्तं सन्निपातात्मकः व्यवहारः । अतोन्येपि देहादीनामात्मसन्निधानात्तत्कार्यं सन्निपातकार्यं भ्रमं प्राप्नुवन्ति, अतस्तेषां भ्रमस्याभीक्ष्ण्यम् । तर्हि तस्य अत्र नीलयाद्यगर्दायेषु कुतो न भ्रमोत्पत्तिस्तत्राहुः भगवदीयेत्यादि । तथा च पूर्वसन्निपातनिवृत्त्या तदनुत्पत्तिरित्यर्थः । निवृत्तिरेव कथमित्यतस्तत्कारणमाहुः नत्रेत्यादि । नामसीति । स्वभावतः क्रियमाणत्वात् तथा । चिरं रात्रमिति । तेषां सात्त्विकस्वभावेन भगवत्सम्बन्धितयैव क्रियमाणत्वाल्लौकिकी वार्ता सात्त्विकी । आग्रहदार्ढ्येन क्रियमाणत्वाद्भजनं सेवारूपं तामसम् । कथाजापनं तु राजसमेव । आद्यमिति । वार्ताकरणम् । तत्रोपपत्तिः यद्धीत्यादि । 'यद्धि मनसा ध्यायति तद्वाचा वदती'ति श्रुतौ वाचां मनःपूर्वकत्वप्रतिपादनादिति । अतः सत्त्वादिगुणकार्येष्वपि देहादिष्वेवं भगवत्सम्बन्धान्निरन्तरेत्याद्युक्तप्रकारेणाज्ञानसहिते सन्निपाते निराकृते तथेत्यर्थः । नन्वेवमन्यदास्तु, अन्तसमये तु कालेन स्वभावव्यत्यासाद्भ्रमः स्यादेवेति चेत्, तत्राहुः यद्यपीत्यादि । नित्यत्वादिति । देहादीनां कालानधीनत्वात् । तथा चातो महाभयेपि न भ्रम इत्यर्थः ।

तावदित्यत्र । ननु यदि राज्ञा कलिर्निराकृतः, तदा तदनधिष्ठितस्य कालस्य
कलावप्रवेशाद्गणनायामानुचित्यं स्यादिति तन्निरासायाहुः आधिदैविके-
१-१८-५ त्यादि । निराकृतस्त्वाधिदैविकः, तेन तस्य प्रभुत्वाभावः । आध्यात्मिकस्तु वर्तत एवेति न गणनानौचित्यमित्यर्थः । गुणानां गुणापेक्षयेति । गुणानां राजनिष्ठानां गुणापेक्षया भगवदपेक्षया । गुणानामिति । 'कलिं सभाजयन्त्यार्या' इत्यादिवाक्योक्तानां कलिगुणानां राजगुणानां च ॥ ५ ॥

यस्मिन्नित्यत्र । इति वाक्यानुरोधादिति । अस्मिन् वाक्ये उत्तमश्लोकवार्ता-
वच्छिन्नस्य कालस्य हरणाभावकथनेन सूर्यपरिस्पन्दानवच्छिन्नत्व-
१-१८-६ बोधनानुरोधादत्राप्युत्तमश्लोकवार्तावच्छिन्नस्य कालस्य सूर्यपरिस्प-

न्दानवच्छिन्नतायाः शक्यवचनत्वादित्यर्थः। सूर्यपरिस्पन्दानवच्छिन्नत्वे कथं कलिप्रवृत्त्यभावसिद्धिरित्यत आहुः सूर्येत्यादि। तथा च तदभावे तदभावात् प्रवृत्त्यभावसिद्धिरतस्तथेत्यर्थः। उत्कर्षं उद्धरणम्। तदायुपेति। भगवद्वार्तावच्छिन्नेन राजायुषा। ननु विद्यमाने सामर्थ्ये कुतो न सम्पन्न इत्याकाङ्क्षायां पूर्वं सामर्थ्यगमकमाहुः तत्रेत्यादि। उत्कृष्टैवेति। सूर्यपरिस्पन्दावच्छेदे तत्कृतगुणदोषयोर्यथायथमावश्यकत्वेपि 'भूःकालभर्जितभगाऽपि यदङ्घ्रिपद्मस्पर्शोत्थशक्तिरभिवर्षति नोऽखिलार्था'निति वाक्ये दोषनिवृत्तिकथनेन द्वापरनिवृत्तिबोधनादुत्कृष्टैव। तथा च सामर्थ्यमस्त्येवेत्यर्थः। तदसम्पत्तावुपपत्तिमाहुः अथेत्यादि। अस्य स्वसमानबलस्याभावादिति पूर्वोक्तायुर्विशिष्टस्य राज्ञो मर्यादाभङ्गाभावपूर्वककलक्षयवतारकालबाधाभावपूर्वकगत्युत्कर्षणासामर्थ्येन तथात्वादित्यर्थः। तदपेक्षयेति। भगवत्प्रचलनप्रतीक्षया॥ ६॥

या या इत्यत्र। केवलनिर्देशेनेति। निर्देशो लौकिकबुद्धिविषयीकरणम्।
साधारणानीति। लौकिकतौल्येन प्रतीयमानानि। सप्रतिष्ठानीति।
१-१८-१० तादृशान्यपि तत्प्रतिष्ठापूर्वकं कथनीयानीत्यर्थः॥ १०॥

सूत जीवेत्यत्र। प्रउगादिशंसनवदिति। प्रउगं शस्त्रविशेषः। 'प्रउगं
शंसती'ति श्रुतेः। शस्त्रं चात्र (प्र)गीतमन्त्रसाध्या स्तुतिर्ज्ञेया। विघ-
१-१८-११ र्षतीति पचाद्यच्। भावप्रधानो निर्देशः। तथासति प्रवेशकर्तृत्वं
घर्षतीत्यर्थः सिद्ध्यति, तदाहुः संसारेत्यादि। यत एवमतः प्रवेशकर्तृत्वं घर्षतीत्यर्थः॥

कर्मणीत्यत्र। यथा तत्रेत्यादि। मनुष्यलोकस्य प्रत्यक्षफलत्वेनोत्कृष्टत्वं वक्तुं
यथा देवलोकफले सन्देहवचनम्, तथात्र भगवल्लीलाकथारसस्योत्कृष्ट-
१-१८-१२ त्वाय कर्मणोऽनाश्वासत्वमुच्यते, न तु तस्य कर्मणो निन्दार्थमित्यर्थः॥

तुल्यामेत्यत्र। ननु स्वर्गापवर्गयोः कथं न तत्समानत्वमित्याकाङ्क्षायां तयोः
स्वरूपं क्रमेणाहुः स्वर्गो हीत्यादि। न्यूनत्वमेतस्य जन्यत्वात्पारक्य-
१-१८-१३ त्वाच्च बोध्यम्। तस्यैव जीवावरणनिवृत्तिरूप इति। 'जीवो जीवं विहाय मा'मित्यादिवाक्यस्य लिङ्गस्यापि जीवत्वकथनात्। जीवरूपं यदावरणं तन्निवृत्तिरूप इत्यर्थो बोध्यः। स एवेति। ब्रह्मानन्द एव। सङ्ख्ययेति। आनन्दमीमांसास्थसङ्ख्यया। ब्रह्मानन्दस्य जीवानन्दाद्विलक्षणत्वे भगवदानन्दस्य तदुभयविलक्षणत्वे च मानमाहुः अन्यथेत्यादि। नन्वानन्दमीमांसायामिव 'यतो वाचो निवर्तन्त' इति मन्त्रेपि ब्रह्मपदेनोभयत्रैकस्यैव ब्रह्मानन्दस्य प्रतीतेः ब्रह्मानन्दस्य कथं भगवदानन्दतो भेदावगतिः, कथं तत्र च न्यूनत्वावगतिरित्यत आहुः ब्रह्मानन्द इत्यादि। तथा च भगवदपेक्षया ब्रह्मानन्दे न्यूनता। ब्रह्मणो न्यूनतेत्युभयमप्येकेनैव कार्येणावगम्यते इति श्रुतौ



शब्दसाधारण्येप्यर्थोवगन्तव्य इत्यर्थः। अन्यथा वदद्व्याघातापत्तेरिति। सिद्धमाहुः अत इत्यादि। ननु मास्तु भगवत्तुल्यत्वम्, तथापि भगवत्सङ्गिसङ्गतुल्यत्वे का वानुपपत्तिरित्यत आहुः साधनेत्यादि। भक्तिसाधनं भगवत्सङ्गिसङ्गः। तत्तौल्यापगमेपि सा न वक्तुं शक्येत्यर्थः। तदुपपादयन्ति मुक्तो हीत्यादिना। इदमिति। मुक्तत्वम्। मोक्ष इति। स्वरूपोपकारीति शेषः। स्वतन्त्रनियतपाक्षिकयोरिति। स्वतन्त्रनियतं च पाक्षिकं चेति द्वन्द्वः॥ १३॥

को नामेत्यत्र। पूर्वमिति। प्रथमाध्यायस्थे 'वयं तु न वितृप्याम' इति श्लोके।
तस्येति। कथास्वरूपस्य। तद्रूपत्वमिति। रसजनकत्वम्। तस्येति।
१-१८-१४ तद्रूपस्य उत्कृष्टफलरूपस्येत्यर्थः। साधनत्वेनेति। 'यस्य स्मृत्ये'ति 'ज्ञानं यतः प्रतिनिवृत्ते'त्यादिवाक्यैः कर्मपूर्तिज्ञानयोः साधनत्वेन ज्ञानात्साधनत्वरूपे यो रसस्तद्वित्त्वम्, न तु फलत्वेन रूपेणेति तत्राप्रवृत्तिरित्यर्थः। विरोधाभासत्वेनासङ्गत्यात्वमुपपादयन्ति यो हीत्यादि। पर्वतात्प्रनदीजलवदिति। यथा ब्रह्मगिरेः पतन्ती गोदा न कदापि विच्छिद्यत्यपरिमिता भवति तथेत्यर्थः। उपपत्तिमुक्त्वा प्रमाणमाहुः गणकानामित्यादि। भवस्य प्रमाणमुख्यरूपत्वमुपपादयन्ति भवतीत्यादि। 'वेदः शिवः शिवो वेदः' 'वेदाभ्यासी सदाशिवः' 'पाषाणः शिवतां याति वेदाभ्यासाद्विजः किमिति' वाक्यं शिवपुराणीयम्, तस्माद्भवस्य मुख्यप्रमाणरूपत्वमित्यर्थः। तत्त्वमिति। प्रमेयमुख्यत्वम्। यद्यपि निःश्वसितश्रुतेः 'प्रत्यादिशा येने'ति वाक्याच्च भगवत एव वेदोत्पत्तेस्तद्रूपस्य शिवस्यापि प्रमेयमुख्यत्वं सम्भवति, तथापि प्रमाणस्वरूपतया तत्कोटिप्राबल्यात् मूले पाद्मस्य पृथगुल्लेखाभावात्र प्रमाणरूपत्वमेवाहृतं ज्ञेयम्॥ १४॥

तन्नो भवानित्यत्र। नित्यनपुंसक इति। सुहृद्वाचकमित्रशब्दवत्। तथा च
मुख्यवाचकस्य पुल्लिङ्गत्वेप्यदोष इत्यर्थः। कोशानुरोधेन सम्बन्धं
१-१८-१५ षष्ठ्यां सम्बन्ध्यध्याहारक्लेशेन च पक्षान्तरमाहुः भगवानित्यादि॥
स वा इत्यत्र। तद्विष्णोरिति। 'सोऽध्वनः पारमाप्नोति विष्णोः परमं
१-१८-१६ पद'मिति काठकादिवाक्येषु तथानिर्णयादित्यर्थः॥
तन्नः परं पुण्यमित्यत्र। उद्देश्यविशेषणत्वे दूषणमुक्त्वा विधेयविशेष-
१-१८-१७ णत्वे गुणमाहुः एवं त्वयेत्यादि। एवं प्रकारकोपकाराय त्वया
कथितमित्यर्थः॥

अहो इत्यत्र। ब्रह्मकल्पे इयं व्यवस्थेति। तत्र हि पृथोर्यज्ञे बृहस्पतेर्हविषि
ऐन्द्रं हविः प्रमादतः पतितम्, तत सूत उत्पन्नः, तस्य मुख्या वृत्तिः
१-१८-१८ पुराणकथनम्। अन्या अश्वचिकित्साद्या जघन्या इत्युक्ता। षड्गुणा
इति। अहो वयमित्यादिश्लोकषट्कोक्ताः॥

कुतः पुनरित्यत्र। इत्याहेति। इति हेतोरुत्तरेधिक्रमासि कैमुतिकेनाहेत्यर्थः।
अपेक्षेति। तत्रोपादेयबुद्धिः। अपेक्षायां हेतुमाहुः प्रायेणेत्यादि।
१-१८-१९ तत इति। तेन न्यायेनैवं ज्ञापनार्थं स न्यायोत्रोच्यत इत्यर्थः। वक्तव्य
इति। उक्त इत्यर्थः। विपरीततया कथयन्निति। भगवत्कथनपूर्वकनाममाहात्म्यं कथयन्। उत्तरवाक्यगतमिति। उत्तरार्द्ध इत्यर्थः। किं भगवति माहात्म्यमित्याकाङ्क्षायामाहुः महतो भावो माहात्म्यमिति। महत्त्वमेव माहात्म्यमित्यर्थः। तद्विवृण्वन्ति महत्त्वमित्यादि। तादृशमिति। देशाद्यपरिच्छिन्नम्। अतो नवधेति। स्वरूपस्य त्रिधाऽपरिच्छिन्नत्वम्, शक्तिगुणयोस्तु कार्यस्य फलस्य च यथायथं सर्वत्र सर्वदा सर्वेषु दर्शनाच्छक्तीनां कार्यतस्त्रिधाऽपरिच्छिन्नत्वम्, गुणानां तु फलतस्तथात्वमतो नवधेत्यर्थः। पश्यतीति पाठे सूतः पश्यति इत्यर्थो बोध्यः। पर्यवस्यतीति प्राञ्जलः पाठः। उत्तरत्रेति। महद्गुणत्वादित्यनेनोक्तेषु गुणेष्वपीत्यर्थः॥

एतावतेत्यत्र। स्वरूपशक्तिभिरिति। स्वरूपेण शक्तिभिश्चेत्यर्थः।
१-१८-२० 'तया विना क्व देवत्व'मिति वाक्यं तु विष्णुपुराणे इन्द्रकृतलक्ष्मीस्तुतौ
वर्तते। अथापीत्यत्र। युक्तिरिति। दोषसत्त्वेऽङ्घ्रिरेणुं न भजेदिति युक्तिः।
भिन्नं वेति। पादश्च नखश्चेति द्वन्द्वान्ते श्रूयमाणस्यावसृष्टशब्दस्य प्रत्ये-
१-१८-२१ कमभिसम्बन्धात्तथेत्यर्थः। अग्रे इति। तृतीयस्कन्धे 'यच्छौचनिःसृत'
इति कपिलोक्तौ नवमस्कन्धे शुकोक्तौ चेत्यर्थः।

यत्रेत्यत्र। तेषामिति। कामनादीनाम्। भवन्तीति। अनुरागेणैव भवन्ती-
त्यर्थः। ननु यत्र यत्र देहादिसङ्गनाशकत्वम्, तत्रतत्र भगवद्विषयराग-
१-१८-२२ त्वमिति व्याप्तिरप्रयोजिका, ज्ञानद्वेषादौ व्यभिचारादित्यत आहुः उपे-
त्यादि। तथा च भगवद्विषयकत्वमात्रैव व्याप्तिरिति भावः। अवोचाम इति। कुण्ठितेति। तद्व्यापारात्मागेव तत्प्रतिपादितेऽर्थे प्रवृत्तेस्तथेत्यर्थः।

अहं हीत्यत्र। अर्यमण इत्यत्र दीर्घाभावः छान्दसः। हीति। मूले हिर्हेत्वर्थे-
त्यर्थः। सम्बन्धत इति। पूर्ववाक्ये कर्तृत्वेन, द्वितीये प्रयोजकत्वेने-
१-१८-२३ त्येवं सम्बन्ध्यते। वेदपाठवदिति। आधुनिकवेदपाठवत्।
एकदेत्यत्र। विचरन्निति। कुर्वन्नित्यर्थः। हता इति। हि यतो
१-१८-२४ हेतोः हृताः प्राप्ताः गृहीता इत्यर्थः।
जलाशयमित्यत्र। अननुज्ञात इति। तस्यान्तः प्रयोगः अननुज्ञ-
१-१८-२४ येत्यर्थः।



१-१८-२६ स्थानत्रयादित्यत्र। कार्यद्वयमिति। बाह्यमान्तरं चेत्यर्थः।
तस्य पुत्र इत्यत्र। पापप्रापणं कथमित्याकाङ्क्षायामाहुः मृतसर्पेत्यादि।
आश्रमस्थवधेनेति। यथा सर्पो हतः, तथा अन्यं हन्यात्, तथा
१-१८-३१ सति मरणमेवापतेदित्यर्थः। मुनिपर्यवसायी जात इति। यथा
ब्रह्मघ्नो लिङ्गं कपालधारणम्, तथा सर्पघ्नस्य सर्पधारणमिति तथेत्यर्थः।
१-१८-३२ अहो इत्यत्र। पूजायामिति। पूजाया अकरणेन समाधिविघ्नेन च॥
ब्राह्मणैरित्यत्र। विपक्षदृष्टान्तशङ्कयेति। पुरुषविद्ब्राह्मणे 'क्षत्रात्परं नास्ति
तस्माद्ब्राह्मणः क्षत्रियमध उपास्त' इति श्रुतेस्तथेत्यर्थः। चतुर्द्धा निरू-
१-१८-३३ पणमिति। स्वामिद्रोहस्य चतुर्द्धा निरूपणम्। प्रत्यक्षतो द्वारपालत्वाय-
प्रत्ययात्तत्कथमित्याकाङ्क्षायां तदुपपादयन्ति शरीरादीत्यादिना। द्वारमिति। समाधेर्द्वारम्। तथा च तद्रक्षकत्वेन द्वारपालत्वमित्यतो न प्रत्यक्षविरोध इत्यर्थः। तर्हि कथं दृष्टान्तवैषम्यपरिहार इत्यत आहुः वस्तुत इत्यादि। तथा च पश्चाद्वैभावान्न तद्वैषम्यमित्यर्थः। अर्हतीति। मूलस्थकथंशब्दोत्र योज्यः। एवमेकप्रकारेण स्वामिद्रोहो निरूपितः। द्वितीयमाहुः ब्राह्मणमित्यादि। तथा च कश्यपादिभिर्दत्तेपि राज्ये तैः क्षत्रियेभ्यो दानात् तथेत्यतोपि द्रोह इत्यर्थः। तृतीयमाहुः ब्रह्मण इत्यादि। सर्वगुप्ते-त्यादि। द्वाराणीत्यर्थः। बलिस्थानमिति। बलिदानस्य स्थानम्। स्थाने इति वा पाठः। ब्राह्मणमपीति। अत्र ब्राह्मण इति सप्तम्यन्तः पाठः प्रतिभाति, अन्यथा आज्ञापयतीत्यादेरध्याहारापत्तेः। चतुर्थमाहुः समीधीत्यादि॥ ३३॥

कृष्ण इत्यत्र। मूले भगवतीति विशेषणं हेतुगर्भमिति ज्ञापयन्ति भगवत्त्वा-
दिति। तथात्वे इति। स्वानन्दानुभवप्रतिपक्षत्वे। कोटिद्वयस्येति।
१-१८-३४ पाल्यपालककोट्योरित्यर्थः। द्वयमिति। सेतुपालनं तत्प्रतिपक्षशासनं
च। स्वार्थपरित्याग इति। स्वप्रयोजनत्यागः। स्वकार्यत्याग इति यावत्॥
१-१८-४० निशम्येत्यत्र। तस्येति। पुत्रस्य॥
सदापीत्यत्र। निर्व्याजोपभोग इति द्वयं कामविशेषण-
१-१८-४४ त्वेन बोध्यम्॥ ४४॥
क्षुत्तृडित्यत्र। ते पूर्वमुक्ता इति। ते क्षुत्तृडादयः पूर्वं सूतोक्ता
१-१८-४५ इत्यर्थः॥ ४५॥
इतीत्यत्र। युक्तमेवेति। 'जिघांसन्तं जिघांसीया'दिति लोक-
१-१८-४८ न्यायेन॥ ४८॥

इति श्रीप्रथमस्कन्धसुबोधिनीप्रकाशेऽष्टादशाध्यायविवरणम्॥ १८॥

# अथोनविंशाध्यायविवरणम् ।

अथोनविंशाध्यायं विवरिषवः मूतोक्तिसङ्गतेः पूर्वमुक्तत्वात्तामनुस्मृत्य व्यासोक्तिसङ्गतेः स्फुटतयानुक्तत्वात्तामुभाभ्यां स्फुटीकुर्वन्ति सर्वदोषेत्यादि । निरूपितेति । 'प्रायशः' इति समाप्तिश्लोके निरूपिता । तथाचैककार्यत्वमधिकारे सङ्गतिरित्यर्थः । अवान्तरवाक्यतात्पर्यमाहुः एकोनविंशे इत्यादि । तत्रेति । तेषु मुनिषु । विवाद इति । शुकस्य परम्परया भगवदवतारत्वान्नारदरामव्यासानां साक्षादवतारत्वाद्विवाद इत्यर्थः । प्रकर्ष इति । उन्नतिप्रकर्षः । ननु मास्तु स प्रकर्षः, तथापि प्रश्नोत्तरवक्तृत्वं कुतो नेत्यत आहुः गुरुणेत्यादि । 'ईश्वराज्ज्ञानमन्विच्छे'दिति ज्ञानदाने गुरुत्वेन ईश्वरनियतत्वात्तेन गुरुणा ज्ञानदानात् स्वरूपाप्तिर्भवति, 'मोक्षमिच्छेज्जनार्दना'दिति मोक्षो भवतीति साक्षादवताराणामत्र न वक्तृतेत्यर्थः । अन्ते शिवात्मनेति । संहारे शिवस्यैवाधिकृतत्वात्तथेत्यर्थः ॥

ध्रुवमित्यत्र । विषय इति । अपराधविषयः । स च द्विविध इत्यादि । अत्र नपुंसकपाठः प्रतिभाति । क्रियतामिति । अप्रतीकार्यत्वपरीक्षार्थं क्रिय-

१-१९-२

ताम् । धर्म इति । वृत्तिमत्त्वेन धर्मिणः सकाशाद्धीन इत्यर्थः । अत इति । साक्षादपराधकरणात् । तथा च पर्यवसानविचारे धर्मिनाशापेक्षया धर्मनाश एव ज्यायस्त्वादुचित इत्यर्थः ॥

अद्येत्यत्र । पाक्षिकदोषपरिहारार्थमिति । देहादौ विद्यमाने तदध्यासात् कदाचित्पुनरेवमपराधकरणं पाक्षिको दोषस्तत्परिहारार्थमित्यर्थः ।

१-१९-३

आशेति । विलम्बाभावं प्रार्थयत इत्यर्थः । नन्वत्रैवं ध्यानौ स्वव्यसनसङ्कोचाभावः प्राक् प्रार्थित एवेति किमनेनेति शङ्कायां शेषे षष्ठीमोचितमर्थमाहुः शोषरक्षार्थमित्यादि । पूर्वं या व्यसनसङ्कोचाभावस्यात्मनि प्रार्थना, सा शेषरक्षार्थं न, किन्तु कुरुजाङ्गलातिरिक्ते स्वस्य साक्षात्सम्बन्धाभावबोधनार्थम् । तथाचात्रोक्तातिरिक्तानां श्रेयोर्थमियं प्रार्थनेति नानर्थक्यमित्यर्थः । सिद्धमाहुः अत इत्यादि । यतः साक्षात्सम्बद्धा एवान्तरापराधजनकाभिमानप्रयोजकाः, अतो ब्राह्मणापराधार्थं ब्राह्मणापराधनिवृत्तये नैमित्तिक अपराधहेतुभूतमन्युमत्सरजनकाभिमाननिवर्तकतया तत्सम्बन्धी देशनाशः प्रार्थित इत्यर्थः । तस्य प्रार्थनस्याकारमाहुः साक्षादित्यादि । यत एतत्त्रयं नाशयेत्ततो निःस्पृहं भवत्विति । अयमेवाशय इत्यत्र गमकमाहुः तत्रेत्यादि । तथा चेदं स्वविशेषणमेवाशयस्य गमकमित्यर्थः । तस्मिन्निमित्तदाहार्थे इत्यत्र तत् निमित्तदाहार्थे इति पाठः प्रतिभाति ॥

स चिन्तयन्नित्यत्र । सर्वे ह्यस्य मृत्यवो वेष्टा इत्यादि । अत्र हिंहंतौ ।



वा एवकारार्थे । तथाच ह्यमेधावभृथे मृत्यूनामिष्टत्वेनेतरेषामभावात्तथे-

१-१९-४

त्यर्थः । अहेतुत्वमिति । विरक्त्यहेतुत्वम् । ननु भाविततत्सम्बन्धज्ञानस्यैव विरक्तिकारणत्वेनोदासीनस्य तक्षकानलस्य तथात्वाभावे परस्परापेक्षाभावेनासामर्थ्यात्कथमयं समास इत्यत आहुः नित्येत्यादि । कारणशब्दस्य नित्यं कार्यसापेक्षत्वात् वक्तव्ये तस्मिन् विवक्षिताया विरक्तेरेवात्र परम्परया तथात्वेनोपस्थितत्वादयमसमर्थ एव समास इत्यर्थः ॥

अथो इत्यत्र । अनशनमिति । 'प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपी'ति कोशादित्यर्थः । अत एवेति । त्यागस्य भगवत्सेवार्थत्वादेव । भगवद्व्रतत्वे-

१-१९-५

नेति । 'अनश्नन्नन्य'इति श्रुत्या तथात्वेन । एवं चात्रोपविशतेः क्रियार्थत्वं बोध्यम् । यथा 'सत्रमासते'त्यत्रासतेः क्रियार्थत्वम्, तद्वत् । तत्तीर इति । मन्दाकिनीतीरे । ननु गङ्गाया अमर्त्यत्वसाधकत्व इदानीं कथं तद्व्यभिचार इत्यत आहुः इदानीं त्वित्यादि ॥ ५ ॥

या वै लसदित्यत्र । भक्तावित्यादि । गङ्गायां कुत एवं सामर्थ्यमित्याकाङ्क्षायां भक्तावित्याद्याहेत्यर्थः । चरणक्षालनमिति । तथा च तत्करणत्वेन

१-१९-६

फलरूपोपयोग इत्यर्थः । ननु तथापि प्रकृतेः कथं स इत्यत आहुः भावनायामित्यादि । तस्यामिति । सेवायाम् । अभिज्ञापिकेति । स्मारिका । तथा च प्रकृते स्मारकत्वेन स इत्यर्थः । केन रूपेणाभिज्ञाजनकत्वमित्याकाङ्क्षायामाहुः तस्या इत्यादि । तथा च विशेषणोक्तरूपेण तथेत्यर्थः । अत्र विभिश्रत्वकथनानुपपत्त्या तुलसीस्थितिरुत्क्षेपेपि चरणारविन्दे सिद्धा, तद्विमिश्ररेणुसम्बन्धेन क्षालनकरणतापि सिद्धा । तथा चैतद्विशेषणोक्तरूपेणाभिज्ञापकत्वमित्यर्थः । एवं फलरूपमुपयोगं प्रकृतोपयोगं च बोधयित्वा सेवोपयोगिदेहजननसामर्थ्यसाधनायाहुः भक्तकार्येत्यादि । अत्र भक्ता बलिर्देवाश्च, तत्कार्यमुद्धारस्त्रिविष्टपप्रापणं च, तदर्थं व्यापृतस्योत्क्षेपादिकां क्रियां तन्वानस्य भगवतश्चरणस्य वा, भूतसंस्कारकपक्षमाश्रित्य, कार्यव्यापाराभावे ततः सायुज्यादेरेव सम्भवात्, तद्व्यापारे तु स्वसेवायोग्यदेहसम्पादनरूपस्य भक्तान्तरकार्यस्यापि संभवात् देहनिष्पादकभूतसंस्कारकपक्षमाहुरित्यर्थः । तदन्तरेति साधनाध्यायारंभस्थितसूत्रोक्तन्यायेन । तत्र हि 'पूर्वजन्मनि निष्कामयज्ञकर्तुर्ज्ञानरहितस्य मरणे सर्ववेदार्थरूपभगवत्स्वरूपज्ञानाभावेन यज्ञाभिव्यक्त्यभावाद्भूतसंस्कारक एव यज्ञो जात इति, निष्कामत्वाच्च यज्ञसचिवा देवास्तुष्टा इति, ततश्च तदधीनान्येव भूतानीति, ते देवास्तस्याग्रे ज्ञानयोग्यदेहसिद्ध्यर्थं तत्र तत्र हुत्वा पञ्चाग्निविद्याप्रकारेण तस्य शरीरं सम्पादयन्तीति प्रतिपादितम्, तेन न्यायेन कृतप्राणिपुण्यपुञ्जस्य पूर्वजन्मनि कृतो यः पुण्यपुञ्जः श्रवणा-

१ अत्रत्यं पाठान्तरं पृष्ठोपरि द्रष्टव्यम् ।

दीनां साधनभक्तीनां साक्षान्मोक्षसाधनत्वं ज्ञात्वा तान्त्रिकीदीक्षापूर्वकं विहितत्वेन कृतं यदुपासनामार्गीयं श्रवणादिनवकं तत्पूर्वोक्तयज्ञवत् भूतसंस्कारकमेव जातमिति तस्य यज्ञस्य स्वव्यापारभूतदेवाधीनानि देहजनकानि भूतानीति विद्यायोग्यदेहनिष्पादनार्थं देवसम्बन्धं प्राप्य पञ्चाग्निविद्योक्तहोमरूपेण स यज्ञस्तिष्ठति, तथा पूर्वोक्तनवकमपि सम्बन्धिनां निषेकपोषकरूपाणां पित्रादीनां भक्तत्वे सति तद्वारा भगवदीयशरीरनिष्पादनार्थं चरणामृतचरणरेणुरूपेण भूतानि संस्कुर्वत् भगवच्चरणे सम्बन्धं प्राप्य तिष्ठतीति भक्तानां तादृशपुण्यश्रवणादिकर्तां तत्सम्बन्धि तादृशशरीरं निष्पादयितुं चरणामृतचरणरेणुसम्बन्धिनं साक्षात्सेवायोग्यं निष्पादयितुं स्थितस्य नवकस्य चरणप्राप्तेः पूर्वमेव तत्प्राप्तिसाधकत्वं चरणामृतचरणरेणुसम्बन्धप्राप्तिसाधकत्वं गङ्गाया व्यासः सूतश्च वदति, तेन तस्याः तादृशसामर्थ्यमित्यर्थः। भक्त्योरिति। विहिताविहितभक्त्योः। सेशानिति। अस्मिन् पक्षे उभयत्रेत्यस्य स्थितिदशायां संहारदशायां चेत्यर्थो बोध्यः ॥ ६ ॥

इत्थं व्यवच्छिद्येत्यत्र। अन्यथा स्यादिति। आधिदैविकरूपानाविर्भावेन
स्वविचारितकार्यानुपयोगि स्यात्। आध्यात्मिकस्येत्यादि। अन्तः-
१-१९-७ करणनिष्ठपापादेर्बलिष्ठत्वेन पूर्वोक्तं प्रायोपवेशनमित्यर्थः। ग्रहवदित्यादि। यथा 'ग्रहं सम्मार्ष्टी'ति सम्मार्गवाक्ये श्रूयमाणाप्येकत्वसङ्ख्या, ग्रहान्तराणामुत्तरत्र होमादिकर्मणि विनियोगार्थं उद्देश्यगतत्वादविवक्षितेत्याद्रियते, तथात्रापि चरणान्तरस्य ध्यानोपयोगार्थमविवक्षितेत्यर्थः। अविवक्षितत्वस्य फलमाहुः तेनेत्यादि। पूर्वशेषत्वमिति। सेवायोग्यशरीरप्राप्तिशेषत्वम्। अनन्यभावत्वकथनप्रयोजनमाहुः प्रायेत्यादि। अपेक्षितत्वादिति। पूर्वश्लोकद्वये कर्मत्वेन शुद्धिजनकत्वादिना च तथात्वात्। आज्ञयेति। गृहमेधे पुत्रादीनामाज्ञादानेन ॥ ७ ॥

तत्रेत्यत्र। कालसामीप्यमिति। यस्मिन् काले प्रायोपवेशं कृतवान्, तदैवे-
त्यर्थः। पुनर्बोधनव्यावृत्त्यर्थमिति। एवं कथाकरणार्थं यत्पुनर्बोधनं
१-१९-८ तद्व्यावृत्त्यर्थम्। शिष्टाचारदर्शनादेव तत्सिद्धेरिति ॥ ८ ॥

अत्रिरित्यत्र। अन्यो वेति। कृपस्य शारद्वतत्वेन प्रसिद्धेर्गौतमस्याग्रे उक्तत्वाच्च
तथेत्यर्थः। भगवद्भक्तान्ता इति। नारदान्ताः। तेष्ववान्तरविभाग-
१-१९-९ माहुः अथेत्यादि ॥ ९ ॥

अहो इत्यत्र। हेतुत्वादिति। भगवत्कृपाहेतुत्वात्। अतो हीत्यादि। अतो
हेतोः ब्रह्म क्षत्रं चेति द्वे अन्योन्यमात्मानं रक्षत इत्यन्वयः। तद्वि-
१-१९-१३ परीतमिति। उच्चमोच्चमम् ॥ १३ ॥

तस्यैवेत्यत्र। अन्यथेति। शापरूपत्वेन अभवने। एतस्यैव विवरणं अन्यथा



१-१९-१४ अवरेषामित्यादि। सम्पत्त्याभाव इति। शास्त्रश्रवणेऽवकाशाभावः। न
तस्येति। इदं पञ्चमस्कन्धे जडवाक्यम्। 'न तस्य तत्त्वग्रहणाय साक्षाद्वरीयसीरपि वाचः समासन्। स्वप्ने निरुक्त्या गृहमेधिसौख्यं न यस्य हेयानुमितं स्वयं स्या'दिति। अर्थस्तु। यस्य गृहमेधिसौख्यं स्वप्नदृष्टान्तेन हेयतया अनुमितं स्वतो न स्यात्। तस्य वरीयसः शास्त्रीया वाचोपि तस्य तत्त्वनिश्चयाय न बभूवुरिति। तथ्यायादित्यर्थः। तथा जातमिति। गृहे मोचनं न जातमित्यर्थः ॥ १४ ॥

१-१९-१५ तं मोपयान्तमित्यत्र। तयोरिति। भगवदीयभगवतोः ॥ १५ ॥

पुनश्चेत्यत्र। ननु प्रवृत्तिपराणां स्वर्गस्येव निवृत्तिपराणां सर्वेषां मुक्तेरेवाभीष्टत्वा-
त्तस्यैवामुत्र कुतो न प्रार्थ्यते इत्याकाङ्क्षायामाहुः मुक्तिरित्यादि। अप-
१-१९-१६ राधित्वान्न सम्भाविता, भगवदीयत्वान्नापेक्षिता, अतो न प्रार्थ्यते इत्यर्थः। तर्हि भक्तिः कुतः प्रार्थ्यते इत्यत आहुः राज्येत्यादि। विरुद्धधर्माश्रयत्वादिति। भक्तौ बन्धरूपत्वेऽप्यबन्धरूपत्वस्य तृतीयस्कन्धे व्युत्पादनाद्द्वयोर्धर्मयोस्तत्र सत्त्वेन तथात्वात्। तर्हि जनकादेरिव दोषाजनकं राज्यमेव कुतो न प्रार्थ्यत इत्याकाङ्क्षायां कैमुतिकेनाहुः जन्मेत्यादि। ननु सकृदुत्पन्नायामपि रतौ कार्यसिद्धेरव्याहतत्वाद्रतिकारणप्रार्थनस्य किं प्रयोजनमत आहुः अन्यथेत्यादि। अन्यथेति। साधनप्रार्थनाभावे। साधनमिति। रतिदानवररूपं महत्प्रसङ्गरूपं वा। उपक्षिप्तमित्यत्र उपक्षीणमिति पाठः प्रतिभाति। तथा चाक्षिप्तस्य साधनस्यैवोपक्षीणत्वे पुनर्जन्मान्तरे रत्यभावान्महद्देवानिष्टमापद्येतेत्यतः कारणप्रार्थनं युक्तमित्यर्थः। नन्वेवं रतेरावश्यकत्वे सैव सर्वदास्त्विति प्रार्थनीयम्, तथा सति सकृज्जातेनैव साधनेन सर्वदा तस्याः सिद्धिरित्यत आहुः न चेत्यादि। अपिना सेवानिर्वाहः सङ्गृह्यः। ननु 'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यह'मिति भगवद्वाक्यात्भगवतैव देहादिनिर्वाहसम्भवाच्च तदनुपपत्त्या असार्वदिकतत्प्रार्थनं युक्तमिति चेत्, तत्राहुः तादृशेत्यादि। सार्वदिकरतेः प्रमेयैकसाध्यत्वेन प्रमाणस्य साधनत्वाभावात्। यद्वा। राजा हि भगवदनुभावानुभवात्तत्साक्षात्कारार्थं प्रयतते। स हि बाह्ययोग्यव्यतिरिक्तज्ञानत्वेन प्रमाणम्, यथा 'आकाशवदन्तरं बहिर्भूतेषु सन्तं पुरुष'मिति शुकस्य ज्ञानम्, तच्च कादाचित्कयैव सत्सङ्गजन्यया रत्या, न तु व्रजरत्नानामिव सार्वदिकया, तस्या विरहसहायत्वेन तदजनकतया तत्साधनत्वाभावात्। अतो न तत्प्रार्थनमित्यर्थः। ननु मास्तु सार्वदिकरतिप्रार्थनम्, तथापि प्रतिजन्मीनतत्साधनप्रार्थनमयुक्तम्, त्रिशङ्कूपाख्याने त्रिशङ्कोः स्वर्गसाधनीभूतपुण्याभावेपि सकृद्दत्ताद्विश्वामित्रवरादेव फलसिद्धेरुक्तत्वादत्रापि वरस्यैव विवक्षितरतिसाधनत्वस्य शक्यवचनत्वेन तत एव नानाजन्मसु रतिसम्भवादिति

शङ्कायामाहुः वरस्येत्यादि । एतज्जन्मीनवरस्यैव तादृशतत्साधनत्वेङ्गीकृते त्रिशङ्क्वादिवदत्रापि फलं भविष्यतीति सम्भावनायाः प्रमाणत्वेङ्गीकृते सति रत्यधिकरणस्य स्वस्य शापेन लौकिकतुल्यतया प्रकारान्तरे त्रिशङ्कुन्यायेनोभयाभावे च प्रसक्ते युक्तिबाधात् उत्प्रेक्षायां प्रमाणत्वकल्पनस्यानपेक्षिताभ्यागमस्यापातेन त्रिशङ्क्वादिवन्न्यायबाधात् भगवत्स्ववरेण सायुज्यं पर्यवस्यति । तच्च भक्तानां भगवदीयत्वेनैव परिसमाप्तसर्वार्थानामनपेक्षितम्, अतः प्रतिजन्मीनरत्यर्थं प्रतिजन्मीनरतिकारणप्रार्थनं युक्तमेवेत्यर्थः । एवं वरस्वरूपविचारेण प्रतिजन्मीनसाधनप्रार्थनस्य युक्तत्वमुपपाद्य रतिस्वरूपविचारेणोपपादयन्ति रतिश्चेत्यादि । स्नेहत्वादिति । 'प्रेमाना प्रियता हार्दं प्रेमस्नेह'इतिकोशेन प्रियतारूपत्वात् । तथा चान्तःकरणधर्मत्वेन सिद्धेर्ऽनित्यत्वे प्रतिजन्मनि तत्कारणप्रार्थनं युक्तमित्यर्थः । ननु रतेः सविषयत्वेनेच्छारूपत्वात्तस्याश्चानुकूलबुद्धिवेद्यादिष्यादेव सिद्धेस्तत्साधनप्रार्थनमनर्थकमित्याकाङ्क्षायां रतेः स्वरूपं विवेक्तुं विकल्पयन्ति न चेत्यादि । पुत्रादिषु तदभावप्रसङ्गादिति । पुत्रादिविषयिण्या रतेः इच्छारूपत्वाभावेन रतित्वाभावप्रसङ्गादित्यर्थः । एतेनैव ज्ञानरूपतापि वारिता । यत्नरूपता च । अनुकूलबुद्धिवेद्यत्वेन द्वेषादिरूपतापि तथा । प्रीणाम्यनुरज्यामीत्यनुव्यवसायगम्यत्वाददृष्टरूपतापि निवारिता । सविषयत्वाच्च न सुखरूपता । तदेतदभिसन्धायाहुः अत इत्यादि । अत अनुकूलबुद्धिवेद्यत्वेपि सविषयत्वरूपाद्विशेषात्प्रीणाम्यनुरज्यामि स्निह्यामीत्यादिबुद्धिगम्यत्वाच्च रत्याद्यपरनामा स्नेहः पदार्थान्तरमेवेत्यर्थः । नन्वस्तु पदार्थान्तरत्वम्, तथापि प्रियत्वापरपर्यायस्य तस्य निरुपधेरेव मुख्यत्वात्तादृशस्य च तस्य मैत्रेयीब्राह्मणे 'न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवती'त्यादिना आत्मधर्मत्वेनैव व्यवस्थापनाद्भगवद्विषयकस्य सोपाधेरेवान्तःकरणधर्मत्वमित्यात्मविषयकतदपेक्षया जघन्यत्वात् किं तत्प्रार्थनेन किं वा तत्साधनप्रार्थनेनेत्याशङ्कायामाहुः स इत्यादि । तथा च यथा चतुःश्लोकीस्थं ज्ञानमैश्वर्यं च भगवद्दत्तं तत्सम्बन्धाच्चतुर्मुखे तन्नैकट्यात्पार्षदादिषु च भासते, तावतापि न तस्य भगवद्धर्मत्वहानिः, तथा स्नेहस्यापि तस्य मनोधर्मप्रतीतावप्यागन्तुकत्वेन भगवत्सम्बन्धार्थं तत्साधनप्रार्थनं युक्तम्, भगवद्धर्मत्वेनाजघन्यत्वाच्च तत्प्रार्थनमपि युक्तमेवेत्यर्थः । नन्वेवमागन्तुकत्वे सर्वत्र तुल्य एव स्यात्, न तु न्यूनाधिक इत्यत आहुः उष्णस्पर्शवदित्यादि । तथा च वह्निनैकट्ये उष्णस्पर्शस्येव तस्यापि भगवन्नैकट्यात्तथेत्यर्थः । एतदेव निगमयन्ति शारीर इत्यादि । परमस्नेहत्वमिति । सप्तम्यर्थे बहुव्रीहिः । परमस्नेहविषयत्वमित्यर्थः । ननु परमस्नेहः श्रुतौ शारीरविषयक एव मैत्रेयीब्राह्मणे सिद्ध इति कथं तस्य भगवन्नैकट्यात्परमस्नेहविषयत्वमित्यत आहुः वाक्येत्यादि । इदमधिकरणं समन्वयाध्यायचतुर्थपादेस्ति । तत्र मैत्रेयीब्राह्मणं जीवबोधकं ब्रह्मबोधकं वेति संशयः । तत्रोपक्रमे अमृतत्वायात्मदर्शनतत्साधनयोरुपदेशार्थं स्वप्रतीत्या पत्यादिसर्वापेक्षया प्रियत्वलिङ्गकः स्वात्मैवाभ्यस्यते, उपसंहारे च 'एतावदरे खल्वमृतत्व'मित्यनेन तस्यैव ज्ञानस्यामृतत्वं वदतीत्युपक्रमोपसंहाराभ्यासैरिदं जीवस्यैव बोधकम् । यत्पुनर्मध्ये आत्मज्ञानादीनां सर्ववेदनरूपफलसिद्ध्यर्थमात्मनः सर्वत्वमुक्तम्, तत्तस्य सोपाधिकस्य जगत्कर्तृत्वरूपोत्कर्षबोधनार्थमित्यार्द्रैन्धनाग्निदृष्टान्तादवसीयते, एवमेव समुद्रादिदृष्टान्तैरात्मत्वं यदुक्तम्, तदपि तदर्थमेव । एवं श्रुत्यन्तरे या तस्य ब्रह्मता श्राव्यते, साप्युत्कर्षार्थमेवेत्यत इदं जीवबोधकमेवेति पूर्वः पक्षः । सिद्धान्तस्तु इदं ब्रह्मबोधकमेव, तत्र हेतुः 'वाक्यान्वया'दिति । वाक्यानामन्वयो वाक्यान्वयस्तस्मात् । अत्रोपक्रमेऽमृतत्वायात्मदर्शनं तत्साधनानि चोपदिश्यन्ते, अमृतत्वं मोक्षः, तच्च ब्रह्मज्ञानादेवेति । 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये'ति सावधारणश्रुतौ मार्गान्तरनिषेधात् सिद्धमितीदापि तमेवात्मत्वेन परामृश्य दर्शनादिवाक्यानामन्वयो वाच्यः, अन्यथा तद्व्याकोपापत्तेः । एवञ्चोपसंहारवाक्यमपि युज्यते, उपक्रमश्चासञ्जातविरोधित्वात्प्रबलः, एवं च ज्ञानफलादिवाक्यान्यप्यन्वेष्यन्ति । तस्यैव सर्वत्वात्सर्वाधारत्वाच्च । अन्यथा तु निष्प्रयोजनमसदुत्कर्षबोधनात्तान्यिद्युः । न च प्रियत्ववाक्यानन्वयः शङ्क्यः । 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त' इत्यादिश्रुतिभिर्ब्रह्मण आनन्दरूपत्वे भूतानां सशरीरजीवानां च तत्कार्यत्वे 'सर्वे एवात्मानो व्युच्चरन्ती'ति श्रुत्या केवलात्मांशत्वे च सिद्धे 'एष ह्येवानन्दयाती'ति सावधारणश्रुत्या ब्रह्मण एवानन्दजनकत्वे च सिद्धेऽन्यत्र प्रियत्वाध्यासो जीवे प्रियत्वाधिक्यं तत्सम्बन्धतन्नैकट्याभ्यामेवेति तेषामपि तत्रैवान्वयः । एवं चाभ्यासोपि तस्यैवानुगुणः । अतः साक्षात्परम्परया च सर्वेषां वाक्यानां तत्रैवान्वयादिदं ब्रह्मवाक्यमेवेति । तथा चैतस्मिन्नधिकरणे प्रियत्वस्य भगवद्धर्मत्वेनैव सिद्धत्वाज्जीवे निरुपाधिप्रेमापि तन्नैकट्यादेवेति न श्रुतिविरोध इत्यर्थः । नन्वेवं सति तस्य स्वतः सिद्धत्वात् किं तत्साधनप्रार्थनेनेत्यत आहुः अत इत्यादि । अत इति । जैवप्रियत्वापेक्षयाप्यतितिरोहितत्वेन । तदिति । नैकट्यम् । ननु जीवब्रह्मणोः स्वरूपविचारेऽतिनैकट्यस्यापि सिद्धत्वात् साधनप्रार्थना न युक्तेत्यत आहुः आश्रय इत्यादि । अन्यथा स्वाप्यये जीवस्यापि तदाश्रितत्वेन स्वत एव रतिः स्यात्, अतो नैकट्यार्थं सर्वदाश्रयोऽपेक्षित इति तथेत्यर्थः । ननु तेपि बहवः सर्पापेपि सन्तीति किं प्रार्थनेनेत्यत आहुः नेत्यादि । आश्रितमात्रेणेति । साधारणैराश्रितैः ॥ १६ ॥

एवं त्वित्यत्र । निश्चयेनेति । 'यस्य स्याद्द्धा न विचिकित्सा-
१-१९-१८
स्ती'ति श्रुतेस्तथेत्यर्थः ॥ १८ ॥

तमित्यत्र । श्मश्रूत्पत्त्यावसीयन्ते इति । अग्रे तदुत्पत्त्या तथा निश्चीयन्ते, तत्र गमकं मृतेति । मृतत्वज्ञापका इति । त्वदमृतत्वज्ञापकाः । तेन
१-१९-२६
सिद्धमाहुः अत इत्यादि । अमेध्यस्पर्शाभावात् कालकृतो बलवत्त्वादि-

रूपो गुण एव, न तु कामवत्त्वादिरूपः कालजो दोषस्तत्रेत्यर्थः । उभयज्ञापनायेति । गुणदोषाभावरूपगुणद्वयज्ञापनाय । अन्यथा षोडशाब्दमित्येव वदेदित्यर्थः । तयोः प्रयोजनमाहुः अग्रिमेत्यादि । कामजरादिदोषव्याप्त्यभावाय गुणसूचनं सम्पन्नस्य ज्ञानभक्त्यादिरूपगुणस्य स्थापनाय दोषाभावसूचनमित्यर्थः । अस्मिन् पक्षे तमितिपदस्य विशेषार्थाभावात् पक्षान्तरमाहुः भगवदित्यादि । त इति । अग्रिमा वर्णाः । ताभ्यां सिद्धमाहुः अत इत्यादि । तथा चामेध्यस्वक्स्पर्शाभावाच्छिष्टकाले भगवत्स्मरणं द्वयष्टवर्षपदेन सूच्यते द्वितीयस्तमितिपदेन । प्रक्रान्तविषयत्वत्वप्रसिद्धार्थविषयत्वेपि बाधकाभावादिति । तथा च तद्गुणद्वयसूचनायेदं पदद्वयमत्रेत्यर्थः । गूढचिह्नमिति । पुंव्यञ्जनम् ॥ २६ ॥

स विष्णुरात इत्यत्र । आगमने नियतकालरहित इति । 'अनित्यं हि
स्थितो यस्मात्तस्मादतिथिरुच्यते' इति तथेत्यर्थः । परिगृहीताना-
१-१९-२९ मिति । शुकेन परिगृहीतानाम् ।

अहो इत्यत्र । पूर्ववदिति । 'अहो वय'मित्यत्र यथा परश्लाघार्थे स्वश्लाघा तथेत्यर्थः ।
उपदेष्टृत्वमिति । जनकादेरिवेत्यर्थः । तद्गतं पापमित्यादि । देहगतं
१-१९-३० पापं जलसंयोगद्वारा जले गच्छतीत्यर्थः ॥ ३२ ॥

पुरुषस्येत्यत्र । अधिकारिद्वैरूप्यं स्वतन्त्रम्रियमाणभेदेन कर्मणां श्रोतव्यादीनां तत्तदभावभेदेनेति मूलवाक्य एव स्फुटति । विपरीतेत्यादि ।
१-१९-३१ स्वतन्त्रकर्तृसम्बन्धिकर्मपञ्चके म्रियमाणसम्बन्धाभावो अन्यस्यान्यसम्बन्धितदभाव इत्यर्थः । विशाकलितनयेति । कर्तृभेदेन द्विधाकर्मभेदेन दशधेत्यर्थः । यद्वा । विपर्ययमित्यस्यार्थमाहुः अथवेत्यादि । उभयकरणमिति । नित्यद्वयकरणं नित्यनैमित्तिककरणं च । ननु नियमविध्यङ्गीकारे नोभयकरणप्रसक्तिरिति किमर्थं विपरीतकथनमत्र इत्यत आहुः आवश्यकेत्यादि ॥ ३७ ॥

एवं श्रीवल्लभाचार्यनखचन्द्रमरीचिभिः । निरस्ते हृदयध्वान्ते विवृताद्यसुबोधिनी ॥ १ ॥
समर्पिता तत्पदयोरेषा पुष्पाञ्जलिर्गिराम् । तेनतुष्यन्तु दयया दासेस्मिन सहसूनवः ॥ २ ॥
यदत्र सदसद्वापि जीवबुद्ध्या मयोदितम् । आशयाज्ञानतस्तन्मे क्षन्तव्यं दीनवत्सला ॥ ३ ॥

बद्धाञ्जलि मूर्ध्नि बुधेषु नत्वा मुहुस्तदीयेषु निवेदयामि ।
असद्यदस्मिन् भवति क्वचित्तत्कृपापरैर्वीक्ष्य निवारणीयम् ॥ ४ ॥

इति श्रीमदाचार्यचरणकमलैकतानश्रीपीताम्बरतनुजपुरुषोत्तमप्रकाशित-
प्रथमस्कन्धसुबोधिनीप्रकाशो ऊनविंशाध्यायविवरणम् ।

---

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

## प्रास्ताविकम् ।

अथ खलु भगवान् बादरायणः वेदगीतासूत्रोद्भूतसकलसन्देहहरणक्षमं चतुर्थं प्रस्थानं श्रीमद्भागवतं महापुराणमाविश्चकार । लीलाक्षीराब्धिशायिनो भगवतः स्वरूपेप्सूनां भागवतानामर्थं भागवताद्दते नान्यज्जागर्ति साधनम् । सर्गविसर्गादिदशविधलीलानां भगवत्वं सुविस्तरेणास्मिन्नेव द्वितीयस्कन्धे तद्विवरणे तट्टीकायाञ्च प्रतिपादनात् निरोधमुक्त्याश्रयफलमनेनैव कल्पतरुणा सम्भवति इति सर्वमतसमञ्जसम् । परं अनेकेषां तद्भावार्थलिप्सूनां टीकाकृतां मध्ये कस्मै वाचा प्रसादो वितरितः ? इति तन्मर्मज्ञैर्विदितचरम् । यत् 'उतत्वः पश्यन्न ददर्श वाचम्'' इत्यत्र यथा जाया स्वतनुं पत्ये एव प्रकटयति एवं वागपि कस्मैचिदेव स्वार्थं प्रकटयतीति श्रावणात् वन्हावेव पतित्वं वाच इति वागधीशाचार्यवर्येष्वेव वाचः पक्षपातः सिद्धो वैश्वानरावतारादित्यलं सूर्यप्रदर्शनप्रौढ्या । तदपि गूढार्थप्रकटनकार्यलिङ्गानुमेयं वागधीशत्वं त्वध्यक्षसिद्धमेवैतत् । यत् तल्लीलावलोकनपटुभिः श्रीवल्लभप्रभुभिस्तत्तद्दशविधलीलानां अवान्तरलीलानाञ्च स्वारस्यं भगवतस्तत्तत्स्वरूपेषु विन्यासपूर्वकं यथा समुपदिष्टम्, तथ्वदवगन्तुं विवरितुं च नान्ये प्राभवन् इति । सर्वमपि कार्यजातं श्रीमद्गोपीजनवल्लभाज्ञयैव श्रीवल्लभा आचरन्ति स्म इति वारं वारं महानुभावैरनुभूतम् । एवमेव सुबोधिनीविवरणप्रसङ्गे वृत्तम् । व्यासस्य विष्णोः प्रियं भागवतार्थं विवेचितुं भगवदाज्ञयैव मानुषतनुं विधाय प्रवृत्ताः, पश्चाल्लीलासाक्षिकस्वरूपस्य विप्रयोगमसहिष्णुर्भगवान् अतिगूढार्थोद्घाटनरूपाया वृद्धेस्त्यागगर्भितामाज्ञां कृतवान् । अत एव द्वादशस्कन्धेषु प्रथमद्वितीयतृतीयदशमस्कन्धानाम् एकादशस्य चतुर्णामध्यायानां पञ्चमाध्यायस्य कतिपयश्लोकानां च विवरणेन भागवतं समलङ्कृत्य अन्यद्जहुः । एतावदेव युक्तम् उत्पस्यामः, श्रोतव्य इति विधिगर्भितावश्यकतायाः सार्थक्यार्थं सप्तधा भागवतस्यार्थो ज्ञातव्य इत्यतः ''अर्थत्रयं तु वक्ष्यामि निबन्धेऽस्ति चतुष्टयम्''इति प्रतिज्ञाय शास्त्रस्कन्धप्रकरणाध्यायानां चतुष्टयं निबन्धे, भागवते च वाक्यपदाक्षरीयाणामर्थानां त्रयं सोपपत्तिकमुपदिष्टम्, तावता कृपाभाजनभक्तानां कृतार्थता भवत्येव । द्वितीयस्कन्धविवरणस्य चतस्रष्टीकाश्चत्वारो गोस्वामिचरणा रचयामासुः, श्रीपुरुषोत्तमाः श्रीचाचागोपीशाः श्रीवल्लभाः श्रीगोकुलोत्सवाश्चेतिश्रुतम् । तासु श्रीपुरुषोत्तमचरणानां विवरणावरणरूपाऽज्ञानतिमिरतिरोधायिका प्रकाशाभिधाना टीका प्रथमं प्रकाश्यते । तत्रेयं स्कन्धपरम्परा

सिद्धयति। अधिकारिकाणां साधनानि, ( प्रथमस्कन्धे )। साधनयुक्तानां श्रवणम्, (द्वितीयस्कन्धे)। तत्रादौ सर्गलीला (तृतीयस्कन्धे)। सृष्टानां धर्मादिपुरुषार्थसाधनम् ( चतुर्थस्कन्धे )। सिद्धपुरुषार्थानां तत्तन्मर्यादया संस्थापनम् ( पञ्चमस्कन्धे )। ततस्तन्मध्ये केषाञ्चिदनुग्रहः, ( षष्ठस्कन्धे )। पुष्टौ प्राप्तस्य वैषम्यदोषस्य निवृत्त्यर्थं वासनाः ( सप्तमस्कन्धे )। ततो वासनानिवृत्त्यर्थं सद्धर्माः ( अष्टमस्कन्धे )। ततो निवृत्तदोषाणां भक्तिः ( नवमस्कन्धे )। ततो भक्तानामासक्तिः ( दशमस्कन्धे )। आसक्तानां स्वरूपेण व्यवस्थितिः ( एकादशस्कन्धे )। तथा व्यवस्थितानां भगवदाश्रयः ( द्वादशस्कन्धे ) इति कार्यकारणरूपां सङ्गतिं बोधयितुं पुराविदां वर्तन्ते वचनानि। अत एव द्वितीयस्कन्धे "श्रोतुर्वक्तुश्च लक्ष्माद्ये द्वितीये त्वङ्गनिर्णयः" इति वाक्यात् श्रोतुर्वक्तुश्चाङ्गानि निर्णेतव्यानीति सिद्धम्। "अधिकारी साधनानि"- इत्यनेन प्रतिपाद्यमानानि द्वितीयोक्तसाधनानि दशधा विभज्यन्ते। तत्प्राप्तकालं मत्वा इहैव तन्यते।

(द्वितीयस्कन्धे) साधनम्।






प्रथमस्कन्धप्रकाशं गोस्वामिश्रीविठ्ठलव्रजरत्नलालजीमहाराजचरणैर्मोहमय्यां भगवदीयश्रीयुततेलीवालाकृतसंशोधनेन मुद्रयित्वा प्रथमविवरणार्थावगतौ सौकर्यं वितरितम्। एवं द्वितीयप्रकाशस्तैस्तेलीवालाकोविदैरारब्धोपि भगवदिच्छाभावात् "एकफोर्म"-मात्रं संशोध्य ते नित्यलीलामविशन्। तत एतेषां सुहृद्भिरेवं श्रीयुतप्रभुलालशास्त्रिभिश्चाग्रिमकार्यार्थं सूचितोहं श्रीमद्व्रजरत्नलालजीमहाराजचरणानां निर्देशेन प्रबन्धबलेन तदर्पितसौकर्येण च मोहमय्यामेव मणिलालस्य "गुजराती"- मुद्रणालये तं प्रारब्धवान्। परं अष्टमाध्यायपर्यन्तं सम्पन्ने मुद्रणे ऋणानपाकरणात् मुद्रणयन्त्रादिकं राजपुरुषैरवरुद्धम्। तेन सहाष्टमाध्यायपर्यन्तो मुद्रितप्रकाशोपि निरुद्धोऽधिकारिभिः, कार्यारम्भे पञ्चशतमुद्रा याः प्रदत्ताः,तास्ववशिष्टास्तास्तासामपि निर्णयो नाद्यावधि उद्घोषितः। तथापि मुद्रितविभागपत्राणि तु परमभगवदीयश्रीयुतवाडिलाल "वकीलमहाशयै"र्महायासेन राजद्वारात् मुञ्चयित्वात्र प्रापितानि इतिमहानुपकारस्तेषाम्। ततो मया राजनगरे 'उत्कृष्ट'मुद्रणालये नवमाध्यायस्य प्रारम्भो विहितः। तत्रापि सौराष्ट्रादिदेशान्तरप्रयाणवशात् विलम्बायितमेव। विषादयित्र्या चिरकालतया जातनिर्वेदोप्यहं कथङ्कारं मनः समाधाय कार्यं कर्तव्यमेवेति निश्चित्य अत्रैव अनाविलबन्धवाख्ये नूतनसीसकाक्षराणि आनीयाङ्कितौ उपान्त्यान्त्याध्यायौ। एवं अनेकप्रत्यूहाहतोपि श्रीबालकृष्णप्रभुचरणकृपया विघ्नार्णवं उत्तीर्य प्रकटीकृतोसौ प्रकाशः निगमरसभरितभागवतरसिकानां सुबोधिन्यर्थबुभुत्सावतां करकमलेषु समर्प्यते। अस्मिन् श्रीसुबोधिनीप्रकाशे प्रहस्तवादप्रस्थानरत्नाकरभाष्यप्रकाशादीनां नृसिंहोत्तरतापनीयव्याख्यानप्रतिबिम्बवादप्रपञ्चभेदवादप्रमोत्तमविवरणटिप्पण्यन्धकारवादादीनाञ्च नाम्नामुल्लेखात् सर्वेभ्योनन्तरमस्य निर्माणं श्रीपुरुषोत्तमचरणैः कृतं स्यादित्यनुमीयते। श्रीपुरुषोत्तमचरणा अपि हैतिह्यानुरूपमाज्ञापयन्तिस्म। "एतेन सुबोधिनीतः पूर्वं निबन्धमूलं कृतमिति ज्ञायते, निबन्धटीका तु सुबोधिन्यादिसर्वग्रन्थकरणोत्तरं "त्रयं वच्मि यथामति" इत्यस्य व्याख्याने मीमांसाद्वयभाष्यं भागवतटीका च परिगृहीतेति चकाराज्ज्ञायत'इति नवमाध्यायविवरणप्रकाशे आदिशन्।

अस्य मुद्रणव्ययार्थं श्रीमद्गोस्वामिविद्याविलासिभिः श्रीव्रजरत्नलालजीमहाराजचरणैश्चि॰ द्वितीयसूनूनां श्रीमधुसूदनमहोदयानामुपनयनप्रस्तावप्रसङ्गे वागधीशवाङ्मयसेवानुरूपं द्वितीयप्रकाशस्य प्रकाशनं कारयितव्यमिति सङ्कल्पितमासीत्। अतःपञ्चशतमुद्राणां वितरणं श्रीमद्भिः कृतम्। पाटणस्थेन उजमसीभाइनाम्ना श्रेष्ठिना सार्धद्विशतञ्च समर्पितम्। अपरञ्च श्रीयुतानां"ईश्वरलाल मगनलाल शाह"गुर्जरमुख्याध्यापकप्रभुदासभाइ-

भगवदीयरतिलालेतिसुहृदां संवादनकर्मणि साहाय्यमविस्मृतमेव। तेषां आयासः स्मरणपथो नापगच्छति। अपरञ्च संशोधनकर्मणि शुद्धपुस्तकानामलाभे महन्निर्व्यथनमुपजायते इति तद्वाचका जानन्त्येव। तथापि यावद्बुद्धिबलोदयं सूक्ष्मेक्षिकया चतुर्भिर्ग्रन्थैः संवाद्यैव (प्रेसकॉपी) पत्राणि संशुध्य मुद्रणे योजितानि। नवमाध्यायतस्तु कतिपयश्लोकानन्तरमेव यावदन्तं अतीवशुद्धं कङ्करवल्लीतः श्रीद्वारकाधीशपुस्तकालयादधिगतं तेन साकं संवाद्य ततस्तत्प्रत्यर्पितम्। अपरं पण्डितप्रकाण्डैर्वालशास्त्रिभिः नूत्नं पुस्तकं प्रदत्तं प्रायोऽशुद्धं तदासीत्। तृतीयं काशीतः परमभगवदीयगृहादेकं शुद्धं पूर्वमहमानीतवान्। एतेनैव शङ्काग्रस्तं पदं समाहितम्। परं द्वितीयस्कन्धसुबोधिन्याः एकं केनापि याचितं प्राचीनतमं शुद्धतरं मन्निकटे विराजते, तस्मिन् कतिपयस्थलेषु प्रकाशटीकायाः पद्यानि उट्टङ्कितानि, तैः पद्यैः साकमादृतप्रकाशवाक्यानां संवादने भूयान् पाठभेद आयात्येव अत एव न तानि पद्यानि निवेशितानि।

एवं श्रीमदाचार्यचरणकृपया द्वितीयस्कन्धप्रकाशस्य प्रकाशनं विधाय तेषामेव चरणकमलेषु समर्प्यते, तत् सुबोधिनीसुबोधाय उपयोक्ष्यन्ते लीलास्वादनपटुभिः सुधीभिः इति अलं पल्लवितेन।

सुरत बडामंदिर<br>
कार्तिकशुक्ला १५ सं. १९८८

निगमरसभरितभागवतरसिकवशंवदः<br>
**चीमनशास्त्री**<br>
साहित्यभूषण—शुद्धाद्वैतरत्नेति



श्रीकृष्णाय नमः।

श्रीगोपीजनवल्लभाय नमः।

श्रीमदाचार्यचरणकमलेभ्यो नमः।

# श्रीमद्भागवतद्वितीयस्कन्धश्रीसुबोधिनीप्रकाशः।

**श्रीमद्गोस्वामिश्रीपीताम्बरात्मजश्रीपुरुषोत्तमचरणविरचितः।**

श्रीकृष्णः शरणं मम। अथ द्वितीयस्कन्धं व्याचिकीर्षवः पूर्वोत्तरस्कन्धयोः कार्यकारणभावरूपां सङ्गतिं प्रदर्शयितुं पूर्वस्कन्धार्थमनुवदन्तः प्रकृतस्कन्धार्थमाहुः **स्कन्धे त्वित्यादि**। तथाच कर्तव्याधिकारिणोः कार्यकारणभावात्तन्निरूपकयोरपि सैव सङ्गतिरित्यर्थः। ननु कर्तव्यनिर्धारस्तु एकविंशतिभिरेव पद्यैः क्रियते इति कथं तस्य स्कन्धार्थत्वमित्याशङ्कायां तत्परिचायकमाहुः **तस्मिन्नित्यादि**। तस्मिन् स्कन्धार्थे एकविंशतिपद्यैर्निर्धारिते पश्चादनन्तरं **क्रियाविषयसंकथा** क्रियाविषयजिज्ञासाज्ञापको राजप्रश्नस्तदुत्तरदानं चेति। तथा च यदि क्रियानिर्धारो न जातः स्यात्, तर्हि सैव जिज्ञास्येत, यदि सा क्रिया प्रसिद्धविषया स्यात्, विषयो नोच्येत, यस्मादुभयमुच्यते, अतो विषयनिर्धारसहितः कर्तव्यनिर्धारः स्कन्धार्थ इत्यर्थः। ननु विषयसंकथा चेदत्रैव क्रियते, तदान्ये स्कन्धा निरर्थाः स्युरित्यत आहुः **अग्रे चेति**। **प्रवक्ष्यामः** प्रकर्षेण विशेषभावेन वक्ष्यामः। **उत्तमैः** मुख्यलीलानिरूपकैः। तथा च सामान्यविशेषभावस्य विद्यमानत्वान्न नैरर्थ्यमित्यर्थः। एतेन द्वितीयस्य तृतीयादिभिर्विषयिविषयभावः सङ्गतिरप्युक्तप्राया। ननु विषयनिर्धारोऽप्यध्यायद्वयेनैव सम्पद्यते इति शिष्टानां किं प्रयोजनमत आहुः **निर्धारणे इतिचरणत्रयम्**। **निर्धारणे** विषयनिर्धारणे। एवं चाङ्गनिरूपणमन्तरेणाङ्गी निरूपयितुं न शक्यत इत्यङ्गनिरूपणमध्यायान्तरप्रयोजनमित्यर्थः। एतेन स्कन्धार्थस्य प्रकरणार्थैरङ्गाङ्गिभावः सङ्गतिरिति स्फुटीचक्रे। नन्वेवं सत्यध्यायत्रयमेवास्तु, किं दशकेनेत्यत आहुः **वस्त्वित्यादिपादोनकारिकाचतुष्टयम्**। एतेन प्रकरणाध्यायार्थानां परस्परं सङ्गतिरपि प्रदर्शिता ज्ञेया। तथाहि। **वस्तुनिर्धारणं** नाम वस्तुन इदमित्थतया निश्चयः, स च प्रथमप्रकरणस्यार्थः, तच्च प्रमाणादिचतुष्टयाधीनम्, तेनाद्यप्रकरणाध्यायार्थयोः कार्यकारणभावः सङ्गतिः। नन्वेवं सत्यध्यायचतुष्टयं स्यादित्यत आहुः **एकत्रेत्यादि**। एकस्मिन्नध्याये श्रुत्यविरुद्धा युक्तिर्योगश्चेति प्रमाणभूते स्थूलरूपाख्यं प्रमेयं चोच्यते। 'मानाधीना मेयसिद्धि'रिति। **एकत्र**: एकस्मिन्नध्याये फलं सूक्ष्मरूपाख्यं साधनं द्विविधा भक्तिश्चोच्यते। 'साधनाधीना फलानुभूति'रिति। **अतो** हेतोः। **अत्र** स्कन्धे वस्तुनिर्धारप्रकरणे **हि** निश्चयेन **अध्यायद्वितयं मतं** व्यासचरणानां सम्मतमित्यर्थः।

एवमाद्यप्रकरणस्याध्यायार्थं सङ्गतिं च प्रदर्श्य द्वितीयस्याहुः **श्रद्धेत्यादि** । **अध्यायेति** चरणो देहलीदीपवदिहाप्यन्वेति । एवं द्वितीयप्रकरणेऽप्यध्यायद्वयोपपादनद्वारा प्रकरणाध्यायार्थयोः सामान्यविशेषभावरूपा सङ्गतिः प्रदर्शिता । ननु श्रद्धा नामास्तिक्यबुद्धिरादरात्मिका, तस्या अधिकारिविशेषणत्वमेव, नह्यश्रद्धालुर्विहिते प्रवर्तते, सा च प्रथमस्कन्ध उक्तैवेति किमर्थमत्र तदुक्तिरित्याकाङ्क्षायामाहुः **फलेत्यादि** । **एतत्** निष्कामानन्यभगवद्भजनकर्तव्यताध्यवसायात्मकश्रद्धारूपमङ्गमुभयनिष्ठं **फलोपकारि** परमानन्दानुभवोपकारि । **ततो** हेतोः । **अधिकारे न विशेत्** श्रवणस्वरूपोपकारित्वेपि उक्तरूपाद्विशेषात्तत्रोक्तायां श्रवणाद्यादररूपायां श्रद्धायां न विशेत्, तस्मादत्रोक्तमित्यर्थः । द्वितीयस्योपपाद्य तृतीयस्याहुः **विमर्शोपी**त्यादि । **त्रिविधे द्वे** इति । जननसमागमप्राकट्यभेदेनोत्पत्तित्रैविध्यम् । आक्षेपसिद्धान्तफलभेदेनोपपत्तित्रैविध्यं बोध्यम् । तथा च विमर्शप्रकरणस्य स्वावान्तरप्रकरणाभ्यां सह सामान्यविशेषभावः, तयोश्च परस्परमेककार्यत्वम्, तयोस्तत्तदध्यायैः सह सामान्यविशेषभाव इति सङ्गतिनिष्कर्षः । एवं स्कन्धाद्यर्थं सङ्गतिं च निरूप्य प्रथमाध्यायार्थमाहुः **तत्र त्वित्यादि** । कर्तव्यं श्रवणादि तस्य सविषयत्वाद्विषयनिर्धारः । विषयस्य द्वैविध्यात्तन्निर्धारश्च । तथा च विषयसहितकर्तव्यनिर्धारः प्रथमाध्यायार्थ **इत्यर्थः** ।

एवं सर्वमर्थं सङ्गृह्य व्याख्यानपीठिकामाहुः **पूर्वेत्यादि** । **न निर्धारिता** इति । 'मनुष्येषु मनीषिणा'मिति प्रश्नवाक्ये मनीषिपदेनोक्ता अपि मनीषाया बहुविधत्वादेते मनीषिण इति निश्चित्य नोक्ताः । **स चेति** । चोप्यर्थे । सोपीत्यर्थः । तथा चैतावानर्थः सङ्गृहीतादाधिक इत्यर्थः । ननु पूर्वस्कन्धे राज्ञा प्रश्नषट्कमन्यदपि कृतं 'यच्छ्रोतव्यमथो जाप्य' (१।१९।३८) मित्यादिना, तत्कथं द्वयं कृतमित्युच्यते, तत्राहुः **ये पुनरित्यादि** । **एतन्निरूपणेनेति** । प्रश्नद्वयोत्तरनिरूपणेन प्रथमप्रश्नोत्तरनिरूपणेन वा । तर्हि '**यद्वा विपर्यय**'–(१।१९।३८) मित्यनेनोक्तस्य षष्ठस्य कुत्रोत्तरमित्यत आहुः **काँश्चिदित्यादि** । **अग्र इति**। दशमाध्यायसमाप्तौ 'अमुनी भगवद्रूप' २।१०।३५ इत्यादिना । **निरूपयिष्याम** इति । उत्तरभेदेपि विषयाभेदेनैकरूपतया निरूपयिष्यामः । तेन सिद्धमाहुः **अत** इत्यादि । एवं प्रथमकारिकार्थ उक्तः । अग्रिमाणामाहुः **तदर्थमित्यादि** । ननु त्रयाणामेतेषां कुतोऽङ्गत्वमित्याकाङ्क्षायामाहुः **एतेषामित्यादि** । ननूत्तरे वक्तव्ये प्रश्नाभिनन्दनस्य किं प्रयोजनमत आहुः **कर्तव्येत्यादि** । किं हेतुताबोधनेनेत्यत आहुः **यथेत्यादि** । तथा च तदाकाङ्क्षापूर्तिस्तत इति तया च व्यग्रतानिवृत्त्या सुखेन कर्तव्यसिद्धिरिति तत्प्रयोजनमित्यर्थः । एवमाद्यश्लोकप्रयोजनमुक्तम् । तदग्रिमत्रयाणामाहुरधि**कारेत्यादि** । किं तावतेत्यत आहुः **प्रेक्षेत्यादि** । **तर्ह्येकः** श्लोकोस्तु, किं त्रिभिरित्यत आहुः **तत्रेत्यादि** । **तत्रेति** । अधिकार एवोत्तरदानात् । **पूर्वेषां** चतुर्णां तात्पर्यमुक्त्वा व्याचक्षते **तत्रेत्यादि** । **अन्य** इति । 'अथो जाप्य'मित्यादिनोक्ताः । ते विषयाभेदेप्यन्योपकारका इति भावः ।



**तच्छास्त्राभावादिति** । सत्स्वपि ग्रन्थेषु तदभिज्ञगुर्वलाभेन तेषां शास्त्रत्वाभावा-
दित्यर्थः । एतेन छान्दोग्यस्थसनत्कुमारनारदसंवादन्यायो बोधितः ।
२-१-२
**निमित्तसप्तमीति** । 'निमित्तात्कर्मयोग' इत्यनेनोक्ता । तथा च गृहार्थं
श्रोतव्यादीनि सहस्रशः सन्तीत्यर्थः । **तव प्रश्नो न साधुरिति** । प्रश्नस्तव न साधुरि-
त्यन्वयः । **अनेनेति** । आद्याभिनन्दनेनेतरविषयकनिन्दनेन च ।
**विचिकित्सेति** । जुगुप्सोत्पादको गृहं दुःखदं न वेति संशयः । श्रीनपि
२-१-४
व्याख्याय तेषामधिकारशेषत्वाय तदर्थं सङ्गृह्याहुः **बुद्धिरिति** ।

**तस्मादित्यत्र** । **अत्रेति** । सर्वभयनिवृत्त्यर्थं भगवान् श्रोतव्य इत्यस्मिन्नर्थे । **बहिर्मु-
खस्येति** । भगवति विश्वासरहितस्य । **स्वभावतोधिकारीति** । औत्प-
२-१-५
त्तिकविश्वासवान् । **तदाहेति** । तस्मादाहेत्यर्थः । विशिष्टाधिकारं स्फुटी-
कुर्वन्ति **दौष्यन्तिरित्यादि** । सद्धर्मपुरःसरमित्यनेन दुर्योधनादयो व्यावर्तिताः । एवं राज्ञो दृढीकरणेन युक्तेर्वक्तव्यत्वमुपपाद्य वक्ष्यमाणां तां दृढीकर्तुमाशङ्कन्ते **नन्वित्यादि** । **कथमिति** । केन प्रकारेण । आत्मत्वेन चेत्, वैदिकपरित्यागायोगः, प्रकारान्तरेण चेत्, तत्र विश्वासाभाव इति । **तत्राहेति** । तादृश्यामाशङ्कायामुभयदोषनिवारकं प्रकारमाहेत्यर्थः । ननु जाता प्रमाणाकाङ्क्षा तत्पूर्त्यर्थं प्रमाणे वक्तव्ये प्रमेयविशेषणं किमित्युच्यते, तत्राहुः **प्रमाणेत्यादि** । **वक्ष्यत** इति । **बलिष्ठेति** । पूर्वतन्त्रे तथैव निर्णीयमानत्वाद्बलिष्ठा । लोकेपि प्रमाणमेकदेशं प्रमापयति, प्रमेयं तु ततोप्यधिकमिति दृश्यते, अतः प्रमाणकाङ्क्षापूर्त्यर्थं तादृशतत्कथनं युक्तमित्यर्थः । सा केत्याकाङ्क्षायां तामाहुः **तत्रेत्यादि** । **वक्तव्य इत्यन्तम्** । **तत्रेति** । भगवच्छ्रवणे । **नास्ति नियम** इति । नारदपूर्वजन्मनि दासीपुत्रेपि तदुक्त्या नियमभङ्गदर्शनादिदानीन्तनानामपि तथा दर्शनाच्च नास्तीत्यर्थः । **अत** इति । तादृशामुद्धार्यत्वात् **तेषामर्थे उपाय** उद्धारोपायः वेदे त्रैवर्णिकमात्रोपकारके **नोक्तः** उक्तो नास्तीति हेतोस्**तदर्थं** वक्तव्ये साधने आवश्यकत्वात्तेनैवेत्यादिनोक्तरीत्या लाघवादित्यन्वयः । तथा चैताभ्यां युक्तिभ्यां सर्वात्मत्वेन रूपेण भगवच्छ्रवणं विधीयत इत्यर्थः । ननु कथमेतेन प्रमाणकाङ्क्षापूर्तिरित्यत आहुः **नहीत्यादि** । तथा च श्रुतिसामानाधिकरण्यात् प्रमाणाकाङ्क्षापूर्तिरित्यर्थः । कथं युक्तेर्बलिष्ठत्वमित्यत आहुः **तत्रेत्यादि** । **तत्र श्रौते श्रवणविधौ** 'आत्मनः कामाय पतिः प्रियो भवती'त्याद्युपक्रममापाततोनुरुध्याभ्यर्हितत्वात् **स्वस्वात्मश्रवणे स्वपदेन** देहो वाच्यः, तथा च तत्तदवच्छिन्नस्य तत्तदभिमन्तुर्वा श्रवणे बोध्यमाने बोधकस्य **वाक्यापर्यवसानमेव** स्यात्, देहानन्त्येनात्मीयत्वानन्त्यात्तथा स्यात्, तथा चाशक्योपदेशत्वेनाननुष्ठापकत्वात् प्रामाण्यमेव तस्य भज्येतेत्यर्थः । अथात्मीयापेक्षया देहात्मन्यभ्यर्हितस्वत्वस्याधिक्यात्स्वत्वमात्मत्वमेवेति चेत्, तत्राहुः **आत्मस्वि-**

त्यादि । तथा च तद्वैशिष्ट्यस्य सर्वेषु तुल्यत्वात् आत्मसु तदवच्छेदकस्य प्रकृतिविकृतिभावस्याभावात्सर्वात्मश्रवणप्राप्तौ तदानन्त्यादपि स एव दोष इत्यर्थः । अथ स्वत्वमभिन्नत्वमेवेतिचेत्, किमिदमभिन्नत्वम्, नानात्वराहित्यं वान्योन्याभावराहित्यं वा, नोभौ, अनेकात्मवादाभ्युपगमे नानात्वभेदयोस्तत्रोपगतत्वेन तदभाववत्त्वस्य तत्राशक्यवचनत्वात् । भिन्नत्ववदभिन्नत्वस्यापि प्रतियोगिसापेक्षत्वेन तदाकाङ्क्षायां स्वस्यैव तत्र निवेशे स्वयं क इति जिज्ञासायां स्वाभिन्न इति ज्ञेयतयात्माश्रयान्योन्याश्रयापातेन ज्ञानदौर्घट्याच्च । इदं चकारेण सङ्गृहीतम् । सिद्धमाहुः **तस्मा**दित्यादि । उपक्रमस्यानुरोध्यत्वाद्दोषस्य च परिहार्यत्वात् सर्वेषामेको य आत्मा भवति, स स्वात्मापि भवत्येवेति स एव श्रोतव्य इत्यर्थः । युक्तेर्बलिष्ठत्वायाहुः **अत** इत्यादि । **अत इति** । उक्तहेतोः । तथा चैवं श्रुत्यर्थनिश्चायकतया बलिष्ठत्वेन, अतः प्रमाणाकाङ्क्षाया अपि पूर्तिरित्यर्थः । नन्वात्मनां नित्यत्वेन प्रवाहशक्तिपक्षस्यात्रासंभवादात्मशब्दस्य व्यक्तौ जातिविशिष्टव्यक्तौ वा शक्त्यङ्गीकारे पूर्वोक्तदोषसंभवाच्च तान् पक्षान् परित्यज्य सर्वात्मत्वस्योपाधित्वेन गुरुत्वात् तत्परत्वमपि त्यक्त्वा जातिवाचकत्वमादरणीयम्, ततश्च जात्या व्यक्त्याक्षेपदशायामहंवित्तिवैद्यैवाक्षेप्या, न त्वन्या, उपक्रमानुरोधात्, अतो न श्रुतावात्मपदस्य सर्वात्मपरत्वमित्यत आहुः **नचे**त्यादि । तत्र हेतुः **तथा सती**त्यादि । उक्तदोषपरिहारायात्मपदस्य जातिवाचकत्वेऽङ्गीकृते सति व्यक्तिरूपस्य स्वस्यात्मनो गौणत्वेनावाच्यत्वेनाश्रौतत्वात् **क्रियावद्व्रीहिभिर्जु**होतीत्यादिक्रियायां यथा व्रीहित्वादेर्होमादिसाधकत्वानुपपत्त्या व्रीह्यादिव्यक्तिराक्षिप्यते, तस्याश्चानन्यलभ्यत्वाच्छब्दार्थत्वं चाङ्गीक्रियते, तथा ज्ञानेऽनुपपत्त्यभावाच्छब्दश्रवणमात्रेण जातिज्ञाने जायमाने व्यक्त्याक्षेपकानुपपत्त्यभावाच्चाक्षेप्यत्वाभावेनाप्यश्रौतत्वा**न्नात्मनः कार्यं सिध्येदा**त्मवेदनस्याभावेन शोकतरणरूपमात्मलाभरूपं च कार्यं न सिध्येदित्यर्थः । नन्वात्मत्वजातिशब्दादेवात्मकार्यसिद्धिरस्तु, को दोष इति चेत्, न, तस्या जातिवाचकपदश्रवणमात्रेणापि भवनात् प्रियत्वलिङ्गश्रावणविरोधापत्तेः । ननु तर्हि यथाकथञ्चिदात्मश्रवणविधिरङ्गीकार्य इति चेत्, तत्राहुः **सञ्जातेऽपी**त्यादि । श्रवणविधिमन्तरेणापि सञ्जातेऽहंवित्तिरूपस्यात्मज्ञानस्य प्रमाणवस्तुभ्यां जायमानस्य विद्यमानत्वात् 'न वा अरे' इत्यादिश्रुतौ पत्यादिष्विव शरीरे औपाधिकप्रीत्यश्रावणेन प्रकारविशेषस्यानुक्तत्वात्तज्ज्ञानार्थं श्रवणादिरूपः प्रयासो व्यर्थः स्यात्, तथा च श्रवणविधिवैयर्थ्यापातान्न तथाङ्गीकर्तुं शक्यमित्यर्थः । ननु मणिपरीक्षायामिवात्मपरीक्षायामपि वाक्यसहकृतस्य प्रत्यक्षस्यैव हेतुत्वान्न श्रवणविधिवैयर्थ्यमितिचेत्, तत्राहुः **श्रुतिश्चे**त्यादि । तथा सति वाक्यस्य चक्षुःसहकारित्वं मनःसहकारित्वं वा वाच्यम्, तत्राद्ये देहात्मभावदृढीकरणेनोपचरिता, द्वितीयेपि प्राणान्मनसश्चात्मविवेकस्याजातत्वाच्छ्रुत्यन्तरे 'आत्मानं चेद्विजानीयादयमस्मीति पुरुषः । किमिच्छन् कस्य वा हेतोः शरीरमनुसञ्ज्वरे'दित्यात्मज्ञाने शारीरतापजतापनिवृत्त्यादेरेवोक्तत्वात्तस्याश्च योगेन समाधिद-

१. बोधकवाक्यापर्यवसान दोषः ।



शायां प्राणे सप्राणे स मनसि वा जायमानतया तद्विशिष्टात्मभावदृढीकरणेनोपचरिता भवेत्, तथा च लक्षणादोषापातात्तथा नोपगन्तुं शक्यमित्यर्थः । सिद्धमाहुः **अत इति** । असन्दिग्धत्वेन प्रतिपत्तिलाघवात्तत्प्रकरणगतवाक्यान्तरान्वयस्वारस्याच्च सर्वात्मैव श्रोतव्यत्वेन श्रुत्या विधीयत इत्यर्थः । नन्वस्त्वेवं श्रोतव्यविधिनिर्वाहः, तथाप्यात्मलाभश्रुतौ शोकतरणश्रुतौ च जीवात्मैवात्मपदेन ग्राह्यः, लाभपदस्य सिद्धासिद्धान्यतरवस्तुस्वाधीनतायामेव प्रयोगात्, ईश्वरस्य स्वतन्त्रत्वेन जीवाधीनताया अशक्यवचनत्वात्, जीवे तु विस्मृतकण्ठमणिलाभन्यायेन ज्ञानमात्रेणापि लाभस्य शक्यवचनत्वात्तेन च शारीरादिज्वराभावे शोकस्यापि निवृत्तेस्तस्यैव लाभस्य परत्वेन सिद्धेश्च, सर्वात्मश्रवणविधानाङ्गीकारे तु स्वस्याश्रुतत्वेनाज्ञाततयाऽलब्धत्वात्स्वस्य पराधीनत्वरूपया गौणतया शोकस्याप्यनिवृत्तेः, अत एतत्सामञ्जस्याय तत्रापि शारीर एव आत्मा श्रोतव्यत्वेन स्वीकार्य इत्याकाङ्क्षायामाहुः **तस्ये**त्यादि । **भेदाभावा**दिति । सुवर्णतत्खण्डयोरिवांश्यंशभावेन तादात्म्यात् । तथा च तज्ज्ञानेऽप्यात्मज्ञानसिद्ध्यात्मलाभशोकतरणयोः सिद्धेः श्रुतिसामञ्जस्यात् तत्राप्यात्मपदेन सर्वात्मैव ग्राह्य इत्यर्थः । **एतेन जीवब्रह्मभेदवादो निराकृतः । विशिष्टाद्वैतवादश्च**, तत्रापि विशेषणत्वेन गौणत्वानपायात् । नन्वेवं सति तादात्म्येपि किञ्चिद्गौणतासत्त्वात्तमपि वादं विहाय शुद्धाभेदवाद एव स्वीकार्यः, तथा सति घट्टकुट्यां प्रभातमिति शङ्कायां युक्त्यन्तरमाहुः **किञ्चे**त्यादि । **फलमिति** । शोकतरणादिरूपम् । **अत इति** । दानस्य दातृसामर्थ्यसापेक्षत्वात् । **बहुधे**त्यादि । तथा च शुद्धाभेदवादोपि दुष्ट इति न्यायसामञ्जस्यार्थं तादात्म्यमेवाङ्गीकृत्य श्रुत्यर्थो निर्णेय इत्यर्थः । ननु तथापि यौक्तिक एवायमर्थः, न तु श्रौत इत्याकाङ्क्षायामाहुः **वेदे**त्यादि । भगवानेव वेदार्थ इति तस्यैव श्रवणादिकं विधेयमिति वेदार्थ इति सर्वनिर्णये प्रथमस्कन्धे वाक्यान्वयाधिकरणे च 'सर्वे वेदा यत्पदमामनन्ति वेदैश्च सर्वैरहमेव वेद्य' इत्यादिश्रुत्युपन्यासपूर्वकं 'सर्वत्र प्रसिद्धोपदेशा'दित्यादिन्यायोपन्यासपूर्वकं चोक्तमित्यर्थः । नन्वेवं सति श्रुत्यर्थनिश्चायनाय सर्वात्मा भगवान् श्रोतव्य इत्येव वक्तव्यम्, कृतमन्याभ्यामित्याकाङ्क्षायां तत्प्रयोजनमाहुः **किञ्च फलमि**त्यादि । **दुःखाभाव** इत्यादि । अवान्तरभेदबाहुल्येप्येतद्द्वये एव पर्यवसन्नत्वादित्यर्थः । **तत्रे**त्यादि । तत्र तत्साधनविचारे क्रियमाणे मैत्रेयीब्राह्मणे दर्शनसाधनत्वेनोपस्थितस्य श्रवणस्यैकफलत्वे, 'द्रष्टव्य' इत्यनेनोपस्थितस्य तत्साध्यज्ञानस्य वैकफलत्वेऽमृतपदोक्तदुःखाभावफलत्वे, **सर्वफलत्वे वा** 'ब्रह्मविदाप्नोति परं' 'न पश्यो मृत्युं पश्यति' ब्रह्मविदमुपक्रम्य 'सर्वेषु लोकेषु कामचारो भवती'त्यादिश्रुत्यन्तरोक्तसर्वफलत्वे वा आहारपृथक्त्वेन सर्वफलत्वनिर्धारात् । ('मैत्रावरुणीं द्विरूपामालभेतान्नकामः,' एवंवृष्टिकामः प्रजाकाम' इति नानाफलार्थं विहितानां यागानां) 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः स्पर्धमानः सङ्ग्राममुपप्रयास्यन्, सङ्ग्रामं जित्वे'तिनानावाक्यविहिते यागे, किं सकृत्करणेन सर्वफलसिद्धिः, उत तत्तदर्थमावृत्तिः कर्तव्येति सन्देहे, कालभेदादिना

आहारस्याहरणस्य यत्पृथक्त्वमावृत्तिस्तेन सर्वफलत्वम्, न तु सकृत्करणेनेति निर्धारात् । प्रथमं जाते साक्षात्कारे तेन विहितज्ञानेन तथा स्यात् । नन्वेकसाधनकत्वेन निर्दिष्टानां सन्नियोगशिष्टत्वात् सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिरिति न्यायेन सहभवनस्य शक्यवचनत्वात्कुतो न फलद्वयमिति चेत्, तत्राहुः **सन्नियोगे**त्यादि । तत्र हेतुः **अन्यथे**त्यादि । तथा च सन्नियोगशिष्टन्यायस्य व्याकरणसिद्धत्वेन शब्दविषयत्वादुक्तन्यायस्य च क्रियानिर्णायकत्वेन तद्विषयत्वात् श्रवणस्थले तद्भङ्गे क्रियामर्यादैव भज्येत । न च भगवतोऽनियम्यत्वात्को दोष इति शङ्क्यम् । 'स्वकृतसेतुपरीप्सये'त्यादिवाक्यैस्तदभञ्जकत्वनिश्चयात्, अतस्तदभङ्गार्थत्वाच्छ्रवण एव तथेत्यर्थः । **हरित्वेने**त्यादि । तथा च यथा जातेष्ट्यधिकरणे 'यदष्टाकपालो भवति गायित्रियैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालस्त्रिवृतैवास्मिन् तेजो दधाति, यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति, यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद्द्वादशकपालो जगत्यैवास्मिन् पशून्दधाति, यस्मिञ्जाते एतामिष्टिं निर्वपन्ति पूतस्तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवती'ति श्रुत्या द्वादशकपालपुरोडाशस्य सकृत्करणेपि तद्गताष्टाकपालत्वादिधर्मेण नानाफलसिद्धिः, तथात्र श्रोतव्यगतधर्मेणेति न न्यायविरोध इत्यर्थः । ननु श्रवणस्य क्रियाकल्पत्वेन तस्यानेकफलत्वे तथानिर्णयोऽस्तु, प्रकृते तु तत्साध्यज्ञानस्य तथात्वं विवक्ष्यत इति तस्य कथं पूर्वतन्त्रेण निर्णय इत्याकाङ्क्षायामाहुः **त**मित्यादि । 'तं यथायथोपासते तदेव भवति तद्धैतान् भूत्वावतीति तस्मादेनमेवंवित् सर्वैरेतैरुपासीत सर्वं हि तद्भवति सर्वं हैनं तद्भूत्वावती'ति श्रुतेः । **उपासनं** चिन्तनम् । तथा चोत्तरकाण्डेपि ज्ञेयधर्मभेदेन ज्ञानफलभेदस्योक्तत्वादत्रापि तथैव निर्णय इत्यर्थः । सिद्धं वदन्तस्तस्य न्यायसिद्धतां बोधयन्ति **अत** इत्यादि । एवं श्रुतिसामानाधिकरण्यव्युत्पादनेनास्य प्रकारस्य बलिष्ठत्वं दृढीकृतम् । अतः परं सर्वोपयोगित्वं दृढीकर्तुमाहुः **नन्वि**त्यादि । **उत्तमवक्तृकथना**दिति । परमविरक्तज्ञानिभक्तेन वक्त्रा कथनात् । **अत** इति । भक्तित्वात् । तथा च सङ्ख्याभेदेन भक्तित्वसंशये सर्वोपयोगित्वस्यापि संशय इत्यर्थः । अत्र तदुक्तमुपगम्य सङ्ख्योक्तिसमर्थनेन समादधते **सत्य**मित्यादि । एवं सङ्ख्याविचारेण भगवच्छ्रवणविधेः सार्थक्यमुपपाद्य विधेयश्रवणविषयविचारेणोपपादयन्ति **ननु भगवा**नित्यादि । **इति कोर्थ** इति । अस्मिन् वाक्ये किमभिधेयम् । अत्र षट् विकल्पाः । तेष्वाद्यं दूषयन्ति **आद्य** इत्यादि । द्वितीयं विकल्प्य दूषयन्ति **गृहीते**त्यादि । द्वितीये द्वितीयं दूषयन्ति **किञ्चे**त्यादि । तृतीयं दूषयन्ति **अथे**त्यादि । **पदवाक्ययो**रिति । श्रोत्रेन्द्रियगृहीतयोः पदवाक्ययोः । **तथैवे**ति । तन्निर्धारपूर्वकं शब्दोच्चारणम्, तन्निर्धारजन्यसंस्कारजनितज्ञानमित्यर्थः । तत्र सङ्ख्यां नियमयन्तः समादधते **मैवा**मित्यादि । **पुन**रिति । विधानानन्तरम् । **उक्तदूषण**मिति । उपदेशायोगरूपम् । कारिकां व्याकुर्वन्ति **भगवा**नित्यादि । अत्र भगवच्छ्रवणं विधायाग्रे दशविधलीलानां कथनान्नायं वाक्यार्थ इत्यर्थः । अत्र भगवच्छब्दो योगरूढः । **श्रोतव्य** इति शाब्दविषयः कर्तव्यः । श्रवण-



पदस्य श्रोत्रेन्द्रियजन्यज्ञान इव शाब्देपि रूढत्वात् । 'गजराजः श्रुतः' 'बृंहितं श्रुत'मित्यादिप्रयोगतौल्यदर्शनादीदृशस्य श्रोतव्यत्वेऽर्थापत्तिं प्रमाणयन्ति **अन्यथे**त्यादि । नन्वेवमपि द्वितीयस्कन्धवैयर्थ्यं तु तदवस्थमित्यत आहुः **तावता**मित्यादि । दशविधलीलावाचकानां तद्युक्तवाचकानां तत्तात्पर्यकारणानां च पदवाक्यानां शक्तितात्पर्यनिर्धारः असङ्कोचसङ्कोचभेदेन द्विविधायाः शक्तेस्तादृशप्रत्यायने वक्तुरिच्छायाश्च निर्णयः सामान्यन्यायेन व्याकरणवन्मीमांसावच्चात्रैव क्रियते । यथा व्याकरणे संबन्धिभेदात् सत्तैव भिद्यमाना गवादिषु जातिरित्युच्यते, तस्यां सर्वे शब्दा व्यवस्थिता इत्यादौ सर्वशब्दानामेकस्यां सत्तायां तदस्यास्त्यस्मिन्निति मतुप्, तदस्य सञ्जातं तारकादिभ्य इतजित्यादौ चैकस्य मतुपस्तारकितशब्दस्य चार्थे बोधिते तदन्तानां तदादीनां च तत्र तत्तार्थे शक्तिनिर्धारः क्रियते, यथा च मीमांसायां 'आकाशस्तल्लिङ्गाद्' 'वाक्यान्वया'दित्यादौ तात्पर्यबोधनप्रकार उक्ते तल्लिङ्गादिभिर्हेतुभिरन्येषामपि पदानां वाक्यानां च शक्तितात्पर्यनिर्धारः क्रियते, तद्वदत्रैव 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । वासुदेवात्परो ब्रह्मन्न चान्योऽर्थोस्ति तत्त्वतः' २।५।१४ इत्यादिषु 'शाब्दस्य हि ब्रह्मण एष पन्थाः' २।२।२ इत्यादिषु सर्वशब्दानां भगवति 'पातालमेतस्य हि पादमूल' २।१।२६ मित्यादिषु भगवदवयवविशेषरूपेऽर्थे शक्तितात्पर्यनिर्धारः, 'नारायणपरा वेदाः' २।५।१५ 'भगवान् ब्रह्म कार्त्स्न्येन' २।२।३४ इत्यादौ वाक्यानां तात्पर्यनिर्धारश्च क्रियते, तस्माच्छाब्दप्रमितिं प्रति शक्तितात्पर्यग्रहणयोः कारणत्वात्तद्ग्रहस्य च व्याकरणाद्यन्यतमाधीनत्वादस्मिन् स्कन्धे तद्ग्राहकयोर्विवृत्याप्तवाक्ययोर्निरूपणान्न कोपि दोषः, न पुनरुक्तिर्वैयर्थ्यं वेत्यर्थः । एतेन यथा गायकगीयमानालापगततननादिशब्दश्रवणमहिम्नार्थज्ञानविधुराणामपि श्रोतॄणां चित्तद्रुतिर्जायते, तथा भगवद्वाचकशब्दश्रवणमहिम्नाऽभयसिद्धिरपि भविष्यतीत्यपि चोद्यं निरस्तम् । ननु शक्त्यादिनिर्धारस्य सम्पूर्णस्कन्धसापेक्षत्वे विषयस्य च स्कन्धान्तरेषु निरूपणे भगवान् श्रोतव्य इत्येव वक्तव्यम्, तावतैव विधानसिद्धेः, सर्वात्महरीश्वरपदानां शेषाणां किं प्रयोजनमत आहुः **एते ही**त्यादि । **अवच्छेदकत्वेने**ति । तदितरस्य विवक्षितफलनिरूपकताव्यावर्तकत्वेन । तथा च श्रुतिसामानाधिकरण्याय **सर्वात्म**पदम्, निर्धर्मकस्यैकजीववाद्यभिमतशारीरस्य च व्यावृत्त्यर्थं **भगवत्**पदम्, तस्य केवलयौगिकत्वगौणत्वयोर्वारणाय **हरि**पदम्, भगश्चासौ वांश्च भगवानिति योगस्याथर्वशिरसि शिवे दर्शितत्वात्, 'भगवानिन्द्रः प्रतिघातमचीकरत् दृढं प्रलब्धो भगवानपां पति'रित्यादौ गौण्या प्रयोगस्यान्यत्रापि दर्शनात् । 'उत्पत्तिं च निवृत्तिं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवा'निति व्युत्पत्तेरन्यत्रापि दर्शनात्तन्निर्धारणाय**श्वर**पदमित्येवमितरव्यावर्तनेन भगवत एवाधिकारिणः फलम्, तेनरस्मादिति बोधनायोक्ता इत्यर्थः । ननु गुणानामनन्तत्वेपि किमिति दशानामेव श्रोतव्यविषयनियमनमित्याकाङ्क्षायामाहुः **गुणाना**मित्यादि । नन्वेवं सति 'विष्णोर्नु कं वीर्याणि प्रवोचम्' 'गायन् गुणान् दशशतानन आदिदेवः शेषोधुनापि समवस्यति नास्य पार'मित्यादिश्रुतिस्मृतिविरोध इत्यत आहुः **अनुप्रवेशोपी**त्यादि । एवं **विधेयश्रवणादि**-

**पदार्थं** विधिवाक्यार्थं च निर्णीय विधेयगतसङ्ख्याया विवक्षितत्वात्तं विचारयन्ति **अथे**-त्यादि । अत्रायमर्थः । **अभयार्थमत्र** त्रयाणां विधानम्, तत्र विधेयानां श्रवणादीनामभयं प्रति तृणारणिमणिन्यायेन यदि कारणत्वम्, तदा सङ्ख्याविरोधोऽष्टदोषदुष्टो विकल्पश्च, यदि दण्डचक्रादिन्यायेन कारणता स्यात्, तदा समुच्चयेऽधिकारिविशेषस्य फलाभावप्रसङ्गः स्यात्, यदि व्यवस्थितविकल्पः 'उदिते जुहोत्यनुदिते जुहोती'तिवत्, तदा तु श्रवणस्याधिकारिविशेषेऽनावश्यकतायां कीर्तनाद्यधिकारिणा तदकरणे तयोरप्यनिर्वाहः, अत आवश्यकत्वाच्छ्रवणमेव विधातव्यम्, कीर्तनस्मरणे त्वर्थबलादेवायास्यतः, न हि कीर्तनाभावे श्रवणं संभवति, न वाऽस्मरन् कीर्तयतीति, अतः श्रुत्यर्थनिर्णयाय श्रवणमात्रं विधातव्यम्, न तु त्रयमिति, अत्र समादधते **अत्रे**-त्यादि । अर्थात् प्राप्तिं निराचक्षते **न चे**त्यादि । तत्र हेतुः **अध्यापनस्ये**त्यादि । अयमर्थः । श्रुतौ 'स्वाध्यायोऽध्येतव्य' इति विधिना प्राप्तेऽध्ययने कस्मादध्येय इत्यध्ययनहेत्वाकाङ्क्षायां 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीते'ति श्रुत्यन्तरगतनिञ्विहितात्मनेपदेनाचार्यत्वकामिनो नियोज्यत्वावगमात्ततोऽध्ययनमायाति । आचार्यश्च 'उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते' इति स्मृत्युक्तलक्षणकः । आचार्यत्वकामना च प्रतिष्ठार्थं वा वृत्त्यर्थं वा पुत्रस्नेहादिना वा । अतो विधिविचारे सांसारिककर्तव्यत्वेऽर्थात्प्राप्तिविचारे वृत्तित्वेन वृत्तिः स्नेहस्याप्युपलक्षिका, अतस्तैराचार्यत्वकामनाहेतुभिः प्रतिष्ठावृत्तिस्नेहैरध्यापनस्य प्राप्तत्वादध्ययनस्यापि सांसारिककर्तव्यत्वात्तद्विधिवदेकविधानेनान्यप्राप्तिः, सात्र न, कीर्तने मुक्तकर्तृकर्तव्यताया विवक्षितत्वेन सांसारिककर्तव्यत्वाभावात् । किं तावतेत्यत आहुः **श्रवणेने**त्यादि । तथा चान्यत्र कीर्तनस्य श्रवणविध्याक्षेपलभ्यत्वेप्यत्र विवक्षितकीर्तनस्य न तेन लाभ इत्यर्थः । नच शुकादीनां विहिताकारित्वे 'दोषबुद्ध्योभयातीत' इत्यादिवाक्यविरोध इति शङ्क्यम् । 'निवृत्तो विधिषेधत' इत्यत्र तत्परिहारस्य वक्ष्यमाणत्वात् । एवं कीर्तनविधिः समर्थितः । श्रवणविधिं समर्थयन्ति **तर्ही**त्यादि । **तर्हि** कीर्तनस्याक्षेपलभ्यत्वाभावे । **अर्थादेव भविष्यतीति** । भगवान् कीर्तितव्यो नाम कीर्तनगोचरीकर्तव्यः । कीर्तनं नाम ताल्वोष्ठपुटादिव्यापारेण शब्दाभिव्यञ्जनम्, तदभिव्यञ्जितः शब्दो वा । धातोः फलव्यापारयो रूढत्वात् । तयोर्मध्येऽत्र तादृशशब्द एवात्र ग्राह्यः । भगवतो व्यापाराविषयत्वेन शब्दविषयत्वात् । तत्र तादृशं शब्दोच्चारणं च श्रोतारं विनाऽसंभवाच्छ्रवणमाक्षेप्स्यतीति तथेत्यर्थः । तत्परिहरन्ति **ने**त्यादि । तथा च श्रवणस्यार्थात्प्राप्तावविहितत्वे ततः फलाभावे प्रसक्ते परीक्षिति कीर्तनस्याभावात्तस्याभयं न स्यात्, तथा सत्युपदेशवैयर्थ्यमित्यर्थः । तत्सार्थक्यार्थं ततोपि फलाङ्गीकारे दूषणान्तरमाहुः **अभये** इत्यादि । अर्थात्प्राप्ते विहिते च फलतारतम्यस्य गुरुशिष्यादौ दृष्टत्वादत्रापि तथा वक्तव्यम्, तत्त्वभये वैलक्षण्याभावाद्वक्तुमशक्यम्, तथा चोपदेशसार्थक्यार्थं श्रवणोपदेशोप्यावश्यक इत्यर्थः । एवं श्रवणस्यावश्यकत्वे तेन सिद्धमाहुः **तस्मा**दित्यादि । **तस्मात्** कृतार्थीकृतस्य कीर्तनस्य विधिं विनानुपपन्नत्वात् । अतः श्रवणस्य च कीर्तनं विनानु-



पपन्नत्वात् । **अतिनिरपेक्षाणामिति** । 'प्रियावतारे नः सती'ति तत्र वाक्यात् । अत्र तु 'महापौरुषिको भवा'निति वाक्याद्याज्ञवल्क्यापेक्षयाप्यतिनिरपेक्षाणाम् । तथा च श्रौतश्रवणविधौ कीर्तनाक्षेपसंभवेप्यत्र तदसंभवादुत्तमवक्तृप्रवृत्तिसिद्ध्यर्थं कीर्तनविधानमावश्यकमित्यर्थः । हेत्वन्तरमप्याहुः **तदेव श्रवणसिद्धेरिति** । वक्तुरपेक्षादोषे श्रोत्रानुसंहिते गुरुभक्तिन्यूनतायां 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन' इति श्रुतेस्तादृशस्यार्थप्रकाशाभावान्न वाक्यतात्पर्यनिर्धारः । अतिनिरपेक्षवक्तृके तु गुरुभक्तिप्रकर्षसंभवात् तन्निर्धारः संभवत्यतो तद्विधानमावश्यकमित्यर्थः । नन्वेवं सति श्रवणस्याभयसाधनकत्वं युज्यते, कीर्तनस्य तु श्रवणं जनयित्वोपक्षयादभयरूपफलसंबन्धबोधनं न सङ्गच्छत इत्यत आहुः **फलं तु प्रत्येकमेवे**ति । प्रतिव्यक्ति भिन्नमेव । तथा च कीर्तनस्य स्वव्यधिकरणश्रवणजनकत्वेपि स्वसमानाधिकरणाभयजनकत्वमक्षतमतो नासङ्गतमित्यर्थः । नन्वेवं प्रतिव्यक्ति फलभेदे तद्वैलक्षण्यमपि संभवत्येवेति श्रवणविधिमन्तरेणापि तल्लाभाच्छ्रवणविधिवैयर्थ्यं दुर्वारमित्यत आहुः **अभयं त्वि**त्यादि । **तदेवे**ति । प्रवेशेनाभेदे । तथा च न वैलक्षण्यसंभावनावसर इत्यर्थः । अत्र 'तदा तर्ही'ति शब्दाः सप्तम्यन्ततच्छब्दस्यार्थे रूढा ज्ञातव्याः । एवं श्रवणकीर्तनविधी उपपाद्य स्मरणविधिमुपपादयन्ति **तर्ही**त्यादि । **तर्ही**ति । विधिद्वयेनैव निर्वाहे । **अन्यलभ्यत्वेने**ति । कीर्तनानुपपत्तिलभ्यत्वेन । समादधते **न, सकृ**दित्यादि । अयमर्थः । अत्र श्रोतव्यः कीर्तितव्यः स्मर्तव्य इत्यानुपूर्वीविशेषेण कीर्तनानन्तरमपि स्मरणं लभ्यते, तच्च कीर्तनानन्तरभावित्वान्न तद्विधिनाक्षेप्तुं शक्यम्, प्राथमिकतदाक्षेपेणैव स्मरणाक्षेपेण स्वरूपलाभस्य कीर्तनस्वरूपलाभस्य जातत्वात्, अतः स्मरणविधिरावश्यक इति । न च तर्हि स्मरणं वा स्मरणकीर्तने वा विधातव्ये, शिष्टमर्थादायास्यतीति वाच्यम्, दशविधलीलायुक्तभगवत्स्मरणस्यात्र विवक्षितत्वेन भगवतस्तादृशत्वस्य राज्ञाऽज्ञातत्वेन वाक्यस्यानुत्तरत्वापातात् । द्वयविधानेपि दोषतादवस्थ्याच्च । गुणविशेषादप्यावश्यकत्वमाहुः **दोषान्तराप्रवेशश्चे**ति । अन्यासक्तेः फलप्रतिबन्धकत्वात्तदभावस्यावश्यकतया स्मरणेनोत्तरकालीनस्य तस्यासंभवश्चेति फलोपकारशैघ्र्यादपि स्मरणमावश्यकमतोपि तद्विधानम् । तथा च श्रीशुकस्याध्ययनापदेशेन श्रवणेन भगवति स्नेहो भगवत्स्मरणजनकसंस्कारश्चोत्पादितः, ततस्तेन स्मरणेन पूर्वस्नेहपोषकं स्नेहान्तरं कीर्तनं चोत्पादितम्, अत एव 'तं व्याससूनुमुपयामि गुरुं मुनीना'मिति मुनिगुरुत्वमुक्तम् । ततस्तेन कीर्तनेन पूर्वपोषकं स्नेहान्तरं पुनः स्मरणान्तरमुत्पादितमिति स्वानुभूतस्य दोषान्तराप्रवेशस्यान्योन्यनिर्वाहस्य च स्फुटीकरणाय शुकेन त्रितयमुपदिष्टमित्यर्थः । हेत्वन्तरमप्याहुः **किञ्चे**-त्यादि । अवधी तु 'तस्मात्सर्वात्मना राज'न्निति श्लोके ( २-२-२६ ) स्फुटौ भविष्यतः । ननु न्यायेप्यावृत्तिनिरूपणस्य किं प्रयोजनमत आहुः **स्मरणान्तरव्यावृत्त्यर्थमिति** । तथा च 'अन्ते या मतिः सा गति'रिति फलप्रतिबन्धकीभूतमत्यन्तरनिवृत्त्यर्थमावृत्तिविधानाय त्रितयविधानमित्यर्थः । ननु स्नेहोत्पत्त्यनन्तरं तेनैवावृत्तिसंभवाद्वैयर्थ्यमावृत्तिविधानमिति **शङ्कायामाहुः यद्यपी**-

त्यादि । तथा च प्रारब्धवशादन्यासक्तिरुत्पद्यते इति प्रारब्धनिवृत्त्यर्थमावृत्तिविधानमित्यर्थः । एतेन 'मामेव ये प्रपद्यन्ते' इति वाक्यार्थः स्मारितः । **कायवाङ्मनसां तदीयत्वस्यैव प्रपत्तिपदार्थत्वा**दिति । सिद्धमाहुः **तस्मा**दिति । स्मरणान्तरव्यावृत्तेरावश्यकत्वात् । एवं सर्ववाक्यव्याख्याने तत्र विधेयश्रवणविषयविचारेऽत्रावयुत्यानुवादाद्भगवत्त्वांशे विधिः, शेषेऽनुवाद इति श्रवणविधेरवयुत्यानुवादत्वं सिद्धम् । तत्रानुवादांशे श्रुतिविरोधमाशङ्कन्ते **नन्वि**त्यादि । तथा च मननाद्यकथनेन प्रवेशरूपाभयस्य भेदसहिष्णुतया कैवल्यश्रुतिविरोधेन मध्ये ज्ञानाङ्गीकाराज्ज्ञाने हेतुताबोधकश्रुतिविरोधेन चात्रत्यश्रवणविधेर्न श्रुतिसामानाधिकरण्यमित्यर्थः । तत्र समादधते **ने**त्यादि । साङ्गस्य श्रवणस्यात्रावयुत्यानुवाद इत्यत्र गमकमाहुः **त**दित्यादि । **सिद्धमेवे**ति । भगवतः श्रोतव्यत्वविधानादेव सिद्धम्, तेनानुक्तसिद्धत्वात्तत्रेवात्रापि नोक्तमतो न दोष इत्यर्थः । ननु तथापि दृशेश्चाक्षुषे मानसे च शक्तेरत्र तदभावे द्रष्टव्यश्रुतिविरोधस्तु तदवस्थ इत्यत आहुः **प्रेम्णे**त्यादि । 'भक्त्या मामभिजानाती'ति वाक्येऽभिज्ञाया उक्तत्वात्तस्याश्च तत्तदन्तावगाहिज्ञानत्वेन साक्षात्कारविशेषात्मकत्वात्प्रेम्णा तत्संभवे सोपि नेत्यर्थः । प्रवेशस्य लिङ्गभङ्गानन्तरभावित्वाज्जीवस्य तदानीं भेदसहिष्णुतायामपि न कैवल्यश्रुतिविरोधोपीति **श्रवणविधेर्न** श्रौतसामानाधिकरण्यहानिरिति भावः । नन्वेवं सति ज्ञानादेवात्र मोक्षसिद्धेर्व्याख्येयवाक्यविरोधः, वाक्ये श्रवणादीनामेवाभयकारणत्वबोधनादित्यत आहुः **तथापी**त्यादि । तथा च साक्षात्कारोत्तरमपि तस्यानन्तिमत्वे श्रवणादेः प्रेम्णावृत्तेरवश्यभावित्वात्तत्कारणतयाऽभङ्गेन न व्याख्येयवाक्यविरोध इत्यर्थः । ननु तथाप्यन्तिमसाक्षात्कारेणान्यथासिद्धेस्तद्विरोधो दुर्वार इत्यत आहुः **अन्तिमे**त्यादि । **नान्तरीयकत्व**मविनाभूतत्वम् । तथा च यथासंभवं तैः प्रेमोत्पाद्यम्, सप्रेमभिस्तैः साक्षात्कारः, ततस्तदनन्तरभाविभिः सप्रेमभिरन्तिमसाक्षात्कारप्रवेशाविति न कोपि दोषलेश इत्यर्थः । ननु किमित्येवं कल्प्यते, वैदिक्येव प्रक्रिया कुतो नाङ्गीक्रियत इत्यत आहुः **न चाध्यात्मिके**त्यादि । **श्रवणव**दिति । सप्तम्यर्थे वतिः । अनङ्गीकारे हेतुः **नाह**मित्यादि । अत्र वेदशब्दो वेदोदितज्ञानमात्रवाची । 'सर्वेषां वेदानां हृदयमेकायन'मित्यादौ तथा दर्शनात् । विदेर्ज्ञानवचनत्वादत्र सङ्कोच एव, न तु लक्षणा, न तु वेदोदितयावत्साधनवाची, तपआदीनां पृथगुपादानाल्लक्षणापत्तेश्च । दृशिस्तु ज्ञानदर्शनोभयसाधारणः, अग्रिमवाक्यस्वारस्यात् । एतेन 'नायमात्मे'ति श्रुतिरपि संगृहीता । तथा चातो नाङ्गीक्रियत इत्यर्थः । ननूक्तैर्दोषैः श्रवणविधौ शारीरस्य विषयत्वेन ग्रहीतुमशक्यत्वेपि दर्शनविधौ स एव ग्राह्यः, अभ्यर्हितत्वात् । न च वाक्यभेदापत्तिः । सर्वात्मदर्शन एव स्वदर्शनस्यापि सिद्धेः। ततश्च 'आत्मानं चेद्विजानीया'दिति श्रुत्यनुसारेण शोकस्यापि निवृत्तिरात्मलाभश्च भविष्यतीति फलत्वं तत्साक्षात्कारस्यैवोचितमिति शङ्कायामाहुः **न** चेत्यादि । तत्र हेतुः **सङ्घाते**त्यादि । अयमर्थः । अस्यामेव श्रुतौ 'यद्वै तन्न शृणोति शृण्वन् वै तच्छ्रोतव्यं न शृणोति न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोन्यद्विभक्तं



यच्छृणुयादिति, एवमेव 'यद्वै तन्न पश्यती'त्यादि । अत्र 'यद्वै तन्न शृणोती'त्याद्युक्त्वाऽश्रवणादिप्रकारं वदति 'शृण्वन्वा' इत्यादिना, तत्र च श्रुत्यादीनामविनाशित्वकथनेनात्मधर्मत्वं बोध्यते. तथा सङ्घाते विद्यमानोपि ब्रह्मभावेन ब्रह्मधर्मप्राकट्याद्व्यापकः सङ्घातादुद्गतः कैवल्यं प्राप्तः सर्वेन्द्रियकार्यं ब्रह्मैक्येन श्रवणदर्शनादिकं स्वयमेव करोति । यथा ब्रह्म 'प्राणन्नेव प्राणो भवती'त्यादिश्रुत्या स्वयं करोति, तद्वत् । तादृशस्य च भगवच्छ्रवणे प्रवृत्तिः शुकेनैव वक्ष्यते 'परिनिष्ठितोपि नैर्गुण्य' इत्यनेन । एवं सति तद्विषयकश्रवणं तद्दर्शनस्यैव फलत्वम्, फलं च न शारीरदर्शनस्येत्यर्थः । नन्वेवं पुराणोक्तश्रवणेऽस्तु, न तु श्रौतेपि, मानाभावादित्यत आहुः **एता**वदिति । तथा च तत्रापि श्रुतेः सन्दिग्धत्वेन प्रकरणबलाद्दर्शनस्यापि ब्रह्मात्मविषयत्वमेव निर्णीयतेऽतो न प्रमाणाभाव इत्यर्थः। ननु श्रुतौ द्वारत्वेन प्रेम्णोऽनुक्तेस्तदंशे विरोध इति शङ्कायामाहुः **भगवन्** इत्यादि । तथा च 'यमेवे'त्यादिश्रुत्यन्तरेण तत्रापि तदभिप्रेतमिति न विरोध इत्यर्थः । अस्मिन्नर्थे वादिविप्रतिपत्तिं निराकर्तुं तन्मतमनुवदन्ति **यत्त्वि**त्यादि । दूषयन्ति**त**दित्यादि । तथा च यदि तथा स्यात्, शुकः किमिति छायां दद्यात्, सनत्कुमारो वा किमिति स्कन्दरूपेणावतरेत्, अतो न तथेत्यर्थः । सिद्धमाहुः **तस्मा**दित्यादि । तथा चाभयपदेन भगवत्प्रवेश एव, न जीवस्वरूपलाभ इत्यात्मलाभश्रुतावपि भगवत्सायुज्यमेवाभिप्रेतमित्यर्थः । अत्र गमकमाहुः **ब्रह्मै**वेत्यादि । तथा च यदि स्वरूपलाभमात्रं मोक्षपदवाच्यं फलं स्यात्, तदा ब्रह्मभावानन्तरमप्ययं न वदेत्, अतः सायुज्य एव सर्वभयनिवृत्तिरिति तदेवात्मलाभपदार्थ इत्यर्थः । ननु प्रकारान्तरेण भगवदाविर्भावाभावे फलस्याप्यभावादुपनिषत्सु भक्तेरस्फुटत्वान्निष्फलतायां तद्वैयर्थ्यापात इत्यत आहुः **न चे**त्यादि । अस्य भजनरूपस्यार्थस्याभिधेयस्य फलस्य **चाधिकारिभेदेन** मर्यादापुष्टिभेदेन **प्रकारभेदेन** अव्यक्तादिरूपान्तरादिभेदेन विधानमतो न वैयर्थ्यमित्यर्थः । ननु प्रकारभेदे फलभेदोप्यापद्येत लोकवदिति चेत्, तत्राहुः **फलं त्वि**त्यादि । ननु भगवद्रूपमेव प्रमेयं तत्सायुज्यरूपमेव च फलं श्रुतावप्युच्यत इत्यत्र किं गमकमित्याकाङ्क्षायां तदाहुः **वेदश्चे**त्यादि । तथा च वेदे सर्ववेद्यत्वं यस्योक्तं तस्यैवोंकारवाच्यस्य निष्कर्षो गीतायां 'अह'मिति वक्तुरभिधायकेन पदेन क्रियते । 'ततोऽभूत् त्रिवृदोङ्कारो योऽव्यक्तप्रभवः स्वराट् । स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः । स सर्वमन्त्रोपनिषद्वेदबीजं सनातन'मिति परमात्मवाचकं सकलनिष्कलभेदेन द्विविधमोमिति यत्पदमेतदेव सर्वे वेदा आमनन्ति तद्बीजकत्वात्तस्यैवार्थं नानाप्रकारैरभिदधति, सोहं भगवानिति, अतः प्रमेयैक्यम्, काठके 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद'मिति यत्फलमुक्तम्, यदेव च 'अंभस्यपारे' इत्यादिना समुद्रशायित्वलिङ्गपुरःसरं बृहन्नारायणीयोपनिषदुक्तम्, तदेवात्र 'मा'मित्यनेन निष्कृष्यते । न हि पदस्य पुरुषाद्भेद इति फलैक्यम्, अतः साधनप्रकारभेदमात्रम्, न तु प्रमेयफलभेद इत्यर्थः । सिद्धमाहुः **तस्मा**दित्यादि । नन्वत्राधिकारिभेदो वर्णपरत्वेनैव वक्तव्यः, अन्यथा विकल्पाव्यवस्थयाष्टदोषापत्तिरित्यत आहुः **न चे**त्यादि ।

तथा च 'अव्यक्तासक्तचेतसा'मिति वाक्यशेषाच्चित्तासक्तिभेदादेवाधिकारभेदः, न वर्णभेदेनेत्यर्थः । तर्हि विकल्पस्य कथं व्यवस्थेत्यत आहुः **अत एवे**त्यादि । काम्यस्थले तथैव व्यवस्थादर्शनादित्यर्थः । अत्र ऋष्यन्तरमाहुः **शाण्डिल्यस्ये**त्यादि । तच्च 'सा मुख्येतरापेक्षितत्वा'दित्यारभ्य 'प्रश्ननिरूपणाभ्यामाधिक्यसिद्धे'रित्यन्तं पञ्चदशसूत्रात्मकं ज्ञेयम् । तस्यार्थमाहुः **पूर्व**मित्यादि । नन्वेवं सति 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमिति न स वेद यथा पशुरेवं हि स देवानां पशु'रित्यादिवाक्यानां का गतिरित्यत आहुः **अत** इत्यादि । **अत** इति । अधिकारिभेदात् । तथा च 'नहि निन्दा निन्द्यं निन्दितुं प्रवृत्ता, अपि तु विधेयं स्तोतु'मिति न्यायात्तादृशानि वचनान्यहंग्रहाद्युपासनास्तावकानीति न विरोध इत्यर्थः । फलितमाहुः **तस्मा**दित्यादि । नन्वत्र विधिर्नियमः परिसङ्ख्या वा, आद्येऽश्रौतत्वान्नैर्बल्यम्, द्वितीयादौ तु विकल्पापत्तिरित्यत आहुः **विधी**त्यादि । ननु 'प्रैषानुवादे'ति सूत्रे प्रैषपदेन विधिरेव सर्वैर्व्याख्यायत इति कथमविधानमित्याकाङ्क्षायां तदुक्तमुपगम्य हेत्वन्तरमाहुः **लोके**त्यादि । वस्तुतस्तु सूत्रकृता प्रैषमिति वदता विधिभिन्नत्वं तस्य ज्ञाप्यतेऽथापि व्याख्यातृप्रसिद्ध्या तथाङ्गीकारेप्यत्र न संभवतीत्यर्थः । ननु विध्यभावे कथं फलसाधनत्वावगमः इत्यत आहुः **फले**त्यादि । ननु विध्यभावेत्र मन्त्रादिरूपताया अप्यभावेनार्थवादत्वमेव वक्तव्यम्, तथा सति सिद्धार्थबोधकत्वेनानुवादत्वादनधिगतार्थगन्तृत्वाभावात्प्रामाण्यहानिरित्यत आहुः **वाक्यार्थस्यापूर्वत्वा**दिति । तथा च भगवतः प्रसिद्धत्वेपि भजनसंसर्गस्य लोकानधिगतत्वेनापूर्वस्य बोधनान्न प्रामाण्यहानिरित्यर्थः । ननु भावनाङ्गीकारे को दोष इत्यत आहुः **भावने**त्यादि । तन्निराकरणप्रकारस्तु **भाष्यस्योत्सन्नत्वा**दिदानीं सर्वनिर्णयस्थेन 'साधनं च स्वरूपं च सर्वस्याह श्रुतिः फल'मित्यादिसन्दर्भेण विवरणादवगन्तव्यः । तर्हि तव्यस्यात्र कोर्थ इत्यत आहुः **अयं चे**त्यादि । आवश्यकार्थताङ्गीकारे गुणमाहुः **प्रश्ने**त्यादि । फलितमाहुः **तस्मा**दिति । एवं वाक्यार्थस्य सिद्धत्वात् । शेषमतिरोहितार्थम् ।

एतावानित्यत्र । **तत्र प्रथममितरासापेक्षत्वा**दिति । तयोः कीर्तनस्मरणयोर्मध्ये
प्रथमोद्दिष्टत्वेनावसरप्राप्तात्कीर्तनविचारात्पूर्वं पुरुषान्तरानपेक्षत्वात् । उपो-
२-१-६ द्धातेनाहुः **पञ्चे**त्यादि । भारते मोक्षधर्मे 'साङ्ख्यं योगः पञ्चरात्रं वेदार-
ण्यकमेव च । ज्ञानान्येतानि विप्रर्षे लोके च प्रचरन्ति हि । किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने । प्रब्रूहि वै मया पृष्टः प्रवृत्तिं च यथाक्रम'मिति जन्मेजयेन पृष्टे, वैशम्पायनेन 'साङ्ख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा । ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै' इत्यादिना **स्वतन्त्रफलसाधकत्वे**नोक्ताः । ततः '**साङ्ख्यस्य** वक्ता कपिलः परमर्षिः स उच्यते । हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः । अपान्तरतमश्चैव वेदाचार्यः स उच्यते । प्राचीनगर्भं तमृषिं प्रवदन्तीह केशवम् । उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः । उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः । पञ्चरात्रस्य कृत्स्नस्य



वक्ता नारायणः स्वय'मिति प्रवर्तककथनेन प्रवृत्तिमुक्त्वा, 'सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते । यथागतं तथाज्ञानं निष्ठा नारायणः पर' इति कथनात् । तेषां मध्ये 'पञ्चरात्रविदो ये तु यथाक्रमपरा नृप । एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै' इति पाञ्चरात्रिकाणां भगवत्प्रवेशकथनेन श्रुतिवैष्णवसिद्धान्तौ समप्रधानत्वेनोक्तौ तुल्यफलतयोक्तौ । ततोग्रे 'साङ्ख्यं च योगश्च सनातने द्वे वेदाश्च सर्वे निखिलेन राजन् । सर्वैः समस्तैऋषिभिर्निरुक्तो नारायणो विश्वमिदं पुराण'मित्यत्र पाशुपतस्याकथनात् पूर्वं चाल्पप्रमाणेषु गणयित्वा युक्तिभिरहन्तव्यत्वस्यापि कथनात् पशुपतिमतस्य कल्पभेदेनोत्कर्षजननद्वारा श्रुताद्युपयोगस्तामसपरत्वेन **परम्परया** वैष्णवसिद्धान्त उपयोगः । मत्स्यपुराणे कल्पविभागे 'तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गति'मित्यनेन सात्त्विककल्पेष्वेव मुक्त्युक्तत्वात् । मोक्षधर्मे दक्षस्तवप्रसन्नेन शिवेन 'अपूर्वं सर्वतो रुद्रं सर्वतः सुखमव्ययम् । अर्थैर्दशार्धैः संयुक्तं गूढमप्राज्ञनन्दिनम् । वर्णाश्रमकृतैर्धर्मैर्विपरीतं क्वचित्समम् । शतान्तरव्यवसितं मत्याश्रयमिमं स्मृतम् । मया पाशुपतं दक्ष योगमुत्पादितं मये'ति तस्य योगस्य शतान्तरे व्यवसितकथनात् । ब्रह्मपुराणे च समाप्तिदशायां मायानुकीर्तनाध्यायारंभे 'तस्माद्वक्ष्यामि भो विप्राः कृष्णे भक्तिर्यथा भवे'दिति प्रक्रम्य प्रथममन्यदेव भक्तिं ततस्तत्प्रसादेन यज्ञकरणे भक्तिं ततोग्निप्रसादेन भास्करे ततस्तत्प्रसादेन शंभौ भक्तिं चोक्त्वा, 'तुष्टे त्रिलोचने तस्य भक्तिर्भवति केशवे । सम्पूज्य तं जगन्नाथं वासुदेवाख्यमव्ययम् । ततो भक्तिं च मुक्तिं च स प्राप्नोति द्विजोत्तमा' इति व्यासवाक्य एकैकभावविमोकोत्तरं शिवभक्तेस्ततो भगवद्भक्तेः संसारमुक्तेश्च कथनात्, **क्रममुक्तिहेतुत्वेन** वा तदुपयोग इत्यर्थः । **अतः पर**मिति । एतेभ्यः परं शिष्टं साङ्ख्यादित्रयम्, ते एते **स्वतन्त्रतया** फलसाधकत्वांशे तत्र निन्दितत्वात्पूर्वोक्तेषु प्रवेशमलभमाना स्मरणशेषा भवन्तीत्याहेत्यर्थः । धर्मशास्त्रादीनां स्मरणशेषत्वमुपपादयन्ति **स्वधर्मस्ये**त्यादि । **अत** इति । उक्तवाक्यैरेवमर्थनिर्धारात् । **स्वरूपभूत** इति । अन्तिमभूतः । **तदुपयोग** इति । तस्य देहस्योपयोगः । **स** इत्यादि । स उपयोगः चेदित्यादिनोक्तप्रकारेण स्मरणं भवेत्, तदा भवेदित्यर्थः । कथमित्याकाङ्क्षायामाहुः **पूर्वो**दिति । सिद्धमाहुः **अत** इति । यतः स्मरणस्यान्तिमदेहसम्पादकत्वं योगादीनामपि चैतस्मिन्नेव पर्यवसितत्वमत इत्यर्थः । एवं श्लोकं व्याख्याय तत्तात्पर्यमाहुः **अत** इत्यादि । एतेन युक्तिः प्रदर्शिता । तत्रायं प्रयोगः । अन्तकाले भगवत्स्मरणं साक्षाद्भगवत्प्रवेशहेतुः, योगादिशेषित्वात्, यन्नैवं तन्नैवम्, यथा काम्यादय इति । **तथात्वा**दिति । 'ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् । यः प्रयाति त्यजन्देहं स याति परमां गति'मिति भगवद्वाक्येन तेषामपि लाभरूपत्वात् । **तस्यास्तथात्व**मिति । अन्तकालीनभगवत्स्मृतेः परमजन्मलाभत्वम् ।

**प्रायेणेत्यत्र । इदानी**मिति । स्मरणस्य फलसाधकत्वसाधनानन्तरम् । **साधयती**ति ।

२-१-७ पञ्चभिः साधयतीत्यर्थः । **गुणानुकथन** इति । गुणपदं लीलानामप्युपलक्षकम् । **असम्प्रज्ञातसमाधय** इति । 'विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्य' इति पातञ्जलयोगसूत्रे ध्येयसर्वावयवधारणोत्तरं तद्वशीकरणे सर्वावयवत्यागोत्तरमेकैकावयवध्यानं विरामप्रत्ययः तस्य योऽभ्यासः साधनाग्रहस्तत्पूर्वः संस्कारशेषः पूर्वप्रत्ययसूक्ष्मावस्थाशेषः शिष्टपदार्थो यत्र तादृशोऽन्यः असम्प्रज्ञातसमाधिरिति लक्षणात् । 'तत्सर्वव्यापकं चित्तमाकृष्य व्योम्नि धारयेत् । तच्च त्यक्त्वा मदारोहो न किञ्चिदपि संस्मरे'दिति भगवद्वाक्योक्तः । यत्र वेद्यं किमपि न ज्ञायते तादृशभावनाविशेषयुक्ताः । **वाक्यादिति** । ल्यब्लोपे पञ्चमी, एतद्वाक्यमनुसन्धायेत्यर्थः । **विरोधाभासबोधनार्थमिति** । एतद्बोधनं भगवद्गुणानां गुणातीतत्वबोधनायेति ज्ञेयम् । सिद्धमाहुः **तस्मादिति** । तथा चात्रायं प्रयोगः, भगवद्गुणकीर्तनं साक्षाद्भगवत्प्रवेशहेतुः, गुणातीतरमणविषयत्वात्, 'रमन्ते योगिनो यस्मिन्नित्यानन्दे चिदात्मनि । इति रामपदेनासौ परं ब्रह्माभिधीयत' इति श्रुत्युक्तब्रह्मवदिति ।

**इदमित्यत्र** । **इदमप्रामाणिकमिति** । एवं स्मरणकीर्तनोत्कर्षसाधनम् । **आहेति** ।
२-१-८ प्रमाणमाहेत्यर्थः । **दुर्बलत्वमिति** । श्रुत्यपेक्षया नैर्बल्यम् । **गुरुपरम्परामाहेति** । युष्माभिः कथं ज्ञातमित्यपेक्षायां तामाहेत्यर्थः । पितृपदस्यानतिप्रयोजनकत्वमाशङ्क्य तत्तात्पर्यमाहुः **पित्रैवेत्यादि** । 'यं प्रव्रजन्त'मित्यत्रोपनयनस्यानुक्तत्वात्कदा पठनमित्याशङ्कानिरासायेदमुक्तं ज्ञेयम् ।

**परिनिष्ठित इत्यत्र** । **अत** इति । निगूढाशयत्वात् । **आहेति** । निर्धारितार्थप्रतिपत्ति-
२-१-९ जनकत्वाय स्वानुभवमपि तत्र प्रमाणयितुं स्वस्यैतज्ज्ञानप्रकारमाहेत्यर्थः । **गुणैरिति** । लीलाभिः । अत्र **गृहीतचेता** इतिविशेषणेन श्रवणद्वारा श्रीभागवतरसानुभावो ध्वन्यते, तेन चोपादानबुद्धिगोचरत्वान्मम वचनैस्तव निर्धारितार्थप्रतिपत्तिः सुकरेति बोध्यते । तदुपपादयाहुः **आकरस्थ** इत्यादिना । **स्तोत्रमिति** । स्तुत्यता । **स्वाभिव्यक्त्येति** । स्वस्मिन् भगवत्प्राकट्येन । फलितमाहुः **अनेनेत्यादि** । उक्ताधिकारवत्त्वेपि लीलागृहीतचित्तत्वकथनेन, ईदृशं स्वाधिकारस्वरूपमुक्तमित्यर्थः ।

**तदहमित्यत्र** । **अत इति** । यत ईदृशी मदुपरि कृपा, तज्जन्योनुभवश्चैतादृशोऽप्येव
२-१-१० प्रमितिजनक अत इत्यर्थः । **अत** इति । समानशीलत्वात् । ननु निरपेक्षस्य भवतः कथने किं प्रयोजनमत आहुः **अथेति** । **अथ चेत्यादिनोक्त**मर्थमुपपादयन्ति **पीतरसेत्यादि** । **सिद्धमित्यन्तम्** । वान्तत्वदोषपरिहारायोदाहरणमाहुः **इदमित्यादि** । अत्र सेचनादेः पानत्वकथनमन्तःप्रवेशकत्वसाधर्म्येण गौण्या ज्ञेयम् । 'नेत्राञ्जलिभिः पपु'रितिवत् । नन्वयं पानार्थक एव प्रयोग इति कथं निश्चयमित्यत आहुः **द्वैपायनेत्यादि** । अन्यथा पितृपदेनैव चारितार्थ्यादिदं न वदेत्, पदान्तरं वा वदेदतस्तथे-



त्यर्थः । कथमेतस्य तत्सूचकत्वमित्यत आहुः **द्विर्गता इत्यादि** । द्वैपायनपदगर्भस्थबहुव्रीहिणा द्विविधौ गुणौ सूच्येते, तद्धितेन च द्विविधं पातृत्वं तदुदाहृत्य दर्शयन्ति **अत इत्यादि** । **अत इति** । द्विधा द्वयोः पातृत्वात् । अत्र भगवत्प्रकटितमन्तःस्थगुणप्रकाशकम्, ब्रह्म प्रकटितं बहिःस्थगुणप्रकाशकम् । पुनः प्रकटनं च बहिःपानरूपमिति ज्ञेयम् । तेन द्वैपायनपदस्यैतत्सूचकत्वमित्यर्थः । **अत एवेति** । गुणद्वैविध्यप्रकाशनार्थत्वादेव । **अत एवेति** । गुणानां द्वैविध्यादेव । सिद्धमाहुः **अत इत्यादि** । अतः कथनं विना दर्शनमात्रेण ज्ञातुमशक्यत्वबोधनात् गुणा भगवदपेक्षयात्यन्तमुपकारका उक्ताः उत्पत्तौ च बहिः प्रकटिताः । अतो गुणद्वैविध्यस्य पानद्वैविध्यस्य च परम्पराप्राप्तत्वा'त्तेऽभिधास्यामी'त्यनेन बोधितं गुणद्वैविध्यं पानद्वैविध्यं च निर्विवादमित्यर्थः । **इत्याकाङ्क्षायामाहेति** । योग्यतामाहेत्यर्थः । एवमत्र प्रथमे स्वस्वरूपकथनेनोक्तार्थे स्वानुभवः प्रमाणत्वेनोक्तः, द्वितीये च फलकथनेन राज्ञः प्रतिपत्तिसौकर्ये उपाय उक्तः ।

**एतदित्यत्र** । **तैर्वेति** । 'कर्तृकर्मणोः कृती'ति कर्तृषष्ठ्या तयेत्यर्थः । कथं
२-१-११ तेषां निर्णेतृत्वमित्याकाङ्क्षायां व्याख्यानमुखेनाहुः **प्रथमत इत्यादि** ।

**किं प्रमत्तस्येत्यत्र** । **आहेति** । श्रोतृविषादस्य वक्तुरुद्वेगजनकत्वेन रसानुभवप्रतिबन्धकत्वात्तन्निवारणायाश्वासनमाहेत्यर्थः । **अत इति** । **आकाङ्क्षा**-
२-१-१२ जनकत्वात् ।

**तवापीत्यत्र** । **प्रमेयविरोधादिति** । अत्र हि 'तस्माद्भारते'त्यारभ्य 'तस्मात्सर्वात्मने'त्युपसंहारात्सर्वात्मनाकर्तव्यप्रश्नोत्तरमेव मुख्यतया प्रतीयते, तदेव चात्र
२-१-१४ कार्यते, तेन श्रवणकरणमेव प्रमेयं तद्विरोधादित्यर्थः ।

**अन्तकाले त्वित्यत्र** । श्रवणकरणस्य प्रमेयस्य विरोधमेतदाभासेनापि स्फुटीकुर्वन्ति **एवमित्यादि** । अत्र मननादिनिरूपणं कथं सिध्यतीत्यपेक्षायां तदुत्पा-
२-१-१५ दयन्ति **मननमित्यादि** । **तदर्थं पूर्वोक्तं कर्तव्यमिति** । साध्वसनिवृत्त्यर्थं श्रवणं कर्तव्यम् । **वेत्तीति** । इति हेतोर्ममैते भवन्त्वित्यपेक्षामित्यर्थः ।

**तत्रैकावयवमित्यत्र** । **विषयवासनामिति** । ध्यानगृहीतध्येयविषयक-
२-१-१९ ज्ञानसूक्ष्मात्रस्यारूपां स्ववृत्तिमित्यर्थः ।

**पदं तदित्यत्र** । **ध्यानाकारेण परिणमतीति** । कार्यं करणकर्तृभावं विहायाविकल्परूपं भवति । **पुरुषोत्तमस्य स्थानमिति**, अन्तर्यामिब्राह्मणे, 'य आत्मनि
२-१-२० तिष्ठ'न्नित्यनेन जीवान्तर्भगवत्स्थितेरुक्तत्वात्तस्य स्थितिस्थानमित्यर्थः । ननु महानारायणोपनिषदि जाठराग्निशिखामध्ये नारायणस्य परमात्मनः स्थितिरुक्तेति तस्याः

पदत्वम्, न जीवात्मन इति शङ्कायामाहुः **तस्या** इत्यादि । तथा च श्रुत्यन्तरस्वारस्यात्तथेत्यर्थः । ननूपक्रमविरोधात्तस्याः श्रुतेः जीवकल्पपरत्वं न वक्तुं शक्यमित्यरुच्या पक्षान्तरमाहुः **अथवे**त्यादि । **जीवाना**मिति, लिङ्गविशिष्टजीवानाम् ।

**यथा सन्धार्यत** इत्यत्र । **सर्वेषामे**वेति। एतेन सर्वसम्मतस्य सर्वाधि-
२-१-२२ कारकत्वात् सुगमत्वं भवतीति तदेव वक्तव्यमित्याशय इत्यर्थः ।
**जितासन** इत्यत्र । **आसना**दीति । एतेन साग्रहेत्युत्तरितम् । उत्तरार्धे **स्थूल**
२-१-२३ इत्यादिकथनेन स्थूला साकारा रूपप्राधान्येनेत्युत्तरितम् । **धिये**त्यनेन
निदिध्यासनं चोक्तं ज्ञेयम् ।
**विशेष** इत्यत्र । **कथ**मिति । केन परिमाणेन अतिमहता वा मध्यमेन वा । **अतो**
**विशेष** इति । 'परस्य दृश्यते धर्मो ह्यपरस्मिन् समन्वयात् । अतो विशेषो
२-१-२४ भावानां भूमावेवोपलक्ष्यत' इति तृतीयस्कन्धीयवाक्याल्लुप्तमत्वर्थीयं विशेषपदमित्यर्थः । अनयैवारुच्या पक्षद्वयमाहुः **विशिष्ट** इत्यादि । अत्र **विः शेषः शिष्टो यत्रे**ति पाठः प्रतिभाति । द्वितीयाङ्गीकारे हेतुमाहुः **अत्रत्याना**मित्यादि । तथा चात्रत्यानां ग्रासात्तग्मवान्तरप्रलयेऽयमेव शिष्यतेऽतस्तथेत्यर्थः । **अत एवे**ति । ग्रासानधीनत्वादेव । प्रथमाङ्गीकारे हेतुमाहुः **कालस्ये**त्यादि । **न भवन्ती**ति । तत्संयुक्ततदध्यस्ततदाविष्टेषु संयुक्तादिपदं विना केवलषष्ठ्या तत्तन्मतविवक्षितप्रतीत्यनुपपत्तेस्तस्यायमिति प्रयोगाभावाच्च न भवन्तीत्यर्थः । **पोषार्थ**मितिपदस्यार्थमाहुः **स्वरूपे**त्यादि । **सम्मति**रिति । तथा च 'यत्र सम्मते'ति २।१।२२ प्रश्नस्येदमुत्तरमित्यर्थः । **इतरानुमान**मिति । अयं ब्रह्माण्डैकदेशः इतरावयवसंलग्नः । अविच्छिन्नैकदेशत्वात् । अस्मदादिशरीरैकदेशवत्—इत्यादिरूपम् । **अयमित्युक्त**मिति । शुकस्य योगजधर्मेण सर्वप्रत्यक्षसिद्धावपीदानीं ज्ञानलक्षणया विशिष्टज्ञानं राज्ञोऽपि सुकरमित्येतद्बोधनायायमित्युक्तम् । अन्यथा असावित्येव वदेदित्यर्थः । स्थविष्ठस्थूलयोर्भेदबोधनार्थं स्थूलपदार्थं विवृण्वन्ति **अत्रे**त्यादि । **तथे**ति पृथिवीवत् । **ध्यानविषयताया**मिति । उपचितावयवप्रकारकध्यानविषयत्वे । **इति तस्येति** । इति हेतौ । तथा च यद्येवमर्थो बोधनीयो न स्यात्, तदायमित्यनेन विशिष्टविषयताया बोधितत्वात्तेन स्थूल(रूप)ताज्ञानस्यापि जननादिमं चरणं न वदेदित्यर्थः । स्थविष्ठपदस्य विस्तारार्थकत्वपक्षे तत्कथनप्रयोजनमाहुः **बुद्धा**वित्यादि । **स्थूले**ति । बहुविषयग्राहकतया विस्तीर्णा । **तेने**ति । सौन्दर्येण । **अत एवे**ति । अनुपचितावयवत्वादेव । **भगवच्छरीरत्वेने**ति । न तु देहत्वेनेत्यर्थः । **अस्मा**दिति । उपचितावयवत्वरूपात् । एतस्य धारणाविषयतायाः सर्वसम्मतत्वाय देहत्वविशदीकरणार्थमत्र स्थविष्ठादिपदानीत्याशयमाहुः **किञ्चे**त्यादि । तुर्यचरणप्रयोजनमाहुः **कालोपी**त्यादि । ननु **साङ्ख्यानुयायिभि**श्चिरक्षिप्रादिव्यवहारवद्भूतभव्यभवद्व्यवहारोऽप्युपाधिभिरेव साध्यत इति



नानेन व्यवहाररूपेण कार्येण कालसिद्धिरित्यत आहुः **अनुदये**त्यादि । उदयास्तमयाभ्यां रूप्यत इत्युदयास्तमयरूपा सूर्यादिगतिस्तद्भिन्नस्य नित्यस्य **कालस्य भूतत्वादिसाधकत्वं** भूतत्वादिव्यवहारोपपादकत्वं **केनचिन्निमित्तेन** भगवदिच्छया चलनैकस्वभावत्वेन धर्मेण, **अतीतत्वादिधर्मसम्बन्धात्**, यथा भ्रमतः कुलालादिचक्रस्य तत्तद्देशप्रतियोगिकसंयोगेनातीतत्वादिसम्बन्धः, तथा ब्रह्माण्डावयवभूतं तं तं देशमतिक्रामतोऽधितिष्ठतः प्रयास्यतश्च कालस्य तत्प्रतियोगिकावयवसम्बन्धेनातीतत्वादिसम्बन्धादुपपद्यत इति तत्सिद्धिरित्यर्थः । ननु ब्रह्माण्डस्य नश्वरत्वात्तदभावे तत्सम्बन्धाभावात् कथं तत्सिद्धिरित्यत आहुः **अत्रे**त्यादि । तथा च सर्गादौ तन्मतेऽपि चन्द्रसूर्याद्यभावेन तद्गतिरूपोपाध्यभावेऽप्युत्पत्तिस्थितिनाशानां क्रमिकत्वस्य (नित्येन) गुणस्वभावं कालस्य भूतत्वादिसाधकत्वं भूतत्वादिव्यवहारोपपादकत्वं गुणस्वभावमात्रेणोपपत्त्यभावाद्गुणत्रयप्रेरणाय कालोऽवश्यमभ्युपेय इति तेषां नित्यानां गुणानां प्रेरणादतीतत्वादिव्यवहारोपपादकत्वमित्यर्थः । सिद्धमाहुः **अत** इत्यादि । अखण्डस्यापि कालस्यैवं भूतादिव्यवहारोपपादकत्वात्तथेत्यर्थः । एवं भूतादिव्यवहारं साधयित्वा व्याकुर्वन्ति **भूत**मित्यादि । **दृश्यत** इत्यत्र । दृशिर्ज्ञानसामान्यार्थकः । ननु कालसम्बन्धरहितस्य दृश्यत्वे किं मानमत आहुः **यदि**त्यादि ।

**आण्डकोश** इत्यत्र । **तदाश्रयत्वेने**ति । ध्यानविषयाश्रयत्वेन । ननु यदि भगवा-
२-१-२५ नेव ध्येयो न देहस्तदायं किमित्युच्यते, यदि तदाधारत्वेन तदा जीव एव
तथात्वेन ग्राह्यः । 'य आत्मनि तिष्ठन्नात्मानमन्तरो यस्यात्मा शरीर'मिति शरीरत्वाधारत्वयोस्तत्र श्रावितत्वेनान्तरत्वेन सहजस्नेहविषयत्वेन चोत्कृष्टत्वादित्याशङ्कायामाहुः **यद्यपी**त्यादि । **युक्त**मिति । उक्तहेतुभ्यो युक्तम्, तथापि बहिष्ठ एवान्तस्तिष्ठतीति माहात्म्यज्ञाने तत्र स्नेहोऽधिको भवतीति **तत्सिद्ध्यर्थं** हृदयदेशावच्छिन्नः शरीरोऽणुरेव भवति, तत्र चेदियान् माति, तदा सोऽपि महान् भवेदिति **तन्महत्त्वसिद्ध्यर्थं** स्वात्मनीत्यादिनोक्ताद्धेतोः प्रयत्नस्य ध्यानीयस्य साफल्याय सर्वस्य भगवत्त्वे तस्यैव स्मरणत्वावच्छिन्नयावत्स्मरणविषयत्वादन्यध्याने बाहिर्मुख्यनिवृत्तौ ध्यानं सुकरमिति **तत्सिद्ध्यर्थं** **बहिःस्थितोऽन्तः प्रवेशनीय** इति गुणाधिक्यात्तथा निरूप्यत इत्यर्थः । **भूतैरि**ति । इदमेकादशे योगेश्वरवाक्यम् । **द्वितीयपुरुषरूप** इति । अक्षररूपः । 'यो वैराज' इत्यादिना यः पुरुषः स एव वैराज इत्युद्देश्यविवरणेनाक्षरपुरुषोत्तमयोरभेदो बोध्यते । **यथे**त्यादिनोक्तं दृष्टान्तत्रयं च वैराजपुरुषभगवत्पदैः सूचितं ज्ञेयम् । तेन यथाधिकारं त्रिधा ध्यानं कर्तव्यत्वेन बोधितं ज्ञेयम् ।

**पातालमि**त्यत्र । **इदानी**मिति । विशेषस्य कथं देहत्वं कथं च स्थविष्ठत्वमि-
२-१-२६ त्याकाङ्क्षायाम् । **तस्ये**ति पदं **भारतस्याभावाये**त्यनेन सम्बध्यते ।
**एतावते**ति । **लोकद्वयोत्त्यनन्तरं भिन्नप्रक्रमकथनेन** । **पञ्चात्मकत्वं**

स्फुटीकुर्वन्ति तत्रेत्यादि । द्वितीयः खण्ड इति । एतेन यथा लौकिके पुरुषशरीरे खण्डविभागस्तथात्रेति बोधितम् । तेन वितलातले तृतीयो महादिज्योतिरनीकान्तस्तुरीयो महरादिसत्यलोकान्तः पञ्चम इति सिध्यति । उभयावयवत्वादित्यादि । गुल्फजानुसम्बन्धेन जङ्घायास्तद्द्वयावयवत्वेन जान्वपेक्षया नीचत्वाद्गुल्फापेक्षयोच्चत्वाच्च लोकनाम्नि पदद्वयस्य प्रयोग इत्यर्थः । आङ्प्रश्लेषे आसमन्तात्तलमित्यर्थान्तरं सम्भवतीति बलवत्त्वबोधनाय तमपि पक्षं संगृह्णन्ति आधारत्वेन वेति । अन्न एवेति । बलिस्थानस्य शुद्धत्वादेव । वितलं च तलं चेत्यत्र । अग्रपश्चाद्भावभेदेनेति । वितलमग्रभागः अतलं पश्चाद्भाग इति भेदेन । ननु पश्चाद्भागस्याधस्त्वाभावान्न पञ्चमस्कन्धविरोध इत्यतस्तमपि पक्षं स्वीकृत्याहुः अत्रेत्यादि । तथात्वमिति । अग्रपश्चाद्भागभेदः । तथा च न्यायमात्रादसङ्गतमेवेत्यर्थः । ननु फलतो न कश्चिद्विशेष इत्यत आहुः अवान्तरभेदो वेति । चकारयोरेवमप्युपपत्तौ । तस्मिन्नर्थे विनिगमनाविरहाल्लोके तदग्रभागादेरुपर्यादिभागत्वेन व्यवहाराच्च तं पक्षं विहायैवमादरणीयमित्यर्थः । तद्विभजन्ति महादेवेत्यादि । वितलं महादेवक्रीडास्थानम्, अतलं मयपुत्रस्य स्थानं स्वर्गापररूपमित्यर्थः ।

महीतलमित्यत्र । तस्येति । एतेन तदिति पदं भिन्नं सुलुक्सूत्राल्लुप्तषष्ठीकमिति
बोधितम् । एवं व्यवस्थेति । पञ्चमस्कन्धस्वारस्यावगता सेत्यर्थः । अत्र
२-१-२७ यद्यपि श्रोणिलोकनिवेशो नोक्तस्तथाप्यग्रे 'सर्वे मृगाः पशवः श्रोणिदेशे'
इति मृगाद्यधिकरणतया श्रोणिदेशस्य वक्ष्यमाणत्वान्मृगादीनां च भूमिष्ठत्वात्तस्मिन्नपि भूर्लोकतैव बोध्या, तथाग्रे 'निरयस्य गुदः स्मृत' इत्यनेन वक्ष्यमाणस्य नरकस्य पञ्चमस्कन्धे 'अधस्ताद्भूमेरुपरिष्टाच्च जलाशया'दिति भूम्यधस्तात्तत्स्थानकथनाच्च । सरस्त्वेनैव निरूपणमिति । एतेन ज्योतिरनीकस्य निराधारतापि वारिता । तथा 'परामूतेरधर्मस्य तमसश्चापि पश्चिम'मिति वक्ष्यमाणस्य पृष्ठदेशस्यापि पर्वतादिद्वारा भूरादिमहर्लोकपर्यन्तं संलग्नतापि बोध्या । पञ्चमस्कन्धे लोकालोकसंस्थानकथने 'आदित्यानां ध्रुवापवर्गाणां ज्योतिर्गणानां गभस्तयोर्वाचीना एव न पराचीना भवितुमुत्सहन्ते तावदुन्नहनायाम' इति कथनात् । तत्रापि परामूतिस्थानस्यान्तरिक्षसमानदेशत्वम्, अधर्मस्थापनस्यादित्यादिसादेश्यम्, तमःस्थानस्य ध्रुवसादेश्यमिति । एतेन प्रवृत्तिमार्गनिष्ठत्वात् 'न ध्रुवोपरि तद्गति'रितिनिबन्धोक्तः कर्मिणां सत्यलोकगमनमार्गोपि सङ्गमिष्यते । ग्रीवा महरिति । सादेश्याद्गलत्वमपि तस्यैवोन्नेयम् । यन्तीति । कर्मणा प्राप्नुवन्ति । एवं बहुन्नोपपादनात् 'ब्रह्मलोकमकर्मक'मित्यादीनां विरोधः परिहृतः ।

इन्द्रादय इत्यत्र । स्थानाभावे परिभ्रमणमात्रेणावयवत्वं न वक्तुं शक्यमित्यरुच्या
पक्षान्तरमाहुः अथवेत्यादि । उस्त्रावेत्यमित्यादि । एतेन मन्त्रमयी देव-
२-१-२९ तेति जैमिनीयं मतमसङ्गतमिति बोधितम् । नासत्यदस्रावित्यत्र । पक्ष-



स्येति । एतेन यज्ञपुरुषयोरभेदो बोधितः । स च 'तमेव यज्ञपुरुषं तेनैवायजमीश्वर' २।६।२७ मित्यत्र स्फुटो भविष्यति । शिशुमारस्थानभून इति । एतेन विरुद्धधर्मवत्त्वं बोध्यते । पक्ष्माणि विष्णोरित्यत्र । कालरूपस्येति । अत्रापि पुरुषाभेदो गीतायां 'कालोस्मी'ति भगवद्वाक्याज्ज्ञेयः । पूर्वमुक्तेति । प्रथमस्कन्धे 'अपश्यत्पुरुषं पूर्ण'मित्यत्र भगवदुपाश्रितत्वेनोक्ता । मेढ्रं अर्थ इन्द्रियमिति । अध इन्द्रियमिति पाठो भाति । पक्ष्य इति । पार्श्वस्थीनि । महत्त्वज्ञापनार्थमिति । राजादिवत्सामर्थ्यादिभिर्महत्त्वज्ञापनार्थम् । गन्धर्व इत्यत्र । स्मृतिं स्मृती स्मृतयः इति मूलपदं बाहुलकादुभययापि संभाव्यत इत एवमुक्तम् ।

ब्रह्माननं इत्यत्र । ब्रह्मभाव इत्यादि । ननु ब्राह्मण्यं हि लोके जातित्वेन प्रसिद्धम्
तत्किमिति धर्मान्तरत्वेन स्वीक्रियते इत्यत आहुः न जातिरिति । तत्र
२-१-३७ हेतुः व्यक्तीत्यादि । नन्वपगमे किं मानमित्यत आहुः ब्राह्मण्यादेवे-
त्यादि । 'शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् । तस्यां तनयमुत्पाद्य ब्राह्मण्यादेव हीयत' इति वाक्ये एवकारेणापगमस्यैव शीघ्रं प्रतीतेरित्यर्थः । ननु 'अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिःकृता' इत्यादौ ब्राह्मणकर्मानधिकारस्य प्रत्ययात् 'येन विप्लावितं ब्रह्म वृषल्यां जायतात्मना' इत्यादावपि ब्रह्म विप्लावितं नाम ब्राह्मणकर्मानधिकारित्वं सम्पादितमिति लाक्षणिकशाब्दबोध इव उक्तवाक्येपि ब्राह्मणकर्माधिकाराद्धीनो भवति स्वयमित्येवं शाब्दबोधसम्भवान्नोक्तदूषणावकाश इत्यत आहुः श्रुत्यन्तरेत्यादि । 'गुणवचनब्राह्मणादिभ्यः कर्मणि चे'त्यनुशासने कर्मणिष्यञ्विधानेन भावपक्षेपि तस्य जातिभिन्नधर्मपरत्वेनाविरोधाल्लक्षणाकल्पने मानाभावादित्यर्थः । किञ्च । उक्तवाक्यादौ गौण्यनवकाशाद्गङ्गायां घोष इत्यादौ शैत्यपावनत्वादिवदत्र फलविशेषस्याप्यप्रत्ययान्निरूढलक्षणास्थले च 'कृती कुशल' इत्यादिकोशेन डित्थादिष्विव शक्तेरेव ग्राहणेन तस्याः विप्रतिपन्नत्वात्का वा लक्षणा वाच्येत्येवमपि प्रमाणाभावो बोध्यः । ननु विश्वामित्रादौ जातिगमागमदर्शनाद्व्याप्यव्यापकभेदेन जातिचतुष्टयस्य जातित्रयस्य वा स्वीकारवदत्राप्यनपायिब्राह्मण्यव्याप्यापायिब्राह्मण्यस्वीकारे 'ब्राह्मो जाता'विति सूत्रप्रत्युदाहरणलिङ्गाद्व्याप्यवृत्तिजातिस्वीकारे वा को दोषः इत्यत आहुः नियतेत्यादि । यदि अव्याप्यवृत्तिर्जातिर्विश्वामित्रादौ स्यात्, तदा तत्तद्व्यञ्जकं तु नियतं स्यात्, तदभावाच्च नाव्याप्यवृत्तिर्जातिरित्यर्थः । न च क्रोधतेजःप्रभृतीनां व्यञ्जकत्वं वक्तुं शक्यम् । दुर्वासःप्रभृतिषु व्यभिचारात् । प्रत्युदाहरणं तु 'मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जीबन्धना'दिति स्मार्तजननमादाय जननं जातिरिति व्युत्पत्त्या सङ्गमनीयमिति सर्वमनवद्यम् । उपाधित्वमाशङ्क्य दूषयन्ति ब्राह्मणादित्यादि । तथा च ब्राह्मण्यां जातत्वं चाण्डालेऽतिव्यापकम्, ब्राह्मण्यां ब्राह्मणाच्च जातत्वमुक्तस्थलेऽव्यापकम्, अतो न सखण्डोपाधिर्वक्तुं शक्य इत्यर्थः । ननु विशुद्धमातापितृकत्वं ब्राह्मणत्वमित्युक्ते न कश्चिद्दोष इत्यत आहुः कामेत्यादि । तथा

सति नवसु भागवतत्वं दशसु क्षत्रियत्वमेकाशीतिषु यवीयःसु ब्राह्मणत्वमिति तारतम्यं न स्यादित्यर्थः । एवं विशुद्धमातृकत्वं विशुद्धपितृकत्वं च यायातेषु पुंद्रसुह्मादिषु यथा-यथमतिव्यापकं ज्ञेयम् । फलितमाहुः **तस्मा**दित्यादि । **उच्यन्त** इत्यन्तम् । तस्माज्जातेः सखण्डोपाधेश्चानिरूप्यत्वादखण्डोपाध्यङ्गीकारेपि तस्याः जातिकल्पत्वेन उक्तरीत्या शास्त्रे बहुवाक्यविरोधाद् ब्राह्मण्यं देवता इत्यर्थः । **अत एवे**ति । देवताभिव्यक्त्यनभिव्यक्तिभ्या-मेवेत्यर्थः । **इती**ति । प्रसिद्धमित्यर्थः । ननु देवता कथमभिव्यक्ता भवतीत्यत आहुः **सा** चेत्यादि । उपनयनेत्युपलक्षणम्, तदनुकूलेश्वरेच्छा च सर्वत्र सहकारिणी सर्वैरेव मन्तव्येति न कश्चिद्दोषः । एतेन देवताभिव्यक्तिः समागमनरूपा ज्ञापितेति ज्ञेयम् । **बहूनि वाक्या-नी**ति । 'जन्मना जायते शूद्रः संस्कारैर्द्विज उच्यते । वेदाभ्यासाद्भवेद्विप्रो ब्रह्मज्ञो ब्राह्मणः स्मृत' इत्यादीनीत्यर्थः । अयं चार्थो बृहदारण्यकीयपुरुषविधब्राह्मणे 'ब्रह्म वा इदमग्र आसी'दित्यारभ्य 'वैश्येन वैश्यः शूद्रेण शूद्र' इत्यन्तग्रन्थे स्पष्टः । एवञ्च ब्राह्मणीत्वमपि 'विवाहस्तु समन्त्रक' इत्यादिवाक्यात् विवाहानन्तरमेव । पूर्वं तु ब्राह्मणकन्यात्वमेव । तत्र व्यभिचारादावपि पापतारतम्यं प्रायश्चित्ततारतम्यं च ज्ञेयम्, अत एव तादृक्मरणे आशौचतारतम्यमपि सङ्गच्छत इति **बहूनि सङ्गच्छन्त** इति सुष्ठूक्तम् । एवञ्च 'ब्रह्मणे ब्राह्मणमालभेत क्षत्राय राजन्यं मरुद्भ्यो वैश्यं मरुतो वै देवानां विश' इत्यादिश्रुतयोपि **सङ्गच्छन्ते** । अन्यत्राप्यतिदिशन्ति **एवं क्षत्र**मिति । इदमुपलक्षणं ज्ञेयम् । ननु शूद्रत्व-स्याजातित्वे शूद्रापदे टाबभावापत्तिरजातित्वादितिचेत् । न । 'वेदाक्षरविचारेण ब्राह्मणीगम-नेन च । कपिलाक्षीरपानेन शूद्रश्चाण्डालतां व्रजे'दित्यादिलिङ्गात्तत्रापि जननमादायैव निर्वाहात् । तथा च यत्रैव बाधाभावः,तत्रैव जातित्वमवधेयम्, नान्यत्रेति दिक् । **अत एवे**ति । देवताद्वयसमागमादेव । **उभयनिवेश** इति । ब्रह्मक्षत्ररूपदेवताद्वयनिवेश इत्यर्थः । एतेन ग्रन्थेन भारते वनपर्वण्याजगरे 'ब्राह्मणः को भवेद्राज'न्निति प्रश्ने, 'सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा । दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः' इति लक्षिते, 'चातुर्वर्ण्यं प्रमाणं च सत्यं च ब्रह्म चैव हि । शूद्रेष्वपि च सत्यं च' इत्यादिनातिव्याप्तौ दर्शितायाम्, 'शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते । न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः । यत्रैतल्लक्ष्यते सर्प स ब्राह्मण इति स्मृतः । यत्रैतन्न भवेत्सर्प तं शूद्रमिति निर्दिशे'दित्यनेन लक्ष्यकुक्षिनिक्षेपे लक्ष्यबहिष्कारे च कृते, 'यदि ते वृत्ततो राजन् ब्राह्मणः प्रसमीक्षितः । वृथा जातिस्तदायुष्मन् कृतिर्यावन्न विद्यत' इत्यनेनानियतव्य-ङ्ग्यायां जातौ स्वीकृतायाम् 'जातिरत्र महासर्प मनुष्यत्वे महामते । संस्कारात्सर्ववर्णानां दुःपरीक्ष्येति मे मतिः । सर्वे सर्वास्वपत्यानि जनयन्ति सदा नरा' इत्यनेन साङ्कर्यं दूषणं जाताबुक्त्वा, 'दुःपरीक्ष्ये'त्यनेन अनियतव्यङ्ग्या न जातिः, किन्तु नियतव्यङ्ग्यैव जातिरिति सूचयित्वा, 'इदमार्षं प्रमाणं चे'त्यारभ्य 'यत्रेदानीं महासर्प संस्कृतं वृत्तमिष्यते । तं ब्राह्मणमहं



पूर्वमुक्तवान् भुजगोत्तमे'त्यन्तेन संस्कारवृत्ताभ्यां ब्राह्मण्यमुक्तम् । तदप्येतदविरोधीति ज्ञापितं ज्ञेयम् । वारद्वयं मुखाद्युक्तेस्तात्पर्यमाहुः **पूर्वमित्यादि कर्मे**त्यन्तम् । तथा च कार्यभे-दान्मुखान्तराद्युक्तिः । विश्वरूपाध्याये 'अनेकबाहूदरवक्त्रनेत्र'मिति कथनादत्रापि 'सहस्र-शीर्षा' इत्यनेन तत्सूचनान्न कोपि सन्देह इत्यर्थः । **ऊरुण** इति । नपुंसकप्रयोगो लिङ्गस्य लोकाश्रयत्वेनाशिष्यत्वाज्ज्ञेयः । 'सक्थि क्लीबे पुमानूरु'रिति कोशे 'सक्थी'ति रूपभेदेन नपुंसकत्वे सक्थिशब्दस्यावगते 'पुमानूरुः क्लीबे' इत्यन्वयादपि सुष्ठु ।

**इयानसावित्यत्र** । प्रथमपक्षे सन्निवेशमुद्दिश्य इयत्त्वमदस्त्वं चेति विधेयद्वयं
२-१-३८ बोध्यम् । द्वितीयपक्षस्य फलमाहुः **आनन्दे**त्यादि । **आत्मरूपत्वेने**ति ।
ब्रह्माण्डं स्वात्मत्वेन ध्यात्वा तत्र मनः सन्धार्यत इत्यर्थः । नन्वात्मत्वेन ब्रह्माण्डध्यानस्य किं प्रयोजनमत आहुः **अन्यथे**त्यादि । आत्मत्वेन ब्रह्माण्डध्यानाभावे इत्यर्थः । **अतिक्रम** इति । चण्डिकादिधारणातिक्रमः । तथा चैतेषां प्रयोजनानामप्यात्मत्वेन ध्यान-मुच्यत इत्यर्थः । तदेव विवृण्वते **एतस्मिन्नित्यादि गच्छेयुरि**त्यन्तेन ।

**स सर्वधीवृत्त्यनुभूतसर्व** इत्यत्र । ननु राजकृतप्रश्नसप्तके आद्यप्रश्नद्वयोत्तरं सोप-
२-१-३९ पत्तिकमुक्तम्, शेषाश्च निन्दिता एव इति भजनविधायकमिदं पद्यं न सङ्ग-
च्छत इत्याशङ्क्य सङ्गतिं विमृशन्ति **साधारणानामित्यादि** । **अयमर्थः** । शुकैर्हि 'वरीया'नित्यनेनैकं प्रश्नं स्तुत्वा, 'तस्माद्भारते'त्यारभ्य 'नामानुकीर्तन'मित्यन्तेन चत्वा-रोऽर्थाः उक्ताः, तेनैवं ज्ञायते, यच्छ्रोतव्यादिगतं साधारण्यमेव परिहरति, स्तुत्यगतमेकत्वं चैकवि-षयत्वेन समर्थयतीति । एवंसति 'नृणां यन्म्रियमाणानां मनुष्येषु मनीषिणा'मित्यत्र 'नृणा'मिति साधारण्येन कथनात्तादृशानां पञ्चप्रश्नेषु सर्वात्मना कर्तव्यमध्य एवोक्तरीत्या चतुर्णां प्रवेशात् 'भजनीयं वा ब्रूहि' इति राजप्रश्नेन वैकल्पिकपक्षत्वाच्च भजनीयप्रश्नः साधारणोऽनुत्तरितोव-शिष्यते, **तमाह** तमसाधारणत्वेनाहास्मिन् पद्य इति । एवञ्चावसरः प्रसङ्गो वात्र सङ्गतिरिति भावः । मूलस्थयोः **स** इति **त**मिति पदयोः पूर्वपरामर्शित्वात्पूर्वं च वपुषः सन्निवेशस्य चोक्तत्वा-त्तदन्यतरस्य भजनीयत्वव्युदासाय तदर्थं विवृण्वते **य इति भजनीय** इत्यन्तम् । तथा च पुल्लि-ङ्गेन वपुषः प्रतिबन्धात् सर्वेत्यादिविशेषणेन च सन्निवेशप्रतिबन्धा'न्मुख्ये कार्यसंप्रत्यय' इति न्यायाच्च 'वैराजः पुरुषो योऽसौ भगवान् धारणाश्रय' इत्यत्र यच्छब्देन यः परामृष्टः, स एव तच्छब्दार्थ इत्यर्थः । **अत्र** ब्रह्माण्डे । **श्रवणादिने**ति । श्रवणकीर्तनस्मरणानां भक्तिलक्षण-कयोगस्य च प्रस्तुतत्वाच्चैरित्यर्थः । अन्यथा भजनीयत्वे तदुत्तरं पूर्वमेव वदेत् । **भजनीय** इति । पद्यफलितार्थकथनम् । तथा च 'भजनीयं ब्रूही'त्यनेन यः पृष्टः सोयमित्यर्थः । एतेन च पूर्वोत्तरार्धयोः सर्वधीवृत्त्यनुभूतसर्वत्वात् स एव भजनीय इति 'तं भजेत' इत्येवंरूपो हेतुहेतुमद्भावो ज्ञापितः । **तमेवे**त्येवकारश्च तुरीयचरणार्थसङ्ग्राहको ज्ञेयः । **अत** इति । सर्वरूपत्वात् **फलमपी**त्यस्यैव विवरणम् । **एतदि**त्यादि । विराडन्तर्वर्तिनो भगवतः सर्वेषां

धीवृत्तिभिर्जन्यं सर्वानुभवं साधयितुं दृष्टान्तं व्युत्पादयन्ति **तत्रेत्यादि** । तथा च स्वराडस्मदाद्यात्माधिष्ठितेन्द्रियानुभूतसर्वः । अस्मदाद्यधिष्ठितसर्वेन्द्रियस्वामित्वात् । तत्तद्देवाधिष्ठितेन्द्रियस्यास्मदाद्यात्मवदित्यनुमानेन तथात्वसिद्धिरित्यर्थः । **प्रतीत्यभावादिति** । अस्मदादिदेहप्रतीत्यभावात् । तथा च स्वराड् नास्मदाद्यधिष्ठितेन्द्रियानुभूतसर्वः । समदृष्टित्वेनास्मदादिदेहप्रतीतिशून्यत्वात् । देहस्थितकीटप्रतीतिशून्यास्मदाद्यात्मवदिति । तथा च, स्वराड् न तथा । अस्मदादिदेहानभिमानित्वात् । परदेहानभिमानिपरात्मवदिति सत्प्रतिपक्षान्न तेन स्वराजस्तथात्वमित्यर्थः । **तत्राहेति** । एवं दोषे प्राप्ते दृष्टान्तान्तरमाहेत्यर्थः । **यथेति** मूलस्थं देहलीदीपवद्युज्यते । **स्वप्नजनानामीक्षिता** इति । स्वप्नदृष्टजनानां शरीरेषु द्रष्टृत्वेन प्रतीयमानः स्वयम् । ननु स्वप्नस्य मायिकत्वेन तत्रत्यप्रतीतेरपि मायिकत्वेन दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमित्यतस्तदभावमुपपादयन्ति **स्वप्नस्येत्यादि** । स्वप्नस्य सन्ध्यसृष्टेः मायिकत्वेपि ज्ञानं तद्विषयकं न मायिकम् । तत्र हेतुः । **तस्य** स्वाप्नज्ञानस्य । **आत्मरूपत्वात्** । ज्योतिर्ब्राह्मणे 'आत्मज्योतिरेवाय'मिति प्रतिज्ञाय, 'अत्रायं स्वयञ्ज्योतिर्भवती'त्युपसंहारेण तस्यात्मरूपत्वबोधनं क्रियते तस्मात् । एतेन स्वप्नस्य स्मरणरूपत्वं वदन्तोपि प्रत्युक्ता वेदितव्याः । अस्मिञ्ज्योतिर्ब्राह्मणे स्वप्नस्य 'तस्मिन् सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यती'ति स्थानत्वेन प्रयोगादिति । नन्वस्तु ज्ञानस्य सत्यत्वम्, तथापि स्वप्नस्य मायिकत्वेन तत्र प्रतीतस्येक्षितुर्मायिकत्वात्तद्दृष्टान्तेन कथं प्रकृतसिद्धिरित्यतस्तदुपपादयन्ति **तत्रेत्यादि** । **तत्र** स्वाप्ने ज्ञाने स्वप्नदृष्टाः पुरुषाः पश्यन्तीति **प्रतीतिरस्ति**, पुरुषादिप्रतीतिवत्, तन्निष्ठज्ञानविषयिण्यपि प्रतीतिरनुव्यवसाय इव जायते, **तत्र** स्वप्नदृष्टपुरुषनिष्ठज्ञानविषयिण्यां प्रतीतौ, पुरुषदेहानां मायिकत्वं **न्यायसिद्धं** 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वा'दिति सूत्रसिद्धम् । **तथापि** न्यायरीत्यापि **तन्निष्ठा या प्रतीतिः** पश्यन्तीत्याकारिका, सा न मायिकी, सूत्रे हि 'कार्त्स्न्येनानभिव्यक्तस्वरूपत्वा'दिति हेतुरुक्तो मायिकत्वे । तथाऽनभिव्यक्तिश्च देहादेरेव, प्रतीतिस्तु ज्ञानत्वेन रूपेण कार्त्स्न्येनाभिव्यज्यत एवेति **न मायिकी**, आत्मरूपत्वाच्च न मायिकी । ननु सा प्रतीतिर्देहान्तर्निष्ठत्वेन प्रतीयते, तेषां च मायामात्रत्वेन तेषु चैतन्याभावादात्मरूपत्वस्य दुर्घटत्वेन कथं न मायिकीत्यत आहुः **तत्रेत्यादि** । **तत्र** पुरुषाः पश्यन्तीति प्रतीतौ, **चैतन्यान्तराभावात्** स्वप्नदृष्टपुरुषदेहानां मायिकत्वेन ऐन्द्रजालिकदेहेष्विव जीवान्तरस्याभावाद्भगवतो वा जीवस्य वा चैतन्यं भवतीति, भगवदात्मरूपा स्वप्नदृष्टजीवात्मरूपा वा सा भवतीति न मायिकीत्यर्थः । ननु संभवत्येवम्, परं द्रष्टुः सन्दिग्धत्वेन निर्वक्तुमशक्यतया तस्या अपि कार्त्स्न्येनाभिव्यक्त्यभावान्नामायिकत्वं निश्चेतुं शक्यमित्यत आहुः **स्वस्यापीत्यादि** । स्वस्य स्वप्नद्रष्टुरपि तथाभिमानाभावे स्वाप्निकदेहेषु द्रष्टृत्वेन प्रतीतः मदात्मा न भवति, तद्देहाभिमानित्वात्, यस्य यद्देहानभिमानित्वम्, तस्य न तदात्मत्वम्, मद्देहानभिमान्यात्मान्तरवदित्यनुमानेन द्रष्टृत्वाभावात् । नापीन्द्रियाण्येव पश्यन्तीति शङ्क्यम् ।



इन्द्रियाणां गोलकाभावेन प्रदर्शनासामर्थ्यात् । 'पराञ्चि खानी'ति श्रुतेः पराचामिन्द्रियाणामन्तर्गोलकाभावेनानाधाराणां प्रदर्शनसामर्थ्याभावात् । न च स्वाप्नेन गोलकेन सामर्थ्यसिद्धिरिति शङ्क्यम् । स्वाप्नस्य च गोलकस्य मिथ्यात्वादेवं निवृत्ते जीवस्येन्द्रियाणां च द्रष्टृत्वे भगवानेव पश्यतीति युक्त्याध्यवसीयते । तेषु तथा प्रतीतः अन्यो जीवात्मा न भवति, तदनभिमानित्वान्मदात्मवदित्यनुमानेन जीवमात्रनिवृत्तौ । तत्र तथा प्रतीतः स्वराडेव सर्वात्मत्वात्, यन्नैवं तन्नैवं मदात्मवदित्यनुमानरूपया परिशेषरूपया च युक्त्या निश्चीयते । तथा चैवं निरुक्ते द्रष्टरि तस्याः कार्त्स्न्याभिव्यक्तिसिद्ध्या मायिकत्वाभावान्न दृष्टान्तवैषम्यमित्यर्थः । ननु भगवांश्चेत्पश्येत्, तदा स्वाप्नपुरुषवत् सोपि कथं न प्रतीयते, अतो नैवमित्यत आहुः **निद्रेत्यादि** । निद्रा हि रजःसहितस्य तमस उद्रेकात् प्रवर्तमानो बुद्धिवृत्तिविशेषः, तद्वशात्तेन भगवता सह तेषां भेदो न स्फुरति, यथा स्वाप्यये, उभयत्रापि तमोभिभवस्य तौल्यात् । तथा च तदप्रतीतिमात्रेण तस्या द्रष्टृत्वं न वक्तुं शक्यमतस्तत्र स एव प्रतीतिनिश्चयो निर्बाध इत्यर्थः । अत्र पूर्वदृष्टान्तस्यापि सङ्ग्रहाज्जीवस्य द्रष्टृत्वं न निषिध्यते, किन्तु भगवतोपि साध्यते इति बोध्यम् । एवमेकत्र स्वप्ने द्रष्टृत्वं भगवतः समर्थयित्वान्यत्राप्यतिदिशन्ति **तथेत्यादि** । अध्यवसायप्रकारस्तु व्याख्यात एव । तदेतन्निगमयन्ति **तत** इत्यादि । **तत** इति । परिशेषात् । नन्वस्तु द्रष्टा, तथापि साक्षित्वेन वा इन्द्रियैर्वेति विचारणीयम्, तत्र नाद्यः, प्रतिज्ञाविरोधात्प्रकृतानुपयोगाच्च । न द्वितीयः, करणसामर्थ्याभावादतो नानेन प्रकृतसिद्धिरिति शङ्कायामाहुः **तस्य** चेत्यादि । तथा च 'नासत्यदस्रौ परमस्य नासे प्राणं च गन्ध' इत्यादिभिस्तस्य करणसामर्थ्या उक्तत्वेन तत्करणेष्वस्मदिन्द्रियाणां क्लेशे स्वस्यैव करणसामर्थ्या पश्यन्नस्मदिन्द्रियैः पश्यतीति न प्रतिज्ञाविरोधः, नापि प्रकृतानुपयोग इत्यर्थः । ननु लयवादिनां मते इन्द्रियाणां कारण एव लयोङ्गीक्रियते, 'इन्द्रियाणि स्वयोनिष्वि'ति पुराणवाक्येपि लयभावनायां तथाङ्गीकाराच्च, अतस्तदिन्द्रियेष्वस्मदिन्द्रियलयाभावादस्मदिन्द्रियैः पश्यतीत्यसङ्गतमित्याशङ्कायामाहुः **कारणलयेत्यादि** । किमत्रेन्द्रियकारणत्वेन विवक्षितम्, भूतानि वा मात्रा वा, भूतादिर्वा तैजसो वा । तत्र पुराणवाक्योक्तबहुवचनानुरोधादाद्यविकल्पद्वयोक्तान्यतराङ्गीकारे तु विषये लयो निर्विवादः । बहुवचनमनादृत्य तृतीयाङ्गीकारेपि तत्र सूक्ष्मरूपेण मात्रासद्भावात्तथा । अथ तुरीयोवशिष्यते, तत्र लयपक्षेपि वैकारिककार्ये मनसीवेन्द्रियकारणे तैजसेपि विक्षेपस्य रजोजन्यत्वेन वासनोत्पत्तेस्तल्लये वासनया तत्र विषयसद्भावात् तत्रैव लय इत्यर्थः । ननु कारणे लयपक्षेपि तत्रैव लय इत्यत्र किं मानमिति शङ्कायामाहुः **कारणस्येत्यादि** । तस्य विक्षेपकत्वात्तल्लये तत्र लीनानामिन्द्रियाणां विक्षेपेण विषयप्रकाशसंभवात्तस्यापि लयाङ्गीकारे उभयलयाङ्गीकारापातेन गौरवाच्च तथाङ्गीकार्यः । तथा च लाघवानुगृहीतं प्रकाशाभावप्रत्यक्षमेव विषयेष्विन्द्रियलये मानमित्यर्थः । **ननु शास्त्रानुग्रहात्फलमुखमिदं गौरवं न**

दोषायेति चेत्तत्राहुः **अन्यथेत्यादि**। तैजसस्य लयाङ्गीकारे तेन निद्राव्यवधायकत्वाभावेन तस्याः निवृत्त्यसंभवात्पुनर्जागरणं कथं क्रियेत तामसवैकारिकयोरचञ्चलत्वेनाविक्षेपकत्वात्केन प्रकारेण क्रियेत, तथा च जागरणान्यथानुपपत्त्या तैजसस्य न लीनता, तदलये च विषयप्रकाशापत्तिरिति तदभावान्यथानुपपत्त्या विषय एव लयोऽङ्गीकार्य इत्यर्थः। ननु सुषुप्तावहंवित्तेरभावादहङ्कारलयः प्रत्यक्षानुभवसिद्ध इति तल्लयकृतं गौरवं न दोषायेत्यत आहुः **अहङ्कार इत्यादि**। सत्यं तल्लयोऽनुभवसिद्धः, परं सोऽहङ्कारो भिन्नः आत्माध्यासरूपः, न त्विन्द्रियजनक इति तेनानुभवेनैतस्य गौरवस्य प्रामाणिकत्वं नापादयितुं शक्यमित्यर्थः। ननु विवेचकस्याभावादहंवित्तौ सर्वे एव भासन्ते इति सोऽनुभवः सर्वाहङ्कारलयबोधक इति न तस्य गौरवस्याप्रामाणिकत्वमित्यत आहुः **तथा सतीत्यादि**। विक्षेपस्य तस्यापि लये सति प्रलयदशायामिव सुषुप्तावपि पुनः सृष्ट्यभावादिन्द्रियाणि पुनर्नोत्पद्येरन्निति जागर एव स्यात्, जागरे वा ऐन्द्रियकज्ञानमेव न स्यात्, अतो जागरिताज्ञानानुरोधाद्विवेक आवश्यक इति तल्लयगौरवमप्रामाणिकमेवेत्यर्थः। न च कालस्य क्षोभकत्वात्तैजसोद्बोधे पुनः सृष्ट्युपपत्तेस्तल्लयो नाप्रामाणिक इति वाच्यम्। तथा सत्येकस्य जागरेऽन्येषामपि जागरणप्रसङ्गात्, कालस्य साधारणत्वात्, अतस्तन्नियामकत्वेनास्य स्थितिरावश्यकी। इदमेव हृदिकृत्वाहुः **अतो विषयेत्यादि**। **अत इति**। कारणपक्षस्योक्तरीत्या दुष्टत्वाद्विषय एव लयो युक्त इत्यर्थः। न 'चेन्द्रियाणि स्वयोनिष्वि'ति भगवद्वाक्यविरोधः। तस्य प्रलयसामयिकदशाभावनविषयत्वेन स्वापविषयत्वाभावात्। एतेन, बहिरिन्द्रियजन्यज्ञानं प्रति तत्तदिन्द्रियमनःसंयोगत्वेन जागरे कारणता, हितावच्छिन्नात्ममनःसंयोगत्वेन च स्वप्ने कारणतेत्येवं कार्यकारणभावद्वयमङ्गीकृत्य स्वप्नं साधयन्निन्द्रियलयमनङ्गीकुर्वन्तो नैयायिका अपि प्रत्युक्ताः। दृप्तबालाकिब्राह्मणे 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाये'त्यादिना श्रावितस्यार्थस्य विरोधात्। तत्रादानकथनेन प्राणशब्दवाच्येन्द्रियाणां स्वस्वस्थानत्यागबोधनात्तत्तद्विषलोहितभृतासु नाडीषु लयबोधनादिति। सिद्धमाहुः **अतः स्वप्नेत्यादि**। **प्रविष्टानीति**। इन्द्रियभावेन संबद्धानि। तथा च स्वराट् अस्मदादिसर्वेन्द्रियवृत्तिभिः सर्वं भवति, अस्मदादिसर्वेन्द्रियाधिष्ठातृत्वात्, स्वाप्नसर्वदेहाद्यधिष्ठातृस्ववदित्यनुमानेन तथात्वसिद्धिरित्यर्थः। ननु स्वप्ने स्वाप्नसृष्टेर्विषयत्वाद्भवतु द्रष्टृत्वम्, जाग्रति तु विषये प्रविष्टानामिन्द्रियाणां भगवदिन्द्रिये प्रविष्टत्वे स्वप्नावस्थायामिवेन्द्रियकोटिनिवेशेन विषयभावाभावात् दृश्याभावेन पूर्वोक्तद्रष्टृत्वं न सुघटम्। यदि च लयाभावादिन्द्रियकोट्यनिवेशः, तदापि विषयतयैव संयुक्तानीति भगवतोऽस्मदिन्द्रियापेक्षापि नास्ति इति तदिन्द्रियकरणकं तस्य ज्ञानं भविष्यति, नत्वस्मदिन्द्रियकरणकम्, अतोऽपि तथात्वं

१ "तस्य" पाठः।



दुर्घटमित्याकाङ्क्षायामाहुः **अन्यथेति**। स्वाप इवेन्द्रियाभावत्यागेन प्रवेशे विषयाभावाद्व किमपि गृह्णीयादिति सत्यम्, परन्तु जाग्रद्दशायां तैर्विषयग्रहणस्यानुभूयमानत्वेन तेषामिन्द्रियभावात्यागनिश्चयात्तेषामिन्द्रियत्वेनैव प्रवेश इति तान्यपीन्द्रियत्वेनैवाधितिष्ठति। एतावान् परं विशेषः, स्वप्ने तानि स्वेन्द्रियत्वेन गृह्णाति, जाग्रति तु परेन्द्रियत्वेनेति। एवं सति स्वप्ने स्वेन्द्रियैः स्वाप्नसृष्टिमस्मदाद्यात्मानं च पश्यति, जाग्रति तु अस्मदिन्द्रियाण्यस्मदात्मानं च। अस्मदिन्द्रियैस्तु स्वेन्द्रियरूपान् विषयानेव, न त्वस्मदात्मानमपि, परात्मनः परेन्द्रियावेद्यत्वादिति। तदेतदुक्तं **तत्रेन्द्रियेत्यादिना**। **आत्मानमिति**। अस्मदात्मानम्। **इन्द्रियस्येति**। स्वेन्द्रियरूपस्य विषयस्य। एकपदं विवृण्वन्ति **स चेत्यादि**। **स्वप्नेत्यादि**। स्वप्ने यथा स्वस्य स्वाप्नपुरुषदेहाद्यनभिमानित्वम्, तथा तत्तद्देहाद्यभिमानित्वेपि सर्वानभिमानित्वेन व्यावर्तकत्वादित्यर्थः। सिद्धमाहुः **अत इत्यादि**। **तेनैवेति**। स्वात्मतया ब्रह्माण्डपुरुषाभेदध्यानेनैव। ननु व्यावर्तकानां चेद्व्यावर्तकत्वम्, तदा देहस्थितकीटेन्द्रियादिजन्यं ज्ञानमस्माकमपि स्यादित्यत आहुः **देहेत्यादि**। तथा च सर्वात्मभावे जाते ब्रह्मभावेनाभेदस्य भानाज्जीवत्वे वा निवृत्ते वामदेवशुकादिवत्स्यादेवेति न कोऽपि विवादलेश इत्यर्थः।

**इति श्रीमद्द्वितीयस्कन्धसुबोधिनीप्रकाशे**
**प्रथमाध्यायविवरणं**
**सम्पूर्णम् ॥ १ ॥**



श्रीकृष्णाय नमः ।

# अथ द्वितीयाध्यायविवरणम् ।

**अथ** द्वितीयाध्यायविवरणं चिकीर्षवस्तयोः पौर्वापर्ये बीजस्यानुक्तत्वात्तं वक्तुं पुनस्तदर्थमनुवदन्ति **मानेत्यादि** । **तत्त्वार्थमिति** । वस्तुनोऽनारोपितरूपस्य निर्धारार्थम्, इदमुत्तरार्धेपि युज्यते । तेनैककार्यत्वरूपा सङ्गतिरपि स्मारिता । बीजमाहुः **द्विविध इत्यादि** । तत्त्वस्य श्रोतव्यस्य ध्येयस्य च वस्तुनो निर्देशो लौकिकबुद्धिविषयीकरणम् । **द्विविधः** बाह्याभ्यान्तरभेदतः द्विप्रकारकम्, तत्र तयोः प्रकारयोर्मध्ये मानमेयपुरःसरं श्रुतिमूलकतदविरुद्धयुक्तियोगसाधितं मनश्चेति **मानम्**, क्षरावयवविन्यासो मेयम्, तदुभयकथनपूर्वकं बाह्यो निर्देशः पूर्वाध्याये निरूपितः । आन्तरज्ञानस्य बाह्यज्ञानाधीनत्वादुक्तः । तथा चोपोद्घातगर्भा हेतुता पूर्वापरभावे बीजमित्यर्थः । ननु पूर्वाध्याये योग उक्तः, स सर्वगमकः, तथा विषयः सर्वात्मक उक्तः, एवं सति किं वा अज्ञातं किं वा आन्तरमित्याकाङ्क्षायामाहुः **आन्तरमित्यादि** । यद्यपि योगमार्गेण सर्वं ज्ञातम्, तथापि 'यन्न योगेने'त्यादिवाक्यात्तदगोचरं तदप्राप्यं च **भिन्नमार्गेण** भक्तिमार्गेण **फलसाधनयोर्बोधतः** बोधनात्तद्वर्तते, अतः प्रथमं साधनस्य ततः फलस्य च निश्चयः क्रियते, ततस्ताभ्यां कृत्वा पूर्वोक्तयोरपि साधनफलयोस्तत्त्वं वक्ष्यमाणसाधनफलशेषतात्मकं वास्तवं रूपं **फलिष्यन्ति, लौकिक्या अपि बुद्धेर्विषयीभविष्यति**, तथा च यथैतज्ज्ञानार्थं तत्कथनम्, तथा तत्तत्त्वनिर्धारायैतत्कथनमिति परस्परसाकाङ्क्षत्वात्प्रकरणैक्यमध्यायपौर्वापर्यं च युक्तमित्यर्थः । एतदेव विशदीकुर्वन्ति **एवमित्यादि** । **तयोरिति** । साधनत्वफलत्वयोः । **तत्रेति** । विचारे क्रियमाणे । एवमध्यायार्थं विशदीकृत्य व्याख्यातुमारभन्ते **तत्रेत्यादि** । **तत्रेति** । एवमध्यायार्थे निर्धारिते ।

**एवं पुरेत्यत्र** । अत्र केचन व्याख्यातारो नष्टां स्मृतिं धारणया प्रत्यवरुध्य तथा
२-२-१ ससर्जेति योजयन्ति, तत्तात्पर्यमाहुः **तथेत्यादि** । सृष्टिसामर्थ्यं धारणाफलं
नष्टस्मृतिप्रत्यवरोधो व्यापार इति तदभिप्राय इत्यर्थः । **तद्दूषयन्ति तदित्यादि** । ब्रह्मणः सृष्टिसामर्थ्यस्य ब्रह्मत्वादेव सिद्धत्वादत्र स्मृतिप्रत्यवरोधस्य फलत्वेन कथनाच्च तत्तेषां मतं चिन्त्यमित्यर्थः । ननु विद्यमाने सामर्थ्ये धारणप्रयोजनाभावान्नष्टस्मृतिप्रत्यवरोधस्य व्यापारत्वेन फलत्वस्याङ्गीकारश्च मूलमङ्गतो किमिति विचार्यत्वमुच्यत इति तत्राहुः **नष्टेत्यादि** । **सर्वथा नाश इति** । संस्काररूपस्यापि नाशे । **तोषहेतुत्वमिति** । धारणायास्तथात्वम् । तथा च तोषस्य व्यापारतायाः स्मृतिप्रत्यवरोधस्य च फलताया आपत्त्या । धारणायास्तत्रैवोपक्षयेण सामर्थ्यपर्यन्तधावनाक्षमत्वाद्विचार्यत्वमित्यर्थः । तर्हि किमत्र विवक्षितमित्याकाङ्क्षायामाहुः **अत्र त्वित्यादि** । **तदिति** । स्मृतिप्रत्यवरोधनम् । तथा च **समभिव्याहार**-



**बलादेवं** विवक्षितं निश्चीयत इत्यर्थः । ननु स्मृतिनाशवत्सामर्थ्यकौण्ठ्यस्यापि शक्यवचनत्वाद्धारणायास्तोषहेतुत्वाङ्गीकारे को दोषः, श्लोके छन्दोनुरोधस्यावश्यकत्वेन समभिव्याहारस्याप्रयोजकतया पार्ष्णिकान्वयस्यैव बलवत्त्वादिति शङ्कायामाहुः **तोष इत्यादि** । त उपपादयन्ति **यथेत्यादि** । अत्र भगवन्निकटे स्थितिः सुषुप्तौ सत्सम्पत्त्या बोध्या । **तद्विस्मरणादिति** । पूर्वकल्पीयपदार्थादिविस्मरणात् । **सखेति** । 'यावत्सखा सख्युरिवे'ति वक्ष्यमाणरीत्या समानशीलः सन् । **मुख्यं साधनमिति** । स्मृतिप्रत्यवरोधस्य मुख्यं साधनम् । ननु समभिव्याहाराग्रहेण प्राबल्यान्वयाङ्गीकारेपि तोषस्य सृष्टिहेतुना प्राप्त्या सामर्थ्यकौण्ठ्यस्यार्थात्सिद्धिरिति तत्सामर्थ्यस्य फलत्वमवर्जनीयमतो व्यर्थः प्रयास इत्यत आहुः **तोषेत्यादि** । धारणायास्तोषसाधनत्वपक्षेप्युक्तन्यायेन तोषादेव **सर्वभवने** स्मृतिप्रत्यवरोधस्य फलत्वमवर्जनीयमित्यावश्यकत्वात्तस्यैव फलत्वमस्तु, न तु सृष्टिसामर्थ्यस्य । तत्तु ब्रह्मत्वे रूपप्रतिकूलनिहतत्वात्तथापदेन सृष्टिकरणव्यवधानात्फलप्रतिबन्धकत्वाच्चाप्रयोजकम्, न ह्यत्र शुकस्तथा सामर्थ्यार्थं धारणारूपसाधनमुपदिशति, येन तथा प्रशंसेत्, किन्तु पूर्वं 'नान्यत्र सज्जेदि'ति २।१।३९ कथनादग्रेपि 'अतः कविर्नामसु यावदर्थः स्यादप्रमत्तः' २।२।३ इति कथनाच्च वैराग्यार्थम् । तथा सति यथा धारणया नष्टस्मृत्यवरोधेन भगवत्तोषात् सर्गेधिकृतस्य ब्रह्मणो यथापूर्वसृष्टिकरणम्, तथात्र धारणया नष्टस्मृतिप्रत्यवरोधेन भगवत्तोषादस्य स्थूलाहंग्रहोपासकस्य योगिनो वा 'तुष्टे त्वि'तिन्यायेनामोघदृष्टित्वे सर्वभोगेन वैराग्यदार्ढ्यमिति तथा सामर्थ्यस्य फलत्वकथनं विचार्यमित्यर्थः । न चास्य पूर्वं सर्वाननुभवान्नष्टस्मृतिप्रत्यवरोधोऽसङ्गत इति शङ्क्यम् । इदानीं प्रत्यहं प्राज्ञे सृष्टेः पूर्वं च भगवदुदर एव सत्त्वेन, सूक्ष्मानुभवस्य विभागमारभ्येयत्पर्यन्तं च तत्तज्जन्मसु नानाप्रकारकस्थूलानुभवानां च बहुधा जातत्वादिति । तस्मादेवमेवार्थ इति निश्चयः । यत्तदोर्नित्यसम्बन्धादेकेनैव तस्य लाभेपि पुनर्यथापदग्रहणतात्पर्यमाहुः **यथा वेत्यादि** । तथा च सृष्टौ बुद्धौ च पूर्वकल्पीयप्रकारतौल्यबोधनाय पदद्वयोक्तिरित्यर्थः । एवमनेन धारणारूपस्य साधनस्य प्रकृतोपयोगाय वैराग्यशेषत्वं साधितम्, अतः पूर्वाध्यायोक्तस्य फलस्यापि प्रकृतोपयोगाय तदर्थमेव द्वाभ्यां वैराग्यशेषत्वमुपपादयन्ति **इदानीमित्यादि** । **साधनान्तरमिति** । वेदतात्पर्यविचारकरणरूपं तदित्यर्थः ।

**शाब्दस्य हीत्यत्र** । ननु वेदेन सर्वविषयत्याजनाय स्थूलधारणैव कर्तव्यत्वेन
बोध्यत इति कथमवगन्तुं शक्यत इत्याशङ्कायां तदुपपादयन्ति **सर्व**
२-२-२ **इत्यादि** । **प्रजाकामनादीनां वा नित्यस्य इति** । यद्यपि नित्यविधायकं
वाक्यं भिन्नम्, कामनार्थं च भिन्नम्, तथापि यथा 'पुरोडाशं चतुर्धा करोति'इत्यस्याग्नेयं चतुर्धा

१. ०"कामार्थम्" पाठः ।

करोतीत्यनेनोपसंहारः, तथा कामवाक्यस्य नित्ये वक्तुं शक्यत्वात्तथेत्यर्थः । कर्त्तव्यत्वेऽवान्तरमेवेति । 'यदहरेव विरजेत्तदहरेव प्रव्रजे'दिति जाबालश्रुतौ वैराग्यस्य प्रव्राजेऽधिकारविशेषणतया कथनात्तस्य कर्तव्यत्वे वा आन्तरमेव कामनात्यागेनैव अवान्तरमेव वा होमातिरिक्तसमय एव कर्तव्यं स्यात् । पक्षान्तराण्याहुः आत्मनीत्यादिना । एतेषु प्रथमः प्राणाग्निहोत्रोपनिषदुक्तः अग्निहोत्रेत्यादिनोक्तः, द्वितीयस्तु नवमस्कन्धे 'विरक्तो न्यासमास्थितः । सहैवाग्निभिरात्मानं युयोज परमात्मनी'ति सौभर्युपाख्यानोक्तः जरामर्येति । तृतीयो'ऽम्भस्यपारे' इति तैत्तिरीयबृहन्नारायणोपनिषत्समाप्तौ 'तस्यैवं विदुषः' इत्यनुवाकोक्तः । एवं सर्वेषां प्रमाणसिद्धत्वेपि ये प्रव्राजस्यान्धपङ्ग्वाद्यधिकारकत्वमङ्गीकुर्वन्ति, तान्प्रत्याहुः सर्वेषामित्यादि । यदि तथा स्यात्तदा श्रुतिः प्राजापत्यामाग्नेयीं चेष्टिं जाबालादिश्रुतौ प्रव्राजपूर्वाङ्गत्वेन न विदध्यात्, 'प्राजापत्यां निरूप्येष्टिमग्नीनपिबदीश्वरः' इति, युधिष्ठिरोपि धर्मावतारो न प्राजापत्यां कृत्वा प्रव्रजेत्, सौभरिश्च याज्ञवल्क्यस्यापि प्रव्राजं वाजिशाखायां मैत्रेयीब्राह्मणे न श्रावयेत्, व्यासचरणा अपि साधनाध्यायतुरीयपादे प्रव्राजनिर्णयं न कुर्युः, अतो मीमांसकानां तथा कल्पनमयुक्तमिति तद्विहाय सर्वेषामुक्तानां पक्षाणां श्रुतिमूलत्वाद्यथाश्रुता एव साधनरूपाः पदार्थाः, फले फलरूपाश्च, ते साधनेऽधिकारिभेदेन वचनानि व्यवस्थाप्यावगन्तव्याः । अन्यथा नित्याग्निहोत्रप्रव्राजविधायकयोः श्रुत्योर्विरोधो दुष्परिहर एव स्यादित्यर्थः । एवं विचारेण सिद्धं पूर्वपक्षस्यार्थमाहुः तस्माद्वैराग्यमित्यादि । लौकिकविषयवैतृष्ण्यस्यैव श्रुत्यभिप्रेतत्वात् दृष्टानुश्रविकविषयवैतृष्ण्यं धारणाकरणरूपश्च शास्त्रार्थनिर्धारो न संभवतीति शङ्कायां सर्वस्यापि वेदस्य तात्पर्यमनेन पद्येनाहेत्यर्थः । सैद्धान्तिकमर्थं व्युत्पादयन्ति यथा परब्रह्मेत्यादि । प्रस्थानत्वादिति । प्रकृष्टस्थानत्वात् । ननु 'यजेत' 'जुहुया'दित्यादौ नियोगदर्शनात् पुरुषस्य कर्मशेषत्वेन कर्मणः फलशेषत्वेन फलस्य च पुरुषार्थतया पुरुषशेषत्वेन तद्वाक्यानां साध्यार्थत्वनिश्चये कर्मफलं पुरुषगतमेवायातीति सिद्धस्वरूपब्रह्मगतं फलमिति न वक्तुं शक्यमित्याशङ्कायां श्रुतार्थापत्तिं प्रमाणत्वेनाहुः अन्यथेत्यादि । अन्यथेति । वाक्यानां साध्यार्थत्वमङ्गीकृत्य फलस्य पुरुषशेषत्वाङ्गीकारे अप्रामाण्यमन्यानर्थक्यं वेति, वाक्यस्याप्रामाण्यं कर्मान्तरस्यार्थक्यं वा, तदुदाहृत्य दर्शयन्ति यथा स्वर्गायेत्यादि । ननु वर्ण्यत एव तात्पर्यम्, अङ्ग फलश्रुतेरर्थवादत्वात्कर्मप्रशंसामात्रमत्र क्रियते इति तत्राहुः यथा चेत्यादि । किमत्र बालोपलालनरूपवत्स्तोभारूपा प्रशंसा, उत यथार्था, आद्ये त्वेकत्र प्रतारकतायां सिद्धायां मुख्यफलेप्यनाश्वासप्रसङ्गेन सर्वस्य वेदस्याप्रामाण्यप्रसङ्गः । द्वितीये तु परस्परविरोधात्प्रत्यक्षादिविरोधाच्च शब्दार्थस्यैव बाध इति नैवं तात्पर्यनिश्चय इति तदुभयदोषाभावो यथा तथा वर्णनीयमित्यर्थः । तर्हि कथं वर्णनीयमित्याकाङ्क्षायां वेदस्य सिद्धार्थत्वमनुसंधाय फलस्य ब्रह्मगतत्वं चानुसन्धाय वर्णनीयमित्या-



शयेन तत्प्रकारमाहुः तत्रेत्यादि । 'यज्ञो वै विष्णु'रितिश्रुत्या क्रियायां प्रविष्टतयान्यग्भूतऋत्विग्यजमानरूपेण स्वयमेव वर्तते, यज्ञियानां पदार्थानां जाग्रतामिव तदङ्ग एव निविष्टत्वात्पूर्वकाण्डे तस्यैव लीला वर्ण्यते । तत्र गमको हेतुः यथेत्यादि । यथा 'भगवा'नित्यत्र यत इति पाठः प्रतिभाति । अग्रे तदिति पदस्य दर्शनात् । अथायमेव चेत्पाठः, तदा यथापदस्योदाहियत इत्यर्थो बोध्यः । यत्र येन भोगेनेति । यस्मिन् गार्हपत्यादिरूपे मुखे येन हविरदनेनेत्यर्थः । निश्चीयत इति । 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्यः' । 'मां विधत्तेऽभिधत्ते मा'मित्यादिवाक्यैः सर्वस्य वेदस्य भगवत्तात्पर्यकत्वे तद्बोधकत्वे तद्विधायकत्वे तद्वाचकत्वे च बोधिते वेदस्य सर्वस्य सिद्धार्थ एव तात्पर्यं निर्धार्य विधायकादिवाक्याबाधार्थमेवं प्रकारेणानुवादोयम्, न तु गुणवाद इति तात्पर्यं निश्चीयते । अतः काण्डद्वयेपि नामभेदेन प्रकारभेदेन च कथनात् सर्वस्य शाब्दब्रह्मणो वेदस्यास्मदुक्त एव मार्ग इत्यर्थः । नन्वेवमर्थोऽन्यैः कुतो नाङ्गीक्रियते इत्यत आहुः किन्त्वित्यादि । नामभिर्वाक्यार्थसम्बन्धरहितैरिति । फलबोधकैः पदैः वाक्यार्थत्वेनाङ्गीक्रियमाणो यः पुरुषस्तेन सह सम्बन्धशून्यैः । खण्डश इति । अवान्तरवाक्यसम्बन्धमात्रेण । ध्यायतीति । धीर्ध्यायति । अत इति । वृत्तिद्वयविरोधशब्दार्थबाधाभ्याम् । तथा च यदि वेदस्य कर्मणि तस्य पुरःस्फूर्तिके फले पुरुषे च तथा तात्पर्यं स्यात्, तदा यथाश्रुताः पदार्थाः फले साधने च ग्राह्याः स्युः, न त्वेवम्, किन्तु महावाक्यार्थविचारे उक्तरीत्या भगवत्परतैव सिध्यतीति यथाश्रुतग्रहणं न युक्तमित्यर्थः । फलत्वेनोक्तानिति । अङ्गवाक्येषु फलत्वेनोक्तान् । सिद्धमाहुः तस्मादित्यादि । तस्मादिति । वेदस्येश्वरात्मकत्वेन सामान्यैः ऋषिभिरपि तदर्थानिर्धारात्तत्तदंशे श्रद्धां विहायेत्यर्थः ।

अत इत्यस्याभासे । भिन्नप्रकारेणेति लोकाननुरोधेन भगवत्परतया । सर्वकरणासामर्थ्यादिति भगवद्दत्तसर्वकर्मकरणसामर्थ्याभावात् । तस्मादिति ।
२-२-३ सर्वेषां फलदर्शनात्प्रवृत्त्यव्यतिरेकादग्निहोत्रादिवाक्येषु श्रूयमाणस्य कामपदस्य भगवत्यनन्वयादवान्तरवाक्यानां भगवत्परत्वनिर्णयो न युक्त इति तथेत्यर्थः । एवमाशङ्क्यातः कविरिति । श्लोकस्यार्थमाहुः यत्रेत्यादि, येषु वाक्येषु सिद्धार्थानुवादकत्वेन भगवल्लीलानुवादकत्वेन रूपेण महावाक्यार्थोपयोगार्थं महावाक्यार्थस्य मृत्युतरणस्योपकारार्थमवान्तरफलानि वृष्ट्यादिस्वर्गान्तान्यनुवदन्ति तानि कर्माणि लोकसिद्धत्वात् प्रवृत्त्यव्यतिरेकसिद्धत्वाद्युक्तियुक्तानि तत्तत्फलोपायभूतानि साधनानि, न तु प्रतारणरूपाणि, तादृशफलार्थं साक्षात्परम्परया च मृत्युतरणार्थं कर्तव्यान्यनुष्ठेयानि । कथं युक्तियुक्तत्वं ? कथं वा उपयोगः ? इत्यपेक्षायां यथा "धन्वन्नि"त्यग्निस्तुतिवाक्येऽग्नेरतिप्रियत्वादिबोधनार्थं लोकसिद्धा प्रपा दृष्टान्तीक्रियते, इति तस्य वाक्यस्य तावन्मात्रे तात्पर्यं,

न तु तद्विधाने, तयात्यन्तं सन्मार्गविमुखस्यौन्मुख्यजननमात्रे **कारीर्यादिवाक्यतात्पर्यम्** । एवं सन्मुखस्य संसारासक्तस्य तदावेशाद्विश्वासापगमशङ्कया तद्दार्ढ्यजननमात्रे "चित्रोद्भिदा"दिवाक्यतात्पर्यम् । एवं दृष्टादितृष्णस्यानुश्राविके सक्तस्य दृष्टवैतृष्ण्यदार्ढ्यजननमात्रे ज्योतिष्टोमादिवाक्यतात्पर्यं, न तु तत्तदर्थमेव तत्तत्करणे । न च फलाभावः शङ्क्यः, तथा सति विश्वासाद्यभावप्रसङ्गात् । फलन्तु तात्पर्यभ्रमेणापि करणे लोकयात्रानिर्वाहार्थत्वा'त्फलमत उपपत्ते'रिति न्यायेन भगवता दानाद्भविष्यति । तेनैतानि वृष्ट्याद्यादीनि **फलानि भगवल्लीलार्थमेव प्रतिपादितानि** । एवमितराण्यपि तानि सर्वाण्युक्तरीत्या **महावाक्यार्थे** मुक्तिरूपे विप्रकृष्टसन्निकृष्टपरम्परयोपयुक्तानीति । एतेन ग्रन्थेन **मूलश्लोकः** शब्दार्थो विवृतः । अत उक्तवाक्यघटितस्य पूर्वकाण्डस्योपासनाकाण्डस्य च महावाक्यार्थोपयुक्तत्वात्, **कविः** श्रुतेस्तात्पर्यं लोकदृष्टान्तरूपमवगन्तुं **निपुणो भूत्वा** नामसु यावदर्थः स्यात् । **येष्वित्यादिनोक्तरीत्या** तथा स्यात् । तथा च, जैमिनीयमते यथा "वायुर्वै क्षेपिष्ठे–"त्यादीनामनुवादत्वं, तथा सिद्धान्ते कारीर्यादिज्योतिष्टोमान्तानां पूर्वकाण्डस्थानां मुक्त्यतिरिक्तदृष्टादृष्टफलबोधकानामुत्तरकाण्डस्थानाञ्च वाक्यानामधिकारिभेदेनावयुत्यानुवादत्वमवगत्य स्वापेक्षितपरो भवेदित्यर्थः । कानि कार्यसाधनानीत्यपेक्षायामाहुः **शान्त** इत्यादि, तथा जीवात्मनः क्षरपुरुषस्य वा दर्शनेधिकृतः स शान्त्यादिपरो भवेत् । यस्याक्षरदर्शनेधिकारः **'स सर्वं ब्रह्मे'ति** ज्ञानपरो भवेत् । यस्य पुरुषोत्तमदर्शने स बृहन्नारायणोपनिषदुक्तज्ञानपरो भवेदित्यर्थः । एवं यथाधिकारं सर्वासु परविद्यासु बोध्यम् । विद्यानां परापरविभागस्य परपरमोत्कृष्टविभागस्य बाह्यरहस्यविभागस्य च श्रुतिसिद्धत्वादिति न कोऽपि वादलेशः । **अप्रमत्त**पदतात्पर्यमाहुः **न हीत्यादि** । **व्रति न** इति । सर्वदैवं विचारानियमस्थस्य । **तत्रेति** । चक्षुरालोकादिबलसिद्धिविषये । **न कुर्यादिति** । तथा च प्रकारान्तरेणैव तद्बलसिद्धिरित्यर्थः ।

**सत्यामित्यत्र**—ननु सर्वेषामिन्द्रियसाकल्याभावेन बाहोः स्वतः सिद्धत्वस्य प्रायि-
कत्वादुपबर्हणकैमर्थ्यं कथमुच्यते इत्यत आहुः **महापुरुषेत्यादि** । यो
२-२-४ हि राजवत् सम्पत्समृद्धाद् गृहादेवं विचारपूर्वकं विरज्यते, स भगवत्कृप-
यैवेति, तादृशस्य तथात्वादेवमुक्तमित्यर्थः । उपबर्हणपदगतबहुत्वसङ्ख्यायास्तात्पर्यमाहुः **गल्लयोः पादयोश्चेति** । अत्रोपबर्हणकैमर्थ्यकथनेन तदर्थकप्रयासकरणवैयर्थ्यमजहत्स्वार्थया लक्ष्यते । तथा च, पादयोर्बाहुकृतोपयोगाभावात् "सत्यां क्षिता"वित्यनेनाप्युपबर्हणपदान्वयो भवति तस्यां तैः किमिति । एवं सति विकलाङ्गस्यापि तत्सिद्धिरिति तादृशास्तु **सर्वथैव** प्रयासो न कार्य इत्यप्युपदेशः फलति । ननु भिन्नवाक्यत्वे कथमुपदेशैक्यमित्यत आहुः **अत** इति, फलैक्यात् । एवमग्रेपि बोध्यम् । तुरीयपादसूचितमर्थमाहुः **किञ्चेत्यादि** ।



**चीराणीत्यत्र** । **देहश्च पराधीन** इति । 'देहः किमन्नदातुर्वे'ति न्यायात् परा-
धीन इत्यर्थः । **अत** इति सर्वस्य साधनसापेक्षत्वेन । **विवृतौ** ।
२-२-५ ननु मार्गे चीरसत्त्वेपि स्वतस्तद्ग्रहणे बाधकमपि संभाव्यत इति कथं
निस्तार इत्यत आहुः **अतस्तेपीति** । भगवदीयत्वात् भगवदीया अपि । तथा च, 'दिशन्ति ने'ति वाक्यस्यात्रापि योजनेऽस्माद्दोषान्निस्तार इत्यर्थः । ननु दानस्य चेतनधर्मत्वादचेतने मार्गे कथं तत्संभवः इत्यत आहुः **पादैरित्यादि** । "सर्वेषामध्वनां पादावेकायनमि"ति श्रुत्युक्तादचेतनत्वेपि पादसम्बन्धात्तद्दानं लक्ष्यते । करणतया चीरदानं लक्ष्यते । तथा च; यथा परम्परितचेतनसम्बन्धेन दध्याहुतिदानं, तथा श्रौतज्ञापकोपलब्ध्या पथिभिर्वस्त्रदानमपि युज्यत इति तेपि किं वस्त्राणि न प्रयच्छन्तीति वाक्ये गौण्या दानसम्भव इत्यर्थः । 'न च लक्षणां नैव वक्ष्यामी'ति प्रतिज्ञाभङ्ग इतिवाच्यम्, तस्याः परोक्षवादभिन्नविषयत्वादत्र च परोक्षवादात् । कथमत्र परोक्षवादप्रत्यभिज्ञेति चेत्, तुरीयचरणादिति वदामः । धनमदान्धतद्भक्तौ प्रतिपद्यमर्थः प्रत्यक्षः स्यात्तेपि प्रतिबुध्येरन्, अप्रतिबोधाच्च परोक्षः इति निश्चीयते । अत एव **नद्योऽशुष्यन्** रुद्धपदेषु विपरीतलक्षणापि सङ्गच्छते । यत्तु काकात्र निर्वाहान्नात्र लक्षणेत्याह कश्चित्तन्मन्दम् । किम्पदवैयर्थ्यापत्तेः । न च तत्काकुबोधकमिति वाच्यं, विनिगमकाभावात्, वैपरीत्यस्यापि सुवचत्वात्, शब्दविकारस्यैव काकुत्वेन तस्यावृत्त्यन्तरापाताच्च । न च सा चेष्टाविशेष इति वाच्यं, 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेरि'ति कोशेन तस्यां ध्वनिधर्मत्वबोधनाच्चेष्टाविशेषाभिव्यञ्जितशब्दधर्मत्वस्यैवादरणीयत्वात् । न चास्तां ध्वनिधर्मत्वं, तथापि पदधर्मत्वाभावे वृत्त्यन्तरत्वापत्तिरितिवाच्यं, ध्वनिधर्मत्वेपि पदनिष्ठध्वनिधर्मत्वेन पदधर्मत्वानपायात् । अन्यथा घण्टादिध्वनावपि काकापत्तेः । तस्मात्किमादिपदैस्तात्पर्यार्थानुपपत्तिबोधने काकुः सहकारिणी भवतु नाम, अभिनयादिवत्, न तु शक्यविपरीतार्थबोधने, अत्र शक्तेति लक्षणावश्यक्येवेति दिक् । अत एव पूर्वश्लोकेपि लक्षणा न दोषाय । ननु वृक्षेषु भिक्षादातृत्वं कथमवधेयमित्यत आहुः **गतेत्यादि** । तथा च, तत् साधर्म्यादवधेयमित्यर्थः ।

**एवमित्यत्र** । **अस्माद्धेतोरिति** । उपार्जनक्लेशराहित्यादित्यर्थः । **अत** इति
परिच्छिन्नत्वात् । **अत** इति एकग्राहित्वात् । ननु दक्षिणेऽनेकमहिला-
२-२-६ समरागित्वदर्शनान्नेदं साम्प्रतमित्यत आहुः **अन्यथेत्यादि** । **अन्यथा**
दक्षिणदृष्टान्तेन प्रीतौ सर्वविषयत्वाङ्गीकारे । **खण्डशः क्रियमाणेत्यादि** स्पष्टम् । ननु 'तस्य तदेव हि मधुर'मिति न्यायात्तथाकरणेपि को दोषः इत्यत आहुः **प्रीतिस्त्वित्यादि** । **तत** इत्यादेरेव विवरणं **तत** इत्यादि । **अतः** भगवतः सहजप्रियत्वात् । **चेति** आनन्दनिखिलस्वप्रयोजनरूप इत्यर्थः । **अत्रेति** स्वेष्टैश्वर्यादौ **एतावतेति** पञ्चात्मकत्वेन ।

२-२-७ **कस्तामित्यत्र** । **एवमिति** सप्तपद्योक्तप्रकारेणेत्यर्थः ।

**केचिदित्यत्र** । **अत्रेति** साधननिर्द्धार इत्यर्थः । **विसृतौ, तत्रेति** आयुषेषु ।
२-२-८ **स्वयं** जीवः । **सूर्येन्दुवाय्वग्न्यगममिति** । 'रविमध्ये स्थितः सोम'
इति मन्त्रे तथा सिद्धमित्यर्थः ।

२-२-१३ कथं धारयेदित्याकाङ्क्षायामाहुः **जितं जितमित्यादि** ।

**यावन्नेत्यत्र पूर्वोक्तन्यायेनेति** । स्वप्नजनेक्षितृन्यायेनेत्यर्थः । अत्र **'परावरे-**
**स्मिन्नि'**ति(मूल)पदाभ्यां माहात्म्यज्ञानपूर्विकां भक्तिं भगवदाविर्भावं
२-२-१४ स्वस्मिन् सूचयतीति भक्तियोगपदेन भक्तिलक्षणं योगमपि स्वस्मिन्
सूचयतीत्याशयेनाहुः **योगपदेनेत्यादि** । **स्वसाधनं** स्वकृतं चित्तनिरोधरूपं साधनम्, साधनभूतं भक्तेः स्थिरं रूपमुक्तमसाधारणं भक्तिनिरूपकमुक्तम्, स्वस्मिन् भक्तिलक्षणो योग उक्त इत्यर्थः । **पूर्वोक्तस्य** क्षरस्येत्यर्थः । क्रियाया हेतुत्वाङ्गीकार इष्टापत्तौ दूषणमाहुः **प्रतिबन्धकेत्यादि** । उत्कृष्टत्वञ्च 'एतान्यपि तु कर्माणि' 'स्वर्गः सत्त्वगुणोदय' इत्यादिवाक्यैरवगन्तव्यम् । प्रकृतानुशयोयमेवेत्यत्र विनिगमकमाहुः **पुण्येत्यादि** । **प्रयत** इत्यादि च । फलानभिसन्धाने धर्मस्य किं प्रयोजनमित्यतः पक्षान्तरमाहुः **अन्येत्यादि** ।

**स्थिरमित्यत्र एतदङ्गमिति,** बुद्धिपूर्वकं मरणं स्मरणस्याङ्गं सन्निहितं
२-२-१५ सहकारीत्यर्थः । **उत्तराङ्गमिति** फलजननदशायां सहकारि ।

**मनः स्वेत्यत्र अत्रैव मुक्तिरितीति** । अत्रैव हृदयाकाश एवेत्यर्थः । एतेन (कठे)
'यदा सर्वे प्रलीयन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भव-
२-२-१६ त्यत्र ब्रह्म समश्नुत' तद् यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदꣳशरीरꣳशेते' बृ०४-४-७ इत्यादिका श्रुतिर्व्याख्याता ज्ञेया । **एवं स्थिते** इति स्वजीवमक्षरे संयोज्य स्थिते सतीत्यर्थः । **स्वकारणलयादिति,** देहकारणञ्च प्राणधारणप्रयत्नो वा अविद्याकामकर्माणि वा तल्लयश्चोपशमाज्ज्ञेयः । अत्रैवमुक्तौ प्रमाणमाहुः **तृतीय** इति, देवहूतिसंसिद्धौ स्फुटं, ततोवधेयम् ।

**न यत्रेत्यत्राभासे । क्षोभने कालो गुणाधीन** इति, गुणाधीनत्वे युगपदेव क्षोभये-
दितिक्रमदर्शनात्तथेत्यर्थः । विकारशब्दस्याहङ्कारबोधकत्वे विनिगमकमाहुः
२-२-१७ **अतो वै इत्यादि** । विकारशब्देन हि षोडशकमुच्यते । तदत्र देवानाभनीशत्वोक्त्येन्द्रियाणां जडतया च भूतानां प्रच्यावनासमर्थत्वात् कैमुतिकेनैव परास्तमिति विकरोतीतियोगान्महत्समभिव्याहाराच्चाहङ्कार एवोच्यत इति ज्ञापनार्थमतः सर्वथा प्रच्यावकत्वाद् वैशब्द उक्त इत्यर्थः ।



**परम्पदमित्यत्र उपचरितार्थत्वं वेति** । **वाशब्दोऽयर्थे** । **न चेत्यादि** । **अनया**
**शङ्कया** च सर्वत्र भगवद्भाववत्त्वमुख्याधिकारित्वमिति ज्ञाप्यते । **तथा च,**
२-२-१८ तदुक्तं तादृशानामेवोपयोगि, न तु सामान्यानामिति **सामान्यप्रत्ययर्थं**
सामान्याधिकारमाहेत्यर्थः । **पूर्वोक्तन्यायेनेति** 'स सर्वधीवृत्ती'ति श्लोकोक्तन्यायेन ।

**इत्थं मुनिरित्यत्र मननवत्साधनेति** । अत्र मतुब्ज्ञेयो न तु वतिः ।
२-२-१९ **विज्ञानमिति** निदिध्यासनरूपं समूहालम्बनात्मकं ज्ञानमित्यर्थः ।

**नाभ्यामित्यत्र** । अग्रेपदं तालुमूलस्थानविशेषणं ज्ञेयम् । **ततोनुसन्धायेत्यत्र**
**समावस्थितिभावमिति** उदानसाम्यमित्यर्थः । **केचिदिच्छन्तीति**
२-२-२० क्रममुक्त्यधिकारिणा योगिविशेषा इच्छन्तीत्यर्थः । तत्र हेतुमाहुः **अग्र** इत्यादिना । उपयोगश्च पवनान्तरात्मत्वम् । अथात्र प्रसङ्गादधिकारिविशेषकृतं प्रकारान्तरमाहुः **केचिदित्यादि,** ते च जीवन्मुक्तीच्छवो ज्ञेयाः । **इहैवेति,** बृहदारण्यकीयशारीरकब्राह्मणे'ऽथाकामयमान' इत्यधिकृत्य 'न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन्ब्रह्माप्येती'तिवाक्यानुरोधात् प्राणानां प्राणसहितानां इन्द्रियाणामत्रैवात्मनि 'अहमात्मा गुडाकेश'तिवाक्यनिरूपितहृदयाकाशवर्तिनि भगवद्विभूतिरूपे इन्द्रियमूलभूतासन्यरूपेण स्थितिमिच्छन्तीत्यर्थः । ननु जीवः स्वयं तत्रैव सायुज्यं प्राप्तः, तत्रैव प्राणा अपि सन्ति, तर्हि प्राणैर्भोगः कुतो न कार्यत इत्यत आहुः **भोगेत्यादि,** सुषुप्ताविव पाप्मनाऽविद्धत्वादेत्यर्थः । एवं प्रसङ्गाज्जीवन्मुक्तिर्व्याख्याता ज्ञेया । ननु जीवन्मुक्तिर्युज्यते, परं जीवस्यात्रैव सायुज्यप्राप्तौ इन्द्रियविसर्जनं तु दुर्घटम्, 'तमुत्क्रामन्तमि'ति(बृ०४-४-२)श्रुतिविरोधादित्यत आहुः **तमित्यादि** । **अमुक्तिविषयमिति** । तथैवोपक्रमादित्यर्थः । नन्व'स्य सौम्य पुरुषस्य प्रयतो वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाꣳ स य एषोणिमे'ति(छा०६-८-६)श्रुतौ मुक्त्यमुक्तिसाधारण्येन वागादिचतुष्कस्यैव लय उक्तो, न त्विन्द्रियत्याग इतीन्द्रियविसर्जनं श्रुतिविरुद्धमाभातीत्यत आहुः **उत्क्रान्तीत्यादि** । 'प्राणमुत्क्रामन्तं सर्वे प्राणा उत्क्रामन्ती'तिशारीरकब्राह्मणोक्ता या प्राणानामुत्क्रान्तिः 'हन्तास्यैव सर्वे रूपं भवामे'ति 'त एतस्यैव रूपमभवंस्तस्मादेत एतेनाख्यायन्ते प्राणा इती'ति सप्तान्नब्राह्मणोक्तं यत्प्राणव्रतचरणं तयोर्विचारेणापि 'वागि'त्यादिश्रुतावपि प्राणशब्देनेन्द्रियाण्युच्यन्ते इति तत्रापि सर्वेन्द्रियलय उच्यते एवेति स्वस्यागमनेपीन्द्रियत्यागः श्रुत्यविरुद्ध इत्यर्थः । गतशब्दस्य गमनार्थत्वमभिप्रेत्य पक्षान्तरमाहुः **गमने वेति** । गमनेऽणुपन्था विततः पुराणो मास्पृष्टोनुवित्तो मयैव । तेन धीरा अपियन्ति ब्रह्मविद उत्क्रम्य स्वर्गलोकमितो विमुक्ता', इतिशारीरकब्राह्मणे **ब्रह्मविद उत्क्रमोक्तेर्जीवस्य गमने आयुषोऽभावात्** । आयुर्जी-

१ इयं श्रुतिः ४ २-१ सूत्रभाष्ये विवृता ।

चितकालः जीवितश्च स्मरणाधीनं, स्मरणं वात्माधीनमिति तद्गमने तत्तद्भावेन तद्भावात् मुख्येत्यादिन्यायेन आसन्यानुरोधिनामिह लयः, 'न तस्मात्प्राणा उत्क्रमन्ती'त्युक्त्वानुपदमेव 'ब्रह्मविद उत्क्रम्य स्वर्गलोकमपियन्ती'त्युक्तेरिहासन्ने प्राणलयो न श्रुतिविरुद्धः इत्यर्थः । **तस्मात्** मुक्तस्य लिङ्गभङ्गभञ्जनसमर्थत्वादित्यर्थः ।

**यदीत्यस्याभासे आद्यस्येति** । प्रथमाधिकरणि इत्यर्थः । **पारध्यादिगमन**-
२-२-२२ मिति मृगयादिगमनम् । **विवृतौ प्राणैर्वेति**पक्षान्तरं "पवनान्तरा-
त्मनामि"ति वक्ष्यमाणविशेषणाभिप्रायेण ज्ञेयम् ।

**योगेश्वराणामित्यत्र चत्वारः सन्तीति** । एतेन विद्यादिरहिताः कुयोगिनो
२-२-२३ योगाधीना इति ज्ञापितम् । ते च 'विदूरकाष्ठाये'त्यत्र वक्ष्यन्ते । **परमधर्मे**
इति 'अयं हि परमो धर्मो यद्योगेनात्मदर्शनम्' इत्युक्त इत्यर्थः ।

**वैश्वानरं यातीत्यत्र तेजोरूपयेति** । तेजस ऊर्ध्वगामित्वं लोकप्रसिद्धमेवेति न
२-२-२४ कश्चित्संशय इत्यर्थः । **सकल्कत्वादिति** । वैद्यके जलेनैकीकृतं कल्कमि-
त्युच्यते । तथा च सकल्कत्वेऽद्भिः सम्परिष्वक्तस्य शिष्टं गोलकद्वयं कल्क-
मिति पूर्वमद्भिः सम्परिष्वक्तस्य गमनादित्येको हेतुः । 'तपो न कल्कोऽध्ययनं न कल्क' इत्यादौ कल्कशब्देनानिष्टकरं कर्मोच्यते । 'कल्कस्तु शमलैनसोः दम्भेपी'तिकोशात्तमर्थमादाय कामनाबाहुल्येनेति द्वितीयो हेतुर्ज्ञेयः ।

**तद्विश्वनाभिमित्यत्र** । विरजशब्दलिङ्गकं गोलकत्रयं पक्षान्तरेणाहुः **अथ**
२-२-२५ **वे**त्यादि । विरजशब्दस्यार्थान्तरमाहुः **सत्त्वमिश्रेण वेति** । विगतं
केवलं रजो यस्मादित्युत्तरपदलोपी ज्ञेयः । तत्र हेतुः **केवलेत्यादि** ।
**स्थानमन्यैर्नमस्कृत**मिति अत्र स्थानान्यपदयोरध्याहारः । **कल्पायुष इति** । 'अयो अनन्तस्ये'ति लिङ्गकृतो ज्ञेयः ।

२-२-२६ **अथोऽनन्तेत्यत्र**—अथोशब्दार्थकथनेन वायवीयदेहापरित्यागः सूचितः ।

**न यत्रेत्यत्र अन्यस्मादृते** इति । अन्यस्मात्कुतश्चित् पदार्थभूताद्वक्ष्य-
२-२-२७ माणलक्षणादुद्वेगाद् ऋते विनेत्यर्थः । तं विशदयन्ति **किन्तु स्वत
एवेति** ।

**घ्राणेनेत्यत्र कर्मेन्द्रियसहितेनेति** । इदं साहित्यं प्राणेन चेति **च** का-
२-२-२९ रेण द्योतितं ज्ञेयम् ।

**एते सृती**त्यत्र । गङ्गा मार्गद्वयप्रश्नस्याकृतत्वात् **स्वयाभिपृष्ट** इत्युक्तिर्न सङ्गच्छते
२-२-३२ इत्याशङ्क्याहुः **साधनेत्यादि** । क्रियमाणसाधनप्रश्नेन तत्प्रश्न उक्तो-
भवतीत्यर्थः ।



**न यतोऽन्य इत्यत्र स इति** । देहत्वावच्छिन्न देह इत्यर्थः । **तद्धेतुर्मार्ग इति**
श्रवणादिरूप इत्यर्थः । **तत्रेति** मार्गे **पूर्वभागः** श्रवणादिः । **मध्यभागः**
२-२-३३ मननिदिध्यासने । **अग्रिमः** सूक्ष्मध्यानरूपः । **तत्रेति** गमनसामग्री-
विचार इत्यर्थः ।

**भगवानित्यत्र पूर्वोक्त**मिति । पूर्वं स्वयमुक्तमित्यर्थः । **तत्साधकत्वेनेति**
भक्तिसाधकत्वेनेत्यर्थः । अन्यदितिपदाभ्यां मूलस्थतत्पदं तुरीयचरणश्च
२-२-३४ विवृतौ ज्ञेयौ ।

**भगवान् सर्वभूतेष्वित्यत्र आहेति** सकलदर्शनानां लक्षकत्वमाहेत्यर्थः ।
विवृतौ तैः **सर्वैरिति** शास्त्रकारैरित्यर्थः । कथं ज्ञात इत्याकाङ्क्षायामाहुः
२-२-३५ **नैयायिकैरित्यादि** । **अन्धहस्तिवदिति** । अन्धानुमितहस्तिव-
दित्यर्थः । तद्विशदयन्ति **अनुभवेत्यादिना** । **दृश्यैरिति** शास्त्रकारैरित्यर्थः । एतदेव मोक्षधर्म उक्तं 'तमेव शास्त्रकर्त्तारः प्रवदन्ति मनीषिणः' इत्यादिना । मूलस्थं **दृश्यैरीति**पदं कर्तृवाचकमिदं ज्ञेयम् । **जीवेष्वित्यादि** । तादृशाश्च क्रियादयः सर्वकर्मका ज्ञेयाः । तथा च सर्वविषयकक्रियावत्त्वं, सर्वविषयककर्मत्वं, सर्वात्मत्वं, सर्वकरणत्वं, सर्वविषयकज्ञानत्वं, सर्वज्ञातृत्वं, सर्वज्ञानाधिष्ठातृत्वं च तत्तन्मते भगवल्लक्षणं ज्ञेयम् ।

**तस्मादिति** एकदेशज्ञापकत्वादित्यर्थः । **तस्मादित्यत्र उत्तराङ्गसाहित्येनेति,**
२-२-३६ चित्ताचाञ्चल्यसाहित्येनेत्यर्थः ।

**पिबन्तीत्यत्र विषयसहितैरिति** इन्द्रियैरित्यर्थः । एतेन मूलस्थं **विषयपदं**
२-२-३७ पापिवाचकपापपदवद्विषयिवाचकमिति ज्ञापितम् ।

**इति श्रीद्वितीयस्कन्धसुबोधिनीप्रकाशे**

**द्वितीयाध्यायविवरणम् ॥ २ ॥**



श्रीकृष्णाय नमः ।

# अथ तृतीयाध्यायस्थश्रीसुबोधिनीप्रकाशः ।

अथ तृतीयाध्यायं विवरिषवः पूर्वप्रकरणस्य समाप्तत्वात्तदर्थमनुवदन्तः प्रस्तूयमानप्रकरणार्थनिरूपणमुखेन तयोर्हेतुहेतुमद्भावरूपं सङ्गत्यन्तरमपि स्फुटीकुर्वन्ति, अन्यथा एतादृशे महाफले कुतो न सर्वेषां प्रवृत्तिरिति शङ्का स्यादिति तामपि निवारयन्ति (कारिकायां) **श्रोतव्येत्यादि** । श्रोतव्यविषयेत्यत्र कर्मधारयः । **तेन रूपेणैवं** प्रमाणादिपूर्वकं द्वाभ्यां वस्तुतत्त्वं शुकेन उद्देशेन निरूपितम् । **अस्य** श्रवणस्य **निपुणं** फलोपकारि **साधनं विनिरूप्यते**, इदानीं शुकेन व्यासपादैश्चोच्यते इत्यर्थः ॥ १ ॥

एवं पूर्वप्रकरणार्थनिरूपणमुखेन सामान्यतस्तं प्रत्यस्य हेतुतां प्रदर्श्योत्तरं प्रत्यपि तां दर्शयितुं विशेषाकारेणास्यार्थमाहुः **अदृष्टमित्यादि** । **अदृष्टं दृष्टञ्च** साधनमत्रापि **सम्मतमवश्यं वाच्यं**, वचसा स्फुटीकरणीयम् । ननु शाब्दज्ञानस्य सङ्केतग्रहमात्रसापेक्षस्य पूर्वाध्यायाभ्यां जातत्वात् किमन्येन स्वरूपोपकारिणा, श्रवणस्य फलजननेऽसहायशूरत्वात्किमन्येन फलोपकारिणेत्याशङ्कायां दृष्टादृष्टसाधनस्य सम्मतत्वेऽवश्यवाच्यत्वे च गमकमाहुः **अन्यथेत्यादि** । साधनान्तरस्यासम्मतत्वेऽनावश्यकत्वे च क्रियमाणः **ब्रह्मवर्चस्कामेनेत्यादिना** शुकना "युरि"त्यादि २।३।१।शौनकवाक्योपन्यासाद् व्यासचरणै'र्भूयः' २।४।६।इत्यादिप्रश्ने राज्ञा, पुनः२।४।१२। नमनादिवाक्यैः शुकेन क्रियमाणः अग्रिमप्रकरणे **क्रियमाणो विमर्शो व्यर्थतां व्रजेत्**, जाते शाब्दज्ञाने मुधैव स्यादतो ज्ञायते निर्धार उद्देशमात्रेण न भवतीति तेन दृष्टादृष्टसाधनकथनमावश्यकमित्यर्थः ॥ २ ॥

किन्तदित्याकाङ्क्षायामाहुः **इन्द्रियेत्यादिसार्द्धेन, साध्यं** श्रवणं कीर्त्तनञ्च **पूर्णे** तात्पर्यनिर्द्धारान्तं तत्पूर्वकञ्च **सम्पद्यते** । **अतो** हेतोः **अत्र प्रकरणे द्वयं** पूर्वार्द्धोक्तमदृष्टं दृष्टञ्च **साधनद्वयमीर्यते** । तमेवाभिप्रायमनुसन्धाय द्वयोः श्रद्धापि ज्ञाप्यते, **गम्यते** इति णिजन्तात्कर्मणि प्रयोगः । एवञ्चात्र साधनद्वयस्य प्रतिपाद्यत्वेप्यदृष्टस्य दृष्टद्वारैवावगमादृष्ट्या भगवदनन्यत्वरूपायाः श्रद्धायाः स्फुटत्वात्तस्या एव मुख्यतया प्रकरणार्थतेति न पूर्वोक्तविरोध इत्यर्थः ॥ ३-३½ ॥

तेन फलितमभिप्रायान्तरमाहुः **तस्मादित्यादि** । एवं प्रकरणार्थनिर्द्धारादयं व्यासाशयो ज्ञायते इत्यर्थः ॥ ४ ॥ (कारिकाङ्कः समाप्तः)

एवं सङ्गतिं दर्शयित्वाऽन्यभजनबोधकवाक्यानामुपोद्घातरूपां सङ्गतिं प्रकृतार्थे दर्शयिष्यन्तः पीठिकामाहुः **एवमित्यादि, तयोरिति**, तयोर्मध्ये । **बहिर्मुखत्वादिति** इन्द्रियाणां तथात्वात् । **इतिहेतौ** ।



**ब्रह्मवर्चसेत्यादीनां** तात्पर्योक्तौ **निराकरणार्थमिति** । **तद्भजनमनुवदतीति** शेषः । **वेदेत्यादि** । तथा च, बृहदारण्यके 'कत्येव देवा' इति शाकल्य-

२-३-२ प्रश्ने याज्ञवल्क्येन तथा निर्द्धारात्तावतीषु यथा सर्वान्तर्भावस्तथात्रापीति। तावतैव सर्वेतरभजननिराकरणसिद्धिरित्यर्थः । **सर्वे इति** । तत्र पक्षान्तरेणोक्ताः अन्यश्चोक्ताश्च । **ते चेत्यादि** । तथा च, त एवात्र नामान्तरेणोच्यन्ते इत्यर्थः । अन्तर्भावश्च द्वादशादित्येषु श्रौतानां मासानां 'आददानायन्ती'तिव्युत्पत्तेरुभयत्र साधारण्यात् । साहङ्कारेष्विन्द्रियेषु, प्राणरूपाणां रुद्राणां, सोमे नक्षत्राणां, 'नक्षत्राणामहं शशी'तिवाक्यात्, शेषाः स्फुट्य इवेति ज्ञेयम् । **सत्त्वाभिमानिनीत्यादि** । इन्द्रस्य सत्त्वाभिमानित्वं देवमुख्यत्वात्, देवानां सत्त्वारब्धत्वादिति । **प्रजापतीनिति** । एतेषां तमोधिष्ठातृत्वं प्रजायाः संसाराविच्छेदापादकत्वेन तामसत्वात् तत्पतित्वेन तत्राधिकृतत्वात् ।

**देवीमित्यनेन** ब्रह्मानन्दरूपा व्यावर्त्यते । **वागभिमानिनीति** 'तेजोमयी वागि'तिश्रुतेर्वाचस्तेजोविकारत्वेन तेजस्कामस्य तद्भजनकथनादिदम-

२-३-३ वगम्यते । वसूनां गन्धाभिमानित्वं गन्धगुणकभूर्लोकजयश्रावणेनाग्रे व्युत्पाद्यम् । तथैव रुद्राणामाकाशाभिमानित्वमाकाशजयेनाग्रेतनग्रन्थाद्बोध्यम् । रुद्रभजने तात्कालिकफलकथनं विश्वासजननेन तद्भजनस्य दुर्वारत्वायेति बोध्यम् ।

अन्नम् अद्यम्, आद्यं वा यत्रेत्यन्नाद्यमिति व्युत्पत्तौ समृद्धिरप्यन्नाद्यपदेनायातीत्यतः पक्षान्तरमाहुः **अन्नसमृद्धिर्वेति** । **जलस्येति** विश्वेषां जला-

२-३-४ भिमानित्वं, 'सर्वा देवता आप' इति श्रुतेर्जलस्य तथात्वेन विश्वेषां च सर्वदेवाधिष्ठातृत्वाज्ज्ञेयम् । साध्यानां वाद्यभिमानित्वं फलबलाद्वायुवदन्तर्बहिर्वर्त्तित्व एव चित्तप्रावर्त्तनादिसिद्धिरिति । **लोकमातृत्वं गुण इति** । एतं गुणमनुसन्धायैव तद्भजनार्थमयमुक्त इत्यर्थः । श्रुतौ 'इदं द्यावापृथिवी सत्यमस्तु पितर्मातरि'त्युक्तत्वादेवं मातृत्वं न युक्तमित्यरुच्या पक्षान्तरमाहुः **मातृकेत्यादि**। 'गौरी १ पद्मा २ शची ३ मेधा ४ सावित्री ५ विजया ६ जया ७। देवसेना ८ स्वधा ९ स्वाहा १० मातरो लोकमातर' इति स्मृतौ तासु तथात्वस्य प्रसिद्धत्वेन तद्रूपत्वमनुसन्धायेत्यर्थः । **पुण्यजना जलस्येति** । अत्र स्पर्शस्येतिपाठः प्रतिभाति । पूर्वमग्रे च स्पर्शदेवताया अनुक्तत्वात् । 'प्रतिसिञ्चन् विचिक्रीडे यक्षीभिर्यक्षराडिवे'त्यादौ तेषु स्पर्शसुखवत्त्वप्रसिद्धे विशेषु देवेषु स्पर्शसुखगमकानुपलम्भाच्च । अत्र यद्यपि मूले ब्रह्मणस्पतिप्रभृतीनां रजआद्यधिष्ठातृत्वं न प्रोक्तं, तथापि श्रुतिपुराणान्तराद्युक्तं ज्ञेयम् । वाराह आदित्रेतावृत्तान्ते, गणपतेराकाशाभिमानित्वस्य स्कन्दस्याहङ्काराधिष्ठातृतायाश्चोक्तत्वेनान्यत्रैवं क्रमस्यापि सम्भावितत्वादिति । नन्वत्रेतरभजननिराकरणार्थं तेषु वाक्येषु

तत्तत्कामनाया उल्लेखो न युक्तः, लोकप्रवाहसिद्धत्वात् । तथा देवतानामप्युल्लेखो न कर्तव्यः । **अकाम** इतिश्लोकस्थस्य यजेतेतिपदस्य परिसङ्ख्यात्वे सुखेन तन्निवृत्तिसम्भवादित्याकाङ्क्षायां तत्कथनप्रयोजनं वक्तुं तेषु याजिप्रयुक्ताया देवपूजायाः स्वरूपमाहुः **इयमित्यादि** । 'वाक्यान्वया'धिकरणे 'पुनश्च भूयाद्भगवत्यनन्ते रति'रित्यत्र प्रथमस्कन्धे चोपपादितत्वात्तथेत्यर्थः । ननु तत्तत्कामना तर्हि न स्यात् सर्वासु कामनासु स एव स्नेहविषयत्वेन तदर्थकक्रियोद्देश्यत्वेन च प्रकाशेतेत्याकाङ्क्षायां तथा तदप्रकाशे हेतुमाहुः **स तथेत्यादि** । ननु वेदे ब्रह्मण औपनिषदत्वस्य उक्तत्वात्तेन तत्प्रकाशस्य सम्भवान्न तत्र तेजोपेक्षेत्यत आहुः **वेदेनेत्यादि** । निषेधतयैव निरूपणात्तथेत्यर्थः । **साक्षादिति केवला** इत्यर्थः । ननु तर्हि धर्मोक्तेः का गतिरित्यत आहुः **नापीत्यादि** । तदुक्त्या **यथाकथञ्चन** शाब्दं भवतु न तु तत्प्रत्यक्षमपि वेदोक्तसाधनैः प्रत्यक्षेपि ब्रह्मणि समवेता अपि धर्मा अभिव्यञ्जकस्य सहकारिणोऽभावात्प्रत्यक्षतया न प्रकाशन्ते इत्यर्थः । **सामर्थ्य**मिति कामयितव्यमित्यर्थः । तत्र हेतुः **न हीत्यादि** । तथा चात्र कामितस्य लोकप्रवाहसिद्धत्वाभावात्तदुल्लेख इत्यर्थः । देवतोल्लेखप्रयोजनमाहुः **तद्ब्रह्मेत्यादि** । तथा चात्रोक्तानां देवतानामप्यतिरिक्तत्वात्परिसङ्ख्यापि वक्तुमशक्येत्यतस्तदुभयकथनमित्यर्थः । इममेव प्रकारमग्रेप्यतिदिशन्ति **एवमित्यादि** । 'इन्द्रस्ये'त्यादिश्रुतिस्तु तैत्तरीयसंहिताद्वितीयाष्टकेस्ति । 'इन्द्रस्य वृत्रं जघ्नुष इन्द्रियं वीर्यं पृथिवीमनुष्यार्च्छत्तदोषधयोविरुधोभवन्निति स प्रजापतिं पशूनब्रवीदेतस्मै सन्नयतेति तेध्यात्मन् समनयत्, तत्प्रत्यदुहन्नि'त्याद्युक्त्वा तत इन्द्रेण 'न तु मयि श्रयते' इत्युक्ते, 'एतदस्मै श्रितं कुरुते'त्याज्ञप्ते, ततः श्रयणोत्तरमिन्द्रेण 'न तु मा धिनोती'त्युक्ते,'एतदस्मैदधिकुरुते'ति दधिकरणं तत्रोक्तम् । तेनेन्द्रस्य तथात्वात्स एव सेव्य इत्यर्थः । अन्नान्नाद्ययोः कथं सेवासाधनत्वमित्याकाङ्क्षायामाहुः **यथादिष्टेत्यादि** । तदभावे लोक **इष्टतमस्य** स्वप्रियस्य चाभावाद्वाक्यार्थबाधापत्तिरिति तेन तयोस्तथात्वमित्यर्थः । **अदित्युपाख्यानं** ''त इमं लोकमजयन्नि''त्यादिश्रुतिश्च सप्तमाष्टके पठ्यते । **तत्र तानुवृत्त्येति** रोदस्योः वृतस्य लोकमातृत्वरूपस्य पोषकत्वनुसरणेन । 'रूपमि'तिश्रुतिस्तु वाजसनेयिनां मण्डलब्राह्मणस्था । एवमेतेन सन्दर्भेण कामनाया भगवत्सेवोपयोगित्वेन देवतानाञ्च वायोः क्षेपिष्ठत्ववत्तत्सामर्थ्यवद्भगवदंशत्वेन लोकप्रवाहसिद्धेभ्यो भेदः साधितः ।

**अकाम** इत्यत्र तद्भजननिराकरणबीजमाहुः **भगवतैवेत्यादि** । तथा च, पूर्वं
२-३-१० 'श्रोतव्यादीनि राजेन्द्रे'ति (२-१-२) ''नान्यत्र सज्जेदिति'' (२-१-३९)
''तन्निवृत्तो नियतार्थो भजेते''त्यादिभिः (२-२-६) पर्युदस्तस्य पुनः
**पर्युदासायोगादप्ययमेव द्युकाम इत्यर्थः** ।



**ज्ञानमित्यत्र सिद्धसाधनसाध्य** इति । तथा सिद्धं यद्भगवद्भक्तस्वरूपं
२-३-१२ साधनं, तत्साध्यः ।

**तरव** इत्यत्र **हस्तादाना** इति । एतदग्रे 'पुरुषो हस्तिमर्कट' इति वाक्य
२-३-१८ शेषात्तथेत्यर्थः ।

**श्वविडित्यत्र नैतदित्यादि** । एतन्निन्द्यपशुत्वं न पुरुषमात्रसाधारणमिति ज्ञापयितुं
येषां तत्रोपयोगोस्ति **तद्व्यावृत्त्यर्थमाह** श्रुतिविशेषमाहेत्यर्थः । तं
२-३-१९ बोधयितुं श्रुतित्रयं दर्शयन्ति **''मोघमि''**त्यादि । आद्या तैत्तरीयब्राह्मणद्वितीयाष्टकेस्ति । 'मोघमन्नं विन्दतेऽप्रचेताः सत्यं ब्रवीमि वध इत्सतस्य, नार्यमणं पुष्यति नोसखायं केवलाघो भवति केवलादी'ति भार्यापुत्रादिमात्रपोषकस्य कुक्षिम्भरेरत्र निन्दोक्ता । अग्रिमद्वयं तु बृहन्नारायणीयोपनिषदि (७९) अन्नेन प्राणाः, प्राणैर्बलं, बलेन तपस्तपसा श्रद्धा, श्रद्धया मेधा, मेधया मनीषा, मनीषया मनो, मनसा शान्तिः, शान्त्या चित्तं, चित्तेन स्मृतिःस्मृत्या स्मारःस्मारेण विज्ञानं, विज्ञानेनात्मानं वेदयति, तस्मादन्नं ददन् सर्वाण्येतानि ददात्यन्नात्प्राणा भवन्ति, भूतानां प्राणैर्मनो मनसश्च विज्ञानं विज्ञानादानन्दो ब्रह्मयोनिरि'त्येकस्मिन् प्रकरणे द्विवारमाम्नानादुभयोपयोगौ निरूपितावित्यर्थः । **तत्रेत्यादि**- पक्षद्वयमध्ये आद्ये अप्रचेतस्त्वपक्षे तादृशानां पूर्वोक्तपशुतुल्यतेत्यर्थः । **स्वानामिति** वाक्यं तु 'प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहमि'ति वक्ष्यमाणं ज्ञेयम् । शेषमतिरोहितार्थम् ।

**इति श्रीद्वितीयस्कन्धसुबोधिनीप्रकाशे**
**तृतीयाध्यायविवरणम् ॥ ३ ॥**



श्रीकृष्णाय नमः ।

# अथ चतुर्थाध्यायस्थश्रीसुबोधिनीप्रकाशः

अथ चतुर्थाध्यायविवरणं चिकीर्षवः सङ्गतिं बोधयितुं द्वाभ्यां पूर्वाध्यायार्थमनुवदन्ति **साधनमित्यादि** । क्रिये श्रवणकीर्त्तनरूपे, तयोः कर्त्तारौ एकशेषकृतं द्वित्वं तयोर्विभेदतः अतिवैराग्यरूपाद्वैलक्षण्यादत्र द्विविधं दृष्टादृष्टरूपं साधनं प्रकर्षेणास्मिन् प्रकरणे उक्तम् । तत्र पूर्वाध्याये **क्रियाङ्गानि** श्रवणाद्यङ्गानि भगवद्रतिभगवदीयसङ्गौ तदुभयसाधिका कथारतिश्चेत्येतानि साक्षात्परम्पराभेदेन **द्विरूपतो** वर्णितानि । न च तानि शुकोक्तावेव सिद्धानि, न शौनकोक्ताविति शङ्कनीयं, **प्रश्नेपि** शौनककृते उत्तरशेषत्वात् । उत्तरं प्रति कारणतया तदङ्गत्वात् क्रियायाः तदङ्गभूतायाः सत्सङ्गमक्रियाया निरूपणाच्च तानि वर्णितानि यतः **कार्यसिद्धिः** श्रवणसिद्धिर्यतः स्वरूपतो ज्ञानतश्च द्विप्रकारिका । तथा चैवं श्रवणस्य शब्दग्रहणेऽर्थज्ञाने चैतदुक्तसाधनैरुपकारादेतस्य पूर्वप्रकरणाङ्गत्वहेतुतासङ्गतिरित्यर्थः ।

एवं पूर्वाध्यायार्थमनूद्योत्तरकरणं प्रत्यपि येन रूपेण हेतुता तद्बोधयितुं चतुर्थाध्यायार्थं सार्द्धैश्चतुर्भिराहुः **साधनमित्यादि** । **यतो** येन साधनेन **मुख्ययोः** श्रोतृवक्त्रो**र्विमर्शाधिक्रिया** विचाराधिकारस्तत्साधनमुच्यते । तत् किं क्षौमे वसानावाऽदधीयातामितिवदुभयकर्तृकमेकम्, उत तत्तत्कर्तृकं पृथगित्याकाङ्क्षायामाद्ये श्रोतरि **ससाधनः** सद्बुद्ध्यादिरूपसाधनसहितः **प्रश्नोऽधिकारकृत्** । अथैतादृशप्रश्नान्तरं **ज्ञात्वा** देवगुर्वोः स्वरूपमवगत्य **देवे गुरावपि विशेषतः** यन्नमनं तद्धि **यतो** हेतोः प्रश्नस्य **सामान्यमुत्तरम्** । अतो **वक्तुरधिकारकृत्** । तथा च, विशेषप्रश्नरूपत्वेन सङ्क्षिप्तोत्तररूपत्वेन चैतस्मिन्नुक्तस्य तत्तत्कृतसाधनस्योत्तरप्रकरणं प्रति हेतुतेत्यर्थः । अत्र **ज्ञात्वेति** पदमुपचक्रम इत्यस्यार्थसूचकम्, 'ज्ञात्वारम्भ उपक्रमः' इतिकोशात् । फलितमाहुः **अत** इत्यादि । सूतोक्तिसङ्गतिमाहुः **व्यवसायेत्यादि** । तथा चाङ्गनिरूपकत्वात्सङ्गतिरित्यर्थः । एवं व्यासोक्तिसङ्गतिमुक्त्वा व्याचिख्यासवः सूतोक्तेऽवसररूपां सङ्गतिमाहुः **एवमित्यादि** ।

**इति कारिकाप्रकाशः** ।

**वैयासकेरित्यत्र** **अनेनेति** । शुकवचसा **मूले तत्त्वनिश्चयमित्यत्र** तत्त्वस्य
२-४-१ निश्चयः इति व्यधिकरणपदो बहुव्रीहिः ।

**पप्रच्छेत्यत्र** **उन्नतिसिद्ध्यर्थमिति**, उन्नतिज्ञानार्थम् । ननु राजप्रश्नानामुत्तरं
सर्वं शुकेनोक्तमेवेति तदवगतौ पुनः किमिति पृच्छ्यत इति शङ्कायामाहुः
२-४-२ **उक्तार्थस्य च साधनतासिद्ध्यर्थमिति** । पूर्वं शुकेनोक्तस्यार्थस्यापि



प्रश्नसाधनतासिद्ध्यर्थम् । तथा च, पूर्वोक्तार्थस्यापाततोऽवगमाद्भवद्वाक्यस्यैव सन्देहजनकतेति शुकबोधनार्थं पुनः पृच्छ्यत इत्यर्थः । **साधनत्वादिति** दुर्ज्ञेयत्वेन प्रश्नप्रयोजकत्वात् ।

**संस्थामित्यत्र पुनश्च भूयादिति** । प्रार्थनावाक्येनैव रतिदार्ढ्यस्योक्तत्वे नात्र
पुनः कथनप्रयोजनाभावादात्मपदवैयर्थ्याच्च नेदं युक्तमित्यरुच्या पक्षा-
२-४-४ न्तरमाहुः **आत्मन** इत्यादि । **अग्रे स्थितिरूपामिति** भावविकाराद्भिन्नाम् । अस्मिन् पक्षे गत इत्यत्रादिकर्मणि 'क्तः' । अस्य क्लिष्टत्वात् पक्षान्तरमाहुः **आत्मत्वं** येति, अहंग्रहेण तदभेदमित्यर्थः ।

**समीचीनमित्यत्र** **अभिनन्दनमिति** । राजकृतं तद्, अर्थाज्ञाने कथं वाक्यस-
मीचीनत्वमित्याकाङ्क्षायामुत्तरार्द्धस्यार्थमाहुः **तथापि ममेत्यादि** । तथा
२-४-५ च, कार्यबलात्तथा ज्ञायत इत्यर्थः ।

**भूय एवेत्यत्र** **अर्थापरिज्ञानादिति**, भूतभव्यव्यवहारविषयत्वानन्तत्वबोध-
कयोर्वाक्ययोः परस्परविरोधेन तत्तात्पर्यापरिज्ञानात् । **आधार** इति
२-४-६ उपादाने । **नाशिनस्य नाशनमित्यादि**, नष्टः पुनरुत्पन्नः पुनर्नष्ट इतिवद्वा । काष्ठादेर्वह्नित्वं ततो भस्मत्वं ततो वायुजलादिना तस्याप्यभाव इतिवद्वा तथेत्यर्थः ।

**यां यामित्यत्र** **अत्रेति**, सृष्टिप्रक्रियायां विश्वस्मिन्वा । **पश्यत्यपीति** सन्देहेषु **न**
**करोतीति** चकारलभ्योऽयं पक्षः । **अन्यदेवेति** इन्द्रजालमिवेत्यर्थः ।
२-४-७ **अन्येपि पक्षा** इति, एकां शक्तिं क्रीडयन् आत्मानं विकरोति, शक्त्यन्तरं वा विकरोति, कालादीन् वा आत्मरूपान् करोतीत्येवमादयः ।

**नूनमित्यस्याभासे** **अत** इति, 'अतिवादांस्तितिक्षेते'तिवाक्येन ममातिवादोपे-
क्षकत्वात् । **विभूतौ, केन गुणेनेति**, ऐश्वर्यादिषट्कमध्ये केन । **अत**
२-४-८ **एवेति**, अद्भुतकर्मत्वादेव । **अत** इति, अप्रसरूपत्वात् ।

२-४-९ **यथा गुणानिति** श्लोकं व्याकुर्वन्ति **किञ्च केनेत्यादि** ॥

**इत्युपामन्त्रित** इत्यत्र **स्कन्धादावित्यादि** । एतेन प्रार्थनां विना भगवद्गुणा न
२-४-११ वक्तव्या इति भक्तिमार्गीयः सिद्धान्तः सूच्यत इत्यर्थः ।

**नमः परस्मा** इत्यत्र कारिकासु **एतावदिति**, उपक्रमशब्दवाच्यमेतावदित्यर्थः ।
**अन्यदिति**, एतदेवेतिश्लोकोऽग्रिमश्च । **क्रीडार्थमिति** क्रीडेच्छया ।
२-४-१२ एतेन **सदुद्भवस्थाननिरोधलीलापदे** मयूरव्यंसकादिसमासो बोधितः । सदुद्भवस्थाननिरोधार्था लीलेतिसमासादरणे "स वै नैव रेमे" इत्यादिपुरुषविध-

श्राम्यणविरोधादिति । अत्र श्लोके **भूयस** इत्यादिविशेषणद्वयेन व्यष्टिरूपनिरूपणं बोध्यम् । इदञ्च पद्यं 'कुर्वन् कर्माणि जन्मभिरि'त्येतद्व्यतिरिक्तसर्वप्रश्नोत्तररूपं ज्ञेयम् ।

**भूय** इत्यत्र—**इदानीमवतारे**त्यादि । एतेन 'कुर्वन् कर्माणी'त्यस्योत्तरमिदमिति
ज्ञाप्यते । **इति भूयः पदमिति,** अस्मिन् पक्षे भूयः सद्वृजिनच्छिद् इति
२-४-१३ मूलान्वयः । **दुःखदूरीकरणमिति,** वृजिनपदस्य पापवाचित्वेपि दुःखस्य
पापजन्यत्वाद्दुःखमूलस्य पापस्य छेदेपि दुःखच्छेदनमेव प्रयोजनत्वेनायातीति तथोक्तम् । दुःखोच्छित्तेरेव पुरुषार्थत्वादिति । तदेतत्स्फुटीकुर्वन्ति **यद्यपी**त्यादि । **भगवद्भिर्निर्गमनमारभ्येति,** भगवतः सकाशाद्विभागमारभ्येत्यर्थः । ननु भूयःपदस्य नमस्कारविशेषणत्वपक्षेऽवतारस्य किं गमकमित्याकाङ्क्षायां तत्र कार्यस्यैव गमकत्वमाहुः **किञ्चे**त्यादि । **पुनरुत्पत्त्यभावाये**ति । सम्भवः पुनरुत्पत्तिः तस्याभावो यस्मादित्यर्थः । **देहग्रहण** इति, इदमावेशस्थलमादायोक्तम् । **सत्त्वसन्देह** इति । उत्पत्त्युत्तरकालीनस्य तस्य भावविकारत्वेनागन्तुकत्वात्तथेत्यर्थः । **अत** इति, साधनाभाववैकल्यस्य । **अत** इति, तदीय इत्यादिना वक्ष्यमाणाद्धेतोः । ननु साधनानां सत्त्व एवोपक्षयेऽवतारस्यापि तादर्थ्ये कथं चिदानन्दयोः प्राप्तिरित्यत आहुः **किञ्चाखिले**त्यादि । तथा च, सत्त्वगुणादेव प्राप्तिरित्यर्थः । भूयःपदस्यावतारविशेषणत्वपक्षे कथं दुःखं दूरीकरोतीति प्रकाराकाङ्क्षायां **सत्तामसम्भवाये**ति तादर्थ्यचतुर्थ्यन्तमखिलेत्यादिनान्वेतीत्याशयेन पक्षान्तरमाहुः **अखिलानी**त्यादि । तद्व्युत्पादयन्ति **अनेने**त्यादि । अनेनेत्यस्य **नैवंविधे**रयादिनान्वयः । उद्धार्याणां सतां प्रारब्धवशेनानन्तजन्मसम्भवेपि मुक्त्यविलम्बार्थं 'तस्य पुत्रा दायमुपयन्ति सुहृदः पुण्यकृत्यां द्विषन्तः पापकृत्यामि'ति श्रुत्युक्तन्यायेनोद्धार्यप्रतिनिधितया सर्वविधोत्पादनादुत्पादितानां भगवदवतारेणैव सम्माननहननाभ्यां स्वप्रतिनिधितया जाते भोगे उद्धार्याणां सर्वप्रारब्धादिभारावतारात्तेषां पुनरनुत्पत्तिप्रकारबोधनादेवं प्रकारेण तादृशं रूपमुक्तमित्यर्थः । ननु तादृशां सनकादितुल्यत्वात् किं मृग्यमित्याकाङ्क्षायामत्र 'पुंसामि'ति साधारणपदात्तेषां स्वरूपं तन्मृग्यञ्च स्फुटीकुर्वन्ति **सनकादी**त्यादि । ते हि द्विविधाः, पूर्णज्ञाना अतादृशाश्च । तत्र द्वितीयानां दयापात्रत्वात्तेषां क्रममुक्त्यादिदात्र इत्यर्थः । **अनुमृग्यमि**त्यत्रानुलक्षणे कर्मप्रवचनीयः, तेन द्वि ।। **अनुमृग्याणां दाश्र** इति स्वर्थकथनं "**दाशुष**"इतिपदेन सूचितमर्थमाहुः **वैदिके**त्यादि । नन्वेवं सति साधारणानामेवार्थे भगवदवतारो न तु ज्ञानिनां तस्योपयोग इत्यरुच्या पक्षान्तरमाहुः **विचार्यं वेति** । **इदानीमिति** पूर्णज्ञानोत्तरम् । **स्वात्मद** इति हंसरूपेण स्वात्मप्रकाशक इत्यर्थः । तदुपपादयाहुः **न हीत्यादि, प्रकारान्तरेणेति,** अवतीर्य दानव्यतिरिक्तेन । नन्वेवं सति ज्ञानस्य वैयर्थ्यमेव स्यादित्यत आहुः **ज्ञानेनापी**त्यादि । तथा च, भानान्न वैयर्थ्यमित्यर्थः । व्यवस्थितपदसूचितमर्थमाहुः **पुनः**



**पुनरिति,** अन्यथा व्याख्याने व्यवेतिव्यर्थं स्यादित्यर्थः । **मानस** इति, 'मानसं वै प्राजापत्यं पवित्रमि'ति श्रुत्युक्तेः[1] ........................................ एवञ्च मूलेऽनुमृग्यपदे एकशेषमहिम्नार्थान्तरलाभान्न पूर्वोत्तरद्वयविरोध इतिबोधितम् । ननु ज्ञाने जाते विचार्यत्वं न युज्यते इत्याकाङ्क्षायां प्रकारान्तरेणाहुः **आत्मे**त्यादि ।

**नमो नम** इत्यत्र **इदानीमि**त्यादि । सन्देहपञ्चकनिवारणोत्तरं नमनपौनःपुन्य-
फलस्य वास्तविकफलस्य च सन्देहं निवारयन्नित्यर्थः । **अत एवेति** 'पुरुषः
२-४-१४ स परः पार्थ भक्त्या लभ्यस्त्वनन्यये'तिवाक्येऽनन्यभक्तिलभ्यत्वकथनादेव ।
**तदेवेति** भक्तिमेव, सामान्ये नपुंसकम् । **सर्वैरेव साधनैरिति,** सर्वसाधनप्रयोजनं भगवत्साक्षात्कारस्तस्मिंश्च जाते इदमेव कर्त्तव्यमिति सर्वेषां तेषामेतावदेव प्रयोजनमित्यर्थः । ननु सामान्यतो नमनापेक्षयात्र नमने को विशेष इत्यपेक्षायामाहुः **किञ्चे**त्यादि । इदं नमनं न वन्दनमात्रमिति ज्ञापनायाहुः **किञ्च सात्त्वते**त्यादि । **अस्वाधीन** इति जीवानधीनः । ननु भगवतो व्यापकत्वात् कथं दूरकाष्ठात्वमित्याशङ्कायां तत्स्वरूपमाहुः **प्रासी**त्यादि । **अत** इति । विशेषणद्वयोक्त्या एतावतेतिपदं इतिसूचितमित्यनेनान्वेति । **एतावतेति,** उत्तरार्द्धेन । **अत** इति, गृहसेवकत्वाभावात् । **अनयेति,** नहि कश्चित्कञ्चित्स्नेहव्यतिरेकेण गृह आनयतीति गृहानयनरूपयेत्यर्थः । **अत** इति तादृशप्रेम्णा केवलं भगवदेकतन्त्रत्वात् ।

**यत्कीर्त्तनमि**त्यत्र । ननु भक्तिमध्ये ईक्षणस्य भक्तिमध्ये गणनाभावेन तत्राप्रवेशात्कथं
तस्याः षड्विधत्वमित्यत आहुः **ईक्षणमि**त्यादि । तथा च, पादसेवनसाध्य-
२-४-१५ तावदितस्यैव तस्यात्र विवक्षितत्वात्तेन धर्मेण षड्विधत्वोपपत्तिरित्यर्थः ।
नन्वत्र बाह्यभक्तिरेव चेद्विवक्षिता स्यात्तदा श्रवणादिक्रमं न जह्यादतो गायमाशय इत्यत **अत्रे**त्यादि । अत्रेति संसारिकृतेषु । तथा च, प्रयोजनभेदात्क्रमभेद इति न दोष इत्यर्थः । तर्हि कीर्तनादिक्रमे को हेतुरित्यत आहुः **तत्रे**त्यादि । **तत्रेति** पदार्थभेदे विवक्षिते । **स्वस्येति** कीर्त्तयितुः । नन्वसति क्रमे विवक्षिते क्षणमेवात्रोच्यत इत्यत्र किङ्गमकमित्यपेक्षायामीक्षणान्तरे बाधकमनुवदन्तः प्रकृतं साधयन्ति **एवमि**त्यादि । **निष्ठुरिरि**त्यन्तम् । **अन्तर्भावनये**ति सानुभावाधिष्ठानस्यान्तर्भावनया । किन्तदित्याकाङ्क्षायामाहुः **यदि**त्यादि । श्रुतिस्तु तैत्तिरीयकारण्येस्ति, 'यदन्नमद्म्यनृतेनदेवादास्यन्नदास्यन्नुत वा करिष्यन् । यद्देवानां चक्षुष्यागोस्ति यदेव किञ्चित प्रतिजग्राहमग्निर्मातस्मादनृणं कृणोतु, यदन्नमसि बहुधा विरूपं वासो हिरण्यमुत गामजामधिं यद्देवानामि'त्यादि । 'यन्मया मनसा वाचा कृतमेनः कदाचन, सर्वस्मात्तस्मान्मेलितमोग्धितऽ हविरस्य, यथातथामि'ति । **प्रतिप-**

[1] अन्यसंवादप्रतिफलकेऽपि नास्ति इयं पङ्क्तिः ।

**त्त्विरूपमिति** अवान्तरविनियोगरूपम् । **तत्त्वेनेति** सत्काररूपार्हणत्वेन । अत्राग्रहेणैवं भक्तीनां भेदनिरूपणे मूलस्थं लोकपदं फलकथनञ्च बीजत्वेन बोध्यम् । एवमेतत्फलकथनेन यत् सिद्धं तदाहुः **अत** इत्यादि । **मूले** यच्छब्दावृत्त्या भगवत्सम्बन्धेनैव तेषां फलजनकत्वबोधनात् सर्वत्र भगवत्कीर्तिरेव तथात्वं पर्यवस्यतीति **सा तथेति** सिद्धमित्यर्थः । ननु तर्हि प्रायश्चित्तवद्भद्रत्वमस्तु कथं सुभद्रत्वमित्यत आहुः **भद्रेत्यादि** । 'कर्मणा कर्मनिर्हारो न ह्यात्यन्तिक इष्यते' (६–१–११) इतिवाक्यात्प्रायश्चित्तानां बुद्धिस्थवासनात्मकपापनाशकत्वाभावेन । अस्यास्तु भद्रे वासनात्मकतन्नाशकत्वेनाभद्रे चोभयविधतन्नाशकत्वेन समीचीनासमीचीनयोस्तुल्यत्वादियमभद्रस्यात्यन्तनाशिकातस्तथेत्यर्थः ।

**विचक्षणा** इत्यत्र **षड्विधपापेति** । स्वसमानाधिकरणस्वव्यधिकरणाधिभौतिकाध्यात्मिकाधिदैविकभगवदपराधजनकभगवन्माहात्म्यज्ञानप्रतिबन्धकमा-
२-४-१६ यातत्कार्यान्यतरभेदेन षड्विधे पाप इत्यर्थः । उपसादनस्य निकटगतौ ज्ञापने च छान्दोग्यादिषु प्रसिद्धत्वात्, 'षद्लृ'धातोः विशरणगत्यवसादने रूढत्वादत्र मूले चरणोपसादनस्य को वार्थो विवक्षितः ? इत्यपेक्षायां प्रकारविशेषेण सर्वेप्यपेक्षिता इति बोधयन्तो व्याकुर्वन्ति **एवमित्यादि** । **अवसन्ना भवन्तीति** । वैचक्षण्येन चरणनिकटगताः प्रथमं पूर्वावस्थानुसन्धानेन क्लिष्टा भवन्ति, तस्यैव फलं **न तत** इत्यादि । **तदेति**, अनुपयोगदशायाम् । **शैथिल्यमिति**, विशरणरूपम् । **उभयतः सङ्गव्युदास** इति, बहिश्चान्तरतश्च सङ्गविशरणम् । **उपसन्ना** इति, निकटे प्राप्ताः । **अत** इति उक्तप्रकारेण गतिसामर्थ्यलाभात् । समासद्वयस्य तात्पर्यमाहुः **अक्षरस्येत्यादि** । एतेन 'ब्रह्मैव गतिर्ब्रह्मगतिरि'तिसमासे गतिपदवैयर्थ्यं बोधितम् । सिद्धमाहुः **अत** इत्यादि । नन्वक्षरस्य व्यापकत्वेन गत्यसम्भवात्तेन सह गतिरनुपपन्ना इत्याशङ्कायां तद्गतेः स्वरूपं वदन्तस्तस्य गतिमुपपादयन्ति **तस्य** हीत्यारभ्य **क्रियास्वरूपमित्यन्तेन** । गतेर्ज्ञानरूपत्वे गमकमाहुः **अत एवेति** । अक्षरगतेर्ज्ञानरूपत्वादेव ज्ञानस्य क्रियात्वं गतिकर्मकधात्वर्थत्वं चोपपद्यते । अन्यथा ज्ञानस्य क्रियारूपत्वाभावात्तदर्थकानां जानात्यादीनां धातुत्वमेव न स्यात्, क्रियावाचित्व एव तत्सञ्ज्ञाविधानात् । 'ये गत्यर्थकास्ते ज्ञानार्था' इति च । तथा च, व्याकरणस्मृतिरेव तत्र गमिकेत्यर्थः । ननु क्रियाया यत्नोत्तरभावित्वात्तत्पूर्वभाविनो ज्ञानस्य कथं क्रियात्वं व्याकरणस्मृतेस्तु पारिभाषिकत्वाङ्गीकारेप्युपपत्तेरित्यत आहुः **ज्ञानस्य चेत्यादि** । तथा च, पारिभाषिकत्वस्यागतिकगतित्वाद्भगवति ज्ञानप्रयत्नादीनां नित्यत्वेन तत्पूर्वोत्तरभावस्य लौकिकत्वेन च तत्रादूषणत्वान्न ज्ञानस्य क्रियात्वाङ्गीकारे कोपि दोष इत्यर्थः । अत्र 'यस्य ज्ञानमयं तप' इतिश्रुतिरपि अनुग्राहिका ज्ञेया । नन्वेवमाग्रहे किम्बीजमत आहुः **भगवत** इत्यादि । तथा चासम्भवोऽप्रसिद्धिश्च



बीजमित्यर्थः । ननु 'यज्ञो वै विष्णुरि'तिश्रुतेरस्त्येव प्रसिद्धिरिति चेत्तत्राहुः **यागानां त्वित्यादि** । तथा च, सापि प्रसिद्धिराविर्भावोत्तरकाल एव, नत्वनाविर्भाव इति मोक्षाधिकरणे सा न वक्तुं शक्येत्यर्थः । ननु 'तदेजती'त्यादिषु तादृश्यप्यस्ति प्रसिद्धिरित्यत आहुः **तदित्यादि** । तथा चेदमपि रूपान्तरप्रतिपादकत्वात्तत्तुल्यमेवेत्यर्थः । सिद्धमाहुः **तस्मादित्यादि तस्मादिति** । उक्तश्रुत्यादीनामेव चारितार्थ्यात् । ननु तथापि विभागपूर्वसंयोगनाशोत्तरसंयोगानां क्रियागमकानामभावात्कथं तथात्वावगतिरित्यत आहुः **अत** इत्यादि, **अत** इति । अव्यक्ते सच्चिदानन्दातिरिक्ताभावाद्यथा विषयाद्विषयान्तरं गृह्णन्मनः मनो गच्छतीति प्रतीतिमुत्पादयति, न तु हृदयं विहाय गच्छति, हृदय एव तथाभानात् । गमनेऽमनःस्कत्वापत्तेश्च । तथा ज्ञानमिव प्रकाशस्वभावमव्यक्ते ब्रह्मणि तद्रूपेण वर्तमानान् विषयान् प्रकाशकत्वेन क्रमाद्व्यञ्जयद् गच्छतीव प्रतिभाति, तेनालोचनात्मकं ज्ञानमेव भगवतः क्रियारूपमित्यर्थः । तथा च, यथाविर्भावदशायां 'प्राणन्नेव प्राणो भवती'त्यादिश्रुत्या तत्तत्कार्यकर्तृत्वात्प्राणादिरूपत्वं ब्रह्मणस्तथाविर्भावपूर्वदशायां ज्ञानात्मकस्य तस्यैव क्रियाकार्यकर्तृत्वात्क्रियारूपत्वमितिभावः । ननु भवत्वेवं ज्ञानरूपस्यैव क्रियात्वं, तथापि प्राप्तिः कथं, नहि तदालोचनं जीवः प्राप्नोति, अभिध्यातृत्वस्य भगवदसाधारणत्वादित्याकाङ्क्षायामाहुः **तस्मादित्यादि** । भगवतो ज्ञानस्यैव गतिरूपत्वाद् भगवतो ज्ञानं यथा भगवद्रूपेण भगवति वर्तमानसर्ववस्तुप्रकाशकत्वेन धर्मेण गतिरूपम्, तथा सृष्टीच्छावशगो मुख्यजीवोपि सृज्यमानसर्ववस्तुप्रकाशकत्वाद्गतिरूपः । **गतिं चैतन्यरूपं** सृष्टीच्छावशगं मुख्यजीवं विन्दन्ति, सूत्रोक्तरीत्या तदात्मका भवन्ति । तथा च, तदात्मकत्वमेव प्राप्तिरित्यर्थः । एतस्य श्लोकस्यायमेवाशय इत्यत्र गमकमाहुः **अत एवेत्यादि** । तथा च, मध्यमकक्षात्वादेव 'नमो नमस्तेऽस्त्वि'तिश्लोके उत्तमकक्षारूपा भक्तिः दास्येन भगवद्रस मुख्यं प्रापयति । 'यत्कीर्तनमि'तिश्लोके हीनकक्षारूपा पापनाशं करोति । अत्र श्लोके मध्यमकक्षारूपा ब्रह्मरूपतां सम्पादयति इतिफलभेदविवेकः । **फलभेद** इति स एव गमकः इत्यर्थः । नन्वेवं सति ज्ञानमार्गात् को विशेषः इत्याकाङ्क्षायामाहुः **गतक्लमा** इत्यादि, **वैलक्षण्यमित्यन्तम्** । **अत एवेति**, अस्मादेव विशेषात् । **उभयत्रेति**, पूर्वश्लोकेऽत्र च ।

**तपस्विन** इत्यत्र **तेषां स्वरूपसन्देहमिति** । केवलकर्मैकनिष्ठाः शुद्धकर्मिणः उत
२-४-१७ भगवति कर्मार्पकाः शुद्धकर्मिण इत्येवं प्रकारकं सन्देहमित्यर्थः । विवृतौ
'कूपारामादी'त्यादिपदेन यशोजनकानां काव्यकरणादिरूपाणां कर्मान्तराणामपि सङ्ग्रहः । ननु 'कर्मणैव हि संसिद्धिमास्थिता जनकादय' इत्यादिवाक्यैः **केवलस्य कर्मण एव संसिद्धिसाधनतावगतेः समर्पणे को वा विशेष इत्याशङ्कायां समर्प-**

**णादेव संसिद्धिर्न** तु केवलेन कर्मणेत्युपपादयिष्यन्तः प्रथमं तदवान्तरभेदरूपस्य तपसस्तथात्वमाहुः **तप** इत्यादि । तपःशब्दस्य सन्तापार्थकधातुनिष्पन्नत्वादर्थस्य च कृच्छ्रादिरूपत्वात्तादृशं तत्सन्तापात्मकम् । तपस्तु **पाकवत्साधनपर्यवसायि**, पाकः अन्नादिविक्लितिः, सा यथा सुखसाधनीभूते भोजने पर्यवस्यति, तथेदमपि देहेन्द्रियाणि पाचयत्सुखसाधनीभूते भोगे पर्यवस्यतीति **न सुखं प्रयच्छति**, न सुखदमित्यर्थः । ननु पाकजन्यस्य तापस्यान्यनिष्ठत्वेन तपसश्च स्वनिष्ठत्वेन वैलक्षण्याद् अग्रे सुखलाभदर्शनाच्च सुखदत्वमङ्गीकार्यमित्यत आहुः **नहीत्यादि** । सुखानुभवदशायां क्लेशराहित्यदर्शनेन सन्तापात्मकस्य तपसस्तदानीमभावान्न तस्य सुखदत्वमङ्गीकर्तुं शक्यमित्यर्थः । ननु 'तपसा देवा देवतामग्र आयन्' तपसर्षयः सुवरन्वविन्दन् तपसा सपत्नान् प्रणुदामारातीस्तपसि सर्वं प्रतिष्ठितं तस्मात्तपः परमं वदन्ती'त्यादिश्रुत्युन्नीतविधिभिस्तपसः फलदातृत्वस्य विहितत्वाद्देवत्वादिद्वारास्तु तपः सुखदमित्यत आहुः **विहितत्वादित्यादि** । उक्तरीत्या विहितत्वात् साक्षात्सुखददेवत्वादिलक्षणफलदानेपि **दातुस्तपसः** सम्बन्धाभावाद्देवत्वादिकं जनयित्वोपक्षयेन सुखकरणत्वस्याशक्यवचनतया सुखेन सह सम्बन्धाभावात् साधनपर्यवसायित्वमेव, न तु सुखदत्वमित्यर्थः । ननु केवलतपसः सुखसम्बन्धाभावकथने भगवदाज्ञप्ततपःफलबोधकस्य 'ब्रह्मणे दर्शयन् रूपमि'त्यादिवाक्यस्य विरोधः स्यादित्यत आहुः **आज्ञामात्रेत्यादि**, भगवदाज्ञामात्रेण । **तथाकरणेपि** भगवद्विचारानुरूपतपःकरणेपि **स्वात्मसमर्पकत्वेनैव तद्बोधनाभिप्रायात्** । 'तपोधन' इत्यादिप्रयोगेण तपोरूपं यत् स्वं धनं तेन सहित आत्मा स्वात्मा, तत्समर्पकत्वेनैव तस्या आज्ञाया बोधने तथा ज्ञापनेऽभिप्रायात् । मदीयः सन् तपः कृत्वा मामर्पयेत्येवं प्रकारकभगवत्तात्पर्यात् । न केवलतपसा तादृक्फलम्, अपि तु समर्पिते तपसि भगवतैव तादृशं फलम्, अतो नोक्तवाक्यविरोध इत्यर्थः । स चाभिप्रायः सप्तमाध्याये 'तप्तं तप' इत्यत्र नवमे च 'दुस्तोषः कूटयोगिना'मित्यत्र स्फुटो भावी । ननु दृष्टद्वारा मास्तु तपसः सुखसाधनत्वमदृष्टद्वारा तत्कल्पने को दोष इत्यत आहुः **अदृष्टेत्यादि** । तथापि **फलजनने मानाभावात्**, दृष्टेन समर्पणेनैव फलसिद्धौ सम्भवत्यामदृष्टकल्पनस्यान्याय्यत्वात्, तत्कल्पने प्रमाणानुपलम्भात् । ग्रहिलतयाऽदृष्टाङ्गीकारेपि 'कर्षयन्त' इतिवाक्ये भूतग्रामकर्षणरूपबाधश्रवणाच्च नादृष्टद्वारापि तत्कल्पयितुं शक्यत इत्यर्थः । नन्वेवं सति 'फलमत उपपत्तेरि'तिन्यायेन साक्षात् परम्परया वा भगवत एव फलदातृत्वाद् भगवदाज्ञप्तेपि तपसि सन्तापात्मकत्वतौल्येन साधनपर्यवसायित्वस्यापि तौल्यात्केवलतपस्यपि यथा कथञ्चिद्भगवतैव यदा कदाचित्सुखसम्भव इति को विशेषः समर्पण इत्यत आहुः **मत्त** इत्यादि **करोतीत्यन्तम्** । 'सुखं दुःख'मित्यारभ्य 'मत्त एव पृथग्विधा' इत्यन्ते वाक्ये **स्वस्यैव सुखहेतुत्वव्यपदेशात् परम्पराकल्पने** मानाभावात् भगवदाज्ञप्तमपि तपः देहेन्द्रियादिपाचनेन तेषां **भगवत्क्रीडौपयिकतां सम्पादयद्द देहं भगवद्योग्यं**



करोति, भगवद्विचारितकार्यकरणक्षमं करोति । तथा सति तदा प्रसन्नः स्वयं साक्षादेव सुखं प्रयच्छतीति अयमेव विशेष इत्यर्थः । ननु फलस्य तौल्ये परम्परयैव तदस्तु को दोष इत्यत आहुः **यत्त्वित्यारभ्यार्हतीत्यन्तम्** । तथा च, परम्परादृतेऽयं दोष इत्यर्थः । नन्वेवं दानेन भगवान् किं साधयतीत्यत आहुः **एवमित्यादि** । एवं तन्निबन्धेन अवशिष्टानि भोग आच्छिन्ने तत्करणार्थमुर्वरितानि अकृतभोगानीति यावत् । तादृशान्याच्छिन्नभोगानि देहेन्द्रियाणि शोधयति, स्वकार्यकरणक्षमानि करोतीत्यर्थः । एवं सति भगवद्विचारितानुपूर्वीकतपःकरणे भगवदीयत्वम् । विहितेन कृत्वा समर्पणे शुद्धकर्मित्वम्, असमर्पणेऽशुद्धत्वम्, अविहितकरणे चासुरत्वमिति तत्स्वरूपविवेकः । इदमेवं 'यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्' 'अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते' 'अभिसन्धाय तु फलं' मूढग्राहेणात्मनो यदि'-त्यादिवाक्यैर्भङ्ग्यन्तरेणोच्यते इति ज्ञेयम्, तेन सर्वमनवद्यम् । एवं तपसः साधयित्वा दानस्यापि साधयन्ति **दत्तेत्यादि प्राप्तिरित्यन्तेन** । ननु 'दानयज्ञानां वरूथं दक्षिणा लोके दातारं सर्वभूतान्युपजीवन्ति दानेनारातीरपानुदन्त दानेन द्विषन्तो मित्रा भवन्ति दाने सर्वं प्रतिष्ठितं, तस्माद्दानं परमं वदन्ती'त्यादिश्रुत्या दानस्य परमत्वबोधनादस्तु केवलक्षेमसाधकत्वमिति पूर्वपक्षनिरासे नुः । तथा च, दानस्य तथात्वेपि दत्तद्रव्यस्येत्याद्युक्तरीत्या द्रव्यस्य तथात्वात् केवलदानस्य न फलसाधकत्वं निश्चितम्, अपि तु द्रव्यविनियोगसहकृतस्यैव तन्निश्चितम्, अन्यथा'ऽर्हानर्हापरिज्ञानाद्दानधर्मोपि दुष्करः' । 'अपात्रेभ्यश्च दीयते तत्तामसमुदाहृतं' 'सत्यं ब्रवीमि वध इत्सतस्य' 'दीयमानं रुदत्यन्नमि'त्यादीनि वाक्यानि विरुध्येरन् । अतः द्रव्यविनियोगसहितस्यैव दानस्य फलसाधकत्वात्तद्विनियोगस्य च ज्ञातुमशक्यत्वाद् भगवत्कर्तव्यभूते तस्य सम्प्रदानस्य पोषणे दानक्रियायाः पर्यवसानात् । यस्य भक्तादिरूपस्य सम्प्रदानस्य पोषणं भगवता कर्तव्यमस्ति तत्रैव दानक्रियायाः फलसाधकत्वं पर्यवस्यति । पात्रापात्रविवेकबोधकशास्त्रे तदसमर्पणे 'क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते स्वाम्यं तु तत्र कुधियोऽपर ईश कुर्युरि'तिवाक्येन सर्वस्य भगवदीयत्वाद् दत्तस्य भगवत्यसमर्पणे स्वातन्त्र्ये दानार्थमपि ततः स्वयं ग्रहणेन स्वातन्त्र्ये **सुतरां न क्षेमप्राप्तिः** । चौर्येण प्रत्युतानिष्टमिति तपोवदस्यापि व्यवस्थेत्यर्थः । एतेन 'ददासि यत्' 'दातव्यमिति यद्दानमि'त्यादीन्यपि पूर्ववदेव ज्ञेयानि । एवं दानस्य साधयित्वा प्रयोजनकेषु कूपारामादिष्वतिदिशन्ति कूपेत्यादि । **दानवदेव तस्य निर्णय** इति । कूपादौ पशुमनुजपातादिना क्षारकटुभावादिना वाऽपेयत्वे, आरामादौ शुष्कीभावे, चोरजारमद्यपादिभिरुपद्रुतत्वे तत्कर्तुः पापमेव निमित्तमन्यथा सर्वत्र तथा स्यात् । एवं सति तत्कर्मणोपि कूपादिविनियोगसहितस्यैव फलसाधकत्वाद्विनियोगस्य च ज्ञातुमशक्यत्वात्तदसमर्पणे स्वातन्त्र्ये पूर्वोक्तपापभावित्वम् । सद्विनियोगेपि स्वाम्यस्य करणादेव कुधीत्वम् । समर्पणे तु विश्रामजनकेत्याद्युक्तरीत्या तस्य कूपादिकर्मणो निर्णय इत्यर्थः । काव्येपि 'न

तद्वचश्चित्रपदं' 'तद्वाग्विसर्गो जनता' इत्यादिवाक्यैस्तथात्वं स्पष्टम् । अत्रापि 'यत्करोषि' 'कार्यमित्येवे'त्यादीनि पूर्ववदेव ज्ञेयानि । अथ योगस्य तथात्वं साधयन्ति **मनस्विन** इत्यादि । अत्र 'मनस्वि'शब्दो दानशौण्डे युद्धवीरे अन्येषु च तादृशेषु प्रयुज्यते, तत्र योगिपरामर्शे किं बीजमित्याशङ्कानिरासे तुः । **मनस्विशब्दवाच्या योगिन एव** । तत्र हेतुः, **न** इत्यादिः । **विचारिता** इति । तथा चाग्रे निराकार्यत्वाभावे पूर्वं न ते विचारिताः स्युः । अतो न पुनर्निराकार्यास्तथाप्यत्र तदुक्तिस्तु 'अयं हि परमो धर्मो यद्योगेनात्मदर्शन'मिति धर्मप्रकरणे पाठेन प्राकरणिकत्वाज्ज्ञेया । ननु 'योगेनैव दहेद्देहं धारणाभिश्च किल्बिषा'नित्यादिवाक्यैर्योगस्य पापनिवारकत्वस्मरणात्कुतो न क्षेमप्राप्तिरित्यत आहुः **सर्वेषामित्यादि, सम्भवतीत्यन्तम्** । तथा चैतान्यपि वाक्यानि समर्पणपराण्येव । एवं पूर्वत्रापि यथासम्भवं ज्ञेयानि । एवं योगस्य साधयित्वा श्रौतस्मार्तधर्मस्यापि तथात्वं साधयन्ति **धर्ममार्ग** इत्यादि । **आदि**पदेन 'वासिष्ठोह सात्यहव्य' इतिश्रुत्युक्तोपाख्याने भगवदसमर्पणहेतुकसृञ्जयपराभवोक्तिः । सापि स्मार्यते । श्रुतिस्तु वासिष्ठो ह सात्यहव्यो देवभागं पप्रच्छ यत्सृञ्जयान्बहुयाजिनोऽपि यजोयज्ञे यज्ञं प्रत्यतिष्ठिपा यज्ञपताविति सहोवाच यज्ञपताविति, सत्याद्वैसृञ्जयाः पराबभूवुरिति होवाच, यज्ञे वा यज्ञः प्रतिष्ठाप्य आसीद्यजमानस्यापराभावायेती'ति । सप्तम्यन्तेन यज्ञपदेन 'यज्ञो वै विष्णुरि'ति श्रुत्युक्तो भगवानुच्यते । प्रतिष्ठाप्येत्यनेन च समर्प्य इति । अन्यथा स्वरूपेण यज्ञस्य स्वस्मिन् सत्त्वात् को वा प्रतिष्ठापदार्थः स्यादिति । तथा चोक्तवाक्यादिषु कीर्तनादसमर्पणादिभिर्नाशसम्भवोक्तेस्तदभावाय समर्पणं युक्तमित्यर्थः । सुमङ्गलपदोक्ताः सदाचारास्तु सर्वानुगाः पूर्वोक्तविचारेणैव विचारितप्राया इति पुनर्न विचारिताः । नन्वत्र कीर्तिपुरःसरं नमने किं बीजमित्याकाङ्क्षायां फलोत्कर्ष एव बीजमिति सदृष्टान्तमाहुः **लोकेष्वित्यादि** । **कालनाशः**, कालेन **पदार्थनाश** इत्यर्थः । **भगवदीयानां** भगवति समर्पितानां तपआदीनामित्यर्थः । ननु यत्पुरःसरं नम्यते सा कीर्तिः का वेत्यत आहुः **मार्गत्रयेत्यादि** । **अन्येषां** पद्यत्रयोक्तविधेभ्यो भिन्नानाम् । **तत्र** भक्तिमार्गे ज्ञानमार्गे वेत्यर्थः ।

**किरातेत्यस्याभासे तदिति** । तस्माद् उक्तभगवद्वाक्यादित्यर्थः । अत्र कोटि-
द्वयकथनेन 'वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः । न शौरिचिन्ताविमुख-
२-४-१८
मुखजनसंवादवैशसमि'तिस्मारितं ज्ञेयम्, अन्यथा **किराते**तिपद्योक्तिर-
सङ्गता स्यादित्यर्थः । विवृतौ **प्रभविष्णुत्वमिति** प्रकर्षेण सत्तासम्पादकत्वमित्यर्थः । ननु भगवदाश्रितत्वमात्रेण चेच्छुद्धिस्तदा भगवतो विश्वाधारत्वेन दुष्टदैत्यानामपि तदाश्रितत्वात्तेपि शुद्ध्यन्तामित्यत आहुः **अपेत्यादि** । **निवारितमित्यन्तम्** । तथा च, "अप"



नामातिशयोऽधिकः व्याप्तो वा परितो वा आश्रयः अपाश्रयो, यो भगवानपाश्रयो येषां ते यदपाश्रयाः, तानाश्रयन्त इति **यदपाश्रयाश्रयास्ते शुद्ध्यन्तीति** कथनाद्येषां यथाकथञ्चिदाश्रयस्ते न शुद्ध्यन्तीत्यपोपसर्गेणायाति । **तेन** हेतुना तेषां शुद्ध्याश्रयत्वं निवारितमित्यर्थः ।

**स एष** इत्यत्र । ननु प्रसादस्यैव साधनत्वे स एष भगवान् प्रसीदतामित्येव
वक्तव्यं विशेषणान्तराणां किं प्रयोजनमित्यत आहुः **अन्यस्त्वित्यादि** ।
२-४-१९
तथा च, साधनान्तरोपक्षयज्ञापनमेव प्रयोजनमित्यर्थः । ननु प्रसादे कथं सर्वसाधनोपक्षय इत्यपेक्षायामाहुः **लोकेत्यादि** । तथा च, लोकादेर्भ्रान्तित्वात्प्रमाणाकुलीभावे तदुक्तसाधनानामपि तथात्वात्तत्प्रामित्याद्यर्थं प्रमेयप्रसाद एवावश्यक इति तथेत्यर्थः । ननु कथमिदं विनिगन्तव्यमित्याकाङ्क्षायां कारिकाभ्यां श्लोकार्थं सङ्गृह्य विनिगमनोपायमाहुः **तथेत्यादि** । एते आत्मादिपदोक्ता अधिकार्यादयोप्यापाततः **प्रसादहेतवः प्रोक्तास्तस्मादापातप्रतिपन्नाश्लेषितं प्रार्थनमेव** श्रेष्ठम् । तत्र हेतुः **सम्प्रार्थने** हीत्यादि । तस्मादत्र श्लोके साधननिश्चय एव क्रियते, अन्यथा प्रसादातिरिक्तं साधनान्तरमेव प्रार्थयेदतस्तथेत्यर्थः । अत्र**आत्मवतामिति**पदे आत्मा चात्मा चात्मानौ, तदुभयवतामित्यर्थो विवक्षित इत्यभिप्रेत्याहुः **आत्मशब्देनेत्यादि करोतीत्यन्तम** । मयडत्र प्राचुर्य इत्यभिप्रायं स्फुटीकुर्वन्ति **तच्छ्रेत्येप**त्यादि । तेन सिद्धमाहुः **तत** इत्यादि । तथा च 'यमेवैष' इति श्रुत्या 'अनुगृह्णदाशुष' इति पूर्वनिर्द्धारणेन च दानं विनाधिकारप्रमाणाभ्यां तत्फलं न लभ्यत इति दानं प्रसादाधीनमिति तस्यैव सर्वसाधनोपक्षयात् स एव साधनमित्यर्थः । ननु तर्हि उत्तरकाण्डोक्तया गुरूपसत्त्या लभ्योऽस्त्विति चेत्तत्राहुः **सतामित्यादि** । तत्र हेतुः **यत** इत्यादि । 'नत्रनिर्मिता'त्यत्र **इनि** हेतौ । ननु तेषु प्रसन्नश्चेत्प्रत्यक्षामूर्तहिं तत्तर्कितं फलजनकमिति निश्चितम्, तथा सति तदुपसादनेन तदुक्तं कर्त्तव्यं, किं प्रार्थनयेत्यत आहुः **तत्रेत्यादि** । तथा च, यथा तत्र प्रत्यक्षं गमकं तदतिरिक्तस्वरूपतत्प्रसादप्रकाराणां शब्दो गमक इति प्रमाणयोः परस्परविरोधे प्राप्ते विहितकरणेनैव तेषां तथासामर्थ्यात्तत्प्रत्यक्षस्य शब्दोपजीवकतया न तद्बाधनसामर्थ्यम् । तस्य कार्यलिङ्गकानुमानगृहीतत्वाच्छब्दो न तं बाधितुं शक्नोतीति समानबलत्वात्प्रामाणिकस्यार्थस्वरूपसाधनयोस्तावन्मात्रलाभाभावो निश्चीयत इत्यर्थः । ननु यद्येवं स्यात्तदा तावन्मात्रलाभमात्रमवगच्छेयुस्ततश्च न कल्पयेयुरतो नैवमत आहुः **ते त्वित्यादि** । ( तथा च, यद्यपि ) तथापि, तेषामेकसाधनकत्वाभावात्तद्विकल्पे प्राप्ते व्यवस्थापकत्वाभावात्केन साधनेन प्रसाद इत्यनिश्चये प्रसादप्रार्थनमेव युक्तमित्यर्थः । तदेतद्धृदिकृत्वाहुः **तस्मादित्यादि**, **तस्मादिति**, प्रसादसाधनेषु स्वोपकारकत्वेनैकतरस्यानिश्चयात । फलितमाहुः **तस्मात्प्रार्थनायामित्यादि** । **तस्मादिति** । एवं शास्त्रतर्काद्यालोचने प्रार्थनाया एवोपकारकत्वनिर्णयात ।

**श्रियः पति**रित्यत्र । प्रसादप्रार्थनायामधिकारिणं निश्चेतुं श्लोकमवतारयन्ति **यदि
२-४-२० प्रार्थनायामित्यादि, साधारण्यादि**ति । एतस्यैव विवरणमन्य**स्याप्रा-
र्थितत्वादिति सामान्येपी**ति प्रसाद इत्यर्थः । **रूपमि**ति प्रार्थनीयस्य
धर्मं **तच्चेषामित्यादि** । तथा च, ये पतित्वेन भगवन्तं नानुसन्दधते त एवानधिकारिण
इति तादृशैरेव प्रसादप्रार्थने क्रोधः नेतरान्प्रतीतिबोधनाय मन्दादींस्त्रिविधानधिकारिणः
क्रमेण वदन् तत्र प्रथमं मन्दानां पतिरिति निरूपयतीत्यर्थः । **भगवत्पतित्वज्ञापकमि**ति,
भगवतः सर्वयज्ञपतित्वज्ञापकम् । तथा चैवमनुसन्धाय प्रार्थने भगवतो न क्रोध इत्यर्थः ।
**यत्काम्यधेतेति पाठे,** यत्तदोर्नित्यसम्बन्धात्तदित्यस्याध्याहारः । **अल्पविशेषैरि**ति,
उत्तमकुलोत्पन्नादिरूपप्रकर्षयुक्तैः । **फलमुखते**ति प्रार्थनायाः **फलमुखता** । **स्वनिष्ठत्वे
सति साधनतामि**ति, उपभोज्यनिष्ठत्वे सत्युपभोगसाधनताम् । तत्र गमकं **न ही**त्यादि,
**स्वतन्त्र** इति उदासीनः । **क्रियारूपोपि जात** इति, तथाभवनं च वृद्धानां युवत्या-
दिना भगवदवतारोत्तरं केवलानामपि सात्यकिप्रभृतीनां 'सौवीरराजमहिषीं भोजां नाम हरद्व-
लादि'त्यादिषु भारतीयवाक्येषु पराक्रमवर्णनाज्ज्ञेयम् । **अत** इति एवं कृपाकरणात् । **क्रिया-
साध्यरूप** इति, जन्यफलरूपः । **गुणेष्वि**ति भगवदीयेषु गुणेषु लीलासु च । **औपचा-
रिकमि**ति दूरस्थतया प्रार्थितदानादक्रोधाच्च तथेत्यर्थः ।

**पदद्वयनुध्यानेत्यत्र प्रक्षालनमात्रेणे**ति । बुद्धिप्रक्षालनमात्रेण । **स्पष्टं न
भवती**ति, अधोक्षजत्वेन लौकिकप्रमाणागम्यत्वाद्वेदे च निरुक्तत्वश्रावणा-
२-४-२१
त्तथेत्यर्थः । बुद्धिरत्र ज्ञानजनकं पदार्थान्तरमित्यग्रे स्फुटीभविष्यति । तत्र
केन प्रकारेण पश्यन्तीत्याकाङ्क्षायामुपपादयन्ति **बुद्धिरित्यादि** । ननु बुद्धेर्वस्तुप्रकाशकस्व-
भावत्वे तेनैव विषययाथात्म्यस्फूर्तिसम्भवाद्बुद्धिक्षालनस्य को वाऽत्रोपयोग इत्याहुः **सेत्यादि,**
सा उत्पन्नापीत्येवं योजना । **स्वावरणाद्विषयावरणा**दिति, स्वावरणकृताद्विषयावरणात् ।
बुद्ध्यावरणञ्च मायाकृतव्यामोहविषयतादिकृतं ज्ञेयम्, तच्च नवमाध्याये स्फुटीभविष्यति ।
तथा च बुद्ध्यावरणतिरस्कारार्थं क्षालनमावश्यकमित्यर्थः । नन्विन्द्रियाणां बुद्धिजनकत्वा-
त्तान्येव क्षालनीयानि किं तस्याः क्षालनेनेत्यत आहुः **इन्द्रियाणामित्यादि** । तथा च,
क्षालितेषु तेषु बुद्धिमात्रमुत्पत्स्यते न तु यथार्थबुद्धिरिति तत्क्षालनं नात्रोपयुज्यत इत्यर्थः ।
ननु शुद्धेष्विन्द्रियेषु जाते च विषयसन्निकर्षे तद्विषयकबुद्धावुत्पन्नायां कुतो न याथात्म्य-
स्फूर्तिरित्यत आहुः **विषयमात्रमित्यादि** । तथा च, तादृशभ्रमदर्शनेन बुद्धिक्षालनाभावा-
देव न याथात्म्यस्फूर्तिरिति तदावश्यकमित्यर्थः । तेन सिद्धमाहुः **अत** इत्यादि, अतः
बुद्धित्वेन विषयत्वेन कार्यकारणभावात् । **सामग्र्यन्तर्वशात्** स्वगतेन्द्रियगतगुणदोषव-

१ 'गत'स्थाने 'गण'पाठः ।



शात् । **तत्र** शुद्धसामग्रीसमवधाने । ननु बुद्धेस्त्रिक्षणावस्थायित्वनियमेन क्षणान्तरे
नाशात् कृतमपि क्षालनमप्रयोजकमित्यत आहुः **अत्रेत्यादि** । तथा च, तस्याः **स्थिरत्वा-**
ङ्गीकारात्तदावश्यकमेवेत्यर्थः । ननु जातिव्यक्त्योर्भेदाभावे घटपटाद्यनुगताकारप्रतीतिबाध-
प्रसङ्ग इत्यत आहुः **एक एवेत्यादि,** यथा घटानयनापसारणपौनःपुन्ये एकेनैव प्रतीति-
सिद्धिस्तथाऽनेकधा भवनेपीति प्रतीत्यबाध इत्यर्थः । न च विशिष्टज्ञानस्य विशेषणज्ञान-
जन्यत्वनियमेन जात्यभावे घटत्वज्ञानाभावाद् घटोयमिति ज्ञानानुदयप्रसङ्ग इति-
वाच्यम्, इन्द्रियेण पदार्थज्ञानोत्तरं शब्दसंस्कारादिसहकृतया बुद्ध्या पृथुबुध्नोदराद्याकारे
निश्चिते तमादाय सुखेनोदयसम्भवात् । न च प्रतीतौ विलम्बाभावान्नैवमिति वाच्यम्,
अभ्यासादेव सिद्धेः । अत एव प्राथमिकप्रतीतौ विलम्बोपि युज्यते । केवलविशिष्टज्ञानस्थलेऽ-
तीन्द्रियस्य विशेषणज्ञानस्य स्वीकारे मानाभावान्न तेनाविलम्बसिद्धिः । ननु जात्यभावे
सामान्यप्रत्यासत्तेरप्यभावाद् घटत्वेन रूपेण सकलघटज्ञानानुत्पत्तिप्रसङ्गः, न चेद्युपपत्तिः
कर्तुं शक्या, धूमत्वेन वह्नित्वेन (सामान्य)व्याप्तिग्रहे तदुपयोगाद् इति चेत् न, एकस्यां
व्यक्तौ धूमवह्निव्याप्तिग्रहे जाते तस्य ज्ञानस्य स्थिरत्वेन भूयोदर्शनाद्दार्ढ्ये सति पुनर्धूमान्तरेण
तद्बोधनान्निर्वाहे सामान्यव्याप्तिग्रहस्यानावश्यकत्वात्तदावश्यकत्वेऽपि समानाकारत्वमादा-
यैव सामान्यव्याप्तिग्रहसम्भवादपि न जात्यपेक्षेति । एवञ्च, शक्यतावच्छेदकत्वमप्या-
कारस्यैव ज्ञेयम् । स चाकारो ज्ञाने प्रकाशात्मा, इच्छायामाशंसात्मा, सुवर्णे विलक्षणरू-
पात्मा, घटे पृथुबुध्नोदराद्यात्मा, इत्येवमादिरूप उह्यः । तेनैव च **शक्तिग्रहस्मरणमिति न**
काचिदनुपपत्तिः । एवञ्च, त्वप्रत्ययोप्याकारमेव वक्ति । सत्तापि सदाकार एव, पदार्थोपि
व्यक्त्याकृती एवेत्याद्यपि ज्ञेयम् । अत एव चित्रकेतूपाख्यानेऽङ्गिरोवचने 'देहदेहिविभागो-
यमविवेककृतः प्रभो । जातिव्यक्तिविभागोयं यथा वस्तुनि कल्पित' इत्युक्तम् । **ननु शब्दो-**
त्पत्तिनाशयोः सार्वजनीनत्वात्पदार्थमात्रनित्यत्वं त्वसम्भवि । तथा चार्द्धजरतीयापत्त्या
किमन्तर्गडुनानित्यत्वेनेत्यत आहुः **तथा शब्देत्यादि** । यथान्येषामेकत्वेपि अभिव्यञ्जकता-
रतम्येन ह्रस्वदीर्घस्थूलसूक्ष्मगुरुलघ्वादिरूपेणाभिव्यक्तिस्तथा शब्दैक्ये त्वे शब्दाभिव्यञ्जकव्या-
पारतारतम्येन ह्रस्वदीर्घादिकखादिरूपेणाभिव्यक्त्यान्यतिरोभाववतिरोभावेन (ने)[१] च
प्रतीत्युपपत्तेः । इदं यथा तथा **प्रस्थानरत्नाकरे** व्युत्पादितमस्माभिः । **शब्दानां पदार्था-
न्तरतुल्यानां नित्यता तु सर्वैरेवाभियुक्तैः तथे**ति तत एव प्रमातव्येत्यर्थः । तदुक्तां
सम्मतिमाहुः **नित्येत्यादि** । दूषणान्तरमाहुः **आश्रयेत्यादि** । नष्टायां व्यक्तौ जातिः सम-
वायश्च व्यक्त्यन्तरे तिष्ठतः, सर्वव्यक्तिनाशे तु कालादिषु काले वा तिष्ठत इत्येतद्ग्राहकस्य
**प्रमाणस्याभावाद्** अनुगतप्रतीतेराकारेणैव निर्वाहात् महाप्रलये च ज्ञानसामग्र्यभावेन तत्स-

१ "ने"ति अत्र अधिकं भाति ।

त्पाग्राहकाभावात्तथेत्यर्थः । ननु प्रत्यक्षापेक्षया शब्दस्य दुर्बलत्वाच्छब्दमात्रेण प्रत्यक्षविरुद्धं नाङ्गीकर्तुं शक्यमित्यत आहुः दृष्टेत्यादि । तथा च, यथा दृष्टस्य मण्यादेः पदार्थस्य केवलप्रत्यक्षेण याथात्म्याज्ञाने शास्त्रतस्तदवगतेः प्रत्यक्षस्य दौर्बल्यम्, तथात्रापि शब्दापेक्षया प्रत्यक्षस्य दौर्बल्यमित्यर्थः । फलितमाहुः अत इत्यादि, अतः प्रमाणान्तरानपेक्षस्य शास्त्रस्य बलवत्त्वाद् इति, अस्मिन्नर्थे 'स एकधा भवति त्रिधा च नवधे'त्यादि छान्दोग्यश्रुतिबलात्तथेत्यर्थः । अनेकपदार्थकल्पने गौरवरूपं दूषणान्तरमप्याहुः बह्वित्यादि । बहुकल्पनाश्च अनेकव्यक्तितत्तद्ध्वंसप्रागभावादीनां ज्ञेयाः । सिद्धान्तमाहुः अत इत्यादि, अतः कल्पनालाघवात् प्रामाणिकत्वाच्च । नन्वेवं सति शास्त्रेणैव बुद्धिः शुद्ध्यतां किञ्चरणारविन्दानुध्यानेनेत्यत आहुः शोधकेत्यादि, तथात्रापीति, बुद्धावपि, बुद्धिर्भगवच्चरणारविन्दानुध्यानसिद्धा सती भगवत्स्वरूपयाथात्म्यं पश्यतीत्यर्थः । दोषावृतत्वादिति, दोषाश्च कामक्रोधलोभमोहमदमात्सर्यादय आन्तरा ज्ञेयाः । अत एव इति, बुद्धिशोधकत्वादेवेत्यर्थः । नन्वभ्यासादिना बुद्धिशुद्धावपि विषयदोषेण भ्रमादिदर्शनाद्विषयशोधनं विना केवलधीशोधनं नातीवोपयुज्यत इत्यत आहुः विषयेत्यादि । विषये शुक्त्यादौ दोषो भ्रमजनको नास्त्येव । यदि स स्याद्विशेषदर्शनोत्तरमपि भ्रममुत्पादयेत् । विशेषदर्शनोत्तरं भ्रमानुत्पादनान्न तत्र स दोषः, किन्तु तत्रापि बुद्धिदोष एव भ्रमोत्पादकः इति बुद्धिशोधनमुपयोग्येवेत्यर्थः । एतेनेन्द्रजाल(कौलिच)चमारादयोपि व्याख्याता ज्ञेयाः । ननु 'यदेवाप्रतिरूपं पश्यति' इत्यादि श्रुत्या विषये अप्रतिरूपत्वबोधनात् कथमेकान्ततो विषयस्य निर्दुष्टत्वमित्यत आहुः सुतरामित्यादि । तथा च, ज्ञानिदशायामिन्द्रियाणां पाप्मविद्धतयाऽप्रतिरूपत्वं भासतां नाम, तथापि प्रस्तुतविषये तदापि तदसंभवाददुष्टत्वमेवेत्यर्थः । ननु कपिलादिवाक्यादपि वस्तुयाथात्म्यज्ञानसिद्धेः किमङ्घ्र्यनुध्यानेनेत्यत आहुः किन्त्वित्यादि । अतः परस्परविरुद्धत्वात् तस्मादङ्घ्र्यनुध्यानप्रतिबन्धनिवृत्तेरपि भगवत्कार्यत्वात् ।

प्रचोदितेत्यत्र तद्भवतीति, गुणानुकथनं भवति । आवश्यकमिति, तेन विना
२-४-२२ कार्यजननादर्शनात्तथेत्यर्थः । सर्वपदार्थानां तिरोहितत्वे तद्विषयकानुभवाभावात्तत्स्मृतिर्भवतु, परन्तु, तदानीं भगवतोप्यगोचरत्वात्तदनुभवः कथं भवतीत्यपेक्षायामाहुः योगवदित्यादि । इदञ्च 'वितन्वते'त्यस्य तात्पर्यम् । वितानस्य सजातीयसंवलन एव दर्शनादिति । तेनेति सानुभवेन स्मरणेन । हृदेति मनसा । तथा चानुध्यानात्प्रार्थितेन भगवता स्मृतिविताने वाक्प्रेरणे च कृते नित्यवाणीप्रादुर्भावो ब्रह्मणोभून्न केवलयोगेनेति भगवद्ध्यानमावश्यकमिति भावः । ननु कथमेवं भगवतः प्रेरणावश्यकतेत्यत आहुः न हीत्यादि, अयमर्थः सरस्वतीपदेन सूच्यते । किलेत्याश्चर्ये । अत इति प्रेरणस्यावश्यमपेक्षितत्वादित्यर्थः ।



भूतैरित्यत्र कारिकायां सर्वत्रेति, सर्वदेहेष्वित्यर्थः । विवृतौ, सर्वत्रेति श्रुति-
२-४-२३ पुराणेषु । स्वस्येति शुकस्य । अत एवेति सम्भोगार्थत्वादेव । दक्षिणेऽक्षिण इन्द्र इत्युपाख्यानं च वाजसनेयिनां मण्डलब्राह्मणे प्रसिद्धम् । तत्र च, 'स एष एवेन्द्रो योयं दक्षिणेक्षन् पुरुषोथेयमिन्द्राणी ताभ्यां देवा एतां विधृतिमकुर्वन्नासिकां तस्माजायाया अन्तेनाश्नीयादि'त्यादिना वामेऽक्षिण इन्द्राणीस्थितिं बोधयित्वाऽग्रे 'तौ हृदयस्याकाशं प्रत्यवेत्य मिथुनीभूय भवतस्तौ यदा मिथुनस्यान्तं गच्छतो यह तत्पुरुषः स्वपिति तद्यथा हैवेदं मानुषस्य मिथुनस्यान्तं गत्वाऽसंविद इव भवत्येवं हि हैवंतसंविद इव भवति दैवश्चेतन् मिथुनं परमो ह्येष आनन्द' इत्याद्युक्तम् । तच्च, एतत्परमेव सम्भोगार्थशयनपरमेवेति यथा तत्र तद्रूपेण स्थितिस्तदर्था, तथा भगवतो हृदि स्थितिरपि भोगार्थेत्यर्थः । ननु शयनमात्रेण भोगे सम्भवति षोडशात्मकः किमिति भवतीत्यत आहुः जड इत्यादि । जडे नीरसे शब्दादिरूपे विषयपञ्चके । तथा च, तदात्मकतया तेषां सारस्यसम्पादनाय तथाभवतीत्यर्थः । सारस्यसम्पादकं रूपमाहुः भगवानित्यादि । तथा चानन्दमयत्वेन सम्पादयतीत्यर्थः । नन्वानन्दमयत्वे कुतो रसेप्सेत्यत आहुः तत्रेत्यादि । तत्र हेतुः स्त्रीत्यादि, अत इति । 'स वै नैव रेमे, तस्मादेकाकी न रमते, इत्यादिश्रुतिभिर्भेदं विना रसानाविर्भावेन भोगासम्भवात्तेन तथा भोगार्थं 'स आत्मानमेव द्वेधाऽपातयत्ततः पतिः पत्नीश्चाभवतामि'ति भेदरूपमात्मानं विधाय तस्मिन् भेदरूपे आत्मनि मूलरूपे स्वस्मिन् प्रविष्टे बहुधाभिन्न इत्यर्थः । अत एव तत्र 'तिरोसानी'त्यादि कथनं सङ्गच्छते इति ज्ञेयम् । तर्हि तत्रेवात्र देहधारणं कुतो नेत्यत आहुः देहेत्यादि । ननु गुणानां कथं षोडशत्वमित्यत-आहुः यद्यपीत्यादि । स्थानविशेषे नेत्रादिगोलकरूपे । एवं मनसोप्यतीन्द्रियत्वेन तज्जनितमपि विषयध्यानादिसम्भवं सुखं हृदयरूपे गोलक एवेति त्वचो व्यापकत्वात्तस्या एव सुखजनकत्वमित्येकादशत्वमिन्द्रियप्राधान्येन पञ्चत्वं विषयप्राधान्येनेत्येवं षोडशेत्यर्थः । ननु प्राधान्याप्राधान्ययोः कथं निर्णय इत्यत आहुः भोगेत्यादि । तथा च, यथोष्णकाले बह्वम्बरालङ्कारादिपरिधाने इन्द्रियाणामरुचावपि राज्यसुखानुभवाय महाराजेन तदापि तत्क्रियते सभायां रहसि च, तथेन्द्रियरुच्युपभोगाः क्रियन्ते, तद्वदित्यर्थः । अत इति प्रत्यक्षानुमानाभ्यां तयोर्निर्णयात् । एतेन सिद्धमाहुः एवमित्यादि । षोडशात्मकत्वेनानन्दजनकत्वे विषयेन्द्रिययोः सुखोत्पत्तौ 'एष ह्येवानन्दयाती'ति श्रुत्युक्तं भगवन्माहात्म्यं तथेत्यर्थः । अत्रालङ्कृषीष्टेत्यलङ्काररूपेण भगवत्प्रवेशप्रार्थनया पुरुषरूपत्वादिकथनेन च भगवतः पुरुषभूषणत्वमुक्तं भवति, तेनापि 'निगमकल्पतरोरि'तिव्यासोक्तावुपपत्तिरुच्यते । बीजनिष्ठरसस्यैव फले सत्त्वेपि बीजे तदनभिव्यक्तेरिति दिक् ।

१ "शयन"स्थाने "स्थिति"पाठः ।

नमस्तस्मा इत्यत्र ज्ञाननिष्ठयोग्यतेति । ज्ञाननिष्ठानां पात्रयोग्यतेत्यर्थः । ननु
२-४-२४ भारतादेः कथं प्रपञ्चविस्मारकत्वमत आहुः मोक्षेत्यादि । ननु मोक्षफल-
कत्वमन्यत्रापि कथ्यत इति कथमत्रैव तदाश्वास इत्यत आहुः वक्तुरि-
त्यादि । पानेच्छाप्रतिबन्धेपीति, अन्तरिन्द्रियनिग्रहस्य शान्तिपदार्थत्वेन सौम्यानां च तद्वत्वेन तया पानेच्छाप्रतिबन्धेपीत्यर्थः । तथा च, दृष्टान्तस्य यथा इच्छोद्बोधकत्वम्, तथा दार्ष्टान्तिकस्यापीति हेतुता बोध्यते ।

तदेवेत्यत्र तादृशमुखेनेति भगवन्मुखेनेत्यर्थः । नात्र पुनरुक्तिरिति पुनः करण-
२-४-२५ दोषोक्तिर्नेत्यर्थः । उभयत्रेति, अम्यधादाहेति क्रियाद्वयेपीत्यर्थः । साक्षा-
त्तदप्रयोजनमाहुः परम्पराकथन इति परम्परया कथन इत्यर्थः । अत एवेति दोषप्रसङ्गादेवेत्यर्थः । ननु काचित्तु परम्परात्र सम्पन्नेति कथं दोषाभाव इत्यत आहुः प्रार्थनयेत्यादि । तथा च, यदि दोषः स्यान्न भगवन्तं प्रार्थयेत् । यथाकथञ्चित्प्रार्थन-सम्भवेपि ज्ञानं तु न स्यादित्यर्थः । अनेनेति ब्रह्मोक्तिभगवदुक्त्योरुपक्षेपेणेत्यर्थः ।

इति श्रीद्वितीयस्कन्धसुबोधिनीप्रकाशे
चतुर्थाध्यायविवरणम् ॥ ४ ॥



श्रीकृष्णाय नमः ।

# अथ पञ्चमाध्यायस्थश्रीसुबोधिनीप्रकाशः ।

अथ तृतीयप्रकरणं विवरिषवः सङ्गतिमुखेन प्रकरणप्रयोजनस्य पूर्वमेवोक्तत्वात् तत्कथनमात्रमत्र प्रतिजानन्तस्तदवान्तरप्रकरणार्थमध्यायार्थञ्च विवेक्तुं प्रकरणार्थं तद्द्वैविध्यमध्यायसङ्ख्यां च निरूपयन्ति विमर्शे इत्यादिचरणत्रयेण । तत्र प्रथमप्रकरणार्थद्वैविध्यमाहुः तत्राद्य इति, विमर्शाख्ये तृतीयप्रकरणे, आद्यः उत्पत्तिविमर्शप्रकरणार्थः द्विधा, स्थूलान्तर्यामिभेदेन, द्विप्रकारको मत इत्यर्थः । नन्वेवं सत्यध्यायद्वयमेवास्त्वित्यत आहुः मूर्त्तेत्यादि । तथा च, तदवान्तरप्रकरणार्थस्यापि द्विविधत्वान्नाध्यायद्वयेन प्रकरणपूर्त्तिरित्यध्यायत्रयमत्र युक्तमेवेत्यर्थः । अतः परं प्रस्तुताध्यायार्थमाहुः तत्रेत्यादि । तत्र प्रकरणद्वयमध्ये । स्थूलमूर्त्तविमर्शने स्थूलं यन्मूर्त्तं पञ्चाशत्कोटिपरिमाणकं ब्रह्माण्डम्, तस्य विमर्षणे याथात्म्यविचारे सोपपत्त्या उत्पत्त्या साधकप्रमाणसहितेन विराड्जनेन पञ्चमाध्यायो निरूपकः, स्थूलमूर्त्तरूपस्य कार्यस्य कारणात्मकताज्ञापक इत्यर्थः । नन्वत्र नारदब्रह्मणोः संवादरूपेध्याये मूर्त्तस्य ब्रह्मत्वसाधिका का वा उपपत्तिरित्यत आहुः पुरुष इत्यादि । नारदाजाभ्यां श्रोतृवक्तृभ्यां पुरुषः क्रमेण सत्त्वादीन् गृह्णन् उत्पत्त्यादिकृदित्युक्त्वा निमित्तमात्रत्वशङ्काव्युदासाय जन्मभिर्निमित्तत्वमात्रपरिचायकैर्न तावन्मात्रत्वेन, किन्त्वभिन्ननिमित्तोपादानत्वेन, क्रियाश्रयत्वरूपमपि कर्तृत्वमित्येवं निगद्यते । नारदेन ब्रह्मण्यूर्णनाभिदृष्टान्त उक्तः । ब्रह्मणा चाग्रे वाक्यद्वयमुक्तम् । तेनोभाभ्यामेव अभिन्ननिमित्तोपादनत्वं भगवतो निरूपितम् । तेनैव कार्यस्य भगवत्त्वम् इत्यर्थः । ऊर्णनाभिदृष्टान्तेन 'स एव पुरुषस्तस्मादण्डं निर्भिद्य निर्गतः' । 'इति लोकमयः पुमा'नित्यादिना च व्यक्तमुच्यते, इत्येषोपपत्तिरित्यर्थः । ननु 'भूतं भव्यं भवच्च यत्' 'न यतोस्ति किञ्चित्' 'स सर्वधीवृत्त्यनुभूतसर्वः' 'तं भजे'दित्यादिविरुद्धवाक्यश्रवणे राज्ञः सन्देहात्प्रश्न उचितः, परं नारदस्य तु सन्देहाभावात् कथं प्रश्न इत्यत आहु एकीभूत इत्यादि । प्रलये भगवदुदरान्तःप्रवेशेनैकीभूते पदार्थजाते निर्गमात् सृष्टौ पुनर्यथासंस्थं निःसरणाद् विह्वलः, किमभेदस्तात्त्विक उत भेद इति संशयव्याकुलः पृच्छति । अथवा स्थूणाखननवद्दार्ढ्यतासिद्ध्यै कर्मणिष्यञ् दृढस्य कर्म दार्ढ्यम्, तस्य भावो दार्ढ्यता, तत्सिद्ध्यै । एवं प्रकारकजगदुत्पत्त्यादिकरणं न सामान्यस्य कर्म, किन्त्वतिबलस्येति ताद्यत्वज्ञापनायेत्युभयथापि प्रश्न उचित इत्यर्थः । ननु प्रत्युत्तरे किमिति विस्तार इत्यत आहुः प्रश्नेत्यादि, तत्त्वनिर्णये कर्तव्ये सति नारदेनात्मजगद्वचनानां निर्द्धारविषयक

१ 'प्रकारद्वयेपि पाठः ।

प्रश्नत्रयं क्रियते । तत्र द्वयोरात्मजगन्निर्णययोः भक्तनिर्धारशेषत्वम् । तेन हेतुना प्रत्युत्तरं **ततं** विस्तृतमित्यर्थः । यद्यपि त्रयोदशप्रश्नास्तथापि 'तद्विजानीही'त्यादिज्ञापकान्मुख्यं त्रयमेवेति तथोक्तम् । ननु जगन्निर्णये किमित्यध्यायद्वयमित्यत आहुः **द्वितीयस्येत्यादि** । **हीति** निश्चयेन, विराजोन्तर्मुखत्वाद् **विपरीतेन** वैपरीत्येन **बहिरन्तर्व्यवस्थया** द्वितीयस्य जगतः द्विरूपत्वं **स्थूललिङ्गविभेदो वा** तेन हेतुनाध्यायद्वयं मतमित्यर्थः । ननु प्रश्नोत्तरयोः किमिति व्युत्क्रम इत्यत आहुः **प्रथमस्येत्यादि** । **तदन्तर्यामिसम्भवे**, आत्मज्ञानस्यात्मानात्मविवेकसापेक्षत्वादनात्मानौ विविच्य तदतिरिक्तत्वेन तन्नियामकत्वेन चात्मबोधने सौकर्येणात्मज्ञानसम्भवात्तद् आत्मज्ञानमन्तर्यामिप्राकट्ये सति भवति, अतस्तथोच्यते । अध्यायषट्कारम्भहेतूक्तौ **पूर्वोक्तस्य साधनस्य विचारार्थमिति** । भगवच्छ्रवणरूपस्य साधनस्य किं लक्षणको विषयः ? कथञ्च तस्य परीक्षेत्येतदर्थमित्यर्थः । **तत्रेत्यादि**; तत्र श्रवणविषये निश्चेतव्ये, षडध्यायीमध्ये वा साधनस्य विषयत्वेन श्रवणजनकस्य स्थूलरूपस्य उत्पत्त्या भगवतः सकाशाज्जननेन **निर्णयः** भगवदुपादानकत्वनिर्णय उच्यत इत्यर्थः ।

**देवदेवेत्यत्र** कथं शोधयतीत्याकाङ्क्षायामाहुः **स्वयमित्यादि** । **विजानीहीति**
२-५-१ ज्ञाधातुर्वेदनार्थकोन्तर्भावितण्यर्थो वेत्यभिप्रेत्याहुः **ज्ञापयतेति** । **श्रुति-**
**सहित** इति, श्रुतिसहकृत आत्मादिसाक्षात्कारः । **परोक्षमिति**
आत्मभगवदनुमितिरूपं तद्विषयकशाब्दरूपं वा, अत्रैको निर्विषयं पञ्चविधं सविषयं साक्षात्काररूपं, शेषं स्फुटम् । अत्र प्रश्नवाक्ये उक्तविकल्पानां निवेशे ज्ञापकमाहुः **किञ्चेत्यादि**, **अनेनेति** । विशेषणेनाङ्गद्वयमिति स्वरूपं विषयश्च । **एवमिति** । तथा च, ज्ञानिपदप्रवृत्तिनिमित्तं ज्ञानं किमिति सामान्यप्रश्न एकः । ततस्तत्स्वरूपं निर्विषयमात्मरूपञ्चेत्क आत्मेति द्वितीयः । सविषयं चेत्किं तस्य विषयरूपं **तत्त्वमिति** तृतीयः । विमर्शपदेन च लक्षणपरीक्षे इत्येवमित्यर्थः ।

**यद्रूपमित्यत्र, किञ्च तत्त्वमित्यादि** । सविषयपक्षे तत्त्वभेदान्, तद्व्युत्पादयन्ति
**तत्त्वमित्यादि** । **अत** इति दुर्ज्ञेयत्वात् । **यदधिष्ठानमिति** पदं माया-
२-५-२ वादिवत्पूर्वपक्षस्य ज्ञापकमित्याशयेनाहुः **आरोपितेत्यादि** । अग्रिमे प्रश्ने
बीजमाहुः **लोक** इत्यादि । **तत्र घटत** इति तत्त्वव्यवहारविषयत्वं न युज्यते । कारणे प्रश्ने हेत्वन्तरमप्याहुः **वादीत्यादि** । **कुत** इति कस्मात् किंरूपाच्च । अत्र कालः स्वभावो नियतिर्यदृच्छाभूतानि योनिः पुरुष इतिचिन्त्यम् । 'संयोग एषां न त्वात्मभावादात्माप्यनीशः सुखदुःखहेतोरि'ति श्रुतिरनुसन्धेया । 'एवञ्च यतः सृष्टं यत्संस्थमि'त्युभाभ्यां जगदुत्पत्तिस्थितिभङ्गकर्तुः प्रश्न इति सिद्ध्यति । पूर्वं विवर्त्तोपादानप्रश्नस्य सिद्धत्वादिति । अतोत्र



पञ्च प्रश्नाः । पक्षान्तरमाहुः **विमर्शेत्यादि** । तत्प्रकारमाहुः **तदेत्यादि** । **तद्विषया** इति तेषां प्रश्नानां विषयाः । तथा च, यद्रूपमित्यादितत्त्वे प्रश्नद्वयं, यतः सृष्टमित्यादिना जगतः, तत्रापि यत इत्यनेनोपादानबोधनात् स्वरूपस्य प्रश्न इत्येवं षडित्यर्थः । **प्रश्नवादेन** विशिष्टाद्वैतवादेन वाऽयं प्रश्न इत्याशयेनाहुः **तस्य भाव इत्यादि** । अस्मिन् पक्षे यद्रूपमित्यनेन तत्पदार्थरूपस्यात्मनः स्वरूपप्रश्नः शेषैर्भावपदार्थभूतस्य जगतः प्रश्नः । अस्मिन्नपि पक्षे चत्वारः पञ्च वा प्रश्ना भवन्ति । अत्रावान्तरवादगमकस्याभावान्नैवं व्याख्यानं युक्तमित्यरुच्या पक्षान्तरमाहुः **अथवेत्यादि** । तथा च, यदिति सर्वत्र भिन्नं पदम्, तथासति रूप्यत इति रूपं जगत्, तद्वा, तदधिष्ठानं वा, तज्जनकं वा, यद्वा सम्यक् तिष्ठति तत् । एवञ्चैतेष्वन्यतममेकं वा सर्वं वेति प्रश्नः फलिष्यतीत्यर्थः । **नियन्तेति**स्थापकः । **पञ्चभिरेव** प्रश्नपूर्त्तेर्यद्वेति षष्ठस्य किं प्रयोजनमत आहुः **रूपमित्यादि** । **एतेषामित्यादि** । एतेन तत्तत्त्वमित्यत्र **तेषां तत्त्वं** तत्तत्त्वमिति वा, तत्, तत्, त्वमिति भिन्नं पदत्रयं वेतिबोधितम् ।

**सर्वमित्यत्र न भविष्यतीति** । इत्याशङ्क्येतिशेषः । **आहेति** 'भूतभव्यभवत्प्र-
भुरि'तिविशेषणेनाहेत्यर्थः । अत्र कालरूपत्वपक्षे भूतादिभिर्व्यवहारैः प्रक-
२-५-३ र्षेण भातीति भूतभव्यभवत्प्रभुरित्येवमर्थो ज्ञेयः । नियन्तृपक्षे सर्वज्ञतां
व्युत्पादयन्ति **यथा रहटेत्यादि** । तत्र दृष्टान्तः, **यथा जलेत्यादि** । शयने जागरणे च यथा तदुभयविषयकं, तव ज्ञानं तथेत्यर्थः ।

२-५-४ **यद्विज्ञान** इत्यत्र किमात्मक इति । जीवेश्वरयोर्मध्ये कस्यां कोटौ ।

**आत्मन्नित्यत्र स्वयमित्यस्य** द्वितीयान्तत्वमभिप्रेत्य पक्षान्तरमाहुः **आत्मानं वेत्यादि** ।
**द्वयोरिति** सृष्टिस्थित्योः केवलं स्वसामर्थ्यं कुत्र दृष्टमित्याशङ्क्य दृष्टान्त-
२-५-५ माहुः **आकाश इत्यादि** । '**नाहं वेदे**'ति श्लोक उत्तरश्लोकशेषत्वेन ज्ञेयः ।
२-५-७ **स भवानित्यत्र** स्वाभाविकं तपः किमित्याकाङ्क्षायामाहुः **तपो म इत्यादि** ।

**एतन्म इत्यत्र त्रयोदशप्रश्ना** इति, यद्यपि पूर्वग्रन्थविचारे पञ्चदश भवन्ति ।
तथापि किम् तत्त्वमिति सामान्यप्रश्नस्य तद्विशेषप्रश्नेऽन्तर्भावाद् विमर्शन-
२-५-८ स्योपकारकत्वेन प्रवेशान्मुख्याः त्रयोदशेत्यर्थः । सम्बुद्धिद्वयतात्पर्यमाहुः
**प्रश्नमात्रेत्यादि** । **इत्युपपत्तौ वक्ष्यत** इति । इतीदं प्रश्नवाक्यगते कारुणिकपदे वक्ष्यत इत्यर्थः । **अनेनेति** सर्वज्ञकर्तृकत्वेन । ननु 'विजानीही'त्यन्तेन प्रश्नेनैव ज्ञानापेक्षा स्वस्य ज्ञापिता भवत्येवेति यथैवेदमित्यस्य किं प्रयोजनमत आहुः **अहमित्यादि** । **अन्यथेति** प्रकाराकाङ्क्षानुक्तौ । ननु तयाज्ञानस्य किं प्रयोजनमत आहुः **अत इति** । एवमधिकारभेदसूचनात् ।

२-५-९ **सम्यगित्यत्र अन्यथेति**, अतिवादाज्ज्ञात्वा प्रश्नकरणाच्च ।

**येनेत्यत्र एवमिति** । भगवतः परत्वोक्त्यैव तपःकरणस्याप्युत्तरप्राप्त्या । **तस्मा-**
२-५-११ **त्सर्वेत्यादि** । एतेन ज्ञानिपदप्रवृत्तिनिमित्तभूतं ज्ञानं चिद्रूपो भगवानेव, स
येष्वेव स्वेच्छयाविर्भवति केनचित्प्रकारेण, तान् माया न व्यामोहयति,
तदा ते लब्धात्मानो ज्ञानिन इत्युच्यन्त इतिज्ञापितम् ।

**तस्मै नम** इत्यत्र **भक्त्येति**, माहात्म्यज्ञानपूर्वकस्नेहेनेत्यर्थः । विवृतौ **भक्ति-**
२-५-१२ **रिति** बाह्यभक्तिरित्यर्थः । **निदिध्यासनमिति** विशिष्टालम्बनरूपं ज्ञान-
मित्यर्थः । **तन्नमो** वेति । 'नमो धीमहि' तन्नमनमेव ध्यायेमेत्यर्थः । **इति
विरोधाभावायेति**, अस्मिन्नर्थे विरोधाभावायेत्यर्थः । विवृतौ, वेदानुसरणे सा पराजिता
भविष्यतीत्याशङ्कायामाहुः **इयमित्यादि** । अत्र **यन्माययेति** सार्द्धेन 'दैवी ह्येषे'ति व्याकृतं
**ज्ञेयम्** । **महत्स्वपीति** तादृशेष्वपीत्यर्थः । **जगद्गुरुमिति** ज्ञानदातारम्, न तु स्वीयक्रिया-
समक्रियादातारमित्यर्थः । एतेन मयि तादृक्क्रियादानसामर्थ्याभावं जानतोपि ते या मयि
परत्वबुद्धिः सा तत्कार्यमिति ज्ञापितम् ।

२-५-१३ **अत एव** संमुखे स्थातुमशक्तत्वादेवेत्यर्थः ।

**द्रव्यमित्यस्याभासे सपरिकरमिति**, तादृशज्ञानस्यासार्वत्रिकत्वसमर्थको यो मोहा-
२-५-१४ दिरूपः परिकरस्तत्सहितमित्यर्थः । विवृतौ **भूतसंस्काररूपमिति**
अदृष्टरूपमित्यर्थः । **एतेषामित्यादि**, अत्रोच्यमानानां कालादीनां देवता-
**रूपत्वात्** सात्विकशरीरवत्त्वात्**सत्त्वमूर्तिः**, सतो भावो धर्मः सत्त्वं, न तु प्रकृतिगुणभूतं,
तन्मूर्तिः शरीरं यस्य, तादृशो भगवान्निर्दिष्टः, कारणतया बोधितोऽनागन्तुकानारोपितरूप-
निरूपण इत्यर्थः । **तस्यैवेति** मूलभूतस्त एव । **त्वमेव ब्रह्मेति** 'ब्रह्मदाशा' इत्यादि-
श्रुतेरित्यर्थः । **धर्मभेदोपि नेति** । उपादानत्वनिमित्तत्वक्षोभकत्ववैजात्यजनकत्वभोक्तृ-
त्वादयो धर्मा अपि भगवदीया एवेति धर्मतोपि भेदो नेत्यर्थः । नन्वत्र परान्यशब्दयो-
रैकार्थ्यादन्यतरवैयर्थ्यमायातीत्यत आहुः **अन्यत्वेनेत्यादि** । **अधिष्ठातृभेद** इति भिन्ना-
धिष्ठातृकत्वम् । तथा च वासुदेवात्परो न किन्त्वपरस्तन्नियम्य इत्यर्थः । एवं सति जीवा-
दीनां भगवदात्मकत्वेपि न भगवत्त्वं, किन्तु, ततो न्यूनत्वमित्युक्तं भवति । अयमर्थो दश-
माध्याये 'यदनुग्रहतः सन्ति न सन्ति यदुपेक्षये'त्यत्र स्फुटो भावीत्यनवद्यः । नन्वपकृष्ट-
त्वेन भिन्नधर्मकत्वे बोधिते, सत्तामात्रं न स्वरूपानन्यत्वसाधकं, द्रव्यादिकं वासुदेवात्मकं,
सद्रूपत्वादित्यत्र न तदात्मकं भिन्नधर्मकत्वादिति सत्प्रतिपक्षसत्त्वादित्याशङ्क्यापकृष्टत्वेपि
स्वरूपानन्यत्वसाधकं युक्त्यन्तरमाहेत्याहुः **अर्थ इति** । **युक्तिरुक्ता अर्थ अभिधेय**



इत्यर्थः । ननु **अर्थपदस्य** कथं युक्तित्वमित्यत आहुः **नित्यो हीत्यादि** । **शब्दार्थसम्बन्धः**,
द्रव्यादिशब्दैः सहार्थस्य द्रव्यादेः सम्बन्धो वाच्यवाचकत्वरूपो, **हि** यतो हेतोः, **नित्यः**,
यथा लौकिकैः साङ्केतिकैः नरसिंहादिशब्दैः पुरुषा अभिधीयन्ते, तथा न, किन्तु, तत्र
नित्यसम्बन्धपादे शब्दा वाचका अर्था अभिधेयाश्च नित्याः । अतो भिन्नधर्माणो द्रव्यादयो
भगवदात्मकाः, नित्यत्वात्, नित्या अर्थत्वात्, यन्नैवं तन्नैवमिति । तथा च, 'सदेव सोम्ये-
दमि'तिश्रुत्या सर्वस्य सदात्मकतयैव नित्यत्वाद्विकल्पानां वाचारम्भणमात्रत्वाद्भगवद्रूपत्वे-
नैवार्थत्वमित्यर्थपदस्य युक्तित्वमित्यर्थः ।

**नारायणेत्यत्र विमर्शनमिति** । येन विचारेण सर्वेषामिदमेवानारोपितरूप-
मितिज्ञायते तादृशो विचार ऊहापोहरूपः । ननु वेदादीनां नारायण-
२-५-१५ परत्वे कथं पूर्वोक्ततत्त्वज्ञानसिद्धिरित्याकाङ्क्षायां तदुपपादयितुं तर्कमाहुः
**यदीत्यादि** । **भूयानिति** । अर्थतत्त्वस्य नानात्वेन तद्विषयकतया भूयान् । तथा च,
श्रुतौ यतो नैवमतो भिन्नार्थत्वं नेत्यर्थः । सिद्धवत्कारेणाहुः **तत्र स्वरूपत** इत्यादि ।
**तत्रेति** पूर्वकाण्डे । **भगवानेवेति**, प्रतिपाद्य इति शेषः । स्वरूपतो भगवत्परत्वं दर्शयन्ति
**तत्र वेदानामित्यादि** । 'एतस्यैव महतो भूतस्य निःश्वसितं यदृग्वेदो यजुर्वेदः सामवेद'
इत्यादिश्रुतेः तादृशानां वेदानां **तात्पर्यम्**, सः परो नियन्ता यस्यासौ तत्परः, तस्य
भावस्तात्पर्यम्, नियम्यत्वमिति यावत् । तथा च, तद्बोधितं नियामकत्वं नारायण इति
स्वरूपतस्तत्प्रतिपादकत्वमुक्तम् । अर्थतो दर्शयन्ति **मध्येपीत्यादि** । **मध्य** इति । बहिः-
स्थितिदशायां साधनतो दर्शयन्ति **किञ्चेत्यादि** । **चतुर्विधानीति** नामक्रियानिपातो-
पसर्गरूपाणि । **व्याप्नुवन्तीति** वदन्ति । **पुरुषप्रयत्नोद्यतास्तमिति** । **पुरुषप्रयत्नेन**
उद्यतमाविर्भावः अस्तं तिरोभावे यस्य द्रव्यगुणक्रियादेस्तादृशम् । **एवमिति**, वेदत्वे-
नार्थाभिधायकत्वे चेत्यर्थः । परम्पराऽङ्गतस्तथात्वं दर्शयन्ति **नन्वित्यादि** । **चतुर्विध** इति
निषेधानां निवृत्तिविधायकत्वेन विधौ पर्युदासानां चार्थव्युदासद्वारा नामधेये पर्यवसानाद-
येत्यर्थः । **भावे** इति धात्वर्थरूपायां क्रियायाम् । **तत्र हीति** वाक्ये हि । **तत्रेति**
स्वर्गसाधने । **अदृष्टादिकमिति**, आदिपदेनापूर्वम् । ननु देवताप्रीतेः व्यापारत्वे किं
मानमित्याकाङ्क्षायां 'सहयज्ञाः प्रजा सृष्ट्वे'त्यादिगीतास्थसन्दर्भस्य प्रमाणत्वेपि मीमांसका-
दीनामपरितोषात्कुतर्कसम्भव इत्यतस्तदुपपादयन्ति **ते हीत्यादि** । **त** इति यागकर्तारः ।
**तयोपलब्धेरिति** प्रीत्या प्रत्युपकारस्य दर्शनात् । **अन्यथेति** प्रीतेर्व्यापारत्वाभावे । **कुतो
न स्यादित्यत आहुः द्रव्येत्यादि** । तथा च, संस्कारकस्य उद्देश्यत्वाभावाच्चेत्यर्थः । ननु
संस्कारकत्वेनस्पृश्यत्वे बाधकाभावात् यागलक्षणस्य प्रीतिसाधकत्वमित्यपेक्षायां देवतापदेषु
श्रूयमाणायामतुर्थ्यांस्तत्साधकत्वं व्युत्पादयन्ति **यद्यपीत्यादि** । **तत्कल्पनायामिति** स्मार-

कल्पनायाम् । स चेत्यादि सोर्थः । अन्यत्र 'विप्राय गां ददाती'त्यादौ, केवलचतुर्थ्या सिद्धत्वात् सम्प्रदाननिष्ठ एव भवतीत्यर्थः । तादर्थ्यत्वमिति तादर्थ्यवाचकत्वम् । नन्वेवं निर्वाहे उपपदचतुर्थ्यानुशासनवैयर्थ्यप्रसक्तेर्नेदं युक्तमित्यतस्तदभिप्रायकथनेन सार्थकत्वं साधयन्ति यागे त्वित्यादि । तथा चैवं स्वाहायोगेनुशिष्टयाश्चतुर्थ्या व्यापारविवक्षया सार्थकत्वे सिद्धे व्यापारविवक्षया देवताया उद्देश्यत्वसिद्धिः, तथा च प्रीतेर्व्यापारत्वसिद्धिरित्यर्थः । ननु लोकन्यायेन देवताप्रीतेर्व्यापारत्वमयुक्तमन्यधर्मत्वात्फलजनकस्य करणधर्मस्यैव लोके छिदादौ व्यापारताया दृष्टत्वादिति शङ्कायां तदुक्तमुपगच्छन्ति न चेत्यादि, मास्त्वित्यर्थः । तर्ह्यन्यथानुपपत्त्या सिद्धमदृष्टादिकल्पनमित्यत आहुः देवता त्वित्यादि । अतः शक्तत्वेपि सर्वेभ्यस्तद्दानात्प्रीतैव सा तथा न तूदासीना । तथा च, प्रीतेर्यागजन्यत्वात्तद्द्वारा प्रीतत्वेन रूपेण देवताया अपि तथात्वात् फलजननशक्तत्वाच्च व्यापारलक्षणसमन्वयेनुपपत्त्यभावान्नादृष्टादिकल्पनं साधीयः । लोकेपि प्रत्युपकारादिस्थले तथोपलब्धेः, अतो मध्ये चेतनस्य यत्र प्रवेशः तत्रान्यधर्मस्य व्यापारत्वम्, यत्र च न चेतनप्रवेशः, तत्र तु तथैवेति सर्वं समञ्जसमित्यर्थः । नन्वेवं सति यागस्य करणत्वं हीयेत, तथैव फलस्य सम्भवे यागस्य प्रीतिं जनयित्वोपक्षीणतायाः शक्यवचनत्वादित्याशङ्कायामाहुः परमित्यादि । तेन प्रकृतसिद्धिमाहुः अत इत्यादि । अत इति, एवं यागस्यानुपक्षयात् । भगवत्परत्वमिति । यागस्याङ्गं देवता, तस्या अङ्गं प्रीतिरिति परम्पराङ्गतो भगवत्परत्वम् । तत्र हेतुमाहुः यत इत्यादि । तत्र जाता इतिविग्रहे समागता प्रविष्टा इति यावत् । नन्वेवं सति प्रीतिपक्षः पूर्वं किमित्यादृतः इत्यत आहुः प्रीतीत्यादि । तथा च, देवेषु योगसत्त्वेन योगजधर्मस्य स्मारकत्वकल्पनेपि दोषाभावात् सोप्यादृत इत्यर्थः । फलतस्तथात्वं साधयन्ति किञ्चेत्यादि, क्रियानिष्पादकत्वादिति । अत्र क्रियानिष्पादितत्वादिति पाठः प्रतिभाति । क्रियाया इति पदभेदपाठो वा । सिद्धमाहुः एवमित्यादि । अत्र द्वितीयकाण्डस्थसाधनकार्यफलानां तपोज्ञानब्रह्मगतीनां पुराणविमर्शेनैव भगवत्परत्वसिद्धेः न तस्य पृथङ्निरूपणमितिज्ञेयम् । पाक्षिकोपि दोष इति, 'इतिहासपुराणं वेदानां पञ्चमो वेद' इतिश्रुतेस्तस्यापि वेदत्वात्तस्य भगवत्परत्वाभावे पाक्षिको दोष इत्यर्थः । अत इति ध्यानस्य नश्वरत्वात् । अग्र इति तृतीयस्कन्धे । तपस्येवोपक्षीणमिति । तत्र चतुर्थाध्याये भस्मना त्रिषवणादेरुक्तत्वाच्छैवपुराणेष्वपि तथैवोक्तत्वात्तस्य च तपोरूपत्वात्तथेत्यर्थः ।

तस्यापीत्यत्र पूर्वेणेति मोक्षौपयिकेनात्मरूपेण । तस्येति विज्ञानदातुः । तत
इत्यादि । जीवानुत्पादनात्स्मरणाद्यधिकार्यभावेन स्नेहस्याप्याधाराभावा-
२-५-१७ दभावेन भक्तिमार्गो विरुध्येत, तत एव सर्वेपि विरुद्धयेरन्नित्यर्थः । अत

" आंशिक " इति पाठः ।



इति, दृश्यमानानां तेषामुपपादनीयत्वात् । नन्वखिलपदस्य वस्तुपरत्वं जीवपरत्वं वा उभयथापि भगवतोऽखिलत्वाभावात्कथं नानन्दादिविरोध इत्याशङ्कायां तस्यार्थमाहुः यथाखिलेत्यादि । तथा च, सर्वादिपदान्यनुक्त्वा यदखिलपदमुक्तम्, तेनायमर्थः, खिल पदं न्यूने रूढम् । न्यूनता च द्वेषाऽऽनन्दाभावात् सर्वत्वाभावाच्च[1] । नञा तदुभयं पर्युदस्यते । तथा सति 'न खिलं न्यूनं येषां तेऽखिला' इति । तथा सत्यखिलपदस्य वस्तुपरत्वेप्यवयवशक्त्या तेषु तथात्वबोधनात्तेषामात्मत्वे स्वस्याखिलत्वमर्थादेव सिद्धमतो नानन्दादिविरोध इत्यर्थः । तदेतदभिसन्धायाहुः एवमित्यादि । दृष्ट्येत्यादि, 'तदैक्षते'त्यादावीक्षाया आलोचनार्थकत्वादत्रेक्षापदोक्ताया दृष्टेर्ज्ञानजनकत्वात्प्रेक्षणस्य च क्रियारूपत्वात्तथेत्यर्थः ।

सत्त्वमित्यस्याभासे अनेनेति । ईदृशाद्भगवतः स्वज्ञानप्राप्त्यादेः कथनेन ।
२-५-१८- एतस्येति आधाराधेयभावस्य नियम्यनियामकभावस्य तदात्मकत्वस्य
१९ चेत्यर्थः । विवृतौ, इति मतमिति । तत्तदवस्थयावस्थितं ब्रह्मैव तत्तच्छब्दवाच्यमिति काशकृत्स्नाचार्यमतम् । एतेन 'यथेदं सृजत' इत्यस्य व्याख्याने, किं कुम्भकारवत् ? उत कामधेन्वादिवत् ? अथ योगिवन्मनसा ? इत्यादिनोद्भावितेषु पक्षेषु कोपि नादृत इति बोधितम्, दुर्विभाव्यत्वं च समर्थितम् । कार्पासे न हीत्यत्र कार्पास इति सप्तम्यन्तम् । तदिति कार्पासम्, हिर्हेतौ, अत एवेति, पौर्वापर्यावस्थायाः पाश्चात्यत्वादेव । विभुपदेनैव कर्तृत्वे प्राप्ते षष्ठ्याः सम्बन्धमात्र एवार्थ इत्याशयेन मूले विभोर्माया गृहीता इति समभिव्याहारसूचितमर्थं वदन्तस्तस्याः स्वरूपं कार्यमाहुः सा हीत्यादि, गृहीता इत्यन्तेन । तथा च, भगवतः कूटस्थत्वेन सर्वस्वरूपत्वेन च प्रयोजकत्वाद्भगवदपेक्षया तस्याः करणत्वेपि[2] स्वस्वकरणस्वरूपं धर्मं तेषु न्यस्य तद्ग्रहणेन स्वयं कर्त्री जातेत्यर्थः । एवञ्च, 'सा वा एतस्य सन्द्रष्टुः शक्तिः सदसदात्मिके'तिवक्ष्यमाणत्वात्तस्याः स्वरूपं मूलसदंशभूतविकृतसदात्मकं सिद्ध्यतीतिज्ञेयम् । गुणानां कार्यान्तरमाहुः न इत्यादि, स्वकार्ये इति, द्रव्यज्ञानक्रियारूपे मायायाः कार्ये । स्वस्वाश्रये ते बध्नन्तीति, द्रव्याभिमाने तमो बध्नाति, ज्ञानाभिमाने सत्त्वं, क्रियाभिमाने रजः, इत्येवं बध्नन्तीत्यर्थः । कुतो बध्नन्तीत्यपेक्षायां बन्धनहेतुं स्फुटीकुर्वन्ति बन्धन इत्यादि । अत इति मायातत्कार्याभिमानानभिमानाभ्याम् ।

स एष इत्यत्र एवमिति, नियम्यनियामकभावे हेतुकथनेन । उत्तारितमिति,
अखिलात्मन इत्यनेनोक्तम् । मायेत्यादि, एतेन गृहपीठन्याय उक्तो
२-५-२० भवति । गृहे पीठं तदुपर्यास्तरणम्, तत्रोपविष्टस्य यथा गृहं सामा-

१ 'आनन्दाद्यभावात्' 'सर्वत्वाद्यभावात्' इतिपाठौ । २ "[illegible]" पाठः ।

न्याधारोन्यो विशेषाधारः, तथात्र भगवति माया, तस्यां द्रव्यादिकं तत्कार्यम्, तत्र कर्द्धोंशो जीव इति भगवत्सामान्याधारो मायादिविशेषाधारो मुक्तानां तु साक्षादाधार इति बोधितत्वात्तत्रोत्तरमनुक्त्वा मायित्वेन विशेषात्मत्वम्, माया हि करणभूता शक्तिस्तद्वत्त्वेन सृष्टिव्यापारविशेषयुक्तात्मत्वं बोधितम् । तेन स्वस्य तदात्मकतापि सिद्धेतिहेतोः 'यत्पर' इत्येतदनुत्तरितमवशिष्यते, तत्रोत्तरमाहेत्यर्थः । तदुपपादयन्ति नियामकस्येत्यादि, दृष्ट्या प्रेरणस्य दर्शनोत्तरभावित्वेन नियामकविषयस्य दर्शनदशायां पूर्वं तदभिन्नत्वात्प्रथमत आत्मत्वेन ज्ञानमप्यभेदज्ञानत्वाद्बन्धप्रतिबन्धकमिति तज्ज्ञानेपि नियमनं बन्धनात्मकं न सम्भविष्यतीति एतैस्तादृशो जातः, तज्ज्ञानं तिरोधापितवान् । तथा चैवं योंशस्तिरोहिततादृग्ज्ञानः स नियम्य इत्यहमपि तादृशसाक्षात्कारतिरोधानाविषयः, पूर्णज्ञानत्वाद्भगवान्नियामकः इति 'यत्पर' इत्यस्योत्तरमित्यर्थः । तदेतदाहुः यद्यपीत्यादि । ननु सम्बन्धस्य तुल्यत्वात्ते भगवन्तं कुतो न बध्नन्तीत्याकाङ्क्षायां लिङ्गपदस्यार्थमाहुः एते चेत्यादि । अधः नीचैरक्षज इन्द्रियजन्ये ज्ञानक्रिये यस्मादित्यधोक्षजपदनिरुक्त्या तेनैव तद्विषयकाज्ञानप्राप्तेः स्वलक्षितगतिरित्यस्य वैयर्थ्यमायातीत्यरुच्या पक्षान्तरमाहुः स्वैर्वेत्यादि । केवलजीवात्मज्ञानवतां जीवन्मुक्तानामपि भगवज्ज्ञानाभावात् परममुक्तानाञ्च विषयविषयिभावनिवृत्त्या गतिज्ञानाभावात्तेऽत्र न युज्यन्त इत्यतः सिद्धान्तमाहुः वस्तुत इत्यादि । तथा च, अतस्त एव गतिज्ञातारः इत्यर्थः । एतेन मोचनहेतुरपि स्वपदेन ज्ञापित इत्यपि बोधितम् । अत एवेति ऐकात्म्यादेव । तथापीति अधोक्षजत्वेन ।

कालं कर्मेत्यत्र अधिष्ठानमिति,जगतोधिष्ठानम् । तत्र हेतुः तत्सहितादित्यादि,
कालादित्रयसहिताद्भगवतः । तत्त्वानां सृष्टिरिति । जगत्पूर्ववर्त्तित्वा-
२-५-२१
त्तत्त्वानि तथेत्यर्थः । तर्हि कालादीनां कुतो न तथात्वमित्यत आहुः तत्रेत्यादि । तथा च, करणकोटिनिविष्टत्वात्तथेत्यर्थः । अत्रेति, कालकर्मस्वभावानां ग्रहणे । अत्र मायायाः करणत्वेनोक्त्या कालादिग्रहणे तस्या न स्वातन्त्र्यमिति ज्ञाप्यते । अत एवेति, अत्र नानात्वे गुणानुपयोगादेव । तथा चास्यां सृष्टौ यथेच्छं कालेन कर्मणा स्वभावेन भगवान् नाना भवतीतिज्ञापितम् ।

कालादित्यत्र अत इति, पश्चाद् गृहीतत्वादेव । सर्वत्रेति गुणव्यतिकरादावपि
हेतुरित्यर्थः । एवमित्यादि, अत्रैतद्बोध्यम्, कालेन गुणानां सम्पर्कोंशतो
२-५-२२
जायते । ततः सम्पृक्तांशस्य स्वभावेन परिणामे विकृतिरिति विपरिणामाद्विकृतित्वं कार्यत्वञ्च । तस्य च स्वकार्यापेक्षया प्रकृतित्वमिति साङ्ख्यानां महदादिषु सप्तसु

१ "विषयक" पाठः ।



प्रकृतिविकृतित्वव्यवहारः । ततस्तस्य कार्यस्य कर्मणा जन्मनि जायमानोपि इन्द्रियाणां मात्रादीनां चानुत्पन्नत्वात्पिण्डीभूतस्यैव जन्म भवतीति तस्य स्थूलतयोपपत्तिः । अनेन प्रकारेण तादृशदेहसम्बन्ध उक्त इत्यर्थः ।

महत इत्यत्र ते गुणा इति सम्पृक्तशिष्टाः । त्रयाणामनुप्रवेशादिति, पश्चा-
त्पुनः संवलनात् । अत एव महत्तत्त्वापेक्षयैतद्देहे गुणसम्बन्धाधिक्यादस्य
२-५-२३
स्वकार्यापेक्षया प्रकृतित्वं त्रितयात्मकत्वञ्चेत्यर्थः ।

सोहङ्कार इत्यत्र नियामकाभावादित्यादि, पुरुषाधिष्ठानाभावात् कर्तृत्वाभि-
मानिनस्तं तथा कृतवन्त इत्यस्माद्धेतोस्तस्य त्रिव्यूहत्वमाहेत्यर्थः । तेषा-
२-५-२४
मिति देहानाम् । द्रव्यशक्तिरित्यत्र एतेषामितिभेदानाम् । गौण-
मिति गुणकृतम्, पाचकः पाठकः इत्यादिवत् ।

तामसादित्यत्र अनेनेत्यादि । तस्य मात्रा शब्द इति । शब्दस्य मात्रात्ववि-
धानेन वर्णात्मकशब्द आकाशगुणव्यतिरिक्तत्वेन बोधित इत्यर्थः । युक्तं
२-५-२५
चैतत्, सर्वतः पिहितमहाबिलादेरनुपलब्धस्य भूगर्भगृहादेश्च क्वास्तीति सन्देहे भूमेरुपरि तत्र तत्र पादाघातकरणेन यत्रैव विलक्षणध्वन्युत्पत्तिस्तत्रैव तादृशध्वनिना शून्यमिदमवकाशोत्रेत्याकाशानुमितिरुत्पद्यते, तेन स ध्वनिराकाशगुणरूपः शब्दः । अत एव प्रतिध्वनिरप्याकाशगुण एव, न तु शब्दप्रतिबिम्बः[1] । वर्णस्तु स्वरव्यञ्जनान्यतमो नित्यः। तेन "ताल्वोष्ठपुटव्यापाराभिव्यञ्जितशब्दत्वम्", न तस्य लक्षणम्, कुशलवादकवादितवीणामृदङ्गादिशब्दे वर्णप्रतीत्यपलापापत्तेः। फूत्कारादौ तदापत्तेश्च । वर्णानाञ्च नित्यत्वं सर्वनिर्णयनिबन्धानुसारेण प्रस्थानरत्नाकरे व्युत्पादितमस्माभिः । मात्राशब्दः शब्दादिषु योगरूढ इति ज्ञापयितुं योगमुक्त्वा मात्रास्वरूपं बोधयन्ति मात्राणामित्यादि, भूतपूर्वावस्थारूपः परिणाम इत्यर्थः । परिणामो नाम उपादानसमसत्ताककार्यापत्तिः । शब्दादिपञ्चके मात्रात्वस्य तौल्येप्यत्रैव तदुक्तेस्तत्सूचितमर्थमाहुः आकाश इत्यादि । तथा चाकाशे स्थूलावस्थायाः प्राधान्यज्ञापनाय मात्रापदमत्र प्रयुक्तमित्यर्थः । एवं शब्दमात्रगुणमाकाशमित्याकाशलक्षणं सूचयित्वा शब्दस्य बोधाय तल्लक्षणं व्याकुर्वन्ति किञ्चेत्यादि । तथा च, स्वरस्य ध्वन्यात्मकत्वाद् ध्वनिरूपः शब्द आकाशगुण इत्येवं लक्षणकस्य शब्दस्य प्रत्यक्षत्वात्तल्लक्षणक आकाशोपि तदवयववानस्तीति स विरलावयवो न तु निरवयव इत्यर्थः ।

नभस इत्यत्र अत्र गृहीत इति वायुत्वेनोक्तः । शब्दस्य तुल्यत्वात् स एव
गृह्यते इति निर्णेतुं न शक्यत इत्यरुच्या पक्षान्तरमाहुः बुद्धिरित्यादि ।
२-५-२६
तथा चाकारतौल्येपि प्राणापानसमानोदानव्याननागकूर्मकृकलदेवदत्त-

१ "प्रतिबन्धः" पाठः ।

धनञ्जयास्यभेदभिन्नस्याध्यात्मपवनस्य कार्यभेदात् सोतिरिक्त इति कार्यभेदमादाय तन्मतस्वरूपतौल्यमादायेदं मतमित्यर्थः । **कर्त्तव्य** इति, यद्रूपमित्येतदुत्तरत्वेनास्य ग्रन्थस्य प्रवृत्तत्वात्तदनुषङ्गाभावे एतयोस्तत्र प्रवेशाभाव आपद्येतेत्यतः कर्त्तव्य इत्यर्थः । नन्वेवं सत्यग्रिमश्लोके तदुक्तिवैयर्थ्यं स्यादित्याशङ्क्य पक्षान्तरमाहुः **अथवेत्यादि,** अहङ्कारोत्पत्तौ कालकार्ये गुणव्यतिकरे सत्यहङ्कारस्य त्रिव्यूहत्वं न स्यादतस्तत्र कालस्य न कारणता, नभसोप्यत्र[1] प्रकाशमानतया तामसत्वेन व्यतिकरस्यानुपलम्भात्तत्रापि तथा लोकेहङ्कारस्य सिद्धवदेवाहम्बुद्ध्या प्रतीतेर्जन्माप्रतीत्या आकाशस्यापि जन्माप्रतीत्योभयत्र कर्मणोपि न कारणता ( न प्रतीयत ) इति **लोकप्रतीत्या** तयोस्तथाभावान्मुखतस्तन्नोक्तम् । वस्तुतस्त्वहङ्कारोत्पत्तौ गुणानां प्रधान्योपसर्जनभावकथनादेवात्[2]व्यतिकरस्याहङ्कारे सिद्धत्वात् सात्त्विकाहङ्कारकार्ये मनसि 'गुणैश्चाशयसम्भवैरि'ति गुणत्रयजननकथनात्तत्प्रेर्याणामिन्द्रियाणामपि त्रिविधकार्यदर्शनान्नभसोपि वायुरूपचञ्चलकार्यजननदर्शनाद्रजोव्यतिकराभावे तदसम्भवादत्[3]व्यतिकरस्य तत्रापि सिद्धत्वात् **समभूदित्यादिनोत्पत्तेः** कण्ठत उक्तत्वाच्च कालकर्मकार्यत्वं तत्रापि निर्बाधम्, परिणामस्तु प्रतिपादित एवेति सर्वत्र त्रितयकार्यत्वमित्यर्थः ।

**वायोरपीत्यत्र** । नन्वनुषङ्गेन त्रितयात्मकत्वसिद्धौ पुनस्तत्कथनस्य किं प्रयोजनमत
आहुः **वायोरित्यादि** । **निमित्तमात्रमिति,** कालः कर्म चेति शेषः ।
२-५-२७
तथा च, विपरिणामे न स्वभावस्योपादानतया प्रवेशो भवतु, न तु कालकर्मणोरित्याशङ्कानिवृत्त्यर्थं पुनस्त्रितयग्रहणमित्यर्थः । **येषामिति** नैयायिकादीनाम् । ननु वायोर्निमित्तत्वाङ्गीकारेपि श्रुतेरुपपद्यमानत्वेनाविरोधात्कथमुपेक्षणीयमित्यतस्तन्मतमनुवदन्ति **यत्त्वित्यादि, इतीति** । एवं नियमाक्रान्तं मतम् । तद्दूषयन्ति **तत्त्वित्यादि** । ननु कथं व्यभिचारीत्यत आहुः **न** हीत्यादि । अतो व्यभिचार इत्यर्थः । नन्ववान्तरजातिविचारेण व्यभिचारशङ्कायामपि पृथ्वीत्वादीनां व्यापकजातीनां नियामकत्वान्न व्यभिचार इत्यत आहुः **नापीत्यादि, अत्रेति,** व्यभिचारभङ्गे । **विवक्ष्यन्त** इति नियामकत्वेन विवक्ष्यन्ते । **नियमकाभावादिति,** पृथिवीत्वस्य घटादावपि सत्त्वेन तादृशविवक्षानियामकस्यानुपलम्भात् । तथा च, सूक्ष्माग्नेः स्थूलाग्न्युत्पत्तौ वायोरेव कारणत्वेनोपलम्भात् । वायोः सूक्ष्मवह्न्यवयवाङ्गीकारस्य प्रत्यक्षविरुद्धत्वेनासङ्गतत्वाच्च न व्यभिचारभङ्ग इत्यर्थः । न च पार्थिवात् पार्थिवस्य तैजसात्तैजसस्य कार्पासात्कार्पासस्येति सजातीयादेव सजातीयोत्पत्तिदर्शनात् विजातीयाद्विजातीयोत्पत्त्यदर्शनाच्च स्थूलाग्निस्थलेपि नियामकः कश्चिज्जातिविशेषः कल्प्य इति-

१ नभसोप्यप्रका॰ पाठः । २ प्रधानोपसर्जन॰ पाठः । ३ 'सिद्धत्वेन' पाठः ।



वाच्यम्, प्रत्यक्षविरोधेन निर्वक्तुमशक्यत्वात् । गोमयाद्वृश्चिकस्य, देवात् मनुष्यस्य, वासरादक्षस्य चोत्पत्तेर्लोकशास्त्रसिद्धत्वेन नियमस्याप्रयोजकत्वाच्च । न चैवमतिप्रसङ्गः, पटत्वेन तन्तुत्वेन घटत्वेन कपालत्वेनेत्येवं विशेषकार्यकारणभावेनैव तद्वारणादिति फलितमाहुः **तस्मादित्यादि, तस्मादिति** नियमस्याप्रयोजकत्वात् ।

**तैजसादित्यत्र** ईयत इति अनुमीयते । कथं अनुमीयत इत्याकाङ्क्षायां तदुपपादयन्ति **आत्मा** हीत्यादि । तथा च, देवदत्तदेह आत्मवान्,
२-५-३१
इन्द्रियवत्त्वाद् इन्द्रियवान्, तत्तदिन्द्रियकार्यकारित्वात्, यदेवं तदेवं मद्देहवत्, यन्नैवं तन्नैवं मृतकवद्, इत्यनुमानात्तथेत्यर्थः । जडपर्यवसानादिति वाय्वादौ जडेपि क्रियादर्शनात् कर्मेन्द्रियजन्यक्रियाया अपि जडे तामसे पर्यवसानात् । **अन्यदिति** बुद्धिप्राणाधीनत्वम् । तदुपपादयितुमाहुः **बुद्धिरित्यादि** । अत्राशङ्कते **नन्वित्यादि** । तथा च, बुद्धिः सात्त्विकी ज्ञानरूपत्वात्, यन्नैवं तन्नैवं क्रियादिवत्, प्राणस्तामसो वायुत्वात्, बहिर्वायुवत्, इत्यनुमानाभ्यां तयोस्तथात्वसिद्धे राजसत्वमसङ्गतमित्यर्थः । अत्र समादधते **न** हीत्यादि । ज्ञानजनिका शक्तिर्यस्येति ज्ञाने शक्तिर्यस्येति व्यधिकरणपदे बहुव्रीहौ ज्ञानपदगतायाः सप्तम्या अर्थो वैषयिकाधारता । सा च जनने पर्यवस्यतीति तथेत्यर्थः । बुद्धेः कथं ज्ञानजनकत्वमित्यपेक्षायां तदुपपादयन्ति **य** इत्यादि । अभेदे बाधकमाहुः **अन्यथेत्यादि** । बुद्धेर्ज्ञानकारणत्वाभावे कारणान्तरसमवधानस्य विद्यमानत्वात्सुबुद्धेरिव तस्यापि ज्ञानं स्यात्, तच्च न जायत इत्यन्वयव्यतिरेकाभ्यां कार्यकारणभावे निश्चिते ज्ञानबुद्ध्योर्भेदो निर्बाध इत्यर्थः । ननु वायुप्राणयोः स्वरूपतौल्ये कार्यादिभेदो न स्वरूपभेदापादकः इत्याशङ्कायां तस्य भिन्नत्वे प्रमाणमाहुः **अथेत्यादि** । **विलक्षणामिति,** अपहतपाप्मत्वेन वायुदेवतातो विलक्षणाम् । श्रुत्यन्तर्विरोधं परिहरन्ति **य** इत्यादि । तथा चात्राप्यनूद्यो वायुः न भूतरूप इति न तस्या अपि विरोध इति सिद्धे आसन्यस्य वायुभेदे कार्यभेदेन प्राणान्तरस्यापि वायुभेदो निर्बाध इत्यर्थः । सिद्धमाहुः **तस्मादित्यादि** । बुद्धिर्न सात्त्विकी ज्ञानभिन्नत्वात्, क्रियादिवत् । प्राणो न तामसः वायुभिन्नत्वेन श्रुतिसिद्धत्वात् । वायुभिन्नो भिन्नकार्यकत्वात्, यन्नैवं तन्नैवं वायुवदिति प्रतिसाधनाभ्यां बुद्धिप्राणयोस्तथात्वस्य निरासे समानाकारत्वस्याप्रयोजकत्वात्तथेत्यर्थः । नन्वस्तु ज्ञानबुद्ध्योर्भेदस्तथापि ज्ञानेन्द्रियजन्यत्वात्तस्याः सात्त्विकत्वे किं बाधकमित्याकाङ्क्षायामाहुः, **न चेत्यादि** । तथा च, सात्त्विकी ज्ञानेन्द्रियजन्यत्वाज्ज्ञानवदिति । अत्रापि न सात्त्विकी ज्ञानेन्द्रियमात्रासाध्यत्वात्, यन्नैवं तन्नैवं ज्ञानवदेति, प्रत्यनुमानमेव बाधकमित्यर्थः तदुपपादयन्ति **सा** हीत्यादि । तथा च, यदि ज्ञानेन्द्रियमात्रसाध्या स्यात् ज्ञानेन्द्रियोपष्टम्भकत्वेन सुप्त्या न स्याद् इति तर्केण तथा निश्चीयत इत्यर्थः । तर्के मूलशैथिल्यं परिहर्तुं

व्याप्तिं प्रदर्शयन्ति **यदित्यादि** । अतो ज्ञानक्रिययोरेवेन्द्रियमात्रसाध्यत्वे,नेतरस्य, न शब्दादीनामद्रव्याणाम्-इन्द्रियसाध्यत्वाभावाद् व्यभिचारः शङ्क्यः । तेषां द्रव्यसूक्ष्मावस्थारूपत्वेन तद्विशेषाणामपि द्रव्यान्तःपातित्वेनादोषात् । अतः सा कचिदौत्पत्तिकी कचिन्नाभ्याससूक्ष्मेक्षिकादिजन्या, न तु ज्ञानेन्द्रियमात्रसाध्येत्यर्थः । **अत** इति उक्तानुमानेभ्यः । ननु कैश्चिदाकाशादिपञ्चसात्त्विकांशेभ्यो वृद्ध्युत्पत्तिरिष्यते, तथा सति कथं न सात्त्विकत्वमत आहुः **तुरित्यादि** । तथा च, तद्यदि प्रामाणिकं तदा कल्पान्तराभिप्रायमित्यर्थः ।

**स एव पुरुष** इत्यत्र **तस्मादिति** पुरिशयनात् । अत्र तालव्यशकारापत्तिरित्यरुच्या
२-५-३५ पक्षान्तरमाहुः **जलाद्वेति** । प्रथमपक्षे **पुरुष** इति परोक्षेण कथनं निघण्टव
इत्यादिवद् द्वितीये रूढमितिविशेषः । अत्रा'ण्डमि'त्यादिनोक्तयोः पक्षयोराद्येण्डस्य जले विलयादिकल्पनाय द्वितीये पुरुषस्य नारायणत्वे क्लेशः 'आत्मनोऽयनमन्विच्छन्नि'त्यग्रिमवाक्यविरोध इत्यरुच्या तृतीयं पक्षमाहुः **वस्तुत** इत्यादि ।

**यस्येत्यत्र एतावदित्यादि** । **यदैत** इत्यारभ्यान्तेन सन्दर्भेणायतनार्थं सृष्टं पुरुष-
२-५-३६ रूपमित्युत्तरमुक्तमित्यर्थः ।

**भूर्लोक** इत्यत्र **पद्भ्यामित्यादि** । तथा चायं चरण एव सप्तलोकपक्षज्ञापक इत्यर्थः ।
२-५-३८ पक्षत्रयस्यापि काल्पनिकत्वे वस्तुयाथात्म्यज्ञानं केनापि न स्यादिति तन्निवारणमाहुः **पुमानित्यादि** ।

**इति वा लोकेत्यत्र गुणत** इत्यादि । गुणास्त्रयो, विद्याश्चतुर्दश, यज्ञाः सप्त-
२-५-४२ संस्थाकाः इति तत्तदर्थं तथेत्यर्थः ।

**इति श्रीद्वितीयस्कन्धसुबोधिनीप्रकाशे**
**पञ्चमाध्यायविवरणम् ॥ ५ ॥**



श्रीकृष्णाय नमः ।

## अथ षष्ठाध्यायस्थश्रीसुबोधिनीप्रकाशः

**अथ षष्ठाध्यायं** विवरिषवः पूर्वापरभावनियामिकामध्यायसङ्गतिं वक्तुं प्रकरणार्थरूपामुत्पत्तिं विभजन्तस्तां वदन्ति **अनित्य** इत्यादिसार्द्धेन । तथा च, समागमस्य स्थानसापेक्षत्वात्तज्जननं समागमस्योपजीव्यमिति तत्पूर्वं निरूप्य समागमेन स्थानसम्बन्ध आधेयानामत्र निरूप्यत इत्युपजीव्योपजीवकभावः पौर्वापर्यनियामक इत्यर्थः । ननु पूर्वत्र स्थानजननं सप्तदशश्लोकोत्तरमुक्तम्, अत्र च तत्सम्बन्धो नवभिरेवोच्यते, न तु सर्वत्रेति कथं जननसमागमयोरध्यायार्थत्वमित्यत आहुः **स्थूलेत्यादिसार्द्धम्** । तथा च, तेषु फलार्थं विचाररूपशेषिबोधनेनाध्यायार्थस्य शेषता स्फुटीक्रियत इति सर्वत्र तादर्थ्यात्तयोरध्यायार्थत्वं निर्बाधमित्यर्थः ॥१॥२॥३॥ कथं निरूप्यत इत्याकाङ्क्षायां तत्प्रकारं स्फुटीकुर्वन्ति **पौरुषेणेत्यादि** । **चकाराच्छान्दोग्यसौबालादिभिर्मुण्डकादिभिश्च** । **परत** इति परत्वात्, भावप्रधानो निर्देशः । तथा च, सर्ववेदान्तविचारपूर्वकं तन्निर्धारितप्रकारेण निरूप्यत इत्यर्थः ॥४॥ ननु वस्त्वभेदमात्रत्वनिरूपणमात्रावश्यकप्रस्तुतत्वात् श्रुतिनिर्द्धारितोर्थो माहात्म्यञ्चापृष्टत्वान्नात्यावश्यकमिति तत्किमित्युच्यते इत्याकाङ्क्षायामाहुः **अमूर्त्तेत्यादि** । **सर्वत्रात्र** निरूप्यमाणेषु हरेः सम्बन्धिषु सर्वेषु पदार्थेष्वमूर्त्तत्वरूपं **बृहत्साधर्म्यं** तेन **वस्त्वभेदः सिद्धो** भवति । तथा च, तदुपपादकत्वेन ब्रह्मणा निरूप्यते, शुकेन च स्थूलध्यानोपपादनार्थं निरूप्यत इतीदमप्यावश्यकमित्यर्थः ।

एवं सङ्गत्यादिकं निरूप्य मूर्त्तामूर्त्तपदार्थं विवेक्तुमेतदेव व्याकुर्वन्ति **पूर्वेत्यादि विशिष्टा** इति, देहादिविशिष्टाः । **पृथक्कृत्येति** देहात्पृथक्कृत्य । **सम्बन्ध** इति आधेयत्वरूपः । तेन **मूर्त्तत्वं** नामानित्यत्वे सति परिच्छिन्नपरिमाणत्वम्, न तु परिच्छिन्नपरिणाममात्रम्[1] । **अमूर्त्तत्वञ्च** नित्यत्वे सति परिच्छिन्नत्वम् । इदमेव **मूर्त्तामूर्त्तब्राह्मणे** सिद्ध्यति, इदं साधर्म्यं यत्र तान्याहुः **जीवेत्यादि**, अस्य जीवप्रकरणत्वादिति योजना । **साधनमि**त्यधिकारिस्वरूपम् । **फलमिति** चतुर्विधसुखात्मकम् । **माहात्म्यमिति** विरुद्धधर्माश्रयत्वादिरूपम् । **चत्वार** इति सम्बन्धः साधनं फलं माहात्म्यं चेत्यर्थः ।

**वाचामित्यत्र पूर्वमिति** 'पुरुषस्य मुखं ब्रह्मे'त्यत्र पूर्वाध्याये । **विधीयत** इति
'अहं भवानि'त्यादि २-६-१२ सार्धपद्यत्रयेण विधीयत । **विहितमिति**
२-६-१ इति 'लोकमयः पुमान्' २-६-४१ इत्यनेन विहितम् । **इतीति** एवं प्रकारेण विरुद्धधर्माश्रयत्वात् । **देवतारूपा** इति अस्मदाद्यै तद्धातुदेवतारूपाः । मुखमुप-

---

१ "परिमाणमात्रम्" पाठः ।

कम्यात्र सप्तधातूनामुक्तत्वात् । तत्सूचितमर्थमाहुः एवमित्यादि । आरोप्यत इति आवाह्य स्थाप्यते, न तु प्रसज्यते । प्राणादिद्वारेत्यादि । 'तस्मादत्रं ददत्सर्वाण्येतानि ददाती'त्यादिश्रुत्युक्तम् । यद्यपि हव्यकव्यव्यतिरिक्तेषु मन्त्रेण नारोपः, तथाप्यभिसन्धिना तेषु बोध्यः । अन्य इति, हव्यव्यतिरिक्तरसस्यापि स्थानत्वाङ्गीकारे तुल्यन्यायेन लौकिकान्नस्यापि तत्स्थानत्वस्य सम्भवदुक्तिकत्वात्परिसङ्ख्यावैयर्थ्यापत्तिरिति सर्वपदेऽर्थसङ्कोचाभावो न युक्त इत्यस्वरसबीजं बोध्यम् ।

आधिदैविकत्वं न स्फुटमित्यतः स्फुटीकुर्वन्ति परमुत्वमित्यादि । ओषधीना-
२-६-२ मिति । अत्रापि प्रोक्षणसंस्कृता एव ते बोध्याः ।

पूर्ववदिति, आध्यात्मिकमन्तर्निवेश्य द्विवचनमुक्तमित्यर्थः । क्लिष्टत्वात्पक्षान्तरमाहुः
२-६-३ गोलकेत्यादि, तत्सम्बन्धिनामिति सुन्दराणाम् ।

लोमान्युद्भिज्जजातीनामित्यत्र जातिपदं व्यवहारमालम्ब्योक्तम् । प्रकरणादिति
२-६-५ ज्ञापनायाहुः जातय इति ।

इदानीमिति सृष्टिकरणाभिनिवेशे यद्यपि तदेव स्थानम्, तथाप्यभिनिवेशाभावान्नो-
२-६-७- क्तमित्यर्थः । लोकप्रसिद्धव्यावृत्त्यर्थो वेति । उपशब्दोक्त्यैव पूर्वव्यावृत्तेः
८ सम्भवादयं पक्ष उक्तः । नारदस्याग्रे स्थानान्तरकथनात्पक्षान्तरमाहुः ।
अथवा नारदेत्यादि ।

सम्बन्धसामान्ये चतुर्थी न सङ्गतेत्यतः पक्षान्तरमाहुः अथवेत्यादि । तव यत्प्रयो-
२-६-११ जनं रूपमिति, एतस्यैव विवरणं भक्तिजनकमिति ।

अहं भवानित्यस्याभासे एवमित्यादि । 'यत्संस्थं' २-५-२ इत्यस्योत्तरभूतेन
'वाचां' २-६-१ इत्यादिश्लोकनवकोक्तप्रकारेण सर्वेषां नित्यपरिच्छिन्ना-
२-६-१२
नामुत्पत्तिं समागमरूपामुक्त्वा यदर्थमेतत्सर्वेषां स्थानविभजनमुक्तं तत्
'यत्र' २-५-२ इति प्रश्नस्योत्तरमाहेत्यर्थः । विवृतौ, सार्द्धपद्यसिद्धमर्थमाहुः भगवत्स्वरूपा इति । मतान्तरमाहुः समुदाय इत्यादि । अत्रास्वरसबीजं तु 'अहमेवासमेवे'ति २-९-३२ पद्यविरोधो ज्ञेयः । अतः परमित्यादि । यत्संस्थं २-५-२ इत्यस्योत्तरनिरूपणानन्तरत्रिविधसुखात्मकफलनिरूपणार्थमधिकार्यादिकं वदन् पुरुषसूक्ते तयोर्निरूपितत्वात्तथेत्यर्थः । ननु पुरुषसूक्ते'ऽहं भवान्' २-६-१२ इति प्रकारेणानिरूपितत्वात् कथं तथेत्यत आहुः पुरुष इत्यादि । इदमिति उक्त श्रुताविदं पदेनोक्तम् । तथा च, तस्यैवेदं विवरणमिति न प्रकारभेदः इत्यर्थः ।

अन्तरिक्ष इत्यादि । एतेनेतः पूर्वोक्ता दिव्यास्तादृशा इतिबोधितम् ।
२-६-१३
अनेनेति सार्द्धपद्यत्रयेण ।



तेनेदमित्यत्र आहेति । एवं बोधयितुमपरिच्छेदमाहेत्यर्थः । जातिर्हीत्यादि,
इदमत्र परप्रसिद्ध्या तद्बोधनायोक्तम्, सिद्धान्ते जातेः पदार्थान्तराभावात् ।
२-६-१५
अत्यतिष्ठनीति । अधिकं यथा स्यात्तथा तिष्ठतीत्यर्थः । एतेनाधिकस्थितौ
विश्वस्य कर्तृताभ्रमो वारितः । सूक्ते 'स भूमिं विश्वतो वृत्वे'त्यत्र तच्छन्दपरामृष्टस्य सहस्रशिरसोदिगुणकस्य पुरुषस्यैव कर्तृत्वबोधनात् तेनेदं भिन्नं वाक्यमिति बोधितम् । परिमाणांशे सूक्तविशेषं परिहरन्ति अन्तीत्यादि । रूपद्वयकथनप्रयोजनमाहुः अनेनेत्यादि । अनेनेति, विश्वात्मकतदतिरिक्तरूपयोः कथनेन । अत इति उभयरूपत्वाद्विरुद्धधर्माश्रयत्वाच्च । अतिरेकेपि यथा तुल्यत्वं तथा व्यक्तीकुर्वन्ति अष्टेत्यादि । श्रुतावत्र च वितस्त्यधिकत्वकथनात् सप्तवितस्त्यात्मकविश्वपुरुषापेक्षया वितस्तिमात्रमधिक इत्यष्टवितस्त्यात्मकः। तादृशस्य सर्वतस्तद्व्याप्तिकथनाच्च तावन्मात्र एव सर्वतो वितस्त्यधिकः । अन्यथा न्यूनाधिकपरिमाणापत्त्या दशाङ्गुलशब्दसर्वतोव्याप्त्यो रन्यतरदुपरुध्येतेति तथेत्यर्थः । सिद्धमाहुः तस्मादित्यादि, तस्मादिति शब्दबलात् । तत इति आधिक्यात् । नन्वेवमपि वितस्तिमात्रतया परिच्छेद एवापततीतिशङ्कायां तदपि निवारयन्ति किञ्चेत्यादि । तथा च, श्रुतौ दशाङ्गुलाधिक्यबोधनं स्थितिप्रकारबोधनार्थं, न तु ततोधिकव्याप्तिनिवारणार्थमित्यर्थः।

स्वधिष्ण्यमित्यत्र प्राणः सूर्य इति । सूर्यस्य प्राणपदवाच्यत्वं न प्रकाशयतीति
अर्थात् प्राणः । प्रकाशे प्रकारं वदन्तः पुमानिति पदस्य तात्पर्यमाहुः
२-६-१६
पुरुष इत्यादि, 'स एव वासुदेवोयं साक्षात्पुरुष उच्यते' । स्त्रीप्रायमितरत्सर्वं जगद्ब्रह्मपुरःसर'मिति नृसिंहपुराणाद् भगवानेव पुरुषः । अतः प्राकृतत्वाद्विराडपि स्त्रीप्राय इति तथेत्यर्थः ।

सोऽमृतस्येत्यत्र उभयस्वामित्वमाहेति, यत्परमित्यस्योत्तरत्वेनाहेत्यर्थः ।
इतीति अनया श्रुत्या बोधितम् । कथं कथित इत्याकाङ्क्षायामाहुः
२-६-१७
तत्रेत्यादि तत्रेत्यर्द्धर्चे । तथा च, श्रौतस्योतशब्दस्याप्यर्थकत्वेन तद्बोधितस्यार्थस्य कण्ठोक्तस्य च हेतुपूर्वकं बोधनात् कथित इति भावः । पूर्वार्द्धे यदुक्तं तत्राशङ्कते नन्वित्यादि । तथासतीति प्रपञ्चरूपत्वेनोर्द्ध्वपरिच्छेदकत्वे सति । तस्मादिति प्रपञ्चापेक्षयोर्द्ध्वस्य स्वानन्दस्येशत्वकथनात् । न स्यादिति न युज्यत इत्यर्थः । लोकवत्कार्यमिति लोक इवाश्रयभेदम । इतिसिद्धमिति, इति हेतोर्महिमवत्त्वं सिद्धमेवमेतेना'तो ज्यायांश्च पुरुष' इति व्याख्यातम् । अतः 'एतावानस्य महिमे'ति भागं व्याकुर्वन्ति तस्मादेष, इत्यादि । एतस्य महिमत्वं व्युत्पादयन्ति तस्येत्यादि । महिम्नः प्रतिबन्धकता न युक्तेति विरुद्धधर्माश्रयत्वकृतस्य महिम्नो विरोधप्रतिबन्धकता

१ "स्त्यादि" पाठः । २ परिणामांशे पाठः । ३ 'परिणामा' पाठः ।

न युक्ता । असमोर्द्धत्वादिति । यथा कमलमुकुलं मूले विस्तीर्णं प्रान्ते स्वल्पं यथा चन्द्रज्योत्स्नाग्रे स्वल्पा मूले विस्तीर्णा, तथा विरुद्धधर्माश्रयत्वमपि प्रापञ्चिकेषु स्वल्पं, तदुपरि ततोधिकं, तदुपरि ततोपि महदिति तथात्वात् । तथा च, नीचैर्भागे धर्मस्य विरुद्धत्वाभावेन तत्कृतमहिम्नोभावादपि तथेत्यर्थः । उक्तिमात्रविरुद्धत्वादिति, उक्तिमात्रेणैव विरुद्धत्वादित्यर्थः । अत इति, अविरोधस्याशक्यवचनत्वात् । उभयकार्यदर्शनादिति, सदिति ज्ञानविषयत्वस्य सर्वरूपत्वकार्यस्य ध्यानादिभिः फलप्राप्तिरूपस्यातिरिक्तरूपत्वकार्यस्य च सर्वानुभवगोचरत्वात् । स एवेति, अपरिच्छेदानिर्वाच्यत्वादिमहत्स्वरूपमेतावत्त्वमेवेत्यर्थः ।

पादेष्वित्यत्र सर्वे लोका इति सर्वे प्राणिनः । स्था इति अत्राधिकरणे ल्यञ् ।
२-६-१८ स्थितिशब्दवाच्या भवन्तीति । तेन स्थितिशब्दो लोकेषु रूढ इति
बोधितम् । अवयवा अप्यवयविन इत्यादि । पुंसः सर्वरूपस्यावयविनः तत्तदवयवरूपा अपि भगवन्तमतिरिक्तं प्रतिपाद्या इत्यर्थः । नन्वत्र भूतानां पादाधिकरणकत्वमुच्यते, प्रमाणे तु भूतानामेव पादत्वमुक्तमिति विरोध इत्याशङ्कायां तत्तात्पर्यमाहुः भगवन्माहात्म्येत्यादि । विरुद्धधर्माश्रयत्वबोधनार्थं तत्र भूतानां पादत्वमुच्यतेऽन्यथा पाद इत्येकवचनं न वदेत्, अतो न विरोध इत्यर्थः । ननु मन्त्रवर्णादित्यस्य विषयवाक्यमिदम्, तत्र जीवानामंशत्वाय पादत्वमङ्गीकृतमिति तद्विरुध्यत इत्यरुच्या व्याख्यानान्तरमाहुः अथवेत्यादि । तथा च, पादस्थानां रेखादीनामिवांशत्वस्याविरुद्धत्वाद्वक्ष्यमाणरीत्या तानधिष्ठाय भगवतः स्थितत्वाच्च लक्षणया योगेन गौण्या च देहविशिष्टजीवानामपि पादत्वमतो न विरोध इत्यर्थः । उक्तार्थस्य परोक्षत्वादत्र लक्षणा न दोषाय स्वार्थत्यागाभावाच्च । त्रिपादमृतमिति । त्रिभिः पद्यते प्राप्यत इति त्रिपात्, न विद्यते मृतं नाशो यस्येत्यमृतम् ।

पादा इत्यत्र त्रिपादूर्ध्वं इत्यर्द्धर्चं विवृणोतीत्याहुः एतेषामित्यादि । त इति
२-६-१९ आश्रमविशिष्टजीवाः । व्युत्क्रान्तानामिति त्यक्तभौतिकशरीराणाम् ।
तथा च, त्रिपादाश्रमत्रयात्मकः पुरुष ऊर्ध्वं उपरितनामृतसुखार्थमुदैत्, उपरितनेषु जनस्तपः सत्येषु गतवान्, अस्य पादः गृहस्थाश्रमी इह त्रिलोकीसुखार्थं पुनरभवत् पुनः पुनरुत्पन्न इति श्रुत्यर्थः ।

सृती इत्यत्र वैलक्षण्यहेतुमाहेति ततो विश्वं व्यक्रामत् साशनानशने
२-६-२० अभीत्यर्द्धर्चं व्याकुर्वन् सर्वेषां जीवानां चीदंशत्वेन तौल्येपि फलभेद-
हेतुभूतस्वभाववैलक्षण्ये प्रयोजकमाहेत्यर्थः । ते उभे इत्यादि श्रौतस्याभिपदस्यायमर्थः । तत्राहेति ईदृश्यामाशङ्कायां श्रौतस्य तत इति पदस्यार्थमाहेत्यर्थः । उभयाश्रित इति उभयमाश्रितं यत्र स तथेत्यर्थः । एतेनाविद्याविद्ययोश्चरणशक्तित्वं



बोधितम् । तेन च जीवानां चरणांशत्वाद् एतन्नैकट्येन 'एकस्यैव ममांशस्ये'तिभगवद्वाक्योक्तबन्धमोक्षयोरुपपत्तिरपि सूचिता । अन्यथेति'भगवदनाश्रितत्वमित्यर्थः ।

तस्मादित्यत्र आहेति । तस्माद्विराडजायन्त इति ऋचं व्याकुर्वन्नाहेत्यर्थः ।
तस्मादण्डमिति । एतेन सुबालादिश्रुत्यर्थोपि सङ्गृहीतः । तत्र हि
२-६-२१ किं तदासीत्तस्मै स होवाच न सन्नासन्न सदसदिति तस्मात्तमः सञ्जायते
तमसो भूतादिर्भूतादेराकाशमाकाशाद्वायुः वायोरग्निरग्नेरापः अद्भ्यः पृथिवी तदण्डं समभवदि'ति श्रावणात् तदग्रे च मध्ये 'पुरुषो दिव्यः सहस्रशीर्षे'त्यादिश्रावणाच्च, गुणा इति दिगादयो देवाः । अशनमार्गविक्रमणेन कर्मफलभोक्तृत्वं भगवतो वक्तव्यं, तत्केन रूपेणेत्याकाङ्क्षायां तद्रूपमत्रोच्यते इत्याशयेन व्याख्यानान्तरमाहुः अथवेत्यादि । सोपीति विराट्पुरुषोपि ।

यदास्येत्यत्र द्विविधमिति । अण्डात्मकं विराडात्मकञ्च । पुरुषद्वयमिति, विराड्-
रूपमतिरिक्तञ्च । अमूर्त्तानामिति नित्यपरिच्छिन्नानां आधिदैविकानां
२-६-२२ वागाद्यभिमानिजीवानाम् । यज्ञरूपस्येत्यादि । अयमर्थः, यज्ञो हि
द्रव्यादिनिष्पाद्यः, तस्य च प्रोक्षणादिव्यतिरेकेण तत्तत्स्मारकमन्त्रादिव्यतिरेकेणापि सिद्धौ ते संस्कारा मन्त्राश्च नोक्ताः स्युरतो ज्ञायते तैरतीन्द्रियः पदार्थः कश्चित्सिद्ध्यतीति । स चेदन्यः स्यान्मीमांसकप्रतिपन्नापूर्ववत्तदा तत्साध्यस्य यज्ञस्यापि जन्यत्वा'द्यज्ञो वै विष्णुरि'ति तस्य भगवत्त्वं नोच्येतातः श्रुतविष्णुत्वार्थापत्त्या तस्य तत्साधकानाञ्च नित्यत्वं तेन प्रकारेणाविर्भावमात्रं च यज्ञस्येति वाच्यम् । ते पदार्थाश्च यदि पूर्वोक्तपुरुषाद्भिन्नाः स्युस्तदा 'पुरुष एवेदꣳ सर्वमि'ति पूर्वं श्रावितं पुरुषस्य सर्वत्वं विरुद्ध्येतेत्याशङ्क्य प्रोक्षणमन्त्रादिभिः सन्निधाप्यमानानां यज्ञीयपदार्थानामपि भगवानेवानारोपितानागन्तुकरूपमित्याहेत्यर्थः । एतदेव विवृण्वन्ति यदैतदित्यादि । अत्र 'अहमासमि'त्यनेन यजमानस्य भगवदवयवत्वं सूचितमत एवाच्छिद्रे श्राव्यते य एवास्मि स सन्यज इति एवमग्रेपि सर्वत्र बोध्यम् । महत्त्वं विवृण्वन्ति महानात्मेत्यादि । स एवेति । 'सहस्रशीर्षा' मूलपुरुष एव यज्ञरूपेण दर्शनगोचरोभवदित्यर्थः ।

तेषु यज्ञस्येत्यादेर्विवृतौ बर्हीरूपा इति असंस्कृतरूपाः, बर्हिराज्याधिकरणे
तथा सिद्धत्वात् । महावीराद्यर्था इति । महावीरो घर्मपात्रम् । आदि-
२-६-२३ पदेन द्रोणकलशादयस्तदर्था इत्यर्थः । वसतीवरीति प्रोक्षणविशेषोप-
योगि जलम् । चातुर्होतृनिदानकमिति पृथिवीहोतेत्यादिरूपकेत्यन्तोमन्त्रश्चतुर्होतारव्यः, स एव सर्वयज्ञनिदानं चतुर्होतृभ्यो यज्ञो निर्मित' इति ब्राह्मणे श्रावणात् अतस्तथेत्यर्थः ।

इति सम्भृत इत्यत्र फलार्थं नेति आराधनविचारदशायां फलार्थं तद्विचारेपि
सम्भारदर्शनोत्तरं तादृशबुद्धिनिवृत्तेस्तथेत्यर्थः । एवं प्रकारेण करणस्य
२-६-२७ मुख्यत्वं विशदयन्ति यथेत्यादि । अन्यथेश्वरपदं न वदेदितिभावः । उचित-

**प्रकारमेव** विशदयन्ति **यज्ञीयानित्यादि** । **पदार्थानित्यन्तम्** । **उत्पाद्येत्यनेन सम्बद्ध्यते। अस्ति किञ्चित्कार्यमिति** । तत्किमित्याकाङ्क्षायां स्वावयवरूपदेवाप्यानेन सकलजगदाप्यायनमिति प्रतिभाति, 'सर्गादौ कल्पितो देवैर्यज्ञभुग्भगवान् हरिः । यज्ञभागभुजो देवास्ततस्तेनैव कल्पिता' इत्यादिवाक्येभ्यः । **ते** इति जीवाः । द्वितीयं प्रकारमाहुः **मध्यमाधिकारिण** इति षष्ठ्यन्तः प्रयोगोयम् । **तथाज्ञात्वेति** पदार्थनिर्माणं ज्ञात्वा । तृतीयं प्रकारमाहुः **यदा पुनरित्यादि** । **तथा अज्ञानादिति** पदार्थानां यज्ञार्थत्वाद्यज्ञानात् । चतुर्थं प्रकारमाहुः **यत्पुनरित्यादि** । एवं चतुरः प्रकारानुक्त्वा साधारणपदार्थेभ्यो यज्ञीयानां भेदं दर्शयितुं श्रुतिपुराणान्तरानुसारेण तेषां स्थानभेदं निर्दिशन्ति **तत्रेत्यादि** । **यथायथमूह्या** इति उक्तप्रकारमवगत्य ये यत उचितास्ते तत ऊह्या इत्यर्थः । अत्र मुख्यप्रकारस्य श्रौतत्वबोधनायाहुः **अत एवेत्यादि** । **वैयर्थ्योपपत्तिरित्यन्तम्** । **अत्रोदाहरणं संहितां दृष्ट्वा लेख्यमस्ति** । तथा च, श्रुतार्थापत्तिसिद्धोयं प्रकार इत्यर्थः ।

**ततस्त** इत्यत्र । एतेषां प्रकाराणां परम्परया प्रचारमाहुः **एवमित्यादि** । **अन्य-**
२-६-२८ **थेत्यादि** । इदमपि त्रयं क्रमेण सात्विकादिषु बोध्यम् ।
२-६-२९ **द्वितीयकक्षाप्रकारमाहुः तदनन्तरमित्यादि** ।

**नारायण** इत्यत्र । ननूपादानत्वे भगवतः सम्यगुक्ते तत्रैव सर्वस्य स्थितिरर्थादेव
सिद्धेति पुनः स्थितिकथनस्य किं प्रयोजनमत आहुः **विश्वेत्यादि** ।
२-६-३० तथा च, स्वतो विश्वं निर्माय तदन्तः स्वयं प्रविश्य तत्स्थापक इति
प्रकारान्तरबोधनं प्रयोजनमित्यर्थः । अत्र यद्यप्युत्तरार्द्धं न व्याख्यातं, तथापि **ननु भगवते**त्यादिनाग्रिमाभासेन तदस्तीति निश्चीयते इति बोध्यम् ।

**इति त** इत्यस्याभासे **अंशत्रयमिति** । गुणावतारत्रयात्मकं तत्त्रयम् । विवृतौ
**मतान्तरस्थैरिति**, भेदवादिभिर्विशिष्टाद्वैतवादिभिश्च । अत्र यथायथं
२-६-३१ पूर्वोक्तं हेतुद्वयं योजनीयम् । **अस्मिन् मार्गे** इति विवक्षिते भक्तिमार्गे ।
**यत्र हीत्यादि** । तथा च भेदवादिमते 'अनन्तवीर्यामित विक्रमस्त्वं सर्वं समाप्नोषि ततोसि सर्व' इति वाक्यस्वारस्यात् पारिभाषिकं सर्वत्वं, विशिष्टाद्वैतवादिमते 'यस्य पृथिवी शरीरं यः पृथिवीमन्तरे सञ्चरन् यं पृथिवी न वेदे'त्यारभ्याप्तेजोवाय्वाकाशमनोबुद्ध्यहङ्कारचित्ताव्यक्ताक्षरमृत्यन्तान् शरीरत्वेन पूर्ववदुक्त्वा 'स एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायण' इति सुबालोपनिषदि श्रावणेन तत्स्वारस्याच्छरीरित्वेन सर्वत्वम् । अत्र तूपादेयस्यावयस्य चोपादानावयविभेदाभेदासद्रूपेणापि सर्वत्वमिति विशेषः इत्यर्थः । न च पूर्वश्रुतिविरोधः । तत्रैव पूर्वं प्रलयप्रकरणे पृथिव्यप्सु प्रलीयत इत्यारभ्यापस्तेजसि तेजो वायौ वायुराकाश आकाशमिन्द्रियेष्विन्द्रियाणि तन्मात्राणि भूतादौ भूतादिर्महति महानव्यक्तेऽ-



व्यक्तमक्षरेक्षरं तमसि विलीयत इत्यन्तं शब्दाभ्यासेन लयमुक्त्वाग्रे 'तम एकीभवति परस्मिन् परस्तान्नसन्नासन्नसदसदित्येतन्निर्वाणमनुशासनमिति वेदानुशासनमि'ति पृथिव्याद्यक्षरान्तानां सूक्ष्मरूपतापत्त्या कारणेन सह श्लेषः तमस्त्वेकीभावेन कारणभूतपरात्मत्वे सदसद्विलक्षणब्रह्ममात्रसत्ताबोधनेन तमआदिपृथिव्यन्तानां सञ्चरक्रमेण ब्रह्मोपादेयता तत्रापि भिन्नसत्ताकत्वविरोधात् । ब्रह्मवादादत्र विशेषं व्युत्पादयन्ति **तस्मादित्यादि** । **भानं शुक्तिरजतादेः** ज्ञानं शशशृङ्गादेः । तथा च, प्रतिभासरूपेण वचनरूपेणानुव्यवसायविषयरूपेण च या तत्सत्ता सा तेषां ब्रह्मरूपत्वं विना नोपपद्यत इति तेषामपि तेन रूपेण ब्रह्मत्वमित्येष ब्रह्मवादादपि विशेष इत्यर्थः । ब्रह्मवादे हि 'तदनन्यत्व'सूत्रोक्तरीत्या कारणरूपेण 'उभयव्यपदेश'सूत्रोक्तरीत्या व्यवहारयोग्यसद्रूपेण च ब्रह्मरूपत्वबोधनेन सदसद्व्यवहारयोग्यरूपेण तथात्वाबोधनादिति ।

**न भारतीत्यत्र भावेनेति** । अत्र भाविनेतिपाठः प्रतिभाति । ननु भारते,
नीतिशास्त्रे हिंस्रयोगानां कामशास्त्रे च पारदारिकसुखसुरतादीनां ब्रह्मणा
२-६-३३ कथनस्य भारते वात्स्यायनीये चानुवादात् ब्रह्मवाचां निन्दितमार्गे पातः
इति 'न मे हृषीकाणि' इत्युक्तिः कथं सङ्गच्छत इत्यत आहुः **वाक्सम्बन्ध इत्यादि** । इदं मनःसम्बन्धस्याप्युपलक्षकम् । तथा च तयोः सम्बन्धेपि चेद्भगवदविस्मरणं स्यात्तदा भारतीत्यर्थेन सत्यनिर्गमनरूपमात्रमेव कार्यं न वदेत्, अतो निर्गम एवाविस्मरणम् । न तु तयोः सम्बन्धेपीति न तेन व्यभिचार इत्यर्थः । **धृत** इति प्रेम्णाबद्ध इत्यर्थः । **प्रतिनियतेन्द्रियवद्भक्तिरिति** । मनसा रूपरसादिग्रहणे चक्षुरसनादिवन्मनसा भगवद्ग्रहणे भक्तिरित्यर्थः ।

**सोहमित्यत्र तत्रेति** भगवज्ज्ञाने, **प्रमाणाभिज्ञानमिति** वेदतात्पर्यज्ञानम् । **अन्तर-**
**ङ्गमिति** निदिध्यासनजनकम् । **सोहमिति** उत्तमाधिकारी । साधनस-
२-६-३४ म्पत्तिं विशदयन्ति **समाम्नायेत्यादि** । **उक्तमिति** मयडन्तमुक्तम् ।
एतेन 'तं त्वौपनिषदं पुरुषमि'ति 'मनसैवानुद्रष्टव्य' इत्येवं जातीयकानां तात्पर्यं निर्द्धारयन्तीत्याहुः **प्रमाणं हीत्यादि** ।

**नतोस्मीत्यत्र आहेति**, श्लोकत्रयेणोत्तरमाहेत्यर्थः । **अर्थसिद्धिरिति** भगवद्विचा-
२-६-३५ रितरीतिकाभीष्टसिद्धिः ।

**नाहमित्यत्र ज्ञानसम्बन्धिन्येति** चिदंशशक्त्या । **अनेनेति** विनिर्मितपदेन ।
२-६-३६ **तदपीति** कार्यरूपं जगदपि । **अन्यथेति** कार्यस्य सम्यक्परिच्छेदे ।

**यस्यावतारेत्यत्र तस्येति** मूलरूपस्य पुरुषोत्तमस्य । एवं श्लोकत्रयेणेदं सिद्धम्,
ज्ञानभक्ती दुर्लभे, केवलं दैन्यमेव तोषसाधनमिति तेन भगवद्विचारानु-
२-६-३७ रूपा जीवाभीष्टसिद्धिरिति नमनमेव कर्तव्यमिति ।

**स एष** इत्यत्र **अन्यस्मिन्नि**त्यादि, उत्पादकेपि मारकेपि स्थापकत्वमेवं निरूप-
२-६-३८ णमित्यर्थः । **तथाभूतमि**ति साधनभूतम् । तथा च, वस्तुस्वभाव एव
युक्तिरित्यर्थः । एवं विरुद्धधर्माश्रयत्वनिगमनेन माहात्म्यं भगवतो निरूपितम् ।

**विशुद्धमि**त्यत्र **ब्रह्मात्मस्वरूपभूत** इति, ब्रह्म आत्मनः स्वरूपभूतं यत्र तादृश
२-६-३९ इत्यर्थः । **फलिष्यती**ति, तथा चैवं फलिते ज्ञाते स्वाश्रया मुक्तिः सिद्धै-
वेति सुगममुपायमपहाय दुर्गमो भगवन्मार्गः किमर्थमन्वेषणीयः इत्यर्थः। एतस्य प्रतिपत्तिसाधनाभ्यां सुकरत्वं व्याख्यानेन व्युत्पादयन्ति **तत्रे**त्यादि । **ज्ञानार्थ**मिति आत्मज्ञानार्थम् । ननु ज्ञानार्थप्रयत्नवैयर्थ्याङ्गीकारे शास्त्रेष्वात्मबोधकत्वप्रसिद्धिर्व्याहन्येतेत्यत आहुः **शास्त्राणी**त्यादि । **त्यक्तव्य** इति । तथा च, **कपिलादिवत्सिद्धतया** स्यातव्यमित्यर्थः । 'प्रत्यक्' 'सम्यगिति' विशेषणद्वयेन योगपक्षं निराचक्षते **किञ्चे**त्यादि । **न ही**त्यादि । एतेनेदं बोधितम् । इयं देहस्यासम्यक्त्वपराक्त्वप्रयुक्ता, तथा सति, स्ववृत्तावात्मस्फोरणेनात्मनि पराक्त्वसम्पादकस्य योगस्याप्यात्मन्यसम्यक्त्वसम्पादकत्वमेवेति तस्याप्यनुपयोग इत्यर्थः । **अवस्थितमि**ति विशेषणेन श्रौतं साधनं मननात्मकं निराचक्षते। **किञ्चे**त्यादि । एतस्य प्रवृत्तोपयोगमाहुः **देहे**त्यादि । तात्त्विकोपाधिवादिमतीयसाधननिराकरणायाहुः **ननु पूर्णे**त्यादि । ननूक्तं आकाशस्येव सम्भवतीत्याकाङ्क्षायां तद्वैलक्षण्याभोक्तविशेषणसूचितं हेतुत्रयमाहुः **अविकारित्वादि**त्यादि । आकाशो हि शब्दरूपेण विक्रियते इति तेन रूपेणाद्यन्तवान्, आत्मा तु 'अविनाशी वा अरे अयमात्मे'तिश्रुतेस्तद्विलक्षणः । अर्द्धवैनाशिकमते यद्यपि विकारो नाङ्गीक्रियते, तथापि, घटाद्यवयवकर्मजसंयोगोऽङ्गीक्रियते इति संयोगात्मकः सङ्गस्तत्रास्ति, आत्मा 'असङ्गो ह्ययं पुरुष' इति श्रुतेः सङ्गराहित्यात्तद्विलक्षणः । यन्मते संयोगः स्पर्शभेदस्तन्मते आकाशे तदभावेप्यवकाशरूपेण व्यवहार्यत्वमस्त्येव । आत्मा तु 'यत्र स्पृशन्ति न विदुरि'तिवाक्याद्दुर्ज्ञेयत्वेनाव्यवहार्य इति तद्विलक्षण इत्यर्थः । **केनाप्यंशेने**ति, विकारांशेन कार्यांशेन व्यवहारांशेन चेत्यर्थः । ननु तर्हि देहादीनामुपाधित्वप्रसिद्धिः कथमित्यत आहुः **देहादय** इत्यादि । **तथा च,** तत्प्रकाश्यतया तेषु तथा व्यवहार इत्यर्थः । **यावन्त** इत्यादि । तथा च, पूर्वं स्वरूपनित्यत्वं सत्पदेनोक्तम् । इदानी'मनुच्छित्तिधर्मे'त्यादिश्रुत्यनुसारेण धर्मनित्यत्वमुच्यत इत्यर्थः । ब्रह्मत्वोपपादनाय भगवानित्युक्तम् । तत्र कथं भगवानित्यपेक्षायां श्रुतिगीतावाक्यं चोच्यते । तत्र श्रुतौ 'विज्ञानमय' इति ब्रह्मत्वोपपादकम्, गीतावाक्ये च 'सर्वभूताशयस्थित' इत्यन्तःस्थितिर्भगवत्त्वोपपादिका, 'उत्तमः पुरुषस्त्वन्य' इति पुरुषोत्तमलक्षणवाक्ये 'यो लोकत्रयमाविश्य बिभर्ती'तिलक्षणत्वेन कथनादित्याशयेनाहुः **अयमात्मे**त्यादि । **इदञ्च साङ्ख्या-**



भिमतमिति ज्ञापन्तयाहुः **पुरुषेश्वरयो**रित्यादि । एतान् द्वादशानपि धर्मान्निगमयितुं प्रातिलोम्येन वदन्तः अद्वयत्वस्य व्याख्यातत्वेन नैकट्यान्निखिलत्वादीनामर्थं स्मारयन्ति **सर्वत्रे**त्यादि।

**ऋषय** इत्यत्र **दूषयन्ती**ति अभ्युपगम्य दूषयतीत्यर्थः । तदेव स्फुटीकुर्वन्ति **किन्त्वा-**
**घते**त्यादिना । **भ्रमो निवर्त्तनीय** इति । तथा च, तन्निवृत्तेर्विशेषदर्शनसा-
२-६-४० पेक्षत्वेन तदर्थं यत्ने अवश्यं कार्ये आगत एव ज्ञानार्थं प्रयास इत्याऽत्रवणमात्राज्ज्ञानमिति पक्षो न युक्त इत्यर्थः । मननपक्षं मनसि निधाय योगपक्षं दूषयितुमुपक्षिपति **एवमि**त्यादि । **क्रियमाण** इति मनने क्रियमाणे । **तद्देव गुणस्वरूपमि**ति मननसाधितं गुणात्मकवृत्तिस्वरूपम् । एततिरोधायकयुक्तीराहुः **सर्वदे**त्यादि । **तस्मादि**ति एतद्दूषणपरिहारस्यावश्यकत्वात् । व्यवस्थायामिष्टापादने दोषमाहुः **एवमि**त्यादि । **तिरोभवती**ति स्फुरितमपि तादृशरूपं साधनदौर्बल्यात् प्रतिहन्यमानं तिरोभवतीति पुनः संसारपात इत्यर्थः । अतः परमेतन्नियमनार्थमिति साधनदौर्बल्यानुसन्धानोत्तरमसत्तर्ककृतप्रतिघातवारणार्थम् । **साधनाभावादि**ति नित्यानित्यवस्तुविवेकवैराग्याद्यभावात् । **कृतमात्मनिरूपणेने**ति व्यर्थं तदित्यर्थः, तृतीयान्तसहितः कृतशब्दः समभिव्याहृतवैयर्थ्यबोधकतया लोके प्रसिद्धः । **तस्मादि**ति साधनासम्भवेन ज्ञानस्य दौर्घट्यात् । **अत** इति तर्कविप्लुतत्वात् । **अत** इति आवश्यकत्वाभावात् । ननु यद्येवं तदा'यमात्मा ब्रह्मे'त्यादावात्मनो ब्रह्मत्वम्, गीतायां च स्वस्य सर्वात्मत्वं यदुच्यते तस्य विरोधः कथं निवर्त्तेत इत्यत आहुः **तस्मादि**त्यादि । तस्य मतस्याप्रयोजकत्वेपि विरोधपरिहारस्यावश्यकत्वाच्छारीरब्राह्मणस्थश्रुतावुक्तं भगवत एकं रूपं भोक्तृभूतमिति विरुद्धधर्माधारत्वरूपमाहात्म्यबोधनायोच्यते गीतायां प्रश्नानुरोधाद्विभूतिरूपं तदर्थमुच्यत इति तेन चन्द्रदृष्टान्तन्यायेन परोक्षज्ञानस्यैवोत्पादनाय तथा कथनमतो न विरोध इत्यर्थः ।

**आद्योवतार** इत्यत्र **आधिदैविकमि**ति, 'असतोधिमनो सृज्यत मनः प्रजापतिम-
२-६-४१ सृजते'त्यादिश्रुत्युक्तम् ।

**अहमि**त्यत्र **चेदि**ति लोकप्रसिद्ध्याऽवतारस्य लक्षणान्तरं चेदित्यर्थः । **ते सर्व**
२-६-४२ इति । तथा च, लक्ष्यकुक्षौ तेषां निवेशनादतिव्याप्तिरित्यर्थः ।

इति श्रीद्वितीयस्कन्धसुबोधिनीप्रकाशे
षष्ठाध्यायविवरणम् ।

श्रीकृष्णाय नमः ।

# अथ सप्तमाध्यायस्थश्रीसुबोधिनीप्रकाशः ।

अथ सप्तमाध्यायं विवरिष्वः पूर्वप्रकरणसङ्गतिं वक्तुं पूर्वोक्तार्थसङ्ग्रहपूर्वकं प्रस्तुताध्यायार्थमाहुः **एवमित्यादि** । अतति व्याप्नोतीत्यात्मा भगवान्, **तदतिरिक्तानां** अनित्यनित्यपरिच्छिन्नभेदभिन्नानां **सर्वेषामुदिष्टपृष्टपदार्थानां उत्पत्त्या** जननसमागमरूपया, एवं **वस्तुत ऐक्येपि नियम्यतेतिनिर्णयः पूर्वाध्यायद्वयेन कृतः**, **अत्रास्मिन्नध्याये** आत्मनो व्यापकस्यापि **हरेर्निर्णयः तत्तद्धर्मरूपेण मूलरूपेण च प्राकट्यरूपोत्पत्तिनिर्णयो** विनिरूप्यते सोपपत्तिक उच्यते । तथा च, नारदेन मुख्यतयाऽऽत्मन एव पृष्टत्वात्तन्निर्द्धारार्थमेव **तद्व्यतिरिक्तनिर्णयोक्तेः** स्थूलसूक्ष्मोत्पत्तिप्रकरणयोः शेषशेषिभावः सङ्गतिरित्यर्थः ॥ १ ॥ ननु **स्थूलप्रकरण** उद्दिष्टविमर्शस्य स्फुटत्वादत्र चावतारकथामात्रदर्शनादस्य कथं विमर्शेन्तर्भाव इत्याकाङ्क्षायामाहुः **सूक्ष्मेत्यादि** । तथा च, विवृतिस्फुटीकरणाद्विमर्शेन्तर्भाव इत्यर्थः । ननु स्थूलप्रकरण उद्दिष्टविमर्शस्य स्फुटत्वादत्र जडजीवयोर्ब्रह्मस्वभाववैलक्षण्येन तयोस्तद्भिन्नत्वभ्रमात्तद्वारणायोत्पत्त्या निर्णय उचितः । सूक्ष्मध्याने तु भगवतो गुणाभरणादयो भगवदविनाभूता एवोक्ता इति तन्निर्णयस्य किं प्रयोजनमत आहुः **येनेत्यादि वस्तुत** इति । वास्तवा अनागन्तुकास्तथा च तेषामनागन्तुकत्वेनाभेदाय निर्णय आवश्यक इत्यर्थः ॥ २ ॥

**ननु** कथामात्रेण कथं तद्धर्मविवृतित्वावगम इत्यत आहुः **उपासनायामित्यादिद्वाभ्याम्** । **उपासनायां** निदिध्यासने **सर्वस्य हरेर्धर्मस्य स्वरूपगुणभेदेन बोधनार्थं निर्णयः** यथावस्थितस्वरूपनिश्चयः **इहास्मिन्नध्याय** उच्यते, श्रुतौ तावत्पर्यन्तस्यैव साधनस्य **कथनादुच्यते** ॥ ३ ॥

तु पुनः मुख्यस्य 'वासुदेवे भगवती'त्यादिना २।२।३३ द्वितीयाध्यायोक्तस्यात्मादिनिरूपणशेषिणो भक्तिमार्गस्य निर्णीतं 'भगवान् ब्रह्मकार्त्स्न्येन' २।२।३४। इत्यनेन निर्द्धारितं फलं प्रेमभक्तिरूपं विनिरूप्यते सोपपत्तिकमुच्यते । तदङ्गं प्रेमभक्त्यङ्गं माहात्म्यादि च सोपपत्तिकमुच्यते । **तेन** हेतुत्रयेण विशिष्टं तत्तद्धर्मविशिष्टमन्तर्यामिस्वरूपं **सिद्ध्यतीति** योजना । **अत्रायमर्थः** । **स्थूलसूक्ष्मध्यानश्रवणोत्तरं राज्ञा** ' भूय एव विवित्सामि ' २।४।६। इत्यादिना कृतेषु प्रश्नेषु श्रीशुकैरुत्तरस्य प्रमाणत्वाय 'एतदेवात्मभू राजन्' २।४।२५। इत्यादिना ब्रह्मनारदसंवाद उपक्षिप्तः । तेन द्वयोः प्रश्नयोस्तदुत्तरयोश्चैकविषयकत्वं ज्ञायते । तत्र चोत्तरे स्थूलध्यानोद्दिष्टाः पदार्था विवृत्योत्तरिता इति विवरणरूपता स्फुटा । अतः 'कुर्वन् कर्माणि जन्मभिः' २।४।९। इत्यवतारप्रयोजनसन्देहगर्भः प्रश्नोनुत्तरितो

१ प्रकारेति पाठः ।



सोपवित्तस्तं नारदानुयुक्तात्मतत्त्वप्रश्नोत्तरभूतेनानेनाध्यायेन सूक्ष्मध्यानोद्दिष्टपदार्थविवरणरूपतयावतारकथां वदन्नुत्तरयतीति ज्ञायते । अन्यथा 'विशुद्धं' 'केवल२।६।३९।मि'त्यादिश्लोकद्वयेन मतान्तरनिरासपर्यन्तमात्मस्वरूपं निश्चाय्य 'आद्योवतार' २।६।४१। इत्यादिना रूपवदस्वरूपमित्यन्तेन तदवताराणामुक्तत्वात् ब्रह्मा न लीलावतारान् स्मरेत्तेन ज्ञायतेऽतिरिक्तात्मस्वरूपमिदानीमेतेन पूर्णं ज्ञापितं भविष्यतीति तथैव शुकोक्तमन्तर्यामिस्वरूपमपीत्यन्तर्यामिण अतिरिक्तात्मनश्चैक्येऽतिरिक्तात्मावतारा अन्तर्यामिण एव स्वरूपविमर्शायेति द्वितीयाध्यायोक्तं भक्त्यादिकं च विमृष्टमतोस्य तद्विवरणरूपतेति ॥ ४ ॥

एवं कारिकाभिरर्थं सङ्गृह्य तदनु व्याकुर्वन्ति **एवमित्यादि** । **यत्रोद्यत** इत्यत्र
आहेति ब्रह्मोक्तिमुखेन शुक आह । एवं सर्वत्र बोध्यम् । अन्तर्याम्य-
२-७-१
वतारत्वे गमकमत्र वदन्तो विवरणत्वं स्फुटीकुर्वन्ति **ब्रह्मण इत्यादि** ।
तथा च, प्रेरकस्यैवायमवतारोऽतोपि ज्ञायते तस्यैवेदं विवरणमिति । ननु परिमाणविरोधात् कथमेवमत आहुः **स प्रादेशेत्यादि** । तथा चास्वाभाविकत्वान्न विरोधो दोषायेत्यत स्तस्य तद्धर्मावतारत्वव्युत्पत्तिरित्यर्थः । **प्रादेशमात्रमित्यत्र अङ्गुष्ठशिरोमात्रत्वमिति** पाठः प्रतिभाति, (जाबाल)श्रुत्या निबन्धेन च तथा निश्चयादिति । **मूलस्थस्य यत्रेतिपदस्य** तात्पर्यमाहुः **यदैवेत्यादि गृहीतवानित्यन्तम्** । **'सोपश्यदि'ति** 'पशूनां वे'ति च श्रुतिद्वयं तैत्तरीयब्राह्मणस्थम् । **उत्तरत्रेति** तृतीयस्कन्धे, **तत्कार्यस्येतिजलाद्वस्तूद्धारस्य** । 'असुरा वे'तिश्रुतिस्तैत्तरीयसंहिताषष्ठाष्टकस्था । **विदीर्णत** इति, अत्र **विदारण इति** पाठः प्रतिभाति । **यदग्र** इति, यत्तृतीयस्कन्धे तेन सा कल्पान्तरकथेति प्रतिभाति । **अथ वा करेण** तत्पराजयमात्रं, मारणं तु दंष्ट्रयेति ।

**जात** इत्यत्र पुरुषधर्मावतारत्वं व्युत्पादयन्ति **स हीत्यादि** । तथा च, **रूपादेवात्र**
तद्व्युत्पत्तिरित्यर्थः । **स्वरुच्या कृतवानिति**, अत्र च 'तेषां मे पौरुषी-
२-७-२
प्रिये'ति वाक्यं ज्ञापकं बोध्यम् । **द्वयमिति** युगपद्द्वयम् । एतेन **विश्वा-
मित्रादिवैलक्षण्यं ज्ञापितम्** ॥ २ ॥

**जज्ञे** चेत्यत्र **अत** इत्यादि । तथा च, ताध्यशास्त्रप्रणयनात्तस्य तदवतारत्वनिश्चय
इत्यर्थः । **क्विप्प्रत्यय** इति अत्र विच् प्रत्यय इति पाठः प्रतिभाति ।
२-७-३
**स्वोत्पादकबुद्धिनिवृत्त्यर्थमिति** स्वस्यामुत्पादबुद्धिनिवृत्त्यर्थम् । **अत**
इति अधिकारोत्कर्षात् । पाठान्तरमभिप्रेत्याहुः **अस्मिन्निति** ।

**अत्रेरित्यत्र** पुत्रत्रयस्यावश्यभाव्यत्वेपि त्रितयाकाङ्क्षाया अत्र चतुर्थस्कन्धे चास्फु-
टत्वान्नात्र बहुव्रीहिर्युक्त इत्यरुच्या नञ्समासेन व्याख्यानान्तरमाहुः
२-७-४
**अथ वेति** । तस्येति भगवतः । **स्वस्मिन्निति अत्रौ** । **अथवा न सत्स्या-**

मात्रस्यावतारः किन्तु तत्सहितानां बाहूनामिति ज्ञापनमाहुः चतस्र इत्यादि, ब्रह्मविष्णुशिवांशैरवतारादत्रेस्तपःपरत्वाच्च तथेत्यर्थः । अवतारेष्वेता न स्फुटा इत्यरुच्या पक्षान्तरं कारिकयाहुः योग इत्यादि । तपो दुर्वाससि, भगवद्भक्तिरत्रौ । ननु सोमदुर्वाससोरत्रेश्च परम्परितत्वाद्भगवदवतारत्वाप्रसिद्धेश्च नेदमपि युक्तमित्यरुच्या कारिकान्तरेण मुख्यं पक्षमाहुः अथ वेत्यादि । बोधयतीति चतुर्भिर्भुजैर्बोधयति । अत इति अवस्थाद्वयभेदेन तथात्वात्, तथा च, क्रियाशक्तयो नात्र प्रधानाः, किन्तु, स्वरूपधर्मस्यैव प्राधान्यम्, तेनैव तत्र तदवतारव्युत्पत्तिरित्यर्थः । पूर्ववदित्यादि । तथा च, यथा भगवानदेयमपि ददाति तथा संस्कृतभूतरूपं तच्च रजः साधनाभावेपि देहं पवित्रयतीति तथेत्यर्थः । अणिमादीनां योगर्द्धित्वाङ्गीकारे तस्याः क्रममुक्तावेव सत्त्वेनोभयीति विशेषणं न सामञ्जस्येन युज्यत इत्यरुच्या पक्षान्तरमाहुः ज्ञानभक्तिरूपां वेति । तथा चोभयत्र योगपदप्रयोगादेतदेव युक्तमित्यर्थः । मर्यादाविरोध इति पितृनिदेशाग्रहणहविर्धानीग्रहणकृतः स इत्यर्थः ।

तप्तमित्यत्र ते इति कञ्जादयोर्थाः । मुख्यतत्त्वमिति आसन्यतत्त्वम् । तथा भवन्तीति कार्याविष्टा भवन्ति । ननु प्रथमस्कन्ध एतेषां भगवदवतार-
२-७-५
त्वमुक्तमित्यायुधावतारत्वं कथं युज्यते इत्यत आहुः आवश्येत्यादि, एतदिति आयुधरूपत्वम् । तथा चायुधेषु धरणस्योद्देशे बोधितत्वाद्धरणार्थमावेशस्यापेक्षितत्वात्तस्मिन्नपि पक्ष आयुधावतारत्वमुपपद्यत इत्यर्थः । यज्ञः साङ्ख्यञ्च योगश्चेति पूर्वश्लोकचतुष्टय एतत्त्रयमुक्तमिति शेषः । पूर्वकल्पे आत्मज्ञानस्येति पूर्वकल्पीयात्मज्ञानस्य । मूलस्थयत्पदस्यार्थमाहुः यस्मादिति । नन्वत्र सनकाद्युक्तमार्गेण स्वात्मदर्शनं स्वस्मिन् भगवद्दर्शनं वावतारकार्यत्वेनोक्तं, न तु शत्रुहननादिकम्, तथा सत्यायुधावतारत्वं कथमवगन्तुं शक्यत इत्यत आहुः साधारणा इत्यादि । तथा च, देहत्याजनेन मुक्तिसम्प्रापणात् तथात्वमित्यर्थः । नन्वायुधानि शत्रूंस्तथा सम्पादयन्त्येते तु भक्तानिति कथं तथात्वमत आहुः ते हीत्यादि । तथा च, मुक्तिप्रकारभेदेपि साधारणानाञ्च शत्रूणाञ्च स्थानप्रच्युतरूपात्सामान्यात्तेषां तथात्वसम्पादने यष्ट्यादिवदायुधत्वं सुघटमेवेत्यर्थः । स्मरणार्थ इति मुनिपदोक्तं तन्मार्गीयस्मरणस्वरूपम् ॥ ५ ॥

धर्मस्येत्यत्र प्रसादवक्त्रधर्मभेदादिति, प्रसादस्य वक्त्रस्य च यो धर्मस्तद्भेदात् ।
यज्ञांशो मुखमिति भोजनक्रियारूपत्वाद्यज्ञस्य तद्विशेषांशो मुखमि-
२-७-६
त्यर्थः । यज्ञांशत्वं व्युत्पादयन्ति दक्ष इत्यादि । तत्रेति मूर्त्याम् । तथा चैतदर्थमेव पदद्वयमन्यथा दक्षदुहितरीति न वदेदित्यर्थः । तद्विषमिति जलाधारस्थलजनकञ्च । सूत्रत्वेन वाग्व्यवहार इति 'स एष जीवो विवरप्रसूतिरि'त्येकादशस्कन्धे वाग्व्यवहारस्य तत्कार्यत्वेनोक्तत्वात्तथेत्यर्थः । तपो हीति तापजनकान्तरक्रियात्मकं पूर्वश्लोके त्वालोचनात्मकमुक्तमिति भेदः । अनुभावद्वितीयत्वं गुणविजातीयत्वेनेति ज्ञापना-



याहुः स चेत्यादि । गुण एवेति, अनशनवद्दाक्ष्यदोषाभावरूपत्वान्निष्कामत्वमपि तपोरूपमेवेति तपःप्रभावाभ्यां धर्माभ्यां तयोर्मुखत्वनिश्चय इत्यर्थः । तत्रेति मुखरूपे नारायणे । दोषाभावे प्रयोजकं स्फुटीकुर्वन्ति अयमित्यादि । एवञ्च दृष्ट्वा दर्शनेनात्मरूपस्य भगवतो नियमावलोपं घटितुं न शेकुरिति मूलयोजना । भगवत्त्वादेवात्मत्वस्यार्थसिद्धत्वादात्मपदस्य स्वार्थकत्वमभिप्रेत्य तत्सिद्धं प्रयोजनान्तरमाहुः अत इत्यादि । अत इति भगवतो विविक्तदृष्टित्वात् । स्वसहजधर्मस्येति इतरमोहकत्वरूपस्य । विपरीततया नाश इति, उक्तस्य धर्मस्य स्वमोहकत्वं विपरीतता, तथात्वापत्त्या पुनः पूर्ववद्दर्शनाभावो नाशः । तथा च, तेन कृत्वा पुनः संस्रष्टुं न शेकुरित्यर्थः । ननु भगवत आत्मत्वादस्तु नियमानवलोपः परमेतासां स्वनियमलोपे को हेतुरित्यत आहुः आत्मन इत्यादि । तथाप्येता इति तथा एता अपि इति योजना । तथा चात्रापि स एव हेतुरित्यर्थः । व्रतत्यागिन्य इति सत्यवाक्त्वरूपदेवव्रतत्यागिन्यः । इन्द्रसन्निधौ कार्यं वा साधयिष्यामः शरीरं वा पातयिष्याम इत्युक्त्वागतास्तन्न कृतवत्यः इत्यर्थः । तथा चात्मसन्निधानेन स्वभावपरावर्त्तनाद्व्रतत्यागरूपाद्दोषाच्च एतासां गीतरूपभगवदुपासनयापि व्रतसिद्ध्यभावात्तल्लोप इति वः तादृशा इति वष्टिभागुरिरल्लोपमिति वैकल्पिक आप्, तादृश्योपि भगवतः स्त्रीत्वेनापि न भाता इत्यर्थः ॥ ६ ॥

काममित्यत्र आन्तरिकदोषमिति आन्तरं मनस्तदीयं दोषम् । तैरिति क्रोधपूर्वभाविभिः सङ्कल्पादिभिः कामेन वा क्रोधो दह्यत इत्यर्थः । न स्वल्प
२-७-७
इति किन्तु तच्छरीरनाशकः । अलम्पदस्यार्थमाहुः अहमित्यादि । प्रकारान्तरेण व्याकुर्वते क्रोधस्त्वित्यादि । तयोस्तदवतारत्वगमकमाहुः अनेनेत्यादि, तथा चैवं तयोः प्रसादावतारत्वनिश्चयः इत्यर्थः ।

विद्ध इत्यत्र । तदवताररूपतां व्युत्पादयन्ति स हीत्यादि । स हि तत्र स्थित इति वैकुण्ठवासी ज्योतिश्चक्रे स्थितः । तपस इवेति, यथा तपसो
२-७-८
विकास उपभोगजनकस्तथेत्यर्थः । विकाशयतीति नामधातुप्रयोगोयम्, विकाशं करोतीत्यर्थः । तत्रापि भगवदिच्छया तथाभूतमिति, वनस्थितावपि तथाक्लिष्टं सकामम् । एवं रूपतेति नलिनायतेक्षणप्राकट्यसमर्थता । किरणानामिति अत्र प्रसादः किरणस्थानीयो बोध्यः । अन्यथेति तपस एव प्रसादहेतुत्वे । दत्तवानिति । तथा च, तादृशस्थानदानमेतद्दातुस्तदवतारत्वगमकमित्यर्थः । प्रसादकारण इति प्रसादः कारणं यस्येत्यर्थः ॥ ८ ॥

यन्नेनमित्यत्र । पृथोः पीताम्बरावतारत्वं व्युत्पादयन्ति कदम्बस्येत्यादि । तथा

---

१ नवक इति पाठः ।

२-७-९ च, दोहरूपकार्ये पृथुनाकृते तदुत्तरं यद्दोहान्तरं तत्कदम्बकिञ्जल्कसमं
तदन्यत्वाद्बहुत्वाच्च । तथा राज्ञः स्वभावो जनरञ्जनं तेनारक्तत्वम् । पीत-
त्वमिति पृथोः पीतत्वम्, यदाच्छादके पीतत्वं न स्यात्तदाच्छाद्ये भूरूपे जघने तत्कृतं
विच्छायत्वमपि न स्यात्, अतस्तस्य तदवतारत्वं कार्यान्निश्चेयमित्यर्थः । एवं व्युत्पाद्य श्लोकं
व्याकुर्वते रक्षणमित्यादि । स्वभावादेवेति । 'मातृबुद्धिः परस्त्रीष्वि'ति वाक्येन जिते-
न्द्रियत्वस्वभावादेवेत्यर्थः । प्रजापतीनामपि गोपनाद्वा ।

नाभेरित्यत्र विवक्षिताङ्गदावतारत्वं व्युत्पादयन्ति देवतेत्यादि । देवताभाग इति
२-७-१० प्रगण्डे कपोणेरुपरिभागः प्रगण्डः, बाहुदेवता इन्द्रस्तस्य भागो
बलाधारभागस्तत्रेत्यर्थः । अयश्चेत्यादि । तथा च, क्रियात्यागादुपरि-
भागोक्तिः नाभिपुत्रत्वादिति नाभियज्ञे हिरण्मयरूपेण प्रादुर्भूतत्वादिति, अथ तमाविष्कृत-
भुजयुगलद्वयं हिरण्मयं पुरुषविशेषमि'तिपञ्चमस्कन्धवाक्यात् तत्पुत्रा इति । नव
योगेश्वराः अतोऽङ्गदत्वमिति । 'दो'ऽवखण्डने, तथा च, मर्यादागिरिवद्भुमयविभाजकत्वा-
दङ्गदत्वमित्यर्थः । इदञ्च पञ्चमस्कन्धानुसारेणोक्तम् । व्याख्येयश्लोकानुसारेण प्रकारान्तरमाहुः
स्वस्थेत्यादि । अयमपि प्रकारो न पञ्चमस्कन्धाद्विरुध्यत इति ज्ञापयन्ति अध्यायेत्यादि ।

सत्रेत्यत्र हयग्रीवे किरीटाद्यवतारत्वं व्युत्पादयन्ति हयग्रीव इत्यादि । उभया-
त्मक इति, हयनरात्मकः । अखिला इत्यादि । तथा चाखिलदेवता-
२-७-११
नामात्मत्वेन तत्स्वरूपत्वे तत्फलभूतत्वे तेषां तादृशां तत्र स्थितेरपि
सत्त्वात्सा किरीटत्वबोधिकेत्यर्थः । अत्रापि तपनीयवर्ण इति हिरण्मयत्वं कण्ठोक्तम् ।
रत्नानि त्वग्रे वाच्यानि । तेन तथात्वमित्यर्थः ।

मत्स्य इत्यत्र । मत्स्यस्य चरणरूपत्वं क्षोणीमयत्वात्स्फुटमिति तस्य पल्लवरूपत्व-
साकारसाम्यादाहुः मत्स्यो हीत्यादि । निष्क्रान्ताः खिलेभ्यो निखिला
२-७-१२
इति मूलार्थं बोधयन्ति न विषयैः खण्डिता इति । विकसितानि
भवन्तीति । तथा च, तच्चरित्रमुन्निद्रत्वगमकमित्यर्थः । सर्वोपयोगिन इति तथा च,
वेदमार्गानिति बहुत्वबोधितमार्गसम्बन्धिबहुत्वम् । कर्णिकागमकमिति मत्स्यस्य तादृशधर्म-
विशिष्टचरणावतारत्वमित्यर्थः ।

२-७-१३ क्षीरोदधावित्यत्र कूर्मस्य श्रीवत्सावतारत्वं कार्येण व्युत्पादयन्ति कूर्मे-
णेत्यादि । स्पष्टमन्यत् ।

त्रैविष्टपेत्यत्र एवमेवेति रश्मिकेसरयोः स्कन्धनिर्गमतौल्येनैव । एवं कन्धरयोस्तो-
२-७-१४ ल्येपि कार्यं विना न तस्य तदवतारत्वं सम्भवतीत्यतस्तद्व्युत्पादयन्ति
कौस्तुभमित्यादि, न स्थापयेदिति कण्ठे धारणोपायेन न स्थापयेत् ।



तयेति, एकस्मिन् प्रकरणे । 'चैत्यस्ये'ति "कण्ठे च कौस्तुभमणेरधिभूषणार्थमि"तिवाक्य-
द्वयसत्त्वादुभयरूप इत्यर्थः । भ्रमयुक्त इत्यादि । इदं न विग्रहवाक्यं, तेन तादृशी दंष्ट्रा
यस्मिन् तादृशं च तत्करालञ्चेतिविग्रहः ।

अन्तःसरसीत्यत्र । हरेर्वनमालावतारत्वं व्युत्पादयन्ति भक्ता हीत्यादि । विशे-
षणानीति गजेन्द्रविशेषणानि द्वितीये । ननु मास्तु दुष्टं प्रतिबन्धकं,
२-७-१५
तथापि ब्रह्मदण्डस्य दुरत्ययत्वाद्गजदेहसत्त्वेन्धन्तमःप्रवेशस्यानिवार्यत्वं
शापजन्यदुरदृष्टनाशकस्यात्रानुक्तत्वादिति शङ्कायामाहुः भगवतेत्यादि । तथा च, तत्सत्त्वे-
प्युद्धरणमम्लानत्वपोषकमित्यर्थः । परन्तु त्वित्यादि, अत्रेच्छाविशेषस्य कृपात्वं कार्यभेदोपचा-
राद्बोध्यम् । एतदेव ज्ञापयितुमाहुः इदमेवेत्यादि ।

ज्यायानित्यत्र वामनस्य मेखलावतारत्वं धर्मत्रयेण व्युत्पादयन्ति मेखला हीत्यादि ।
इति च वाक्यादिति दैत्यानां जघनस्यतथेतिशेषः । मायामिति
२-७-१७
तदुपास्यदेवतारूपाम् । एवं तत्सिद्धिसारूप्याभ्यां तयात्वं साधयित्वा
समानशब्दादपि बोधयन्ति अत एवेत्यादि । 'तद्वामनं रूपमवर्द्धताद्भुतं हरेरनन्तस्य
गुणत्रयात्मकमि'तिवाक्येन तथात्वादेव प्रकृतश्लोकेपि गुणपदोक्त्या तत्प्राधान्येनैव कथन-
मित्यर्थः । नन्वत्रोत्कर्षाधायका धर्मा एव गुणत्वेन विवक्षिता, न तु प्राकृता इति शङ्का-
यामाहुः अदितेरित्यादि । अवरज इति मैत्रावरुणीयोपनिषदि 'तमो वा इदमग्र
आसीदि'त्युपक्रम्य 'तद्रससंस्रवाद्रजस्तस्यापि रसः सत्त्वमि'ति श्रावणाच्छुद्धसत्त्वाव-
तारात्तेषामप्यवरज इत्यर्थः । एतेनैकं गुणप्राधान्यमुक्तम्, आच्छादकविक्षेपकदृढीकर्तृ-
त्वेनेतरयोरप्याहुः अदितिरित्यादि । ननु तत्र सर्वरूपत्वं ब्रह्मधर्मो निरूप्यत इति कथं
एवम् ? अत आहुः यद्यपीत्यादि । इत्येव मुख्येति, एतच्छ्रुतिनिरूपितत्वात्सैव मुख्या ।
तामिति रक्षां कीर्तिं च । तथा च रजस्तमसोरपि प्राधान्यमित्यर्थः । तर्हि तत्र प्राकृतत्वमेव
स्यान्न ब्रह्मतेति मायाया अन्तःपातनमसङ्गतमिति शङ्कायां ब्रह्मप्राधान्याय गुणैर्ज्यायस्त्वं
व्याकुर्वन्ति गुणैरित्यादि । के इति जगत्कर्तृत्वादिधर्मविशिष्टत्वेनैव सिद्धे उत्कर्षे तादृशस्य
ततोतिरिक्ताः क इत्यर्थः । अत इति अन्य इत्यनेन सम्बन्धः, स्वेन स्वाक्रमणादितर इत्यर्थः।
गुणत्वमिति सर्वदोपसर्जनतया प्रतीयमानत्वाद्गुणत्वं, न तूत्कर्षाधायकत्वमपीत्यर्थः । ननु
रूपवर्द्धनेनैव सर्वलोकाक्रमणे बलिसम्बन्धिपदार्थस्यावशिष्टस्याभावात्तत एव कार्यसिद्धे-
र्लोकविक्रमणस्य किं प्रयोजनमत आहुः बलिं प्रतीत्यादि । न नित्यमिति न स्वाभा-
विकम् । तथा च, तेषां स्वरूपं स्वेच्छां च बोधनमेव प्रयोजनमित्यर्थः । वामनावतारेणैवै-
तत्करणे प्रयोजनमाहुः मेखलेत्यादि । ननु मेखलारूपत्वादस्तु वामनावतारेणैतत्करणं तावतो-
त्कर्षाधायकत्वस्य कथं सिद्धिरित्यत आहुः अत इत्यादि । तथा च, लोकतः परमार्थत-

आसंभावितस्य करणादुत्कर्षाधायकत्वसिद्धिरित्यर्थः । उत्कर्षान्तरस्यापि सिद्धिमाहुः किञ्चेत्यादि । अत्रैवं बोध्यम्, उपर्युत्क्षिप्तश्चरणः स्वर्लोकं व्याप्य वेगेनोपरितनान् लोकान् पातयंस्तेनैव स्थापयन् ब्रह्माण्डपर्यन्तं गत इति तेन तथेत्यर्थः । ततोऽप्यन्यमाहुः किञ्चात इत्यादि । ततोऽप्यन्यमाहुः एवमित्यादि । एतेनापि मेखलात्वं इदंभवतीत्याहुः नमनेनेत्यादि । ततोऽप्यन्यदाहुः किञ्च त्रिपदच्छलेनेति । भगवता हि "तस्मात्त्वत्तो महीमीषद्वृणेऽहं वरदर्षभात् । पदानि त्रीणि दैत्येन्द्र सम्मितानि पदा मम" त्युक्तं, तत्र त्रीणीत्यादिपदेषु यश्छलस्तेनेत्यर्थः । कथमत्र छल इत्याकाङ्क्षायां तं व्युत्पादयन्ति नहीत्यादि । तथा च, तदभावेऽपि तादृशपदोच्चारणं भ्रमजनकमतस्तच्छलरूपमित्यर्थः । ननु तत्र पदानीत्यनेन क्रमात्मकं मानमुक्तं, तत्र च त्रित्वं सङ्गतमेवेति कथं छलत्वमत आहुः मानमित्यादि । मानं वितस्तिहस्तादिकं, हि यतो हेतोः 'तत्र वस्तुनि व्याप्तमेव वृत्तिमदेव भूत्वा तद्वस्तु गृह्णाति, स्वमितत्वेन ज्ञापयति' इति मानस्वभावः, हि निश्चयेन भगवान् क्रमपदमनुच्चारयन् क्रमरूपं मानं नोक्तवान् । निष्काशितः स्थितिस्थानादन्यत्र निक्षिप्तश्चरणस्तु निष्काशनधर्मेण मानस्वभावं विरुन्धन् मानं न भवति । अतो हेतोरुक्तवाक्यस्य न तद्बोधने तात्पर्यम्, किन्तु, पदा पातालात्मकत्वेन सम्मितानि समानानि मम त्रीणि पदानि मानसाचलमितामूरसातलं नाकपृष्ठञ्चेति स्थानानि, तस्माद्धेतोरीषन्महीं त्वत्तोऽहं वृणे वाञ्छामीति, तथा सति तस्माद्वाक्याद्भगवता वामनपादाभ्यामन्यस्तृतीयः पादः कल्पनीय इति ज्ञातव्यम् । तच्च बलिना वाक्यानुसन्धाने सति न ज्ञातम्, तत्तस्माद्धेतोर्भ्रामकपदैस्तथेत्यर्थः । ननु भगवता कुतो वाक्यार्थो न प्रत्यायितः ? क्लिष्टं कुतः कृतवान् ? इत्यत आहुः मायेत्यादि । तथा च तज्जातिदोषादेव तथेति न क्लिष्टत्वलेशोऽपीत्यस्यापि गुणत्वं निर्बाधमित्यर्थः । याच्ञारूपे दोषेत्र प्रसक्तेऽस्य गुणस्योत्कर्षाधायकता न स्यादित्यत आहुः एवमित्यादि । कथं प्रभुकर्तृकतेत्याहुः वस्तुतः प्रभोरित्यादि । नन्वैन्द्रं पदं बलेन गृहीतवतः कथं मार्गवर्तित्वमित्यत आहुः स्वेनेत्यादि । 'यज्ञो वै विष्णुरि'ति श्रुतेर्यज्ञात्मना स्वेनैव स्थापितत्वात् तथेत्यर्थः । तदनङ्गीकार इति । याच्ञानङ्गीकारे चास्य इत्यर्थः । ननु तथापि बन्धनं क्लिष्टकर्मत्वमादधातीति चेत्तत्राहुः दैत्यानामित्यादि । तत्र जघनरूपायां भूमावुत्पन्नानां तत्स्वामित्वं वास्तवम्, "भूमिर्वस्तुतो दैत्यानां यावदासीनः परापश्यति तावद्देवानामि"ति श्रुतेः । अतो हेतोर्बन्धनमित्यर्थः । एतदेव स्फुटीकुर्वन्ति अन्यथेत्यादि । अन्यथेति वास्तवस्वामित्वाभावे, ग्रहणमिति याच्ञया ग्रहणं करिष्यत्येवेति मनसा करिष्यति । तथा च 'क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते स्वाम्यं तु तत्र कुधियोऽपर ईश कुर्युरि'तिवाक्यात्कुधीत्वे पूर्णा कृपा न स्यादिति न तेन क्लिष्टकर्मत्वमित्यर्थः । एतस्यानुषङ्गिकं प्रयोजनान्तरमाहुः अनेनेत्यादि, अनेनेति बन्धनेन । तद्व्युत्पादयन्ति एकस्येत्यादि । नन्वेवं दोषापादकं छलेन याचनं कुतः कृतवानित्यत आहुः तन्नियोगेत्यादि । स हि लोकत्रयमिष्टे, अतस्तथेत्यर्थः । ननु "नैनः प्राप्नोति वै विद्वान्



यावदर्थपरिग्रहः" इति भगवता वामनेनोक्तत्वाद् भगवतः स्वापेक्षितयाचनमेव युक्तमेतच्छलप्रयोजनं न पश्याम इति शङ्कायामाहुः अन्यथेत्यादि । एकमात्रयाचने शेषाप्यनुज्ञाप्तौ कुधीत्वं पुनः प्रसज्येत, पुनस्तदर्थे यत्ने कर्तव्ये पुनर्याचनं चापद्येत, अतः कृपार्थे क्रियासौकर्यार्थं तत्परीक्षार्थं तत्सत्यख्यापनार्थञ्च छल इत्यर्थः । सिद्धमाहुस्तस्मादित्यादि ।

नार्थ इत्यत्र भक्तिमार्गविरुद्धमिति भक्तबन्धनादिकम्, कटिस्थानस्येति
कटिः स्थानं यस्येत्यर्थः । ननु धनग्रहणं तु तथा भविष्यतीत्यत आहुः
२-७-१८ न हीत्यादि, युक्तमेवेत्यन्तम् । मन्त्रैरिति, अदितिं प्रति बलिं प्रति वा
गुप्तभाषणरूपैर्भगवद्वाक्यैः । अयमिति । पुल्लिङ्गप्रयोगानुसारेणाहुः अयञ्चेत्यादि । कक्षात्रयमिति प्रथमेऽध्याये केवलं तमो रजस्तमः केवलं रज इत्यादिना प्रतिपादितं पातालादिस्वर्लोकपर्यन्तं भागत्रयम् । नन्वेवं सति भगवता किमिति सुतले स्थापितोऽग्रे भावीन्द्रत्वं च किमिति कृतमिति शङ्कायामाहुः न हीत्यादि । तथा च, यद्युपरितनकक्षास्वयोग्यः स्यात् प्रसादेन कक्षात्रये न नीतः स्यात् । यदि वा प्रत्याक्रमणेच्छुः स्या'न्नूनं बतायं भगवानर्थेषु न निष्णातो योऽसाविन्द्र'इत्यादीनि भगवद्दासस्य प्रशंसावाक्यानि न वदेद्तो न तथेति तदुभयं प्रसादरूपमेव तत्स्वरूपज्ञापनाय भगवता दत्तमित्यर्थः । ननु निर्बन्धेन न नीतः स्यात्तत्र भगवान् किमिति तिष्ठेत्तत्राहुः भगवानित्यादि । तथा च, तत्रास्थितौ प्रत्यवरोहश्रुतिर्विरुध्येतेति तदर्थपरिपालनाय तथेत्यर्थः । हेत्वन्तरमाहुः यथेत्यादि । यथा स भगवदधीनो जातस्तथा भगवानपि इति प्रतिज्ञापूर्त्त्येऽपि तथेत्यर्थः । तृतीयो हेतुस्तु व्याख्यायत एव । उरुक्रमेत्यादेस्तात्पर्यान्तरमाहुः किञ्च पूर्वमित्यादि । रूपभेद इतिभावभेदः ।

तुभ्यमित्यत्र । अङ्गुलीयावतारत्वं नारदादिदृष्टेषु व्युत्पादयन्ति अङ्गुलीयकेत्यादि ।
ननु मूले गुरुत्वेनैक एव भगवान्निर्दिष्ट इति स एव दृष्टः तथा सति कथं
२-७-१९ बहुत्वमित्यत आहुः नारदं प्रतीत्यादि । तत्तद्गुणक्रियाविशिष्टरूपाणां
बहुत्वं 'बहूनि सन्ति नामानी'त्यत्र सन्तीतिप्रयोगाद् व्युत्पादयिष्यते, तद्रीत्यानन्तत्वमुपपन्नमित्यर्थः । ननु दशादिसङ्ख्योक्तेत्यनन्तत्वे कथमङ्गुलीयकत्वमित्यत आहुः अङ्गुलय इत्यादि । अन्यदृष्टानां सङ्ग्रहे मानमाहुः अत एवेत्यादि । भक्तानामङ्गुलित्वं साधर्म्येण गमयन्ति ते इत्यादि । तेष्विति दृष्टेषु स्वरूपेषु । मूल्यरूपत्वादिति प्राप्त्युपायरूपत्वात् । तदेव व्युत्पादयन्तो धनानि वदन्ति चतस्र इत्यादि । भक्त्या चेत्यन्तम् । तथा च, लीलावताराणामेवानुक्रान्तत्वादत्रोपदेष्टृभूतं मूलरूपं नाङ्गुलीयकत्वेन विवक्षितम्, किन्तु, परितुष्टोक्तसाधनदृश्यानि रूपाणि, अत एवात्रावतारनाम नोक्तमिति तस्मात्तथेत्यर्थः । ननु 'भक्त्या त्वनन्यये'तिवाक्ये दर्शनस्य भक्तिसाध्यत्वमतः कथं योगदर्शनमित्यत आहु बहिरित्यादि । तत्प्रकाशो वृत्तिफलनेनेत्यादि । ज्ञानप्रसादेन श्रुतौ ध्यायमान इति

पदातादृशप्रत्यग्वृत्तावात्मनः प्रतिफलनेन कश्चिद्धीर इति श्रुत्युक्तेन स्वत आविर्भावेन वेत्यर्थः । तज्ज्ञानमिति आत्मविषयकप्रकाशरूपं ज्ञानम् । तया चात्मयुक्तं सतत्त्वदीपं आत्मसतत्त्वदीपमिति समास इत्यर्थः । एतस्य पक्षस्य क्लिष्टत्वात् पक्षान्तरमाहुः ब्रह्मात्मत्वं ज्ञानं वेति सतत्त्वशब्द एवानागन्तुकरूपवाचकत्वे प्रागभिराद्रियते, तथा सत्यात्मनः सतत्त्वदीपमिति समास इयर्थः । परिचर्यासङ्ग्रहायाहुः चकारादित्यादि । अग्र इति 'भक्तियोगं स लभते एवं यः पूजेयत मामि'त्येकादशस्कन्धे ।

चक्रञ्चेत्यत्र । अत्राप्यवताराणामस्फुटत्वात् सङ्ख्यादिविरोधस्य प्रसज्यमानत्वाच्च
२-७-२० तान् विशदीकुर्वन्त उपपादयन्ति अत्रादीत्यादि । एवमिति उचित-
मिति हरेर्वामनस्य च मन्वन्तरावतारत्वादुचितम् । नूपुरादिवदवयवध्यानोपयोगीनि, महाधनानीति । इति हेतौ । इत्याहेति इत्याशङ्कायामाह । कथं बिभर्तीत्यत आहुः मन्वन्तरमित्यादि । सर्वेषामिति मनुवंश्यानाम् । तदंशकार्यमिति मन्वन्तरांशकार्यम् । तं इति मन्वन्तराख्यसद्धर्मांशाः । सेनापदं चक्रपदस्य व्याख्यानं, 'चक्रञ्चानीकमस्त्रियामि'ति कोशात् । भगवानिति मन्वन्तरावताररूपः । आदिशब्दस्येति नूपुरकङ्कणादिभिरित्यत्रोक्तस्य ।

धन्वन्तरिरित्यत्र । शास्त्रद्वारेति रक्षे शास्त्रलाभप्रकारमाहुः नामेत्यादि । तथा च,
नाम्ना नामसदृशात्मकेन वैद्यकशास्त्रेणेत्यर्थः । अनेनेति नाम्नेत्यर्थः । न
२-७-२१
सम्भवतीति शान्ताशान्तत्वयुक्तत्वान्न सम्भवति । शाखान्तरीय इति, याग इतिशेषः ।

क्षत्रमित्यत्र ब्राह्मणानां विराडाननत्वेन लीलावतारेषु प्रवेशस्य घटमानतया तद्-
संबद्धकेवलनिराधारस्य धर्मस्यावतारो न सम्भवतीत्यरुच्या पक्षान्तरमाहुः
२-७-२२
अथ वेत्यादि । भवायेति । इदं पञ्चमस्कन्धे प्रियव्रतं प्रति ब्रह्मवाक्यम् । अल्पद्रोह इत्यादिनरकार्तिनिवारको मारणलक्षणो द्रोहो न निर्दयतां जनयतीत्यर्थः ।

अस्मत्प्रसादेत्यत्र पेशलत्वं व्युत्पादयन्ति कलयेत्यादि । अत्र सर्वेषां पक्षाणां
समुच्चय एव न तु विकल्पः, वाशब्दस्त्वेवकारार्थो वाक्यालङ्कारे ।
२-७-२३
यस्त्वित्यादि, इदं ब्रह्मवैवर्ते स्फुटम् । पालयतीति, एतेन गुणावतारत्वं वैकुण्ठवासिनः सूचितम् । तेन सिद्धमाहुः अनेनेत्यादि । स्थित इति तिष्ठन्नित्यस्येदं विवरणम् । आदिकर्मणि क्तः । निमित्तत्वमिति आधारतया प्रयोजकत्वम् । त्रयाणां वनवासे हेतुमाहुः देवानामिति, सपरिवारो रावणो नश्यत्विति हि देवानां कामना, सा तदैव पूर्यते, यदा विरोधे प्रयोजको वधे सहायश्च भवतीत्यतो विरोधप्रयोजकतया दयितानयनस्येन्द्रजिद्वधार्थं चानुजनयनस्य सङ्कल्पः इत्यर्थः प्रतिभाति ।



२-७-२४ यस्मा इत्यत्र । अस्मदीयवंश इति अस्मत्कर्तृवंशे ।

वक्षःस्थलेत्यत्र । उच्चरत इत्युभयार्थप्रयोगतात्पर्यमाहुः अनेन तस्य गतिर्निवा-
२-७-२५ रितेति धनुषो मलत्यागनिरूपणेन रावणस्य मोक्षप्राप्तिर्निवारितेत्यर्थः ।

भूमेरित्यत्र ते इति धर्माः । एकार्थत्वमिति एकप्रयोजनकत्वम् । तदित्यादि
तद्दशविधलीलानामेकार्थत्वं दशमाध्याये 'अत्र सर्गो विसर्गश्चे'त्यादिनो-
२-७-२६
द्देशतो निरूपयिष्यतीत्यर्थः । तत्र को धर्मः केन रूपेणास्तीत्यपेक्षायामाहुः तत्रेत्यादि । नन्विदमदीनत्वं परार्थसृष्टौ नायातीति तत्सङ्ग्रहायाहुः अभिलषितेत्यादि । यथेति यथाक्रमम् । अत्र प्रह्लादस्य भगवत्स्मृतित्वेन वासनाजन्यत्वात् स्मृतित्वं जयविजयपातनप्रयुक्तसनकादिजन्मान्तररूपत्वाद्वा । तस्य चोल्लासत्वं भगवत्प्रादुर्भावहेतुत्वादिति (सेत्स्यति) स्मृतिधर्मस्य तथात्वं तु स्फुटम् । अननुगृहीत इति अननुगृही, इत, इति पदच्छेदः, इतः संसारान्निष्कास्येत्यर्थः । अशरीरस्येत्यादि प्राकृतशरीररहितस्य प्राकृतशरीरस्वीकारः । तथा चैतेनावतारता शेषैरवतारित्वमित्यर्थः । त्रिविधा इति 'भूमिर्माता तथा चान्ये दुःखभाजो हरिप्रियाः' इति निरोधविवृतौ वक्ष्यमाणा इत्यर्थः । नन्वत्र पूर्णस्य प्रादुर्भावे किम्मानमत आहुः प्रकट इत्यादि । तथा च, प्रादुर्भावमात्रेण भूमिक्लेशनिवारकत्वं स्वविचारितभक्तमात्रनिष्ठयावत्क्लेशनिवारकत्वञ्च नान्येष्ववतारेषु दृष्टमिति तदेतदुभयं पूर्णत्वानुमापकमित्यर्थः । एवञ्चास्य पद्यस्य सर्गलीलानिरूपकत्वात् अस्मिन् पद्ये जातपदमेव विशेष्यसमर्पकं ज्ञेयम् । क्लेश इति पूर्वानुषङ्गश्च । मतान्तरमनूद्य सिद्धान्तमाहुः वस्तुत इत्यादि । सङ्कर्षणरूपत्वादिति, एतेन पूर्वोक्ते मतेऽस्वरसं सूचितं ज्ञेयम् । यदि सितकृष्णकेश एव पूर्णः स्यात्तदा वक्ष्यमाणोपयोगी स धर्मः स्निग्धामलैः कुञ्चितनीलकुन्तलैरितिवदुद्देश्ये निरूपितोऽपि स्यादिति न तावन्मात्रावतारोऽत्रेत्यर्थः । वैकुण्ठस्थितस्य चांशत्वं ब्रह्मवैवर्ते स्फुटम् । ननु यद्येवं तदा प्रकृतेस्य विरे ...[1] किं प्रयोजनं(?) कथञ्च सङ्कर्षणस्य तादृशत्वमत आहुः संहारेत्यादि । वक्ष्यत इति निरोधस्कन्धे वक्ष्यते । तथा चैतदुभयं ततः स्फुटीभविष्यतीत्यर्थः । सङ्कर्षणस्योभयरूपत्वं 'गुणेन तमसाच्छन्नो विष्णुः सत्त्वगुणं बुधाः । अधिष्ठाय भवेत्सर्वजगतः पालकः प्रभुरि'ति सूतसंहितादिवाक्याज्ज्ञेयम् । ननु तावन्मात्रस्य प्रयोजनत्वाभावे किङ्गमकमित्याकाङ्क्षायां वासुदेवानिरुद्धप्रद्युम्नांशानां गमकं हेतुत्रयमाहुः मर्दनेत्यादि । तथा चैवं तत्र तत्रोच्यमानस्य कार्यभेदस्याग्रे स्फुटत्वात्केवलं सङ्कर्षणत्वं न वक्तुं युक्तमित्यर्थः । फलितमाहुः तस्मादित्यादि । विद्यमानेऽपि मर्दने तदन्यक्लेशाभावार्थमित्यर्थः । नन्वयमत्रार्थो विवक्षित इत्यत्र किङ्गमकमत आहुः जनेत्यादि । ननु जनेत्यादिविशेषणेन प्रद्युम्नादिपरामर्शे किङ्गमकमत आहुः चतुर्णामित्यादि । तथा च, चतुर्थस्कन्धीयवाक्यस्य चकारेणैकस्मिन्नेव रूपे सूचितम्, तत्र कार्यचतुष्टयमत्राग्रिमश्लोके स्फुटमतस्तदेवगमकमित्यर्थः । ननु वासुदेवादिव्यूहनम-

१ "उद्देश" (?) इतिपाठः ।

कस्यात्राभावात्कथं तदवधृतिरित्यत आहुः **एकमेवे**त्यादि । तथा च, मूलचरित्रमेव तद्गम-कमित्यर्थः । नन्वेकरूपेणैकचरित्रेणैव कार्यद्वयकरणे तथैव कार्यान्तरस्यापि सिद्धेर्न चतुर्मूर्त्य-वतारानिश्चय इत्यत आहुः **विस्तरे त्वि**त्यादि । सिद्धमाहुः **एवमि**त्यादि । एवं निर्बन्धेन चतुर्व्यूहसहितपूर्णप्राकट्याङ्गीकारे साधकं वैपरीत्ये बाधकं च तर्कमाहुः **अनेने**त्यादि । **अन्यथे**त्यादि च । ननु मूलरूपजन्ममात्रेणैव भूमिदुःखनिवृत्तौ किमिति व्यूहजन्मकर्मकथन-मित्यत आहुः **जन्मे**त्यादि । **त्रिविधदुःखे**ति त्रिविधानां त्रिविधदुःखेत्यर्थः । **वक्ष्यत** इति दशमे वक्ष्यते । ननु त्रिविधानां दुःखनिवारणाय भगवत्प्रादुर्भावाङ्गीकारे मूलस्थं भूमेरित्ये-कवचनं कुप्येतेति तदभावायाहुः **भूमिरि**त्यादि । **कार्यरूपे**ति शरीररूपा । तथा च, भूमिपदेन त्रयाणां सङ्ग्रहान्न तथात्वाङ्गीकारेप्येकत्वविरोध इत्यर्थः ।

**तोकेने**त्यत्र जीवपदेन यथा भगवत्त्वं स्थाप्यते तदाहुः **तस्या जीवे**त्यादि । अयमर्थः,
२-७-२७ जीवशब्दो हि चिदंशस्य जीवोपाधेरपि वाचकः । 'भागो जीवः स विज्ञेयः'
इति च जीवो जीवं विहाय मामि'त्यादौ तदुपाधावपि तत्प्रयोगदर्शनात्
जीवोपाधिश्च मनः, तच्च प्राणबन्धनम्, तथा सति प्राणस्य स्वस्मिन्नयने सर्वविशेषवत्कृते ते जीवा अपि तद्द्वारा तत्रागता इति तस्याः सकाशात्तेषां ग्रहणमपि तथेत्यर्थः । **तादृशस्ये**ति न्यूनस्य बालस्य वा । **सूचयती**ति 'प्रबालमृद्वङ्घ्रिहतमि'तीतिवाक्यमेव सूचयति ।

**यद्वै व्रज** इत्यत्र **आधिदैविका** इति पश्वाधिदैविकाः । भगवद्भक्तानामिति गवादी-
२-७-२८ नाम् । **सङ्गच्छत** इति तद्बोधकपदाभावेपि भगवदेककर्तृकत्वस्य बुबो-
धयिषितत्वात्सङ्गच्छत इत्यर्थः । **न काचिच्चिन्ते**ति काप्यनुपपत्ति-
रूपा सा नेत्यर्थः ।

**तत्कर्मे**त्यत्र । एकजातीययोर्विभिन्नकालयोर्द्वयोर्लीलयोर्यौगपद्येन कथने बीजमाहुः
**ईक्षणमि**त्यादि । तथा च, दर्शनरूपत्वज्ञापनार्थं यौगपद्यमित्यर्थः । ननु
२-७-२९ पुनः प्रश्ने को दोषः इत्यत आहुः **देवगुह्यं चैतदि**ति ।

**गृह्णीते**त्यत्र **अधिकरणद्वयेने**ति । 'वैश्वानरः साधारणशब्दः विशेषादि'त्यनेन
'आमनन्ति चैनमस्मिन्नि'त्यनेन च । **येन रूपेणे**ति । **न भवती**ति
२-७-३० पूर्वेणास्याप्यन्वयः । **इदमि**ति उत्तरार्द्धोक्तं चरित्रद्वयम् । **अनुभवमोहक-**
**त्वञ्चे**ति बोधयतीति शेषः । **मोहकद्वयमिति तु न पाठः प्रतिभाति** । अन्तःस्थितस्यान्तः-स्थापकत्वेन्तर्यामिब्राह्मणं प्रमाणत्वेन वदन्तो दामबन्धनादिलीलायास्तदनुमापकत्वं स्फुटीकुर्व-न्ति च इत्यादि । उत्तरार्द्धोक्तव्यादानलीलासिद्धदर्शनादेरमायिकत्वे हेत्वन्तरमाहुः **विचारेणे-**त्यादि । ननु व्यादानलीलायामग्रे 'वैष्णवीं व्यतनोन्मायामि'त्यनेन मायावितानस्यो-

१ बाहरण पाठः ।



क्तत्वात्तत्र दृष्टस्य मायिकत्वे कथं ब्रह्मत्वबोधकत्वमित्याशङ्कायां तदुपगम्यापि तथात्वं साध-यन्ति **अस्तु वे**त्यादि । अत्र **शङ्कितमना** इति कथनेन तत्रत्यो विचारः सर्वः स्मारितः । तथासति, तादृग्विचारदृढीकृतस्यानुभवस्योपेक्षान्यसंशयान्यत्वात्तेन स्मृतिर्वा संस्कारो वा आवश्यकः, स चेन्न, तथासति कारणसद्भावे कार्याजननं भगवन्मायया । माया च साम-र्थ्यरूपा शक्तित्वात् । तथा चात्राकर्तुं सामर्थ्यमेव ब्रह्मत्वबोधकमित्यर्थः । एवं लीलात्रयस्य ब्रह्म(त्व)बोधकत्वं समर्थयित्वा तस्योल्लासत्वायाहुः **अयमि**त्यादि । तत्र पूर्वार्द्धोक्तबन्धना-मानस्य भावाद्वैतप्रतिपादकत्वात्तस्य चोतिलीलासमाक्षानुक्तत्वात् । तेन च सूक्ष्मस्य व्यापकत्वं स्फुटीक्रियत इति प्रमाणोल्लासत्वम्, एवं च कर्मवासनारूपाया ऊतेः भावाद्वै-तादिजनकत्वे एव भगवल्लक्षणत्वमिति विस्पष्टं भवतीति ज्ञाप्यते । उत्तरार्द्धोक्तव्यादा-नादेस्तु विकासरूपत्वात्प्रमेयोल्लासत्वं स्फुटमिति ज्ञापनायाय**मि**त्युक्तम् । न ह्यनुल्लसितः प्रार्थनादिव्यतिरेकेप्येवं प्रदर्शयेदतोयमेव स इत्यर्थः । एतस्य ऊतित्वं बोधयितुं कर्मजत्वं स्फुटीकुर्वन्ति **जृम्भे**त्यादि । **विकासहेत्वर्थमि**ति विकासजनककर्मोत्पादनाय । अत उल्लासेन भगवत्कृतत्वान्निमित्तान्तरे मृत्स्नाभक्षणसामयिकव्यादानेपि जगत्प्रदर्शनं तदेवो-ल्लासप्रबोधनम् । तथा चेदमपि तस्य चरित्रस्योल्लासत्वगमकमित्यर्थः । **तत्रैवे**ति द्वितीयदर्शन एव । एवञ्च जगद्रूपस्य स्वसन्तानस्य प्रदर्शनादंशस्याप्युल्लासत्वं स्फुटीकृतं बोध्यम् । **एवमि**त्यादि । अत्र प्रथमश्लोके जीवहरणोपवर्त्तोन्मूलनानां सङ्कर्षणकार्यस्य स्पष्टत्वात्प्रथमः पक्षः । द्वितीयस्तु स्वयमेव व्याख्यातः । एवं द्वितीयश्लोके पशूनां पालानाञ्च जीवनेन धर्मरक्षाया उरगोच्चाटनेन जीवरक्षायाश्चानिरुद्धकार्यत्वस्य स्पष्टत्वात्प्रथमः पक्षः । अनुग्रह-दृष्टिवृष्ट्या तथाभूतानां निःसाधनानां जीवनं वासुदेवस्य ह्लादिनीशुद्धिः प्रद्युम्नस्योरगो-च्चाटनं सङ्कर्षणस्येति द्वितीयः पक्षः । तृतीयश्लोकेप्युन्नयनं स्थापकत्वात्प्रद्युम्नकार्यत्वात्प्रथमः पक्षः । दावाग्नेर्नाशः सङ्कर्षणस्य मृत्युवारणसामर्थ्यं वा वासुदेवस्येति तद्वारणं तस्य नेत्रपि-धाने तत्करणं तेषां धर्मरक्षणायेति तदनिरुद्धस्येति द्वितीयः पक्षः । चतुर्थश्लोके वासुदेवच-रित्रस्य स्फुटत्वात्प्रथमः पक्षः । पुत्रत्वबुद्ध्युत्पादनं प्रद्युम्नस्य मनःशङ्काविपर्युजननं सङ्क-र्षणस्य व्यादानेन मात्राज्ञाकरणमनिरुद्धस्येति द्वितीयः पक्षः । येनैव त्रिविधा जीवा इति न्यायेन तत्तच्चरित्रस्य भक्तिजनकत्वात् सर्वस्यापि पुरुषोत्तमकार्यत्वमिति सर्वं सुस्थम् ।

२-७-३१ **नन्दश्चे**त्यत्र पूर्वार्द्धसद्धर्मरूपा उत्तरार्द्धे ऊतिरूपा च भूर्निरूपिता ज्ञेया ।

**गोपैरि**त्यत्र मङ्गमितिचाञ्चल्यम् । **रक्षकत्वात्तदद्भाव** इति । मखस्य रक्षकत्वात्
मखाभावे । **अनेने**ति मखप्रतिघाते देवकृतातिवर्षाकथनेन । **सूचने हेतुं**
२-७-३२ स्फुटमाहुः **तदा कृपये**त्यादि । तथा च, भगवत्कृतरक्षाकथनेनेत्यर्थः । **तदे**ति
रिरक्षुत्वे । **इतीन्द्रो बोधित** इति । एवं प्रकारेणावस्थासाधनादिविरुद्धकार्यकरणेनेन्द्रः स्वसामर्थ्येनेश्वरत्वादिज्ञानशालीकृत इत्यर्थः । तथासति वर्षादावप्यहमेव प्रयोजकस्त्वन्तु

मिथ्याभिमन्यसे इति बोधयित्वा दिवससङ्ख्ययान्यदपि बोधितवानित्याहुः **सप्तदिना-** नेत्यादि । एतस्यैव प्रकारमाहुः **यत्रे**त्यादि । वर्षसङ्ख्यातात्पर्यमाहुः **स्वयमपी**त्यादि । अत एव तावत्सङ्ख्याककालातिक्रमादेव । **अन्यथाफलमि**ति कालमर्यादातिक्रमेण फलम् । नन्वेवं सति सप्तमवर्ष एव कुर्यादेतावत्सङ्ख्याककालातिक्रमस्य किं प्रयोजनमित्याकाङ्क्षाया- माहुः **मर्या**देत्यादि । तथा च, प्रमाणबलात्प्रमेयबलस्याधिक्यज्ञापनाय तदतिक्रम इत्यर्थः । नन्वेवं सति प्रमाणमेवातिक्रमेत् किं कालातिक्रमेणेत्यत आहुः **अयमि**ति कालात्मकः । भगवतः कथं सप्तवर्षत्वमित्यत आहुः **कालस्ये**त्यादि । तथा च वेदनगतमवच्छेदनं भग- वत्युपचर्यते इति तथेत्यर्थः । **सप्तधर्मवेष्टनमि**तिपाठे सप्तधर्माङ्गीकरणमित्यर्थः । सप्त- वर्षत्वकथनस्य प्रकृतेप्युपयोगमाहुः **अयञ्चे**त्यादि । तथा चैतावत्प्रमेयं बोधयितुं सप्तवर्षो- क्तिरित्यर्थः । एककरेण धरणस्य तात्पर्यमाहुः **एकामि**त्यादि । वामदक्षिणभेदेन द्विधाक्रि- याशक्तिः । तयोराद्या केवलप्रमेयोपयोगिनी । द्वितीया प्रमाणानुरोधिप्रमेयोपयोगिनी । तत्रो- क्तवाक्येन क्रियाशक्तिरक्षाया अभिप्रेतत्वादाद्यां रक्षितवान् । यदि तद्रक्षामपि नाभिप्रेयात्त- देच्छामात्रेणैव गोवर्द्धनं स्थापयेत् । अतस्तादृशक्रियाशक्तिरक्षणायैककरेण धरणमित्यर्थः । **तथात्वाभावा**दिति रक्षकत्वाभावात् । **शास्त्रार्थत्वाये**ति क्रियाशक्त्यैव रक्षत्येवंरूपशा- स्त्रमर्यादापालनाय । एवमत्र सद्धर्मरूपो भङ्गः अनन्यत्वरूप उक्तः । तेन सद्धर्मस्य प्रकारान्तर- स्थितिरेव भङ्ग इति सिद्ध्यति । वंशरूपं भङ्गं बोधयिष्यन्तः श्री**गोवर्द्धने**नैव रक्षाया सिद्धा लीलायाः कुत्रोपयोग इत्याकाङ्क्षायां वंशरूपभङ्गस्य सप्तमत्वात्तस्यैवाभिप्रेतत्वायाहुः **तथापी-** त्यादि । वेणुवादनलीलैव तदा कृतेत्यत्र गमकमाहुः **सप्ते**त्यादि । तथा च, भङ्गस्य सप्त- मत्वेन वेणोश्च सप्तरन्ध्रत्वेन तत्र तद्वादनस्य लीलाया एवौचित्यात् । ईशानुकथायाः प्रलय- लीलात्वेन वंशस्याप्यात्मभञ्जकत्वेन वेणुवादनस्याप्यमृतपूरकतया मर्त्यामृतलौकिकामृतपरमा- मृतफलसाधकत्वात्प्रकारान्तरापादकत्वमिति तथेत्यर्थः । एवञ्चादीनत्वादिधर्माणां सर्गाद्या- धिदैवकरूपत्वमतः सर्वं सुस्थमिति तदीयैर्विभावनीयम् ।

**क्रीडन्नि**त्यत्र । **इद**मिति गोपिकासम्बन्धिचरित्रं स्वरूपात्मकं यत्फलं तन्निमित्तं
सम्यक् सूचनमित्यर्थः । वननिशापदयोः क्रमेण तात्पर्यमाहुः **लौकिके-**
२-७-३३ त्यादि । **तदे**ति । अवैयर्थ्येण जीवानां भगवदेकतानतायाम् । लौकिकवैदि-
कक्रियानिवृत्तिरपि भगवदिच्छाविशेषेण चेत्तदेव भक्तिफलभूतस्वरूपानुभवहेतुर्भवतीति ज्ञापयितुं निशाविशेषणतात्पर्यमाहुः **तन्निवर्तिके**त्यादि । **अत एवे**ति भक्तिबोधनार्थत्वा- देव रञ्जिता सर्वनिवृत्तिरिति रञ्जनं पूर्वोक्तनिवृत्तिरूपमित्यर्थः । **अत एवे**ति भक्तिप्रयुक्ते- च्छाविशेषवैशिष्ट्यादेव । **तत्रे**ति तादृशीषु । उत्सुकपदतात्पर्यमाहुः **केवलमि**त्यादि । तथा च, रासेनोत्सुक इति समासः । औत्सुक्यकार्यं विवृण्वन्ति **तदे**त्यादि । **तद्रसाविर्भा-**



**पार्थमि**ति तासु तदर्थम् । **विषयाभावा**दिति भगवत्सम्बन्धाभावात् । ननु भगवत्सम्बन्धस्य कथं रोगत्वेन पर्यवसानं तत्राहुः **सर्वो ही**त्यादि । **देहनाशमि**ति उपचयाभावं तनुता- मिति यावत् । एतेन भ्रमरगीते 'धारयन्त्यतिकृच्छ्रेणेत्यत्र काश्च न मृता' इति या व्याख्याता- स्ता एता इति प्रतिभाति । **अनेने**त्यादि, स्मरणस्य रोगत्वकथनेन । **तासां** फलप्रक- रणीयषष्ठाध्योक्तानाम् । **भगवद्धर्मप्रवेशाभावा**दिति भगवद्धर्मेषु प्रवेशाभावात् । तत्र गमकमाहुः **अत एवे**त्यादि । **तादृशीनामि**ति लौकिककामवतीनाम् । **तादृश** इति । कामाधिष्ठातृरूपः । यदि तस्य कामस्य न भगवद्धर्मत्वं तदा भगवता किमिति प्रतिब- न्धकनिवृत्तिः कृतेत्यत आहुः **एवमपी**त्यादि । ननु हीनेधिकारे भगवान् किमिति स्वेच्छया प्रवर्तेतातो नैवमिति शङ्कायामाहुः **गुणत्रये**त्यादि । गुणत्रये तत्कार्ये वा आसक्तानाम्, तथा चेच्छायामप्यासक्तिरेव बीजमित्यर्थः । **मूर्च्छितशब्दा**दित्यादि, 'मूर्च्छा मोहसमु- च्छ्राययोरि'ति धात्वर्थात्ततस्तथेत्यर्थः । **अत एवे**ति एवमतितापजनकत्वादेव । **प्रतिबन्धक- निवृत्त्यभाव** इति मुख्यभक्तिप्रतिबन्धकीभूतो य कामस्तन्निवृत्त्यभावः । **मुख्याधिका- राभावा**दिति मुख्योधिकारः सर्वात्मभावरूपस्तदभावे । तथा च, निरोधस्कन्धेऽविहित- भक्तेरेव नानाप्रकारिकाया निरूपितत्वात्कामलोभादिप्रतिबन्धकानपि भगवानेवंभावे दूरी- कृत्य फलं प्रयच्छतीति एतस्य संसूचनं स्कन्धार्थः । तेनापि मुख्याधिकारे किं वाच्यमि- त्यपि संसूच्यत इत्यर्थः ।

**ये चे**त्यत्र । प्राप्तिक्रियायाः कर्मणश्च प्रथमश्लोकेऽसत्त्वाद्भूरित्वस्य नान्तरीयकल-
क्षणत्वाच्च द्वाभ्यां मिश्रीकृत्योभयनिरूपणेप्यदोष इत्याशयेन पक्षान्तरमाहुः
२-७-३४ **भूर्यनुग्रहं वे**ति । भूरित्वं मुक्तिः, सा च रूपान्तरत्यागपूर्वकं स्वरूपाव-
स्थानम् । **वैकुण्ठमक्षरम्** । तत्र स्वरूपावस्थानं सञ्जातानभिमाने जीवन्मुक्तानामपि भवति, तद्वत्प्रकृतिलीनानामपि सुषुप्ताविव । एतावान् परं विशेषो यद्वासनाराहित्यमक्षरैक्याभावेन च नानात्वस्य विद्यमानत्वात्तस्य भूरित्वम्, अनुगृहीतानां त्वक्षराभेदादाश्रयत्वमेव, न तु कृपात्मकधर्मान्तरत्वम्, तस्य पूर्वोक्तधर्मविशिष्टे क्षण एव निवेशात् । किन्तु—अनु—भूरित्वोत्तरं गृहीत्वाधेयत्वेन स्वीकरोतीत्यनुग्रहः इति योगेनाश्रय एव तथेति । तदिदं हृदि कृत्वा विभजन्ते **एत** इत्यादि । श्लोकक्रमविरोधे एवं भवतीत्यरुच्या पक्षान्तरमाहुः **अथवे**त्यादि । गता इति तमोभिभवेन भेदस्यापि ज्ञानाविषयत्वात्तद्भावं प्राप्ता इत्यर्थः । तथा सति कथं भूरित्वमित्यत आहुः **तस्या** इत्यादि । आकाशवद्भूयानित्यादौ व्यापकेपि तथा प्रयोगात्तथे- त्यर्थः । एवं यद्यपि क्रमस्वीकारो भवति तथापि यत एतद्विमुच्यत इति 'तदेवरूपं दुरवाप- मापे'त्यादिबहुवाक्यविरोधात्तदपेक्षया क्रमात्मकधर्ममात्रविरोधस्य स्वल्पत्वात् पूर्वोक्तानु- सृतमेव पक्षान्तरमाहुः **अथवा उभये** इत्यादि । अस्मिन् पक्षे माध्वजीवद्वयस्वीकारः

प्रथमपक्षाद्विशेषः। सहजासुराणामप्यसुरत्वं प्रमेयबलेन निवर्त्य स्वनिलयप्रापणं माध्वमतादपि विशेष इतिबोध्यम् । न चावेदयभिमानिनोः फलवैपरीत्यं शङ्कनीयमन्यथाकरणसामर्थ्यस्य निष्प्रत्यूहस्य भगवतः स्वतः सिद्धत्वादिति ।

**ये वा** इत्यत्र **अन्यथेति** मुक्तिहेतुभूतस्य द्वेषादेरभावे । **क्रमेतेषां** मुक्तिबोधकप्रमाणानि चानुरुध्यादर्शनस्यार्थान्तरमाहुः **प्रथमत** इत्यादि । **आत्म-**
२-७-३५ **त्वादिति** आदायकत्वात्, 'यच्चाप्नोति यदादत्ते यच्चात्तिविषयानिह । यच्चास्य सन्ततो भावः तस्मादात्मेति कीर्त्यते' इति तन्निर्वचनात् । ननु मूले आदायकत्वमेवात्राभिप्रेतमित्यत्र किं गमकमित्यत आहुः **अत एवेत्यादि** । अत्रैतद्बोध्यम् । एते अदीनत्वादयः परस्परनिरपेक्षतयैव परामृष्टाः सापेक्षास्तु फलिष्यन्तीति ।

२-७-३६ **कालेनेत्यत्र** । व्यासस्य चिन्तारूपत्वविचारेण **चिन्तामयमित्यत्र** प्राचुर्ये मयड्बोधितः ।

**देवद्विषामित्यत्र अनेनेति** । एतत्पदविमर्शावसरे कलिकालोत्पन्नबुद्धावतारनिरूपणेन, प्रतिभातीति शेषः । **कलिरिति** अष्टाविंशतितमद्वापरात्पूर्वः कलिः,
२-७-३७ अन्यथा पूर्वश्लोकेषूक्तानां करिष्यतीत्यादीनां भविष्यत्प्रयोगाणां विरोधापत्तेरिति । के देवद्विष इत्यपेक्षायां तत्स्वरूपं कारिकायामाहुः **वेदेत्यादि** । अणुविरोधः प्रमादादपि भवतीति तद्वारणार्थं विशिषन्ति **वेदार्थस्य विनिन्दका** इति, निन्दायां विशेषो बुद्धिपूर्वकं मिथ्येति प्रतिपादनम्, तेन न कोऽपि क्वापि विरोधः । **अत एवेति** मोहनार्थकान्मुहधातोरेव । **अनेन मार्गेणेति** पुरविशेषणद्वयेन । नन्वेवं सति नृसिंहादिवद्बुद्धावतारेणापि ते कुतो न हता इत्यत आहुः **तयोरित्यादि** । तयोर्लोकवेदनाशरूपकार्ययोरर्थे तेषां हनने क्रोधेन हननाभावादमुक्तौ कालनेम्यादिवत्पुनस्तथैव भवन्तीति तदभावाय तथेत्यर्थः।

**यज्ञालयेष्वित्यत्र विधिच्छलरूपेणेति** । शास्त्रस्य जीवपरत्वमङ्गीकृत्य धूम-
२-७-३८ मार्गेण करणे विधेस्तात्पर्यकथनं तच्छलरूपं तेनेत्यर्थः ।

**सर्गे इत्यत्र एवं सर्वमित्यादि** । अत्रान्तर्यामिणः सर्वधर्मसहितस्योक्तस्या विचारे तत्तदवतारादिवाचकानां पदानां तत्तदङ्गादिवाचकत्वम् । वाक्यानां च
२-७-३९ तत्तदङ्गादितात्पर्यकत्वम्, तद्द्वारा च भगवत्परत्वमित्येवं ज्ञानश्रवणमित्यादि सिद्ध्यति । ततश्च तादृशस्य सर्वाङ्गेक्षणमशक्यमित्यतो धारणायाः प्रकारं बोधयिष्यन् माहात्म्यमाहेत्यर्थः । ननूक्तांशे विचारणीये माहात्म्यकथनस्य किं प्रयोजनमत आहुः **एतादृशा** इत्यादि । **अवस्थान** इति स्थैर्ये । नन्वेवं सति सर्वदा भगवति मनः कुतो न तिष्ठतीत्याकाङ्क्षायां श्लोकत्रयतात्पर्यमाहुः **न हीत्यादि** । **अव्यवसितमनसेत्यत्र** कर्मधारयः ।

१ लोकवेदनाशरूपकार्ययोः पाठः ।



**वैक्लव्यमिति** धारणासामर्थ्याभावेन विक्षेपः । **निरूपणमिति** । धारणाविघटकहेतुसत्तायामपि यो धारणायाः सम्भवः स केवलं माहात्म्यहेतुक एवेतिज्ञापनाय मनोव्यवस्थापकमाहात्म्यनिरूपणम् । तथा च, विमर्षणीयग्रन्थे यावदित्यादिपदैः कालकरणमनोव्यवस्थितिरूपार्थत्रयनिरूपणात्तद्विमर्शार्थं त्रयः श्लोका इति भावः । **स्वगुणैरिति** स्वोत्पन्नैः सत्त्वादिभिः । **तत्रेति** चतुर्मूर्त्तिपक्षे । अत्र ब्रह्मा प्रद्युम्नो वेदा अनिरुद्धो बोध्यः । पालनं केवलानिरुद्धकार्यमेवेत्याशयेनाहुः **धर्मः प्रथम** इत्यादि । **प्रवृत्तिरिति** मानसव्यापारविशेषः । **उत्पन्नाविति** पञ्चमाध्याये 'नारायणपरा वेदा' इत्यत्र । **भूमौ नाशका** इति अवनीशानां ते प्रतिपक्षा इत्यर्थः । ननु पूर्वं मायाद्वयं निरूपितमिति तयोर्मध्ये केयमित्याकाङ्क्षायामाहुः **इयमित्यादि** । समासचतुष्टयमत्र कल्पभेदेन सृष्टिभेदाद्विवक्षितमिति तदर्थमुपपादयन्तो विभजन्ति **सा हीत्यादि** । तथा च, प्रथमपक्षे 'प्रकृतिर्ह्यस्योपादानमि'त्येकादशीयवाक्याज्जगद्रूपेण भवति, तदा मायायै मायाकार्यं सृष्टिस्थितिप्रलयरूपं निमित्ततया निर्वाहयितुं इमा भगवद्रूपा विभूतयः, द्वितीयपक्षे तस्यां निमित्तभूतायां सहकारिण्यो भगवद्रूपा विभूतयः, तृतीयपक्षे सा कर्त्री तदा करणभूताः, चतुर्थपक्षे सा करणभूता तदैता व्यापारभूता इत्यर्थः। एवमत्र सृष्टेस्तत्परिकरस्य च यच्चतुर्द्धा निरूपणं 'तदात्मानं क्रीडयन् क्रीडन् करोति विकरोति चे'ति राजप्रश्ने यावन्तः पक्षा राज्ञा उद्भावितास्तेषां सङ्ग्रहायेति बोध्यम्, सर्वेषां पक्षाणां प्रमाणसिद्धत्वादिति । **नियामिकानीति** दृष्टद्वाररूपाणि । **बोधकानीति** द्वारान्तरस्यापि सद्भावबोधकानि । **प्रतिक्षणं नानारूपत्वादिति**, यद्यप्येतानि सृष्ट्यादिकाले प्रसिद्धानि तथापि प्रतियोगिभेदेन युगपदेवावान्तराणां नानाविधकार्याणां भवनात् **ब्रह्मपु**राणोपान्त्ये मायानुकीर्त्तनाध्याये घटिकामात्रेण षष्टिवर्षात्मककालातिक्रमस्य जलमग्नचाण्डालीब्राह्मणजन्मोपाख्यानेन प्रतिपादनाच्च तथात्वादित्यर्थः ।

**विष्णोर्नु वीर्येत्यत्र अव्यवस्थितमनसेति** अव्यवस्थितेन मनसेत्यर्थः । अत्र कतमस्य भगवद्वीर्यगणनायां योग्यतायास्तर्कितत्वादितरेषामयोग्यतायाः कैमुति-
२-७-४० कन्यायेनार्थादेव सिद्धिरिति वक्तुं कतमशब्दस्य विकल्पने रूढत्वादतिशयिते प्रजापतौ योगाच्च कतमशब्दं पक्षद्वयेन व्याचिख्यासवः प्रथमपक्षतात्पर्यमाहुः **सर्वेषामि**त्यादि । **उक्तमिति** कतमपदप्रयोगेणोक्तम् । तेनापि सूचितमर्थमाहुः **मनस एवे**त्यादि । **उक्तमिति** अर्हतिपदमुक्तमन्यथा पदान्तरमेव वदेदित्यर्थः । द्वितीयपक्षतात्पर्यमाहुः **जीवस्येत्यादि** । **स्वाभाविकधर्मस्येति** जीवत्वस्य मनश्चाञ्चल्यस्य च । **अत्यन्तं** ब्रह्मापीति कतमपदवाच्यो रजोगुणस्य महत्तत्त्वस्य वाभिमान्यपीत्यर्थः । वीर्यगणनायामसामर्थ्ये हेतुमाहुः **जगदादीत्यादि** । तथा सतीह कतमोऽर्हतीत्यावृत्त्यान्वयः । तथा च, वीर्यगणनायां ज्ञानस्य हेतुत्वात्तस्मिंश्च धारणाया हेतुत्वात्तदभावे तदभाव इत्यसामर्थ्यमित्यर्थः । तर्हि सम्भावनायां किं बीजं तत्राहुः **नन्वेवं रूपेणेति** जगदुपादानगो-

परापरोक्षज्ञानकरणभूततया वक्ष्यमाणरूपेण । **तत्रापीति** सर्वांशधारणायामपि । **एतदिति** संभावनाबीजरूपं सामर्थ्यम् । संभावनाबीजं स्फुटीकुर्वन्ति **सामर्थ्ये**त्यादि । अत्र रजांसीति पदेनावान्तरसृष्टिः सूक्ष्मात्स्थूला भवतीति बोध्यते । नन्वेवं सामर्थ्ये विद्यमाने किमिति धारणादिसामर्थ्यं निराक्रियत इत्याकाङ्क्षायामाहुः **तादृशस्ये**त्यादि । तत्र मनसो जीवस्य चासामर्थ्ये हेतुत्वेन विष्णुपदस्यार्थमाहुः **मनसोपी**त्यादि । मनस इति पञ्चमी । यद्यपि तदणु, तथापि तत्त्वरूपं तद्व्यापकम्, तस्य च व्यापकत्वं छान्दोग्ये **सनत्कुमारनारदसंवादे** प्रसिद्धम् । तदपेक्षयापि भगवतो बृहत्वात् । तथा चैतेषु प्रथमे विचारिते मनसस्तद्ग्रहणसामर्थ्याभावस्तृतीये विचारिते 'यन्न स्पृशन्ति न विदुर्मनोबुद्धीन्द्रियासवः' इतिवाक्यात् तत्संसर्गस्यैवाभावः । आद्ये द्वितीये च विचारिते वेगस्यैवाशक्यवचनत्वमित्याशयेनेयत्तावच्छेदराहित्यमाहेत्यर्थः । मूले सर्वपदस्याभावात्सर्वस्य ग्रहणे बीजमाहुः **तत** इत्यादि । **अर्थादिति** अवधिरूपादङ्गर्थात् । ननु तथापि गुणेषु संख्यायोगादियत्ता भविष्यतीति शङ्कायामाहुः **सङ्ख्ये**त्यादि । **अग्र** इति अग्रिमश्लोके । एवमत्र मनोनिग्रहस्यावश्यकत्वस्थापनेन धारणा साधिता । अत्र **नु** इतिपदेन परोक्षत्वस्य मूलाभिप्रेतत्वाज्ञहत्स्वार्थात्र न दोषाय ।

**नान्तमित्यत्र स्वस्येति** भगवत । ननु योगजधर्मेण सर्वगुणज्ञानं मुनीनां भविष्यती-
२-७-४१ त्याकाङ्क्षायामाहुः **योगोपी**त्यादि । ननु मायया बलं यस्येति षष्ठ्यर्थे
बहुव्रीहिर्भवत्वित्याशङ्कायामाहुः **कि**न्त्वित्यादि । **यावदिति । निरूपित-
मिति** । तेन विद्यमानेपि माहात्म्ये भगवत एवं गुणकत्वात्सर्वदा मनः कुतो न तिष्ठतीत्याशङ्का वारितेत्यर्थः ।

**येपामित्यत्र न साधनत्वेन तथात्वसम्पादनमिति,** मार्गप्रवृत्तिसाधनत्वेन
२-७-४२ नात्मीयतया ग्रहणम् । **क्रियेति** प्रार्थनादिक्रिया । तथा च, यथा
पुरुषाणां नियोज्यानां सत्त्वेपि राज्ञा मृगया स्वयं क्रियते, तथा सर्वमार्गप्रवर्त्तकत्वाद्भगवत्त्वाच्च स्वत एव दयाकरणमित्यर्थः । नन्विच्छायाः करणत्वे दयायाः किमिति तथात्वमुच्यते इत्यत आहुः **अनिमरे**णेत्यादि । धारणायाः कार्तार्थ्यहेतुत्वज्ञानेन तत्करणावश्यकस्फूर्तावपि भगवतो गुणानन्त्यज्ञानेन तस्याः अशक्यत्वस्फूर्तौ नियमतस्तत्करणं न प्राप्नोतीति तेषां तथात्वे तथेति तस्यास्तथात्वमित्यर्थः । नन्वेवं सति सर्वेषु कुतो न दययतीत्यत आहुः **सर्वेष्वि**त्यादि । तथा चात्रापीच्छैव कारणमित्यर्थः । **तथाविधानामिति** दयाविषयाणाम् । **साधनमुपदिशतीति** फलसाधनं ब्रह्मा स्वयमुपदिशतीत्यर्थः । सर्वात्मना आश्रितः पादौ यैरिति न विग्रहवाक्यम्, किन्तु तात्पर्यकथनम् । विग्रहस्त्वाश्रितः पादो यस्येत्याश्रितपात्, तस्य आश्रितपद इति । तथासति येषां दययेत्, ते सर्वात्मनाश्रितपदः अथ दुस्तरां देवमायामतितरन्तीत्यादियोजना । अभिज्ञानस्य प्रयोजनं शास्त्राभिप्रेतत्वं चाहुः **सर्वत्रे**त्यादि हेतुरिति निर्व्यलीकाश्रये । **तादृशस्येति** उक्तधारणाधारयितुः । अनेनैव प्रथमपक्षेऽस्वरसोपि दर्शितः । **वक्ष्ये**त्यादि । 'देहः किमन्नदातुर्वे'त्यादिवाक्यात्तथेत्येव युक्तमित्यर्थः । **सुनिरूपितमिति** येषु भगवतो दयया निर्व्यलीका भगवदाश्रयस्ते सर्वत्र निर्ममा निरहङ्काराः सुव्यवस्थितमनसो भगवन्माहात्म्येनैव सर्वाङ्गधारणां कुर्वन्तीति मनोनैश्चल्यं सर्वात्मना आश्रयश्च प्रकारो भगवन्माहात्म्यमेव तत्र साधनम् । निदानं तु भगवद्दया, तत्र सहकारिणी तु भगवदिच्छा, सा यथा तथा तावत्कालं धारणा सिद्ध्यति, तस्या अन्यादृशत्वे तु मनोवैक्लव्यं भगवत अनियम्यत्वात् । अतः तादृशभावे स्वदैन्यमेव सदा भावनीयमिति श्लोकत्रयेण सम्यङ्निरूपितमित्यर्थः ।



**वेदाहमित्यत्र एकैके**त्यादि । पूर्वोक्ताधिकाराभावे एकैकाङ्गधारणाधिकारिणां निरू-
पणमुखेन तत्प्रकारं निरूपयतीत्यर्थः । **तत्रेति** सर्वात्मनाश्रयत्वेपि साह-
२-७-४३ ङ्कारममकारवत्त्वेन जघन्याधिकारत्वे[1] । **भगवतश्चित्ररूपा** इति 'मयू-
राश्चित्रिता येन शुकाश्च हरितीकृताः' इतिवाक्यात्ते तद्रूपाः वयांसि तद्व्याकरणं विचित्रमितिवाक्याच्च । मुखधर्मरूपा इति हसितात्मका इत्यर्थः । एतेन 'आस्य ये द्रुतभुजानि'त्यत्रोक्तानामीदृशोऽधिकार इति प्रतिभाति । किञ्च । एतद्धारणायाः सञ्जातभक्त्यधिकारत्वेन तादृशस्यैवंभावसम्पत्तौ 'चेतस्तत्प्रवणं सेवे'ति मानसी सेवा सिद्ध्यति । तथापि मुख्याधिकाराभावे सेवौपयिकदेहो वा वैकुण्ठादिष्वित्यनेन बोधितं फलं यथाधिकारं भवतीत्यपि प्रतिभाति ।

**ते वै विदन्तीत्यत्र** । महतामपि दैन्यमेवोपाय इति ज्ञापयन्ति । अस्मदादीना-
मित्यस्मत्पदेन । **सुलभमिति** । तथा च, यथा निरहंममत्वादिकं मुख्या-
२-७-४६ धिकाराभिकज्ञापकं तथा दोषान्तरसत्त्वेऽपि परायणत्वं दयाया अभिज्ञा-
पकमित्यर्थः । ततः सामान्यतस्तस्मिन्सति विशेषतो ये तादृशास्तेषामनुसरणं कर्त्तव्यमित्याशयेन तल्लक्षणमाहुः **तस्ये**त्यादि । तादृशाश्च प्रसादनीयाः, न तु सम्वादसन्तापमात्रं कार्यमित्याहुः **तेषामपी**त्यादि । **श्रुतार्थालोचनसमर्था** इति । इदं स्त्र्यादीनां विशेषणम् । तेन बुद्धेरधिकारिविशेषणत्वं बोधितम् । तदेतन्मनसिकृत्यासिद्धमाहुः **तस्मादि**त्यादि । तथा च, यथायथाधिकारस्तथा तथा तादृग्धारणासिद्धिरित्यर्थः ।

**शश्वदित्यत्र** । **उत्पत्त्या विनिरूप्येति** । उत्पत्तिप्रकारसामग्रीप्रदर्शनेन निरूप्य ।
२-७-४७/४८ **अर्थमुत्पत्त्या विचारयतीति** जितत्वस्वरूपमपोहनप्रकारं च जितत्व-
सामग्रीविचारेण निरूपयतीत्यर्थः । जितत्वस्वरूपं सामग्रीं चाहुः **स
एवे**त्यादि । तथा च, स्वतः स्फूर्तिरेव सामग्रीत्यर्थः । **एतदेवेति** एतच्छ्लोकोक्तरूपमेव ।

१ "यस्त्वे" पाठः

ननु एतस्मिन् श्लोके पादस्वरूपमात्रमुच्यत इति कथं ततोन्येषां स्वरूपावगतिरित्यत आहुः **तत्रेत्यादि** । **ज्ञास्यतीति** तल्लक्षणकतया ज्ञास्यति । **दशधर्मा** इति लक्षणरूपा इत्यर्थात् । **प्रेर्यप्रेरकयोरिति** प्रेर्यकृतः प्रेरककृतश्चेत्यर्थः । **सर्वपरिच्छेदकस्येति** भयोत्पादकस्य सर्वाधारभूतस्य । येति श्रोतानुज्ञात्रनुज्ञाविकल्पभेदेष्वविकल्परूपा । **समं सद्रूपमिति** सद्रूपस्य सर्वत्र समतयैव प्रतीयमानत्वात्समपदेन तदेवोच्यत इत्यर्थः । **सर्वव्यवहारातीतमिति** । व्यवहारो नाम लौकिकबुद्धिविषयत्वहेतुभूतो वा लौकिकप्रमाणसामर्थ्यजन्यो वा यो वागादिव्यापारस्तदगोचरमित्यर्थः । तद्व्युत्पादयन्ति **व्यवहारोपीत्यादि** । **व्यवहारातीतत्वमिति** प्रपञ्चव्यवहारातीतत्वम् । **आत्मीय** इत्यादि । देहादिवदाभिमानिकात्मसम्बन्धवान्न भवतीति देहादिष्विवौपचारिक आत्मव्यवहारोपि तत्र नास्तीत्याहेत्यर्थः । **न तत्र व्यवहार** इति नात्मीयत्वकृत आत्मव्यवहारः । **शाब्दिकमिति** शब्दत्वकृतं शब्दार्थत्वकृतं च । **कर्मत्वाद्यभावादिति** । प्रमातृप्रमाणसामर्थ्यस्याभावेन तत्सम्बन्धाभावे तद्विषयकज्ञानाभावेन तथात्वात् । **कारकेत्यादि** । अनेनैव षष्ठ्यर्थत्वमपि निवारितं बोध्यम् । **भगवदाज्ञयेत्यादि** । एवं साधितेपि चतुर्विधव्यवहारातीतत्वे यथा 'असङ्गो ह्ययं पुरुष'इत्यादिश्रुत्युक्तधर्मवतां जीवानां भगवदाज्ञया मायाव्याप्तौ तद्व्यवहार्यत्वम्, ततश्चाज्ञाननिवृत्तिद्वारा गुर्वादिव्यवहार्यत्वम्, तथा पदेपि मायासम्बन्धे निमित्तवशात्तदपनोदार्थं व्यवहार्यत्वं स्यादित्यर्थः । **दूरादेवेति** । तथा च, तस्याः सम्बन्धस्याभावात्तत्कृतव्यवहारादप्यतीतमित्यर्थः । **प्रसिद्धिमाहेति** वेदान्तप्रसिद्धिं प्रमाणत्वेनाह । **यदीत्यादि** । तथा च, लौकिकवैदिकयावद्व्यवहारातीतत्वेपि सर्ववेदान्तसिद्धं तदित्यर्थः । इदं यथा तथा 'प्रकाशवच्चावैयर्थ्यादि'तिसूत्रे व्युत्पादितम् । ननु वेदान्तेषु तस्य परात्परत्वं परमत्वं च प्रतिपादितम् । 'परात्परं यन्महतो महान्तमि'ति, 'तदेव ब्रह्म परमं कवीनामि'ति । तथा सति कथं तस्य चरणत्वमित्यत आहुः **तस्मिन्नित्यादि** । **पदमिति** चरणः, **तत्पदमिति** तत्स्थानं लोकासङ्गादिरूपम् । तथा चाभिध्यावशादेव तस्य चरणत्वं स्थानत्वं भोग्यत्वं चेति चरणाभरणायुधस्थानादिरूपतायामपि न कश्चिद्विरोधलेश इत्यर्थः । एतदेव **निबन्धे** 'मूलावच्छेदरूपेण तदाधारतया स्थित' इत्यादिनोक्तं ज्ञेयम् । तेन स्वप्रतिष्ठत्वादेरपि न विरोधः । **तस्येति** ज्ञातस्य पदस्य । **मूले-तत्रेति** फले । **विजितपदार्थो विचारित** इति । पूर्वोक्तरीतिकदशधर्मवत्त्वेन फलत्वेनात्मरूपत्वेन च पदवत्त्वत एव यो यो भगवदवयवः स्फुरति सोत्र विजितपदार्थ इत्येवं विचारित इत्यर्थः । अत्र सभ्यङ्क्रियम्य यतयः सन्तोजस्रसुखं विशोकं यद्ब्रह्मेति विदुरित्येवं मूलं योजयित्वा पूर्वोक्तार्थोनुसन्धेयः । **जितं जितमित्यादि**, अत्रोक्तस्यापोहनस्वरूपं बोधयितुं 'यमकर्तृहेतिं जहुरि'त्यादिना सप्रयोजनं सदृष्टान्तं विचारयतीत्यर्थः । तदाहुः **तत्रेत्यादि** । **आहेति** । यमकर्तृस्थाननियमनजनकं हेतिं साधनं जहुरित्यनेनाहेत्यर्थः । तथा च, जितं जितं स्थानमपोह्य धारयेदित्यस्य स्थानमपोह्य स्थानं जयसाधनं



ग्राहकबुद्ध्यप्रभागात्त्याजयित्वा जितं जितं धारयेदित्येवमर्थो बोध्यः । तदेतदाहुः **ससाधनस्येत्यादि** । **अस्य त्यागस्येति** पदग्राहकसाधनत्यागस्य ।

**स श्रेयसामित्यत्र** । **तत्र हेतुमाहेति** भगवत्त्वेन फलसाधकत्वे विचारकारणभूतां
जगदुत्पत्तिं ज्ञापिकामाहेत्यर्थः । **क्रियातदभिव्यङ्ग्यो वेति** । अत्र
२-७-४९
पुरःस्फूर्त्तिकविचारेण क्रियावास्तवविचारेण तदभिव्यङ्ग्य एव धात्वर्थ इति
बोध्यम् । क्रियायास्त्रिक्षणावस्थायित्वेन नित्यस्य शब्दसम्बन्धस्य तत्राशक्यवचनत्वादिति । **इति युक्तमिति** उत्पादकस्य फलदातृताया आवश्यकत्वाच्छ्रेयोविभुत्वं युक्तमित्यर्थः । **निवर्त्तेत** इति देहो निवर्त्तते ।

**यथा हरावित्यत्र सम्बन्धात्मभावादिति** सम्बन्धेनात्मीयतालक्षणेन य आत्म-
भावः स सम्बन्धात्मभावस्तस्मात् । तद्व्युत्पादयन्ति **आत्मन** इत्यादि ।
२-७-५२
एतत्परिहर्तुं सिद्धान्तमाहुः **अथमित्यादि** । **उपपादितमिति** पुनश्च
भूयाद्भगवत्यनन्ते १-१९-१६ इत्यत्र वाक्यान्वयाधिकरणे च व्युत्पादितमित्यर्थः ।

इति श्रीद्वितीयस्कन्धसुबोधिनीप्रकाशे
सप्तमाध्यायविवरणम् ।



श्रीकृष्णः ।

# अथाष्टमाध्यायस्थश्रीसुबोधिनीप्रकाशः ।

**अष्टमा**ध्यायं विवरिषवः पूर्वप्रकरणसमाप्तत्वात् तत्सिद्धं फलं पूर्वमनुवदन्ति **एव-मित्यादि**, **निर्द्धारभजन**मिति निर्द्धारपूर्वकं भजनम्, तथा च, द्वयोर्निर्णये प्रश्नोक्तिमुखेन श्रीशुकैः कृते क्रमेण द्वयं राज्ञः सिद्धमित्यर्थः । तर्हि द्वितीयविमर्शस्य किं प्रयोजनमित्याकाङ्क्षायां तद्वदन्तोऽध्यायार्थमप्याहुः **उपपत्त्ये**त्यादिद्वाभ्याम् । तथा च, यतोत्र शृण्वत इत्यादि (२–८–४+५+६) त्रयेण भजनकर्त्तव्यतानूद्यतेऽग्रे चाक्षेपरूपा उपपत्तिः पूर्वं दृश्यते, तेन ज्ञायते राज्ञ एकस्यैव निश्चयः सम्पन्नो न द्वितीयस्येति तदर्थं द्वितीयप्रकरणमित्यर्थः । फलस्योपपत्तित्वं तात्पर्यनिर्णायकत्वाज्ज्ञेयम् । अध्यायानां सङ्गतिस्तु स्पष्टैव । प्रकरणसङ्गतिस्त्वेककार्यत्वरूपा पूर्वमुक्तैव । व्याख्यानसङ्गतिमाहुः **उक्ते**त्यादि ।

**ब्रह्मणे**त्यत्र **परमादरेण पृच्छतीति** । अत्र यस्मै यस्मै यथा प्राहेति वीप्सा
२–८–१ आदरपारम्यबोधिका ज्ञेया । **तस्येति** स्थूलरूपसहितस्य सूक्ष्मरूपस्य ।
**अन्यथेति** आदरश्रवणेप्साबोधकप्रश्नमात्रेणैव सिद्धेः ।

**हरे**रित्यत्र । अनेन कथमधिकारसूचनामित्यपेक्षायामाहुः **अन्ये त्वि**त्यादि ।
२–८–२ **इति सम्बोधनमिति** । एतदभिज्ञापकं सम्बोधनमित्यर्थः । **सर्वतो रक्षा चेति** । मण्डलब्राह्मणे 'तमेतमग्निरित्यध्वर्यव उपासते यजुरित्येष हीदं सर्वं युनक्ती'त्युपक्रम्य 'तं यथा यथोपासते तदेव भवति तद्धै तान् भूत्वावति तस्मादेनमेवंवित्सर्वैरेवैतैरुपासीत, सर्वं हि तद्भवति सर्वं हैनमेतद्भूत्वावती'तिश्रुतौ भगवतः सर्वरूपत्वस्य सर्वरूपतयोपासने सर्वरूपतां प्रकटीकारेण रक्षणस्य च श्रावणेनाखिलात्मत्वज्ञाने सर्वतो रक्षा च सिद्ध्यतीत्यर्थः ।

**शृण्वत** इत्यत्र । ननु भगवच्चेष्टितश्रवणादिकं कुर्वतस्तदेव हृदि विशतीति भगवान्
२–८–४ विशत इति कथमुक्तमित्याशङ्कायां स्वचेष्टितहृद्भगवत्पदसूचितं हेतुत्रयमाहुः **धर्मे**त्यादि । **हृदयमिति** हृद्ययं हृदयमिति हि श्रौती निरुक्तिः । तथा च, गुणानामविनाभूतत्वात्तत्प्रवेशनार्थं विशतीत्येको हेतुः, दहरत्वाद्विशतीत्यपरः । स्वीकृतजनपुरुषार्थसाधकत्वाद्विशतीत्यन्य इत्येवं ते ज्ञेयाः । नन्वयं भगवत्स्वभाव इति कथं निश्चेयमित्याकाङ्क्षायामाहुः **भगवतैवे**त्यादि । अयञ्च हेतुः पूर्वाध्याये 'इदं भागवतं नामे'ति २–५–७१ श्लोकेनोक्तत्वात् प्रकरणसिद्धो ज्ञेयः ।



**प्रविष्ट** इत्यत्र **कीर्त्तनेपी**त्यादि । पूर्वं श्रवणादित्रयस्य भजनसहितानां चतुर्णां वा
उक्तत्वेपि मुखस्य निर्गमनद्वारत्वेनान्येषामद्वारत्वेनोक्तहेतुभ्यां श्रवणस्यैव
२–८–५ द्वारत्वमवशिष्यत इति तथेत्यर्थः । को भावः ? किं सरः ? किं सरोरुहम् ? यद्भगवदधिकरणत्वेनाभिप्रेयते इत्याकाङ्क्षायां तद्व्युत्पादयन्ति **भाव** इत्यादि । सिद्धान्तपक्षमाहुः **कारणरूप** इत्यादि । अध्यायद्वयोक्तरीत्या कारणरूपः अविनाशी अक्षराख्यद्वितीयपुरुषः भावशब्दवाच्य इत्यर्थः । पूर्वोक्तपक्षद्वयेऽस्वरसोग्रे स्फुटीभविष्यति । कुतो नाद्रियत इत्याकाङ्क्षायामाहुः **स्ने**त्यादि । स्वविषयकशाब्दज्ञानधारणयाऽयोगोलकवह्निन्यायेन हृदयरूपः स एव जात इति । तथा च, हृदये पूर्वोक्तरूपद्वयात्मकत्वस्य श्रवणपूर्वकालेपि सत्त्वेन तस्य कमलरूपककथने प्रयोजनाभावादत्र च तत्कथनात्तन्नाद्रियत इत्यर्थः । रूपकबीजं व्युत्पादयन्ति **स चे**त्यादि । स द्वितीयपुरुष एव यदि पुनः श्रवणादिजन्यस्नेहेन मननिदिध्यासनाभ्यां सर्वत्र स्वस्फूर्तिरूपं निकाशमधिकारिण्याविर्भावयति, तदा विसारित्वात्सरोवररूपो भवति, तस्य कमलभावप्रकारमाहुः **साधने**त्यादि । साधनभक्तिर्मननस्मरणादिसहकृतप्रेमरूपा, पुनः श्रवणे कृते तन्मध्यवर्त्तित्वात्तत्सम्पुटिता सती यदि तस्मिन् अक्षरात्मके हृदये व्यसनरूपतां प्राप्नोति तदाऽवान्तरव्यापाररूपं सर्वभावात्मकं यत्प्रेम जलस्थानापन्नं तेन हृदयस्य पूरितत्वात् व्यसनोत्कर्षे सूक्ष्मश्रवणादिना हृदि समागते भगवति तत्प्रेम आल्हादकं सत् कमलं भवति, इत्येवमवस्थापरम्परायाः बोधनं रूपकबीजमित्यर्थः । तेन सिद्धमाहुः **तदेवे**त्यादि । तथा चात्र परब्रह्मवाचककृष्णपदोक्त्यापि 'तद्धाम परमं ममे'त्युक्तमक्षरमेवाभिप्रेतमिति ज्ञायते । 'दहरं विपापं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थं तत्रापि दहरं गगनं विशोकं तस्मिन् यदन्तस्तदुपासितव्यमि'ति तैत्तिरीये दहरपुण्डरीकरूपहृदयमध्यवर्तिदहरस्य विशोकत्वश्रावणेन रत्याख्यभावरूपतायाः गगनत्वश्रावणेन परमव्योमात्मकाक्षररूपतायाश्च स्फुटीकरणपूर्वकमुपास्याधिष्ठानत्वस्य श्रावितत्वात् केवलभावादौ च तदभावादिति । शुद्धसत्त्वस्य परमत्वाभावेन तस्य पूर्णाधिष्ठानत्वस्यायोगाच्चेति द्वयमपि पक्षद्वयानादरबीजं सिद्ध्यतीति च बोध्यम् । ननु 'श्रुतोऽनुपठितो ध्यात आदृतो वानुमोदितः । सद्यः पुनाति सद्धर्मो देव विश्वद्रुहोपि ही'ति 'जन्मान्तरसहस्रेष्वि'त्यादिभिश्च वाक्यैर्भगवद्धर्मश्रवणाद् भक्त्युद्भवाच्च सर्वेषामेव पापानां निवृत्तत्वाद् भगवता किं वा पापं दूरीकार्यमित्यत आहुः **यद्यपी**त्यादि । नन्वत्र पापसम्बन्धिनोऽनुक्तत्वादधिकरणस्य चापहतपाप्मत्वात्किमत्र सलिलस्थानापन्नं दार्ष्टान्तिकमित्यपेक्षायामाहुः **सर** इत्यादि । तथा च, सलिल एको द्रष्टाऽद्वितीयो भवतीत्यत्रैकरूपेपि सलिलपदश्रावणादिहापि सरःशब्दबोधितम् एकरूपं प्रेमैव सलिलपदेन रूपकातिशयोक्त्योच्यत इति **तदेव दार्ष्टान्तिकमि**त्यर्थः ।

**धौतात्मेत्यत्र** । तदान्तःकरणमित्यादिकं **धौतात्मे**तिश्लोकस्याभास इति ज्ञेयम् ।
२-८-६ **तदा भक्तिमार्गानुसारेणे**त्यादि । एतेन शुष्कज्ञानिनामक्षरस्य चरणत्वं
न भासते । तत एव 'श्रेयःस्रुतिं भक्तिमि'त्यादीनि वाक्यानीति बोधितम् ।
**तन्मूलक** इति एतादृशाक्षरज्ञानमूलक इत्यर्थः ।

**यदधातुमत** इत्यत्र **अकस्मात्पक्षेने**ति हेतुं विनैव वा, स्वस्माद्वा, स्वस्वभावाद्वा,
अलीकाद्वेति चतुर्ष्वन्यतमेन । एवञ्च, यदृच्छापदेन पक्षपञ्चकसङ्ग्रहः ।
२-८-७ **हेतुनेत्य**नेनानाद्यविद्यापक्षः, इति प्रश्नहेतुभूतसंशयः षट्कोटिको बोध्यः ।

**आसीदि**त्यत्र **अनेनेत्यादि** । तथा च, भूरादिलोकस्थितिः आधाराधीना, रूपादि-
मत्स्थितित्वाद्, घटादिस्थितिवदिति अनुमानेन सिद्ध आधारे तस्य पद्मत्वं
२-८-८ तत्पुष्करपर्णेऽप्रथयदित्यादिरूपाच्छब्दात्सिद्ध्यति । ततश्च पूर्वोक्तानुमानात्साध्यतावच्छेदकतया तस्याप्याधारसिद्धौ स आधारः को वेति विशेषजिज्ञासायां 'यदास्य नाभ्यान्नलिनादि'त्यादिवाक्यात्तादृशपद्माधारशरीरसिद्धिः । ततश्चेश्वरः शरीरी, लोकपद्मजनकत्वात्, यन्नैवं तन्नैवमाकाशवदित्याद्यनुमानादपि शरीरसिद्धिरित्यर्थः ।

**यावानि**त्यत्र **तावानित्यादि** । तथा च, जीवतुल्य इत्यर्थः । किन्तेनेत्यत आहुः **यदी**त्यादि । तथा च, जीवतुल्यावयवकत्वे यदि तस्य भगवद्रूपाविर्भावशालितया नित्यत्वं तदा जीवस्य दुःखादिफलानुपपत्तिः, सङ्घातरयानित्यत्वनियमेन यदि तस्यैतत्तुल्यतिरोभावशालित्वं तदा तच्छ्रवणादिनाऽभयात्मकफलानुपपत्तिरित्ययं दोष इत्यर्थः । मूले योजयन्ति **इयत्ते**त्यादि । इयत्ता च अवयवाश्चेति द्वन्द्वः । आर्षत्वादेकवद्भावाभावः, । **यद्यपी**त्यादि, तथा चावयवसङ्ख्यामात्रं भिद्यते, तत्तु सहस्रार्जुनादिवदनैकान्तिकं, तदाकृतिस्तु न भिद्यते इति तथेत्यर्थः ।

**अज** इत्यत्र । नन्वाकृतिमात्रमप्रयोजकम्, घुणाक्षरादौ व्यभिचारात् । अवयवस-
ङ्ख्याबाहुल्यं त्वेकैकत्रानैकान्तिकं सदपि सार्वत्रिकं नेतरत्रेति न तथा,
२-८-९ अतो न जीवतुल्यतेत्यत आहुः **किञ्चे**त्यादि । तथा च, प्रसादश्चेतनधर्मश्चेतनस्तु देहाद्व्यतिरिक्त इति देहे साकारब्रह्मता न वक्तुं शक्या, प्रसादहेतुर्देहव्यतिरिक्तश्चेतनत्वादस्मदादिवद् इत्यनुमानेन देहरूपत्वे निरस्ते तद्व्यतिरिक्तस्य जीवतुल्यताया अनिवार्यत्वादिति । प्रसादे परिचायकमाहुः **अनुग्रहादेवे**त्यादि । एवमस्मिन् श्लोके ब्रह्मणि नारायणप्रसादबोधका सृष्ट्यादयश्चत्वारो ब्रह्मनिष्ठधर्मा उक्ताः ।

**स चापी**त्यत्र । षड्धर्मा ब्रह्मनिष्ठाः तथात्वेनोच्यन्ते शयनादिसर्वान्तर्यामित्वान्ताः ।
**तस्मादि**ति एवमनुग्रहेणालौकिकदशधर्मवत्त्वात् । तथा च यस्मिन्नेता-
२-८-१० वाननुग्रहस्तस्य तद्विरोधिदेहसम्बन्धः किमर्थं इति विरुद्धत्वात्प्रश्नः ।



यदि च प्रयोजनं विना प्रयोजनान्तराद्वा, तदा तच्छ्रवणादिना जातस्यानुग्रहस्यैतदपेक्षया न्यूनत्वात्तच्छ्रोतुः कथमभयप्राप्तिरिति सन्देहात्प्रश्न इतिभावः । एवं स चापीति तच्छब्दस्याव्यवहितपरामर्शित्वमाशयैवं व्याख्यातम् । तत्र पूर्वश्लोकादेव प्रसादहेतुत्वे सिद्धे पुनः प्रसादकथनस्य न किञ्चित्प्रयोजनमित्यरुच्या पक्षान्तरमाहुः **स चापीति वे**ति । यत्रेत्यस्य विवरणं **प्रलयजल** इति । तेन सिद्धमाहुः **प्राकृतवदि**त्यादि । तथा च, प्रसादहेतुर्न देहव्यतिरिक्तः, चेतनत्वात्, साकारब्रह्मवदिति हेतौ साधारण्यशङ्कायां देहव्यतिरिक्तः प्राकृततुल्यावस्थाकदेहवत्त्वात् । यदेवं तदेवं, यन्नैवं तन्नैवमिति साधनान्तरबोधनायायं श्लोक इत्यर्थः ।

२-८-११ **पुरुषावयवै**रित्यत्र **तथास्माभिः श्रुतमि**ति, अस्माभिः तथा श्रुतमित्यन्वयः ।

**यावानि**त्यत्र **तदनुगुणा** शुकोक्त्यनुगुणाः । कल्पविकल्पयोः क्रमेण स्वरूपमाहुः
**यस्मिन्नि**त्यादि । **प्रमाणमि**ति प्रकृष्टं मानमियत्ता इत्यर्थः । प्रमाणशब्द-
२-८-१२ स्येयत्तावाचकत्वं प्रमाणमाण्डकोशस्येत्यत्र स्फुटीभविष्यति । **कालानुमानज्ञानमि**ति कालेयत्तानुमितिहेतोः ज्ञानम् । पूर्वेण सम्बन्धाङ्गीकारे न कश्चिद्विशेष इत्यरुच्या पक्षान्तरमाहुः **भूतादी**त्यादि । **प्रयोगनिमित्तमि**ति शक्यतावच्छेदकम् । एवं च भूतभव्यभवच्छब्दो यथेति प्रश्नवाक्यं सिद्ध्यति । अनेनेति सत इति पदेन । कथं सङ्गच्छत इत्याकाङ्क्षायामाहुः **अन्यथे**त्यादि, आयुर्मानानुक्तौ ।

**कालस्ये**त्यत्र अनुगतिशब्दार्थं विवृण्वन्तः प्रश्नबीजमाहुः **स्वभावत** इत्यादि ।
**कार्यद्वारे**ति कार्यविशेषणतया । **गच्छतीति**सप्तम्यन्तम् । तदनुवर्त-
२-८-१३ मानं कार्यानुवर्तनम् । यथा 'गतः स कालो यत्रासन् देवाः सेवानुवर्तिनः' इति । **तथा चे**ति अभिलापात्प्रतीतेश्च । एवं सार्द्धपद्ये नानाप्रकारेण काल एव पृष्टो बोद्धव्यः ।

**यावत्य** इत्यत्र सार्द्धपद्ये । अनेनैकेन कर्मणामेव प्रश्न इत्याशयेनाहुः **कर्मणामि**त्यादि ।
**यस्मिन्नि**ति गुणिनि । वक्ष्यमाणेनोत्तरानुसन्धानेन प्रश्नार्थं विशदयन्ति
२-८-१४ **शुक्लमि**त्यादि । **अथे**त्यादि । इदं गुणि परिणामोदाहरणम् । तथा च, यथा रुद्रादिदेवानां स्वस्वलोके विद्यमानत्वेपि हयादिसम्बन्धं विनापि कृपो रुद्रगणावतारः, साम्बो गुहावतारः, तादृशगुणिपरिणामार्थं यो मनुष्यरूपेण कर्मसमवायः स कथं केन योज्यते केन वा स्वीक्रियत इति प्रश्नार्थः । एवञ्च 'भवद्भिरंशैर्यदुषूपजन्यता'मित्याज्ञापनोत्तरं को वांशो यादवशरीररूपेणासीत्को वा तच्छरीरे भोक्ता जीवो वा भगवान् वा कालादिर्वेति तात्पर्यं पर्यवस्यति ।

२-८-१९ **प्रमाणमण्डकोशस्येत्यत्र** । प्रमाणशब्दस्य परिमाणवाचकत्वे मानमाहुः **यथान्तरेत्यादि** । तथा च, प्रत्युत्तरवाक्यमेव तत्र शक्तिग्राहकमित्यर्थः ।

२-८-२० **वेदोपवेदेत्यत्र** । अस्मिन् वाक्ये षष्ठ्यन्तपदमात्रसत्त्वेन कथनकर्मणोऽनिर्दिष्टत्वात्पूर्वोक्तमनुषज्याग्रिमं चानुसन्धायाहुः **लक्षणं परिमाणञ्चेति** ।

**इष्टापूर्त्तस्येत्यत्र** कामशब्दो यथा इष्टापूर्तसमभिव्याहारात् काम्यकर्मपरस्तथा त्रिव-
२-८-२१ र्गसमभिव्याहाराद्विषयपरोपि शक्यवचन इत्याशयेन पक्षान्तरमाहुः **अथ-
वेत्यादि** । तथा च, पूर्वं 'स सर्वधीवृत्त्यनुभूतसर्व' इतिपद्येन सोपपत्तिकं विषयान्तरासक्तिं प्रतिषिध्य सप्तमाध्याये ध्रुवादिकथा प्रस्तुता, तथा सति सर्वे विषया न त्याज्या इत्यायाति, ततः सन्देहात्पृच्छतीति व्याख्यानान्तरस्य तात्पर्यम् । विमर्शकोटौ पूर्वपक्षाध्यायत्वं समर्थयन्ति **तत्रेत्यादि** । तत्र **सम्मतस्येति** शुकोक्तप्रमेयमध्ये स्वाभिमतस्य । नन्वत्र नूतनप्रश्नबाहुल्यात्प्रश्नाध्यायत्वमेव कुतो नाङ्गीक्रियते इत्याकाङ्क्षायां तत्र बाधकमाहुः **अन्यथेत्यादि** । राजप्रश्नादेव पूर्वाध्यायानां कथनात्तदुक्तार्थज्ञानाभावे तेषां तदर्थज्ञाने च स्वस्य वैयर्थ्यमापादयेत्, प्रश्नैतावत्त्वं चकारादुक्तार्थानुवादश्च न सङ्गच्छेतातो नास्य प्रश्नाध्यायत्वमङ्गीक्रियते इत्यर्थः । तदेवद्भुदिकृत्याहुः **त इत्यादि** । **त** इति आपाततः प्रतिपन्नाः । **अन्य** इति स्वयं सम्यक्बुद्धाः । तत्र गमकमाहुः **अन्यथेत्यादि** । **अन्यथेति** केवलप्रश्नाध्यायत्वे । **शङ्कामिति** मूर्खत्वशङ्कां विरुद्धबुद्धित्वशङ्कां वा । तथा च, तदुत्पत्त्यानुत्तरं न वदेदत उत्तरदानादपि तथेत्यर्थः । नन्वत्राक्षेपास्तु द्विधा एव प्रतीयन्ते इति कथं सप्तमाध्यायाक्षेपकत्वमित्याशङ्कायां तद्व्युत्पादयन्ति **तत्रेत्यादि** । **तदाहेति** 'श्रोतव्यादीनी'त्याद्युक्तप्रमेयस्यानुपपन्नत्वं सार्द्धेनाहेत्यर्थः । **अत** इति । स्वद्वाक्यब्रह्मवाक्ययोर्विरोधस्यावश्यपरिहार्यत्वात् । ज्ञानं यत इतिश्लोकोक्तेः प्रतिपन्नं स्वाशयं वदन् 'तस्माद्भारते'ति'तस्मात्सर्वात्मने'तिवाक्योक्तमर्थमाक्षिपतीत्याहुः **यदा युक्तमित्यादि** । **अद्भुतवीर्यस्येति** अद्भुतवीर्यविशिष्टस्य । ननु किमत्र प्रमाणमित्याकाङ्क्षायामाहुः **अन्यथेत्यादि** । केवलस्यैव श्रोतव्यत्वे, तस्य 'शश्वत्प्रशान्तमिति (२-७-४७) श्लोकोक्तरीतिकत्वेन वाङ्मनसागोचरतया 'यथाहमित्यादिना(२-८-३)'शृण्वत'(२-८-४)इत्यादिश्लोकत्रयेण च वक्ष्यमाणं सर्वात्मनि मनोनिवेशरूपं हृदि शीघ्रं भगवत्प्रवेशादिरूपञ्च स्वानुभवगोचरं फलमनुपपन्नं स्यात्, अतः प्रत्यक्षमेव मानमित्यर्थ । ननु भगवत्पदेन चरित्रसाहित्यमनुक्तसिद्धमेव तादृशश्रवणादेव तव फलमतो न तव प्रत्यक्षमत्र मानमित्यत आहुः **चरित्रेत्यादि** । तथा च, चरित्रवैशिष्ट्यवत् । 'एवं स्वचित्ते स्वत एव सिद्ध' इति (२-२-५) पूर्वोक्तवाक्यात्प्रवेशस्यापि तथात्वेन तथा स्यादित्याशयेनाहेत्यर्थः । वीर्यविशिष्टश्रवणे गुणमाहुः **तथा सतीत्यादि** । **इष्टमिति** निःसङ्गमनोनिवेशरूपम् । एवमनङ्गीकारे दोषमाहुः **अन्येत्यादि** ।



**अन्यथेति**, वीर्यविशिष्टस्य श्रोतव्यत्वानङ्गीकारे, निःसङ्गमनसोऽनिवेशे सति । **दोषाणामिति** मनोदोषाणाम् । **न, फलमिति** । स्यादिति शेषः । तथा च, दोषत्रयाभावादपि केवलश्रवणमसङ्गतमित्याशयेनाप्याहेत्यर्थः । **एतावदिति** । अखिलात्मत्वज्ञानात् मनसः सङ्गाभावरूपम् । **अन्यादिति** मनसि भगवत्प्रवेशरूपमभयरूपञ्च । एवं तस्माद्भारतेत्यादेः (२-१-५) स्वप्रतिपन्नार्थकथनपूर्वकं तत्राक्षेप उक्तः । अतः परं किं प्रमत्तस्येति(२-१-१२)पद्यद्वयोक्तमाक्षिपन् स्वप्रतिपन्नं वदतीत्याहुः **यदित्यादि** । **बहुकर्त्तव्यत्वादिति** । अभयदानार्थं हृदि प्रवेशमारभ्य नान्तरीयकपापनिवर्त्तनान्तस्य कर्त्तव्यत्वात् । अतः कथं स्वल्पकालेन फलसिद्धिरित्याशयेन स्वप्रतिपन्नमाहेत्यर्थः । **स्वार्थमिति** भावप्रधानः प्रयोगः. 'स्वात्म' मित्यनेनोक्तं यद्भगवदीयत्वं तदर्थमित्यर्थः । तस्मात्स्वतःसिद्धा स्थितिरप्रयोजिकेति बहुकर्त्तव्यं विशदयन्ति **बहिरित्यादि** । ननु भगवान् समर्थः, स्वाभाविकस्थित्यापि कार्यं साधयेदतो न तस्या अप्रयोजकत्वमितिशङ्कायामाहुः **अन्यथेत्यादि** । सत्यं समर्थस्तथापि मर्यादां न भनक्ति, सर्वमुक्तिप्रसङ्गात् । अतः तत्रापि जीवकृतं साधनमावश्यकम, तत्र ज्ञानादिमार्गीयसाधनस्याङ्गीकारे 'बहूनां जन्मनामन्त' इतिवाक्यात्तस्यां प्रक्रियायां तथा स्यात् । तत्र हेतुः **शरीरेत्यादि** । 'एवं शृण्वत' इतिपद्यस्य तात्पर्यमुक्तम, 'प्रविष्टः कर्णरन्ध्रेणे'त्यस्याहुः **अस्यामित्यादि** । **आग्रहेणेति** जीवेन भगवति निःसङ्गमनसो निवेशने कृते 'ये यथा माम' इतिप्रतिज्ञातेनाग्रहेण । तदा च, **शिथिलावयवत्व** इत्यादि । शमले धुते च गुणानां तत्कार्याणाञ्च शिथिलावयवत्वे मूलबन्धप्रच्युतौ ऐश्वर्यादिभिर्गुणैरेवाभयं स्याद् । इदमेवात्र तात्पर्यमित्यत्र गमकमाहुः **अत इत्यादि** । अग्रिमकार्यं स्फुटीकुर्वन्ति **नदेत्यादि** । **द्वितीयमिति** जन्मान्तरम् । तत्र हेतुः **न भयमित्यादि** । ननु शुकेन भगवदभेदरूपमभयमुक्तमिति कथमेतावदेव फलमुच्यत इत्याकाङ्क्षायां ( २-८-६ ) धौतात्मेत्यस्य तात्पर्यमाहुः **सिद्धान्तेत्यादि** । नन्वेवं शुकोक्त्यङ्गीकारे तदुक्तः शीघ्रं मोक्षोप्यङ्गीकार्य इत्याकाङ्क्षायां तत्र बाधकमाहुः **अन्यथेत्यादि** । भगवतो दृष्टपूर्वत्वादखिलात्मत्वम्पाद्भुतवीर्यज्ञानस्यानादेयत्वेन शीघ्रं मोक्षाङ्गीकारे तथा स्यादित्यर्थः । फलितमाहुः **तस्मादित्यादि** । तथा च, 'न ह्यतोऽन्यः शिवः पन्था, ( २।२।३३ ) इति, भगवान् ब्रह्म कार्त्स्न्येने,(२।२।३४।)तिवाक्ययोः पञ्चमाध्यायस्य चार्थे विचारिते इदानीं भगवति मनोनिवेशनमग्रिमे जन्मनि सेवौपयिकदेहाप्तिस्ततोऽग्रिमेऽभयमिति ज्ञानप्रक्रिया दुर्घटेति हृदि भातम, भक्तौ च माहात्म्यज्ञानमङ्गमिति तदद्भुतवीर्यकथा एव श्रोतव्या,न तु केवलो भगवान् इति पूर्वोक्तवाक्यानामितरेतरविरोधः परिहार्य इति प्रश्नाशयः । एवमग्रेपि बोध्यम् । 'श्रोतव्यादीनी'तिपद्यत्रयमाक्षिपतीत्याहुः **यदप्युक्तमित्यादि** । **अनिर्मोक्षप्रसङ्ग इति** । जीवस्य देहसम्बन्धप्रवाहोऽनन्तभावः अनादिभावत्वात्, प्रकृतिपरमाण्वादिवत, यन्नैवं तन्नैवं, घटादिवदित्यनुमानेनानन्तत्वनिश्चयात्तथेत्यर्थः । **भगवतैवेत्यादि** । तथा चाकृताभ्यागमो वैषम्यनैर्घृण्यापत्तिरपीत्यर्थः । **आसीदित्यादि** । **सार्द्ध-**

पद्यत्रयेण 'तस्माद्भारते'तिपद्योक्तं विधेयविशेषणांशमाक्षिपतीत्याहुः । यदप्युक्तं श्रोतव्येत्यादिभेदस्तु पूर्वव्याख्यानेपि व्युत्पादित इति जीवतुल्यता परिहर्तव्येति तात्पर्यम् । ननु सर्वात्मत्वमौपचारिकमस्तु, तथा सत्यसङ्गोदासीनत्वान्न कोपि दोषः इति चेत्तत्राहुः औपचारिक इत्यादि । सिद्धमिति । पञ्चमषष्ठाध्यायाभ्यां शुकेन साधितत्वात् सिद्धम् । तथा च, सर्वात्मेति यदास्य नाभ्यान्नलिनादित्यस्य (२–८–८) च विरोधः परिहार्य इति तात्पर्यम् । एवं भगवत्तज्जीवावयवसंस्थाबोधकवाक्ययोः हरित्वब्रह्मकृतिबोधकवाक्ययोः ईश्वरत्वप्राकृततुल्यावस्थाबोधकवाक्ययोश्च विरोधः परिहार्य इति बोध्यम् । ननु प्रमाणकथनस्य कथमसङ्गतिरित्यत आहुः विकल्पानामित्यादि । आहुरितिबहुवचनेन हि लोकप्रसिद्धिरैतिह्यं वा प्रमाणतयोपन्यस्तं, तत्र 'यावान् कल्पो विकल्पो वे'ति (२।८।१२) प्रश्नार्थभूतविकल्पपदार्थे युगभेदादिरूपेवधारिते तेषु पूर्वयुगीयादीनां लोकानां निवृत्त्या प्रसिद्ध्यैतिह्ययोरपि नाशात्प्रमाणकथनस्यासङ्गतिरित्यर्थः । यथा कालोनुमीयत (२।८।१२) इति प्रश्नेन दिशां कर्णत्वमाक्षिप्तमित्याहुः किञ्चेत्यादि । ननु दिगभावे कथं तद्व्यवहार इत्यत आहुः व्यवहार इत्यादि । तथा च, यथादित्योदयवेलाविद्यमानतिथेः पूर्णत्वं तावन्मात्रव्याप्त्यौपचारिकम्, तथादिक्त्वमपि सूर्यकृतिविभागेन देशविशेषेष्वौपचारिकमिति तैरेव तद्व्यवहारोपपत्तिर्यथा च साङ्ख्यमते उपाधिभिः कालस्य तथेत्यर्थः । नैवं त्रिध इति नौपचारिकः । ननु वर्णाद्यात्मको नित्य एव शब्दः श्रोत्ररूपोस्तु, तथासति नानियतत्वमित्याहुः शब्देत्यादि । आयुर्मानप्रश्नेनाश्विनोर्नासारूपत्वमाक्षिपतीत्याहुः यदपीत्यादि । अनिरूप्यत्वादिति । अजागलस्तनवदप्रयोजकयोर्वैयर्थ्येन तथात्वात् । कालानुगतिप्रश्नाक्षेप्यमाहुः एवं घ्राण इत्यादि, स्थूलादिरूपज्ञापकोपाधौ विचार्यमाणे तेषामानन्त्यादनन्तघ्राणाद्यापत्तिस्तदनुरोधेनानन्तविराडङ्गीकारे दिवः स्थूलकालस्थायित्वविरोधस्तदनुरोधेनैकविराडङ्गीकारे गन्धादेःक्षणस्थायित्वविरोध इति ते परस्परं तथेत्यर्थः । यावत्यः कर्मगतय (२–८–१३) इति प्रश्नाक्षेप्यमाहुः किञ्च, चक्षुरित्यादि । पूर्ववदिति । पतङ्ग उभे अहनी च परस्परासङ्गत इत्यर्थः । तदुपपादयन्ति यत इत्यादि । सूर्यस्य परावृत्ताविति । 'आदित्यो वा अस्माल्लोकादमुं लोकमेति सोमुं लोकं गत्वा पुनरिमं लोकमभ्यध्यावर्त्तत इमं लोकमागत्य मृत्योरबिभेदि'ति श्रौतेन प्रकारेण परावृत्तौ । सूर्यानन्तत्व इति । 'नमो मासं नयन्त्यमी'त्यादिपौराणप्रकारेण तथात्वे । तथा च, सूर्यपरावृत्त्यादिकर्मगतिविचारे तदनैयत्याच्चक्षुरनुपपत्तिर्दिनादिव्यवस्थापकतद्गतिविचारे दैवमानुषादिदिनरात्रीणां परस्परविरुद्धत्वात्पक्ष्मानुपपत्तिरित्यर्थः ।

यस्मिन्नित्यत्र उक्त (२–८–१४) इति, सर्वात्मकत्वबोधनादुक्तः । तत्रेत्यादि । तस्मिन् धिष्ण्ये कर्ममेलनेनैव प्राप्यमाणे साकेत्यर्थः । एतेनेत्यादि, यथा कर्मसमवाय इति मेलनप्रकारप्रश्नेन गुणिनां जलानां कर्मविशेषसंमिश्रणप्रकारादेव नानारसवत्त्वेति तेषां बहूनां तालुत्वे रस इत्येकवचनविरोधादाक्षिप्तमित्यर्थः । अनेनेत्यादि कर्मसंमिश्रणं



येनोपगृह्यते (२–८–१४) इत्युपग्रहप्रश्नेनोपग्रहीतुर्जीवादेर्नित्यत्वाद्गोल्केन्द्रिययोश्चानित्यत्वात्तस्याधिदैविकत्वानुपपत्तेश्चाक्षिप्तानीत्यर्थः । प्रकारान्तरेणाप्याक्षिपतीत्याहुः किञ्चेत्यादि । विशेषस्येति ब्रह्माण्डरूपायाः पृथिव्याः । विशेषपदार्थानिति विशेषपदस्यावान्तरार्थभूतान् । भूपातालेतिसार्द्धेनेति शेषः ।

महताश्चेत्यत्र आक्षिपतीति (२–८–१६) अत्रानुशब्दस्य पश्चादर्थकत्वेन प्रह्लादस्य पाश्चात्यत्वं सूचयन् स्वस्य श्रेष्ठ्यं स्मृतिरूपतां चाक्षिपतीत्यर्थः । ब्रह्माननमित्यत्रापि वर्णाश्रमविभागस्य धर्मकृतत्वेन तस्य पाश्चात्यत्वेन मुखादिरूपत्वाक्षेपो ज्ञेयः ।

अवतारानुचरितमित्यत्र (२–८–१७) तदेकमिति सामान्ये नपुंसकम् । लौकिक इति । तथा च, पूर्वोक्तप्राकृतत्वविरोधीत्यर्थः । न स्यादिति । तथा च, युगविचारो यागनित्यत्वबाधक इत्यर्थः । अन्यथास्यादिति । त्रेतायुगात्पूर्वं योगतपोज्ञानरूपत्वात् । तदेवोदाहरन्ति यथेत्यादि, किञ्च युगधर्म इत्यादि । एतदादीनामनित्यत्वप्रकृतत्वसूचनेन तदङ्गिभूतस्य यागस्यापि तथात्वापादनेनाक्षिपतीत्यर्थः । तत्त्वानां परिसङ्ख्यानमिति (२–८–१९) प्रश्नाक्षेप्यमाहुः यदपीत्यादि । अतः परमिति 'लक्षणं हेतुलक्षण'मित्यत (२–८–१९) आरभ्येत्यर्थः । तस्येति आत्मयोनेः । इत्यादिभिरिति एतदारभ्य पञ्चभिः पद्यैः । चिन्तयेदितीति उक्तमितिविशेषः । असङ्गतिं व्युत्पादयन्ति तत्रेत्यादि । तत्रेति हेतुलक्षणविचारे । तत्र भवतीति चित्ते भवतीतिहेतोर्न कोपि सिद्ध इत्यर्थः । दूरापास्तत्वे हेतुमाहुः चित्तमित्यादि । तथा चास्मिन् लक्षणवाक्ये 'यत्तत्सत्त्वगुणं स्वच्छं शान्तं भगवतः पदम् । यदाहुर्वासुदेवाख्यमि'तिपूर्वकथनाद् भगवत एव सिद्धिर्नात्मन इति सा तथेत्यर्थः । पुरुषाराधनविधिप्रश्नाक्षेप्यमाहुः यदपीत्यादि । योगद्वयविधिप्रश्नाक्षेप्यमाहुः स्थूलेत्यादि । असङ्गतमिति वृत्तिनिरोधे धारणाया अप्यपायात्तथेत्यर्थः । योगेश्वरैश्वर्यगतिप्रश्नाक्षेप्यमाहुः यदप्युक्तं स्थिरमित्यादि । इतीति, इत्यादिभिः सप्तदशभिः । असङ्गतं भवतीति लिङ्गभङ्गो ह्यात्मप्राप्तौ तत उत्तरमक्षरप्राप्तावानन्दमयत्वमुक्तम्, तत्र जाते लिङ्गभङ्गे प्रतिबन्धस्य निवृत्तत्वात्तद्व्यवहितोत्तरमानन्दमयत्वमुचितमतो विलम्बहेतोरनिर्वाच्यत्वादवसान इत्यसङ्गतं भवतीत्यर्थः । भगवान् ब्रह्मेत्यस्याक्षेपे (२–२–३४) वेदविचार इति । मन्त्रब्राह्मणात्मकः शब्दो वेदः । साङ्गयागादिधर्मात्मज्ञानप्रतिपादकालौकिकः शब्दो वा वेद इति लक्षणपूर्वके तद्विचारेऽसङ्गतिं व्युत्पादयन्ति यदीत्यादि । तथा च, भक्त्यर्थयत्नकरणविमर्शस्यासङ्गत्याऽसङ्गतिरित्यर्थः । एवं द्वितीयाध्यायोक्तमाक्षिप्तमनेनैव तृतीयाध्यायप्रमेयमप्याक्षिप्यत इत्याहुः यदपि कामनेत्यादि । तृतीयादिरिति । तृतीयाध्यायाक्षेपारम्भः । असङ्गतौ हेतुमाहुः वेदे हीत्यादि । ननु पुराणादिसिद्धं तदिति चेत्तत्राहुः भक्तीत्यादि । एवं यद्यप्यसङ्गतिर्नास्ति, तथापि, पूर्वं भक्तेः स्वतःसिद्धत्वव्युत्पादनात्तस्याः साध्यत्वे निराकृते तथेत्यर्थः । सम्प्लवादिप्रश्नाक्षेप्यमाहुः यदप्युत्पत्ते-

त्यादि । इदञ्च पञ्चमादित्रयेऽस्ति, न तु चतुर्थ इति तदनाक्षेपे सप्तमाध्यायाक्षेपकत्वं कथमिति न शङ्कनीयम्, तस्याध्यायस्य नमनप्रार्थनमात्रपरतयाऽनिर्णायकत्वात् । उत्पत्तिविमर्शनेनैव तदर्थस्य गतार्थत्वाच्च, तदनाक्षेपेऽपि पञ्चमाद्याक्षेपेणैवाक्षिप्तप्रायतया प्रतिज्ञाभङ्गस्याभावादिति । आक्षेपं व्युत्पादयन्ति यदिदमित्यादि । **विशेषाभावादिति** । मतान्तरप्रतिपन्नस्येवास्थाप्यनित्यत्वाद्यनपायादित्यर्थः । षष्ठाध्याये आक्षिपतीत्याहुः **यदपीत्यादि** । **भूतसंस्कार** इत्यादि । अत्र तेनेति शेषो बोध्यः । तथा च, विशेषाभावात्तत्कल्पनवैयर्थ्येन निवारितेत्यर्थः । ननु यज्ञादेर्भगवदीयत्वाय तत्कल्पनमिति चेत्तत्राहुः **भगवदीयत्वं** **त्वित्यादि** । अन्यथैवेति समर्पणेनैवेत्यर्थः । **पाषण्डत्वमेव न स्यादिति** विधिभेदलीलवन्न स्यादित्यर्थः । **निराकृता भवतीति** दैत्यानां द्वेषादपि भगवत्प्राप्तेरुक्तत्वान्निराकृता भवतीत्यर्थः । व्यवस्थानं स्वरूपत ( २-८-२२ ) इत्यस्याक्षेप्यमाहुः **भिन्नतये**-त्यादि । **व्यर्थं स्यादिति** तस्य स्वरूपावस्थानस्यापि भगवद्रूपत्वात्तेषां भगवत्त्वे ब्रह्मानेकत्वापत्त्या भेदवादापत्त्या वा भयनिवृत्त्यभावात्तथा स्यादित्यर्थः । अतःपरं ययात्मतन्त्र (२-८-२३) इति पद्येन सप्तमाध्याय आक्षिपतीत्याहुः **अवतारेत्यादि** । **तादृशमिति** अवताररूपम । ननु तदवताररूपस्य परित्यागाभावाद्विशेषो नाप्रयोजक इत्यत आहुः **मायेत्यादि** । **प्रामाण्यमिति** प्रेरणाक्षेपकमद्वाक्यप्रामाण्यम् । **श्रूयमाणमिति** उपेन्द्रदत्तपदेन भगवद्भक्तगणे श्रूयमाणम् ।

२-८-२७ **स उपामन्त्रित** इत्यत्र **अस्मदर्थ** इति वेदार्थे ।

**प्राहे**त्यत्र **युक्तिसहितमिति**, यदधीनोऽहमोदभित्वं पञ्चदशाहानिप्राशीरित्याद्या युक्तयो वेदे उक्तास्तद्वदिदमपि तत्तुल्यतया तादृग्युक्तियुक्तम् । **विषया**-
२-८-२८
**त्मकमिति** भगवज्ज्ञापकलीलात्मकम्, तस्य द्वादशस्कन्धात्मके श्रीभागवते तदुभयकथनप्रयोजनमाहुः **अत्रेत्यादि** । **शब्दब्रह्मण एवोत्पत्तिरिति** तस्मिन् कल्पे भगवता ब्रह्मा उत्पाद्यते पाठ्यते च 'यो ब्रह्माणमि'त्यादिश्रुतेः । वेदानामानन्त्याच्च भूयान् कालस्तत्र लगति, तथा चास्य शब्दब्रह्मत्वबोधनाय तं कल्पमन्त्रं बोधितवानित्यर्थः ।
२-८-२९ **यद्यदि**त्यत्र **प्रश्न** इति जीवस्वरूपादिविषयको राजप्रश्नः **परिहृत्येति** पूर्वं समाधाय ।

**इति श्रीद्वितीयस्कन्धसुबोधिनीप्रकाशे**
**अष्टमाध्यायविवरणम् ।**

---

श्रीकृष्णाय नमः ।

# अथ नवमाध्यायस्थश्रीसुबोधिनीप्रकाशः ।

**अथ नवमाध्यायं** विवरिषवः पूर्वाध्यायं सङ्गमयितुमेतदध्यायार्थमाहुः **नवम** **इत्यादि** । कारिका तु स्फुटार्था, तथा चाक्षेपसमाधानभवा सङ्गतिरित्यर्थः । नन्वत्राग्रे पारम्पर्यकथा किमित्युक्तेत्याकाङ्क्षायां तत्कथनप्रयोजनमाहुः **पारम्पर्येत्यादि** । अस्य जीवस्य शुद्ध्याधिक्ये सति भगवदुक्तोऽर्थोऽवगम्यते, न तु प्रकारान्तरेणेतिहेतोः, अस्य राज्ञः सन्देहनाशनाय उपलक्षणविधया सन्देहान्तरानुत्पत्तये च पारम्पर्यकथा निरूपितेत्यर्थः ।

**आत्ममायामि**त्यत्र । एवं कारिकायामध्यायार्थं सङ्गृह्य व्याख्यातुमवतारयन्तः प्रथमं जीवसन्देहवारणे हेतुमाहुः **अन्येषामित्यादि** । एवं च जीव-
२-९-१
सन्देहनिवृत्तेर्ब्रह्मज्ञानोपकारकत्वाद्राज्ञा पूर्वं तदर्थमेव प्रश्नस्य कृतत्वाच्च पूर्वं तदेव वारयतीत्यर्थः । अन्यशब्देन **प्राप्तमिति** प्राणधारणबोधकशब्देन प्राप्तम् । **तत्रेति** तादृश्यामाशङ्कायाम् । **इतीति** अस्माद्धेतोः, कथं जीवत्वमुपपादयतीत्याकाङ्क्षायां सृष्टिप्रक्रियाज्ञानं विना दुर्बोधस्य शुकवाक्याशयस्य बोधनार्थं वैदिकीं सृष्टिप्रक्रियामुपपादयिष्यन्तः पूर्वं जीवत्वमुपपादयन्ति **तत्रेत्यादि** । **तत्रेति** सच्चिदानन्दे ब्रह्मणि । **तस्येति** सच्चिदानन्दरूपस्य, कथं व्यामोहिकेत्याकाङ्क्षायां कार्यद्वारा तथात्वमाहुः **सेत्यादि** । **स्वपुरुषमिति** स्वाभिमानिनम्, का नाम जीवतेत्यत आहुः **जीवतीत्यादि** । **दशविधप्राणरूप इति**, अपानादीनां तद्भेदत्वाद्वा दशेन्द्रियाणि प्राणशब्दवाच्यानि । रूपयत्युपष्टम्भयतीति वा तथा । शब्दनिष्पत्तिप्रकारमाहुः **जीवप्राणेत्यादि**, तथा च, पूर्वोक्तं लक्षणमुपपन्नमित्यर्थः । ननु ज्ञानरूपस्य कथं व्यामोह इत्यत आहुः **बोधेत्यादि**, तथा च, तत्सम्बन्धादेव व्यामोह इत्यर्थः । एतावानर्थ 'आत्ममायामिति' श्लोके सङ्गृह्यते । नन्विदं तदोपपद्यते, यदा सच्चिदानन्दरूपस्य ब्रह्मणो विभागादिकं प्रामाणिकं भवेत्, अन्यथा तु कचिदनाद्यविद्यावच्छिन्नत्वादिना यः प्रस्थानान्तरे च 'नित्यो नित्यानामि'त्यादिश्रुतिभिः दर्शनान्तरेषु च नानात्मानो व्यवस्थातः पुरुषबहुत्वं व्यवस्थात इति बन्धमोक्षादिव्यवस्थारूपया युक्त्या नित्यभिन्नास्ते जीवा अङ्गीकृता इत्यागन्तुकी जीवता नोपपद्येतेत्याकाङ्क्षायामाहुः **अयञ्चेत्यादि** । अत्र हि तैत्तरीयादिश्रुतौ इच्छाया आकारद्वयमुक्तम् । तत्र प्रथमेन विभागः प्राप्तः । स एव बृहदारण्यके 'यथाग्नेः क्षुद्रा विस्फु-

लिङ्गा व्युच्चरन्ती'त्यादिनोच्यते । द्वितीयेन चोच्चनीचभावः, अन्यथा बहुत्वस्य पूर्वमुक्तत्वात् तेनैव जननबाहुल्यस्याप्यर्थबलादेव प्राप्तेः को वा प्रकर्षपदार्थः स्यात्। पुरुषविधब्राह्मणे ब्रह्मक्षत्रादिरूपताविवरणेन तस्य बोधितत्वाच्च, अत उच्चनीचभाव एव प्रशब्दार्थः । न च 'नित्यो नित्याना'मि'तिश्रुतिविरोधः । एतदग्रे 'चेतनश्चेतनानामेको बहूनां यो विदधाति कामानि'तिश्रावणाच्चेतनतया बहुत्वस्य नित्यत्वस्य भानेन जीवतया तथात्वस्यानभिप्रेतत्वात् । न च विभागात्पूर्वं बहुत्वविरोधापत्तिः, आकाशस्तत्प्रदेशयोरिव तादात्म्यादविभागदशायामपि तदुपपत्त्या विरोधाभावादिति। न च साङ्कर्यापत्तिः, स्वभावभेदस्य 'प्रजायेये'तीच्छोत्तरकालीनत्वेन पूर्वं तस्याभावे मुक्तौ तन्निवृत्तौ मध्ये च तद्विवेकेन तस्य कदाप्यापादयितुमशक्यत्वात् । न च ब्रह्मणो दुःखानुभवाद्यापत्तिः, आपाद्यमानस्य सर्वस्य तदात्मकत्वा'न्नाग्नेर्हि तापो न हिमस्य तत्स्या'दितिभिक्षुगीताप्रोक्तन्यायेन तस्याप्यभावादिति। न च व्यवस्थाविरोधः, भगवदिच्छयैवोपपत्तेः । इदं यथा तथा 'अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगता' इति १०-८७-३० वेदस्तुतिश्लोके व्युत्पादितमाचार्यचरणैः, तदेव जीवव्यापकत्वखण्डने मयापि प्रपञ्चितम् । अनाद्यविद्यावच्छिन्नत्ववादस्तु 'अविद्यया बन्ध' इत्यादिश्रुतिपुराणेषु तस्याः करणत्वबोधनात्तस्य च पूर्वभावित्वं विना अनिर्वाहाद्विद्वन्मण्डन एव दूषित इति पूर्वोक्तेर्थे न कोपि शङ्कालेशः ।

अयश्चेत्यत्र चकारो विभागान्तरस्यापि समुच्चायकः । ननु का नामेच्छा, स्वरूपं वा, अन्यद्वा । आद्ये स्वरूपस्य नित्यत्वेन तस्यास्तदाकारस्य तथात्वाज्जीवभेदस्य तत्स्वभावभेदादेरपि तथात्वात्पूर्वोक्तसाङ्कर्यादिदोषापत्तिः, ततश्च भेदवाद एव विश्रान्तिः । द्वितीये तु तस्या अपि कारणान्तरं मृग्यमिति तेनैव भेदवादे विश्रान्तिरिच्छाया अनित्यत्वापत्तिश्चेति शङ्कायामाहुः इच्छापीत्यादि । तर्हि कथं तत्रेच्छापदप्रयोग इत्यत आहुः धर्मेत्यादि । तृतीयस्य द्वितीयपादे 'येनाश्रुतं श्रुतं भवती'त्यादिश्रुतीनामुपपत्त्यर्थं द्वेधा विचारितम् । तत्रोभयलिङ्गाधिकरणे नानाप्रकारमपि ब्रह्माहिकुण्डलन्यायेन स्वरूपबलादेव विरुद्धधर्माश्रयं भवतीतिभेदापत्त्यभावात्प्रतिज्ञाश्रुतिः प्रमाणबलविचारेणोपपादिता । तदनन्तरं 'पूर्ववद्वे'त्यधिकरणेऽसङ्गोदासीनमेव पूर्वं ब्रह्म, ततो धर्मरूपेण, ततः शक्तिरूपेण, ततः कार्यरूपेण च भवतीत्येवमपि भेदस्यागन्तुकत्वेन पूर्वमभावात्पाश्चात्यं न्यक्कृत्य पूर्वरूपबोधेपि तदुपपत्तिरिति प्रमेयबलविचारेण विचारितम् । अयञ्चोपपादनप्रकारभेदो मुख्यानामितरेषाञ्चाधिकारिणां बोधार्थमत्रापि दशमाध्यायसमाप्तावधिकारिभेदेन प्रकारभेदो



वक्ष्यते । अत उभयथा पदप्रयोगोपपत्तिरभेदवादोपपत्तिश्चेत्यर्थः । ऐच्छिकबहुभवनप्रकारं विशदयन्तः पूर्वं शक्तेस्तथात्वमुपपादयन्ति तत्रेत्यादि । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'तिश्वेताश्वतरे त्रैविध्यश्रावणात्सदंशस्य क्रियारूपा, चिदंशस्य ज्ञानरूपा, आनन्दस्य स्वरूपबलरूपा, वैविध्यश्रावणात्त्रिविधाया अपि वैविध्येन बलशक्तेः विश्लेषेण तथात्वम्, ज्ञानशक्तेर्मायाऽविद्यादिभेदेन क्रियाशक्तेरपि स्वांशक्रियाभेदेन, तदेतदुक्तं तत्रेत्यादिनेति न कोपि शङ्कावकाशः । नन्विच्छादिप्रवने विचार्यमाणे तत्र निमित्तान्तरापेक्षया पूर्वोक्तदूषणापत्तिरिति शङ्कायामाहुः तथा भगवत इत्यादि । तथाभाव इति शक्तिरूपेण भवनम् । नन्वेवं सति स्वरूपस्य नित्यत्वात्सहकार्यनङ्गीकाराच्च शक्तीनामपि नित्यत्वेन द्वैतवादापत्तिः । सर्वदेच्छापत्त्या असङ्गोदासीनत्वाभावप्रसक्तिरप्रतिहतेच्छत्वात्तिरोभावानवसरेण सर्वदा सृष्ट्यापत्तिश्चेति चेत्तत्राहुः न चेत्यादि । भवतीति शक्तिरूपं भवति । न च 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयमि'त्यादिश्रुतौ कालस्योक्तत्वेन सर्वदा तत्सत्तावगमात्तदभावो न शक्यवचन इतिशङ्क्यम्, बोधनार्थमेव तथोक्तेः । न चात्र मानाभावः, तथाहि, किमत्र कालसत्ता विधीयत ? उतानूद्यते ? नाद्यः, वाक्यभेदप्रसङ्गात्, नेतरः, एतासां सृष्ट्यादिवृत्तान्तबोधकत्वेनैतदपेक्षयान्यासां पुरोवादत्वस्याशक्यवचनत्वेनानुवादस्य दूरापास्तत्वात् । न च कालविशिष्टब्रह्मसत्ता विधीयतेऽतो न दोष इति वाच्यम्, गौरवादवधारणान्तरविरोधापाताच्च । न चावधारणान्तरस्य मुख्यान्यसत्तानिवारकत्वान्न विरोध इति वाच्यम्, तथा सति समाभ्यधिकराहित्यस्य तत एव सिद्धेर्न्यूनद्वितीयसत्ताया उपगतत्वाच्चाद्वितीयपदव्याकोपस्य दुर्निवारत्वापत्तेः । अतस्तत्र कालोक्तिः सृष्ट्युत्तरव्यवहारानुसारेण सर्वाधारतया प्रतीयमानकालोपरञ्जनेन शिष्यस्य पूर्वकालवृत्तान्तबोधनार्थैव । अन्यथा शिष्यस्य सृष्टिकालस्थत्वात्कालसत्तामवधारयतः पूर्ववृत्तान्तबोधाभावेऽनुशासनवैयर्थ्यप्रसङ्गात् । यदि च 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चनमिषदि'त्यत्रोक्तश्रुत्यादौ मिषद्द्वितीयनिषेधः स्वीक्रियेत तदापि प्रतिज्ञादृष्टान्तोत्तमपुरुषाणां विरोधो दुर्वार एव, तस्मात्सृष्ट्यादौ कालस्याभावान्न पूर्वोक्तशङ्कावकाशः । तथा च, यदि काल इच्छादिभ्यः पूर्वः स्यात् 'सदेवे'त्यादिश्रुतावितरनिषेधो न स्यात्, स यदि धर्मान्तरप्रयुक्तः स्यादुक्तश्रुतौ प्रतिज्ञादिकं नोक्तं स्यात्, यस्मादेवं तस्मान्नसत्तदभावे चापादकत्वाभावान्न सर्वदेच्छापत्तिरिति न कोपि दोष इत्यर्थः । ननु तथापि 'तदैक्षत सोकामयते'त्यादौ विशेषणत्वेन कालस्यानुदितत्वादिच्छादीनां नाशस्यानुक्तत्वाच्च तदुत्तरमिच्छाया

नित्यत्वे सर्वदा सृष्टिप्रसङ्ग इत्यसङ्गोदासीनता निवर्त्तत एवेत्यत आहुः जात इत्यादि । नियामकत्वादिति स्वातन्त्र्यविघटकत्वात् । तथा च, तदानुकूल्ये भविष्यत्यौदासीन्ये प्रातिकूल्ये च न *भविष्यतीति न तथेत्यर्थः। नन्विच्छानियामकस्य कालस्य पश्चाद्भावित्वे ततः पूर्वं तस्याः स्वातन्त्र्ये यत्नविभागयोरपि सिद्धेः पूर्वोक्तदूषणतादवस्थ्यमित्यत आहुः पूर्वमेवेत्यादि । नहि काल इच्छादिभ्यः पश्चाज्जायते, श्रुताविच्छादिविशेषणत्वेनैवोक्तत्वात् । न च 'सदेवे'तिश्रुतिसन्दर्भबोधितं बोधनार्थत्वमिह वक्तुं शक्यम्, तन्नियामकस्याद्वितीयादिपदस्यात्राभावात् । नापि 'सर्वे निमेषा जज्ञिर' इत्यादिश्रुत्या पाश्चात्यत्वं शङ्क्यम्, कालावयवानामेव तत्रोक्तत्वात् । अतोऽवयवविभागरहितस्य तस्यान्यकार्याद्यपेक्षया पूर्वमेव जातत्वात्तत्सङ्केच्छाप्रयत्नविभागानामपि जातत्वादिच्छादयो विशेषणीभूतस्य कालस्य विशेष्यतयांशभूतास्तान् सदेकरूपान्सहाविर्भावतिरोभावशालिनः परस्परोपकारिणश्च भगवान् स्वयमेव स्थापयति, अतो भगवन्नियम्यत्वान्न कोपि दूषणावकाश इत्यर्थः । ननु 'बहुस्यामि'तिश्रुतेः काममुपक्रम्य पठितत्वादिच्छया विभाग इति कथमुच्यते इत्याशङ्कायामाहुः तथा चेत्यादि । 'बहु स्यामि'त्याद्युक्तप्रकारेणैव कालशक्तेरंशं भगवान् परिगृह्णाति इच्छारूपं स एव मः कोशेषु तस्येच्छानामत्वेव पाठात्, कर्मणीव विचारे शब्दान्तरेणाभिलापस्यादुष्टत्वात् । अत एव तत्त्वसूत्रेऽ'भिध्योपदेशादि'ति सूत्रितमत इच्छयेति कथनेप्यदोष इत्यर्थः। एतावता परत्वं निर्णीतम्। एवमिच्छामुपपाद्य तस्या विषयमुपपादयन्तः पुरुषत्वं निर्णयन्ति तस्येत्यादि । स्वयं भिद्यमाना स्वाश्रयमपि भिन्दतीति धर्मरूपेण स्वयं भिद्यमानाः 'प्रकाशाश्रयवद्वे'तिन्यायेन स्वाश्रयं क्रियावन्तं ज्ञानिनमानन्दिनञ्च कुर्वन्तीत्यर्थः । तदानींतनस्वरूपमाहुः तदेत्यादि । स इति त्रिरूपोपि । नन्वेवं भेदे सति तस्य खण्डत्वात्तत्पूर्णबोधक श्रुतिविरोध इत्यत आहुः भिन्नोपीत्यादि । तयेति इच्छया। त्रीण्यपीत्यादि । 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते, पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत' इतिश्रुतौ पूर्णशब्देनोच्यन्ते । तथा च, यद्यभिन्नस्यैव पूर्णत्वं त्रयाणां नोच्येत। अतः कार्यापेक्षयाधिक्यमेव पूर्णत्वमिति न श्रुतिविरोध इत्यर्थः । श्रुत्यर्थस्तु, अदः परोक्षं ज्ञानैकघनं ब्रह्म पूर्णं निरन्तरमाकाशवद्व्यापि. इदं दृश्यमानं सद्रूपं ब्रह्म पूर्णमिति पूर्ववत्, पूर्णमततीति पूर्णात् सर्वव्यापकं, पूर्णात्पूर्णानन्दं ब्रह्म अच्यते, 'अञ्चु गतिपूजनयोः' 'अच इत्येके' पूज्यते पूर्णाभ्यां सच्चिद्रूपाभ्यां क्षराक्षरपुरुषाभ्यां सेव्यते, एवं ज्ञानादेः फलमाह, पूर्णस्य

*भवतीति पाठ.



पूर्वोक्तस्य (पूर्णं) ज्ञानादधर्ममादाय तत्प्रसादेन प्राप्य पूर्णमेवावशिष्यते तत्सायुज्येन तदभिन्नो भवतीति। अन्ये तु पूर्णात् निरुपाधिकात्पूर्णं सोपाधिकमुदच्यते उद्गच्छतीति व्याचक्रुः, तदुपाधिवादानङ्गीकारान्नास्माकं रोचते, परिदृश्यमानस्य पूर्णत्वे गमकमाहुरत एवेत्यादि, उपलक्षणविधया पुरःस्फूर्तिकमिदमुक्तं भातिप्रियत्वयोरपि तथात्वादिति । एवं 'बहु स्यामि'त्यस्य प्राथमिक आकारो विवृतः। अतः परं 'प्रजायेये'त्यस्य तं विवृण्वन्ति प्रजायेयेत्यादि। जाता इति सच्चिदानन्दास्तथा जाताः । कथमुत्कृष्ट इत्याकाङ्क्षायामाहुः तत्र इत्यादि । अतः परं द्वयोरिच्छयोरग्रिमं कार्यं दिङ्मात्रेण प्रपञ्चयन्ति तदा चिदंशस्येत्यादि । तदेति त्रयाणां पुनर्विभागकाले । तस्येति चिदंशस्य । ज्ञानधर्मस्येति भगशब्दवाच्यान्तर्गतस्य ज्ञानाख्यधर्मस्य । जीवत्वमिति मुख्यजीवत्वं पुरुषतत्त्वरूपत्वमितियावत् । एतदंशा एव सर्वे व्यष्टिजीवाः, तेषाञ्च जीवत्वं मुक्तिपर्यन्तं तिष्ठति, नन्वर्वाङ्निवर्त्तत इति बोधयितुं सदंशव्यवस्थामाहुः सदंशस्येत्यादि । अव्यक्तनामिति प्रकृतितत्त्वरूपताम् । तस्य व्यक्तिप्रकारमाहुः पश्चान्मूलेत्यादि। मूलपदेन पूर्णरूपः सदंशः । यथायथमिति श्रौतेन पौराणेन प्रकारेण । नन्वेवं सति श्रुतौ पिपालयिषासञ्जिहीर्षयोरनुक्तत्वात् श्रौतेन मतेनाविरतं सर्ग एव स्यान्न जातु स्थितिप्रलयावित्याशङ्कायां तावप्यनयैवेच्छयेति व्युत्पादयन्ति पश्चात्तस्यामित्यादि । तत्कृतधर्म इति क्रियांशक्रियाकृते। घटपटकुड्याद्याकारो। स्वयामिति व्यक्तः सदंशांशः तिरोभवति- अव्यक्ततामापद्यते, तथा च, 'बहु स्यामि'त्याकारेणैव स्थितिसिद्धेः 'प्रजायेये'तीच्छाकारेणैव रूपान्तराविर्भावपूर्वरूपतिरोभावसिद्धेः सिसृक्षाकारेणैव तयोरपीच्छयोरर्थादेव प्राप्त्या स्थितिप्रलययोरपि तत एव सिद्धिरिति न कोपि दोष इत्यर्थः । अत एवाग्रे 'यदनुग्रहतः सन्ति न सन्ति यदुपेक्षये'त्यनुग्रहोपेक्षे एव वक्तव्ये। क्रियातिरोभावेर्थतिरोभावोदाहरणं तु जलनीलीनिवारकक्रियातिरोभावे जलतिरोभावः,कटप्रसारणक्रियातिरोभावे कटविस्तारतिरोभावः, तत्कृतधर्मतिरोभावेऽर्थतिरोभावस्तु कम्बुग्रीवाद्याकारतिरोभावे घटादितिरोभावात्स्फुटतरः । स्वभावभेदेऽपीयमेवेच्छा प्रयोजिका, अत एव निबन्धे'वृद्धिर्विपरिणामश्च तथापक्षय एव च,पूर्वरूपतिरोभावो द्वितीयस्यादिमस्तथा, उभावेकीकृतौ लोके वृद्ध्यादिभिरुदीरितावि'ति तत्स्वरूपमुक्तम् । नन्वेवमाविर्भावतिरोभावपक्षाङ्गीकारे प्राथमिकोत्तररूपाविर्भावदशायां प्रलये च पूर्वरूपाभिलापो निवर्त्तते, तद्वन्माध्यमिकतिरोभावदशायामपि तल्लाभे तदीयसर्वव्यवहार उच्छिद्येतेत्याशङ्कायां तद्बाधप्रकारमाहुः तदेत्यादि । तस्यामिति अभिव्यञ्जकक्रियायाम्।

जात इति तत्सम्बन्धाज्जात इति। तथा चैवं शब्दसद्भावाच्च व्यवहारोच्छेद इत्यर्थः। बुद्धेर्विनाशित्वात्तिरोभावे बाध इत्यरुच्या पक्षान्तरमाहुः जीव इत्यादि । एतेन विद्वन्मण्डनविवेचित आविर्भावातिरोभाववादः सर्वोप्युपष्टम्भितो बोध्यः । एवं सदंशव्यवस्थामुक्त्वा तां प्रकारभेदेन चिदंशेऽतिदिशन्ति एवमित्यादि । यथा सदंशो मूलसदंशशक्तिभूतक्रियांशक्रियाभिर्लौकिकेन शास्त्रीयेण च प्रकारेणाभिव्यज्यते, एवं चिद्रूपो जीवोपि मूलभूतज्ञानांशशक्तिरूपव्यामोहकमायांशभूतैस्तृतीयस्कन्धसुबोधिनीवक्ष्यमाणरीत्या प्रमातृप्रमाणनिष्ठैः सात्विकैर्विशिष्टज्ञानैरभिव्यज्यते । 'जन्म त्वात्मतया पुंसः सर्वभावेन भूरिद । विषयस्वीकृतिं प्राहुः यथा स्वप्नमनोरथावि'त्युक्तरीत्याऽभिमन्यमान आविर्भवन्नुत्पद्यते, 'मृत्युरत्यन्तविस्मृति'रितिवाक्योक्तरीत्या तदभिमानं त्यजंस्तिरोभवति म्रियते चेत्यर्थः। नन्वेवं तिरोभावे लिङ्गभूतस्य मनःप्राणाद्युपाधेरपि विस्मरणान्मुक्त एव कुतो न भवतीत्यत आहुः प्रयत्न इत्यादि । तस्याः पराधीन इतिपाठे भगवदधीन इत्यर्थः । तथा च, प्रयत्नस्य विद्यमानत्वेन देवनिवृत्तावपि न मुक्तिर्भवतीति जीवत्वं नार्वाङ् निवर्तते इत्यर्थः । एतावानर्थो द्वितीये श्लोके सङ्गृहीष्यते । नन्वेवं प्रयत्नाधीनत्वे अनिर्मोक्ष एव स्यादित्याकाङ्क्षायां मुक्तिप्रकारमाहुः स चेत्यादि। स इतिपदं तदापदोत्तरं नामित्यादिना सम्बध्यते । 'जगद्व्यापारवर्ज्यमि'तिसूत्रानुसारेणाहुः जगदित्यादि । तस्येति । अत्र तस्या इति पाठे जीवरूपायाश्रित इति व्याख्येयम्। तथा चैवं स्वरूपलाभादिना भगवत्तौल्येपि ' अप्रोहाय गुणा विष्णोराकारश्चिच्छरीरता। निर्दोषत्वं तारतम्यं मुक्तानामपि चोच्यत' इति ब्रह्माण्डवाक्यात्तथेत्यर्थः । एवञ्च सायुज्य आनन्दाभावेपि चरणादिरूपतैव भवतीति सर्वं सुस्थम् । इदं तृतीयश्लोके सङ्गृहीष्यते। एतेन 'जीवोत्पादनसमय एवे'त्यादि विद्वन्मण्डनोक्तं समर्थितं भवतीति ज्ञेयम्। सर्वे मुक्तिभेदाश्च तथाभवन्तीत्यपि। एवं सृष्टिप्रक्रियाङ्गीकारे मानं गुणश्चाहुः इयमित्यादि । 'सदेव सोम्येदमग्र आसीत्' 'आत्मा वा इदमेक एवाग्र आसीत्' 'पुरुषविधः सोनुवीक्ष्य नान्यदात्मनोपश्यदि'त्यादिश्रुतिवाक्येषु सृष्ट्यादावेकस्यैव विद्यमानता कर्तृत्वञ्च बोध्यते । 'तदैक्षत' 'सोकामयते'त्यादिषु चेच्छाया एव करणत्वं च बोध्यते, तदाकारश्च सर्वत्र 'बहु स्यां प्रजायये'त्येवोच्यते। तेन तस्यैवोपादानत्वमपि सिद्ध्यति। 'तदात्मानं स्वयमकुरुते'तिश्रुत्या 'आत्मकृतेः परिणामात्' 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यादिसूत्रैश्च तथावसीयते । पूर्णश्रुत्या च त्रयाणां पूर्णत्वमुच्यते। 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ती'त्युपक्रम्य ' सर्व एवात्मानो व्युच्चरन्ती'ति,



अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'ति, 'पादोस्य विश्वाभूतानी'त्यादिश्रुतिभि'र्ममैवांशो जीवलोके जीवभूतः सनातनः', 'अंशो नाना व्यपदेशाद्' इत्यादिस्मृतिसूत्रैश्च तस्यांशत्वम्, अविद्यया बन्धः 'एकस्यैव ममांशस्य जीवस्यैव महामते । बन्धोस्याविद्ययानादिर्विद्यया च तथेतर' इत्यादिश्रुतिस्मृतिभिर्मायया बन्धः, ' तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशमि'ति, 'यमेवैष वृणुते तेन लभ्य' इत्यादिश्रुतिभिः ' मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इत्यादिस्मृतिभिश्च भगवत्प्रसादादेव ज्ञानादिप्राप्तौ मुक्तिः । ' सर्वे जीवाः सर्वमयाः तथाप्यल्पा' इत्यादिश्रुतिभिः पूर्वोक्तब्रह्माण्डवाक्याच्च तारतम्यं सिद्धम्, एतेषु यदेव न स्वीक्रियते तद्बोधकं वाक्यं व्याकुप्यत इतिश्रुतार्थापत्तिः सिद्धा सर्वत्रैव श्रुतिपुराणतन्त्रेषूपयुज्यते । तथा चोक्तानि वाक्यान्यस्यां मानं सर्वोपयोगश्च गुण इत्यर्थः। अन्यथाप्रक्रियेति । ब्रह्मनिमित्तभूतमेव न परिणमते, कार्यं त्वारभ्यते, जीवस्तु नित्यभिन्न एव, मुक्तिस्त्वविभागे भेदप्रतीत्यभावादेवेति, जीवजडौ ब्रह्मशरीरे, ब्रह्म तु शरीरि, शरीरशरीरिणोश्च घटघटत्वयोरिवाविनाभावः सदा । अविनाभावलक्षणमेव चाद्वैतम्. शरीरद्वारक एव ब्रह्मणः परिणामो न साक्षात् । जीवस्यांशत्वञ्च विशेषणत्वेन विशिष्टांशत्वात् । मुक्तिरप्यविभागे भेदप्रतीत्यभावादेवेति । 'अयमात्मा ब्रह्म, विज्ञानमयः यत्साक्षादपरोक्षादि'त्यादिश्रुतिभिर्जीवो ब्रह्मैव। भेदप्रतीतिस्तु माययैव, 'मायया ह्यन्यदिवे'त्यादिश्रुत्या। प्रपञ्चस्तु 'सैषाविद्या जगत्सर्वमि'त्यादिश्रुत्या मायापरिणामत्वान्मिथ्या, ईश्वरोपि मायाशबल एव, ब्रह्म तु निर्विशेषमनाद्यविद्यासम्बन्धेन विवर्त्तते, मुक्तिस्तु ज्ञानेनाविद्यायाः सकार्याया नाशाद्विस्मृतकण्ठमणिन्यायेन स्वरूपावस्थानरूपा स्वत एवेति माध्वरामानुजशाङ्कराणां प्रक्रिया। एवं दर्शनान्तराभिमानिनां प्रस्थानान्तराभिमानिनां च ज्ञेया, विस्तरभयान्न लिख्यते । सा सर्वापि पूर्वोक्तानि तज्जातीयान्यन्यानि च वाक्यानि बाधते। अतः पूर्वोक्तैव प्रक्रिया आदरणीयेत्यर्थः । नन्वेवं सृष्ट्यादिप्रक्रियातौल्ये स्वरूपतौल्ये च सति जीवानां फले कथं भेदः इत्याकाङ्क्षायामाहुः जीवेत्यादि । एवं बोधनार्थं सर्वं निरूप्य श्लोकं व्याकुर्वते एतदेवेत्यादि। अस्य चिद्रूपस्येति इदं परपदस्य व्याख्यानम् । यद्धातुमतो २।८।७ इतिप्रश्नवाक्ये अस्येतीदमा तन्निर्देशात् तत्स्मारणार्थम् । स्वरूपाज्ञानमिति, जीवमायादीनां स्वरूपाज्ञानम्, देहरूपार्थसम्बन्धो न घटेतेति शेषो मूलादेव बोध्यः। कुतो न घटत इत्याकाङ्क्षायामाहुः व्यामोहेत्यादि। तादृशमिति व्यामोहयोग्यम्। ननु सङ्घातस्य परार्थत्वात्तच्छेषिणोस्य देहसम्बन्धः स्वतः स्वभावतो

वान्यथा वाऽनाद्यविद्यया वा सामर्थ्यसत्त्व एव स्वीक्रियतां, तद्गमनं किमिति स्वीक्रियते इत्यत आहुः अन्यथेत्यादि । अन्यथेति धर्मरूपभगशब्दवाच्यज्ञानाख्यसामर्थ्यगमनाभावे । न भवेदिति, अर्थस्येव तस्यापि स्वरूपज्ञानान्न भवेद् इत्यर्थः । ननु तर्हि शक्त्यभावादनिच्छतो विशिष्टवदर्थसम्बन्धोस्तु किं व्यामोहेनेत्यत आहुः व्यामोहेत्यादि, व्यामोहो नाम विपरीतज्ञानम् । तथा च, तं विना केवलज्ञानशक्त्यभावे सदंशस्येव जडत्वमेव स्थावरवत्स्यात्, न तु देहसम्बन्ध इति तदर्थं सः, तेन विक्षेपिका मायापि तदर्थमावश्यकीति तथेत्यर्थः-। ननु सामर्थ्यतिरोभावसमकालमेव व्यामोहने को हेतुरित्यत आहुः सहजशाक्तिश्च सति । तथा च, सन्निधिरेव हेतुरित्यर्थः । नन्वेवं सन्निधेर्हेतुत्वे तस्याः शक्तेरपि ज्ञानसन्निधानाद्गुणतैव युक्ता, न तु दोषत्वमित्यत आहुः तस्या इति । हीनभावादिति 'प्रजायेये'तीच्छाकृतात् । तथा च, हीनकार्यकरणात्तस्याः दोषत्वमित्यर्थः । नन्वेवं सति सामर्थ्यलाभार्थमेव यत्नः कार्यो न तु मायातरणार्थमित्यत आहुः जीवस्येत्यादि । तस्याः बन्धनेऽधिकृतत्वा'द्यावदधिकारं स्वाधिकारिकमि'तिन्यायेन तस्याः कार्यं मृत्योरिवानिच्छायामप्यनिवार्यम्, भगवतोऽप्रतिहतेच्छत्वाद् अतस्तस्याः सम्बन्धे व्यामोहावश्यंभावात् तत्तरणप्रयत्न आवश्यक इत्यग्रिमस्वारस्यादुक्तम् । सिद्धमाहुः तथेत्यादि । ननु व्यामुग्धस्य भ्रम एव दृष्टो न तु देहादिसम्बन्ध इत्याशङ्कायामाहुः मोहितस्येत्यादि । अभिमन्यते चेति । तथा च, तद्वन्मूलशक्त्या देहादिकमपि पश्यत्यभिमन्यते चेत्यर्थः, तर्हि तद्वदिदमपि मोहनं कालादिनैव निवर्त्ततां किन्तदर्थकोपायेनेत्यत आहुः निद्राया इत्यादि । सर्वत्र उद्गमाभावादिति, निद्राया बुद्धिवृत्तिविशेषरूपत्वेन व्याप्यतया सर्वत्र उद्गमाभावात्, तथा चास्याः सर्वत्र उद्गतत्वादेतन्निवारणस्य कालादिनाऽशक्यत्वादुपाय आवश्यक एवेत्यर्थः । आञ्जस्यं विवृण्वन्ति स्वप्नेत्यादि । तथा च, यथा निद्रया भगवत्कृतां स्वाप्निकीं सृष्टिं भिन्नतया पश्यति, तथैव स्वतया त्वभिमन्यते, तथा मूलचिदंशमायया जगत्कर्तृमायामयीं सदंशसृष्टिं पश्यति, तथैव च स्वतयाभिमन्यते इति दृष्टान्तार्थः । एतस्याः क्षेत्रदर्शकत्वं नृसिंहोत्तरतापनीये नवमखण्डे स्फुटम् । तदस्मत्कृततद्व्याख्यानादवगन्तव्यम् । एवमनेन श्लोकेन देहसम्बन्धे हेतुबोधनाद् यदृच्छापक्षनिरासेन यद्धातुमत २।८।७ इति प्रश्न उत्तरितः ।

वस्तुरूप इत्यत्र । अतः परं भवन्तो जानते, यथा २।८।७ इति तुर्यपादेन वक्तृज्ञानप्रकारो यः पृष्टस्तमुत्तरयतीत्याशयेनाहुः एवं तस्या इत्यादि ।
२-९-२
सा ह्याभासेत्यादि । इदमपि 'जीवेशावाभासेन करोति, माया चाविद्या च स्वयमेव भवती'त्यादौ श्रावणात्तत्रैव स्फुटम् । तस्याश्च प्रपञ्चदर्शननिमित्तत्वमेव,



न तूपादानत्वमपि, उपादानत्वं त्वात्मन एवेत्यपि तद्व्याख्यानादेवावगन्तव्यम् । तस्मादात्मन एव त्रैविध्यं योनित्वमपीति तत्र श्रावणात् । समर्पकाभावादिति भावप्रधानः, समर्पकत्वाभावादित्यर्थः । एवमनेन श्लोकेन स्वस्य स्वसदृशानां देहसम्बन्धविषयको ज्ञानप्रकार उक्तः ।

यर्हि वावेत्यत्र । एवं द्वाभ्यामुत्तरमुक्त्वा 'त्यक्षे कलेवरं, २।८।१ इति देहजिहासामभिसन्धाय पृष्टत्वात्तदसम्बन्धप्रयमभिकाङ्क्षतीति निश्चित्य तदुपायं वदतीत्याशयेनाहुः एवं तस्याः कार्यमित्यादि । स्वस्य महि-
२-९-३
मरूपे भगवत्यानन्द इति च्छान्दोग्यस्थे "स्वाप्यय" सूत्रविषयवाक्ये 'स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते' इत्यत्र स्वशब्देन जीवमूलरूपमुच्यते, 'महिम'शब्देन चोत्कर्षः, तथा च, स्वस्योत्कर्षरूपं तदभिन्नत्वमेव, न तु हस्तिहिरण्यादिरूपं लौकिकमिति लौकिकमहिमवारणाय परस्मिन्नित्यादेरर्थमाहुः गुणेत्यादि ।

आत्मतत्त्वेत्यत्र । पूर्वश्लोके एतादृशमरणं यत् कालविशेष उक्तम्, तत्र न कालादेः कारणत्वम्, किन्तु, नियन्तुरेवेति 'परस्मिन् कालमाययो'-
२-९-४
रित्यनेन बोध्यते । एवं सति मोहोपि तदधीन एव सिद्ध्यतीत्येतदभिसन्धायैवात्र सर्वसृष्ट्यादिप्रक्रिया बोधिता । न चैवं वैषम्याद्यापत्तिः, आत्मसृष्टिकथनेनैतन्निरासात् । उपस्थितहान्यकृताभ्यागमौ परमवशिष्येते, तावन्ये च ब्रह्मसन्देहवारणे वारयिष्यन्त इत्याशयेनाग्रिमं वदतीत्याशयेनाहुः एवं जीवेत्यादि । अत्रापीत्यादि, अस्मिन् सन्दर्भे या मुक्तिर्विवक्षिता सास्मिन्निरूपितैवेत्यर्थः (सर्वात्मकत्वानुपपत्तिरिति नारायणस्येतिशेषः) लौकिकानामित्यादि । अज्ञातसात्त्वानां लौकिकप्रमाणजन्यसम्यक्परिच्छेदेन भगवदाकारगुणकर्मसु लौकिकबुद्ध्या, एतान्यपि लौकिकप्रमाणयुक्तिभ्यामेव निर्णेयानीतिभ्रमलक्षणां निश्चयात्मकबुद्धिं दूरीकृत्येत्यर्थः । यदाहेति । सम्बन्ध इति तद्वदामीति कथनप्रतिज्ञात्राऽऽर्थिकी बोध्या ।

स इत्यत्र सन्तोषार्थमिति भगवत्तोपार्थम् । ब्रह्मण इतिब्रह्मकृतम् । प्रवर्त्तत इति, नियमसामान्यवाचकोयं शब्दस्तद्विशेषे पर्यवस्यतीत्यर्थः । त
२-९-५
इति सृष्टिसाधनभूताः । दृशमिति साक्षात्कारम् ।

स चिन्तयन्नित्यत्र । प्रकारः सर्वोपीत्यारभ्यैतद्व्याख्यानं ज्ञापितमिति, चिन्ताकथोपक्षेपाच्छुकेन व्यासचरणैर्वा ज्ञापितम् । निरूपितेति द्विर्गदित-
२-९-६
मित्यनेन पद्मरयभिज्ञां बोधयता निरूपितेत्यर्थः । व्याकुल इति साधनाप्राप्त्या व्याकुलः । अक्षरद्वयं विवेक्तुं विशेषमाहुः स्वराणा-

मित्यादि । निर्णयार्थमिति उच्चारितं पदद्वयं किमर्थकमितिनिर्णयार्थम् ।
लक्षणयार्थपरमिति सन्तापसामान्यं तपधात्वर्थ इत्यदृष्टजनकोपि स तद्विशेषत्वा-
द्धात्वर्थ एव । स च केवलधातुप्रयोगेऽनवगम्यमानोऽसुप्रत्ययेन ज्ञाप्यते । प्रकृते तु
तदभावाद्धातुमात्रं तादृशविशेषबोधने कुण्ठितं सत् स्वशक्यसम्बन्धेनार्थपरं केषाञ्चिददन-
बोधकमित्यर्थः । किञ्चित्त्विति निःकिञ्चनशब्दावयवभूतकिञ्चनपदवाच्यं त्वित्यर्थः ।
निःकिञ्चना एवेति स्वरक्षिततापकृतिवन्धकीभूतकिञ्चिदाख्यपदार्थरहिता एवेत्यर्थः ।
निशम्येत्यस्य व्याख्यानं तद्धि पदमित्यादि । पदचतुष्टयमध्य इति ।
२-९-७ नामाख्यातनिपातोपसर्गात्मकपदचतुष्टयमध्ये ।

दिव्यमित्यत्र साधारणस्य ज्ञानस्याप्रयोजकत्वेनामोघत्वं नोपपद्यत इत्यरुच्या
पक्षान्तरमाहुः अथ वेत्यादि । योगजनित इति, सामर्थ्यविशेष
२-९-८ उक्तइत्यर्थात् । इत्यपीनि तयेति शेषः ।

तस्मा इत्यत्र अत आहेति । अतो हेतोः तादर्थ्यचतुर्थीमाह । स्वपदेनैव
कृत्रिमवैकुण्ठात् परत्वं सिद्ध्यतीत्यरुच्या पक्षान्तरमाहुः ब्रह्मरूपं वेति,
२-९-९ अहिकुण्डलवत्स्वाभिन्नमित्यर्थः । 'पूर्ववद्धे'तिन्यायेन राजाधिकारानुरूप-
सामर्थ्यस्यात्र वक्तव्यत्वादिदमपि नात्र युक्तमित्यतः पक्षान्तरमाहुः
प्रभुत्वेनेत्यादि । नन्वेवं सति 'न यत्परमि'त्यग्रिमविरोध इत्यत आहुः अक्षरस्येत्यादि ।
साम्यदशायां गुणासाधारणधर्माणामभिव्यक्त्यभावाद्व्यपाय इव भवतीति तत्तौल्यवारण-
माहुः व्यवहारेणेत्यादि । स्वदृष्टवत्पदेन ब्रह्मविल्लाभे विबुधपदानर्थक्यमाशङ्क्य
तत्तात्पर्यमाहुः तद्द्वारेत्यादि । अन्यव्यवहार इति, तदनुयायिनां व्यवहारः,
तद्व्यवहारे गुणसम्बन्धान्नैर्गुण्यं हीयेतेति तद्वारणायैवमुक्तमित्यर्थः ।

प्रवर्त्तत इत्यत्र अनेनेत्यादि । एतेन 'क्षयन्तमस्य रजसः पराक' इत्यादिश्रुतावुप-
लक्षणविधया तमसोपि निवारणात्तदुपबृंहितमिति ज्ञेयम् । प्रतिकृति-
२-९-१० सम्बन्ध इति भरितपात्रसञ्ज्ञायकसम्बन्धः । तथापीति सम्बन्धेपि ।
तस्मादिति कादाचित्कस्य सम्बन्धस्य पश्चादपायात् । नन्वेवं संसर्ग-
मात्रेपि सांसर्गिकदोषस्त्वायात्येवेत्यत आहुः सम्बन्धश्चेत्यादि । निरूपितमिति ।
तृतीयैकादशस्कन्धादिवाक्यान्यनुसन्धाय 'प्रकृतिः पुरुषश्चोभौ परमात्माभवत् पुरा,
यद्रूपं समधिष्ठाय तदक्षरमुदीर्यते' इत्यादिना निरूपितम् । एतेन सुबोधिनीतः
पूर्वं निबन्धमूलं कृतमिति ज्ञायते । निबन्धटीका तु सुबोधिन्यादिसर्व-
ग्रन्थकरणोत्तरं 'अयं वच्मि यथामति' इत्यस्य व्याख्याने मीमांसाद्वय-



भाष्यं भागवतटीका च परिगृहीतेति चकारव्याख्यानाज्ज्ञायते । ननु
शुद्धसत्त्वरूपं रजस्तमसी अपि तत्र तिष्ठतां को दोष ? ...स्तद्भावगमकमाहुः
किञ्चेत्यादि । विक्रम इति क्षोभरूपकार्यव्यापारः । 'न यत्र माये'त्यर्द्धस्यावतरणिकां
वक्तुं पूर्वार्द्धस्य निष्कृष्टार्थमाहुः आनन्द इत्यादि । उपपद्यत इतिसत्त्वसम्बन्धा-
देवोपपद्यते । एतेनेदं स्फुटति. *तथा हि, यत्र भगवान् स्वस्य यथाकथञ्चित् स्वरूपमात्रं
प्रदर्शयति तत्राकारादिसमर्पणार्थं कालादीनामाधारतावश्यकी, अत एव 'कृते
शुक्लश्चतुर्बाहु'रित्यादिवाक्यैर्गुणावतारवार्त्तायाश्च नानावर्णाकारत्वमौपाधिकमिति निश्ची-
यते । यत्र पुनः कृपया ऋतं स्वस्वरूपं प्रदर्शयति, स्वस्मिन् सत्त्वं न सम्बन्धयति,
किन्तु लोके आकारसमर्पणाय [1]लौकिकं सम्बन्धयति, तेन तस्य गणितानन्दत्वं
भवति । स्वयं तु सत्त्वाधारे लोके यदाध्यात्मिकमासनरूपमक्षरं तदाधारौ यावाधि-
दैविकासनरूपौ चरणौ, तदाधारो गुणसंसर्गलेशस्यापि राहित्यान्निरवध्यानन्दरूपः
स्वाभाविकसुन्दराकारः कालसम्बन्धाभावात् सदाविर्भूतो निरुपहितधर्मा भवति ।
एवं सति यथात्र तथैव 'रमाक्रीडमभूनृपे'त्यत्र बृहद्वामनीयकथास्थले चावगन्तव्यम् ।
तेन च गीतास्थश्रुत्यादिस्थकेवलानन्दाकारत्वबोधकवाक्यतात्पर्यप्रकाशकः, अथवा
'शून्यवद्भाद'मिति तत्त्वदीपग्रन्थस्तदर्थप्रकाशिका जन्मप्रकरणीयतृतीयाध्याय-
टिप्पणी चैतदनुसन्धायैव विचारणीयम्, न त्वन्यथेति । अत इति चिद्रूपत्वात्सद्गुण-
सम्बन्धाच्च । अस्येति भगवतः । एत इति सुरासुराः ।

श्यामावदाता इत्यत्र । इन्द्रनीलादिदृष्टान्तैरुपलक्षणविधया श्यामत्वे नाना-
प्रकारत्वं बोधितं शब्दश्च रसश्चेति, पीताम्बरस्य वेदरूपत्वात् 'पिशङ्गवास'
२-९-११ इत्यनेन शब्दः, सूर्यमण्डलदृष्टान्तेन रूपस्योक्तत्वात्, सूर्यस्य च श्रुतौ
मधुत्वेन निरूपणात्, 'सुरुच' इत्यनेन रस इत्यनवद्यम् । सत्त्वस्येति
सदंशस्य । आभरणानां बाह्यत्वेन सद्गुणत्वमाशङ्क्य निराकुर्वन्ति यद्यपीत्यादि ।
तथा च, सद्गुणत्वेन प्रतीयमानत्वेपि नियतचेतनैकसम्बन्धित्वाच्चिद्गुणा इत्यर्थः ।
भ्राजिष्णुभिरित्यत्र । ननु विपक्षकोटौ प्रथममन्नपानादिकं रसादिकञ्चावश्य-
वक्तव्यमिति तत्कुतो नोक्तमत आहुः अन्नादीनामित्यादि । तथा
२-९-१२ चान्नाद्यभावस्य दोषरूपत्वात्तदभावस्य च प्रागेवोक्तत्वात्तेनवाद्यादि-
सद्भावप्राप्तिरित्यतो नोक्तमित्याद्याशयेन विमानानां शोभामाहुरित्यर्थः ।
कापि शङ्केति दोषलेशस्य शङ्का । विषयान्तरनिरूपणप्रयोजनमाहुः अन्यथेत्यादि ।

* इतः शुद्धकेन प्रतिफलकेन संवादित पाठायम् । [1] "लोक" पाठभेदः

**भोगराग** इति भोगकृतरागः । अत्रायमर्थः प्रतिभाति, आनन्दमीमांसायां 'युवा स्यादि'त्यादिना विषयभोगपूर्वकं मानुषानन्दं प्रथमतो निरूप्य शताधिक्येनाग्रिमा आनन्दा निरूपिताः, तथा सति प्राजापत्यान्तेष्विव ब्रह्मानन्देपि सोवश्यं वक्तव्यः, अन्यथा प्रायपाठो विरुद्ध्येत, 'भोगमात्रसाम्यलिङ्गाच्च (४-४-२१) इत्यनेन सूत्रकृताप्येतदङ्गीकृतं तदपि विरुद्ध्येत । तस्य भोगस्यात्राभावे अक्षरानन्दस्य तदंशन्यूनतायां तत आधिक्यं तदंशे बाधितश्च भवेदतस्तन्निरूपणम् । तथा च, मात्रकृत एव रागो न तु विषयकृत इतीश्वरकृतभयाभावार्थं भगवदिच्छया स इति बोधयितुं विषयानन्दो निरूपित इत्यर्थः ।

२-९-१३ **श्रीर्यत्रे**त्यत्र । स्वार्थं सच्चिद्रूपत्वे गमकमाहुः, **अत एवे**त्यादि । तथा च, चरणसेवया भगवदानन्दाकाङ्क्षावत्त्वमेव तद्गमकमित्यर्थः ।

**ददर्शे**त्यत्र **परिज्ञानार्थ**मिति अन्तर्भावितण्यर्थपरिज्ञानार्थम् । **सच्चिद्रूपा** इति पूर्णशब्दवाच्यसच्चिद्रूपाः, ते क इत्याकाङ्क्षायां तानाहुः **अखिले**त्यादि ।

२-९-१४ **एतदनुप्रवेश** इत्यादि । एतेषां लौकिकेनुप्रवेशे सत्येव लौकिकस्य भगवति सम्बन्ध इत्यर्थः, । अत्र गमकमाहुः **अत एवे**त्यादि । **एतदनुप्रवेश**स्य भगवत्सम्बन्धजनकत्वादेव दशमोक्तलीलायां लौकिका जगदादिरूपाः पदार्थाः पूर्वलीलासमसङ्ख्यया त्रिविधसर्गत्रिविधस्थितीशानुकथारूपप्रलयभेदेन समाना या सप्तसङ्ख्या, तया कृत्वा, आभिः अत्रोक्ताभिः जगदादिमूर्तिभिरध्यायप्रतिपाद्याः सन्तो भगवद्भोगायोपयुक्ताः सप्तसप्ततिभिरध्यायैर्निरूपिताः, इदं गमकमित्यर्थः । त इति जगदाद्याधिदैविकाः । **इतरसिद्धि**रिति पादसेवनादिसिद्धिः ।

**भृत्यप्रसादे**त्यत्र । एतं श्लोकं व्याकुर्वन्ति, **एवं सर्वे**त्यादि । एवं व्याख्याने बीजमाहुः **एत** इत्यादि । **एतादृशी**ति व्याख्यातरूपा, अन्यथैतन्निरूपण-

२-९-१५ मनर्थकं स्यादतस्तथेत्यर्थः । ज्ञानं हि प्रपञ्चस्यैव विस्मारकं, न तु स्वरूपस्येति तस्यासवरूपता नोपपद्यत इत्यरुच्या पक्षान्तरमाहुः **अथ वे**त्यादि । **कामि**पदेन जगद्व्यतिरिक्तास्त्वयोक्त प्राह्याः। तथा च, तादृशदृष्ट्या कामिन एव पश्यन्तीति तेषामेव स्वरूपविस्मरणमित्यर्थः । न च प्रपञ्चविस्मरणाभावादत्राप्यरुचितोस्यमिति वाच्यम्, प्रपञ्चस्वरूपज्ञाने कामस्यैवानुदयात्तेनैव तदज्ञानसिद्धेररुच्यभावादिति । **अन्यैर्वे**ति प्रकारान्तरेणेव मादकैरित्यर्थः । **दृगासव** इत्यनेन दृशो मादकत्वे निरूपितेपि पुनरागन्तुकशक्त्या तन्निरूपणस्य तात्पर्यमाहुः **जगदि**त्यादि । तथा च, जगद्रूपेणोन्मादार्थ सेत्यर्थः । प्रकारान्तरेण नेत्रनिरूपणस्य तात्पर्यमाहुः **काले**त्यादि । 'चक्षुरभूत्पतङ्ग' इति

"अ काद्दक्षत्वम्" पाठभेदः ।



भगवच्चक्षुषः पतङ्गतापर्मविशिष्ट(सूर्य)रूपत्वेन सूर्यस्य 'चासावादित्य एकविंश' इतिश्रुत्या तस्य कालात्मकत्वेन कालवशाज्ज्ञानो जगदन्तःपाती पदार्थः, कालाधेयो ज्ञातः समीचीनश्च भवतीति ब्रह्मणे ज्ञापितम्, न त्वित्यादिनोक्तरीत्या वा सूचितमित्यर्थः । **आधार आधेयश्चे**ति । श्रीभगवद्गीतासु पुरुषोत्तमस्वरूपनिरूपणे 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया। यस्यान्तःस्थानि भूतानि येन सर्वमिदं तत'मितिवाक्यादाधारः,'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः, यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर' इतिवाक्यादाधेयश्चेत्यर्थः । **एवं भगवदवयवे**त्यादि । 'वेदा यथा मूर्तिधरास्त्रिपृष्ठ' इतिवाक्यान्मूर्तवेदरूपकिरीटाधारत्वेन सत्यलोकत्वं शिरसः । योगसाङ्ख्यरूपकुण्डलाधारयोः कर्णयोः श्रीमुखान्तःपातित्वेन तपोजनमहर्लोकरूपत्वं समीपस्य श्रीमुखस्य, 'योगस्तपश्च वंशश्च भगवद्भक्तिरेव चे'तिचतुरर्जितलोकरूपत्वे चतुर्णां भुजानाम् श्र्याधारस्वर्लोकरूपत्वं वक्षसः । मायारूपपीताम्बराधाराणां कट्यादीनां भूरादिलोकरूपत्वम्, एवं प्रकारकास्य ये भगवदवयवभूता लोकास्ते तृतीयस्कन्धवक्ष्यमाणरीत्या प्रद्युम्नादिरूपचतुर्मूर्तेर्भगवत आश्रिता इत्यर्थः ।

**अभ्यर्हणीये**त्यत्र । तत्सम्बन्धेन वा पूज्यमिति धर्मादीनामासने प्रवेशस्यैकादश-स्कन्धे वक्ष्यमाणत्वेनेदं पक्षान्तरमुक्तम् । तथा च, धर्मादिसम्बन्धेनान्यैः

२-९-१६ पूज्यमित्यर्थः । **तेभ्य** इति धर्मादिभ्यो नवभ्यः । **तदि**ति आसनम् । **तरतमभावेने**ति इदं वाराहे (नारसिंहे) कण्ठत उक्तं 'भगवानिति शब्दोयं तथा पुरुष इत्यपि, निरुपाधी च वर्तेते वासुदेवे सनातन' इति । **नित्या** इति स्वाभाविकाः । **अनेने**त्यादि । एतेन प्रथमाध्याये 'तं सत्यमानन्दनिधिं भजेते'त्यत्र यत्फलसेव्यत्वमुक्तं तत्पुरुषशेषत्वाभावात्समर्थितं ज्ञेयम् ।

**तं प्रीयमाण**मित्यत्र । एतदादीनां षण्णां तात्पर्यं वदन्तः स्वतो भाषणस्याहुः **यत्रे**त्यादि । **अभीप्सित**मिति भगवदाशयगोचरम् । **प्रारब्धफल-**

२-९-१८ **सिद्ध्यर्थ**मिति कर्तुमारब्धं यत्साधनं तत्फलसिद्ध्यर्थम् । **प्रोत्साह-न**मिति करस्पर्शादिना हर्षजननम् । **अन्यथात्व** इति अन्यतरस्यानभीप्सितत्वे । तथा च, यद्भगवान् प्रोत्साह्य स्वयं भाषितवान्, तेन ब्रह्मापि संहितानां साधनादीनां स्वाभिलषितत्वं ज्ञापितवान् । अभिलषितदानतात्पर्यमाहुः **प्रसन्नत्वादि**-त्यादि । ननु प्रेरणाभावे को दोष इत्यत आहुः **अन्यथे**त्यादि । **अन्यथे**ति प्रेरणाभावे । तथा च, पदार्थान्यथाकरणापत्तिरेव दोष इत्यर्थः । नन्वस्त्वेवं भगवत्कृतिस्तथापि ब्रह्मा भगवद्कृत्ने प्रसन्ने पश्यन्नपि स्वाभिप्रेतं किमिति न विज्ञापितवानित्यपेक्षायामाहुः **अत**

इत्यादि, अत इति, अन्यथा करणस्यानभीष्टत्वात्। अतः परं व्याकुर्वन्ति भगवतीत्यादि। ननु स्मितपदेनैव हासमन्त्यभाषी पुनरीषत्पदस्य किं प्रयोजनमत आहुः सर्वेत्यादि। तथा च, हासस्वरूपाल्पत्वं स्मितपदेनोच्यते, न तु कार्याल्पत्वमतस्तद्बोधनार्थमेतदित्यर्थः। ननु चिदंशत्वे विशिष्टत्वेऽपि मोहस्य जीवत्वापादकत्वाद्भगवता स्मितद्वारा ब्रह्ममोहोत्पादने ईषद्धि कृते सोऽपि जीवतुल्य एव स्यान्नेश्वरकोटाविस्यत आहुः यद्यपीत्यादि। यद्यपि स्मितमेवाज्ञाय पर्याप्तम्, तथापि, ब्रह्मण इच्छामात्रेणैव जगद्भविष्यत्यक्लेशेन कृते ब्रह्मणोऽन्यथासत्त्वभावादज्ञानकार्यस्याल्पत्वमतो न जीवतौल्यमित्यर्थः। अन्यदपि विशेषमाहुः स्मितमित्यादि। तथा च, स्मितस्वरूपस्य माहात्म्यस्य (मायात्वस्य) ज्ञानादपि न जीवतौल्यमित्यर्थः। नन्वेवं मायात्मके तत्स्वरूपे ज्ञाते वैराग्यमेव भविष्यति, न तु सृष्टिरित्यत आहुः परमित्यादि। तथा चातः सृष्टिरित्यर्थः। ननु फलापर्यवसायित्वे स्वरूपज्ञापनस्य किं प्रयोजनमत आहुः भवत्वित्यादि। ननु इदानीं साफल्याभावे इदानीं ज्ञापनस्य किं प्रयोजनमत आहुः फलेऽपीत्यादि। शास्त्रमीति 'ये यथा मामि'ति प्रतिज्ञाशास्त्रम्। उत त्व इत्यादि, त्वशब्दोऽन्यार्थकः। अत्र श्रुतावुत्तरार्द्धानुरोधाद्भगवत्प्रसादप्रयुक्त एव शब्दार्थज्ञानाभावः पूर्वार्द्धे विवक्षित इति ज्ञायते, तद्वदित्यर्थः।

त्वत्पादाब्जमित्यत्र। भगवत्कार्यकरणे वेदतात्पर्यमित्यत्र गमकमाहुः अत एवे-त्यादि। तथा च, भगवत्कार्ये या यज्ञकर्तृव्यापारोक्तिः सैव गमिकेत्यर्थः।

२-९-१९ नन्वत्र पूर्वश्रुतिद्वयस्य भूतपूर्वार्थानुवादात्तृतीयस्यालौकिकार्थपरत्वाच्चो-पपत्तौ कथं तथातात्पर्यावगतिरित्यत आहुः अन्यथेत्यादि। एवं तात्पर्यानुसन्धाने वेदानां लोकानधिगतार्थगन्तृत्वाभावेन प्रामाण्याभाव एव स्यादतस्तथा तदनुपपत्त्या तात्पर्यमिति इत्यर्थः। नन्वर्थवादानां विधेयकर्मस्तुतावेव तात्पर्याच्चेषां स्वार्थेऽप्रामाण्येऽपि नाप्रामाण्यप्रसक्तिरित्याशङ्कायामाहुः अत एवापातत इत्यादि। तथा चैवं पूर्वपक्षविचारेण सिद्धौ जैमिनीयानां तदंशज्ञानाभावाद्भ्रान्तत्वमेवेत्यर्थः। तत्र हेतुः, नत्रेति चतुर्मुखे। शिक्षणावस्थायिन इति दर्शनान्तरानुसारेणोक्तम्। अधापयदिति। अत्रान्तर्भावितणिजन्तः स्वार्थे, यथा रामो राज्यमचीकरदित्यादौ। प्रथमतुल्य इति भूयस्तरविक्षेपाजनक इत्यर्थः। सामर्थ्यविशेषं वेति सम्पादयतीति शेषः। तदृशयेति तद्दृदृश्या।

२-९-२० चरं चरमेत्यत्र अन्यत्रापीति। यत्रैवं वचनाभावस्तत्रेत्यर्थः। मनोऽभिलाषानुसारेत्यत्र अक्षरात्मकस्यैति। 'अव्यक्तोऽक्षर इत्युक्त' इतिवाक्याद-व्यक्तस्य तस्वरूपमाहुः पराक्षीत्यादि। तथा चायोग्यत्वात्करणकोष्ठ्याक्ष



२-९-२१ भगवदिच्छाभावे कथमपि न दर्शनमतस्तथैव तथेत्यर्थः। एतदेवोपपाद-यन्ति बहिरित्यादि। तथा चाकाशस्यापि तद्वस्तुस्वभावेनैव ग्रहणम्, न चक्षुःसामर्थ्येनेत्यर्थः। नन्वयोग्यमपि कालरूपं दिव्यचक्षुषार्जुनेन दृष्टम्, तथात्र तपःसामर्थ्येन दर्शनं भविष्यतीत्याशङ्कायामाहुः सामर्थ्येत्यादि।

२-९-२२ प्रत्यादिष्टमित्यत्र एवं सतीति, तपसः परमत्वे सति। कार्यात्मत्व-मिति कार्यव्यापकत्वम्।

२-९-२५ तथापीत्यत्र, परमिति असङ्गोदासीनमेकमित्यर्थः। त इति उभे रूपे। क्रीडसीत्यत्र। नवर्णनाभिदृष्टान्तेन सृष्टिप्रकारविशिष्टो भगवान् ज्ञात एवेति

२-९-२७ स्वरूपज्ञानप्रार्थनस्य किं प्रयोजनमत आहुः कुर्वीत्यादि। अत इति दृष्टान्तमात्रेण स्वरूपाज्ञानात्। तद्व्युत्पादयन्ति अन्येत्यादि।

भगवच्छिक्षितमित्यत्र। नन्वत्र शिक्षितकरणं तेन बन्धाभावप्रार्थनमेव च प्रतीयते, न तु शिक्षाप्रार्थनमिति शङ्कायां तत्प्रार्थनमुपपादयन्ति

२-९-२८ भगवतेत्यादि। अत्र हि शिक्षितकरणवाक्यान्यथानुपपत्त्या तदाशय-गोचरमेवं वाक्यं पूर्वं कल्पनीयम्, अन्यथेदं प्रथमत इदानीमेव भगवतो दृष्टत्वेनेतः पूर्वशिक्षान्तरस्य वक्तुमशक्यत्वादेतद्वाक्यार्थबाधापत्तेः। सिद्धे चैवं कल्पने निःप्रत्यूहैव प्रार्थनसिद्धिरित्यर्थः। एवं वाक्यमुपपाद्यैतदर्थं वक्तुं शिक्षादेः स्वरूपमाहुः शिक्षेत्यादि। कर्त्तेति शिक्षणक्रियायां स्वातन्त्र्येण विवक्षितः। आश्रय इति तादृशक्रिया-बोधकवचनेन तादृश्या क्रियया वा यत्र साऽऽधीयते स इत्यर्थः। एवं त्रयाणां स्वरूपमुक्त्वा वाक्यार्थमाहुः तत्रेत्यादि। तत्र क्रियाकर्मकशिक्षाप्रार्थनवाक्यप्रयोगे शिक्षाप्रार्थनक्रियाया एव मुख्यत्वेन कर्मभूतक्रियाया गुणभूताया अपि कर्मत्वेन विवक्षितायाः सिद्धाविति शेषः। सिद्धौ सैव कर्मभूतक्रियैव तथा वैपरीत्यमालम्बते। तथा तदाश्रयश्च पठनादि-क्रियादृष्टान्तेन। प्रकृते तु ब्रह्मकर्तृकप्रार्थनक्रियायां तु जगत्सृष्टिक्रियाया असिद्धत्वे-नातथात्वात्तथेति। तथा सतीत्यादिनोक्तरीतिक एवार्थ इत्यर्थः। एवं शिक्षा-वाक्यार्थमुक्त्वा शिक्षितं करवाणीत्यस्याहुः पश्चादित्यादि। अग्रे शिक्षार्थमिति अग्रे जनिष्यमाणानां शिक्षणार्थम्।

यावदित्यत्र। नन्वत्र करोतीत्यादिपदानामभावात्कथमेवमध्याहार्य व्याख्यायत इति शङ्कायामाहुः यद्यपीत्यादि। त इत्यस्यैव व्याख्यानं त्वयेति।

२-९-२९ मतान्तरव्याख्याने दोषसाम्यमाधिक्यं चाहुः तत्रापीत्यादि। अयुक्तेति कालान्तरे पुनर्मदप्राप्त्याऽयुक्तेत्यर्थः।

**ज्ञानमित्यत्र** परिकरमिति येन प्रकारेण तदभिप्रेतं तादृशप्रकारसामग्रीम् ।
ननु विज्ञानपदस्य विशिष्टज्ञानविविधज्ञानयोर्वाचकत्वान्नियन्त्रणं विना
२-९-३० कथं विविधज्ञानवाचकत्वावगम इत्याकाङ्क्षायामाहुः अस्येत्यादि ।
ब्रह्मणा यो भगवान् दृष्टः सोनुभवो विशिष्टज्ञानसमानाकारोपि वस्तुतो न सः, भगवदात्मकस्वप्रकाशभगवद्धर्मरूपत्वात्, स्वेन्द्रियादिसामर्थ्याजन्यत्वाच्च, किन्तु, केवलाखण्डानुभवरूपः, स च जात एवेति परमगुह्यत्वात् ज्ञानपदेन स उक्त एवेति शब्दान्तरसन्निधिना नियन्त्रणादुक्तरूपपतिचतुष्टयज्ञानमेव तदित्यर्थः । किम्बहुनेत्यादि, तथा च, एवं वैकुण्ठस्थितसर्वपदार्थविषयकज्ञानदानेन तादृक् तद्विशिष्टरूपस्य नित्यत्वं ज्ञापिते तस्यैव सर्वपूर्ववर्तित्वसर्वपश्चाद्वर्तित्वज्ञापनात् 'परावरे यथारूपे' इत्यनेन यत्प्रार्थितं तद्दत्तमिति दृष्टातिरिक्तं आद्यन्तवत्ताज्ञानं भविष्यतीतिभावः ।

**यावानित्यत्र** 'द्वितीयमि'ति 'यथात्ममाये'तिश्लोकद्वयप्रार्थितं क्रीडाज्ञानम् ।
**यावन्ति रूपाणीति**, इदं यद्रूपेत्यस्यार्थकथनं न तु विग्रहवाक्यम् ।
२-९-३१ **एतदपि पूर्ववदिति** एतद्रूपगुणकर्मज्ञानमपि पूर्ववद्यथायथं रहस्यरूप-
मङ्गरूपञ्चेत्यर्थः । अत्र श्लोके प्रमाणतो यावत्त्वज्ञापनेन 'यदेकमव्यक्तमनन्तरूपमि'तिश्रुत्युक्तसर्वरूपत्वं स्फोरितम् । परिमाणतो यावत्त्वज्ञापनेन 'अणोरणीयान्महतो महीयान्' इत्यादिश्रावितः परिमाणविरोधो विरुद्धधर्माधारत्वेन परिहृतः स्फोरितः । **यथाभाव** इति कारणरूपतया शत्याद्यष्टाविंशतितत्त्वरूपता श्रौतकारणरूपता च स्फोरिता । यद्रूपगुणकर्मक इति तत्तत्कार्यरूपता बोधिता । सर्वत्रानुग्रहस्य कारणताबोधनेन 'यमेवैष वृणुत' इतिश्रुत्युक्तं समर्थितं ज्ञेयम्, तदेतदाहुः **एवं ज्ञानेत्यादि** ।

**अहमेवासमित्यत्र प्रार्थितमिति** । यथात्ममायायोगेनेतिद्वाभ्यां सृष्ट्यादिक्रीडा-
विषयकज्ञानपूर्वकशिक्षाकरणोक्त्या 'भगवच्छिक्षितं करवाणी'त्यनेन
२-९-३२ प्रार्थितमेतस्योत्तरञ्च प्रथमश्लोकेनैव सिद्ध्यतीति शेषाणां किं प्रयोजन-
मित्याशङ्कायां तेषां तात्पर्यमाहुः **अन्यथेत्यादि** । इदं द्वितीयस्य । स्वरूपत इत्यादिकं तृतीयस्य । अनुप्रवेशको जीव इत्यात्रानुप्रवेशतो जीवरूपमिति पाठः प्रतिभाति । इति ज्ञात्वेत्यादिकं तुरीयस्य । एवं मद्रूप इत्यादिकं पञ्चमस्येति ज्ञेयम् । तज्जलानितिहेतुं विस्तरेण वदतीति छान्दोग्ये शाण्डिल्यविद्यायां 'सर्वं खल्विदं ब्रह्म तज्जलानि'ति 'शान्त उपासीते'ति श्रावितं जगतो ब्रह्मात्मकत्वहेतुं सोपपत्तिकं कथयति । श्रुत्यर्थस्तु, खलु निश्चयेन इदं दृश्यमानं सर्वं (पक्षः) ब्रह्म इदं (साध्यं) तत्र



हेतुर्जलानिति, जायत इति जं, लीयत इति लं, अनीतीत्यन. जञ्च लञ्च अनं, यच्च तदन् च जलान्, तस्मिन् ब्रह्मणि जलान् तज्जलानिति हेतोः । 'शान्त उपासीत' ब्रह्मसमवेतत्वाज्जगद् ब्रह्मत्वेनानुसन्दध्यादिति, समवायश्च तादात्म्यमेव नामान्तरम् । अतिरिक्तपक्षेपि अनारोपितानागन्तुकरूपेणानुवृत्तिरेव. तत्स्वरूपमिति वैशेषिकप्रसिद्धाद्भिन्न एव भगवदात्मक इति न तर्कचरणविरोधः । अत्रैवकारद्वयादहमेवासमेवेतिवाक्यद्वयमग्रपदञ्चोभयत्र सम्बद्ध्यते पूर्ववृत्तान्तबोधकत्वादित्याशयेन तयोः प्रथमं व्याकुर्वन्ति सृष्टेरित्यादि । "एको नारायण आसी"दित्यादिश्रुतिद्वयं शाखान्तरीयमिदानीं प्रसिद्धोपनिषत्तु "एको (वै) नारायण आसीन्न ब्रह्मा न ईशान" इति ब्रह्मो(महो)पनिषदि पाठात् । अत्र प्रथमश्रुतावग्रेदंपदयोरभावेन सृष्टिपूर्वकालस्योपादानत्वस्य चास्फुटत्वाद् द्वितीयश्रुतिप्रदर्शनं तेन तथेत्यर्थः । नन्वत्रश्रुतावग्रपदेन कालस्योक्तत्वाद्धरितो रोहितादासीदित्यादावस्तेरुत्पत्त्यर्थकत्वस्यापि सिद्धत्वात्तस्य सर्वेभ्यः प्रथममुत्पत्तेरपि शक्यवचनत्वात् सृष्टिपूर्वकाले स्वमात्रसत्ताप्रतिज्ञा नोपपद्यत इति शङ्कायामाहुः **किञ्चेत्यादि** । **पूर्वमितीति** वक्ष्यमाणप्रकारेण । **मन्त्विति** असत्त्वं तु । ननु तदुभयसत्त्वास्तु न चैवकारविरोधः. अगत्याऽयोगव्यवच्छेदकत्वस्यैव तस्यादरणीयत्वादन्यथाऽग्रपदव्याकोपादिति शङ्कायामाहुः **अग्रे सृष्टेः पूर्वमिति** । अयमर्थः, अत्र श्रुतौ कालसत्ताविधानाङ्गीकारे वाक्यभेदापत्तिः । अनुवादाङ्गीकारे तस्य पुरोवादसापेक्षत्वेन तत्कल्पनस्यावश्यकतया तस्य तद्वक्तुश्च सत्तापत्त्या वाक्यार्थबाधप्रसक्तिर्विशिष्टविधाने च गौरवापत्तिरतस्तत्र शिष्यबोधनार्थमिदानीं प्रसिद्धकालोपरञ्जनेन तस्य वाक्यस्य प्रवृत्तिरित्यवश्यमादरणीयम् । तथा सति सृष्टेरक्षिकायामग्रपदमपि न कालवाचकम् । 'अग्रे गच्छ' 'अग्रे नगरी'त्यादौ देशविशेषेपि तत्प्रयोगात् । अतोवधारणानुरोधेनाग्रपदे पुरःस्फूर्तिकं विशेष्यांशं विहाय विशेषणीभूतस्य पूर्वत्वस्य वृत्तिमत्त्वाय सत एव विशेष्यत्वमवधारणीयम्, सप्तमी चाधिकरणे, तथा सति सृष्टेः पूर्वमधिकरणं केवलं सदित्यर्थो भवति । न चैतद्विवरणभूत 'एकमेवाद्वितीयमि'त्यग्रिमवाक्य एकपदा'देके मुख्यान्यकेवला' इतिकोशेन तत्र मुख्यार्थतया अपि वक्तुं शक्यत्वात्समाभ्यधिकराहित्यमेव तत्र विवक्षितमिति वाच्यमद्वितीयपदवैयर्थ्यापत्तेः, इतरसत्तानिषेधातिरिक्तस्य तदुक्तिप्रयोजनस्यालाभात् । (ऐतरेये)न'चात्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषदि'तिश्रुत्यन्तराद्व्यापारं कुर्वतोन्यस्य निषेधार्थमद्वितीयपदमिति वाच्यम्, तथा सति 'येनाश्रुतं श्रुतं भवती'त्यादिप्रतिज्ञाया 'यथा सोम्यैकेन मृत्पिण्डेने'त्यादिदृष्टान्तस्य चोपरोधप्रसङ्गात् । न चैवं धर्माभावप्रसङ्गः, स्वरूपधर्माणां

ब्रह्मात्मकत्वेन सत्त्वेऽप्यदोषादिति तदेतदभिसन्धायोक्तम् **अग्रे सृष्टेः पूर्वमि**त्यनवद्यम्। एतेन 'तज्जलानि'ति श्रुतावुपासनाशेषत्वेनाप्युक्तो हेतुर्मानान्तराविरोधाद्वस्तुतत्त्वसमर्पक इतिबोधितम्। ननु तथापि केवलब्रह्मसत्ता नोपपद्यते, 'असद्वे'त्यादिश्रुतिष्वसदादीनामपि तथाकथनादितिशङ्कायामाहुः **असद्वे**त्यादि। **पश्चा**दिति सृष्टिदशायाम्। **पूर्वमि**ति सृष्टिप्राक्काले। तथा च, तदानीमेतादृशरूपेणानवस्थितत्वप्रतिपादने घटस्य पूर्वं मृद्रूपेणेव जगतः पूर्वं सद्रूपेणैवावस्थितिः सिद्ध्यतीति तदानीं केवलब्रह्मसत्ता सूपपन्नेत्यर्थः। ननु श्रुतिबलाल्लोकसिद्धाऽसतः सत्तैव कुतो नाङ्गीक्रियते इत्यत्र आहुः **अन्यथे**त्यादि। लोकानुरोधेनास्य वाक्यस्यासतः सत्ताबोधकत्वे 'कुतस्तु खलु सौम्यैवं स्यात् कथमसतः सज्जायेते'ति श्रुतिविरोधः। कार्यस्य नियतावधिकत्वविरोधश्चेत्यर्थः। ननु कार्यस्य नियतावधिकत्वाय तत्तत्प्रागभावस्तत्राङ्गीकार्योऽतोऽसतः सत्ताङ्गीकारेऽप्यदोषः। 'कुतस्त्वि'त्यादिश्रुतिस्तु केवलवैनाशिकमतनिरासार्थेति न तस्या अपि विरोध इत्यत आहुः **नासत** इत्यादि। तथा च, तदानीं सर्वसत्ताङ्गीकारेऽधिकरणाभावात्कार्यप्रागभावस्याशक्यनिरूपणत्वादधिकरणसत्ताङ्गीकारे च 'सदेवे'ति श्रुतिविरोधाद् ब्रह्मण्येव तत्सत्ताङ्गीकार्या, तदाप्येतद्वाक्यविरोधो दुष्परिहर इत्यर्थः। वाक्यार्थस्तु, असतः पदार्थस्य भावः सत्ता न विद्यते, सतः पदार्थस्याभावः असत्ता न विद्यते, तत्र हेतुरुभयोरप्यनयोरसद्भावसद्भावयोरन्तः परिच्छेदो निष्कर्षस्तत्त्वदर्शिभिर्वास्तवरूपद्रष्टृभिर्दृष्टः साक्षात्कृत इति। ननु भाववृत्तसूक्ते 'नासदासी'दिति श्रुत्या सृष्टिपूर्वकाले सदसतोरुभयोरप्यभावबोधनादागतैवासतः सत्तेत्यत आहुः **नासदासीदि**त्यादि। तथा चात्रासच्छब्देन सूक्ष्मं कार्यं सच्छब्देन च स्थूलं कार्यमनूद्य, तदभाव उच्यत इत्येतस्यापि पूर्वतुल्यत्वात्तेनैवेदं दत्तोत्तरमित्यर्थः। विद्यारण्यैस्त्वसत्पदेनानुपाख्यं सत्पदेनात्मवदनिर्वाच्यमत्राङ्गीकृतम्। तथा च, तदभावबोधनादुभयविलक्षणमनिर्वाच्यमेवासीदिति तन्मतमित्यर्थः। तथापि, न कश्चिद्विशेषः, अग्रे च 'नासिद्रज' इति रजोगुणनिषेधः. नो व्योमापरो यदित्यनेन काणादादिप्रतिपन्नाकाशप्रतिषेधः, योस्याध्यक्षः परमे व्योमन्नित्यनेनाक्षरब्रह्मात्मकस्याकाशस्याग्रे वक्ष्यमाणत्वात्, 'ततः किमावरीव' इत्यादिना प्रकृतितत्त्वनिषेधः, ततोम्भःकिमासीदित्यादिना प्रलयोदकस्य सः, तदग्रिमे मन्त्रे 'न मृत्युरासीदि'त्यादिना मृत्यु–मृतकालज्ञानानां सः। तत 'आनीदवातमि'त्यादिना तस्यैकस्य सत्तामुक्त्वा तदितरसर्वसत्तानिषेधः क्रियते इति मन्त्रद्वयार्थः।

नन्वत्राम्भोनिषेधेऽप्यापो वेति संहितावाक्ये तत्स द्भाव उक्त इति तस्य विरोध



इत्यत आहुः **आपो वे**त्यादि। नन्वस्त्वेवं तथापि सृष्ट्यादौ प्रकृत्यभावो न वक्तुं शक्यः, गीताया'मव्यक्तादीनी'त्यनेन भगवता तत्सत्ताप्रतिपादनादव्यक्तपदस्य च प्रकृतिवाचकत्वादित्याशङ्कायामाहुः **अव्यक्ते**त्यादि। नन्वत्राव्यक्तपदेन ब्रह्मैवोच्यत इति कथं निश्चेयमित्यत आहुः **लीने**त्यादि। अत्र ह्यर्जुनविषादनिवारणाय जीवानां नित्यत्वमुच्यतेऽतोऽत्र भूतपदेन जीवा एवाभिप्रेताः, तेषाञ्चाव्यक्तता उत्पत्त्यनन्तरमेवोक्तरीत्या सिद्ध्यतीति विभागात्पूर्वं लीनत्वेनापि रूपेण न व्यक्ततेति तेषामव्यक्तादित्वम्। एवं सति भूतादिभूताव्यक्तत्वं न प्रकृतेः शक्यवचनम्, साङ्ख्यसिद्धान्ते प्रकृतिपुरुषयोरुभयोरप्यनादित्वोपगमात्। अतस्तदाद्यव्यक्तं ब्रह्मैवेत्यर्थः। नन्वेवं सति 'प्रकृतिं पुरुषञ्चे'ति वाक्यान्तरस्य का गतिरित्यत आहुः **अनेने**त्यादि। अनेनेति अव्यक्तपदार्थनिश्चायनेन। ननु भाववृत्तसूक्ते तृतीये मन्त्रे सृष्ट्यादौ तमःसत्तोच्यते, तच्च मायैव 'तमो वा इदमेकमेवाग्र आसीत्तत्परेणेरितं विषमत्वं प्रयाती'त्यादौ तन्निर्णयादिति कथं तदानीं केवलब्रह्मसत्तासिद्धिरित्यत आहुः **तम आसीदि**त्यादि। कथमित्याकाङ्क्षायामाहुः **सर्वत** इत्यादि। अत्र हि पूर्वमन्त्रे आनीदवातं स्वधया तदेकं तस्माद्धान्यन्नपरः किञ्चनासेत्यत्र तच्छब्देन यदुक्तं तत्स्वरूपमत्रोच्यते तम इत्यादिना तस्मात्तथेत्यर्थः। नन्वेवं लक्षणापेक्षया शक्यार्थग्रहणमेव ज्याय इत्यत आहुः **न प्रकृतिरि**त्यादि। श्रुत्यर्थस्तु किं कार्यमावरीवः आवृणुयात् कुहकस्य शर्मन् कस्य सुखार्थमिति। तथा च, प्रकृतिसत्तानिषेधस्य पूर्वमन्त्र एव निषिद्धत्वान्नात्र तमःशब्दस्य पुरःस्फूर्त्तिकोर्थो गृहीतुं शक्योतो लक्षणैव ज्यायसीत्यर्थः। न च तमसा गूढमग्रे इत्यग्रिमविरोधः शङ्क्यः। आसमन्तादिदं नामरूपाभ्यां व्याकृतं जगद् अग्रे सृष्टेः पूर्वमप्रकेतमप्रज्ञायमानं सलिलं कारणेनाविभक्ततमसा पूर्वोक्तरूपेण ब्रह्मणा गूढमासीदिति क्रियावृत्त्यान्वयेन तदभावादिति। एवं कतिपयानि वाक्यानि विचार्य तद्वदन्येषां गतिमाहुः **एवमन्यानी**त्यादि। किं तदानीं तस्मै सहोवाच न सन्नासन्न सदसदिति, 'तमो वा इदमग्र आसीत्परेणेरितं विषमत्वं प्रयातीति यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासन् शिव एव केवल' इत्यादीनि सौबालमैत्रायणीयश्वेताश्वतरीयाणि एवं जातीयकान्यन्यान्यपि सदसद्विलक्षणतमोनियामकशिवादिप्रकारेण बोधयन्ति तथा भवतीत्यर्थः। एवं वाक्यमात्रगतिमुक्त्वा सिद्धमाहुः **अत एवे**त्यादि। एतेनैव विशिष्टाद्वैतवादोऽप्यनादृत इतिबोधितम्। ननु पश्चात्प्रतीयमानानां प्रतियोगिनां वस्तुत्वात्प्रागभावात्यन्ताभावान्योन्याभावानां पूर्वं सत्वादितरनिषेधः कथं सङ्गच्छत इत्यत आहुः **अभावा** इत्यादि। एवं सृष्टिप्राक्काले केवलस्वसत्तां प्रतिपाद्य सृष्टिकाले

नानापदार्थसत्त्वेपि केवलस्यैव सत्तां प्रतिपादयतीत्याहुः किञ्चेत्यादि । तथा च, भेदप्रतीतिरेवासङ्गता । पदार्थास्तु भगवद्रूपा एव सन्तीति तदानीमपि केवलस्येति मुख्यो ब्रह्मवादः इत्यर्थः । एवं व्याख्यानेन सर्वं ब्रह्मवादं व्युत्पाद्य स्थूणाखनननन्यायेन तं दृढीकर्तुं पूर्वपक्षमुद्भावयन्ति नन्वित्यादि, "अत्र न प्रमाण"मित्यन्तेन । पश्चात्कैवल्यस्यासङ्गतत्वं बोधितम् दोषा इत्यन्तेन साक्षात्परिणामस्यासङ्गतत्वमुक्तम् । सर्वशब्द इति 'सर्वं खल्विदं ब्रह्मे'तिश्रुतिस्थे सर्वशब्दे हिताकरणादीतिसर्वरूपत्वेपि जीवानां क्लेशदाने हिताकरणवैषम्यनैर्घृण्यप्रसङ्गः । पुरुषोत्तमत्वाभाव इति, सर्वस्य ब्रह्मरूपत्वेनैकरूप्ये उच्चनीचभावाभावात्तथेत्यर्थः ।

अत्र कारिकाभिः समादधते, मैवं प्रत्यक्षेत्यादि, परीक्षणीयमण्यादिवत्प्रत्यक्षानिर्णीते विषये परीक्षकवाक्यसिद्धपदार्थवत्, श्रुतिबोधिताः परस्परं विरुद्धा विकारित्वाविकारित्वैजत्वानेजत्वादयः पदार्था एकस्मिन्नेव धर्मिणि मन्तव्याः । हि यतो हेतोस्ते एकशेषं एकशेषत्वं एकस्य मुख्यत्वेनापरस्योपचरितत्वम् अपोद्यापवादकभावं वा न भजन्ति, श्रुतिबोधितत्वाच्च प्रयान्ति । तत्र हेतुः, उभयोरित्यादि । अत्रेति, गुणप्रधानभावे अपोद्यापवादकभावे वा कः नियामकः स्यात् ? वेदादुत्कृष्टस्य प्रमाणान्तरस्याभावाच्च कश्चिदपि तन्नियामकोऽतो वेदादेव ब्रह्मणो विरुद्धधर्माश्रयत्वसिद्ध्या नैकतरस्य गौणत्वमपोद्यत्वं वा सुवचमित्यर्थः । नन्विदमपि बुद्ध्या विचार्यैवोच्यत इति वेदार्थविचारे विचारकबुद्धिरेव नियामिका, अतस्तयैवैकतरस्य गौणत्वमपोद्यत्वं वास्त्विति चेत्तत्राहुः विचारकाणामित्यादि । श्रुतेरिति ल्यब्लोपे पञ्चमी, तथा चाऽऽस्तिकविचारकाणां बुद्धिस्तु सदा सर्वकालं श्रुतिं प्राप्योजीव्यसहिता भवति । अतो विरुद्धार्थद्वयप्रतिपादकमपि श्रुतिद्वयं पश्यन्ती(बुद्धिः) उपजीव्यत्वस्योभयत्राप्यविशिष्टत्वात्कथमेकतरार्थस्य गौणत्वमपोद्यत्वं वा स्वतः कल्पयिष्यति, कल्पयन्ती वा उपजीव्यविरोधेन स्वस्मिन् अप्रामाणिकत्वं कुतो न धास्यति, अतः सापि न शक्ता नियामिकेति यथाश्रुतं विरुद्धधर्माश्रयत्वमेवाङ्गीकार्यमित्यर्थः । ननु श्रुता'वुदिते जुहोती'ति विधाय तत्प्रशंसार्थमनुदितहोमो निन्द्यते । तथा 'अनुदिते जुहोती'त्यनुदितहोमं विधायोदितहोमो निन्द्यते, तत्रैकतरबाधस्योभयकरणस्य चाशक्यत्वे प्राप्ते तत्तच्छाखीयपरत्वेन यथाभयं व्यवस्थाप्यते । तथात्रैकस्योपासनापरत्वमितरस्य ज्ञानपरत्वमिति वक्तव्यम् । तत्रापि कस्य किं परत्वमित्यपेक्षायाम् उपासनानां तत्तद्धर्मपुरस्कारेण विधानाद्धर्माणां तत्परत्वम् । ज्ञाने तु 'एकमेवाद्वयं ब्रह्म, नेह नानास्ति किञ्चन' मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती'ति



निन्दया निषेधस्य ज्ञानपरत्वमित्यास्थेयम् । न चैवमुभयलिङ्गत्वसिद्धिः, कल्पितधर्मैरप्युपासनायाः सिद्धेः, 'वाचं धेनुमुपासीते'त्यादौ तथानिर्णयात् । ज्ञानस्य तु न तथासिद्धेः । 'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते, किं तेन न कृतं पापं चौरेणात्मापहारिणे'तिनिन्दाश्रवणात् । अतः सोपजीव्याया विचारकबुद्धेर्नियामकत्वाद्विरुद्धधर्माश्रयत्वं न साधीय इत्यत आहुः क्रियेत्यादि । क्रिया मानसी ध्यानरूपा उपासना । विद्या ज्ञानम्, धर्मतन्निषेधनिरूपकश्रुत्योः यथायथं तत्तत्परत्वे तु विकल्पे प्राप्ते नैकवाक्यता, ब्रह्मणोऽमुख्यत्वात् क्रियाविद्ययोरेव मुख्यतया प्रतिपाद्यत्वे उदितहोमानुदितहोमवाचकयोरिवार्थभेदेन विभागे साकाङ्क्षत्वाभावेन च भिन्नवाक्यत्वं स्यात् । तथा सति 'सर्वे वेदा यत्पदमामनन्ति' सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादित्यादिश्रुतिसूत्रोक्तं सर्वासां श्रुतीनां ब्रह्मप्रतिपादकत्वैकवाक्यं बाध्येतेत्यर्थः। ननु नास्माभिर्ज्ञानोपासनयोर्मुख्यतया प्रतिपाद्यमङ्गीक्रियते, अपि तु ब्रह्मणः । अतोऽध्यारोपापवादसङ्गत्या सुखेनैकवाक्यत्वसिद्धिरित्यत आहुः दुष्ट इत्यादि । अयमर्थः, उपासनार्थं धर्माणां कल्पनोपदेशत्वं वदता तेषां क्वचिद्वास्तवत्वमास्थेयम् । अन्यथा तेषां कल्पनाया अप्ययोगात् । आरोप्यमाणस्य धर्मस्यैकत्र सत एवान्यत्राऽऽरोपस्य मञ्चादिविद्यायां निर्णयात् । एवं सत्येषां वास्तवत्वमुपाधावास्थेयं, तत्रोपाधेः सत्त्वे द्वैतापत्तिः । असत्त्वे तु धर्माणां एवाभावादारोपासम्भवेन कल्पनोपदेशत्वस्यैवासम्भव इति मुख्यतया ब्रह्मणः प्रतिपाद्यत्वे तस्याः सङ्गतेरशक्यवचनत्वाद्वाक्यभेदो दुर्वारः । अतो यथा 'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाती'तिवाक्यद्वयबलादष्टदोषदुष्टोपि विकल्पाख्यः पक्ष आश्रीयते । तथात्र श्रुतिद्वयबलादेवोभयलिङ्गत्वमास्थेयम् । तथा च, यथा हस्तादयः पुरुषात् पृथक्भूता अपि पुरुषात्मकास्तथा जगद् ब्रह्मणः सकाशाद् भिन्नतया प्रतीयमानमपि तदात्मकम्, भगवान् जगद्रूपोपि तद्भिन्नः पुरुषोत्तमः । किं बहुना यथैव सर्वश्रुत्यविरोधस्तथैव सूक्ष्मेक्षिकयात्र विचारणं कर्तव्यम्, नत्वेकतरबाधेन । अतः अस्थूलादीनां अकर्ता अभोक्तेत्यादीनां धर्मनिषेधमुखेनैव 'सर्वतः पाणिपादन्तदि'त्यादीनां 'स विश्वविदात्मयोनिरि'त्यादीनां धर्मविधिमुखेनैव ब्रह्मस्वरूपबोधनायैव प्रवृत्ततया तुल्यबलत्वात् तयोरर्थबोधसौकर्यार्थं ब्रह्मणि सर्वरूपसमर्थत्वं सर्वरूपत्वं सर्वकरणसमर्थत्वं च गीयते । उभयलिङ्गाधिकरणेन व्यासचरणैः प्रतिपाद्यते । तेन श्रुतिसूत्रादिबलात् सर्वाविरोधार्थं विरुद्धधर्माश्रयत्वमेवादरणीयमित्यर्थः । ननु ब्रह्मणः सर्वरूपत्वं न युक्तम्, सर्वस्मिन् देशकालभेदेनाप्रतीतेः, ब्रह्मणस्तु सच्चिदानन्दात्मकत्वेन ज्ञानैकघनत्वेन

सदैकरूपत्वात् । अतो न पूर्वोक्तोपपत्तिर्युज्यत इत्यत आहुः अन्यथेत्यादि । कर्त्रीति । माया, 'स्वव्यापारे हि कर्तृत्वं सर्वत्रैवास्ति कारक' इतिन्यायात्कर्तृत्वं तस्याः । तथा चानेकरसत्वेऽप्येकरसत्वस्याबाधाद्युक्तैवोपपत्तिरित्यर्थः । ननु प्रतीतिविरुद्धस्यापि शब्दादङ्गीकरणे नियामकाभावात्कथमाश्वास इत्यत आहुः विरुद्धपक्षा इत्यादि । अत्र ब्रह्मणि सर्वेषु अवतारेषु प्रतीयमानाः मत्स्यस्यान्ह्या योजनशतवृद्धिर्वराहस्य क्षणेन पर्वताकारत्वं, सप्तवर्षस्य गोवर्द्धनोद्धरणम्, दामोदरलीलायां स्वल्पस्यापि व्यापकत्वम्, इत्यादयो विरुद्धपक्षास्तत्कालीनैर्द्दृष्टाः, इदानीमपि श्रुत्यादिप्रसिद्धाः, अतोऽत्रैव ब्रह्मण्येव सर्वं शोभते । तथा च, प्रत्यक्षादेरेव नियामकत्वं शङ्काढ्यमानिना त्वयादरणीयमित्यर्थः । इदं यथा तथा विद्वन्मण्डनाद्विशिष्यावधेयम् । एवं प्रपञ्चदशायां ब्रह्मकैवल्यं साधितम् । तेन भेदवादः सर्वथा नाभिमतो भगवत इति बोधितम् । अतः परं प्रलयदशायां तदाहुः य इत्यादि । एतेन पृथिव्यप्सु प्रलीयते, आपस्तेजसि विलीयन्ते, तेजो वायौ प्रलीयते, वायुराकाशे विलीयते, आकाशमिन्द्रियेष्विन्द्रियाणि तन्मात्रेषु, तन्मात्राणि भूतादौ विलीयन्ते, भूतादिर्महति विलीयते, महान् अव्यक्ते विलीयते, अव्यक्तमक्षरे विलीयते, अक्षरं तमसि विलीयते, तम एकीभवति परस्मिन्, परस्तान्नासन्नासन्नासदसदित्येतन्निर्वाणमनुशासनमिति वेदानुशासनमि'ति सौबालवाक्यमुपन्यस्य पृथिव्याद्यक्षरान्तानां स्वस्वकारणे लयं सर्वकारणभूतस्य तमसः परस्मिन्नामरूपविभागानर्हत्वलक्षणमेकीभावमङ्गीकुर्वन्तो विशिष्टाद्वैतवादिनोऽपि निवारिता इति बोधितम् । लिङ्क्ष्लेषण इति धात्वर्थविचारणे लयस्य श्लेषरूपतया शुद्धोदके शुद्धोदकक्षेप इव नामरूपविभागानर्हत्व एव पर्यवसानादक्षरान्तानां स्वकारणेन सह तथात्वं तमसस्त्वेकीभावकथनात् *सकारणस्वरूपाभेद इत्येतस्यैवार्थस्य स्फुटीभावात् । अत एवोपसंहारे 'परस्तान्न सन्नासन्न सदसदि'त्युपक्रमोक्तरूपतैव परामृश्यते । तस्मादयमेव मुख्यो ब्रह्मवाद इति सर्वं सुस्थम् ।

ऋतेऽर्थमित्यत्र, एवं तज्जलानित्यादि । एवं पूर्वार्द्धेन जननाधारत्वस्य
तृतीयेनाननाधारत्वस्य तुरीयेण लयाधारत्वस्य स्फुटीकरणात्तज्जला-
२-९-३३ निति हेतुं सम्यग्बोधयित्वा, तेनात्मरूपं प्रमेयं निर्द्धार्य, एवं सर्वस्य
ब्रह्मस्वरूपपरत्वे गुरुशिष्यभावाभावात् साधनफलभावाभावाच्च
प्रमाणवैयर्थ्यमाशङ्क्य, बुद्ध्यादिशोधनार्थं यज्ञादिनिरूपकः प्रापञ्चिकत्याजनाय

* 'स्वकारण' पाठः ।



वैराग्यनिरूपको यः प्रमाणभूतो वेदः, तस्य सर्वत्रात्मबुद्धौ बुद्धिशुद्धिवैराग्ययोः प्रयोजनाभावाद्वैयर्थ्यमाशङ्क्य, प्रवृत्तिसङ्कोचपरत्वात् गुणदोषविषयत्वाच्च बहु स्यां प्रजायेये'तीच्छायाः स्वैकात्म्यस्य स्वोत्कर्षस्य च तिरोधानाज्जीवानां प्रपञ्चासक्तया, तत्र रागतः प्रवृत्तावनिर्मोक्षे प्रसक्ते 'लोके व्यवायामिषमद्यसेवे'ति श्लोकोक्तप्रकारेण पूर्वकाण्डस्य जीवप्रवृत्तिसङ्कोचार्थत्वात्तत ईषद्वैराग्योन्मुखत्वसम्पत्तावुत्तरकाण्डस्य प्रवृत्तिनिवृत्तिधर्मयोस्तत्फलयोश्च प्रातिलोम्येन गुणदोषविषयत्वात् । सापि मायाकृताऽऽसक्तिरपि एका वैराग्योत्पादनेन प्रमाणसार्थकीकरणार्था भगवल्लीलेतिहेतोर्मायां प्रमाणनिवर्त्यां भगवच्छक्तिमुपोद्घातेन वर्णयतीत्यर्थः । अन्यथाप्रतिभासत इति तद्वस्तुभिन्नवस्तुतया प्रतिभासते । ननु सा जीवशक्तिस्तस्य मुक्तौ स्वस्याभिमानिशून्यता स्यादिति तदभावार्थं जीवव्यामोहस्तस्याः कार्यमितियुक्तम् । परन्तु प्रपञ्चे भेदभ्रमस्य प्रयोजनाभावादुपकरणाभावाच्च न तस्याः कार्यमिति भेदज्ञानस्य भ्रमत्वाभावात्पदार्था एवान्यथेत्यत आहुः सा हीत्यादि । तथा च, जगतो ब्रह्मांशत्वस्फूर्तौ तद्विहाय ब्रह्मार्थं जीवः प्रयतेत, तदा न व्यामुह्येतेत्यतस्तदर्थं तत्सम्बन्धिनोऽर्थान्मोहयति तेन तथेति पदार्था न तथेत्यर्थः । नन्वस्त्वेवमन्यथाभानम्, तथापि प्रमाणस्य कथं सार्थक्यमत आहुः बुद्ध्यर्थमित्यादि । तथा च, बुद्धिनैर्मल्यार्थं प्रमाणतदर्थयोरुपयोगात्सार्थक्यमित्यर्थः । ननु प्रमाणैरेव नैर्मल्यसिद्धौ किं साधनैरित्यत आहुः कानीत्यादि । बुद्धिजनकदोषनिवर्त्तकानीति, अन्तःकरणबहिःकरणदोषनिवारकाणि । तथा च, दोषनिवृत्त्यर्थं गुणाधानार्थं च यथायथमुपयोगान्न कस्याप्यानर्थक्यमित्यर्थः । एवं तात्पर्यं सङ्गृह्य पद्यं व्याकुर्वते माया चेत्यादि । इतीति । उक्तप्रकारको द्विधाभ्रमो यस्मान्मायाकृतः । ननु वस्त्वेव तथास्त्विति सर्वं यदि ब्रह्म स्यादस्मद्दृग्गोचरो न स्यादत एवमतो नैवं. किन्तु मायिकमेवास्त्वित्यर्थः । वादिभिरिति । 'इन्द्रो मायाभिः पुरुरूप ईयते, अनृतापिधानाः, वाचारम्भणं विकारः, मायां तु प्रकृतिं विद्यादि'त्यादिश्रुत्यनुसारिभिर्वादिभिः कुतो न पर्यवस्यतीत्यत आहुः प्रमाणेत्यादि । न चोपासनार्थमेव सर्वस्य ब्रह्मत्वमत्रोच्यत इति न तच्छास्त्रमितिवाच्यम्, हेतूक्तिवैयर्थ्यापत्तेः । तां विनापि विधानमात्रेणोपासनासिद्धेरप्रत्यूहत्वात् । 'इदं सर्वं यदयमात्मे'ति, 'स वै सर्वमिदं जगत्'(स)सभूतं स भव्यमि'ति श्रुत्यन्तराच्च न 'चेन्द्रो मायाभिरि'त्यादिश्रुतिविरोधः शङ्कनीयः । आद्ये बहुत्ववैशिष्ट्येन मायापदादविद्याया गृहीतुमशक्यत्वात्पुरुरूपज्ञानकरणतयोल्लेखाच्चेन्द्रियवृत्तीनामेव तत्र ग्राह्यत्वात् मायया बहुभवनस्याशक्यवचनत्वात् । किञ्च, मायया पुरुरूपभवने

विवक्षिते ऋक्पूर्वार्द्धे एव मायापदमेकवचनान्तं वदेत् । न च समभिव्याहारलभ्योयमर्थ इति वाच्यमेतस्य पूर्वोक्तानुवादत्वेन पुरोवादवैलक्षण्यस्याशक्यवचनत्वात् । न च तदर्थनिर्द्धारार्थमेवायं समभिव्याहार इति वाच्यम्, विनिगमकाभावात् । किञ्चेदं वाक्यं मधुब्राह्मणस्थम्, तत्र च मैत्रेयीब्राह्मणोक्तस्यात्मनः पृथिव्यादिषु विद्यमानत्वममृतत्वं ब्रह्मत्वं सर्वात्मकत्वं चोक्त्वा ततः 'पुरश्चक्रे द्विपदः' इत्यादिना पुरां करणं तासु प्रवेशं सर्वस्य तत्संवृतत्वञ्चोवाच । तेन प्राप्ते भेदे 'सर्वं समाप्नोषि ततोसि सर्वं' इति च व्याप्तिकृता गौणी सर्वात्मकता भविष्यतीति शङ्कावारणाय 'रूपं रूपमि'तिमन्त्रः पठ्यते । अयं वै हर योयं वै दश च सहस्राणि च बहूनि चानन्तानि चे'ति विव्रीयते च । ततो यस्यैवं रूपतात्र विवृता, ब्राह्मणोपक्रमे चोक्ता, तस्यैव *तदेतद् ब्रह्मापूर्वमनपरमन्तरमबाह्यमित्यनेन स्वरूपमुक्त्वाऽ'यमात्मा ब्रह्म सर्वानुभूरि'त्यनुशासनमुपसंहृतम् । एवञ्चात्र विचारे उपक्रमोपसंहारविवरणेषु मायां विनैवात्मनः सर्वरूपत्वाभ्यासात्, स्वरूपकथने पूर्वत्वादिनिषेधेन प्राप्त(प्रश्न)स्य शून्यवादभ्रमस्य वारणाय सर्वानुभूरिति सर्वानुभवकर्तृत्वस्वरूपोपपत्तिकथनाच्च भ्रमरहितस्यात्मनः सर्वरूपता श्रुत्यन्तरोक्तस्वेच्छाकृतैवेति विनिगमनोत्पत्तेरपि, मायापदेनेन्द्रियवृत्तिरेव तत्र ग्राह्या,'स्यान्माया शाम्बरी क्रिया(मेदो)दम्भो बुद्धिश्चे'त्यनेकार्थकोशेन बुद्धिवृत्तौ मायापदस्य शक्तेरेव ग्रहणादतोस्मदिन्द्रियवृत्तिभिरिन्द्रो बहुरूपो ज्ञायते इत्येव तत्रार्थ इति न तद्विरोधः । एव'मनृतापिधाना' इत्यपि छान्दोग्ये दहरविदः कामानुपक्रम्य पठितम् । 'त एते सत्याः कामा अनृतापिधानास्तेषां स[illegible]ाम्(सता)मनृतमपिधानमिति, तत्राप्यनृतशब्दस्तावन्न मिथ्यावचनः, किन्तु, तैत्तरीये 'सोऽकामयत बहु स्यामि'ति बहुभवनमुपक्रम्य 'सत्यञ्चानृतञ्च सत्यमभवत्' 'यदिदं किं च तत्सत्यमित्याचक्षत' इत्युपसंहारादनृतशब्दवाच्यं भगवतोरूपान्तरं यदुक्तं तद्वचनः,(अ)पिधानाल्लिङ्गात् मिथ्याभूतेनापिधानासम्भवात् । शुक्तिरजतादावपि बुद्धिवृत्तेः सत्याया एव रजतरूपेणान्तराख्यानादन्तराबुद्धेरेव पिधानं न तु शुक्तेः । अन्यथा प्रतियोगिभेदेन तत्र युगपत्भ्रमप्रमानुपपत्तेः । प्रकृते तु कामपदेन 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति, तेन पितृलोकेन सम्पन्नो महीयत' इत्यादिभिरुक्तानां काम्यानामर्थानां सङ्ग्रहात्तेषां पिधानं शरीरादिना लौकिकेनार्थेनाभिप्रेतं न त्वनिर्वचनीयेन, संस्कारप्राबल्यादेव ख्यानोपपत्तावनिर्वचनीयतत्कल्पनस्य युक्तिबाधितत्वात् । तादृशत्रिधावतः ख्यानासम्भवाच्च

* तदेव ब्रह्म पाठः



सम्भवे कामानामपि सत्यत्वासम्भवेन श्रुतेरेव व्याकोपाच्चेति न तस्यामनृतशब्देन मायिकमभिप्रेतमतो न तस्या अपि विरोधः । 'वाचारम्भणं विकार' इति वाक्यं तु व्यासचरणैरेव विचारितम् 'तदनन्यत्वमारम्भणशब्दादिभ्य' इति । तत्र च विकाराणां घटकुड्यशरावादीनामाकृतिविशेषदर्शनेन वाचा नाममात्रेणैवारब्धत्वाद्विकारो नामधेयम् न तु रूपमिति, रूपस्य कारणाभिन्नत्वात्, कारणभूतमृत्तिकारूपेणैव सत्यत्वमभिप्रेयते एकविज्ञानेन सर्वज्ञानार्थम् । तथासति ज्ञानेन विकल्पबुद्धेरेव बाधः सिद्ध्यतु, न तु कार्यस्वरूपस्यापि । यत्तु 'सूत्रे भेदव्यासेध एव क्रियते न त्वभेदो बोध्यते' इति भामतीकारः, तदसङ्गतमेव, प्रमाणाभावात् । व्यासेधे च भेदे अभेद एव पर्यवसानाच्चेति, तत्रापि न मायिकताभिप्रेयते इति न तस्या अपि विरोधः । 'मायां तु प्रकृतिं विद्या'दि'ति श्वेताश्वतरीयं तु मायायाः प्रकृतित्वमात्रं वदति, न तस्या न वा जगतो मायिकत्वम् । न च ब्रह्मभिन्नत्वात्तथात्वं शङ्क्यम्, 'पूर्ववद्वे'तिपूर्वोक्तन्यायेन ब्रह्मण एव तद्रूपेण भवने भेदस्याभावात् । 'प्रकृतिर्यस्योपादानमाधारः पुरुषः परः । सतोभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वह'मित्यग्रे वक्ष्यमाणत्वाच्च । अतो न तस्या अपि विरोध इति । अतः सर्वत्र वेदे जगतो ब्रह्मतादात्म्येन ब्रह्माभेदस्यैवाभिप्रेतत्वाद्विचारे न पर्यवस्यतीति जगतो मायिकत्वं नाद्रियत इत्यर्थः । ननु तर्हि प्रतीतेः का गतिरित्याकाङ्क्षायां युक्त्यन्तरमाहुः ब्रह्मेत्यादि । तथेति परिणतसर्वभूतब्रह्माभेदविषया, 'तदिदमप्येतर्हि य एवं वेदे'त्यादिश्रुतेः । तथा च. न प्रतीतिविरोध इत्यर्थः । ननु परप्रतीत्यपेक्षया स्वप्रतीतेरभ्यर्हितत्वात्तथा नाङ्गीक्रियत इति चेत्तत्राहुः भ्रान्तेत्यादि । तथा च, तस्या अभ्यर्हितत्वमप्रयोजकमित्यर्थः । कथं तथेत्याकाङ्क्षायां तस्या अर्थनियामकत्वे बाधकं तर्कमाहुः अन्यथेत्यादि । ननु तस्या अर्थानियामकत्वेपि जगतो मायिकत्वसिद्धिः । तथा हि, भ्रमदृष्टिर्यद्यत्यन्ताऽसदवगाहिनी स्यात् खपुष्पमप्यवगाहेत, यदि सदवगाहिनी स्यात् पदार्था ह्यन्यथा स्युः, यतो नैवमतो नैवम्, यदि मायिकावगाहिन्यपि न स्यान्निर्विषया स्यात्, अस्ति तु सविषया, पूर्वोक्तोभयानवगाहिनी च, तस्मान्मायिकविषयैव, यस्मादेवं तस्यास्तस्माद्भ्रमविषयो मायिक इति लोकसिद्धभ्रमविषयस्य मायिकत्वसिद्धौ प्रकृतेपि श्रुतिविरुद्धावगाहिन्या अस्मदृष्टेर्भ्रान्तत्वात्तद्विषयस्य जगतो मायिकत्वं सेत्स्यतीत्यत आहुः अत इत्यादि । अत उक्ततर्कात्, विषये भ्रमदृष्टिविषयकोटौ, काचिद्विषयता विषयासम्बद्धोपि सम्बद्धत्वेन भासमानः कश्चित्पदार्थः स्वीकार्यः । तत्र हेतुर्यथेत्यादि । ननु दोष-

वशेनान्यथाख्यानादिसम्भवे किं विषयताङ्गीकारेणेत्यत आहुः **अन्यथेत्यादि** । तथा च, दोषो हि ख्याने सामग्री, न तु पदार्थान्यथात्वे, यदि तत्रापि दोषस्तथा स्यात्तदा पदार्थानां वास्तवान्यथाभावाद्भ्रम एवोच्छिद्येत, अतः सावश्यकीत्यर्थः । एवं विषयतां साधयित्वा प्रकृते भ्रमसामग्रीमाहुः **अतोन्यत्रेत्यादि** । तथा च, दृष्टिविषययोरन्तराले विषयतासमानयनमेव भ्रमसामग्रीरित्यर्थः । सिद्धमाहुः **अत** इत्याहि । एवं चाक्षुषभ्रमे सामग्रीं व्युत्पाद्य तां मानसभ्रमेप्यतिदिशन्ति **एवमित्यादि** । तेन यत्सिद्धं तदाहुः **विषयता मायाजन्या विषयो भगवानिति** । ननु यदि व्यत्याससामग्री, तदा पदार्थस्य तत्रागतत्वाद्भ्रमस्योच्छेदस्तुल्य इत्यत आहुः **मायायामित्यादि** । तथा च, मायिकमेव समानयति न सत्यमतो न भ्रमोच्छेद इत्यर्थः । ननु तादृशेनावरणासम्भवाद्विक्षेपस्याप्यभावे कथं भ्रमसम्भव इत्यत आहुः **तदपीत्यादि** । तथा च, शक्तेरावरकत्वात् कार्यस्य च विक्षेपकत्वात्ताभ्यां बुद्धिव्यामोहे भ्रम इत्यर्थः। **चिद्विलासत्वादिति** चिद्धर्मत्वात् । तथा च, यथा लोके चाक्षुषभ्रमस्थले दृष्ट्या विषयासम्बन्धतया विषयतानुपलम्भेपि तदनुग्राहिकाया बुद्धेरदुष्टत्वात्तया भ्रमणस्यासम्बद्धत्वनिश्चयस्तथात्वबुद्धिभ्रमे तदनुग्राहकेण विचारनिर्णीतार्थेन शास्त्रेण उत्पत्तिनाशमायिकत्वादीनां प्रपञ्चासम्बद्धतया निश्चय इति न जगतो मायिकत्वमित्यर्थः । नन्वासां प्रतीतीनामग्रे बाधाभावात्कथं भ्रमत्वमित्यत आहुः **यावदित्यादि** । तथा च, ब्रह्मभावोत्तरं बाधात् भ्रमत्वनिश्चय इत्यर्थः । एवं कालविभागेपि हेतुमाहुः **सा हीत्यादि** । एवं श्रुतितो लोकतो ब्रह्मवित्प्रतीतेश्च विरुद्धत्वाद्भ्रान्तप्रतीतिमात्रेण तथाभ्रान्तस्य मायिकत्वादिना विचारे पर्यवसानाभावान्न जगतो मायिकत्वम्, किन्तु, विषयकोटिविभागेन तज्जनितं ज्ञानमेव तथेत्याहुः **अत** इत्यादि । इमं न्यायं विषयान्तरेप्यतिदिशन्ति **एवमित्यादि** । **विद्यमानमिति** ब्रह्मतादात्म्यम् । **अविद्यमानमिति** भेददृन्यादिकम् । अत्र भेदवादिनः प्रत्यवतिष्ठन्ते **नन्वित्यादि** । समाधिं व्याकुर्वते **यस्मादित्यादि** । **तामिति** उक्तप्रकारकभ्रमहेतुम् । ननु मायाया भ्रमहेतुत्वे किं मानमित्याकाङ्क्षायामाहुः **न हीत्यादि** । तथा च, प्रतीतिनियामकत्वेन यो दोषः स्वीक्रियते स साक्षात्परम्परया यथाकथञ्चिन्मायाजन्य इति तां विना भ्रमानिर्वाहात्तदन्यथानुपपत्तिरेव मानमित्यर्थः । ननु सार्वजनीनप्रतीतिविषयस्य भेदस्य कथं विषयतारूपत्वमित्यत आहुः **तत्रेत्यादि** । **विषयतापीति**, भेदरूपा विषयतापि । तथा च, दर्शनमात्रानुरोधेन जगतो भिन्नत्वं न कल्पयितुं शक्यमिति श्रुत्या ब्रह्मवित्प्रतीत्या च जगत आत्मनश्च ब्रह्मात्मकत्वे



निश्चिते यस्तत्र तदप्रकाशोऽविद्यमानस्य वस्तुभेदस्य च प्रकाशस्ताभ्यां लक्षणरूपाभ्यां कार्याभ्यां सैवाङ्गीक्रियतेऽतो जगतो न ब्रह्मणः सकाशात्परमार्थतो भेद इत्यर्थः । नन्वाभासविषयता मायया जन्यता इत्यसङ्गतम्, न हि आभासो मायया जन्यते, किन्त्वभिन्ने भेदबुद्धिमात्रमुत्पाद्यते इति ज्ञानस्यैव मायिकत्वम्, न तु विषयस्यापि, तस्य वस्तुत एवासत्त्वादिति शङ्कायामाहुः **बुद्धिरित्यस्यादि** । **अन्यथेति**, बुद्धित्वेनास्या मायिकत्वे । तथा चावच्छेदेन मायिकत्वेऽनिर्मोक्षादिप्रसङ्गादेतस्या एव मायिकत्वस्य विषयद्वारैव सम्भवादुभयोस्तथात्वाङ्गीकारेऽध्यासद्वयकल्पनापत्तिगौरवात्तदभावाय विषयताया एव तथात्वं युक्तमित्यर्थः । एवं विषयतां साधयित्वा तस्याः प्रकारद्वयमाहुः **सा चेत्यादि** । अत्र पुनः प्रत्यवतिष्ठते **नन्वित्यादि** । तथा चोक्तप्रकारे विचारिते ज्ञानाध्यासो न वक्तुं शक्यः, मायायाः पदार्थजनकत्वस्य क्वाप्यसिद्धत्वादर्थाध्यासोपि न वक्तुं शक्यः (तथासति रूपात्यन्तरं वा जगतो वस्तुतो भिन्नत्वं वाङ्गीकार्यमित्यर्थः) । मायायाः पदार्थजनकत्वं व्युत्पादयन्ति **यथान्धकार इत्यादि** । नन्वभावस्य पदार्थाधिकरणत्वं न क्वापि दृष्टमिति शङ्कायामाहुः **यत्रेत्यादि** । तथा स नाधिकरणत्वेनास्माभिरिष्यतेऽपि तु सहकारित्वेनातो न दोष इत्यर्थः । ननु तेजोभाववत्यधिकरणे तमो वक्तुं शक्यम्, तथा सति पेचुकबिडालादीनां तच्चाक्षुषापत्तेः । न च जायते एव तेषां तमश्चाक्षुषमिति वाच्यम्, तथा सत्यस्मदादीनामिव तेषामपि विषयान्तरचाक्षुषप्रतिबन्धापत्तेः । अतस्तेजोभावस्थले तेषां तेजःसंयोगनिरपेक्षमेव चक्षुर्वस्तुचाक्षुषं जनयतीत्येतावतैव चारितार्थ्ये तेजोभावातिरिक्तं तमो न शक्यवचनमित्याशङ्कायामाहुः **इयमित्यादि** । अयमर्थः, नटादयो हि यद्दृष्टिं व्यामोहयन्ति तानेव मायिकं पदार्थं दर्शयन्ति, नेतरान्, तथेयमपि यद्दृष्टिं व्यामोहयति तानेव तमः प्रदर्शयतीति तमश्चाक्षुषत्वेन तद्दृष्टिव्यामोहत्वेन कार्यकारणभावात् पेचुकादिदृष्टीनां दोषरहितत्वेन तान् प्रति तदभावेऽप्यस्मद्दृष्टिविषयतया तादृशाधिकरणे तमःसिद्धिरप्रत्यूहेत्यर्थः । न च तेजोऽभावस्यैव तमस्त्वान्न विषयानुपपत्तिरिति वाच्यम्, नीलचाक्षुषबाधापत्त्या तस्मिंस्तेजोभावत्वस्याशक्यवचनत्वात् । न च भ्रमस्य विशिष्टज्ञानत्वेन विशेषणज्ञानजन्यत्वात् प्रकृतभ्रमस्यापि तथात्वाच्चाक्षुषत्वं युक्तं चक्षुःसंयुक्तविशेषणतारूपविशेष्यभानसामग्रीतद्विशेषणज्ञानमात्रस्यैवावश्यकत्वेन विशेषणीभूतनीलरूपाभावेपि तज्ज्ञानस्य सत्त्वान्नीलरूपतेजोभावयोरसंसर्गाग्रहमात्रेणैव तादृशभ्रमोपपत्तेर्नीलचाक्षुषस्याभिमानमात्रत्वान्न तेन तमोरूपपदार्थसिद्धिरिति वाच्यम्, नीलज्ञानस्य स्मरणादिरूपतया वक्तुमशक्यत्वेन तत्र चाक्षुषेभि-

मानत्वस्य वक्तुमशक्यत्वात् । ननु स्मरणरूपत्वे किं बाधकमितिचेद् उच्यते, अमावास्यारात्रौ सुधाधवलितगृहादौ दिनसम्बन्धिनीं वार्तां कुर्वतः सदृशादृष्टचिन्तादीनां संस्कारोद्बोधकानामभावेन तादृशस्मरणस्याशक्योदयत्वमिति जानीहि । न चादृष्टमेव तदुद्बोधकमिति वाच्यम्, दृष्टसामग्रीं विना तस्याकिञ्चित्करत्वात् । नन्वुपनीतभानरूपमेव नीलज्ञानं तत्रेति चेन्न, मानसोपनीतभानत्वे पूर्वोक्तयुक्त्या उपनायकस्य स्मरणस्य संस्कारस्य वा तदानीं वक्तुमशक्यत्वेन तद्भानापत्तेः, चाक्षुषोपनीतभानत्वं तु तादृशस्थले नीलाभावादेवासङ्गतम् । न च चक्षुर्गतं नैल्यं तत्रारोपितं प्रतीयत इति वाच्यम्, तस्यागृह्यमाणत्वात् पिङ्गाक्षस्य तादृशप्रतीत्यनुपपत्तेश्च । अतो नीलभानस्य स्मरणादिरूपताया वक्तुमशक्यत्वाच्चाक्षुषत्वमेव तस्याभ्युपेयम् । ततश्च तादृशप्रतीत्यनुरोधेन तेजोभावातिरिक्तमेव तमः सिद्ध्यतीति । यदपि प्राभाकराः 'तेजोज्ञानाभाव एव तमः, सत्यपि तेजसि तदज्ञाने तमःप्रत्ययादि'त्याहुः तदपि' न, ज्ञानाभावज्ञानस्य मानसत्वेन नीलं तम इति चाक्षुषत्व्याघातात् । अभिमानत्वबाधकानां पूर्वमुपपादितत्वात् तेजोभावमुपलभामहे इत्यनुव्यवसायबाधापत्तेश्च । द्रव्यान्तरत्वं त्वनुपदं दूषयिष्यते । **तस्मान्नीलचाक्षुषानुरोधात्पदार्थान्तरमेव तम इति सिद्धम्** । एवं तमोरूपं पदार्थम् साधयित्वा तच्चाक्षुषादिसामग्रीं बोधयितुं पेचुकादीनां वस्तुसाक्षात्कारे आलोकनिरपेक्षमेव चक्षुः कारणमिति व्युत्पादयन्ति अत एवेत्यादि । उलूकादीनामव्यामोह्यत्वादेव तान् प्रत्यन्धकारं न जनयतीति तदभावादालोकनिरपेक्षेण चक्षुषा तेजोभावमेव ते गृह्णन्ति । तेजोभाव इत्युपलक्षणम्, वस्त्वन्तरमपि गृह्णन्ति । अन्यथा काकानपश्यन्तः कथं तान् हन्युरित्याशयेन तेषां विषयज्ञानप्रकारमाहुः तेषामित्यादि । तथा च, विषयालोकसंयोगस्य न तत्र सहकारित्वमिति तन्निरपेक्षमेव चक्षुः कारणमित्यर्थः । नन्वेवं सति भावचाक्षुषत्वावच्छिन्नं प्रति विषयालोकसंयोगस्य या कारणता सा तु भज्येतेति शङ्कायामाहुः अस्मदादीत्यादि । तथा च, चाक्षुषत्वावच्छिन्नं प्रति दूरत्वाद्यभावविशिष्टयोग्यताया एव कारणत्वात्तद्भङ्गेऽपीष्टापत्तिरित्यर्थः । न चैवं योग्यतामात्रस्य कारणत्वे गृहादौ त्रसरेणुचाक्षुषापत्तिरितिवाच्यम्, तत्र छायारूपस्य तमसः सत्त्वेन त्रसरेणूनां तदावृततया व्यवधायकाभावविशिष्टयोग्यताया अभावेन तदनापत्तेः। न च गाढतेजसि तदापत्तिः ( इति वाच्यम् ) । तत्र गाढतेजस एव प्रतिबन्धकत्वादिति । एतेनैव तमश्चाक्षुषार्थं चक्षुरधिष्ठानकं तामसमिन्द्रियान्तरं कल्पयन्तोपि प्रत्युक्ताः । फलितमाहुः अत इत्यादि । लोकप्रतीतिरिति । दीपेन तमोनिवृत्तमिति



सार्वजनीनप्रतीतिः । तथा चोक्तयुक्तिसार्वजनीनप्रतीतिभ्यामप्यतिरिक्तं तमः सिद्धमित्यर्थः । एवमेतेन माया च तमोरूपानुभूतेरितिश्रुत्युक्तमनुभवरूपं कार्यालिङ्गकानुमानरूपञ्च प्रमाणमूलभूतं मायासत्त्वं निर्दिष्टम् । एवं तमोरूपां विषयतां साधयित्वा तत्प्रतीतेः शुक्तिरजतादिप्रतीतिवदारोपितत्वाभावायाहुः सा चेत्यादि । तथा च, भ्रमणस्थले शुक्तौ चाकचक्यादिवद्घटादिषु भ्रमणसंस्कारोद्बोधकस्य वक्तुमशक्यतया तज्जन्यस्मृतेरशक्यवचनत्वेन स्मर्यमाणारोपस्य दुर्वचत्वम् । तथागृह्यमाणारोपस्यापि तदानीं किं गतं ? भ्रमणं गृह्यते इति विचारे चक्षुरिन्द्रियगतमेव गृह्यत इति त्वसङ्गतम्, कामलादिदोष आदर्शादिना स्वचक्षुर्गोलकगतपीतिमवत् भ्रमणदोषे स्वेन परेण वा स्वचक्षुर्गतभ्रमणग्रहणात्, नापीन्द्रियगतं गृह्यत इति युक्तम्, जातिगुणक्रियाणां योग्यगतानामेव ग्राह्यत्वनियमाद् इन्द्रियस्यायोग्यत्वात् । अन्यथा गुणदशायामपीन्द्रियगतसंयोगक्रियादीनां ग्राह्यत्वप्रसङ्गात् । न चोत्कटे दोषे भ्रमणमपि नियमादनुभूयत एवेति तदाऽऽरोपस्य निर्बाधत्वमिति वाच्यम्, तथाप्यनुत्कटे दोषे तद्दोषतादवस्थ्यात्, तदानीं क्वापि स्वदेहभ्रमणाननुभवात् । किञ्चात्र किमारोपकं क्रिया वा ज्ञानं वा ? क्रिया चेत्, सा किं क्रियान्तरमुत्पाद्यारोपयति (स्वं) स्वरूपं वा ? नाद्यः, त्वत्समवायिनोऽनिर्वाच्यत्वात्, नेतरः, तत्रालब्धसत्ताकत्वात्, लब्धसत्ताकत्वे सर्वेषां तदनुभवप्रसङ्गात् । ज्ञानपक्षेप्येवम् । अतः परिभ्रमणं यथा विषयाद्भिन्नतयान्तरा चक्षुषा गृह्यते तथा तमोपीति तस्य प्रतीतिर्नारोपितेत्यर्थः । नन्वेवं सति तमसोन्यथासिद्धत्वेन व्यत्यासाभावाद्विषयतारूपत्वमप्यशक्यवचनमित्यत आहुः यथा हीत्यादि । इदमेकादशस्कन्धे भगवद्वाक्यम्, 'यथा हि भानोरुदयो नृचक्षुषां तमो निहन्यान्न तु तद्विधत्ते । एवं समीक्षा निपुणा सती मे हन्यात्तमिस्रं पुरुषस्य बुद्धे'रिति । तथा चेदमपि नृचक्षुषि सिद्धं तेजोभावयुक्ते देशे नीयत इति न काचिदनुपपत्तिरित्यर्थः । ननु भाट्टवद्द्रव्यान्तरमेव तमः कुतो नाङ्गीक्रियत इत्यत आहुः नन्वित्यादि । प्रतीयमानान्नीलरूपवत्त्वचलनक्रियावत्त्वरूपात्स्वभावादेव किञ्चिद्द्रव्यान्तरं तु तमो न भवति । ननु हेतौ विद्यमाने द्रव्यान्तरत्वं कुतो नाद्रियते इति शङ्कायामाहुः अन्यथेत्यादि । महदुद्भूतनीलरूपवद्द्रव्यत्वेन द्रव्यान्तरस्पार्शनप्रतिबन्धकत्वेन स्पर्शग्राह्यत्वेन च व्याप्यव्यापकभावात्तथा स्यात्, यतो नैवमतो न द्रव्यान्तरत्वमाद्रियते । तथा च, नीलरूपवत्त्वपरत्वापरत्वचलनक्रियावत्त्वैर्द्रव्यत्वसाधने द्रव्यान्तरस्पार्शनाप्रतिबन्धकत्वस्पर्शाग्राह्यत्वाभ्यां तेषां सत्प्रतिपक्षत्वाद् द्रव्यान्तरत्वानुमितिप्रतिबन्धाच्चलनादिप्रतीतीनाम्भःप्रचलने तारतम्यचलनवत्तेजश्चलनहेतुकत्वेन तमश्चलनाद्य-

साधकत्वाच्च न द्रव्यान्तरमित्यर्थः। यदि चोक्तव्याप्त्योः पृथिवीत्वगर्भत्वं विभाव्यते, तथापि श्रौतपुराणसृष्टिप्रक्रियासु द्रव्यमध्ये तमसोनुल्लेखान्मायात्वेनोल्लेखाच्च शब्दप्रमाणविरोधादुक्तव्याप्त्योः पृथिवीत्वगर्भत्वमनादरणीयमिति द्रव्यान्तरत्वं दुर्घटमेवेति। यत्तु न्यायकन्दलीकारः नीलरूपमेव तम इत्याह तदप्यसङ्गतम्, द्रव्यासमवेतत्वात्, नीलं तम इति प्रतीतिबाधापत्तेश्च। तस्मात्पदार्थान्तरमेव तम इति निश्चयः। इदं सर्वमन्धकारवादे प्रपञ्चितं मयेति विशेषविविदिषायां ततो बोध्यम्। एवं तमोरूपां विषयतां साधयित्वा विषयतान्तरमपि साधयन्ति तम इतीत्यादि। अत्र नैयायिका भामतिकारश्च दर्पणादिसन्निधानेन परावृत्तं चक्षुः स्वमुखं पश्यति, तमसि तिष्ठतस्तु परावृत्तमपि विषयालोकसंयोगाभावादेव न पश्यति, प्रतिबिम्बपक्षे तु बाधकाभावात्तच्चाक्षुषं स्यादतो नातिरिक्तः प्रतिबिम्बपदार्थ इत्याहुः। तन्मतं दूषयन्ति न चेत्यादि। यत्रैकस्य दर्पणस्य सम्मुखो द्वितीयो दर्पणः स्थापितस्तत्र दर्पणद्वये मुखाभासयुक्तो दर्पणो दर्पणानवस्था चोभयत्र प्रतीयते। यदि तत्रातिरिक्तः प्रतिबिम्बो न भवेत् तदा ततः परावृत्तं चक्षुरेकमेव स्वमुखं पश्येत्, तथा सति दर्पणद्वये मुखप्रतीतिर्दर्पणानवस्थाप्रतीतिश्च या जायते सा न स्यात्। अतस्तदनुरोधेन प्रतिबिम्बपदार्थोप्यतिरिक्त एवेत्यर्थः। ननु यथा नासा समानदेशे व्यवधायकस्य यष्ट्यादेः स्थापनेन चक्षुःकिरणविघटनान्नक्षत्रद्वयप्रतीतिस्तथा साभासदर्पणस्थले द्वयोर्दर्पणयोः चक्षुःकिरणपरावर्त्तकत्वेन किरणविघटनान्मुखद्वयप्रतीतिरिति न तथा प्रतिबिम्बोतिरिक्तः सिद्ध्यतीत्यत आहुः न चेत्यादि। प्रतिबिम्बत इति प्रतीयत इत्यर्थः। विगताविति धातोः। वस्तुतस्तु प्रतीयत इत्येव पाठः प्रतिभाति। तथा चासम्मुखदिक्स्थले वक्त्रपरावृत्तयुक्तिविरुद्धत्वादवश्यमतिरिक्त एव प्रतिबिम्बः स्वीकार्य इत्यर्थः। न चैवमन्धकारस्थवस्तुनो दर्पणे प्रतिबिम्बप्रसङ्गः। तस्य बिम्बभूतस्य तमसाऽऽवरणेन तदभावात्। न चैवं तमःस्थिते दर्पणेपि तदभावापत्तिरिति शङ्क्यम्, आन्तरालिकतमसा बिम्बस्यानावृतत्वात्सुखेन तदुपपत्तेः। ननु तमस आन्तरालिकत्वे तुल्ये कुतोयं विवेक इति चेत्स्वभावादेवेति वदामः। ननु स्वभावकल्पनापेक्षया चक्षुःपरावृत्तिकल्पनैव लघीयसीति चेत्। पूर्वोक्ता सम्मुखादिदिक्कादिस्थले स्वभावकल्पनस्य तत्राप्यावश्यकत्वात्। तस्मात्प्रतिबिम्बपदार्थोतिरिक्त एवेति युक्तम्। इदं यथा तथा प्रतिबिम्बवादे निपुणतरमुपादितमिति नात्राधिकं लिख्यते। ननु मूले प्रतिबिम्बसङ्ग्राहकपदाभावात्किमर्थमयमाग्रह इति शङ्कायामाहुः अयमेव वा आभास इति। तथा च 'स किम्पुरुषान् प्रत्यात्म्येनासृजत्प्रभुः। मानयन्नात्मनात्मानमात्माभासं विलोकयन्' 'जीवेशावाभासेन करोती'त्यादावाभासशब्दस्य प्रतिबिम्बे प्रयुक्तत्वादत्रापि तथावक्तुं शक्यत्वादयमाग्रह इत्यर्थः। एवं तमःप्रतिबिम्बौ साधयित्वा सिद्धमाहुः तस्मादित्यादि। तेन सिद्धं श्लोकतात्पर्यमाहुः तत्रेत्यादि। जगद्रूपेति। जगद्रूपयति निरूपयतीति भिन्नजगत्प्रत्यायिकेत्यर्थः। ननु श्लोकद्वयव्याख्यानव्युत्पादितयुक्तिभिस्तदुपष्टम्भकप्रमाणैश्चाविर्भावतिरोभावाभ्यां जगतो ब्रह्मरूपत्वेऽवधारितेपि तस्मिन् शब्देनापरोक्षज्ञानस्याजनितत्वेन नाशोत्पत्तिभेदेष्टानिष्टशुद्धाशुद्धादिप्रतीतीनां जायमानत्वेन च विषयतासत्त्वाद् दर्शनान्तराभिमानिवद् भिन्नत्वप्रतीतेः पोषणाच्च प्रतीतौ तेभ्यः कश्चिद्विशेषः। किञ्च, मनोध्यानाभावभेदा वर्त्तमानत्वेनानुभूयमानत्वेप्यसन्त आद्यन्तयोरसत्वात्. यदेवं तदेवं स्वाप्निकवत्, यन्नैवं तन्नैवं स्वस्वमतप्रतिपन्ननित्यवस्तुवत्, विमता घटादयो मिथ्याभूता वितथसदृशत्वात्, ऐन्द्रजालिकवत् असन्तः अर्थक्रियाकारित्वात्, छायाप्रत्याह्वयप्रतिबिम्बवदित्याद्यनुमानैर्मिथ्यात्वबोधान्मायावादिभ्यः प्रतीतौ न कश्चिद्विशेष इति चेद् उच्यते। आस्तामिदानीं तथाप्रतीतिः, किमेतावता ? न ह्यन्यथानिश्चयोस्ति येन पुरुषार्थहानिः। वस्तुतस्त्वस्यैव विशेषः, आप्तवाक्यप्रामाण्येन हीरकादाविव विषयबाधाया निवृत्तत्वात्। तथा च, यथा चतुरतरतक्षतनिर्मितो यन्त्रेण सञ्चरन्नपि काष्ठकेसरी भुजङ्गमो वा प्रतीयमानो ज्ञाततत्त्वस्य न भयादिकं जनयितुं शक्नोति, प्रत्युत कुतुकं निर्मातृमाहात्म्यमेव च ख्यापयति। तथैतादृशप्रतीतिस्तद्विषयं च जगच्च भगवतोऽत्यलौकिकं माहात्म्यमेवाचष्टे इति। नन्वनुमानविरोधः कथं परिह्रियत इतिचेत्पूर्वोक्तप्रमाणैर्युक्तिभिश्च विषयताया विषयस्य च भेदे सिद्ध नियतावधिकतया श्रुत्या च सत्कार्यवादेन कार्याणां सत्त्वेवधारिते आद्यन्तयोरसत्त्वादित्यस्य स्वरूपासिद्धसिद्धत्वमर्थान्तरसाधकत्वञ्च सिद्ध्यति। तथा वितथसदृशत्वादित्यस्य च साधारणत्वम्, सत्याः वितथसदृशत्वात्, ऐन्द्रजालिकप्राकालीनगजादिवदिति प्रयोगात्। एवमर्थक्रियांकारित्वादित्यस्यापि घटादिदृष्टान्तत्वेन साधारणत्वं चावधार्य परिहरणीय इति ब्रूमः। नन्वेवं सति पूर्वोक्तानुमानबोधकानां 'त्वय्युद्भवाऽऽश्रयति' 'ईक्षेत विभ्रममिमम्' 'छायाप्रत्याह्वयाभासा' इत्यादीनां पुराणवाक्यानां का गतिरितिचेद् विषयतामादाय तेषां वैराग्यार्थतैव गतिरिति जानीहि। न चात्र मानाभावः, अवान्तरप्रकरणेन तथानिश्चयात्। महाप्रकरणे तूपसंहारे 'यथा सुवर्णं सुकृतं पुरस्तात्पश्चाच्च सर्वस्य हिरण्मयस्य। तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वद्' इति ब्रह्मरूपताया एव कथनात्। ननु 'पराञ्चिखानी'तिश्रुतेः ब्रह्मण

इन्द्रियाविषयत्वात्तदात्मकस्य प्रपञ्चस्य नेन्द्रियविषयकत्वं युज्यते, न चेष्टापत्तिः कर्तुं शक्या, जगदप्रतीतिप्रसङ्गादिति चेन्न, तस्यानावृत्तब्रह्मदर्शननिषेधपरतया प्रपञ्चस्य तथात्वाबाधकत्वात् तत्रत्येनान्तरात्मपदेन तथानिश्चयात्। ननु विषयरूपब्रह्मसाक्षात्कारमन्तरेण जगद्रूपविषयतायाः कथं साक्षात्त्वमिति चेन्न, 'यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः। नश्वरं गृह्यमाणं च विद्धि मायामनोमयम्' इति हंसवचनेन 'इदं सर्वं यदयमात्मेति'त्यादिश्रुत्या ब्रह्मणोपीन्द्रियविषयत्वस्याभिमतत्वेनाज्ञानदशायामपि तस्य ग्रहणेन विषयतासाक्षात्कारे बाधकाभावात् । न च वाक्ययोः परस्परं विरोधः, आवृत्तानावृत्तब्रह्मपरत्वेन विषयभेदात् । अत एव च न मुक्त्यापत्तिः, नाप्यनिर्मोक्षप्रसङ्ग इतिबोध्यम् । एवञ्चास्थूलादिवाक्येषु जडजीवधर्मनिषेधोपि युज्यते, नेत्रदर्पणान्तरितवर्णस्थौल्यदूरस्थमूर्यभूवाद्यणुत्ववत्तेषां मायिकत्वादिति। यत्तु, आरोपत्वेनाधिष्ठानज्ञानत्वेन सामान्यतः कार्यकारणभावाच्छब्दावकाशाद्यनुमितेऽप्रत्यक्षेऽप्याकाशे नीलारोपवच्छब्दविषये ब्रह्मणि विचित्रजगदारोपस्य सम्भवाद्घटभ्रमदृष्टान्तेन प्रत्यक्ष एवारोपाङ्गीकारो न युक्त इति तदपि फल्गु। उक्तानुमानादिनाऽऽकाशे रूपराहित्यस्य निश्चयेन तथा वक्तुं शक्यत्वेपि शब्दैकसमधिगम्ये ब्रह्मणि उपनिषद्भिर्जिज्ञास्यमाने सर्वरूपत्वारूपत्वसर्वकर्तृत्वाकर्तृत्वनिष्कलत्वसकलत्वाद्यनेकविरुद्धधर्माधारत्वेनैव ज्ञातं भवतीति तादृश एवारोपस्य युक्तत्वेनाकाशदृष्टान्तस्यायुक्तत्वात् । तस्मादन्यप्रतीतावस्मत्प्रतीतौ च विशेषो निराबाध एव । एवञ्च, भगवन्मूर्त्तिदर्शनादावपि भक्ताभक्तयोर्यथायथं विषयविषयतयोरेव साक्षात्कार इति तैर्यथायथमनुभावानुभवादिकं तदननुभवादिकं च युज्यते। यत्पुनर्दुःखशोकादिकमनुभूयते, तद्विषयताकृतम्, सा च मायाकृता, तन्निवृत्तौ निवर्त्तते, तन्निवृत्तिश्च प्रपत्तेः सम्यक् सिद्धाविति प्रथमादिकक्षायां तदनिवृत्तावपि शैथिल्यस्यानुभूयमानत्वान्न कोपि क्वापि शङ्कालेश इति तदीयैरनुसन्धेयम् । प्रकृतमथानुसरामः।

यथा महान्तीत्यत्र एवमित्यादि । एवमुक्तप्रकारेण प्रमेयं सर्वं ब्रह्मेत्येवं
रूपं प्रथमश्लोकेन निरूप्य प्रमाणं वेदरूपं तन्निवर्त्यमायानिरूपणमुखेन
२-९-३४ द्वितीयश्लोके निरूप्य विषयं वेदरूपप्रमाणस्यार्थं निरूपयतीत्यर्थः ।

ननु प्रमेयस्यैव प्रमाणविषयत्वात्तस्य च पूर्वमेव निरूपितत्वाद्विषयान्तराभावाच्च पुनर्विषयनिरूपणस्य किं प्रयोजनमत आहुः वेदेनेत्यादि । पदार्था इति प्रमेयभूतब्रह्मगता धर्माः । इदमिति विषयनिरूपणम्। निरूप्यत इति सदृष्टान्तमुच्यते । तथा च, 'रसोहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोरि'त्यादिवाक्यैर्यथा



तेषु तेषु तद्रूपेणाविरस्ति, तथा वेदे विषयरूपेण मायायां च विषयतारूपेणेति तत्र तत्र तथैव ज्ञेयः। अन्यथाज्ञाने तु 'योन्यथा सन्तमि'तिश्रुत्या दोषकथनात् सर्वनाश इति सर्ववेदप्रामाण्यसिद्धौ च यथार्थज्ञाने सत्यभ्युदयनिःश्रेयसयोः सिद्धिरिति सर्ववेदप्रामाण्यसिद्ध्यर्थं पुनर्विषयो निरूप्यत इत्यर्थः। अत्र मूले भूतेष्विति सप्तमी, अभिव्यापकाधिकरणे सर्वस्मिन्नात्मास्तीत्यादावivetyāśayenāhuḥ कारणत्वेनेत्यादि । शेषं स्फुटम् । तथा च, यथा महाभूतानि स्वकार्येष्ववयवत्वेन प्रविष्टान्यपि कारणत्वेनाप्रविष्टानीति तस्मिन्नेवांशे रूपभेदयोः क्रियातद्राहित्ययोश्च न विरोधः, अंशान्तरेण ताटस्थ्यञ्च, तथाहं वेदे परस्परविरुद्धतत्तद्रूपतत्तद्धर्मवत्त्वेन प्रतिपाद्यमानोपि न भिन्नो नापि विरुद्ध इति सर्ववेदप्रामाण्यमव्याहतमित्यर्थः । नन्वत्रैकविधस्यापि विषयत्वमुपादानत्वानुप्रवेशाप्रवेशैरुच्यते, तत्रोपादानत्वाप्रवेशाभ्यां वानुप्रवेशाप्रवेशाभ्यां वा विषयत्वोपपत्तावुपादानत्वानुप्रवेशयोरन्यतरस्य किं प्रयोजनमित्याशङ्कायां द्वयोरावश्यकत्वमुपपादयन्ति कारणं हीत्यादि । एवमुभयं प्रतिज्ञाय कार्यं कारणे समवेतमुत्पद्यत इत्यत्र युक्तिमाहुः अन्यथेत्यादि । अत्र तर्कद्वयं सहैव क्रमेणोच्यते । तत्र प्रथमस्यापादकत्वमन्यथेत्यनेनोच्यते । यदि कार्यं कारणे समवायसम्बन्धेनाधारभूतं न स्यादिति। पटस्येत्युपलक्षणं वैशद्यार्थम्। ननूत्पत्तेः पूर्वं पटादिप्रतीत्यभावादसदेव कार्यं निमित्तवशात्कारणे उत्पद्यत इति कारणस्याधारत्वमस्तु न तु कार्यस्य कारणे सत्त्वमपीत्यतस्तर्कान्तरमाहुः तथा सतीत्यादि। यदि कारणे कार्यं विद्यमानं न स्यात्तदा नोत्पद्येत इत्यादि । उत्पद्यमानमिति असत्त्वेप्युत्पद्यमानं उभयत्र यथायथं दृष्टान्तः यथेत्यादि । तथा च, कार्यस्य नियतावधिकत्वदर्शनात्कार्यस्य कारणे स्थितिरवश्यमङ्गीकार्या, न चावधिनियमस्य कार्यप्रागभावेनैव निर्वाहात्कार्यस्य कारणे स्थितिरयुक्तेतिवाच्यम्, कारणावस्थातिरिक्तस्य प्रागभावस्यैव निरूपयितुमशक्यत्वात् । न चेह कपाले घटो नास्तीति प्रतीतिरेव तत्र मानम्, तस्याः घटत्वावच्छिन्नप्रतियोगिताकसंसर्गाभावसामान्यत्वेन प्रागभावात्मकविशेषानवगाहित्वात् । न च कपालं घटप्रागभाववत्, घटीयचरमसामग्रीवत्त्वात्, यो यच्चरमसामग्रीवान् स तत्प्रागभाववान्, पटीयचरमसामग्रीविशिष्टतन्तुवदित्यनुमानमपि मानम्, अनुमानप्रयोगात्पूर्वं साध्यतावच्छेदकस्य प्रागभावस्यासिद्धत्वेन तदवच्छिन्नसाध्याप्रसिद्ध्या हेतोराभासत्वात्। इदं यथा तथा निबन्धोक्तदिशा प्रस्थानरत्नाकरे प्रपञ्चभेदवादे च सम्यङ्मयोपपादितमिति नात्र प्रपञ्च्यते । अतः कारणावस्थायामेव प्रागभावाभिमानात्पूर्वं प्रतीत्यभावेपि कारणरूपेण कारणे विद्यमानमेव

कार्यमुत्पद्यत इति तत एव नियतावधिकत्वमितिनिश्चयः। एवमेवोत्पत्तिस्वरूपविचारादपि सिद्ध्यतीत्याविर्भाववादादप्यवगन्तव्यम् । ननु घटस्योत्पत्तिदर्शनात्कथं भगवत्त्वं शब्दस्य चाकाश एवोत्पद्यमानत्वात् कथं सर्वत्रोत्पत्तिरित्याकाङ्क्षायां द्वयमपि व्युत्पादयन्ति कुम्भेत्यादि। शब्दोपीत्यादि च। अत्र घटदृष्टान्त एवं बोध्यम्। प्रथमस्कन्धे तावद्वैदिकपौराणजगतोर्भगवद्रूपत्वाविशेषेपि घटितपूरितपात्रवद्भेद उक्तः। तेन वैदिकं जगदिच्छया युगपदाकाशादिक्रमेण वा घटितवदुत्पद्यते। पौराणं तु प्रकृतिपुरुषक्रियोत्पन्ने गुणमये सङ्घायके प्रविष्टं तत्प्रयुक्तमाकारं धत्ते। एवं प्रयोजकभेदेनोभयथा जायमानोप्याकारो धृतद्रवत्ववद्ब्रह्मधर्म एव तेनोभयविधेपि जगति 'इदं सर्वं यदयमात्मे'ति 'सर्वं खल्विदं ब्रह्मे'त्यादीनि श्रौतानि, 'विश्वं वै ब्रह्म तन्मात्रमि'त्यादीनि पौराणानि वाक्यानि ब्रह्मात्मकत्वं बोधयन्ति। यानि पुन'र्द्वेअस्य बीजे शतमूल'इत्यादीनि पौराणानि, 'सैषाविद्या जगत्सर्वमि'त्यादीनि श्रौतानि च तानि तु द्विबीजत्वमुपक्रम्य 'मायामयं वेद स वेदवेदमित्युपसंहरन्ति, सङ्घायकस्य जगतो मायिकत्वं बोधयन्ति। एवं प्रपञ्चस्यापि चातुर्विध्यं सत्तायाश्च त्रैविध्यं भवति। तत्रायं प्रयोगः, व्यावहारिकः प्रपञ्चः स्वापेक्षयोत्कृष्टसत्ताकप्रपञ्चपूर्वकः, मायिकत्वादैन्द्रजालिकप्रपञ्चवद् इति, व्यावहारिकसत्तापेक्षयोत्कृष्टा च पारमार्थिक्येव सत्तेति, वाचनिकसत्ताङ्गीकारपक्षे तु सत्ताया अपि चातुर्विध्यम्, सा च खपुष्पादीनामिति प्रातिभासिकसत्तापेक्षयापि निकृष्टा, तथा सति द्वावुत्कृष्टसत्ताकौ, एको व्यावहारिक, एकः प्रातिभासिक इति तेन घटस्य भगवद्रूपत्वं सिद्धमेव। तदेतद्धृदिकृत्योक्तं कुम्भकारेत्यादि। तथा च, व्यावहारिकस्य घटस्य यथावधित्वेन समवाय्यपेक्षा तथा पटस्यापि एवमेको दृष्टान्तः साङ्ख्यरीत्या। द्वितीयं दृष्टान्तं नैयायिकरीत्या व्याकुर्वन्ति शब्द इत्यादि। तथा च, (जिह्वाद्यभिघातं) निमित्तं समवायिभूतं प्रदेशं चातिहाय तव मते यथा शब्दो यत्र क्वचिदुत्पद्यते इति तत्प्रागभावावच्छिन्नो देशो न नियतः, तथा तन्तुराहित्ये पटः स्यादित्यर्थः। एवं कार्यान्तरेपि, तथा सति सत्कार्यवादस्य शिष्टादृतत्वात्कारणे समवेततया विद्यमानमेव कार्यमुत्पद्यत इतिसिद्धम्। कारणस्य कार्ये प्रवेशं साधयन्ति तथा सति तन्त्वित्यादि। तथा सतीति। एवं तन्तुषु पटस्य विद्यमानत्वेपि सति। न प्रविशेयुरिति अवयवतया न प्रविशेयुः। नन्वियं प्रतीतिः समवायेन तादात्म्येन वा उत्पत्स्यत इत्यनुप्रवेशो न प्रतीतितः सिद्ध्यतीत्यत आहुः शुष्केत्यादि। श्रुतौ 'तत्सृष्ट्वा तदेवानुप्राविशदि'तिश्रावणात्, 'सोनुप्रविष्टो भगवान् चेष्टारूपेण तं गणं, 'परेण विशता



स्वेन मात्रये'त्यादिपुराणवाक्याच्चानुप्रवेशो बोध्यते इति तद्विरोधिनीयुक्तिः शुष्का अप्रमाणिकी कापि प्रामाणिकशास्त्रे पदं प्रवेशमलभमाना तथेति, न तयानुप्रवेशबाध इत्यर्थः। सिद्धमाहुः अन इत्यादि। एवं कालभेदेनावस्थाभेदादेकस्यैव भौतिकस्यार्थस्य तन्निरूपितमाधारत्वमाधेयत्वञ्च साधयित्वा महाभूतेष्वतिदिशन्ति एवमित्यादि। विशेषत आधेयत्वमिति संयोगसम्बन्धेनाधेयत्वम्। तथा च, समवायेन कारणतयाऽऽधारत्वम्, परस्परसंयोगेनावयवतयाऽऽधेयत्वम्, तटस्थसंयोगेन कार्यतया विशेषत्वमाधेयत्वमिति धर्मत्रयमित्यर्थः। एवमापाततो विचारेण दृष्टान्ते धर्मत्रयसिद्धौ दार्ष्टान्तिकेपि तावदेव सेत्स्यतीति दशधर्मकत्वाभावे दशलीलाऽभावाद्भगवत्त्वं जगतो न भविष्यतीत्यरुच्या पक्षान्तरमाहुः अथवेत्यादि। न तेष्विति। पुनः पञ्चधेति। महाभूतानां केनचिदेवांशेन कारणत्वात्पञ्चावस्थाकत्वमेव, भगवतस्तु अन्यदेव, 'तद्विदिताद्यथो अविदितादि'तिश्रुत्या विदिताविदितविलक्षणवद् अप्राकृतेन सच्चिदानन्दरूपेण प्रविष्टाप्रविष्टविलक्षणत्वात् पुनः पञ्चधेत्यर्थः। तेन सिद्धमाहुः तथा सतीत्यादि। तथा च जगति भगवतः प्राकृतकारणरूपत्वेन पञ्चधास्थित्या प्राकृताप्राकृतवस्तुनो विषयताविषयरूपाभ्यां भगवत्त्वाज्जगति दशधा भगवज्ज्ञापनेन वेदानामंशतोऽप्रामाण्यनिरासार्थं विषयनिरूपणमित्यर्थः।

एतावदेवेत्यत्र। ननूक्तविषयवदवान्तरविषयाणां बहूनां सत्त्वात्कथं निरूप्यान्तरा-
भाव इत्यत आहुः निरूपणं त्वित्यादि। प्रमेयं ज्ञानमित्यादि।
२-९-३५ अत्रायमर्थः, भगवता नृणां श्रेयोविधित्सया ज्ञानकर्मभक्तयो मयोक्ता इति
वक्ष्यते, तथासत्यात्मनस्त्रयमेवोपयोगाय। तत्र प्रमेयं स्वरूपं ज्ञानसाधनत्वाज्ज्ञानविषयत्वाज्ज्ञानरूपत्वाच्चोपयुज्यते। एवं प्रमाणं वेदः कर्मप्रतिपादकः परोक्षवादेन वैराग्ये पर्यवस्यतीति वैराग्यादुपयुज्यते। तथा विषयो विरुद्धधर्माधारत्वं भक्तौ पर्यवस्यतीति भक्तिरूपत्वादुपयुज्यते। 'भगवान् ब्रह्म कार्त्स्न्येने'त्यत्र साधनकथनांशस्य तत्र पर्यवसानाच्च। तथा च, ज्ञानत्वाद् वैराग्यत्वाद् भक्तित्वाच्च त्रयमेव तथा इत्येतावदेव ज्ञातुमिष्टत्वाद्विचार्यं नान्यदित्यर्थः। उपपत्तिमिति भगवदात्मकत्वबोधिकां युक्तिम्। यत् स्यादित्यस्याग्रे सर्वत्रेत्यादिपदादत्रापि विभक्तिविपरिणामेन सर्वपदमेव विवक्षितमित्याशयेनोक्तस्वारस्येन च विवृण्वन्ति तत्र सर्वमित्यादि। एकस्येत्यादि। सच्चिदानन्दरूपस्य ब्रह्मणः अन्वयः, अनु एति इत्यन्वयः, अनुगताकारत्वमित्यर्थः। तत्र युक्तिः अन्यथेत्यादि। तथा च, यदि सच्चिदात्मकं सर्वं न स्यात्सर्वत्र सदादिपदानुवृत्तिः सदादिप्रतीत्यनुवृत्तिश्च न स्यात्। यस्मादेवं तस्मादेव-

मित्यर्थः । अत्र 'महेन्द्रगुग्गुलूलूकव्यालग्राहेषु कौशिक' इति कोशान्महेन्द्रादिषु कौशिकशब्दानुवृत्तिवन्न तदन्वय इत्यत उक्तं प्रतीतीत्यादि । तथा चैकप्रतीत्यनुगम एव मुख्योन्वय इत्यर्थः । नन्वेवमन्वय उपपद्यते परं व्यतिरेकस्य यदभावे यदभावात्मकत्वाद्भगवतो व्यापकत्वेन तदभावस्य काप्यभावात् स कथमुत्पत्स्यत इत्याकाङ्क्षायां तत्स्वरूपमन्यदाहुः विशेषेणेत्यादि । न चैवं ब्रह्मापि ब्रह्मणो न व्यतिरिच्यत इत्यव्यतिरेकः शङ्क्यः, सर्वस्य पक्षत्वेन ततो व्यतिरेकस्यैवात्र विवक्षितत्वेनादोषात् । ननु व्यतिरेक एव साधकोस्तु किमन्वयेनेत्याकाङ्क्षायामाहुः खपुष्पेत्यादि । कारणस्येति परमाणुप्रकृत्यादेः । अत इति अन्वयव्यतिरेकयोरन्यतरस्यैकस्यासाधकत्वात् । ननु प्रीत्यप्रीतिविषादैः कारणस्यान्वयदर्शनाज्जगद्व्यतिरेकस्यापि दर्शनाच्च कथं भगवतः सर्वत्वनिर्णय इति शङ्कायामाहुः किञ्चेत्यादि । वाशब्द एवकारार्थो वाक्यालङ्कारे । परिच्छेदकौ व्यापकौ । तत्रापीति परिच्छेदकत्वेपि । तथा च, प्रीत्यप्रीतिविषादेष्वपि सदन्वया'दव्यक्तमक्षरे लीयतेऽक्षरं तमसि लीयते, तमः परे देवे एकीभवती'ति परदेवस्य व्यतिरेकश्रावणाच्च कारणस्यापि परदेवः कालश्च परिच्छेदकः, परमाणूनां तु देशोपि, अतस्तदात्मकं न सर्वं किन्तु सदात्मकमित्यर्थः । ननु परिच्छेदकत्वे उभयोः किं प्रयोजनमेकेनान्वयेनैव देशकालयोः परिच्छेदसम्भवात् । सती माया सन् काल इत्येकप्रतीत्यनुगमदर्शनादिति शङ्कायामाहुः माया हीत्यादि । अन्वय इति भिन्नं पदम्, नेति भिन्नम्, तथा च, मायायाः सदन्वयपरिच्छेद्यत्वेपि तत्कार्यस्य तदपरिच्छेद्यत्वात्सद्व्यतिरेकस्य विद्यमानत्वाच्च कार्यांशेऽन्वयापरिच्छेद्येत्युभयमावश्यकमित्यर्थः । ननु तर्हि व्यतिरेक एव परिच्छेदकोस्तु किमन्वयेनेत्यत आहुः भगवानित्यादि । तथा चान्वयस्य विद्यमानत्वात्सोप्यदण्डवारित इत्यर्थः । एतदेव कालेतिदिशन्ति एवं काल इत्यादि । तथा च, कालः सन्निति प्रतीत्यनुगमात्सतो मायादावपि वर्त्तमानत्वेन कालव्यतिरिक्तत्वाच्च कालः सत्परिच्छेद्य एव, न तु परिच्छेदक इत्यर्थः । एवं मानानुगमात्सर्वत्र भातिपरिच्छेद्यतापि । न च प्रियत्वाननुगमः शङ्क्यः, सर्वप्रियत्वस्याभावेपि यत्किञ्चित्प्रियत्वस्य सर्वत्रानुगमात् । न चाभासे व्यभिचारः, आश्चर्यजनकत्वेन तत्राप्यनुगमात् । वस्तुतस्तु तस्यासत्त्वाज्ज्ञातिगतमेव तत्रयं तत्र भासते इत्यननुगमेप्यदोष इति तस्मादन्वयव्यतिरेकाभ्यां सर्वं ब्रह्मेत्यनुभवसिद्धम् । नन्वेवं सर्वस्य ब्रह्मत्वं सिद्ध्यति न तु भगवत्त्वं दशलीलायुक्तत्वाभावादित्याशङ्कायां भगवत्त्वाय दशलीलायोगं व्युत्पादयन्ति विषय इत्यादि । अतिरिक्ततेति अधिकाकारता, तां व्युत्पादयन्ति न हीत्यादि । तथा सत्त्वेप्यतिरिक्तता नाम तद्रूपत्वेपि तदतिरिक्ताकारतेत्यर्थः ।



व्यतिरिच्यत इति व्यावृत्ताकारो भवति । तत्र हेतुद्वयमाहुः आविर्भावात्तिरोभावाच्चेति । नन्वेतयोर्हेतुत्वेन प्रवेशात्तत्कार्यरूपो व्यतिरेकस्त्रिधैव सिद्ध्यतीति कथं पञ्चधेत्याकाङ्क्षायामाहुः घटस्याविर्भावस्तिरोभावश्चेति । तथा च, तौ व्यावृत्तिरूपत्वादेव व्यावर्त्तकौ व्यावृत्तिरेक इति ताभ्यां स एवातिरिच्यते इति पञ्चप्रकारकत्वमुपपन्नमेवेत्यर्थः । न चाविर्भावस्येतरेभ्यो व्यावर्त्तकत्वाद्व्यावृत्तत्वाच्च पृथक्त्वापरपर्यायत्वेनास्तु व्यतिरेकत्वं तिरोभावस्य त्वभावरूपत्वान्न व्यतिरेकत्वमिति वाच्यम्, घटप्रतियोगिकतिरोभावे इतरव्यावर्त्तकत्वस्य स्पष्टत्वेन व्यतिरेकत्वस्य स्फुटत्वात् । न चाविर्भावेनैव व्यावृत्तिसिद्धौ तिरोभावस्यानावश्यकत्वादप्रयोजकत्वमिति वाच्यम्, आविर्भावस्याव्याप्यवृत्तित्वेनान्यत्र तत्तिरोभावाभ्युपगमात्, प्रकृतेपि घटः पटो नेति समानाधिकरणप्रतीत्युपपत्त्यर्थमावश्यकत्वात् । न चेतरतिरोभाव एव घटाविर्भाव इति वाच्यम्, तस्य व्याप्यवृत्तित्वे घटाप्रतीतिप्रसङ्गात् । अव्याप्यवृत्तित्वे च तिरोभावप्रतियोगिकतिरोभावकल्पनाया आवश्यकत्वे कल्पनातौल्याज्ज्ञावप्रतीतेश्चाविर्भावाभ्युपगमस्यैवौचित्यमिति नान्यतरेण निर्वाह इति दिक् । फलितमाहुः अत इत्यादि । यत उभयोरप्यावश्यकत्वं यत आविर्भावस्य पञ्चधान्वयप्रत्यायकत्वं तिरोभावस्य च त्रिविधव्यतिरेकप्रत्यायकत्वमुभयोर्व्यतिरेकरूपत्वञ्च,अत एकस्मिन् घटे आविर्भावतिरोभावाभ्यां कारणतोपहिताभ्यां स्वरूपसञ्ज्ञाभ्यां दशधा भगवान् अस्ति सद्रूपः प्रतीयत इत्यर्थः । एवमेकत्र व्युत्पाद्यान्यत्रातिदिशन्ति एवमित्यादि । तथा च, भगवत्यनन्ते द्वितीयपुरुषे तृतीयस्कन्धोक्तप्रकारेण प्रथमपुरुष एवं वर्त्तमाना तदंशेष्वेवं भवतीति सर्वत्रैवं दशलीलात्मकत्वं निश्चेयमित्यर्थः । एवं श्लोकार्थं विविच्य निर्गलितमर्थमाहुः अनेनेत्यादि जिज्ञास्यमित्युक्तम् । अनेनेतिश्लोकत्रये उपपत्तिपूर्वकं त्रितयपदार्थोपदेशेन । कालप्रतीतिस्तु लीलयेति, उत्पत्त्यादिसम्बन्धघटकभूतादिकालप्रतीतिस्तु क्रमिकाविर्भावात्मकलीलया । नन्वत्र सर्वं भगवानिति सिद्धान्तितम्, पूर्वाध्यायेषु तु कर्तृवादोपि प्रत्यायित इति कथमनयोरविरोध इत्यत आहुः इदमेवेत्यादि । इदमेव श्लोकत्रयोक्तं सर्वं भगवानिति प्रमेयमेव उपपत्त्या अन्वयव्यतिरेकाभ्यां विचारितम् । उत्पत्त्या जननादित्रितयरूपया । पुरुषेत्यादि । पद्येषु इति । एवं विरुद्धधर्माश्रयत्वेन उद्देशे च न यत इत्यादिषु, तेनैव धर्मेणेदं विचारितमतो न विरोध इत्यर्थः । चतुर्णां फलितार्थमाहुः एवमित्यादि । अथ पूर्वाध्यायस्यासङ्गतेदध्यायस्थोत्तरयोः सम्यग्बोधार्थमुभयार्थः सङ्गृह्यते । तत्र यद्वा, 'तस्माद्भारते'त्यत्र यत्सर्वात्मकत्वमुक्तं तन्मुख्यवृत्त्या गौण्या वा ? नाद्यः, स्वस्मिन्

स्वप्रसादानुपपत्त्या स्वाभिन्ने ब्रह्मणि प्रसादस्यासङ्गत्यापत्तेः, भेदमन्तरेणोत्पत्तेरशक्यवचनतया उत्पन्नपक्षस्य देहाद्भिन्नत्वेन जगतश्च पक्षाधेयत्वेन ततोपि भिन्नतया देहे सर्वात्मकत्वस्य दूरापास्तत्वाच्च। नान्त्यः, औपचारिकस्य सर्वात्मकत्वस्य मनोराज्यतुल्यत्वेनोद्यतकामानिवर्त्तकत्वात्। एवमुभयथापि सर्वात्मकस्यासङ्गतत्वात्तदतिरिक्ताकारासिद्ध्या साकारब्रह्मत्वे विघटिते भगवद्देहस्य पक्षोत्पत्त्यतिरिक्तप्रयोजनाभावात्। तेन च सर्वात्मकत्वानिर्वाहाज्जीवतुल्यत्वापादकः सर्वात्मकत्वविघटको देहसम्बन्धः किमर्थं इति पूर्वपक्षसङ्ग्रहः। तत्रोत्तरं 'चात्मतत्त्वं'ति पद्येन भगवद्वाक्योपक्षेपं प्रतिज्ञाय चतुःश्लोक्या शुकेनोच्यते। तत्र चान्वयव्यतिरेकाभ्यां भगवति सर्वात्मकत्वस्य निःप्रत्यूहत्वेन सर्वात्मपदस्य मुख्यवृत्त्या बोधकत्वादन्यथाप्रतीतेर्मायिकत्वेन हिताकरणादिदोषाणां जीवबुद्धिभ्रमकल्पितत्वेन तत्राभावात्। उत्पत्त्यादिघटकभूतादिकालप्रतीतेर्लीलाजन्यत्वेनोपस्थितहान्यकृताभ्यागमानवकाशादेभ्य एव भगवत्त्वोपपत्तेश्चेश्वरत्वोपपत्त्या च जीवतुल्यतापरिहारादिच्छया लीलार्थं देहसम्बन्धः स्वतन्त्रत्वेनादुष्ट इति पूर्वोक्तमनवद्यमिति समाधानसङ्ग्रहः। 'अतस्तस्मै स्वलोकमि'त्यारभ्य 'स्व एव धामन् रममाणमीश्वरमि'त्यन्तग्रन्थस्य 'मन्स्थानि सर्वभूतानी'त्येतत्पद्यविस्तारत्वं ज्ञेयम्। तत्र 'पश्ये'ति मध्यमपुरुषप्रयोगेण विरुद्धधर्माधारत्वप्रदर्शनादत्रापि ब्रह्मणे तत्प्रदर्शनावगमात्।

अन्तर्हितेन्द्रियेत्यत्र। एवं सतीति भगवत्प्रत्यक्षेण इन्द्रियादीनां मोक्षे
सतीत्यर्थः। एतेन हरित्वमप्युपपादितं ज्ञेयम्। विहितत्वा-
२-९-३८ दिति भगवत्कृतत्वेन निषेधानर्हत्वादित्यर्थः। तादिति भगवदाज्ञा-
प्रादुर्भूतमित्यर्थः। अत एवेति भगवदुक्तानुसन्धानादेवेत्यर्थः।
पूर्ववदितिपदं संयोगपृथक्त्वेन योज्यमित्याशयेनाहुः पूर्वमित्यादि।

प्रजापतिरित्यत्र। तत्र विहित इति पुत्रोत्पत्तौ विहित इत्यर्थः। तत्र
२-९-३९ गच्छेदिति धर्मस्तत्र गच्छेदित्यर्थः।

तन्नारद इत्यत्र। जीवभावं दूरीकरोतीति नरस्येदं नारं, जीवभावः
२-९-४० प्राणधारणप्रयत्न इति यावत्। तं भगवत्स्वरूपज्ञापनेन निवर्त्तयतीत्यर्थः।
सम्पादयतीति नरो जल्पिता, तत्सम्बन्धिज्ञानं नारं तद्दानेन
सम्पादयतीत्यर्थः।

मायामित्यत्र स हीति। नारदो हि व्यवहारस्त्वाति ज्ञातृज्ञेयादिरूप
इत्यर्थः। त्रितयपरिच्छेदरहितस्येति देशकालवस्तुपरिच्छेद-
२-९-४१ रहितस्य। अत्रेदं बोध्यम्। 'परास्य शक्तिर'त्यत्र स्वाभाविकी
शक्तिर्ज्ञानबलक्रियारूपेण त्रिविधा विविधा श्राविता, तत्र बलरूपा



आनन्दस्य, ज्ञानरूपा ज्ञानस्य, क्रियारूपा सदंशस्य, एतस्या विविधत्वं च त्रिगुणाया एतदंशत्वेनाविद्यानिद्रादीनां चैतदंशत्वेनेति, अतः सर्वं सूपपन्नमिति।

तस्मा इदमित्यत्र अर्थत्रयमिति ज्ञानं वैराग्यं विचारश्चेत्यर्थत्रयमित्यर्थः।
तृतीयमिति 'यथामहान्ति भूतानि' (२-९-३४)। इति
२-९-४३ प्रथमतिपाद्यं भक्तिरूपमित्यर्थः। अथ पूर्वपक्षसङ्ग्रहः। तत्र
ब्रह्मणा नोदितः २-८-१ इतिसार्धपद्यस्थेन केषाञ्चिदधिकारः केषाञ्चिन्नेतिपक्षासम्भवनागर्भेण सर्वेऽधिकारिण इति वाक्यविरोधगर्भेण च राजप्रश्नेन 'श्रोतव्यादि'-पद्यचतुष्कस्थं साधारणाधिकारनिवारणपूर्वकाभयेच्छूपायकथनरूपं प्रमेयमाक्षिप्तम्। तत्रोत्तरं 'नारदः प्राह मुनय' इतिपद्येन शुकैरुक्तम्। तेन नानाप्रकारककथनोपदेशोपि तादृगधिकारिणं प्रत्येवेति फलति। अन्यथा नारदेन सर्वेभ्य उक्तं स्यात्। किञ्च, 'सर्वेऽधिकारिण' इति वाक्ये विष्णुभक्त्यधिकारोऽतिदिष्टः। स च 'देवोऽसुरो मनुष्यो वे'ति वाक्येन सात्त्विकराजसयोर्मिश्रेषु च नियम्यते इति ज्ञायते। अन्यथा तामसा अप्युक्ताः स्युः। एवं सति तामसातिरिक्तेषु सत्यप्यधिकारे भजनादर्शनाल्लौकिकरागादेः प्रतिबन्धकत्वं वाच्यम्, तच्च फलप्रत्यनीकत्वादधिकाराभाव एव पर्यवस्यति। तस्मान्न शुकब्रह्मवाक्ययोर्विरोध इति। एवं स्वार्थं मनोनिवेशनोपायप्रश्ननिरूपकचतुष्टयश्लोकमध्ये 'हरेरद्भुतवीर्यस्ये'ति सार्द्धपद्यस्थेन 'तस्माद्भारते'त्युपक्रम्याध्यायद्वयेन स्थूलसूक्ष्माख्यरूपद्वयनिरूपणे अन्तरा 'अथोऽनन्तस्य मुखानलेने'त्यनेन प्रलय उक्तः। स चोत्पन्नस्यैव सम्भवति 'जातस्य ही'तिवाक्यात्। अतस्तत्कर्त्ता भगवान्, सर्वात्मकत्वं त्वौपचारिकमिति भगवद्वीर्यमेव श्रोतव्यमित्याशयेनोत्पत्त्यादिकर्तृत्वे पृष्टे श्रीशुकैः नारदब्रह्मसंवादमुखेन सर्वात्मकत्वं मुख्यवृत्त्या *सर्वकर्तृत्वञ्च माययेत्युक्तम्। एवं द्वैते सति यदप्युक्तमि'त्यारभ्य 'जन्मान्तरे त्वन्यदि'त्यन्तया सुबोधिन्युक्तदिशा भगवतः केवलत्वानुपपत्तिगर्भेण राजप्रश्नेनाद्याध्यायद्वयस्थं प्रमेयमाक्षिप्तम्। तत्रोत्तरं नारदब्रह्मणोर्ब्रह्मभगवतोः संवादमुखेन पूर्वोक्तसमर्थनाय दुर्ज्ञेयत्वज्ञापनाय च चतुःश्लोक्या ×मायावीर्यादीनां भगवत्त्वप्रतिपादनादुक्तमिति दिक्। 'शृण्वत' इत्यादिश्लोकत्रयस्थया भगवत्कर्तृकबहुकर्तव्यरूपया प्रक्रियया 'किं प्रमत्तस्ये'ति पद्यत्रयस्थं प्रमेयमाक्षिप्तम्। तत्रोत्तरं 'यर्हि वाव महिम्नि स्वे' इतिपदेनोच्यते। यदैव रमते भगवति तदैव मायां त्यक्त्वा उदास्ते इति न कालविलम्बो जीवकृतः, किन्तु भगवदिच्छैव तथेति भगवति रतेर्जातत्वान्न दोष इति दिक्।

इति श्रीद्वितीयस्कन्धसुबोधिनीप्रकाशे नवमाध्यायविवरणम्।

---

*"सर्वात्मत्वं च" पाठभेदः। ×"मायादीनां" पाठभेदः।

श्रीगोपीजनवल्लभाय नमः।

## अथ दशमाध्यायस्थश्रीसुबोधिनीप्रकाशः।

अथ दशमाध्यायविवरणं चिकीर्षवः पूर्वाध्यायसङ्गतिं वक्तुं तदर्थमनुवदन्तः प्रस्तुतार्थमाहुः इतीत्यादि। इति प्रकारे, इहास्मिन्नध्याये विस्तारेणोदितौ। तथा च, पूर्वोत्तरयोः सामान्यविशेषभावः सङ्गतिरित्यर्थः। तं विशेषमेव स्फुटमाहुः दशधेत्यादि। यत्पूर्वाध्याये 'यथा महान्ती'त्यनेन सूत्रेणैव हरे- रूपं निरूपितम्, तद्गुणतो दशधा, तत्र हेतुः, ज्ञायते इति उद्देशलक्षणाभ्यां यतस्तथा ज्ञायतेऽत- स्तथेत्यर्थः। अन्यज्जीवशरीरमाध्यात्मिकादिभेदेन कर्मतस्त्रिधेत्यर्थः।

अत्र सर्ग इत्यत्र। उद्देशाध्यायेऽदीनत्वादिभिः 'यथा महान्ती'त्यत्र प्रवेशा-
प्रवेशातिरेकैः परामृष्टा या दशलीलाः प्रत्येकपदार्थे सत्कारणमित्या-
२-१०-१ दिभिः परिचायितास्ता एव सर्गादिरूपेणात्रोद्देशपूर्वकं लक्ष्यत इति
ज्ञापयितुं सामान्यतस्तत्स्वरूपं वदन्तः आहुः एतेषामित्यादि। तत्र नवसु लीलासु गुणसम्बन्धादेकैकस्मिन् त्रिके यथाक्रमं उत्पादकत्वस्थापकत्वप्रलापकत्वानामग्रे वक्ष्यमाणत्वात्। पूर्वञ्च त्रेधाप्रवेशद्वैधाप्रवेशतदुभयव्यतिरेकैर्दशविधत्वस्योक्तत्वादन्तगर्येण तदनुसन्धानराहित्ये बोधदौर्घट्यापत्तौ वैशद्यार्थं व्याकुर्वते तत्रेत्यादि। निर्वाहकश्चेत्याद्यन्तम्। तदर्थस्त्वेवं तद्दयया प्रतिभाति। सर्गो हि भगवतः अदीनत्वरूपो धर्मः। अदीनत्वञ्च यथा सुखं वस्तुरूपेण स्वप्रादुर्भावात्। एवं सति तादृशसामर्थ्यमेवादीनत्वमिति फलति। प्रकृते चाशरीरस्य विष्णोर्नित्यव्यापकस्य पुरुषोत्तमस्य पुरुषशरीरस्वीकारः स्वक्रीडार्थमनित्याव्यापकस्वरूपग्रहणमुक्तसामर्थ्यात्मकं भवति, 'विशुद्धं सत्त्वमूर्जितमि'ति वाक्यात्। सदंशात्मकस्य तस्य शक्तिभूतक्रियायाः पुरुषोत्तमे गतत्वेनाव्यक्ततापन्नत्वात्। अत एव 'एतन्नानावताराणां निधानं बीजमव्यय'मिति वाक्याज्जगद्बीजत्वम्, नहि बीजे सन्नपि तरुः प्रतीयते, एवं सति प्रत्येकपदार्थे घटादिरूपे कारणत्वेनाव्यक्तसद्रूपेण या भगवत्स्थितिः सा सर्गो भवति। अस्याश्च *स्वसमवायरूपत्वादुत्पत्तिरूपत्वमप्रवेशरूपत्वञ्च स्पष्टम्। अयञ्च परिणामः स्वभावकार्यम्, एवं विसर्गोपि लीला अनायासेन क्रियमाणं कर्म, स च पुरुषाद्ब्रह्माद्युत्पत्तिः स्पष्टैव, इदमेव सृष्टिप्रक्रियायां पश्चादित्यारभ्याभिव्यज्यत इत्यन्तेनोक्तम्। इदञ्च जीवानां देहसम्बन्धरूपं

* स्वसमवायरूपत्वादप्रवेशरूपत्वं स्पष्टम्। इति पाठः॥



जन्मकर्मणः कार्यम्, एवं सति प्रत्येकपदार्थे कार्यत्वेन पूर्वमेव विद्यमानत्वं फलानुमेयकार्यरूपतया विद्यमानत्वं तच्च विशिष्टसर्गरूपत्वाद्विसर्गो भवति। तत्र दृष्टान्तः पट इत्यादि। पटे कार्ये तन्तुषु पटत्वेनाव्यक्तेषु सिद्धे आतानदशायामोपद्वयक्ते यतो हेतोस्तन्तवोऽवयवरूपतया पटे प्रतीयन्ते व्यक्ता भवन्तीतीषद्व्यक्तत्वदशा विसर्ग इत्यर्थः। तथा च, त एव तदाकारेण परिणमन्तीत्यप्रवेशान्तररूपत्वमाद्यक्षणसम्बन्धादुत्पत्तिरूपत्वञ्च स्पष्टम्। चेतनदेहेषु त्वस्यामेव दशायां जीवसमागम इति जडव्यक्तिचेतनसमागमयोरन्यतरं क्वचित्समुदायोपि विसर्ग इति फलति। एवं तत्तन्मर्यादया पालनरूपस्य स्थानस्य हसितत्वम्, 'अदीनलीलाहसिते'त्यस्य विमर्षे परमार्थरूपे का मर्यादेत्यन्तेन स्वयमेव स्पष्टीकृतम्। प्रत्येकपदार्थे च सर्ववस्तुषु घटादिषु वस्तुस्वरूपेण मूलरूपेण वस्तुस्वरूपात्मकमेव यन्मूलरूपं कारणप्राग्रूपम् तेन या तत्तन्मर्यादा वस्तुस्वरूपमर्यादा, यथा कार्पासः पट इति सा स्थानम्। अत्रोत्पत्तेश्चिरकालस्थायित्वात्पालनमप्यभिप्रेतमेव। इयञ्चाप्रवेशरूपा स्पष्टैव, नहि मूलरूपमर्यादा बहिष्ठ आयाति, नैसर्गिकत्वात्। एतस्य स्थितिरूपत्वेप्युत्पत्तिरूपत्वं मूलरूपोत्पन्नतास्मारकत्वात्। एवं स्थित्यभिवृद्धिरूपस्य पोषणस्येक्षणरूपत्वं प्रागेव स्फुटीकृतम्। प्रत्येकपदार्थे तु कार्यसिद्ध्यर्थं जलाहरणप्रावरणादिसिद्ध्यर्थं सर्वसमर्थस्य तत्र योऽवयवरूपेण तन्तूनामिव प्रवेशः स कार्याकृतिदृढीकरणरूपः कयाचिदानुपूर्व्याभिवृद्धं कारणमेव हि कार्यरूपं भवतीति पोषणरूपत्वम्। अस्य च कारणप्रवेशरूपत्वं कारणावस्थातोतिरिक्तरूपत्वञ्चानित्यस्य पोषणेनैव स्थितिरिति स्थापकत्वञ्च स्फुटमेव। एवं भूरूपायास्तदुल्लासरूपाया वा ऊतेराचाररूपत्वं पूर्वमेव स्फुटीकृतम्। प्रत्येकपदार्थे च ब्रह्मज्ञानिनः प्रतीतिसिद्ध्यर्थं घटरूपो भगवानेवेत्यादिप्रतीतिसिद्ध्यर्थम्, तत्र च घटादौ तादृशमेव लीलाप्रदर्शनं भगवत्स्वावबोधकघटीयकार्यप्रत्यायनमूतिः। तयैव चावयविनि घटादिशब्दप्रयोगस्तेषां तादृशलीलाप्रदर्शनाभावे ब्रह्मविदां घटपटादिप्रयोगो *बाध्येतात एव 'न सूरयो ही'तिवाक्ये एतमितिपदेनाविद्वद्व्यवहारस्यैवाप्रामाणिकत्वमुक्तं ज्ञेयम्। एवं विविच्यान्वयलीलामुपसंहरन्ति एवमित्यादि। व्यतिरेकप्रकारानाहुः व्यतीत्यादि। तत्र भङ्गरूपस्य भूरूपस्य वा सद्धर्मस्य मन्वन्तराख्यस्य जगदुत्तम्भकत्वात्स्थापकत्वं स्पष्टम्। प्रत्येकपदार्थे च कारणान्मृदादेर्भिन्नरूपं यत् 'पुरुषावयवैरेतैरि'तिवाक्यात्पुरुषावयवरूपम्, तेन रूपेण यो घटरूपधर्मभावः घटादिरूपत्वं तेन रूपेण सतां वैदिकानां धर्महेतुः। संस्कारद्वारेणादृष्टजनकः पूज्यदेवताप्रीतिजनको वा प्रापञ्चिकोपि घटादिः विधिविषयो

* बोध्येत पाठः नूतनपुस्तके

द्रोणकलशादिविधिगोचरो भवतीति स्वरूपान्तरमापञ्चिकाद्व्यतिरिक्तो वैदिकरूपो मन्वन्तराणि। एवमुल्लासरूपाया भङ्गरूपाया ईशानुकथाया मर्यादाभक्तिरूपत्वेन संसारनाशकत्वात् प्रलयरूपत्वम्। प्रत्येकप... स एव लौकिक एव घटादिः पुनः वैदिकरूपो वा सन् भक्तिविषयत्वेनेत्यादि स्पष्टम्। एवं संसूचनरूपस्य निरोधस्य प्रपञ्चाभावरूपत्वेन सङ्घातप्रलयरूपत्वं स्पष्टम्। अत एवान्तर्गृहगतानां सङ्घातत्यागो रासमण्डलमण्डनानामन्येषाञ्च वक्ष्ययोगोलकवत्प्रपञ्चकथनमपि सङ्गच्छते। प्रत्येकपदार्थे च स एव पूर्वोक्तो घटादिः पुनः प्रकारान्तरेण लौकिकवैदिकभक्तानां स्वरूपेच्छूनां भगवद्दर्शनेच्छूनां भगवदेकनिष्ठानां वा परित्यागरूपेण–परित्यज्यते योसौ परित्यागः त्यागविषय इतियावत्। तेन रूपेण पूर्वोक्तान् लौकिकवैदिकभगवदीयत्वरूपान् धर्मान् निरुणद्धि नितरामावृणोति विस्मारयतीति निरोधरूपः आवरकरूपो भवतीति। एवं भूरिरूपाया मुक्तेः स्वरूपलाभरूपमुक्तत्वं स्वस्याध्यात्मिकादिभावातिरिक्तस्य'प्रभुत्वेन हरेः स्फूर्तौ लोकत्वेन तदुद्भव' इत्याकारकस्य लीलाक्षमान्तररूपस्य यो लाभः प्राप्तिः तद्रूपत्वं स्पष्टम्, प्रत्येकपदार्थे च तादृशोपि पूर्वोक्तरूपत्रयावरकरूपोपि सन् आत्मानं आवरकरूपं परित्याजयित्वा तानपि विस्मृतप्रपञ्चानपि तादृशस्तस्माद् विस्मारकरूपात् स्वस्मात्परित्याजनरूपो भवति, अतिरिक्तत्यागरूपो भवति, इति हेतोर्मुक्तिरूपो भवति। अत्र स्वरूपलाभरूपो मदीयमिदमितिरूपो भवति इति इदं मुक्तिरूपमित्यर्थः। तथा च, भगवल्लीलोपयोगि सत्त्वमिदं पूर्वस्मादतिरिक्तमिति-ध्येयम्। एतदेव मुक्तिरूपं ममोत्तमेत्यत्र श्रीप्रभुचरणैः प्रपञ्चितम्, पुष्टिस्तु तद्विपरीतेत्यनेन व्याख्यानेनेति दिक्। नन्विदं पुष्टिमार्गीयमुक्तिलक्षणमर्यादायाम-नुपपन्नमित्यतस्तदप्याहुः घटादिष्वित्यादि। तथा चोभयधर्मसत्त्वान्न दोष इति भावः। आश्रयरूपं तु सर्वत्र साधारणमेवेति न विविच्यते। नन्वस्मिन् शास्त्रे किमित्येवं निरूपणं तत्राहुः एतदज्ञान इत्यादि। एतदज्ञाने उक्तप्रकारकस्वरूपा-ज्ञाने व्याकुलानि परस्परविरोधप्रतिसन्धानेन बाधितविषयत्वज्ञानविषयाणि। तथा च, सर्वशास्त्रस्थापनायैवं निरूपणमित्यर्थः। सिद्धमाहुः अत इत्यादि। अतः सर्वत्र भगवदात्मकत्वतरतमत्वयोर्मुख्यवृत्त्या तत्सङ्कोचेन च यथायथं बोधनात्।

दशमस्येत्यत्र वर्णयन्तीति। तथा चाप्तवाक्यमत्र प्रमाणमित्यर्थः। इतीति
एवं प्रकारकं ज्ञानम्। तथा च, श्रुत्यविरुद्धवादित्वाच्च आप्ता
२–१०–२ इत्यर्थः। नन्वनया श्रुत्या सर्वेषां वेदानां भगवद्बोधकत्वमात्रमुच्यते
तावता विवक्षितप्रकारेणाश्रय एवं बोध्यत इति कथं निश्चेयमित्या-



काङ्क्षायां श्रुत्यन्तरमाहुः शतमित्यादि। शतमानन्त्यवाचकम्, अनन्तानि शुक्राणि बीजानि (चेतजानि) यत्र ब्रह्मण्येकं भवन्ति–अभेदं प्राप्नुवन्ति। वेदा वेदा ज्ञानानि वा, होतारो जीवाः। अस्याः श्रुतेस्तात्पर्यमाहुः अनुग्राहकेत्यादि। तथा चैतच्छ्रुतौ पर्यवसाने सर्वेषां ब्रह्मणैक्यबोधनात् सर्वाभेदो यत्रेत्यनेनाश्रयत्वञ्च ब्रह्मणो बोध्यतेऽतस्तथा निश्चेयमित्यर्थः। ननु श्रुतौ तु त्रयाणामेकीभावो निरू-प्यतेऽतो नवानामनिरूपणात् कथं तेषां वेदाविरुद्धवादित्वमित्याकाङ्क्षायामाहुः एते त्रय इत्यादि। तथा च, यथा त्रयो गुणाः अन्योन्यप्रवेशान्नव, तथैतेपीति त्रयाणां नवसु प्रवेशेनैकार्थ्याद् दशमस्य चोक्तत्वाद्वेदाविरुद्धवादित्वमित्यर्थः। तदेव विशदयन्ति तत्रेत्यादि। कारणप्राधान्यादिति शुक्रपदोक्तबीजप्राधान्यात्। प्रमाणमिति लक्षणमित्यनुवर्त्तते, वेदशब्दोक्तज्ञानप्राधान्यादितिविशेषोऽर्थाज्ज्ञेयः। ज्योतींषीति अत्रापि लक्षणमित्यनुवर्तते, होतृपदोक्तानुग्राहकप्राधान्यादिति च शेषः। एतेषामेतेषु प्राधान्ये बीजमाहुः अर्थादित्यादि। 'तज्जलानि'ति 'यतो वा इमानी''तिश्रुतेर्जन्मादि'सूत्राच्च प्रपञ्चस्योत्पत्त्यादित्रयं भगवत उपादानत्वकर्तृ-त्वयोर्बोधकं कार्यलक्षणमत एते सर्गादयस्तथा भवन्तीति तेषां शुक्रादीनि त्रीण्येवैवं प्रकारेण लक्षणानीति तत्र तत्र तेषां प्राधान्यमित्यर्थः। कथमेकैकस्य त्रैविध्यं कथञ्च तेषु तेषां प्राधान्यमत आहुः उत्पत्तिरित्यादि। कारणतो मृत्पिण्डादेः सकाशादुत्पत्तिः, कारणसमवायरूपात्कार्यत उत्पत्तिः स्वसत्तासमवायरूपा, आधारो मूलकारणं मृदादि, तस्मादुत्पत्तिरवस्थाभिव्यक्तिरूपा, एवं सर्वत्र प्रकृतेः भूतादिभ्यः कारणेभ्यः कार्येभ्यो गुणेभ्यो भगवतश्चेति तत्त्रेधा उत्पत्तिः। न च *भगवत उत्पतिलक्ष्यत्वादुत्पत्तिलक्षणत्वमयुक्तमिति शङ्क्यम् कार्पासन्यायेन व्यापाराविष्टस्य लक्षणतया व्यापारशून्यस्य लक्ष्यतया चावस्थाभेदेनैकस्यैवोभयरूपतयाऽविरुद्धत्वा-दिति। एवञ्च गुणसम्बन्धविचार एता लीला राजसतामसराजसराजसराजस-सात्त्विक्यः प्रतिभान्ति। स्थितौ प्रमाणस्य कथं +प्राधान्यं येन तस्य स्थितिलक्षण-तेत्याकाङ्क्षायामाहुः स्थितिरित्यादि। अयमर्थः, पोषणं नामानुग्रहो वरणाख्यः, स च, स्वीकाररूपत्वादीक्षणत्वाच्च वेदोक्तज्ञानात्मको भवति, तस्य स्थितिहेतुत्वं प्राधान्यं भगवल्लक्षणत्वं च 'यदनुग्रहतः सन्ती'ति वाक्यादेव सिद्धम्। इतोः

* (भगवदुत्पत्तिः।) पाठः +प्रामाण्यम् पाठः

कार्यलक्षणत्वं चात्यभ्रस्य वृष्टिलक्षणत्ववद् वृष्टेः सुभिक्षलक्षणत्ववदुपपन्नम्। न च ज्ञानस्य प्रमात्वात्कथं प्रमाणत्वमितिशङ्क्यम्, 'अत्र प्रमाणं भगवानि'त्यत्र प्रमाणशब्दस्य ज्ञानवाचकताया *विचारितत्वात्। एवं विलासस्य वासनारूपत्वात्तस्याश्च ज्ञानजन्यत्वेन स्मृतिपूर्वावस्थारूपतया च ज्ञानत्वं प्रमाणत्वञ्च। तथा च स्थितिर्देहविष्टम्भात्मकप्राणनरूपा 'यस्याः कालेन नोधाया वियोगः प्राणदेहयोः, प्राणिनः सा स्वसमये मृत्युरत्यन्तविस्मृति'रिति मृत्युलक्षणान्यथानुपपत्तिसिद्धत्वाच्च तस्याः प्राधान्यमप्युपपन्नम्। विलासस्य भगवद्धर्मत्वेन स्थितेस्तज्जन्यत्वात् भगवल्लक्षणत्वमप्यव्याहतमेव। एवं धर्मतो या स्थितिः' सा 'स्थाने त्वधर्ममखमन्वमरावनीशा' इति वाक्येन तस्य जगदुत्तम्भकत्वादायुर्वर्द्धकत्वाच्च धर्मश्चोदनालक्षणोतो वैदिकस्य ज्ञानस्य तत्रापि प्राधान्यमतः प्रमाणस्य स्थितिलक्षणत्वं स्थितस्याधारः स्थितिकर्त्ता च भगवानिति तस्या भगवल्लक्षणत्वञ्चोपपन्नमित्यर्थः। ज्योतिषां प्रलयलक्षणत्वं दुरूहमिति तत्त्वयं विवेचयन्ति प्रलय इत्यादि। संसारस्य लयोऽवतारादिचरित्रेणाभीक्ष्णं श्रुतेन कीर्तितेन स्मृतेन येषां जीवानां भवति ते जीवा मोक्ष्यन्तीतिज्ञायते। तथा सत्यध्यासलयस्य जीवनिष्ठत्वाज्ज्योतिरूपास्त एव लक्षणम्, स च कार्यतया जीवद्वारा च भगवल्लक्षणम्। सङ्घातस्येत्यादि। एवं सङ्घातोपि जीवभोगार्थ इति तस्य लयेपि त एव लक्षणभूता देवदत्तो मृत इति शुकदध्यङ्गदयो विस्मृतप्रपञ्चा इति भानात्। घटादेर्लयो भोग्यादृष्टनाशेनेति तत्रापि त एव लक्षणं बोद्धॄणां सोपि कार्यतयाऽऽधेयतया च निरोधत्वेनैव रूपेण भगवल्लक्षणं न तु मुक्तजीवानां भगवति प्रवेशलक्षणया मुक्त्या लक्षणमित्यर्थः। मुक्तेस्तु स्वरूपलाभरूपत्वात्तल्लक्षणत्वं ज्योतिषां तस्याश्च भगवल्लक्षणत्वं स्पष्टमेवेति तदत्र न विवृतम्। तेन सिद्धमाहुः तस्मादित्यादि।

भूतमात्रेत्यत्र गुणत्वेनाविर्भावादिति बन्धकत्वेनाविर्भावात्। विषमा
इति क्षुब्धाः, प्रत्येकं समुदायेन चेति महदाद्युत्पत्तिरूपः प्रत्येकं
२-१०-३ अण्डसर्गः समुदायेनेत्येवं द्विविध इत्यर्थः। प्रत्येकं विषमा
इत्यादि। 'ततो भवन्महत्तत्त्वमव्यक्तात्कालचोदिता'दि'त्यादिना विकुर्वाणादिशब्दबोधिताः प्रत्येकं विषमाः 'चुक्षोभान्योन्यमासाद्ये'त्यनेनोक्ताः समुदायेन तथेत्यर्थः। अत्र भिन्नो वा इति वाशब्देनास्य प्रकारस्य न सङ्ख्याप्रयोजनकत्वमिति ज्ञापितम्। लोकत्रयभेदेनेति लोकत्रयस्य भेदेन।

*विचारत्वात् पाठः।



स्थितिरित्यत्र वैकुण्ठस्येत्यादि। भगवतः सर्वकारणादिकारणत्वरूप उत्कर्षो
यस्यां क्रियायां ज्ञायते सा मर्यादा पालनक्रिया स्थितिपद-
२-१०-४ वाच्येत्यर्थः। एतेन स्थानशब्दः करणव्युत्पन्न इति बोधितम्। स्थिति-
शब्दश्च भावव्युत्पन्न इति तेन तत्तन्मर्यादास्थापनं प्रति कारणभूता
भगवतः स्थितिक्रिया सा स्थानमिति फलति। तां विभजन्ति प्राकृतेत्यादि। प्रसपदेनाक्षरम्, योयमनुग्रह इति यत्स्वीकरणरूपं ज्ञानं तत्पोषणमित्यर्थः। ननु पोषणस्य स्थितिवृद्धिरूपत्वादभिवृद्धौ पूर्वरूपनाशेन स्थितिमर्यादानाशे सा वृथैव स्यादिति शङ्कां वारयितुं पोषणं विभजन्ति तेष्वित्यादि, पूर्वोक्तेषु षड्विंशतिषु। शिष्टेष्विति ऊनविंशतिषु। के ते सप्त इत्यत आहुः महाभूतेष्वित्यादि। तथा च, सप्तसु तस्य स्थापितत्वान्न वैयर्थ्यमित्यर्थः। वासनाधर्मरूपत्वादिति, अत्र वासना च धर्मश्चेति द्वन्द्वो बोध्यः। इन्द्रियोपलक्षकत्वादिति स्वयं दशेन्द्रियैः, कार्योऽन्यस्मै च तथा कार्यत्वेनोपदेष्टव्य इति कार्यत्वे वाच्यत्वे चेन्द्रियोपलक्षकत्वादित्यर्थः। चिन्तयतीत्यादि, एतैर्बुद्धिमनोहङ्कारचित्तक्रमेण धर्मो निर्दिष्टो बोध्यः। पायूपस्थयोर्धर्मकरणं न सम्यक्तया प्रतिभातीति तदर्थमाहुः रेत इत्यादि तयोरिति उपस्थपाय्वोः। नन्वेवं तयोर्धर्महेतुत्वं गृहस्थव्यतिरिक्तेषु भवति, न तु गृहस्थ इति शङ्कायां दशेन्द्रियकार्यैस्तं स्फुटीकुर्वन्ति आश्रयेत्यादि, अत्र तृप्तिर्वागिन्द्रियकार्यं सद्वाक्येन तृप्तेरनुभवसाक्षिकत्वात्, जाड्यादिदूरीकरणं पायोः, विसर्गस्य तत्कार्यत्वात्, दूरीकरणस्य च विसर्गरूपत्वादिति चकाराद् ग्रहणेन। कर्मजनिता वासना इति। 'वेञ् तन्तुसन्ताने' उयन्ते कर्मभिः सन्तन्यन्ते इत्यूतयः, वृद्ध्यर्थात् संश्लेषार्थाद् वयतेरिदं रूपम्, तथा सति वर्द्धन्ते संश्लिष्यन्ते इति वा ऊतयः, इति योगात्तथेति।

२-१०-५ अनवतारेत्यत्र क्षितीयस्येति चरित्रस्य, तत्रेशास्येति ईशकथांश-
भूतस्येशस्य।

निरोध इत्यत्र मूलस्थस्यास्येति पदस्यात्मबोधकत्वे आत्मपदस्यार्थमाहुः
आत्मनो देहस्येति, आत्मत्वेन प्रकाशमानादभिन्नस्य देहस्येत्यर्थः।
२-१०-६ उभयत्रेति द्विविधशक्तिषु शयने उभयोः शक्तीनां सहभावो
विवक्षित इत्यत्र गमकमाहुः देहेत्यादि। द्वासप्ततिभेदाः प्रश्नोपनिषदि
प्रसिद्धाः, द्वासप्ततिमतिद्वासप्ततिनाडीसहस्राणीति। तथा च, ताश्च हृदयानां

**ग्रहणात्तथेत्यर्थः** । तेनोभयविधशक्तिसहभावेऽध्यायसङ्ख्यैव गमिकेति भावः । **सामान्यविशेषभेदनेति** सामान्यावस्था दैवीसम्पद्रूपा, विशेषावस्था मर्यादारूपा पुष्टिरूपा च तेनेत्यर्थः । **उभयत्र लक्षणं मिलितमिति** अवस्थाद्वये मुक्तिलक्षणमविशिष्टमित्यर्थः । ननु विशेषावस्थायामहन्तादिसद्भावस्येव दर्शनात्कथं लक्षणसमन्वय इत्यत आहुः **तत्रापीत्यादि** । तत्रापीति पुष्ट्यवस्थायाम् । **इदं यथातथा ममोत्तमेतिश्लोकेत्यत्र विवृतमाचार्यैः** । तन्मत्कृततट्टिप्पणीतोऽवगन्तव्यम् । पञ्चविंशतितत्त्वपक्षेऽध्यायसङ्ख्या न युज्यत इत्यतः सङ्ख्यान्तरमाहुः **तत्त्वानीत्यादि** ।

**आभासश्चेत्यत्र** । नन्वाश्रयस्य कुतो लक्षणद्वयमित्याकाङ्क्षायामाहुः
**आश्रय इत्यादि** । शास्त्रे भगवत्प्रापकं भक्तिज्ञानरूपं मार्गद्वयम् ।
२–१०–७ आश्रयशब्दश्चात्र कर्मन्युत्पन्नः, 'यथा सर्वासामपां समुद्रमेकायनमि'त्यादि-
श्रुतिसिद्धाधिकरणत्वबोधकः, "तत्र भक्तिमार्गे प्रपत्त्याऽऽश्रयो भवति ज्ञानमार्गे सायुज्येनेति प्रकारद्वैविध्याल्लक्षणद्वयमित्यर्थः । एवं सति तृतीयमार्गिणां जडानां चाश्रयो न स्यादित्यरुच्या पक्षान्तरमाहुः **उत्पत्तीत्यादि** । तथा च, प्रपत्त्या सायुज्येन वा ज्ञानद्वारा आश्रीयते, उत्पत्त्यादिभिश्च स्वोत्पादनक्रियाद्वारा आश्रीयतेऽतो लक्षणद्वयमित्यर्थः । अध्यायविभागमाहुः **क्रिययेत्यादि** । ननु मनसोपि कर्मेन्द्रियत्वात् कथं पञ्चधेत्यत आहुः **मनस इत्यादि** । **सम्बन्ध इति**, अनुग्राहकतया सम्बन्धः । तथा च, तत्क्रियायाम*मुख्यत्वात्पञ्चधेत्यर्थः । ननु तथाप्यन्तःकरणस्य चतुर्विधत्वात् ज्ञानेन नवधा वक्तव्य इत्यत आहुः **अन्तरित्यादि** । निरोधशब्दस्य प्रलये प्रसिद्धत्वात् तत्समभिव्याहृत आभासशब्द उत्पत्तिबोधनाय किमिति प्रयुक्तः, उत्पत्तिपदमेव कुतो नोक्तमित्यकाङ्क्षायामाहुः **आभासशब्देनेत्यादि** । **विषयताया आश्रयत्वमिति** विषयताद्वयाधारत्वम् । तयोरिति, जगद्रूपतद्रोरूपयोः विषयतयोः, उत्पत्त्यादिभिः स्वजनक्रियाधारत्वेनाश्रीयते, न तु स्वाश्रयत्वेनेतीममर्थं स्फुटीकुर्वन्ति **इदमित्यादि** । **आश्रयत्वमिति**, स्वस्वरूपलाभार्थकोपजीव्यत्वम् । उत्पत्त्यादय स्वस्वरूपलाभाय यमुपजीवन्ति स जगज्जन्मस्थितिभङ्गकर्त्ता आश्रय इत्यर्थः । निरोधश्चेति चकारस्यार्थमाहुः**आभासनिरोधावित्यादि**। वृद्ध्यादिभिरिति वृद्धिविपरिणामापक्षयैः । तर्हि चतुर्मुखात् को विशेषः इत्यत आहुः **अध्यवसीयत इत्यादि** अत इति प्रकाशनात् स्वभावसम्पादनाच्च । **त्रयमिति**, विषयतागतं त्रयम् । एतदेवेति. अस्तिभातिप्रियत्वसम्पादकत्वमेव । तथा च, मूले

* आ.[illegible] सू. [illegible]



यत इत्यनेन उत्पत्त्यादिजनकं प्रकाशकं हेतुमुद्दिश्य तस्मिन्नाश्रयत्वविधानाद्विषयतोपरञ्जकस्थित्या आश्रयत्वं विवक्षितमिति प्रकृतिपुरुषजन्यायां जगद्रूपायां विषयतासञ्ज्ञायकरूपायां प्रविश्य तत्तदाकाररूपायास्तस्या अस्त्यादिरूपत्वं यत्सम्पाद्यते तदेवाधिष्ठत्वमधिष्ठानत्वमित्यर्थः । शास्त्रान्तरेप्येवमेव सम्मतमिति मूलाशयं स्फुटीकुर्वन्ति **अयमित्यादि** । **सर्वसमन्वयार्थमिति** सर्वेषां प्रमाणानामेकार्थत्वार्थम्, एवं चैतेन पद्येनैतादृशस्य प्रपत्त्या आश्रयणीयत्वं बोधितप्रायम् । **स्मृताविति** गीतायाम् । **जीवव्युदासार्थमिति** मुक्तजीवव्युदासार्थम् ।

**योऽध्यात्मिक इत्यत्र** । नन्वनुप्रविष्टस्यैकस्य जीवान्तर्यामिभावकथने 'तदनुप्रविश्य
सच्च त्यच्चाभवदि'ति श्रुतिविरोधाभावेपि 'द्वासुपर्णे'ति–श्रुतिर्विरुद्धयत
२–१०–८ इत्यत आहुः **अत एवेत्यादि** । **अन्तर्यामिण** इति पञ्चमी । यत
उभयप्रवेशपक्षेपि 'ऋतं पिबन्तावि'ति–श्रुत्यन्तरे जीवात्मा छायारूपत्वाद्प्रयोजक उक्तः । अत एव हेतोरस्य देवाधिष्ठानसामर्थ्यमन्तर्यामिणः सकाशादेवेति, स एतस्यापि पूज्यत्वेन श्रुत्यन्तरे निरूप्यते । तथा चोद्देश्यविधेयभावस्य तद्बोधनार्थतया कथनाच्च तद्विरोध इत्यर्थः । मूले, **उभयविच्छेद** इत्यत्र उभयोर्विच्छेदो यस्मादिति व्यधिकरणपदं बहुव्रीहिं ज्ञापयितुमाहुः **उभयविच्छेदकर्त्तेति** ।

नन्वन्तर्यामिणः प्रकाशस्वभावत्वात् तस्य स्वव्यतिरेकेण त्रितयज्ञानं भविष्यतीत्या-
शङ्कायामुद्देश्यविधेयभावमूचितं तात्पर्यमाहुः **अन्तर्यामीत्यादि** ।
२–१०–९ **त्रितयमिति** स्वव्यतिरिक्तं त्रितयम् । **ज्ञेयमिति** त्रितयान्तः
प्रविष्टत्वादनुमेयम् । **आत्मेति**, तस्य नाम योगरूढमिति ज्ञापनायाहुः **अततीत्यादि** । **अत एवेति** त्रितयव्यापकत्वादेव । **इदमिति** द्वितीयाश्रयलक्षणेन लक्षितम्, अग्रे स्वाश्रयाश्रयपदात्तदनुरोधेन पक्षान्तरमाहुः **भगवानेव वेति** । स्वाश्रयाश्रयपदे षष्ठीतत्पुरुष इत्येतत्पदमक्षरव्यावर्तकत्वेनापि शक्यवचनम् । तथा चाश्रयस्य लीलात्वे इदमक्षरलक्षणं पुरुषोत्तमत्वे मूललक्षणमुभयोरविच्छेदज्ञापनायैवमुक्तमित्यर्थः । प्रथमपक्षे स्वाश्रयाश्रयपदप्रयोजनं वक्तुमाहुः **नन्वित्यादि** । एवञ्चैताभ्यां श्लोकाभ्यां चैतस्य सायुज्यत्वेन आश्रयत्वं विवृतं ज्ञेयम् । तथा सति, भक्तिमार्गे भगवान् जगन्निमित्तोपादानभूतः प्रपत्त्याश्रयणीयः । ज्ञानमार्गे तु स्वप्रकाशरूपो विभूत्यात्मकः स्वयं वा यथाधिकारं सायुज्येनाश्रयणीय इति बोधनायात्र लक्षणद्वयमुक्तमिति फलति ।

**पुरुष इत्यत्र** दशलक्षणानीति पुराणस्य दशलक्षणानि । पृथक्कृत्येति

स्वस्वरूपं पृथक्कृत्य 'कण्ठं भित्त्वा विनिःक्रान्तावि'त्यादौ
२-१०-१० तथादर्शनात्तथेत्यर्थः। ननु पञ्चमाध्याये विशेषस्तु 'विकुर्वाणादम्भसो
गन्धवानभूदि'त्यादिनाण्डसृष्टिमुक्त्वा 'स एव पुरुषस्तस्मादण्डं निर्भिद्य
निर्गत' इत्यनेन यः पुरुष उक्तः स एवात्र विमृश्यते इति स्वस्थित्यर्थं जलस्रष्टृत्वं
तस्यैव वक्तव्यम्, यदा पुनर्नारिकेलकगोलकवत्स्वकार्यसमर्थत्वरूपस्तस्य निर्गमोऽङ्गीक्रियते,
तदाण्डरूपस्य स्थानस्य सत्त्वा'दात्मनोयनमन्विच्छन्' इति कथनं विरुद्ध्यत इत्यरुच्या
पक्षान्तरमाहुः अथवेत्यादि। अस्मिन्नपि पक्षे दोषमाहुः तदेत्यादि। तदाण्डभेदन-
पक्षेण्डनिवृत्त्या, तत्र न जलाद्यावरणव्यवस्था। तथा च, तदनङ्गीकारे 'आण्डकोशो
बहिरयं पञ्चाषत्कोटिविस्तृतः। दशोत्तराधिकैर्यत्र प्रविष्टः परमाणुवदि'त्यादिवाक्य-
विरोधस्तुल्य इत्यर्थः। एवं दोषसाम्येपि प्रथमव्याख्यानं यदुक्तं तत्र बीजमाहुः
परमित्यादि। अत्र तु द्वितीयपक्ष एवाभिमेत इत्याहुः वस्तुत इत्यादि। तथा च,
तत्पक्षोपष्टम्भकानि वाक्यानि कल्पान्तराभिप्रायाणीत्यर्थः।

तास्ववात्सीदित्यत्र तूष्णींभावेनेति, सुप्तवत्क्रियान्तरराहित्येन। अत्र
स्वसृष्टासु वासकथनादेवं ज्ञायते। अण्डभेदानावरणजलस्याविलत्वेना-
२-१०-११ यनान्विच्छयापां सृष्टिस्तेन विराजोऽयनं स्वसृष्टा आपस्तदयनं भूतरूपं
जलं तस्यायनं तेज इति। तथा पूर्वमण्डस्य सहस्राब्दं स्थितेरुक्तत्वादत्र
च नारायणस्थितेस्तात्कालिकत्वेन कथनात् सहस्रद्वयवर्षोत्तरं सृष्टिरिति 'योगतल्पा-
त्समुत्थित' इतिवक्ष्यमाणलिङ्गात् पक्षान्तरमाहुः शयनार्थं वेति।

द्रव्यमित्यत्र हेतुरिति सहकारी। एवञ्चैतैस्त्रिभिः पद्यैरलौकिकसामर्थ्य-
बोधनेन प्राकृततुल्यावयवत्वकृतं प्राकृततौल्यं लोकन्यायेनापि निरस्तम्।
२-१०-१२ तुल्यावयवकयोरपि राजरङ्कयोः सामर्थ्यतदभावाभ्यामुत्कर्षापकर्षस्याध्य-
क्षसिद्धत्वात् फलानुपपत्तिशङ्काप्येतेनैव निरस्ता। मूलसामर्थ्यस्यास्मिन्
विद्यमानत्वेनैतद्रूपधारणायामप्यभयरूपस्य फलस्य सुखेन सम्भवादिति। अपि च,
बाहाद्यनियतत्वं यदाक्षिप्तम्, तदपि लोके पुरुषकृतस्वावयवविवरणावरणवदिच्छाधीन-
तया तृतीयश्लोकेन समाहितमित्याहुः। अनेन इत्यादि।

एक इत्यत्र तस्य वासुदेवस्येत्यादि। अत्र 'द्रव्यं कर्म चे'त्यस्योत्तरार्द्धं
पूर्वं वासुदेवात् परो ब्रह्मन्न चान्योर्थोस्ति तत्वत' इति पठितमत्र च
२-१०-१३ 'यदनुग्रहतः सन्ति न सन्ति यदुपेक्षये'ति पठित्वाग्रे तस्मात्सृष्टिरुच्यत
इति तत्रोक्तो वासुदेवोयमेवेत्याशयेनोक्तम्। तथा सति, दशमस्कन्धे



'वासुदेवकलानन्त' इत्यत्र यो वासुदेवो वक्ष्यते 'सात्विकेषु तु कल्पेष्वि'त्येनेन
विवरिष्यते च सोयमिति बोध्यम्। सन्निधिमात्रेणेति तां सञ्चायकप्रतिकृति-
रूपां कृत्वा।
२-१०-१४ अधिदैवमित्यत्र अन्येपीति अन्यत्रोक्तात्रानुक्ता अपि।

अन्तःशरीर इत्यत्र अधिकरणेपीति स्वसृष्टजले। अत्र चेष्टाकरणे-
नेन्द्रियादिसामर्थ्योत्पत्तिकथनाच्चेष्टाजनकं स्वसामर्थ्यं तस्मान्यदेवेति
२-१०-१५ ज्ञापनायाहुः इदं तु तस्यैव शक्यमिति।

अनुप्राणन्तीत्यत्र एते त्वाध्यात्मिकरूपा इति। एतेन "प्राण ओजो
२-१०-१६ सहो बलम्" इति पद्योक्तानां नभस्त उत्पन्नानां भौतिकत्वं बोधितम्।
सर्वत्रेति व्यष्टौ।

प्राणेनेत्यत्र प्राक् पूर्वभाग इत्यादि। एतेन 'यथा कालोनुमीयत' इति
प्रश्ने 'सूर्येण हि विभज्यन्ते दिशः' 'यत्रोदेति सा प्राची'
२-१०-१७ 'सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थित' इत्यादिवाक्येभ्यो दिग्बहुत्व(त्वा)
व्यवस्थितत्वाभ्यां कर्णदिशोः संख्याव्यवस्थाविरोधो य आक्षिप्तः
स्थितः स समाहित इत्यादिज्ञापितम्। एवं सति सूर्यकृतदिक्सङ्ख्याव्यवस्थयोः
पूज्यपूजकमध्यप्राचीवद्व्यवहारार्थत्वान्न कश्चिद्दोष इति सिद्ध्यति।

मुखत इत्यत्र उपर्यधो देवा इति, वरुण उदानादिवायुदेवताश्च।
तत्रेति विराट्शरीरे। अन्नादीनामिति षष्ठाध्यायोक्तानां तेषाम्।
२-१०-१८ नन्वन्तरेवं नानारसोत्पत्तिपक्षे मुखनिर्माणवैयर्थ्यमायातीति स पक्षो
न सङ्गत इत्याकाङ्क्षायां तत्पक्षेपि तत्सङ्गतिं व्युत्पादयन्ति अन्तरि-
त्यादि। षष्ठाध्याये क्षेत्रमित्यधिकृत्य 'हव्यकव्यामृतान्नानां जिह्वा सर्वरसस्य
चे'ति कथनाज्जिह्वायामेव रसादिस्थितिरिति तत्पक्षेपि क्षुत्पिपासापाकरणस्योदर-
ऽन्नादिप्रवेशे सति भवनात्तस्य च तालुव्यापाराधीनत्वाद्व्यापारस्य च विवराधीन-
त्वाद्विवरात्मकं मुखं तालुव्यापारेणैव तालुद्वारा क्षुदादिशामकं भवतीति मुखनि-
र्माणं युक्तमित्यर्थः। अन्तर्निर्माणे दृष्टान्तमाहुः उपदीकेत्यादि, उपदीका कीट-
विशेषः उदेहीति प्रसिद्धः।

विवक्षोरित्यत्र आकाशरूपस्येति सद्रूपस्य व्यापकत्वेपि साधारणत्वेन
२-१०-१९ शब्दोत्पत्तिजनकत्वाभावादेवं व्याख्यातं ज्ञेयम्।

**नासिके निरभिद्येतामित्यत्र निमित्तत्वमिति** नासानिर्भेदनिमि-
त्तत्वम् । दोधूयति नभस्वतीत्युक्त्वा पुनर्वायुकथनात्पक्षान्तरं सम्भवती-
२-१०-२० त्यतस्तमाहुः **अथवेत्यादि** । **चलनात्मक इति** दोधूयतीत्यनेन
सूचितः । अत्राश्विनोर्न देवत्वमितिज्ञापनायाहुः **वायुर्देवतेति** ।
पक्षद्वयमुपपन्नन्ति **नसीत्यादिना** । तथा च, नभस्वतो गोलकत्वानङ्गीकारे
नसूपदमनतिप्रयोजनं स्यादतः स वायुर्गोलकस्तद्गोलकं नासेत्यवगन्तव्यमित्यर्थः ।

**यदात्मनीत्यत्र** 'आत्मानञ्च दिदृक्षत' इत्यनेन चक्षुषो द्रव्यग्राहकत्वं तथा
बोध्यते, तेन गुणग्राहकत्वं तथात्वं न दुष्टम् । **मायाकृतप्रति-**
२-१०-२१ **बन्ध इति** तमःकृतप्रतिबन्धः ।

**वस्तुन इत्यत्र** । ननु लघुशब्दस्य धर्मत्वे अस्मिन् वस्तुनि लाघवं दृश्यत
इत्यादिप्रयोगो बाधितः स्यादित्याशङ्कायामाहुः **धर्मिणमपीत्यादि** ।
२-१०-२३ प्रचुरप्रयोगादेव धर्मिणं बोधयति इत्यत्र गमकमाहुः **अत एवेत्यादि** ।
**अत एवेति** धर्मिणि प्रयोगप्राचुर्यादेव । **चातुर्यादाविति** चातुर्य-
सौष्ठवादीषंदर्शित्वोत्तालत्वादिधर्मेषु । तथा चात्र शास्त्रे वस्तुधर्मे लघ्वादिशब्द-
प्रयोगेपि चातुर्यादौ लाघवादिपदप्रयोगात् लघ्वादिशब्दानां धर्मिण्यपि प्रचुरप्रयोग
उभयसामञ्जस्यायादरणीय इत्यर्थः । ननु शास्त्रान्तरे गुरुत्वस्य गुणमध्ये गणना-
सद्भावे लाघवपदं प्रयुज्यत इति कथं तस्य वस्तुधर्मत्वमित्याशङ्कायामाहुः **अत्रे**
**त्यादि** । एतद्दार्ढ्यायोदाहरणमाहुः **यथेत्यादि** । तथा च, नहि तत्र गुरुत्वाभाव-
ग्रहः, अपि तु सूक्ष्मस्पर्शस्यैव ग्रह इति न तस्य गुरुत्वाभावरूपत्वमित्यर्थः ।
नन्वस्त्वेवं तथापि मृदुत्वस्य चक्षुषापि ग्रहणात्तज्जिघृक्षया त्वङ्निर्भेदकथनमत्र न
युक्तमित्यत आहुः **मृदुत्वमित्यादि** । तथा च, तत्र चाक्षुषं तूपनीतभानम्,
न तु लौकिकमित्यर्थः । अत एव गुलमनवरङ्गाख्ये कुसुमे रूपकृतमृदुत्वभ्रमोपि
युज्यते । ननु स्पर्शस्य गमकत्वमसङ्गतमक्लृप्तत्वेन गौरवादित्यत आहुः **सर्वत्रेत्यादि** ।
सर्वत्र लघ्वादिषु गमत्वेकनात्र स्पर्शस्य विधाने लघुस्पर्श एव कर्णादिष्विन्द्रियान्तरेषु
द्रव्यग्रहणव्यापारत्वेन विधीयते । अत्र शास्त्रेऽतः स्पर्शेनैव सर्वत्र व्यापारनिर्वाहाच्च
गौरवम्, किन्तु लाघवमेवेत्यर्थः । न च श्रोत्रेण शब्दग्रहणे स्पर्शस्य व्यापार-
त्वमसङ्गतमिति वाच्यं, शब्दवाहकेन वायुना श्रोत्रपर्यन्तमानीतस्य शब्दस्य श्रोत्रा-
वच्छिन्नत्वचा सह वाहकवायुस्पर्शो तमेव संयोगाख्यं स्पर्शं व्यापारीकृत्य शब्द-



ग्रहणस्यानुभवसाक्षिकत्वात् । न च नाभसे श्रोत्रेन्द्रिये स्पर्शाभावात् स्पर्शस्य तज्ज-
न्यत्वाभावात् व्यापारत्वमसङ्गतमिति वाच्यम्, अवान्तरद्वारत्वमात्रस्यैव व्यापारलक्षण-
त्वेनाङ्गीकारात् । इदं यथा तथा प्रस्थानरत्नाकरे व्युत्पादितं मयेति
ततोवधेयम् । एवं चाक्षुषघ्राणरासनेष्वपि व्यापारत्वं लघुस्पर्शस्यैव सौकर्यादभ्यु-
पेयम् । त्वचि गाढस्पर्शस्यापीति विशेषः । न चैवं चक्षुर्व्यापारीभूतस्य स्पर्शस्य
चक्षुषा त्वचा वा ग्रहणापत्तिः, शब्दगन्धभास्वररूपातिरिक्तभौतिकगुणप्रत्यक्षे
यावदाश्रयप्रत्यक्षस्य कारणताभ्युपगमात् । नापि सर्वत्र स्पार्शनव्यवहारत्वस्य
करणनिबन्धनत्वेनात्र स्पर्शस्य तथात्वाभावेन तदप्रसङ्गादिति । काठिन्यादीनां
स्वरूपमाहुः **काठिन्यमित्यादि** । ननु लघुत्वस्यातिरिक्तत्वाङ्गीकारे पिच्छिलत्वा-
दीनामन्येषामपि धर्माणां विद्यमानत्वात्तेषामप्यतिरिक्तत्वापत्तिरित्यत आहुः
**पिच्छिलतापीत्यादि** । एतेन स्नेहस्यापि त्वग्ग्राह्यत्वात् स्पर्श एवान्तर्भाव इति
बोधितम् । न च सङ्ग्रहनिमित्तत्वेन मृजानाश्यत्वेन सोतिरिक्त एवाङ्गीकार्य इतिवाच्यम्,
स्पर्शस्यैव तथात्वाङ्गीकारेपि बाधकाभावात् । एवं द्रवत्वस्यापि स्पर्शभेदत्वमेव ज्ञेयम्,
युक्तेस्तौल्यात् । नन्वाद्यपतनासमवायित्वादतीन्द्रियत्वादवनमनोन्नेयत्वाच्च न स्पर्शविशेषो
गुरुत्वमित्याशङ्कायामाहुः **यद्यपीत्यादि** । **स्पर्शसहितेनेति** त्वाचस्पर्शसहितेन । तथा
च, त्वाचप्रत्यक्षविषयत्वात् स्पर्शविशेष एव स इत्यर्थः । अत एव पाणौ
फलकुसुमयोः स्थापने पाणिनमनाभावेपि फलगुरुत्वानुभवो युज्यतेऽतीन्द्रियत्वाङ्गीकारस्तु
भ्रमादेव वस्तुविष्टम्भेन तद्गुरुत्वस्याध्यक्षत्वात् । ननु केवलस्पर्शेनानवगमात्
स्पर्शरहितेन केवलतोलनेन चावगमाद्गुरुत्वमतिरिक्तमतीन्द्रियमेव ऐन्द्रियकत्वाङ्गीकार
एव भ्रमादिति चेत्तत्राहुः **स्पर्शरहितमित्यादि** । तथा च, तत्र तुलादिनमनादि-
दमस्माद्गुर्वित्यापेक्षिकं गुरुत्वं सिद्ध्यति, तच्च, कल्पितमेवातो(ना)नुमानस्यार्थान्तरत्वेन
तदसाधकत्वान्न तेन तत्सिद्धिरित्यर्थः । ननु पृथक्त्वादिवदापेक्षिकमेव गुरुत्वमस्तु को
दोष इति चेत्तत्राहुः **अन्यथेत्यादि** । **अन्यथेति** आपेक्षिकत्वाङ्गीकारे । तथा
च, पृथक्त्वस्य कारणे नित्यत्वात् कार्ये च विभागजन्यत्वाद्भासनमेव तदपेक्षाबुद्ध्या
ज्ञाप्यत एव न तु जन्यते । प्रकृते तु परमाणोः सर्वतो लघुत्वेन कारणे तस्याभावात्
कार्ये तस्योत्पत्तिः केन स्यादतस्तन्निमित्तस्याशक्यवचनत्वात्तत्रापेक्षिकतदङ्गीकारो
न युक्त इत्यर्थः । न चैवं सति लघुत्वमेवातिरिक्तमङ्गीकार्यमिति युक्तम्, तस्या-
प्यापेक्षिकत्वेन कार्यसिद्धेः पूर्वमशक्यवचनत्वात् । तस्य कारणनिष्ठत्वेन तज्जनकगुणा-
न्तरस्य तत्रासत्वेनापेक्षिकत्वस्य तस्य पश्चादपि तत्र वक्तुमशक्यत्वाच्चात उभयमपि

स्पर्शविशेषरूपं त्वग्ग्राह्यमेवाङ्गीकार्यमित्यर्थः । नन्वस्ति नित्यमतिरिक्तं गुरुत्वं परमाणुमात्रवृत्ति, तेन सङ्ख्यया सङ्ख्यान्तरमिव गुरुत्वान्तरं तु न जन्यते, यदि जन्येत तदा (तो)लोकतोलकमितावयवारब्धेऽवयविनि अवयवगुरुत्वाभ्यां सहास्य तोलकचतुष्टयमितं गुरुत्वं स्यात् । तच्च न दृश्यते इति परमाणुमात्रवृत्ति नित्यं निरपेक्षमेव तत् तद्बहुत्वादेवावयविनि गुरुत्वाधिक्यप्रतीतिरिति बहुत्वबोध्यमेव तदिति चेत्तत्राहुः बहुत्वं त्वित्यादि । तथा च, बहुत्वस्य गुरुतूलपुञ्जलघुपाषाणयोः पातने पाषाणस्य प्रथमतः पातो न स्यात्, पाषाणे बहुत्वबोधितस्य गुरुत्वस्याभावात् । तस्मान्न गुरुत्वबोधकं किन्तु महत्त्वबोधकमेवेति नैवमपि तत्सिद्धिरित्यर्थः । न च गुरुत्वस्य स्पर्शविशेषत्वे वायावपि तदापत्तिरिति वाच्यम्, इष्टापत्तेः । न च प्रत्यक्षबाधः, वायुपूरितदृतितोलनशीघ्रपतनाभ्यां तत्र तन्निश्चयात् । न च वह्निवाय्वोः तदापत्तिः, प्रचितस्यैव तस्य गुरुत्वारम्भकत्वात् । एवञ्च सुवर्णादिनिष्ठमपि गुरुत्वं तैजसमेव, बाधकाभावात् । न च तेजोन्तरे तदापत्तिः, उक्तयुक्तेः । मास्तु वा तत्र तत्, तथा न दोषः, वायावुष्णस्येव तेजसि शीतस्येव तत्र गुरुत्वाख्यस्पर्शाभावेपि तस्मिन् स्पर्शरूपत्वस्याबाधादिति । गुरुत्वसाधकं मतान्तरं दूषयितुमुपक्षिपन्ति केचित्त्वित्यादि । एतन्मते परमाणुषु न गुरुत्वम् । यद्यप्यत्र न पूर्वो दोषः, तूलस्य शिथिलावयवयुक्तत्वेन गुरुत्वाभावात्, तत्प्रथमपातस्य सम्भवात्, तथापि शिथिलावयवश्लिष्टावयवौ द्वावपि यत्र सन्निहितौ तत्र तोलनेन शिथिलावयवे गुरुत्वसिद्धिः, द्वितीये च प्रथमपातेन गुरुत्वसिद्धिः, तत्रापेक्षाबुद्धेरुभयत्र तौल्येनापेक्षिकस्य गुरुत्वस्यैकत्र निश्चेतुमशक्यत्वात् । एवं बृहत्काष्ठस्वल्पपाषाणतरणमज्जनयोर्हेतौ पृष्टे लोको मज्जने पाषाणस्य गुरुत्वं वक्ति, तोलने तु तद्वैपरीत्येन काष्ठे तद्वक्तीति ताभ्यां प्रथमपाततोलनाभ्यां वा गुरुत्वस्यैकत्र निश्चय इति नात्रानुमानं प्रमाणं, सत्प्रतिपक्षत्वात् साध्याप्रसिद्धेश्च, अतोऽतीन्द्रियातिरिक्तगुरुत्वाङ्गीकारः प्रशस्तपादभाष्यविश्वासादेवेति दिक् । प्रकारान्तरेण दूषयन्ति तदप्यसङ्गतमिति अपि गर्हायाम्, गर्हा चोक्तयुक्तिभिर्दूषणेपि पुनरुत्थानात् । एवं सति गर्हामुखेनैता युक्तयः सङ्गृहीता ज्ञेयाः । दूषणे हेतुमाहुः स्पर्शेत्यादि । तथा च, तज्जनकसंयोगासिद्ध्या सुतरां तदसिद्धिरित्यर्थः । ननु संयोगस्य चाक्षुषत्वात्कथं तदसिद्धिरित्यत आहुः स्पृष्टमित्यादि । अयमर्थः, स्पर्शत्वं हि रूपव्यापकगुणत्वं वा, शब्दव्याप्यगुणत्वं वा, वाय्वादिचतुष्टयगुणत्वं वा, तद्व्यङ्ग्यजातिरूपं (वा) वाङ्गीकार्यम्, तच्च लक्षणं संयोगेपि तुल्यमिति लोके प्रयोगोपि तथेति संयोगो



न गुणान्तरमिति । ननु लोकोक्तिमात्रेण संयोगस्य स्पर्शभेदत्वं न वक्तुं शक्यमित्याकाङ्क्षायामाहुः अन्यथेत्यादि । अन्यथेति लोकोक्तेर्भ्रान्तित्वे । तथा च, प्रायश्चित्तरूपास्मरणात् मन्वादीनामप्ययमेवाशय इति न सा भ्रान्तेत्यर्थः । न च संयोगस्य व्यासज्यवृत्तिमात्रवृत्तित्वेन स्पर्शस्य च व्यासज्याव्यासज्यवृत्तित्वेन भेद इति वाच्यम्, पाकजमृदुत्वादिवत्तदानीमेव संयोगस्य जननेन तत्प्रतीत्या तस्याः स्पर्शभेदानापादकत्वात् । इदं यथा तथा प्रस्थानरत्नाकरादवगन्तव्यम् । फलितमाहुः तस्मादित्यादि । तस्मात् प्रत्यक्षतो निश्चितत्वात् । संयोगस्य श्लेषरूपत्वं दूषयितुं प्रसङ्गाच्छ्लेषस्वरूपमाहुः श्लेषस्त्विति । ननु विभागाभाव एव संयोगोस्तु, किं बाधकमिति चेत्तत्राहुः अनेनापीत्यादि । नातिरिच्यते स्पर्शातिरिक्तो न भवतीत्यर्थः । तत्र हेतुः संयुक्तेत्यादि । न तथा, न भेदप्रतीतिः, तस्माद् अभेदप्रतीति(अ)जनकत्वात् । न च संयोगस्य स्पर्शरूपत्वे आत्ममनसोस्तद्रहितत्वात् स्पर्शाभावे ज्ञानानुदयप्रसङ्गः । 'अन्नमयं हि सौम्य मनः' इति श्रुतेरन्नविकारत्वेन वैकारिकाहङ्कारकार्यत्वपक्षेप्यन्नपोषितत्वेन मनसि तत्सत्त्वात् । एवञ्च 'देहं मनोमात्रमिमं गृहीत्वे'ति च सङ्गच्छते तन्नित्यत्वादिकन्तु प्रस्थानरत्नाकरे दूषितमिति ज्ञेयं सुज्ञैः । ननु मनसः स्पर्शवत्त्वेपि 'यन्न स्पृशन्ति न विदुर्मनोबुद्धीन्द्रियासव' इतिवाक्यादात्मस्पर्शाभावाज्ज्ञानोदयस्तथापि दुर्घट इति चेन् मैवं, स्वात्मभिन्नजन्यज्ञानस्य मनोधर्मत्वात् 'ह्रीर्धीः सर्वं मन एवे'तिश्रुतेः जीवात्मा त्वध्यासेन मनआदि धारयन् प्रयोजको भवतीत्यन्तःकरणादिभिरेव तदुदयस्य सुघटत्वात् । (जीव शरीरत्वं यस्मिन् कल्पे) न च देहविष्टम्भानुपपत्तिः आत्माध्यस्तबुद्धिवृत्तिविशेषेण प्राणेन वा तत्सम्भवात्, 'यस्याः कालेन नोधाया वियोगः प्राणदेहयोः । प्राणिनः स्वसमये मृत्युरत्यन्तविस्मृतिरि'तिमृत्युलक्षणेन तथावधारणात् । ब्रह्माण्डस्य जीवशरीरत्वं यस्मिन् कल्पे तत्रायमेव कल्पः । यत्र ब्रह्मशरीरत्वं तत्र तु, तत्सामर्थ्येन तत्सम्भवः, 'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर' इतिवाक्यादिति दिक् । लघ्वादिशब्दानां धर्मिवाचकत्वमभ्युपगम्य पक्षान्तरमाहुः । अथवेत्यादि । अतः शक्यतावच्छेदकरूपत्वात्, जातेः खण्डनादननुभानाभावात्रास्वरसं हृदिकृत्य भगवतः सर्वशब्दवाच्यत्वञ्च पक्षावलम्बनोक्तरीत्या हृदिकृत्य तत्त्वमाहुः सर्वत्रेत्यादि । महाभाष्यवाक्यपदीयप्रभृतिष्वयमेव सिद्धान्त इति नात्र कश्चित्सन्देह इत्यर्थः । ननु भावशब्दस्य सत्तावाचकत्वेऽभावपदात्त्वतलाद्यनुपपत्तिरित्यत आहुः अभावेत्यादि । 'भावान्तरमभावोन्यो न कश्चिदनिरूपणा'दित्यभियुक्तोक्तेस्तत्रापि एकतरनिषेधपूर्वकं भावान्तरमेव भेदस्थले प्रतीयते, संसर्गाभावस्थले ध्वंसप्रागभावयोः

कारणावस्था वा तन्निरूप्यो निषेधपूर्वकः प्रतियोगी वा प्रतीयते। एवं अत्यन्ताभावस्थलेपि घटो नास्ति घटाभाव इत्यादिप्रत्ययान्निषेधपूर्वकः प्रतियोग्येव प्रतीयत इति तस्य भावरूपत्वात्ततः सुखेन त्वतलाद्युपपत्तिरित्यर्थः। एतदुपष्टम्भाय तर्कमाहुः अन्यथेत्यादि। अभावो यदि भावरूपो न स्यात् खपुष्पादिवन्निःस्वभावः स्यात्तथा सति न प्रतीयेतातो योग्यानुपपत्ति(लब्धि)ग्राह्यस्य तत्स्वभावस्यैवानुमापकत्वात्तस्य निषेधपूर्वकभावरूपत्वमनुमानसिद्धमित्यर्थः। तथा च प्रयोगः, अभावः भावरूपः, अस्तीत्यबाधितप्रतीतिविषयत्वात्, घटवत्, यन्नैवं तन्नैवं खपुष्पवदिति। अग्रे समानप्रकरणे 'त्वचमस्य विनिर्भिन्नां विविशुर्धिष्ण्यमोषधीः। अंशेन रोमभिः कण्डूं यैरसौ प्रतिपद्यत' इति कण्डूनामकस्पर्शसुखग्रहणार्थं त्वङ्निर्भेदो वक्ष्यते, सोत्रापि तस्यां रोमेत्यादिकथनादभिप्रेत इति ज्ञापयितुमाहुः अत्रेत्यादि। अत्रेति शास्त्रे। ननु त्वचः कण्डूग्राहकत्वे उक्तनियमभङ्गाल्लघ्वादिषु स्पर्शत्वसाधनप्रयासो व्यर्थ एवेत्यत आहुः बहिरित्यादि। बहिः स्पर्शे जायमाने यत्सुखमुत्पद्यते सैव कण्डूः। अन्तर्जायमाना तुल्यस्पर्शरूपा स्पर्शजन्यापि, तथा च, तस्याः स्पर्शाभिन्नत्वान्न तेषु स्पर्शत्वसाधनप्रयासवैयर्थ्यमित्यर्थः। नन्वेवं कण्डूत्वापि स्पर्शरूपत्वे किमिति त्वग्द्वयकल्पनेत्यत आहुः स चेत्यादि। तथा चेन्द्रियान्तर इवात्रापि देवताभेदाद्भेद इति न कल्पनेत्यर्थः। ननु तर्हीन्द्रियान्तरत्वमेवास्तु न तु त्वग्भेदत्वमत आहुः अधिष्ठानमित्यादि। तथा च, गोलकाभेदात् समानप्रकारणे अंशत्वकथनाच्चेन्द्रियाभेद इत्यर्थः।

तत्र चेत्यत्र पूर्वदेवताया इति पञ्चम्यन्तमिदं महीरुहेभ्य इत्यर्थः।

न च मुखे वाग्रसनयोरुभयोरपि सत्त्वादधिष्ठानाभेदो नेन्द्रियाभेद-
२-१०-२४ प्रयोजक इति वाच्यम्, तत्रापि ताल्वाकाशभेदेनाधिष्ठानभेदादिति।

देवताप्राधान्ये गमकमाहुः अन्यथेत्यादि। वायुरूपदेवताया यदि प्राधान्यं स्पर्शग्रहणेन स्यात्तदा प्राणजये वायुग्रहणेन बहिःस्पर्शज्ञानं निरुद्धं न स्यात्, त्वचो विद्यमानत्वात्। तथा चैतदेव देवताप्राधान्यगमकमित्यर्थः। तथा चैवं मूलयोजना, तत्र लोमसु चकारात् तदन्तराले अस्थ्यादिषु च अन्तर्बहिर्महीरुहेभ्योऽधिकस्थानो वायुर्देवता त्वचा लब्धगुणः त्वगिन्द्रियेण गृहीतः स्पर्शो येन तादृशः कृतः त्वगिन्द्रियावेष्टितो जात इति। जात इति क्रिया तु नसि जिघृक्षत इत्यत्राध्याहारस्य निर्णीतत्वादध्याहार्या।

गतिं जिगीषत इत्यत्र। स्वयमिति विष्णुरिति। स्वसमाननामरूपः स्वांशः, उक्तकामनायां पादद्वयरोहे बीजमाहुः अपदानामित्यादि।



२-१०-२५ तथा च, 'द्विपादोभीष्टगतिजेतारो भवन्त्वि'तीच्छाहेतुका पादद्वय-
कारनेत्यर्थः। यज्ञपदेनैव विष्णुप्राप्तौ स्वयं पदमनतिप्रयोजनमित्याशङ्क्य स्वयं हव्यमिति समभिव्याहारसूचितमर्थमाहुः हव्यस्येत्यादि। कर्मभिस्तद्धव्यं क्रियत इति। तल्लौकिकं पुरोडाशादि द्रव्यं कर्मभिः प्रोक्षणादिभिर्वैदिकैः हव्यं होमसाधनं क्रियतेऽतो विराडवयवत्वाद्भगवत्त्वमित्यर्थः। एवं हव्यस्य भगवत्त्वं व्युत्पाद्य पादप्रयोजनमाहुः तदेवेत्यादि। ननु जीवकर्मणैव लोकान्तरगमनसम्भवान्न पादापेक्षेत्यत आहुः अन्यथेत्यादि। विराजः पादाभावे स्वत एव लोकान्तरे जीवगतिः पुरोडाशादीनां यागान्तःपातित्वेन कर्मरूपतया वा लोकान्तरगमनसाधनत्वमवश्यं वक्तव्यम्, तत्र कर्मणो जडत्वादिष्टदेशगमनं प्रति जीवस्यैव स्वातन्त्र्यं वक्तव्यम्, तथा सति जीवस्य तृष्णाकृतया कर्मणो गहनत्वेन यत्र क्वचिद्गमनं स्यात्ततश्च स्वर्गादितारतम्यव्यवस्था भज्येतातस्तद्व्यवस्थार्थं चेतनस्य विराज एव पादावङ्गीकार्यावित्यर्थः। नन्वेवं सति यज्ञस्य विष्णुत्वेन तत एव लोकान्तरप्रापणव्यवस्थानिर्वाहान्न विराजः पादापेक्षेत्यत आहुः न चेत्यादि। अस्येति विराजः। तत्रेति यज्ञे। तथा च, स्वयंपदस्य यज्ञहव्ययोर्मध्ये पाठादुभयोर्भगवत्त्वं विवक्षितमतो रूपान्तराभावाद्विराज एव पादावङ्गीकार्यावित्यर्थः। नन्वधिष्ठातृदेवतयापि निर्वाहे गोलोकभूतौ पादौ नावश्यकावित्यत आहुः न वेत्यादि। अत्र स्वयं पदोक्त्या देवान्तरानुक्त्या च सा नेत्यर्थः। ननु स्वयमित्यनेन विलक्षणाकारस्यैव निषेधो न देवतायाः, यज्ञपदेनैव तस्या उक्तत्वादित्याकाङ्क्षायां (तदापि गोलकसद्भावे हेतुनाहुः भावे वा इत्यादि। अत्र 'स्वयं'पदोक्त्या यदि सा देवता वर्तेत तदापि तस्या अधिकरणाकाङ्क्षायां) विराज एवाधिकरणत्वं वक्तव्यम्, तत्र देवान्तराणां तत्र तत्र निवेशस्योक्तत्वेन परिशेषात्पादयोरेव तथात्वं वक्तव्यमिति तस्याः पादैकनिष्ठत्वात् सिद्धावेव तावित्यर्थः। किञ्च, 'स्वर्गकामो यजेते'त्यादिवाक्येभ्यो यज्ञादेव स्वर्गबोधनाद्यज्ञपदेनाप्यत्र स्वसम्बन्धी स्वर्गो बोधनीय इति क्रियाया जडत्वेन तस्यामपि पूर्वोक्तन्यायेनाधिष्ठात्रपेक्षया तथेत्यर्थः। स्फुटमग्रिम। स्वर्गादिगतिरिति पादाभावे स्थितिमत्त्वासम्भवात्, स्थानरूपा सापि न स्यादित्यर्थः। अत इति विरुद्धधर्माश्रयत्वात्।

निरभिद्यतेत्यत्र तस्य रूपान्तराभावादिति विराजः स्त्रीलक्षणरूपा-
न्तराभावात्। लोके प्रजानन्दस्य बहुधादर्शनान्मूले तत्सत्ताबोधनाय
२-१०-२६ बहुधा तदर्थमाहुः प्रजेत्यादिना। अत्र पक्षचतुष्टयम्। तत्र प्रथम-
पक्षद्वये उत्तरपदलोपिघटितः प्रजानन्देनामृतमिति तृतीयासमासः।

तृतीये द्वन्द्वघटितः सः। अमृतं वेति केवलो द्वन्द्व एव। एतेषु चतुर्षु प्रथमपक्षत्रये आनन्दस्य लौकिकसुखात्मकत्वादमृतपदेन प्रकृष्टं यज्जननमौरसपुत्रपौत्रादिरूपेण तदेव परामृश्यत इति बोधयितुमाहुः **प्रजामन्वित्यादि**। तुरीयेऽमृतपदार्थमन्यमाहुः **अमृतमित्यादि**। नन्वेवं सति नैष्ठिकब्रह्मचर्यादिविधायकवाक्यानां का गतिरित्यपेक्षायामाहुः **अष्टाशीतीत्यादि**। ननु फलाभावे प्रशंसापि व्यर्थैवेत्यत आहुः **त्रैविद्यमित्यादि**। केवलप्रवृत्तिमार्गनिष्ठानां दक्षादितुल्यानां पूर्वकाण्डमेव प्रमाणजनकमतस्तावन्मात्रविश्वासजाड्यात्ते तथा वदन्ति, न तावतान्यवाक्यवैयर्थ्यमित्यर्थः। एतेन केवलप्रवृत्तिमार्गनिष्ठानामभयं क्षेममममृतमि'तिवाक्योक्तसत्यलोकस्यामृतप्राप्तिरेव सहस्राश्वमेधयाजिनामिव न तु मुख्यामृतप्राप्तिरितिबोधितम्। 'कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्त्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते, न च पुनरावर्त्तत, इति गृहिणोपसंहारश्रुत्यनुसारेण पक्षान्तरमाहुः **अतो मोक्षो वामृतमिति** अस्मिन् पञ्चमीतत्पुरुषो बोध्यः। अस्मिन् पक्षे निर्भिद्यतासीदिति क्रियाद्वयस्यानतिप्रयोजनत्वम्। कामस्येन्द्रियाभिमानित्वाभावे प्रत्यक्षविरोधश्चेत्यरुच्या पक्षान्तरमाहुः **अथवेत्यादि**। अत्र देवताद्वयकथनादुपस्थेन्द्रियस्य यत्कार्यत्रयं तन्मध्ये प्रजाऽमृतञ्च कस्य कार्यं आनन्दः कामस्य कार्यं तानि त्रीण्यपि स्त्रियं विनानुपपद्यमानानि तदा स्त्रीसृष्टिमपि ज्ञापयन्ति, नानारस इवान्नादिसृष्टिमित्यप्याशयो बोध्यः।

**उत्सिसृक्षोरित्यत्र**। ननु तेन द्वारेणान्नमलस्याप्युत्सर्गदर्शनाद्धातुपदमनर्थ-
कमित्याशङ्कायां विराज्यन्नमलाभावेन धातुपदस्यार्थवत्त्वमुपपादयन्ति
२-१०-२७ **धातव** इत्यादि। 'नन्वन्नमशितं त्रेधा भवति, तस्य यः स्थविष्ठो
धातुस्तत्पुरीषमि'ति श्रुत्याऽन्नांशे धातुत्वबोधनादन्ने सुतरां धातुत्वमितीयं
परिसङ्ख्यानुपपन्नेत्याशङ्कायामाहुः **अन्नादिति**। तथा च, धारणपोषणाभ्यामेव धातुत्वसिद्धे'र्मलायत्तं बलं पुंसां' इति वैद्यकवाक्याद्रसांश एव धातुत्वसम्भवात्केवलेन पोषणेन नान्नस्य धातुत्वमित्यर्थः। नन्वस्त्वेवं तथापि पाककथनस्य किं प्रयोजनमत आहुः **अन्न इत्यादि**। पाकेन क्षये सम्भवति तत्पोषणस्यावश्यकत्वात्। **तन्मलमिति** 'कफः पित्तं मलः खेषु प्रस्वेदो नखलोम च, कर्णविड्दूषिका चेति धातूनां क्रमशो मला' इति वैद्यकोक्तं त्वगादिपोषकरसादिधातुमलमित्यर्थः। **अत** इति हव्यकव्यादिरूपेऽलौकिकेऽन्नेऽसारांशाभावात्। तथा च, धातुपदं सार्थकमेवेत्यर्थः। इदं च मलं विराट्पुरुषेण गुदद्वारा त्यज्यते न तु कर्णादिद्वारा 'तद्द्वारं



वस्तुसाराणां सौभगस्य च भाजनमि'ति तद्द्वारस्य सौभगभाजनत्वकथनान्मलसम्बन्धे च सौभगापायात्। अतः 'पराभूतेरधर्मस्य निरयस्य गुदः स्मृत' इति वाक्येन तद्द्वारैव तत्त्यागाच्चेति ज्ञेयम्।

**आसिसृक्षोरित्यत्र** त्रयाणामिति त्वक्चरणानाम्। **उभयमिति**
वाग्रसना चेतिद्वयम्। **त्रयाणामिति** दृग्घ्राणश्रोत्राणाम्। परि-
२-१०-२८ शिष्टयोः पायूपस्थयोरेकैकमर्थाज्ज्ञेयम्। **मारक** इति प्राणवत्तानां
चरणादशेन्द्रियविलक्षणः। **मच्छरीरमिति** लिङ्गशरीरम्।

**आदित्सोरित्यत्र**। पूर्वं पिपासतो जक्षतश्चेतिकथनात्तयोरेव चान्नपानाऽऽदि-
त्सारूपत्वादत्र पुनरन्नपानादित्सुत्वकथनं किमर्थमित्याकाङ्क्षायां तत्स्वरूपं
२-१०-२९ वक्तुमुपपादयन्ति **यथेत्यादि**। **तस्येति** लिङ्गशरीरस्य। **इतीति** हेतौ।
स्थूलशरीरपोषार्थम्। **पानार्थमिति** पानस्थापनार्थम्। **अत एव**
**चकार उभयार्थ** इति इन्द्रियभेदादेव समुद्राश्चेति चकारः पृथक्कार्यकत्वज्ञापनार्थ इत्यर्थः। **तुष्टिराप्यायनमिति** पानस्येति शेषः।

**निदिध्यासोरित्यत्र** **निदिध्यासनमिति** विचारेण विशिष्टज्ञानम्।
नन्वग्रे 'यत्सङ्कल्पविकल्पाभ्यां वर्त्तते कामसम्भव' इत्यनेन सङ्कल्पस्य
२-१०-३० कार्यं काम इति वक्तव्यम्। तत्कथमत्रोभयं समतया निर्दिश्यत इत्यत
आहुः **अत एवेत्यादि**। तथा च, सङ्कल्पस्य व्यापारत्वादेनात्रावधारणमुक्तमित्यर्थः। **इन्द्रियानुरोध** इति बहिरिन्द्रियानुरोधः।
२-१०-३१ **त्वक्चर्मेत्यत्र** त्रिरूपा एव वेति। छान्दोग्ये त्रिवृत्करणस्यैवोक्तत्वा-
त्तथेत्यर्थः। तथा सति पञ्चीकरणपक्षः कल्पान्तराभिप्रायः।

**गुणात्मकानीत्यत्र** भूतादिप्रभवा गुणा इत्यनेन गुणा भूतादि-
प्रभवा इत्येवं गुणोद्देश्यकत्रैविध्यविधाने गुणानां पुरुषपूर्वभावित्वा-
२-१०-३२ द्यथैकं पौरुषं त्रिधा भज्यतेति प्रतिज्ञाविरोध इति नात्र तद्विवक्षितम्,
किन्तु, भूतादिपदस्याहङ्कारे प्रसिद्धत्वात्तत्त्रैविध्यमेवात्र विवक्षितमित्याशयेनाहुः **अहङ्कारेत्यादि**। तथा सति बहुवचनानुपपत्तिरित्याशङ्क्याहुः **भूतादीनामित्यादि**। भूतेन्द्रियमनसां प्रभावो येषु गुणेषु ते आहङ्कारिका गुणास्त्रिविधा इति तत्कारणभूतस्य तस्य त्रैविध्यमित्यर्थः। द्वितीयपक्षेऽप्येवम्। एवं व्याख्यानस्य प्रामाणिकत्वायाहुः **अहङ्कारस्येत्यादि**। द्वितीयपक्षोपष्टम्भायाहुः **भूतादीत्यादि**। **अहङ्कार इति** मूलाहङ्कारः।

एतद्भगवतो रूपमित्यत्र । तं व्याहृतमित्युक्तितात्पर्यमाहुः त्रिगुण-
त्वेनेत्यादि । अत्रायमाशयः, यदि राज्ञा कीदृशः पुरुषोत्तमः कथमा-
२-१०-३३ श्रयणीयः कथं भजनीय इति फलस्वरूपादिजिज्ञासया प्रश्नः कृतः
स्यात्तदा श्रीशुकैर्मुख्या गुणातीता मूलरूपलीलैव निरूपिता
स्यात् । राज्ञा तु सर्वात्मना किङ्कर्त्तव्यं म्रियमाणैश्च किङ्कर्त्तव्यमिति पृष्टम् । तत्राद्यः
प्रश्नो मुख्यफलसाधकतया यद्विहितं साधनं तद्विषयकत्वेन श्रीशुकैः निश्चितः ।
द्वितीयस्तु संसारभीत्या शीघ्रमभयेच्छया कृत इति निश्चितः । एवं सत्यभयमेवास्य
मुख्यं फलमिति निश्चित्य तदुक्तया मुख्यलीलाश्रवणानधिकारं वासुदेवलीला-
श्रवणाधिकारं चावगत्य स्वलीलासहितवासुदेवस्य विहितभक्तिरूपं यच्छ्रवणादि-
त्रयं तदेव कर्त्तव्यत्वेनोपदिश्य तादृशाधिकारे श्रवणादिविषयत्वेन वासुदेवस्य लीला-
तत्स्वरूपञ्च निरूपितमिति । ननु राज्ञस्तादृशाधिकारेपि श्रीशुकै'रहमेवासमेवे'-
त्युक्तप्रकारेण कृपया मुख्यलीलैव कुतो नोक्तेत्यत आहुः भगवतो हीत्यादि ।
तथा च, तत्कथनेपि राज्ञोधिकाराभावाद् बोधो न भविष्यतीत्यतो नोक्तेत्यर्थः ।

अतः परमित्यत्र मह्यादिससावरणसहितादिति । मह्यादि-
भूतानि उपरिष्ठानि यानि सप्तावरणानि तत्सहितादित्यर्थः । ननु
२-१०-३४ पूर्वं सप्तावरणसंयुत इति कथनादिदानीं चाष्टावरणकथनाद्विरोध इति
चेन्न, पूर्वं विशेषस्य सप्तावरणान्युक्तानि, अत्र तु वैशेषिकानां
निरूपणाद्विशेषमप्यन्तर्भाव्य तथोक्तिरित्यविरोधात् । आदिमध्यावसानरहित-
मिति इयत्तारहितम् । एवं स्थूलसदृशमिति अव्यक्तपदे व्यक्तपर्युदासाद् व्यक्त-
सादृश्यं लभ्यत इति तथेत्यर्थः ।

अमुनीत्यत्र । नन्वादिमध्यनिधनत्वे कथं न मायासृष्टत्वमित्याकाङ्क्षायामाहुः
मायाया इत्यादि । तथा चाकारस्य तद्रूपप्रतिकृतिनिमित्तकत्वात्त-
२-१०-३५ त्सृष्टत्वम्, स्वरूपस्य तु पूर्वोक्तधर्मवत्त्वमित्युभयमप्यविरुद्धमित्यर्थः । नन्वेवं
भगवद्रूपत्वेन तस्य वास्तवत्वे युष्मदादिभिरिदं कुतो न गृह्यते
इत्यतो विपश्चित्पदार्थमाहुः साक्षादित्यादि । तथा च, मुख्याधिकारिणां तस्यानु-
पयोगात्ते न गृह्णन्ति । न त्वरास्तवत्वं तत्राप्यारोप्य न गृह्णन्तीत्यर्थः ।

स वाच्यवाचकतयेत्यत्र । ननु तर्हीत्यादि । साक्षात्स्वतः सर्वरूपत्वे सति
मायाप्रतिकृतिद्वारा केन प्रकारेण करोतीत्याशङ्क्य तत्र प्रकारमाहुरित्यर्थः ।
२-१०-३६ वाच्यवाचकत्वमित्यस्य विवरणमनामरूपात्मनि नामरूपे इति । तथा



चानामरूपेऽक्षरे मायासम्बन्धेन नामरूपे पूर्वोक्तरीत्या विधाय तत्तद्गुणावतारादिरूपो
भूत्वा तथा तथा तत्तत्करोतीत्येवं परार्थसृष्टौ प्रकार इत्यर्थः ।
२-१०-३९ द्विविधा इत्यत्र तथापीति द्वैविध्ये चातुर्विध्ये च ।
ततः कालाग्नीत्यत्र संस्कारं सर्वमेव नाशयतीति । एतेनावान्तर-
२-१०-४३ कल्पीयप्रलयो यः कालद्रव्याभ्यां जायते स संस्कारनाशपर्यन्त-
मिति ज्ञापितम् ।
२-१०-४४ इत्थंभावेनेत्यत्र तथा कथनेपीत्यादि । एतेन ब्रह्मवादिसम्मत-
त्वे युक्तिरुक्ता ।

नाऽस्यैत्यत्र मूलमेव युज्यते । अस्य प्रपञ्चस्य जन्मादौ जन्मस्थिति-
भङ्गेषु परस्य मायानियन्तुः कर्माणि तदनुकूलाः क्रियाः कर्तृत्वप्रति-
२-१०-४५ षेधार्थम्, तत्र हेतुः, हि यतो हेतोः तत्कर्तृत्वं माययाऽऽरोपितम्, तत्रापि
हेतुः, नानुविधीयत इति, परेण कर्तृत्वादिभिरनुकरणं न क्रियते
'तमेव भान्तमि'ति श्रुत्या परानुविधायित्वमन्यस्योच्यते, न तु परस्यान्यानुविधायि-
त्वम्, अतो मायाद्वारकं कर्तृत्वं नास्तीति तादृशं तन्मायया रोपितम्, यस्यादेवं तस्मात्ता-
नि कर्माणि मायारोपितकर्तृत्वनिषेधपराणीति, तदेतदभिसन्धायाहुः पर इत्यादि ।
तदेतद्विशदीकुर्वन्ति जगदित्यादि । अत्र मूलं 'ऋतेर्थमि'ति वाक्यम् । नास्तीति
ब्रह्मविदां नास्ति । प्रतीतमिति अनुविधायितया प्रतीतम् । तत्र हेतुः, भगवा-
नित्यादि । तर्हि स्थूलसूक्ष्मरूपनिरूपणं श्रुतौ पुराणे च किमर्थमित्यत आहुः बुद्धी-
त्यादि । 'अत्र मायया करोती'ति 'स्वयमेव जात' इति पक्षद्वयं यथासम्भवं पुराणे
श्रुतौ च ज्ञेयम्, न तु यथाक्रमम्, एतेन पूर्ववद्द्वैत्यधिकरणोक्तपक्षस्यैकदेशीयमतीयत्वे बीज-
मप्युक्तं ज्ञेयम् । नन्वेवं सति 'तज्जलानि'ति श्रुतिव्याकोप इत्यत आहुः तज्जे-
त्यादि । तथा च, तत्र सप्तमीतत्पुरुषो बुद्धिसौकर्यार्थः । वस्तुतस्तु मयूरव्यंस-
कादिसमास एव तात्पर्यगोचर इति न तद्व्याकोप इत्यर्थः । तेनोभयव्यपदेशसूत्र-
मेव सिद्धान्तसूत्रं व्यासचरणानां तथैव तात्पर्यादिति बोधितम् । फलितमाहुः
तस्मादित्यादि । तस्मादिति अखण्डब्रह्मवादस्यैव श्रुतितात्पर्यगोचरत्वात् उत्पत्त्या-
दिकल्पनाहीनं 'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभा-
वजन्मनाशविकल्पवदि'ति वैष्णववाक्याज्जगदंशेपि तत्कल्पनाहीनं तथेत्यर्थः ।
२-१०-४६ अयमित्यत्र कस्मिन् कल्प इति साम्प्रतमानन्दमयान्त्यसृष्टेरप्रतो-
यमानत्वात् कस्मिन् कल्प इत्यर्थः ।

यदाहेत्यत्र । यद्वा, 'स भगवानि'त्यग्रे वक्ष्यमाणत्वात् पुनरुक्तिरापातीत्यरुच्या
पक्षान्तरमाहुः अथ वेत्यादि । एवमपि तस्मा इत्यध्याहारो
२-१०-४८ व्याख्यानक्लेशश्चेत्यरुच्या पाठान्तरमाहुः यदाह नो भवान् इत्यादि ।
सूतेत्यादि । प्रथमपाठे यच्छब्दार्थस्य सामान्यतया विशेषस्या-
स्फुटत्वादुक्ताकाङ्क्षायां विशेषं वक्तुं सूतेति सम्बोधनमाहेत्यर्थः । तमेव
प्रष्टव्यं विशेषं स्फुटीकुर्वन्ति क्षत्तेत्यादिना । नन्वेवं विशेषप्रष्टव्ये अग्रिमवाक्ये
यत्रेतिपदं वदेन्न तु कुत्रेतिपदमितिशङ्कायां तदाशयमाहुः यत्रेत्यादि । कुत्रेति
पृच्छतीति कस्मिन् भगवद्वाक्य इति पृच्छतीत्यर्थः । द्वितीयपाठानुसारेण
कुत्रेतिपदस्य तात्पर्यमाहुः देशेत्यादि । त्वया कथितेपीति त्वया कथनानन्तरम-
पीत्यर्थः । पाठान्तर इति यदाह नो भवानिति पाठे । अस्मिन् पाठे देशोपदेशौ
द्वितीयप्रश्नविषयौ, विदुरचरित्रं प्रथमप्रश्नविषय इत्याहुः तदेत्यादि । स्फुटमग्रिमम् ।

**इतिश्रीमद्वल्लभनन्दनचरणरजःपूरितहृदयस्य श्रीपीताम्बरात्मजस्य पुरुषोत्तमस्य कृतौ द्वितीयस्कन्धसुबोधिनीप्रकाशे दशमाध्यायविवरणं सम्पूर्णम् ।**

